


॥ हेमाद्रिकृत चतुर्वर्गचिंतामणिस्थव्रतखंडोक्तविश्वकर्मशास्त्रस्थं यजुर्वेदरूपं शिक्षारूपंच ॥




| अजास्यः पीतवर्णः स्यात् यजुर्वेदोऽक्षसूत्रधृक् ॥ वामे कुलिशपाणिस्तु भूतिदो मंगलप्रदः ॥२॥ | शिक्षा शुभ्राभयकरा ज्ञानमुद्रान्विता शुभा ॥ अक्षसूत्रासकुंडीकां द्विभुजा दंडपंकजा ॥२॥ |
|---|---|

# UKLAYAJURVEDA=SAMHITÂ

## (S'rîmad=Vâjasaneyi=Mâdhyandina.)

WITH THE MANTRA-BHÂSHYA

OF

**Mahâmahopâdhyâya S'rîmad=Uvatâchârya and the Veda=dîpa=Bhâshya of S'rîman=Mahîdhara.**

( WITH APPENDICES & MANTRA-KOS'HA )



EDITED BY

**WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆSÎKAR.**

PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

Bombay.

1912.

*Price 5 Rupees.*

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शुक्लयजुर्वेदसंहिता।

महामहोपाध्यायसर्वतन्त्रस्वतन्त्रप्रतिभश्रीमदुवटाचार्यविरचितमन्त्रभाष्येण

श्रीमन्महीधरकृतवेददीपाख्यभाष्येण च संवलिता।

( विविधपरिशिष्ट–मन्त्रकोशसहिता च। )

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा

विद्वत्साहाय्येन संशोधिता।

साचेयं

मुम्बय्यां

तुकाराम जावजीश्रेष्ठिना

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये आयसाक्षरैरानङ्क्य प्राकाश्यं नीता।

शाकः १८३४, सनः १९१२.

मूल्यं ५ रूप्यकाः।

# अथात्र कश्चिच्छ्रौतः प्रस्तावः—

'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस—' इत्यादि नैकशो निगमागमादिषु भगवन्निःश्वासात्मकत्वेनोद्घुष्टः कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः। स च मन्त्रब्राह्मणात्मकः। तत्र मन्त्रास्तावद्यज्ञाद्यनुष्ठानकारणभूतद्रव्यदेवताप्रकाशकत्वेनाम्नाताः। ब्राह्मणविषयश्चोपरिष्टात्स्फुटीभविष्यति। निर्दिष्टो वेदश्च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदेन भिन्नस्त्रयीसंज्ञितः। तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यवप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन, ब्राह्मयाजमानप्रयोगौ त्वत्रैवान्तर्भूतौ। अथर्ववेदस्तु यज्ञानुपयुक्तोऽपि शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एवेति वेदत्रयीतोऽस्य पृथग्ग्रहणम्। एवंच प्रवचनभेदात्प्रतिवेदं भिन्नाः सन्ति भूयस्यः शाखाः। तथाच कर्मकाण्डे व्यापारभेदेऽपि सर्वासां वेदशाखानामैकरूप्यमेव ब्रह्मकाण्डमिति चतुर्णां वेदानां प्रयोजनभेदेन भेदो निगमपारावारपारीणैर्महर्षिभिः कृतो निर्दिष्टः।

प्रसङ्गादिह शुक्लयजुर्वेदयाज्ञवल्क्यसं[illegible]मैतिह्यं किंचिदुच्यते। तथाहि श्रीमज्जगदी[illegible]क्षोपक्रमनिर्वचनावसरे श्रीमद्भागवतद्वादशस्कन्धषष्ठाध्याय उक्तम्—

सूत उवाच—समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः। हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥३७॥

ततोऽक्षरसमाम्नायमसृजद्भगवानजः। अन्तस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ४३ ॥

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः। सव्याहृतिकान्सोङ्कारांश्चातुर्होत्रविवक्षया ॥ ४४ ॥

वैशंपायनशिष्या वै चरकाध्वर्यवोऽभवन्। यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥

याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत्। चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥६२॥

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया। विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥ ६३ ॥

देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम्। ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥६४॥

यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाददुः। तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥६५॥

याज्ञवल्क्यस्ततो ब्रह्मंश्छन्दान्यधिगवेषयन्। गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥

याज्ञवल्क्य उवाच—ॐनमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपिचाकाशइवोपाधिनाऽव्यवधीयमानो भगवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७॥ यदुह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनभगवतः समभिधीमहि तपनमण्डलम्॥६८॥य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणानात्मनः स्वयमात्मान्तर्यामी प्रचोदयति॥६९॥य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाज[illegible] ग्रहगिलितं संमृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनु[illegible] तानि [illegible]खितो याज्ञ- यसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥७०॥' यजूंषि प्राप्तवान्। स्तत्रतत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥७१॥ अथह भगवंस्तव चरणन[illegible]ध्यन्दिनादिभ्यः पञ्चदश शिन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ७२ ॥

---

२ यत्तूक्तं. ३ पठ्यन्ते.

सूत उवाच—एवं स्तुतः स भगवान्वाजिरूपधरो हरिः। यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥७
यजुर्भिरकरोच्छाखा दशपञ्चशतैर्विभुः। जगृहुर्वाजसन्यस्ताः काण्वमध्यन्दिनादयः ॥७

इति शुक्लयजुर्वेदमाध्यन्दिनवाजसनेयशाखाविचारसंक्षेपः।

त्रयीशब्दितानामृग्यजुःसाम्नां लक्षणान्युच्यन्ते—पादबद्धगायत्र्यादिच्छन्दोविशिष्टा 'अग्निमीळे पुरोहितं' इत्याद्या ऋचः। ता एव गीतिविशिष्टाः सामानि। तदुभयविलक्षणानि यजूंषि 'अग्नीदग्नीन्विहर' इत्यादिसंबोधनरूपाणि। निगदमन्त्रा अपि यजुरन्तर्भूता एव। तदेवं त्रय्या मन्त्रविभागः। उपक्रान्तयजुःसंहितायां चरमश्चत्वारिंशोऽध्यायो ब्रह्मप्रतिपादकः। शेषा मूलादारभ्यैकोनचत्वारिंशदध्यायास्तु धर्मापरपर्यायविविधयज्ञकाण्डनिरूपणमिति यज्ञजाततदङ्गोपाङ्गनिरूपणपरा सपरिकरा कर्ममीमांसोपस्थिता भवति।

कर्ममीमांसाच 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'अन्वाहार्ये च दर्शनात्' इत्यन्ता द्वादशाध्यायी सुगृहीतनामधेयेन भगवता श्रीजैमिनिमहर्षिणा प्रणीता वरीवर्ति। तत्र प्रथमेऽध्याये धर्मप्रमाणम् १, द्वितीये धर्मभेदाभेदौ २, तृतीये शेषशेषिभावः ३, चतुर्थे क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः ४, पञ्चमे श्रुत्यर्थपठनादिना क्रमभेदः ५, षष्ठेऽधिकारविशेषः ६, सप्तमे सामान्यातिदेशः ७, अष्टमे विशेषातिदेशः ८, नवमे ऊहः ९, दशमे बाधः १०, एकादशे तन्त्रम् ११, द्वादशे प्रसङ्गः १२, इति क्रमेण द्वादशाध्यायानां प्रतिपाद्यार्थाः। तथा संकर्षकाण्डमध्यायचतुष्टयात्मकं तेनैव महर्षिवरेण प्रणीतं देवताकाण्डसंज्ञया प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात्कर्ममीमांसान्तर्गतमेव।

ब्राह्मणं तु त्रिविधं विधिरूपमर्थवादरूपमुभयविलक्षणं च। तत्र शब्दभावना विधिरिति भाट्टाः, नियोगो विधिरिति प्राभाकराः, इष्टसाधनता विधिरिति तार्किकादयः। सर्वोऽपि विधिश्चतुर्विधः—उत्पत्त्यधिकार-विनियोग-प्रयोगभेदात्। तत्र देवताकर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः 'आग्नेयोऽष्टाकपालो भवती'त्यादिः। सेतिकर्तव्यताकस्य करणस्य यागादेः फलसंबन्धबोधको विधिरधिकारविधिः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिः। अङ्गसंबन्धबोधको विधिर्विनियोगविधिः 'व्रीहिभिर्यजेत', 'समिधो यजती'त्यादिः। साङ्गप्रधानकर्मप्रयोगैक्यबोधकः पूर्वविधित्रयमेलनरूपः प्रयोगविधिः। स च श्रौत इत्येके। काल्प इत्यपरे आहुः।

अथार्थवादः। प्राशस्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवादः। सच त्रिविधः गुणवादोऽनुवादो भूतार्थवादश्च। प्रमाणान्तरविरुद्धार्थबोधको गुणवादः 'आदित्यो यूपः' इत्यादिः। प्रमाणान्तरप्राप्तार्थबोधकोऽनुवादः 'अग्निर्हिमस्य भेषजं' इत्यादिः। प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादिः। तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादस्य स्वतःप्रामाण्यं देवताधिकरणन्यायात्। अबाधिताज्ञातार्थज्ञापकत्वं हि प्रामाण्यम्। तच्च बाधितविषयत्वाज्ज्ञातज्ञापकत्वाच्च न गुणवादानुवादयोः। भूतार्थवादस्य तु स्वार्थे तात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं न विहन्यत इत्येवमर्थवादः।

अथाङ्गजातं त्रिविधं दृष्टार्था-ऽदृष्टार्थो-भयात्मकभेदात्। यद्दृष्टार्थं जातिगुणकर्मद्रव्यात्मकं तत्र जातिगुणौ 'पशुना यजेत', 'अरुणया क्रीणाति' इति क्रियासाधनत्वेन विनियुक्तौ तत्साधनद्रव्यपरिच्छेदेनैवोपकारेण तस्य शेषभावमनुभवतः। कथं पुनर्द्रव्यपरिच्छेदात्कर्मसाधनत्वमिति चेत् विशि-[illegible]त्वात्तस्य च विशेषणाधीनप्रतिपत्तिकत्वादप्रतिपन्नस्य साधनाभावासंभवात्तत्प्रत्युपात्त-[illegible]ति कर्मसाधनत्वम्। गुणस्य तु साधनत्वं श्रुतं यथोक्तप्रकारेणोपपादयितुं त-

[illegible]ज्जेन वेगेन वा संन्यस्तास्त्यक्ताः शाखा वाजसनीसंज्ञा इति श्रीधरस्वामिनः।

...ष्टस्य कर्मसाधनत्वं कल्प्यते तदेव जातिगुणयोर्दृष्टार्थत्वम् । द्रव्यस्य तु साक्षादेव कर्मनिर्वृत्तिः । ...व प्रयोजनम् ।

...अङ्गकर्म द्विधा संनिपत्योपकारकरूपमाराहुपकारकरूपं च । तत्र प्रोक्षणादि संनिपत्योपकारकरूपं, प्र-...याद्याराहुपकारकरूपम् । संनिपत्योपकारकारीणि दृष्टार्थानि कर्माणि स्वकारकाणां वह्न्यादीनामुत्पत्तिं ... विकृतिं संस्कारं कुर्वन्ति सन्ति साध्यस्य प्रधानस्योपकुर्वन्ति । यथा—'वसन्ते ब्राह्मणोऽग्नीनाद-...दधीत', 'यूपं तक्षति' इत्यादावाधान-तक्षणादिना संस्कारविशेषविशिष्टाग्नि-यूपादेरुत्पत्तिः । 'स्वाध्या-...योऽध्येतव्यः', 'गां पयो दोग्धि' इत्यादावध्ययन-दोहनादिना विद्यमानस्यैव स्वाध्याय-पयःप्रभृतेः ...प्तिः । 'सोममभिषुणोति', 'व्रीहीनवहन्ति', 'आज्यं विलापयति' इत्यादावभिषवा-ऽवघात-विलापनैः ...सोमादीनां विकारः । 'व्रीहीन्प्रोक्षति', 'पत्न्यवेक्षते' इत्यादौ प्रोक्षणा—ऽवेक्षणादिभिर्व्रीह्यादिद्रव्याणां संस्कार इति । तदेवमुत्पत्त्यादिसाध्यभेदाच्चतुर्विधं कर्म कर्मादीनामन्यतमे कारके यथायथमुत्पत्त्यादीनि करोति । कर्मण्येव व्रतादि, कर्तरि व्रतं, करणे प्रयाजशेषाभिघारणं, संप्रदाने पशुपुरोडाशयागः, अपादाने अग्नेस्तृणान्यपचिनोतीति, अधिकरणे दध्यानयनम् । आराहुपकारकं कारकद्वारकं प्रधानस्योपकरो-तीत्युपकार्थः पशुपुरोडाशयागः । सोऽपि त्यागांशेनादृष्टमुद्देशांशेन च दृष्टं देवतास्मरणं करोतीत्युभ-यार्थः । ननु 'एकं वा चेदनेकत्वात्' इति न्यायेन विध्युपपत्तेः प्रयोजनद्वयमनुपपन्नमितिचेत् दृष्टार्थ-त्वादिप्रयोजनापेक्षायां स्मरणं प्रथमं स्वीक्रियते । स्वीकृतेच तस्मिन् त्यागांशस्य तत्र प्रयोजनमपश्यतः पुनरपेक्षा जायते । साचादृष्टकल्पनेन निवर्तते तेनैवंजातीयकमुभयोर्लिङ्गमुभयोपकारतामावहति । संपूर्णाङ्गसंयुक्तो विधिः प्रकृतिः । विकलाङ्गयुक्तश्च विकृतिः । तदुभयविलक्षणो विधिर्दर्वीहोमादिः, एव-मन्यदप्यूह्यम् । आस्तां दुरवगाहविषयावगाहनोल्लेखपल्लवितेनेति विरम्यते ।

श्रीमच्छुक्लयजुर्वेदसंहितेयं पुण्यपत्तनगतडेक्कनकालेजाख्याङ्ग्लविद्यालयसंगृहीतग्रन्थवर्तिहस्ताक्षर-प्राचीनद्वित्रपुस्तकानां, तथा श्रीक्षेत्रनासिकवास्तव्यविद्वद्वर वे. शा. सं. आण्णाशास्त्रीवारे इत्येतैर्द-त्तस्य कलिकाता—वाराणसीमुद्रितानां च सहायेन विहितशोधनाभ्यां उवटभाष्य—महीधरभाष्याभ्यां सनाथीकृत्याधुनाङ्कितास्ति जिज्ञासूनामेकत्र भाष्यद्वयलाभाय । यद्यप्यस्याध्ययनाध्यापनपारायणादा-वैतदीयप्रातिशाख्य—याज्ञवल्क्यशिक्षा—प्रतिज्ञासूत्रादिनिर्दिष्टप्रकारेण तत्रतत्र परसवर्णपूर्वस्वरगुरुत्व-द्वित्वोच्चारणानुकूलो वर्णविन्यासोऽपेक्षितस्तथापि 'योऽर्थज्ञ इत्सकलं भद्रमश्नुते' इत्यादिप्रामाण्यादर्थ-ज्ञानस्यापि पाठादिसदृक्षफलवत्त्वेनावश्यादरणीयत्वात्तत्र पाठक्रमानुगुणवर्णविन्यासेन चेतरेतरवर्ण-पदसापेक्षशृङ्खलावत्त्वेनातीव दुरूहता स्यात्तद्वारणायाञ्जसा विशदपदस्वरूपप्रतिपत्तिद्वाराऽर्थावगमसौ-कर्याय च प्रतिज्ञासूत्रद्वितीयकण्डिकान्ते "—ऽसंयुक्तस्य दुमृते संयुक्तस्य च खकारोच्चारणमध्ययनादिक-र्मस्वर्थवेलायां प्रकृत्या" इत्यनुशासनमनुसृत्यार्थज्ञानानौपयिकद्वित्वपरसवर्णादिपरिहारेण वर्णविन्यास आदृतोऽस्ति । तथा प्रमाणभूतपरिशिष्टानामखिलमन्त्रकोशस्य चान्ते कृतोऽस्ति समावेशः यत्क्रमको-शसाहाय्येनेप्सितमन्त्रस्य द्रुतमुपलब्धिः स्यात् ।

एतादृशानल्पपरिश्रमेण विहितेऽपि संस्करणेऽस्मादृशाल्पप्रज्ञमानुषशेमुषीसुलभत्वेन जनिमन्ति स्ख-लितानि सुविमृश्य प्रबोधयन्तु विपश्चिद्वरा येन कृतज्ञताप्रकाशनपुरःसरं यतेयाग्रिमसंस्करणेऽस्य ...विशेषनिर्दोषतासंपादनाय । क्षन्तारश्च परपरिश्रमज्ञा गुणैकपक्षपातिनो दूषणवाचंयमाः ... । तानि योऽस्मदृगादिदोषोपनता अशुद्धीरिति भूयोभूयः सप्रश्रयं साञ्जलिबन्धं च विज्ञापयति— ... दुःखितो याज्ञ-

...क्तानि यजूंषि प्रासवान् । माध्यन्दिनादिभ्यः पञ्चदश शि-

विद्वद्वशंवदः

पणशीकरो...

२ यतूक्तं. ३ पठ्यन्ते.

श्रीः

# शुक्लयजुर्वेदवाजसनेयिमाध्यन्दिनसंहिताध्यायविषयाः—

## पूर्वार्धम्—



## उत्तरार्धम्—



[illegible]-वेदपारायणविधिः १, याज्ञवल्क्यशिक्षा २, प्रतिज्ञासूत्रम् ३, सर्वानुक्रमणी ४, [illegible]सूत्रम् ५, मन्त्राणामकारादिवर्णक्रमकोशश्च ६, इति ।

[illegible]जुर्वेदसंहिताध्यायविषयानुक्रमणिका ।

ॐ

# श्रीमद्वाजसनेयिमाध्यन्दिन-

# शुक्लयजुर्वेदसंहिता।

## उवटभाष्य–महीधरभाष्यसंवलिता।

### प्रथमोऽध्यायः।

### उवटभाष्यम्।

ॐनमः श्रीवेदपुरुषाय।

हृदयं दक्षिणं चाक्षि मण्डलं चाधिरुह्य यः।
चेष्टते तमहं नौमि ऋग्यजुःसामविग्रहम्॥ १॥
आदित्याल्लब्धवान्यस्तु शाखाः पञ्चदशापराः।
तं याज्ञवल्क्यं वन्देऽहं मन्त्रभाष्यप्रसिद्धये॥ २॥
गुरुतस्तर्कतश्चैव तथा शातपथश्रुतेः।
ऋषीन्[1]वक्ष्यामि मन्त्राणां देवताश्छन्दसं च यत्॥ ३॥
ऋचो यजूंषि सामानि तथार्थः पदवाक्ययोः।
श्रुतयश्चात्र याः प्रोक्ता योऽर्थवादश्च कर्मणः॥ ४॥

तत्रहि पूर्वस्मिन्कल्पे विशिष्टकर्मजनितस्मृतिसंस्कारसंतानानुच्छित्तिधर्माणः सुप्तप्रबुद्धन्यायेन हिरण्यगर्भप्रभृतयः कल्पादौ सह विद्ययाभिव्यज्यमानाः स्मर्तारो द्रष्टार ऋषय उच्यन्ते। सोऽयं हिरण्यगर्भ[2]परम्परयाभिव्यक्तो नित्यो वेदः। तेच श्रुतौ व्यज्यमाना ज्ञायन्ते। तद्यथा। 'तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासौ' इति। तत्र दर्शपूर्णमासद्रव्यदेवतामन्त्रादि परमेष्ठिना दृष्टमित्यर्थः। तथा 'दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदांचकार' इत्युपक्रम्य 'नतदुहाश्विनोरनु श्रुतमास' इत्येवमादिनेतिहासेन प्रवर्ग्यगतानां मन्त्राणां दध्यङ्ङाथर्वण ऋषिरिति गम्यते। ऋषिश्च ज्ञातव्य इति श्रुतिर्दर्शयति 'प्रजापतिः प्रथमां चितिमपश्यत्' इत्युपक्रम्य 'स यो हैतदेवं चितीनामार्षेयं वेद' इत्यादिना ग्रन्थेन फलं दर्शयति। अथ देवता मन्त्रवाक्याभिधेयाः। यथा—अग्निर्मूर्धा दिवः ककुदित्यत्राग्निः। इषेत्वेति शाखा। ननु अग्निर्मूर्धेत्यत्राग्नेर्महाभाग्यत्वाद्देवतात्वमुपपद्यते शाखादीनां तु स्थावरत्वाद्देवतात्वं दुर्लभमिति यश्चोदयेत्तंप्रति ब्रूमः। यस्यहि यत्र हविर्भाक्त्वं[1] स्तुतिभाक्त्वं वा विद्यते सा तत्र देवता नतु रूढ्या। एवंच सति शाखादीनां देवतात्वमुपपद्यत एव। यदुक्तं[2] स्थावरत्वादित्यादि। अत्र ब्रूमः। अधिष्ठात्र्योऽत्र देवता विद्यन्ते। प्रतिमाभूतास्तु शाखादयस्ताः फलं साधयन्तीत्यदोषः। मन्त्रस्य वाच्यं देवतेति श्रुतिर्दर्शयति 'आशुः शिशानो वृषभो न भीमः' इत्युपक्रम्य 'ऐन्द्र्योऽभिरूपाः' इतीन्द्रस्य देवतात्वं दर्शयति। छन्दोपि ज्ञेयमित्यनेनैव दर्शयति येनैवमाह। 'दक्षिणतोऽसुरान्रक्षाᳪसि त्वाष्ट्रान्यपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टुप्' इत्युपक्रम्य 'ता द्वाविंशतिर्गायत्र्यः संपद्यन्ते[3] तदा-

### महीधरभाष्यम्।

प्रणम्य लक्ष्मीं नृहरिं गणेशं भाष्यं विलोक्यौवटमाधवीयम्।
यजुर्मनूनां विलिखामि चार्थं परोपकाराय निजेक्षणाय॥ १॥
दूरादसूयां निर्धूय कृपां कृत्वा ममोपरि।
विलोक्यो वेददीपोऽयं बुद्धिमद्भिर्द्विजोत्तमैः॥ २॥

तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन्मनुष्यान्विचिन्त्य तत्कृपया चतुर्धा व्यस्य ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश ते च स्वशिष्येभ्यः। एवं परम्परया सहस्रशाखो वेदो जातः। तत्र व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात्केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति। स योगसामर्थ्यान्मूर्तां विद्यां विधायोद्ववाम। वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन्। तानि यजूंषि बुद्धिमालिन्यात्कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालबौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदश शि-

१ ऋषीन्वच्मीह. २ हिरण्यगर्भपरंपरा ब्रह्मपङ्क्तिः.

१ हविर्भुक्तिः. २ यत्तूक्तं. ३ पठ्यन्ते.

प्रत्ययो भवन्ती'ति । नह्यच्छन्दोविद्देवतामाग्नेयीं संपदं वेदेति । ऋचो यजूंषि चात्र विद्यन्ते तानि च ज्ञेयानीत्यत्र श्रुतिर्भवति 'यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सैषर्क्सा देवता तद्यजु' रित्युपासनार्थं ऋग्यजुषोः पृथग्ग्रहणं करोत्यतो ज्ञेयमृग्यजुषमिति । अथ पदार्थः । तत्र 'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाता' इति नैरुक्ताः पठन्ति ।

तत्र नाम पञ्चप्रकारं पठन्ति—'धातुजं धातुजाजातं समर्थार्थजमेव च । वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदं' । तत्र धातुजं—वन्दारुः, पचमानः, यजमानः । धातुजाजातं तद्धितपदं—आग्नेयः, याजमानं, दैव्याय । समर्थार्थजः समासः । सच संक्षेपतश्चतुःप्रकारः । अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिरिति । अथोदाहरणानि— उपरिनाभि, बहिष्पिण्डं । प्रजापतिः, पशुपतिः । अग्नीषोमौ, इन्द्राग्नी । कृष्णग्रीवः, शितिकण्ठः । यथासंख्यं द्वेद्वे उदाहरणे । वाक्यजं 'क्रयस्य रूपं सोमस्य लाजाः' इत्यत्र सोमस्य क्रयस्य रूपं लाजा इत्येवं प्राप्ते रूपशब्देन व्यवधानं व्यत्ययश्च । व्यतिकीर्णं अन्यत्र प्रसिद्धं यत्पदत्वेन तत्प्रतिरूपका ये वर्णास्तैः सहोच्चार्यते यत्तत् । पार्श्वतः श्रोणितः शितामत इत्यत्र शतामत इति । 'त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः' इत्यत्राशुशुक्षणिरिति । तत्र नाम्नां सामान्यतोऽर्थवचनं । सत्वप्रधानानि नामानि । सतो भावः सत्वं अस्तिता । तद्यत्र प्रधानं तन्नाम, गुणभूता क्रिया, विभक्त्यर्थः कारकं च तानीमानि सत्वप्रधानानि नामानीति नाम्नोऽर्थः ।

**अथ भावप्रधानमाख्यातम्** । भावो नाम क्रियायाः फलं । तद्यथा । ओदनं पचति देवदत्त इत्यत्र देवदत्ताश्रया ओदनाख्यस्य भावस्य गुणभूता पाकक्रिया । अतो भावप्रधानमाख्यातमित्युच्यते । यद्वा भावप्रधानं भावनाप्रधानं । भावना च पुरुषपरिस्पन्दः पुरुषप्रयत्नः आत्मनो व्यापारः । परि[illegible]न्दस्तु भूतानां सा यत्र प्रधानं गुणभूता क्रिया तदिदं भ[illegible]प्रधानमाख्यातम् । अथवा भावो धात्वर्थः क्रियेत्यनर्थान्तरम्[illegible] सा यत्र प्रधानं गुणभूतानि षट्कारकाणि तदिदं भावप्रधा[illegible]नमाख्यातमित्याख्यातार्थः । तानिच पचति पठतीत्यादीनि ॥

अथ विंशतिरुपसर्गाः क्रियाविशेषकरा इति सामान्यतोऽर्थः । विशेषार्थस्त्वनन्त इति । तेच प्र परा अप सम् अनु अव इत्यादयः । अथ निपातानामर्थः सामान्यतोऽसत्ववचनता । सत्वं द्रव्यमसत्वमद्रव्यं तद्वचनाश्चादयो निपाता असत्ववचनाः । अत्र त्रैराश्यम् उपमार्थीयाः, कर्मोपसंग्रहार्थीयाः, पादपूरणा इति । तत्र उपमार्थीयाः सादृश्यवचना इव [illegible] इत्यादयः । तद्यथा—'देव इव सविता सत्यधर्मा । इन्द्रो न' । कर्मोपसंग्रहार्थीयास्त्वसत्ववचनाः वा च अह ह इत्यादयः । तद्यथा—'वातो वा, मनो वा, अग्निश्च पृथिवी च' इत्यादयः । पादपूरणाः पादमेव पूरयन्ति नत्वर्थान्तरं वदन्ति । अनर्थान्तरवचना इत्यर्थः । ईं कं इत्यादयः । 'सद्योजज्ञानो विहि' 'इमा नु कं भुवना' । उक्तंच—'क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् । सत्वाभिधायकं नाम निपाताः पादपूरणाः॥' इति ।

अथ वाक्यार्थं व्याख्यास्यामः । नामाख्यातोपसर्गनिपातसमुदायो वाक्यं । तस्यार्थो वाक्यार्थः । ननु यदि पदान्येव संहतानि वाक्यमुच्यते एवं तर्हि य एव पदार्थः स एव वा[illegible] क्यार्थस्ततः पृथग्वाक्यार्थव्याख्या नोपपद्यत इति यश्चोदये[illegible] प्रत्याह । साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः । तद्यथा—गौ रित्युक्ते किमित्याकाङ्क्षा भवति । ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति । अथ गच्छतीत्युक्ते किमित्याकाङ्क्षं भवति । ततो गौरि त्युक्ते निराकाङ्क्षं भवति । अथेदानीं गौर्गच्छतीत्युक्ते यत्रैं गौर्वाह दोहादिभ्यो व्यावृत्य गमनेऽवतिष्ठते । गमनं चान्यगन्तृभ्यो[illegible]

[१]भ्येभ्यः पाठितवान् । तथाच श्रुतिः 'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते'(बृह० ५।५।३३) इति । अस्यार्थः । आदित्यादधीतान्यादित्यानि शुक्लानि शुद्धानि । वाजस्यान्नस्य सनिर्दानं यस्य स वाजसनिस्तदपत्यं वाजसनेयस्तेन याज्ञवल्क्येन शिष्येभ्य आख्यायन्ते कथ्यन्त इत्यर्थः । तत्र मध्यन्दिनेन महर्षिणा लब्धो यजुर्वेदशाखाविशेषो माध्यन्दिनः । यद्यपि याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टः, तथापि ईश्वरकृपया मध्यन्दिनसंबन्धितया लोके प्रख्यायते । तं माध्यन्दिनं वेदं येऽधीयन्ते विदन्ति वा शिष्यपरम्परया वर्तमानास्तेऽपि माध्यन्दिना उच्यन्ते ॥

अतएव 'स्वाध्यायोऽध्येतव्यः' (शत० ब्रा० ११।५।५।६।७) इति स्वशाखाध्ययनं विहितम् । तच्चाध्ययनं प्रतिमन्त्रमृषिच्छन्दोदेवताविनियोगार्थज्ञानपूर्वकं विधेयम् । अन्यथा दोषश्रवणात् । 'एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तराश्वगर्तं वा पद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान्भवति'(अनुक्रम[illegible] १।१) इति कात्यायनोक्तेः । ऋष्यादिज्ञाने फलश्रवणाच्च 'अथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते' ( अनु० १।१[illegible] इत्युक्तेश्च । तस्माद्वेदमन्त्राणामृष्यादिज्ञानमर्थज्ञानं चावश्यकम् अन्यथा फलवैकल्यात् । तत्र यजुर्वेदमन्त्रेषु कानिचित् यजूंषि काश्चन ऋचः । तत्र ऋचां नियताक्षरपादावसानानामावश्यकं छन्दः कात्यायनेनोक्तम् । यजुषां षडुत्तरशताक्षरावसानानामे काक्षरादीनां पिङ्गलेन 'दैव्येकम्' इत्यादिनोक्तं छन्दो बोद्धव्यम् । तदधिकानां तु 'होता यक्षद्वनसतिमभिहि' ( अध्या० २०। ४६ ) इत्यादीनां नास्ति छन्दःकल्पना ॥—तत्राद्या[illegible]

१ नियताक्षरपादावसाना ऋक् । अनियताक्षरपादावसानं यजुः । प्रगीतं मन्त्रवाक्यानाम्. २ व्यत्ययात्. ३ भावनामात्रप्रधानं.

१ पुरुषप्रयत्नपरिस्पन्दः. २ त्वर्थान्तरं. ३ विशेषास्त्वनन्ता इ[illegible] ४सर्वसामान्योऽर्थः. ५ निपातः पादपूरणः. [illegible]का इति सा. ७ यद् गौ.

ह्याहृत्य गम्येवावतिष्ठते अयं वाक्यार्थः । स एव प्रकरणाविशी वाक्यार्थः पदार्थनियमे हेतुः । पदं तु पदार्थपरिज्ञानहेतुः। .ं पदार्थवाक्यार्थयोर्विशेषः । नन्वस्य पदचतुष्टयस्य वाक्यगतस्य कथं गुणप्रधानभाव इति । उच्यते । पदार्थद्वारकः संबन्धो गुणप्रधानभावश्च पदानाम् । तत्र प्रधानमाख्यातं गुणभूतान्यन्यानि, आख्यातार्थस्य साध्यत्वादितरेषां पदार्थानां स्वभावसिद्धत्वात् । तत्र सिद्धार्थसाध्यार्थयोर्यदेकस्मिन्वाक्ये समुच्चारणं तत्साध्यार्थं भवितुमर्हति न सिद्धार्थम् । तथाच भूतं सिद्धं भव्यं साध्यम् । भूतभव्यसमुच्चारणे 'भूतं भव्यायोपदिश्यते न भव्यं भूताय' इति न्यायविदः पठन्ति । एते च वाक्यार्था इषेत्वादिमन्त्रगणे प्रायशो दृश्यन्ते—'विध्यर्थवादयाच्ञाशीःस्तुतिप्रैषप्रवह्लिकाः। प्रश्नो व्याकरणं तर्कः पूर्ववृत्तानुकीर्तनम् । अवधारणं चोपनिषद्वाक्यार्थाः स्युस्त्रयोदश । मन्त्रेषु ये प्रदृश्यन्ते व्याख्या च श्रुतिचोदिता' ॥

**अथैतेषामुदाहरणानि ।** तत्र विधिः परमेष्ठ्यभिहितः 'अश्वस्तूपरोगो मृगः' इत्यादिः । अर्थवादः—'देवा यज्ञमतन्वत'इत्यादिः । याच्ञा—'तनूपा अग्नेसि तन्वं मे पाहि'। आशीः—'आवो देवास ईमहे' इत्यादिः । स्तुतिः—'अग्निर्मूर्धा दिवः ककुत्' । प्रैषः—'होता यक्षत्समिधाग्निम्' इत्यादिः । प्रवह्लिका—'इन्द्राग्नी अपादियम्' इत्यादि । प्रश्नः—'कः स्विदेकाकी चरति' इत्यादिः । व्याकरणं—'सूर्य एकाकी चरति' इत्यादि । तर्कः—'मा गृधः कस्यस्विद्धनम्' इत्यादि । पूर्ववृत्तानुकीर्तनं—'ओषधयः समवदन्त' इत्यादि । अवधारणं—'तमेव विदित्वातिमृत्युमेति' । उपनिषत्—'ईशावास्यम्' इत्यादि ॥

**अथ व्याख्याधर्माः**—'अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् । विप्रकृष्टं तु संदध्यादानुपूर्व्यं च कल्पयेत् ॥ लिङ्गं धातुं विभक्तिं च योज्यं वाक्यानुलोमतः । यद्यत्स्याच्छान्दसं वाक्ये कुर्यात्तत्तत्तु लौकिकम् ॥' **अथोदाहरणानि**—अतिरिक्तं पदं त्याज्यमिति । यथा—'इमानु कं भुवना सीषधाम' इति । कमित्यनर्थको निपातः। हीनं वाक्ये निवेशयेदिति । 'अस्मादन्नादिति भागमवेक्षते' इत्यत्राधस्तनो मन्त्रशेष इहाप्यभिसंबन्धनीयः अस्मादन्नान्निर्भक्त इत्यादि । विप्रकृष्टं तु संदध्यादिति । 'सं रेवतीर्जगतीभिः पृच्यताम्' इत्यत्र संपृच्यतामिति व्यवहितसंबन्धः । आनुपूर्व्यं च कल्पयेदिति । 'मा नो मित्रो वरुणो अर्यमायुः' इत्यत्र 'यद्वाजिनो देवजातस्य' इति द्वितीयोऽर्धर्चः प्रथमं व्याख्येयः । यतो हि यद्वृत्तं वाक्ये प्रथमं भवति । लिङ्गं धातुं विभक्तिं च यथार्थं संनमयेत् । लिङ्गं तु वाक्यवशात्संनमयेत् । 'पवित्रे स्थो वैष्णव्यौ' । अत्र पवित्रे इति नपुंसकलिङ्गं, वैष्णव्याविति च पुंलिङ्गं, तत्र वैष्णव्यावित्यस्य सन्नतिराविष्टलिङ्गत्वात्पवित्रशब्दस्य । धातुं धात्वर्थं च सन्नमयेत् 'अग्रेगुवो अग्रेपुवः' इति । अत्र अग्रेपुव इति संदेहः किमत्र पिबते रूपं उत पवतेः । तत्र श्रुतितो निर्णयः 'ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ती' ति व्याख्यानात्पिबतेरेव रूपमिति । विभक्तिं संनमयेत् । 'कस्मै देवाय हविषा विधेम' इत्यत्र हविषेति तृतीयायाः द्वितीयासन्नतिर्वाक्यसंयोगात् । अन्यदपि यत्किंचिच्छान्दसं तत्सर्वं लौकिकविहितैः शब्दैर्व्याख्येयम् । इत्ययं सामान्यतो व्याख्याक्रम उक्तः ॥

---

द्वितीयाध्यायाष्टाविंशतिकण्डिकाश्चेति दर्शपूर्णमासमन्त्राः । तेषां परमेष्ठी प्रजापतिर्ऋषिर्देवता प्राजापत्या वा । द्वितीयाध्यायान्तिमकण्डिकाषट्कं पितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः । आद्येऽध्याये सर्वाणि यजूंषि । एका 'पुरा क्रूरस्य' ( १।२८ ) इति ऋक् । यजुषां पिङ्गलोक्तं छन्दो बोद्धव्यं विस्तरभयान्नोच्यते । ऋचां तु छन्दांसि वक्तव्यानि । तत्राद्यायां कण्डिकायां पञ्च ..र्त्राः । द्वौ त्र्यक्षरौ तृतीयश्चतुरक्षरः । चतुर्थो द्विषष्ठ्यक्षरः । ..मो नवाक्षरः । तत्र प्रकृतित्वादादौ दर्शपूर्णमासमन्त्राः । ..त्र कृत्स्नाङ्गानामुपदेशः क्रियते सा प्रकृतिः । यत्र विशे..ङ्गमात्रमुपदिश्यतेऽङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते सा ..विकृतिः । तत्र प्रकृतिस्त्रिविधा—अग्निहोत्रम्, इष्टिः, सोम..श्चेति । तत्र यद्यपि कृताधानस्यैव दर्शपूर्णमासयोरधिकारा..न्नादौ अन्याधानमन्त्रा वक्तुमुचितास्तथाप्याधाने पवमानेष्ट्यो..विधेयास्ता अन्तराधानस्यैवासिद्धेः । पवमानेष्टीनां च दर्शपूर्ण..मासविकृतित्वात्सोमेऽपि दीक्षणीयप्रायणीयादिषु दर्शपूर्णमास..पेक्षत्वादादौ दर्शपौर्णमासमन्त्रा गदितुं युक्ताः । ते चे..वायुःस्वादयः ।—तत्रेषेत्वेति द्विपदरुग्यक्षरो मन्त्रः । तस्य दैव्यानुष्टुप्छन्दः । शाखा देवता । पलाशशाखाच्छेदने विनियोगः । शाखादीनामचेतनत्वेऽपि तदभिमानिनीनां देवतानां सत्त्वाद्देवतात्वम् । 'अभिमानिव्यपदेशस्तु' इति व्याससूत्रोक्तेः । 'मृदब्रवीदापोऽब्रुवन्' इति श्रुतेश्च । तस्माच्छाखोखापयःशुक्र्यादीनामपि देवतात्वम् । तत्र प्रतिपदि दर्शयागं चिकीर्षुरमावास्यायां प्रातरग्निहोत्रं हुत्वा दर्शयागार्थं 'ममाग्नेवर्चः' ( का०२।१।३ ) इति मन्त्रेणाग्निषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणं कुर्यात् । दर्शयागे त्रीणि हवींषि सन्ति । आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यैन्द्रं पय इति । तत्र प्रतिपदि दधि होतुं दध्नो निष्पत्त्यै रात्रावमावास्यायां गावो दोग्धव्याः । तद्दोहनार्थं प्रातर्लौकिकदोहादूर्ध्वं स्वमातृभिः सह चरन्तो वत्साः स्वमातृभ्यः पलाशशाखयापाकरणीयाः । तदर्थं पलाशशाखाच्छेदनम् । गायत्र्या पक्षिरूपं विधाय यदा दिवः सोमवल्ल्याहृता तदा तत्पत्रं भूमावुप्तं ततः पलाशोऽभवदिति श्रुत्या ( श० ब्रा० १।७।१-८।२।१० ) पलाशस्य प्राशस्त्यं ब्रह्मत्वं चोक्तं तस्मात्पलाशशाखाच्छेदनम् ॥

---

१ योरर्थविशेषः. २ केषु मन्त्रगणेषु.

१ योजयेचानुलोमतः, योजयेदानुलोमतः, लोम्यतः. २ संधानीयः. ३ प्रथमाया. ४—लौकिकविदितैः.

## तत्र प्रथमा ।

√हरिः ॐ । इषे त्वोर्जे त्वा वायवं स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशंꣳसो ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ १ ॥

उ० अतःपरं वैशेषिकमनुक्रमिष्यामः । अत्र इषे त्वा द्वावध्यायौ दर्शपूर्णमासमन्त्राः। परमेष्ठिनः प्राजापत्यस्यार्षं देवानां वा प्राजापत्यानां 'तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासौ' इति श्रुतेः परमेष्ठिन आर्षम् । तथा 'ते देवा अकामयन्त'इत्युपक्रम्य 'तत एतꣳहविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासौ'इति देवानामार्षं कथ्यते। तत्रास्मिन्नध्याये सर्वाण्येव यजूंषि । पुरा क्रूरस्येतीयं त्रिष्टुप् । तत्र यजुषां केचिद्वैशेषिकं छन्द इच्छन्ति पिङ्गलपरिपठितं दैव्येकमित्यादिनेति[1]। तत्रच सर्वसंख्यया व्यवहारः पाद इत्युपरिष्टादधिकारात् । तत्र इषे त्वा द्विपदो मन्त्रः त्र्यक्षरत्वाद्दैव्यनुष्टुप् श्रुत्या शाखाच्छेदे विनियुक्तः। नचाख्यातमुपलभ्यतेऽत्र । नचाख्यातं विना वाक्यं किंचिद्विधत्ते इत्यध्याहारेणानुषङ्गेण वा वाक्यपरिपूर्तिः कर्तव्या । नन्वध्याहारानुषङ्गयोः को विशेषः । लौकिकोऽध्याहारः यथा— 'भूताय त्वा नारातये परिशेषयामि'। पिनष्टि प्राणायत्वेति प्रतिमन्त्रं 'प्राणाय त्वा पिनष्मि'। अनुषङ्गस्तु मन्त्रावयव एव यथा— 'अस्मादन्नान्निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः'। 'अस्यै प्रतिष्ठायां निर्भक्त' इत्यादि विष्णुक्रममन्त्रेषु परिपठितमिहाभिसंबध्यते । अपरिपूर्णत्वाद्वाक्यस्य । अयं विशेषोऽध्याहारानुषङ्गयोः । इह त्वन्यशाखापरिपठितेनाख्यातेन सूत्रकारेण वाक्यपरिपूर्तिः कृता 'छिनद्मीति चोभयोः साकाङ्क्षत्वात्संनमयामीति वोत्तर' इति । अथ कोऽर्थः । शाखा उच्यते । इषे अन्नाय[2] त्वा त्वां छिनद्मीति । 'इषु इच्छायां' तस्य क्विपि ईट्[3] इति रूपं भवति तस्य तादर्थ्ये चतुर्थी । इषे श्रुत्युक्तमभिधेयं[4] वृष्ट्यै तदाह 'यदाहेषेत्वेति वृष्टिः सर्वेणैवेष्यते'। अतोऽभिधानगतस्य धातोरभिधेयक्रिया विद्यत इति । इषे इत्यभिधानं । अभिधेया वृष्टिः । न्याय्योऽभिधानाभिधेयलक्षणः संबन्धः। त्वा इति युष्मदो द्वितीयैकवचनस्य स्थाने आदेशः । नन्वेवं[5] तत्र यदि एषणक्रियायोगादिह वृष्टिरभिधीयते नतु रूढ्या तदानीं यद्यद्धिरण्यादि किंचिदिष्यते तत्तत्सर्वमिडित्युच्यते । तथासति संव्यहारोच्छेद इत्येवमादीन्दोषान् केचिद्विदधति, तदसत् । सिद्धे हि शब्दार्थसंबन्धे पश्चादभिधानाभिधेयभावं क्रियाद्वारकं प्रकाशयितुं व्युत्पत्तिः क्रियते। साच क्रियमाणा तस्मिन्नेवाभिधेयेऽवतिष्ठते मगधाधिपतिवत् । यथा मगधाधिपतेर्मागधेषु जनपदेष्वाधिपत्यमस्ति न कान्यकुब्जेष्वेवमिहापि जात्यादिपरिच्छिन्नेष्वभिधेयेषु याप्रवृत्तिरस्ति न सर्वत्रेत्यदोषः। व्युत्पत्तिद्वारेण च शब्दानां प... ज्ञानमभ्युदयहेतुरिति श्रुतिर्दर्शयति । 'तत्प्रणीतानां प्रणीत... प्रति ह तिष्ठति य एवमेतत्प्रणीतानां प्रणीतात्वं वेदे'ति प्रणीता-शब्दस्य निर्वचनपरिज्ञानद्वारेण फलं दर्शयति । तथा पुरुषशब्दव्युत्पत्तिं प्रकृत्याह । 'स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन ओषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद'। एवं तत्र तत्र। एतच्च स्थालीपुलाकन्यायेन[1] सर्वेष्वभिधेयेषु[2] द्रष्टव्यम् । आहच—'क्रियाद्वारकसंबन्धमभिधानाभिधेययोः । ज्ञात्वा फलमवाप्नोति श्रुतिर्वक्ति पुनः पुनः ॥ ऊर्जे त्वा । द्विपदस्त्र्यक्षरो मन्त्रः । दैव्यनुष्टुप् यदि यजुषां छन्दोस्ति । एवं सर्वेषु यजुःषु ऋक्षु च वक्तव्यं । ग्रन्थगौरवभयादत्र[3] नोच्यते । उक्तंच—'स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगोऽर्थ एव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे' ॥ शाखासंजमने विनियुक्तः । संनमयामीति[4] वाक्यशेषः । 'यो वृष्टादूर्ग्रसो जायते तस्मै तदाह'इति श्रुतिः । 'ऊर्ज बलप्राणनयोः' क्विप् । ऊर्जे । तादर्थ्ये चतुर्थी । व्रीह्यादेर्धान्यस्य क्षीरादेश्च सेचनस्य उत्पत्त्यर्थं त्वां संनमयामि । रसपरिणामो हि वृष्टिरन्नादिकं च तदभिप्रायौ मन्त्रौ । श्रुतिश्चास्मिन्नर्थे भवति—'अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिः' इति । तथा 'इतः प्रदाना-द्वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स एतैः स्तोकैरेतांस्तोकांस्तनुते त एते स्तोका वर्षन्ती'ति ॥ वायव स्थ । वत्सं शाखयोपस्पृशति । यथा वायुर्वृष्टिद्वारेण गवामाप्यायकः एवं यूयमपि प्रस्नुतिद्वारेणाप्यायका भवथेत्यर्थः । एकस्यापि वत्सस्योपस्पर्शने सर्वेषां संस्कारो बहुवचनोपदेशात्। पूजार्थं वा बहुवचनम् ॥ देवो वः सविता । अथ मातॄणामेकां शाखयोपस्पृशति। देवो दानादिगुणयुक्तः 'देवो दानाद्द्योतनाद्दीपनाद्वा' इति यास्कः । वः । 'बहुवचनस्य वस्नसौ'इति युष्मदो द्वितीयाबहुवचनस्थाने वसादेशः । युष्मान् । सविता सर्वस्य प्रसविता। प्रार्पयतु समर्पयतु संगमयतु । श्रेष्ठतमाय कर्मणे । 'यज्ञो वै श्रेष्ठतमं कर्म' इति श्रुतिः। प्रशस्यतमाय कर्मणे। तादर्थ्ये चतुर्थी। यज्ञार्थमित्यर्थः । यूयमपि यज्ञार्थं सवित्रा सङ्गमिताः सत्यः आप्यायध्वम्. 'ओप्यायी वृद्धौ' णिचो लोपः । आप्याययत । हे अघ्न्या अनुपहिंस्याः गावः । कं इन्द्राय भागं । तादर्थ्ये चतुर्थी इन्द्रार्थं यो भागस्तमिति संबन्धः । इन्द्रोऽत्र हविर्भाक् कथंभूताः सत्यः । प्रजावतीः। 'वा छन्दसि' इति दीर्घत्वम् प्रजावत्यः जीवद्व... । अनमीवाः । 'अम रोगे' अमीवा व्याधिविशेषः । न विद्यते अमीवा यासां तास्तथोक्ताः । अयक्ष्माः । यक्ष्मा व्याधीनां राजा स यासां न विद्यते ता अयक्ष्माः। आदरार्थं पुनर्वचनम् । अथवा अयनं अयः गमनं । क्ष्मा पृथ्वी । अयः क्ष्मायां यासां विद्यते घास...

१ दैव्येत्यानुष्टुबित्यादिनेति. २ अर्थाय, अन्नार्थं. ३ इट् इति विभक्तिस्तादर्थ्ये चतुर्थी. ४ श्रुत्यर्थ. ५ तत्र, यदि.

१ पुलाकभक्तावसथन्यायेन. २ ष्वभिधानेषु. ३ भयात्तु. ४ संनमनं तु शाखालग्नधूल्याद्यपनयनम्.

भक्षणार्थं ता अयक्ष्माः । अनिवारितगोप्रचारा इत्यर्थः । किंच मा वः युष्माकं स्तेनः चौर ईशत । माङि लुङ् । मा युष्माकं चौरः ईशनं कार्षीदित्यर्थः । मा अघशंसः अघं पापं यः शंसति भक्षणार्थं वृको वा चाण्डालो वा स च मा ईशत । किंच ध्रुवाः शाश्वतिकाः । अस्मिन् गोपतौ यजमाने । स्यात भवत । बह्वीर्बह्व्यः ॥ शाखामुपगूहति । यजमानस्य पशून्पाहि । यजमानस्य संबन्धिनः पशून् प्रकृतं गोवत्ससमभिप्रेतं दोहाङ्गभूतं पाहि गोपाय ॥ १ ॥

**म०** अथ मन्त्रार्थः क्रियापदाध्याहारेण । हे शाखे, इषे वृष्ट्यै त्वा त्वां छिनद्मि । इष्यते काङ्क्ष्यते सर्वैर्व्रीह्यादिधान्यनिष्पत्तये सा इट् । श्रुत्या वृष्टिर्व्याख्याता । कर्मणि क्विप् । 'वृष्ट्यै तदाह यदाहेषे त्वा' (१ । ७ । १ । २) इति श्रुतेः । 'पर्णशाखां छिनत्ति शामीलीं वेषे त्वेत्यूर्जे त्वेति वा छिनद्मि इति वोभयोःसाकाङ्क्षत्वात्सन्नमयामीति वोत्तर' (कात्या० ४ । २ । १–३) इति कात्यायनोक्तेः छिनद्मीति क्रियापदमध्याहर्तव्यम् । कात्यायनसूत्रस्यायमर्थः—पलाशशाखा शमीशाखा वात्र विकल्पिता । तच्छेदने इषे त्वोर्जे त्वेति द्वौ मन्त्रौ विकल्पितौ । तयोः क्रियापदाकाङ्क्षत्वादर्थावबोधाय छिनद्मि इति पदमध्याहर्तव्यमित्येकः पक्षः । इषे त्वेति छेदनार्थो मन्त्रः । ऊर्जे त्वेति संनमनार्थः । संनमनं ऋजूकरणं शाखालग्नधूल्याद्यपनयनम् । इदं पक्षान्तरमित्यर्थः । ऊर्जे त्वा । शाखैव देवता । हे शाखे, त्वा त्वां संनमयामि ऋजूकरोमि । किमर्थम् । ऊर्जे 'ऊर्ज बलप्राणनयोः' । ऊर्जति सर्वान्मनुष्यपश्वादीन्बलयति पानादिना दृढशरीरान्करोति । यद्वा । प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्तिद्वयेन वृष्टिगतो जलात्मको रस ऊर्जशब्देनोच्यते । तस्मै रसाय त्वामनुमार्ज्मि । 'यो वृष्टादूर्ग्रसो जायते तस्मै तदाह' (१ । ७ । १ । २) इति श्रुतेः । एतन्मन्त्रद्वयपाठेनाध्वर्युरिष्यमाणमन्नं बलकरमाज्यक्षीरादिरसं च यजमाने संपादयत्येव । 'इषे त्वोर्जे त्वेत्याहेषमेवोर्जं यजमाने दधाति' इति तित्तिरिवचनात् । कात्यायनः 'मातृभिर्वत्सान्संसृज्य वत्सं शाखयोपस्पृशति वायवः स्थेति' (४ । २ । ७) । वायुर्देवता । 'वा गतिगन्धनयोः' । वान्ति गच्छन्तीति वायवो गन्तारः । हे वत्साः, यूयं वायवः स्थ मातृभ्यः सकाशादन्यत्र गन्तारो भवत । मातृभिः सह गमने सति सायं दोहो न लभ्यत इत्यभिप्रायः । यद्वा । वायुसादृश्याद्वत्सानां वायुत्वम् । यथा वायुः पादप्रक्षालननिष्ठीवनादिभिरुपहतां भूमिं शोषयित्वा पुनाति, एवं वत्सा अप्यनुलेपनहेतुभूतगोमयादिदानेन भूमिं पुनन्ति तस्माद्वायुसादृश्यम् । अथवा तृणां यथा स्वनिवासाय गृहनिर्माणसामर्थ्यमस्ति एवं पशूनां तदभावान्निरावरणेऽन्तरिक्षे संचरणादन्तरिक्षमेव पशूनां देवता । तस्यान्तरिक्षस्य वायुरधिपतिः । स च वायुः स्वावयवानिव पशून्पालयतीति पशूनां वायुरूपत्वम् । तथा पालनाय पशून्वायवे समर्पयितुं वायुरूपत्वमापाद्य वायवः स्थेति मन्त्रः प्रवर्तते । तदुक्तं तित्तिरिणा 'वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षोऽन्तरिक्षदेवत्याः खलु पशवो वायव एवैतान्परिददाति' इति । यद्वा तृणभक्षणायाहनि तत्र तत्रारण्ये चरित्वा सायंकाले वायुवेगेन यजमानगृहे समागमनाय पशून्प्रवर्तयितुं वायुरूपत्वमुच्यते । कात्यायनः 'देवो व इति मातृणामेकां व्याकृत्यैन्द्रं भवति माहेन्द्रं वेति' (४ । २ । ९ । १०) । अस्यार्थः । पूर्वसूत्राच्छाखयोपस्पृशतीति पदद्वयमनुवर्तते । वत्सानां मातरो या गावः सन्ति तासां मध्ये एकां गां व्याकृत्य पृथक्कृत्य देवो व इति मन्त्रेण शाखयोपस्पृशेत् । तथा सति गोसंबन्धि दधिरूपं हविरैन्द्रं माहेन्द्रं वा भवतीति देवो व इति मन्त्रस्येन्द्रो देवता । 'षू प्रेरणे' । सुवति स्वस्वव्यापारे प्रेरयतीति सविता । देवः द्योतमानः परमेश्वरः । हे गावः, वो युष्मान् प्रार्पयतु प्रभूततृणोपेतं वनं गमयतु । किमर्थम् । श्रेष्ठतमाय कर्मणे । चतुर्विधं कर्म । अप्रशस्तम्, प्रशस्तं, श्रेष्ठम्, श्रेष्ठतमं चेति । लोकविरुद्धं वधबन्धचौर्यादिकमप्रशस्तम् । लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम् । स्मृत्युक्तं वापीकूपतडागादिकं श्रेष्ठम् । वेदोक्तं यज्ञरूपं श्रेष्ठतममिति तल्लक्षणम् । 'यज्ञो वै श्रेष्ठतमं कर्म' (१ । ७ । १ । ५) इति श्रुतेः । हे अघ्न्याः गावः, गोवधस्योपपातकरूपत्वाद्धन्तुमयोग्या अघ्न्या उच्यन्ते । तथाविधा यूयमिन्द्राय भागं इन्द्रमुद्दिश्य संपादयिष्यमाणदधिरूपहेतुक्षीरम् । आप्यायध्वं समन्ताद्वर्धयध्वम् । सर्वास्वपि गोषु प्रभूतक्षीरं कुरुत । 'ओप्यायी वृद्धौ' । वो युष्मानपहर्तुं स्तेनश्चौरो मा ईशत ईश्वरः समर्थो मा भूत् । अघशंसः अघेन तीव्रपापेन भक्षणादिना शंसो घातको व्याघ्रादिरपि मा ईशत वो हिंसको मा भूत् । कीदृशीर्युष्मान् । प्रजावतीः बहुपत्याः । अनमीवाः अमीवा व्याधिः स नास्ति यासां ताः अनमीवाः कृमिदष्टत्वादिस्वल्परोगरहिताः । अयक्ष्माः यक्ष्मा रोगराजः प्रबलरोगरहिताः । किंच यूयं गोपतौ गवां युष्माकं पत्यावस्मिन् यजमाने ध्रुवाः शाश्वतिकीः बह्वीर्बहुविधाः स्यात भवत । 'यजमानस्य पशून्नित्यग्न्यगारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहति' (का० ४ । २ । ११ ) इति । हे पलाशशाखे, त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य पशून् अरण्ये संचरतश्चोरव्याघ्रादिभयात् पाहि रक्ष । शाखया रक्षिता गावो निरुपद्रवाः सत्यः सायं पुनरागच्छन्तीत्याशयः । यद्यप्यचेतना शाखा तथापि तदभिमानिनीं देवतामुद्दिश्यैवमुक्तम् । यथा शास्त्रज्ञा अचेतनेऽपि शालग्रामे शास्त्रदृष्ट्या विष्णुसंनिधिमभिप्रेत्य विष्णुं संबोध्य षोडशोपचारान्विदधत इत्युक्तं प्राक् ॥

अथ व्याकरणप्रक्रिया । इषे । इषेरिच्छार्थस्य कर्मणि क्विप् । कित्त्वादुपधाया गुणाभावः । तस्माच्चतुर्थ्येकवचनम् । इषशब्दगत इकारो धातुस्वरेण प्रातिपदिकस्वरेण चोदात्तः । स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् । चतुर्थ्येकवचनस्य

१ शाखामुपस्थापयति. २ दोहाङ्गभावात्.

प्रत्ययत्वादाद्युदात्तत्वे प्राप्ते 'अनुदात्तौ सुप्पितौ' (पा० ३ । १ । ४ ) इति तदपवादेनानुदात्तत्वे प्राप्तेऽपि 'सावेकाचस्तृतीयादिर्विभक्तिः' (पा० ६ । १ । १६८) इत्युदात्तत्वम् । तस्मिन् सति 'अनुदात्तं पदमेकवर्जम्' (पा० ६।१।१५८) इतीकारोऽनुदात्तः । यद्यप्येकशब्देन द्वयोरुदात्तयोरन्यतरो यः कोऽपि वक्तुं शक्यते तथापि 'सति शिष्टस्वरो बलीयान्' ( पा० ६।१।१५८) इति न्यायेन विभक्तिगत उदात्त एव प्रबलः ॥ तथा सत्यनुदात्तादिकमुदात्तान्तमिदं पदं संपन्नम् । त्वा । युषेर्भजनार्थस्य 'युष्यसिभ्यां मदिक्' (पा० १ । १३ । ७) इति मदिक्प्रत्ययान्तस्य युष्मच्छब्दस्य द्वितीयायां त्वेति रूपम् । तस्य प्रातिपदिकस्वरेण यद्यपि उदात्तः प्राप्तस्तथापि 'अनुदात्तं सर्वमपादादौ' ( पा० ८।१।१८ ) इत्यस्य सूत्रस्य अनुवृत्तौ सत्यां 'त्वामौ द्वितीयायाः' ( पा० ८ ।१।२३) इति त्वादेशविधानादयं शब्दोऽनुदात्तः ॥ ऊर्जे । 'ऊर्ज बलप्राणनयोः' अस्मात्क्विप् । ऊर्जति बलवन्तं प्राणवन्तं वा करोतीत्यूर्क् अन्नम् । 'ऊर्गित्यन्ननामोर्जयति सतः' (निरु० ९।२७) इति यास्कः । स्वर इषेवत् । संहितायां तु 'उदात्तस्य स्वरितः' (पा० ८ । ४ । ६६ ) इति त्वाशब्दस्य स्वरितत्वम् । मन्त्रद्वयस्य संहितायां ऊर्जे इति ऊकारस्य 'स्वरितात्संहितायामनुदात्तानाम्' (पा० १।२।३९) इति प्रचयाभिधायामेकश्रुतौ प्राप्तायां तदपवादकत्वेन 'उदात्तस्वरितपरस्य सन्नतरः' (पा० १ । २ । ४०) इत्यत्यन्तनीचोऽनुदात्तो भवति अग्रिमस्य त्वाशब्दस्य स्वरितत्वम् । एवमुत्तरपदेषु संहितायां स्वरा ऊहनीयाः ॥ वायवः वातेर्गत्यर्थात् 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' ( उ० १ । १ ) इत्युण् सति शिष्टप्रत्ययस्वरेणान्तोदात्तो वायुशब्दः । जसः सुप्त्वादनुदात्तत्वम् । 'जसिच' (पा० ७ । ३ । १०६ ) इति गुणेऽवादेशे च 'स्थानेऽन्तरतमः' (पा० १ । १ । ५० ) इति परिभाषया उदात्त एव जाते वायव इति मध्योदात्तं पदम् । जसः स्वरितत्वं पूर्ववत् ॥ स्थ । अस्तेर्लिटि शपो लुकि 'श्नसोरल्लोपः' (पा० ६ । ४ । १११) इति अकारलोपः । 'तिङ्ङतिङः' ( पा० ८ । १ । २८ ) इति निघातः ॥ देवः । पचादित्वादच् 'चितः' (पा० ६ । १ । १६३) इत्यन्तोदात्तः ॥ वः 'बहुवचनस्य वस्नसौ' (पा०८ । १ । २१) इत्यनुदात्तो वसादेशः । सविता 'षू प्रेरणे' । 'ण्वुल्तृचौ' (पा० ३ । १।१३३) इति तृच् । इडागमः चित्त्वादन्तोदात्तः ॥ प्र 'उपसर्गाश्चाभिवर्जम्' ( फि० ४ । १२ ) इत्याद्युदात्तः । अर्पयतु 'ऋ गतौ' । 'हेतुमति च' (पा० ३ । १ । २६ ) । इति णिच् 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ' (पा० ७।३।३६) इति पुक् । 'पुगन्त' (पा० ७। ३ । ८६ ) इति गुणः निघातश्च । श्रेष्ठतमाय । प्रशस्यशब्दात् 'अतिशायने तमबिष्ठनौ' ( पा० ५ । ३ । ५५ ) इतीष्ठन् 'प्रशस्यस्य श्रः' (पा० ५।३।६०) इति श्रादेशः । 'ञ्नित्यादिर्नित्यम्' ( पा० ६।१।१९७ ) इत्याद्युदात्तत्वम् । ततः पुनः तमप् । तस्य पित्त्वादनुदात्तत्वम् । स्वरितप्रचयाः पूर्ववत् ॥ कर्मणे । करोतेर्मनिन् नित्त्वादाद्युदात्तः । आ उदात्तः । प्यायध्वम् 'ओप्यायी वृद्धौ' । 'हेतुमति च' (पा० ३।१।२६) इति णिच् । त... 'छन्दस्युभयथा' ( पा० ३ ।४।११७ ) इत्यार्धधातुकत्वात् 'णेरनिटि' ( पा० ६।४।५१ ) इति णिलोपः । निघातः ॥ अघ्न्याः 'अघ्न्या अहन्तव्या भवन्त्यघ्नीति वा' (निरु० ११ । ४३) इति यास्कः । अघे नञि वोपपदे हन्तेः 'अघ्न्यादयश्च' ( उ० ४ । ११३ ) इति यगन्तो निपातः । संबुद्धित्वात् 'आमन्त्रितस्य च' ( पा० ६ । १ । १९८ ) इत्याष्टमिको निघातः ॥ इन्द्राय 'इदि परमैश्वर्ये' 'इन्धी दीप्तौ' वा । इन्दति इध्यते वा तेजोभिरिति इन्द्रः । 'ऋज्रेन्द्र' ( उ० २ । २९ ) इत्यादिना रन्प्रत्ययान्तो निपातः । नित्त्वादाद्युदात्तः । स्वरितप्रचयौ च ॥ भागं 'भज भागसेवनयोः' । 'अकर्तरि च कारके संज्ञायाम्' (पा० ३।३। १९) इति घञ् । ञित्त्वादाद्युदात्ते प्राप्ते 'कर्षात्वतो घञोऽन्त उदात्तः'( पा० ६।१।१५९) इत्यन्तोदात्तत्वम् ॥ तस्य 'अमि पूर्वः' ( पा० ६।१।१०७) इत्यमा सहैकादेश 'एकादेश उदात्तेनोदात्तः' ( पा० ८ । २ । ५) इत्युदात्त एव । प्रजावतीः 'उपसर्गे च संज्ञायाम्' ( पा० ३ । २ ९९ ) इति जनेर्डप्रत्ययः ततष्टाप् । तेन सहैकादेशेऽप्युदात्तान्तः प्रजाशब्दः । तस्मात् 'तदस्यास्त्यस्मिन्निति मतुप्' ( पा० ५।२।९४ )। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' ( पा० ८ । २।९ ) इति मस्य वः । 'उगितश्च' ( पा० ४।१।६ ) इति ङीप् । मतुप्ङीपोरनुदात्तत्वात्प्रजाशब्दस्वर एव । 'वा छन्दसि' ( पा० ६।१।१०६) इति पूर्वसवर्णदीर्घत्वम् ॥ अनमीवाः 'अम रोगे' । 'अमेरीवः' इति ईवप्रत्ययः । यद्वा 'शेवयह्वजिह्वाग्रीवाप्वामीवाः' ( उ० १ । १५३ ) इत्यमेर्वन्प्रत्ययान्तो निपातः । तस्य 'नञो बहुव्रीहौ' (पा० २।२। ६) 'समासस्य च' ( पा० ६।१।२२३ । २—१६२) इत्यन्तोदात्ते प्राप्ते तदपवादेन 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा० ६।२। १ ) इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादेन 'नञ्सुभ्याम्' ( पा० ६।२।१७२ ) इत्यन्तोदात्तत्वम् ॥ अयक्ष्माः तद्वत् स्वरः ॥ मा । निपातत्वादाद्युदात्तः ॥ स्तेनः 'स्तेन चौर्ये' । स्तेनयति चोरयतीति स्तेनः । पचाद्यच् । चित्त्वादन्तोदात्तः ॥ ईशत 'ईश ऐश्वर्ये' । 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति लङ् । 'व्यत्ययो बहुलम्' ( पा० ३।१।८५ ) इति बहुवचनम् । 'न माङ्योगे' ( पा० ६।४।७४ ) इत्यडभावः । निघातश्च ॥ अघशंसः 'अघ पापकरणे' । पचाद्यजन्तोऽघशब्दोऽन्तोदात्तः । अघं शंसति इच्छतीत्यघशंसः । 'शसि इच्छायाम्' । अच् । 'तत्पुरुषे तुल्यार्थ' ( पा० ६।२।२ ) इत्यादिना पूर्वपदप्रकृतिस्वरत्वम् ॥ ध्रुवाः 'ध्रुव स्थैर्ये' । 'इगुपधज्ञाप्रीकिरः कः' (पा० ३।१।१३५) इति कः । प्रत्ययस्वरेणान्तोदात्तो ध्रुवशब्दः ॥ अस्मिन् 'इणो दमुक्' इति एतेर्दमुक् । अन्तोदात्त इदंशब्दः तस्मात् ङिः स्मिन् । तस्य 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' ( पा० ६ ।१।१७१ ) इत्युदात्तत्वम् ॥ गोपतौ 'गमेर्डोः' ( पा० २।६।६) इति गोशब्दः प्रत्ययस्वरेणोदात्तः । गवां पतिरिति तत्पुरुषे 'पत्यवैश्वर्ये' ( पा० ६।२।१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । स्यात । अस्तेः

ह्रार्थनायां लिङ् । 'तस्थस्थमिपां' (पा० ३।४।१०१) यासुट् सलोपोऽल्लोपश्च । 'तिङ्ङतिङः' (पा० ८।१।२८) । बह्वीः । बहुशब्दात् 'वोतो गुणवचनात्' (पा० ४।१।४४) इति ङीष् । 'वा छन्दसि' (पा० ६।१।१०६) इति जसः पूर्वसवर्णत्वम् । प्रत्ययस्वरेणान्तोदात्तः । यजमानस्य 'पूङ्यजोः शानन्' (पा०३। २।१२८) इति यजतेः शानन् । नित्त्वादाद्युदात्तः । 'पशून्' पश्यन्ति गन्धेनेति पशवः । 'अर्जिदृशिकमि' (उ० १।२७) इत्यादिना दृशेः कुप्रत्ययः पशादेशश्च । प्रत्ययस्वरेणान्तोदात्तः ॥ पाहि 'पा रक्षणे' लोट् । 'तिङ्ङतिङः' (पा० ८।१।२८) एवमग्रे पदस्वरप्रक्रियोहनीया विस्तरभयान्नोच्यते ॥ १ ॥

## द्वितीया ।

वसोः॑ प॒वित्र॑मसि॒ द्यौर॑सि पृथि॒व्य॑सि मा॒तरि॑श्वनो घ॒र्मो॑ऽसि वि॒श्वधा॑ असि । प॒र॒मेण॒ धाम्ना॒ दृꣳह॑स्व॒ मा ह्वा॒र्मा ते॑ य॒ज्ञप॑तिर्ह्वार्षीत् ॥ २ ॥

**उ०** तस्यां पवित्रं करोति । वसोः पवित्रमसि वसोर्वासयितुर्यज्ञस्य यज्ञसाधनभूते पयसि । अत्र यज्ञशब्दः पयसः पवित्रं परिपावनं भवसीत्यर्थः । उखामादत्ते द्यौरसि पृथिव्यसि 'उपस्तौत्येवैनामेतत्' इति श्रुतिः । सा यद्दिवोवयवभूतेनोदकेन क्रियते तेन द्यौरित्युच्यते । यत्पृथिव्यवयवभूतया मृदा क्रियते तेन पृथिव्युच्यते । मातरिश्वन इत्यधिश्रयति । उखोच्यते । मातरिश्वनो घर्मोसि । मातरिश्वा वायुः । मातर्यन्तरिक्षे श्वसितीति वायोः संबन्धी त्वं घर्मोसि । त्रयो घर्मा अग्निवायुसूर्यदैवत्याः । तत्र मध्यमो घर्मः साधवेश्वेति 'अयं वै साधुर्योयं पवते' इति वायुदेवत्यः स त्वमसीत्यर्थः । यतश्च त्वं वायुः अतः । विश्वधा असि सर्वस्य धारयिता भवसि । किंच परमेण धाम्ना दृꣳहस्व धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च । उत्कृष्टेन नाम्नाभिहिता सती घर्मोसीत्यादिना आत्मानं दृꣳहस्व दृढीकुरुष्वेत्यर्थः । माह्वाः । 'ह्वृ कौटिल्ये' । मा ह्वार्षीः मा कुटिली भूः । दृढीभूतायामपि लुठितायां पयःस्कन्दनं भवति । तन्माभूदित्येवमुच्यते । माच ते तव यज्ञपतिरधिष्ठानात्प्रत्यवतु ॥ २ ॥

**म०** 'वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ त्रिवृद्वा' (का. ४।२।१५।१६) इति । वासयति वृष्ट्यादिद्वारा स्थापयति विश्वमिति वसुः यज्ञः । 'यज्ञो वै वसुर्यज्ञस्य पवित्रमसि' (१। ७।१।१९) इति श्रुतेः । यज्ञशब्देन तदीयहविर्द्रव्यरूपं क्षीरं लक्ष्यते । हे दर्भमय पवित्र, वसोः इन्द्रदेवताया निवासहेतोः पयसः शोधकं पवित्रं त्वं असि । अनेन मन्त्रेण पवित्रं कृत्वा पर्णशाखायां बध्नीयात् । द्वौ कुशौ कुशत्रयं वा पवित्रमुच्यते ॥ 'द्यौरसीति स्थाल्यादानम्' (का० ४।२।१९) इति । यस्यां स्थाल्यां क्षीरं प्रक्षेप्तव्यं तद्ग्रहणार्थोऽयं मन्त्रः । हे स्थालि, मृज्जलाभ्यां निष्पन्ना त्वं द्यौरसि जलहेतुवृष्टिप्रदद्युलोकरूपासि । द्युसंबन्धात्तद्रूपत्वमस्यामुपचर्यते । तथा पृथिव्यसि पृथिव्याः सकाशादुद्धृतया मृदा निष्पन्नत्वात्पृथिवीरूपत्वम् ॥ 'मातरिश्वन इत्यधिश्रयति' (का० ४।२।२०) इति । गार्हपत्यादुदीचोऽङ्गारानिरुह्य तेषूखामधिश्रयति । हे उखे, त्वं मातरिश्वनः वायोः घर्मः दीपकोऽन्तरिक्षलोकोऽसि । मातर्यन्तरिक्षे श्वसिति निश्वासवच्चेष्टां करोतीति मातरिश्वा वायुः । घर्मः । 'घृ क्षरणदीप्त्योः' । घर्मः दीपकः संचारस्थानप्रदानेन वायोर्दीपकोऽभिव्यञ्जकोऽन्तरिक्षलोकः । हे स्थालि, तवोदरेऽप्यन्तरिक्षरूपस्यावकाशस्य वायुसंचारस्य सद्भावात्त्वमपि वायोर्घर्मरूपासि ॥ द्यौरसि पृथिव्यसीति पूर्वमन्त्रे लोकद्वयरूपत्वमुखाया उक्तम् । अत्र मातरिश्वनो घर्मोऽसीत्यन्तरिक्षलोकरूपत्वमुच्यते । तस्मादेषां त्रयाणां लोकानां धारणात् त्वं विश्वधा असि विश्वं दधातीति विश्वधाः विश्वधारणसमर्थासि लोकत्रयरूपत्वात् । किंच परमेण धाम्ना उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा हे उखे, त्वं दृंहस्व दृढा भव । त्वन्निष्ठस्य क्षीरस्य गलनं वारयितुम् । अन्यथा भग्नायास्तव छिद्रेण क्षीरं गलेत् । 'दृहि वृहि वृद्धौ' इति धातुर्यद्यपि वृद्ध्यर्थस्तथापि दार्ढ्ये सति भङ्गाभावेन चिरमवस्थानाद्दार्ढ्यं नाम कालवृद्धिरेव भवति । किंच । हे उखे, मा ह्वाः कुटिला मा भव । 'ह्वृ कौटिल्ये' । यद्युखा कुटिला भवेत्तदानीमवाङ्मुखायां सत्यां तत्स्थं क्षीरं गलेत् । अतः क्षीरधारणाय दार्ढ्यमकौटिल्यं चार्थ्यते । किंच ते यज्ञपतिः त्वत्संबन्धी यजमानः मा ह्वार्षीत् कुटिलो मा भूत् । त्वन्निष्ठक्षीरस्कन्दनेनानुष्ठानविघ्न एव यजमानस्य कौटिल्यम् । तच्च त्वदीयेन दार्ढ्येन कौटिल्याभावेन च न भविष्यतीति प्रार्थ्यते ॥ २ ॥

## तृतीया ।

वसोः॑ प॒वित्र॑मसि श॒तधा॑रं॒ वसोः॑ प॒वित्र॑मसि स॒हस्र॑धारम् । दे॒वस्त्वा॑ सवि॒ता पु॑नातु॒ वसोः॑ प॒वित्रे॑ण श॒तधा॑रेण सु॒प्वा काम॑धुक्षः ॥ ३ ॥

**उ०** तस्यां पवित्रं निदधाति । वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारं । शतसहस्रशब्दौ संख्योत्तरवचनौ । अभ्यासे भूयांसमर्थं मन्यन्ते । अनन्तधारमित्यर्थः । आसिच्यमाने जपति । देवस्त्वा सविता । पय उच्यते । देवस्त्वा सविता पुनातु दोषात्पृथक्करोतु निर्दोषं करोतु । वसोरग्निष्टोमयज्ञस्य संबन्धिना आविकेन अनेकधारेण अच्छिद्रेण पवित्रेण । सुप्वा शोभनं पुनातीति सुपूः तेन सुप्वा । साधुपवनेन पवित्रेण । अथाह कामधुक्ष इति । प्रश्नोयं गवां मध्ये त्वं कां गां अधुक्षः । 'दुह प्रपूरणे' दुग्धवानसि ॥ ३ ॥

१ भवतीत्यर्थः. २ श्रुतेः. ३ इत्युच्यते.

१ तूभयं समर्थ.

म० 'वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वा' इति। अस्यामुखायां स्थापनीयस्य पवित्रस्य प्रागग्रत्वं सामान्यतः प्राप्तमिति सिद्धवत्कृत्वोदगग्रत्वं विकल्प्यते। हे शाखापवित्र, वसोः इन्द्रदेवतानिवासहेतोः पयसः शोधकं पवित्रं त्वम् असि। पवित्रेण व्यवधाने सति क्षीरेण सह स्थाल्यां पततां तृणपर्णादीनां प्रतिबध्यमानत्वात्पवित्रस्य क्षीरशोधकत्वम्। किंभूतं पवित्रम्। शतधारं शतसंख्या धारा यस्मिन्। तथा सहस्रधारं सूक्ष्मैः पवित्रच्छिद्रैः स्थाल्यां पतन्तीनां क्षीरधाराणां शतसहस्रसंख्याकानां सद्भावाच्छोधकत्वमाहर्तुम्। वसोः पवित्रमिति द्विरुक्तिः। अभ्यासे भूयांसमर्थं मन्यन्ते ( निरु० १०। ४२ ) इति। 'देवस्त्वेत्यासिच्यमाने जपति' ( का० ४। २। २३ ) इति। पयो देवता। दोहनादूर्ध्वं स्थाल्यां सिच्यमान हे क्षीर, सविता प्रेरको देवः पूर्वोक्तरीत्या। शतधारेण वसोः पवित्रेण। त्वा त्वाम्। पुनातु शोधयतु। सुप्वेति पवित्रविशेषणं। सुष्ठु पुनातीति सुपूः तेन सुप्वा। नुडागमाभाव आर्षः॥ कामधुक्ष इति प्रश्नः ( ४। २। २४ ) इति एकस्यां गवि दुग्धायां दोग्धारं प्रत्यध्वर्युः पृच्छेत्। हे दोग्धः, विद्यमानानां गवां मध्ये त्वं कां गाम् अधुक्षः दुग्धवानसि॥ ३॥

## चतुर्थी।

सा वि॒श्वायुः॒ सा वि॒श्वक॑र्मा॒ सा वि॒श्वधा॑याः। इन्द्र॑स्य त्वा भा॒गꣳ सोमे॑ना॒तन॑च्मि॒ विष्णो॑ ह॒व्यꣳ र॑क्ष॥ ४॥

उ० अमूमित्युक्ते दोग्ध्रा सा विश्वायुरित्यध्वर्युराह। सा गौर्विश्वस्य जगतः आयुषो दात्री। द्वितीयामाह। सा गौर्विश्वस्य जगतः कर्मा कर्त्री[१]। तृतीयामाह। सा गौर्विश्वस्य जगतः धायाः[२] धयतेर्णिजन्तस्यासुनि[३] रूपम्। पाययित्री[४]। यज्ञाद्देव सर्वाः प्रजा उत्पद्यन्ते आयुर्भोजनसहिताः स गवामुपचर्यते। आतनच्मि। इन्द्रस्य त्वा भागं सोमेन दध्ना आतनच्मि। तञ्चतिः कठिनीकरणार्थः। दधिभावमापादयामीत्यर्थः॥ अपिदधाति विष्णो हव्यं रक्ष। 'यज्ञो वै विष्णुः' इति श्रुतिः। हविर्गोपाय॥४॥

म० प्रोक्ते 'सा विश्वायुरित्याहेति' ( का० ४। २। २५ ) पूर्वोक्तप्रश्नस्योत्तरे अमूं गामिति दोग्ध्रा प्रोक्ते सति सा विश्वायुरिति मन्त्रेण दोग्धारं प्रत्यध्वर्युर्ब्रूयात्। या गौस्त्वया दुग्धा मया च पृष्टा सा विश्वायुःशब्देनाभिधेया। विश्वमायुर्यस्याः सा विश्वायुः। यजमानस्य संपूर्णं आयुः प्रयच्छतीत्यर्थः। 'एवमितरे उत्तराभ्याम्' ( का० ४। २। २६ ) इति। यथा प्रथमा गौः पृष्टा एवमितरे द्वितीयतृतीये गावौ तद्दोहनादूर्ध्वं कामधुक्ष इति मन्त्रेण प्रष्टव्ये। दोग्धा तूत्तरेऽमूमिति प्रोक्ते सा विश्वकर्मा सा विश्वधाया इति मन्त्राभ्यां क्रमेण तयोराशिषं ब्रूयात्। या द्वितीया गौस्त्वया पृष्टा सा विश्वकर्मा, या तृतीया गौस्त्वया पृष्टा सा विश्वधायाः। 'डुधाञ् धारणपोषणयोः'। विश्वान्सर्वान्देवान्दधाति क्षीरदध्यादिहविर्दानेन पुष्णातीति विश्वधायाः। असुन्प्रत्ययो णिच्च। णित्त्वात् 'आतो युक् चिण्कृतोः' ( पा० ७। ३। ३३ ) इति युक्। यद्वा। 'धेट् पाने'। विश्वानिन्द्रादिदेवान् क्षीरादिहव्यं धापयति पाययतीति विश्वधायाः। 'उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्य त्वा' ( का. ४। २। ३२ ) इति। क्वथितं क्षीरमग्नेरुद्वास्य मन्दोष्णे तत्र प्रातःकालीनहोमावशिष्टेन दध्ना दधिनिष्पत्तये आतञ्चनं कुर्यात्। हे क्षीर, इन्द्रस्य भागं त्वां सोमेन सोमवल्लीरसेन आतनच्मि दध्यर्थं कठिनीकरोमि। तञ्चतिः कठिनीकरणार्थः। यद्यप्यत्रातञ्चनहेतुर्दधिशेषस्तथापि भावनया तस्यैव सोमत्वं संपाद्यते। यथा कश्चित्पुमान्बन्धुत्वेन भावितो बन्धुर्भवति प्रातिकूल्येन भावितः शत्रुश्च। तदुक्तं वसिष्ठेन 'बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः। विषामृतदशैवेह स्थितिर्भावनिबन्धिनी॥' इति। भोज्यं वा विषत्वेन भावितं वान्तिं करोति। अमृतत्वेन भावितं जीर्णं सद्बलहेतुर्भवति। तथात्र दधिशेषस्य भावनया सोमत्वम्॥ 'सोदकेनापि दधात्यमृण्मयेन विष्णो हव्यमिति' ( का० ४। २। ३४ ) इति। हे विष्णो, इदं हव्यं क्षीरं रक्ष। सर्वत्र सृष्टौ पालने संहारे च ब्रह्मविष्णुमहेश्वरा अभिमानिन्यो देवताः। अतो विष्णुं संबोध्य हविषो रक्षा प्रार्थ्यते॥ ४॥

## पञ्चमी।

अग्ने॑ व्रतपते व्र॒तं च॑रिष्यामि॒ तच्छ॑केयं॒ तन्मे॑ राध्यताम्। इ॒दम॒हमनृ॑तात्स॒त्यमुपै॑मि॥ ५॥

उ० व्रतमुपैति। अग्ने व्रतपते। हे भगवन् अग्ने, व्रतस्य पते। व्रतं सत्यादिकं चरिष्यामि। तद्व्रतं तव प्रसादात् शकेयं शक्नुयाम्। शक्तं च सत् तत् मे मम राध्यतां सिध्यताम्। यज्ञफलसमृद्धिराशास्यते। अनेन वाग्भिरुच्यते। इदमहं त्वत्साक्षिकमनृतादसत्यात्सत्यमुपगच्छामि॥ ५॥

म० 'अपरेणाहवनीयं प्राङ्निष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिति वा' ( २। १। ११ ) इति। हे व्रतपते, व्रतस्यानुष्ठेयस्य कर्मणः पते पालक हे अग्ने, त्वदनुज्ञया व्रतं चरिष्यामि कर्मानुष्ठास्यामि। तच्छकेयं तत्कर्मानुष्ठातुं शक्तो भूयासम्। त्वत्प्रसादात् तन्मे राध्यतां मदीयं तत्कर्म निर्विघ्नं सत् फलपर्यन्तं सिध्यतु। शकेराशीर्लिङ्यासुट्। 'लिङ्याशिष्यङ्' ( पा० ३।१।८६ ) 'अतो येयः' ( पा० ७।२।८० )। गुणः। शकेयम्। 'अग्निर्वै देवानां व्रतपतिः' ( १। १। १। २ ) इति श्रुतिः। इदमहम्। अहं यजमानोऽस्मादनृतान्मनुष्यजन्मन उद्धृत्य सत्यं देवताशरीरम् उपैमि प्राप्नोमि। इदं सत्यमनुष्ठीयमानकर्मरूपेण प्रत्यक्षमिति मन्वान इदमिति विशेषं शिनष्टि। अनृतं मनुष्यजन्म शीघ्रविनाशित्वात्। यथा स्वप्नेः

१ कर्मकर्त्री. २ धायाः जगतः. ३ स्यात्रासुनि. ४ जगतः धाययित्री.

गजादयो बोधमात्रेण शीघ्रं निवर्तमाना अनृता उच्यन्ते । सत्यं देवजन्म बहुकालस्थायित्वात् यथा जागरणगजादयः । श्रुतिरपि 'इदमहमनृतात्सत्यमुपैमि' (१।१।१।४) इति । तन्मनुष्येभ्यो धानुपावर्तत इति । यद्वा लोकप्रसिद्धे एव सत्यानृते ग्राह्ये । नानृतं वदेदिति कर्मण्यनृतनिषेधात् । अनृतवदनादुद्गत्याहमिदं सत्यवदनमुपैमि । अत इदं सत्यवदनं कर्माङ्गत्वात्कर्मकाले पालनीयम् ॥ ५ ॥

## षष्ठी ।

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । कर्मणे वां वेषाय वाम् ॥ ६ ॥

**उ०** अपः प्रणयति । कस्त्वा युनक्ति । यज्ञस्यारम्भकर्मणि आत्मनः कर्तृत्वमपनीयाध्वर्युः प्रजापतेर्यज्ञस्य कर्तृत्वमाह । अत्र चत्वारि सर्वनामानि । तत्र प्रथमतृतीये प्रश्नभूते । द्वितीयचतुर्थे प्रतिप्रश्नभूते । कस्त्वा युनक्ति । हे यज्ञ, प्रजापतिः न मनुष्यः स तु यज्ञः प्रजापतिः त्वां युनक्ति । कस्मै प्रयोजनाय युनक्तीत्यध्वर्युराशङ्क्योत्तरं ददाति । तस्मै प्रयोजनाय युनक्ति । यज्ञादुत्पत्तिः स्थितिश्च जगतः । अतोऽनेन सर्वनाम्ना तदेव निर्दिश्यते ॥ शूर्पं चाग्निहोत्रहवणीं चादत्ते । कर्मणे यज्ञकर्मणे वां युवां अहं आददे इति वाक्यशेषः । वेषाय । 'विष्लृ व्याप्तौ' । यज्ञव्याप्त्यर्थं वां युवां अहमादद इति च ॥ ६ ॥

**म०** एवं व्रतमुपेत्य ब्रह्माणं वृत्वापां प्रणयनं कुर्यात् । 'ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्याहानुज्ञात उत्तरेणाहवनीयं संप्रति निदधाति कस्त्वायुनक्ति' (का०२ । ३ । २–३ ) इति । अत्र मन्त्रं प्रयुञ्जानोऽध्वर्युर्यज्ञारम्भकर्मण्यात्मनः कर्तृत्वमपनीय प्रजापतेर्यज्ञकर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणीतानामपां धारक हे पात्र, त्वां कः पुरुषो युनक्ति आहवनीयस्योत्तरभागे स्थापयतीति प्रश्नः । तच्छब्दः प्रसिद्धार्थवाची । सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति सः एव परमेश्वरः हे पात्र, त्वां युनक्ति इत्युत्तरम् । पुनरपि कस्मै प्रयोजनाय त्वां युनक्ति इति प्रश्नः । तस्मै प्रजापतये तत्प्रीत्यर्थं त्वा युनक्ति इत्युत्तरम् । सर्वकर्माणि परमेश्वरप्रीत्यर्थमनुष्ठेयानीति भगवद्गीतास्वर्जुनं प्रति भगवतोक्तम् 'सर्वकर्माण्यपि सदा' (१८।५६) 'ब्रह्मार्पणं' (४।२४) इति च हरिस्तीर्य द्वन्द्वशः पात्राण्यासाद्य शूर्पं चाग्निहोत्रहवणीं चादत्ते । 'कर्मणे वामिति शूर्पाग्निहोत्रहवण्यादाय' (का०२।३।१०) इति । कर्मणे हे अग्निहोत्रहवणि, हे शूर्प, वां युवां कर्मार्थमहमाददे इति शेषः । वेषाय च । 'विष्लृ व्याप्तौ' । घञ् । वेषो व्याप्तिः । सूचितकर्मसु व्याप्त्यर्थं च वां युवामहमाददे । शकटेऽवस्थितानां व्रीहीणां हविरर्थं पृथक्करणं प्रेक्षणार्थोदकधारणमित्यादयोऽग्निहोत्रहवणीव्यापाराः । व्रीहिनिर्वापधारणमुलूखले व्रीहिप्रक्षेपः पुनरुद्धरणं चेत्यादयः शूर्पव्यापाराः ॥ ६ ॥

## सप्तमी ।

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । उर्वन्तरिक्षमन्वेमि ॥ ७ ॥

**उ०** प्रतपति । प्रत्युष्टं 'उष दाहे' । प्रतिज्ञाय दग्धं रक्षः प्रतिज्ञाय च दग्धा अरातयः । न विद्यते रातिर्दानं येषां ते अरातयः । अनेन वा । निष्टप्तं । 'तप संतापे' । निरित्येतस्य स्थाने नितरां तप्तं रक्षः नतु यज्ञसाधनमित्यभिप्रायः । उक्तमन्यत् । गच्छति उर्वन्तरिक्षं । यद्यपि रक्षोभिराकुलमन्तरिक्षं तथाप्यनेन यजुषा उरु विस्तीर्णं कृत्वा अन्वेमि प्रतिगच्छामि ॥ ७ ॥

**म०** 'प्रतपनं प्रत्युष्टं निष्टप्तमिति वा' (का० २ । ३।११) इति । रक्षः राक्षसजातिः । प्रत्युष्टं प्रत्येकं दग्धम् । 'उष दाहे' । अनेनाग्निहोत्रहवणीशूर्पयोः प्रतपनेनात्र स्थिता राक्षसा दग्धा इत्यर्थः । अरातयोऽपि प्रत्युष्टाः प्रत्येकं दग्धाः । 'रा दाने' । हविषो दक्षिणाया वा दानं रातिः । रातेः प्रतिबन्धका अरातयस्तेऽपि दग्धाः । अन्यथा न यज्ञसाधनमित्यर्थः । शूर्पादौ निगूढं रक्षो निष्टप्तं निःशेषेण तप्तं संतप्तम् । 'तप संतापे' । अरातयश्च निष्टप्ताः । अनयोर्मन्त्रयोर्विकल्पः ॥ 'गच्छत्युर्वन्तरिक्षम्' ( का० २।३।१२) इति । उरु विस्तीर्णम् । अन्तरिक्षम् अवकाशम् । अन्वेमि अनुसृत्य गच्छामि । गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षोऽनेन मन्त्रेण निराक्रियत इत्याशयः ॥७॥

## अष्टमी ।

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः । देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ ८ ॥

**उ०** धुरमभिमृशति । धूरसि । अनसोऽवयवं धुरं स्तौति । तत्र श्रुतिः 'अग्निर्वा एष धुर्यस्तमेतदत्येष्यन्ब्रवीतीति' । हविर्ग्रहीष्यन् धुर्यमग्निं ब्रवीति । धूरसि । धूर्वतेर्वधकर्मणः । धूर्वणक्रियानिमित्तं हि ते नाम । अतो ब्रवीमि । धूर्व धूर्वन्तं । हिन्धि हिंसन्तं । धूर्वतं हिन्धि तं । योस्मान्धूर्वति योस्मान् हिनस्ति तं धूर्व यं वयं धूर्वामः । तं पुरुषं हिंधि यं वयं हिंस्मः । अनस उपस्तम्भनमभिमृशति । देवानामसि । अन उच्यते । देवानामग्न्यादीनां त्वं भवसि । वह्नितमं वह्निर्वोढा । 'वह प्रापणे' इत्यस्य रूपम् । वोढृतमं । सर्वे तमपः अतिशयार्थाः । सस्नितमं । 'ष्णै वेष्टने–' । 'आदृगमहन' इत्यादिना किन्प्रत्ययः । चर्मणा स्नायुना च परिवृततमम् । अथवा पार्श्वतः काष्ठैर्गोणि-

१ प्रजापते.
२ य० उ०

१ निरेतस्य स्थाने. २ प्रभिरपृशति. ३ काष्ठैर्गोणिपटैः.

पटैश्च परिवृततमं । पप्रितमं । 'प्रा पूरणे' । पूर्ववत् किन्प्रत्ययः । हविषा पूर्णतमम् । जुष्टतमं । 'जुषी प्रीतिसेवनयोः' । अत्र जुषिः प्रीतौ वर्तते । अभिप्रेततमं सेविततमं वा । देवहूतमं देवानाह्वयतीति देवहूः देवानामाह्वातृतमम् ॥ ८ ॥

**म०** 'श्रपणस्य पश्चादनस्तिष्ठति समङ्गि धूरसीति धुरभिमर्शनम्' (२।२।१३।१३) इति । अस्यायमर्थः । श्रपणस्य पुरोडाशपाकहेतोर्गार्हपत्यस्य पश्चादनः शकटं व्रीहियुक्तं तिष्ठति । तच्च समङ्गि सम्यगङ्गानि यस्य तत्सर्वाङ्गोपेतं तस्य धुरं बलीवर्दवहनयोग्यं युगप्रदेशं धूरसीति मन्त्रेण स्पृशेदिति ॥ अथ मन्त्रार्थः—व्रीहिरूपहविर्धारकशकटसंबन्धिनो युगस्य बलीवर्दवहनप्रदेशे कश्चिद्धिंसकोऽग्निः शास्त्रदृष्टोऽस्ति तं प्रार्थयते । 'अग्निर्वा एष धुर्यस्तमेतदत्येष्यन्भवति' ( १।१।२।१० ) इति श्रुतेः । हे वह्ने, त्वं धूरसि हिंसकोऽसि । 'तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः' धुर्वतेः क्विप् । यतो धूरसि अतः धूर्वन्तं हिंसन्तं पाप्मानं धूर्व विनाशय । किंच यः राक्षसादिर्यागविघ्नेन अस्मान् धूर्वति हिंसितुमुद्युक्तस्तमपि धूर्व विनाशय । यं च वयं धूर्वामः तमपि धूर्व । यमालस्यादिरूपं वैरिणं वयमनुष्ठातारो धूर्वामो हिंसितुमुद्युतास्तमपि धूर्व विनाशय । शकटस्थितान्यतिक्रमणनिमित्तमपराधमपहोतुमग्न्याधारभूता शकटस्य धूरनेन मन्त्रेण स्पृश्यते 'देवानामित्युपस्तम्भनस्य पश्चादीषाम्' ( का० २।३।१४ ) इति । शकटस्य दीर्घं काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति । तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनं तस्य पश्चाद्भागे तामीषां स्पृशेत् । देवानामसि । हे शकट, त्वं देवानां संबन्धि असि भवसि । किंभूतं वह्नितमम् 'वह प्रापणे' । वहतीति वह्नि अतिशयेन वह्नि वह्नितमम् । व्रीहिरूपस्य हविषोऽतिशयेन प्रापकम् । तथा सस्नितमं 'ष्णा शौचे' अतिशयेन शुद्धम् । 'आदृगम–' (पा० ३।२।१७१) इत्यादिना किप्रत्ययः । यद्वा 'ष्णै वेष्टने' । दार्ढ्याय चर्मादिभिरतिशयेन वेष्टितम् । पप्रितमम् । 'प्रा पूरणे' व्रीहिभिरतिशयेन पूरितम् । जुष्टतमं 'जुषी प्रीतिसेवनयोः' । देवानामतिशयेन प्रियम् । देवहूतमम् । 'ह्वेञ् स्पर्धायां शब्दे च' देवानामतिशयेनाह्वातृ । व्रीहिपूर्णं शकटं दृष्ट्वा देवा आहूता इव शीघ्रमागच्छन्ति ॥ ८ ॥

## नवमी ।

अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् । विष्णुस्त्वाक्रमतामुरु वातायापहतꣳ रक्षो यच्छन्तां पञ्च ॥ ९ ॥

**उ०** अह्रुतमसि 'ह्वृह्वरेश्छन्दसि' इति ह्वरतेर्लुठनार्थस्य निष्ठायां ह्रुरादेशः । अलुठितं पूर्णमसि । हविर्धानं हविषां निधानम् । अतः आत्मानं दृꣳहस्व दृढीकुरु । ममारुरुक्षते अवहितं भव । माह्वार्मा ते यज्ञपतिर्ह्वार्षीदिति उक्तार्थः । आरोहति । विष्णुर्यज्ञस्त्वां शकट आक्रमतां आरोहतु । अहं त्वसमर्थ इत्यभिप्रायः । प्रेक्षते हविष्यात् । उरुवाताय उरु महत् वाताय प्राणाय त्वां करोमीति प्रेक्षते । अपद्रव्यं निरस्यति । अपहतं 'हन हिंसागत्योः' । अत्र गतौ वर्तते । अपगतं अस्मद्धविषो रक्षः । आलभते । यच्छन्तां पञ्च 'यम उपरमे' निबध्नन्तु त्वां हविष्यं पञ्च अङ्गुलयः ॥ ९ ॥

**म०** अह्रुतमसि । 'ह्वृ कौटिल्ये' । क्तप्रत्ययः । 'ह्वृह्वरेश्छन्दसि' (पा० ७।२।३१) इति निष्ठायां ह्रुआदेशः । अह्रुतम् अकुटिलम् असि । आरोहणेऽपि भङ्गभीतिर्नास्तीत्यर्थः । हविर्धानम् । 'डुधाञ् धारणपोषणयोः' हविषो व्रीहिरूपस्य धारकं पोषकं भवसि । अतः दृंहस्व । मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीदिति पूर्ववद्व्याख्येयम् । 'विष्णुस्त्वेत्यारोहणम् (का० १।३।१५) इति । हे शकट, विष्णुः व्यापको यज्ञः त्वा त्वां । क्रमतां पादेनाक्रम्यारोहतु नाहं समर्थ इति भावः । 'प्रेक्षत उरु वातायेति हविष्यात्' ( का० १।३।१६ ) इति । हे शकट, वाताय उरु भवेति शेषः । तदन्तर्वर्तिव्रीहिषु वायुसंचाराय विस्तीर्णं भव । शकटस्य व्रीहीणां तृणाद्याच्छादितत्वात्संकोचे वायुप्रवेशाभावादाच्छादनमपनीय यथा वायुः प्रविशति तथा संकोचं परित्यजेत्यर्थः । वायुरूपप्राणवेशाद्धविः सप्राणं क्रियते मन्त्रेण । किंच वायुप्रवेशरहितं सर्वं वस्तु वरुणदेवत्यं भवति । वरुणश्च बन्धकारित्वाद्यज्ञनिरोधकस्तन्निवृत्त्यर्थमयं मन्त्रः । 'यद्वै किंच वातो नाभिभवति तत्सर्वं वरुणदेवत्यमुरुवातायेत्याह वारुणमेवैतत्करोति' इति तित्तिरिवचनात् 'अपहतमिति निरस्यत्यन्यदविद्यमानेऽभिमृशेत्' ( का० २।३।१७–१८ ) इति । व्रीहिभ्योऽन्यत्तृणादिकं यदि तत्र भवेत्तदनेन निरस्येत् । तृणाद्यभावे व्रीहीनभिमृशेदिति सूत्रार्थः । अथ मन्त्रार्थः— रक्षः यज्ञविघातकम् । अपहतं निराकृतं तृणादिकमेव रक्ष उच्यते । 'यच्छन्तामित्यालभते' ( का० २।३।१९ ) इति । पञ्च पञ्चसंख्याका अङ्गुलयो व्रीहिरूपं हविः यच्छन्तां नियच्छन्तु । अनेन पञ्चाङ्गुलियुक्तेन मुष्टिना व्रीहीन्गृह्णीयादित्यर्थ उक्तो भवति ॥ ९ ॥

## दशमी ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥ १० ॥

**उ०** गृह्णाति । देवस्य त्वा । त्वाशब्देन हविरुच्यते । देवस्य सवितुः प्रसवे अभ्यनुज्ञायां वर्तमानः । देवेन सवि[1] प्रसूतः । अश्विनोर्बाहुभ्यां न स्वाभ्यां । अश्विनौ हि देवानामध्वर्यू । पूष्णो हस्ताभ्यां न स्वाभ्याम् । पूषा हि देवानां

१ विष्णुस्त्वाक्रमतां आरोहतु.

भागधुक् भागपूरकः। अग्नये जुष्टम् । 'जुषी प्रीतिसेवनयोः'। अत्र जुषिः प्रीतौ वर्तते । तथाहि 'रुच्यर्थानां प्रीयमाणः' इत्यग्निशब्दस्य चतुर्थी संजाता। अग्नये जुष्टं रुचितमभिप्रेतं गृह्णामि । एतदुक्तं भवति । योऽग्निः सर्वेश्वरः सर्वात्मा तस्य तथाभूतमेतदन्नं भवितुमर्हति । नच तथाभूतं मनुष्येण तद्ग्रहीतुं शक्यते । अतोहं सावित्रं प्रसवमास्थायाश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वां हविष्याग्नयेऽभिरुचितं गृह्णामि । तथा अग्नीषोमाभ्यां त्वां हविष्याभिरुचितं गृह्णामि ॥ १० ॥

**म०** 'देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीनेवमग्नीषोमीयं यथादैवतमन्यत्' ( का० २ । ३ । २०-२२ ) इति । हे हविः, सवितुर्देवस्य प्रसवे प्रेरणे सति तेन प्रेरितोऽहम् अग्नये जुष्टं प्रियं त्वा गृह्णामि । अग्नीषोमाभ्यां व्यासक्तदेवताभ्यां च जुष्टं त्वा गृह्णामि । काम्याम् । अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां च । अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः । पश्चाङ्गुलियुक्ताग्रभागो हस्तः । अश्विनौ हि देवानामध्वर्यू। पूषा हि देवानां भागधुक् । अतो ग्रहणसाधनयोः स्वबाह्वोरश्विबाहुभावना कार्या । हस्तयोस्तु पूषहस्तभावनेति भावः । सर्वात्मकस्याग्नेर्हविस्तादृशं मनुष्येण कथं ग्रहीतुं शक्यमिति सवित्रानुज्ञातोऽश्विबाहुभ्यां पुष्णो हस्ताभ्यां गृह्णामीत्यर्थः । किंच । 'सत्यं देवा अनृतं मनुष्याः' ( १ । १ । २ । १७ ) इति श्रुतेः देवानां सत्यरूपत्वात्तदनुस्मृतिपूर्वकं हविर्ग्रहणं फलपर्यवसायित्वात्सत्यं भवति । देवतास्मृत्यभावे तु मनुष्याणामनृतरूपत्वात्तत्कृतमनुष्ठानं निष्फलत्वादनृतं भवतीति देवतास्मरणमित्यभिप्रायः । हविर्गृह्णन्तमध्वर्युं देवताः सेवन्ते मम नाम ग्रहीष्यतीति । अनामग्रहं हविषि गृहीते तासां मिथः कलहो भवेदिदं मदर्थमेव गृहीतमिति तत्कलहनिवृत्त्यर्थमग्नये जुष्टमग्नीषोमाभ्यां जुष्टमिति देवतानिर्देशपूर्वकं हविर्ग्रहणमित्यभिप्रायः १०

## एकादशी ।

भूताय॑ त्वा॒ नारा॑तये॒ स्व॑रभि॒विख्ये॑षं॒ दृᳫं᳭ह॑न्तां॒ दुर्याः॑ पृथि॒व्याम् । उ॒र्व॒न्तरि॑क्ष॒मन्वे॑मि पृथि॒व्यास्त्वा॒ नाभौ॑ सादया॒म्यदि॑त्या उ॒पस्थेऽग्ने॑ ह॒व्यᳫं᳭ र॑क्ष ॥ ११ ॥

**उ०** भूतायत्वेति शेषाभिमर्शनम् । भूताय भवनाय । त्वा त्वां परिशेषयामीति शेषः । नारातये न अदानाय । उप्तं रोपितं सत् व्रीह्यादि पुनरेव बहु भविष्यतीति परिशेषयामि न कृपणतायै । स्वरिति प्राङीक्षते । स्वरभिविख्येषं पश्येयम् । विपूर्वः ख्यातिर्दर्शनार्थः । स्वशब्देन यज्ञोऽभिधीयते । स हि शोभनं प्राङीरितो भवति । यज्ञार्हदेवाः सूर्यः यज्ञोपि स्वःशब्देनोच्यते । 'यज्ञो वै स्वः अहर्देवाः सूर्यः' इति श्रुतेः । दृᳫं᳭हन्तामित्यवरोहति । 'दृहि वृहि वृद्धौ' इति यद्यपि वृद्ध्यर्थो धातुस्तथापि मन्त्रेषु दृढीकरणार्थः प्रयुज्यते । दृह्यन्तामिति प्राप्ते दृᳫं᳭हन्तामिति विकरणव्यत्ययः। दिवादित्वाच्छ्यन्प्रत्ययः। दुर्याः दुरः द्वाराणि अर्हन्तीति दुर्या गृहा उच्यन्ते । दुर्या दृढा भवन्तु । पृथिव्यां भूम्यां गच्छति । उर्वन्तरिक्षमिति व्याख्यातम् । पृथिव्यास्त्वेति सादयति । हविरुच्यते । पृथिव्याः त्वा त्वां नाभौ मध्ये अवसादयामि । अदित्या देवमातुः । उपस्थे उत्सङ्गे । अग्ने हव्यं रक्ष[1] । श्रपणं गार्हपत्यमग्निमाह ॥ ११ ॥

**म०** 'भूताय त्वेति शेषाभिमर्शनम्' (का० २ । ३ । २३) इति । हे व्रीहिशेष शकटावस्थित, भूताय भवनाय यागान्तराणां ब्राह्मणभोजनस्य च पुनरपि सद्भावाय त्वा त्वां संपरिशेषयामीति शेषः । न अरातये अदानाय शेषयामि । 'स्वरिति प्राङीक्षते' ( का० २ । ३ । २४ ) इति । अहं स्वः अभिविख्येषं यज्ञं पश्येयं । 'यज्ञो वै स्वरहर्देवाः सूर्यः'(१ । १ । २ । २३)इति श्रुतेः । यज्ञदिवसदेवसूर्याः स्वःशब्देनोच्यन्ते । स्वर्गहेतुत्वादपि स्वःशब्देन यज्ञः । 'ख्या प्रकथने' । अभिविख्येषम् अभितो विशेषेण ख्यापयेयं पश्येयमित्यर्थः । अनेन मन्त्रेण प्राङ्मुखो यज्ञभूमिं वीक्षते॥ 'दृᳫं᳭हन्तामित्यवरोहति' ( का० २ । ३।२५) इति । पृथिव्यां वर्तमानाः । दुर्याः ग्रहाः । दृᳫं᳭हन्तां दृढा भवन्तु । अनेन मन्त्रेण शकटादवरोहयेत् । दुरो द्वाराण्यर्हन्तीति दुर्या गृहाः । हविर्गृहीत्वोत्तरतोऽध्वर्योर्भारेण गृहक्षोभः संभाव्यते सोऽनेन मन्त्रेण वार्यते । 'गच्छत्युर्वन्तरिक्षम्' (का० २ । ३ । २६ ) इति । व्याख्यातम् । 'श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वा' ( का० २ ।३ । २७ ) इति । हे हविः, पृथिव्या नाभौ मध्ये त्वां सादयामि स्थापयामि । तस्यैव व्याख्यानं अदित्या उपस्थ इति । उपस्थेऽङ्के । यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति एवमिदं हविः अदित्या उपस्थे भूम्या अङ्के सादयामि । हे अग्ने, तव समीपे स्थापितमिदं हव्यं त्वं रक्ष । सुप्तं पुत्रमिव बाधकेभ्यः पालय ॥ ११ ॥

## द्वादशी ।

प॒वित्रे॑ स्थो वैष्ण॒व्यौ॑ स॒वि॒तुर्वः॑ प्रस॒व उत्पु॑नाम्यच्छिद्रेण प॒वित्रे॑ण सूर्य॑स्य र॒श्मिभिः॑ । देवी॑रापो अग्रेगुवो अग्रेपुवोऽग्र॑ इ॒मम॒द्य य॒ज्ञं न॑यता॒ग्रे य॒ज्ञप॑तिᳫं᳭ सु॒धातुं॑ य॒ज्ञप॑तिं देव॒युव॑म् ॥ १२ ॥

**उ०** पवित्रे छिनत्ति । पवित्रेस्थ इति। पवित्रे पवनक्रियाशीले युवां भवथः । वैष्णव्ये इति प्राप्ते वैष्णव्याविति लिङ्गव्यत्ययः । 'यज्ञो वै विष्णुर्यज्ञियेस्थ' इति श्रुतिः । अप उत्पुनाति । सवितुर्वः । आप उच्यन्ते । सवितुः प्रसवे वर्तमानः अहं वः युष्मान् उत्पुनामि ऊर्ध्वं नीत्वा शोधयामि । केन । अच्छिद्रेण पवित्रेण ।

१ सर्वेशः.

[1] रक्ष त्रायस्व.

'यो वा अयं पवत एषोऽच्छिद्रं पवित्रं' इति श्रुतिः । वायोः सर्वगतत्वादच्छिद्रत्वम् । सूर्यस्य च रश्मिभिः उदिङ्गयति । देवीराप इति । आप उच्यन्ते । हे देव्यः आपः, अग्रेगुवः अग्रेपुवः । अग्रेशब्दः पूर्वपदं द्वयोः । पूर्वस्य गमिरुत्तरपदम् । उत्तरस्य तु पिबतिः । उभयोरपि डूप्रत्ययः । अग्रे याः समुद्रं गच्छन्तीत्यग्रेगुवः । अग्रे प्रथमं सोमस्य राज्ञो भक्षयन्तीत्यग्रेपुवः । अग्रे उत्कृष्टे स्वर्गे । इमं दर्शपूर्णमासाख्यम् । अद्य अस्मिन् द्यवि । यज्ञं नयत प्रापयत । अग्रे यज्ञपतिं नयत । सुधातुं शोभनदक्षिणं यज्ञपतिं । देवयुवं देवान्कामयत इति देवयुः । 'इदंयुरिदंकामयमानः' इति यास्कः । एतदुक्तं भवति । यज्ञं यजमानं पुष्कलदक्षिणं देवकामं च अग्रे नयत ॥ १२ ॥

**म०** कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति 'पवित्रेस्थ इति त्रीन्वा' (का०२।३।३२) इति । वैष्णवे इति प्राप्ते 'व्यत्ययो बहुलम्' ( पा० ३।१।८५ ) इति स्त्रीत्वम् । हे पवित्रे शोधके कुशद्वयरूपे, युवां वैष्णव्यौ यज्ञसंबन्धिनी स्थः भवथः । 'यज्ञो वै विष्णुर्यज्ञिये स्थः' (१।१।३।१) इति श्रुतेः । हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति 'सवितुर्व इति' ( का० २। ३ । ३३ ) इति । सवितुः प्रेरकस्य प्रसवे प्रेरणे सति हे आपः, वः युष्मान् उत्पुनामि उत्कर्षेण शोधयामि । केन । अच्छिद्रेण छिद्रहीनेन पवित्रेण शोधकेन वायुरूपेण । 'यो वा अयं पवत एषोऽच्छिद्रं पवित्रम्' ( १ । १ । ३ । ६ ) इति श्रुतेः । सूर्यस्य रश्मिभिः शुद्धिहेतुभिरुत्पुनामीति संबन्धः । वायोः सूर्यरश्मीनां च पादप्रक्षालनाद्युपहतभूमिशुद्धिहेतुत्वं प्रसिद्धम् । 'सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीरापः' (का० २ । ३ । ३५ ) इति । उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चारयन् दक्षिणहस्तेनोर्ध्वं चालयेदिति सूत्रार्थः । मन्त्रार्थस्तु—हे देवीः आपः द्योतनात्मिका आपः, यूयम् अद्य अस्मिन्दिने इमम् इदानीं प्रवर्तमानं यज्ञम् अग्रे नयत पुरतः प्रवर्तयत निर्विघ्नं समापयत । किंभूता आपः । अग्रेगुवः अग्रे गच्छन्ति इत्यग्रेगुवः पुरतोनिम्नदेशं प्रति गमनशीलाः । तथा अग्रेपुवः अग्रे पुनन्तीत्यग्रेपुवः । अग्रे यस्मिन्पूर्वभागे गच्छन्ति तस्मिन्नपहतिनिवारणेन शोधनशीलाः । यद्वा । अग्रे पिबन्तीत्यग्रेपुवः । प्रथमं सोमरसस्य पानकर्त्र्यः । गमेः क्विप्प्रत्यये 'गमः क्वौ' (पा० ६।४।४०)इत्यनुनासिकलोपे पुनातेः पिबतेर्वा क्वौ 'ऊङ् च गमादीनाम्' (क० ६।४।४०। वा०२) इत्यूकारः । किंच यज्ञपतिं यजमानमग्रे नयतेत्यनुवर्तते । फलभोगाय प्रेरयत । कथंभूतम् । सुधातुम् सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुस्तं यज्ञस्य पतिं पालयितारम् । एको यज्ञपतिशब्दो योगेन व्याख्येय एको रूढ्या । तथा देवयुवम् । 'यु मिश्रणे' । देवान् यौति यज्ञादिना मिश्रीकरोति देवयुस्तम् । क्विप् । 'अनित्यमागमशासनम्' इति तुगभावः । यद्वा देवान्कामयते इति देवयुस्तम् । 'इदंयुरिदंकामयमानः' ( निरु० ६ । ३१ ) इति यास्कोक्तेः । 'सुप आत्मनः क्यच्' (पा० ३।१।८) इति क्यच् 'क्यचि च' ( ७ । ४ । ३३ ) इतीत्वे प्राप्ते 'न छन्दस्यपुत्रस्य' (पा० ७।४।३५) इतीत्वाभावः । 'अश्वाघस्यात्' (पा०७।४।३७) इति अश्वाघयोरेवात्वविधानात् 'अकृत्सार्वधातुकयोः' (पा०७। ४ । २५) इति प्राप्तो दीर्घो न भवति । ततः 'क्याच्छन्दसि' (पा० ३ । २ । १७० ) इति उप्रत्ययः । देवयुशब्दस्यामि परे 'अमि पूर्वः' (पा० ६ । १ । १०७) इति प्राप्तस्य पूर्वरूपस्य 'वा छन्दसि' (पा० ६ । १ । १०६ ) इति विकल्पेन 'तन्वादीनां वा इयङुवङौ' (पा० क० ६ । ४ । ६८ वा० १) इत्युवङ् ॥१२॥

## त्रयोदशी ।

यु॒ष्मा इन्द्रो॑ऽवृणीत वृत्र॒तूर्ये॑ यू॒यमिन्द्र॑मवृणीध्वं वृत्र॒तूर्ये॑ प्रोक्षि॑ताः स्थ । अ॒ग्नये॑ त्वा॒ जुष्टं॒ प्रोक्षा॒म्य॒ग्नीषोमा॑भ्यां त्वा॒ जुष्टं॒ प्रोक्षा॑मि । दैव्या॑य॒ कर्म॑णे शुन्धध्वं देवय॒ज्यायै॒ यद्वोऽशु॑द्धाः परा॒ज॒घ्नुरि॒दं व॒स्तच्छु॑न्धामि ॥ १३ ॥

**उ०** युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये । युष्मान् इन्द्रः साहाय्यार्थमवृणीत । किं पुरस्कृत्य । वृत्रतूर्ये । तूर्यतिर्वधकर्मा । वृत्रवधाय । यूयं च इन्द्रमवृणीध्वं वृतवत्यः।वृत्रतूर्ये तस्मिन्नेवावसरे अतिमनुष्यतया । प्रोक्षिताः स्थेति तासां प्रोक्षणम् । 'उक्ष सेचने' । प्रोक्षिता यूयं तावद्भवथ । न ह्यसंस्कृता अन्यसंस्कारक्षमा इति निह्नवः । हविः प्रोक्षति । अग्नये त्वा त्वां जुष्टं अभिरुचितं प्रोक्षामि । अग्निशब्दस्य 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी । अग्नीषोमाभ्यामित्युक्तम् । पात्राणि प्रोक्षति । दैव्याय कर्मणे देवसंबन्धिकर्मणे । तादर्थ्ये चतुर्थी । शुन्धध्वं । शुध्यध्वमिति कर्मणि यकि प्राप्ते विकरणव्यत्ययः । देवयज्यायै देवयागाय । एताभिरद्भिः शुन्धध्वमिति संबन्धः । किंच यद्वोऽशुद्धाः पराजघ्नुः । यद्वः युष्माकं अशुद्धाः[1] रक्षःप्रभृतयः पराजघ्नुः पराहतवन्तः । इदमिति प्रत्यक्षनिर्देशः । वः युष्माकं तत् शुन्धामि शोधयामि अपनयामि ॥ १३ ॥

**म०** हे आपः, इन्द्रः देवः वृत्रतूर्ये । तूर्यतिर्वधकर्मा । वृत्रवधे निमित्तभूते सति युष्माः युष्मान् अवृणीत । आकारश्छान्दसः । सहकारित्वेन प्रार्थितवान् । यूयम् अपि वृत्रतूर्ये निमित्ते तम् इन्द्रं अवृणीध्वं वृतवत्यः सहकारित्वेन । 'प्रोक्षिताः स्थेति तासां प्रोक्षणम्' ( का० २ । ३ । ३६ ) इति । हे आपः, यूयं प्रोक्षिताः भवथ । असंस्कृता अन्यसंस्कारक्षमा न भवन्तीति 'हविश्चाग्नये त्वाग्नीषोमाभ्यां त्वेति यथादैवतमन्यत्' ( का० २ । ३ । ३७ । ३८ ) इति । अन्यदपि हविस्तद्देवतोच्चारेण प्रोक्षणीयम् । अग्नये त्वां जुष्टं प्रोक्षामि अग्नीषोमाभ्यां त्वा जुष्टं प्रो-

१ तक्षप्रभृतयः.

क्षामि ( का० २ । ३ । ३९ ) पात्राणि दैव्यायेति । कृष्णाजिनोलूखलादीनि पात्राणि प्रोक्षयेत् । हे यज्ञपात्राणि, यूयं शुन्धध्वम् शुद्धानि भवत । किमर्थम् । दैव्याय कर्मणे अग्न्यादिदेवतासंबन्धिने कर्मणे । तदेव कर्म विशिष्यते । देवयज्यायै देवसंबन्धिन्यै यागक्रियायै दर्शादिकायै । किंच । अशुद्धाः नीचजातयस्तक्षादयः वः युष्माकं संबन्धि यदङ्गं पराजघ्नुः पराहतं कृतवन्तः । छेदनतक्षणादिकाले स्वकीयहस्तसंस्पर्शरूपमशुचित्वं चक्रुः । तदिदं वः युष्माकमङ्गं शुन्धामि प्रोक्षणेन शुद्धं करोमि ॥ १३ ॥

## चतुर्दशी ।

शर्मा॒स्यव॑धूत॒ꣳ रक्षोऽव॑धूता॒ अरा॑तयोऽदि॑त्या॒स्त्वग॑सि॒ प्रति॒ त्वादि॑ति॒र्वे॑त्तु । अद्रि॑रसि॒ वान॒स्पत्यो॒ ग्रावा॑सि पृ॒थुबु॑ध्नः॒ प्रति॒ त्वादि॑त्या॒स्त्वग्वे॑त्तु ॥ १४ ॥

**उ०** कृष्णाजिनमादत्ते । शर्मासि । चर्मासीति प्राप्ते चकारस्य शकारः । 'शर्मदेवता' इति श्रुतिः । अवधुनोति । अवधूतं रक्षः । 'धूञ् कम्पने' अवकम्पितं रक्षः । अवकम्पिताश्च अरातयः अदानशीलाः पुरुषाः । नत्वेतद्यज्ञसाधनमित्यपह्नवः । कृष्णाजिनमास्तृणाति । अदित्यास्त्वगसि अदित्याः पृथिव्यास्त्वं त्वग्भवसि । अतः प्रतिवेत्तु । 'विद ज्ञाने' । प्रतिजानातु त्वां । अदितिः पृथिवी । 'प्रति हि स्वः संजानीते' इति श्रुतिः । तस्मिन्निदधात्युलूखलम् । अद्रिरसि । आदृणाति विदारयति आदृणात्यनेन वा व्रीह्यादिकमित्यद्रिः । त्वं भवसि । वानस्पत्यश्च । वनस्पतेर्विकारो वानस्पत्यः । अनेन वा निदधाति । ग्रावासि । हन्ति व्रीह्यादिकमनेनेति ग्रावा त्वमसि । पृथुबुध्नः बृहन्मूलः । अतः प्रति त्वादित्यास्त्वग्वेत्तु प्रतिवेत्तु त्वामुलूखल अदित्यास्त्वक् कृष्णाजिनम् । कथम् । अहं पृथिव्यास्त्वक् अयं चोलूखलः पृथिव्यास्त्वगिति । त्वगेवात्मनात्मानं हिनस्ति ॥ १४ ॥

**म०** 'शर्मासीति कृष्णाजिनादानम्' ( का० २ । ४ । १ ) इति । हे कृष्णजिन, त्वमुलूखलस्य धारणार्थं शर्म सुखहेतुरसि । अजिनस्य चर्मेति मानुषं नाम शर्मेति दैवं नाम । 'अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमिति' (का० २ । ४ । २ ) इति । रक्षः कृष्णाजिने गूढम् अवधूतम् । कृष्णाजिनकम्पनेन भूमौ पातितम् एवमरातयोऽपि पातिताः । 'प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगिति' ( का० २ । ४ । ३ ) इति । हे कृष्णाजिन, त्वम् आदित्याः भूमिदेवतायास्त्वग्रूपम् असि । ततोऽदितिर्भूमिस्त्वा त्वां प्रतिवेत्तु प्रतिगृह्य मदीयेयं त्वगिति वेत्तु जानातु । पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वागमत्तदा देवा ज्ञात्वा तदीयां त्वचमुत्क्षिप्य जगृहुस्तस्माच्चर्मास्तरणमित्यभिप्रायः श्रुतावाम्नातः ( १ । १ । ४ । १ ) । 'सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा प्रति त्वेत्युभयोः' (का० २ । ४ । ४–५ ) इति । विकल्पितयोर्मन्त्रयोः प्रति त्वेति शेषो योजनीयः । हे उलूखल, त्वं यद्यपि वानस्पत्यः दारुमयस्तथापि दृढत्वात् अद्रिरसि पाषाणोऽसि । किंभूतः । पृथुबुध्नः स्थूलमूलः । मुसलघातोपद्रवेण चाञ्चल्यराहित्याय मूलस्थूलत्वम् । हे उलूखल, तथाविधस्त्वं ग्रावासि दार्ढ्येन पाषाणसदृशोऽसि । अदित्यास्त्वक् अधस्तादास्तीर्णा कृष्णाजिनरूपा भूमेर्या त्वगस्ति सा त्वां प्रति वेत्तु स्वकीयत्वेन जानातु ॥ १४ ॥

## पञ्चदशी ।

अ॒ग्नेस्त॒नूर॑सि॒ वा॒चो वि॒सर्ज॑नं दे॒ववी॑तये त्वा गृह्णामि बृ॒हद्ग्रा॑वासि वानस्प॒त्यः स इ॒दं दे॒वेभ्यो॑ ह॒विः शमीष्व सु॒शमि॑ शमीष्व । हवि॑ष्कृ॒देहि॒ हवि॑ष्कृ॒देहि॑ ॥ १५ ॥

**उ०** हविरावपति । अग्नेस्तनूरसि । आहवनीयोऽत्राग्निरुच्यते । तत्र हि हविः प्रक्षिप्तमग्निर्भवति । अत एवमुच्यते अग्नेस्तनुः शरीरमसीति । अथवा अग्निशब्देन यस्यै देवतायै हविर्गृह्यते सा लक्ष्यते । तस्या अपि हविस्तनूर्भवतीति । वाचो विसर्जनम् । वाक् यस्मिन्हविषि प्रक्षिप्ते विसृज्यतेऽध्वर्युणा तदिदं वाचो विसर्जनम् । देववीतये देवतर्पणाय । त्वा गृह्णामि । आवपामीत्यर्थः । मुसलमादत्ते । बृहद्ग्रावासि । दीर्घत्वापेक्षं बृहत्त्वम् । हन्त्यपेक्षं ग्रावत्वम् । दीर्घग्रावा त्वमसि । वानस्पत्यः वनस्पतेर्विकारश्च वानस्पत्यः । स इदमित्यवदधाति । स त्वमिदं । देवेभ्योऽर्थाय । हविः शमीष्व । शम्यतिः संस्कारार्थः । सुशमि क्रियाविशेषणमेतत् । साधु यथा संस्कृतं भवति तथा शमीष्वेति । हविष्कृदेहीति त्रिराह्वयति । हविः करोतीति हविष्कृत् । एहि आगच्छ । अधिदैवं वागुच्यते । अधियज्ञं पत्नी ॥ १५ ॥

**म०** 'हविरावपत्यग्नेस्तनूरसीति' (का०२ । ४ । ६) इति । हे हविः, त्वं अग्नेः आहवनीयस्य तनूः शरीरमसि । यतस्तत्र क्षिप्तं हविरग्निर्भवति अतो हविः अग्नेस्तनूः । किंभूतं हविः । वाचो विसर्जनम् । अपां प्रणयनकाले नियमिताया यजमानवाचो हविरावपनकाले विसर्गो भवति । तस्मादिदं हविर्वाचो विसर्जनम् । अतः देववीतये देवानां तर्पणाय । त्वा त्वां । गृह्णामि आवपामीत्यर्थः । 'बृहद्ग्रावेति मुसलमादत्ते' ( का० २ । ४ । ११ ) इति । हे मुसल, त्वं यद्यपि वानस्पत्यः दारुमयस्तथापि ग्रावासि दार्ढ्येन पाषाणसदृशोऽसि । तथा दीर्घत्वेन बृहन्महानसि । 'स इदमित्यवदधाति' ( का० २ । ४ । १२ ) इति । हे मुसल, त्वं देवेभ्यः अग्न्यादिदेवोपकारार्थम् । इदं हविर्व्रीहिरूपं शमीष्व शमय । भक्षणविरोधितुषापनयनेन शान्तं कुरु । तस्यैव पदस्य व्याख्यानम् । सुशमि शमीष्व सुष्ठु शान्तं यथा भवति तथा शमीष्व शमय । 'शमु उपशमे' व्यत्ययेन शपो लुक् । 'तुरुस्तुशम्यमः सार्वधातुके'(पा०७।३।९५)

इति ईडागमः । शान्तिर्द्विविधा । बाह्यतुषापनयनादाद्या । सा प्रथमावघातेन स्यात् । अन्तःस्थितमालिन्यस्यापनयनादन्या । सा फलीकरणेन भवति । तं द्विविधं तण्डुलसंस्कारं कुर्वित्यर्थः । 'हविष्कृदेहीति त्रिराह्वयति' ( का० २ । ४ । १३ ) इति यजमानः पत्नी वान्यो वा यो व्रीहीनवहन्ति स संबोध्याहूयते । हे हविष्कृत् हविः करोतीति हविष्कृत्, एहि अत्रागच्छ । त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराह्वानम् ॥ १५ ॥

## षोडशी ।

कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ संघातꣳसंघातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयः । अपहतꣳ रक्षो वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥ १६ ॥

**उ०** आहन्ति अन्यो दृषदुपले । कुक्कुटोसि । अत्र 'मनोर्ह वा ऋषभ आस' इत्यादीतिहास उत्प्रेक्षितव्यः । कुत्सितं शब्दमसुरघ्नमसुराणां तनोतीति कुक्कुटः । अथवा असुरघ्नीं वाचमुपादाय क क असुरा एवं योऽटति असौ कुक्कुटः । अस्मिन्पक्षे कशब्दस्य संप्रसारणम् । अटतेश्चाकारस्य 'संप्रसारणाच्च' इति पूर्वरूपत्वम् । कुक्कुटस्त्वमस्यसुराणां । देवानां मधुजिह्वः । अतः । इषं वृष्टिं ऊर्जमन्नं च । आवद आभिमुख्येन वद । त्वया च सहायभूतेन । वयं संघातं । संपूर्वस्य हन्तेः संघातेन संग्रामः समुदायो वाभिधेयः । वीप्सार्थं द्विर्वचनम् । संग्रामं जेष्म । शूर्पमादत्ते । वर्षवृद्धं वृष्ट्या वृद्धं त्वमसि । हविरुद्वपति । प्रति त्वा वर्षवृद्धं वेत्तु प्रतिवेत्तु प्रतिजानातु । त्वां वृष्ट्या वृद्धं हे हविः । समानजन्मत्वाद्धविःशूर्पयोर्भ्रातृत्वार्थं वचनं । निष्पुनाति । परापूतं रक्षः पराक्षिप्तं रक्षः । परापूताः पराक्षिप्ताश्च अरातयः अदानशीलाः पुरुषाः । तुषान्निरस्यति । अपहतं । हन्तिर्गत्यर्थः । अपगतं रक्षः । विविनक्ति । वायुर्वः । तण्डुला उच्यन्ते । वायुः वः युष्मान् विविनक्तु पृथक्करोतु । व्रीहिभ्यः सकाशात् । पात्र्यामोप्याभिमन्त्रयते । देवो वः सविता । वः युष्मान् हे तण्डुलाः । हिरण्यपाणिः । 'तत्सवित्रे प्राशित्रं प्रजह्रुः । तस्य पाणी परिचिच्छेद । तस्मै हिरण्मयौ प्रतिदधुः तस्माद्धिरण्यपाणिरित्युच्यते' इति । बह्वृचानां श्रुतिः । प्रतिगृह्णातु प्रतिग्रहं करोतु । अच्छिद्रेण अशिथिलेन हस्तेन ॥ १६ ॥

**म०** 'आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिः शम्यया द्विर्दृषदं सकृदुपलम्' (का० २ । ४ । १५) इति । हे शम्यारूप यज्ञायुधविशेष, त्वं कुक्कुटोऽसि असुराणां । मधुजिह्वः चासि देवानाम् । असुराः क केति तान्हन्तुमिच्छन्योऽटति सर्वत्र संचरति स कुक्कुटः । यद्वा कुकं कुत्सितशब्दं कुटति तनोतीति कुक्कुटः । यद्वा कुक्कुटाख्यपक्षिवद्ध्वनिविशेषमसुरभीत्यर्थं तनोतीति कुक्कुट इत्युपचर्यते । मधुजिह्वकनामा कश्चिद्देवानां भृत्यः । मधुर्मधुरभाषिणी जिह्वा यस्य तद्रूप हे यज्ञायुध, त्वमसुरान्पराभवन्यजमानस्य इषमूर्जं चावद । अन्नं रसं च यथा समागच्छति तथा शब्दं कुरु । तव शब्देनासुरेषु पराभूतेषु तदीयमन्नं रसं च यजमानः प्राप्नोति । ततः त्वया कृत्वा वयं संघातं सङ्घातं जेष्म असुरैः सह क्रियमाणं तं तं संग्रामं जेष्म जयेम । कदाचिदपि पराजयोऽस्माकं मास्त्वित्यर्थः । सम्यक् हन्यन्ते असुरा यत्रेति सङ्घातो युद्धम् । मनो राज्ञ एको वृषभ आसीत्तस्मिन्नसुरघ्नी वाक् स्थिता तस्मिन् शब्दं कुर्वति तं श्रुत्वैवासुरा म्रियन्ते । ततः किलाताकुलीनामानावसुरयाजकौ मनुं गत्वा तेनैव ऋषभेणायाजयतामृषभे हते सा वाङ्मनोर्जायां प्रविष्टा । तौ पुनस्तयापि मनुमयाजयताम् । ततः सा वाग्यज्ञपात्राणि प्रविष्टेत्यसुरपराभवाय तद्वाक्प्रकटनार्थं शम्यया दृषदुपलहननमिति श्रुत्योक्तोऽभिप्रायः (१ । १ । ४।१४) । 'वर्षवृद्धमसीति शूर्पमादत्ते' (का० २ । ४ । १६ ) इति । हे शूर्प, त्वं वर्षवृद्धमसि वर्षेण वृष्ट्या तद्भूतजलेन वृद्धं वर्षवृद्धम् । वर्षवृद्धवेणुशलाकानिर्मितत्वात् शूर्पस्य वर्षवृद्धत्वम् । 'प्रति त्वेति हविरुद्वपति' ( का० २ । ४ । १७ ) इति । हे हविः, वर्षवृद्धं शूर्पं त्वा त्वां प्रतिवेत्तु स्वकीयत्वेन जानातु । व्रीहिशूर्पयोर्वर्षवृद्धत्वाद्भ्रातृत्वम् । 'परापूतमिति निष्पुनाति' (का० २। ४ । १८) इति । रक्षः परापूतं निराकृतं । शूर्पेण तुषेषु परापूतेषु तद्गतं रक्षोऽपि तैः सह भूमौ पातितम् । अरातयः हविःप्रतिकूलाः आलस्यादिशत्रवश्च परापूता निराकृताः । 'अपहतमिति तुषान्निरस्यति' ( का० २ । ४ । १९ ) इति । रक्षः अपहतं दूरेऽपनीय मारितम् । भूमौ पतितान्दूरे निःसारयेत् 'वायुर्व इति विविनक्ति' (का० २ ।४ । २०) इति । हे तण्डुलाः, वायुः शूर्पचालनोत्थः वः युष्मान् विविनक्तु सूक्ष्मकणेभ्यः पृथक्करोतु । 'देवो व इति पात्र्यामोप्याभिमन्त्रयते' ( का० २ । ४ । २१ ) इति । हे तण्डुलाः, सविता देवः व युष्मान् अच्छिद्रेण पाणिना अङ्गुलिविश्लेषहीनेन स्वहस्तेन प्रतिगृभ्णातु स्वीकरोतु । 'हृग्रहोर्भश्छन्दसि' (पा०८।२।३२) इति हस्य भः । पात्रीप्रक्षेपसमये भूमौ पतनं मा भूदिति सवितुर्ग्रहणं प्रार्थ्यते । किंभूतः सविता । हिरण्यपाणिः हिरण्ययुक्तावङ्गुलीयाद्याभरणयुक्तौ पाणी यस्य स हिरण्यपाणिः । यद्वा दैत्यैः प्राशित्रप्रहारेण छिन्नौ सवितुः पाणी देवैर्हिरण्मयौ कृताविति सवितुर्हिरण्यपाणित्वमिति बह्वृचश्रुतौ कथा ॥ १६ ॥

## सप्तदशी ।

धृष्टिरस्यपाग्ने अग्निमामादं जहि निष्क्रव्यादꣳ सेधा देवयजं वह । ध्रुवमसि पृथिवीं दृꣳह

१ इत्याथर्वणश्रुतिरित्यन्यत्र.

ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥ १७ ॥

उ० उपवेषमादत्ते । धृष्टिरसि । 'ञिधृषा प्रागल्भ्ये' । अनेनाग्निर्धृष्टमुपचरतीति धृष्टिः । उपवेष उच्यते । धृष्टिस्त्वमसि उपवेष । अङ्गारान् प्राञ्चः करोति । अपाग्ने अग्निमामादं जहि अपजहि । हे भगवन्नग्ने, अग्निमामादं आममत्तीत्यामात् तं । येनेदं मनुष्याः अपक्कमन्नमश्नन्ति स उच्यते । जहातिस्त्यागार्थः । निष्क्रव्यादं सेध निःसेध क्रव्यादमग्निं । येन पुरुषं दहन्ति स क्रव्यात् । सेधतिः परित्यागार्थः । अङ्गारमाहरति । आ देवयजं वह आवह आनय । देवयजमग्निं । देवा यस्मिन्निज्यन्ते स देवयट् तं देवयजमग्निं । कपालेनावच्छादयति ध्रुवमसि पृथिवीं दृꣳह । त्रिभिः कपालैः त्रीँल्लोकान् यजमानो जयति । चतुर्थेन दिशो यश्चेषु संस्क्रियते पुरोडाशः सोप्याधारवशात्त्रिलोकविग्रह एव भूत्वा देवताः प्रीणातीति प्रकरणार्थः । 'यद्वु वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति' इति श्रुतिः । ध्रुवमसि ध्रुवं स्थिरं त्वमसि । अतः पृथिवीं दृꣳह दृढीकुरु । नहि स्वयमप्रतिष्ठितोऽन्यस्य प्रतिष्ठां कर्तुं समर्थः । किंच इत्थंभूतं त्वामहमुपदधामि । ब्रह्मवनि त्वा ब्रह्म एव यद्वनोति संभजते तत्कपालं ब्रह्मवनि । एवं क्षत्रवनि । सजातवनि समानंजाताः सजाताः भ्रातृप्रभृतय उच्यन्ते । भ्रातृव्यस्य । 'व्यन्सपत्ने' इति आद्युदात्तत्वाद्भ्रातृव्यशब्दस्य शत्रुरभिधेयः । शत्रोश्च वधाय त्वामुपदधामीत्यनुषङ्गः ॥ १७ ॥

म० 'मूलतः शाखां परिवास्योपवेषं करोतीति धृष्टिरसीत्युपवेषमादायेति च' (का०२।४।२५)। पलाशशाखाया मूलदेशे छिन्नः काष्ठभाग उपवेषस्तमादत्ते । हे उपवेश, त्वम् धृष्टिरसि प्रगल्भोऽसि । 'ञिधृषा प्रागल्भ्ये' । तीव्राङ्गाराणामितस्ततश्चालने प्रभुत्वादस्य प्रागल्भ्यम् । 'अपाग्न इत्यङ्गारान्प्राचः करोति' (का० २ । ४ । २६) । इति तत्र त्रयोऽग्नयः सन्ति । एकः आमात् आममपक्कमत्तीत्यामाल्लौकिकोऽग्निः । द्वितीयः क्रव्यात् शवदाहे क्रव्यं मांसमत्तीति क्रव्यात् चिताग्निः । तृतीयो यागयोग्यः । तथाविधांस्त्रीनङ्गारान्गार्हपत्यात्प्राग्भागे पृथक्कृत्य तेषां मध्ये यागयोग्यताहीनौ द्वावग्नी आमात्क्रव्यात्संज्ञौ तौ वारयितुं गार्हपत्यं प्रत्युच्यते । हे अग्ने हे गार्हपत्य, आमादमग्निम् अपजहि परित्यज । 'व्यवहिताश्च' ( १।४।८२ ) इति क्रियापदोपसर्गयोर्व्यवधानम् । तथा क्रव्यादम् अग्निं निःषेध निःशेषं दूरे गमय । परित्यजेत्यर्थः । 'आ देवयजमित्यङ्गारमाहृत्य' ( का०२ । ४।२७ ) इति हे गार्हपत्य, देवयजं देवानां यागयोग्यं तृतीयमङ्गारम् आवह समीपमानय । देवा इज्यन्ते यस्मिन्नसौ देवयाट् तं देवयजम् । 'कपालेनावच्छादयति ध्रुवमसि' (का० ४। २ ।२७) इति । देवयजमङ्गारं कपालेनाच्छादयेत् । हे कपाल, त्वं ध्रुवमसि स्थिरं भवसि अङ्गारोपरि वर्तमानमपि इतस्ततो न पतसि । पृथिवीं भूमिं दृंह दृढीकुरु । पुरोडाशपाकसमये त्वत्कृतव्यवधानेन भूमेर्दाहकृतं शैथिल्यं न भविष्यतीत्यर्थः । किंच त्वाम् उपदधामि अङ्गारे स्थापयामि । किमर्थं । भ्रातृव्यस्य शत्रोरसुरस्य पाप्मनो वा वधाय हिंसार्थम् । 'व्यन्सपत्ने' ( पा० ४।१।१४५ ) इत्याद्युदात्तत्वाद्भ्रातृव्यशब्दः शत्रुवाची । किंभूतं त्वां । ब्रह्मवनि । 'वन षण संभक्तौ' ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं स्वीक्रियते इति ब्रह्मवनि । तथा क्षत्रवनि सजातवनीति पदद्वयं योज्यम् । सजाताः समानकुले जाताः यजमानस्य ज्ञातयस्तैर्वन्यते इति ॥ १७ ॥

## अष्टादशी ।

अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । धर्त्रमसि दिवं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । विश्वाभ्यस्त्वाशाभ्य उपदधामि चित स्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥ १८ ॥

उ० सव्याङ्गुल्या शून्येऽङ्गारं निदधाति । अग्ने ब्रह्म । हे भगवन्नग्ने, ब्रह्म ब्राह्मणं अङ्गुलिप्रदानेन व्यावृत्तमनुगृह्णीष्व । अनुग्रहं कुर्वित्यर्थः । द्वितीयं निदधाति । धरुणमिति साधारणं धारकमसि । अन्तरिक्षं दृꣳह । शेषं पूर्ववत् । तृतीयं निदधाति । धर्त्रमसि धारयितृ असि । दिवं दृꣳह । चतुर्थं निदधाति । विश्वाभ्यस्त्वा सर्वाभ्यस्त्वां आशाभ्यो दिग्भ्य उपदधामि । इतराणि कपालान्युपदधाति । चितस्थ । चिञ् चयने । क्विबन्तस्य रूपमिदम् । बहुवचनं च पूर्वोपहितकपालविषयम् । चितानि यूयं ताव द्भवथ । ऊर्ध्वचितः ऊर्ध्वं पश्चादुपहितेषु कपालेषु चीयत इति ऊर्ध्वचित् तस्य ऊर्ध्वचितः । उपचीयमानस्येति शेषः । अङ्गारैरभ्यूहति । भृगूणामङ्गिरसां । भृगोः अपत्यानि बहूनि भृगवः । तथाङ्गिरसः । तद्राजस्य बहुषु लुक् । भृगूणां अङ्गिरसां च तपसा यूयं कपालानि तप्यध्वम् ॥ १८ ॥

म० 'सव्याङ्गुल्या शून्येऽङ्गारं निदधात्यग्ने ब्रह्मेति' ( का० २ । ४ । ३० ) इति । हे अग्ने, निधीयमानाङ्गाररूपं ब्रह्म प्रौढं कर्मास्माभिः क्रियमाणं गृभ्णीष्व गृह्णीष्व । नाशकरक्षोवधेनानुगृह्णीष्व । यद्वा ब्रह्म ब्राह्मणं मामनुगृह्णीष्व । अङ्गुलिदानासक्तं मा दंहेत्यर्थः । 'धरुणमिति पश्चात्' ( का० २ । ४ । ३१ ) इति पूर्वस्थापितकपालस्य पश्चाद्भागे द्वितीयं निदधाति । हे द्वितीय कपाल, त्वं धरुणं पुरोडाशस्य धारकम् असि । अतोऽन्तरिक्षं दृंह दृढीकुरु । पुरोडाशपाकोत्पन्न-

१ अपजहि परित्यज. २ सेधतिरपि त्यागार्थः. ३ संस्कृतेषु.

ज्वालयान्तरिक्षलोकोपद्रवो यथा न स्यात्तथा कुरु । यद्यप्येतत् कपालं ज्वालान्तरिक्षयोर्मध्ये व्यवधायकं नास्ति तथाप्यन्तरिक्षदार्ढ्याय कपालदेवता प्रार्थ्यते । ब्रह्मवनीत्यादि पूर्ववत् । 'पुरस्ताद्धर्त्रमिति' (का० २ । ४ । ३२ ) इति । प्रथमस्य पूर्वभागे तृतीयं स्थापयेत् । हे कपाल, त्वं धर्त्रं धारकम् असि । दिवं दृंह । ज्वालाग्रेण दाहाभावो द्युलोकस्य दार्ढ्यम् । अन्यत् पूर्ववत् । ( का० २ । ४ । ३३ ) विश्वाभ्य इति । दक्षिणत इति । हे चतुर्थकपाल, विश्वाभ्यः आशाभ्य सर्वदिग्भ्यः सर्वदिग्दार्ढ्याय त्वा उपदधामि । एवं कपालत्रयोपधानेन यजमानो लोकत्रयं जयति । चतुर्थेन दिशो जयति । तद्गतः पुरोडाशो लोकत्रयरूपो भूत्वा देवताः प्रीणातीत्याशयः । 'सम विभज्य द्वे दक्षिणत एवमुत्तरतश्चितस्थेति' (का०२ । ४ ।३४) इति । आग्नेयपुरोडाशस्याष्टकपालत्वाच्चतुर्णां स्थापितत्वादवशिष्टानां चतुर्णां मध्ये द्वे द्वे दक्षिणोत्तरयोर्निदध्यात् । 'चिञ् चयने' क्विबन्तस्य चित इति बहुवचनम् । हे कपालविशेषाः, यूयं चितः स्थ प्रथमकपालोपचयकारिणः स्थ भवथ । तथा ऊर्ध्वचितः स्थ ऊर्ध्वमुपहितानां द्वितीयादिकपालानामुपकारिणो भवथ । 'भृगूणामित्यङ्गारैरभ्यूहति' ( का० २ । ४ । ३८ ) इति । अङ्गारैः कपालानि छादयेत् । हे कपालानि, यूयं भृगूणामङ्गिरसां भृगुनामकानामङ्गिरोनामकानां देवर्षीणां तपसा तपोरूपेणाग्निनानेन तप्यध्वं तप्तानि भवत । अस्याग्नेस्तदीयरूपत्वं भावयेदित्यर्थः ॥ १८ ॥

## एकोनविंशी ।

शर्मास्यवधूतꣳ रक्षोऽवधूताऽअरातयोदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु दिवः स्कम्भनीरसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥ १९ ॥

उ० शर्मासीत्यादीनि त्रीणि यजूंषि व्याख्यातानि । कृष्णाजिने दृषदं निदधाति । धिषणासि । धीः कर्म बुद्धिर्वा तदुभयं सीदति सनोति[1] वा कर्माङ्गत्वाद्दृषत् धिषणोच्यते । धिषणा त्वमसि । पर्वती पर्ववती । अतः प्रतिवेत्तु प्रतिजानातु । त्वामदित्यास्त्वक् पृथिव्यास्त्वक् । कृष्णाजिने शम्यामुपदधाति । दिवस्कम्भनीरसि । दृषदुपलयोः पृथिवीद्युभ्यामुपलक्षितत्वात् शम्याया अन्तरिक्षभक्तित्वं उपपद्यते । दिवोः द्यावापृथिव्योः स्कम्भनीः । स्कभ्नोतिः स्तम्भनकर्मा । त्वं स्तम्भनीर्भवसि । 'अन्तरिक्षस्यैव रूपेणान्तरिक्षेण हीमे द्यावापृथिवी विधृते' इति श्रुतिः । दृषद्युपलामुपदधाति । धिषणासीति व्याख्यातम् । पार्वतेयी पार्वत्या अपत्यं । 'कनीयसी ह्येषा दुहितेव भवति' इति श्रुतिः । वेत्तु प्रतिजानातु त्वां पर्वती माता 'प्रतिहिस्व संजानीत' इति श्रुतिः ॥ १९ ॥

म० 'कृष्णाजिनमादत्ते पूर्ववत्' ( का० २ । ५ । २ ) इति यथावघातार्थं कृष्णाजिनप्रयोगस्तद्वदत्रापि । शर्मासि । अवधूतम् । अदित्याः । इति मन्त्रत्रयं व्याख्यातम् । 'तस्मिन्दृषदं धिषणासीति' ( का० २।५।३। ) तस्मिंश्चर्मणि शिलां स्थापयेत् । हे शिले पेषणाधारभूते, त्वं पर्वती पर्वतात्मिका तदुत्पन्ना त्वं धिषणासि धियं बुद्धिं कर्म वा सिनोति व्याप्नोति ददाति वा धिषणा । ह्रस्वत्वमार्षम् । पर्वतवद्धारयन्त्यसि । अदित्याः भूमेः त्वक् कृष्णाजिनरूपा तादृशीं त्वा त्वां प्रति वेत्तु त्वदवस्थानमनुजानातु । 'पश्चाच्छम्यामुपोहत्युदीचीं दिवः' (का० २ । ५ । ४ ) इति । दृषदः पश्चाद्भागेऽधस्ताच्छम्यां स्थापयेत् । तां प्रत्युच्यते । हे शम्ये, दिवः द्युलोकस्य स्कम्भनीः स्तम्भनकारिणी त्वम् असि । व्यत्ययेन द्वितीयाबहुवचनम् । पतनवारणायान्तरिक्षरूपेण स्तम्भनकारित्वम् । 'अन्तरिक्षेण होमे द्यावापृथिवी विष्टब्धे' ( १ । २ । १ । १६ ) इति श्रुतेः । 'दृषद्युपलां धिषणासीति' ( का० २ । ५ । ५ ) । हे उपले, उपरितनशिले त्वं धिषणासि पेषणव्यापारधारिकासि । किंभूता । पार्वतेयी पर्वत्या अधस्तनदृषदः पुत्री पार्वतेयी बालस्वरूपा । 'कनीयसी ह्येषा दुहितेव भवति' (१ । २ । १७ ) इति श्रुतेः । अतः पर्वती मातृसमा त्वां प्रतिवेत्तु पुत्रीं जानातु ॥ १९ ॥

## विंशी ।

धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥ २० ॥

उ० दृषदि तण्डुलानावपति । धान्यमसि । धिनोतेः प्रीणनार्थस्य धान्यमिति भवति तदभिप्रायेणैवमाह । यतस्त्वं प्रीणनस्वभावमसि[1] अतः प्रीणीहि देवान् । पिनष्टि । प्राणाय त्वा । अत्र श्रुतिः । 'जीवं वै देवानां हविरमृतममृतानामित्युपक्रम्य दृषदुपलाभ्यां हविर्यज्ञं घ्नन्तीति प्रतिपाद्य स यदाह प्राणाय त्वोदानात्वेति तत्प्राणापानौ दधातीत्येवमादिना ग्रन्थेन यथा हविषः पुनर्जीवनं क्रियते तथा श्रुतिः प्रतिपादयति । एतदनुसारेण व्याख्यानं करिष्यामः । प्राणाय त्वा प्राणदानाय त्वां पिनष्मि नतु हिंसायै । एवमुत्तरावपि मन्त्रौ व्याख्येयौ । कृष्णाजिने प्रक्षिपति । दीर्घामनु प्रसितिं । 'षह मर्षणे' । प्रसितिः प्रसहनात्तन्तुर्वा जालं वा । इहतु प्रसितिशब्देन कृष्णाजिनमभिधीयते । तदपिहि पिष्टानि गृह्णाति । दीर्घां कृष्णाजिनाख्यां प्रसितिमनु । आयुषे आयुर्दानाय । धां दधामि । देवो व इति व्याख्यातं । ईक्षते । चक्षुषे त्वा चक्षुर्दानाय त्वामहमीक्षे । 'ए-

[1] सनोति व्याप्नोति ददाति वा.

[1] स्त्वमेवंस्वभाव.

तानि वै जीवतो भवन्त्येवमुहैतज्जीवितमेव देवानां हविर्भवति' इति श्रुतिः। आज्यं निर्वपति। महीनां पयोसीति। महीति गोनाम। महीनां गवां पयो भवसि। पयःशब्देन लक्षणया घृतमभिधीयते ॥ २० ॥

**म०** 'धान्यमसीति तण्डुलानोप्येति' (का० २।५।५)। हे हविः, त्वं धान्यमसि। धिनोति प्रीणातीति धान्यम्। अतो देवान् अग्न्यादीन् धिनुहि प्रीणय। 'पिनष्टि प्राणाय त्वेति प्रतिमन्त्रमिति' (का० २।५।६)। प्रकर्षेण अनिति सर्वदा मुखे चेष्टत इति प्राणः श्वासवायुः। उद् अनिति ऊर्ध्वं चेष्टत इत्युदानः उत्क्रान्तिवायुः। व्यनिति व्याप्य चेष्टते इति व्यानो व्यापको बलहेतुर्वायुः। हे तण्डुल, त्वा त्वां प्राणाय प्राणदानार्थं पिनष्मीति शेषः। एवमुत्तरमन्त्रयोर्योज्यम्। देवानां सजीवं हविर्भवतीत्येभिर्मन्त्रैर्हविषां प्राणादिदानेन सजीवत्वं क्रियत इत्यभिप्रायः। 'दीर्घामिति कृष्णजिने प्रोहति' (का० २।५।७) इति। प्रसयनं प्रसितिः। 'षिञ् बन्धने'। प्रबन्धः कर्मसंततिः। दीर्घामविच्छिन्नां प्रसितिमनु कर्मसंततिमनुलक्ष्य। आयुषे यजमानस्यायुरभिवृद्ध्यर्थं हे हविः, त्वां धां कृष्णाजिने दधामि। दधातेर्लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (६।४।७५) इति अडागमाभावः। यजमानस्यायुर्वृद्धौ सत्यां कर्मसन्ततिः प्रवर्तत इति भावः। यद्वायमर्थः। पूर्वमन्त्रैर्हविषः प्राणादिदानेन सजीवत्वं कृतम् अनेन पुनरायुर्दीयते हविषः। हे हविः, दीर्घां प्रसितिं कृष्णाजिनाख्यामनु त्वां धां धारयामि। कृष्णाजिने प्रक्षिपामीत्यर्थः। किमर्थम्। आयुषे त्वदीयायुर्वृद्ध्यर्थम्। 'प्रसितिः प्रसयनात् तन्तुर्वा जालं वा' (निरु० ६।१२) इति यास्कोक्तेरिह पिष्टग्राहकत्वात्प्रसितिशब्देन कृष्णाजिनमुच्यते। देवो व इत्यादिमन्त्रशेषो व्याख्यातः। 'चक्षुषे त्वेतीक्षत इति' (२।५।८)। हे हविः, चक्षुषे यजमानस्य चक्षुरिन्द्रियपाटवाय त्वा त्वां पश्यामीति शेषः। यद्वा चक्षुषे तव चक्षुरादिबाह्येन्द्रियदानाय त्वामीक्षे। हविषः सजीवत्वे कृते चक्षुराद्यपेक्षा भवतीत्यनेन तत्क्रियते इति भावः। 'पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम्' (का० २।५।९) इति। हे आज्य, त्वं महीनां गवां पयोऽसि क्षीरमसि क्षीरोत्पन्नत्वाद्घृतं पयःशब्देनोच्यते। महीति गोनाम ॥ २० ॥

## एकविंशी ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। संवपामि समाप ओषधीभिः समोषधयो रसेन। सꣳरेवतीर्जगतीभिः पृच्यन्ताꣳ संमधुमतीर्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥

**उ०** पात्र्यां पिष्टान्यावपति। देवस्यत्वेति व्याख्यातं। ननु ग्रहणे देवस्यत्वेति यदुक्तं तेनैव दर्शनेना ब्राह्मणतर्पणान्तं कर्म करिष्यति किमनेन पुनर्देवस्यत्वेति। सत्यम्। संस्कारोज्वलनार्थं हितं च पथ्यं च पुनः पुनरुपदिश्यमानं न दोषाय भवतीति। संवपामि। समित्येकीभावमाचष्टे। एकत्र क्षिपामि। अपउपसर्जनीः प्रतिगृह्णाति। समाप ओषधीभिः संपृच्यन्ताम्। 'पृची संपर्के'। संगच्छन्ताम् आप ओषधीभिः पिष्टाभिः। समोषधयो रसेन। संगच्छन्तां च ओषधयः पिष्टाख्यरसेन उपसर्जनीभिः। आपो हि ओषधीनां रसः। सꣳरेवतीर्जगतीभिः पृच्यन्तां। 'रेवत्य आपो जगत्य ओषधयः' इति श्रुतिः। संपृच्यन्तां रेवत्य आपो जगतीभिः ओषधीभिः पिष्टाभिः। संमधुमतीर्मधुमतीभिः पृच्यन्तां। मधुशब्दो रसवचनः। संपृच्यन्ताम् मधुस्वादोपेता आपः मधुमतीभिः। संपृच्यन्तां वा मधुवत्स्वादोपेताभिः ओषधीभिः पिष्टाभिः ॥ २१ ॥

**म०** 'पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्य त्वेति'(का० २।५।१०)इति। हस्ताभ्यामित्यन्तं व्याख्यातम्। एतानि पिष्टानि संवपामि पात्र्यां सम्यक् क्षिपामि 'उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समाप इति' (का० २।५।१२-१३)इति। पिष्टसंवपनीया आप उपसर्जन्यः। ता अग्नीदानयेदध्वर्युः पवित्राभ्यां प्रतिगृह्णीयात्। आपः उपसर्जनीरूपाः औषधीभिः पिष्टरूपाभिः संपृच्यन्ताम्। 'पृची संपर्के' संगच्छन्तां सम्यगेकीभवन्तु। तथा ओषधयः पिष्टाख्याः रसेन उपसर्जनीरूपेणोदकेन संपृच्यन्ताम्। आपो हि ओषधीनां रसः। तथा रेवती रेवत्यः आपः जगतीभिः पिष्टाख्याभिः संपृच्यन्ताम्। 'रेवत्यः आपो जगत्य ओषधयः' (१।२।२।२) इति श्रुतेः। मधुमतीः माधुर्योपेता आपः मधुमतीभिः माधुर्योपेताभिः पिष्टरूपौषधीभिः संपृच्यन्ताम्। अपामोषधीनां परस्परं च परस्परं प्रीतिहेतुत्वात्संपर्को भवत्वित्यर्थः ॥ २१ ॥

## द्वाविंशी ।

जनयत्यै त्वा संयौमीदमग्नेरिदमग्नीषोमयोरिषे त्वा घर्मोऽसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामग्निष्टे त्वचं मा हिꣳसीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥ २२ ॥

**उ०** संयौति। जनयत्यै त्वा। द्व्यर्थोयं मन्त्रः। श्रुतिं व्याचष्टे। जनेर्ण्यन्तस्य क्तिन् जनयतिः। यजमानस्य जनयत्यै श्रीप्रजापशुभिर्यजमानं जनयितुं संमिश्रयितुं त्वां संयौमि। अथवा पुरोडाश उच्यते। जनयत्यै उत्पादनाय त्वां संयौमि संमिश्रयामि। यथा त्वं संमिश्रितः पुरोडाशभावमासाद्याधिश्रितः सन् दैवाद्योनेरग्नेरधिजायस इति। नह्यमर्त्यं त्वां मर्त्यो जनयितुमर्हति। असंहरिष्यन्नालभते। इदमग्नेरिदमग्नीषोमयोः। अर्धशब्दः समविभागवचनो नपुंसकलिङ्गः। तदभिप्रायमिदमिति नपुंसकलिङ्गता। आज्यमधिश्रयति। इषेत्वा व्याख्यातं। पुरोडाशमधिश्रयति। घर्मोऽसि प्रवर्ग्यस्त्वमसि।

विश्वायुः विश्वं सर्वं आयुरस्येति विश्वायुः । 'विश्वायुरिति तदायुर्दधाति' इति श्रुतिः । पुरोडाशं प्रथयति । उरु प्रथस्व उरुप्रथाः उरु विस्तीर्णं प्रथसे स्वभावतस्त्वं त्वां ब्रवीमि । उरुप्रथस्व । किंच उरु ते तव यज्ञपतिर्यजमानः पुत्रान्नपश्वादिभिः प्रथतां विस्तारमाप्नोतु । अग्निरभिमृशति । अग्निष्टे । हे पुरोडाश, अग्निः ते तव त्वचं माहिंसीदिति । श्रपयति । देवस्त्वा । देवः सविता त्वां श्रपयतु । वर्षिष्ठे उत्कृष्टे नाके स्वर्गे अधि उपरि स्थितं । सविता वा नाके स्थितः । सविता नः संस्तरएव स ह्याधियज्ञिको यज्ञमधिकृत्य वर्तते । देवलोकः पुरोडाशशरीरस्य च यज्ञस्यैतज्जन्म यच्छ्रपणं । स यदि देवलोके जायते अतस्तत्समानयोगक्षेमो यजमानोऽपि तत्रैव जनिष्यत इति तत्र जन्माशास्यते ॥ २२ ॥

**म०** 'संयौति जनयत्यैत्वेति' (का० २ । ५ । १४) इति । अपां पिष्टानांच मिश्रीकरणं संयवनम् । हे जलपिष्टरूपपदार्थद्वय, त्वां संयौमि सम्यङ्मिश्रीकरोमि । 'यु मिश्रणामिश्रणयोः' । किमर्थं जनयत्यै यजमानस्य प्रजोत्पादनार्थम् । जलपिष्टयोर्यथा मिश्रणं तथा शुक्रशोणितमिश्रणेन यजमानस्य प्रजोत्पत्तिर्भवति तदर्थं त्वां संयौमि । यद्वा जनयत्यै पुरोडाशोत्पत्त्यै त्वां संयौमि । 'संविभज्यासंहरिष्यन्नालभते इदमग्नेरिदमग्नीषोमयोरिति' (का० २ । ५ । १५) इति । मिश्रीकृतस्य पिष्टस्यावदानाङ्कितं पिण्डद्वयं कृत्वा पुनरमेलयिष्यन् इदमग्नेः अग्निसंबन्धि भवत्विति प्रथमं पिण्डं स्पृशेत् । इदमग्नीषोमयोर्भवत्विति द्वितीयं स्पृशेत् । 'इषे त्वेत्याज्यमधिश्रयति' । ( का० २ । ५ ।१६) इति । हे आज्य, इषे इष्यमाणवृष्ट्यर्थं त्वामधिश्रयामीति शेषः । आज्यप्रविलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम् । 'घर्मोऽसीति पुरोडाशमिति' ( का०२।५।१७ ) । हे पुरोडाश, त्वं घर्मोऽसि । 'घृ क्षरणदीप्त्योः' । घर्मशब्देन दीप्यमानः प्रवर्ग्य उच्यते । श्रप्यमाणतया दीप्यमानत्वात्प्रवर्ग्योऽसि । तथा विश्वायुः विश्वं कृत्स्नमायुर्यस्मात्स विश्वायुः । यस्माद्यजमानः सर्वमायुराप्नोतीति भावः । 'उरुप्रथा इति प्रथयति यावत्कपालमिति' ( का० २ । ५ । २० ) । सर्वकपालेषु संश्लेषयितुं तं प्रसारयेत् । हे पुरोडाश, त्वं स्वभावतः उरुप्रथाः उरु विस्तीर्णं यथा तथा प्रथते प्रसरतीत्युरुप्रथाः । अत इदानीमपि उरु प्रथस्व प्रख्यातो भव । किंच ते यज्ञपतिः तव यजमानः उरु विस्तीर्णं पुत्रपश्वादिभिः प्रथतां प्रख्यातो भवतु । 'अग्निष्ट इत्यद्भिरभिमृशतीति' (का० २ । ५ । २१ ) । हे पुरोडाश, अग्निः श्रपणाय प्रवृत्तः ते तव त्वचं त्वक्सदृशमुपरितनभागं मा हिंसीन्मा विनाशयतु । अतिदाहेन मषीभावो विनाशः सोऽत्र मास्त्वित्यर्थः । अवघातपेषणोत्थः श्रपणाज्जायमानश्च हविष उपद्रवो जलस्पर्शेन शाम्यतीति भावः । 'देवस्त्वेति श्रपणमिति' ( का० २ । ५ । २३ ) । हे पुरोडाश, सविता देवः वर्षिष्ठे अत्यन्तवृद्धे नाके द्युलोकवर्तिनि नाकनाम्नि अग्नौ त्वा त्वाम् अधि अधिश्रित्य श्रपयतु पक्वं करोतु । मनुष्यस्य श्रपणे कर्तृत्वं मा भूदित्यभिप्रेत्य देवस्त्वेत्युच्यते । 'दिवि नाको नामाग्नी रक्षोहा' इति तित्तिरिवचनान्नाको नाम स्वर्गस्थोऽग्निः ॥ २२ ॥

## त्रयोविंशी ।

मा भे॒र्मा संवि॑क्था॒ अत॑मेरुर्य॒ज्ञोऽत॑मेरु॒र्यज॑मानस्य प्र॒जा भू॑यात् । त्रि॒ता॒य॑ त्वा द्वि॒ता॒य॑ त्वै॑क॒ता॒य॑ त्वा ॥ २३ ॥

**उ०** पुरोडाशमभिमृशति । मा भेर्मा संविक्थाः । मा त्वं भैषीः । मा च त्वं संविक्थाः । 'ओविजी भयचलनयोः' । तत्र भयं प्रतिषिद्धम् । चलनं त्वत्र निषिध्यते । न भेतव्यं न चलितव्यमित्यर्थः । पुरोडाशमभिवासयति । अतमेरुर्यज्ञः । 'तमु अभिकाङ्क्षायाम्' । यद्यप्ययं धातुरभिकाङ्क्षामात्रे पठ्यते तथापि श्वासाभिकाङ्क्षायां भविष्यति । तमनशीलस्तमेरुः । न तमेरुः अतमेरुः यज्ञः । अतमेरुर्यजमानस्य प्रजा भूयात् भवेत् । पात्र्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयति । त्रिताय त्वा द्विताय त्वा एकताय त्वा । निनयामीति द्रव्यपरो निर्देशः (?) । निनयामीति शेषः । एवं द्विताय । एवमेकताय । तत आप्त्याः संबभूवुः त्रितो द्वित एकत इत्येवमादिरितिहासे यमवगन्तव्यः ॥ २३ ॥

**म०** 'मा भेरित्यालभत इति' ( का० २ । ५ । २४ ) । हे पुरोडाश, त्वं मा भेः भयं मा कार्षीः । मा संविक्थाः चलनं मा कार्षीः । 'ञिभी भये' 'ओविजी भयचलनयोः' इत्यनयोः प्रयोगौ । 'अतमेरुरिति शृतावभिवासयति भस्मना वेदेनोपवेषेण वेति' ( का० २ । ५ । २५ ) । यज्ञः यागहेतुः पुरोडाशः अतमेरुः भूयात् । 'तमु ग्लानौ' ताम्यतीति तमेरुः । औणादिक एरुप्रत्ययः । न तमेरुरतमेरुः । भस्माच्छादनेन ग्लानिरहितो भवतु । यजमानस्य प्रजा पुत्रपौत्रप्रपौत्रादिः अतमेरुः ग्लानिरहिता भूयात् । यजमानस्य प्रजायाः कदाचिद्दुःखं मास्त्वित्यर्थः । 'पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयत्यभितप्य प्रत्यगसंस्यन्दमानं त्रिताय त्वेति प्रतिमन्त्रमिति' ( का० २ । ५ । २६ ) । हे पात्र्यङ्गुलिप्रक्षालनोदक, त्रिताय त्रितनाम्ने देवाय त्वां निनयामीति शेषः । तथा द्विताय त्वा निनयामि । तथा एकताय त्वा निनयामि । पूर्वं कुतश्चिद्धेतोः भीतोऽग्निरपः प्राविशत्ततो देवास्तं ज्ञात्वा जगृहुस्तदाग्निना वीर्यमप्सु मुक्तं तत आप्त्या उत्पन्नास्त्रितद्वितैकतसंज्ञास्ते देवैः सह चरन्तो यज्ञे पात्रीप्रक्षालनजललक्षणं भागं लेभिरे ( १ । २ । ३ । १ ) इति श्रुतिकथानुसंधातव्या ॥२३॥

## चतुर्विंशी ।

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । आद॑देऽध्वर॒कृतं॑ दे॒वेभ्य॒ इन्द्र॑स्य

बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः ॥ २४ ॥

उ० स्फ्यमादत्ते । देवस्यत्वेति व्याख्यातं । आददे गृह्णामि । अध्वरकृतं अध्वरं करोतीति अध्वरकृत् तमध्वरकृतं । देवेभ्यो र्थाय । आलभ्य जपति । इन्द्रस्य बाहुरसि । इन्द्रस्य बाहुर्दक्षिणस्त्वमसि । एष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिणः । सहस्रभृष्टिः बहुभारः । शततेजाः बहूनि तेजांसि यस्य स शततेजाः । वायुरसि तिग्मतेजाः । तिग्मं तेजः । तेजतेरुत्साहकर्मणः । उत्साह एव तेजो यस्य स तथोक्तः । द्विषतः शत्रोर्वधः वधकः ॥ २४ ॥

म० 'देवस्य त्वेति स्फ्यमादायेति' ( का० २ । ६ । १२ ) देवस्य त्वेति व्याख्यातम् । देवेभ्यो देवोपकारार्थं अध्वरकृतं अध्वरं करोतीति वेदिखननादिद्वारेणेत्यध्वरकृतं स्फ्यमहमाददे गृह्णामि । 'सतृणᳬं सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरितीति' ( का० २ । ६ । १३ ) । हे स्फ्य, त्वमिन्द्रस्य दक्षिणो बाहुरसि । तेन बाहुना धृतत्वात्तत्समानवीर्योपेतत्वाद्वा स्फ्यस्य बाहुरूपत्वोपचारः । किंभूतः स्फ्यः । सहस्रभृष्टिः भृष्टिर्भर्जनं पाकः । मारणमिति यावत् । सहस्रसंख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः । तथा शततेजाः शतं तेजांसि यस्य सः बहुधा दीप्यमानः । किंच वायुरसि न केवलमिन्द्रबाहुसदृशः किंतु वायुसदृशोऽप्यसि । अतएव तिग्मतेजाः तीक्ष्णतेजाः । यथा वायुर्वह्निं प्रदीप्य तीव्रां ज्वालामुत्पादयंस्तीव्रतेजा भवति एवं स्फ्योऽपि स्तम्बच्छेदरूपं कर्म कुर्वंस्तीव्रतेजा उच्यते । तथा द्विषतो वधः । हन्तीति वधः कर्मद्वेषिणामसुरादीनां हन्तेत्यर्थः ॥ २४ ॥

## पञ्चविंशी ।

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिᳬंसिषं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳬं शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥

उ० प्रहरति । पृथिवि देवयजनि । वेदिः संबोध्यते । हे पृथिवि देवयजनि । देवा यस्यामिज्यन्ते सा तथोक्ता । ओषध्याः ते तव संबन्धिन्याः मूलं माहिᳬंसिषम् । 'तृहहिसि हिंसायाम्' । माङि लुङ् । मा विनाशिषम् । वज्रेण हरन् पुरीषमादत्ते । व्रजं गच्छ । व्रजन्त्यस्माद्गाव इति व्रजो घोषः गोवाटो वा उच्यते । गोव्रजो वा परिवृतं वा गवां स्थानं गच्छ । वेदिं प्रेक्षते । वर्षतु ते द्यौः वर्षतु तव द्युलोकः । शान्त्यर्थं वचनम् । उत्करे करोति । बधान । 'बध बन्धने' । बन्धनं कुरु । हे देव सवितः परमस्यां पृथिव्यां यत्र अन्धतामिस्रो नरकः तत्र । 'अन्धे तमसि बधानेति यदाह परमस्याम्'इति श्रुतिः । शतेन पाशैर्बहुभिः पाशैर्योऽस्मान्द्वेष्टि शत्रुः यं च वयं द्विष्मः शत्रुं तं अतः अस्मात् अन्धतमसः मामौक् । 'मुच्लृ मोक्षणे' । मा मुञ्च ॥२५॥

म० 'पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरतीति' (का० २ । ६ । १५–१६ ) । हे पृथिवि, हे देवयजनि, देवा इज्यते यस्यां सा देवयजनी तस्याः संबोधने हे देवयजनि, ते तव ओषध्यास्तृणरूपाया मूलमहं मा हिंᳬसिषं मा विनाशयामि । 'व्रजं गच्छेति पुरीषमादत्ते' ( का० २ । ६ । १७ ) इति । स्फ्यप्रहारोत्पन्ना मृत् पुरीषमुच्यते । हे पुरीष, त्वंव्रजं गच्छ । व्रजन्ति गच्छन्ति स्थातुं गावो यत्र स देशो व्रजस्तं । किंभूतं । गोष्ठानं गवां स्थानमिदानीमवस्थितिर्यत्र तं गोयुक्तं तदीयं स्थानं गच्छेत्यर्थः ॥ 'वर्षतु त इति वेदिं प्रेक्षत इति' ( का० २ । ६ । १८ ) । हे वेदे, ते तुभ्यं त्वदर्थं द्यौर्द्युलोकाभिमानी देवो वर्षतु जलसेकं करोतु । 'वृष सेचने' वर्षणेन खननजनितदुःखशान्तिरस्त्वित्यर्थः ॥ 'बधानेत्युत्करे करोतीति' ( का० २ । ६ । १९ ) । स्फ्योत्खातां मृदमुत्करे त्यजेत् । हे देव सवितः, योऽस्मान्द्वेष्टि द्वेषं करोति वयं च यं शत्रुं द्विष्मस्तमुभयविधं शत्रुं परमस्यां पृथिव्यां बधान । परमा अन्तिमा पृथिवी । छान्दसः स्याडागमः । उत्करे क्षिप्तायां धूल्यां निगूढस्य शत्रोस्तत्र बन्धनं कुरु यत्र भूमेरन्तिमप्रदेशेऽन्धतामिस्रो नरकोऽस्ति । तथाच श्रुतिः 'अन्धे तमसि बधानेति यदाह परमस्यां पृथिव्याम्' ( १ । ४ । १६ )इति । कैर्बन्धनं कर्तव्यं तदाह । शतेन पाशैः शतसंख्याकाभिर्बन्धनरज्जुभिः । किंच अस्मादन्धतामिस्रान्नरकात्तं मा मौक् कदाचिदपि मा मुञ्च ॥२५॥

## षड्विंशी ।

अपाररुं पृथिव्यै देवयजनाद्बध्यासं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳬं शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् । अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन् व्रजं० मौक् ॥ २६ ॥

उ० द्वितीयं प्रहरति । अपाररुम् । अररुः असुरः तमपनीय । पृथिव्यै पृथिव्याः देवयजनाच्च अपाररुं बध्यासम् । व्रजं गच्छेति समानम् । अभिन्यस्यत्यग्नीदुल्करमररो दिवमिति । हे अररो, त्वं दिवं द्युलोकं । मा पप्तः मा गमः । तृतीयं प्रहरति द्रप्सस्ते द्याम् । योऽस्याः पृथिव्या उपजीवनीयो रसः स द्रप्सः ते तव द्यां द्युलोकम् । मा स्कन् मास्कान्सीत् मास्कन्तु । व्रजं गच्छेति समानम् ॥ २६ ॥

म० 'अपाररुमिति द्वितीयं प्रहरतीति' (का० २।६।२१) । पृथिव्यै देवयजनात्पृथिव्याः संबन्धिनो देवयजनाख्याद्वेदिस्थानात् अररुम् अररुनामानमसुरमप बध्यासम् अपनीय यथा हतो भवति तथा करवाणि । अनेन मन्त्रेण द्वितीयवारं पूर्वव-

त्प्रहरेत् । व्रजं वर्षतु बधानेति मन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ॥ 'अभिन्यस्यत्यग्नीदुत्करमररो दिवमितीति' ( का० २ । ६ । २२ ) । हे अररो असुर, दिवं द्युलोकं यागफलरूपं त्वं मा पप्तः मा गमः । स्वर्गे त्वया न गन्तव्यम् । 'पत्लृ गतौ' 'पतः पुम्' (पा०७।१।१९) इति लुङि पुमागमे रूपम् ॥ 'द्रप्सस्त इति तृतीयमिति' ( का० २ । ६ । २३ ) । हे वेदिदेवते, ते तव पृथिवीरूपाया यो द्रप्स उपजीव्यो रसः द्यां द्युलोकं मा स्कन् मा स्कन्दतु मा गच्छतु । 'स्कन्दिर्गतिशोषणयोः' । व्रजं गच्छेत्यादिमन्त्रत्रयप्रयोगो व्याख्या च पूर्ववत् ॥ २६ ॥

## सप्तविंशी ।

गायत्रेण त्वा छन्दसा परि॑गृह्णामि त्रैष्टुभेन त्वा छन्द॑सा परि॑गृह्णामि जाग॑तेन त्वा छन्द॑सा परि॑गृह्णामि । सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा चास्यूर्जस्वती चासि पय॑स्वती च ॥ २७ ॥

**उ०** पूर्वं परिगृह्णाति । गायत्रेण त्वा । त्वाशब्देन विष्णुरुच्यते । 'ते प्राञ्चं विष्णुं निपाद्य' इति श्रुतिः । गायत्रेण त्वा छन्दसा परिगृह्णामि । एवमुत्तरयोः त्रैष्टुभेन जागतेनेति विशेषः । उत्तरं परिग्रहं परिगृह्णाति । पूर्वेण परिग्रहेण विष्णुं यज्ञं परिगृह्य तेन इमां पृथिवीं लब्ध्वा चोत्तरेण परिग्रहेण वक्ष्यमाणैर्गुणैरयोजयन्देवाः । सुक्ष्मा चासि शिवा चासीति दक्षिणतः । सुक्ष्मा इति पृथिवीनाम शोभना पृथिवी त्वमसि । शिवा शान्ता च त्वमसि । पश्चिमतः । स्योना चासि सुषदा चासि । स्योनमिति सुखनाम । सुखनामरूपा च त्वमसि । शोभनं यस्यां सीदन्ति सा सुषदा । उत्तरतः ऊर्जस्वती चासि पयस्वती च । अन्नवती चासि पयोविकारै रसैस्तद्वती च ॥ २७ ॥

**म०** 'पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रमिति' ( का० २ । ६ । २५ ) । यस्मात्प्रदेशादररुर्निष्काशितस्तत्र वेदेरियत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्वः परिग्रहः । विष्णुर्देवता मन्त्रत्रयस्य । 'ते प्राञ्चं विष्णुं निपाद्य छन्दोभिरभितः पर्यगृह्णन्' ( १ । २ । ५-६ ) इति श्रुतेः । हे विष्णो, त्वा त्वां गायत्रेण छन्दसा गायत्र्यादिच्छन्दस्त्रयरूपतया भावितेन स्फ्येन दिक्त्रये परिगृह्णामि । एवं त्रैष्टुभेन जागतेनेत्युत्तरमन्त्रयोः । ततः छन्दोदेवताः दिक्त्रयेऽसुरेभ्यस्त्वां पालयिष्यन्ति । पूर्वस्यामाहवनीय एव पालकोऽस्तीति भावः । प्रजापतिपुत्रा देवा असुराश्च पूर्वं स्पर्धां चक्रुस्तदा देवान्पराजयं प्राप्तान्मत्वा भूमिमसुरा विभेजुस्तदा देवा वामनरूपं विष्णुमग्रे कृत्वाऽसुराना-गत्यास्मभ्यमपि भूम्यंशो दातव्य इति तानयाचिषुः । ततोऽसुरा असूयन्तोऽयं विष्णुर्यावति भूभागे शेते तावान्भवदीयोऽस्त्वि-त्यूचुस्ततः देवा वह्वेतदस्माकमित्युक्त्वा ते प्राञ्चं विष्णुं निपात्य गायत्रेणेत्यादिमन्त्रैर्यज्ञभूमिं जगृहुः । यज्ञो विष्णुः स यत्र तिष्ठति सैव यज्ञभूमिरिति तैर्विदितत्वाद्वेदिरिति तद्भूमेर्नाम । ( १ । २ । ५ । १—७ ) इति श्रुतिकथामनुसंधाय वेदिग्रहणं विधेयम् ॥ 'उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मा स्योनोर्जस्वतीति' ( का० २ । ६ ।३१ ) । वेदिखननात्पूर्वं क्रियमाणः पूर्वः परिग्रहः पश्चात्क्रियमाण उत्तरपरिग्रहः । तत्रापि पूर्ववद्दिक्त्रये स्फ्येन रेखात्रयं कार्यम् । हे वेदे, त्वं सुक्ष्मासि शिवा शान्ता चासि । क्ष्मा शोभना भूमिः सुक्ष्मा । खननेनाश्मादिदोषनिवर्तनं भूमेः शोभनत्वम् । उग्रस्यासुरस्य निष्कासनेन शान्तत्वम् । गुणद्वयस्यान्योन्यसमुच्चयार्थौ चकारौ । एकोऽयं मन्त्रः । स्योना सुखरूपासि । स्योनमिति सुखनाम । सुषदा सुष्ठु सीदन्ति देवा यस्यां सा सुषदा । सम्यगुपवेशनयोग्या चासि । चकारौ पूर्ववत् । द्वितीयोऽयं मन्त्रः । ऊर्जस्वती पयस्वती चासि । ऊर्जःशब्दोऽन्नवाची । पयःशब्दस्तद्विकारदध्यादिवाची तदुभयवती । चौ पूर्ववत् । तृतीयो मन्त्रः ॥ २७ ॥

## अष्टाविंशी ।

पुरा क्रूरस्य॑ विसृपो॑ विरप्शिन्नुदादाय॑ पृथिवीं जीवदा॑नुम् । यामैर॑यंश्चन्द्रम॑सि स्वधाभि॑स्तामु धीरा॑सो अनुदिश्य॑ यजन्ते । प्रोक्ष॑णीरासा॑दय द्विषतो वधोऽसि ॥ २८ ॥

**उ०** वेदिमनुमार्ष्टि । पुरा क्रूरस्येति । निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यं पश्चान्मन्त्रार्थः तथा क्षिप्रमवगमो भवतीति देवा असुरैः सह संग्रामं करिष्यन्त इदमूचुः—यदस्याः पृथिव्या अनुपहतं देवयजनं तच्चन्द्रमसि स्थापयामः । तत्र यदि कथंचिदस्मानसुरा जयेयुस्ततस्तेनैव देवयजनेन पुनः प्रतिक्रियां करिष्यामः । तदेतच्चन्द्रमसि कृष्णमुपलभ्यत एतदियमृक्त्रिष्टुप् उक्तवती । पुराक्रूरस्य । क्रूरशब्दः संग्रामवचनः । पञ्चम्यर्थे षष्ठी । प्राक्संग्रामात् । विसृपः 'सृपितृदोः कसुन्' इति कसुन्प्रत्ययान्तं तुमर्थेऽव्ययं पञ्चम्यर्थे । विविधं सर्पन्ति योद्धारोऽस्मिन्निति विसृपाः । विरप्शिन् इति आमन्त्रितं महन्नाम । स च विष्णुर्यज्ञवेदित्वमापन्नः स हि त्रिभिर्वेदैर्निर्वर्त्यमानो विविधं रप्शति शब्दं करोति । हे विरप्शिन् विष्णो, शृणु । उदादाय उत्क्षिप्य प्रकृतत्वाद्देवाः । पृथिवीं जीवदानुम् जीवितस्य दात्रीम् । सारभूतामित्यर्थः । यामैरयंश्चन्द्रमसि स्वधाभिः यां ऐरयन् । 'ईर गतौ' । अनेकार्थत्वाद्धातूनामिह स्थापनार्थः । चन्द्रमसि स्थापितवन्तः । स्वधाभिः । स्वधाशब्दोऽन्नवचनः । इह त्वन्नहेतुभूतास्तिस्रो विद्या गृह्यन्ते । 'यां चन्द्रमसि ब्राह्मणा दधुः' इति श्रुतेः । त्रयीलक्षणे ब्राह्मणाः संहितां यां पृथिवीं चन्द्रमसि न्यदधुः । तामु धीरासो अनुदिश्य यजन्ते । तां पृथिवीं धीरासो मेधाविनः अ-

नुदिश्य दर्शनेन सम्यक्संपाद्य अद्यापि यजन्ते इति दर्शनप्रशंसा । प्रैषः । प्रोक्षणीरासादय । प्रोक्ष्यते आभिरिति प्रोक्षण्यः ता आसादय स्थापय। स्फ्यं प्रहरति। द्विषतो वधोसि। द्विष्टुर्वधो विनाशस्त्वमसि ॥ २८ ॥

**म०** 'पुरा क्रूरस्येत्यनुमार्ष्टीति' (का० २।६।३२)। अत्रेयमाख्यायिका मन्त्रेऽभिप्रेता—कदाचिद्देवानामसुरैः सह संग्राम उपस्थितस्तदा देवैर्मिथो मन्त्रितं यदस्या भूमेरुत्कृष्टं देवयजनस्थलं तच्चन्द्रे संस्थाप्य युद्धं कुर्मस्तत्र यद्यप्यस्माकं पराजयः स्यात्तदा देवयजने यागं विधाय पुनर्दैत्यपराजयं करिष्याम इति संमन्त्र्य भूमेः सारभागं देवयजनं चन्द्रे स्थापयामासुस्तत् कृष्णवर्णमिदानीमपि दृश्यत इत्याख्यानमयं मन्त्रो ब्रूते (१।२।५।१८)। पुरा क्रूरस्येति त्रिष्टुप् चन्द्रदेवत्या। विरप्शीति महन्नाम। विविधं रपति वेदत्रयरूपेण शब्दं करोतीति विरप्शी। यज्ञो वेदित्वं प्राप्तो विष्णुः संबोध्यते। हे विरप्शिन् विष्णो परमेश्वर, त्वं शृणु। अनुगृहाणेति शेषः। क्रूरशब्दोऽत्र संग्रामवाची। 'संग्रामो वै क्रूरम्' (१।२।५।१९) इति श्रुतेः। विविधं सर्पन्ति योधा यस्मिन्निति विसृप् तस्येति क्रूरविशेषणम्। पञ्चम्यर्थौ षष्ठ्यौ। विसृपो नानायोधयुतात्क्रूराद्युद्धात्पुरार्थाद्देवाः जीवदानुं जीवं ददातीति जीवदानुस्तां जीवस्य धात्रीं सारभूतां यां पृथिवीमुदादाय ऊर्ध्वं गृहीत्वा स्वधाभिः वेदैः सह चन्द्रमसि इन्दौ ऐरयन्प्राक्षिपन्स्थापयामासुः। धीरासः धीरा मेधाविनः। तामु। उ एवार्थे। तामेव चन्द्रस्थां पृथिवीमनुदिश्य दर्शनेन संपाद्य सैव भूमिरस्यां वेद्यां विद्यत इति भावयित्वा यजन्ते यागं कुर्वन्ति। स्वधाशब्दो यद्यप्यन्नवाची तथाप्यत्रान्नहेतुभूता वेदत्रयी कथ्यते। 'यां चन्द्रमसि ब्रह्मणा दधुः' (१।२।५।१९) इति श्रुतेः। ब्रह्मणा वेदेन सहेत्यर्थः। अनेन मन्त्रेण खातायां वेद्यां लोष्टकृतवैषम्यनिवृत्तये समीकरणरूपं मार्जनं कुर्यात्। प्रोक्षणीरासादयेति अग्नीध्रंप्रति प्रैषः। प्रोक्ष्यन्त आभिरिति प्रोक्षण्य आपस्ता आसादय वेद्यां स्थापय। 'द्विषतो वध इति स्फ्यमुदञ्चं प्रहरतीति' (का० २।६।४२)। हे स्फ्य, त्वं द्विषतः शत्रोर्वधोऽसि हिंसकोऽसि ॥ २८ ॥

## एकोनत्रिंशी ।

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳरक्षो निष्टप्ता अरातयः। अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै संमार्ज्मि। प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयो निष्टप्तꣳरक्षो निष्टप्ता अरातयः। अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै संमार्ज्मि ॥ २९ ॥

**उ०** अथ स्रुवमादत्ते। तं प्रतपति प्रत्युष्टमिति व्याख्यातम्। स्रुवं संमार्ष्टि। अनिशितोसि 'शो तनूकरणे'। निशितस्तीक्ष्णीकृतः न निशितः अनिशितः अतीक्ष्णीकृतस्त्वमसि। तथापि सपत्नक्षित् सपत्नान्क्षिणोतीति सपत्नक्षित्। 'क्षिण क्षिणि हिंसायाम्'। क्षिण हिंसार्थः। यतश्च त्वं यजमानस्य सपत्नक्षित् अतो वाजिनं त्वा। वाजशब्दोऽन्नवचनः। इह तु यज्ञवचनः। यतोऽसि देवानामन्नम्। 'यज्ञो देवानामन्नम्' इति श्रुतिः। तं वाजमन्नं यज्ञाख्यं योऽर्हति स वाजी। अर्हार्थे इति णिन्। वाजिनं यज्ञियं त्वाम्। वाजेध्यायै 'ञिइन्धी दीप्तौ'। यज्ञोज्वलनार्थम्। संमार्ज्मि संशोधयामि 'मृजूष् शुद्धौ'। स्रुवं च प्रतपति प्रत्युष्टमिति। व्याख्याते यजुषी। संमार्ष्टि स्रुचम्। अनिशितासि व्याख्यातम्। अनिशितेति स्त्रीत्वविवक्षायां टाप् प्रत्ययः। वाजिनीमिति ङीप् प्रत्ययः। एतावानेव विशेषः॥२९॥

**म०** 'स्रुवं प्रतप्य पूर्ववदिति' (का० २।६।४५)। यथा शूर्पाग्निहोत्रहवण्योः प्रत्युष्टमिति प्रतपनं कृतं तथा स्रुवस्यापि कार्यमित्यर्थः। मन्त्रो व्याख्यातः॥ 'वेदाग्रैरन्तरतः प्राक्संमार्ष्ट्यनिशित इतीति' (का० २।६।४६)। हे स्रुव, त्वमनिशितोऽसि। 'शो तनूकरणे'। नितरां शितस्तीक्ष्णीकृतो निशितस्तथा न भवतीत्यनिशितः। अस्मद्विषये तीक्ष्ण उपद्रवकारी न भवसीत्यर्थः। यतः सपत्नक्षित्। 'क्षिणु हिंसायाम्'। सपत्नानस्मच्छत्रून्क्षिणोति हिनस्तीति सपत्नक्षित्। अतएव त्वां संमार्ज्मि सम्यक् शोधयामि। 'मृजू शुद्धौ'। किंभूतं त्वाम्। वाजिनं वाजोऽन्नमस्यास्तीति वाजिनं यज्ञद्वारा अन्नहेतुत्वादन्नवन्तम्। यद्वा वाजो यज्ञस्तद्वन्तम्। 'यज्ञो हि देवानामन्नम्' (५।१।१-२) इति श्रुतेः। वाजं यज्ञाख्यमन्नमर्हतीति वाजिनम्। अर्हार्थे इनुप्रत्ययः। किमर्थं संमार्ज्मि। वाजेध्यायै 'ञिइन्धी दीप्तौ' इन्धनं इध्या दीप्तिः। वाजस्येध्या वाजेध्या तस्यै वाजेध्यायै यज्ञस्य दीप्त्यै प्रकाशनार्थम्। शोधितेन स्रुवेणाज्ये गृहीते हुते च सति अग्निर्दीप्यते। तद्दीप्त्याहुतिफलभूतमन्नं प्रकाशितं भवतीत्यर्थः॥ 'प्रतप्य प्रतप्य प्रयच्छत्यनिशितेति स्रुचा' (का० २।६।४७–४८) इति। अनिशितेति मन्त्रेण स्रुचस्तिस्रो जुहूपभृद्ध्रुवाः संमृज्य प्रत्येकं प्रत्युष्टमिति मन्त्रेण प्रतप्य प्रतप्य वेद्यां स्थापनार्थमध्वर्यवे प्रयच्छतीति सूत्रार्थः। प्रत्युष्टमिति व्याख्यातम्। अनिशितेत्यपि व्याख्यातम्। स्रुवस्य पुंस्त्वादादौ स्रुवसंमार्जनम्। स्रुचां स्त्रीत्वात्पश्चात्। 'योषा वै स्रुग्वृषा स्रुवः' (१।३।१।९) इत्यादिश्रुतेः। जुह्वादीनां स्रुचां स्त्रीलिङ्गत्वात्तद्विशेषणयोरनिशितावाजिनीमित्यनयोः स्त्रीत्वं विशेषः॥ २९ ॥

## त्रिंशी ।

अदित्यै रास्नासि विष्णोर्वेष्योऽस्यूर्जे त्वाऽदब्धेन त्वा चक्षुषावपश्यामि। अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे ॥ ३० ॥

**उ०** योक्त्रेण पत्नीꣳ संनह्यति। अदित्यै रास्नासि। अदित्याः संबन्धिनी या रास्ना सा त्वमसि। रास्ना रसनाः।

ऊर्ध्वमुद्गूहति विष्णोर्वेष्योसि । विष्णोर्यज्ञस्य वेष्यः । 'विष्लृ व्याप्तौ' 'वेष्ट वेष्टने' । अनयोर्धात्वोरन्यतरस्य रूपम् । यज्ञस्य व्यापनं वेष्टनं वा त्वमसि । वेष्य आवर्त उच्यते इत्यपरम् । आज्यमुद्वासयति । ऊर्जेत्वेति व्याख्यातम् । पत्न्याज्यमवेक्षते । अदब्धेनेति आज्यमुच्यते । अदब्धेन । दभ्नातिर्हिंसार्थः । अनुपहिंसितेन त्वां चक्षुषा अर्वाचीनं पश्यामि । किंच अग्नेर्जिह्वासि । यदा वा एतदग्नौ जुह्वति । अथाग्नेः जिह्वा इवोत्तिष्ठन्ति ज्वालोत्पत्तिनिमित्तमित्यर्थः । सुहूर्देवेभ्यः । साधु हूयतेनेनेति सुहूः । अथवा शोभनमाह्वानं यस्य देवेभ्योऽर्थाय तदाज्यं सुहूः । उपकृत्य प्रत्युपकारं प्रार्थयते । धाम्ने धाम्ने मे भव यजुषे यजुषे । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च । धाम्ने धाम्ने यजुषे यजुषे इति द्विर्वचनं वीप्सार्थम् । मम यज्ञस्य यावन्ति स्थानानि यावन्ति यजूंषि तावन्ति व्याप्नुहीत्यर्थः ॥ ३० ॥

**म०** 'पत्नीꣳ संनह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधोवासोऽदित्यै रास्नासीति' ( का० २।७।१ ) इति । हे योक्त्र, अदित्यै अदित्या भूम्यास्त्वं रास्नासि रशना भवसि ॥ 'दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्य इति न ग्रन्थिं करोतीति' ( का० २।७।२–३ ) हे दक्षिणपाश, त्वं विष्णोः यज्ञस्य वेष्योऽसि व्यापकोऽसि । 'विष्लृ व्याप्तौ' ॥ 'ऊर्जेत्वेत्याज्यमुद्वासयेति' (का० २।७।४) हे आज्य, त्वामुद्वासयामीति शेषः । किमर्थम् । ऊर्जे उत्तमरसलाभाय । विलापितं घृतं सुस्वादु भवति । 'पत्नीमवेक्षयत्यदब्धेनेतीति' ( का० २।७।४ ) । दभ्नोतिर्हिंसार्थः । हे आज्य, अदब्धेन अनुपहिंसितेन चक्षुषा त्वामवपश्यामि । अवाचीनं यथा तथाधोमुखी सती पश्यामि । किंच हे आज्य, त्वमग्नेर्जिह्वासि । यदाज्यमग्नौ हूयते तदा जिह्वेव ज्वालोत्पद्यतेऽतस्त्वमग्नेर्जिह्वा । किंभूतम् । देवेभ्योऽर्थाय सुहूः सुष्ठु हूयन्ते इति सुहूः । पुंस्त्वं छान्दसम् । यद्वा जिह्वाविशेषणम् । सुष्ठु हूयन्ते देवा आहूयन्तेऽनया सा सुहूर्जिह्वा । ज्वालां दृष्ट्वा आयान्तीत्यर्थः । अतो मे मम धाम्ने धाम्ने भव । तथा यजुषे यजुषे च भव । धाम स्थानम् । फलेन युज्यत इति यजुःशब्दो यागवाची । धाम्ने धाम्ने तत्तद्यागफलोपभोगस्थानसिद्ध्यर्थं भव । यजुषे यजुषे तत्तद्यागसिद्धये योग्यं भवेत्यर्थः ॥ ३० ॥

## एकत्रिंशी ।

सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ ३१ ॥

इति माध्यंदिनीयवाजसनेयिसंहितायां प्रथमोऽध्यायः ॥ १ ॥

**उ०** आज्यमुत्पुनाति । सवितुस्त्वा सवितुः प्रसवे वर्तमानस्त्वामुत्पुनामि । व्याख्यातमन्यत् । प्रोक्षणीरुत्पुनाति । सवितुर्व इति व्याख्यातम् । आज्यमवेक्षते । तेजोसि शुक्रमसि अमृतमसि । यो ह्येतद्भक्षयति ददाति जुहोति वा तस्य तेजःप्रभृतीनि भवन्तीति वाक्यार्थः । यद्वा यत एवैतद्गुणयुक्तमाज्यम् । आज्यं गृह्णाति । धामनामासि । धाम स्थानम्, अन्नम् आयतनम् । धीयतेऽस्मिन्निति धाम इति धाम असि । नामयति सर्वाणि भूतानि आत्मानं प्रति अतो नाम । प्रियं देवानाम् इष्टमभिप्रेतं देवानाम् । अनाधृष्टम् अनाधर्षितम् अप्रतिहतं रक्षोभिः । देवयजनमसि । देवा अनेन इज्यन्ते इति देवयजनम् ॥ ३१ ॥

इति मन्त्रभाष्ये उवटकृतौ प्रथमोऽध्यायः ॥ १ ॥

**म०** 'सवितुस्त्वेत्याज्यमुत्पुनातीति' (का० २।७।७) । सवितुर्देवस्य प्रसवे आज्ञायां वर्तमानः संस्त्वामुत्पुनामि शोधयामि । व्याख्यातमन्यत् । 'प्रोक्षणीश्च पूर्ववदिति' (का० २।७।८) । सवितुर्वः । वो युष्मानुत्पुनामीति व्याख्यातम् । 'आज्यमवेक्षते तेजोऽसीति' ( का० २।७।७ ) । हे आज्य, त्वं तेजोऽसि । शरीरकान्तिहेतुत्वात्तेजस्त्वम् । शुक्रमसि दीप्तिमदसि । स्निग्धरूपत्वाद्दीप्तिमत्त्वम् । अमृतमसि विनाशरहितमसि । बहुदिवसावस्थानेऽप्योदनादिवत्पर्युषितत्वादिदोषाभावादविनाशित्वम् ॥ 'स्रुवेणाज्यग्रहणं चतुर्जुह्वां धाम नामेति सकृन्मन्त्रं' ( का० २।७।११–१२ ) इति । हे आज्य, त्वं धाम स्थानमसि । धीयते स्थाप्यते चित्तवृत्तिर्देवैरत्रेति धाम । तथा नाम नामयति आत्मानं प्रति सर्वाणि भूतानीति नाम । आज्यं दृष्ट्वा सर्वेऽप्यत्तुं नमन्ति । तथा देवानां प्रियमिष्टमनभिभूतम् । गतसारत्वदोषेणातिरस्कृतं । चरुपुरोडाशादीनि चिरस्थित्या गतसाराणि स्युरितीदं न तथा । देवयजनं देवा इज्यन्तेऽनेनेति यागसाधनम् ईदृशं त्वमस्यतस्त्वां गृह्णामीति वाक्यशेषः ॥ ३१ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
शाखाद्याज्यग्रहान्तोऽयमध्यायः प्रथमोऽगमत् ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः ।

## तत्र प्रथमा ।

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि ॥ १ ॥

**उ०** इध्मं प्रोक्षति । कृष्णोस्याखरेष्टः । अस्ति कृष्णशब्दो वर्णवचनोऽन्तोदात्तः । अस्ति कृष्णशब्दो मृगवचन आद्युदात्तः । तदिहाद्युदात्तत्वात्कृष्णमृगो गृह्यते । तथाहि श्रुतिः 'यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार' इति । इध्मपूलक

उच्यते । कृष्णमृगो यज्ञस्त्वमसि । यज्ञसाधनत्वाद्यज्ञ इत्युच्यते । आखरेष्ठः । आङध्यर्थे । आहवनीयाख्ये खरे खं स्वर्गं राति ददाति तत्र अधि उपरि तिष्ठतीत्याखरेष्ठः । एतदुक्तं भवति । आहवनीयाख्ये खरे स्थितस्त्वं कृष्णमृगो यज्ञो भवसि । अतोऽग्नये त्वा जुष्टमभिप्रेतमभिरुचितं प्रोक्षामि । वेदिं प्रोक्षति । 'वेदिरसि तद्यदेतेनेमां सर्वं समविन्दत तस्माद्वेदिर्नाम' इति । तां व्युत्पत्तिमङ्गीकृत्याह वेदिस्त्वमसि । अतो बर्हिषे त्वामभिरुचितं प्रोक्षामि । बर्हिः प्रोक्षति । बर्हिरसि बर्हिस्त्वमसि । अतः स्रुग्भ्यस्त्वामभिरुचितं प्रोक्षामि ॥ १ ॥

**म०** 'इध्मं प्रोक्षति विस्रᳪस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति प्रतिमन्त्रम्' ( का० २ । ७ । १९ ) इति ॥ इध्मं विस्रस्य प्रोक्षेत् । वेदिं च प्रोक्षेत् । बर्हिरादाय वेद्यां पूर्वग्रन्थि कृत्वा प्रोक्षेत्क्रमान्मन्त्रत्रयेणेति सूत्रार्थः ॥ कृष्णोऽसि । हे इध्म, त्वं कृष्णोऽसि कृष्णमृगरूपो यज्ञोऽसि । इध्मपूलकस्य यज्ञसाधनत्वाद्यज्ञत्वोपचारः । किंभूतः। आखरेष्ठः। आ समन्तात् खरे कठिने वृक्षे तिष्ठतीति आखरेष्ठः। यद्वा खं स्वर्गं राति ददातीति खरः आहवनीयस्तत्रासमन्तात्तिष्ठतीत्याखरेष्ठः। अन्तोदात्तः कृष्णशब्दो वर्णवाची, अयं तु कृष्णशब्द आद्युदात्तत्वान्मृगवाची ॥ यज्ञः कदाचिद्देवेभ्योऽपक्रान्तः स्वगोपनाय कृष्णमृगो भूत्वा वने यज्ञियतरुमध्ये प्रविश्य कुत्रचित्कठिने वृक्षे तस्थौ। तदेतदभिप्रेत्य कृष्ण आखरेष्ठ इति द्वयमुच्यते । 'यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार' ( १ । १ । ४ । १ ) इत्यादि श्रुतेः । 'स्थे च भाषायाम्' (पा० ६ । ३ । २० ) इति स्थे परपदे भाषायां सप्तम्यां अलुग्निषेधाद्वेदेऽलुक् । 'पूर्वपदात्–' ( पा० ८ । ३ । १०६ ) इति षत्वम् । अतोऽग्नये जुष्टं प्रियं त्वां प्रोक्षामि । शुद्ध्यर्थं जलेनेति शेषः । 'वेदिरसीति वेदिं प्रोक्षति' । त्वं वेदिरसि । विद्यते लभ्यत इति वेदिः । 'विदॢ लाभे' । देवैरसुरेभ्यो लब्धत्वाद्वेदिः । अतो बर्हिर्जुष्टां बर्हिषो धारणोपयोगितया प्रियां त्वां प्रोक्षामि । पृथ्वीरूपाया वेदेः प्रजारूपस्य बर्हिषो धारकत्वं युक्तम् ॥ बर्हिरसीति बर्हिःप्रोक्षणम् । हे दर्भ, त्वं बर्हिरसि प्रभूतत्वाद्वेदिबृंहणसमर्थमसि । अतः स्रुग्भ्यो जुष्टं स्रुचां धारणात्प्रियं त्वां प्रोक्षामि ॥ १ ॥

## द्वितीया ।

अदित्यै व्युन्दनमसि विष्णोः स्तुपोस्यूर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यो भुवपतये स्वाहा भुवनपतये स्वाहा भूतानांपतये स्वाहा ॥ २ ॥

**उ०** शेषं मूलेषूपसिञ्चति अदित्यै व्युन्दनमसि । इयं वै पृथिव्यदितिः । षष्ठ्यर्थे चतुर्थी । अदित्याः पृथिव्याः व्युन्दनम् । 'उन्दी क्लेदने' । क्लेदनं सेचनं भवसि । उदकमुच्यते । प्रस्तरं गृह्णाति । विष्णोः स्तुपोसि विष्णोर्यज्ञस्य स्तुपः । 'ष्टैस्त्यै शब्दसंघातयोः'। स्त्यायतेः संघातः शिखा असि । वेदिं स्तृणाति। ऊर्णम्रदसम् ऊर्णामिव मृद्वीं त्वां कर्तुं स्तृणामि । 'स्तृञ् आच्छादने'। आच्छादयामि। स्वासस्थां साधु मर्यादया यस्यामासीदन्ति सा तथोक्ता तां त्वां स्तृणामि देवेभ्योऽर्थाय । स्कन्नमभिमृशति । भुवनपतये स्वाहा । अस्याग्नेर्ये भ्रातरः पूर्वे त्रयो बभूवुः ते वषट्कारभयादिमां पृथिवीं प्राविशन् पृथिवीं प्रविष्टाः । अयं चाग्निः प्रपलाय्याप्सु प्राविविक्षत प्रवेष्टुमैछत् । स देवैरानीय स्वाधिकारे नियुज्यमान एवमुवाच । एतैरग्निभिर्मां परिधत्त त एते परिधयः तेषां चायं भागः कृतोग्नीनाम् । भुवशब्देन मध्यमा व्याहृतिरुच्यते, भुवनशब्देन जगदुच्यते, भूतानामितिशब्देन भूतान्येवोच्यन्ते तेषां येऽधिपतयोऽग्नयस्तेभ्यः स्वाहेति संबन्धः ॥ २ ॥

**म०** 'शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनम्' (का० २।७।२०) इति । हे प्रोक्षणशेषोदक, त्वमदित्यै अदित्या भूम्याः व्युन्दनमसि विशेषेण क्लेदनमसि ॥ 'बर्हिर्विस्रᳪस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति' ( का० २ । ७ । २१ ) इति । हे प्रस्तर दर्भमुष्टिरूप, त्वं विष्णोर्यज्ञस्य स्तुपोऽसि । 'ष्टै स्त्यै शब्दसङ्घातयोः' । औणादिको डुप्प्रत्ययः । दर्भसङ्घातरूपत्वात्केशसङ्घातरूपा शिखेव भवसि ॥ 'वेदिᳪस्तृणात्यूर्णम्रदसमिति' ( का० २ । ७ । २२ ) इति । हे वेदे, त्वां स्तृणामि बर्हिषा छादयामि । किंभूतां त्वाम् । ऊर्णम्रदसमूर्णमिव मृदुतरामतिशयेन मृदुर्म्रदीयसी । ईयलोपश्छान्दसः । यथा प्रभोरुपवेष्टुं भूमिः कम्बलादिनाच्छाद्यते काठिन्याभावाय तथा दर्भैराच्छादिता वेदिर्मृदुः स्यात् । पुनः किंभूतां त्वां । देवेभ्यः स्वासस्थां देवोपकाराय सुखेनासितुं स्थानभूतां सुखेन आसेनासनेन स्थीयते यस्यां सा स्वासस्था ताम् । 'स्कन्नमभिमृशति भुवपतये स्वाहेति' (का० २ । ७ । २२) इति । एतन्मन्त्रत्रयस्यात्रोत्कर्षः । भुवपत्यादयस्त्रयोऽग्नेर्भ्रातरः । स्वाहाशब्दो निपातो देवान्प्रति दानवाची । 'स्वाहाकारं च वषट्कारं च देवा उपजीवन्ति' इति श्रुतेः । हविर्ग्रहकाले परिधिभ्यो बहिर्यद्धविः स्कन्नं तद्भुवपत्यादिभ्यः । अग्नेर्भ्रातरो वषट्कारभयाद्भूमिं प्राविशंस्तद्दुःखेनाग्निरपि पलाय्योदके प्राविशत्ततो देवैरानीय स्वाधिकारे स्थाप्यमान एवमवदद्यदेतैर्मद्भ्रातृभिर्मां परिधत्तैषां च यज्ञभागः कल्प्यतामिति । ततस्तेऽग्नेर्भ्रातरः परिधयो जातास्तेषां च स्कन्नं हविर्भागः कृत इति कथा ॥ २ ॥

## तृतीया ।

गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । मित्रावरुणौ त्वोत्तरतः

परि॑धत्तां ध्रु॒वेण॒ धर्म॑णा॒ विश्व॒स्यारि॑ष्ट्यै॒ यज॑मानस्य परि॒धिर॑स्य॒ग्निरि॒ड ई॑डि॒तः ॥ ३ ॥

**उ०** परिधीन्परिदधाति । गन्धर्वस्त्वा परिधिरुच्यते । गन्धर्वो विश्वावसुस्त्वां। परिदधातु सर्वतः स्थापयतु । विश्वस्य सर्वस्य। अरिष्ट्यै अविनाशाय । 'रिषि रुषि हिंसायाम्' । रिषतिर्हिंसार्थः । सा तत्र प्रतिषिद्धा । किंच यजमानस्य परिधिरसि न केवलमाहवनीयस्य किं तर्हि यजमानस्यापि परिधिरसि। किंच अग्निरसि आहवनीयस्य भ्राता। अत एवमुच्यते। इडे स्तोत्राय । होत्रभिप्रायमेतत् । ईडितः । 'ईड स्तुतौ' । स्तुत इत्यर्थः । दक्षिणं परिदधाति । इन्द्रस्य बाहुरसि दक्षिणः। इन्द्रस्य दक्षिणेन बाहुना परिधिरुपमीयते । व्याख्यातः शेषः । उत्तरं परिदधाति । मित्रावरुणौ त्वोत्तरतः । मित्रावरुणौ वाय्वादित्यौ त्वाम् उत्तरतः सर्वतः परिधत्ताम् । ध्रुवेण अचलेन। धर्मणा धारकेण । विश्वस्यारिष्ट्या इति व्याख्यातम् ॥ ३ ॥

**म०** 'परिधीन्परिदधाति मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रम्' ( का० २।८।१ ) इति । आदौ पश्चात् हे परिधे, विश्वावसुनामा गन्धर्वः त्वां परिदधातु आहवनीयस्य पश्चात्सर्वतः स्थापयतु । विश्वस्मिन्सर्वस्मिन्प्रदेशे वसतीति विश्वावसुः द्युलोकस्थं सोमं रक्षितुं तत्पार्श्वे सर्वत्र गन्धर्वोऽवसदिति श्रुत्यन्तरकथा । किमर्थं स्थापयतु । विश्वस्यारिष्ट्यै । 'रिष हिंसायां' रेषणं रिष्टिः न रिष्टिः अरिष्टिस्तस्यै । आहवनीयस्थानरूपस्य विश्वस्य हिंसापरिहाराय । परिध्यभावेऽसुराः प्रविश्य हिंसन्ति । किंच त्वं यजमानस्य परिधिरसि । न केवलमग्नेः परिधिः यजमानमप्यसुरेभ्यो रक्षितुं पश्चिमदिशि स्थापितोऽसि । किंच अग्निरिडः ईडितश्चासि । आवहनीयस्य प्रथमो भ्राता भुवपतिनामाग्निरूपस्त्वमसि । ईड्यते स्तूयते इतीड् स्तुतियोग्यः । अतएव ईडितः स्तुतो होत्रादिभिः । 'ईड स्तुतौ' । दक्षिणं परिधिं परिदधाति । इन्द्रस्य बाहुरसि । हे द्वितीय परिधे, त्वमिन्द्रस्य दक्षिणो बाहुरसि । रक्षणसमर्थत्वादिन्द्रबाहुत्वोपचारः । विश्वस्येत्यादि व्याख्यातम् । अत्राग्निशब्देन भुवनपतिनामा द्वितीयो भ्राता ॥ तृतीयमुत्तरं परिधिं परिदधाति । मित्रावरुणौ । हे तृतीयपरिधे, मित्रावरुणौ वाय्वादित्यौ ध्रुवेण स्थिरेण धर्मणा धारणेन उत्तरस्यां दिशि त्वां परिधत्तां परितः स्थापयताम् । विश्वस्येत्यादि पूर्ववत् । अत्राग्निभूतानां पतिस्तृतीयो भ्राता ॥ ३ ॥

## चतुर्थी ।

वी॒तिहो॑त्रं त्वा कवे द्यु॒मन्त॒ꣳ समि॑धीमहि । अग्ने॑ बृ॒हन्त॑मध्व॒रे ॥ ४ ॥

**उ०** आहवनीये इध्मकाष्ठमादधाति । वीतिहोत्रम् । आग्नेयी गायत्री । वीतिहोत्रम् । 'वी गतिप्रजननकान्त्यसनखादनेषु' । वीतिः अभिलाषः होतृकर्मणि यस्य स वीतिहोत्रः । अथवा विविधा ईतिर्गतिर्होतृप्रशास्त्रादिषु होत्रासु यस्य स वीतिहोत्रः हे भगवन्नग्ने, वीतिहोत्रं त्वाम् । कवे क्रान्तदर्शन । अतीतानागतविप्रकृष्टविषयं युगपद्दर्शनं यस्य सः क्रान्तदर्शनः । द्युमन्तम् दीप्तिमन्तम् । समिधीमहि । 'इन्धी दीप्तौ' । संदीपयामः । अनेन इध्मकाष्ठेन बृहन्तं महान्तम् । अध्वरे यज्ञे ॥ ४ ॥

**म०** 'प्रथमं परिधिꣳ समिधोपस्पृश्य वीतिहोत्रमित्यादधाति' ( का० २।८।२ ) इति । इयमृक् अग्निदेवत्या गायत्रीच्छन्दस्का । हे कवे क्रान्तदर्शिन् हे अग्ने, अध्वरे यागे निमित्ते त्वां वयं समिधीमहि अनेनेध्मकाष्ठेन दीपयामः । अतीतानागतदूरवर्तिपदार्थानां यस्य युगपज्ज्ञानं स कविः । किंभूतं त्वाम् । वीतिहोत्रम् । 'इण् गतौ' इतिर्गतिः व्याप्तिः पुत्रपौत्रपशुधनादिभिः समृद्धिरित्यर्थः । वीतये समृद्ध्यै होत्रं होमो यस्य स वीतिहोत्रस्तं यत्र होमे कृते समृद्धिप्राप्तिः स्यादित्यर्थः । यद्वा वीतिरभिलाषो होत्रे होतृकर्मणि यस्य तम् । तथा द्युमन्तम् । द्यौः कान्तिरस्यास्तीति द्युमान् तं स्वत एव द्युत्युपेतम् । तथा बृहन्तं महान्तम् ॥ ४ ॥

## पञ्चमी ।

स॒मिद॑सि॒ सूर्य॑स्त्वा पु॒रस्ता॑त्पातु॒ कस्या॑श्चिद॒भिश॑स्त्यै । स॒वि॒तुर्बा॒हू स्थ॒ ऊर्ण॑म्रदसं त्वा स्तृणामि स्वासस्थं दे॒वेभ्य॒ आ त्वा॒ वस॑वो रु॒द्रा आ॑दि॒त्याः स॑दन्तु ॥ ५ ॥

**उ०** द्वितीयमादधाति । समिदसि । अङ्गप्रधानार्थस्याग्नेः समिन्धनमसि । समित्स्तूयते । आहवनीयमीक्षमाणो जपति । सूर्यस्त्वा पुरस्तात्पातु गोपायतु।गुह्यैवाभितः परिधयो भवन्ति। 'अथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति' इति श्रुतिः । कस्याश्चिदभिशस्त्यै । यः कश्चिदभिशापस्तस्मादित्यर्थः । अभिशस्त्या इति चतुर्थी षष्ठ्यर्थे। बर्हिषस्तृणे तिरश्ची निदधाति । सवितुर्बाहू स्थः । अनेन प्रस्तरस्य धारणकर्मणा युवां सवितुर्बाहू भवथः । तयोः प्रस्तरं स्तृणाति । ऊर्णम्रदसम् । ऊर्णामिव मृदुं त्वां स्तृणामि । स्वासस्थम्, देवेभ्यः साधु अस्मिन्नासीदन्ति तिष्ठन्ति इति स्वासस्थः प्रस्तरः । देवेभ्य इति षष्ठ्यर्थे चतुर्थी । देवानामिति यावत् । प्रस्तरमभिनिदधाति । आत्वा वसवः । 'स्कन्दिर्गतिशोषणयोः' । आसदन्तु त्वां सवनदेवता रुद्रा आदित्याः ॥ ५ ॥

**म०** अनुपस्पृश्य द्वितीयं समिदसीति ( का० २।८।३ ) इति ॥ हे इध्मकाष्ठ, त्वं समिदसि अग्नेः समिन्धनं दीपनमसि ॥ 'सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणः' ( का० २।८।४ ) इति ॥ हे आहवनीय, सूर्यः पुरस्तात्पूर्वस्यां दिशि कस्याश्चिदभिशस्त्यै सर्वस्या अभिशस्तेर्हिंसायाः सकाशात्त्वा लां

पातु रक्षतु । चतुर्थी पञ्चम्यर्थे । या काचिद्धिंसा प्रसक्ता तां सर्वां परिहरत्वित्यर्थः । इतरदिक्त्रये परिधित्रयं रक्षकं पूर्वस्यां तदभावात् सूर्यः । तथाच श्रुतिः 'गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमिव पुरस्ताद्गोप्तारं करोति'(१।३।४।८) इति । 'बर्हिषस्तृणे तिरश्च्यो निदधाति सवितुरिति'(का०२।८।५) इति । तृणद्वयं प्रस्तरस्थापनार्थं तिर्यग् निदध्यात् । हे तृणे, युवामुभे सवितुर्देवस्य बाहू स्थः । प्रस्तरधारणेन सूर्यस्य बाहू इव भवथः । 'तयोः प्रस्तरᳬ स्तृणात्यूर्णम्रदसमिति' ( का० २।८।१० ) इति । ऊर्णमिव मृदुं देवेभ्यो देवानां स्वासस्थं सुखेनासनेन स्थीयते यत्र तादृशं त्वां स्तृणामि । 'अभिविदधात्या त्वा वसवः' ( का० २।८।११ ) इति । प्रस्तरंप्रति पाणी निदधाति । वसवो रुद्रा आदित्याः सवनत्रयाभिमानिनस्त्रयो देवाः त्वामासदन्तु आसादयन्तु सर्वतः प्रसारयन्तु ॥ ५ ॥

## षष्ठी ।

घृ॒ताच्य॑सि जु॒हूर्नाम्ना॒ सेदं प्रि॒येण॒ धाम्ना॑ प्रि॒यᳬ सद॒ आसी॑द घृ॒ताच्य॑स्युप॒भृन्नाम्ना॒ सेदं प्रि॒येण॒ धाम्ना॑ प्रि॒यᳬ सद॒ आसी॑द घृ॒ताच्य॑सि ध्रु॒वा नाम्ना॒ सेदं प्रि॒येण॒ धाम्ना॑ प्रि॒यᳬ सद॒ आसी॑द प्रि॒येण॒ धाम्ना॑ प्रि॒यᳬ सद॒ आसी॑द । ध्रु॒वा अ॑सदन्नृ॒तस्य॒ योनौ॒ ता वि॑ष्णो पाहि पा॒हि य॒ज्ञं पा॒हि य॒ज्ञप॑तिं पा॒हि मां य॑ज्ञ॒न्य॑म् ॥ ६ ॥

**उ०** जुहूं निदधाति । घृताच्यसि । 'अञ्चु गतिपूजनयोः' । घृतमञ्चितं प्राप्तं यस्यां स्रुचि, घृतं वा अच्यते यया स्रुचा सा घृताची । जुहूर्नाम्ना । क्रियाभिप्रायमेतत् । हूयते अनयेति जुहूः । सेदं प्रियेण धाम्नेति तदः श्रवणाद्यदोऽध्याहारः । या त्वं घृताच्यसि जुहूश्च नाम्ना सा इदं प्रियं सदः स्थानम् आसीद अधितिष्ठ । प्रियेण धाम्ना सहिता । 'एतद्वै देवानां प्रियं धाम यदाज्यम्' इति श्रुतिः । आज्यसहितेत्यर्थः । अथवा 'धामानि भवन्ति स्थानानि नामानि जन्मानीति वा' । अस्मिन् पक्षे प्रियेण नाम्ना सहिता सतीति योज्यम् । उपभृतं सादयति । घृताच्यस्युपभृन्नाम्ना । उपाभरणादुपभृत् । व्याख्यातमन्यत् । ध्रुवां सादयति । घृताच्यसि ध्रुवा नाम्ना । ध्रुवा स्थिरा । व्याख्यातमन्यत् । अन्यद्धविः सादयति । प्रियेण धाम्ना । व्याख्यातमन्यत् । तानि हवीᳬष्यभिमृशति । ध्रुवा असदन् । ता विष्णो पाहीति तदः संबन्धाद्यदोऽध्याहारः । यान्येतानि ध्रुवाणि असदन् आसादितानि ऋतस्य योनौ यज्ञस्योत्सङ्गे ता विष्णो तानि हवींषि पाहि गोपाय । किंच पाहि यज्ञम् । गोपाय यज्ञम् । किंच पाहि यज्ञपतिं यजमानम् । आत्मानमुपस्पृशति । पाहि माम् । अध्वर्युरा-



त्मानं ब्रवीति गोपाय माम् । यज्ञन्यम् यज्ञं नयतीति यज्ञनीः । गोपाय मां यज्ञस्य नेतारमित्यर्थः ॥ ६ ॥

**म०** 'सव्याग्न्ये जुहूं प्रतिगृह्य निदधाति घृताचीत्येवमितरे उत्तराभ्यां प्रतिमन्त्रम्' ( का० २।८।१२-१३ ) इति । हे जुहु, त्वं घृताची असि । घृतमञ्चति प्राप्नोतीति घृताची घृतपूर्णा भवसि नाम्ना च जुहूः । हूयतेऽनयेति जुहूः । 'क्विपि द्युतिगमिजुहोतीनां द्वे च जुहोतेर्दीर्घश्च' ( पा० क० ३।२।१७८ ) इति द्वित्वं दीर्घश्च । सा त्वं प्रियेण धाम्ना देववल्लभेनाज्येन सह इदं प्रियं सदः प्रस्तरलक्षणमासीद अधितिष्ठ । 'एतद्वै देवानां प्रियतमं धाम यदाज्यम्' ( २।३।२।१७ ) इति श्रुतेः । प्रियधामशब्देनाज्यम् । उपभृतं सादयति । उप समीपे स्थित्वा बिभर्ति आज्यं धारयतीत्युपभृत् । व्याख्यातमन्यत् । ध्रुवां सादयति । 'ध्रुव स्थैर्ये' । यथा होमार्थं जुहूपभृतोश्चलनं तद्वदस्याश्चलनाभावेन स्थिरत्वान्नाम्ना ध्रुवा । अन्यद्व्याख्यातम् । 'प्रियेण धाम्नेति हवीᳬषि वेद्यां कृत्वा' ( का० २।८।१९ ) इति । हे हविः, प्रियेण धाम्नाऽज्येन सह प्रियं सद आसीदेत्येकैकं हविः संबोध्य वचनम् । 'ध्रुवा असदन्निति सर्वाण्यालभते' ( का० २।८।१९ ) इति । ऋतस्यावश्यंभाविफलोपेतत्वेन सत्यस्य यज्ञस्य योनौ स्थाने ध्रुवाणि यानि हवींषि असदन्नतिष्ठन् । हे विष्णो व्यापक यज्ञपुरुष, ता तानि हवींषि पाहि रक्ष । यज्ञं च पाहि यज्ञपतिं च पाहि । 'पाहि मामित्यात्मानम्' ( का० २।८।२० ) इति । यज्ञं नयतीति यज्ञनीः तं यज्ञन्यमध्वर्युं मां पाहि ॥ ६ ॥

## सप्तमी ।

अग्ने॑ वाजजि॒द्वाजं॑ त्वा सरि॒ष्यन्तं॑ वाज॒जित॒ᳬ संमा॑र्ज्मि । नमो॑ दे॒वेभ्यः॑ स्व॒धापि॒तृभ्यः॑ सु॒यमे॑ मे भूयास्तम् ॥ ७ ॥

**उ०** अग्नेः संमार्गं करोति । अग्ने वाजजित् । हे भगवन्नग्ने, वाजजित् वाजस्यान्नस्य जेतः, वाजं त्वा सरिष्यन्तमिति । 'सृ गतौ' । यज्ञं त्वां प्रापयिष्यन्तम् । वाजजितं अन्नस्य जेतारं संमार्ज्मि । 'मृजूष् शुद्धौ' । अञ्जलिं करोति । नमो देवेभ्यः देवेभ्यो निह्नवः । दक्षिणत उत्तानं पाणिं करोति । स्वधापितृभ्यः पितृभ्यो निह्नवः । जुहूपभृतावादत्ते । सुयमे मे । स्रुचावुच्येते । साधु यमे मे मम भूयास्तं भवतम् ॥ ७ ॥

**म०** 'इध्मसन्नहनैरनुपरिधि संमार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामम्' ( का० ३।१।१३ ) इति । वाजमन्नं जयतीति वाजजित् । तत्संबुद्धौ हे वाजजित् हे अग्ने, त्वामहं संमार्ज्मि शोधयामि । किंभूतं त्वाम् । वाजं सरिष्यन्तमन्नमुद्दिश्य गमिष्यन्तमन्नसंपादनोपयुक्तम् । तथा वाजजितमन्नमुद्दिश्य जयोपेतम् । अन्नप्रतिबन्धनिवारकमित्यर्थः । 'अपरमा-

हवनीयादञ्जलिं करोति नमो देवेभ्य इति' (का० ३।१।१५) इति। ये देवा अनुष्ठानमनुगृह्णन्ति तेभ्यो नमस्करोति। 'स्वधा पितृभ्य इति दक्षिणत उत्तानम्' (का० ३।१।१५) इति। प्राङ्मुखेनादौ देवनत्यर्थमञ्जलिः कृतः। इदानीं पितृनत्यर्थं दक्षिणामुख उत्तानमञ्जलिं कुर्यात्। ये पितरः पालकाः सन्ति तेभ्यः स्वधाऽस्तु। स्वधाशब्दो निपातः पितॄनुद्दिश्य देयद्रव्यस्य दाने वर्तते। अतो यद्देयं तद्वास्याम इत्यर्थः। अनेन मन्त्रद्वयेन देवाः पितरश्चोपचर्यन्ते। 'सुयमे म इति जुहूपभृतावादाय' (का० ३।१।१६) इति। हे जुहूपभृतौ, मे मदर्थं सुयमे सुष्ठु नियते युवां भूयास्तं भवतम्। यथा युवयोः स्थितमाज्यं न स्कन्दति तथा धारयतमित्यर्थः ॥७॥

## अष्टमी।

अस्कन्नमद्य देवेभ्य आज्यꣳसंभ्रियासमङ्घ्रिणा विष्णो मा त्वावक्रमिषं वसुमतीमग्ने ते च्छायामुपस्थेषं विष्णोः स्थानमसीत इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वर आस्थात् ॥ ८ ॥

**उ०** यथाहं सुसंयताभ्यां स्रुग्भ्याम् अस्कन्नं सकलम् अद्य अस्मिन् कर्मणि देवेभ्योर्थाय आज्यम्। आज्यशब्देन यज्ञो लक्ष्यते। यज्ञं संभ्रियासं संबिभृयाम्। दक्षिणातिक्रामति। अङ्घ्रिणा विष्णो अङ्घ्रेर्गत्यर्थस्य अङ्घ्रिः पादः। पादेन विष्णो यज्ञ। मा त्वावक्रमिषम्। माङि लुङ्। मात्वामवाचीनं क्रमिषम्। वसुमतीमित्यवस्थाय। वसुमतीं धनवतीम् हे भगवन्नग्ने, ते तव छायाम्। छायाशब्द आश्रयवचनः। युष्माकं पादच्छायायां वसामीति यथा आश्रयम्। उपस्थेषम् उपतिष्ठेयम्। विष्णोर्यज्ञस्थानं भवसि। यज्ञस्य ह्येतत्स्थानं यत्र स्थितैर्यागः क्रियते यत् जुहोति। इत इन्द्रः इत अस्मात् यजतिस्थानाद्। उत्थायेतिशेषः। इन्द्रो वीर्यं वीरस्य कर्म वीर्यम् अकृणोत्। 'कृञ् हिंसाकरणयोः'। कृतवान्। 'अतो हीन्द्रस्तिष्ठन्दक्षिणतो नाष्ट्रा रक्षांस्यपहन्ति' इति श्रुतिः। किंच ऊर्ध्वोध्वर आस्थात् यतश्च यजतिस्थानादूर्ध्वं प्रगुणः यज्ञः आस्थात् आस्थितः। अध्वर्युमुखयागाभिप्रायमेतत् ॥ ८ ॥

**म०** तथा सति अद्यास्मिन्ननुष्ठानदिने देवेभ्यो देवोपकाराय आज्यं युवयोः स्थितं घृतम् अस्कन्नं भूमौ यथा न स्कन्दति तथा संभ्रियासं सम्यक् पोषणं करोमि धारणं वा। आशीर्लिङि उत्तमे रूपम्। 'दक्षिणातिक्रामत्यङ्घ्रिणा पादेन त्वा त्वाम् अहं मा अवक्रमिषम् मा कार्षम्। पादेनातिक्रमणदोषो मे मा भूदित्यर्थः। 'वसुमतीमित्यवस्थाय' (का० ३।१।१९) इति। हे अग्ने, ते तव छायां छायावत्समीपवर्तिनीं वसुमतीं भूमिम् अहमुपस्थेषम् उपतिष्ठेयं सेवेय। उपपूर्वस्तिष्ठतिः सेवार्थः। स एवमेवापकारः कथ्यते। हे वसुमति, त्वं विष्णोर्यज्ञस्य स्थानमसि। अत्र स्थित्वा यागः कर्तुं शक्यत इत्यर्थः। आहवनीयसमीपवर्तित्वादस्या भूमेर्यज्ञस्थानत्वम्। यद्वा अयमर्थः। हे अग्ने, ते तव वसुमतीं धनवतीं धनप्राप्तिकरीं छायामाश्रयं उपस्थेषं सेवेय। छायाशब्द आश्रयवाचकः। युष्मत्पादच्छायायां वसामीति यावत्। यतस्त्वं विष्णोर्यज्ञस्य स्थानमसि। 'इत इन्द्र इति जुहोति' (का० ३।२।१) इति। पूर्वमन्त्रे यज्ञसंबन्धि यत्स्थानमुक्तं तदेव देवानां विजयहेतुत्वादितःशब्देन परामृश्यते। देवयजनव्यतिरिक्तभूमिरसुराधीनत्वेन तत्र देवानां पराजयेऽपि यज्ञप्रदेशः पराजयरहितः। तदेवोच्यते मन्त्रेण। इत इन्द्रः। इन्द्र इतोऽस्माद्देवयजनस्थानात् उद्युक्तः सन्निति शेषः। वीर्यमकृणोत् वीरस्य कर्म वीर्यं शत्रुवधरूपमकरोत्। अतएवाध्वरो यज्ञ ऊर्ध्वमास्थात् उन्नतः स्थितः। इन्द्रेण वीर्ये कृते शत्रुकृतविघ्नाभावादध्वरस्यौन्नत्यम् ॥ ८ ॥

## नवमी।

अग्ने वेर्होत्रं वेर्दूत्यमवतां त्वां द्यावापृथिवी अव त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषा भूत्स्वाहा संज्योतिषा ज्योतिः ॥ ९ ॥

**उ०** अग्ने वेर्होत्रं वेर्दूत्यम्। हे अग्ने, वेः। 'विद ज्ञाने' विद्धि जानीहि अवगतार्थो भव। मया होत्रं कर्तव्यम्। वेर्दूत्यम्। विद्धि च दूत्यं दूतस्य कर्म मया कर्तव्यम्। 'उभयं वा एतदग्निर्देवानाꣳ होता च दूतश्च' इति श्रुतिः। अवतां त्वा द्यावापृथिवी। त्वां कर्मणि प्रवृत्तं पालयेतां द्यावापृथिव्यौ। स्विष्टकृत् साधु इष्टं करोतीति स्विष्टकृत्। देवेभ्योऽन्येभ्यः सकाशात्प्रथमम्। इन्द्र आज्येन 'अज गतिक्षेपणयोः'। अजनेन हविषा हवनेन भूत् भूयात् स्वाहा सुवाक् आह। 'वाचे वा एतमाघारयतीन्द्रो वागित्युवाच आहुः' इति श्रुतिः। 'जुह्वा ध्रुवां समनक्ति संज्योतिषा ज्योतिः'। संगच्छतामित्यध्याहारः। ज्योतिषा आज्येन ज्योतिः आज्यं सङ्गच्छताम् ॥ ९ ॥

**म०** तस्मात् हे अग्ने, होत्रं वेः होतुः कर्म विद्धि। लङि अडभावे रूपम्। दूत्यं दूतकर्म च वेः विद्धि। होतृत्वं दूतत्वं चाग्नेः कर्म। तथाच श्रुतिः 'उभयं वा एतदग्निर्देवानाꣳ होता च दूतश्च' (१।४।५।४) इति। ईदृशं त्वां द्यावापृथिवी अवतां पालयताम्। हे अग्ने, त्वमपि द्यावापृथिवी लोकद्वयदेवते अव पालय। इत्थमन्योन्यपालने सति इन्द्रः आज्येन हविषास्माभिर्दत्तेन देवेभ्यो देवार्थं स्विष्टकृत् भूत्। सुष्ठु इष्टं करोतीति स्विष्टकृत् तादृशो भवतु। अडभावश्छान्दसः। यद्यस्माभिरिज्यते तत्तदिष्टं सर्वं वैकल्यरहितं करोत्वित्यर्थः। स्वाहा सुहुतं अस्तु। इन्द्रं देवमुद्दिश्य इदमाज्यं दत्तमित्यर्थः। स्वाहेति निपातो देवोद्देशेन दाने वर्तते।

'जुहा ध्रुवां समनक्ति संज्योतिषा' ( का० ३।२।२ ) इति । संगच्छतामित्यध्याहारः । ज्योतिषा ध्रुवास्थिताज्यरूपज्योतिषा सह ज्योतिर्जुह्वासिच्यमानरूपं ज्योतिः संगच्छताम् ॥ ९ ॥

## दशमी ।

मयीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् । अस्माकꣳसन्त्वाशिषः सत्या नः सन्त्वाशिष उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहा ॥ १० ॥

**उ०** यजमानो जपति मयीदमिन्द्रः । मयि इदम् इन्द्रः इन्द्रियं वीर्यम् । आधातु स्थापयतु । किंच अस्मान् रायः धनानि मघवानः मघं धनं विद्यते येषां ते मघवानः धनिनः । सचन्तां सेवन्ताम् ।'षच सेवने'। एतदुक्तं भवति । धनानि धनिनश्चास्मान् सेवन्ताम् । किंच अस्माकं सन्त्वाशिषः सत्या अवितथाः नः अस्माकं भवन्तु आशिषः । अग्नीन् प्राश्नाति । उपहूता अभ्यनुज्ञाता पृथिवी माता जगतो निर्मात्री । उप मां पृथिवी ह्वयताम् । अभ्यनुजानातु मां पृथिवी माता भक्षणाय । अहं तु अग्निः सन् भक्षयामि ॥ १० ॥

**म०** 'आशासने मयीदमिति यजमानो जपति' (का०३।४।२१) इति । प्रधानयागानन्तरं पुरोडाशशेषप्राशनसमये होतरि आशिषं प्रयुञ्जाने सति यजमानो जपति । इन्द्रः परमेश्वर इदमिन्द्रियं मयि दधातु । इदम् अस्मदपेक्षितम् इन्द्रियं वीर्यं मयि यजमाने स्थापयतु । किंच रायो धनानि दैवमानुषभेदेन द्विविधानि मघवानः धनवन्तश्चास्मान्यजमानान् सचन्तां सेवन्ताम् । 'षच सेवने' । किंच अस्माकं यजमानानामाशिषोऽभीष्टार्थस्याशंसनानि सन्तु विद्यन्ताम् । किंच नोऽस्माकमाशिषः पूर्वोक्ताः सत्या अवितथाः सन्तु । मघमिति धननाम तद्विद्यते येषां ते मघवानः । अस्त्यर्थे वन्प्रत्ययः ( पा० ५।२।१०९ ) । 'एकैकमाहरति द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम् । प्राश्नात्युपहूता पृथिवीति' (का०३।४।१८–२०) यदा होता द्यावापृथिव्योरुपह्वानं करोति तदोभयोः पुरोडाशयोरेकैकमंशं षडवत्ते षडवत्ते कृत्वाग्नीधे ददाति स चोपहूतेति मन्त्रेण तत्प्राश्नातीति सूत्रार्थः । उपहूता येयं पृथिवी दृश्यते सा जगतो माता निर्मात्री मयोपहूता अभ्यनुज्ञाता । सा च पृथिवी माता मातृत्वेनास्माभिर्भाविता सती मामुपह्वयतामनुजानातु हविःशेषभक्षणायाज्ञां ददातु । अहं चाग्नीध्रात् । अग्नीध इदं कर्माग्नीध्रं तस्माद्धेतोरग्निः सन् तं भागं प्राश्नामीति शेषः । स्वाहा सुहुतमस्तु जाठरेऽग्नौ ॥ १० ॥

## एकादशी ।

उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहा । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् प्रतिगृह्णाम्यग्नेष्ट्वास्येन प्राश्नामि ॥ ११ ॥

**उ०** अग्नीत् द्वितीयं प्राश्नाति । उपहूतो द्यौः पिता अभ्यनुज्ञातो द्यौः पिता पाता । उप मां द्यौः पिता ह्वयताम् उपह्वयताम्। अभ्यनुजानातु मां द्यौः पिता पाता। अहं तु अग्निः आग्नीध्रादिति समानम् । इत उत्तरं ब्रह्मत्वं प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोऽपश्यत् । प्राशित्रं गृह्णाति देवस्यत्वेति व्याख्यातम् । प्रतिगृह्णामीत्युत्तमः पुरुषः । प्राश्नाति । अग्नेस्त्वास्येन। अग्नेः संबन्धिना आस्येन मुखेन त्वां प्राशित्रं प्राश्नामि भक्षयामि ॥ ११ ॥

**म०** द्वितीयं प्राश्नाति । एवं द्यौः पिता जगत्पालक उपह्वयतामित्यादि समानार्थम् । देवस्य त्वा । इतःप्रभृति 'ओंप्रतिष्ठ' ( ख० १३ ) इत्यन्तं ब्रह्मत्वम् । तस्याङ्गिरसो बृहस्पतिर्ऋषिः । 'देवस्य त्वेति प्रतिगृह्णाति' ( का० २।२।१६ ) इति । ब्रह्मा देवस्य त्वेति प्राशित्रं गृह्णाति । मन्त्रो व्याख्यातः । प्रतिगृह्णामि स्वीकरोमीति शेषः । 'अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्' ( का० २।२।१८ ) इति । हे प्राशित्र अग्नेः आस्य, ते वह्निदेवताया मुखेन त्वा त्वां प्राश्नामि भक्षयामि ॥ ११ ॥

## द्वादशी ।

एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ १२ ॥

**उ०** समिदामन्त्रितः प्रसौति । एतं ते देव । अध्वर्युराह ब्रह्मन् प्रस्थास्यामीति । एतं यज्ञं ते तव हे देव दानादिगुणयुक्त सवितः प्रसवितः, प्राहुः। एकवचनस्य स्थाने बहुवचनम् । प्राह ब्रवीति । 'तत्सवितारं प्रसवायोपधावति' इति श्रुतिः । किंच बृहस्पतये ब्रह्मणे प्राह बृहस्पतिर्वै देवानां ब्रह्मा तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति तेन यज्ञमव । तेन हेतुना यज्ञम् अव पालय । तेन च यज्ञपतिं यजमानं च पालय । तेन च माम् अव पालय ॥ १२ ॥

**म०** 'एतं त इति समिदामन्त्रितः प्रसौति' ( का० २।२।२१ ) इति समिधमाधातुमनुज्ञाप्रदानाय बोधितो ब्रह्मा मन्त्रेणानुजानीयात् । एतं त इत्यादिः ओंप्रतिष्ठेत्यन्तो मन्त्रः। हे देव दानादिगुणयुक्त, हे सवितः प्रसवितः, एतं यज्ञमिदानीं क्रियमाणमिमं मखं ते तुभ्यं त्वदर्थं प्राहुर्यजमानाः कथयन्ति । अनुज्ञापयन्तीत्यर्थः । किंच त्वया प्रेरितो देवानां

यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये च प्राहुः । बृहस्पतिर्वै देवानां ब्रह्मा तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति । किंच । तेन हेतुना त्वदीयत्वेन यज्ञमव रक्ष । तथा तेनैव हेतुना यज्ञपतिं यजमानं चाव रक्ष । तथा तेनैव हेतुना मां ब्रह्माणमव पालय ॥ १२ ॥

## त्रयोदशी ।

मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु । विश्वेदेवास इह मादयन्तामों३प्रतिष्ठ ॥ १३ ॥

**उ०** किंच मनो जूतिर्जुषतामाज्यस्य मनो जुषताम् सेवताम् आज्यस्य स्वमंशम् । कथंभूतं मनः । जूतिः । जवतेर्गतिकर्मणो जूतिः । अतीतानागतवर्तमानेषु कालेषु पदार्थेषु यद्गन्तृ गच्छति । किंच बृहस्पतिर्यज्ञमिमं तनोतु विस्तारयतु । अरिष्टं यज्ञꣳसमिमं दधातु । रिषतिर्हिंसार्थः । अरिष्टमविनष्टं यज्ञमिमं कृत्वा दधातु । इडाभक्षणेन हि यज्ञो विच्छिन्नः इत्यत एवमुच्यते । किंच विश्वेदेवासः देवा एव देवासः । 'आज्जसेरसुक्' । सर्वे देवा इह कर्मणि मादयन्ताम् । 'मदी हर्षे' । हर्षं कुर्वन्तु । स्वार्थिको णिच् । अवतेराप्नोतेर्वा ओंकार इहाभ्युपगमार्थः । प्रतिष्ठ प्रकर्षेण तिष्ठ ॥ १३ ॥

**म०** किंच । मनः आज्यस्य जुषताम् । कर्मणि षष्ठी । मनः घृतं सेवताम् । हे सवितः, त्वदीयं चित्तं यज्ञसंबन्धिन्याज्ये स्थापयेत्यर्थः । किंभूतं मनः । जूतिः । जवतेर्गतिकर्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपातः । स्त्रीत्वं छान्दसम् । अतीतानागतवर्तमानकालगतपदार्थेषु गमनशीलं हि मनः । जवते शीघ्रं गच्छतीति जूतिः । किंच बृहस्पतिरिमं यज्ञं तनोतु विस्तारयतु ब्रह्मत्वात् । तत इमं यज्ञमरिष्टं हिंसारहितं कृत्वा संदधातु । इडाभक्षणेन हि मध्ये यज्ञो विच्छिन्न इत्येवमुच्यते । किंच विश्वेदेवासः सर्वे देवाः इह यज्ञकर्मणि मादयन्ताम् । 'मद तृप्तौ' चुरादिः । तृप्यन्ताम् । एवं प्रार्थितः सविता देवः ओंप्रतिष्ठेत्यनुज्ञां प्रयच्छतु । ओमित्यङ्गीकारार्थः । तथास्तु । प्रतिष्ठ प्रयाणं कुरु । समिदाधानकाले यजमानस्याभिप्रेतं प्रयाणमवगम्य सविता देवोऽङ्गीकृत्य प्रयाणे प्रेरयतीत्यर्थः ॥ १३ ॥

## चतुर्दशी ।

एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि । अग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजजितꣳसंमार्ज्मि ॥ १४ ॥

**उ०** एषा ते अग्ने । इतःप्रभृति प्राकृतमार्षम् । आग्नेयी अनुष्टुप् समिदनुमन्त्रणे विनियुक्ता । हे भगवन्नग्ने, एषा ते तव । समित् समिन्धनम् । तया समिधा वर्धस्व च आ च प्यायस्व । चकारो भिन्नक्रमः । आप्यायस्व च । वर्धमानाप्यायने समिधा कुर्वित्यर्थः । किंच त्वत्प्रसादाद्वयं वर्धिषीमहि पुत्रपश्वादिभिः । आ च प्यासिषीमहि । चकारो भिन्नक्रमः । आप्यासिषीमहि च । प्यायतेर्लिङि सीयुटि उत्तमपुरुषैकवचने एतद्रूपम् । तत्र सीयुटश्छान्दसोऽभ्यासः । अग्निं संमार्ष्टि । अग्नेवाजजित् । ससृवांसं सृवन्तमिति विशेषः ॥ १४ ॥

**म०** 'एषा त इति होतानुमन्त्रयते' ( का० ३ । ५ । २ ) इति । ब्रह्मत्वं समाप्तम् । अतः प्राकृतमार्षम् । इयमनुष्टुबग्निदेवत्या । हे अग्ने, एषा ते तव समित् समिन्धनहेतुः काष्ठविशेषः । तया समिधा त्वं वर्धस्व वृद्धिं गच्छ । आप्यायस्व च । अस्मानपि सर्वतो वृद्धिं प्रापय । तथाच सति त्वत्प्रसादाद्वयं वर्धिषीमहि वृद्धिं प्राप्नुयाम प्यासिषीमहि च । अस्मदीयपुत्रपश्वादीन्सर्वतो वृद्धान्करवाम । 'संमार्ष्टि पूर्ववदपरिक्रामꣳ सकृत्सकृत्ससृवाꣳसम्' ( का० ३ । ५ । ४ ) इति । पूर्वमग्ने वाजजिदिति ( ख० ७ ) मन्त्रेण यथेध्मसन्नहनैरग्नेः संमार्गः कृतस्तथात्रापि संमार्ष्टि । तत्र परिक्रम्य त्रिस्त्रिः कृतः । अत्र तु परिक्रमणं विनैकैकवारमिति विशेष इति सूत्रार्थः । मन्त्रो व्याख्यातः । इयान्विशेषः । हे अग्ने, त्वां संमार्ज्मि । किंभूतं त्वाम् । वाजं ससृवांसमन्नमुद्दिश्य गतवन्तमन्नं संपादितवन्तमित्यर्थः । अन्यत् पूर्ववत् ॥ १४ ॥

## पञ्चदशी ।

अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । अग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । इन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ॥ १५ ॥

**उ०** जुहूपभृतौ व्यूहति । तत्र जुह्वायमानसंस्तवः अग्नीषोमयोः प्रधानदेवतयोः उज्जितिमनु ऊर्ध्वजयनमनु । उज्जेषम् ऊर्ध्वं जयेषम् । किंच वाजस्य अस्य पुरोडाशादेः । मा मां प्रसवेन अभ्यनुज्ञया करणभूतया । प्रोहामि प्रेरयामि । प्रकृतत्वादग्नीषोमयोरुज्जितिमनु हविषः प्रसवस्य करणत्वेन विवक्षितत्वात् मामित्यात्मनः कर्मत्वं प्रोहामीति कर्तृत्वं चोपपद्यते । उपभृतं प्रतीचीं प्रेरयति । अग्नीषोमौ प्रधानहविर्भाजौ । तं शत्रुम् । अपनुदताम् । 'णुद प्रेरणे' । अपगमं नयताम् । योऽस्मान्द्वेष्टि । 'द्विष अप्रीतौ' । योऽस्माभिर्न प्रीयते । यं च वयं द्विष्मः । येन च वयं न प्रीयेमहि । किंच एवमग्नीषोमाभ्यामपनुद्यमानं शत्रुमन्यस्य प्रसवेन अ-

पोहामि अपाञ्चं प्रेरयामि । अधो नयामीत्यर्थः । उत्तरौ मन्त्रौ समानव्याख्यानौ ॥ १५ ॥

**म०** 'जुहूपभृतौ व्यूहत्यग्नीषोमयोरिति' ( का० ३ । ५ । १७-१८ ) इति । तत्र जुहूं प्राचीं प्रेरयति यजमानः । व्यूहनं परस्परविपरीतत्वेनापनोदनम् । अग्नीषोमयोर्द्वितीयपुरोडाशदेवतयोरुज्जितिमनु अविघ्नेन हविःस्वीकाररूपमुत्कृष्टं जयमनुलक्ष्याहमुज्जेषमुत्कृष्टं जयं प्राप्तवानस्मि । वाजस्यान्नस्य पुरोडाशादेः प्रसवेनाभ्यनुज्ञया मां प्रोहामि मां यजमानं जुहूरूपधारिणं प्रोत्साहयामि । यद्यप्यूहतिधातुर्वितर्कार्थस्तदाप्युपसर्गवशादुत्साहार्थः । अन्यत्पूर्ववत् । उपभृतं प्रतीचीं प्रेरयति । यः शत्रुरसुरादिरस्मान्द्वेष्टि अस्मदीययज्ञविनाशाय द्वेषं करोति । यं च वयं द्विष्मः । यमालस्यादिरूपमस्मदीयानुष्ठानविरोधिनं शत्रुं द्विष्मः विनाशायोद्योगं कुर्मः तमुभयविधं शत्रुमग्नीषोमौ देवावपनुदतां निराकुरुताम् । किंच । अहमप्येनं द्विविधं शत्रुमुपभृद्रूपं वाजस्य प्रसवेन पुरोडाशदेवताया अभ्यनुज्ञयापोहामि निराकरोमि । उत्तरौ मन्त्रौ दर्शदेवताविषयौ समानार्थौ ॥ १५ ॥

## षोडशी ।

वसु॑भ्यस्त्वा रु॒द्रेभ्य॑स्त्वादि॒त्येभ्य॑स्त्वा॒ संजा॑नाथां द्यावापृथिवी मि॒त्रावरु॑णौ त्वा॒ वृष्ट्या॑वताम् । व्यन्तु॒ वयो॒ऽक्तꣳ रिहा॑णा म॒रुतां॒ पृष॑तीर्गच्छ व॒शा पृश्नि॑र्भू॒त्वा दिवं॑ गच्छ॒ ततो॑ नो॒ वृष्टि॒माव॑ह । च॒क्षु॒ष्पा अ॑ग्नेऽसि॒ चक्षु॑र्मे पाहि ॥ १६ ॥

**उ०** परिधीननक्ति अध्वर्युः । वसुभ्यस्त्वा परिधिरुच्यते । वसुभ्योर्थाय त्वामनज्मि । रुद्रेभ्योर्थाय त्वामनज्मि । आदित्येभ्योर्थाय त्वामनज्मि । एतदुक्तं भवति । इत्थंभूता यूयं येन युष्मदभ्यञ्जनेन सवनदेवतानां तृप्तिः । प्रस्तरमादत्ते । संजानाथाम् । हे द्यावापृथिव्यौ, युवां संजानाथाम् । अवगतार्थे भवतं । युवाभ्यां वृष्टिर्दातव्येति । किंच मित्रावरुणौ वां वृष्ट्यावताम् । वायुर्वै वर्षस्येष्टे स चाध्यात्मम् । प्राणोदानभूतौ मित्रावरुणशब्दाभ्यामुच्येते । तद्योयं वायुरध्यात्मगतः स प्रस्तररूपापन्नं यजमानं त्वां वृष्ट्या अवतु पालयतु । 'यजमानो वै प्रस्तरः' इति श्रुतिः । अनक्ति । व्यन्तु वय इति । छन्दांस्यभिधीयन्ते गायत्र्यादीनि । वेतिर्गत्यर्थः । व्यन्तु गच्छन्तु । वयो रूपाणि छन्दांसि प्रस्तरमादायेति शेषः । अक्तं द्रुतमेव प्रस्तरं । रिहाणाः लिहाना आस्वादयन्तः । नीचैर्हरति । मरुतां पृषतीः । बृहती प्रस्तरदेवत्या । चतुर्थः पाद आग्नेयः । आहुतिपरिमाणं त्रिभिः पादैराह । अन्तरिक्षस्थाना मरुतः तेषामादिष्टोपयोजनं पृषत्यो गावो वाहनं । मरुतां संबन्धिनीः पृषतीर्गच्छ । ततः अन्तरिक्षं तर्पयित्वा । वशा त्वं पृश्निर्भूत्वा दिवं गच्छ । 'इयं वै वशापृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशापृश्निः' इति श्रुतिः । पृथिवीसंबन्धिभिर्भोगैर्द्युलोकं तर्पयित्वा इत्युक्तं भवति । ततो नो वृष्टिमावह । ततस्तस्मात् द्युलोकात् नः अस्माकं वृष्टिमावह । वृष्ट्या इमां पृथिवीं तर्पयेत्यर्थः । आत्मानमुपस्पृशति चक्षुष्पाः । हे भगवन्नग्ने, यतस्त्वं चक्षुष्पा भवसि स्वरसप्रवृत्त्या । अतश्चक्षुर्मे पाहि गोपाय ॥ १६ ॥

**म०** 'जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रम्' ( का० ३ । ५ । २४ ) इति । हे मध्यमपरिधे, वसुभ्यः वसुदेवताप्रीत्यर्थं त्वा त्वामनज्मीति शेषः । एवं दक्षिणोत्तरपरिधिमन्त्रौ व्याख्येयौ । परिधित्रयाञ्जनेन सवनत्रयदेवताः प्रीयन्त इति भावः । 'संजानाथामिति प्रस्तरादानम्' ( का० ३ । ६ । ३ ) इति । हे द्यावापृथिवी द्युलोकभूलोकदेव्यौ, युवां संजानाथां गृह्यमाणं प्रस्तरं सम्यगवगच्छतम् । किंच हे प्रस्तर, मित्रावरुणौ प्राणापानवायू वृष्ट्या जलवर्षणेन त्वा त्वामवतां रक्षताम् । 'वायुर्वै वर्षस्येष्टे' ( १ । ८ । ३-१२ ) इत्युक्तत्वाद्वर्षाधीशो वायुः । स चाध्यात्मगतः प्राणोदानरूपो मित्रावरुणशब्दाभ्यामुच्यते । स च प्रस्तररूपं यजमानं वृष्ट्यावतु । 'यजमानो वै प्रस्तरः' ( १ । ८ । १ । ४४ ) इति श्रुतेः । 'अनक्त्येनं व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्याम्' (का० ३ । ६ । ४-७) इति । इतरस्यां ध्रुवायाम् । वयः पक्षिणः व्यन्तु । 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' । पक्षिरूपापन्नानि गायत्र्यादीनि छन्दांसि गच्छन्तु । प्रस्तरमादायेति शेषः । किंभूताः वयः । अक्तं रिहाणाः । अक्तं घृतलिप्तं प्रस्तरं लिहानाः आस्वादयन्तः । रलयोरैक्यम् ॥ 'मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरति' ( का० ३ । ६ । ८ ) इति । एकं तृणं प्रस्तरात्पृथक्कृत्य प्रस्तरं नीचैर्हृत्वाग्नौ प्रक्षिपेदिति सूत्रार्थः । मरुतामिति प्रस्तरदेवत्या बृहती कपिदृष्टा । चतुर्थः पाद आग्नेयः । हे प्रस्तर, त्वं मरुतां पृषतीर्गच्छ । मरुन्नामकानां देवानां संबन्धिनीः पृषतीर्वाहनरूपा अश्वाश्चित्रवर्णा गच्छ प्राप्नुहि । वायुवाहनवद्वेगेन गच्छेत्यर्थः । अन्तरिक्षं वशापृश्निर्भूत्वा । वशा स्वाधीना पृश्निरल्पतनुर्गौर्भूत्वा दिवं गच्छ । कामधेनुवत्तृप्तिकरी भूत्वा स्वर्गं गच्छेत्यर्थः । ततः स्वर्गप्राप्तेरनन्तरं नोऽस्मदर्थं वृष्टिमावह भूलोके वृष्टिमानय । यद्वा । 'इयं वै वशापृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशापृश्निः' ( १ । ८ । ३ ।१५) इति श्रुतेर्वशापृश्निशब्देन भूमिरुच्यते । वशापृश्निर्भूत्वा पृथिवी भूत्वा दिवं गच्छ । पृथिवीसंबन्धिभागानादाय द्युलोकं तर्पयेत्यर्थः । हे प्रस्तर, त्वमन्तरिक्षं गत्वा तत्रस्थान्मरुतः सवाहनान्संतर्प्य स्वर्गं गत्वा देवांश्च संतर्प्य पृथिव्यां वृष्टिं कुर्विल्याहुतिपरिणामः सूचित इति भावः । 'चक्षुष्पा इत्यात्मानमालभते' ( का० ३ । ६ । १५ ) इति । हे अग्ने, त्वं यतश्चक्षुष्पा असि । चक्षुः पातीति चक्षुष्पाः । ज्वालयान्धकारं नि-

वस्य चक्षुःपालकोऽसि । अतो मे मम चक्षुः पाहि पालय । प्रस्तरप्रहरणप्रसक्तं चक्षुष उपद्रवं परिहरेत्यर्थः ॥ १६ ॥

## सप्तदशी ।

यं परि॒धिं प॒र्यध॑त्था॒ अग्ने॑ देव प॒णिभि॒र्गुह्य॑मानः । तं त॑ ए॒तमनु॒ जोषं॑ भराम्ये॒ष नेत्त्वद॑प॒चे॒तया॑ता अ॒ग्नेः प्रि॒यं पाथोऽपी॑तम् ॥ १७ ॥

**उ०** परिधीनुपहरति । यं परिधिम् । त्रिष्टुप्विराड्रूपा यजुरन्ता । अग्नेः प्रियमिति यजुः । आहवनीयोऽग्निरभिधीयते । हे आहवनीय, यं परिधिं पर्यधत्थाः परिहितवानसि । अग्ने देव, पणिभिरसुरैः प्रतिपक्षभूतैः गुह्यमानः । 'गुहू संवरणे' । संध्रियमाणः अवरुह्यमानः । तं त एतम् । तमेतं परिधिं ते तव अनुजोषं भरामि । अनुरुपसर्गः भिन्नक्रमः भरामीत्येतेन संबध्यते । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । अनुहरामि जोषमभिप्रेतम् । तथाच श्रुतिः 'वायुरेवाग्निः तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोति अथैतमेवाप्येतीति' । एतत्सङ्गमात्प्रीतो भवति । एष नेत्त्वदपचेतयातै । एष परिधिः । न इत् नेत् । निपातसमाहारः परिभवार्थः । त्वत् त्वत्तः सकाशात् । अपचेतयातै । आशङ्कायां पञ्चमो लकारः । 'चिती संज्ञाने' । अपचेतयतु । एतदुक्तं भवति । एष परिधिर्मा कथंचित्त्वत्तो वियुक्तः सन् मास्मान्विगतचेतस्कान्कुर्यात् मास्मान्विमनस्कान्करोतु । इतरावनुसमस्यति । अग्नेः प्रियम् । अग्नेः संबन्धि प्रियं पाथः । पाथ इत्यन्ननाम । अभिप्रेतमन्नम् । अपीतम् अपिगच्छतम् ॥ १७ ॥

**म०** 'परिधीननुप्रहरति यं परिधिमिति प्रथमम्' ( का० ३ । ६ । १७ ) इति । एकादशिनस्त्रयोऽष्टकश्च विराड्रूपः प्रथमोऽष्टकः । यं परिधिम् । त्रिष्टुब्विराड्रूपा आग्नेयी यजुरन्ता । अग्नेः प्रियमिति यजुः देवलदृष्टा । हे अग्ने देव आहवनीय, पणिभिरसुरैः गुह्यमानः । 'गुहू संवरणे' संव्रियमाणः संरुध्यमानः सन् त्वं यं परिधिं पश्चिमदिशि पर्यधत्थाः । असुरोपद्रवनिवारणाय परिहितवानसि स्थापितवानसि । ते तव जोषं प्रियं तमेतं परिधिमनु भरामि वह्नौ प्रक्षिपामि । अनुर्भिन्नक्रमः । हृतेर्हस्य भः । एष परिधिः त्वत् त्वत्तः सकाशात् न इत् । इत् एवार्थे । नैव अपचेतयातै मा अपचेतयतु । त्वत्तोऽपगन्तुं मा जानात्वित्यर्थः । त्वय्येव तिष्ठतु । 'चिती संज्ञाने' णिजन्ताल्लेट् । तस्यात्मनेपदे प्रथमैकवचनं तान्तम् । 'टित आत्मनेपदानाम्' ( पा० ३ । ४ । ७९ ) इति तस्यैकारः । 'वैतोऽन्यत्र' ( पा० ३ । ४ । ९६ ) इति लेडेकारस्य पाक्षिक ऐ । 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्याडागमः । गुणायादेशौ अपपूर्वः । अपचेतयातै अपचेतयतु । एष परिधिस्त्वत्तोऽपगतचित्तो मास्त्वित्यर्थः । 'इतरौ च युगपदग्नेः प्रियमिति' ( का० ३ । ६ । १७ ) इति दक्षिणोत्तरौ परिधी युगपत्प्रक्षिपेत् । हे परिधी, अग्नेः प्रियं पाथः युवामपीतमपिगच्छतम् । पाथ इत्यन्ननाम । ( नि० नै० ९ । ७) आहवनीयस्याभिप्रेतमन्नमपि गच्छतम् । अग्नेरन्नत्वं भवद्भ्यां प्राप्यतामित्यर्थः ॥ १७ ॥

## अष्टादशी ।

सꣳस्र॒वभा॑गा स्थे॒षा बृ॒हन्तः॑ प्रस्तरे॒ष्ठाः प॑रि॒धेया॑श्च दे॒वाः । इ॒मां वाच॑म॒भि विश्वे॑ गृ॒णन्त॑ आ॒सद्या॒स्मिन्ब॒र्हिषि॑ मादयध्वꣳ स्वाहा॒ वाट् ॥ १८ ॥

**उ०** जुहूपभृद्भ्यां संस्रवान् जुहोति । सꣳस्रवभागाः । वैश्वदेवी त्रिष्टुप् यजुरन्ता । स्वाहावाडिति यजुः । संस्रवः भागो येषां ते संस्रवभागा विश्वेदेवाः । यद्यपि यूयं संस्रवभागाः स्थ भवथ । तथापि इषा अन्नेन संस्रवलक्षणेन बृहन्तो महान्तः । किंच ये च प्रस्तरेष्ठाः प्रस्तरस्थायिनः ये च परिधेयाः परिधिभवा देवास्तानुप शब्दं प्रत्यक्षीकृत्य ब्रवीमि । इमां मदीयां वाचम् । अभिगृणन्तः अभिष्टुवन्तः । विश्वे सर्वे । आसद्य स्थित्वा । अस्मिन्बर्हिषि । मादयध्वम् तृप्यध्वम् मोदयध्वं वा । स्वाहा व्याख्यातम् । वाट् वषट्कारः परोक्षम् ॥ १८ ॥

**म०** 'सꣳस्रवभागा इति सꣳस्रवान् जुहोति' (का० ३ । ६ । १८ ) इति वैश्वदेवी त्रिष्टुब्यजुरन्ता । स्वाहा वाडिति यजुः । सोमशुष्म ऋषिः । हे विश्वेदेवाः, यूयं संस्रवभागाः स्थ । विलीनमाज्यं संस्रवः स एव भागो येषां ते संस्रवभागाः । तथाविधा भवथ । तथा इषा संस्रवलक्षणेनान्नेन बृहन्तो महान्तः स्थ । किंच ये प्रस्तरेष्ठाः प्रस्तरे तिष्ठन्तीति प्रस्तरेष्ठाः प्रस्तरस्थायिनः । ये च परिधेयाः परिधिभवाः सन्ति ते विश्वेदेवा इमां मदीयां वाचमभिगृणन्तः सर्वत्र वर्णयन्तः । अयं यजमानः सम्यक् यजतीत्येवं सर्वेषां देवानां मध्ये कथयन्तो यूयमस्मिन् बर्हिषि यज्ञ आसद्योपविश्य मादयध्वं तृप्यध्वं मोदध्वं वा । स्वाहेति वाडिति च शब्दौ हविर्दानार्थौ । सर्वथा दत्तमित्यादरं दर्शयितुं शब्दद्वयप्रयोगः । यद्यपि 'स्वाहाकारेण वा वषट्कारेण वा' इति श्रुतेर्वषट्कारो दानार्थः तथापि देवानां परोक्षप्रियत्वात्प्रत्यक्षत्वपरिहाराय वाडितिशब्दः प्रयुक्तः ॥ १८ ॥

## एकोनविंशी ।

घृ॒ताची॑ स्थो॒ धुर्यौ॑ पातꣳ सु॒म्ने स्थः॑ सु॒म्ने मा॑ धत्तम् । य॒ज्ञ नम॑श्च त॒ उप॑ च य॒ज्ञस्य॑ शि॒वे संति॑ष्ठस्व॒ स्विष्टे॑ मे॒ संति॑ष्ठस्व ॥ १९ ॥

**उ०** घृताची इति धुरि स्रुचौ निदधाति । घृतमञ्चति य-

योस्ते घृताच्याविति प्राप्ते घृताची इति पूर्वसवर्णदीर्घादेशः। ये युवां घृताञ्चने स्थः । ते ब्रवीमि । धुर्यौं धुरि भवौ धुर्या-वनड्वाहौ तौ पातं गोपायतम् । किंच सुम्नेस्थः । सुम्नमिति सुखनाम । यस्मात्सुखरूपे भवथः तस्मात्सुम्ने सुखे । मा माम् । धत्तं धापयतम् । यज्ञ नमश्च ते इति वेदिमालभते यजमानः । सूर्पं पवमान ऋषिरुद्दालवान् धनान्नवानित्येते ऋषयोऽस्य यजुषो यज्ञो देवता । हे यज्ञ, नमश्च ते नमोस्तु ते नमस्कारश्चास्तु । ते तुभ्यम् । स यदतिरेचयति तन्नमस्कारेण शमयति । उपच उपचयश्च तेऽस्तु । 'अथ यदूनं करोत्युपचति तेन तदन्यूनं भवति' इति श्रुतिः । यज्ञस्य शिवे संतिष्ठस्व । यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवं तेन तदुभयं शमयति । स्विष्टे मे संतिष्ठस्व । साधु इष्टं स्विष्टं तस्मिन् मे मम संति-ष्ठस्व समाप्तिं याहि ॥ १९ ॥

**म०** 'घृताची इति धुरि निदधाति' ( का० ३ । ६ । १९ ) इति । जुहूपभृतौ शकटधुरि निदध्यात् । हे जुहूपभृतौ, युवां घृताची स्थः । घृतमञ्चतः प्राप्नुत इति घृताच्यौ । पूर्वसवर्ण-दीर्घः । तथाविधे युवां धुर्यावनड्वाहौ पातं रक्षतं। धुरं वहतस्तौ धुर्यौ । किंच युवां सुम्ने सुखरूपे स्थः भवथः तस्मात्सुम्ने सुखे मा मां धत्तं स्थापयतम् ॥ 'यज्ञ नमश्च त इति वेदिमालभते' ( का० ३ । ६ । २१ ) इति । अस्य मन्त्रस्य शूर्पं यवान्कृषि-रुद्दालवान् धानान्तर्वानिति पञ्च ऋषयः यज्ञो देवता । हे यज्ञ, ते तुभ्यं नमः अस्तु । उप उपचयो वृद्धिश्च तेऽस्तु । चकारावन्योन्यसमुच्चयार्थौ । नमउपशब्दाभ्यां यज्ञस्य यदति-रिक्तं यच्च न्यूनं जातं तत् पूर्णं जायते । तथाच श्रुतिः 'स यदतिरेचयति तन्नमस्कारेण शमयति अथ यदूनं करोत्युप-चेति तेन तदन्यूनं भवति' इति । किंच । यज्ञस्य शिवे संतिष्ठस्व अन्यूनातिरिक्तं यज्ञं कुर्वित्यर्थः । 'यद्वै यज्ञस्यान्यूना-तिरिक्तं तच्छिवं तेन तदुभयं शमयति' इति श्रुतेः । मे मम स्विष्टे संतिष्ठस्व । साधु इष्टं स्विष्टम् । शोभने योगे तिष्ठसि । प्राप्तिं कुर्वित्यर्थः ॥ १९ ॥

## विंशी ।

अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या अविषं नः पितुं कृणु । सुषदा योनौ स्वाहावाडग्नये संवेशप-तये स्वाहा सरस्वत्यै यशोभगिन्यै स्वाहा ॥ २० ॥

**उ०** स्रुवं प्रतिगृह्णाति । अग्नेऽदब्धायो । गार्हपत्यो-ऽग्निरुच्यते । हे भगवन्नग्ने, अदब्धायो । दभ्नोतिर्हिंसाकर्मा । आयुरिति मनुष्यनाम । अदब्धः अनवखण्डित आयुर्मनुष्यो यजमानो यस्य स तथोक्तः । तस्य संबोधनम् अदब्धायो । यद्वा अग्निरेव अनवखण्डितायुः । अस्मिन्पक्षे छान्दसी पुंलि-ङ्गता । अशीतम 'अश भोजने' । 'अशू व्याप्तौ' । एतौ धातू संदिह्येते । अशीतम अतिशयेन भोक्तः । अतिशयेन व्याप-क । अशीतमेति दीर्घत्वं छान्दसम् । एवं स्तुत्वा याचते । पाहि मा दिद्योः । दिद्युदिति वज्रनाम । गोपाय मां दिद्युतः । पाहि प्रसित्यै । 'प्रसितिः प्रसयनात्तन्तुर्वा जालं वा' । पाहि मां बन्धनात् । पाहि दुरिष्ट्यै दुर्यागात् पाहि । पाहि दुरद्मन्यै । अद्मेत्यन्ननाम । पाहि दुर्भोजनात् । 'भीत्रार्थानां भयहेतुः' इति सर्वाश्चतुर्थ्यः पञ्चम्यर्थे । अविषं नः पितुं कृणु । पितुरि-त्यन्ननाम । विषरहितमन्नमस्माकं कुरु । सुषदा योनौ । योनि-रिति गृहनाम । साधु सदने गृहे स्थितानामस्माकमेतद्भवतु। स्वाहावाडिति व्याख्यातम् । दक्षिणाग्नौ जुहोति । अग्नये संवेशपतये । स्त्रीपुंसयोरभिलाषपूर्वकमेकत्र शयनं संवेशः । तस्य पतिः संवेशपतिः तस्मै । सरस्वत्यै यशोभगिन्यै । जी-वतः प्रशंसा यशः । भगिनीति संबन्धिशब्दः स्वसेत्यु-च्यते ॥ २० ॥

**म०** सुकुस्रुवं प्रगृह्णात्यग्नेऽदब्धायो' ( का० ३ । ७ । १७ ) इति । दभ्नोतिः हिंसाकर्मा ( निघं० २ । १९ । १ ) । आयु-रिति मनुष्यनाम ( निघं० २ । ३ । १७ ) । अदब्धोऽनुपहिं-सित आयुर्मनुष्यो यजमानो यस्य सोऽदब्धायुः । 'अश भो-जने' । अश्नाति भुङ्क्ते इत्यशी । यद्वा 'अशू व्याप्तौ' अश्नुते व्याप्नोतीत्यशी । अतिशयेनाशी अशीतमः । दीर्घश्छान्दसः । हे अदब्धायो अहिंसितयजमान, हे अशीतम भोक्तृतम, यद्वा व्यापकतम, हे अग्ने गार्हपत्य, मा मां दिद्योः वज्रात्पाहि । शत्रु-प्रयुक्ताद्वज्रसमादायुधान्मां पाहि । दिद्युरिति वज्रनाम ( निघं० २ । २० । १ ) । प्रसित्यै प्रसितेर्बन्धनहेतुभूताज्जालान्मां पाहि । 'प्रसितिः प्रसयनात्तन्तुर्वा जालं वा' ( निरु० ६ । १२ ) इति यास्कः । दुष्टा इष्टिर्दुरिष्टिः अशास्त्रीयो यागस्तस्मान्मां पाहि । दुरद्मनी । अदनमद्मनी दुष्टा अद्मनी दुरद्मनी दुर्भोजनं ततो मां पाहि । चतुर्थ्यः पञ्चम्यर्थे । 'भीत्रार्थानाम्–' ( पा० १ । ४ । २५ ) इति पञ्चमी । किंच नोऽस्माकं पितुमन्नमविषं कृणु हविर्विषरहितं कुरु । योनिरिति गृहनाम ( निघं० ३ । ४ ) । सुष्ठु सद्यते स्थीयते यस्यां सा सुषदा तस्यां सुषदा विभक्तेराकारः । सम्यगवस्थानयोग्ये गृहे मां स्थापयेति शेषः। यद्वा गृहे स्थितानां नोऽस्माकं पितुमविषं कुरु । स्वाहा वाडिति पदे व्याख्याते । 'दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च' ( का० ४ । ७ । १८ ) इति । स्त्रीपुंसयोरभिलाषपूर्वकमेकत्र शयनं संवेशः । तस्य पतिर्योऽग्निस्तस्मै स्वाहा हविर्दत्तम् । जीवतः पुरुषस्य प्रशंसा यशः तस्य यशसो भगिनी वाग्रूपा सरस्वती तस्यै हविर्दत्तम् ॥ २० ॥

## एकविंशी ।

वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभव-स्तेन मह्यं वेदो भूयाः । देवा गातुविदो गातुं वित्त्वा

गातुमित । मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः ॥ २१ ॥

उ० पत्नी वेदं प्रमुञ्चति । वेदोसीति । 'विद ज्ञाने' । वेदिता त्वमसि । यो ह्युपग्रहः स संनिकर्षाद्यज्ञं जानाति । यतस्त्वं वेदोसि अतस्त्वां ब्रवीमि । येन कारणेन त्वं देव वेद देवेभ्यो । देवानामिति विभक्तिव्यत्ययः । वेदः अभवः भूतः तेनैव कारणेन मह्यं मम वेदो भूयाः भवेः । समिष्टयजुर्जुहोति । देवा गातुविद इति । विराडियं त्रिंशदक्षरा । अस्याः पूर्वेणार्धेन देवतां व्यवसृजति । हे देवाः गातुविदः । गातुरिति यज्ञनाम । यज्ञविदः । युष्मत्प्रसादात्तथा भवतु । यथा आगामिनं गातुं यज्ञं वित्त्वा विदित्वा । गातुमित । ततोर्वाक्कालं यज्ञमित आगच्छत । यज्ञपरम्परानुच्छिन्नागमना यूयं भवतेत्यर्थः । एवं देवान् यथायथं विसृज्य अथेदानीं मनसस्पतिमाह । हे मनसस्पते मनसोऽधिपतिश्चन्द्रमाः । हे चन्द्रमः । इमं यज्ञं देव । वाते धाः धारय । वाते हि यज्ञोऽवतिष्ठते । तथाच श्रुतिः । 'वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येति' इति ॥ २१ ॥

म० 'पत्नी वेदं प्रमुञ्चति वेदोऽसि' ( का० ३ । ८ । १ ) इति । हे कुशमुष्टिनिर्मित पदार्थ, त्वं वेदोऽसि । ऋगाद्यात्मकोऽसि । यद्वा वेत्तीति वेदः ज्ञातासि । हे देव द्योतनात्मक वेद, हे वेद, येन कारणेन त्वं देवेभ्यः । षष्ठ्यर्थे चतुर्थी । देवानां वेदोऽभवः ज्ञापकोऽभूः तेन कारणेन मह्यं मम वेदो भूयाः ज्ञापको भव ॥ 'समिष्टयजुर्जुहोति देवा गातुविद इति' ( का० ३ । ८ । ४ ) इति । इयं विराट्छन्दस्का वातदेवत्या मनसस्पतिदृष्टा ऋक् । अस्याः पूर्वार्धेन देवता विसृजति । 'गै शब्दे' । गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यते इति गातुर्यज्ञः तं विदन्ति जानन्तीति गातुविदः । हे गातुविदः यज्ञवेत्तारो देवाः, गातुं वित्त्वा विदित्वा । 'विद ज्ञाने' । अस्मदीयो यज्ञः प्रवृत्त इति ज्ञात्वा । गातुमित यज्ञं प्रत्यागच्छत । यद्वा गातुर्गन्तव्यो मार्गः तं गच्छत । अस्मदीययज्ञेन तुष्टाः सन्तः स्वमार्गं गच्छत । एवं देवान्विसृज्य चन्द्रं प्रत्याह । हे मनसस्पते, मनोऽधिपश्चन्द्रः । यद्वा देवान् यष्टु मनसः प्रवर्तकः परमेश्वरः तं प्रत्युच्यते । हे मनसस्पते परमेश्वर, हे देव, इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते ददामि । त्वं च तं यज्ञं वाते वायुरूपे देवे धाः स्थापय । वाते हि यज्ञोऽवतिष्ठते । तदुक्तं श्रुत्या 'वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येति' इति ॥ २१ ॥

## द्वाविंशी ।

सं ब॒र्हिर॑ङ्क्ताꣳ ह॒विषा॑ घृ॒तेन॒ समा॑दि॒त्यैर्वसु॑भिः॒ सम्म॒रुद्भिः॑ । समिन्द्रो॑ वि॒श्वदे॑वेभिरङ्क्तां दि॒व्यं नभो॑ गच्छतु॒ यत्स्वाहा॑ ॥ २२ ॥

उ० बर्हिर्जुहोति । संबर्हिरङ्क्ताम् । बर्हिर्देवत्या विराड्रूपा त्रिष्टुप् । संबर्हिरङ्क्ताम् । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' । बर्हिरिति द्वितीया । समङ्क्तां बर्हिः । क इन्द्र इत्युपरिष्टात् श्रूयते स इहाभिसंबध्यते । इन्द्रः समङ्क्तां बर्हिः । केन । हविषा घृतेन । कैः सहितः समङ्क्तात् । 'दित्यैर्वसुभिर्मरुद्भिः विश्वेर्देवैः सहित इन्द्रो बर्हिः समङ्क्ताम् । तच्चाक्तं सत् दिव्यं नभो गच्छतु । यद्दिव्यं दिवि भवं नभः । नभ इत्यादित्यनाम । आदित्यलक्षणं ज्योतिस्तद्गच्छतु ॥ २२ ॥

म० 'बर्हिः संबर्हिरिति' ( का० ३ । ८ । ५ ) इति बर्हिर्जुहोति । इयमृक् त्रिष्टुप् विराड्रूपा बर्हिर्देवत्या । इन्द्रो हविषा हविःसंस्कारयुक्तेन घृतेन बर्हिः दर्भं समङ्क्ताम् सम्यगञ्जनोपेतं करोतु । स चन्द्रः केवलो न किंतु आदित्यैर्वसुभिर्मरुद्भिः विश्वदेवेभिर्विश्वनामकैश्च गणदेवैः सहितः समङ्क्ताम् । समित्यस्योपसर्गस्यावृत्त्या अङ्क्तामित्यस्य क्रियापदस्याप्यावृत्तिर्बोद्धव्या । वस्वादिसहितेनेन्द्रेण समङ्क्तां तद् बर्हिर्यद्दिव्यं नभो आदित्यलक्षणं ज्योतिः तद्गच्छतु आदित्यं प्राप्नोतु । स्वाहा इदं बर्हिर्देवोद्देशेन दत्तम् । नभः इत्यादित्यनामसु ( निघ० १ । ४ ) पठितं दिवि भवं दिव्यम् ॥ २२ ॥

## त्रयोविंशी ।

कस्त्वा॒ विमु॑ञ्चति॒ स त्वा॒ विमु॑ञ्चति॒ कस्मै॑ त्वा॒ विमु॑ञ्चति॒ तस्मै॑ त्वा॒ विमु॑ञ्चति । पोषा॑य॒ रक्ष॑सां भा॒गो॑ऽसि ॥ २३ ॥

उ० वेद्यां प्रणीतां निनयति । कस्त्वा विमुञ्चति । व्याख्यातम् । अयं तु विशेषः । तत्र यज्ञं युनक्ति इह तु विमुञ्चति । पोषाय यजमानस्य पोषाय निनयामीति शेषः । कणानपास्यति । 'रक्षसां भागोसि' इति निगदव्याख्यातम् ॥२३॥

म० 'वेद्यां प्रणीतां निनयति परीत्य कस्त्वेति' ( का० ३ । ८ । ६ ) इति । व्याख्यातो मन्त्रः प्रजापतिदैवतः । तत्र यज्ञयोगे नियुक्तः । अत्र तु यज्ञविमोके । पोषाय यजमानं पुत्रादिभिः पोषयितुं त्वां निनयामीति शेषः । यज्ञं प्रयुज्याविमोके यजमानस्याप्रतिष्ठापत्तेर्विमोकः कार्यः । 'यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति' ( का० ३ । ८ । ७ ) इति श्रुत्यन्तरवचनात् । पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनꣳ रक्षसामितीति । हे कणसमूह, त्वं रक्षसां भागोसि तेषां नीचजातित्वान्निकृष्टकणरूपो भागो युक्तः ॥ २३ ॥

## चतुर्विंशी ।

सं वर्च॑सा॒ पय॑सा॒ सं त॒नूभि॒रग॑न्महि॒ मन॑सा॒ सꣳ शि॒वेन॑ । त्वष्टा॑ सु॒दत्रो॒ विद॑धातु॒ रायो॑ऽनुमार्ष्टु त॒न्वो॒ यद्विलि॑ष्टम् ॥ २४ ॥

**उ०** इत उत्तरं यजमानं पूर्णपात्रं प्रतिगृह्णाति । संवर्चसेति त्वाष्ट्री त्रिष्टुप् । समित्युपसर्गः अगन्महीत्याख्यातेन संबध्यते । समगन्महि । ब्रह्मवर्चसा ब्रह्मवर्चसेन । पयसा गोभिः तनूभिः भार्यापुत्रादिभिः । मनसा च शिवेन शान्तेन । यज्ञ[illegible]गच्छतः पुरुषस्य सर्वमेवैतदुपैति वर्चआदि अतोऽनेन पुनराप्यायति । किंच त्वष्टा सुदत्रः कल्याणदानः विदधातु । रायो धनानि । किंच अनुमार्ष्टु शुन्धयतु । तन्वः शरीरस्य यद्विलिष्टं विश्लिष्टम् ॥ २४ ॥

**म०** त्वष्टृदेवत्या त्रिष्टुप् । इतः परं याजमानम् । 'पूर्णपात्रं निनयति परीत्य सन्नतं यजमानोऽञ्जलिना प्रतिगृह्णाति सं वर्चसेति सुखं विमृष्टः' (का० ३ । ८ । ८—१० ) इति । समित्युपसर्गोऽगन्महीत्यनेन संबद्धः प्रत्येकम् । वर्चसा ब्रह्मवर्चसेन वयं समगन्महि सङ्गता भवामः । पयसा क्षीरादिरसेन समगन्महि । तनूभिरनुष्ठानक्षमैः शरीरावयवैः । यद्वा तनूभिर्भार्यापुत्रादिभिः समगन्महि । शिवेन शान्तेन कर्मश्रद्धायुक्तेन मनसा समगन्महि । यज्ञमुपगच्छतो नरस्य वर्चसाद्यपैति तदनेन पुनराप्याययति । किंच सुदत्रः शोभनदानः त्वष्टा रायो धनानि विदधातु करोतु । तन्वः शरीरस्य मदीयस्य यत् विलिष्टं विशेषेण न्यूनमङ्गं तदनुमार्ष्टु न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु । धनस्य शरीरस्य पुष्टिं करोत्वित्यर्थः । सुष्ठु ददातीति सुदत्रः सुपूर्वाद्ददातेः त्रन् । 'सर्वधातुभ्यः' (उ० ४ । १६० ) इति त्रन् । बाहुलकत्वाद्ध्रस्वः ॥ २४ ॥

## पञ्चविंशी ।

दि॒वि विष्णु॒र्व्य॑क्रꣳस्त॒ जाग॑तेन॒ छन्द॑सा॒ ततो॒ निर्भ॑क्तो॒ यो॒ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मोन्तरि॑क्षे॒ विष्णु॒र्व्य॑क्रꣳस्त॒ त्रैष्टु॑भेन॒ छन्द॑सा॒ ततो॒ निर्भ॑क्तो॒ यो॒ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः पृ॑थि॒व्यां विष्णु॒र्व्य॑क्रꣳस्त गाय॒त्रेण॒ छन्द॑सा॒ ततो॒ निर्भ॑क्तो॒ यो॒ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मो॒स्माद॒न्नाद॒स्यै प्र॑ति॒ष्ठाया॒ अग॑न्म॒ स्वः॒ संज्योति॑षाभूम ॥ २५ ॥

**उ०** विष्णुक्रमान्क्रमते । दिवि विष्णुः द्युलोके विष्णुर्यज्ञो मदीयः व्यक्रंस्त विक्रान्तवान् । जागतेन छन्दसा ततो निर्भक्तः । ततो द्युलोकात् निर्भक्तो निर्गतभागः कृतः । योऽस्मान्द्वेष्टि हिनस्ति । यं च वयं द्विष्मः हिंस्मः । अनेनोत्तरावपि मन्त्रौ व्याख्यातौ । भागमवेक्षते । अस्मादन्नात् । अस्मात् यज्ञभागात् । निर्भक्त इत्यनुषङ्गः । भूमिमवेक्षते । अस्यै प्रतिष्ठायै । अस्या भूमेः प्रतिष्ठायाः निर्भक्त इत्यनुषङ्गः । प्राङीक्षते । अगन्म स्वः । अनेन कर्मणा अगन्म गताः । कम् । स्वर्गं यज्ञं सूर्यं देवान् । स्वरव्ययमनेकार्थम् । आहवनीयमीक्षते । संज्योतिषाभूम । समित्येकीभावमाचष्टे । आहवनीयलक्षणेन ज्योतिषा एकीभूताः ॥ २५ ॥



**म०** 'विष्णुक्रमान्क्रमते दिवि विष्णुरिति प्रतिमन्त्रम्' ( का० ३ । ८ । ११ ) इति । विष्णुपादबुद्ध्या स्वपादस्य भूमौ प्रक्षेपा विष्णुक्रमाः । विष्णुर्यज्ञपुरुषः जागतेन छन्दसा जगतीच्छन्दोरूपेण स्वकीयपादेन दिवि द्युलोके व्यक्रंस्त विशेषेण क्रमणं कृतवान् । तथा सति ततो द्युलोकात् निर्भक्तो भागरहितः कृत्वा निःसारितः । कः । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । योऽस्मान् दृष्ट्वा न प्रीयते यं च दृष्ट्वा वयं न प्रीयामहे स द्विविधोऽपि शत्रुर्दिवो निःसारितः । एवमुत्तरावपि विष्णुक्रममन्त्रौ व्याख्येयौ । 'अस्मादन्नादिति भागमवेक्षते' ( का० ३ । ८ । १३ ) इति । योऽयं भागोऽवेक्ष्यते अस्मादन्नाद्यजमानभागान्निर्भक्त इति वाक्यशेषोऽनुवर्तनीयः । 'अस्यै प्रतिष्ठाया इति भूमिं' ( का० ३ । ८ । १४ ) इति । अवेक्षत इति चतुर्षु मन्त्रविनियोगेष्वनुवर्तते । अस्यै अस्याः पुरतो दृश्यमानायाः प्रतिष्ठाहेतोर्यज्ञियभूमेः निर्भक्त इत्यादि पूर्ववत् । 'अगन्म स्वरिति प्राक्' ( का० ३ । ८ । १५ ) इति पूर्वस्यां दिशि स्थितं स्वः स्वर्गं सूर्यं वा वयमगन्म प्राप्ताः । यज्ञानुष्ठानेन । 'संज्योतिषेत्याहवनीयम्' ( का० ३ । ८ । १६ ) इति । ज्योतिषाहवनीयलक्षणेन वयं समभूम सङ्गता अभूम ॥ २५ ॥

## षड्विंशी ।

स्व॒यं॒भूर॑सि॒ श्रेष्ठो॑ र॒श्मिर्व॑र्चो॒दा अ॑सि॒ वर्चो॑ मे देहि । सूर्य॑स्या॒वृत॒मन्वाव॑र्ते ॥ २६ ॥

**उ०** सूर्यमुदीक्षते । स्वयंभूरसि । अकृतकस्त्वं भवसि । श्रेष्ठः प्रशस्ततमः रश्मिः । सप्त रश्मय आदित्यस्य । तत्र चतसृषु दिक्षु चत्वारो रश्मयः । एकोधस्तादेक उपरिष्टात् । मण्डलशरीराहंमानी हिरण्यगर्भोऽख्यः पुरुषः सप्तमः श्रेष्ठो रश्मिरिति । तथाच श्रुतिः 'अथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोकः' इति । यस्त्वं स्वयंभूरसि श्रेष्ठश्च रश्मिस्तं त्वां ब्रवीमि । वर्चोदा असि । ब्रह्मवर्चसस्य स्वरसेनैव स्वभावेनैव दातासि, अतो वर्चो मे मह्यं देहि । आवर्तते सूर्यस्यावृतम् । आवर्तनमावृत् । सूर्यस्यावर्तनमनु अहम् आवर्ते । 'तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमनु अवर्तते' इति श्रुतिः ॥ २६ ॥

**म०** 'स्वयंभूरिति सूर्यम्' (का० ३ । ८ । १७ ) इति । हे सूर्य, त्वं स्वयंभूरकृतकः स्वयंसिद्धोऽसि । श्रेष्ठः प्रशस्यतमो रश्मिः मण्डलशरीराभिमानी हिरण्यगर्भाख्योऽसि । सूर्यस्य सप्त रश्मयः सन्ति । चतुर्दिक्षु चत्वारः । एक उपर्येकोऽधस्तात्सप्तमो मण्डलाभिमानी हिरण्यगर्भः पुरुषः स श्रेष्ठः स त्वमसि । यतस्त्वं वर्चोदा असि तेजसो दातासि अतो मे वर्चः ब्रह्मवर्चसं देहि ॥ 'सूर्यस्येत्यावर्तते प्रदक्षिणम्' ( का० ३ । ८ । १९ ) इति । आवर्तनमावृत् । सूर्यस्य संबन्धिनीमा-

व्रतमावर्तनमनुसृत्याहमपि आवर्ते प्रादक्षिण्येनावर्तनं करोमि ॥ २६ ॥

## सप्तविंशी।

अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳसुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः। अस्थूरिणौ गार्हपत्यानि सन्तु शतꣳ हिमाः सूर्यस्यावृतमन्वावर्ते ॥ २७ ॥

उ० गार्हपत्यमुपतिष्ठते। अग्ने गृहपते हे भगवन्नग्ने, गृहपते सुगृहपतिः शोभनो गृहपतिः। अहं त्वया गृहपतिना गृहाणां पालयित्रा भूयासं भवेयम्। किंच सुगृहपतिस्त्वं मया अग्ने, सहायेन गृहपतिना भूयाः भवेः। एवमनेन प्रकारेण। अस्थूरिणौ गार्हपत्यानि सन्तु। अन्यतरतो युक्तं शकटं स्थूरीत्युच्यते। तत्वतः प्रतिषिध्यते अस्थूरीति। लुप्तोपमं चैतत्। यथा उभयतोयुक्तं शकटम्। एवं नौ आवयोः गार्हपत्यानि गृहपतिसंयुक्तानि कर्माणि सन्तु। शतं हिमाः शतं वर्षाणि। अथावर्तते। सूर्यस्यावृतमन्वावर्ते इति व्याख्यातम् ॥ २७ ॥

म० 'गार्हपत्यमुपतिष्ठतेऽग्ने गृहपते' (का० ३। ८। २१) इति। हे गृहपते अस्मदीयगृहस्य पालक हे अग्ने, त्वया गृहपतिना गृहपालकेन कृत्वा। त्वत्प्रसादेनेत्यर्थः। अहं सुगृहपतिः शोभनो गृहपतिः भूयासं भवेयम्। तथा हे अग्ने, त्वमपि मया गृहपतिना मदीयसेवयेत्यर्थः। सुगृहपतिः शोभनो गृहपालको भूयाः भव। अग्नेपदस्यावृत्तिरादरार्था। एवं सति नौ आवयोर्गार्हपत्यानि गृहपतिभ्यां स्त्रीपुरुषाभ्यां निष्पाद्यानि कर्माणि शतं हिमाः वर्षाणि शतवर्षपर्यन्तमस्थूरीव सन्तु। निरन्तरमवहितानि प्रवर्तन्ताम्। एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि न स्थूरि अस्थूरि। लुप्तोपमानम्। बलीवर्दयुक्तं शकटं यथा निरन्तरम् अव्यवहितं प्रसरति तथास्माकं गार्हपत्यानि सन्तु। 'गृहपतिना संयुक्ते ञ्यः' (पा० ४। ४। ९०) इति ञ्यप्रत्ययः 'सूर्यस्येत्यावर्तते प्रदक्षिणम्' (का० ३। ८। २३) इति व्याख्यातम् ॥ २७॥

## अष्टाविंशी।

अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधीदमहं य एवास्मि सोऽस्मि ॥ २८॥

उ० व्रतं विसृजते। अग्ने व्रतपते हे अग्ने व्रतपते, व्रतमहम् अचारिषं चरितवानस्मि। तदशकं शक्तवानस्मि। तन्मे मम आराधि राद्धं फलम् अभिसमृद्धमित्यर्थः। द्वितीयो व्रतविसर्गमन्त्रः। इदमहम् हे अग्ने, त्वत्साक्षिकं व्रतं गृहीत्वा इदं कर्म समाप्य य एव कर्मणः पुरा अहमस्मि मनुष्यः स एवास्मि ॥ २८ ॥

म० 'व्रतं विसृजते येनोपेयात्' (का० ३। ८। २९) इति। व्रतग्रहणे मन्त्रद्वयमुक्तं तयोर्मध्ये येन व्रतादानं कृतं प्रथमेन द्वितीयेन वा। अत्रापि तदनुसारेण व्रतं विसृजेत्। हे अग्ने हे व्रतपते कर्मपालक, व्रतमचारिषं कर्मानुष्ठितवानस्मि तदशकं शकितवान्। त्वत्प्रसादात्तत्कर्मशक्तोऽभवम्। त्वया च तन्मे मदीयं कर्म अराधि साधितम्। द्वितीयो मन्त्रः। हे अग्ने, इदं कर्म समाप्य योहं कर्मणः पुरा अस्मि स एव मनुष्योऽस्मि ॥ २८॥

इति दर्शपूर्णमासेष्टिमन्त्राः समाप्ताः ॥

## एकोनत्रिंशी।

अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा। अपहता असुरा रक्षाꣳसि वेदिषदः ॥२९॥

उ० अतः परं पिण्डपितृयज्ञिया मन्त्राः। प्रजापतेरार्षम्। अग्नौ जुहोति। अग्नये कव्यवाहनायस्वाहा। कवयः क्रान्तदर्शिनाः पितरस्तेषां संबन्धि हविः कव्यम्। तद्वोढव्यं यस्यायमधिकारः स कव्यवाहनः। सोमायपितृमतेस्वाहा। पितृमान् पितृसंयुक्तः। वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति लिङ्गाद्दैवावेतौ मन्त्रौ। उल्लिखति। अपहताः। अपहताः अस्मात् स्थानात् असुराः रक्षांसि च वेदिषदः वेद्यां सीदन्तीति वेदिषदः ॥ २९ ॥

अतः परं पिण्डपितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः ॥

म० 'सारतण्डुलमपूर्णꣳ श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च' (का० ४। १। ७)। कवयः क्रान्तदर्शिनः पितरस्तेषां संबन्धि कव्यं हविः। तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनः। तस्मै अग्नये स्वाहा हविर्दत्तम्। पितृमान् पितृसंयुक्तः तस्मै सोमनामकाय देवाय स्वाहा हविर्दत्तम्। स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नदानश्रुतेर्दैवाविमौ मन्त्रौ। 'दक्षिणेनोल्लिखत्यपहता इति' (का० ४। १। ८) इति वेद्यां सीदन्ति वेदिषदः तादृशा असुराः अपहता वेदिसकाशादपगताः। तथा रक्षांसि वेद्या अपहतानि। असुरत्वं रक्षस्त्वं चेति जातिविशेषौ देवविरोधिनौ ॥ २९ ॥

## त्रिंशी।

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ ३० ॥

उ० उल्मुकं परस्तात्करोति। ये रूपाणीति त्रिष्टुबाग्नेयी। ये रूपाणि प्रतिमुञ्चमानाः। ये पितृरूपाणि आत्मनि प्रतिमुञ्चमानाः। प्रतिपूर्वो मुञ्चतिर्बन्धने वर्तते। आत्मनि बध्नन्तः असुराः सन्तो भवन्तः स्वधया पित्र्येणान्नेन हेतुभूतेन अ-

स्माभिरेतत्स्वादितव्यमिति चरन्ति संचरन्ति । किंच परापुरः पराक्रान्ताः पुरः परापुरः । शरीराणि महान्तीति निपुरः निकृष्टाः पुरो निपुरः । सूक्ष्माणि शरीराणि ये भरन्ति बिभ्रति धारयन्ति अग्निस्तानसुरान् लोकात् स्थानात् प्रणुदाति प्रणुदतु प्रेरयतु। अस्मात्पितृलोकात् ॥ ३० ॥

**म०** 'उल्मुकं परस्तात्करोति ये रूपाणीति' (का० ४। १।९)। इयं त्रिष्टुप् कव्यवाहनाग्निदेवत्या । स्वधया पैतृकान्नेन निमित्तेन पितृणामन्नमस्माभिर्भक्षणीयमिति हेतोः स्वीयरूपाणि प्रतिमुञ्चमानाः पितृसमानरूपाणि स्वीकुर्वन्तः सन्तो ये असुरा देवविरोधिनश्चरन्ति पितृयज्ञस्थाने प्रसरन्ति । तथा ये असुराः परापुरः निपुरश्च भरन्ति । पराक्रान्ताः पुरः परापुरः स्थूलदेहान् । निकृष्टाः पुरः निपुरः सूक्ष्मदेहान् ये धारयन्ति। स्वमसुरत्वं प्रच्छादयितुं ये स्थूलसूक्ष्मशरीराणि बिभ्रति। अग्निरुल्मुकरूपः । अस्माल्लोकात् पितृयज्ञस्थानात्तानसुरान् प्रणुदाति प्रणुदतु प्रेरयतु । प्रकर्षेणापसारयत्वित्यर्थः ॥ ३० ॥

## एकत्रिंशी ।

अत्र॑ पितरो मादयध्वं यथाभा॒गमावृ॑षायध्वम् । अमी॑मदन्त पि॒तरो॑ यथाभा॒गमावृ॑षायिषत ॥ ३१॥

**उ०** उदङ्कास्ते अत्र पितरः । बृहती । अत्र अस्मिन्बर्हिषि हे पितरः, मादयध्वं मोदध्वम् । किंच यथाभागं यो यस्य भागः तं यथाभागम् । आवृषायध्वम् । आङ्पूर्वाद्वृषशब्दात् 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । वृष इव स्वेच्छया महद्भिर्ग्रासैरेतान्पिण्डानश्नीत । आवृत्यामीमदन्तेति जपति । अमीमदन्त हर्षं प्राप्तवन्तः पितरो यथाविभागं च आवृषायिषत अशितवन्तः । 'यथाभागमाशिषुरित्येवैतदाह' इति श्रुतिः ॥ ३१ ॥

**म०** 'अत्र पितर इत्युक्त्वोदङ्कास्त आ तमनादावृत्यामीमदन्तेति जपतीति' (का० ४।१।१३–१४)।आ तमनात् श्वासनिरोधेन ग्लानिपर्यन्तमुदङ्मुख आस्त इति सूत्रार्थः । हे पितरः, यूयमत्रास्मिन् बर्हिषि मादयध्वं हृष्टा भवत । ततो हविषि यथाभागं स्वं स्वं भागमनतिक्रम्य आवृषायध्वं समन्ताद्वृषवदाचरत । यथा वृषः स्वाभीष्टं घासं प्राप्य तृप्तिपर्यन्तं स्वीकरोति तद्वत्स्वीकुरुत । आङ्पूर्वाद्वृषशब्दात् 'कर्तुः क्यङ् सलोपश्च' (पा० ३।१।११) इति क्यङ् ततो लोट्। पितरः अमीमदन्त । यान् पितॄन् प्रति मादयध्वमित्युक्तं ते पितरोऽमीमदन्त हृष्टाः यथाभागमावृषायिषत स्वं भागमनतिक्रम्य वृषवत् स्वीचक्रुः । लुङि रूपम् । 'यथाभागमाशिषुरित्येवैतदाह' (२।४।२।२२) इति श्रुतिः । भागं स्वं जक्षुरित्यर्थः ॥ ३१ ॥

## द्वात्रिंशी ।

नमो॑ वः पितरो॒ रसा॑य॒ नमो॑ वः पितरः॒ शोषा॑य॒ नमो॑ वः पितरो जी॒वाय॒ नमो॑ वः पितरः स्व॒धायै॒ नमो॑ वः पितरो घोरा॑य॒ नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पितरः॒ पित॑रो॒ नमो॑ वो गृ॒हान्नः॑ पितरो दत्त स॒तो वः॑ पितरो दे॒ष्मैतद्वः॑ पितरो॒ वास॒ आध॑त्त ॥ ३२ ॥

**उ०** नमो व इत्यञ्जलिं करोति । षट्कृत्वा नमस्करोति । 'षड्वा ऋतवः पितरः' इति श्रुतिः । व्याख्यातम् । 'नमो वः पितरो रसाय' हे पितरः, वः युष्माकं संबन्धिने रसाय रसभूताय वसन्ताय नमः । वसन्ते हि मध्वादयो रसाः संभवन्तीत्यत एवं नमस्क्रियते । एवं वक्ष्यमाणा अपि मन्त्रा व्याख्येयाः । शोषाय शोषप्रभावाय ग्रीष्माय नमः । शुष्यन्ति हि ग्रीष्मे ओषधयः । जीवाय जीवनहेतुभूताय वर्षाभ्यो नमः । स्वधायै 'स्वाहावै शरत् स्वधावै पितृणामन्नम्' इति श्रुतिः । शरदि हि प्रायशोऽन्नानि भवन्ति । घोराय विषमाय । विषमो हि हेमन्तः प्राणिनां शीतप्रचुरत्वात् । मन्यवे। मन्युः क्रोधः । क्रोध इव हि शिशिर ओषधीर्दहति । नमो वः पितरः पितरो नमो वः । अभ्यासे भूयांसमर्थं मन्यन्ते । गृहान्नः पितरो दत्त । भार्यापुत्रपौत्रादयो गृहा उच्यन्ते । गृहान्नः अस्मभ्यं हे पितरः, दत्त। किंच तथा युष्मत्प्रमोदादस्माकं भवतु । यथा नः गृहे सतो विद्यमानान् द्रव्यान् वो युष्मभ्यं दद्म । सूत्राणि ददाति । एतद्वः युष्माकं हे पितरो वासः परिधानम् ॥ ३२ ॥

**म०** 'नमो व इत्यञ्जलिं करोतीति' (का० ४।१।१५)। षट्कृत्वो नमस्करोति । 'षड्वा ऋतवः पितरः' इति श्रुतेः । रसादिशब्देन वसन्तादिषड्तव उच्यन्ते । ते च पितॄणां स्वरूपभूताः अतस्तेभ्यो नमस्करोति । हे पितरः, वो युष्माकं संबन्धिने रसाय रसभूताय वसन्ताय नमः । यतो मध्वादयो रसा वृक्षेषु जायन्तेऽतो रसशब्देन वसन्तः । युष्मद्रूपाय वसन्ताय नम इत्यर्थः । एवमग्रेतना मन्त्रा व्याख्येयाः । शोषाय। शुष्यन्त्योषधयो यत्रेति शोषो ग्रीष्मः । जीवाय जीवनहेतुभूताय जलाय वर्षर्तवे । स्वधायै शरदे । 'स्वधा वै शरत् स्वधा वै पितृणामन्नं' इति श्रुतेः । शरदि हि प्रायशोऽन्नानि भवन्ति । घोराय विषमाय हेमन्ताय । हेमन्तः शीतप्रचुरत्वेन दुःखदत्वात् घोरः । मन्यवे मन्युः क्रोधस्तद्रूपाय शिशिराय । शिशिरस्तु सर्वौषधीर्दहति । हे पितरः, एवंविधऋतुरूपेभ्यो वो युष्मभ्यं नमः । हे पितरः, वो नम इत्यभ्यास आदरातिशयार्थः । हे पितरः, नोऽस्मभ्यं गृहान् दत्त । भार्यापुत्रपौत्रादयो गृहाः । हे पितरः, वो युष्मभ्यं सतः

विद्यमानात् देष्म ददामः । सतो धनाद्युष्मभ्यमस्माभिर्दातव्यम् । ददतामस्माकं कदाचिद्व्यक्षयो मास्त्वित्यर्थः ॥ 'एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णां दशा वा वयस्युत्तरे यजमानलोमानि वेति' ( का० ४।७।१६-१८ ) । हे पितरः, वो युष्मभ्यमेतद्वासःसूत्रमेव परिधानमस्तु ॥ ३२ ॥

## त्रयस्त्रिंशी ।

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥ ३३ ॥

**उ०** मध्यपिण्डं प्राश्नाति पुत्रकामा । आधत्त । गायत्री । हे पितरः, आधत्त गर्भम् । कुमारं पुष्करस्रजम् । स्रक्शब्देन मुण्डमालोच्यते । पुष्करशब्देन पद्मानि । आश्विनौ पुष्करस्रजौ अश्विभ्यां पुत्रोपमानं क्रियते । किंच यथा येन प्रकारेण इह अस्मिन्नेव ऋतौ पुरुषः पूरयिता देवपितृमनुष्याणाम् । असत् भूयात् तथा आधत्तेति संबन्धः ॥ ३३ ॥

**म०** 'आधत्तेति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति' (का० ४।१।२२) । गायत्री पितृदेवत्या । हे पितरः, यथा इहास्मिन्नेव ऋतौ पुरुषः असत् पुरुषः देवपितृमनुष्याणामपेक्षितार्थस्य पूरयिता भूयात् । तथा कुमारं गर्भं पुत्ररूपं गर्भं यूयमाधत्त संपादयत । किंभूतं कुमारम् । येन प्रकारेणेह पुष्करस्रजं पुष्कराणां पद्मानां स्रक् माला ययोस्तौ पुष्करस्रजौ । अश्विनौ अश्विनीकुमारौ । पुष्करस्रजौ पद्ममालिनौ देवानां भिषजौ । तत्तुल्यः कुमारः पुष्करस्रक् तम् । अश्विसाम्यकथनेन रोगहीनं सुन्दरं च पुत्रमाधत्तेति सूचितम् ॥ ३३ ॥

## चतुस्त्रिंशी ।

ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ॥ ३४ ॥

**उ०** अपो निनयति । ऊर्जं वहन्ती अब्दैवत्या विराट् । हे आपः, यूयम् ऊर्जमन्नं वहत्यौ नानाविधम् अमृतं घृतं पयः कीलालम् अन्नरसम् । कीले अलं पर्याप्तः समर्थोऽन्नमिष्टं कर्तुं रस इति कीलालः । कीलं बन्धनम् । अलमत्यन्तमन्नस्येति वा कीलालम् । 'तस्माद्यावन्मात्र इवान्नस्य रसः सर्वमन्नमवति' इत्यादि श्रुतिः । परिस्रुतं सुराम् । स्वधास्थ । 'स्वधा वै पितृणामन्नम्' इति श्रुतिः । 'डुधाञ् धारणपोषणयोः' । स्वमात्मीयं पितृणां धानं पोषणं स्वधास्थ तर्पयत मे पितॄन् । स्वधा भवथ । ततस्तर्पयत मे पितॄन् ॥ ३४ ॥

इति उवटकृतौ मन्त्रभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

**म०** 'ऊर्जमित्यपो निषिञ्चतीति' (का० ४।१।१९) । अब्देवत्या विराट् । हे आपः, यूयं स्वधास्थ पित्र्यहविःस्वरूपा भवथ । अतो मे पितॄंस्तर्पयत । कथंभूता आपः । परिस्रुतं वहन्तीः । पुष्पेभ्यो निःसृतं सारं वहन्त्यः । तच्च सारं त्रिविधम् ऊर्जशब्देन घृतशब्देन पयःशब्देन चाभिधेयम् । तत्रोर्जशब्दोऽन्नगतं स्वादुत्वमभिधत्ते । घृतपयसी प्रसिद्धे । तच्च त्रिविधमपि कीदृशममृतं । सर्वरोगविनाशकं मृत्युनाशकं च । नास्ति मृतं यस्मात्तत् । पुनः कीदृशम् । कीलालम् 'कील बन्धने' । कीलनं कीलो बन्धः तमलति वारयतीति कीलालम् । 'अलं वारणपर्याप्त्योः' इति धातुः । सर्वबन्धनिवर्तकम् । ईदृशस्य त्रिविधस्य सारस्य वहनादपां पितृतर्पकत्वमुपपन्नम् ॥ ३४ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
इध्मप्रोक्षादिपित्र्यान्तो द्वितीयोऽध्याय ईरितः ॥ २ ॥

---

# अथ तृतीयोऽध्यायः ।

## तत्र प्रथमा ।

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥ १ ॥

**उ०** समिधाग्निम् । आधानमन्त्राः प्रागग्निर्ज्योतिरित्येतेभ्यः। देवानामार्षं प्रजापतेर्वाग्नेर्वा । आग्नेय्यश्चतस्रो गायत्र्यः । आश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति । समिधाग्निं दुवस्यत समिधाश्वत्थसमिधा अग्निं दुवस्यत । दुवस्यतिः परिचरणार्थः । परिचरत । ततो जातं सन्तम् पूर्णाहुतिसंबन्धिभिर्घृतैः बोधत अवगतार्थं कुरुत । अतिथिम् अतिथिधर्माणम् । ततोऽनन्तरं हविःसंबन्धिनि आस्मिन्हाव्या जुहोतन । आजुहोत अस्मिन्नग्नौ हव्या हवींषि ॥ १ ॥

**म०** अध्यायद्वयेन दर्शपौर्णमासेष्टिविषया मन्त्रा उक्ताः । अथाधानमन्त्रा उच्यन्ते प्रागग्निर्ज्योतिरित्यन्तेभ्यः (ख० ६) । देवानां प्रजापतेरग्नेर्गन्धर्वाणां वार्षम् । आग्नेय्यश्चतस्रो गायत्र्यः । तत्र कात्यायनः 'अमावास्यायामग्न्याधेयम्' (४।७।१) इत्यादिना कालविशेषादीनि ब्रह्मौदनपाकपर्यन्तानि कार्याण्युक्त्वा पश्चादिदमाह । 'तं चातुष्प्राश्यं पचत्युद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम्' ( ४।८।४।५ ) इति । अस्यार्थः । चतुर्भिर्ऋत्विग्भिः प्राशितुं योग्यमोदनं पक्त्वा बहिरुद्वास्य तस्यौदनस्य मध्ये घृतसेचनाय निम्नं स्थानं कृत्वा तत्सर्पिषापूर्य तिस्रः समिधस्तस्मिन्सर्पिष्यभ्यज्य तिसृभिर्ऋग्भिरग्नावभ्यादधातीति । समिधाग्निम् । हे ऋत्विजः, यूयं समिधा कृत्वा अग्निं दुवस्यत परिचरत । दुवस्यतिः परिचरणार्थः । सम्यगिध्यते दीप्यते वह्निर्यया काष्ठरूपया सा समित्तया । घृतैः होष्यमाणैः पूर्णाहुतिसंबन्धिभिरतिथिमातिथ्यकर्मणा पूजनीयमग्निं बोधयत प्रज्वालयत । अस्मिन् प्रज्वलितेऽग्नौ हव्या नानाविधानि हवींषि आ जुहोतन सर्वतो जुहुत । 'तप्तनप्तनथनाश्च' (पा० ७।१।४५) इति तनबादेशः ॥ १ ॥

## द्वितीया ।

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥ २ ॥

**उ०** जपति । सुसमिद्धाय साधु समिद्धाय । शोचिषे शोचिष्मते । दीप्तिमते ज्वलनाय । घृतं तीव्रं पटुतरं गव्यं ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कारैः संस्कृतमित्यर्थः । जुहोतन जुहुत कुरुत । नेत्यर्थका उपजना भवन्ति कर्तन हन्तन यातनेति । अग्नये जातवेदसे जातप्रज्ञानाय ॥ २ ॥

**म०** हे ऋत्विजः, अग्नये यूयं घृतेन जुहोतन जुहुत । जुहोतेः परस्य लोट्मध्यमबहुवचनस्य तस्य 'तप्तनप्तनथनाश्च' (पा० ७ । १ । ४५) इति तनबादेशे गुणे जुहोतनेति रूपम् । किंभूतायाग्नये । सुसमिद्धाय शोभनतया सम्यग्दीप्ताय । अतएव शोचिषे शोचिष्मते दीप्तिमते ज्वलिताय । जातवेदसे जातं वेत्ति वेदयति वा जातवेदास्तस्मै । जातप्रज्ञानाय वा । किंभूतं घृतम् । तीव्रं स्वादुतमं समग्रं वा पटुतरं वा । ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कृतमित्यर्थः ॥ २ ॥

## तृतीया ।

तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥ ३ ॥

**उ०** तं त्वा समिद्भिः यस्त्वमुक्तगुणस्तं त्वां समिद्भिः । हे अङ्गिरः । अङ्गतिर्गत्यर्थः । रो मत्वर्थीयः । गमनवन् , । 'अङ्गिरा उ ह्यग्निः' इति श्रुतिः । घृतेन वर्धयामसि वर्धयाम । 'इदन्तो मसि' इति सिकारश्छान्दसः । बृहत् महत् शोच दीप्यस्व । यविष्ठ्य युवतम । इष्ठनि परभूते टेः 'स्थूलदूरयुव–' इत्यदिना यविष्ठ्य इति सिद्धम् । स्वार्थिको यकारस्तद्धितः ॥ ३ ॥

**म०** हे अङ्गिरः, अङ्गतिर्गत्यर्थः । अङ्गिर्गतिरस्यास्तीति अङ्गिराः । रस्प्रत्ययो मत्वर्थीयः । तत्तद्यागेषु गमनवन्नग्ने । 'अङ्गिरा उ ह्यग्निः' (१ । ४ । १ । २५) ति श्रुतेः तं य उक्तगुणस्तथाविधं त्वा त्वां समिद्भिर्यज्ञसंबन्धिकाष्ठैर्घृतेन संस्कृताज्येन च वर्धयामसि वर्धयामः प्रवृद्धं कुर्मः । 'इदन्तो मसि' (पा० ७ । १ । ४६) इति सिकारश्छान्दसः । हे यविष्ठ्य युवतम, कदाचिदपि स्थविरत्वरहित इत्यर्थः । तथाविधाग्ने, बृहत् महत् प्रवृद्धं यथा तथा शोच दीप्यस्व । 'द्व्यचोऽतस्तिङः' (पा० ६ । ३ । १३५) इति संहितायां दीर्घः । अतिशयेन युवा यविष्ठः । इष्ठनि परे 'स्थूलदूरयुव–' (पा० ६ । ४ । १५६) इत्यादिना वा टिलोपे गुणे च रूपम् । यविष्ठ एव यविष्ठ्यः । स्वार्थे तद्धितयकारः ॥ ३ ॥

## चतुर्थी ।

उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥ ४ ॥

**उ०** उप त्वा उप यन्तु त्वां हे अग्ने, हविष्मतीः हविषा संयुक्ताः । घृताचीः घृताञ्चनाः समिधः । हर्यत । 'हर्य कान्तौ' । हर्यतिः प्रेप्साकर्मा । प्रेप्सावन्, ताश्च त्वां प्रत्युपगच्छन्तीः जुषस्व आसेवस्व समिधः मम संबन्धिनीः ॥ ४ ॥

**म०** 'उप त्वेति जपतीति' (का० ४ । ८ । ६) हे अग्ने, हविष्मतीर्हविष्मत्यः हविर्युक्ताः घृताचीः घृताच्यो घृताक्ता एताः समिधस्त्वा त्वामुपयन्तु प्रत्युपगच्छन्तु । हे हर्यत प्रेप्सावन्, 'हर्यतः । आचके' (निघ० २ । ६ । १०) इति कान्तिकर्मसु पठितत्वात् । तथाविध हे अग्ने, मम मदीयाः समिधः त्वं जुषस्व सेवस्व । त्वामुपयतीरङ्गीकुर्वित्यर्थः । 'छन्दसि परेऽपि' 'व्यवहिताश्च' (पा० १ । ४ । ८१–८२) इति । उपयन्तु इत्युपसर्गक्रियापदयोर्व्यवहितत्वम् । हविष्मतीरित्यादौ 'वा छन्दसि' (पा० ६ । १ । १०६) इति पूर्वसवर्णदीर्घत्वम् ॥ ४ ॥

## पञ्चमी ।

भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा । तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ ५ ॥

**उ०** भूर्भुवःस्वः । महाव्याहृतयः । प्रजापतेरार्षम् । गार्हपत्याहवनीययोराधानमन्त्राः । पृथिव्यन्तरिक्षद्युलोका अभिधेयाः, ब्रह्मक्षत्रविशो वा वर्णाः, अन्नप्रजापशवो वा । श्रुतितो व्याख्यातमेतत् । इध्मपूर्वार्धं गृहीत्वा यजमानो जपति । द्यौरिव भूम्ना । उपरिष्टादारभ्यैतद्यजुर्व्याख्येयं । तथाहि सुबोधं भवति । तस्याः ते तव हे पृथिवि देवयजनि देवा यस्यामिज्यन्ते इति देवयजनी तस्याः संबोधनं क्रियते हे देवयजनि, ते पृष्ठे उपरि । अग्निमन्नादम् अन्नस्यात्तारम् । अन्नाद्याय अन्नादनाय अन्नभक्षणाय । आदधे स्थापयामि । तस्याः पृथिव्याः पृष्ठेऽग्निमाधाय । द्यौरिव भूम्ना । यथा द्यौर्भूम्ना नक्षत्रबहुत्वेन बह्वी एवं पुत्रादिभिर्बहुभिर्भूयासम् । पृथिवीव वरिम्णा । यथा पृथिवी वरिम्णा उरुत्वेन सता सर्वप्राणिनामाश्रयभूता एवमहं महत्त्वेन सता सर्वप्राणिनामाश्रयभूतो भूयासम् । अथवा यथाक्रममेव व्याख्यायते । द्यौरिव भूम्ना भूयासम् पृथिवीव वरिम्णा भूयासम् । हे अग्ने, त्वत्प्रसादात् । पृथिव्युच्यते । तस्याः ते तव पृथिवि देवयजनि, पृष्ठे उपरि अग्निमन्नादमन्नभक्षणाय आदधे । यस्यास्तव मन्वादयोऽपि अन्नाद्याय संवृताः संजाताः ॥ ५ ॥

**म०** 'दारुभिर्ज्वलन्तमादधाति भूर्भुव इति संभारेषु' (का० ४।९।११) इति । 'भूर्भुवःस्वरिति पूर्ववदिति च' (४।९।१६) अस्यार्थः । आपो हिरण्यमूषाखूत्करः शर्करेति पञ्च संभारान्संपाद्य स्फ्येनोल्लिखितायां शुद्धायां भूमौ तान्संभारानवस्थाप्य तेषु शुष्ककाष्ठैर्ज्वलन्तमग्निं भूर्भुवःस्वरिति पञ्चाक्षराण्युच्चारयन्नादध्यात् । इदमाहवनीयाधानम् । एवमष्टाक्षरत्वादग्नेर्गायत्रत्वं श्रुत्योक्तम् । गायत्रीसहितस्याग्नेः प्रजापतिमुखादुत्पन्नत्वात् । अथ मन्त्रार्थः । एतेष्वाधानमन्त्रेषु भूरिति प्रथमा व्याहृतिः । भुव इति द्वितीया । स्वः इति तृतीया । एतास्तिस्रो व्याहृतयः पृथिव्यादिलोकत्रयनामानि । एतदुच्चारणपूर्वकं प्रजापतिना लोकत्रयस्य सृष्टत्वात् । अत एवाभिः स्थापयन् लोकत्रयमनेन स्मरेत् । एतासां व्याहृतीनां महिमा भूयादिति । भूर्भुवःस्वःशब्देन ब्रह्मक्षत्रविशो वा आत्मप्रजापशवो वा । सर्वे मद्वशगा भूयासुरिति प्रार्थयन्नग्नीनादध्यादित्यर्थः । 'इध्मपूर्वार्धं गृहीत्वा द्यौरिव भूम्नेत्याहेति' (का० ४।९।१७) । देवा इज्यन्ते यस्यां पृथिव्यां सा देवयजनी तथाविधे हे पृथिवि, तस्यास्ते तव पृष्ठे देवयजनयोग्यायास्तवोपरि । अन्नादमन्नस्य हुतस्यात्तारमग्निं गार्हपत्यादिरूपमादधे स्थापयामि । किमर्थम् । अन्नाद्याय । अन्नं च तदाद्यं च तस्मै आद्यस्यान्नस्यात्तुं योग्यस्यान्नस्य सिद्ध्यर्थम् । आहिताग्न्यादित्वात्परनिपातः (पा० २।२।३७) । यद्वान्नस्याद्याय भक्षणाय । यस्याः पृष्ठेऽग्निमाधाय भूम्ना द्यौरिव भूयासमिति शेषः । बहोर्भावो भूमा तेन । यथा द्यौर्नक्षत्रबहुत्वेन बह्वी एवं पुत्रपश्वादिभिर्बहुर्भूयासम् । वरिम्णा पृथिवीव भूयासम् । उरोर्भावो वरिमा तेन । यथा पृथिवी उरुत्वेन सर्वप्राणिनामाश्रयभूता एवमहं महत्त्वेन सर्वप्राणिनामाश्रयभूतो भूयासम् । यद्वा पूर्वार्धस्यायमर्थः । किंभूतमग्निम् । भूम्ना द्यौरिव वर्तमानम् । यथा द्यौर्नक्षत्रादिबहुत्वेन युक्ता तथा ज्वालाबहुत्वेन युक्तम् । किंच वरिम्णा पृथिवीव स्थितम् । यथा पृथिवी सर्वप्राण्याश्रयत्वरूपेण श्रेष्ठत्वेनोपेता तथा सर्ववस्तुशोधकत्वरूपेण श्रेष्ठत्वेनोपेतम् । अतएव क्वचिद्विधिवाक्ये अग्नये पावकायेत्याम्नातम् ॥ ५ ॥

## षष्ठी ।

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ ६ ॥

**उ०** आयं गौः पृश्निः । सार्पराज्ञ आर्षम् । गायत्रस्तृचः आहवनीयाद्युपस्थाने विनियुक्तः । अग्निः परापररूपेण स्तूयते । आयं गौः पृश्निरक्रमीत् । आक्रमीत् आक्रमते ऐश्वर्यरूपेणायमग्निः गौः गन्ता । सर्वासु तासु तासु क्रियासु पृश्निर्नानारूपः असदन्मातरं पुरः इमं लोकमग्निरूपेणानुगृह्य ततः प्रातरादित्यात्मना सीदति मातरं पृथिवीं पुरः पुरस्तात्प्राच्यां दिशि । किंच पितरं च प्रयन्त्स्वः पितरं द्युलोकं च प्रयन् गच्छन् सीदतीत्यनुवर्तते । स्वः स्वर्गे आदित्यः ॥ ६ ॥

**म०** 'आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिर्दक्षिणाग्निमादधातीति' (का० ४।९।१८-१९) । आयं गौरित्यादीनां तिसृणामृचां सार्पराज्ञीति नामधेयम् । सर्पराज्ञी कद्रूः पृथिव्यभिमानिनी । तया दृष्टत्वात् ताभिर्ऋग्भिराहवनीयमुपतिष्ठते । ततो दक्षिणाग्निमादध्यादिति सूत्रार्थः । गायत्रस्तृचः । अग्निः परावररूपेण स्तूयते । अयं दृश्यमानोऽग्निः आ अक्रमीत् सर्वत आहवनीयगार्हपत्यदक्षिणाग्निस्थानेषु सर्वतः क्रमणं पादविक्षेपं कृतवान् । किंभूतोऽग्निः । गच्छतीति गौः यज्ञनिष्पत्तये तत्तद्यजमानगृहेषु गन्ता । 'गमेर्डोप्रत्ययः' (उ० २।६६) । तथा पृश्निः चित्रवर्णः । लोहितशुक्लादिबहुविधज्वालोपेतः । आक्रमणमेवाह । पुरः प्राच्यां दिशि मातरं पृथिवीमसदत् आसीदत् । आहवनीयरूपेण प्राप्तवान् । तथा स्वः प्रयन् आदित्यरूपेण स्वर्गे संचरन् पितरं च द्युलोकमपि असदत्प्राप्तवान् । स्वःशब्देन सूर्यः (निघ० १।४।१) । द्युलोकभूलोकयोर्मातापितृत्वमन्यत्रापि श्रूयते । 'द्यौः पिता पृथिवी माता' इति ॥ ६ ॥

## सप्तमी

अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ ७ ॥

**उ०** एवमादित्यरूपेणाग्निं स्तुत्वा अथेदानीं वायुरूपेण स्तौति । अन्तश्चरति रोचनास्य । द्यावापृथिव्योरन्तरं चरति अग्नेर्वायवाख्या शक्तिः । 'अन्तरिक्षेऽयं तिर्यङ् वायुः पवते' इति श्रुतेः । रोचना । 'रुच दीप्तौ' । दीपना अस्य अग्नेः । किं कुर्वाणा चरति । प्राणादपानती । 'अन प्राणने' । सर्वप्राणिषु प्राणादनन्तरम् अपानती चरति अपानादनन्तरं प्राणती चरतीति सामर्थ्यादयमर्थो लभ्यते । एवं वाय्वादित्याभ्यां स्वशक्तिभ्यामिदं जगदनुगृह्णाथ य एनामेवमुपतिष्ठति तस्य किं करोतीत्याह । व्यख्यन्महिषो दिवम् । विविधं तस्य पुरुषस्योपभोगार्थमवलोकयति पश्यति भोग्यत्वेन दिवं द्युलोकम् । महिषः । 'अग्निर्वै महिषः स हीदं जातो महान्' इति श्रुतिः ॥ ७ ॥

**म०** एवमादित्यरूपेणाग्निं स्तुत्वा वायुरूपेण स्तौति । अस्याग्नेः रोचना । 'रुच दीप्तौ' दीप्तिः काचिच्छक्तिः वाय्वाख्या । अन्तश्चरति द्यावापृथिव्योर्मध्ये शरीरमध्ये चरति । 'अन्तरिक्षेऽयं तिर्यङ्वायुः पवते' इति श्रुतिः । किं कुर्वती । प्राणादपानती सर्वशरीरेषु प्राणव्यापारादनन्तरमपानव्यापारं कुर्वती । अपानादनन्तरं प्राणतीत्यप्यर्थो लभ्यते सामर्थ्यात् प्राणापानयोर्वायुविशेषयोः प्रेरिकेत्यर्थः । सति हि जठराग्नौ जीवनहेतोरौष्ण्यस्य शरीरे सद्भावात्प्राणापानौ प्रवर्तेते । तस्मादग्निः

प्राणापानरूप इत्यर्थः । एवं वाय्वादिलाभ्यां स्वशक्तिभूताभ्यामिदं जगदनुगृह्य य एनमुपतिष्ठते तस्य किं करोतीत्याह । व्यख्यदिति । महिषोऽग्निः दिवं व्यख्यत् । द्युलोकं भोगस्थानमनुष्ठातृभ्यो विशेषेण प्रकाशितवान् प्रकाशयति च । महि माहात्म्यं यागकर्तृस्वरूपं सनोति ददाति स महिषः । 'अग्निर्वै महिषः स इदं जातो महान्' इति श्रुतेः । व्यख्यत् विपूर्वस्य ख्या प्रकथन इत्यस्य 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा० ३ । १ । ५२) इति च्लेरङ् । आलोपः । 'छन्दसि लुङ्लङ्लिटः' (पा० ३ । ४ । ६) इति सर्वकालेषु लङ् । अपान इवाचरतीत्यपानती । क्विबन्तादपानशब्दाच्छतृप्रत्ययः । 'उगितश्च' (पा० ४ । १ । ६) इति ङीप् ॥ ७ ॥

## अष्टमी ।

त्रि॒ꣳशद्धाम॒ विरा॑जति॒ वाक् प॑त॒ङ्गाय॑ धीयते ।
प्रति॒वस्तो॒रह॒ द्युभिः॑ ॥ ८ ॥

**उ०** त्रिꣳशद्धाम । त्रिंशत्सु धामस्विति विभक्तिव्यत्ययः । 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानि' इति स्थानान्यत्राभिप्रेतानि । त्रिंशच्चाहोरात्रे मुहूर्तास्त इह गृह्यन्ते । त्रिंशत्सु स्थानेषु मुहूर्ताख्येषु स्तुतिभिरग्निरयं स्तूयते । यज्ञे या वाग्विराजति शोभते स्तूयमाना सा वाक् । पतङ्गाय पतन्गच्छतीति पतङ्गोऽग्निः स ह्यरण्याः पतन् गार्हपत्यभावं गच्छति गार्हपत्यादाहवनीयमित्यादिना तादर्थ्ये चतुर्थी । पतङ्गार्थं धीयते अग्न्यर्थमुच्चार्यत इत्यर्थः । एतदुक्तं भवति । सर्वदेवतासंबन्धिनीभिः स्तुतिभिरग्निरेव स्तूयते । स हि सर्वात्मा । प्रतिवस्तोरहद्युभिः । वस्तोः द्युःभानुः इत्यहर्नामसु पठितम् । अह इति निपातो विनिग्रहार्थीयः । न केवलं या त्रिꣳशत्सु धामसु वाग्विराजति सा पतङ्गाय धीयते किं तर्हि प्रतिवस्तोः प्रत्यहं च या स्तुतिलक्षणा वाक् सा च द्युभिः अहोभिरुत्सवभूतैः । उत्सवाः यागपारायणादयः । स्तुतिलक्षणा वाक् सा च पतङ्गाय धीयते नान्यस्यै देवतायै ॥ ८ ॥

**म०** 'सुपां सुलुक्' (पा० ७ । १ । ३२) इत्यादिना त्रिंशच्छब्दाद्धामशब्दाच्च सुपो लुक् । 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति' (निरु० ९ । २८ । २९) । अत्र धामशब्देन स्थानमुच्यते । अहोरात्रस्य त्रिंशन्मुहूर्ता धामशब्देनाभिप्रेताः । त्रिंशत्सु धामसु मुहूर्ताख्येषु स्थानेषु या वाक् विराजति शोभते स्तूयमाना सा वाक् पतङ्गाय धीयते अग्न्यर्थमुच्चार्यते । पतन् गच्छतीति पतङ्गः अग्निः । स ह्यरण्योः पतन् गार्हपत्यभावं गच्छति गार्हपत्यात्पतन्नाहवनीयतामित्यादि । सर्वदेवसंबन्धिनीभिः स्तुतिभिरग्निरेव सर्वात्मत्वात्स्तूयत इत्यर्थः । न केवलं त्रिंशत्सु धामसु या वाग्विराजति सैव पतङ्गाय धीयते । किं तर्हि प्रतिवस्तोः प्रत्यहं या स्तुतिलक्षणा वाक् या च द्युभिः अहोभिः यागपारायणाद्युत्सवभूतैः स्तुतिलक्षणा वाग्विराजति सा पतङ्गायैव धीयते नान्यस्यै देवतायै । 'वस्तोः द्युः भानुः' (निघ० १ । ९ । १) इत्यहर्नामसु पठितम् । अहेति निपातो विनिग्रहे । सर्वकालं सर्वा स्तुतिवागग्न्यर्थैवेत्यर्थः । यद्वास्या ऋचोऽयमर्थः । धाम स्थानं तच्च त्रिंशत् त्रिंशत्संख्याकं मासगतदिनभेदेन । तद्विराजति विशेषेण दीप्यते । आलस्यरहितानां यजमानानामनुष्ठानेनाहवनीयाद्यग्नीनां स्थानं मासगतेषु त्रिंशत्संख्याकेषु दिनेषु विशेषेण शोभत इत्यर्थः । वाक् स्तुतिरूपा पतङ्गायाग्नये धीयते उच्चार्यते । पतङ्गः पक्षी । तत्सदृशत्वादग्निः पतङ्गः । यथा कश्चित्पक्षी एतस्मात्स्थानात्स्थानान्तरं गच्छति तद्वदग्निरपि गार्हपत्यस्थानादाहवनीयस्थानं गच्छतीत्यग्नेः पक्षिसादृश्यम् । अहेति निपातः पूर्वोक्तनिषेधार्थः । अस्या ऋचः पूर्वार्धेऽग्निमाहात्म्यज्ञापकं वाक्यद्वयेनार्थद्वयं यदुक्तं तावदेव न भवति किंत्वन्यदप्युच्यत इत्यर्थः । वस्तोरित्यहर्नामसु पठितम् । प्रति वस्तोः प्रत्यहं द्युभिः द्योतनैरयमग्निः स्तूयत इत्यध्याहारः । द्युर्द्योतनं दीप्यतेः प्रयोगः ॥ ८ ॥

इत्यग्न्याधेयमन्त्राः ॥

## नवमी ।

अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निः स्वाहा॒ सूर्यो॒ ज्योति॒र्ज्योतिः॒ सूर्यः॒ स्वाहा॑ । अ॒ग्निर्वर्चो॒ ज्योति॒र्वर्चः॒ स्वाहा॒ सूर्यो॒ वर्चो॒ ज्योति॒र्वर्चः॒ स्वाहा॑ । ज्योतिः॒ सूर्यः॒ सूर्यो॒ ज्योतिः॒ स्वाहा॑ ॥ ९ ॥

**उ०** अग्निर्ज्योतिः । अग्निहोत्रमन्त्राः प्रागुपप्रयन्त इत्येतस्मात् । प्रजापतेरार्षम् । अग्निर्वर्च इति द्वे तक्षापश्यत्परां जीवलश्चैलकिः । सप्त लिङ्गोक्तदेवता गायत्र्यः । पूर्वाः पञ्चैकपदाः । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । 'नमः स्वस्तिस्वाहा' इत्यादिना सूत्रेण प्रथमायाः स्थाने चतुर्थी । अग्निर्ज्योतिर्ज्योतिरग्निरिति मन्त्राभ्यासः । अभ्यासे भूयांसमर्थं मन्यन्ते इत्यभिप्रायः । अथ कोर्थः । अग्नये ज्योतिषे स्वाहा सुहुतमस्तु । अथवा स्वस्याहानमस्तु । हानं हाः नहा अहाः स्वस्य अहा अपरित्यागः । आत्मनो द्रव्यस्य वेति । अथवा योऽग्निर्ज्योतिर्ज्योतिश्चाग्निस्तस्मै स्वाहा । सूर्यो ज्योतिरित्यप्यनेनैव व्याख्यातम् । अथ ब्रह्मवर्चसकामस्य । अग्निर्वर्चः योऽग्निर्वर्चसा अनन्यभूतः यस्य च ज्योतिर्वर्चसा अनन्यभूतम् तद्रूपं तस्मै हुतमस्तु । अनेनैव सूर्यो वर्च इत्याख्यातः प्रातर्होममन्त्रः । ज्योतिः सूर्य इति व्याख्यातः सूर्यो ज्योतिरित्यनेनैव ॥ ९ ॥

**म०** अथाग्निहोत्रहोममन्त्राः अग्निर्ज्योतिरित्यारभ्य उपप्रयन्त (ख० ११) इत्यतः प्राक् । तन्मन्त्राणां प्रजापतिर्ऋषिः सामान्यतः । यत्र ऋषिविशेषोऽभिधीयतेऽनुक्रमणीकारैस्तत्र द्वावप्यृषी । 'यथाग्निर्वर्चो द्वे तक्षापश्यत्परां जीवलश्चैलकिरिति'

(अनु० १।११) सप्त लिङ्गोक्तदेवता गायत्र्यः आद्याः पञ्चैकपदाः । अग्निर्ज्योतिः सूर्यो ज्योतिः एते द्वे एकपदे गायत्र्यौ तक्षा मुनिरपश्यत् । परां ज्योतिः सूर्यः इतीमां चेलकस्य पुत्रो जीवल ऋषिरपश्यदित्यर्थः । अथ 'प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरितीति' (का० ४।१४।१४) या समित् प्रदीप्ता तामभिलक्ष्य जुहुयात् । अग्निर्ज्योतिषमिति काण्वशाखोक्तमन्त्रेण (अध्या० ३।२।१) समित्प्रक्षेपः । मन्त्रार्थस्तु । योऽयमग्निर्देवः स एव ज्योतिर्दृश्यमानज्योतिःस्वरूपम् । यच्चेदं दृश्यमानं ज्योतिः तदेवाग्निर्देवः । देवस्य ज्योतिषश्च कदाचिदप्यवियोगादेकत्वेन प्रतिपादनम् । स्वाहा ज्योतीरूपायाग्नये हविः प्रदत्तम् । अयं सायंकालीनोऽग्निहोत्रहोममन्त्रः । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्होममन्त्रः सायंहोममन्त्रवद्व्याख्येयः । सूर्यसंबन्धि तेजो रात्रावग्निं प्रविशतीति सायमग्निर्ज्योतिरिति मन्त्रो युक्तः । उदयकालेष्वग्निसंबन्धि ज्योतिः सूर्यं प्रविशति । तस्मात्प्रातः सूर्यो ज्योतिरिति मन्त्रः । 'अग्निमादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हि तेजसी संपद्येते उद्यन्तं वादित्यमग्निरनु समारोहति । तस्माद्धूम एवाग्नेर्दिवा ददृशे' इति तित्तिरिश्रुतेः । 'अग्निर्वर्च इति ब्रह्मवर्चसकामस्येति' (का० ४।१४।१५) ब्रह्मवर्चसकामस्तु अग्निर्वर्चः सूर्यो वर्च इति सायं प्रातश्च जुहुयात् । योऽग्निर्वर्चोऽनन्यभूतः । यस्य तज्ज्योतिर्वर्चोऽनन्यभूतम् । तस्मै सुहुतमस्तु । एवं 'सूर्यो वर्च इति ज्योतिः सूर्य इति वा प्रातरिति' (का० ४।१५।११) प्रातर्होममन्त्रः ज्योतिः सूर्य इति । यत् ज्योतिः स सूर्य एव । यः सूर्यः स ज्योतिरेव । तस्मै स्वाहा ॥ ९ ॥

## दशमी ।

सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्निर्वेतु स्वाहा । सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्यो वेतु स्वाहा ॥ १० ॥

**उ०** अन्यो होममन्त्रे विकल्पः । सजूर्देवेन । अग्निरुच्यते । सजूर्देवेन सवित्रा । 'जुषी प्रीतिसेवनयोः' । योऽग्निः समानप्रीतिः देवेन सवित्रा समानप्रीतिश्च । रात्र्या इन्द्रवत्या इन्द्रसंयुक्तया स जुषाणः सेवमानः आस्वादयन् आहुतिं वेतु । वेतिरिह पानार्थः स्वादनार्थो वा । स्वाहा सुहुतं हविरेव भवतु । अथ प्रातः सूर्य उच्यते । सजूर्देवेन सवित्रा समानप्रीतिर्देवेन सवित्रा भूत्वा समानप्रीतिश्च उषसा । उषसाशब्देन सूर्यप्रभोच्यते । इन्द्रसंयुक्तया भूत्वा जुषाणः सेवमानः स्वादयन् सूर्यः वेतु पिबतु । स्वाहेति व्याख्यातम् ॥ १० ॥

**म०** 'सजूरिति वेति' (का० ४।१४।९) जुहोतीत्यनुवर्तते । पूर्वोक्तमन्त्रैः सह सजूरित्यादिमन्त्रद्वयं विकल्पितम् । सजूर्देवेन । अग्निर्वेतु अस्मदीयं कर्म प्राप्नोतु । यद्वा वेतु आहुतिं भक्षयतु । 'वी प्रजननकान्त्यसनखादनेषु' इति धातोः प्रयोगः । किंभूतोऽग्निः । सवित्रा देवेन प्रेरकेण परमेश्वरेण सह सजूः । 'जुषी प्रीतिसेवनयोः' जोषणं जूः समाना जूः प्रीतिर्यस्यासौ सजूः । तथा इन्द्रवत्या रात्र्या इन्द्रेण देवेनोपेतया रात्रिदेवतया सजूः समानप्रीतिः । तथा जुषाणोऽस्मासु प्रीतियुक्तः । य उक्तगुणवानग्निर्देवस्तस्मै स्वाहा हूयमानमिदं द्रव्यं दत्तम् । प्रातः सूर्य उच्यते । अग्निमन्त्रवदयं सूर्यमन्त्रो व्याख्येयः । पूर्वार्धे रात्रिदेवतायाः स्थाने उषोदेवता योजनीया ॥ १० ॥

## एकादशी ।

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ ११ ॥

**उ०** अथ यजमानाग्न्युपस्थानम् । उपप्रयन्तो अध्वरं सुपोषः पोषैरित्यन्तं देवानामार्षम् । आद्ये द्वे आग्नेय्यौ गायत्र्यौ । उपप्रयन्तः उपगच्छन्तः अध्वरं यज्ञम् । मन्त्रम् आर्षम् । वोचेम ब्रूयाम । अग्नये आरे दूरेऽपि स्थिताय अस्मे च शृण्वते अस्माकं च मन्त्रं शृण्वते अस्मन्मन्त्रश्रवणादभिमुखायेत्यर्थः ॥ ११ ॥

**म०** 'सायमाहुत्याᳬं हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण न वा तिस्रस्त्रिरुपप्रयन्तो ११ अस्य प्रत्नां १६ परि ते ३६ चित्रावसविति १८ चेति' (का० ४।१२।१—३) आहवनीयगार्हपत्यावग्नी उपप्रयन्तो अध्वरमित्यारभ्य सुपोषः पोषैरित्यन्तं ३७ बृहदुपस्थानं देवदृष्टम् । तत्राद्ये द्वे आग्नेय्यौ गायत्र्यौ क्रमेण गोतमविरूपाभ्यामपि दृष्टे । आहवनीयोपस्थानमन्त्रा आदौ । वयमनुष्ठातारोऽग्नयेऽभ्यर्थं मन्त्रं मननेन त्राणकरं शब्दसमूहं वोचेम उच्याम । किंभूता वयम् । अध्वरं यज्ञमुपप्रयन्तः उपगच्छन्तः । किंभूतायाग्नये । आरे दूरे अस्मे अस्माकं समीपे इति शेषः । शृण्वते दूरे समीपे चास्मदीयं वाक्यं श्रोतुमुद्युक्ताय । वोचेमेति वक्तेराशीर्लिङि परस्मैपदोत्तमबहुवचने परे 'लिङ्याशिष्यङ्' (पा० ३।१।८६) इत्यङ् । यासुट् 'अतो येयः' (पा० ७।२।८०) 'वच उम्' (पा० ७।४।२०) 'छन्दस्युभयथा' (पा० ३।४।११७) इति सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' (पा० ७।२।७९) इति सलोपः । यलोपः । वोचेम अस्मे 'सुपां सुलुग्' (पा० ७।१।३९) इति शेआदेश आप्तः ॥ ११ ॥

## द्वादशी ।

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाᳬं रेताᳬंसि जिन्वति ॥ १२ ॥

**उ०** अग्निर्मूर्धा । परापररूपेण व्यवस्थितोऽस्यामृच्यग्निः स्तूयते । अभिनयेन दर्शयति । योयं 'अग्निर्मूर्धा दिवः'

अहनि आदित्यात्मा द्युलोकस्य मूर्धा भवति । अयमेव ककुत् । ककुदिति महन्नामसु पठ्यते । तस्य कृतान्तलोपस्यैतद्रूपम् । अयमेव महानात्मा जगतः कारणमित्यर्थः । अयमेव पृथिव्याः पतिः । तापपाकप्रकाशादिभिरयमग्निः सर्वाः प्रजा अनुगृह्णातीत्ययमभिप्रायः । किंच अयमेव अपां रेतांसि जिन्वति । या एता द्युलोकात्पतन्ति तासामपां रेतांसि । रेतः कारणमुच्यते । तानि कारणानि जिन्वति । जिन्वतिः प्रीतिकर्मा । तर्पयति परिपुष्यतीति यावत् । आहुतिः परिणममाना वृष्टिं जनयतीत्येतद्दर्शयति । तथाच श्रुतिरग्निहोत्रं प्रकृत्य भवति 'ते वा एते आहुती हुते उत्क्रामतः' इत्यारभ्य 'यस्ततः पुत्रो जायते स लोकः' इत्येवमन्ता आहुतिपरिणामवादिनी ॥ १२ ॥

**म०** अयमग्निः अपां रेतांसि जिन्वति द्युलोकाद्वृष्टिरूपेण पतन्तीनामपां रेतांसि साराणि व्रीहियवादिरूपेण परिणतानि जिन्वति । जिन्वतिः प्रीतिकर्मा । प्रीणयति । वर्धयतीत्यर्थः । यद्वा अपां रेतांसि कारणानि जिन्वति पुष्णाति । आहुतिपरिणामेन वृष्टिं जनयतीत्यर्थः । 'ते वा एते आहुती उत्क्रामतः' इत्यादिश्रुतेः । किंभूतोऽग्निः । दिवो मूर्धा द्युलोकस्य शिरःसमानः । यथा शिरः शरीरस्योपरि वर्तते तथायमग्निरहनि स्वतेजसा आदित्ये प्रविष्टत्वादादित्यरूपेण द्युलोकस्योपरि वर्तते । तथा ककुत् । ककुच्छब्दो गोपृष्ठोन्नतावयववाची तद्वदादित्यरूपेण सर्वोपरिस्थितत्वात्ककुत्सदृशः । यद्वा ककुदमिति महन्नाम ( निघ० ३ । ३ । १९ ) । तस्यान्तलोप आर्षः । महत् जगत्कारणमित्यर्थः । तथा पृथिव्याः पतिः पालकः । दाहपाकप्रकाशैर्भूलोकस्थानामुपकारकत्वात् ॥ १२ ॥

## त्रयोदशी ।

उ॒भा वा॑मिन्द्राग्नी आहु॒वध्या॑ उ॒भा राध॑सः स॒ह मा॑द॒यध्यै॑ । उ॒भा दा॒तारा॑वि॒षाᳬ र॑यी॒णामु॒भा वाज॑स्य सा॒तये॑ हुवे॒ वाम् ॥ १३ ॥

**उ०** उभा वामिन्द्राग्नी । ऐन्द्री त्रिष्टुप् । हे इन्द्राग्नी उभा उभौ वां युवाम् आहुवध्यै । कध्यैप्रत्ययः आख्यातोत्तमपुरुषस्यैकवचनस्थाने आह्वयामि । किमर्थमुभावाह्वयामि । राधसः सहमादयध्यै राधसो धनस्य हविर्लक्षणस्य सह एकस्मिन्नेव प्रदाने । मादयध्यै । माद्यतिर्भोजनार्थः । सह भोजनाय । किमर्थं पुनरुभावाह्वयामि सहभोजनायेत्यत आह । उभा दाताराविषां रयीणाम् । उभावाहुतभुक्तौ सन्तौ दातारौ दानशीलौ इषामन्नानां रयीणां धनानां च भवथो युवाम् । उभावाजस्य सातये हुवे वाम् । यतश्चैवं युवां विशिष्टा धनदातारौ अतो भूयो भूय उभावपि वाजस्यान्नस्य ... ये लब्धये हुवे आह्वयामि वां युवाम् ॥ १३ ॥

**म०** भरद्वाजदृष्टा ऐन्द्राग्नीत्रिष्टुप् द्व्यूना । इन्द्रशब्देनात्राहवनीयः । तस्य यज्ञसाधकत्वरूपैश्वर्ययुक्तत्वात् । अग्निशब्देन गार्हपत्यः । अग्रे नीयत इत्यग्निरिति यास्कव्युत्पत्तेः । स हि प्रथममाधीयते । हे इन्द्राग्नी, वां युवामुभा आहुवध्यै आह्वातुमिच्छामीति शेषः । ह्वयतेस्तुमर्थे कध्यैप्रत्ययः । किंच राधसः धनाद्धविर्लक्षणात् सह मादयध्यै युगपदेककर्मणि उभौ युवां मादयितुं हर्षयितुं वा इच्छामीति शेषः । 'मदी हर्षे' इति, 'मद तृप्तौ' इति धातोर्वा णिजन्तात्तुमर्थे शध्यैप्रत्ययः । गुणः । यत उभौ युवामिषामन्नानां रयीणां धनानां दातारौ । अत उभौ वां युवां वाजस्यान्नस्य सातये दानाय हुवे आह्वयामि । उभा । उभशब्दस्य विभक्तेराकारः । सातये 'षणु दाने' अस्य धातोः 'ऊतियूति–' ( पा० ३ । ३ । ९७ ) इति क्तिन्नन्तो निपातः । हुवे 'बहुलं छन्दसि' ( पा० ६ । १ । ३४ ) इति ह्वयतेः शपि संप्रसारणे उवङ् ॥ १३ ॥

## चतुर्दशी ।

अ॒यं ते॒ योनि॑र्ऋ॒त्वियो॒ यतो॑ जा॒तो अरो॑चथाः । तं जा॒नन्न॑ग्न॒ आरो॒हाथा॑ नो वर्धया र॒यिम् ॥ १४ ॥

**उ०** अयं ते योनिः । आग्नेयस्तिस्रोऽनुष्टब्जगतीगायत्र्यः । आहवनीयोऽग्निरुच्यते । हे अग्ने आहवनीय, अयं गार्हपत्योऽग्निः ते तव योनिः उत्पत्तिस्थानम् । कथंभूतो योनिः । ऋत्वियः ऋतावृतौ प्राप्तः काले काले भवति । यतो जातो अरोचथाः । 'रुच दीप्तौ' । यस्मात्त्वं जातः सन् पूर्वमस्याधानेष्टिपशुचातुर्मास्यसोमेष्वङ्गभावमुपगतः सन् दीप्तिवानसि तं जानन्नग्ने आरोह । तं तथाभूतं योनिं गार्हपत्याख्यं विद्वानारोह पुनरुद्धरणाय । अथानन्तरमेव नः अस्माकं वर्धय स्फीतं कुरु रयिं धनम् । येन पुनरपि त्वां यक्ष्याम इत्यभिप्रायः ॥ १४ ॥

**म०** तिस्र आग्नेय्यः । आद्यानुष्टुप् देवश्रवोदेववातदृष्टा । हे अग्ने आहवनीय, ते तवायं गार्हपत्यो योनिः उत्पत्तिस्थानम् । किंभूतः । ऋत्वियः उत्पादनयोग्यः काल ऋतुरुच्यते । ऋतुः प्राप्तोऽस्येति ऋत्वियः । 'छन्दसि घस्' ( पा० ५ । १ । १०६ ) इति ऋतुशब्दात्तस्य प्राप्तमित्यर्थे घस् । तस्य इयादेशः । सायंप्रातःकाले उत्पादनयोग्यो योनिः । यतो यस्माद्दतुकालोपेताद्गार्हपत्याज्जात उत्पन्नस्त्वमरोचथाः कर्मकाले दीप्तोऽभूः । हे अग्ने, तं गार्हपत्यं जानन् स्वजनकमवगच्छन् आरोह पुनरुद्धरणाय कर्मान्ते प्रविश । अथानन्तरं नोऽस्मदर्थं रयिं धनं वर्धय पुनर्यागाय समृद्धं कुरु । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति संहितायां वर्धयेति दीर्घः ॥ १४ ॥

## पञ्चदशी ।

अ॒यमि॒ह प्र॑थ॒मो धा॑यि धा॒तृभि॒र्होता॒ यजि॑ष्ठो अध्व॒रेष्वीड्यः॑ । यमप्न॑वानो॒ भृग॑वो विरुरु॒चुर्वने॑षु चि॒त्रं वि॒भ्वं॑ वि॒शेवि॑शे ॥ १५ ॥

**उ०** अयमिह । अयमाहवनीयोग्निः इह खरस्थाने प्रथमः मुख्यः । दक्षिणाग्न्यभिप्रायं च प्राथम्यम् । धायि । 'डुधाञ् धारणपोषणयोः' । निहितः । धातृभिः अग्निधातृभिरध्वर्युभिः । होता आह्वाता देवानाम् । यजिष्ठः यष्टृतमः मानुषाद्धोतुः । अध्वरेषु यज्ञेषु । ईड्यः स्तुत्यः यमप्नवानः यमग्निमाधाय पूर्वेपि ऋषयः अप्नवान्प्रभृतयः । भृगवः भृगवश्च भृगोरपत्यानि । विरुरुचुः । 'रुच दीप्तौ' । विविधां दीप्तिं प्राप्तवन्त इत्यर्थः । क्वावस्थितं सन्तमाधाय विरुरुचुः । वनेषु अरण्योराधानाभिप्रायम् । चित्रं चयनीयम् । विभ्वं विशेविशे । यं च इदानीमपि आदधाति विभूतिशक्तियुक्तं विशे मनुष्याय । विश् इति मनुष्यनाम ॥ १५ ॥

**म०** जगती वामदेवदृष्टा । द्वादशाक्षराश्चत्वारः पादा जगत्याः । द्वितीयोऽत्र व्यूहेनैकादशः चतुर्थो व्यूहेन द्वादशकस्तेनैकोना जगती । अयमाहवनीय इह कर्मानुष्ठानस्थाने प्रथमो मुख्यः सन्धातृभिर्धायि अधायि आधानकर्तृभिराहितोऽभूत् । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६ । ४ । ७५) इत्यडभावः । दक्षिणाग्न्यपेक्षं प्राथम्यम् । किंभूतः । होता देवानामाह्वाता । यजिष्ठः अतिशयेन यष्टा । 'अतिशायने तमबिष्ठनौ' (पा० ५ । ३ । ५५) इतीष्ठनि परे 'तुरिष्ठेमेयःसु' (पा० ६ । ४ । १५४) तृचो लोपः । तथा अध्वरेषु सोमयागादिषु ईड्यः ऋत्विग्भिः स्तुत्यः । अप्नवानो भृगवो विशेविशेयमाहवनीयं वनेषु विरुरुचुः । अन्तर्भूतो णिच् । रोचयामासुः दीपितवन्तः । अप्नशब्दोऽपत्यनामसु पठितः (निघ० २ । २ । ७) अप्नवानः पुत्रवन्तो भृगुवंशोत्पन्ना मुनयः । यद्वा अप्नवानृषिः अप्नवानस्तत्प्रभृतयो भृगवश्च मुनयः । विशेविशे विडिति मनुष्यनाम (निघ० २ । ३ । ५) । यजमानरूपाय तस्मै तस्मै मनुष्याय तदुपकाराय । वनेषु ग्रामाद्बहिर्यजनाख्येष्वरण्यप्रदेशेषु यमग्निं विरुरुचुः दीपयन्ति स्म । किंभूतं यम् । चित्रं विविधकर्मोपयोगित्वेन आश्चर्यकारिणम् । अतएव विभ्वं विभुं विभुत्वशक्तियुतं यणादेशः ॥ १५ ॥

## षोडशी ।

अ॒स्य प्र॒त्नामनु॒ द्युत॑ꣳ शु॒क्रं दु॑दुह्रे॒ अह्र॑यः । पयः॑ सहस्र॒सामृषि॑म् ॥ १६ ॥

**उ०** अस्य प्रत्नां गां प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते । 'तासुहाग्निरभिदध्यौ मिथुन्येन यास्यामीति तां संबभूव तस्यां रेतः प्रासिञ्चत्' इदित्यादि तदर्थाभिवादिन्येषा ऋग्भवति । अस्यैवाग्नेः प्रत्नां चिरन्तनीं द्युतं दीप्तिं गवि अनुषिक्तां शुक्ररूपापन्नां गाम् । दुदुह्रे दुदुहिरे दुग्धं रक्षन्ति दुहन्ति । का दुहन्ति रक्षन्ति काः । अह्रयः गावः । 'ह्री लज्जायाम्' अविद्यमानह्रियः अलज्जिता उज्ज्वलाः प्रशस्या इत्यर्थः । किं तच्छुक्रं या एता गावः रक्षन्ति पयः दुग्धम् । सहस्रसां सहस्रसंख्यानां चातुर्मास्यपशुसोमानां सनितारं संभक्तारम् । ऋषिद्रष्टृ । द्रष्टृत्वं च गवि सत् पयस्युपचर्यते । 'साहैनानुदीक्ष्य हिंचकार' इत्युपक्रम्य 'ते देवा विदांचक्रुरेष साम्नो हिंकारः' इत्येवमादिना ग्रन्थेन गोभिर्हिंकारो दृष्ट इत्येतत्प्रतिपादितम् । स एव मन्त्रो गां वाग्निं वा पयो वा स्तौति ॥ १६ ॥

**म०** गायत्र्यवत्सारदृष्टा गोऽग्निपयोदेवत्या । अस्याग्नेः प्रत्नां चिरन्तनकालभवां द्युतमनु दीप्तिमनुसृत्य अह्रयः नास्ति ह्रीर्येषामीदृशा लज्जारहिता दोग्धारः ऋषिं गां शुक्रं शुद्धं पयो दुदुह्रे दुदुहिरे । दुहेर्लिटि 'इरयो रे' (पा० ६ । ४ । ७६) इति रेआदेशे रूपम् । 'ऋष गतौ' । अर्षति दोहनस्थाने गच्छतीति ऋषिर्गौः । तां होमार्थं दुग्धवन्तः । सायंदोहनकालेऽग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पतिष्यतीति शङ्कया दोग्धॄणां लज्जा भवति । सत्याममिदीप्तौ स्कन्नशङ्कानुदयाल्लज्जाभावादह्रयो दोग्धारः । किंभूतामृषिं । सहस्रसाम् । 'षोऽन्तकर्मणि' । सहस्रसंख्याकानि कर्माणि स्यति समापयति क्षीरदध्याज्यहविःप्रदानेनेति सहस्रसा ताम् । स्यतेः क्विप् । तद्वास्या ऋचोऽर्थान्तरम् । गांप्रकृत्याग्निहोत्रब्राह्मणे श्रूयते 'तासु हाग्निरभिदध्यौ मिथुन्येन यास्यामीति ताꣳ संबभूव तस्याꣳ रेतः प्रासिञ्चत्तत्पयोऽभवत्' (२ । २ । ४ । १५) इत्यादि । तदभिप्रायमेषा ऋग्वदति । अह्रयः गावः नास्ति ह्रीर्लज्जा यासां ता अह्रयः अलज्जा उज्ज्वलाः प्रशस्या इत्यर्थः । मलिनो हि लज्जते । अह्रयो गावोऽस्याग्नेः प्रत्नां चिरन्तनीमात्मानुषक्तां द्युतं दीप्तिं शुक्रं शुक्ररूपापन्नां द्युतमेव पयो दुग्धं दुदुह्रे दुहन्ति क्षरन्ति । अग्निना शुक्ररूपेण सिक्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्तीत्यर्थः । सहस्रसामृषिमिति विशेषणद्वयं पयसः । सहस्रं सनोति सहस्रसास्तम् । चातुर्मास्यपशुसोमानां संभक्तारम् । पुंस्त्वमार्षम् । 'जनसनखनक्रमगमो विट्' (पा० ३ । २ । ६७) इति विट्प्रत्यये 'विड्वनोरनुनासिकस्यात्' (पा० ६ । ४ । ४१) इत्याकारे वेर्लोपे सहस्रसा इति रूपम् । तथा ऋषिं द्रष्टारम् । गवि वर्तमानं द्रष्टृत्वं पयस्युपचर्यते । 'सा हैनानुदीक्ष्य हिंचकार' इत्युपक्रम्य 'ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कारः' इत्यादिना ग्रन्थेन गोभिर्हिङ्कारो दृष्ट इति प्रत्यपादि । यद्वा सहस्रसामृषिमिति विभक्तिलिङ्गवचनव्यत्ययेन अह्रय इत्यस्य विशेषणद्वयम् । किंभूता अह्रयः । सहस्रसाः ऋषयः । पूर्ववदर्थो वा ॥ १६ ॥

## सप्तदशी ।

तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ १७ ॥

उ० अथ यजूंषि । तनूपा अग्ने । हे भगवन्नग्ने, यस्त्वं स्वभावत एव अग्निहोत्रिणां तनूपा असि तनूः शरीरं तस्य गोपायिता भवसि स त्वं तन्वं मे मम पाहि गोपाय । आयुर्दा अग्नेसि यस्त्वमायुषो दातासि हे अग्ने, स आयुर्मे मम देहि । वर्चोदा अग्नेऽसि वर्चो मे देहि । यस्त्वमग्ने वर्चोदा असि स वर्चो मे देहि । यतो दर्शनादेव महानयं ब्राह्मणो विद्वान् तपसाग्निरिव ज्वलतीति प्रतिपत्तिस्तद्वर्च इत्युच्यते । हे अग्ने, यत् मे मम तन्वाः शरीरस्य ऊनं न्यूनम् अवखण्डितं तत् मे मम आपृण आपूरय ॥ १७ ॥

म० अथ यजूंषि चत्वार्यग्निदेवत्यानि । हे अग्ने, त्वं स्वभावत एव तनूपा असि । अग्निहोत्रिशरीराणां पालकोऽसि । तनूं पाति पालयतीति तनूपाः । उदराग्नौ सत्यन्ने जीर्णे शरीरपालनमतो मे मम तन्वं शरीरं पाहि पालय । तन्वम् 'वा छन्दसि' ( पा० ६ । १ । १० ) इत्यमि पूर्वरूपाभावे यणादेश इत्युक्तम् । हे अग्ने, त्वमायुर्दा असि आयुषो दाता भवसि । अतो मे ममायुर्देहि अपमृत्युपरिहारेण । यावत्कालं वपुष्युदराग्नेरौष्ण्यमुपलभ्यते तावन्न म्रियत इति प्रसिद्धम् । हे अग्ने, त्वं वर्चोदा असि वर्चसो दातासि । अतो मे वर्चो देहि । वैदिकानुष्ठानप्रयुक्तं तेजो वर्चः । यद्दर्शनादेव महानयं ब्राह्मणो विद्वांस्तपसाग्निरिव ज्वलतीति बुद्धिर्नृणां भवति । किंच हे अग्ने, मे मम तन्वा मदीयशरीरस्य यदङ्गं चक्षुरादिरूपमूनं दृष्टिपाटवादिरहितं तदङ्गं मे आपृण सर्वतः पूरय ॥ १७ ॥

## अष्टादशी ।

इन्धानास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि । वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । चित्रावसो स्वस्ति ते पारमशीय ॥ १८ ॥

उ० इन्धानास्त्वा महापङ्क्तिरुयवसाना आग्नेयी । हे अग्ने, इन्धानाः । 'इन्धी दीप्तौ' । आदीपयन्तः प्रकाशयन्तस्त्वाम् । शतꣳ हिमाः शतं वर्षाणि द्युमन्तꣳ समिधीमहि दीप्तिमन्तं त्वां समिधीमहि संदीपयाम इत्यर्थः । वयस्वन्तो वयस्कृतम् । कथंभूतं त्वां कथंभूताश्च सन्तो वयं समिधीमहि । वयस्वन्तः । वय इत्यन्ननाम । अन्नवन्तः । वयस्कृतम् अन्नस्य कर्तारम् । सहस्वन्तः । सह इति बलनाम । बलवन्तः । सहस्कृतम् बलस्य कर्तारम् । 'अग्ने सपत्नदम्भनम्' हे भगवन्नग्ने, सपत्नदम्भनम् सपत्नाः शत्रवः । दम्नोतिर्हिंसार्थः । सपत्नानां हिंसितारम् । अदब्धासः अदब्धा एव अदब्धासः । 'आज्जसेरसुक्' । अनुपहिंसिताः सन्तः । अदाभ्यम् अनुपहिंस्यम् । समिधीमहीत्यनुवर्तते । चित्रावसो रात्रिरुच्यते 'रात्रिर्वै चित्रावसुः सा हीयꣳ संगृह्येव चित्राणि वसति' इति श्रुतिः । हे चित्रावसो । स्वस्ति । स्वस्तीत्यविनाशिनाम । अस्तिरभिपूजितः सु अस्तीति स्वस्त्या ते तव पारम् अन्तम् । अशीय अक्षुयां व्यामुयाम् ॥ १८ ॥

म० अग्निदेवत्या महापङ्क्तिः । यस्याः षट् पादा अष्टाक्षराः सा महापङ्क्तिः । अत्र षष्ठः सप्ताक्षरः । हे अग्ने, शतं हिमाः शतं वर्षाणि अस्मदायुषि वर्तमानान् शतं संवत्सरान् त्वां समिधीमहि नैरन्तर्येण वयं दीपयामः । किंभूता वयम् । इन्धानाः त्वदनुग्रहेण दीप्यमानाः । तथा वयस्वन्तः । वय इति अन्ननाम ( निघ० २ । ७ । ७ ) अन्नवन्तः । सहस्वन्तः बलवन्तः । सह इति बलनाम ( निघ० २ । ९ । १७ )। अदब्धासः अदब्धाः अनुपहिंसिताः केनापि । दभ्नोतिर्हिंसाकर्मा । 'आज्जसेरसुक्' ( पा० ७ । १ । ५० ) इति असुक् । किंभूतं त्वाम् । द्युमन्तं दीप्तिमन्तम् । वयस्कृतं वयोऽन्नं करोतीति वयस्कृत् तम् । सहस्कृतं सहो बलं करोतीति सहस्कृत् तम् । सपत्नदम्भनं सपत्नानां शत्रूणां हिंसितारम् । अदाभ्यम् केनापि हिंसितुमयोग्यम् । चित्रावसो, रात्रिदेवत्यं यजुर्ऋषिदृष्टम् । 'रात्रिर्वै चित्रावसुः सा हीयꣳ संगृह्येव चित्राणि वसति' ( २ । ३ । ४ । २२ ) इति श्रुतेश्चित्रावसुशब्देन रात्रिः । चित्राणि विविधानि चन्द्रनक्षत्रान्धकाररूपाणि वसन्ति यस्यां रात्रौ सा चित्रावसुः । हे चित्रावसो रात्रे, स्वस्ति क्षेमं यथा तथा ते तव पारं समाप्तिमशीय व्याप्नवानि । अश्नोतेः 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुकि लिङ्युत्तमैकवचने रूपम् । यथा लोके मनुष्येषु सुप्तेषु चौरा गृहे प्रविशन्ति तद्वदत्र देवयजने रक्षांसि प्रविशन्तीति शङ्कया तन्निवारणाय रात्रिप्रार्थनम् ॥ १८ ॥

## एकोनविंशी ।

सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाꣳ स्तुतेन । सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीय ॥ १९ ॥

उ० संत्वमग्ने । अथोपविश्य जपति । आहवनीय उच्यते । समित्ययमुपसर्गः अगथा इत्यनेनाख्यातेन संबध्यते । समगथाः संगतस्त्वम् अग्ने, सूर्यस्य संबन्धिना वर्चसा तेजसा । श्रुतिर्मन्त्रं विवृणोति 'तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति तेनैतदाह' इति । समृषीणां स्तुतेन संगतस्त्वमग्ने ऋषीणां संबन्धिभिर्मन्त्रैः । 'तद्यदुपतिष्ठते तेनैतदाह' । संप्रियेण धाम्ना संगतस्त्वं प्रियेण धाम्ना प्रियाभिराहुतिभिः । 'धामानि

त्रीणि भवन्ति स्थानानि नामानि जन्मानि' इति श्रुतिः । 'आहुतयो वा अस्य प्रियं धाम' इति । यथा त्वमग्ने एतैस्त्रिभिः संगतः एवं त्वत्प्रसादादहमपि आयुषा वर्चसा तेजसा अन्नेन वा प्रजया पुत्रादिकया रायस्पोषेण । राय इति धननाम । धनस्य पोषेण पुष्ट्या ग्मिषीय । गमेरेतद्रूपम् । संगच्छेयम् । आयुःप्रभृतीनि मम सन्त्वित्यर्थः ॥ १९ ॥

**म०** 'सं त्वमित्युपविश्येति' (का० ४ । १२ । ४) । उपप्रयन्त इत्यादिभिस्त्रिन्नावसो इत्यन्तैर्मन्त्रैरुत्थानमत्र उपविश्येति विशेषः । हे अग्ने, त्वं सूर्यस्य वर्चसा तेजसा समगथाः रात्रौ सङ्गतोऽसि । 'तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति तेनैतदाह' ( २ । ३ । ४ । २४ ) इति श्रुतेः । ऋषीणां मन्त्राणां स्तुतेन स्तोत्रेण समगथाः बहवो मन्त्रा अग्निं स्तुवन्ति । 'तद्यदुपतिष्ठते तेनैतदाह' ( २ । ३ । ४ । २४ ) इति श्रुतेः । प्रियेण धाम्ना प्रियाभिराहुतिभिः समगथाः । 'आहुतयो वा अस्य प्रियं धाम' ( २ । ३ । ४ । २४ ) इति श्रुतेः । यथा त्वमेतैस्त्रिभिः सङ्गतः एवमहमपि त्वत्प्रसादादायुषा अपमृत्युदोषरहितेन संग्मिषीय सङ्गतो भूयासम् । तथा वर्चसा विद्यैश्वर्यादिप्रयुक्ततेजसा संग्मिषीय । यथा प्रजया पुत्रादिकया संग्मिषीय । तथा रायस्पोषेण धनस्य पुष्ट्या संग्मिषीय । आयुरादीनि मम सन्त्वित्यर्थः । समगथाः गमेः 'समो गम्यृच्छ' (पा० १ । ३ । २९ ) इत्यादिना तङ्मध्यमैकवचने लुङि सिचि 'गमश्च' ( पा० १ । २ । १३ ) इति सिचः कित्त्वे 'अनुदात्तोपदेश–' ( पा० ६ । ४ । ३७ ) इत्यादिना मलोपे 'ह्रस्वादङ्गात्' ( पा० ८ । २ । २७ ) इति सिचो लोपे रूपम् । ग्मिषीय । गमेराशीर्लिङि उत्तमैकवचने 'इटोऽत्' ( पा० ३ । ४ । १०६ ) इत्यकारे परे सीयुटि कृते छान्दसे इडागमे 'गमहन–' (पा० ६ । ४ । ९८) इत्युपधालोपे रूपम् ॥ १९ ॥

## विंशी ।

अन्ध॒ स्थान्धो॑ वो भक्षीय॒ मह॑ स्थ॒ महो॑ वो भक्षीयोर्ज॒स्थोर्जं॑ वो भक्षीय रा॒यस्पोष॑ स्थ रा॒यस्पोषं॑ वो भक्षीय ॥ २० ॥

**उ०** अथ गामभ्येति । अन्धस्थ अन्ध इत्यन्ननाम । श्रुत्या तु लक्षणया वीर्यमित्युक्तम् । यानि वो वीर्याणि यानि वो महांसीति यतो यूयं वीर्यहेतुभूतमन्धः स्थ भवथ अतोऽन्धः वः युष्मत्संबन्धि भक्षीय । भजतेरेतद्रूपं न भक्षयतेः । भजेयम् । महस्थ । महश्शब्देन तस्मै शृतं तस्मै शिर इत्यादीनि दश वीर्याणि उच्यन्ते । यतो महस्थ अतो महो वीर्यं वो भक्षीय । ऊर्जस्थ । ऊर्जशब्दो रसवचनः । यतो यूयमूर्जस्थ अत ऊर्जं वो भक्षीय । रायस्पोषस्थ । यतो यूयं धनपुष्टिकराः स्थ अतो धनपोषं ऊर्जं वो भक्षीय । रायस्पोषस्थ । यतो यूयं धनपुष्टिकराः स्थ अतो धनपोषं वो भक्षीय ॥ २० ॥

**म०** 'गां गच्छत्यन्धस्थेति' । ( का० ४ । १२ । ५ ) अन्धस्थ रेवती रमध्वमिति यजुर्द्वयेन गां गच्छति । गौर्देवता । हे गावः, यूयमन्धस्थ अन्नरूपाः स्थ । क्षीराज्यादिरूपस्यान्नस्य जनकत्वादन्नत्वोपचारः । अतो भवत्प्रसादाद्वो युष्मत्संबन्धि अन्धः क्षीराज्यादिरूपमन्नमहं भक्षीय सेवेय । 'भज सेवायाम्' इत्यस्याशीर्लिङ्युत्तमैकवचने रूपम् । तथा यूयं महस्थ पूज्यरूपाः स्थ । 'मह पूजायाम्' । अतो वो युष्माकं पूज्यानां प्रसादादहमपि महो भक्षीय पूज्यत्वं सेवेय । गौर्न पदा स्प्रष्टव्येत्यादिस्मृतेर्गवां पूज्यत्वप्रसिद्धिः । यद्वा महःशब्देन दश वीर्याण्युच्यन्ते । तानि यथा 'गौर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्' इति श्रुत्युक्तानि । प्रतिधुक् तत्कालदुग्धम् । शृतमुष्णं तत् । शरो दुग्धमण्डः । मस्तु दधिरसः । आतञ्चनं दधिपिण्डः । आमिक्षा स्फुटितं दुग्धम् । वाजिनमामिक्षाजलमिति श्रुत्यर्थः । एतद्दशवीर्यरूपा यूयं स्थ । अतो वो महो वीर्यमहं सेवेयेत्यर्थः । तथा यूयमूर्जस्थ बलरूपाः स्थ । गोक्षीरादेर्बलहेतुत्वात् बलरूपत्वोपचारः । 'ऊर्ज बलप्राणनयोः' । वो युष्माकं प्रसादादूर्जं भक्षीय बलं सेवेय । तथा रायस्पोषस्थ धनपुष्टिरूपाः स्थ । वैश्या हि क्षीराज्यादिक्रयेण धनं पुष्णन्ति । अतो धनपुष्टित्वोपचारः । वो युष्माकं प्रसादाद्रायस्पोषं धनपुष्टिं भक्षीय सेवेय । अन्ध स्थेत्यादौ 'खर्परे शरि' ( पा० ८ । ३ । ३६ । वा १ ) विसर्गलोपः ॥ २० ॥

## एकविंशी ।

रेव॑ती॒ रम॑ध्वम॒स्मिन्योना॑व॒स्मिन् गो॒ष्ठेऽस्मिँ॑ल्लो॒केऽस्मिन्क्षये॑ । इ॒हैव स्त॒ मापगात ॥ २१ ॥

**उ०** रेवती रमध्वम् । हे रेवत्यो धनवत्यः गावः, रमध्वं रतिं कुरुत । अस्मिन् योनौ । अस्यां गोयूथसंबन्धिन्यां प्रजनन्यां रमध्वमित्यनुवर्तते । अस्मिन् गोष्ठे अस्मिन् गोवाटे रमध्वम् । अस्मिँल्लोके । 'लोकृ दर्शने' । मदीये अस्मिन्नवलोकने रमध्वम् । अस्मिन् क्षये गृहे रमध्वम् । 'क्षयो निवासे' इत्याद्युदात्तः क्षयशब्दः । किंच 'इहैव स्त मापगात । इहैव यजमानगृहे स्तो भवत । मापगात मा अपगच्छत यजमानं परित्यज्य ॥ २१ ॥

**म०** हे रेवतीः रेवत्यः धनवत्यो गावः, धनहेतुत्वेन धनवत्त्वं गवाम् । रयिर्विद्यते यासां ता रेवत्यः । रयिशब्दात् मतुप् । 'रयेर्मतौ बहुलम्' ( पा० ६ । १ । ३७ वा० ४ ) इति रयेर्मतौ परे संप्रसारणम् । 'संप्रसारणाच्च' ( पा० ६ । १ । १०८ ) इति पररूपम् । 'आद्गुणः' ( पा० ६ । १ । ८७ ) । 'पशवो वै रेवन्तः' ( २ । ३ । ४ । २६ ) इति श्रुतेः । हे

रेवत्यः, अस्मिन्योनौ दृश्यमानेऽग्निहोत्रहविर्दोहनस्थाने यूयं रमध्वं क्रीडत दोहनादूर्ध्वमस्मिन् गोष्ठे यजमानसंबन्धिगोवाटे रमध्वम् । गोष्ठशब्देन गृहाद्बहिर्विश्रम्भेण संचारप्रदेशः । सर्वदास्मिन् लोके 'लोकदर्शने' यजमानदृष्टिविषये रमध्वम् । रात्रौ अस्मिन् क्षये यजमानगृहे रमध्वम् । 'क्षयो निवासे' (पा० ६।१।२०१) इत्याद्युदात्तः । क्षयशब्दो निवासवाची । किंच । इहैव स्त यजमानगृहे एव भवत । मा अपगात अन्यत्र मा गच्छत । 'इणो गा लुङि' (पा० २।४।४५) इति एतेर्लुङि गादेशे रूपम् ॥ २१ ॥

## द्वाविंशी ।

सꣳहितासि विश्वरूप्यूर्जामाविश गौपत्येन । उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमोभरन्त एमसि ॥ २२ ॥

**उ०** गामभिमृशति । संहितासि संलग्नासि यज्ञहोमसंबन्धेन । अथवा संदधाति क्षीणान् प्राणिनः स्वपयोभिरिति संहिता । विश्वरूपी । शुक्लकृष्णादिभेदैः पशूनां वैश्वरूप्यम् । या त्वं संहितासि विश्वरूपी च सा ऊर्जा अन्नेन माम् आविश । गौपत्येन च गवां पतित्वं गौपत्यम् । गार्हपत्यमुपतिष्ठते तिसृभिर्गायत्रीभिः । उप त्वाग्ने । उपेत्ययमुपसर्ग एमसीत्यनेनाख्यातपदेन सह संबध्यते । इमसीति सिद्धे छन्दसि वर्तमानार्थे मस् । लिटि 'इदन्तो मसि' इति रूपम् । उपेम उपेयाम उपगच्छामः त्वाम् । हे अग्ने, दिवेदिवे अहन्यहनि । हे दोषावस्तः । दोषेति रात्रिनाम । 'वस निवासे' रात्र्यां वसनशीलो दोषावस्ता तस्य संबोधनं हे दोषावस्तः । 'अग्नौ ह वै देवा' इत्युपक्रम्य 'तौ संगृह्य रात्रिं प्रविवेश' इति यदनेनेतिहासेनोच्यते तदयं मन्त्रो दृष्ट्वाह दोषावस्तरिति । धिया बुद्ध्या प्रोक्तं । यतमनस्काः श्रद्दधानाः वयं नमोभरन्तः । नम इत्यन्ननाम । अन्नं बिभ्रतः उप आ इमसीत्याख्यातपदं व्याख्यातमेव ॥ २२ ॥

**म०** 'सꣳहितेत्यालभते' (का० ४।१२।६) इति । गामित्यनुवर्तते । हे गौः, त्वं संहितासि क्षीराज्यरूपहविर्दानाय यज्ञकर्मभिः संयुक्तासि । किंभूता । विश्वरूपी विश्वं रूपं यस्याः सा । शुक्लकृष्णादिबहुरूपैर्युक्ता । सा त्वमूर्जा क्षीरादिरसेन गौपत्येन गोस्वामित्वेन मामाविश सर्वतः प्रविश । त्वत्प्रसादान्मम बहुविधो रसो बहुविधं गोस्वामित्वं च संपद्यतामित्यर्थः । 'गार्हपत्यं गत्वोपतिष्ठत उप त्वेतीति' (का० ४।१२।७) । उप त्वा । तिस्रो गायत्र्य आग्नेय्यो मधुच्छन्दोदृष्टाः । हे दोषावस्तः हे अग्ने, दोषा रात्रिस्तस्यामपि वसति अजस्रं धार्यमाणत्वान्नोपशाम्यतीति दोषावस्ता । यद्वा अग्नौ हे देवाः, इत्युपक्रम्य तैः संगृह्य रात्रिं प्रविवेशेतीतिहासेन अग्ने रात्रौ प्रवेश उक्तस्तमयं मन्त्र आह । हे दोषावस्तः रात्रौ वसनशील गार्हपत्य, दिवेदिवे प्रतिदिनं वयं यजमानाः त्वा त्वामुप एमसि त्वां प्रत्यागच्छामः । 'इदन्तो मसि' । किंभूता वयम् । धिया श्रद्धायुक्तया बुद्ध्या नमोभरन्तः नमस्कारं संपादयन्तः । यद्वा नम इत्यन्ननाम (निघ० २।७।२१) । अन्नं हविर्बिभ्रतः ॥ २२ ॥

## त्रयोविंशी ।

राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे ॥ २३ ॥

**उ०** राजन्तमध्वराणाम् । अस्मिन्मन्त्रे आख्यातं नाम्नातमतोऽधस्तनमन्त्रे यदाख्यातं तदनुवर्तते । राजन्तं दीप्यमानम् । अध्वराणां गोपां यज्ञानां गोप्तारम् । ऋतस्य दीदिविम् सत्यस्य दीपयितारम् । अग्निसमीपे व्रतं गृहित्वा सत्यं वदति तदभिप्रायमेतत् । वर्धमानम् चातुर्मास्यपशुसोमैः । स्वेदमे स्वकीये यज्ञगृहे । दम इति गृहनाम । दाम्यन्ति हि गृहस्थाः । उप आ इमसीत्यनुवर्तते ॥ २३ ॥

**म०** क्रियापदमनुवर्तते । वयमीदृशमग्निमुपैमः । कीदृशम् । राजन्तं दीप्यमानमध्वराणां गोपां गोपायतीति गोपास्तं यज्ञानां गोप्तारम् । ऋतस्य सत्यवचनलक्षणस्य व्रतस्य दीदिविं दीपयितारम् । अग्निसमीपे व्रतं गृहीत्वा सत्यं वदतीत्याशयः । स्वे दमे अस्मदीये गृहे वर्धमानं चातुर्मास्यसोमपश्वादिभिरभिवृद्धिं गच्छन्तम् । दाम्यन्ति गृहस्था यत्रेति दमो गृहम् । दिवेः किप्रत्ययो बाहुलकात् । लिङ्वद्भावात् द्वित्वम् । 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६।१।७) इत्यभ्यासदीर्घः । देवयतीति दीदिविः ॥ २३ ॥

## चतुर्विंशी ।

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ २४ ॥

**उ०** स नः पितेव । यस्त्वमुक्तगुणः सोऽस्माकं पिता इव सूनवे पुत्राय हे भगवन्नग्ने, सूपायनः सुखोपगमनो भव । किंच सचस्वा नः स्वस्तये । सेवस्व नः अस्मान् स्वस्तये अविनाशाय ॥ २४ ॥

**म०** हे अग्ने गार्हपत्य, स पूर्वोक्तगुणयुक्तस्त्वं नोऽस्माकं सूपायनो भव । सुखेनोपैतुं शक्यः सूपायनः । सुष्ठूपप्राप्तुं शक्यो भव । तत्र दृष्टान्तः । सूनवे पितेव यथा पुत्राय पिता भयं विना सुखेन प्राप्तुं शक्यः । किंच नोऽस्माकं स्वस्तये क्षेमाय सचस्वानेन कर्मणा समवेतो भव । 'षच समवाये' इति धातुः । यद्वा सचस्व सेवस्व । 'षच सेवने' ॥ २४ ॥

## पञ्चविंशी ।

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः। वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः ॥ २५ ॥

**उ०** अग्ने त्वं नः । चतस्रो द्विपदा विराज आग्नेय्यः । हे भगवन्नग्ने, त्वं नो अन्तमः त्वमस्माकं निकटतमः । अन्तिकशब्दस्य तमप्येतद्रूपम् । ब्रह्मचर्यप्रभृति अग्निमुपासते तदभिप्रायमेतत् । देशविवक्षया वा संनिकृष्टो ह्यग्निर्विप्रकृष्टा ह्यन्या देवताः । उत त्राता । अपिच स्वभावत एव सर्वप्राणिनां पालयितासि । यत एवम् अतो ब्रूमः । शिवो भवा वरूथ्यः । शिवः शान्तो भव । वरूथमिति गृहनाम । वरूथाय हितो वरूथ्यः । वसुरग्निः । अग्निशब्द आमन्त्रितविभक्त्या विपरिणम्यते वाक्यसंबन्धात् । हे अग्ने, यस्त्वं वसुः वासयिता जनानाम् । यद्वा वसु धनम् । तापपाक प्रकाशैरुपकुर्वन्नुपस्कर इव भवसि । वसुश्रवाः वसुश्रवाश्च वसुना धनदानेन यः श्रूयते स वसुश्रवाः । धनदानैरित्यर्थः । सः अच्छानक्षि । 'अच्छाभेराप्तुमिति शाकपूणिः' । नशतिराप्नोतिकर्मा । अभिव्याप्नुहि अस्मान् । किंच द्युमन्तं दीप्तिमन्तम् । रयिं धनम् । दाः देहि ॥२५॥

**म०** चतस्रो द्विपदा विराज आग्नेय्यः । दशार्णपादा विराट् बन्ध्वादिदृष्टाः । हे अग्ने गार्हपत्य, त्वं नोऽस्माकमन्तमः अन्तिकतमः सर्वदा समीपवर्ती भव । 'अम् गतौ' भजने शब्दे अमति समीपं प्राप्नोतीत्यम् क्विप् अतिशयितोऽम् अन्तमः अम्शब्दात्तमप् । यद्वान्तिकशब्दात्तमपि पृषोदरादित्वेन साधुः। उतापि च त्राता पालयिता । शिवः शान्तः । वरूथ्यः वरूथाय हितो वरूथ्यः तादृशश्च भव । पुत्रादिसमूहो वरूथः । यद्वा वरूथं गृहम् । तस्मै हितो भव । किंभूतः त्वम् । वसुः वासयतीति वसुः । जनानां वासयिता । तथा अग्निः । अङ्गतीत्यग्निः । 'अगि गतौ' । आहवनीयादिरूपेण गमनशीलः । तथा वसुश्रवाः वसुना धनेन श्रवः कीर्तिर्यस्यासौ वसुश्रवाः । धनप्रदोऽयमिति यस्य कीर्तिरित्यर्थः । किंच हे अग्ने, त्वमच्छा नक्षि अभिव्याप्नुहि अस्मान् । 'अच्छाभेराप्तुमिति शाकपूणिः' ( निरु० ५ । २८ ) । नशिराप्नोतिकर्मा । यद्वा हे अच्छ निर्मलभाव अग्ने, नक्षि अस्मद्धोमस्थानं गच्छ । 'नक्ष गतौ' । यदा यदा वयं जुहुयामस्तदा समागच्छेत्यर्थः । किंच द्युमत्तमं रयिं दाः अतिदीप्तियुक्तं रयिं धनं देहि । ददातेर्लुङि रूपम् । 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६ । ४ । ७५ ) इत्यडभावः ॥ २५ ॥

## षड्विंशी ।

तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ॥ २६ ॥

**उ०** तं त्वा शोचिष्ठ । यस्त्वमुक्तगुणस्तं त्वां ब्रवीमि हे अग्ने, शोचिष्ठ शोचिष्मत्तमः शोचिरिति ज्वालानामसु पठितम् । छान्दसो मतुब्लोपः । दीदिवः संदीप्यस्व । दिवेर्ज्वलनार्थस्य लिटिकस्वन्तस्यरूपम् । सुम्नाय । द्वितीयार्थे चतुर्थी सुम्नम् । नूनं निश्चयेन । ईमहे याचामहे । त्वत्तोऽवश्यं सुखं भवतीत्यभिप्रायः । सखिभ्यः सखिभ्योऽर्थाय । सुम्नं नूनमीमह इत्यनुषङ्गः । स नो बोधि । यस्त्वमुक्तगुणः सोऽस्माकं बुध्यस्वाभिप्रायम् । बुध्वा च श्रुधीहवम् शृणु अस्मदीयमाह्वानम् । श्रुत्वा चाह्वानम् उरुष्याणः उरुष्यती रक्षतिकर्मा । रक्ष अस्मान् । कुतो रक्ष । अघायतः अघं पापं य इच्छति स अघायत् तस्मादघायतः शत्रोः । समस्मात् सर्वस्मात् ॥ २६ ॥

**म०** हे शोचिष्ठ दीप्तिमत्तम, हे दीदिवः सर्वस्य दीपयितः, तं पूर्वोक्तगुणयुक्तं त्वा त्वां सखिभ्योऽर्थाय सुम्नाय । द्वितीयार्थे चतुर्थी । सुम्नं सुखं नूनं निश्चयेन ईमहे याचामहे । यद्वा सुम्नाय सुखार्थं सखिभ्योऽस्मत्सखीनामुपकाराय च त्वामीमहे । स त्वं नोऽस्मान् भवत्सेवकान् बोधि बुध्यस्व । हवमस्मदीयमाह्वानं श्रुधी शृणु । समस्मात्सर्वस्मात् अघायतः शत्रोर्नोऽस्मानुरुष्य रक्ष । समशब्दः सर्वपर्यायः । शोचिरिति ज्वालानाम । शोचिरस्यास्तीति शोचिष्मान् मतुप् । अतिशयेन शोचिष्मान् शोचिष्ठः । 'अतिशायने तमबिष्ठनौ' ( पा० ५ । ३ । ५५ ) 'विन्मतोर्लुक्' ( पा० ५ । ३ । ६५ ) इतीष्ठनि मतुपो लुक् । दीदिवः दिवेर्ज्वलनार्थस्य लिडादेशक्वसन्तस्य रूपम् । 'मतुवसो रुः संबुद्धौ छन्दसि' ( पा० ८ । ३ । १ ) इति रुत्वम् । बोधि । 'बुध ज्ञाने' लोण्मध्यमैकवचने 'सेर्ह्यपिच्च' ( पा० ३ । ४ । ८ ) इति हिः । 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुक् 'हुझल्भ्यो हेर्धिः' ( पा० ६ । ४ । १०१ ) । छन्दसि गुणे घलोपौ । श्रुधी । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिः । संहितायाम् 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति दीर्घः । उरुष्य उरुष्यती रक्षणकर्मा । 'ऋचि तुनुघ' (पा० ६ । ३ । १३३) इत्यादिना दीर्घः । 'नश्च धातुस्थोरुषुभ्यः' ( पा० ८ । ४ । २७) इति न इत्यस्य णत्वम् । अघायतः । अघं परस्येच्छति अघायति । 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) इत्यत्र 'छन्दसि परेच्छायामपि वक्तव्यम्' इति क्यच् 'अश्वाघस्यात्' (पा० ७ । ४ । ३७) इत्याकारः । अघायतीति अघायन् तस्मात् अघायतः शतृप्रत्यये रूपम् ॥ २६ ॥

## सप्तविंशी ।

इड एह्यदित एहि काम्या एत । मयि वः कामधरणं भूयात् ॥ २७ ॥

**उ०** गां गच्छति । इड एहि इडा मनोर्दुहिता अदितिर्देवमाता । इडेव मनोरस्मान्प्रत्येहि । अदितिरिवादित्यानामस्मान् प्रत्येहि अनिजायामनिदितौ च इडा । अदितिशब्दप्रयोग उपमार्थः । अतस्मिंस्तच्छब्दस्तद्वदतिदेशार्थः । गामभिमृशति । काम्या एत । 'मनुष्याणां ह्येतासु कामाः प्रविष्टाः' इति श्रुतिः । हे काम्याः, आ इत एत आगच्छत । मयि वः युष्माकं । कामधरणम् कामा यस्मिन् ध्रियन्ते तत्कामधरणम् श्रुतिर्व्याचष्टे अहं वः प्रियो भूयासमिति ॥ २७ ॥

**म०** 'गां गच्छतीड एहीति' (का० ४ । १२ । ८) । द्वे यजुषी गव्ये । हे इडे, एहि । हे अदिते, एहि आगच्छ होमस्थानम् । इडा मनोर्दुहिता । अदितिर्देवमाता । इडा मनुमिवास्मानेहि । अदितिरादित्यानिवास्मानेहि । अतस्मिंस्तच्छब्दस्तद्वदतिदेशार्थः । 'काम्या एतेत्यालभते' (का० ४ । १२ । ९) इति गामालभते । मनुष्याणां ह्येतासु कामाः प्रविष्टा इति काम्याः । हे काम्याः सर्वैः कामयितव्याः, यूयमेत आ इत आगच्छत । वो युष्माकं कामधरणं कामानां धरणमपेक्षितफलधारकत्वं यदस्ति तत् मयि अनुष्ठातरि भूयात् । युष्मत्प्रसादादहमभीष्टफलस्य धारयिता भूयासमित्यर्थः । अहं वः प्रियो भूयासमिति श्रुतिर्व्याचष्टे ॥ २७ ॥

## अष्टाविंशी ।

सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ २८ ॥

**उ०** अग्निमीक्षमाणो जपति । सोमानं स्वरणम् । ब्रह्मणस्पत्यो गायत्रस्तृचः बृहस्पतिरेव ब्रह्मणस्पतिः । हे ब्रह्मणस्पते, सोमानम् । 'षूञ् अभिषवे' आतो मनिन्क्वनिब्वनिपः । 'अन्येभ्योपि दृश्यन्ते' इति मनिन् । सोमानं सोतारं पातारमिति पर्यायाः । केषां सोतारम् । सामर्थ्यात् सोमानाम् । स्वरणम् । 'स्वृ शब्दोपतापयोः'। शब्दयितारं सोतारं च सोमानां स्तोतारं च देवानाम् । कृणुहि कुरु धनप्रदानैः । ब्रह्मणस्पते । कमिव । कक्षीवन्तम् लुप्तोपममेतत् । कक्षीवन्तमिव ऋषिं दीर्घतमसः पुत्रम् । यः औशिजः । उशिजः पुत्रः उशिक् माता अस्यासीत् ॥ २८ ॥

**म०** 'सोमानमित्यनुदकं व्रतोपायनवत्' (का० ४ । १२ । १०) । व्रतेत्यपरेणाहवनीयं प्राङ्तिष्ठन्नवर्चं जपतीति सूत्रार्थः । सोमानं स्वरणं तृचो गायत्रो ब्रह्मणस्पतिदेवत्यस्तेनैव दृष्टः । अग्निमीक्षमाणस्य यजमानस्य जपे विनियुक्तः । हे ब्रह्मणस्पते वेदस्य पालक, सोमानं सोमानामभिषोतारम् । स्वरणं 'स्वृ शब्दोपतापयोः' शब्दयितारम् । कृणुहि कुरु । मामिति शेषः । सुनोतीति सोमा तम् । 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३ । २ । ७५) इति मनिन् । स्वरतीति स्वरणः नन्द्यादित्वात् ल्युः । सोमयागकर्तारं स्तुतिरूपशब्दयुक्तं च धनप्रदानैर्मां कुर्वित्यर्थः । तत्रोपमानमुच्यते । कक्षीवन्तं कक्षीवन्नामकमृषिं दीर्घतमःपुत्रं यथा सोमयागयुक्तं स्तुतियुक्तं च कृतवानसि तथा मां कुरु । उपमानद्योतक इवशब्दोऽत्र लुप्तो द्रष्टव्यः । कोऽसौ कक्षीवान् । य औशिजः उशिजः पुत्रः उशिक् कक्षीवतो माता ॥ २८ ॥

## एकोनत्रिंशी ।

यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥ २९ ॥

**उ०** यो रेवान् । रै इति धननाम । यो ब्रह्मणस्पतिर्धनवान् । यश्च अमीवहा । अमीवा व्याधिः । व्याधेर्हन्ता । वसुवित् । वसुनो धनस्य सारासारतां वेत्ति विदित्वा च यथायोग्यं स्तोतृभ्यो ददाति । पुष्टिवर्धनः । 'पुष पुष्टौ' पुष्टेः पोषस्य वर्धयिता । स नः सिषक्तु 'सिषक्ति सचते इति सेवमानस्य' । सोऽस्मान् सेवताम् । यस्तुरः यस्त्वरणः अविलम्बकारी । यद्वा पुत्रः प्रार्थ्यते । हे ब्रह्मणस्पते' यः पुत्रः धनवान् यश्च व्याधेर्हन्ता । ज्योतिःशास्त्राभिप्रायमेतत् । धनस्य च लब्धा पुष्टेश्च वर्धयिता सोऽस्मान् पुत्रः सेवताम् । यस्तुरः शीघ्रकारी । कालातिक्रमो हि प्रत्यग्रं कार्यरसं पिबतीत्याहुः ॥ २९ ॥

**म०** यो ब्रह्मणस्पतिः रेवान् धनवान् । यश्चामीवहा अमीवस्य रोगस्य हन्ता । 'अम रोगे' । 'अमेरीवः' । वसुवित् वसु धनं वेत्तीति । यश्च पुष्टिवर्धनः पोषणस्य वर्धयिता । यश्च तुरः 'तुर वेगे' 'इगुपध' (पा० ३ । १ । १३५) इति कः । वेगवान् अविलम्बितकारी । स ब्रह्मणस्पतिर्नोऽस्मान् सिषक्तु सेवताम् । 'सिषक्ति सचते इति सेवमानस्य' (निरु० ३ । २१) यद्वा अनयर्चा पुत्रः प्रार्थ्यते । यः पुत्रो रेवान्धनवान् यश्च व्याधेर्हन्ता जपादिना यो धनस्य लब्धा पुष्टेश्च वर्धयिता यः तुरः शीघ्रकारी तादृशः पुत्रोऽग्नेः प्रसादान्नोऽस्मान् सिषक्तु सेवताम् ॥ २९ ॥

## त्रिंशी ।

मा नः शꣳसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३० ॥

**उ०** मा नः शꣳसः । मा इत्यव्ययं प्रणगित्याख्यातेन संबध्यते । प्रपूर्वस्य नशेर्व्याप्त्यर्थस्यैतद्रूपम् । मा

व्याप्नोतु नः अस्मान् शꣳसः । शंसनं शंसः अनिष्टचिन्तनम् । कस्य संबन्धि, अररुषः । 'रा दाने' । अस्य क्वसौ षष्ठ्यां ररुष इति भवति, तन्नञा प्रतिषिध्यते । अररुषः अदातुः । अनुपभोग्यस्य शत्रोरित्यर्थः । धूर्तिः हिंसा । ध्वरति धूर्वति इति वधकर्मसु पठितम् । मर्त्यस्य मरणधर्मिणो मनुष्यस्य । मास्मान् व्याप्नोतु अररुषो मर्त्यस्य संबन्धि शंसनं धूर्तिश्चेति वाक्यार्थः । किंच रक्षाणः । रक्ष नः गोपायास्मान् हे ब्रह्मणस्पते ॥ ३० ॥

म० 'रा दाने' इति धातोः क्वसुन्नन्तस्य षष्ठ्येकवचने ररुष इति रूपम् । ररौ इति ररिवांस्तस्य ररुषः । दानं कृतवत इत्यर्थः । तस्य निषेधादररुष इति । कदाचिदपि हविर्दानमकृतवत इत्यर्थः । तादृशस्य मर्त्यस्य मनुष्यस्य शंसो धूर्तिश्च नोऽस्मान् मा प्रणक् प्रकर्षेण व्याप्नोतु । नशिर्व्याप्त्यर्थः । यद्वा 'नश अदर्शने' । मा प्रणक् प्रकर्षेण मा नाशयतु । शंसनं शंसोऽनिष्टचिन्तनम् । धूर्तिर्हिंसा । 'ध्वरति धूर्वति' ( निघ० २ । १९ ) इति वधकर्मसु पठितत्वात् शत्रुकृतमनिष्टचिन्तनं शत्रुकृता हिंसा चास्मान् मा व्याप्नोत्वित्यर्थः । किंच हे ब्रह्मणस्पते वेदस्य पालकाग्ने, नोऽस्मान् रक्ष । 'द्व्यचोऽतस्तिङः' (पा० ६।३ । १३५) इति संहितायां दीर्घः । णत्वं पूर्ववत् ॥३०॥

## एकत्रिंशी ।

महि त्रीणामवो॑ऽस्तु द्युक्षं मि॒त्रस्या॑र्य॒म्णः । दु॒रा॒धर्षं॒ वरु॑णस्य ॥ ३१ ॥

उ० महित्रीणाम् । आदित्यदेवत्यस्तृचो गायत्रः । पथि स्वस्त्ययनम् । महि महत् त्रीणां त्रयाणामादित्यानाम् अवोस्तु अवनमवः पालनं भवतु । कथंभूतं पालनम् । द्युक्षम् द्युतिमन्ति द्रव्याणि यस्मिन्पालने क्षियन्ति निवसन्ति तत् द्युक्षम् । किंनाम्नामादित्यानाम् । मित्रस्य अर्यम्णः वरुणस्य च । दुराधर्षमित्यवनविशेषणम् । दुराधर्षम् । नञोर्थे दुरुपसर्गः । अनाधर्षम् अशक्यमाधर्षयितुमन्यैः ॥ ३१ ॥

म० सत्यधृतिदृष्ट आदित्यदेवत्यस्तृचो गायत्रीजपे विनियुक्तः पथि जप्त उपद्रवनाशकश्च । मित्रस्यार्यम्णो वरुणस्येति त्रीणां त्रयाणां देवानां संबन्धि अवः पालनमस्तु । किंभूतमवः । महि महत् तथा द्युक्षं द्युमन्ति सुवर्णादिद्रव्याणि क्षियन्ति निवसन्ति यस्मिन् पालने तथाविधम् । दुराधर्षं तिरस्कर्तुमशक्यम् । त्रीणां त्रिशब्दस्यामि छन्दसि त्रयादेशो वेति वाच्यम् ( पा० ७ । १ । ५३ ) ॥ ३१ ॥

## द्वात्रिंशी ।

न॒हि तेषा॑म॒मा च॒न नाध्व॑सु वा॒रणे॑षु । ईशे॑ रि॒पुर॒घश॑ꣳसः ॥ ३२ ॥

उ० नहि तेषाम् । नहि कदाचित्तेषामादित्यपालितानां यजमानानाम् अमाचन । अमाशब्दो गृहवचनः । चनशब्दोऽप्यर्थे । गृहेऽपि सताम् । नाध्वसु वारणेषु । नच मार्गेषु सता मम । कथंभूतेषु वारणेषु । यत्रावस्थिताश्चौराः पथिकान्वारयन्ति ते वारणाः पन्थानः । एतदुक्तं भवति । न गृहस्थितानां नापि गृहाद्बहिः । ईशे रिपुरघशꣳसः । 'ईश ऐश्वर्ये' । 'लोपस्त आत्मनेपदेषु' इति तकारलोपः । न ईष्टे । रिपुः अघं पापं यः शंसति चौरादिः सोऽघशंसः ॥ ३२ ॥

म० अमाशब्दो गृहनामसु पठितः ( निघ० ३ । ४ । ११ ) । चनशब्दोऽप्यर्थे । अमा चन गृहेऽपि वर्तमानानां तेषां तथा वारणेषु चोरव्याघ्रादयो यत्र स्थिता निवारयन्ति पथिकान् ते वारणास्तेषु चोरव्याघ्रभयाढ्येषु अध्वसु मार्गेषु वा वर्तमानानां तेषां मित्रार्यमवरुणैस्त्रिभिर्देवैः पालितानां यजमानानामुपद्रवायेति शेषः । अघशंसः सर्वदा पापस्य प्रशंसको रिपुः शत्रुः नहि ईशे समर्थो न भवति । 'लोपस्त आत्मनेपदेषु' ( पा० ७ । १ । ४१ ) इति तलोपः । 'अधीगर्थदयेशां कर्मणि' ( पा० २ । ३ । ५२ ) इति तेषामिति षष्ठी । मित्रादिभिः पालितानामस्माकं गृहेऽरण्ये वा नास्ति शत्रुबाध इत्यर्थः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

ते हि पु॒त्रासो॒ अदि॑तेः प्र॒जीव॑से॒ मर्त्या॑य । ज्योति॒र्यच्छ॒न्त्यज॑स्रम् ॥ ३३ ॥

उ० ते हि पुत्रासः । कस्मात् पुनरादित्यगुप्तानां गृहे बहिश्च शत्रुर्नेष्टे, यतस्ते पुत्रा अदितेः । एवं तावदेकम् । इदमपरम् । प्रजीवसे मर्त्याय ज्योतिर्यच्छन्ति । प्रयच्छन्ति ददति । कस्मै । मर्त्याय मनुष्याय । किं प्रयच्छन्ति ज्योतिः । अजस्रम् अनुपक्षीणम् । किमर्थं ज्योतिः प्रयच्छन्ति । जीवसे चिरंजीवनाय ॥ ३३ ॥

म० कथं तद्रक्षितानां शत्रुभयाभावस्तदाह । हि यतस्ते अदितेः अखण्डितशक्तेर्देवमातुः पुत्रासः पुत्राः पूर्वोक्ता मित्रार्यमवरुणा मर्त्याय मनुष्याय यजमानायाजस्रं निरन्तरमनुपक्षीणं ज्योतिः तेजः प्रयच्छन्ति । किमर्थं जीवसे जीवितुम् । यथा चिरं जीवनं भवति तथा तदुपायज्ञानं प्रयच्छन्तीत्यर्थः ॥ ३३ ॥

## चतुस्त्रिंशी ।

क॒दा च॒न स्त॒रीर॑सि॒ नेन्द्र॑ सश्चसि दा॒शुषे॑ । उपो॒पेन्नु म॑घव॒न्भूय॒ इन्नु ते॒ दानं॑ दे॒वस्य॑ पृच्यते ॥ ३४ ॥

उ० कदाचन । ऐन्द्री बृहती । नकारो भिन्नक्रम आदौ वर्तते । हे इन्द्र, भूयोभूयो याच्यमानस्त्वं न कदाचिदपि स्तरीरसि । स्तृणातेर्हिंसार्थस्यैतद्रूपम् । 'न स्तृणासि न क्रुध्यसि । किंपुनः करोषि । सश्चसि दाशुषे । दाशुष इति द्वितीयार्थे चतुर्थी । सश्चतिः सेवनकर्मा सेवसे । दाशुषे दाश्वांसम् हवींषि दत्तवन्तं यजमानम् । किंच उप पृच्यते एव क्षिप्रम् । 'पृची संपर्के' । संपृच्यते हि दाश्वांसंप्रति । 'प्रसमुपोदः पादपूरणे' इत्युपशब्दः पादपूरणे । इच्छब्द एवार्थे । नुशब्दः क्षिप्रवचनः । हे मघवन् । कथंभूतं सुपपृच्यते । भूयो बहुतरमेव क्षिप्रम् । इत् नू उक्तार्थौ । ते तव स्वभूतं दानम् देवस्य दातुः । एतदुक्तं भवति । न कदाचित्त्वं यजमानं प्रति क्रुध्यसि सेवसे च दाश्वांसम् । उपपृच्यते वा त्वदीयं दानं भूयो भूयो दाश्वांसं प्रति ॥ ३४ ॥

म० ऐन्द्री पथ्या बृहती मधुच्छन्दोदृष्टा जपे विनियुक्ता । यस्यास्तृतीयः पादो द्वादशार्णोऽन्ये त्रयोऽष्टाक्षराः सा पथ्या बृहती । हे इन्द्र परमैश्वर्ययुक्त, कदाचन कदापि त्वं स्तरीर्नासि । 'स्तृञ् हिंसायाम्' स्तृणातीति स्तरीः हिंसको नासि । किं तर्हि दाशुषे सश्चसि । द्वितीयार्थे चतुर्थी । दाश्वांसं हविर्दत्तवन्तं यजमानं सेवसे । सश्चतिः सेवनकर्मा । किंच । हे मघवन् धनवन्, देवस्य प्रकाशमानस्य ते तव भूय इत् बहुतरमेव दानं नु इत् क्षिप्रमेव दाश्वांसमुपपृच्यते । 'पृची संपर्के' यजमानेन सह संपर्कं प्राप्नोति । 'प्रसमुपोदः पादपूरणे' (पा० ८ । १ । ६) इत्येक उपशब्दः पादपूरणे । इच्छब्दावेवार्थे । नु क्षिप्रार्थः । न कदाचिद्यजमानं प्रति कुध्यसि सेवसे च तं त्वदीयं भूयो धनं दाश्वांसमुपपृच्यत इति भावः ॥ ३४ ॥

## पञ्चत्रिंशी ।

तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ ३५ ॥

उ० तत्सवितुः । सावित्री गायत्री । तदितिषष्ठ्या विपरिणम्यते । तस्य सवितुः सर्वस्य प्रसवदातुः । आदित्यान्तरपुरुषस्य देवस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा विज्ञानानन्दस्वभावस्य वा ब्रह्मणः । वरेण्यम् वरणीयम् । भर्गः । भर्गशब्दो वीर्यवचनः । 'वरुणाद्धवा अभिषिषिचानाद्भर्गोऽपचक्राम वीर्यं वै भर्गः' इति श्रुतिः । तेन हि पापं भृजति दहति । 'भृजी भर्जने' । अथवा भर्गस्तेजोवचनः । यद्वा मण्डलं पुरुषो रश्मय इत्येतत्त्रितयमभिप्रेयते । देवस्य दानादिगुणयुक्तस्य । धीमहि । 'ध्यै चिन्तायाम्' । अस्य छान्दसं संप्रसारणम् । ध्यायामः चिन्तयामः । निदिध्यासं तद्विषयं कुर्म इति यावत् । धियो यो नः । धीशब्दो बुद्धिवचनः कर्मवचनो वा वाग्वचनश्च । बुद्धीः कर्माणि वा वाचो वा । यः सविता नोऽस्माकम् । प्रचोदयात् । 'चुद संचोदने' । प्रकर्षेण चोदयति प्रेरयति तस्य सवितुः संबन्धि वीर्यं तेजो वा ध्यायाम इति संबन्धः । वाक्यभेदेन वा योजना । तत्सवितुर्वरणीयं वीर्यं तेजो वा देवस्य ध्यायामः । यश्च बुद्धीः प्रचोदयात् प्रेरयत्यस्माकं तं च ध्यायामः स च सवितैव भवति ॥ लिङ्गव्यत्ययेन वा योजना । तत्सवितुर्वरणीयं भर्गो देवस्य ध्यायामः धियो यद्भर्गः अस्माकं प्रेरयति ॥ ३५ ॥

म० विश्वामित्रदृष्टा सावित्री गायत्रीजपे विनियुक्ता । तदिति षष्ठ्यर्थे । तस्य देवस्य द्योतनात्मकस्य सवितुः प्रेरकस्यान्तर्यामिणो विज्ञानानन्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदित्यान्तरपुरुषस्य वा ब्रह्मणो वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गः सर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानानन्दादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायामः । छान्दसं संप्रसारणम् । यद्वा मण्डलं पुरुषो रश्मय इति त्रयं भर्गःशब्दवाच्यम् । भर्गो वीर्यं वा । 'वरुणाद्ध वा अभिषिषिचानाद्भर्गोऽपचक्राम वीर्यं वै भर्गः' (५ । ४ । ५ । १) इति श्रुतेः । तस्य कस्य । यः सविता नोऽस्माकं धियः बुद्धीः कर्माणि वा प्रचोदयात्प्रकर्षेण चोदयति प्रेरयति सत्कर्मानुष्ठानाय । यद्वा वाक्यभेदेन योजना । सवितुर्देवस्य तत् वरेण्यं भर्गो ध्यायामः । यश्च नो बुद्धीः प्रेरयति तं च ध्यायामः । स च सवितैव । लिङ्गव्यत्ययेन योजना । सवितुर्देवस्य तत् भर्गो धीमहि । यो यत् भर्गो नो बुद्धीः प्रेरयति ॥ ३५ ॥

## षट्त्रिंशी ।

परि॑ ते दू॒डभो॒ रथो॒ऽस्माँ२ अ॑श्नोतु वि॒श्वतः॑ । येन॒ रक्ष॑सि दा॒शुषः॑ ॥ ३६ ॥

उ० परि ते । आग्नेयी गायत्री । हे अग्ने, पर्यश्नोतु परिव्याप्नोतु । ते तव स्वभूतो रथः । अस्मान् विश्वतः सर्वतः । कथंभूतो रथः । दूडभः दुर्दभः । दुरुपसर्गः प्रतिषेधार्थीयः । दभ्नोतिर्वधकर्मा । अवध्यः । येन रथेन रक्षसि दाशुषः यजमानानाम् । 'यजमाना वै दाश्वांसः' इति श्रुतिः । स रथोऽस्मान् पर्यश्नोतु इति संबन्धः । बृहदुपस्थानं समाप्तम् ॥ ३६ ॥

म० आग्नेयी गायत्री वामदेवदृष्टा जपे विनियुक्ता । हे अग्ने, ते तव रथोऽस्मान् यजमानान् विश्वतः सर्वासु दिक्षु पर्यश्नोतु परितो व्याप्नोतु अस्मद्रक्षणाय सर्वतस्तिष्ठतु । किंभूतो रथः । दूडभः । दभ्नोतिर्वधकर्मा । दुःखेन दभ्यते दुर्दभः । केनापि सहसा हिंसितुमशक्यः । 'उकारं दुर्दे०' (प्रा० का० ३ । ३ । ४) इति प्रातिशाख्यसूत्रेण दुरो रेफस्य उकारः अग्निपदस्य डः । येन रथेन त्वं दाशुषो यजमानान् रक्षसि पालयसि । 'यजमाना वै दाश्वांसः' (२ । ३ । ४ । ३८) इति श्रुतेः । बृहदुपस्थानं समाप्तम् ॥ ३६ ॥

## सप्तत्रिंशी।

भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो वीरैः सुपोषः पोषैः। नर्य प्रजां मे पाहि शꣳस्य पशून्मे पाह्यथर्य पितुं मे पाहि ॥ ३७

**उ०** क्षुल्लकोपस्थानमुच्यते। आसुरेरार्षम्। यजूंषि। भूर्भुवःस्वः। हे भगवन्नग्ने, यस्त्वं महाव्याहृत्यात्मकस्तं त्वां याचे। शोभनप्रजाः प्रजाभिः स्यां भवेयम्। शोभनवीरश्च वीरैः शोभनपोषश्च पोषैः। पोषो भूगोहिरण्यधान्यादिभिः। प्रवसन् यजमानः गार्हपत्यमुपतिष्ठते। नर्य प्रजां मे पाहि। नरेभ्यो हितो नर्यः। हे नर्य, प्रजां मे पाहि गोपाय। आहवनीयमुपतिष्ठते। शंस्य 'शंसु स्तुतौ'। हे स्तुत्य, पशून्मे पाहि गोपाय। दक्षिणाग्निमुपतिष्ठते। अथर्य। अतनवान् अथर्यः। 'अत सातत्यगमने'। सततं हि दक्षिणाग्निर्गार्हपत्यस्य स्थानं गच्छति। हे अतनवन् अन्नं मे गोपाय ॥ ३७ ॥

**म०** अथ क्षुल्लकोपस्थानमासुरिदृष्टम्। 'भूर्भुवःस्वरिति वोभौ' ( का० ४। १२। १२ ) इति। वाशब्दो विकल्पार्थः। पूर्वोक्तेनोपप्रयन्त इत्यादिना वक्ष्यमाणेन भूर्भुवःस्वरित्यादिना वोभावग्नी उपतिष्ठेतोभयोपस्थानं कुर्यादिति सूत्रार्थः। हे अग्ने, भूर्भुवःस्वः त्वं व्याहृत्यादित्रयात्मकः तदर्थभूतलोकत्रयात्मको वा। अतस्त्वत्प्रसादादहं प्रजाभिः बन्धुभृत्यादिरूपाभिः कृत्वा सुप्रजाः स्यामनुकूलत्वेन शोभनाः प्रजा यस्य तादृशो भवेयम्। तथा वीरैः पुत्रैः सुवीरः स्यां शास्त्रीयमार्गवर्तिशोभनपुत्रयुक्तो भवेयम्। तथा पोषैः हिरण्यादिपोषणैः सुपोषः स्यां बहुमूल्यार्हहिरण्यादियुक्तो भवेयम् ॥

प्रवत्स्यदुपस्थानमागतोपस्थानं चादित्यदृष्टम् ॥

'प्रवत्स्यन् सर्वान्नर्येति प्रतिमन्त्रम्' ( का० ४। ११। १३ ) इति। यदा यजमानो ग्रामान्तरं गन्तुमिच्छति तदानीं सर्वानग्नीन्नर्येत्यादिमन्त्रैरुपतिष्ठेत। अथ मन्त्रार्थः। नर्य नरेभ्यो हित गार्हपत्य, मे प्रजां पाहि। आहवनीयमुपतिष्ठते। हे शंस्य अनुष्ठातृभिः शंसितुं योग्याहवनीय, मे मम प्रजां पाहि रक्ष। दक्षिणाग्निमुपतिष्ठते। हे अथर्य दक्षिणाग्ने, मे पितुमन्नं पाहि। अतनवानथर्यः। 'अत सातत्यगमने'। सततं गार्हपत्यात्स्वस्थानं दक्षिणाग्निर्गच्छति तेनाथर्यः। निपातोऽयम् ॥ ३७ ॥

## अष्टत्रिंशी।

आग॑न्म विश्ववेदसमस्मभ्यं वसुवित्तमम्। अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्व ॥ ३८ ॥

**उ०** प्रत्यागत आहवनीयमुपतिष्ठते। आगन्म। अनुष्टुप्। हे आहवनीय, यं त्वामागता वयम्। 'विश्ववेदसं सर्वतो धनम्। अस्मभ्यम्। षष्ठ्यर्थे चतुर्थी। अस्माकम् वसुवित्तमम्। अतिशयेन धनस्य वेदितारम्। सः त्वं हे भगवन् अग्ने, सम्राट्। 'राजृ दीप्तौ' सम्यग्दीप्तिमत्। अभिद्युम्नम्। द्युम्नं द्योततेर्यशो वा अन्नं वा। अभिसहः। सह इति बलनाम। आयच्छस्व। यमेरेतद्रूपम्। एतदुक्तं भवति। अस्मानभि अन्नं यशो वा बलं वा गृह्णीष्व। अगमयेत्यर्थः। यद्वा अस्मान् द्युम्नमभि बलं वाभियच्छस्व स्थापयस्व समर्पय। आयच्छतिः स्थापनार्थः ॥ ३८ ॥

**म०** 'समित्पाणिरुपेत्य कंचिदुपतिष्ठत आहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति प्रतिमन्त्रम्' ( का० ४। १२। १८ ) इति। समिधं हस्ते आदाय कंचिदपि जनमगत्वैव प्रथममेवाग्न्यगारं प्राप्यागन्मेत्यादिमन्त्रत्रयेणाहवनीयादीनुपतिष्ठत इति सूत्रार्थः। अनुष्टुबाहवनीयदेवत्या। हे अग्ने, सम्राट् सम्यक् राजते दीप्यते सम्राट् तथाविधाग्ने आहवनीय, वयं त्वामागन्म त्वामुद्दिश्य ग्रामान्तरात्प्रत्यागताः। किंभूतं त्वाम्। विश्ववेदसं विश्वं वेत्ति वेदयतीति वा विश्ववेदास्तम्। विश्वं वेदो धनं यस्येति वा। सर्वज्ञं सर्वधनं वा। पुनः किंभूतम्। अस्मभ्यं वसुवित्तममस्मदर्थमतिशयेन वसुनो धनस्य वेदितारं लब्धारम्। किंच। हे अग्ने, द्युम्नं सहश्च अस्मभ्यमभि आयच्छस्व। 'दाण् दाने'। 'पाघ्रा-' ( पा० ७। ३। १८ ) इत्यादिना यच्छादेशः। यशो बलं चास्मभ्यं देहि। 'द्युम्नं द्योततेर्यशो वान्नं वा' ( निरु० ५। ५ )। सह इति बलनाम (निघं० २। ९ ) यच्छस्वेति यमे रूपं वा। आयच्छस्व आगमय। यच्छतिः स्थापनार्थो वा। अस्मासु यशो बलं च स्थापय ॥ ३८ ॥

## एकोनचत्वारिंशी।

अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः। अग्ने गृहपतेऽभि द्युम्नमभि सह आयच्छस्व ॥ ३९ ॥

**उ०** गार्हपत्यमुपतिष्ठते। अयमग्निः न्यङ्कुसारिणी बृहती। योऽयमग्निर्गृहपतिर्गार्हपत्याख्यः प्रजायाश्च अतिशयेन धनस्य वेदिता तमेतं याचे हे अग्ने, गृहपति अभिद्युम्नेति व्याख्यातम् ॥ ३९ ॥

**म०** गार्हपत्यमुपतिष्ठते। न्यङ्कुसारिणी बृहती। यस्या द्वितीयः पादो द्वादशाक्षरोऽन्ये त्रयोऽष्टाक्षराः सा न्यङ्कुसारिणी। अत्र तृतीयो नवार्णस्तेनैकाधिका। अयं पुरोऽवस्थितो गार्हपत्य एतन्नामकोऽग्निर्गृहस्य पतिः पालकः। प्रजायाः पुत्रपौत्रादिकायाः अनुग्रहार्थं वसुवित्तमः अतिशयेन धनस्य लब्धा। हे अग्ने, स त्वं द्युम्नं सहश्चाभ्यायच्छस्व देहि ॥ ३९ ॥

## चत्वारिंशी।

अयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः। अग्ने पुरीष्याभि द्युम्नमभि सह आयच्छस्व ॥ ४० ॥

**उ०** दक्षिणाग्न्युपस्थानम् । अयमग्निः । अनुष्टुप् । योयमग्निः । पुरीष्यः पशव्यः । 'पशवो वै पुरीषम्' इति श्रुतिः । रयिमान्धनवान् पुष्टेर्वर्धयिता । तमेतं प्रत्यक्षीकृत्य याचे । हे अग्ने पुरीष्य, द्युम्नं बलं च प्रत्यस्मान्निधेहि ॥४०॥

**म०** दक्षिणाग्निमुपतिष्ठते । अनुष्टुप् । योऽयमग्निः पुरीष्यः पशव्यः । 'पशवो वै पुरीषं' इति श्रुतेः । रयिमान्धनवान् पुष्टिवर्धनः पोषस्य वर्धयिता । तं याचे । हे अग्ने पुरीष्य पशुहित, द्युम्नं सहस्राभ्यायच्छस्व देहि ॥ ४० ॥

## एकचत्वारिंशी ।

गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ४१ ॥

**उ०** गृहानुपैति । गृहा मा बिभीत । त्रिष्टुब्विरा- [illegible] बिभीत भयं मुञ्चत मा वेपध्वम् । 'टुवेपृ कम्पने' [illegible] । वेपतिः कम्पनार्थः । कम्पनं मुञ्चत । यतो वयम् युष्मा[illegible]न् ऊर्जं अन्नं बिभ्रतः धारयमाणान् अनुपक्षीणान् [illegible]नैव आहमसि आगताः स्मः । किंच अहमपि ऊर्जं अन्नं [illegible] बिभ्रन् धारयन् वः युष्मान् प्रति सुमनाः शोभनमन[illegible]ः सुमेधाः शोभनप्रज्ञः सन् गृहानैमि गृहान्प्रत्याग[illegible]च्छामि । मनसा मोदमानः हृष्यन् । आ इमः बहुवचनम् । एमि एकवचनम् । आत्मनि विकल्पेन बहुवचनं स्मर्यत इत्यदोषः ॥ ४१ ॥

**म०** 'गृहा मा बिभीतेति गृहानुपैति' (का० ४ । १२ । २२ ) इति । ग्रामान्तरादागतो गृहा मेत्यादिमन्त्रत्रयेण गृहं प्राप्नुयात् । तिस्रोऽपि वास्तुदेवत्याः शंयुदृष्टाः । त्रिष्टुब्विराड्रूपा । यस्या एकादशार्णास्त्रयः पादा एकोऽष्टार्णः सा विराड्रूपा । अत्र प्रथमो दशार्णस्तेनैकोना । हे गृहाः, यूयं मा बिभीत । पालको यजमानो गत इति भयं मा कुरुत । मा च वेपध्वम् । कोऽपि शत्रुरागत्य विनाशयिष्यतीति बुद्ध्या कम्पं मा कार्ष्ट । यतो वयमूर्जं बिभ्रतो धारयमाणानक्षीणान्नानेव युष्मान् एमसि । आ इमः आगताः स्मः । यथा यूयमूर्जं बिभ्रतः तथाहमपि ऊर्जं बिभ्रत् धारयन् सुमनाः शोभनमनस्कः सुमेधाः शोभनधारणप्रज्ञोपेतः । मनसा दुःखरहितेन मोदमानः हृष्यन् वो युष्मान् गृहानैमि आगच्छामि । एमः ऐमीत्यात्मनि विकल्पेन बहुवचनम् 'अस्मदो द्वयोश्च' (पा० १ । २ । ५९ ) इत्युक्तेः ॥ ४१ ॥

## द्विचत्वारिंशी ।

येषामध्येति प्रवसन्येषु सौमनसो बहुः । गृहानुप ह्वयामहे ते नो जानन्तु जानतः ॥ ४२ ॥

**उ०** येषामध्येति । अनुष्टुप् । येषां गृहाणामध्येति । 'इक् स्मरणे' इत्येतस्यैतद्रूपं नतु 'इङ् अध्ययने' इत्येतस्य । येषां गृहाणां स्मरति प्रवसन् गृहपतिः । येषु च सौमनसो बहुः । येषु गृहेषु बहुप्रकारं सौमनस्यं विद्यते तान् गृहानुपह्वयामहे आह्वयामः । ते चाहूताः सन्तो नो जानन्तु । अस्मद्विषयां प्रत्यभिज्ञां कुर्वन्तु । जानतोऽस्मान् प्रत्यभिज्ञावतोऽस्मान् ॥ ४२ ॥

**म०** अनुष्टुप् । प्रवसन् देशान्तरं गच्छन् यजमानो येषामध्येति । 'इक् स्मरणे' । यान् गृहान् स्मरति । 'अधीगर्थदयेशां कर्मणि' (पा० २ । ३ । ५२ ) इति षष्ठी । गृहविषयं क्षेमं सदा चिन्तयतीत्यर्थः । तथा येषु गृहेषु यजमानस्य बहुः सौमनसो सुमनसो भावः प्रीत्यतिशयः । वयं तान् गृहानुपह्वयामहे आह्वयामः । गृहाभिमानी देवोऽस्मत्समीपमागच्छत्वित्यर्थः । ते गृहदेवा आहुताः सन्तः जानतः उपकाराभिज्ञान् नोऽस्मान् जानन्तु । एते कृतघ्ना न भवन्तीत्यवगच्छन्तु ॥ ४२ ॥

## त्रिचत्वारिंशी ।

उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु नः । क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शंयोः शंयोः ॥४३॥

**उ०** उपहूता इह । त्र्यवसाना महापङ्क्तिः । अभ्यनुज्ञाता इह । गृहेषु न इत्येतत्पदद्वयं विप्रकृष्टमिह संबध्यते । इहास्माकं गृहेषु गावः अजा अवयः उपहूताः । अथो अपिच अन्नस्य कीलालः । कीलालशब्दो रसवचनः । पड्रसमिदमन्नमभ्यनुज्ञायते । क्षेमाय वः इति प्रविशति । गृहाः उच्यन्ते । क्षेमाय अविनाशाय वः युष्मान् शान्त्यै च प्रपद्ये प्रविशामि । शिवं शग्मं द्वे अप्येते सुखस्य नाम्नी । अनेकप्रकारं सुखं भवत्विति शेषः । कस्य शंयोः । शमिति सुखनाम । 'इदंयुरिदंकामयमानः' । सुखकामस्य । नयं प्रजामित्यादि आदित्यार्षम् ॥ ४३ ॥

**म०** त्र्यवसाना महापङ्क्तिः । यस्या अष्टार्णाः षट् पादाः सा महापङ्क्तिः । पञ्चमो नवमार्णस्तेनैकाधिका । इह गृहेषु गाव उपहूताः धेनवो बलीवर्दाश्च सुखेन तिष्ठन्त्वित्येवमनुज्ञाताः। यथा इह गृहेषु अजावयः उपहूताः अजात्वावित्वजातिद्वययुक्ताः पशव उपहूताः सुखेन वर्तन्तामित्यस्माभिरनुज्ञाताः । अथो अपिच अन्नस्य कीलालः अन्नसंबन्धी रसविशेषो नोऽस्मदीयेषु गृहेषु उपहूतः समृद्धो भवत्वित्येवमस्माभिरनुज्ञातः । 'क्षेमाय व इति प्रविशति' (का० ४ । १२ । २३ ) इति । हे गृहाः, वो युष्मान् प्रपद्ये प्राप्नोमि । किमर्थम् । क्षेमाय विद्यमानस्य वसुनो रक्षणं क्षेमस्तदर्थम् । शान्त्यै मम सर्वानिष्टशमनाय । शंयोः शमिति सुखनाम ( निघं० ३ । ६ । १९ ) तत्कामयते इति शंयुः । 'इदंयुरिदंकामयमानः' ( निरु० ६ ।

३१ ) इति यास्कोक्तत्वात्तादृशस्य मम । शिवं शग्ममिति द्वे सुखनामनी ( निघं ३ । ६ । १८-२२ ) तत्राद्यमैहिकं द्वितीयमामुष्मिकम् । उभयविधं सुखं भूतादिति शेषः । शंयोरित्यभ्यासोऽत्यादरार्थः ॥ ४३ ॥

इत्युपस्थानमन्त्राः समाप्ताः ॥

## चतुश्चत्वारिंशी ।

प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः ॥ ४४ ॥

उ० प्रघासिनो हवामहे । चातुर्मास्यमन्त्राः । प्रजापतेरार्षम् । गायत्रीमारुती । शुक्रज्योतिश्चेति सप्त सप्त मारुता गणाः । तत्र स्वतवांश्च प्रघासी चेति पठ्यते । तदेतदुच्यते । प्रघास्युपलक्षिता मरुतः प्रघासिनः हवामहे आह्वयामः । ये च शुक्रज्योतिःप्रभृतयो मरुतस्तांश्च हवामहे । रिशादसः । रिशतिर्हिंसार्थः । 'दस उपक्षये' । ब्राह्मणान् रेशयन्त उपक्षयन्तीति रिशादासिनः सन्तो रिशादस इत्युच्यन्ते । कथंभूतान्हवामहे । करंभेण सजोषसः करम्भपात्रैः समानप्रीतयः ॥ ४४ ॥

म० अथ चातुर्मास्यमन्त्राः प्रजापतिदृष्टाः । चातुर्मास्याख्यो यागः । स पर्वचतुष्टयात्मकः । वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि । तत्र वरुणप्रघासाख्ये द्वितीये पर्वणि दक्षिणोत्तरयोर्द्वयोर्वेद्योर्हविष्वासादितेषु प्रतिप्रस्थाता पत्नीमुदानयंस्तदीयं जारं पृच्छेत् केन चरसीति । सापि तं ब्रूयात् । 'आख्याते प्रघासिन इत्येनां वाचयति नयन्' ( का० ५ । ५ । १० ) इति । पत्न्या जारे कथिते सति एनां पत्नीं नयन् प्रतिप्रस्थाता प्रघासिन इति मन्त्रं वाचयति । मारुती गायत्री । वयं मरुतो हवामहे । चकारेण तदीयपरिचारकाः समुच्चीयन्ते । किंभूतान्मरुतः । प्रघासिनः 'घस्लृ अदने' प्रकर्षेण घस्यते भक्ष्यते इति प्रघासो हविर्विशेषः । स एषामस्तीति तान् प्रघासिनः एतन्नामकान् । शुक्रज्योतिरित्यादयः सप्तसप्तका मारुता गणाः । तत्र स्वतवांश्च प्रघासी चेति पठ्यते ( अध्या० १७ । ८५ ) । प्रघास्युपलक्षितान् मरुतः आह्वयामः । पुनः किंभूतान् । रिशादसः रिशतिर्हिंसार्थः । रिशां वैरिकृतां हिंसां दस्यन्ति उपक्षयन्तीति रिशादसः । 'दसु उपक्षये' क्विप् । यद्वा रिशन्ति हिंसन्तीति रिशाः । 'इगुपध' ( पा० ३ । १ । १३५ ) इति कः । रिशान् हिंसकान् दस्यन्तीति रिशादसः । यद्वा रिशन्तीति रिशन्तः । शतरि दीर्घश्छान्दसः । रिशतोऽस्यन्ति क्षिपन्ति ते रिशादसः । असतेर्विच् । तथा करम्भेण सजोषसः यवमयो हविर्विशेषः करम्भः तेन सजोषसः समानप्रीतयस्तान् तथाविधान्मरुतो हवामहे ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा ॥ ४५ ॥

उ० पत्नीवाचनो मन्त्रः । पत्नी दक्षिणाग्नौ करंभपात्राणि जुहोति । अनुष्टुभा मारुत्या । यच्च ग्रामे वसन्तो यच्चारण्ये यच्च सभायामवस्थिताः यच्च इन्द्रिये प्रजननेनावस्थिताः सन्तो यदेनश्चकृमा वयम् । एनःशब्दः पापवचनः । यच्छब्दश्चाधस्तनैः चतुर्भिर्यच्छब्दैरेकीभूय वीप्सार्थो भवति । अथ कोऽर्थः । यत्र यत्र ग्रामादिष्ववस्थिताः सन्तः पापं चकृम कृतवन्तो वयम् । इदं तदवयजामहे । अवपूर्वो यजिर्नाशने वर्तते । एतत्पापं नाशयामः । स्वाहा सुहुतं चैतत् हविर्भवतु ॥ ४५ ॥

म० मारुत्यनुष्टुप् । 'करम्भपात्राणि जुहोति शूर्पेण मूर्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखौ जायापती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा यद्ग्राम' इति ( का० ५ । ५ । ११ ) इति । यवपिष्टेन निर्मितानि सन्तानपरिमितान्येकाधिकानि वर्तुलादिरूपाणि करम्भपात्राणि । तानि [illegible] पत्नी दक्षिणाग्नौ जुहुयादित्येकः पक्षः । दम्पती द्वौ वा जुहुयातामित्यपरः पक्षः । तौ च दक्षिणेन मार्गेण तानि पात्राण्याहृत्य वेदेः पूर्वदिशि पश्चिमदिशि वा स्थित्वा जुहुयाताम् । अथ मन्त्रार्थः । ग्रामे वसन्तो वयं यदेनः पापं ग्रामोपद्रवरूपं चकृम कृतवन्तः । तथारण्ये वसन्तो यदेनो मृगोपद्रवरूपं चकृम । तथा सभायां स्थिता यदेनो महाजनतिरस्कारादिकं चकृम । तथेन्द्रिये जिह्वोपस्थरूपे प्रीतिमन्तो वयं यदेनः कलञ्जभक्षणपरस्त्रीगमनादिकं चकृम । तथान्यत्रापि भृत्यस्वाम्यादौ यदेनः ताडनावज्ञादिकं चकृम तदिदं सर्वं पापमवयजामहे विनाशयामः । अवपूर्वो यजिर्नाशनार्थः । स्वाहा एतद्धविर्देवतायै पापविनाशिन्यै दत्तम् ॥ ४५ ॥

## षट्चत्वारिंशी ।

मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥ ४६ ॥

उ० मो षू णः ऐन्द्रीमारुती विराजं यजमानो जपति । 'यत्र वै प्रजापतिः प्रजानां मरुतः पाप्मानं विमेथिरे' इत्यादिना इतिहासेन निदानवचनं श्रुतिः करोति । मो-षूणः । मो इत्ययं निपातः प्रतिषेधार्थीयः पुरस्तादाख्यातस्य भवति । यस्यार्थं प्रतिषेधयति । नचाख्यातं विद्यते । अतः शृत्युक्तमध्याहियते । हे इन्द्र, मा विमन्थीः माहिंसीः । सू इत्यनर्थकः । नोऽस्माकं प्रजाः । अत्र पृत्सु एषु संग्रामेषु

वर्तमानः। देवैः मरुद्भिः सहितः। क उपकार इति चेत्, उपकृत्य हि प्रत्युपकारः प्रार्थ्यते। अस्ति हि यस्मादस्ति। स्म इत्यनर्थकः। ते तव विषये शुष्मिन्। शुष्म इति बलनाम। हे बलवन्, अवयाः। अवपूर्वस्य यजतेरेतद्रूपम्। अवयुतो यागः पृथग्भागः तद्योगी। किंच महश्चिदस्य। महतः चित् यस्य तव मीढुषः। 'मिह सेचने'। सेक्तुः वरुणस्य वर्षयितुर्वा। यब्या हविष्मतो मरुतः। यवमयैः करम्भपात्रैः हविष्मतो मरुतः तव स्वभूताः संजाताः त्वदनुग्रहात्। महतो यस्य मीढुषः। वन्दते गीः। 'वदि अभिवादनस्तुत्योः'। स्तौति गीः वाक् स्तोतॄणाम्॥ ४६॥

म० ऐन्द्रमरुद्देवत्या विराट्। यस्या दशाक्षराश्चत्वारः पादाः सा विराट्। चतुर्थ एकाधिकोऽत्र। 'मो षू ण इति यजमानो जपति' (का० ५।५।१२) इति। पृत्स्विति संग्रामनाम (निघं० २।१७।२१) हे इन्द्र, अत्र पृत्सु एषु संग्रामेषु वर्तमानः देवैस्त्वया सह सख्यं प्राप्तैर्मरुन्नामकैर्देवैः सहितस्त्वं नोऽस्मान्मे विनाशयेति शेषः। मोशब्दो निषेधार्थः। सुशब्दो विनाशाभावस्य सौष्ठवं ब्रूते। तथा सति विनाशलेशो मा भूदित्यर्थः संपद्यते। क उपकार इति चेत्। शुष्मेति बलनाम (निघं० २।९।११) हे शुष्मिन् बलवन्निन्द्र, ते तव अवयाः अवयुतो यागः पृथग्भागोऽस्ति हि स्म विद्यत एव खलु। अवपूर्वस्य यजतेरेतद्रूपम्। 'मिह सेचने' धातुः। मीढुषो वृष्टिप्रदत्वेन सेक्तुः। हविष्मतो हविर्योग्यस्य तव यब्या यवमयैः करम्भपात्रैर्निष्पन्ना होमक्रिया महश्चित् पूजा खलु। तस्य यथोक्तपूजोपेतस्य तवास्मासु कृपालुत्वं युक्तमिति भावः। किंच गीरस्मदीया स्तुतिरूपा वाक् मरुतो भवतः सखीन् वन्दते नमस्करोति। नमो मरुद्भ्य इत्येवमाकारायाः स्तुतेर्नमस्काररूपत्वात्। मरुद्विषयनमस्कारेणापि तुष्टस्य तव कृपैव युक्तेत्यर्थः। मो सु नः अत्र 'सुञः' (पा० ८।३।१०७) इति षत्वम्। 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति दीर्घः। 'नश्च धातुस्थोरुषुभ्यः' (पा० ८।४।२७) इति न इत्यस्य णः। स्म इत्यस्यापि 'पूर्वपदात्' (पा० ८।३।१०६) इति षत्वम्। 'अवयाः श्वेतवाः पुरोडाश्' (पा० ८।२।६७) इति विजन्तो निपातः। मीढुषः। 'दाश्वान्साह्वान्मीढ्वांश्च' (पा० ६।१।१२) इति क्वसन्तो निपातः॥४६॥

## सप्तचत्वारिंशी।

अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा। देवेभ्यः कर्म कृत्वास्तं प्रेत सचाभुवः॥ ४७॥

उ० पत्नीं वाचयति। अक्रन्कर्म। अनुष्टुप्। पत्नी ऋत्विजो ब्रवीति। य एते अक्रन् अकार्षुः कृतवन्तः कर्म वरुणप्रघासम् कर्मकृतः ऋत्विजः। सह वाचा मन्त्रेण। मयोभुवा। वाग्विशेषणमेतत्। मय इति सुखनाम। सुखेन या भावयति वाक् तामहं ब्रवीमि। देवेभ्योऽर्थाय कर्म कृत्वा अस्तं गृहान् प्रेत गच्छत मया सहिताः। हे सचाभुवः। सचा सहेत्यर्थः। सहभवनशीला ऋत्विजः॥ ४७॥

म० आग्नेय्यनुष्टुप्। 'अक्रन्कर्मेत्येनां वाचयति' (का० ५।५।१३) इति। कर्मकृतः वरुणप्रघासाख्यकर्मकारिण ऋत्विजः वाचा स्तुतिरूपया सह कर्म वरुणप्रघासानुष्ठानरूपमक्रन् कृतवन्तः। कथंभूतया वाचा। मयोभुवा। मय इति सुखनाम (निघ० ३।६।७) मयो भवति यया सा मयोभूः तया मन्त्ररूपस्तुत्येत्यर्थः। हे सचाभुवः, सचेति सहार्थेऽव्ययं। सहभवनशीलाः परस्परं यजमानेन पत्न्या वास्मिन्कर्मणि सहावस्थिता हे ऋत्विजः, देवेभ्यो देवार्थं कर्म कृत्वा वरुणप्रघासनामकं कर्मानुष्ठायास्तं प्रेत गृहान् गच्छत। अस्तमिति गृहनाम (निघ० ३।४।५)॥ ४७॥

## अष्टचत्वारिंशी।

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि॥ ४८॥

उ० अवभृथ निचुम्पुणः। अवभृथो यज्ञः हे अवभृथ यज्ञ, अवाचीनं पात्राण्यस्मिन् भ्रियन्त इत्यवभृथः। निचुम्पुण नीचैः क्वणन। 'उपांश्ववभृतेष्ट्या चरन्ति' इति श्रुतिः। यस्त्वं नीचैश्चरणोसि नीचैः क्वणनः तं त्वां प्राप्यैव अवदेवैर्देवकृतमेनो यासिषम्। अवनीतवानहम्। किमवनीतवान्। एनः पापम्। कैः, सखिभूतैर्देवैः। किंविषयम्, देवकृतम्। देवविषये यत्कृतम्। अवमर्त्यैर्मर्त्यकृतम्। अवनीतवांश्च मर्त्यैर्मनुष्यैः ऋत्विग्भिः सखिभूतैः। मर्त्यकृतम् मनुष्यविषये यत्कृतं पापम्। अतस्त्वं हे अवभृथ हे देव, रिषः पाहि। रिषतिर्हिंसार्थः क्विबन्तः। तस्य पञ्चमी। रिषः बन्धनात्पाहि गोपाय। कथंभूताद्बन्धनात्। पुरुराव्णः। 'रा दाने'। बहुकर्मोपभोगसन्तापान्दातुः संसारलक्षणाद्बन्धात्। यद्वा 'रु शब्दे'। रुवन्ति शब्दं कुर्वन्ति प्राणिनोस्मिन् संसार्यमाणाः स पुरुरावास्तस्मात्पुरुराव्णः॥ ४८॥

म० यज्ञदैवतं यजुः। 'मज्जयत्यवभृथेति' (का० ५।५।३०) अत्र विनियोगश्चिन्त्य इति। वरुणप्रघासस्य कर्मणोऽन्ते तदङ्गभूतं यदवभृथाख्यं कर्म जलसमीपे क्रियतेऽत्रानेन मन्त्रेण दम्पतीभ्यां जले स्नानं कर्तव्यम्। हे अवभृथ, अवाचीनानि पात्राणि जलमध्ये भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽयमवभृथः। तत्संबोधनं हे अवभृथ यज्ञ, हे निचुम्पुण, 'चुप मन्दायां गतौ'। नितरां चोपति मन्दं गच्छति निचुम्पुणः। उणप्रत्ययो सुमागमश्च। यद्वा नीचैरस्मिन्क्वणन्ति नीचशब्देन। कर्म कुर्वन्त्यवभृथो निचुम्पुणः।

‘वीणस्थूणव्रणभ्रूण’ इत्यादिना नीचैःशब्दोपपदात्क्वणतेः णक्प्रत्ययान्तो निपातः धातोः पुंभाव उपपदस्य निचुम्भावश्च निपातितः। तथाविधावभृथ, यद्यपि त्वं निचेरुरसि नितरां चरतीति निचेरुः नितरां गमनशीलोऽसि तथाप्यत्र निचुम्पुणो भव मन्दगमनो भव। किं प्रयोजनमिति चेत् उच्यते। देवैर्द्योतनात्मकैरस्मदीयैरिन्द्रियैर्देवकृतं हविःस्वामिषु देवेषु कृतमेनः पापं यदस्ति तदवयासिषमस्मिन् जलेऽहमवनीतवानस्मि। तथा मर्त्यैः मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदप्यहमवायासिषमित्यनुवर्तते। इदमस्मत्त्यक्तं पापं यथा त्वां न व्याप्नोति तथा मन्दं गच्छेति भावः। किंच हे देवावभृथाख्य यज्ञ, रिषो वधात् पाहि पालय। रिषतेर्हिंसार्थस्य क्विबन्तस्य पञ्चम्यां रूपम्। किंभूताद्रिषः। पुरुराव्णः। ‘रा दाने’। पुरु बहु विरुद्धं फलं ददातीति पुरुरावा तस्मात्। ‘आतो मनिन्’ (पा० ३।२।७४) इत्यादिना वनिप्। विरुद्धफलदायी वधस्त्वत्प्रसादादस्माकं मा भूदित्यर्थः॥ ४८॥

## एकोनपञ्चाशी।

[illegible]

पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो॥ ४९॥

**उ०** दर्व्योपहन्ति। पूर्णादर्वि। द्वे ऐन्द्र्यावनुष्टुभौ। हे दर्वि, अस्याः स्थालीतोऽन्नं गृहीत्वा पूर्णा सती परा इन्द्रं प्रति पत गच्छ। ततः कर्मफलेन शोभने पूर्णा पुनरापत पुनरागच्छ। एवं दर्वीमुक्त्वा इन्द्रमाह। वस्नेव विक्रीणावहै। वस्नशब्देन मूल्यमुच्यते। वस्नाइव मूल्येनेव आवामध्वर्युयजमानौ विक्रीणावहै। किं तद्विक्रेयं द्रव्यमित्यत आह। इषमन्नम्। ऊर्जमुपसेचनम्। हे शतक्रतो बहुकर्मन्॥ ४९॥

**म०** द्वे ऐन्द्र्यावनुष्टुभौ। साकमेधगतं कर्म किंचिदुच्यते। ‘स्थाल्याः दर्व्यादत्ते पूर्णा दर्वीति’ (का० ५।६।३४)। दर्व्या स्थालीत ओदनग्रहणं करोति प्रथमया। द्वितीयया तं जुहोति। हे दर्वि, अन्नप्रदानसाधनभूते काष्ठादिनिर्मिते, त्वं पूर्णा स्थाल्याः सकाशादन्नं गृहीत्वा पूर्णा भूत्वा परा पूर्णत्वादेवोत्कृष्टा सती पत इन्द्रं प्रति गच्छ। सुपूर्णा कर्मफलेन सुष्ठु पूर्णा सती पुनरापत भूयोऽस्मान्प्रत्यागच्छ। एवं दर्वीमुक्त्वा इन्द्रमाह। हे शतक्रतो बहुकर्मन् इन्द्र त्वं चाहं चोभौ वस्नेव वस्नशब्देन मूल्यं तृतीयायाः पूर्वसवर्णः’। मूल्येनेव। इषमभीष्टं हविःस्वरूपमन्नमूर्जं हविर्दानफलरूपं रसविशेषं च विक्रीणावहै परस्परं द्रव्यविनिमयरूपं विक्रयं करवावहै। अहं तुभ्यं हविर्ददामि त्वं मह्यं फलं देहीत्यर्थः॥ ४९॥

## पञ्चाशी।

देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारं च हरासि मे निहारं निहराणि ते स्वाहा॥ ५०॥

**उ०** इन्द्र उच्यते। देहि मे मह्यं प्रथमं तावत् ततो ददामि ते तुभ्यं पश्चात्। नि मे धेहि निधेहि मे मम प्रथमम् पश्चान्निते दधे निदधे ते तव। निहारं च हरासि मे। नितरां हरणं निहारः। अवश्यकर्तव्यमुच्यते। मूल्यमिति पर्यायः। स हरसि मे मम। अहमपि निहारं निहराणि ते तव। प्रत्यग्रफलतां मन्त्रदृगाशास्ते॥ ५०॥

**म०** ‘देहि म इति जुहोतीति’ (का० ५।६।३८)। इन्द्रो वदति। हे यजमान, त्वं मे मह्यमिन्द्राय देहि हविः प्रथमं प्रयच्छ। ते तुभ्यं यजमानाय ददामि। अपेक्षितं पश्चात्प्रयच्छामि। एवं प्रथमपादोक्त एवार्थो द्वितीयपादेनादरार्थं पुनरुच्यते। मे मह्यमिन्द्राय निधेहि प्रथमं त्वं हविर्नितरां संपादय। ते तुभ्यं यजमानाय निदधे अपेक्षितं फलं नितरां संपादयामि। एवमिन्द्रवाक्यं श्रुत्वोत्तरार्धेन यजमान आह। नितरां ह्रियत इति निहारो मूल्येन क्रेतव्यः पदार्थ ब्रूते। निहारं मूल्येन क्रेतव्यवस्तुरूपं फलं मे मह्यं यजमानाय हरासि प्रयच्छ। ‘लेटोऽडाटौ’ (पा० ३।४।९४) इत्याडागमः। उत्तरो निहारो मूल्यवाची। निहारं मूल्यभूतं हविः ते तुभ्यमिन्द्राय निहराणि नितरां समर्पयामि। स्वाहाशब्दो हविर्दानार्थः। पूर्वार्धे पादद्वयेनादरेणेन्द्रेण द्विवारं प्रोक्तमर्थमुत्तरार्धेन यजमानः सम्यगङ्गीकरोतीत्यर्थः॥ ५०॥

## एकपञ्चाशी।

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी॥ ५१॥

**उ०** आहवनीयमुपतिष्ठते। अक्षन्नमीमदन्तेति। द्वाभ्यामैन्द्रीभ्यां पङ्क्तिभ्यां पितृयज्ञे पितर उच्यन्ते। अक्षन् अदेर्लुङि घस्लादेशः। अदितवन्तः भुक्तवन्तः पितरः। कथं ज्ञायत इति चेत्। अमीमदन्त हि ‘मद तृप्तौ’। हिशब्दो यस्मादर्थे। यस्मात्तृप्तास्तस्माद्भुक्तवन्त इत्यनुमानम्। तृप्तिविशेषणान्युत्तराणि। अवप्रियाः अधूषत। अवाचीनमन्नविक्षिप्रियाः (?) अन्नभक्तीरुपसमृत्य अधूषत। ‘धूञ् कम्पने’। धुनन्ति गात्राणि। किंच अस्तोषत स्वभानवः। प्रिया अन्नभक्तीरुपसमृत्य दातॄन् स्तुवन्ति। अहोदत्तमहोदत्तं स्वाद्वन्नं बहु इति। स्वभानवः स्वयं दीप्ताः अन्नविस्मयात्। विप्राः प्राप्तप्रज्ञाः मेधाविनः। नविष्ठया मती नवतमया

अपूर्वया मत्या स्तुवन्तीत्यनुवर्तते । एवं पितॄनुपलभ्याथे-न्द्रमाह । योजा । नु क्षिप्रनाम । योजयामि क्षिप्रम् । हे इन्द्र, ते तव हरी हरितवर्णावश्वौ स्वभूतौ । तवापि गमनकालः प्राप्तः ॥ ५१ ॥

**म०** ऐन्द्रीभ्यां पङ्क्तिभ्यां साकमेधगतपितृयज्ञाख्यकर्मणि आहवनीयोपस्थानम् । यस्या अष्टाक्षराः पञ्च पादाः सा पङ्क्तिः । 'यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्ते-त्याहवनीयमुपतिष्ठन्ते द्वाभ्यामिति' ( का० ५ । ९ । २१ ) । पितृयज्ञाख्ये कर्मणि ये पितरः सन्ति तेऽस्माभिर्दत्तं हविः-स्वरूपमन्नमक्षन् भक्षितवन्तः । कथमेतदवगम्यते । हि यस्मादमीमदन्त हर्षं प्राप्ताः । अस्मदीयां भक्तिमवगम्य प्रियाः प्रीतियुक्ताः सन्तः अधूषत स्वकीयं शिरः कम्पितवन्तः । यद्वा प्रियास्तनूरवाधूषत । किंच स्वभानवः स्वयं दीप्तियुक्ताः विप्राः मेधाविनः सन्तः नविष्ठया नवतमया मती मत्या बुद्ध्या युक्ताः अस्तोषत स्तुतिं कृतवन्तः । अहो स्वाद्वन्नं बहु दत्तमहो भक्तिरित्याद्यभिधानं स्तुतिः । अतो हे इन्द्र, नु क्षिप्रं ते तव हरी एतन्नामकौ हरितवर्णावश्वौ योज गमनाय रथे योजय । तवाभीष्टायाः पितृतृप्तेः संपन्नत्वात्तैः पितृभिः सह त्वया गन्तव्यमित्यर्थः । अक्षन् । अदेर्लुङि 'लुङ्सनोर्घस्लृ' ( पा० २ । ४ । ३७ ) इति घस्लादेशः । 'मन्त्रे घस–' ( पा० २ । ४ । ८० ) इत्यादिना च्लेर्लुक् । 'गमहन–' ( पा० ६ । ९ । ६८ ) इत्युपधालोपः । 'खरि च' ( पा० ८ । ४ । ५५ ) इति चर्त्वम् । 'शासिवसि' ( पा० ८ । ३ । ६० ) इति षत्वम् । अडागमः । अमीमदन्त 'मद तृप्तियोगे' चुरादिरात्मनेपदी लुङि णिलोपादौ रूपम् । अधूषत 'धूञ् कम्पने' लुङि सिचि व्यत्ययेन गुणाभावः । मती 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति तृतीयायाः पूर्वसवर्ण-दीर्घः । योज 'युजिर् योगे' ण्यन्तो[illegible] 'छन्दस्युभयथा' ( पा० ३ । ४ । ११७ ) इति शप आर्धधातुकत्वात् '[illegible]' 'निटि' ( पा० ६ । ४ । ५१ ) इति णिलोपः । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति संहितायां दीर्घः ॥ ५१ ॥

## द्विपञ्चाशी ।

सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि । प्र नूनं पूर्णबन्धुरः स्तुतो यासि वशाँ अनु योजा न्विन्द्र ते हरी ॥ ५२ ॥

**उ०** सुसंदृशं शोभनदर्शनम् । त्वा त्वम् वयम् हे मघवन् धनवन्, वन्दिषीमहि । 'वदि अभिवादनस्तुत्योः' । अभिवादयामः । अभिवादनमाह । प्र नूनं पूर्णबन्धुरस्तुतो [illegible] प्रयासि नूनं निश्चयेन । [illegible]रथनीडः सन् । [illegible] रथनीडवचनः । स्तुतश्च स्तोतृभिः । वशान् कान्तौ । कामाननुप्रयासि । यत एवमतो [illegible]जमौ[illegible] । इन्द्र ते हरी ॥ ५२ ॥

**म०** हे मघवन्, वयं त्वा त्वां वन्दिषीमहि स्तुतिकर्तारो भूयास्मेत्याशास्यते । किंभूतं त्वाम् । सुसंदृशं सुष्ठु सम्यक् पश्यति सुसंदृक् तं शोभनदर्शनम् । अनुग्रहदृष्ट्या सर्वस्य द्रष्टारम् । इत्थमस्माभिः स्तुतः त्वं वशान् कामयमानान् यजमानाननुलक्षीकृत्य नूनं प्रयासि अवश्यं गच्छसि । किंभूतः । पूर्णबन्धुरः । बन्धुरशब्दो रथनीडवाची । स्तोतृभ्यो देयैर्धनैः संपूर्णरथनीडोपेतो भूत्वा गच्छसि । हे इन्द्र, स त्वं ते ह[री] योजेति पूर्ववत् ॥ ५२ ॥

## त्रिपञ्चाशी ।

मनो न्वाह्वामहे नाराशंसेन स्तोमेन पितृणां च मन्मभिः ॥ ५३ ॥

**उ०** गार्हपत्यमुपतिष्ठते । मनोन्वाह्वामहे इति तिसृभि[:] गायत्रीभिर्मनोदेवत्याभिः । मनः नु क्षिप्रम् आह्वामहे आ[ह्व]यामः । पितृयज्ञचरणेन पितृलोकमिव मनोगतमासी[त् तद्] आहूयते । केनाह्वयामः । नाराशंसेन स्तोमेन येन न[राः] प्रशस्यन्ते दीर्घायुषः पुत्रवन्तो धनवन्तो [illegible] भिर्गुणैः स नाराशंसः स्तोमः स्तुतिः । पितृणां [illegible] मननीयैः स्तोमैर्मन आह्वयाम इत्यर्थः ॥ ५३ ॥

**म०** तिस्र ऋचो मनोदेवत्या गायत्र्यो बन्धुदृष्टाः । 'मनो न्वाह्वामह इति गार्हपत्यं तिसृभिरिति' ( का० ५ । ९ । २२ ) उपतिष्ठन्त इत्यनुवर्तते ॥ नु क्षिप्रं मन आह्वामहे पितृयज्ञानुष्ठानेन चित्तं पितृलोकं गतमिवासीत् अत आहूयते । यद्वा मनः मनोऽभिमानि दैवतमाह्वामहे आह्वयामः । केन साध[ने]नेन । स्तोमेन स्तोत्रेण । कथंभूतेन । नाराशंसेन । शंस[नं] प्रशंसनं नराणां मनुष्याणां योग्यः शंसो नराशंसः तत्संबन्ध[ि]-[ना]न । स्तोत्रं द्विविधं दैवं मानुषं [illegible] नाम्नो दैवं [illegible] देववच्चैतेनैव दक्षिणानाम्नानाः' ( का० [illegible] । १० । १५ । १६ ) इति । यथा पितृमेधे पुत्रादयः पु[illegible] वामोरूंस्ताडयन्तस्त्रिवारमप्रदक्षिणं परियन्ति । पितरो यैः स्तोत्रैर्म[illegible] दक्षिणोरूंस्ताड[illegible] ह्वयामः ॥ ५३ ॥

## चतुःपञ्चाशी ।

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे ॥ ५४ ॥

**उ०** आ न एतु । आगच्छतु नोऽस्माकं मनः पुनः । किमर्थम् । क्रत्वे क्रतवे । क्रतुः संकल्पः यज्ञो वा । दक्षाय । दक्षः संकल्पसमृद्धिः उत्साहो वा । स यदेव मनसा कामयते इदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदास्मै तत्समृध्यते स दक्षः' इति श्रुतिः । जीवसे जीवनाय । ज्योक् च सूर्यं दृशे । ज्योक् निपातश्चिरवचनः । चिरं सूर्यं दृशे द्रष्टुम् ॥ ५[४]

'वीणस्थूण' **म०** नोऽस्माकं मनः पूर्वोक्तं चित्तं पुनर्भूयः आ एतु आप्रत्ययान्त्वेच्छतु । किमर्थं । क्रत्वे क्रतवे सङ्कल्पाय यज्ञं सङ्कल्पयितुं निपातितक्षाय कर्मण्युत्साहाय । तथाच श्रुतिः 'तदेव मनसा कामचरतीति त इदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत्समृध्यते स दक्षः' इति । ज्योगिति निपातश्चिरवचनः । देवैर्योतत्योगजीवसे चिरं जीवितुम् । सूर्यं दृशे च चिरकालं सूर्यमकृतमेनः लोकयितुं च । एतेषां सङ्कल्पादीनां सिद्धये मनः पुनरागनस्मि । एतु । क्रत्वे । गुणाभावश्छान्दसः । जीवसे तुमर्थे असेमर्थेषु यज्ञयः । दृशे । 'दृशे विख्ये च' ( पा० ३ । ४ । ११ ) इति ह्मवायाधुः ॥ ५४ ॥

## पञ्चपञ्चाशी ।

पुन॑र्नः पि॒तरो॒ मनो॑ ददातु॒ दैव्यो॒ जनः॑ । जी॒वं व्रा॒तꣳ सचेमहि ॥ ५५ ॥

**उ०** पुनर्नः पितरः । हे पितरः, पुनरस्माकं मनः ददातु देवसंबन्धी जनः । ततस्तेन देवजनदत्तेन मजीवं जीवनवन्तम् व्रातं गणम् पुत्रपश्वादिकम् सचेमहि । 'षच परिष्वङ्गे' । परिष्वजेमहि ॥ ५५ ॥

**म०** हे पितरः, भवदनुज्ञया दैव्यो जनो देवसंबन्धी पुरुषः अस्मभ्यं मनः पूर्वोक्तं चित्तं पुनर्भूयो ददातु प्रयच्छतु । अर्पयत्वित्यर्थः । तथा सत्यनुष्ठानं कृत्वा भवत्प्रसादाज्जीवं जीवनवन्तं व्रातं पुत्रपश्वादिकं गणं वयं सचेमहि सेवेमहि । सचतिः सेवनार्थः ॥ ५५ ॥

## षट्पञ्चाशी ।

व॒यꣳ सो॑म व्र॒ते तव॒ मन॑स्त॒नूषु॒ बिभ्र॑तः । प्र॒जाव॑न्तः सचेमहि ॥ ५६ ॥

**उ०** ... जपे विनियुक्ता । हे सोम, वयं व्रते तव । व्रतमिति कर्मनाम । तव कर्मणि वर्तमानाः मनस्तनूषु शरीरेषु जाग्रत्स्वप्नसुषुप्त्यादिकेषु । बिभ्रतः धारयन्तः प्रजावन्तश्च सचेमहि सेवितव्यानि वस्तूनि ॥ ५६ ॥

**म०** सोमदेवत्या गायत्री जपे विनियुक्ता । अत्र पितृयज्ञे सोमनामको देवोऽस्ति । सोमाय पितृमते इत्येवं हविषो विहितत्वात् । हे सोम, वयं यजमानाः तव व्रते कर्मणि वर्तमानाः तनूषु भवच्छरीरेषु मनो बिभ्रतः अस्मदीयं चित्तं धारयन्तः त्वत्कारुण्यात् प्रजावन्तः पुत्रपौत्रादिसंपन्नाः सन्तः सचेमहि सेवेमहि सेवितव्यानि वस्तूनीति शेषः । यद्वा 'षच समवाये' सर्वदा त्वत्संबद्धा भवेम ॥ ५६ ॥

## सप्तपञ्चाशी ।

ए॒ष ते॑ रुद्र भा॒गः स॒ह स्वस्राम्बि॑कया॒ तं जु॑षस्व॒ स्वाहै॒ष ते॑ रुद्र भा॒ग आ॒खुस्ते॑ प॒शुः ॥ ५७ ॥

**उ०** एष ते । रौद्रोयमनुवाकः त्रैयम्बकाः पुरोडाशास्तत्र विनियुक्तः अवदानहोमे । एष ते तव हे रुद्र, भागः । सह स्वस्रा । स्वसेति भगिन्युच्यते । सह भगिन्या अम्बिकया तं भागं जुषस्व । स्वाहा सुहुतमस्तु । अतिरिक्तमाखूत्कर उपकिरति । एष ते तव रुद्र भागः । आखुर्मूषिका ते तव पशुः ॥ ५७ ॥

**म०** द्वे रौद्रे यजुषी विंशत्यक्षरद्वादशाक्षरे । साकमेधगतत्र्यम्बकहविर्विषया मन्त्रा उच्यन्ते । प्रथमस्य यजुषोऽवदानहोमे विनियोगः । तथाच 'एष त इति जुहोतीति' ( का० ५ । १० । १२ ) । रोदयति विरोधिनां शतमिति रुद्रः । हे रुद्र, ते तव स्वस्रा भगिन्या अम्बिकया अम्बिकानाम्न्या सह एषोऽस्माभिर्दीयमानः पुरोडाशः भागः भजनीयः स्वीकर्तुं योग्यः । तं तथाविधं पुरोडाशं त्वं जुषस्व सेवस्व । स्वाहा इदं हविर्दत्तं सुहुतमस्तु । अम्बिकाया रुद्रभगिनीत्वं श्रुत्योक्तम् । 'अम्बिका ह वै नामास्य स्वसा तयास्यैष सह भागः' ( २ । ६ । २ । ९ ) इति । योऽयं रुद्राख्यः क्रूरो देवस्तस्य विरोधिनं हन्तुमिच्छा भवति तदानया भगिन्या क्रूरदेवतया साधनभूतया तं हिनस्ति । सा चाम्बिका शरद्रूपं प्राप्य ज्वरादिकमुत्पाद्य तं विरोधिनं हन्ति । रुद्राम्बिकयोरुग्रत्वमनेन हविषा शान्तं भवति । तथाच तित्तिरिः । 'एष ते रुद्र भागः सह स्वस्राम्बिकयेत्याह शरद्वा अस्याम्बिका स्वसा तया वा एष हिनस्ति यꣳ हिनस्ति तयैवैनꣳ सह शमयति' । 'अतिरिक्तमाखूत्कर उपकिरत्येष त इतीति' ( का० ५ । १० । १३ ) इति । यजमानस्य यावन्तः पुत्रभृत्यादयः पुरुषाः तान् गणयित्वा प्रतिपुरुषमेकैकः पुरोडाश इत्येतावतः पुरोडाशान्निरुप्य ततोऽप्यधिकमेकं पुरोडाशं निर्वपेत् सोऽयमतिरिक्त उच्यते । 'त्रैयम्बकान्निर्वपति रौद्रानेककपालान्यावन्तो यजमानगृह्या एकाधिकान्' ( ५ । १० । १ । २ ) इति कात्यायनोक्तेः । तत्र योऽयमतिरिक्तस्तं न जुहुयात् किंतु मूषकोत्खाते एष त इति मन्त्रेणोपकिरेत् । अथ मन्त्रार्थः । हे रुद्र, एषोऽस्माभिरुपकीर्यमाणोऽतिरिक्तः पुरोडाशः ते भागः त्वया भजनीयः । तथा ते तवाखुः पशुः मूषकः पशुत्वेन समर्पितः । आखुदानेन तुष्टो रुद्रस्तयाम्बिकया यजमानपशून् मारयतीत्यर्थः ॥ ५७ ॥

## अष्टपञ्चाशी ।

अव॑ रु॒द्रम॑दी॒मह्यव॑ दे॒वं त्र्य॑म्बकम् । यथा॑ नो॒ वस्य॑स॒स्कर॒द्यथा॑ नः॒ श्रेय॑स॒स्कर॒द्यथा॑ नो व्यवसा॒यया॑त् ॥ ५८ ॥

**उ०** आगत्य जपति । अवरुद्रम् । द्वे पङ्क्तिककुभौ । अवयुत्य पृथक् कृत्वान्याभ्यो देवताभ्यो रुद्रम् अदीमहि 'अद भक्षणे' छान्दसो णिचो लोपः । रुद्रमादयामः भोजयामः । अवगम्य च तं ज्ञात्वा देवं त्र्यम्बकम् । तथाच भोजयामः । यथा नो वस्यसस्करत् येन प्रकारेणास्मान्वसीयसः कुर्यात् । 'वस निवासे' इत्यस्य तृजन्तस्य वस्तेति भवति । ततः 'तुश्छन्दसि' इति ईयसुनि कृते वसीयस इति भवति । तत इकारलोपे वस्यस इति भवति । वस्तृतरानिति पर्यायः । वसनशीलानित्यर्थः । तथाचास्मान् श्रेयसः प्रशस्यतरान् कुर्यात् । यथा चास्मान् व्यवसाययात् । विपूर्वस्यावपूर्वस्य च 'षोन्तकर्मणि' इत्यस्य ण्यन्तस्य आशिषि लुङि सार्वधातुके यासुटि व्यवसाययादित्येतद्रूपं भवति । यथा चास्मान् सर्वकर्मणामन्तं प्रापयेदित्यर्थः ॥ ५८ ॥

**म०** द्वे रौद्र्यौ पङ्क्तिककुभौ । यस्या द्वितीयः पादः द्वादशाक्षरः प्रथमतृतीयावष्टाक्षरौ सा ककुप् । द्वयोर्जपे विनियोगः । तथा 'आगम्याव रुद्रमदीमहीति जपतीति' ( का० ५ । १० । १४ ) । रुद्रमव । असौ रुद्र इति मनसा तमवगत्यादीमहि त्वदनुग्रहादन्नं भक्षयेम । तथा त्र्यम्बकं त्रीण्यम्बकानि नेत्राणि यस्य तादृशं देवमव त्रिनेत्रोऽयं देव इति मनसावगत्यादीमहीत्यनुवर्तते । यद्वा अदीमहीत्यत्र णिचो लोपश्छान्दसः । अवयुत्यान्यदेवताभ्यः पृथक्कृत्य रुद्रमदीमहि आदयामो भोजयामः । अवगम्य ज्ञात्वा त्र्यम्बकमादयाम इति । यथा येन प्रकारेण नोऽस्मान्वस्यसः करत् वस्तृतरान् वसनशीलानसौ कुर्यात् । यथाच नोऽस्मान् श्रेयसः करत् ज्ञातिषु प्रशस्यतरान् कुर्यात् । यथा चास्मान् व्यवसाययात् सर्वेषु कार्येषु निश्चययुक्तान् कुर्यात्तथैनं जपाम इत्यर्थः । आशीरियम् । अदीमहि 'छन्दस्युभयथा'इत्यार्धधातुकत्वाल्लिङि णिचो लोपः ( पा० ३ । ४ । ११७ ) । वस्यसः वसतीति वस्ता तृन् अतिशयेन वस्ता वसीयान् । 'तुश्छन्दसि' ( पा० ५ । ३ । ५९ ) इति ईयसुनि कृते 'तुरिष्ठेमेयःसु' ( पा० ६ । ४ । १५४ ) इति तृनो लोपः । वसीयस इति प्राप्ते ईलोपश्छान्दसः ॥ करत् 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति लङ् । विकरणव्यत्ययेन शपि गुणः । 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६ । ४ । ७५ ) इत्यडभावः । व्यवसाययात् लेटि आडागमे 'इतश्च लोपः परस्मैपदेषु ( पा० ३ । ४ । ९७ ) इति इलोपे रूपं विपूर्वस्य ण्यन्तस्य स्यतेः ॥ ५८ ॥

## एकोनषष्टी ।

भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम् । सुखं मेषाय मेष्यै ॥ ५९ ॥

**उ०** भेषजमसि । हे रुद्र, यस्त्वं स्वभावत एव भेषजमौषधं भवसि सर्वप्राणिनाम् । अतः प्रार्थ्यते देहि भेषजम् । गवे अश्वाय पुरुषाय भेषजं देहि । सुखं देहि । सु हितं खेभ्यः प्राणेभ्यः इति सुखम् । मेषाय मेष्यै च ॥५९॥

**म०** हे रुद्र, त्वं भेषजमसि औषधवत्सर्वोपद्रवनिवारकोऽसि । अतोऽस्मदीयेभ्यो गवे अश्वाय पुरुषाय च भैषज्यं सर्वव्याधिनिवारकमौषधं देहि । मेषाय मेष्यै च सुखं देहि । सु हितं खेभ्यः प्राणेभ्य इति सुखम् । अनेन मन्त्रेण गृहपशूनां क्षेमप्राप्तिर्भवति ॥ ५९ ॥

## षष्टी ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ६० ॥

**उ०** त्र्यम्बकम् । द्वावनुष्टुभौ । यं वयं त्र्यम्बकं यजामहे पूजयामः । सुगन्धिम् । 'गन्धस्येदुत्पूति-' इत्यादिना समासान्तः । पुष्टिवर्धनम् पोषस्य वर्धयितारम् । योऽस्मान् उर्वारुकमिव बन्धनात् । उर्वारुकः फलविशेषः स यथा पक्वः स्वबन्धनाद्वियुज्यते एवं मृत्योर्मुक्षीय मोचय मोचयतु । पुरुषव्यत्ययश्छान्दसः । माऽमृतात् । मा कदाचित् अमृतात् मोचयतु । अग्निं त्रिः परियन्त्यनेन मन्त्रेण । कुमार्यश्चोत्तरेण परियन्ति । यं त्र्यम्बकं यजामहे शोभनगन्धम् । पतिवेदनम् भर्तृलम्भयितारम् । उर्वारुकमिव बन्धनात् । इतो मुक्षीय ज्ञातिवर्गान्मोचयतु । मामुतः पतिवर्गान्मोचयतु । 'सा यदि त इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाह' इति श्रुतिः ॥ ६० ॥

**म०** द्वे अनुष्टुभौ 'अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नानास्त्र्यम्बकमिति देववच्चैतेनैव दक्षिणानाघ्नानाः' ( का० ५ । १० । १५ । १६ ) इति । यथा पितृमेधे पुत्रादयः पुरुषाः स्वकीयान् वामोरूंस्ताडयन्तस्त्रिवारमप्रदक्षिणं परियन्ति । यथा च देवतासेवायां दक्षिणोरूंस्ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति । एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः ॥ मन्त्रार्थस्तु । सुगन्धिं दिव्यगन्धोपेतं मर्त्यधर्महीनं पुष्टिवर्धनं धनधान्यादिपुष्टेर्वर्धयितारं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः । ततो रुद्रप्रसादान्मृत्योर्मुक्षीय अपमृत्योः संसारमृत्योश्च मुक्तो भूयासम् । अमृतान्मा मुक्षीय स्वर्गरूपान्मुक्तिरूपाच्चामृतान्मा मुक्षीय मुक्तो मा भूयासम् । एकवचनं बह्वर्थे । मुक्ता मा भूयास्मेत्यर्थः । अभ्युदयनिःश्रेयसरूपात्फलद्वयान्मम भ्रंशो मा भूदित्यर्थः । मृत्योर्मोचने दृष्टान्तः—उर्वारुकमिव बन्धनादिति । यथोर्वारुकं कर्कन्ध्वादेः फलमलन्तपक्वं सत् बन्धनात् स्वस्य वृन्तात् प्रमुच्यते तद्वत् ॥ 'कुमार्यश्चोत्तरेणेति'

(का० ५।१०।१७) । यजमानसंबन्धिन्यः कुमार्योऽपि पूर्वोक्तपुरुषवदुत्तरेण त्र्यम्बकमन्त्रेणाग्निं त्रिः परियन्ति । त्र्यम्बकं यजामहे । कीदृशम् । पतिवेदनं पतिं वेदयतीति तं भर्तुर्लम्भयितारं 'विद्लृ लाभे' । अन्यत्पूर्ववत् । इतो मुक्षीय इतो मातृपितृभ्रातृवर्गान्मुक्षीय मुक्ता भूयासममुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युर्मुक्ता मा भूयासं । जनकस्य गोत्रं गृहं च परित्यज्य पत्युर्गोत्रे गृहे च सर्वदा त्र्यम्बकप्रसादाद्वसामीत्यर्थः । 'सा यदि त इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति' (२।६।२।१४) इति श्रुतेरितोऽमुतःशब्दाभ्यां पितृपतिवर्गौ ग्राह्यौ ॥ ६० ॥

## एकषष्टी ।

एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि । अवततधन्वा पिनाकावसः कृत्तिवासा अहिꣳसन्नः शिवोऽतीहि ॥ ६१ ॥

**उ०** त्र्यम्बकानासजति । एतत्ते रुद्र । एतत् ते तव हे रुद्र, अवसम् पथ्यदानं शं बलम् । तेन पथ्यदानेन परः परस्तात् । मूजवान्नामपर्वतः भगवतो रुद्रस्य वसतिः ताम् । अतीहि गच्छ । कथंभूतो गच्छ । अवततधन्वा अवतारितधनुः । पिनाकावसः पिनाको रुद्राङ्कुशः रुद्राङ्कुशकृतकुशलः । कृत्तिवासाः चर्मवसनः । अहिंसन्नः अविनाशयन्नः अस्मान् शिवः शान्तो भूत्वा अतीहि पूजितं गच्छ ॥ ६१ ॥

**म०** रौद्र्यास्तारपङ्क्तिः । यस्या अन्त्यौ द्वादशाक्षरावाद्यावष्टाक्षरौ पादौ सास्तारपङ्क्तिः । 'मूतयोः कृत्वा वेणुयष्ट्यां वा कूपे वासज्योभयतः स्थाणुवृक्षवꣳशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्येतत्त इतीति' (का० ५।१० । २१) । व्रीहियवादीन् बद्ध्वा वहनार्थं तृणवंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते । तयोरुभयोर्मूतयोस्त्र्यम्बकान् हविःशेषान् प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्यायां वंशयष्ट्यामग्रद्वये तन्मूतद्वयमवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंशयष्टिं संसृजति । ततो गोभिराघ्रातुमशक्यत्वाद्गावो रोगं न प्राप्नुवन्तीत्यर्थः ॥ अथ मन्त्रार्थः । मूजवान्नाम कश्चित्पर्वतो रुद्रस्य वासस्थानम् । अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेष उच्यते । हे रुद्र, एतत्ते तव अवसं हविःशेषाख्यं भोज्यं तेन सहितस्त्वं मूजवतः पर्वतात्परः परभागवर्ती सन्नतीहि अतिक्रम्य गच्छ । कीदृशस्त्वम् । अवततधन्वा अवरोपितधनुष्कः । अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तम् । तथा पिनाकावसः पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः । यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं धनुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः । 'कृत्तिवासा

हविर्ददामि

इत्यनवेक्षमेत्योपस्पृशन्त्यपः' (का० ५।१०।२२—२३) । इति । उन्नते वृक्षादौ मूतद्वयेऽवसज्य प्रत्यावर्तमाना मूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे समागत्योदकं स्पृशेयुरिति सूत्रार्थः । मन्त्रार्थस्तु हे रुद्र, त्वं कृत्तिवासाः चर्माम्बरो नोऽस्मानहिंसन् हिंसामकुर्वन् शिवोऽस्मदीयपूजया संतुष्टः कोपरहितो भूत्वा अतीहि पर्वतमतिक्रम्य गच्छ ॥ ६१ ॥

## द्विषष्टी ।

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ ६२ ॥

**उ०** यजमानो मुण्ड्यमानो जपति । त्र्यायुषम् । उष्णिक् । लिङ्गोक्ता देवता । त्रीण्यायूंषि समाहृतानि बाल्ययौवनस्थविराणि त्र्यायुषम् । यज्जमदग्नेः त्र्यायुषम् यच्च कश्यपस्य यच्च देवेषु तन्नो अस्तु । तदस्माकमस्तु भवतु त्र्यायुषमित्याशीः ॥ ६२ ॥

**म०** आशीर्देवतोष्णिक् । यस्याश्चत्वारः पादाः सप्ताक्षराः सोष्णिक् । 'त्र्यायुषमिति यजमानो जपतीति' (का० ५।२।१६) । सोऽयं जपो वपनकालीनः । जमदग्नेः मुनेर्यत्त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं तथा कश्यपस्यैतन्नामकस्य प्रजापतेः संबन्धि यत्त्र्यायुषं तथा देवेषु इन्द्रादिषु यत्त्र्यायुषमस्ति तत्सर्वं त्र्यायुषं नोऽस्माकं यजमानानामस्तु । जमदग्न्यादीनां बाल्यादिषु यादृशं चरितं तादृशं नो भूयादित्यर्थः ॥ ६२ ॥

## त्रिषष्टी ।

शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः । निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ६३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां तृतीयोऽध्यायः ॥ ३ ॥

**उ०** लोहक्षुरमादत्ते । शिवोनामासि । हे क्षुर, यतः त्वं शान्तनामासि । यस्य च तव स्वधितिः पिता । स्वधिः वज्रः । तस्मै नमः ते तुभ्यं भवतु । मा मां मा हिꣳसीः मा विनाशय । वपति । निवर्तयामि । निपूर्वो वपतिरिह मुण्डनार्थः । मुण्डयामि त्वाम् । आयुरर्थम् अन्नाद्यर्थम् धनस्य पोषार्थम् शोभनापत्यतायै शोभनवीर्याय च ॥ ६३ ॥

इति उवटकृतौ मन्त्रभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

**म०** क्षुरदेवतं यजुः 'शिवो नामेति लोहक्षुरमादायेति' (का० ५।२।१७) । हे क्षुर, त्वं नाम नाम्ना शिवः शान्तोऽसि । स्वधितिः वज्रं ते तव पिता । ते तुभ्यं नमोऽस्तु मां मा हिंसीः । 'निवर्तयामीति वपतीति' (का० ५।२।

१७)। यजमानदैवतं यजुः । निपूर्वो वृतिर्मुण्डनार्थः । हे यजमान, त्वां निवर्तयामि मुण्डयामि । किमर्थम्। आयुषे जीवनाय अन्नाद्यायान्नभक्षणाय प्रजननाय सन्तानाय रायो धनस्य पोषाय पुष्ट्यै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्याय शोभनसामर्थ्याय ॥ ६३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अग्न्याधानादिपित्र्यान्तस्तृतीयोऽध्याय ईरितः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः ।

## तत्र प्रथमा ।

एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे । ऋक्सामाभ्याꣳसंतरन्तो यजुर्भी रायस्पोषेण समिषा मदेम । इमा आपः शमु मे सन्तु देवीरोषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥ १ ॥

उ० एदमगन्म । आग्निष्टोमिका मन्त्राः अवभृथपर्यन्ताः । प्रजापतेरार्षम् । द्वे अप्येते ऋचौ अत्यष्टी व्यवसाने । शालस्तम्भमन्वारभ्य यजमानो जपति । द्वावर्धचौ देवयजनदैवत्यौ । आ इदम् एदं देवयजनम् अगन्म वयम् आगताः स्मः । पृथिव्या उत्कृष्टम् । यत्र यस्मिन्देवयजने । देवासः देवा एव देवासः । 'आज्जसेरसुक्' । अजुषन्त । 'जुषी प्रीतिसेवनयोः' । सेवितवन्तः कामान् । विश्वे सर्वे तमागत्य देवयजनम् । ऋक्सामाभ्यां प्लवभूताभ्यां यज्ञसमुद्रं सन्तरन्तः यजुर्भिश्च रायस्पोषेण धनस्य पुष्ट्या निमित्तभूतया इषा अन्नेन च संमदेम हृष्येमहि तुष्येमहि । उन्दति । इमा आपः शमु मे सन्तु देवीः । शमिति सुखनाम । उ इति पादपूरणे । इमा आपः सुखरूपा मम भवन्तु । देव्यो दानादिगुणयुक्ताः । अपां वज्रश्रुतौ वज्रसंस्तवेऽतः शमाशास्यते । कुशतरुणमन्तर्दधाति । ओषधे त्रायस्व । त्रायतिः पालनार्थः । हे ओषधे, पालय एनं यजमानं क्षुरात्। क्षुरस्यापि वज्रसंबन्धः । क्षुरेणाभिनिदधाति । स्वधिते मैनꣳ हिꣳसीः। स्वधितिर्वज्रः । वज्रकर्म कुर्वन्नवज्रोऽपि वज्रमुच्यते । हे स्वधिते, मा एनं हिंसीः ॥ १ ॥

म० आधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यमन्त्रास्तृतीयाध्याये प्रोक्ताः । चतुर्थाध्यायमारभ्याष्टमस्य द्वात्रिंशत्कण्डिकापर्यन्तमग्निष्टोममन्त्रा उच्यन्ते । तेषां प्रजापतिर्ऋषिः । तत्र चतुर्थे यजमानसंस्कारपूर्वकं सोमक्रयमन्त्राः प्राधान्येनोच्यन्ते । तत्रादौ यजमानः षोडशर्त्विजो वृत्वारण्योरग्नी समारोप्य शालां गच्छेत् । तथा च 'समारोह्याग्नी शालास्तम्भं पूर्वार्धे गृहीत्वारणिपाणिराहेदमगन्मेति' (का० ७।१।३६) । द्वे अत्यष्टी व्यवसाने । तयोः कण्डिकयोः सप्त मन्त्राः । आद्यावर्धचौ देवयजनदेवत्यौ ॥ आ इदम् अगन्मेति पदानि । 'व्यवहिताश्च' (पा० १।४।८२) इति उपसर्गक्रियापदयोर्व्यवधानम् । इदमिति हस्तेन प्रदर्श्यते । वयमिदं पृथिव्याः संबन्धि देवयजनं देवा इज्यन्ते यस्मिंस्तद्देवयजनं स्थानम् आ अगन्म आगताः स्मः । गच्छतेर्लङ्युत्तमबहुवचने व्यत्ययेन शपो लुकि 'मो नो धातोः' (पा० ८।२।६४) इति मस्य नः अडागमश्च । इदं किम् । यत्र देवयजने विश्वेदेवासः सर्वे देवाः अजुषन्त अप्रीयन्त । प्रीत्या स्थिता इत्यर्थः । किंच । वयं रायो धनस्य पोषेण पुष्ट्या इषा इष्यमाणेनान्नेन च संमदेम । 'मदी हर्षे' व्यत्ययेन शप् । हृष्टा भवेम धनैरन्नैश्च तृप्येम । किं कुर्वन्तः । ऋक्सामाभ्याम् ऋक् च साम च ऋक्सामे 'अचतुर-'(पा० ५।४।७७) इति सूत्रेणाजन्तो निपातः । ताभ्यां यजुर्भिश्च वेदत्रयगतमन्त्रैः संतरन्तः । समुद्रवद्गम्भीरं सोमयागं समापयन्त इत्यर्थः । 'दक्षिणं गोदानं वितार्योनत्तीमा आपः' (का० ७।२।९) इति । इमा आपः । आपो देवताः । इमा आपः शिरःक्लेदाय सिच्यमाना एता आपो मे मम यजमानस्य शमु । उ एवार्थे । शं सुखार्थमव्ययम् । शं सुखकारिण्य एव सन्तु भवन्तु । किंभूता आपः । देवीः देव्यः दीव्यन्ति ताः देव्यः द्योतनाः । निर्मला इत्यर्थः । 'यूपवत् कुशतरुणं क्षुरेण चाभिनिधाय छित्त्वेति' (का० ७।२।१०-११) । यथा पश्वर्थयूपस्य छेदे मन्त्रः एवमत्रापि तृणान्तर्धानं क्षुरस्थापनं च मन्त्रद्वयेन कर्तव्यमिति सूत्रार्थः । ओषधे । कुशतरुणं देवता । हे ओषधे कुशतरुण, त्वं यजमानं त्रायस्व क्षुराद्रक्ष । स्वधिते । क्षुरो देवता । हे स्वधिते क्षुर, एनं यजमानं मा हिंसीः ॥ १ ॥

## द्वितीया ।

आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वꣳहि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि । दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳशग्मां परिदधे भद्रं वर्णं पुष्यन् ॥ २ ॥

उ० स्नाति । आपो अस्मान्मातरः शुन्धयन्तु । आप उच्यन्ते । या एता आपः जगतो निर्मात्र्यः ता अस्मान् शुन्धयन्तु शोधयन्तु । किंच घृतेन च नः अस्मान् । घृतप्वः घृतेन पुनन्तीति घृतप्वः । घृतं हि अपां परमं तेजः पवित्रं च । 'तद्वै सुपूतं यं घृतेन पुनन्ति' इति श्रुतिः । 'सुवर्णप्राशो घृतप्राश इति मेध्यानि' इति गौतमः । पुनन्तु यज्ञयोग्यं कुर्वन्तु । स्तुतिपूर्वं हि याच्ञा क्रियते नचात्र स्तुतिरत आह । विश्वं हि रिप्रं प्रवहन्ति देवीः । हिशब्दो यस्मादर्थे । रपो

रिप्रमिति पापनामनी भवतः । यस्मात्स्वभावत एव सर्वं पापं प्रकर्षेण दहन्ति देव्यः । उत्क्रामत्युत्तरपूर्वार्धम् । उदिदाभ्यः शुचिरापूत एमि । उदेमि उद्गच्छामि । इत्शब्दोऽनर्थकः । आभ्योऽब्भ्यः शुचिः सन् आपूतश्च यावत्पापं पावितः । वासः परिधत्ते । दीक्षातपसोः । दीक्षैव दीक्षा । तपःशब्देन उपसद उच्यन्ते तपःप्रधानत्वात् । वासः तन्वात्राणं तनूशब्देनोच्यते । या त्वं दीक्षातपसोस्तनूः शरीरं भवसि 'तां त्वा शिवां शान्तां शग्मां ससुखां साध्वीं वा' इति श्रुतेः । परिदधे आच्छादयामि । भद्रं कल्याणम् । वर्णं दीक्षितरूपम् पुष्यन् वर्धयन् । अनेन हि दीक्षितरूपमभिव्यज्यते ॥ २ ॥

**म०** 'आपो अस्मानिति स्नात्वेति' (का० ७ । २ । १५ ) । मातरः मिमते ता मातरो जगन्निर्मात्र्यो मातृवत्पालयित्र्यो वा आपः अस्मान् कृतक्षौरान् यजमानान् शुन्धयन्तु 'शुन्ध शुद्धौ' शोधयन्तु । क्षौरकर्मनिमित्तामपहतिं निवारयन्त्वित्यर्थः । किंच घृतप्वः 'घृ क्षरणे' जिघर्ति क्षरतीति घृतं तेन क्षरितजलेन पुनन्तीति घृतप्वः जलदेवतास्ताश्च घृतेन क्षरितजलेन नोऽस्मान् पुनन्तु शुद्धान् कुर्वन्तु । किंच देवीः द्योतमाना आपो विश्वं हि । हि एवार्थः । सर्वमेव रिप्रं पापं प्रवहन्ति प्रकर्षेणापनयन्तु । 'रपो रिप्रमिति पापनामनी भवतः' (निरु० ४ । २१ ) इति यास्कः । 'उदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्धमिति' ( का० ७ । २ । १५ ) । अहमाभ्योऽब्भ्यः उदेमि इत् । इदेवार्थे । उद्गच्छाम्येव । जलान्निर्गच्छामीत्यर्थः । किंभूतोऽहम् । शुचिः शुद्धः स्नानेन । तथा आपूतः समन्ताद्भावेनान्तरपि शुद्ध आचमनेन । शुचिरापूत इति शब्दाभ्यां स्नानाचमनाभ्यां बहिरन्तश्च शुद्धिरुक्ता ॥ 'क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतं चेदद्भिरभ्युक्ष्य स्नातवसं (?) वाऽमौत्रधौतं विचितकेशं प्रसारितदशं दीक्षातपसोरिति' ( का० ७ । २ । १६— १९ ) ॥ दीक्षातपसोः वासो देवता । हे क्षौम वस्त्र, त्वं दीक्षातपसोस्तनूरसि । दीक्षा दीक्षणीयेष्टिः । तप उपसदिष्टिः । दीक्षाभिमानिदेवतायास्तपोभिमानिदेवतायाश्च त्वं शरीरवत्प्रियमसि । तां दीक्षातपसोस्तनूं तद्देवताद्वयशरीरभूतां त्वामहं परिदधे धारयामि । किंभूतां त्वाम् । शिवां शग्मां द्वयोरपि शब्दयोः सुखवाचकत्वादत्यन्तसुखरूपां कोमलत्वात् । किंभूतोऽहम् । भद्रं वर्णं पुष्यन् त्वत्परिधानेन कल्याणीं कान्तिं पुष्यन् ॥ २ ॥

## तृतीया ।

म॒ही॒नां पयो॑ऽसि वर्चो॒दा अ॑सि॒ वर्चो॑ मे दे॑हि । वृ॒त्रस्या॑सि क॒नीन॑कश्चक्षु॒र्दा अ॑सि॒ चक्षु॑र्मे देहि ॥३॥

**उ०** तमभ्यनक्ति । नवनीतमुच्यते । महीनां पयोसि । पयोविकारे नवनीते पयःशब्दः । महीनां गवां पयोसि । यतश्च 'वर्चोदा असि' वर्चस्तेज इत्यनर्थान्तरम् । अतो वर्चो मे देहि । अक्षिणी अनक्ति । वृत्रस्यासि । 'यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्' इत्यादिना त्रैककुदस्य चक्षुःसंस्तवस्तदयं मन्त्रोऽभिवदति । वृत्रस्य चक्षुषः संबन्धिनी भवसि त्वम् । कनीनकः पुरुषो यतः हे त्रैककुद् यतश्च स्वभावतः चक्षुर्दा असि अतश्चक्षुर्मे देहि ॥ ३ ॥

**म०** 'शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमं सपादकौ महीनां पयोऽसीति' ( का० ७ । २ । ३३ ) । प्राचीनशालापूर्वभागेषु कुशेषु स्थित्वा नवनीतं गृहीत्वा शिरस आरभ्य पादान्तं शरीराभ्यङ्गं कुर्यादिति सूत्रार्थः । महीनां पयः । नवनीतमुच्यते । हे नवनीत,त्वं महीनां गवां पयोऽसि । महीति गोनामसु पठितम् ( निघ० २ । ११ । ५ ) । नवनीतस्य क्षीरजन्यत्वात्पयस्त्वोपचारः । वर्चोदा असि । वर्चो ददातीति वर्चोदाः । अतिस्निग्धत्वेन कान्तिप्रदमसि । पुंस्त्वमार्षम् । अतो मे मह्यं यजमानाय वर्चो देहि कान्तिं प्रयच्छ ॥ 'वृत्रस्येत्यक्षावनक्ति त्रैककुदाञ्जनेनाभावेऽन्यदिति' ( का० ७ । २ । ३४ ) । त्रिककुत्पर्वतादुत्पन्नाञ्जनं लभ्यते चेत्तेनाक्षिद्वयमञ्ज्यात्तदभावेऽन्यदप्यञ्जनं ग्राह्यमिति सूत्रार्थः । वृत्रस्य । अञ्जनं देवता । हे अञ्जन, त्वं वृत्रस्यासुरस्य कनीनकोऽसि नेत्रमध्यगतकृष्णमण्डलरूपोऽसि । 'यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्' ( ३ । १ । ३ । १२ ) इत्यादिश्रुतिः । तथाच तित्तिरिः 'इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत्तदेवाञ्जनमभवत्'इति । चक्षुर्दा असि कनीनिकारूपत्वात्त्वं दृष्टिप्रदोऽसि । अतो मे मह्यं चक्षुर्देहि सम्यग्दृष्टिपाटवं प्रयच्छ ॥ ३ ॥

## चतुर्थी ।

चि॒त्पति॑र्मा पुनातु वा॒क्पति॑र्मा पुनातु दे॒वो मा॑ सवि॒ता पु॑नात्वच्छिद्रेण प॒वित्रे॑ण सूर्य॑स्य र॒श्मिभिः॑ । तस्य॑ ते पवित्रपते प॒वित्र॑पूतस्य॒ यत्का॑मः पु॒ने तच्छ॑केयम् ॥ ४ ॥

**उ०** कुशपवित्रैः पावयति । चित्पतिर्मा पुनातु । 'चिती संज्ञाने' । अस्य चित् विज्ञानात्मा मनो वाभिधीयते । चित्पतिर्मा पुनातु । 'प्रजापतिर्वै चित्पतिः' इति श्रुतिः । वाक्पतिः । 'प्रजापतिर्वै वाक्पतिः' इति श्रुतिः । देवो मा सविता पुनातु । अच्छिद्रेणेति व्याख्यातम् । तस्य ते पवित्रपते । तस्य पवित्रपूतस्येति च षष्ठ्यन्तयोः संबन्धः । यजमानवाचित्वं च । तस्य मम पवित्रपूतस्य सतः । ते तव प्रसवे वर्तमानस्य हे पवित्रपते देव सवितः, एतद्भवतु । यत्कामः अहमात्मानं पुने पावयामि । तच्छकेयम् तच्छक्नुयाम् । 'यज्ञस्योदृचं गच्छामि' इति श्रुतिः । अच्छिद्रेणेत्येवमादित्रयाणामनुषङ्गो योज्यः ॥ ४ ॥

**म०** 'कुशपवित्रैः चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रेति' (का० ७।३।१)। अच्छिद्रेणेति शेषस्त्रिष्वपि मन्त्रेष्वनुषज्यते। चित्पतिर्मा। चितां ज्ञानानां पतिश्चित्पतिर्मनोभिमानी देवो मा मां यजमानं पुनातु शोधयतु। 'मनो वै चित्पतिः' इति तित्तिरिवाक्यात्। यद्वा चित्पतिः प्रजापतिः। 'प्रजापतिर्वै चित्पतिः' (३।१।२।२२) इति श्रुतेः। किंचाच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः किरणैः। वायुरच्छिद्रं पवित्रं शुद्धिहेतुत्वात् छिद्ररहितत्वाच। यद्वादित्यमण्डलमच्छिद्रं पवित्रम्। 'असौ वा आदित्योऽच्छिद्रं पवित्रम्' इति श्रुतेः। हे पवित्रपते, पवित्रान् शुद्धान् पातीति पवित्रपतिस्तत्संबुद्धौ हे पवित्रपते शुद्धपालक, ते पवित्रपूतस्य तव पवित्रेण पूर्वोक्तेन शुद्धस्य तस्य यजमानस्याभीष्टं भूयादिति शेषः। तदेव स्पष्टयति। यत्कामोऽहं पुने तत् शकेयम्। यः कामो यस्य यत्कामः। यद्वा यस्मिन् कामो यस्य स यत्कामः। सोमयागानुष्ठाने कामवानहं पुने आत्मानं शोधयामि तत्सोमयागानुष्ठाने शक्तो भूयासम्। यज्ञानुष्ठानसामर्थ्यं मेऽस्त्वित्यर्थः। वाक्पतिः वाचां पतिर्बृहस्पतिर्मा मां पुनातु। सविता देवोऽन्तर्यामी मा मां पुनातु। एतन्मन्त्रद्वयं पूर्ववद्योज्यम्॥४॥

## पञ्चमी।

आ वो॑ देवास ईमहे वा॒मं प्र॑य॒त्य॒ध्व॒रे। आ वो॑ देवास आ॒शिषो॑ य॒ज्ञियासो॑ हवामहे॥५॥

**उ०** आवो देवास इति वाचयति। दैवी अनुष्टुप्। ईमहे इति याच्ञाकर्मसु पठितम्। हे देवासः, आ ईमहे आयाचे वो युष्मान्। किम्। वामम् 'वन षण संभक्तौ'। वननीयं संभजनीयं वस्तु। प्रयत्यध्वरे प्रयच्छति यज्ञे। किंच। हे देवासः। आहवामहे आ ह्वयामः। वः युष्माकं संबन्धिन्य आशिषः यज्ञियासः यज्ञसंपादिन्यः। यज्ञिया एव यज्ञियासः। आईमहे आयाचे वः॥५॥

**म०** 'आ वो देवास इति वाचयतीति' (का० ७।३।६)। अध्वर्युर्यजमानं वाचयति। दैवी अनुष्टुप् आशीः। हे देवासः देवाः, वयं वो युष्मान् वामं वननीयं यज्ञफलम् आ ईमहे साकल्येन याचामहे। वन्यते भज्यत इति वामम्। वन 'संभक्तौ'। मप्रत्ययः। ईमहे याचतिकर्मसु पठितो द्विकर्मकः (निघ०३।१९।१)। क्व सति। अध्वरे अस्मदीये यज्ञे प्रयति प्रवर्तमाने सति। प्रैतीति प्रयन् तस्मिन्। प्रपूर्वादिणः शतरि रूपम्। किंच हे देवासो देवाः, वो युष्मान् वयं हवामहे आह्वयामः। किं कर्तुम्। यज्ञियासः यज्ञस्येमा यज्ञिया यज्ञसंबन्धिनीराशिषः फलानि आ आनेतुं समानेतुमित्यर्थः। उपसर्गेण धातुरध्याहर्तव्यः। यज्ञफल प्राप्तुं युष्मानाह्वयाम इत्यर्थः॥५॥

## षष्ठी।

स्वाहा॑ य॒ज्ञं मन॑सः॒ स्वाहो॒रोर॒न्तरि॑क्षा॒त्स्वाहा॒ द्यावा॑पृथि॒वीभ्या॒ᳪ स्वाहा॒ वाता॒दार॑भे॒ स्वाहा॑॥६॥

**उ०** अथ अङ्गुलीर्न्यचते। स्वाहायज्ञं मनसः। यज्ञं मनसः सकाशादहमारभे इत्यनुषङ्गः। उरोर्विस्तीर्णादन्तरिक्षादहमारभे यज्ञं, द्यावापृथिवीभ्यामहमारभे यज्ञम्। वातादहमारभे यज्ञम्। पञ्च स्वाहाकारा येषु यज्ञेषु तत्रार्थवादः। 'यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्ते' इति। स्वाहाकारेण हि हविः प्रदीयत इति स्वाहाकारो यज्ञः॥६॥

**म०** 'स्वाहा यज्ञमित्यङ्गुलीर्न्यचते नानाहस्तयोरेवं शेषं प्रतिमन्त्रं मुष्टीकृत्वा स्वाहेत्युक्त्वा वाग्यतोऽङ्गुष्ठौ तत्सहिते चोत्सृजतीति' (का० ७।३।७–१०)। आद्यमन्त्रेण हस्तद्वयकनिष्ठिकाद्वयं सङ्कोचयति एवमन्यत्रयेणान्याः। स्वाहा वातादारभ इत्युत्तमेन मुष्टिद्वयं कुर्यादिति सूत्रार्थः॥ स्वाहा यज्ञम्। चतुर्णां यजुषां यज्ञो देवता। स्वाहाशब्दस्य निपातत्वेनानेकार्थत्वादुचिता अर्था ब्राह्मणानुसारेण ग्राह्याः। तथाहि। स्वाहा यज्ञं मनसः। मनस इति पञ्चमी तृतीयार्थे। मनसा यज्ञं स्वाहा चित्तेन यज्ञमभिगच्छामि। अत्र स्वाहाशब्दोऽभिगमनार्थः। स्वाहोरोरन्तरिक्षात्। पञ्चमी सप्तम्यर्थे। उरौ विस्तीर्णेऽन्तरिक्षे स्वाहा यज्ञ आश्रितः। स्वाहाशब्दो यज्ञार्थोऽतः प्रभृति। स्वाहा द्यावापृथिवीभ्याम्। द्यावापृथिव्योः स्वाहा यज्ञः श्रितः। लोकत्रयव्यापी यज्ञ इत्यर्थः। स्वाहा वातादारभे। वाताद्वायुप्रसादात् स्वाहा यज्ञमारभे प्रवर्तयामि। वायोः सर्वकर्मप्रवर्तकत्वात्। स्वाहा यज्ञ एवं सिद्ध इति शेषः॥६॥

## सप्तमी।

आकू॑त्यै प्र॒युजे॒ऽग्नये॒ स्वाहा॑ मे॒धायै॒ मन॑से॒ऽग्नये॒ स्वाहा॑ दी॒क्षायै॒ तप॑से॒ऽग्नये॒ स्वाहा॒ सर॑स्वत्यै पू॒ष्णे॒ऽग्नये॒ स्वाहा॑। आपो॑देवीर्बृहतीर्विश्वशंभुवो॒ द्यावा॑पृथि॒वी उरो॑ अन्तरिक्ष। बृह॒स्पत॑ये ह॒विषा॑ विधेम॒ स्वाहा॑॥७॥

**उ०** औद्ग्रभणानि जुहोति। आकूत्यै प्रयुजे। आकुवनमाकूतिः प्रयत्नः आत्मनो धर्मः। मनसः प्रेरणाय भवति। प्रयुङ्क्त इति प्रयुक् आकूतिलक्षणाय प्रयोगलक्षणाय च अग्नयेस्वाहा सुहुतमस्तु। मेधायैमनसे मेधालक्षणाय मनोलक्षणाय च अग्नयेस्वाहा। जपति दीक्षायै तपसे। दीक्षालक्षणाय तपोलक्षणाय च अग्नये स्वाहा। तपःशब्देन चोपसद उच्यन्ते। सरस्वत्यै पूष्णे। 'वाग्वै सरस्वती पशवो वै पूषा' इति श्रुतिः। वाग्लक्षणाय पशुलक्षणाय च अग्नये-

स्वाहा। पशुसाध्यत्वाद्यज्ञस्य पशुग्रहणम्। आपो देवीः विराट् लिङ्गोक्ता देवता। हे आपोदेव्यः, बृहत्यो महत्यः। विश्वशंभुवः सर्वस्य जगतः सुखेन भावयित्र्यः। हे द्यावापृथिव्यौ, हे उरो हे विस्तीर्ण अन्तरिक्ष, युष्मभ्यं च बृहस्पतये च। हविषा विधेम। विदधातिर्दानकर्मा। हविषेति प्रथमाया विपरिणामः। हविर्दद्मः॥ ७॥

म० अतः परं षडौद्ग्रभणहोममन्त्राः। चतुर्णामग्निर्देवता। 'औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्या इति प्रतिमन्त्रमिति' (का० ७।३।१६)। आकूत्यै प्रयुजेऽग्नये स्वाहा। अग्नये वह्निदेवाय स्वाहा सुहुतमिदमस्तु। किंभूतायाग्नये। आकूत्यै प्रयुजे। यज्ञं करिष्यामीत्येवंविधो मानसः संकल्प आकूतिः तस्यै तत्संपूर्त्यै। प्रयुजे प्रयुङ्क्तेऽसौ प्रयुक् तस्मै। संकल्पसिद्ध्यै निर्विघ्नं प्रेरयते इत्यर्थः। इति प्रथमो मन्त्रः॥ मेधायै मनसेऽग्नये स्वाहा। श्रुतयोर्मन्त्रयोर्धारणशक्तिर्मेधा तत्सिद्ध्यर्थं मनसे मदीयमनोभिमानिनेऽग्नये स्वाहा सुहुतमस्तु। विद्याधारणशक्तिर्हि मनसः स्वास्थ्ये सत्येव भवति। इति द्वितीयः॥ जपति। दीक्षायै तपसेऽग्नये स्वाहा। व्रतनियमो दीक्षा तत्सिद्ध्यर्थं मदीयशारीरतपोभिमानिनेऽग्नये स्वाहा। नियमसंरक्षणं तपसैव भवति। ततस्तपोदात्र इत्यर्थः। इति तृतीयः॥ सरस्वत्यै पूष्णेऽग्नये स्वाहा। मन्त्रोच्चारणशक्तिः सरस्वती तत्सिद्ध्यर्थं पूष्णे पुष्णातीति पूषा तस्मै वागिन्द्रियपोषकायाग्नये हुतमस्तु। इति चतुर्थः॥ आपो देवीः। लिङ्गोक्तदेवता विराट्। यस्या एकादशाक्षराः त्रयः पादाः सा विराट्। दशकास्त्रयो विराडेकादशका वेत्युक्तेः। अत्र प्रथमो द्वादशार्णस्तेनैकाधिका। हे आपः, हे द्यावापृथिवी द्यावापृथिव्यौ, हे उरो विस्तीर्ण अन्तरिक्ष, युष्मभ्यं बृहस्पतये च हविषा विधेम हविर्दद्मः। द्वितीयार्थे तृतीया। विधतिर्दानकर्मा। स्वाहा सुहुतमस्तु। किंभूता आपः। देवीः देव्यो द्योतमानाः बृहतीः। बृहत्यः प्रभूताः। उभयत्र पूर्वसवर्णः। विश्वशंभुवः विश्वस्य जगतः शं सुखं भावयन्ति जनयन्ति वा विश्वशंभुवः। इति पञ्चमो मन्त्रः॥ ७॥

## अष्टमी।

विश्वो॑ दे॒वस्य॑ ने॒तुर्मर्तो॑ वुरीत स॒ख्यम्। विश्वो॑ रा॒य इ॑षुध्यति द्यु॒म्नं वृ॑णीत पु॒ष्यसे॒ स्वाहा॑॥ ८॥

उ० विश्वो देवस्य। सावित्र्यनुष्टुप्। विश्वः सर्वो जनः देवस्य दानादिगुणयुक्तस्य नेतुः प्रणेतुः प्रसवितुः मर्त्यः मनुष्यः वुरीत वृणीत सख्यं सखित्वभावम्। किंच विश्वः सर्वः धनाय इषुध्यते प्रार्थयते सवितारम्। इषुध्यतिर्याञ्चाकर्मसु पठितः। किंच द्युम्नं वृणीत। द्युम्नं द्योततेर्यशो वाऽन्नं वा प्रार्थयते। पुष्यसे पोषाय स्थितये। य इत्थंभूतः सविता तस्मै स्वाहा॥ ८॥

म० अथ षष्ठः। सवितृदेवत्यानुष्टुप् स्वस्त्यात्रेयदृष्टा। विश्वो मर्तः सर्वो मनुष्यो नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सवितुः सख्यं सखिभावं वुरीत वृणुते प्रार्थयते। 'वृञ् वरणे' अस्माल्लिङि तङि प्रथमैकवचने व्यत्ययेन शपो लुकि 'उदोष्ठ्यपूर्वस्य' (पा० ७।१।१०२) इति ऋत उदादेशः। किंच विश्वः सर्वो जनो राये धनाय इषुध्यति सवितारं प्रार्थयते। इषुध्यतिर्याञ्चाकर्मसु पठितः (निघ० ३।१९।१४)। किंच द्युम्नं द्योततेर्यशो वान्नं वा तच्च वृणीत प्रार्थयते। किमर्थम्। पुष्यसे पोषाय स्वप्रजापालनाय। पुषेस्तुमर्थे असेप्रत्ययः। यः इत्थंभूतः सविता तस्मै स्वाहा। इति षष्ठ औद्ग्रभणमन्त्रः। समाप्तास्ते॥ ८॥

## नवमी।

ऋ॒क्सा॒मयोः॒ शिल्पे॑ स्थ॒स्ते वा॒मार॑भे॒ ते मा॑ पात॒मास्य य॒ज्ञस्यो॒दृचः॑। शर्मा॑सि॒ शर्म॑ मे यच्छ॒ नम॑स्ते अस्तु॒ मा मा॑ हि॒ꣳसीः॥ ९॥

उ० कृष्णाजिनयोः शुक्लकृष्णसंधिमालभते ऋक्सामयोरिति। ये युवामृचां साम्नां च शिल्पे स्थः। 'यद्वै प्रतिरूपं तच्छिल्पम्' इति श्रुतिः। प्रतिरूपे प्रतिभूते भवथः। ते वां युवाम्। आरभे आलभे। ते च मा पातं गोपायतम्। आ अस्य यज्ञस्य उदृचः उत्तमा ऋचः आसमाप्तेरित्यर्थः। दक्षिणजानुमारोहति। शर्मासि। कृष्णाजिनमुच्यते। शर्म शरणं यतस्त्वमसि अतः शर्म शरणं मे मह्यं यच्छ प्रयच्छ। नमस्ते अस्तु नमस्तुभ्यं भवतु। मा मां माहिꣳसीः॥ ९॥

म० 'कृष्णाजिनयोः सन्धिमालभत ऋक्सामयोरिति' (का० ७।३।२३) इति। कृष्णाजिने देवते। हे कृष्णाजिनगते शुक्लकृष्णरेखे, युवामृक्सामयोः शिल्पेस्थः ऋगभिमानिसामाभिमानिदेवतयोः संबन्धिनी शिल्पे चातुर्थे तद्रूपे भवतः। 'यद्वै प्रतिरूपं तच्छिल्पम्' (३।२।११५) इति श्रुतेः। ते वां तथाविधे युवामारभे अहं स्पृशामि। ते मा पातं तथाविधे युवां मा मां पालयतम्। कियन्तं कालमिति चेत्तदाह। अस्य यज्ञस्य आ उदृचः उत्तमा चरमा ऋगुदृक् तस्या उदृचः आ तत्पर्यन्तम्। 'पञ्चम्यपाङ्परिभिः' (पा० २।३।१०) इति पञ्चमी। एतद्यज्ञसमाप्तिपर्यन्तमित्यर्थः। ऋक्सामाभिमानिन्यौ देवते देवानां यज्ञार्थे स्थिते सत्यौ केनापि निमित्तेन कृष्णमृगरूपं कृत्वा देवेभ्यः पलाय्य दूरे कुत्राप्यतिष्ठतां तन्मृगचर्मणि यच्छुक्लं तदृचो रूपं यत् कृष्णं तत् साम्नो रूपम्। तदुक्तं तित्तिरिणा 'ऋक्सामे वै देवेभ्यो यज्ञार्थे तिष्ठमाने कृष्णमृगरूपं कृत्वापक्राम्यातिष्ठतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनमस्यै साम्नो यत्कृष्णम्' (६।१।३) इति। 'दक्षिणजानुमारोहति शर्मासि' (का० ७।३।२४) इति। हे कृष्णाजिन, त्वं शर्म शरणमसि।

अतो मे मह्यं शर्म शरणं यच्छ देहि। स्वकीयत्वेन स्वीकुर्वित्यर्थः। ते तुभ्यं कृष्णाजिनाय नमोस्तु। मा मां यजमानं मा हिंसीः मा जहि॥ ९॥

## दशमी।

ऊर्ग॑स्याङ्गिर॒स्यूर्ण॑म्रदा॒ ऊर्जं॒ मयि॑ धेहि। सोम॑स्य नी॒विर॑सि॒ विष्णोः॒ शर्मा॑सि॒ शर्म॒ यज॑मान॒स्येन्द्र॑स्य॒ योनि॑रसि सु॒स॒स्याः॒ कृ॒षीस्कृ॑धि। उच्छ्र॑यस्व वनस्पत ऊ॒र्ध्वो मा॑ पा॒ह्यꣳह॑स॒ आस्य य॒ज्ञस्यो॒दृचः॑॥ १०॥

**उ०** मेखलां बध्नीते। ऊर्गसि। अङ्गिरसामार्षम्। अस्मिन्यजुषि ऊर्गसि अन्नं भवसि। आङ्गिरसी अङ्गिरोभिर्दृष्टा। ऊर्णम्रदाः ऊर्णेव मृद्वी। यतस्त्वमधस्तनैर्गुणैर्युक्तासि अत ऊर्जमन्नं मयि धेहि स्थापय। नीवीं कुरुते। सोमस्य नीविरसि। 'पितृदेवत्या वै नीविः' इत्यदीक्षितस्योक्तम्। इह तु सोमयागार्था नीविः सोमेन व्यपदिश्यते। शिरः प्रोर्णुते। विष्णोः शर्मासि। 'उभयं वा एषोऽत्र भवति यो दीक्षते-विष्णुश्च यजमानश्च' इत्यादि निदानम्। विष्णोर्दीक्षितस्य शरणं भवसि। शरणं च यजमानस्य। कृष्णविषाणां सिचि बध्नीते। इन्द्रस्य योनिः। 'देवाश्च वा असुराश्च' इत्यादि निदानम् यथा इन्द्रस्य योनिर्जन्मस्थानं पूर्वं त्वमसि एवमिदानीं यजमानस्येति दर्शनार्थोर्थवादः। भूमौ लिखति। सुसस्याः कृषीस्कृधि। कल्याणधान्याः कृषीः कृधि जनानां कुरु। दण्डमुच्छ्रयति। ऊच्छ्रयस्व ऊर्ध्वो भव। हे वनस्पते, ऊर्ध्वो भूत्वा मां पाहि गोपाय। अꣳहसः पापात्। कियन्तं कालम्। आस्य यज्ञस्योदृचः आ अस्य यज्ञस्य समाप्तेः॥ १०॥

**म०** 'मेखलां बध्नीते वेणिं त्रिवृतꣳ शणमुञ्जमिश्रामन्तरां वासस ऊर्गसीति' (का० ७।३।२६)। अङ्गिरोभिर्दृष्टं मैखलं यजुः। हे मेखले, त्वमाङ्गिरसी अङ्गिरोनामकानामृषीणां संबन्धिनी ऊर्क् अन्नरसरूपासि। किंभूता। ऊर्णम्रदाः ऊर्णेव म्रदीयसी कम्बलवन्मृदुरसि। तथाविधा त्वमूर्जमन्नरसं मयि धेहि स्थापय। अङ्गिरसः स्वर्गं लोकं गच्छन्तोऽन्नरसं व्यभजन्त विभज्यमानेऽवशिष्टोऽन्नरसो भूमौ पतितः शणमुञ्जनामकतृणरूपेणाविर्भूतस्तस्माच्छणमुञ्जमयी मेखला। अतएव मेखलाया आङ्गिरसत्वमिति तित्तिरिणा प्रत्यपादि॥ 'नीविं कुरुते सोमस्य नीविरिति' (का० ७।३।२७)। हे मेखले, त्वं सोमस्य नीविरसि सोमदेवतायाः प्रियभूता ग्रन्थिरसि। मूलाग्रयोरेकीकरणेन ग्रन्थिविशेषो नीविरुच्यते। अदीक्षितस्य पितृदेवत्या नीविरुक्ता दीक्षितस्य तु सोमयागाय नीविः सोमेन व्यपदिश्यते। 'शिरः प्रोर्णुते विष्णोः शर्मेति' (का० ७।३।२८)। हे वस्त्र, त्वं विष्णोः व्यापकस्य यज्ञस्य शर्मासि सुखहेतुर्भवसि। अतो यजमानस्य शर्म सुखं कुर्विति शेषः॥ 'कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते तया कण्डूयनमुपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरितीति' (का० ७।३।२९—३१)। हे कृष्णविषाणे, त्वं यथा पूर्वमिन्द्रस्य योनिरसि तथेदानीं यजमानस्य स्थानं भवेति शेषः। पुरा कदाचिद्यज्ञपुरुषो दक्षिणां देवीं समभवत्तस्मात्संभावनादिन्द्रोऽजायत तदानीमन्यत्स्योत्पत्तिर्मा भूदिति विचार्येन्द्रः स्वां योनिं दक्षिणाया आच्छिद्य मृगेषु न्यदधात्। निहिता सा योनिः कृष्णविषाणाभूदिति तित्तिरिश्रुतौ यज्ञो दक्षिणामभ्यध्यदित्याख्याने कथा। तस्मात्कृष्णविषाणाया इन्द्रयोनित्वम्॥ 'भूमौ चोल्लिखति सुसस्या इतीति' (का० ७।३।३२)। हे कृष्णविषाणे, त्वं कृषीः सुसस्याः कृधि कुरु। करतेः शपि लुप्ते 'श्रुश्रृणु' (पा० ६।४।१०२) इत्यादिना हेर्धिः। शोभनं सस्यं यासु ताः सुसस्याः। सस्यं व्रीहियवादि। तदर्थो भूम्युल्लेखः कृषिः। यजमानानां कृषयः सन्ति ताः सर्वाः शोभनधान्याः कुर्वित्यर्थः। 'मुखसंमितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येनमुच्छ्रयतीति' (का० ७।४।१—२)। दण्डो देवता। हे वनस्पते वृक्षावयव दण्ड, उच्छ्रयस्व उन्नतो भव। ऊर्ध्वो भूत्वा अंहसः पापात् मा मां पाहि रक्ष। तत्र कालावधिरुच्यते। अस्यानुष्ठीयमानस्य यज्ञस्य उदचः उत्तमायाः समाप्तिगतायाः ऋचः आ तदृक्पर्यन्तमित्यर्थः॥ १०॥

## एकादशी।

व्र॒तं कृ॑णुताग्निर्ब्रह्माग्निर्य॒ज्ञो वन॒स्पति॑र्य॒ज्ञियः॑। दैवीं॒ धियं॑ मनामहे सुमृ॒डीका॑म॒भिष्ट॑ये वर्चो॒धां य॒ज्ञवा॑हसꣳ सु॒ती॒र्था नो॑ अस॒द्वशे॑। ये दे॒वा मनो॑जाता मनो॒युजो॒ दक्ष॑क्रतवस्ते नो॑ऽवन्तु॒ ते नः॑ पान्तु॒ तेभ्यः॒ स्वाहा॑॥ ११॥

**उ०** वाचं विसृजते। व्रतं कृणुत। व्रतशब्देन पयोभिधीयते। मम क्षिप्रं भोजनार्थं पयः कुरुत। अग्निः ब्रह्म त्रयीलक्षणम्। अग्निः यज्ञः अग्निं प्रत्याख्याय यज्ञो न प्रवर्तत इत्याशयः। वनस्पतिर्यज्ञियः। न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युः' इति श्रुतिः। दैवींधियम्। शक्करी अतिशक्करी वा। अस्याश्च पूर्णेनार्धर्चेन व्रतायोपस्पृशति दैवीं धियं मनामहे। मनामह इति याकर्मसु पठितम्। देवसंबन्धिनीं धियं याचामहे। सुमृडीकाम्। 'मृड सुखने'। सुसुखाम्। अभिष्टये। अभिपूर्वस्य यजतेरादिलोपः। अभिइष्टये अभियागाय। अथवा अभिपूर्वस्य सिञ्चतेः अभिष्टिः। अभिषेकाय प्रक्षालनाय। वर्चोधाम् ब्रह्म-

**वर्चसो धारयित्रीम् । यज्ञवाहसम् यज्ञस्य वोढ्रीम् । सा च सुतीर्था नोऽसत् यज्ञं प्रति शोभनावतारा अस्माकं भवतु । वशे वश्या भवतु । व्रतं व्रतयति । ये देवाः । अन्नाग्निहोत्रसंपदं यजमानः करोति । ये मयि प्राणेषु देवाः मनोजाताः मनसो जाताः । मनःपूर्विका हि तेष प्रवृत्तिः । मनोयुजः मनसा युज्यन्ते स्वप्नावस्थायामिति मनोयुजः । दक्षक्रतवः क्रतुः संकल्पः तस्यैव समृद्धिर्दक्षक्रतुशरीरा । 'वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वेदेवाः' य एते अध्यात्मश्रुतौ पठ्यन्ते त इहोच्यन्ते । ते नः अस्मान् अवन्तु ते अस्मान् पान्तु पालयन्तु तेभ्यश्च स्वाहा सुहुतमस्तु सुहुतमेतद्धविर्भवतु ॥११॥**

**म०** 'व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वेति' ( का० ७। ४। १५ )। मौनोपस्थितस्य यजमानस्यैतन्मन्त्रोच्चारणं वाग्विसर्जनसाधनम् । हे परिचारकाः, व्रतं कृणुत दोहनादिना क्षीरं संपादयत । दीक्षितस्य भोजनाय यन्नियतं पयस्तद्व्रतमित्युच्यते । वाक्यावृत्तिरादरार्था । 'अग्निर्ब्रह्मेति च सकृदिति' ( का० ७।४।१५ ) । एतमपि मन्त्रं सकृत्पठेत् । अग्निर्ब्रह्म । ब्रह्मशब्देन वेदत्रयमभिधीयते तस्य वेदत्रयस्याग्नित्वमुपचर्यते । आधानेन निष्पन्नस्य वैदिकस्याग्नेर्वेदव्यतिरेकेणासंभवात् । तस्मादयं श्रौतोऽग्निर्ब्रह्मैव वेदरूप एव । अयमग्निर्यज्ञः तस्य अग्नेर्यज्ञसाधनत्वाद्यज्ञत्वमुपचर्यतेऽग्निर्यज्ञ एवेति । वनस्पतिः यज्ञियः यज्ञयोग्यो यो वनस्पतिः खादिरादिः सोऽपि यज्ञ इत्यनुवर्तते । वनस्पतेर्यज्ञसाधनत्वाद्यज्ञत्वम् । तथाच श्रुतिः 'नहि मनुष्या यजेरन्यद्वनस्पतयो न स्युरिति' ( ३।२।२।९ ) । 'दैवीं धियमिति व्रतायोपस्पर्शनं स्वासन इति' ( का० ७।४।३२ ) । शक्करी अतिशक्करी वा । पूर्वार्धेनाचमनम् । वयं धियं मनामहे यज्ञानुष्ठानविषयां बुद्धिं याचामहे । मनामह इति याञ्चाकर्मसु पठितः । किमर्थम् । अभिष्टये अभि समन्ताद्यजनमभिष्टिः । अभिपूर्वस्य यजतेः क्तिनि आदिलोपः । अभिमुखत्वेन प्राप्तस्य यज्ञस्य सिद्ध्यर्थम् । किंभूतां धियम् । दैवीं देवसंबन्धिनीम् । देवतोद्देशेन प्रवृत्तामित्यर्थः । तथा सुमृडीकाम् । सुष्ठु मृडयति सुमृडीका तां शोभनसुखहेतुम् । तथा वर्चोधां वर्चो दधातीति वर्चोधास्तां तेजसो धारयित्रीम् । तथा यज्ञवाहसम् यज्ञं वहति यज्ञवाहास्तां यज्ञनिर्वाहकर्त्रीम् । तथाविधा धीः सुतीर्था सुखेन तरीतुं प्राप्तुं शक्या सुतीर्था । यद्वा सुष्ठु तीर्थमवतरणमार्गो यस्यां सा । एवंविधा सती नो वशे असत् अस्माकमधीनत्वे भवतु ॥ 'ये देवा इति व्रतयत्यमृन्मय इति' ( का० ७।४।३३ ) । ये देवा ईदृशाः दीव्यन्ति द्योतन्ते त इति । देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः 'वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वेदेवाः' ( ३। २।२।१३ ) इति श्रुत्युक्ताः । किंभूताः । मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः । इच्छोत्पत्तौ तेषां प्रवर्तमानत्वात् । तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्तन्ते । अन्यमनस्कस्य रूपादिप्रतिभासाभावात् । यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः । तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः संकल्पाः येषां ते । संकल्पितार्थकारिण इत्यर्थः । ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु । तेभ्यः प्राणरूपेभ्यः देवेभ्यः स्वाहा इदं क्षीरं हुतमस्तु ॥ ११ ॥

## द्वादशी ।

श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥ १२ ॥

**उ०** श्वात्राः पीता । जगत्याब्दैवत्यया नाभिमुपस्पृशति । हे आपः, यूयं श्वात्राः । श्वात्रमिति क्षिप्रनाम । क्षिप्रपरिणामाः । प्रीता भवत अस्माकमन्तर्मध्ये । पुनर्विशिनष्टि उदरे सुशेवाः । शेव इति सुखनाम । सुसुखाः । ता अस्मभ्यम् अयक्ष्माः अनमीवा अनागसः । आग इत्यपराधनाम । अनपराधाः । स्वदन्तु देवीः । 'स्वद स्वर्द आस्वादने' देवीरिति निःसंशयं द्वितीयान्तम् । एतत्पदसामानाधिकरण्यात्तु ता इत्येतदादीन्यपि द्वितीयान्तान्येव । ता युष्मान् अस्मभ्यम् अस्मदर्थम् अयक्ष्माः सतीः । यक्ष्मा व्याधिराजस्तद्रहिताः । अनमीवाः । अमीवा व्याधिरेव । आदरार्थं यक्ष्मग्रहणम् । अनागसः अनपराधाः सतीः । आग इत्यपराधनाम । स्वदन्तु । 'स्वद स्वर्द आस्वादने' । आस्वादयन्तु । कमादयन्तु । अमृताः प्राणाः वागेवाग्निरित्यादयः । ऋतावृधः सत्यवृधः यज्ञवृधो वा ॥ १२ ॥

**म०** 'श्वात्राः पीता इति नाभिमालभत इति' ( का० ७। ४। ३५ ) । अब्देवत्या जगती । हे आपः, क्षीररूपा यूयं मया पीताः सत्यः श्वात्राः क्षिप्रपरिणामाः शीघ्रं जीर्णा भवत । 'श्वात्रमिति क्षिप्रनामाशु अतनं भवति' ( निरु० ५।३ ) इति यास्कः । किंच अस्माकं पीतवतामन्तरुदरे जलपाकस्थाने सुशेवाः शोभनसुखाः भवतेत्यनुवर्तते । सुष्ठु शेवं याभ्यस्ताः । शेवमिति सुखनाम । किंच । तास्तथाविधा आपः अस्मभ्यमस्मदुपकारार्थं स्वदन्तु स्वादुत्वयुक्ता भवन्तु । किंभूतास्ताः । अयक्ष्माः प्रबलरोगराजरहिताः । अनमीवाः सामान्यरोगनिवर्तिकाः । नास्त्यमीवा याभ्यः । अनागसः नास्त्यागो याभ्यः अपराधहारिण्यः । ऋतावृधः ऋतं वर्धयन्ति ऋतवृधः । संहितायाम् ऋतस्य दीर्घः । यज्ञवृद्धिहेतवः । देवीः देव्यो द्योतमानाः । अमृताः नास्ति मृतं याभ्यः मरणनिवर्तिकाः । यद्वायमर्थः । ता इति द्वितीयाबहुवचनम् । अमृताः अमरणधर्मिणो देवाः पूर्वोक्ताः प्राणा वागादयस्ता अपः स्वदन्तु आस्वादयन्तु । कीदृशीः । अस्मभ्यमयक्ष्माः अस्मदर्थमस्माकं वा यक्ष्मनाशिनीः । शेषं पूर्ववत् ॥ १२ ॥

## त्रयोदशी।

इ॒यं ते॑ य॒ज्ञिया॑ त॒नूर॒पो मु॑ञ्चामि॒ न प्र॒जाम्। अ॒ꣳहो॒मुचः॒ स्वाहा॑कृताः पृथि॒वीमावि॑शत पृथि॒व्या सम्भ॑व ॥ १३ ॥

**उ०** मेक्ष्यन् लोष्टं किंचिद्वादत्ते। इयं ते यज्ञिया तनूः। पृथिव्यभिधीयते। इयं तव यज्ञार्हातनूः तामादद इति शेषः। मेहति। अपो मुञ्चामि अपो मूत्रं मुञ्चामि त्यजामि नतु प्रजाम्। उभयं वा। अत एत्यापश्चरितश्च स एतदाप एव मुञ्चति न प्रजाम्। अꣳहोमुचः अंहः पापमसुखं तस्मात्पुरुषं मुञ्चन्ति पृथक्कुर्वन्तीत्यंहोमुचः। हे मूत्राख्या आपः, यूयम् अंहोमुचः ताः स्वाहाकृताः सुष्टुत्यक्ताः पृथिवीम् आविशत प्रविशत। आत्तं निदधाति। पृथिव्या संभव। भूम्या सह एकीभव ॥ १३ ॥

**म०** 'मेक्ष्यन्कृष्णविषाणया लोष्टं किंचिद्वादत्त इयं त इति' (का० ७।४।३६)। मूत्रं करिष्यन् शृङ्गेण लोष्टं किंचित्तृणादिकं वा गृह्णातीति सूत्रार्थः। हे यज्ञपुरुष, इयं पृथिवी ते तव यज्ञिया तनूः यज्ञयोग्यो देशः। अतोऽस्या मूत्रोपहतिपरिहाराय व्यवधानं कर्तुं लोष्टं तृणं वा स्वीकरोमीति भावः। यद्वा पृथिवीं प्रत्युच्यते। हे पृथिवि, इयं लोष्टरूपा ते तव यज्ञार्हा तनूस्तामादद इति शेषः ॥ (का० ७।४।३७) अपो मुञ्चामीति मेहतीति। अपो मूत्ररूपा अहं मुञ्चामि न प्रजां प्रजोत्पत्तिनिमित्तं रेतो न मुञ्चामि। अतो हे आपः मूत्राख्याः, यूयं पृथिवीमाविशत प्रविशत। किंभूताः। अंहोमुचः अंहसः पापात् मुञ्चन्ति पुरुषं पृथक्कुर्वन्तीत्यर्थः। तथा स्वाहाकृताः पूर्वं क्षीरपानकाले स्वाहेति मन्त्रेण स्वीकृताः। यद्वा स्वाहाकृताः सत्यो भूमिमाविशत 'पृथिव्या संभवेत्यात्तं निदधातीति' (का० ७।४।३८)। गृहीतलोष्टादिकं मूत्रस्थाने क्षिपेत्। हे लोष्टादिक, पृथिव्या सह त्वं संभव एकीभव ॥ १३ ॥

## चतुर्दशी।

अग्ने॒ त्वꣳसु जा॑गृहि व॒यꣳसु म॑न्दिषीमहि। रक्षा॑ णो॒ अप्र॑युच्छन्प्र॒बुधे॑ नः॒ पुन॑स्कृधि ॥ १४ ॥

**उ०** स्वपिति। अग्ने त्वम्। अनुष्टुबाग्नेयी। हे अग्ने, त्वं सुजागृहि साधु जागृहि। वयꣳसुमन्दिषीमहि। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। वयं स्वप्स्यामः। मन्दतिः स्वप्नार्थः। किंच रक्ष नः अस्मान् अप्रयुच्छन्। 'युच्छ प्रमादे'। किंच प्रबुधे प्रबोधाय नः अस्मान् पुनः कृधि कुरु ॥ १४ ॥

**म०** 'अग्ने, त्वमित्युक्त्वा स्वपित्यधः प्राग्दक्षिणत इति' (का० ७।४।३९)। अनुष्टुबाग्नेयी। हे अग्ने, त्वं सुजागृहि सुष्ठु निद्रारहितो भव। वयं यजमानाः सुमन्दिषीमहि साधु स्वप्स्यामः। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' अत्र स्वप्नार्थः। आशीर्लिङ्युत्तमबहुवचने रूपम्। किंच। नोऽस्मान् रक्ष। किं कुर्वन्। अप्रयुच्छन्। 'युच्छ प्रमादे'। अप्रमाद्यन्। 'द्व्यचोतस्तिङः' (पा० ६।३।१३५) इति संहितायां दीर्घः। 'नश्च धातुस्थोरुषुभ्यः' (पा० ८।४।२७) इति न इत्यस्य णत्वम्। नो अप्रयुच्छन्नित्यत्र 'एङः पदान्तादति' (पा० ६।१।१०९) इति पूर्वरूपे प्राप्ते 'प्रकृत्यान्तःपादमव्यपरे' (पा० ६।१।११५) इति प्रकृतिभावः। किंच अग्ने, नोऽस्मान् पुनः प्रबुधे प्रबोधाय कृधि कुरु। प्रबोधनं प्रबुत्तस्मै प्रबुधे। संपदादित्वाद्भावे क्विप्। स्वपतोऽग्नेः प्रार्थनं रक्षसां नाशाय। तदुक्तं तित्तिरिणा 'अग्निमेवाधिपं कृत्वा स्वपिति रक्षसामपहत्या' इति ॥ १४ ॥

## पञ्चदशी।

पुन॒र्मनः॒ पुन॒रायु॑र्म॒ आग॒न्पुनः॑ प्रा॒णः पुन॑रा॒त्मा म॒ आग॒न्पुन॒श्चक्षुः॒ पुनः॒ श्रोत्रं॑ म॒ आग॑न्। वै॒श्वा॒न॒रो अद॑ब्धस्तनू॒पा अ॒ग्निर्नः॑ पातु दुरि॒ताद॑व॒द्यात् ॥ १५ ॥

**उ०** विबुद्धमस्वप्स्यन्तं पुनर्मन इति वाचयति। पुनर्मनः। मे मम मनः आगन् आगतम्। पुनरायुर्जीवितं मम आगमम्। पुनः प्राणो ममागतः। मुखनासिकासंचारी वायुः प्राणः। पुनः श्रोत्रं मम आगतम्। 'सर्वेह वा एते स्वपतोपक्रामन्ति' इति श्रुतिः। किंच अग्निर्वैश्वानरो अदब्धः अनुपहिंसितः तनूपाः शरीरस्य गोपायिता नः अस्मान् पातु रक्षतु दुरितात् अशुभात् अवद्यात् अवदनीयात् ॥ १५ ॥

**म०** 'विबुद्धमस्वप्स्यन्तं पुनर्मन इति वाचयतीति' (का० ७।४।४०)। मे मम यजमानस्य मनः पुनरागन् सुप्तिकाले विलीय पुनरिदानीं शरीरे समागतम्। गमेर्लेङि शपि लुप्ते 'हल्ङ्याब्भ्यः' (पा० ६।१।६८) इति प्रत्ययलोपे मकारस्य नकारे प्रथमैकवचने आगन्निति रूपम्। किंच स्वापकाले मे मदीयमायुर्नष्टप्रायं भूत्वा पुनरागन् इदानीं पुनरुत्पन्नमिवासीत्। तथा मे प्राणो वायुः पुनरागन्। तथा मे आत्मा जीवः पुनरागन्। तथा मे चक्षुः पुनरागन्। तथा मे श्रोत्रं श्रवणेन्द्रियं पुनरागन्। 'सर्वे ह वा एते स्वपतोऽपक्रामन्ति' (३।२।२।२३) इति श्रुतेः। स्वापकाले मनआदीनामपक्रमो भवति तेषां पुनर्यथास्थानमागमनं प्रार्थ्यते। एवं सर्वेन्द्रियेषु समागतेषु अयमग्निः अवद्यात् वदितुमयोग्यात् निन्दितात् दुरितात्पापात् नोऽस्मान् पातु पालयतु। यद्वा अवद्यात् दुर्यशसो दुरितात्पापाच्च पातु। किंभूतोऽग्निः। वैश्वानरः विश्वेभ्यो नरेभ्यो हितः सर्वपुरुषोपकारकः। 'नरे संज्ञायाम्' (पा० ६।३।१२९) इति पूर्वपददीर्घः। अदब्धः केनाप्यहिंसितः तनूपाः तनूं पातीति अस्मदीयशरीरपालकः ॥ १५ ॥

## षोडशी ।

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । रास्वेयत्सोमाभूयो भर देवो नः सविता वसोर्दाता वस्वदात् ॥ १६ ॥

उ० अव्रत्यं व्याहृत्य जपति । त्वमग्ने । आग्नेयी गायत्री । हे अग्ने, त्वं व्रतस्य पालयिता भवसि । देव आ मर्त्येषु आ । आकारौ समुच्चयार्थीयौ । देव आ त्वं च मर्त्येषु मनुष्येषु च व्रतपा इति शेषः । त्वं च यज्ञेष्वीड्यः । सत्कारपूर्वो व्यापारोऽध्येषणा । ईडिरध्येषणकर्मा वा पूजाकर्मा वा । अध्येषितव्यः याचितव्यः । त्वमतो व्रतं पाहीति शेषः । लब्धमालभ्य वाचयति । रास्वेयत् । सोम उच्यते । रास्व । 'रा दाने' देहि । इयदिति लब्धद्रव्यपरिमाणवचनम् । हे सोम । किंच आभूयो भर । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारश्छान्दसः । आहर भूयो बहुतरम् । किंच 'देवः सविता नः अस्मभ्यं वसोर्दाता धनस्य दाता वस्वदात् धनमदात्' दत्तवान् पूर्वमेवेत्यभिप्रायः ॥ १६ ॥

म० 'त्वमग्न इत्याह क्रुद्धावव्रत्यं वा व्याहृत्येति' ( का० ७ । ५ । १–२ ) । दीक्षितो यदा क्रुध्यति व्रतविरुद्धं वा ब्रूते तदा त्वमग्न इत्यृचं जपेत् । गायत्र्याग्नेयी वत्सदृष्टा । व्यूहेनाक्षरपूरणम् । हे अग्ने, देवो द्योतनात्मकः त्वमा मर्त्येषु मनुष्यपर्यन्तेषु सर्वप्राणिषु व्रतपा असि व्रतस्य कर्मणः पालको भवसि । तथा आ समन्ताद्यज्ञेषु त्वमीड्योऽसि । 'ईडिरध्येषणकर्मा च'इति यास्कः । याचितव्यः पूजयितव्यो वा भवसि । अतः पाहीति शेषः । यद्वा आकारद्वयं समुच्चयार्थं । देवे इति सप्तम्यन्तं पदम् । हे अग्ने, त्वं देवे आ देवेषु च मर्त्येषु आ मनुष्येषु च व्रतपा असीति शेषं पूर्ववत् ॥ 'लब्धमालभ्य वाचयति रास्वेयदिति' ( का० ७ । ५ । १६ ) । क्रतौ प्राप्तं धनं स्पृष्ट्वा मन्त्रं पठेत् । रास्व । सोमदेवत्यं यजुः । हे सोम, इयद्रास्व एतावद्धनं देहि । भूयः पुनरपि आभर धनम् आहर । 'हृग्रहोः–' ( पा० ८ । २ । ३२ ) इति भकारः । यतो वसोर्धनस्य दाता सविता देवो नोऽस्मभ्यं वसु अदात्पूर्वमपि धनं दत्तवान् ॥ १६ ॥

## सप्तदशी ।

एषा ते शुक्र तनूरेतद्वर्चस्तया संभव भ्राजं गच्छ । जूरसि धृता मनसा जुष्टा विष्णवे ॥ १७ ॥

उ० एषा ते । अनुष्टुभौ । पूर्वार्धर्चो हिरण्यदेवत्यः उत्तरो वाग्देवत्यः विनियोगो ध्रौवाज्ये । आज्यं जुह्वां चतुः क्षिप्त्वा तत्र हिरण्यं निदधाति । आज्यमुच्यते । एषा हिरण्यलक्षणा ते तव हे शुक्राज्य तनूः शरीरम् । 'समानजन्म वै पयश्च हिरण्यं चोभयꣳह्यग्निरेतसम्' इति श्रुतिः । एतच्च हिरण्यलक्षणं वर्चस्तेजः तया तन्वा संभव एकीभव । एकीभूय च भ्राजं सोमं गच्छ । जुहोति जूरसि 'जीव प्राणधारणे' । अस्य क्विबन्तस्यापि ऊप्रत्यये जूरिति भवति । या त्वं जीवनमसि । 'धिया धिया ह्येतया मनुष्या जुजूषन्ति' इति श्रुतिः । अथवा जवत इति जूः । 'एतꣳह्याकाशमनुजवते' इति श्रुतेः । या च त्वं धृता धारिता मनसा । 'जुषी प्रीतिसेवनयोः । अभिरुचिता च । विष्णवे विष्णोः सोमस्य ॥ १७ ॥

म० 'शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति बर्हिस्तृणेन हिरण्यं बद्ध्वावदधात्येषा त इतीति' ( का० ७ । ६ । ७—८ ) । ध्रुवास्थमाज्यं जुह्वां चतुर्गृहीत्वा तत्राज्ये दर्भतृणबद्धं स्वर्णं क्षिपेदिति सूत्रार्थः । एषा ते । हिरण्याज्यदैवतम् । हे शुक्र शुक्र दीप्यमानाग्ने, ते तव एषा तनूः दृश्यमानमाज्यं शरीरम् । एतत् आज्ये प्रक्षिप्यमाणं हिरण्यं ते वर्चः त्वदीयं तेजः । तया आज्यरूपया तन्वा संभव एकीभव । ततो भ्राजं गच्छ । 'भ्राज दीप्तौ' हिरण्यगतां दीप्तिं प्राप्नुहि । एतन्मन्त्रपाठेनाग्नेः सतेजस्त्वं सतनुत्वं च संपद्यते । तदुक्तं तित्तिरिणा 'सतेजसमेवैनं सतनुं करोति' इति । यद्वायमर्थः । हे शुक्र आज्य, एषा हिरण्यलक्षणा ते तनूः एतत्ते वर्चश्च । 'समानजन्म वै पयश्च हिरण्यं चोभयं ह्यग्निरेतसम्' ( ३ । २ । ४ । ८ ) इति श्रुतेः । तया हिरण्यलक्षणया तन्वा संभव एकीभूय भ्राजं सोमं गच्छ । भ्राजतेऽसौ भ्राट् तम् । 'सोमो वै भ्राट्' ( ३ । २ । ४ । ९ ) इति श्रुतेः । 'जूरसीति जुहोतीति' ( का० ७ । ६ । ९ ) । वाग्दैवतम् । हे वाक्, त्वं जूरसि वेगयुक्तासि । यद्वा 'जीव प्राणधारणे' । जीवयतीति जूः । ऊप्रत्ययः । किंभूता त्वम् । मनसा धृता नियमिता । तथा विष्णवे जुष्टा । यज्ञो वै विष्णुः । यज्ञार्थं प्रीतियुक्ता । यद्वा षष्ठ्यर्थे चतुर्थी । यज्ञस्य रुचिता ॥ १७ ॥

## अष्टादशी ।

तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा । शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ १८ ॥

उ० तस्यास्ते तव सत्यसवसः अवितथाभ्यनुज्ञायाः । प्रसवे अभ्यनुज्ञायां वर्तमानाः । तन्वो यन्त्रम् अशीय शरीरस्य यमनं दार्ढ्यम् अशीय व्याप्नुयाम् आ यज्ञसमाप्तेः । हिरण्यमुद्धरति । शुक्रमसि अग्ने रेतोसि । चन्द्रमसि । 'चदि आह्लादने । 'अमृतमसि' अमरणधर्मासि । वैश्वदेवमसि सर्वदेवत्यमसि इति ॥ १८ ॥

म० सत्यं सवो यस्याः सा सत्यसवाः तस्याः सत्यसवसोऽवितथाभ्यनुज्ञायाः । तस्यास्ते तथाविधायास्तव वाचः प्रसवेऽनुज्ञायां वर्तमानोऽहं तन्वः शरीरस्य यन्त्रं नियमनं दार्ढ्य-

मशीय प्राप्नुयाम् । स्वाहा इदमाज्यं हुतमस्तु । 'शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधातीति' (का० ७।६।१०)। जुह्वां बद्ध्वा स्थापितं हिरण्यमुद्धरेत् । शुक्रमसि । हिरण्यं देवता । हे हिरण्य, त्वं शुक्रमसि शोचते शुक्रम् । 'शुच दीप्तौ' । दीप्यमानमसि । तथा चन्द्रमाह्लादकमसि । 'चदि आह्लादने' । चन्दतीति चन्द्रम् । अमृतं विनाशरहितमसि । अग्निसंयोगेऽपि हिरण्यस्य विनाशाभावः प्रसिद्धः । 'अग्नौ सुवर्णमक्षीणम्' इति याज्ञवल्क्योक्तेः । वैश्वदेवमसि । विश्वेषां देवानामिदं वैश्वदेवं सर्वदेवसंबन्धि । सर्वोऽपि देवो हिरण्यदानेन तुष्येत् ॥ १८ ॥

## एकोनविंशी ।

चिदसि मनोसि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥ १९ ॥

**उ०** सोमक्रयणीमभिमन्त्रयते वाग्रूपाध्याहारोपकल्पनया । त्वं चिदसि । चित्तस्य मनसोऽनुवादिनी भवसि । या च मनोसि प्रज्ञासि । या च धीरसि बुद्धिर्भवसि । 'धिया ह्येतया मनुष्या जुजूषन्ति जीवितुमिच्छन्ति' इति श्रुतिः । या च त्वं दक्षिणासि । 'भूमिदानात्परं नास्ति विद्यादानं ततोऽधिकम्' इत्येतदभिप्रायम् । तेभ्यो वाचं दक्षिणामानयन्नित्येतदभिप्रायं वा । या च क्षत्रियासि । क्षतात् त्रायत इति क्षत्रियः । जात्या स्तूयते वा । या च यज्ञियासि यज्ञार्हासि । या च अदितिरसि । अदीनासि । या च उभयतःशीर्ष्णी उभयतोमुखी । वाक्ये पदानामन्यथाचान्यथा च क्रमो भवतीत्येतदभिप्रायम् । 'स यदेनया सयानꣳसविपर्यासं वदति' इत्यादिश्रुतिः । सा नः सुप्राची सुप्रतीची एधि । या त्वमुक्तगुणासि सास्माकं सुप्राची भव । सोममभिगच्छेत्यर्थः । सुप्रतीच्येधि । साधु अस्मान् प्रति सोमं गृहीत्वा आगच्छेत्यर्थः । 'सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाह' इति श्रुतिः । किंच । मित्रस्त्वा पदि बध्नीताम् । मित्र आदित्यस्त्वां । पदि पादे बध्नातु अप्रणाशाय । किंच पूषाध्वनस्पातु इयं वै पृथिवी पूषा सा त्वामध्वनः मार्गात् पातु रक्षतु । किंच इन्द्रायाध्यक्षाय । चतुर्थ्याः षष्ठ्या विपरिणामः । अधि उपरि अक्षिणी यस्य सोध्यक्षः । इन्द्रस्याध्यक्षस्य सतः ॥ १९ ॥

**म०** 'चिदसीत्येनामभिमन्त्रयते' (का० ७।६।१५) इति कण्डिकाद्वयेन । एनां सोमक्रयणीमित्यर्थः । वाग्रूपाध्यारोपकल्पनया सोमक्रयणी गौः स्तूयते । हे वाग्देवतारूपे सोमक्रयणि, त्वं चिदसि मनोसि धीरसि । अन्तःकरणस्य चित्तमनोबुद्धय इति तिस्रो वृत्तयः । तल्लक्षणानि । अचेतनदेहादिसङ्घातस्य चेतनत्वं संपादयन्ती बाह्यवस्तुषु वा निर्विकल्परूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते । लोके कंचित्पदार्थं दृष्ट्वा एवं भवति न वेति संकल्पविकल्पौ कुर्वाणा वृत्तिर्मनः तदेवात्र मन इत्युच्यते । इदमित्थं भवत्येवेति निश्चयरूपा वृत्तिर्बुद्धिः सैवात्र धीशब्देनोच्यते । वागात्मिका सोमक्रयणी चिन्मनोधीरूपत्वेन प्रशस्यते । चिदादिरूपत्वमारोप्य स्तुतिः कृता । दक्षिणादिरूपत्वं तु विद्यमानमेव स्तूयते । हे गौः, त्वं दक्षिणासि । गवां देयद्रव्यत्वेन कर्मसु दक्षिणात्वं प्रसिद्धम् । यद्वा वाग्दानस्य प्रशस्तत्वाद्दक्षिणासि । 'भूमिदानात्परं नास्ति विद्यादानं ततोऽधिकम्' इति स्मृतेः । तथा क्षत्रियासि सोमक्रयसाधनत्वेन । तथाहि । देवेषु क्षत्रजात्यभिमानी सोमः । तदुक्तं बृहदारण्यके 'यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः' (माध्य० १।२।१३) इति । तेन सोमेन क्षत्रेणाभिमन्तव्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन त्वं क्षत्रियासि । तद्रूपं चास्याः क्रयद्वारा तत्संबन्धित्वादुपचर्यते । अतएव यज्ञसंबन्धित्वाद्यज्ञिया यज्ञार्हासि । अदितिः अखण्डिता अदीना देवमातृरूपासि । नास्ति दितिर्यस्याः सा । 'अदितिरदीना देवमाता' (निरु० ४।२२) इति यास्कः । तथा उभयतःशीर्ष्णी उभयतः शीर्षे यस्याः सा । ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम् । 'द्वे शीर्षे प्रायणीयोदयनीये' (निरु० १३।७) इति यास्कोक्तेः । यद्वोभयतःशीर्ष्णी सर्वतोमुखी वाग्रूपत्वात् । 'स यदेनया समानं सद्विपर्यासं वदति' (३।२।४।१६) इति श्रुतेः । सा पूर्वोक्ता चिदादिरूपा त्वं नोऽस्मदर्थं सुप्राची सुप्रतीची च एधि भव । सुष्ठु प्राङ्ञ्चतीति सुप्राची । सुष्ठु प्रत्यङ्ञ्चतीति सुप्रतीची । प्रथमं सोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखीभूत्वा पश्चात्सोमेन सहास्मान्प्रत्यागन्तुं सुष्ठु प्रत्यङ्मुखी भवेत्यर्थः । तथाच श्रुतिः 'सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाह' (३।२।४।१७) इति । किंच मित्रः सूर्यः पदि दक्षिणपादे त्वा त्वां बध्नीतां बन्धनं करोतु अप्रणाशाय । तथा पूषा पोषको देवः सूर्य एवाध्वनो मार्गात्पातु त्वां रक्षतु । यद्वा पूषेत्यावन्तं स्त्रीलिङ्गं पदम् । पूषा पृथिवी त्वां मार्गात् पातु 'इयं वै पृथिवी पूषा' (३।२।४।१९) इति श्रुतेः । किमर्थम् । इन्द्राय इन्द्रप्रीत्यर्थम् । किंभूतायेन्द्राय । अध्यक्षाय अधि उपरि अक्षिणी यस्य सोऽध्यक्षस्तस्मै द्रष्ट्रे । यज्ञस्वामिने इत्यर्थः ॥ १९ ॥

## विंशी ।

अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । सा देवि देवमच्छेहीन्द्राय सोमꣳरुद्रस्त्वावर्तयतु स्वस्ति सोमसखा पुनरेहि ॥ २० ॥

**उ०** किंच सोमाहरणप्रवृत्तां त्वामेते अनुमन्यन्तां त्वा त्वां माता अनुमन्यतां त्वां पिता अनुमन्यतां त्वां भ्राता सगर्भ्यः समानगर्भभवः अनुमन्यतां । त्वां सखा सयूथ्यः समानयूथप्रभवः सखा अनुमन्यताम् । किंच या त्वं कृतसामग्रीकाऽस्माभिः सोमं प्रति गमने सा त्वं हे देवि दानादिगुणयुक्ते, देवमच्छेहि । अच्छाभेराप्तुमिति शाकपूणिः । देवं सोममध्येहि अभिगच्छ । इन्द्राय सोमम् आहर्तुमिति शेषः । किंच । रुद्रस्त्वावर्तयतु रुद्रः त्वाम् आवर्तयतु । रुद्राज्ञां नातिक्रामन्ति पशवः । ततः स्वस्ति अविनाशेन सोमसखा सती पुनरागच्छ ॥ २० ॥

**म०** किंच सोमाहरणे प्रवृत्तां त्वां माता त्वदीया जननी अनुमन्यतामनुज्ञां ददातु । पितानुमन्यताम् । उपसर्गावृत्त्या क्रियापदावृत्तिः । सगर्भ्यः समाने गर्भे भवः सहोदरो भ्रातानुमन्यताम् । 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' ( ६ । ३ । ८४ ) इति समानपदस्य सादेशः । सयूथ्यः समाने एकस्मिन्यूथे गोसमूहे भवः सयूथ्यः सखा वत्सोऽनुमन्यताम् । हे देवि सोमक्रयणि, सा त्वमिन्द्राय इन्द्रार्थं सोमं देवमच्छेहि प्राप्तुं गच्छ । 'अच्छाभेराप्तुमिति शाकपूणिः' ( निरु० ५ । २८ ) । किंच रुद्रः त्वा त्वां वर्तयतु सोमं गृहीत्वा स्थितां त्वां रुद्रो देवोऽस्मान्प्रति निवर्तयतु । यद्वा रुद्रः त्वां प्रवर्तयतु । यतो रुद्राज्ञां नातिक्रामन्ति पशवः । सोमो देवः सखा यस्याः सा सोमसखा । ईदृशी सोमसहिता सती स्वस्ति क्षेमेण पुनरेहि भूयोऽप्यागच्छ ॥ २० ॥

## एकविंशी ।

वस्व्यस्यदि॑तिरस्यादि॒त्यासि॒ रु॒द्रासि॒ च॒न्द्रासि॑ । बृ॒हस्पति॑ष्ट्वा सु॒म्ने र॑म्णातु रु॒द्रो वसु॑भि॒राच॑के ॥ २१ ॥

**उ०** उदीचीं नीयमानामनुगच्छति । वस्व्यसि । अनुष्टुप् बृहती वा । वसुरूपेणादितिरूपेणादित्यरूपेण रुद्ररूपेण चन्द्ररूपेण स्तूयते गौः । किंच बृहस्पतिः त्वा सुम्ने सुखे रम्णातु संयमयतु । रम्णातिः संयमनकर्मा । रुद्रो वसुभिः सहितः आचके कामयतु । रक्षितुमिति शेषः । आचक इति कान्तिकर्मसु पठितम् ॥ २१ ॥

**म०** 'उदीचीं नीयमानामनुगच्छतो वस्व्यसीतीति' ( का० ७ । ६ । १६ ) । अनुष्टुब्बृहती वा । सोमक्रयण्याः स्तुतिः । सोमक्रयणी गौर्वस्वदित्यादित्यरुद्रचन्द्ररूपेण स्तूयते वस्वीत्यादिपञ्चविशेषणैः । हे गौः, त्वं वस्वी वसुरूपासि । अदितिर्देवमातासि । द्वादशादित्यरूपासि । रुद्रा एकादशरुद्ररूपासि । चन्द्ररूपा चासि । किंच बृहस्पतिः सुम्ने त्वां रम्णातु रमयतु । रमतेर्व्यत्ययेन श्नाप्रत्ययः । यद्वा रम्णातु संयमयतु । 'रम्णातिः संयमनकर्मा विसर्जनकर्मा वा' ( निरु० १० । ९ ) इति यास्कः । रुद्रो वसुभिः अष्टदेवैः सहितः त्वामाचके रक्षितुं कामयताम् । आचक इत्यादि चकमान इति कान्तिकर्मसु पठितः ॥ २१ ॥

## द्वाविंशी ।

अदि॑त्यास्त्वा मू॒र्धन्नाजि॑घर्मि दे॒व॒यज॑ने पृथि॒व्या इ॒डाया॑स्प॒दम॑सि घृ॒तव॒त्स्वाहा॑ । अ॒स्मे र॑मस्वा॒स्मे ते॒ बन्धु॒स्त्वे रायो॒ मे रायो॒ मा व॒यꣳ रा॒यस्पोषे॑ण॒ वियौ॑ष्म॒ तोतो॒ राय॑ः ॥ २२ ॥

**उ०** पदे जुहोति । अदित्यास्त्वा अदित्याः पृथिव्यास्त्वाम् हे आज्य, मूर्धनि शिरसि आजिघर्मि । 'घृ क्षरणदीप्त्योः' आक्षारयामि । देवयजने पृथिव्याः इडाया गोः पदं यतस्त्वमसि अतो घृतवत् घृतयुक्तं त्वां कर्तुं जुहोमीति शेषः । पदं लिखति । अस्मे रमस्व अस्मासु रतिं कुरु । पदं स्थाल्यामावपति । अस्मे ते बन्धुः वयं ते तव बन्धुभूताः । यजमानाय पदं प्रयच्छति । त्वे रायः । पशवो वै रायः । त्वयि पशवः सन्त्विति शेषः । पदं यजमानः प्रतिगृह्णाति । मे रायः । मयि पशवः सन्त्विति शेषः । अध्वर्युरात्मानमुपस्पृशति । मा वयं रायस्पोषेण वियौष्म मा विभक्ताः स्याम वयं धनस्य पोषेण । गृहीतपदां पत्नीं वाचयति । तोतोरायः । त्वयि रायः पशवः सन्त्विति शेषः॥२२॥

**म०** 'षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वेतीति' ( का० ७ । ३ । १७-१८ ) । आज्यदैवतं यजुः । अदित्याः अखण्डितायाः पृथिव्याः भुवो मूर्धन् मूर्धनि शिरोरूपे देवयजने देवानां यागयोग्यस्थाने हे आज्य, त्वा त्वामाजिघर्मि आक्षारयामि । 'घृ क्षरणदीप्त्योः' । 'पृथिव्या ह्येष मूर्धा यद्देवयजनम्' इति तित्तिरिश्रुतेर्देवयजनस्य पृथिवीमूर्धत्वम् । किंच हे स्थानविशेष, त्वमिडायाः गोः पदमसि गोपदेनाङ्कितत्वात्तद्रूपमसि । तच्च पदं घृतवत् घृतयुक्तं कर्तुं स्वाहा जुहोमि । 'स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति' ( का० ७ । ६ । १९ ) । हे गोः पद, त्वमस्मे अस्मासु रमस्व क्रीडां कुरु । 'समुद्धृत्य पदꣳ स्थाल्यामावपत्यस्मे ते बन्धुरिति' ( का० ७ । ६ । २० ) । हे सोमक्रयणीपद, ते तव अस्मे वन्धुः वयं बन्धुभूताः स्मः । 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति जसः शेआदेशे अस्मे इति रूपम् । 'यजमानाय पदं प्रयच्छति त्वे राय इति' ( का० ७ । ६ । २१ ) । हे यजमान, त्वे त्वयि रायो धनानि एतत्पदरूपेण तिष्ठन्त्विति शेषः । यद्वात्र रायः पशवः । 'पशवो वै रायः' ( ३ । ३ । १ । ८ ) इति श्रुतेः । त्वयि पशवः सन्तु । 'मे राय इति यजमानः प्रतिगृह्णातीति' ( का० ७ । ६ । २२ ) । मे मयि यजमाने रायो धनानि पदरूपेण तिष्ठन्तु । पशवो मयि सन्तु । ङेः शेआदेशे मे इति रूपम् । 'मा वयमित्यध्वर्युरात्मानꣳ संस्पृशतीति'

( का० ७।६।२३ )। वयमध्वर्युप्रभृतयो रायस्पोषेण धनस्य पुष्ट्या मा वियौष्म वियुक्ता मा भवाम। यौतेः 'माङि लुङ्' (पा० ३।३।१७५) इति लुङि उत्तमबहुवचने वियौष्मेति रूपम् । 'हृत्वा पत्न्यै पदं प्रयच्छति नेष्टा तोत इत्येनां वासयतीति' (का० ७।६।२४—२५)। तोतः शब्दः कलत्रवाची अव्ययम् । तोतः कलत्रे रायो धनानि पशवो वा पदरूपेण तिष्ठन्तु । यद्वाव्ययानामनेकार्थत्वात्तोतः-शब्दो युष्मत्पर्यायः । तोतः त्वयि रायः सन्तु ॥ २२ ॥

## त्रयोविंशी ।

समख्ये देव्या धिया संदक्षिण्योरुचक्षसा । मा म आयुः प्रमोषीर्मो अहं तव । वीरं विदेय तव देवि संदृशि ॥ २३ ॥

उ० सोमक्रयण्या समीक्षयति । समख्ये । पत्न्याशीः । आस्तारपङ्क्तिः। सोमक्रयणीतः पत्न्याशिषमाशास्ते । यया त्वया अहं समख्ये । 'ख्या प्रकथने' । संदर्शनं कृतवती । देव्या दानादिगुणयुक्तया । धिया प्रज्ञया । सहार्थे तृतीया । संदक्षिणया उरुचक्षसा समख्ये च दक्षिणया सह। गौर्हि प्रायशो दक्षिणा दीयते । उरुचक्षसा विस्तीर्णदर्शनया । वाचोभिरतीतानागतवर्तमानविप्रकृष्टं ज्ञायते । सा त्वं मा म आयुः प्रमोषीः । 'मुष स्तेये' । मा प्रमोषीः मावखण्डय मम आयुः । मा अहं तवायुः प्रमोषिषम् । किंच वीरं विदेय । विदिर्लाभार्थः । पुत्रं लभेय । संदृशि हे देवि संदर्शने सति ॥ २३ ॥

म० 'सोमक्रयण्या च समीक्ष्यमाणाꣳ समख्य इतीति' (का० ७।६।२६)। एनां वाचयतीत्यनुवर्तते। आस्तारपङ्क्तिः पत्न्याशीः । यस्या आद्यावष्टाक्षरौ पादावन्त्यौ द्वादशाक्षरौ सास्तारपङ्क्तिः। अन्त्यौ चेदास्तारपङ्क्तिरिति वचनात् । सोमक्रयणीतः पत्न्याशिषमाशास्ते । हे सोमक्रयणि, देव्या द्योतमानया त्वया धिया बुद्ध्या सह बुद्धिपूर्वकमहं समख्ये अदृक्षि दृष्टेत्यर्थः। 'ख्या प्रकथने' इत्यस्य धातोः संपूर्वस्य लुङि तङि 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा० ३।१।५२) इति च्लेरङि उत्तमैकवचने कर्मणि समख्ये इति रूपम्। एकं संपदं पादपूरणाय। किंभूतया त्वया । दक्षिणया दक्षिणात्वयोग्यया। तथा उरुचक्षसा उरु चष्टे सोरुचक्षास्तया विस्तीर्णदर्शनया। एवंविधा त्वं मे मम पत्न्या आयुः मा प्रमोषीः मा खण्डय। 'मुष स्तेये' लुङि रूपम् । मो अहं तव। तव सोमक्रयण्या आयुरहं पत्नी मा उ मैव प्रमोषिषमित्यध्याहारः । मार्थे मो इत्यव्ययं वा । अहं तवायुर्न नाशयामीत्यर्थः। किंच वीरं विदेय तव देवि संदृशि। हे देवि गौः, तव संदृशि संदर्शने सति वीरं पुत्रं विदेय लभेय। संदर्शनं संदृक् भावे क्विप् । 'विद्ऌ लाभे' इत्यस्य व्यत्ययेन 'तुदादिभ्यः शः' (पा० ३।१।७७) इति शप्रत्यये लिङि रूपम् ॥ २३ ॥

## चतुर्विंशी ।

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादास्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा विचिन्वन्तु ॥ २४ ॥

उ० यजमानं वाचयति । एष ते गायत्रो भागः । हे सोम, एष ते तव गायत्रीसंबन्धी भागः अंशः इति एवं मे यजमानाभिधायकं पदम्। सोमायेति षष्ठ्यर्थे चतुर्थी। मम वचनमेवं सोमस्य ब्रूतात् कथयत। हे अध्वर्यवः, छन्दोर्थं तव क्रयो न वधार्थम्। एवं यजमानाभिप्रायः। एतदध्वर्यवः सोमस्य कथयन्तीति वाक्यार्थः। एष ते त्रैष्टुभो भागः। एष ते जागत इत्यनेनैव व्याख्यातौ। छन्दोनामानाम्। नामशब्दोऽनर्थकः। अन्येषामपि छन्दसां साम्राज्यमाधिपत्यं गच्छ इति एवं मे ममाभिप्रायं सोमस्य ब्रूतात् कथयत हे अध्वर्यवः। अत्रापि मे इत्येतत्पदं यजमानवाच्यमेव । सोममालभते । आस्माकोसि । यस्त्वां हे सोम, क्रयार्थमुपागतः स आस्माको मदीयः संजातः। शुक्रस्ते गृह्यः। उपलक्षणार्थः। शुक्रप्रभृतयो ग्रहास्तव ग्रहीष्यन्ते । किंच विचितः विचयनकर्तारः त्वां विचिन्वन्तु विविक्तं कुर्वन्तु ॥ २४ ॥

म० 'एष त इति वाचयतीति' (का० ७।७।८)। मन्त्रचतुष्टयं यजमानः पठेत्। हे अध्वर्यो, सोमाय सोमाभिमानिने देवाय मे इति वचो ब्रूयात् त्वं ब्रूहि कथय। इति किम्। हे सोम, ते तव एष पुरो दृश्यमानो भागो गायत्रो गायत्रीसंबन्धी । गायत्रीच्छन्दोऽर्थं तव क्रयो नतु वधार्थमिति यजमानाभिप्रायः । तं ममाभिप्रायं सोमाय कथयेत्यर्थः। ते तव एष त्रैष्टुभः त्रिष्टुप्छन्दसः संबन्धी भाग इति मेऽभिप्रायमध्वर्यो, सोमाय त्वं ब्रूहि । एवमग्रेऽपि । जागतो जगतीच्छन्दसः संबन्धी । अन्यत्पूर्ववत् । छन्दोनामानां छन्द इति नाम येषामन्येषामप्युष्णिगादीनां ताः छन्दोनामानः तेषां साम्राज्यं गच्छ सर्वेषां छन्दसामाधिपत्यं प्राप्नुहि। इति मे वचः सोमाय ब्रूतात्कथय। यः सोमाय छन्दसामाधिपत्यं दत्त्वा क्रीणाति तं स स्वानामाधिपत्यं प्राप्नोति। तदुक्तं तित्तिरिणा 'यो वै सोमं राजानꣳ साम्राज्यलोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यमिति' । अत एतैर्मन्त्रैः सोमस्य राज्याप्तिः सूचिता । गायत्र्यादिच्छन्दोदेवता यत्र तिष्ठन्ति स छन्दोलोकस्तदाधिपत्यं प्रापय्य सोमं क्रीणानः स्वाधिपत्यभाग्भवतीत्यभिप्रायः । 'प्राङुपविश्यास्माकोऽसीति सोममालभते' (का० ७।७।९) इति । हे

सोम, त्वं क्रयपथमागतः सन्नास्माकोऽसि । शुक्रः शुक्रसंज्ञः ते तव ग्रहः । ग्रह एव ग्रहः । शुक्रपदमैन्द्रवायवादिग्रहाणामुपलक्षणम् । शुक्रादयः सर्वे तव ग्रहा इत्यर्थः । विचितः । विचिन्वन्तीति विचितः विवेकेन चयनस्य कर्तारः त्वां विचिन्वन्तु विविक्तं कुर्वन्तु । सारासारविवेकं कृत्वा सारभूतं समूहयन्त्वित्यर्थः ॥ २४ ॥

## पञ्चविंशी।

अभि त्यं देवꣳसवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳरत्नधामभि प्रियं मतिं कविम् । ऊर्ध्वा यस्याऽमतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः । प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥ २५ ॥

उ० सोमं मिमीते । अभि त्यं देवम् । साविच्यत्यष्टिः । अभ्यर्चामि अभिपूजयामि । त्यं तम् । देवं दानादिगुणयुक्तं सवितारम् । ओण्योः द्यावापृथिव्योरन्तरा वर्तमानम् । कविक्रतुं मेधाविकर्माणम् । सत्यसवं अवितथप्रसवं । रत्नधाम् रमणीयानां धनानां दातारम् । अभिरनर्थकः । प्रियम् सर्वजनानां प्रियम् । मतिं बुद्धिं व्याप्यावस्थितम् । मतीनां हि सविताधिष्ठात्री देवता । कविं क्रान्तदर्शनम् । किंच ऊर्ध्वा यस्यामतिः भा अदिद्युतत् सवीमनि । यस्य सवितुः ऊर्ध्वा गमनाभिमुखी अमतिः आत्ममयी मतिः अनन्यभूता । कतरा भा दीप्तिः अदिद्युतत् द्योतयते सवीमनि प्रसवे पूर्णे हि दातव्ये । स सविता हिरण्यपाणिः सुवर्णपाणिः अमिमीत ममीते सोमं परिच्छिनत्ति । सुक्रतुः साधुकर्मा शोभनयज्ञो वा कृपा कल्पनया सोमस्य कल्पना । स्वः आदित्यः सुअरणः । अन्तान् संगृह्योष्णीषेण बध्नाति । प्रजाभ्यस्त्वाम् । बध्नामीति शेषः । उत्पत्तये स्थितये च प्रजानां हे सोम, त्वां बध्नामि । अङ्गुल्या मध्ये विवृणोति । प्रजास्त्वानुप्राणन्तु । हे सोम, त्वां प्राणन्तमुच्छ्वसन्तम् । प्रजा अनुप्राणन्तु उच्छ्वसन्तु । त्वं च प्रजाः उच्छ्वसतीः अनुप्राणिहि अनूच्छ्वसिहि । 'तमयतीतिवा एनमेतत्समायच्छन्नं प्राणमिव करोति तस्येतदतएव मध्यतः प्राणमुत्सृजति तं ततः प्राणन्तं प्रजा अनुप्राणन्ति' इत्यादि ब्राह्मणम् ॥ २५ ॥

म० 'सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्रागदक्षमुदग्वा तस्मिन्सोमं मिमीते दशकृत्वोऽभित्यमितीति' (का० ७।७।१२—१३)। साविच्यत्यष्टिः । त्यन्तं सवितारं देवमभ्यर्चामि सर्वतः पूजयामि । किंभूतं देवम् । ओण्योः द्यावापृथिव्योरन्तरा वर्तमानमिति शेषः । ओण्योरिति द्यावापृथिवीनामसु पठितम् । तथा कविक्रतुं कविः क्रतुः यस्य तं मेधाविकर्माणम् । सत्यसवं सत्यः सवो यस्य अवितथप्रेरणम् । तथा रत्नधां रत्नानि दधातीति रत्नधास्तं रत्नानां धारकं पोषकं दातारं वा अभिप्रियं सर्वतः प्रीतिविषयम् । मतिं मन्यत इति मतिस्तं मननयोग्यम् । कविं क्रान्तदर्शनम् । किंच यस्य सवितुर्भा दीप्तिः अमतिः केनापि मातुमशक्या सती ऊर्ध्वा गगनाभिमुखी सवीमन्यदिद्युतत् सवः प्रसवः प्रवृत्तिर्नक्षत्रादीनां यस्मिन् स सवीमा तस्मिन् गगनप्रदेशे सर्वाणि वस्तूनि द्योतयन्ते । यद्वायमर्थः । यस्यामतिरात्ममयी भा ऊर्ध्वा गगने सर्वमदिद्युतत् । अमाशब्द आत्मवचनः । आत्ममयी ततिर्मतिर्वा अमतिः । तन्यत इति ततिः दीप्तिः । मतिरपि प्रकाशरूपत्वाद्दीप्तिः । अमाततिशब्दस्य वा अमतिभावः । सवितृभाविशेषणम् । आत्मप्रकाशमयी ततिर्मतिर्वा यस्य भाः अदिद्युतत् । किंनिमित्तम् । सवीमनि अनुज्ञानिमित्तं सर्वान् कर्माण्यनुज्ञातुमित्यर्थः । 'षु प्रसवैश्वर्ययोः' 'वृस्तृस्तुभ्य (?) ईमनिच्' इतीमनिच् । गुणावादेशौ । सवीमा प्रसवोऽनुज्ञेत्यभिधानम् । स स्वरादित्यः । कृपा कल्पनं कृप् तया कृपा कल्पनया अमिमीत सोममिति शेषः । एतावान्सोम इति तदीयं परिमाणं निश्चितवानित्यर्थः । किंभूतः स्वः । हिरण्यपाणिः हिरण्यं पाणौ यस्य सौवर्णाभरणयुक्तहस्तः । सुक्रतुः साधुसंकल्पः । 'अन्तान् संगृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेतीति' (का० ७।७।२०)। हे सोम, प्रजाभ्यः प्रजानामुपकाराय त्वा त्वां बध्नामीति शेषः । 'अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानुप्राणन्त्वितीति' (का० ७।७।२१) । उष्णीषेण बद्धस्य सोमदेवस्य श्वासरोधो मा भूदिति विवरं कुर्यादिति सूत्रार्थः । हे सोम, प्रजास्त्वामनुप्राणन्तु श्वासं कुर्वन्तं त्वामनुसृत्य सर्वाः प्रजाः श्वासं कुर्वन्तु जीवन्तु । तथा हे सोम, प्रजा अनु श्वासं कुर्वतीः प्रजा अनुसृत्य प्राणिहि श्वासं कुरु । प्रजानां तव च कदाचित् श्वासरोधो मा भूत् परस्परमनुसृत्य जीवनं भवत्वित्यभिप्रायेण विवरकरणमित्यर्थः ॥२५॥

## षड्विंशी।

शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन । सग्मे ते गौरस्मे ते चन्द्राणि तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम् ॥ २६ ॥

उ० हिरण्यमालभ्य वाचयति । शुक्रं त्वा । हे सोम, शुक्रमक्लिष्टकर्माणं त्वां शुक्रेण हिरण्येन क्रीणामि । एवं सर्वमपि व्याख्येयम् । सोमविक्रयिणं हिरण्येनाभिकम्पयति । सग्मे ते गौः गौरिति विपरिणामः । सह गवा वर्तत इति सग्मो यजमानः । तव संबन्धिनी या गौः सा यजमाने वर्तत इति सोमक्रयिणं निराशं करोति । यजमानसहितं निदधाति । अस्मे ते । हे सोमक्रयिन्, अस्मासु तव संबन्धीनि

हिरण्यानि वर्तन्ते । अजामालभ्य वाचयति । तपसस्तनूरसि । तपसः प्रजापतेः हे अजे, तनूः शरीरं त्वमसि । प्रजापतेश्च वर्णः रूपं त्वमसि । सा यत्त्रिः संवत्सरस्य विजायते तेन प्रजापतेर्वर्णः । एवमजां सोमसमक्षमभिष्टुत्य अथेदानीं सोममाह । परमेण पशुनाक्रीयसे त्वं हे सोम, सा यतस्त्रिः संवत्सरस्य विजायते तेन परमपशुः । यस्मात्त्वं परमेणोत्कृष्टेन पशुना क्रीयसे तस्मात्तव प्रसादादहम् सहस्रपोषं सहस्रं प्राणिनां यत्पुष्णाति धनं तदहं पुषेयं वर्धयेयम् । सहस्रप्राणिपोषो मम गृहे वर्धमानोस्तु इत्यभिप्रायः ॥ २६ ॥

**म०** 'शुक्रं त्वेति हिरण्यमालभ्य वाचयतीति' (का० ७।८।१६) हे सोम, शुक्रं दीप्यमानं त्वा त्वां शुक्रेण दीप्यमानेन हिरण्येन क्रीणामि क्रीतं करोमि । किंभूतं त्वां । चन्द्रं 'चदि आह्लादने' फलहेतुत्वेनाह्लादकरम् । तथा अमृतं स्वादुत्वेनामृतसमानम् । किंभूतेन शुक्रेण । चन्द्रेणाह्लादकरेण तथामृतेनाग्निसंयोगादिनापि विनाशरहितेन । 'सग्मे त इति सोमविक्रयिणꣳ हिरण्येनाभिकम्पयतीति' । (का० ७।८।१७) । यो हिरण्यमादाय सोमं विक्रीणीते तं हिरण्येनाभिकम्पयेत् । तद्धस्ते हिरण्यं दत्त्वा दत्त्वा स्वीकुर्वस्तं निराशं कुर्यादिति सूत्रार्थः । षष्ठी प्रथमार्थे । हे सोमविक्रयिन्, गौः सोममूल्यत्वेन तुभ्यं दत्ता सा त्वदीया गौः पुनः प्रत्यावृत्य सग्मे यजमाने तिष्ठतु । हिरण्यमेव तवास्तु गौर्मा भूदित्यर्थः । यद्वा ते गौः सग्मे वर्तते । गौः ग्मा क्ष्मा क्षा क्षामेत्युक्तेः ग्मा गौः तया सह वर्तमानः सग्मस्तस्मिन् सग्मे ते गोरिति । 'यजमाने ते गौः' (३।३।३।७) इति श्रुतेः । सग्मो यजमानः । 'अस्मे त इति यजमानसहितं निदधातीति' (का० ७।८।१८) । यजमाने प्रत्यर्पितं यद्गोद्रव्यं तत्पुनर्यजमानसहितं सोमविक्रयिणः पुरतो निदध्यादिति सूत्रार्थः । हे सोमविक्रयिन्, ते चन्द्राणि तुभ्यं दत्तानि यानि हिरण्यानि तान्यस्मे अस्मासु प्रत्यावृत्य तिष्ठन्तु । तव गौरेव सोममूल्यमस्तु हिरण्यानि मा भूवन्नित्यर्थः । 'अजां प्रत्यङ्मुखीमालभ्य वाचयति तपसस्तनूरितीति' (का० ७।८।२०) । अर्धे अजा देवतास्य यजुषोऽर्धे सोमः । हे अजे, त्वं तपसः पुण्यस्य तनूरसि देहोऽसि । दिवि स्थितस्य यज्ञियस्यानयनायाजां गृहीत्वा गायत्री जगामेति तित्तिरिणा सोमाहरणोपाख्याने उक्तत्वादजायाः पुण्यशरीरत्वम् । किंच हे अजे, त्वं प्रजापतेर्वर्णोऽसि वर्णो देहः । यथा प्रजापतिः सर्वदेवताप्रिय एवमजापि । तदुक्तं तित्तिरिणा 'सा वा एषा सर्वदेवत्या यदजा' इति । एवमजामुक्त्वा सोमं प्रत्याह । हे सोम, परमेण पशुना उत्तमेनाजालक्षणेनानेन पशुना त्वं क्रीयसे । तपसस्तनूत्वादजाया उत्तमत्वम् । अतस्तव प्रसादात्सहस्रपोषं पुत्रपश्वादिसहस्राणां पोषो यथा भवति तथा पुषेयं पुष्टो भूयासम् । यद्वायमर्थः । हे अजे, त्वं प्रजापतेस्तपसस्तनूरसि प्रजापतितपोरूपासि तत उत्पन्नत्वात् । तदुक्तं श्रुत्या 'तपसो ह वा एषा प्रजापतेः संभूता यदजेति' (३।३।३।८) । किंच प्रजापतेर्वर्णो रूपं त्वमसि । त्रिगुणत्वात्प्रजापतेस्त्रिरूपत्वम् । अजापि प्रतिसंवत्सरं त्रिवारं प्रसूते तस्मात्प्रजापतेर्वर्णत्वम् । तदुक्तं श्रुत्या 'सा यत्त्रिः संवत्सरस्य जायते तेन प्रजापतेर्वर्णः' (३।३।३।९) इति । एवमजां स्तुत्वा सोममाह । परमेणोत्कृष्टेन पशुनाजया त्वं क्रीयसे ततोऽहं सहस्रपोषं सहस्रं प्राणिनां पुष्णातीति सहस्रपोषं धनं पुषेयं पुष्णीयाम् । वर्धयेयमित्यर्थः । पुष्णातेर्व्यत्ययेन शेप्रत्यये लिङि पुषेयमिति रूपम् ॥ २६ ॥

## सप्तविंशी ।

मि॒त्रो न॒ एहि॒ सुमि॑त्रध॒ इन्द्र॑स्यो॒रुमावि॑श॒ दक्षि॑णमु॒शन्नु॒शन्त॑ꣳ स्यो॒नः स्यो॒नम् । स्वान॒ भ्राजाङ्घा॑रे॒ बम्भा॑रे॒ हस्त॒ सुह॑स्त॒ कृशा॑नवे॒ते वः॑ सोम॒क्रय॑णा॒स्तान्र॑क्षध्वं॒ मा वो॑ दभन् ॥ २७ ॥

**उ०** सोममादत्ते । मित्रो न एहि । हे सोम, मित्रस्त्वं सन्नोऽस्मानभ्येहि । मित्रशब्देनेहादित्यो गृह्यते पुंलिङ्गार्थात् । सुमित्रधः शोभनानि मित्राणि दधाति पुष्णातीति सुमित्रधः । यस्त्वं सुमित्रधः । यजमानस्य दक्षिण ऊरौ निदधाति इन्द्रस्योरुम् । स इन्द्रस्य यजमानस्य ऊरुं दक्षिणं आविश उपविश । 'एष वा अत्रेन्द्रो भवति यद्यजमानः' इति श्रुतिः । उशन्नुशन्तम् । 'वश कान्तौ' । कामयमानस्त्वं कामयमानमेव यजमानस्योरुमाविश इत्यनुवर्तते । स्योनः स्योनम् । स्योनमिति सुखनाम । सुखरूपस्त्वं सुखरूपम् । यजमानस्योरुमाविश इत्यनुवर्तते । एवं परस्परप्रीत्या अवियुक्तौ भवेतामित्यभिप्रायः । सोमक्रयणाननुदिशति । स्वान भ्राज । सप्तदशानां मध्यात्सप्त तावत्सोमक्रयणाननुदिशति । हे स्वान, भ्राज अङ्घारे बम्भारे हस्त सुहस्त कृशानो । एवं सप्तधिष्ण्यान् संबोध्य अथेतरानाह । एते वः सोमक्रयणाः । एते वः युष्माकं मध्ये तावत् सोमक्रयणाः तान्रक्षध्वम् गोपायत । धिष्ण्यान् मा वो दभन् एते होतृका अपि स्वानभ्राजादयः युष्मान् मा दभन् । दभ्नोतिर्हिंसाकर्मा । मा युष्मान्दभ्नुवुः ॥ २७ ॥

**म०** 'सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोममादायेति' (का० ७।८।२१) । सौम्यम् । हे सोम, त्वं नोऽस्मान् प्रत्येहि आगच्छ । किंभूतस्त्वम् । मित्रः सखा, प्रीतियुतः । यद्वा मित्रः रविरूपः । तथा सुमित्रधः शोभनानि मित्राणि दधाति पुष्यति सुमित्रधः । क्रीत्वा वाससा बद्धस्य सोमस्य वरुणदेवताकत्वेन क्रूरत्वात्तच्छान्त्यर्थो मित्रत्वेन प्रार्थ्यते । तदाह तित्तिरिः 'वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रध इत्याह शान्त्यै' इति । 'दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधातीन्द्रस्योरुमितीति'

(का० ७।८।२३) । वासः प्रत्युह्य वस्त्रमुपरिस्थाप्य सोमं निदध्यादित्यर्थः । यजमानरूपेण परमैश्वर्येणोपेतत्वादत्रेन्द्रशब्देन यजमानः । तथाच श्रुतिः 'एष वा अत्रेन्द्रो भवति यद्यजमानः' (३।३।३।१०) इति । हे सोम, त्वमिन्द्रस्य यजमानस्य दक्षिणमूरुमाविश । दक्षिणे ऊरावुपविशेत्यर्थः । किंभूतस्त्वम् । उशन् 'वश कान्तौ' वष्टि उशन् शतृप्रत्ययः । ऊरुं कामयमानः । तथा स्योनः सुखभूतः । किंभूतमूरुम् । उशन्तं सोमं कामयमानं स्योनमुपवेशे सुखकरम् । पुरा देवाः सोमं क्रीतमिन्द्रस्योरावुपवेशयन् तस्मादत्रेन्द्रशब्देन यजमानः । तदाह तित्तिरिः 'देवा वै सोममक्रीणंस्तमिन्द्रस्योरौ दक्षिण आसादयन् स खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाह' इति । 'स्वान भ्राजेति जपति सोमविक्रयिणमीक्षमाणः' (का०७।८।२४) इति । स्वनतीति स्वानः । भ्राजते शोभतेऽसौ भ्राजः । अङ्घस्य पापस्यारिरङ्घारिः । बिभर्ति पुष्णाति विश्वमिति बम्भारिः । हसति हस्तः सर्वदा हृष्टरूपः । शोभनौ हस्तौ यस्य सुहस्तः । कृशं दुर्बलमनिति जीवयतीति कृशानुः । स्वानादयः सप्त सोमरक्षका देवविशेषाः । हे स्वानादयः सप्त देवाः, वो युष्माकमेते सोमक्रयणाः सोमः क्रीयते यैस्ते सोमं क्रेतुमानीता हिरण्यादिपदार्थाः पुरतः स्थापिताः । तान्पदार्थान् यूयं रक्षध्वमवत । वो युष्मान्मा दभन् वैरिणो मा हिंसिषत । स्वानादयो धिष्ण्याधिष्ठातारः सोमरक्षकाः । तदाह तित्तिरिः 'स्वान भ्राजेत्याह ते वामुष्मिँल्लोके सोममरक्षन्' इति ॥ २७ ॥

## अष्टाविंशी ।

परि॑ माग्ने दु॒श्च॑रिताद्बाधस्वा मा॒ सु॒च॑रिते भज। उदायु॑षा स्वा॒युषोद॑स्थाम॒मृताँ२॥ऽअनु॑ ॥ २८ ॥

**उ०** गृहीतसोमं वाचयति । परि माग्ने । आग्नेयी पुरस्ताद्बृहती । हे भगवन्नग्ने, परिबाधस्व परित्रायस्व मां दुश्चरितात्पापाचरणात् । आभज माम् आसेवस्व मां सुचरिते वर्तमानम् । उत्तिष्ठति । उदस्थाम् उत्तिष्ठामि आयुषा निमित्तभूतेन चिरं जीवनाय स्वायुषा निमित्तभूतेन शोभनेन प्रकारेण दानहोमयागादिभिः । येनास्मदीयमायुर्यात्यनेन च हेतुना उदस्थाम् उत्तिष्ठामि च । अमृतान् देवाननु अतः परिमाग्ने दुश्चरिताद्बाधस्वेति संबन्धः । अमृतशब्देनात्र बहुवचनान्तेन सोमोऽभिधीयते । आगते सोमे दीक्षित उत्तिष्ठति । तस्यैषा प्रायश्चित्तिः ॥ २८ ॥

**म०** 'गृहीतसोमं परि माग्न इति वाचयतीति' (का० ७।९।१) । अग्निदेवत्या पुरस्ताद्बृहती । यस्या आद्यो द्वादशाक्षरस्त्रयोऽष्टाक्षराः पादाः सा पुरस्ताद्बृहती । 'आद्यश्चेत्पुरस्ताद्बृहती' इत्युक्तेः । हे अग्ने, दुश्चरितात्पापान्मा मां परिबाधस्व परितो निवारय । मे पापे प्रवृत्तिर्मा भूदित्यर्थः । सुचरिते शोभने चरिते सदाचाररूपे पुण्ये मा मां यजमानमाभज सर्वतो भज स्थापयेत्यर्थः (का० ७।९।३) । उदायुषेत्युत्थानमिति । उदायुषा उत्कृष्टेन चिरजीवनलक्षणेनायुषा निमित्तेन तथा स्वायुषा यागदानादिना शोभनेनायुषा निमित्तभूतेन अमृताननु सोमादिदेवाननुसृत्य उदस्थामहमुत्थितवानस्मि । तिष्ठतेर्लुङि रूपम् ॥ २८ ॥

## एकोनत्रिंशी ।

प्रति॒ पन्था॑मपद्महि स्वस्ति॒गाम॑ने॒ह॑सम् । येन॒ विश्वाः॒ परि॒ द्विषो॑ वृ॒णक्ति॑ वि॒न्दते॑ वसु॑ ॥ २९ ॥

**उ०** अनोभ्येति । प्रति पन्थाम् । अनुष्टुप् । पन्थानं स्तौति । प्रत्यपद्महि प्रतिपद्येमहि पन्थानम् । स्वस्तिगाम् अविनाशेन यत्र गम्यते तं स्वस्तिगाम् । अनेहसम् । एह इत्यपराधनाम । न विद्यते यत्र गतानामपराधः स तथोक्तः । किंच । येन पथा गच्छन् विश्वाः सर्वाः परिवृणक्ति परिवर्जयति । 'वृजी वर्जने' । द्विषः दुष्टान् । किंच विन्दते वसु लभते धनम् ॥ २९ ॥

**म०** 'शीर्ष्णि सोमं कृत्वा पाणिमन्तर्धाय प्रतिपन्थामित्यनोऽभ्येतीति' (का० ७।९।४) । शकटमभिलक्ष्य गच्छेदित्यर्थः । अनुष्टुप्पथिदेवत्या । पन्थानं स्तौति । पन्थां पन्थानं मार्गं प्रत्यपद्महि वयं प्रत्यपद्यामहि प्रतिपन्नाः । प्राप्ता अभूमेत्यर्थः । 'पद गतौ' इत्यस्य व्यत्ययेन शपि लुप्ते लङि रूपम् । विभक्तेः पूर्वसवर्णे पन्थामिति रूपम् । किंभूतं पन्थानम् । स्वस्तिगां स्वस्ति क्षेमेण गम्यते यत्र स स्वस्तिगास्तं क्षेमेण गन्तुं योग्यम् । गमेर्विटि प्रत्यये 'विड्वनोरनुनासिकस्यात्' (पा० ६।४।४१) इति मकारस्याकारे रूपम् । तथा अनेहसम् एहः पापरूपश्चोरादिबाधस्तद्रहितम् । यद्वा एह इत्यपराधनाम । यत्र गतानामपराधो नास्ति । येन पथा गच्छन्पुरुषो विश्वाः विश्वान्सर्वान् द्विषो द्वेषिणश्चोरादीन् परिवृणक्ति परितो वर्जयति । 'वृजी वर्जने' रुधादिः । वसु विन्दते धनं च लभते तं पन्थानमिति पूर्वत्रान्वयः । 'विद्लृ लाभे' ॥ २९ ॥

## त्रिंशी ।

अदि॑त्यास्त्व॒ग॑स्यदि॑त्यै॒ सद॒ आसी॑द । अस्त॑भ्ना॒द्द्यां वृ॑ष॒भो अ॒न्तरि॑क्ष॒ममि॑मीत वरि॒माण॑ं पृथि॒व्याः । आसी॑द॒द्विश्वा॒ भुव॑नानि स॒म्राड्विश्वेत्तानि॒ वरु॑णस्य व्र॒तानि॑ ॥ ३० ॥

**उ०** कृष्णाजिनमास्तृणाति । अदित्यास्त्वगसि । व्याख्यातः शेषः । सोमं निदधाति । अदित्यै सदः स्थानमासीद । सोममालभ्य वाचयति । अस्तभ्नाद्द्याम् त्रिष्टुभौ वारुण्यौ । योयं वृषभः वर्षिता अस्तभ्नाद्द्याम् स्तभित-

वान् द्युलोकम् । यश्चान्तरिक्षं अस्तभ्नात् । यश्चामिमीत वरिमाणं पृथिव्याः । मिमीते वरिमाणं गुरुत्वं पृथिव्याः । यश्च सम्राट् देवताविशेषः । आसीदद्विश्वा भुवनानि । आसीदति हि सर्वाणि भूतजातानि आत्मत्वेनाधिपत्येन च । विश्वेत्तानि । इच्छब्द एवार्थे । सर्वाण्येवैतानि वरुणस्य व्रतानि कर्माणि । ये इमान् लोकान् स्तभ्नुवन्ति ये च सर्वजनानाविशन्ति तेपि च वरुणाज्ञां कुर्वन्तीति परब्रह्मरूपेण वरुणस्य स्तुतिः ॥ ३० ॥

म० 'कृष्णाजिनमस्मिन्नास्तृणात्यदित्यास्त्वगितीति' (का० ७।९।१)। अस्मिन् शकटे इत्यर्थः । हे कृष्णाजिन, त्वमदित्यास्त्वगसि अखण्डितायाः पृथिव्याः त्वग्रूपं भवसि । 'तस्मिन्सोमं निदधात्यदित्यै सद इतीति' (का० ७।९।१)। हे सोम, त्वमदित्यै सदः अदितेर्भूमेः संबन्धि स्थानमासीद सर्वतः प्राप्नुहि । तत्रोपविशेत्यर्थः । 'अस्तभ्नाद्द्यामिति सोममालम्भ्य वाचयतीति' (का० ७।९।८)। हे वरुणदेवते त्रिष्टुभौ । क्रीतसोमस्य वरुणदेवतत्वाद्वरुणो ब्रह्मरूपेण स्तूयते । वृषभः श्रेष्ठो वरुणो द्यामस्तभ्नात् द्युलोको यथा न पतति तथा स्वकीययाज्ञया स्तम्भितवान् । तथान्तरिक्षमप्यस्तभ्नात् । तथा पृथिव्या वरिमाणं भूमेरुरुत्वममिमीत मिमीते । उरोर्भावो वरिमा तम् । एतावती भूरिति परिमाणं जानातीत्यर्थः । तथा सम्राट् सम्यग्राजमानो वरुणो विश्वा विश्वानि सर्वाणि भुवनानि आसीदत् लोकान्व्याप्नोति । विश्वा विश्वानि सर्वाणि । इत् एवार्थे । सर्वाण्येव वरुणस्य व्रतानि कर्माणि । यद्वा इदित्यव्ययमित्थमर्थे । इदित्थं तानि द्युलोकस्तम्भनादीनि वरुणस्य व्रतानि व्रतवन्नियतानि । सर्वदा तानि करोतीत्यर्थः ॥ ३० ॥

## एकत्रिंशी ।

वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु । हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥ ३१ ॥

उ० वनेषु वि । वीत्ययमुपसर्गस्ततानेत्यनेन संबध्यते । यो वरुणः वनेषु वृक्षाग्रेषु वि ततान वितनोत्यन्तरिक्षमाकाशम् । यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादुपलभ्यत एव । वाजमर्वत्सु । 'वीर्यं वै वाजः पुमाꣳसोऽर्वन्तः' इति श्रुतिः । वाजं वीर्यम् । अर्वत्सु पुरुषेषु । ततानेत्यनुवर्तते । पय उस्रियासु । उस्रियासु गोषु पयो विततान । हृत्सु क्रतुम् । क्रतुः संकल्पः । हृदयेषु संकल्पं विततान । विक्ष्वग्निम् प्रजास्वग्निं विततान । दिवि द्युलोके सूर्यमदधात् स्थापितवान् । सोममद्रौ । अद्रिषु सोमं स्थापितवान् । य एवं परब्रह्मलक्षणो वरुणस्तं वयं स्तुम इति शेषः ॥ ३१ ॥

म० 'वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्येति' (का० ७।९।९)। बन्धनहेतुना वस्त्रेण परितो वेष्टयित्वेत्यर्थः । वि उपसर्गस्ततानेत्यनेन संबध्यते । वरुणो वनेषु वनगतवृक्षाग्रेषु अन्तरिक्षमाकाशं विततान । यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादत्यन्तं विस्तारितवान् । तथा अर्वत्सु अश्वेषु वाजं बलं वितताननेत्यनुवर्तते । यद्वा अर्वत्सु पुरुषेषु वाजं वीर्यं विततान । 'वीर्यं वै वाजः पुमाꣳसोऽर्वन्तः' (३।३।४।७) इति श्रुतेः । तथा उस्रियासु पयः क्षीरं विततान । उस्रियाशब्दो गोनामसु पठितः । हृत्सु हृदयेषु क्रतुं संकल्पं तच्छक्तियुतं मनो विततान । विक्षु प्रजासु अग्निं जठराग्निम् । दिवि द्युलोके सूर्यं विततान । अद्रौ पर्वते सोमं वल्लीरूपमदधात्स्थापितवान् । पर्वतपाषाणसंधिषु सोमवल्ल्या उत्पद्यमानत्वादद्रौ सोमस्थापनमुक्तम् । तदाह तित्तिरिः । 'सोममद्राविल्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं निदधाति' इति । य एव मन्त्रद्वयोक्तद्युलोकस्तम्भनादिसामर्थ्यवान्परब्रह्मलक्षणो वरुणस्तं वयं स्तुम इति शेषः ॥ ३१ ॥

## द्वात्रिंशी ।

सूर्यस्य चक्षुरारोहाऽग्नेरक्ष्णः कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥ ३२ ॥

उ० कृष्णाजिनं सोमस्य चिह्नं करोति । सूर्यस्य चक्षुः । अनुष्टुप् । कृष्णाजिनमुच्यते । सूर्यस्य संबन्धि चक्षुः आरोह । तथाभ्युच्छ्रितं भव यथा सूर्यश्चक्षुषा पश्यतीत्यभिप्रायः । अग्नेश्चक्षुः कनीनकमारोह । यत्रैताभ्यां दृष्टो लक्षितः । एतशेभिः । एतश इति अश्वनामसु पठितम् । एतशैरश्वैः ईयसे नीयसे । भ्राजमानः देदीप्यमानः । विपश्चिता सूर्येण सहितः । अग्निना वा विपश्चिता सहितः ॥ ३२ ॥

म० 'कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरितीति' (का० ७।९।९) कृष्णाजिनदेवत्यानुष्टुप् । हे कृष्णाजिन, त्वं सूर्यस्य चक्षुर्नेत्रं आरोह । तथा अग्नेर्वह्नेरक्ष्णो नेत्रस्य कनीनकं तारकां चारोह । तथोच्चैस्तरांभव यथैताभ्यां दृश्यस इत्यर्थः । यत्र यस्मिन्नेतयोर्दर्शने विपश्चिता विदुषा सर्वज्ञेन सूर्येणाग्निना च भ्राजमानः दीप्यमानः सन्नेतशेभिरेतशैरश्वैस्त्वमीयसे गच्छसि । एतश इत्यश्वनामसु पठितम् । यत्र त्वमश्वैर्गच्छसि । 'ई गतौ' दिवादिरात्मनेपदी । एतशैरिति करणतृतीया । यद्वा कर्मणि रूपम् । एतशैरिति कर्तरि तृतीया । यत्राश्वैस्त्वं नीयस इत्यर्थः । कृष्णाजिनस्य पुंस्त्वमार्षम् । सूत्राग्निदृष्टिविषयत्वे सति मार्गो रक्षोबाधरहितो भवति । तदुक्तं तित्तिरिणा 'एष वास्य खलु रक्षोहणः पन्था योऽग्नेश्च सूर्यस्य च' इति ॥ ३२ ॥

## त्रयस्त्रिंशी।

उस्रावेतं धूर्षाहौ युज्येथामनश्रू अवीरहणौ ब्रह्मचोदनौ। स्वस्ति यजमानस्य गृहान्गच्छतम् ॥३३॥

उ० अनड्वाहौ युनक्ति। उस्रावेतम्। ऊर्ध्वबृहती। हे उस्रौ अनड्वाहौ आ इतम् आगच्छतम्। एत्य च स्वयमेव युज्येथाम् योगं कुरुतम्। हे धूर्षाहौ। 'षह मर्षणे'। धुरं वोढुं यौ शक्नुतस्तौ तथोक्तौ। अनश्रू अश्रुरहितौ हृष्टावित्यर्थः। अवीरहणौ। वीराणां यौ युवां वधं न कुरुतं ताववीरहणौ। प्रशस्तावित्यर्थः। ब्रह्मचोदनौ ब्राह्मणान् यज्ञं प्रति प्रेरयितारौ। एवमनड्वाहौ संबोध्य अथेदनीं प्रयोजनमाह। स्वस्ति अविनाशेन यजमानस्य गृहान् गच्छतम्॥३३॥

म० 'अनड्वाहौ युनक्त्युस्रावेतमितीति' (का० ७।९।११)। आनडुही ऊर्ध्वबृहती। यस्यास्त्रयः पादा द्वादशाक्षराः सोर्ध्वबृहती। 'त्रिजागतोर्ध्वबृहती' इत्युक्तेः। अत्राद्यो दशार्णः द्वितीयस्त्रयोदशार्णस्तेनैकोना। हे उस्रौ अनड्वाहौ, युवामेतमागतम्। एत्य च स्वयमेव युज्येथां रथे युक्तौ भवतम्। किंभूतौ युवाम्। धूर्षाहौ धुरं सहेते तौ धूर्षाहौ शकटधुरं वोढुं समर्थौ। तथा अनश्रू नेत्रयोरश्रुरहितौ। सोत्साहावित्यर्थः। अवीरहणौ न वीरान्हतस्तौ। शृङ्गादिभिर्वीराणां शिशूनां हननमकुर्वाणौ। ब्रह्मचोदनौ ब्रह्मणो विप्रान् चोदयतस्तौ ब्राह्मणानां यज्ञंप्रति प्रेरकौ। एवं संबोध्य प्रयोजनमाह। तथाविधौ युवां स्वस्ति क्षेमेण यजमानस्य गृहान्प्रति गच्छतम्॥ ३३॥

## चतुस्त्रिंशी।

भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि। मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन्॥ श्येनो भूत्वा परापत यजमानस्य गृहान्गच्छ तन्नौ सꣳस्कृतम्॥ ३४॥

उ० वाचयति। भद्रो मेऽसि। 'भदि कल्याणे सौख्ये च'। सोम उच्यते। भन्दनीयः स्तुत्यः यतस्त्वं मे मम भवसि अतो ब्रवीमि। प्रच्यवस्व। 'च्युङ् च्युङ् जिङ् किङ् प्रुङ् कुच् सैङ् गाङ् गतौ'। गच्छ। भुवस्पते भूतजातस्य पते। विश्वान्यभिधामानि सर्वाणि स्थानानि पत्नीशालाहविर्धानप्रभृतीनि। किंच त्वां प्रच्यवमानं माविदन् मा जानन्तु। परिपरिणः परिणेतारो दुर्जनाः। मा च त्वां परिपन्थिनः सर्वतः पन्थानं ये तिष्ठन्ति ते विदन्। मा च त्वां वृका अघायवो विदन्। वृका विकर्तनशीलाः। अघायवः अघं पापं ये परस्य कर्तुमिच्छन्ति ते अघायवः। एते च त्वां गच्छन्तं मा जानन्तु। किंच त्वमपि श्येनो भूत्वा परापत श्येनरूपमवस्थायोत्पत। ततो यजमानस्य गृहान् गच्छ। तत् नौ आवयोः तव च मम च संस्कृतं सर्वोपकरणयुक्तं स्थानं विद्यते॥ ३४॥

म० 'भद्रो म इति वाचयतीति' (का० ७।९।१९)। सौम्यं यजुः। हे सोम, मे मह्यं यजमानाय मदुपकारार्थं त्वं भद्रोऽसि कल्याणरूपोऽसि। 'भदि कल्याणे'। हे भुवः पते, भूशब्देन भूमौ स्थितानि भूतानि यजमानाध्वर्युप्रभृतीन्युच्यन्ते। तेषां भूतानां पालकत्वात्पतिः सोमः। तदाह तित्तिरिः 'प्रच्यवस्व भुवसत इत्याह भूतानाꣳ ह्येष पतिः' इति। तथाविध हे सोम, विश्वानि सर्वाणि धामान्यभि स्थानानि पत्नीशालाहविर्धानप्रभृतीनि अभिलक्ष्य प्रच्यवस्व प्रकर्षेण गच्छ। 'च्युङ् गतौ'। प्रच्यवमानं त्वा त्वां परिपरिणो मा विदन् मा जानन्तु। सर्वतः संचरन्तस्तस्करविशेषाः परिपरिण उच्यन्ते। तथा परिपन्थिनो यागस्य प्रतिषेधकाः शत्रवस्त्वां मा विदन्। 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (पा० ५।२।८९) इति निपातावेतौ। तथा वृका विकर्तनशीला आरण्यश्वानो दुर्जना वा त्वां मा विदन्। किंभूता वृकाः। अघायवः परस्याघं कर्तुमिच्छन्ति ते अघायवः। 'सुप आत्मनः क्यच्' (पा० ३।१।८) इति क्यचि 'अश्वाघस्यात्' (पा० ७।४।३७) इत्याकारः। 'क्याच्छन्दसि' (पा० ३।२।१७०) इति क्यजन्तादुप्रत्ययः। किंच श्येनो भूत्वा श्येनरूपमास्थाय श्येनाख्यपक्षिवच्छीघ्रगामी वा भूत्वा परापत उत्पत। यजमानस्य गृहान् गच्छ। तत्तत्र यजमानगृहेषु नौ आवयोः तव मम च संस्कृतं सर्वोपकरणसंयुक्तं स्थानमस्तीति शेषः॥ ३४॥

## पञ्चत्रिंशी।

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳसपर्यत। दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत॥ ३५॥

उ० वाचयति। नमो मित्रस्य। सौरी जगती। ऋषिर्दृष्टार्थः। परब्रह्मरूपेणादित्यमवगम्य स्वं नमस्कारं कृत्वान्येषां कथयति। नमः सूर्याय। कथंभूताय। मित्रस्य वरुणस्य चक्षसे। मित्र आदित्यो वरुणश्च। उपलक्षणार्थं चैतत्। सर्वद्यावापृथिवीनिवासिलोकग्रहणार्थं वा। तथैव श्रुतिः 'अयं वै लोको मित्रोऽसौ वरुणः' इति। चक्षसे द्रष्ट्रे ईश्वररूपेणाध्यक्षाय। महो देवाय तदृतꣳसपर्यत। महते देवाय तत्सत्यं पूजयत हे ब्राह्मणाः। सपर्यतीत्यर्चाकर्मसु पठितम्। किंच दूरेदृशे दूरेस्थितो दृश्यत इति दूरेदृक्। यद्वा अतीतानागतवर्तमानकालसंबन्धान् प्राणिनो दूरेऽवस्थितान्पश्यतीति दूरेदृक्। देवजाताय देवानुग्रहार्थं जातो

देवजातः । यद्वा जाता देवा अस्मादिति देवजातः । निष्ठा 'वाहिताग्न्यादिषु' इति बहुव्रीहौ परनिपातः । केतवे । केतुरिति प्रज्ञानामसु पठितम् । प्रज्ञानत्वाय । विज्ञानघनानन्दस्वभावायेत्यर्थः । दिवस्पुत्राय द्युलोकाद्धि सूर्यो विजायते द्युलोकं वा बहुधा त्रायत इति दिवस्पुत्रः सूर्यः । सूर्याय शꣳसत । 'शंसु स्तुतौ' । इत्थंस्वरूपाय सूर्याय स्तुतीरुच्चारयत । किमन्यैर्देवताविशेषैः ॥ ३५ ॥

**म०** 'शालां पूर्वेण प्रतिप्रस्थाताग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गं नमो मित्रस्येत्येनमालभ्य वाचयति' ( का० ७ । ९ । २१—२२ ) इति । सौरी जगती सूर्यदृष्टा । द्वादशाक्षरचतुःपादा जगती । अत्र मन्त्रे सूर्यरूपेण सोमः स्तूयते । एवंविधाय सूर्याय नमः । किंभूताय मित्रस्य वरुणस्य । चतुर्थ्यर्थे षष्ठ्यौ । मित्राय वरुणाय मित्रवरुणदेवतारूपेण वर्तमानाय । जगतां हितकारिणे । वृणोति वरुणः स्वरश्मिभिर्जगदावृण्वते । चक्षसे चष्टे इति चक्षास्तस्मै । चक्षुष्मते द्रष्ट्रे इत्यर्थः । यद्वायमर्थः । मित्रस्य वरुणस्य चक्षसे सर्वजगतो द्रष्ट्रे । मित्रावरुणशब्देन सर्वं जगल्लक्ष्यते । तथा महो महसे तेजोरूपाय 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति विभक्तिलोपः । देवाय द्योतमानाय । तथा दूरेदृशे दूरे वर्तमानैः प्राणिभिर्दृश्यत इति दूरेदृक् तस्मै । यद्वा दूरे पश्यतीति दूरेदृक् । देवजाताय देवाद् द्योतमानात्परमात्मनो जायतेऽसौ । देवानुग्रहाय जातो देवजात इति वा । जाता देवा यस्मात्स देवजात इति वा । 'वाहिताग्न्यादिषु' ( पा० २ । २ । ३७ ) इति जातशब्दस्य परनिपातः । केतवे प्रज्ञारूपाय विज्ञानघनाय । केतुरिति प्रज्ञानाम । दिवस्पुत्राय द्युलोकस्य पुत्रवत्प्रियाय । द्युलोकाद्धि सूर्यो जायते । दिवः पुरु त्रायते इति दिवस्पुत्रः । दिवः पालकायेति वा । एवंविधाय सूर्याय तद्दतं सत्यमवश्यफलप्रदज्योतिष्टोमरूपं कर्म हे ऋत्विजः, यूयं सपर्यतानुष्ठानेन सपर्या कुरुत । सपर्यतिः परिचरणकर्मा ( निघ० ३ । ५ । ३ ) । सूर्यार्थं यज्ञं कुरुतेत्यर्थः । यद्वा तद्दतं सूर्यरूपं सत्यं ब्रह्म सपर्यत परिचरत । किंच शंसत । 'शंसु स्तुतौ' सूर्यप्रीत्यर्थं स्तुतिं कुरुत । शस्त्राणि पठतेत्यर्थः । यागानुष्ठाने तस्यावश्यकत्वादित्यर्थः ॥ ३५ ॥

## षट्त्रिंशी ।

वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥ ३६ ॥

**उ०** उत्तम्भनेनोपस्कभ्नाति । वरुणस्योत्तम्भनमसि । वरुणस्य त्वमुत्तम्भनं भवसि नतु शकटस्य । 'उदःस्थास्तम्भोः पूर्वस्य' इति स्तम्भनसकारस्य तकारः । शम्ये उद्वृहति । वरुणस्य स्कम्भसर्जनीस्थः । स्कभ्नोतिः स्तभ्नोतिना समानार्थः । 'अर्ज सर्ज अर्जने' । स्कम्भशब्देनात्र युगमुच्यते । तस्य सर्जनी वशीकरण्यौ स्कम्भसर्जनी वरुणस्य युवां स्कम्भसर्जनी शम्ये स्थः भवथः । आसन्दीमभिमृशति । वरुणस्य ऋतसदनी सत्यसदनी त्वं भवसि । कृष्णाजिनमस्यामास्तृणाति । वरुणस्य ऋतसदनमसि । वरुणस्य सत्यसदनं त्वं भवसि । सीदन्त्यस्मिन्निति सदनम् । तस्मिन्सोमं निदधाति । वरुणस्य ऋतसदनं सत्यसदनं । आसीद उपविश ॥ ३६ ॥

**म०** 'समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमितीति' ( का० ७ । ९ । २५ ) । पञ्च यजूंषि वारुणानि । हे काष्ठ, त्वं वरुणस्योत्तम्भनमसि वस्त्रबद्धस्य सोमस्योन्नमनं भवसि नतु शकटस्येत्यर्थः । उत्तभ्यते शकटमुखाग्रमुन्नतत्वेन स्थाप्यते यस्मिन् काष्ठे तत्काष्ठमुत्तम्भनम् । 'शम्ये चोद्वृहति वरुणस्य स्कम्भसर्जनी स्थ इतीति' ( का० ७ । ९ । २६ ) । शकटयुगे बद्धयोर्बलीवर्दयोर्गलबहिर्भागे काष्ठनिर्मिते शम्ये स्थाप्येते । ताभ्यां वृषयोरितस्ततो गमनं निवार्यते ततस्ते स्कम्भसर्जनीशब्देनोच्येते । हे शम्ये, युवां वरुणस्य स्कम्भसर्जनी स्थः । 'स्कम्भ रोधने' । 'सर्ज अर्जने' स्कम्भनं स्कम्भो रोधः स सर्ज्यते क्रियते याभ्यां ते स्कम्भसर्जन्यौ । विभक्तेः पूर्वसवर्णः । व्रियते वेष्ट्यते वस्त्रादिनेति वरुणशब्देनात्र वस्त्रबद्धः सोम उच्यते । वरुणदैवतत्वाच्च पञ्चस्वपि मन्त्रेषु । 'औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमुता ( १ ) माहरन्ति चत्वारोऽभिमृशन्त्येनां वरुणस्य ऋतसदन्यसीतीति' ( का० ७ । ९ । २७—२८ ) । हे आसन्दि, त्वं वरुणस्य सोमस्य संबन्धिनी ऋतसदन्यसि ऋताय यज्ञाय सद्यते उपविश्यते यस्यां सा ऋतसदनी । 'करणाधिकरणयोः-'( पा० ३ । ३ । ११७ ) इति ल्युट्प्रत्ययः । ऋतं यज्ञस्तन्निष्पत्त्यर्थमुपवेशनस्थानभूतासीत्यर्थः । 'कृष्णाजिनमस्यामास्तृणाति वरुणस्य ऋतसदनमसीतीति' ( का० ७ । ९ । २९ ) हे । कृष्णाजिन, वरुणस्य बद्धस्य सोमस्य ऋतसदनं यज्ञार्थमुपवेशनस्थानमसि । 'तस्मिन्सोमं निदधाति वरुणस्य ऋतसदनमासीदेतीति' ( का० ७ । ९ । ३० ) । हे सोम, त्वं वरुणस्य वस्त्रबद्धस्य तत्र ऋतसदनं यज्ञार्थमुपवेशनस्थानभूतमासंदीसंस्थितं कृष्णाजिनमासीद सुखेनोपविश ॥ ३६ ॥

## सप्तत्रिंशी ।

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान् ॥ ३७ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
चतुर्थोऽध्यायः ॥ ४ ॥

उ० सोमं प्रवेशयन्वाचयति । या ते धामानि । सौमी त्रिष्टुप् । हे सोम, या ते धामानि । 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति' । यानि तव संबन्धीनि धामानि नामानि हविषा यजन्ति यष्टारः । ता ते विश्वाः तानि ते सर्वाणि । परिभूः । नपुंसकबहुवचनस्थाने पुंलिङ्गैकवचनम् । परिभूणि सर्वतो भवितृणि । अस्तु । एतदपि बहुवचनं वाच्यसंयोगात् । सन्तु यज्ञं यज्ञं सर्वतो गृह्य भवन्त्वित्यर्थः । यद्वा यज्ञशब्देन प्रथमान्तानि च धामानि तव विश्वानि नामानि यज्ञः परिभूः भवतु । यज्ञः परिगृह्य वर्ततामित्यर्थः । त्वं च । गयस्फानः गृहस्य पुत्रपशुभूहिरण्यादिभिर्वर्धयिता । प्रतरणः प्रतरन्ति येनापदः स प्रतरणः । सुवीरः शोभनवीरः । अवीरहा अहन्ता वीराणाम् । प्रचर इत्थंभूतस्त्वं परिभ्रम । सोम दुर्यान् गृहानस्मदीयान् ॥ ३७ ॥

इति उवटकृतौ मन्त्रभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

म० 'या त इति वाचयतीति' ( का० ७ । ९ । ३२ ) । सोमदेवत्या त्रिष्टुप् गोतमदृष्टा । हे सोम, ते तव या यानि धामानि प्रातःसवनादीनि स्थानानि प्राप्येति शेषः । हविषा त्वदीयरसरूपेण यजन्ति ऋत्विजो यागं कुर्वन्ति । यज्ञमभिलक्ष्येति शेषः । ते तव ता तानि विश्वा विश्वानि सर्वाणि स्थानानि परिभूरस्तु । परितो भवति प्राप्नोतीति परिभूः । 'भू प्राप्तौ' । भवान् परितः प्राप्तवान् भवतु । ऋत्विजो येषु स्थानेषु यजन्ति तानि त्वं प्राप्नुहीत्यर्थः । यद्वा ऋत्विजो यानि धामानि प्राप्य यजन्ति तानि सर्वाणि ते तव यज्ञं परिभूरस्तु यज्ञं परितो भवितृणि यज्ञव्यापकानि सन्तु । नपुंसकबहुवचनस्थाने पुंलिङ्गैकवचनमार्षम् । किंच हे सोम, त्वं दुर्यान् गृहान् प्रचर प्राप्नुहि । दुर्या इति गृहनाम 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति संहितायां प्रचरेति दीर्घः । किंभूतस्त्वम् । गयस्फानः गय इति गृहनाम । ( निघ० ३ । ४ । १ ) । 'स्फायी वृद्धौ' । गयान्स्फाययतीति गयस्फानः गृहाभिवर्धकः । प्रतरणः प्रकर्षेण तरन्त्यापदो येन स प्रतरणः । यद्वा प्रतारयति यज्ञपारं प्रापयतीति प्रतरणः । सुवीरः शोभनास्त्वत्प्रसादलब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीरः । अवीरहा न वीरान्हन्तीति वीराणां परिपालक इत्यर्थः ॥ ३७ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
शालागमाद्वाचनान्तश्चतुर्थोऽध्याय ईरितः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

### तत्र प्रथमा ।

अ॒ग्नेस्त॒नूर॑सि॒ विष्ण॑वे त्वा॒ सोम॑स्य त॒नूर॑सि॒ विष्ण॑वे॒ त्वाति॑थेराति॒थ्यम॑सि॒ विष्ण॑वे त्वा श्ये॒नाय॑ त्वा सोम॒भृते॒ विष्ण॑वे त्वा॒ग्नये॑ त्वा रायस्पोष॒दे विष्ण॑वे त्वा ॥ १ ॥

उ० आतिथ्ये हविर्गृह्णाति पञ्चभिर्वैष्णवैर्यजुर्भिः । अग्नेस्तनूरसि 'अग्निशब्देन परोक्षं गायत्र्युच्यते' इति श्रुतिः । अग्नेस्तनूः शरीरं भवसि । हुतं हविरग्नेः शरीरं भवत्येव । विष्णवे त्वा जुष्टं गृह्णामि । सोमस्य शरीरमसि विष्णवे त्वां जुष्टं गृह्णामि । 'सोमः परोक्षेण त्रिष्टुबुच्यते' इति श्रुतिः । अतिथेरातिथ्यमसि । अतिथेः सोमस्य आतिथ्यं भोजनमसि । विष्णवे त्वां जुष्टं गृह्णामि । श्येनाय त्वा सोमभृते । गायत्र्यै त्वां सोमहारिण्यै विष्णवे त्वामिति संबन्धः । 'सायं गायत्री श्येनो भूत्वा दिवः सोममहरत्' इति श्रुतिः । अग्नये त्वा रायस्पोषदे धनपोषस्य दात्रे विष्णवे त्वेति संबन्धः । 'पशवो वै रायस्पोषः पशवो जगती' इति श्रुतिः ॥ १ ॥

म० चतुर्थेऽध्याये सर्वत्रिग्यजमानस्य शालाप्रवेशमारभ्य क्रीतसोमस्य शालाप्रवेशपर्यन्ता मन्त्रा उक्ताः । अथ पञ्चमोऽध्यायस्तत्रादौ आतिथ्येष्टौ हविर्ग्रहणादिमन्त्रा उच्यन्ते । 'निर्वपेदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रमिति' ( का० ८ । १ । ४ ) । पञ्च यजूंषि वैष्णवानि । हे हविः, त्वमग्नेस्तनूरसि अग्निसंज्ञो यो देवः सोमस्य राज्ञो भृत्यस्तस्य गायत्रीच्छन्दोऽधिष्ठातुस्तनूः शरीरं भवसि तृप्तिजनकत्वात् तथाविध हे हविः, विष्णवे बहुयज्ञव्यापिने सोमाय सोमप्रीत्यर्थं त्वा त्वां निर्वपामीति शेषः । सोमस्य तनूरसि । सोमसंज्ञः कश्चित्सोमस्य राज्ञो भृत्यस्त्रिष्टुप्छन्दोधिष्ठाता तस्य तृप्तिहेतुत्वात्तनूरसि । अन्यत्पूर्ववत् । अतिथेरातिथ्यमसि । अतिथिसंज्ञः सोमराजानुचरो जगतीच्छन्दोधिष्ठाता । हे हविः, त्वमतिथेरतिथिसंज्ञस्य सोमभृत्यस्य आतिथ्यमसि आतिथ्यनामसंस्काररूपमसि । तिथिविशेषं विनैवातिक्षुधया पीडिते विप्रेऽतिथौ समागते तत्सत्काराय क्रियमाणः पादक्षालनभोजनसंवाहनादिसंस्कार आतिथ्यमुच्यते । अतिथेरिदमातिथ्यम् 'अतिथेर्ञ्यः' ( पा० ५ । ४ । २६ ) इति ञ्यप्रत्ययः । विष्णवे त्वां निर्वपामीति पूर्ववत् । श्येनाय त्वा सोमभृते । श्येनो नाम देवः सोमराजानुचरः स्वर्गात्सोमाहर्ता श्येनरूपधारिगायत्र्यधिष्ठाता तस्मै श्येनाय विष्णवे सोमाय च त्वां निर्वपामि । किंभूताय श्येनाय । सोमभृते सोमं हरति आनयतीति सोमहृत्तस्मै । 'हृग्रहोर्भश्छन्दसि' ( पा० ८ । २ । ३२ ) इति हरतेर्हस्य भः । सोमानयनकर्त्रे । तथाच श्रुतिः 'सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरदिति' ( ३ । ४ । १ । १२ ) । अग्नये त्वा रायस्पोषदे । रायस्पोषं धनपुष्टिं ददाति रायस्पोषदाः तस्मै । क्विप्प्रत्ययः । राज्ञो धनं क्रयविक्रयादिना बहुधा पोषयित्वा राज्ञेऽर्पयति स रायस्पोषदाः अग्निसंज्ञोऽपरः सोमानुचरोऽस्ति अनुक्तच्छन्दोऽधिष्ठाता

देवः तस्मै धनपुष्टिदायिनेऽग्नये हे हविः, त्वा त्वां गृह्णामि । विष्णवे त्वेति पूर्ववत् । विष्णुशब्दाभिधेयस्य सोमस्य राज्ञो हविषा तदनुचराणामग्न्यादिदेवानां तद्द्वारा तत्संबन्धिनां गायत्र्यादिच्छन्दसां च तृप्तिर्भवति । तदाह तित्तिरिः 'यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनुचराणि' इति ॥१॥

## द्वितीया ।

अग्नेर्जनित्रमसि वृषणौस्थ उर्वश्यस्यायुरसि पुरूरवा असि । गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा छन्दसा मन्थामि ॥ २॥

**उ०** आतिथ्येऽग्निमन्थनं शकलमादत्ते । अग्नेर्जनित्रम् । जायतेऽस्मिन्नग्निरिति जनित्रम् । दर्भतरुणके निदधाति । वृषणौ स्थः । 'वृष सेचने' । वृषणौ वर्षितारौ सेक्तारौ भवथः । अधरारणिं निदधाति । उर्वश्यसि । उत्तरारण्याज्यविलापनीमुपस्पृशति । आयुरसि । उत्तरारणिं निदधाति । पुरूरवा असि । इतिहासपक्षेण मन्त्रत्रयं व्याख्यातं श्रुत्या । 'उर्वशी वा अप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुः' इति । मन्थति । गायत्रेण त्वा । हे अग्ने, गायत्रेण त्वा छन्दसा मन्थामि जनयामि । उत्तरौ मन्त्रौ समानव्याख्यानौ । त्रैष्टुभेन जागतेनेति विशेषः ॥ २ ॥

**म०** अथाग्निनयनमन्त्राः । 'अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोतीति' ( का० ५ । १ । २८ ) । शकलदैवतं यजुः । हे शकल, त्वमग्नेर्जनित्रं जननाधारभूतमसि । जायतेऽस्मिन्निति जनित्रम् । 'वृषणाविति कुशतरुणे तस्मिन्निति' ( का० ५ । १ । २९ ) । तस्मिञ्शकले करोतीत्यर्थः । मन्त्रार्थस्तु । हे दर्भौ, युवां वृषणौ सेक्तारौ स्थः भवथः । वर्षत इति वृषणौ । कनिन्प्रत्ययः । यथा पुत्रजननाय स्त्रीपुरुषौ वीर्यस्य सेक्तारौ तद्वद्युवामप्यरण्योरग्निजननसामर्थ्यसंपादकावित्यर्थः । 'उर्वश्यसीत्यधरारणिं तयोरिति' ( का० ५ । १ । ३० ) । शकलस्थापितयोर्दर्भयोरधरारणिं निदध्यादिति सूत्रार्थः । हे अधरारणे, त्वमुर्वशी असि । यथोर्वशी पुरूरवोनृपस्य भोगायाधस्ताच्छेते तद्वत्त्वमधोऽवस्थितासीत्यर्थः । 'आयुरसीत्युत्तरयाज्यस्थालीꣳ सꣳस्पृशेदिति' ( का० ५ । १ । ३१ ) । उत्तरारण्याज्यस्थालीं स्पृशेदिति सूत्रार्थः । हे स्थालीगताज्य, त्वमायुरसि अरणिद्वयेन जनिष्यमाणस्याग्नेरायुःप्रदं भवसि । 'पुरूरवा इत्यभिनिधानं तयेति' ( का० ५ । १ । ३१ ) । अधरारणेरभिमुखीमुत्तरारणिं निदध्यादिति सूत्रार्थः । हे उत्तरारणे, त्वं पुरूरवा असि । यथा पुरूरवा नृप उर्वश्या अभिमुख उपरि वर्तते तथा त्वमपीत्यर्थः । उर्वशीत्यादिमन्त्रत्रयं श्रुत्या व्याख्यातम् । 'उर्वशी वा अप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरिति' ( ३ । ४ । १ । २२ ) । 'मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणमिति' ( का० ५ । २ । २ ) । मन्त्रत्रयेणारण्योर्मन्थनं कुर्यात् । हे अग्ने, गायत्रेण छन्दसा गायत्रीच्छन्दोभिमानिना देवेनाहं त्वा त्वां मन्थामि अरण्योर्मन्थनेनोत्पादयामि । एवमुत्तरावपि मन्त्रौ योज्यौ ॥ २ ॥

## तृतीया ।

भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥ ३ ॥

**उ०** प्रास्यति । भवतं नः पङ्क्तिः । आहवनीयनिर्मथ्यावुच्येते । भवतं युवां नः अस्माकं समनसौ समानमनस्कौ सचेतसौ समानप्रज्ञौ । अरेपसौ । रेप इति पापनाम । अपापौ । मा यज्ञं हिꣳसिष्टं विनाशिष्टम् । मा च यज्ञपतिं यजमानम् । किंच शिवौ शान्तौ भवतं भवथः । अद्य अस्मिन्यज्ञे नः अस्माकम् ॥ ३ ॥

**म०** 'भवतं न इति प्रास्यतीति' ( का० ५ । २ । ३ ) । मन्थनोत्थमग्निमाहवनीये प्रास्यतीत्यर्थः । पङ्क्तिः । यस्याः अष्टार्णाः पञ्च पादाः सा पङ्क्तिः । अत्र तु तृतीयः षडक्षरः चतुर्थो दशार्णः । निर्मथ्याहवनीयावग्नी देवते । हे जातवेदसावुभावग्नी, नोऽस्मदर्थं युवामीदृशौ भवतम् । किंभूतौ युवाम् । समनसौ मनसा सहितौ । तथा सचेतसौ समानं चेतो ययोस्तौ परस्परं समानचित्तयुक्तौ । अन्यविषयं मनः परिहृत्यास्मदनुग्रहाभिमुखत्वं समनस्त्वम् । अनुग्रहे परस्परविप्रतिपत्तिराहित्यं सचेतस्त्वम् । तथा अरेपसौ पापरहितौ प्रमादादस्माभिः कृतेऽपि पापे कोपाभावः पापराहित्यम् । तदेव स्पष्टयति । यज्ञमस्मत्कर्म मा हिꣳसिष्टं मा विनाशयतम् । यज्ञपतिं यजमानं च मा हिꣳसिष्टम् । तथा अद्यास्मिन्ननुष्ठानदिने नोऽस्मदर्थं शिवौ शान्तौ कल्याणकारिणौ भवतं पूर्वोक्तविधिना ॥ ३ ॥

## चतुर्थी ।

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहा ॥ ४ ॥

**उ०** जुहोति । असावग्निः । आहवनीयनिर्मथ्यावुच्येते विराट् । अग्नौ आहवनीयाख्ये योयमग्निः निर्मथ्यः चरति प्रविष्टः । ऋषीणां विदुषामग्निहोत्रिणां पुत्रः । 'स यदग्नी आधत्ते तदेतं जनयति' इति श्रुतिः । अभिशस्तिपावा अभिशंसनमभिशस्तिः अभिशस्तेः पाति गोपायति यः

सोऽभिशस्तिपावा । स नः सोऽस्माकमग्निः स्योनः सुखरूपः । सुयजा सुयागेन यज । परोक्षत्वान्मन्त्रस्य प्रथमपुरुषेण व्यत्ययः । यजतु । इह अस्मिन् यज्ञे । देवेभ्यो हव्यं हविः । सदम् सदा । अप्रयुच्छन् । 'युच्छी प्रमादे' । अप्रमाद्यन् । स्वाहा सुहुतं हविर्जुहोमि ॥ ४ ॥

**म०** 'अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेणेति' ( का० ५।२।६ ) । विराट् । दशाक्षरैश्चतुर्भिः पादैर्विराट् । अत्र द्वितीयतुर्यावेकादशार्णौ ततो ह्यधिका । अग्निर्मथ्यमानोऽग्नावाहवनीये प्रविष्टः सन् चरति हविर्भक्षयति । 'चर गतिभक्षणयोः' । किंभूतोऽग्निः । ऋषीणां पुत्रः ऋत्विजो वेदविदः ऋषयः तैरुत्पादितत्वात्तेषां पुत्रवत्पुत्रः । तथा अभिशस्तिपावा अभिशस्तिर्वैकल्यनिमित्तोऽभिशापस्तस्मात्पाति रक्षतीत्यभिशस्तिपावा । 'आतो मनिन्–' (पा०३।२।७४) इति वनिप्प्रत्ययः । हे अग्ने, स तथाविधस्त्वं नोऽस्मदर्थं स्योनः सुखरूपः सन् सुयजा शोभनयागेन इहास्मिन् स्थाने देवेभ्यः इन्द्रादिभ्यः हव्यं सोमादिरूपं यज देहि । अस्मद्दत्तं हविर्देवान्प्रापयेत्यर्थः । किं कुर्वन् । सदं सदा अप्रयुच्छन् अप्रमाद्यन् । 'युच्छ प्रमादे' । स्वाहा इदमाज्यं तुभ्यं हुतमस्तु । यद्वा सोऽग्निर्नो हविर्देवेभ्यो यज यजतु ददात्विति पुरुषव्यत्ययेन वा योजना ॥ ४ ॥

## पञ्चमी ।

आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपगेषꣳ स्विते मा धाः ॥ ५ ॥

**उ०** तनूनप्त्रमाज्यं गृह्णाति । आपतये त्वा । वायुदेवत्यं यजुः । आ पततीत्यापतिः । परि सर्वतः पततीति परिपतिः । उभयगुणविशिष्टाय वायवे हे आज्य, त्वा गृह्णामि । तनूनप्त्रे । तनूशब्देनात्रात्माभिप्रेतः । तन्यते हि तस्मादाकाशः ततो वायुर्भवति तस्मादाकाशो जायते शक्वरनामा । आकाशाद्वायुः । एतदभिप्रेत्योक्तं तनूनप्त्रे ब्रह्मणः पौत्रायेत्यर्थः । शाक्वराय । शक्नुवन्त्याकाशे भूतानि स्थातुमिति शक्वर आकाशस्तस्यापत्यं शाक्वरो वायुस्तस्मै । 'तस्माद्वा एतस्मादाकाशः संभूत आकाशाद्वायुः' इति श्रुतिः । शक्वने 'शक्लृ शक्तौ' । 'अन्येभ्योपि दृश्यन्ते' इति वनिप् । शक्ताय । ओजिष्ठाय बलिष्ठाय । आज्यमवमृशन्त्यृत्विजः परस्परमद्रोहाय शपथयन्तः । अनाधृष्टमसि । अनाधर्षितमनुल्लङ्घितं च त्वं भवसि । हे आज्य, शपथकारिभिः पूर्वमधृष्टमिदानीमप्यनाधृष्यमनुल्लङ्घनीयं त्वं भवसि । अनभिशस्ति । अभिपूर्वः शंसतिर्गर्ह्यर्थे वर्तते । न विद्यते अभिशस्तिर्यस्य तत्तथोक्तम् । अभिशस्तिपाः अभिशस्तेः पाति रक्षतीत्यभिशस्तिपाः । अनभिशस्ते प्रदेशे स्वर्गादौ नयतीति अनभिशस्तेन्यम् । यत इत्थंभूतमतः त्वामभिमृश्य । अञ्जसा सत्यमुपगेषम् । अञ्जसा प्रगुणेन मार्गेण यथास्वरूपं सत्यमुपगच्छेयम् । त्वं चानेन सत्येन स्विते मा धाः । सु इते साधुगते कल्याणे लोके स्वर्गे मां निदध्याः ॥ ५ ॥

**म०** 'ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति द्विश्च स्थाल्याः स्रुवेणेति' ( का० ८।१।१९—२० ) । व्रतं प्रदीयते येन पात्रेण तत्र पात्रे ध्रुवास्थमाज्यं गृह्णीयादिति सूत्रार्थः । वायुदेवत्यं यजुः । आ समन्तात्पतति गच्छतीत्यापतिः सततगतिर्वायुस्तस्मै हे आज्य, त्वां गृह्णामि । किंभूताय । परिपतये परितः पततीति परिपतिस्तस्मै सर्वव्यापिने । तथा तनूनप्त्रे तनोति विस्तारयति विश्वमिति तनूरात्मा तस्य नप्त्रे पौत्राय । शाक्वराय शक्नुवन्ति स्थातुं भूतानि यत्र स शक्वर आकाशस्तस्यापत्यं शाक्वरस्तस्मै । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः' ( तैत्ति० आरण्य० ८।१ ) इति श्रुतेः । तथा शक्वने शक्नोति सर्वं कर्तुमिति शक्वा तस्मै । 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३।२।७५ ) । इति वनिप् । ओजिष्ठाय । ओजो बलमस्यास्तीत्योजस्वी । 'अस्मायामेधास्रजो विनिः' ( पा० ५।२।१२१ ) इति विनिप्रत्ययः । अतिशयेनौजस्वी ओजिष्ठस्तस्मै । 'अतिशायने तमबिष्ठनौ' ( पा० ५।३।५५ ) इतीष्ठनि प्रत्यये 'विन्मतोर्लुक्' ( पा० ५।३।६५ ) इति विनो लोपे टिलोपः । यद्वास्य मन्त्रस्यार्थान्तरं तित्तिरिव्याख्यातम् । हे आज्य, त्वामापतये प्राणदेवताप्रीतये गृह्णाम्यत्र पात्रे स्वीकरोमि । आसमन्तात्पाति देहं रक्षतीत्यापतिः प्राणः । तदाह तित्तिरिः 'प्राणो वा आपतिः प्राणमेव प्रीणातीति' । इष्टप्राप्त्युपायमनिष्टपरिहारोपायं च चिन्तयित्वा परितः पाति पालयतीति परिपतिर्मनस्तत्प्रीत्यै गृह्णामि । तदाह तित्तिरिः । 'मनो वै परिपतिर्मन एव प्रीणाति' इति । तनूनप्त्रे । तनूं शरीरं न पातयति न विनाशयतीति तनूनप्ता जाठरोऽग्निस्तस्मै जाठराग्निदेवताप्रीत्यै आज्य, त्वां गृह्णामि । शाक्वराय शक्नशीलः शक्वरः शक्तिमानपुरुषस्तस्येदं शाक्वरं शक्तिस्वरूपं तस्मै शक्तिस्वरूपाभिमानिदेवताप्रीत्यै त्वां गृह्णामि । शक्वन ओजिष्ठाय । शक्वने इति चतुर्थी सप्तम्यर्थे । शक्वनि शक्तिमति पुरुषे यदोजिष्ठं सारं तस्मै । ओजो नामाष्टमो धातुस्तत्सारमोजिष्ठं तदवष्टम्भेनैव शरीरे शक्तिरवतिष्ठते । ओजःसाराभिमानिदेवताप्रीत्यै त्वां गृह्णामीत्यर्थः । 'तनूनप्त्रमेतद्दक्षिणस्यां वेदिश्रोणौ निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्टमित्यद्रोहस्तेभ्यः' ( का० ८।१।२४—२६ ) इति । आज्यदैवतं यजुः । हे आज्य, त्वमीदृशमसि । किंभूतम् । अनाधृष्टमितः पूर्वं केनाप्यतिरस्कृतम् । अनाधृष्यं न आधर्षितुं शक्यमितः परमप्यतिरस्कार्यम् । देवानामग्न्यादीनामोजः सारभूतम् । अनभिशस्ति नास्ति अभिशस्तिर्निन्दा

यस्य तत् । अभिपूर्वः शंसतिर्गर्हायां वर्तते । अभिशस्तिपाः अभिशस्तिर्ऋत्विजां परस्परविरोधेन निन्दनं तस्याः पाति रक्षतीत्यभिशस्तिपाः । पुंस्त्वं छान्दसम् । अनभिशस्तेन्यम् अनभिशस्ते अनिन्दिते स्वर्गादौ नयतीत्यनभिशस्तेनीः । द्वितीया प्रथमार्थे । पुंस्त्वं व्यत्ययेन । यतस्त्वमीदृशमसि अतो हे तानूनप्त्राज्य, अहमृत्विक् अञ्जसा ऋजुमार्गेण मानसकौटिल्यरहितेन सत्यमाज्यसशरीरूपं शपथमुपगेषमुपगच्छेयम् । उपपूर्वस्य गायतेर्लेटयुत्तमैकवचने 'सिब्बहुलं लेटि' (पा० ३।१।३४) इति सिपि इडागमे 'लेटोऽडाटौ' (पा० ३।४।९४) इत्यडागमे च रूपम् । 'इतश्च लोपः परस्मैपदेषु' (पा० ३।४।९७) इति इलोपः । किंच हे आज्य, क्षिते शोभनमार्गे यज्ञकर्मणि मा मां त्वं धाः धेहि स्थापय । दधातेर्लुङि मध्यमैकवचनेऽडभावे रूपम् ॥ ५ ॥

## षष्ठी ।

अग्ने॑ व्रतपा॒स्त्वे व्र॑तपा॒ या तव॑ त॒नूरि॒यꣳसा मयि॒ यो मम॑ त॒नूरे॒षा सा त्वयि॑ । स॒ह नौ॑ व्रतपते व्र॒तान्यनु॑ मे दी॒क्षां दी॒क्षाप॑तिर्मन्य॑ता॒मनु॒ तप॒स्तप॑स्पतिः ॥ ६ ॥

उ० आहवनीये समिधमादधाति । अग्ने व्रतपाः । यजमानोऽनेन यजुषा अग्निशरीरात्मशरीरयोः व्यत्यासं करोति । हे अग्ने व्रतपाः । हे अग्ने, व्रतं पाति रक्षतीति व्रतपाः । व्रतमिति कर्मनाम । त्वे व्रतपाः अवधारणार्थं पुनः संबोधयति । त्वमेव व्रतस्य गोपायिता । तं शरणं व्रजाम इति शेषः । केन प्रकारेणेतिचेत् । या तव तनूरियꣳसा मयि । या इयं तव तनूः सा मयि भवत्विति शेषः । या मम तनूरेषा सा त्वयि । या चैषा मम तनूः सा त्वयि भवत्विति शेषः । एवं कृतशरीरव्यत्यययोरावयोः सह नौ व्रतपते व्रतानि । एकत्र आवयोः हे व्रतपते, व्रतानि कर्माणि सन्त्विति शेषः । किंच अनु मे दीक्षां दीक्षापतिर्मन्यताम् । अनुमन्यतां मे मम दीक्षां दीक्षापतिः सोमः । अनु तपस्तपस्पतिः । अनुमन्यतां च तपस्पतिः सोमः तपः । तपःशब्देन च उपसद उच्यन्ते ॥६॥

म० 'अग्ने व्रतपा इत्याहवनीये समिधमाधायेति' (का० ८।२।४)। आग्नेयं यजुः । यजमानोऽनेन यजुषाग्निशरीरात्मशरीरयोर्व्यत्ययं करोति । हे व्रतपाः सर्वेषां व्रतानां पालकाग्ने, त्वे व्रतपाः त्वमस्मदीयस्य वर्तमानव्रतस्य पालको भवसीति शेषः । विभक्तेः शे आदेशे त्वे इति रूपम् । तव तथाविधस्य व्रतपालकस्य या तनूः शरीरमस्ति सेयं तनूर्मयि भवत्विति शेषः । यो या उ या च मम तनूः मदीयं शरीरं सैषा तनूस्त्वयि भवतु । तथा सति हे व्रतपते, व्रतपालकाग्ने, व्रतान्यनुष्ठेयानि कर्माणि नौ अग्नियजमानयोः सह प्रवर्तन्तामिति शेषः । यावान्व्रतेषु ममादरस्तावानेव तवापि भवत्वित्यर्थः । किंच । दीक्षापतिर्दीक्षायाः पालकः सोमो मे मम दीक्षामनुमन्यताम् । तथा तपस्पतिः उपसद्रूपस्य तपसः पालकः सोमः तपः मदीयमुपसद्रूपमनुमन्यतामित्यनुवर्तते ॥ ६ ॥

## सप्तमी ।

अ॒ꣳशुरꣳ॑शुष्टे देव सो॒मा प्या॑यता॒मिन्द्रा॑यैकधन॒विदे॑ । आ तु॒भ्यमिन्द्रः॒ प्याय॑ता॒मा त्वमिन्द्रा॑य प्याय॒स्व । आप्या॑यया॒स्मान्सखी॒न्सन्या मे॒धया॑ स्व॒स्ति ते॑ देव सोम सु॒त्याम॑शीय । एष्टा॒ रायः॒ प्रेषे भगा॑य ऋ॒तमृ॑तवा॒दिभ्यो॒ नमो॒ द्यावा॑पृथि॒वीभ्या॑म् ॥ ७

उ० सोममाप्याययन्ति । अꣳशुः शुरꣳशुः । चतुरवसाना चतुरशीत्यक्षरा प्रकृतिरुच्यते सौमी । चतुर्थोऽर्धर्चो लिङ्गोक्तदेवताकः । हे सोम अंशुः । वीप्सा । ते तव आप्यायतामुपचीयताम् । कस्मै इन्द्राय । तादर्थ्ये चतुर्थी । एकधनविदे । एकधनान् वेत्ति एकधनवित् तस्मै एकधनविदे । कथंभूतान् वेत्ति । 'एकैकोंशुः सोमस्य देवान्प्रति भक्षत्वेन गच्छन् शतमेकधनानाप्याययति दशदश वा सोमस्य ईदृशी शक्तिः' इतिश्रुतिः । आ तुभ्यमिन्द्रः प्यायताम् । आप्यायतामुपचीयतामिन्द्रः । हे सोम, तुभ्यं त्वदर्थम् । उपचितो हीन्द्रो बहु सोमं पिबति । आत्वमिन्द्राय प्यायस्व आप्यायस्व त्वमिन्द्रार्थमात्मानम् । सोम आप्यायय वर्धय । अस्मान् सखीन् समानख्यानान्परिचारकान् । सन्या धनलोभेन मेधया प्रज्ञया च । स्वस्ति ते देव सोम । स्वस्ति अविनाशः अस्तु तव हे देव सोम । अहं च सत्यामशीय व्याप्नुयाम् । यद्वा स्वस्त्यविनाशेन तव संबन्धि सवनं सुत्यां हे देव सोम, अहं व्याप्नुयाम् । प्रस्तरे निह्नुवते । एष्टा रायः । यजतेः कृतसंप्रसारणस्यैतद्रूपं निष्ठाप्रत्यये परतो दानार्थस्य । आ इष्टा रायः मर्यादया इष्टानि धनानि । दक्षिणाभिप्रायमेतत् । किमर्थमितिचेत् । प्रेषे भगाय । प्रकृष्टाय इषेऽन्नाद्याय भगाय धनाय च । ऋतमृतवादिभ्यः सत्यमेतच्चिन्तितमस्माकं भूयात्सत्यवादिनामिति विभक्तिव्यत्ययः । षष्ठ्यर्थे चतुर्थी । नमो द्यावापृथिवीभ्याम् । द्यावापृथिव्योः संभोगमनु सर्वं सिध्यतीति नमस्कारः ॥ ७ ॥

म० 'यजमानषष्ठाः सोममाप्याययन्त्यꣳशुरꣳशुरिति' (का० ८।२।६।)। प्रकृतिः चतुरवसाना सोमदेवत्या । अन्त्योऽर्धर्चो लिङ्गोक्तदैवतः । चतुरशीत्यक्षरा प्रकृतिः । तत्र मन्त्रद्वयम् । सोमवल्ल्या अवयवोऽंशुरुच्यते । वीप्सा सर्वसंग्रहार्था । हे सोम देव, ते तवांशुरंशुः सर्वोऽप्यवयव इन्द्राय इन्द्रप्रीत्यर्थमाप्यायतां वर्धतां । चिरावस्थानेन यः सोमावयवो म्लानः शुष्कश्च तदुभयं मन्त्रेणाप्यायितं भवति । तदाह तित्तिरिः । 'यद्देवस्य शुष्यति यन्म्लायते तदेवास्यैतेनाप्याय-

यति' इति । किंभूतायेन्द्राय । एकधनविदे एकं मुख्यं धनं सोमरूपं विन्दते लभते स एकधनवित् । यद्वा सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधनाः । एकं धनं सोमरूपं यत्रेति तान्वेत्ति जानातीति । सोमकण्डनाय जलकुम्भा आनीता इति जानातीत्यर्थः । किंच हे सोम, तुभ्यं त्वत्पानार्थमिन्द्र आप्यायतां वर्धताम् । तथा हे सोम, त्वमपि इन्द्रायेन्द्रपानायाप्यायस्व सर्वतो वृद्धो भव । अनेनोभयोरपि वृद्धिर्भवति । तदाह तित्तिरिः 'उभावेवेन्द्रं च सोमं चाप्याययति' इति । किंच हे सोम, सखीन् सखिवत्प्रीतिविषयानस्मानृत्विजः सन्या मेधया चाप्यायय प्रवर्धय । सनिर्धनदानं मेधार्थधारणशक्तिः । 'ऋत्विजो वा अस्य सखायः' इत्युक्तेः सखिशब्देन ऋत्विजः । किंच हे सोमदेव, ते तव स्वस्ति क्षेमोऽस्तु । तव प्रसादादहं सुत्यां सोमाभिषवक्रियां समाप्तिदिनमशीय प्राप्नुयाम् । 'प्रस्तेत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय' ( का० ८ । २ । ९ ) इति । सर्वेऽपि ऋत्विजः प्रस्तरे निजहस्तानुत्तानान्कृत्वा दक्षिणहस्तं वोत्तानमुपर्यवस्थाप्य निह्नुवते सोमं परिचरन्तीति सूत्रार्थः । रायो धनानि एष्टाः आ समन्तादिष्टा अस्माकमपेक्षिताः । सोम, त्वत्प्रसादादस्माकं रायः सन्त्विति भावः । यद्वा रायः दक्षिणालक्षणा एष्टाः आ समन्ताद्दत्ताः । यजते रूपम् । दक्षिणा दास्यन्त इति भावः । किमर्थं प्रेषे भगाय । प्रकर्षेणेष्यत इति प्रेट् तस्मै प्रेष्यमाणाय भगायैश्वर्याय । यद्वा प्रकर्षेण इषे अन्नाय भगाय च । किंच ऋतवादिभ्योऽग्निहोत्रिभ्यः ऋतमवश्यंभाविफलोपेतं कर्म संपादयेति शेषः । ऋतं सत्यं वदन्तीति ऋतवादिनः । यद्वा षष्ठ्यर्थे चतुर्थी । ऋतवादिनामस्माकमृतं कर्मफलमस्त्विति शेषः । द्यावापृथिवीभ्यां तदभिमानिदेवताभ्यां नमोऽस्तु । तयोरनुग्रहेण यजमानायाविघ्नस्थितिर्भवतीति नमस्क्रियते । तदाह तित्तिरिः 'द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रतितिष्ठति' इति ॥ ७ ॥

## अष्टमी ।

या ते॑ अग्नेऽयः॒शया त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा । उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त्स्वाहा॑ । या ते॑ अग्ने रजः॒शया त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा । उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त्स्वाहा॑ । या ते॑ अग्ने हरि॒शया त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा । उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त्स्वाहा॑ ॥ ८ ॥

**उ०** उपसदं जुहोति । 'ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिँल्लोके रजतामन्तरिक्षे हारिणीं दिवि' इत्यादीतिहासो निदानभूतः । या ते अग्ने । हे अग्ने, या ते तव अयःशया अयसि शेते इत्ययःशया तनूः शरीरम् । वर्षिष्ठा उरुतमा विस्तीर्णतमा । गह्वरेष्ठा निगूढदेशस्थायिनी । सा असुरसंबन्धिनी उग्रं वचः उद्गूर्णं वचः जहिजहि मारयमारय इतीत्थंभूतं वचनम् अपावधीत् अपहन्तु । त्वेषं दीप्तं धृष्टं बलेन ऊर्जस्वितया च युक्तमपहन्तु । हतसर्वोद्यमा निर्वाचः असुराः सन्त्वित्यर्थः । यद्वा या तवाग्नेऽयःशयाः तनूः विस्तीर्णा निगूढदेशस्थायिनी च उद्गूर्णमसह्यं वचनमपहतवती दीप्तं वचनमपहतवती । सैनां पुनरपहन्त्विति शेषः । रजःशया रजतशायिनी । हरिशया हरितसुवर्णशायिनी । एतावदुत्तरयोर्मन्त्रयोर्विशेषव्याख्यानम् ॥ ८ ॥

**म०** 'उपसदं जुहोति स्रुवेण या ते इति' ( का० ८ । २ । ३५ ) । आग्नेयानि त्रीणि यजूंषि । अत्रेयमाख्यायिकास्ति । देवैः पराजिता असुरास्तपस्तप्त्वा त्रैलोक्ये त्रीणि पुराणि चक्रुर्लोहमयीं भूमौ राजतीमन्तरिक्षे हैमीं दिवि । तदा देवैस्ता दग्धुमुपसदाग्निराराधितः । तत उपसद्देवतारूपोऽग्निर्यदा तासु पूर्षु प्रविश्य ता ददाह तदा तिस्रः पुरोऽग्नेस्तनवोऽभूवन् । तदभिप्रेत्यायं मन्त्रः । हे अग्ने, या ते तवायःशया तनूः अयसि शेते इत्ययःशया । लोहमयीत्यर्थः । लोहमयपुरव्यापित्वेन तद्रूपा सती । वर्षिष्ठा देवानामतिशयेनाभिमतफलवर्षिणी । तथा गह्वरेष्ठा गह्वरे असुराणां विषमे देशे तिष्ठतीति गह्वरेष्ठा । 'हलदन्तात्सप्तम्याः संज्ञायाम्' ( पा० ६ । ३ । ९ ) इति विभक्तेरलुक् । सा ते तनूरुग्रं वचोऽपावधीत् छिन्धिभिन्धीत्यादिकमसुरप्रोक्तं तीव्रं वचनं विनाशितवती । तथा त्वेषं वचः असुरोक्तं देवाधिक्षेपरूपं प्रदीप्तं वाक्यमपावधीत् । स्वाहा तथाविधोपकाराय तुभ्यमग्नये हविर्दत्तम् । 'ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिँल्लोके रजतामन्तरिक्षे हरिणीं दिवि' ( ३ । ४ । ४ । ३ ) इत्यादिश्रुत्या अयमितिहासो निरूपितः । उग्रत्वेषवचसोरर्थान्तरम् । यथा असुरैः पराजिता देवा अन्नपाने अलभमानाः क्षुत्पिपासाभ्यां वयं पीडिता इति यदूचुस्तदुग्रं वचः । तथा किं वा वीरहत्यादि महापातकमस्माभिः कृतमिति क्लिश्नन्तो यद्वाक्यं संतापहेतुत्वेन दीप्तमूचुस्तत्त्वेषं वचः । तदाह तित्तिरिः । 'अशनायापिपासे ह वा उग्रं वच एनश्च वै वीरहत्यं च त्वेषं वचः' इति । 'एवमितरे अन्वहꣳरजःशयाꣳहरिशयां चेति' ( का० ८ । २ । ३८ ) । यथा प्रथमदिने या ते अग्नेऽयःशयेत्युपसदेवमितरे द्वितीयतृतीये उपसदौ द्वितीयतृतीयदिनयोरनुतिष्ठेत् । द्वितीयस्यामुपसदि रजःशयेति तृतीयोपसदि हरिशयेति मन्त्रभेद इति सूत्रार्थः । रजःशया रजतमयी । हरिशया हिरण्मयी । अन्यत्पूर्ववत् ॥ ८ ॥

## नवमी ।

त॒प्तायनी॑ मेऽसि वि॒त्ताय॑नी मे॒ऽस्यव॑तान्मा ना॒थि॒तादव॑तान्मा व्यथि॒तात् । वि॒देद॒ग्निर्नभो॒ नामाग्ने

अङ्गिर् आयुना नाम्नेहि योऽस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे विदेदग्निर्नभो नामाग्ने अङ्गिर् आयुना नाम्नेहि यो द्वितीयस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वादधे विदेदग्निर्नभो नामाग्ने अङ्गिर् आयुना नाम्नेहि यस्तृतीयस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वादधे। अनु त्वा देववीतये ॥ ९ ॥

**उ॰** चात्वालं परिलिखति । तप्तायनीमेसि । चत्वारो मन्त्राः पृथिवीदेवत्याः। तप्त इव वृत्त्यर्थं पुरुषोऽस्यामेतीति तप्तायनी पृथिवी मे मम असि । द्वितीयं परिलिखति। वित्तायनी अस्यां हि विविदानोऽर्थमुपलभमानः पुरुष एतीति वित्तायनी। वित्तवान्वा भवतीति वित्तायनी मे मम असि। तृतीयं परिलिखति। अवतात् मा नाथितात्। अवतु रक्षतु मां नाथितात्। नाथतिर्याञ्चार्थः। परियाचनात्। यथाहं न याचेयं तथा पृथिवी मां करोत्वित्यर्थः। चतुर्थम् । अवतात् अवतु रक्षतु मां व्यथितात्। 'व्यथ दुःखभयचलनयोः'। भयात् चलनाद्वा पृथिवी । चात्वाले प्रहरन्ति । विदेदग्निः । स वा अग्नीनामेव नामानि गृह्णन्हरति। यां त्वा अमूं देवा अग्ने अग्नीन् होत्राय प्रवृणतेत्यादीतिहासस्तदनुवादिन एते मन्त्राः। विदेत् जानीयात् अग्निः । कतमः । नभः न भातीति नभः स्वकीयं नाम। पुरीषं हरति । अग्ने अङ्गिरः। हे अग्ने अङ्गिरः । 'अङ्गिरा उ ह्यग्निः' इति श्रुतिः। आयुनानाम्ना आयुरित्यनेन नाम्ना अभिहितः । आ इहि आगच्छ । निवपति । योऽस्यां पृथिव्यां यस्त्वमस्यां पृथिव्यां भवसि। यत्ते तव अनाधृष्टं अनाधर्षितं नाम यज्ञियं यज्ञसंपादि तेन नाम्ना त्वामादधे स्थापयामि । यो द्वितीयस्यां पृथिव्यामसि । पृथिवीशब्देनान्तरिक्षलोक उक्तः । तृतीयस्यां पृथिव्यामसि। पृथिवीशब्देन द्युलोक उक्तः। चतुर्थं प्रहरति । अनु त्वा देव वीतये । देवतर्पणाय अनुहरामि त्वां देववीतये। वीतिस्तर्पणार्थः ॥ ९ ॥

**म॰** 'शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करꣳ संचरं परिहाप्य शम्यामुदीचीं निदधाति पुरस्ताच्च दक्षिणतः प्राचीमुत्तरतश्च स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रमिति' (का॰ ५।३।२०—२५) । उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते । तत्रोत्करात्पूर्वस्यां संचरपरिहारेणोदगग्रां शम्यां निधाय तत्प्रमाणां तत्पूर्वपार्श्वे स्फ्येन रेखां कुर्यात् । तथा तत्पूर्वपार्श्वे तथैव शम्यां निधाय रेखां कुर्यात् । अभ्यन्तरे एवं दक्षिणोत्तरयोरपि प्रागग्रां शम्यां निधाय रेखाद्वयं कुर्यादिति सूत्रार्थः। अस्यां कण्डिकायां चतुर्दश यजूंषि । तत्राद्यानि चत्वारि पृथिवीदेवत्यानि। तत्र प्रथमं परिलिखति । हे पृथिवि, त्वं मे ममानुग्रहार्थं तप्तायनी असि । तप्तं पुरुषमयति प्राप्नोतीति तप्तायनी। यो हि दरिद्रः क्षेत्ररहितोऽहमिति संतप्यते तं तापोपशान्त्यर्थं प्राप्नोषीत्यर्थः। यद्वा तप्तः सन्तरो यस्यामयति सा तप्तायनी ममासि। द्वितीयं लिखति । वित्तार्थं नरो यस्यामेतीति वित्तायनी। यद्वा वित्तार्थं विर्धनं पुरुषमयतीति वित्तायनी। पृथिव्यां हि प्राप्तायां सस्यनिष्पत्तिद्वारा महद्धनं लभ्यते। तृतीयं परिलिखति। हे पृथिवि, नाथितात् याचितात् मा मां त्वम् अवतात् रक्ष । 'तुह्योस्तातङ्–' (पा॰ ७।१।३५) इति हेस्तातङादेशः। यथा कमपि न याचे तथा मां कुर्वित्यर्थः । नाथतिर्धातुर्याञ्चार्थः । चतुर्थं परिलिखति । 'व्यथ भयचलनयोः' । व्यथितात् भयाचलनात् स्थानभ्रंशाच्च मा मामवतात् रक्ष । 'विदेदग्निरिति चात्वाले प्रहरति स्फ्येनेति' (का॰ ५।३।२६) । प्रहरति मृत्तिकां खनेदित्यर्थः । आग्नेयं यजुः । हे चात्वालगतमृत्तिके, नभोनामाग्निर्नभःसंज्ञस्त्वदधिष्ठाताग्निर्विदेत्त्वां जानीयात् । मया खन्यमानां त्वां त्वदधिष्ठातानुजानात्वित्यर्थः । अग्निनामोच्चारणपुरःसरं प्रहरेत् । तथाच श्रुतिः 'स वा अग्नीनामेव नामानि गृह्णन् हरति' (३।५।१।३१) इति। 'अग्ने अङ्गिर इति पुरीषं प्रहरतीति' (का॰ ५।३।२७) पुरीषं खाता मृत् । हे अग्ने, हे अङ्गिरः, अङ्गिर्गतिरस्यास्तीति अङ्गिराः । मत्वर्थे रस्प्रत्ययः । तत्संबोधनं हे अग्ने, त्वमायुना नाम्नाभिहितः सन् एहि गच्छ । एति गच्छतीत्यायुरग्नेर्नाम । अधिष्ठातर्यागत एवाधिष्ठेयमागच्छतीत्यग्नेरागमनादिकं प्रार्थ्यते। 'योऽस्यामिति निवपति पूर्वार्धे शङ्कुसहितमिति' (का॰ ३।५।२८) । उत्तरवेदिस्थाने मृदं निक्षिपेदित्यर्थः । हे अग्ने, यस्त्वमस्यां दृश्यमानायां पृथिव्यां भूमावसि । किंच ते तव यज्ञियं यज्ञयोग्यं यत् नामाग्निरिति प्रसिद्धमनाधृष्यं केनापि याज्ञिकेनातिरस्कृतं तेन त्वादधे तेन नाम्ना युक्तं त्वां स्थापयामि । 'एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेष इति' (का॰ ५।३।३०—३१)। यथा पूर्वैस्त्रिभिर्मन्त्रैः खात्वा हृत्वा मृत्प्रक्षिप्ता वेद्यर्थमेतत्त्रितयं पुनरपि द्विः कुर्यादिति मन्त्रयोः तत्रास्यामिति पदस्थाने द्वितीयस्यां तृतीयस्यामिति पाठविशेष इति सूत्रार्थः। यद्यपि पृथिवीशब्देन भूमिरेव तथापि द्वितीयस्यामिति तृतीयस्यामिति विशेषणत्वाद्द्वितीया पृथिव्यन्तरिक्षं तृतीया पृथिवी द्यौः । अन्यत् पूर्ववद्व्याख्येयम् । 'अनु त्वेति चतुर्थं यथार्थमाहत्येति' (का॰ ५।३।३२) । यथा पूर्वस्मिन्पर्यायत्रये मृदाहृत्य प्रक्षिप्ता एवं चतुर्थमपि प्रक्षेपणपर्यन्तं मृदाहरणं कुर्यादिति सूत्रार्थः । देववीतये देवानां प्रीतये हे मृत्तिके, त्वा त्वामनु पूर्वोक्तमाहरणत्रयमनुसृत्याहरामीति शेषः ॥ ९ ॥

## दशमी ।

सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुंभस्व ॥ १० ॥

उ० व्यूहत्युत्तरवेदिम् । सिंह्यसि । 'तेभ्यो ह वाक् चुक्रोध' इत्युपक्रम्य 'सिꣳही भूत्वा ददानाचचार' इतीतिहासो वेदिमन्त्राणां निदानभूतः । या त्वं सिꣳही भवसि । सपत्नसाही सपत्नान्सोढुं शीलमस्या इति सपत्नसाही । शत्रूणामभिभवित्रीत्यर्थः । सा त्वमस्माभिरनुमीयमाना देवेभ्योऽर्थाय कल्पस्व उत्तरवेदिरूपेण क्लृप्ता भव । प्रोक्षति । शुन्धस्व आभिरद्भिराप्लुता सती शुद्धा भव । सिकताः प्रकिरति । शुंभस्व । शुंभतिरलंकारार्थः । अलंकृता भव ॥ १० ॥

म० 'सिꣳह्यसीति व्यूहत्युत्तरवेदिꣳशम्यामात्रामिति' (का० ५।३।३२)। विशेषेण पांसुभिः समां करोति । त्रयाणां वेदिर्देवता । वाक् पूर्वमसुरेभ्यः क्रुद्धा सिंही भूत्वा चचारेतीतिहासः । सा वेदिमन्त्रेषूच्यते । हे उत्तरवेदे, या त्वं सिंही सिंहसमाना भूत्वा सपत्नसाही सपत्नान् सहतेऽभिभवतीति सपत्नसाही कर्मण्यम् शत्रूणामभिभवित्री असि भवसि । अतो देवेभ्यः देवोपकारार्थं कल्पस्व समर्था उत्तरवेदिरूपेण क्लृप्ता भव । 'प्रोक्षत्युत्तरवेदिꣳसिकताश्च प्रकिरति सिꣳह्यसीति प्रतिमन्त्रमिति' ( का० ५।३।३७) । हे उत्तरवेदे, शुन्धस्व शुद्धा भव । 'शुन्ध शुद्धौ' । अन्यत्पूर्ववत् । हे उत्तरवेदे, त्वं शुम्भस्व सिकताप्रक्षेपेण शोभिता भव । अन्यत्पूर्ववत् । शुंभतिरलंकारार्थः ॥ १० ॥

## एकादशी ।

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तरतः पात्विदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामि ॥ ११ ॥

उ० उत्तरवेदिं प्रोक्षति । इन्द्रघोषः । घोष इति वाङ्नामसु पठितम् । इन्द्रस्त्वां वसुभिः सहितः पुरस्ताद्गोपायतु । प्रचेताः प्रकृष्टज्ञानो वरुणः त्वा रुद्रैः सहितः पश्चात्पातु । मनोजवाः मनोगतिर्यमः त्वां पितृभिः सहितः दक्षिणतः पातु । विश्वकर्मा । विश्वकर्मेति निगदव्याख्यातो मन्त्रः । बहिर्वेदि शेषं निषिञ्चति । इदमहं वेदिशमनेन तप्तमावर्तितं वाः उदकम् बहिर्धा यज्ञात् बाह्यतो यज्ञात् निःसृजामि निक्षिपामि ॥ ११ ॥

म० 'वेद्यन्तरे स्थित्वोदङुत्तरवेदिं प्रोक्षतीन्द्रघोष इति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गमिति' ( का० ५।४।११)। चतुर्णां यजुषामुत्तरवेदिर्देवता । इन्द्र इति शब्देन घुष्यते विस्पष्टं कथ्यते यो देवः सोऽयमिन्द्रघोषः वसुभिः अष्टसंख्याकैर्गणदेवैर्युक्तः सन् हे उत्तरवेदे, त्वा त्वां पुरस्तात् पूर्वस्यां दिशि पातु रक्षतु । प्रचेताः प्रकृष्टप्रज्ञो वरुणो रुद्रैरेकादशसंख्यैर्गणदेवैः सहितः पश्चात्पश्चिमायां दिशि त्वां पातु । मनोजवाः मनोवद्वेगयुक्तो यमो देवः पितृभिः स्वर्लोकवासिदेवविशेषैर्युक्तो दक्षिणतः दक्षिणस्यां दिशि त्वा त्वां पातु । विश्वकर्मा विश्वानि कर्माणि जगदुत्पत्त्यादीनि यस्य स विश्वकर्मा आदित्यैः द्वादशसंख्यैर्गणदेवैः सहित उत्तरतः उत्तरस्यां दिशि त्वां पातु । एकदा असुरा देवान्हन्तुमागतास्तदा देवसेनाधिपतय इन्द्रघोषादयश्चतसृषु दिक्षु तानसुरानपाकुर्वन् । तस्मादेतैर्मन्त्रैर्दिक्चतुष्टये रक्षा प्रार्थनीया । तदाह तित्तिरिः 'असुरा वज्रमुद्यम्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपानुदत्' इत्यादि । 'बहिर्वेदि शेषं निषिञ्चतीदमहं तप्तं वारिति' ( का० ५।४।१२)। असुरनिवारणाय येनोदकेन प्रोक्षणं कृतं तदुदकमुग्ररूपत्वात्तप्तमित्युच्यते । तप्तमिदं वाः उदकं प्रोक्षणशेषभूतं यज्ञाद्बहिर्धा यज्ञप्रदेशाद्बाह्यप्रदेशेऽहं निःसृजामि निक्षिपामि ॥११॥

## द्वादशी ।

सिꣳह्यसि स्वाहा सिꣳह्यस्यादित्यवनिः स्वाहा सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा सिꣳह्यस्यावह देवान्यजमानाय स्वाहा भूतेभ्यस्त्वा ॥ १२ ॥

उ० नाभिव्याघारयति । सिꣳह्यसि । सा यदेवादः सिꣳही भूत्वा शान्तेवाचचारेत्यादि निदानोद्घाटनं श्रौतम् । सिꣳह्यसिस्वाहा । सिꣳह्यसि आदित्यवनिः । 'छन्दसि वनसनरक्षिमथाम्' इति इन्प्रत्ययः । आदित्यादीन्वनुते संभजत इत्यादित्यवनिः । सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः । सिꣳह्यसि सुप्रजावनिः रायस्पोषवनिः । ब्रह्मक्षत्रं शोभनां प्रजां रायस्पोषं धनपोषम् । एतान्यादित्यवनिसमानव्याख्यानानि । सिꣳह्यसि आवह देवान् यजमानाय । आगमय देवान् यजमानाय । स्रुचमुद्यच्छति । भूतेभ्यस्त्वा । भूतशब्देन चतुर्विधो भूतग्रामोऽभिधीयते । चतुर्विधाय भूतग्रामाय । उत्पत्तये स्थितये च स्रुचमुद्यच्छामीति शेषः ॥ १२ ॥

म० 'नाभ्योः श्रोण्यꣳसेषु पञ्चगृहीतं जुहोत्स्रक्षणया दक्षिणेꣳसे श्रोण्याꣳश्रोण्यमꣳसे मध्ये च हिरण्यं पश्यन् सिꣳह्यसीति' (का० ५।४।१४) । योऽयमुत्तरवेदेर्ना-

भ्याख्यो मध्यदेशस्तस्य श्रोण्यंसेषु आग्नेयैशकोणावंसौ वायव्यनैर्ऋतकोणौ श्रोणी तेषु चतुर्षु मध्ये च जुह्वां पञ्चवारं गृहीतेनाज्येन जुहुयात् । कथम् । अक्ष्णया कोणसूत्रप्रदेशेन । तद्यथा । प्रथमं दक्षिणेंऽसे तत उत्तरश्रोणौ ततो दक्षिणश्रोणौ तत उत्तरांसे ततो मध्ये एवं पञ्चसु स्थानेषु हिरण्यं निधाय तदवलोकयन्पञ्चभिर्मन्त्रैर्जुहुयादिति सूत्रार्थः । पञ्च यजुषां वाग्देवता । पुरा कदाचिदुत्तरवेदिर्देवता केनापि निमित्तेन देवेभ्योऽपक्रम्यासुरानप्राप्योभयोर्देवासुरसेनयोर्मध्ये सिंहरूपं धृत्वा तस्थौ । तदयं मन्त्र आह । तदुक्तं तित्तिरिणा 'तेभ्योऽपक्रम्योत्तरवेदिः सिंहीरूपं कृत्वोभयानन्तरातिष्ठत्' इति । तदभिप्रेत्य सिंही उच्यते । हे उत्तरवेदे, त्वं सिंह्यसि सिंहरूपा भवसि तादृश्यै तुभ्यं स्वाहा हविर्दत्तम् । सिंह्यसि किंभूता । आदित्यवनिः आदित्यान् वनुते संभजति प्रीणयतीत्यादित्यवनिः । अन्यत्पूर्ववत् । सिंह्यसि ब्रह्मवनिः क्षत्रवनिः ब्रह्म क्षत्रं च वनुत इति ब्राह्मणजातिक्षत्रियजात्योः प्रीणयितृत्वमत्र विशेषः । सिंह्यसि सुप्रजावनिः पुत्रपौत्रादिरूपायाः शोभनप्रजायाः संपादयित्री । रायस्पोषवनिः सुवर्णरजतादिधनपुष्टेः संपादयित्री । सिंह्यसि यजमानाय यजमानोपकारार्थं देवानावहानयेति विशेषः । 'भूतेभ्यस्त्वेति स्रुचमुद्यच्छतीति' । ( का० ५ । ४ । १५ ) । भूतेभ्यः जरायुजाण्डजादिचतुर्विधभूतग्रामप्रीत्यर्थं हे होमविशेषाज्ययुक्ते जुहूः, त्वामुद्यच्छामीति शेषः । तदाह तित्तिरिः 'भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं भवति तानेव तेन प्रीणाति' इति ॥ १२ ॥

## त्रयोदशी ।

ध्रुवोऽसि पृथिवीं दृꣳह ध्रुवक्षिदस्यन्तरिक्षं दृꣳहाच्युतक्षिदसि दिवं दृꣳहाग्नेः पुरीषमसि १३

उ० परिधीन्परिदधाति । ध्रुवोसि । यस्मादधियज्ञं ध्रुवः स्थिरः त्वमसि तस्मात् पृथिवीं दृꣳह दृढीकुरु । ध्रुवक्षित् । ध्रुवे नित्ये यज्ञे क्षियतीति ध्रुवक्षित् । यस्मात्त्वं ध्रुवक्षिदसि तस्मादन्तरिक्षं दृढीकुरु । अच्युतक्षित् । अच्युते यज्ञे क्षियतीत्यच्युतक्षित् । यस्मात्त्वमच्युतक्षिदसि तस्माद्दिवं दृढीकुरु । संभारानुपनिवपति । अग्नेः पुरीषमसि । अग्नेः पूरयितृ भवसि । 'शरीरं हैवास्य पीतदारु' इत्यादिश्रुतिः । संभाराणां शरीरपूरणात्पुरीषत्वमुपपद्यते ॥ १३ ॥

म० 'नाभिं पैतदारवैः परिदधाति पूर्ववद् ध्रुवोऽसीति प्रतिमन्त्रमिति' ( का० ५ । ४ । १६ ) । पीतदारुर्देवदारुः तदीयैः परिधिभिरुत्तरवेदेर्मध्यदेशरूपां नाभिं परिदध्यात्पूर्ववद्दर्शपौर्णमासेष्टौ यथा पश्चिमदक्षिणोत्तरेषु तथात्रापीति सूत्रार्थः । त्रयाणां परिधयो देवताः । हे मध्यमपरिधे, त्वं ध्रुवः स्थिरोऽसि । अतः पृथिवीं दृंह दृढीकुरु । हे दक्षिणपरिधे, त्वं ध्रुवे स्थिरे यज्ञे क्षियति निवसति ध्रुवक्षिदसि तस्मादन्तरिक्षं दृढीकुरु । अच्युते विनाशरहिते यज्ञे क्षियति निवसतीत्यच्युतक्षित् हे उत्तरपरिधे, त्वं तादृशोऽसि तस्माद्दिवं द्युलोकं दृंह । 'अग्नेः पुरीषमिति निवपति गुग्गुलुसुगन्धितेजनवृष्णेःस्तुकाश्चोपरि शीर्षण्या अभावेऽन्या इति' ( का० ५ । ४ । १७ ) गुग्गुलुर्धूपद्रव्यं, सुगन्धितेजनं तृणविशेषः, वृष्णेः स्तुका अविरोमाणि । एतानि नाभौ प्रक्षिपेदिति सूत्रार्थः । हे गुग्गुलुप्रभृतिसंभारसमूह, त्वमग्नेः पुरीषं पूरकमसि । पूरयतीति पुरीषम् । 'अग्नेर्ह्येतत्पुरीषं यत्संभाराः' इति तित्तिरिः ॥ १३ ॥

## चतुर्दशी ।

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥ १४ ॥

उ० सावित्रं जुहोति । युञ्जते मनः । अधियज्ञानुवादिनी सावित्री जगती यस्मात्सवित्रा प्रसूता ऋत्विजो युञ्जते मनः मनांसि । उत युञ्जते धियः अपि च युञ्जते प्रेरयन्ति धियो वाचः । कथंभूता ऋत्विजः प्रेरयन्ति । विप्राः ब्राह्मणाः शुश्रुवांसोऽनूचानाः । विप्रस्य प्राप्तक्रियाशक्तेः फलदानंप्रति यज्ञस्य कर्मणि ब्राह्मणस्य । श्रुतौ वैश्यक्षत्रियावपि यजमानावग्निष्टोमे दीक्षितोऽयं ब्राह्मण इत्युच्यतेऽतस्तावपि ब्राह्मणशब्देनोच्येते । बृहतो महतः । विपश्चितो मेधाविनः सर्वस्य यज्ञस्य । किंच त एव सवित्रा प्रसूता ऋत्विजः । विहोत्रा दधे विदधत इति वचनविपर्ययः । अथ होत्राः सप्त वषट्कर्तारो होत्रा इत्युच्यन्ते । 'अथ होत्राः संयाजयन्ति' इति श्रुतिः । 'सौत्येऽहनि सप्त होतारो वषट्कुर्वन्ति' तदेतदुच्यते । वयुनाविदेक इत् । वयुनं वेत्तेः कान्तिर्वा प्रज्ञा वा । इच्छब्द एवार्थे । सर्वेषामेवर्त्विजां मध्ये सवित्रा प्रसूतो ब्रह्माख्यः एक एव ऋत्विक् । वयुनावित् त्रिवेदज्ञानान्वितो भैषज्यं करोति । मही देवस्य सवितुः परिष्टुतिः । महती देवस्य दानादिगुणयुक्तस्य सवितुः सर्वस्य प्रसवितुः परिष्टुतिः परिस्तवनम् । को हि नाम यज्ञं प्रेत्यर्त्विजः प्रस्तूय समाप्स्यति यज्ञम् । यज्ञो हि वृष्टिद्वारेण समस्तं जगद्बिभर्तीति सवितुर्महती स्तुतिरित्युक्तम् ॥ १४ ॥

म० अस्ति तावत्प्राचीनवंशा शाला । तस्यामाहवनीयाग्नित्रयैष्टिकवेदिश्चास्ति । तस्याः शालायाः पुरतः षट्त्रिंशत्पददीर्घा सौमिकी वेदिर्विधेया । तद्वेद्या अग्रभागे पूर्वोक्तोत्तरवेदिः । ततः पश्चान्मध्यभागे हविर्धानाख्यो मण्डपो विधेयः । ततोऽपि पश्चात्सदोऽभिधानोदग्वंशा शाला निर्मातव्या । तस्याः स्थाने प्राचीनशालायाः पुरतो दक्षिणोत्तरभागयोर्हविर्धानसंज्ञके द्वे शकटे स्थापिते स्तः । तच्छकटद्वयं पुरतः प्रवर्त्य त-

दावरकत्वेन हविर्धानाख्यमण्डपो विधेयः । तच्छकटद्वयं सावित्रहोमादूर्ध्वं प्रवर्तनीयम् । तदाह तित्तिरिः 'सावित्र्यर्चा हुत्वा हविर्धाने प्रवर्तयति' इति । तं होमं विधत्ते कात्यायनः 'चतुर्गृहीतꣳ शालाद्वार्ये जुहोति युञ्जत इति स गार्हपत्योऽतः' ( ८ । ३ । २९ ) इति । प्राचीनशालाया द्वारसमीपे पूर्वसिद्ध आहवनीयो वर्तते तस्मिन् जुहुयात्स च पूर्वमाहवनीयोऽपि सन्नुत्तरवेद्याख्येऽन्यस्मिन्नाहवनीये निष्पन्ने सति तदपेक्षया स्वयं गार्हपत्यो भवतीति सूत्रार्थः । सावित्री जगती श्यावाश्वदृष्टा । विप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनो विप्रा ब्राह्मणा ऋत्विजो मनो युञ्जन्ति लौकिकचिन्ताभ्यो मनो निवार्य यज्ञचिन्तायां नियमयन्ति । उत धिय इन्द्रियाण्यपि यज्ञार्थेषु नियमयन्ति । कीदृशस्य विप्रस्य । बृहतो महतः । तथा विपश्चितः सर्वज्ञस्य । अधीतवेदत्वाद्बृहत्त्वमर्थाभिज्ञत्वाद्विपश्चित्त्वम् । किंभूता विप्राः । होत्रा होमकर्तारः । तदिदं विप्राणां मनोनियमनादिसामर्थ्यमेकइत् एकएव विदधे ससर्ज । किंभूत एकः । वयुनावित् 'वयुनं वेत्तेः कान्तिर्वा प्रज्ञा वा' ( निरु० ५ । १४ ) इति यास्कोक्तेर्वयुनं प्रज्ञां सर्वभूतानां मनोवृत्तिं वेत्तीति वयुनवित् । संहितायां दीर्घः । सर्वधीसाक्षीत्यर्थः । नन्वेकस्य सर्वस्रष्टौ कथं सामर्थ्यं तत्राह । यतः सवितुः प्रेरकस्यान्तर्यामिणो देवस्य परिष्टुतिः सर्वदोक्ता स्तुतिः मही महती । तथाचाथर्वणिकाः 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इति । बृहदारण्यकेऽपि 'स एव सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच' ( मा० ४ । २ । २४ । का० ४ ।४ । २१) इति । श्वेताश्वतराश्च 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । यद्वास्य मन्त्रस्यार्थान्तरम् । विप्रा ऋत्विजो विपश्चितो यज्ञस्य कर्मणीति शेषः । मनो धियो वाचश्च युञ्जते प्रयुञ्जते । 'यज्ञो वै विपश्चित्' ( ३ । ५ । ३ । ११ ) इति श्रुतेः । किंभूतस्य विपश्चितः । विप्रस्य विशेषेण प्राति पूरयति फलमिति विप्रस्तस्य । फलदानं प्रति प्राप्तक्रियाशक्तेः। 'प्रा पूर्तौ' । तथा बृहतः महतः सर्वसाधनसंपन्नस्य । होत्रा होतारः सप्त वषट्कर्तारः विदधे विदधते स्वस्वकर्मणीति शेषः । पुरुषवचनव्यत्ययः । तन्मध्ये वयुनाविदेकइत् त्रिवेदज्ञानवान्ब्रह्माख्य एकः एव । सवितुर्देवस्य मही महती परिष्टुतिः स्तवनम् । ब्रह्माया ऋत्विजो यत्कर्म कुर्वते तत्सवितुः प्रेरणेनैवेति सवितुर्महती स्तुतिरित्यर्थः ॥ १४ ॥

## पञ्चदशी ।

इ॒दं विष्णु॒र्विच॑क्रमे त्रे॒धा निद॑धे प॒दम् । समू॑ढमस्य पाꣳसु॒रे स्वाहा॑ ॥ १५ ॥

**उ०** दक्षिणे वर्त्मनि हिरण्यं निधाय जुहोति । इदं विष्णुः । गायत्री वैष्णवी । इदं जगत् विष्णुर्विचक्रमे विक्रान्तवान् । सर्वप्राणिनो हि भूतेन्द्रियमनोजीवभावेनाविशतीति विष्णुः । किंच त्रेधा निदधे पदम् । पद्यते ज्ञायतेऽनेनेति पदम् । भूम्यन्तरिक्षद्युलोकेषु अग्निवायुसूर्यरूपेण त्रिधा निहितवान् पदम् । किंच समूढमस्य पाꣳसुरे । अस्यैव विष्णोरन्यत्पदान्तरं विज्ञानघनानन्दमजमद्वैतमक्षरमित्येवंलक्षणम्, समूढमन्तर्हितमविज्ञातमकृतात्मभिः । पांसुरे । लुप्तोपममेतत् । पांसुल इव प्रदेशे निहितं न दृश्यते तत्समूढमिति द्रष्टव्यमिति वाक्यशेषः । तदुक्तम् । 'तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्' इति ॥ १५ ॥

**म०** 'दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं विष्णुरिति' ( का० ८ । ३ । ३१ ) । दक्षिणशकटसंबन्धिदक्षिणचक्रमार्गे हिरण्यं निधाय तत्रैष होमः । विष्णुदेवत्या गायत्री मेधातिथिदृष्टा । विष्णुः त्रिविक्रमावतारं कृत्वा इदं विश्वं विचक्रमे विभज्य क्रमते स्म । तदेवाह । त्रेधा पदं निदधे भूमावेकं पदमन्तरिक्षे द्वितीयं दिवि तृतीयमिति क्रमादग्निवायुसूर्यरूपेणेत्यर्थः । पांसवो भूम्यादिलोकरूपा विद्यन्ते यस्य तत्पांसुरं तस्मिन्पांसुरे अस्य विष्णोः पदे समूढं सम्यगन्तर्भूतं विश्वमिति शेषः । यद्वायमर्थः । अस्य विष्णोः पदं पद्यते ज्ञायत इति पदमद्वैताख्यं स्वरूपं समूढमन्तर्हितमज्ञातमकृतात्मभिः । कस्मिन्निव । पांसुरे इव लुप्तोपमानं । पांसुले रजस्वले प्रदेशे निहितं यथा न ज्ञायते तद्वत् । तदुक्तं 'तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः' ( अध्या० ६ । ५ ) इति । स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १५ ॥

## षोडशी ।

इरा॑वती धेनु॒मती॒ हि भू॒तꣳ सू॑यव॒सिनी॒ मन॑वे दश॒स्या । व्य॑स्कभ्ना॒ रोद॑सी विष्णवे॒ ते दा॒धर्थ॑ पृथि॒वीम॒भितो॑ म॒यूखैः॒ स्वाहा॑ ॥ १६ ॥

**उ०** द्वितीयस्यानसो वर्त्मनि जुहोति । इरावती । वैष्णवी त्रिष्टुप् । हे विष्णो, यस्मात्तव प्रशासनमनुकुर्वन्त्यौ द्यावापृथिव्यौ इरावती सस्यवत्यौ धेनुमती । धेन्वादिभिः पशुभिः तद्वत्यौ । हिशब्दो यस्मादर्थे व्याख्यातः । एवंभूतं भूताम् अभूतामिति पुरुषव्यत्ययः । संवृत्ते इत्यर्थः । सूयवसिनी शोभनयवसवत्यौ सुसस्यवत्यौ । मनवे यजमानाय । दशस्या दात्र्यौ यज्ञसाधनानाम् । अतः कारणात् व्यस्कभ्नाः । स्कभ्नोतिः स्तम्भनार्थः । स्तम्भितवानसि । रोदसी द्यावापृथिव्यौ एते । किंच । दाधर्थ धारयसि । पृथिवीं द्यां चेत्यध्याहारः । अभितः इतश्चेतश्च । मयूखैः रश्मिभिः । यस्मात्त्वमेवंप्रभावस्तस्मात्त्वां स्तुम इति शेषः ॥ १६ ॥

**म०** 'शुक्रस्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावती इति पूर्ववदिति' ( का० ८ । ३ । ३५ ) यथा दक्षिणशकटदक्षिण-

चक्रमार्गे अध्वर्युर्हुतवान् तथा उत्तरशकटसंबन्ध्युत्तरचक्रमार्गे प्रतिप्रस्थाता जुहुयादिति सूत्रार्थः । वैष्णवी त्रिष्टुब् वसिष्ठदृष्टा । हे रोदसी द्यावापृथिव्यौ, युवामीदृश्यौ भूतं भवतम् । भवते-र्लङि मध्यमद्विवचने रूपम् । अडभावश्छान्दसः । किंभूते युवाम् । इरावती इरावत्यौ अन्नवत्यौ सस्यवत्यौ । धेनुमती बहुधेनुयुक्ते । सुयवसिनी सुष्ठु यवसानि विद्यन्ते ययोस्ते सुयवसिनी । यवसशब्देनात्राभ्यवहार्याणि वस्तूनि । तथा मनवे दशस्या । मनुते जानातीति मनुर्ज्ञानवान्यजमानः तस्मै दशस्या दात्र्यौ यज्ञसाधनानाम् । 'दाशृ दाने' दाशतस्ते दशस्या । असुन्प्रत्यये उपधाह्रस्वः ओविभक्त्यैर्यादेशश्च । एवं द्यावापृथिव्यौ संप्रार्थ्य विष्णुमाह । हे विष्णो, एते रोदसी त्वं व्यास्कभ्नाः विभज्य स्तम्भितवानसि । किंच पृथिवीं मयूखैः स्वतेजोरूपैर्नानाजीवैर्वराहाद्यनेकावतारैर्वा अभितो दाधर्थ दधर्थ सर्वतो धारितवानसि । 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६।१।७) इत्यभ्यासदीर्घः । स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १६ ॥

## सप्तदशी ।

देवश्रुतौ देवेष्वाघोषतं प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् । स्वं गोष्ठमावदतं देवि दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टमत्र रमेथां वर्ष्मन्पृथिव्याः ॥ १७ ॥

**उ०** पत्नी अक्षधुरावनक्ति । देवश्रुतौ । देवा एते धुरौ शृण्वन्ति इति देवश्रुतौ । ये युवां देवश्रुतौ ते देवेषु आघोषतम् । 'घुषिर् शब्दे' । आशब्दयतम् । वाचयति । प्राचीप्रेतम् । हे हविर्धाने प्राची प्रागञ्चने, 'इण् गतौ' । प्रइतं प्रेतं प्रगच्छतम् । अध्वरं कल्पयन्ती यज्ञं समर्थं कुर्वाणे । किंच ऊर्ध्वं यज्ञं नयतम् । ऊर्ध्वं स्वर्गं प्रति यज्ञं नयतम् । मा जिह्वरतम् । 'ह्वल चलने' । मा चलनं कुरुतम् । अचलितप्रतिष्ठिते युवां भवतम् । शब्दं कुर्वत्यनसि वाचयति । स्वं गोष्ठम् । हे हविर्धाने, स्वमात्मीयं गोष्ठं स्थानम् । आवदतमुच्चारयतम् । हे देवि दानादिगुणयुक्ते, हे दुर्ये गृहभूते । आमन्त्रितद्विवचनान्ते द्वे पदे । किंच आयुर्मा निर्वादिष्टम् । निरुपसर्गः कुत्सायाम् । निकृष्टमल्पं पशुधनादिरहितमायुर्मा निर्वादिष्टं मा उच्चारयतम् । प्रजां मानिर्वादिष्टम् । प्रजां निकृष्टाम् निरंशां मा उच्चारयतम् । युवाभ्यामुच्चारितं तथैव स्यादित्यभिप्रायः । नस्यस्थे करोति । अत्र रमेथाम् अस्मिन् प्रदेशे रमेथा रतिं कुरुतम् । वर्ष्मन् 'न ङिसंबुद्ध्योः' इति नलोपाभावः । 'सुपांसुलुक्' इति सप्तम्या लोपः । पृथिव्याः ॥ १७ ॥

**म०** दक्षिणया द्वारानीता पत्नी पाणिभ्याᳪं शेषं प्रतिगृह्याक्षधुरावनक्ति परागदेवश्रुताविति' (का० ८।३।३२) प्रतिप्रस्थात्रा समानीता पत्नी होमशेषेणाज्येनाक्षस्योभावग्रभागावञ्ज्यादिति सूत्रार्थः । अक्षधुरौ देवते । देवेषु श्रूयते देवश्रुतौ शृणोतेः किमुगागमश्च । हे देवश्रुतौ देवसभायां प्रसिद्धे अक्षधुरौ अक्षाग्रभागौ, युवां यजमानोऽयं यक्ष्यतीति देवेषु आघोषतम् उच्चध्वनिना कथयतम् । 'घुषिर् शब्दे' । 'प्राची प्रेतमिति वाचयतीति' (का० ८।४।३) हविर्धानाख्ये यदा प्रवर्तेते तदा यजमानं वाचयेदिति सूत्रार्थः । त्रयाणां यजुषां हविर्धाने देवते । हे उभे शकटे, युवां प्राची प्राङ्मुखे प्रेतं प्रकर्षेण गच्छतम् । प्रागञ्चतस्ते प्राची । किंभूते युवाम् । अध्वरं कल्पयन्ती इदं कर्म समर्थं कुर्वाणे । किंच यज्ञमिममूर्ध्वं नयतसुपरिवर्तिदेवान्प्रति प्रापयतम् । मा जिह्वरतं मा कुटिले भवतम् । 'ह्वृ कौटिल्ये' णिजन्तस्य लुङि रूपम् । यद्वा 'ह्वल चलने' मा चलतम् । 'स्वं गोष्ठमिति च खर्जतीति' (का० ८।४।४) । प्रवर्त्यमानयोः शकटयोरक्षे खर्जति ध्वनिं कुर्वति सति स्वं गोष्ठमिति यजमानं वाचयेदिति सूत्रार्थः । दुर्यशब्दो गृहवाची । 'गृहा वै दुर्याः' (३।५।३।१८) इति श्रुतेः । तेन गृहसदृशे शकटे लक्ष्येते । हे देवि दुर्ये गृहसदृशशकटद्वयरूपे देवते, स्वं गोष्ठं स्वकीयं गोस्थानमावदतं सर्वतः कथयतम् । योऽयमक्षशब्दस्तेन यजमानस्य गृहं बहूनां गवां यथा स्थानं भवति तथा कथयतमित्यर्थः । युवाभ्यामुच्चारितं तथैव स्यादिति भावः । किंच आयुर्मा निर्वादिष्टं यजमानस्य यावदायुरस्ति तावत्सर्वं मा निराकार्ष्टम् । वदतेर्लुङि मध्यमद्विवचने रूपम् । यद्वा निकृष्टं पशुधनादिरहितं मा उच्चारयतम् । प्रजां मा निर्वादिष्टं यजमानस्य प्रजां पुत्रादिरूपां मा निराकार्ष्टम् । अनेनाक्षशब्देनायुःप्रजयोर्निराकरणं मा भूदिति भावः । उभयबद्धो योऽक्षः स दुष्टवाक् वरुणदेवरूपः । तदाह श्रुतिः 'वरुणो वा एष दुर्वागुभयतोबद्धो यदक्षः' (३।५।३।१८) इति । तस्माच्छापरूपदुर्वाक्यपरिहारायाशीर्वादरूपं सुवाक्यमनेन मन्त्रेण प्रार्थ्यते । 'पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्वा वा नभ्यस्थे अभिमन्त्रयतेऽत्र रमेथामिति' (का० ८।४।५) । वेदिनिकटस्थापिते उभे शकटे अभिमन्त्रयेदिति सूत्रार्थः।हे शकटे,पृथिव्याः वर्ष्मन् वर्ष्मणि भूमेः शरीरभूतेऽत्रास्मिन्देवयजने युवां रमेथां क्रीडां कुरुतं वर्ष्मणि स्तीर्णे वा । 'सुपां सुलुक्' (पा० ७।१।३९) । इति ङेर्लोपे 'न ङिसंबुद्ध्योः' (पा० ८।२।८) इति नलोपाभावः । देवयजनस्य भूमेः शरीरत्वं तित्तिरिणोक्तम् 'वर्ष्म ह्येतत्पृथिव्या यद्देवयजनम्' इति ॥ १७ ॥

## अष्टादशी ।

विष्णोर्नुकं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजाᳪंसि । यो अस्कभायदुत्तरᳪं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥ १८ ॥

**उ०** दक्षिणमुपस्तभ्नाति । विष्णोर्नुकमित्याद्यास्तिस्रो वैष्णव्यस्त्रैष्टुभः । द्वयोरन्ते विष्णवे त्वेति यजुः । नुकमिति निपातसमुदायाऽवधारणार्थः । विष्णोरेव वीर्याणि प्रवोचं ब्रवीमि । यो विष्णुः पार्थिवानि विममे पृथिव्यन्तरिक्षद्युलोकानि विममे निर्मितवान् । रजांसि । लोका रजांस्युच्यन्त इति रजःशब्दो लोकवचनः । किंच यश्च विचक्रमाणस्त्रेधा उरुगायः । उरुगमनः अस्कभायत् स्तंभितवान् । उत्तरं द्युलोकाख्यम् । सधस्थं सहस्थानं देवानाम् । 'सधमादस्थयोश्छन्दसि' इति सहशब्दस्य सधादेशः । तस्य विष्णोर्वीर्याणि प्रवोचमिति संबन्धः । स्थूणमुपनिहन्ति विष्णवे त्वा । निहन्मीति शेषः ॥ १८ ॥

**म०** 'उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति विष्णोर्नुकमिति' ( का० ८ । ४ । ६ ) । दक्षिणशकटस्याग्रं औदुम्बरमाधारभूतं काष्ठं स्थापयेदित्यर्थः । तिस्रो वैष्णव्यस्त्रिष्टुभः आद्ये यजुरन्ते । विष्णवे त्वेति यजुः । नुकमित्यव्ययमवधारणार्थम् । विष्णोरेव वीर्याणि कर्माण्यहं प्रवोचं प्रब्रवीमि । प्रपूर्वस्य वचेर्लुङि रूपं वचेरुम् अडभावः । कानि कर्माणीत्याह । यो विष्णुः पार्थिवानि रजांसि पृथिव्यन्तरिक्षद्युलोकस्थानानि विममे निर्ममे । 'लोका रजांस्युच्यन्ते' ( निरु० ४ । १९ ) इति यास्कोक्तेः रजःशब्दो लोकवाचकः । यद्वा यः पार्थिवानि रजांसि पार्थिवपरमाणून्विममे परिगणितवान् । यश्च विष्णुरुत्तरमुपरितनं सधस्थं देवानां सहवासस्थानं द्युलोकरूपमस्कभायत् यथाधो न पतति तथा स्तम्भितवान् । सह देवाः तिष्ठन्ति यस्मिंस्तत्सधस्थम् । 'सधमादस्थयोश्छन्दसि' ( पा० ३ । ६ । ९६ ) इति सहस्य सधादेशः । 'स्कम्भ रोधने' । 'क्र्यादिभ्यः श्ना' । 'हलः श्नः शानज्झौ' ( पा० ३ । १ । ८३ ) इति हेरनुवृत्तौ 'छन्दसि शायजपि' ( पा० ३ । १ । ८४ ) इति यद्यपि हौ परे श्नाप्रत्ययस्य शायजादेशोऽविहितस्तथाप्यत्र 'व्यत्ययो बहुलम्' ( पा० ३ । १ । ८५ ) इति लङ्यपि श्नः शायजादेशे अस्कभायदिति रूपम् । कीदृशो विष्णुः । त्रेधा विचक्रमाणस्त्रिषु लोकेष्वग्निवायुसूर्यरूपेण पदत्रयं निदधानः । विपूर्वस्य क्रमतेः 'लिटः कानज्वा' ( पा० ३ । २ । १०६ ) इति कानचि रूपम् । तथा उरुगायः उरुर्गायो गमनं यस्य उरुभिर्महात्मभिर्गीयत इति वा 'दक्षिणतः स्थूणामुपनिहन्ति विष्णवे त्वेति' ( का० ८ । ४ । ७ ) हे स्थूणे काष्ठ, विष्णवे हविर्धानशकटाभिमानिविष्णुप्रीत्यर्थं त्वां निहन्मि निखनामीति शेषः ॥ १८ ॥

## एकोनविंशी ।

दि॒वो वा॑ विष्ण उ॒त वा॑ पृथि॒व्या म॒हो वा॑ विष्ण उ॒रोर॒न्तरि॑क्षात् । उ॒भा हि हस्ता॒ वसु॑ना पृ॒णस्वा प्रय॑च्छ॒ दक्षि॑णा॒दोत स॒व्याद्विष्ण॑वे त्वा १९

**उ०** उत्तरमुपस्तभ्नाति । दिवो वा विष्णो हे विष्णो, द्युलोकात् वा उत वा पृथिव्याः अपि वा पृथिवीलोकात् । महो वा विष्णो उरोरन्तरिक्षात् महतो वा विष्णो उरोर्विस्तीर्णाद् अन्तरिक्षलोकात् । एतेभ्यो वा त्रिभ्यो लोकेभ्यो धनमादाय अन्यतो वा यतःकुतश्चित् । उभा उभौ हस्तौ वसुना धनेन पृणस्व आपूरय । तत आप्रयच्छ आभिमुख्येन देहि । दक्षिणात् आ उत सव्यात् । पञ्चम्याः तृतीयया व्यत्ययः । दक्षिणेन हस्तेन अपिच सव्येन हस्तेन । उभाभ्यां हस्ताभ्यामकृपणतया प्रयच्छेत्ययमभिप्रायः । विष्णवेत्वेति पूर्ववत् ॥ १९ ॥

**म०** 'दिवो वेत्युत्तरं प्रतिप्रस्थातोत्तरस्थूणं पूर्ववदिति' ( का० ८ । ४ । ८—९ ) । यथाध्वर्युर्दक्षिणशकटं मन्त्रेणोपष्टभ्य विष्णवे त्वेति स्थूणां निखातवानेवं प्रतिप्रस्थातोत्तरशकटे कुर्यादिति सूत्रार्थः । हे विष्णो, दिवो द्युलोकादुत अपिच पृथिव्याः भूलोकात् वापिच महो महतः उरोर्विस्तीर्णादन्तरिक्षलोकाद्वा समानीतेन वसुना द्रव्येण उभा हि हस्ता उभावपि स्वकीयौ हस्तौ पृणस्व पूरयस्व । ततो धनपूर्णाद्दक्षिणादुत सव्याद्धामाद्धस्तात् आ प्रयच्छ बहुकृत्व आवृत्य प्रकृष्टं मणिमुक्तादिधनमस्मभ्यं देहि । विष्णवे त्वेत्ययं मन्त्रः पूर्ववत् ॥१९॥

## विंशी ।

प्र तद्विष्णु॑ः स्तवते वी॒र्ये॑ण मृ॒गो न भी॒मः कु॑च॒रो गि॑रि॒ष्ठाः । यस्यो॒रुषु॑ त्रि॒षु वि॒क्रम॑णेष्वधिक्षि॒यन्ति॒ भुव॑नानि॒ विश्वा॑ ॥ २० ॥

**उ०** मध्यमं छदिरालभ्य वाचयति । प्रतद्विष्णुः । उत्तरोर्धर्चः प्रथमं व्याख्यायते यद्वृत्तयोगात् । यस्य विष्णोः उरुषु महत्सु त्रिषु विक्रमणेषु लोकेषु अधिक्षियन्ति उपरि निवसन्ति । भुवनानि भूतजातानि विश्वा विश्वानि सर्वाणि । इदानीं प्रथमोर्धर्चः । प्रतद्विष्णुः स्तवते स विष्णुः स्तूयते । यकः स्थाने शप्छान्दसः । वीर्येण वीरकर्मणा । कथं स्तूयते । मृगो न भीमः । यथा मृगः सिंहः स्तूयते । भीमः बिभेत्यस्मादिति भीमः । कुचरः कुत्सितचारी प्राणिवधजीवनः । गिरिष्ठाः पर्वतस्थानः । यद्वा हीनोपमानत्वादन्यथा व्याख्यायते । सर्वैरेतैर्मृगादिभिः पदैः इन्द्रो विशिष्यते । स हि विष्णोरुपमानं भवितुमर्हति । मृगो न । 'मृजूष् शुद्धौ' । यथा शुद्धोपहतपाप्मा इन्द्रः । भीमो भीषणः । कुचरः क्वायं चरतीति कुचरः । कुशब्दस्य संप्रसारणं छान्दसम् । गिरिष्ठाः गिरिर्मेघः तत्र इन्द्रो वृष्ट्यर्थं तिष्ठति । अथ कौ पृथिव्यां चरतीति कुचरः मत्स्यकूर्मादिरूपेण । अथ गिरि वेदवाक्ये तिष्ठति गिरिष्ठाः । अथ देहोऽपि गिरिरुच्यते तस्मिन्नात्मत्वेन तिष्ठतीति गिरिष्ठाः ॥ २० ॥

'प्र तद्विष्णुरिति वाचयति मध्यमं छदिरालभ्येति' ( का० ( ८ । ४ । १३ ) । तत् स प्रसिद्धो विष्णुः वीर्येणासाधारण-

वीरकर्मणा प्रस्तवते प्रस्तूयते गवैरिति शेषः । तदिति लिङ्गव्यत्ययः । प्रस्तवते इत्यत्र व्यत्ययेन यकः स्थाने शप्प्रत्ययः । किंभूतो विष्णुः । 'मृजूष् शुद्धौ' मार्ष्टि शोधयतीति मृगः।नोऽनर्थकः पादपूरणः । भीमः बिभेत्यस्मादसौ भीमः । 'भीमादयोऽपादाने' (पा० ३ । ४ । ७४ ) । इति मप्रत्ययः । कुचरः कौ पृथिव्यां मत्स्यादिरूपेण चरतीति कुचरः । गिरिष्ठाः गिरि वेदवाण्यां गिरौ देहे वान्तर्यामिरूपेण तिष्ठतीति गिरिष्ठाः । अथवा न इवार्थः । गिरिष्ठाः पर्वतस्थितः कुचरः कुत्सितचारी प्राणिवधजीवनो भीमः भयंकरो मृगो न सिंह इव स यथा वीर्येण स्तूयते तद्वत् । स को विष्णुरित्याह । यस्य विष्णोरुरुषु प्रभूतेषु त्रिषु विक्रमणेषु पादप्रक्षेपणस्थानेषु लोकेषु विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति अधिनिवसन्ति स स्तूयत इत्यर्थः ॥ २० ॥

## एकविंशी ।

विष्णो॑ र॒राट॑मसि॒ विष्णोः॒ श्नप्त्रे॒ स्थो॒ विष्णोः॒ स्यूर॑सि॒ विष्णो॑र्ध्रु॒वो॒ऽसि वै॒ष्णव॑म॑सि॒ विष्ण॑वे त्वा ॥ २१ ॥

**उ०** रराट्यामालभ्य वाचयति । विष्णोरराटम् । विष्णोर्यज्ञस्य ललाटमसि । उत श्नप्यानुपस्पृश्य वाचयति । विष्णोः श्नप्त्रेस्थः । विष्णोर्यज्ञस्य श्नप्त्रे सृक्किणी स्थः । ओष्ठसंधिरुच्यते श्नप्त्रशब्देन । सीव्यति । स्यूरसि । 'षिवु तन्तुसन्ताने' । सीव्यत्यनेनेति स्यूः सूचिर्वा । ग्रन्थिं करोति । विष्णोर्ध्रुवोसि ग्रन्थिरसि । समाप्तं स्पृशति । वैष्णवमसि विष्णुर्देवतास्य वैष्णवम् । विष्णवेर्थाय त्वामुपस्पृशामीति शेषः ॥ २१ ॥

**म०** 'विष्णो रराटमिति रराट्यमिति' । ( का० ८ । ४ । १५ ) वाचयतीत्यनुवर्तते । हविर्धानाख्ये द्वे शकटे दक्षिणोत्तरभागयोः स्थापयित्वा तदावरकत्वेन परितो हविर्धानाख्यं मण्डपं कुर्यात् । स च मण्डपो विष्णुदेवताकत्वाद्विष्णुरित्युपचर्यते। विष्णोश्च मूर्तिधरस्य सर्वावयवसद्भावाल्ललाटाख्योऽवयवोऽस्ति । तद्वद्धविर्धानमण्डपस्यापि पूर्वद्वारवर्तिस्तम्भयोर्मध्ये काचिद्दर्भमाला ग्रथ्यते । तां मालां तद्बन्धनाधारतिर्यग्वंशं वा संबोध्य पुरुषललाटत्वेनोपचर्यते । दर्भमयमालाधारवंश। त्वं विष्णोः विष्णुमूर्तित्वेनोपचरितस्य हविर्धानमण्डपस्य रराटमसि ललाटस्थानीयोऽसि । 'विष्णोः श्नप्त्रे स्थ इत्युच्छ्राय्याविति' ( का० ८ । ४ । १६ ) । उच्छ्राय्यौ रराटीप्रान्तावुपस्पृश्य वाचयेदित्यर्थः । हे रराट्यन्तौ, युवां विष्णोः विष्णुनामकस्य हविर्धानमण्डपस्य श्नप्त्रे स्थः ओष्ठसन्धिरूपे भवथः । 'द्वार्योः परिषीव्यति लस्यूजनि प्रतिहृतया रज्ज्वा विष्णोः स्यूरसीति'( का० ८।४।१८) । बृहत्सूचिसमर्पितया रज्ज्वा द्वारशाखाः सीव्यतीति सूत्रार्थः । हे लस्यूजनि, त्वं विष्णोर्हविर्धानस्य स्यूरसि । सीव्यन्त्यनेनेति स्यूः सूचिः । 'षिवु तन्तुसन्ताने' । क्विपि 'च्छ्वोः शूडनुनासिके च' ( पा० ६ । ४ । १९ ) इति वस्योडादेशः । 'विष्णोर्ध्रुवोऽसीति ग्रन्थिं करोति' ( का० ८ । ४ ।१६) हे रज्जुग्रन्थे, त्वं विष्णोः हविर्धानस्य ध्रुवोऽसि ग्रन्थिर्भवसि । 'प्राग्वꣳशꣳ हविर्धानं निष्ठाप्य वैष्णवमसीत्यालभते' ( का० ८ । ४ । २१ ) प्राग्ग्रैर्वंशैर्मण्डपं निर्मायानेन मन्त्रेण स्पृशेदिति सूत्रार्थः । हे हविर्धान, त्वं वैष्णवमसि विष्णुदेवताकत्वेन तत्संबन्धि भवसि । तस्माद्विष्णवे विष्णुप्रीत्यर्थं त्वा त्वां स्पृशामीति शेषः ॥ २१ ॥

## द्वाविंशी ।

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । आद॑दे॒ नार्य॑सी॒दम॒हꣳ रक्ष॑सां ग्री॒वा अपि॑ कृन्तामि । बृ॒हन्न॑सि बृ॒हद्र॑वा बृ॒ह॒तीमिन्द्रा॑य॒ वाच॑ वद ॥ २२ ॥

**उ०** इत उत्तरं उपरवमन्त्राः प्राग्देवस्य त्वेत्यस्मान्मन्त्रात् । अभ्रिमादत्ते । देवस्य त्वेति व्याख्यातो मन्त्रः । आददे गृह्णामि । नार्यसि । नारीति प्रशस्यतेऽभ्रिः । नरस्यापत्यं स्त्री नारी । परिलिखति । इदमहम् । उपरवान् परिलिखामि । इदमहं रक्षसां यज्ञविध्वंसिनां ग्रीवा अपि कृन्तामि छिनद्मि । यथापरिलिखितं खनति । बृहन्नसि । यस्मात्त्वं हे उपरव, बृहन्महानसि कर्मणा परिमाणेन च । बृहद्रवाश्च बृहन्महत् रवोऽस्येति बृहद्रवाः । तस्माद् बृहतीं महतीमिन्द्राय वाचं वद ॥ २२॥

**म०** इत उत्तरमुपरवमन्त्रा देवस्य त्वेत्यस्मात् ( क०२६ ) प्राक् । 'दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवानभ्यादिकरोत्यवटवदिति' ( का ८ । ४ । २५ ) । यथा यूपस्यावटः क्रियते तथात्राप्युपरवनामकांश्चतुरो गर्तानभ्रिस्वीकारमारभ्य परिलेखनपूर्वकं कुर्यादित्यर्थः । अवटार्थमभ्रिस्वीकारमेवाह 'देवस्य त्वेत्यभ्रिमादायेति' ( का० ६ । २ । ८ ) । अभ्रिशब्देन काष्ठनिर्मितं खननसाधनमुच्यते । अभ्रिर्देवता । हे अभ्रे, सवितुर्देवस्य प्रसवे वर्तमानः सन्नश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे स्वीकरोमि । त्वं तु नार्यसि खननसाधनत्वेन कर्मोपयोगित्वान्नराणां पुरुषाणामनुग्राहतॄणां संबन्धिनी भवसि । 'यूपावटं परिलिखतीदमिति' ( का० ६ । २ । ८ ) । य इदं चतुरोऽवटान्परिलिखामि । इदमिति विभक्तिव्यत्ययः । अनेन परिलेखनेन रक्षसां यज्ञघ्नानां ग्रीवा अपिकृन्तामि कण्ठप्रदेशान्छिनद्मि । 'बृहन्नसीति यथापरिलिखितं खनतीति' ( का० ८ । ५ । ७ ) । आग्नेय्यां विदिशमारभ्य चतसृषु विदिक्षु चतुर उपरवान्खातुं भूमिः परिलिखिता । तेन परिलेखनक्रमेणावटान्खनेदिति सूत्रार्थः । हे उपरवाख्यगर्त, त्वं बृहन्नसि महान् भवसि वर्तुलस्य गर्तस्य प्रादेशपरिमाणेन विस्तृतत्वाद्बाहुपरिमाणेन

खातत्वाच महत्त्वम् । तथा त्वं बृहद्रवाः बृहन्महान् रवो ध्वनिर्यस्य सः । सकारान्तो रवस्शब्दः । खातुं भूमौ प्रहारे महान्ध्वनिर्भवतीत्यर्थः । तस्मात्त्वमिन्द्रायेन्द्रप्रीत्यर्थं बृहतीं वाचं वद प्रौढध्वनियुक्तं वाक्यं वद ॥ २२ ॥

## त्रयोविंशी ।

रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि २३

उ० किं बृहतीमेव केवलां नेत्याह । रक्षोहणम् । रक्षांसि या वागपहन्ति सा रक्षोहा तां रक्षोहणम् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' । धातूपपदकालप्रत्ययनियमाच्च प्राप्नोतीति 'बहुलं छन्दसि' इति क्विप्प्रत्ययः । वलगहनम् वलगान् कृत्याविशेषान् भूमौ निखनितान् शत्रुभिर्विनाशार्थं हन्तीति वलगहा वाक् । पूर्ववत्क्विप्प्रत्ययः । तां वलगहनम् । वलो वृणोतेः । यस्य वधार्थं क्रियते तं रोगादिभिर्वृण्वन् आ प्रच्छादयन् गच्छतीति वलगः । वैष्णवीं विष्णुदेवत्यां वाचं वदेति संबन्धः । उत्किरति । इदमहं यत्करोमि तद्वलगं कृत्याविशेषम् । उत्किरामि उद्वपामि । यं मे निष्ट्यः । यं वलगं मे मम निष्ट्यः पुत्रः । स हि निर्गत्य शरीरात्ततो विस्तीर्णो भवति यं च अमात्यः वलगं निचखान निखनति । छन्दसि लङ्लुङ्लिटः सर्वेषु कालेषु भवन्ति । द्वितीयमुत्किरति । यं मे समानः विद्यादिभिः सदृशः । असमानः विद्यादिभिरसदृशः । शेषं व्याख्यातम् । तृतीयमुत्किरति । यं मे सबन्धुः । सबन्धुः स्वजनः । असबन्धुस्तद्विपरीतः । शेषं व्याख्यातम् । चतुर्थमुत्किरति । यं मे सजातः । सजातो भ्राता । स हि समानजन्मा भवति । असजातः असमानजन्मा भ्रातुरसदृशः । शेषं व्याख्यातम् । सर्वमुत्किरति । उत्कृत्यां किरामि उत्किरामि कृत्याम् ॥ २३ ॥

म० किंभूतां वाचम् । रक्षोहणं रक्षांसि हन्तीति रक्षोहा तां रक्षोवधविषयाम् । तथा वलगहनम् वलगान् हन्तीति वलगहा ताम् । 'बहुलं छन्दसि' ( पा०३ । २ । ८८) इति क्विप् । पराजयं प्राप्य पलायमानै राक्षसैरिन्द्रादिवधार्थमभिचाररूपेण भूमौ निखाता अस्थिकेशनखादिपदार्थाः कृत्याविशेषा वलगाः । 'वलगो वृणोतेः' (निरु० ६ । २ ) इति यास्कः। यस्य वधार्थं क्रियते तं वृण्वन्नाच्छादयन् गच्छतीति वलगः । ते वलगा बाहुमात्रे खातास्ततस्तदुद्धारार्थमुपरवस्य तावन्मात्रखननम् । 'तान्बाहुमात्रान्खनेत्' इति श्रुतिः ( ३।५।४।९ ) तदाह तित्तिरिः 'असुरा वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन् तान् बाहुमात्रे त्वविन्दन् तस्माद्बाहुमात्राः खायन्ते' इति । तथा वैष्णवीं यज्ञरक्षकस्य विष्णोः संबन्धिनीम् । ईदृशीं वाचमिन्द्राय वदेति संबन्धः । 'इदमहमित्युत्किरति यथाखातं प्रतिमन्त्रमिति' ( का० ८ । ५ । ८ ) । येन क्रमेण चत्वारो गर्ताः खातास्तेन क्रमेण चतुर्भ्यो गर्तेभ्यः खातं मृत्तृणादिकं चतुर्भिर्मन्त्रैरुत्किरेदिति सूत्रार्थः । 'ष्ट्यै स्त्यै शब्दसङ्घातयोः' नितरां स्त्यायति सङ्घातरूपेण सह वर्तत इति निष्ट्यः । यद्वा निर्गत्य शरीरात् स्त्यायति विस्तीर्णो भवतीति निष्ट्यः पुत्रादिः । यद्वा निर्गतो वर्णाश्रमेभ्यो निष्ट्यः चण्डालादिः 'निसो गते' ( पा० ४ । २ । १०४ वा० ४ ) इति वार्तिकेन 'निस उपसर्गाद्गतार्थे त्यप्' इति काशिकायाम् । अमाशब्दो गृहार्थः सहार्थो वा । अमा गृहे सह वा भवोऽमात्यः 'अव्ययात्त्यप्' ( पा० ४ । २ । १०४ ) इति भवार्थे त्यप् । धनिकस्य स्वामिनो धनगृहादिनिर्वाहकोऽमात्यः । केनापि निमित्तेन कुपितः पुत्रोऽमात्यो वा मे मह्यं मद्बाधार्थं यं वलगं निचखान निखातवान् तं वलगमहमुत्किरामि उद्वपामि उद्धृत्यान्यत्र परित्यजामि । इदंशब्दः क्रियाविशेषणम् । इदं प्रत्यक्षं यथा भवति तथोद्वपामीत्यर्थः । द्वितीयमुत्किरति समानो धनकुलादिभिः सदृशः । असमानो न्यूनोऽधिको वा । अन्यत्पूर्ववत् । तृतीयमुत्किरति । सबन्धुः कुलशीलादिभिः समानो मातुलपैतृष्वसेयादिः तद्विपरीतोऽसबन्धुः । अन्यत्पूर्ववत् । चतुर्थमुत्किरति । सजातः समानजन्मा भ्राता तद्विपरीतोऽसजातः । अन्यत् पूर्ववत् 'उत्कृत्यां किरामीति पश्चात्सर्वेभ्यः' ( का० ८ । ५ । ९ ) इति । असाधारणैर्मन्त्रैः पूर्वोक्तक्रमेणोत्किरणं कृत्वा पश्चात्साधारणेन मन्त्रेण चतुर्भ्यो गर्तेभ्य उत्किरेदिति सूत्रार्थः । येयं कृत्या शत्रुभिरभिचरद्भिः संपादिता वलगरूपा तामुत्किरामि उद्धृत्य दूरे क्षिपामि ॥ २३ ॥

## चतुर्विंशी ।

स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा ॥ २४ ॥

उ० यथाखातं स्पृशति । स्वराडसि । स्वकीयमेव राज्यं यस्य सः स्वराट् । सपत्नान् शत्रून्हन्तीति सपत्नहा यस्त्वं स्वराडसि सपत्नहा च सोऽस्मानपीत्थंभूतान्कुर्विति शेषः । एवं वक्ष्यमाणेषु त्रिष्वपि मन्त्रेषु योज्यम् । सत्रराट् सत्रं द्वादशाहादि तत्र राजति सततं वा राजति सत्रराट् । अभिमातिहा अभिमातिरननुकूलः शत्रुः तं हन्ति अभिमातिहा । जनराडसि जने राजतीति जनराट् । रक्षोहा रक्षांसि हन्तीति रक्षोहा । सर्वराडसि सर्वत्र राजतीति सर्वराट् । अमित्रहा अमित्रान्हन्तीत्यमित्रहा ॥ २४ ॥

म० 'स्वराडित्यभिमर्शयति यथाखातं प्रतिमन्त्रमिति' ( का० ८ । ५ । १३ ) । खननक्रमेण चतुर्षु गर्तेषु यजमानह-

स्तस्य स्पर्शं चतुर्भिर्मन्त्रैः कारयेदिति सूत्रार्थः। चत्वारि यजूंषि औपरवाणि। तत्र प्रथमं हे प्रथमगर्त, त्वं स्वराडसि स्वेनैव राजत इति स्वराट् स्वयमेव राजमानो भवसि। अतः सपत्नहा शत्रुघाती भवेति शेषः। अथ द्वितीयं सत्रराट् सत्रेषु द्वादशाहादिषु राजत इति सत्रराट्। अभिमातिहा शत्रुघाती। अथ तृतीयं जनराट् जनेषु यजमानेषु राजत इति जनराट्। रक्षोहा यज्ञविनाशकराक्षसघाती। अथ चतुर्थं सर्वराट् सर्वेषु राजत इति सर्वराट् अमित्रहा शत्रुघाती ॥ २४ ॥

## पञ्चविंशी।

रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान् रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान् रक्षोहणौ वां वलगहना उपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवाः स्थ ॥ २५ ॥

**उ०** प्रोक्षत्येतान्। रक्षोहणः रक्षसां हन्तॄन् वः युष्मान् वलगहनः वलगस्य हन्तॄन् प्रोक्षामि सिंचामि वैष्णवान् विष्णुदेवत्यान्। अपनयति। रक्षसां हन्तॄन् वः युष्मान् वलगस्य हन्तॄन् प्रति अपनयामि। अवाचीनम् अपः प्रापयामि। वैष्णवान्। अवस्तृणाति। रक्षसां हन्तॄन् युष्मान् वलगस्य च हन्तॄन् प्रति अवाचीनान्दर्भान् स्तृणामि वैष्णवान्। अधिषवणे फलके उपदधाति। रक्षसां हन्तृणी वां युवां वलगस्य हन्तृणी उपदधामि स्थापयामि। वैष्णवी विष्णुदैवत्ये। पर्यूहति। रक्षोहणौ वां पर्यूहामि परिप्रापयामि संलग्ने करोमि। व्याख्यातमन्यत्। तत्राधिषवणं चर्म निदधाति। वैष्णवमसि विष्णुदेवत्यमसि। तस्मिन् ग्रावाणः पञ्च वैष्णवाः स्थ विष्णुदेवत्या भवथ ॥ २५ ॥

**म०** 'प्रोक्षत्येनान् रक्षोहण इति भेदे मन्त्रावृत्तिरिति' (का० ८।५।२२–२३) चतुरो गर्तान्मन्त्रेण प्रोक्षेत्। तस्य मन्त्रस्य गर्तभेदे सत्यावृत्तिः कर्तव्येति सूत्रार्थः। सप्त यजूंषि वैष्णवानि। वैष्णवान्विष्णुदेवताकान् गर्तान्वो युष्मान्प्रोक्षामि। कीदृशान्। रक्षोहणो राक्षसहन्तॄन् वलगहनः अभिचारसाधनहन्तॄन्। 'अवनयनेऽवस्तरणे चावटवद्रक्षोहणो रक्षोहण इति' (का० ८।५।२४)। गर्तेषु प्रोक्षणशेषोदकसेचनमवनयनं दर्भैराच्छादनं संस्तरणं तयोर्द्वयोरपि क्रिययोर्गर्तभेदात्तन्मन्त्रावृत्तिर्द्रष्टव्येति सूत्रार्थः। तत्रावनयनमन्त्रः अवनयामि सिंचामि। अन्यत्पूर्ववत्। अथावस्तरणमन्त्रः। आस्तृणामि दर्भैराच्छादयामि। अन्यत्पूर्ववत्। 'तनूनुपरि कुशान्कृत्वाधिषवणे फलके द्व्यङ्गुलान्तरे प्रक्षालिते प्राची अरत्निमात्रे संतृण्णे वोपदधाति पर्यूहति च रक्षोहणौ रक्षोहणाविति' (का० ८।५।२५) ययोः फलकयोरुपरि सोमोऽभिषूयते ते द्वे अधिषवणफलके तयोरुभयोर्मध्ये द्व्यङ्गुलव्यवहिते अरत्निप्रमाणे संतृण्णे ईषद्बन्धनोपेते चतुर्णां गर्तानामुपरि स्थापयेत्। तयोः परितो मृदा छिद्रपिधानं कुर्यादित्यर्थः। तत्रोपधानमन्त्रः। यावधिषवणफलकविशेषौ रक्षोहणौ रक्षसां नाशकौ वलगहनौ कृत्याविनाशकौ वैष्णवी वैष्णवौ विष्णुदेवताकौ। लिङ्गव्यत्ययः। तौ वां युवामहमुपदधामि द्वयोर्गर्तयोरुपरि एकैकं फलकं स्थापयामि। अथ पर्यूहणमन्त्रः। पर्यूहामि मृदा परितश्छादयामि। अन्यत्पूर्ववत्। 'तयोश्चर्माधिषवणं परिकृत्तꣳसर्वरोहितं निदधाति वैष्णवमसीति' (का० ८।५।२६)। यस्मिंश्चर्मणि सोमोऽभिषूयते तच्चर्माधिषवणाख्यम् अग्रभागे छिन्नं सर्वमपि लोहितवर्णं तयोः फलकयोरुपरि स्थापयेदिति सूत्रार्थः। हे चर्म, त्वं वैष्णवमसि यज्ञरक्षकविष्णुसंबन्धि भवसि। 'तस्मिन् ग्रावाणः पञ्च वैष्णवाः स्थेति' (का० ८।५।२७)। निदधातीत्यनुवर्तते। तस्मिंश्चर्मणि। सोमाभिषवहेतून् पञ्च पाषाणान्स्थापयेदिति सूत्रार्थः। हे ग्रावाणः, यूयं वैष्णवाः स्थ यज्ञरक्षकविष्णुसंबन्धिनो भवथ ॥ २५ ॥

## षड्विंशी।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे नार्यसीदमहꣳ रक्षसां ग्रीवा अपिकृन्तामि। यवोऽसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्तां लोकाः पितृषदना पितृषदनमसि ॥ २६ ॥

**उ०** इत उत्तरमौदुम्बरीमन्त्राः। अभ्रिमादत्ते। देवस्य त्वेति व्याख्याते द्वे यजुषी। यवानावपति। यवोसि। 'यु पृथग्भावे' यौतीति यवः। यस्माद्यवनक्रियायोगाद्यव इत्येतन्नामा त्वमभूः तस्मात् यवय पृथक्कुरु। अस्मत् अस्मत्तः द्वेषोऽप्रीतिः दौर्भाग्यम् यवय। अरातीः अदानानि। सौभाग्यं दानं च प्रार्थ्यते। औदुम्बरीं प्रोक्षति। दिवे त्वा। दिवेऽर्थाय त्वां प्रोक्षामीति शेषः। अन्तरिक्षाय त्वा पृथिव्यै त्वा। प्रथमेन यजुषा व्याख्याते यजुषी। अवटे शेषमासिञ्चति। शुन्धन्तां लोकाः। शुन्ध्यन्तामिति विकरणव्यत्ययः। दिवादिभ्यः श्यन्प्राप्नोति स न भवति। पितरो येषु लोकेषु सीदन्ति आसते पितृषदनाः। बर्हीषि प्रास्यति पितृषदनमसि। पितर एषु सीदन्तीति पितृषदनम् ॥ २६ ॥

**म०** इत उत्तरमौदुम्बरीमन्त्राः। 'औदुम्बरीं मिनोति यजमानमात्रीं यूपवच्छेतेऽभ्यादि करोत्यावस्तरणादिति' (का० ८।५।३०–३२)। उदुम्बरवृक्षादुत्पन्नां कांचिच्छाखां यजमानदेहमितां सदोमण्डपमध्ये निखनेत्। सा च शाखा निखननात्पूर्वं यूपवद्भूमौ शयिता वर्तते यूपावटखननवदभ्रिस्वीकारमारभ्य दर्भोपस्तरणपर्यन्तान्पदार्थान्मन्त्रैरेव कुर्यादिति सूत्रार्थः। सूपावटप्रदेशे 'देवस्य त्वेत्यभ्रिमादात्रेति' (का०

६ । २ । ८ ) व्याख्यातं यजुः । 'यूपावटं परिलिखतीदमहमिति' ( का० ६ । २ । ८ ) एतदपि व्याख्यातम् । 'यवोऽसीत्यप्सु यवानोप्येति' ( का० ६ । २ । १५ ) । यवदैवत्यं हे धान्यविशेष, त्वं यवोऽसि यौति पृथक्करोतीति यवः अस्मत् द्वेषो द्वेष्टॄन् शत्रून् द्वेषो दौर्भाग्यं वा अस्मत् अस्मत्तो यवय पृथक्कुरु । तथा अरातीः अदानानि च यवय पृथक्कुरु । अनेन सौभाग्यं धनं च प्रार्थ्यत इति भावः । 'प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादिति' ( ६ । २ । १५-१६ ) । तत्र प्रथमो मन्त्रः । हे औदुम्बर्यग्रभाग, दिवे द्युलोकप्रीत्यर्थं त्वा त्वां प्रोक्षामीति शेषः । द्वितीयः हे मध्यभाग, अन्तरिक्षायान्तरिक्षलोकप्रीत्यै त्वां प्रोक्षामि । अथ तृतीयः हे मूलभाग, पृथिव्यै पृथिवीप्रीत्यै त्वां प्रोक्षामि । 'अवटे शेषमासिञ्चति शुन्धन्तामिति' ( का० ६ । २ । १७ ) द्वे यजुषी पित्र्ये पितरः सीदन्ति येषु लोकेषु ते पितृषदनाः लोकाः शुन्धन्तामनेनोदकसेचनेन शुद्धा भवन्तु । खननेनोत्पन्नस्य क्रौर्यस्य शान्त्यर्थमिदमुदकसेचनम् । तदाह तित्तिरिः 'क्रूरमिव वा एतत्करोति यत्खनति यत्पयोऽवनयति शान्त्यै तदिति' । 'बर्हीꣳषि प्राच्युदञ्चि च प्रास्यति पितृषदनमसीति' ( का० ६ । २ । १८ )। तस्मिन्नवटे प्रागग्रानुदगग्रांश्च दर्भानास्तृणातीति सूत्रार्थः । पितरः सीदन्त्युपविशन्ति यस्मिन् तत्पितृषदनम् । हे बर्हिः, त्वं पितृषदनमसि ॥ २६ ॥

## सप्तविंशी ।

**उद्दिवꣳ᳖स्तभानान्तरिक्षं पृण दृꣳ᳖हस्व पृथिव्यां द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा । ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि । ब्रह्म दृꣳ᳖ह क्षत्रं दृꣳ᳖हायुर्दृꣳ᳖ह प्रजां दृꣳ᳖ह २७**

**उ० उच्छ्रयति । उद्दिवꣳ᳖स्तभान । दिवं द्युलोकं स्तम्भय । आअन्तरिक्षं पृण 'पृ पालनपूरणयोः' । आपृण आपूरयान्तरिक्षम् । दृꣳ᳖हस्व पृथिव्याम् । द्वितीयार्थे सप्तमी । दृढीकुरु पृथिवीम् । यद्वा पृथिव्यामवस्थिता पृथिवीं दृढीकुरु । मिनोति । द्युतानः त्वा । द्युतानो दीप्यमानः त्वां मारुतो वायुः मिनोतु । 'डुमिञ् प्रक्षेपणे' । प्रक्षिपतु । मित्रावरुणौ च मिनुतां ध्रुवेण स्थिरेण धर्मणा धारणेन । पर्यूहति ब्रह्मवनि । 'छन्दसि वनसनरक्षिमथाम्' इतीन्प्रत्ययः । ब्रह्म वनोति ब्रह्मवनि । अविभक्तिको निर्देशः । क्रियाविशेषणतया पर्यूहणाविशेषणतया वा नपुंसकलिङ्गत्वम् । ब्रह्मवनि त्वाम् । क्षत्रवनि त्वाम् । क्षत्रं वनोति क्षत्रवनि । एवं रायस्पोषवनि त्वाम्, धनपोषवनि त्वां पर्यूहामि । 'ऊह वितर्के' परिपूर्वः पूरणार्थः । पर्यूषति । ब्रह्मादीनि दृꣳ᳖ह दृढीकुरु । ब्रह्म इति व्याख्यातम् ॥ २७ ॥**

म० 'उद्दिवमित्युच्छ्रयतीति' ( का० ८ । ५ । ३३ ) उच्छ्रयणमूर्ध्वाग्रत्वेन स्थापनम् । पञ्च यजूंष्यौदुम्बरीदेवत्यानि । हे औदुम्बरि, त्वं दिवं द्युलोकमुत्तभान स्तम्भय ऊर्ध्वः सन् यथा न पतति तथा कुर्वित्यर्थः । अन्तरिक्षं पृण पूरय । पृथिव्यां दृंहस्व दृढा भव । पृथिव्यामिति सप्तमी द्वितीयार्थे । पृथिवीं दृढीकुरु । 'द्युतान इति मिनोतीति' ( का० ८ । ५ । ३४ ) । शाखां गर्ते प्रक्षिपतीति सूत्रार्थः । हे औदुम्बरि, द्युतानः दीप्यमानो मारुतो वायुः ध्रुवेण स्थिरेण धर्मणा धारणेन त्वां मिनोतु गर्ते प्रक्षिपतु 'डुमिञ् प्रक्षेपे' स्वादिः । तथा मित्रावरुणौ देवौ ध्रुवेण धर्मणा त्वां प्रक्षिपतामिति शेषः । 'पर्यूहणाद्योपसेचनात्कृत्वेति' ( का० ८ । ५ । ३५ ) । पर्यूहणमारभ्योपसेचनपर्यन्तं यथा यूपे कृतं तथात्रापि कुर्यादित्यर्थः। तत्र यूपस्थाने 'ब्रह्मवनि त्वेति पाꣳ᳖सुभिः पर्यूहतीति' ( का० ६ । ३ । १० ) । हे औदुम्बरि, त्वा त्वां पर्यूहामि परितो मृत्तिकां क्षिपामि । किंभूतां त्वाम्। ब्रह्मवनि ब्रह्म ब्राह्मणजातिं वनति संभजत इति ब्रह्मवनिः । क्षत्रं क्षत्रियजातिं वनतीति क्षत्रवनिः । रायो धनस्य पोषं पुष्टिं वनतीति रायस्पोषवनिः । सर्वत्र 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति विभक्तेर्लुक् । 'ब्रह्म दृꣳ᳖हेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषतीति' ( का० ६ । ३ । ११ ) । परितो दृढीकुर्यादिति सूत्रार्थः । हे औदुम्बरि, ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिमायुः जीवनं प्रजां पुत्रादिरूपां च दृंह दृढीकुरु ॥ २७ ॥

## अष्टाविंशी ।

**ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात् । घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया ॥ २८ ॥**

**उ०** आलभ्य वाचयति । ध्रुवासि । यथा त्वं ध्रुवासि स्थिरासि एवमयं यजमानो ध्रुवः शाश्वतः अस्मिन्नायतने अस्मिँल्लोके प्रजया वा पशुभिर्वा भूयात् । विशाखे जुहोति । घृतेन द्यावापृथिवी घृतेनानेन हे द्यावापृथिव्यौ युवां पूर्येथाम्। सदसि छदिरधि निदधाति । इन्द्रस्य छदिर्भवसि । सर्वजनानां छाया । 'विश्वगोत्रा ह्यस्मिन् ब्राह्मणा आसत' इति श्रुतिः ॥ २८ ॥

म० 'ध्रुवासीति वाचयत्यौम्बरीमालभ्येति' ( का० ८ । ५ । ३५ ) । आलम्भनं स्पर्शनम् । हे औदुम्बरि, त्वं ध्रुवासि स्थिरा भवसि । त्वमिवायं यजमानोऽस्मिन्नायतने स्वकीये गृहे ध्रुवो भूयात् प्रजया पुत्रादिकया पशुभिः गवादिभिश्च सह स्थिरोऽस्तु । 'स्रुवेण विशाखे जुहोति घृतेनेति' ( का० ८ । ५ । ३७ ) । औदुम्बर्या विशाखे यस्मिन्प्रदेशे द्विधा शाखोत्पत्तिस्तत्र जुहुयादिति सूत्रार्थः । हूयमानेनानेन घृतेन द्यावापृथिवी द्यावापृथिव्यौ पूर्येथां पूरिते भवताम् । 'इन्द्रस्य छदि-

रिति मध्यमं छदिरारोपयति' ( का० ८। ६।१० ) औदुम्बरीनिखननादूर्ध्वं सदोनामकं मण्डपं निर्माय तस्योपरि प्रावरणाय मध्यं कटमारोपयेदिति सूत्रार्थः । छदिःशब्देन तृणनिर्मितः कट उच्यते । हे तृणमय कट, त्वमिन्द्रस्य छदिरसि इन्द्रसंबन्धी कटो भवसि । अतस्त्वं विश्वजनस्य छाया भवेति शेषः । सदोध्यवर्तिनः सर्वजनस्य यजमानर्त्विग्रूपस्य प्राणिनः प्रावरणाय छाया भवेत्यर्थः । सदस इन्द्रदेवताकत्वेन तदीयच्छदिष इन्द्रसंबन्धित्वम् ॥ २८ ॥

## एकोनत्रिंशी ।

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑ । वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥ २९ ॥

परिश्रयति । परि त्वा अनुष्टुबैन्द्री अनिरुक्ता । परिभवन्तु परिगृह्णन्तु त्वां हे गिर्वणः, 'इन्द्रो वै गिर्वा' इति श्रुतिः । गिरो वाचः इमा ऋग्यजुःसामलक्षणाः । विश्वतः सर्वतः । कथंभूतं त्वां परिगृह्णन्तु । वृद्धायुम् वृद्धा आयवो मनुष्या ऊरुलक्षणा यस्य स तथोक्तः । यद्वा वृद्धायुरिति समानाधिकरणः । वृद्धश्चायुश्च महामनुष्य इत्यर्थः । अनुवृद्धयः । सवनक्रमेणानुवृद्धा वाचः । किंच जुष्टा भवन्तु त्वां परिगृह्णानाः त्वया परिसेविता भवन्तु । प्रीतिकरा जुष्टयः ॥ २९ ॥

**म०** 'परि त्वेति परिवार्येति' (का० ८ । ६ । १२ ) परितः कुड्यवदावरणं कृत्वेति सूत्रार्थः । ऐन्द्र्यनुष्टुबनिरुक्ता मधुच्छन्दोदृष्टा । गीर्भिः स्तुतिभिर्वननीयो भजनीयो गिर्वण इन्द्रः सदोऽभिमानी । हे गिर्वण इन्द्र, स्तोत्रशस्त्ररूपा गिरः त्वा त्वां विश्वतः सर्वतः कटरूपेण परिभवन्तु परिगृह्णन्तु । किंभूतं त्वाम् । वृद्धायुं वृद्धा आयवो मनुष्या यजमानादयो मरुतो वा यस्य तम् । यद्वा वृद्धः श्रेष्ठश्चासावायुश्च तं महामनुष्यम् । किंभूताः गिरः । अनुवृद्धयः अनु सवनक्रमेण वृद्धिर्यासां ताः शनैः प्रातःसवनं तत उच्चैर्माध्यन्दिनं सवनं तारस्वरेण तृतीयं सवनमिति क्रमः । किंच जुष्टयोऽस्मत्सेवास्तव जुष्टाः प्रियाः भवन्तु 'जुषी प्रीतिसेवनयोः' जोषणं जुष्टिः ॥ २९ ॥

## त्रिंशी ।

इन्द्र॑स्य॒ स्यूर॒सीन्द्र॑स्य ध्रु॒वोऽसि । ऐ॒न्द्रम॑सि वैश्वदे॒वम॑सि ॥ ३० ॥

**उ०** परिषीवनग्रन्थिकरणाभिमर्शनानि सदसः इन्द्रोपलक्षितानि भवन्ति । आग्नीध्रं स्पृशति । वैश्वदेवमसि ॥३०॥

**म०** 'परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रैरिति' (का० ८ । ६ । १२ ) । इन्द्रदेवताकैस्त्रिभिर्मन्त्रैः परिषीवणादित्रयं कुर्यादिति सूत्रार्थः । तत्र प्रथमः । हे रज्जो, त्वमिन्द्रस्य सदोऽभिमानिदेवस्य संबन्धिनी स्यूः सीवनमसि । सीव्यतेऽनया सा स्यूः क्विप् 'छ्वोः शूडनुनासिके च' ( पा० ६ । ४ । १९ ) इति । ऊडादेशः । द्वितीयः । हे ग्रन्थे, त्वमिन्द्रसंबन्धी भूत्वा ध्रुवः स्थिरो भवसि । अथ तृतीयः । हे सदः, त्वमिन्द्रसंबन्धि भवसि । 'हविर्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यगारद्वारमन्तर्वेद्यर्थं भूयः सर्वं वा निग्राप्य वैश्वदेवमसीत्यालभते' (का० ८ । ६ । १३—१४ ) इति हविर्धानमण्डपस्यापरान्तो वायव्यकोणस्तस्योत्तरभागे किंचिदाग्नीध्रनामकमग्निस्थानं कृत्वा तस्य स्पर्शं कुर्यादिति सूत्रार्थः । हे आग्नीध्र; त्वं सर्वदेवसंबन्धि भवसि ॥ ३० ॥

## एकत्रिंशी ।

वि॒भूर॑सि प्र॒वाह॑णो॒ वह्नि॑रसि हव्य॒वाह॑नः । श्वा॒त्रोऽसि॒ प्रचे॑तास्तु॒थोऽसि वि॒श्ववे॑दाः ॥ ३१ ॥

**उ०** अत उत्तरं षोडश धिष्ण्यमन्त्राः । तत्र श्रुतिः 'ते वै द्विनामानो भवन्तीति' । आग्नीध्रं विभूरसि प्रवाहणः । विभवतीति विभूः । प्रवाहयति गमयतीति प्रवाहणः । तस्य हि दक्षिणत उत्तरतश्च ऋत्विजो गच्छन्ति । यस्त्वं विभूश्च नामतः प्रवाहणश्चासि तं त्वां स्थापयामीति शेषः । एवमुत्तरेष्वपि योज्यम् । होतुर्धिष्ण्यम् । वह्निरसि हव्यवाहनः प्रशास्तुः । श्वात्रः शु क्षिप्रमततीति श्वात्रः । प्रचेताः प्रकृष्टज्ञानः । ब्राह्मणाच्छंसिनः । तुथोसि विश्ववेदाः । 'ब्रह्म वै तुथः' इति श्रुतिः । विश्ववेदाः सर्वज्ञः सर्वधनो वा ॥ ३१ ॥

**म०** इत उत्तरं षोडश धिष्ण्यमन्त्राः । तदाह 'धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषं निवपति स्फ्येनान्वारब्ध उदङ् उपविश्य विभूरसीति प्रतिमन्त्रमिति' ( का० ८ । ६ । १५ ) । अग्नीनामाश्रयभूता मृदा निर्मिताः स्वल्पवेदिका धिष्ण्यान्युच्यन्ते । 'आग्नीध्रीयं पूर्वमिति' ( का० ८ । ६ । १६ ) । विभूशब्दप्रवाहणशब्दावाग्नीध्रीयधिष्ण्यस्य नामनी । 'ते वै द्विनामानो भवन्ति' ( ३ । ६ । २ । २४ ) इति श्रुतेः । अष्टयजुषां धिष्ण्या अग्नयो देवताः । हे आग्नीध्रीय धिष्ण्य, त्वं विभूः प्रवाहणश्चासि । विविधं भवतीति विभूः एतस्मादेव धिष्ण्यादितरधिष्ण्येष्वग्निविहरणादेतस्य विभुत्वम् । प्रवाहयतीति प्रवाहणः तस्य हि दक्षिणोत्तरत ऋत्विजो गच्छन्ति हविषः प्रवाहयितृत्वाद्वा प्रवाहणत्वम् । धिष्ण्यगतानग्नीन् प्रत्यन्ये देवा ऊचुः प्रत्येकं स्वं नामधेयं संपादयतेति । तदाह तित्तिरिः 'तान् देवा अब्रुवन् द्वे द्वे नामनी कुरुतेति' । मैत्रावरुणहोतृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकानां धिष्ण्यान् सदसि कुर्यात् । तदाह 'षट् सदसि प्रत्यङ्मुखो द्वारमपरेण होतुर्दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाच्छꣳसिपोतृनेष्टाच्छावाकानामिति' ( का० ८ । ६ । १८—२१ ) । होतुर्धिष्ण्यं हे होतृधिष्ण्य, वह्निर्हव्यवाहनश्चासि । वहति यज्ञकर्म निर्वहतीति वह्निः । हव्यं वहति देवान् प्रति प्रापयतीति हव्यवाहनः । यथाग्नीध्रीयधिष्ण्यस्य नामद्वयमुक्तं तथा होत्रादिधिष्ण्यानामपि बोध्यम् । मैत्रावरुणधिष्ण्यं हे

मैत्रावरुणधिष्ण्य, त्वं श्वात्रः प्रचेताश्चासि शु क्षिप्रमततीति श्वात्रो मित्रः । प्रकृष्टे चेतो ज्ञानं यस्य स प्रचेताः वरुणः तद्रूपोऽसि । ब्राह्मणाच्छंसिनः हे ब्राह्मणाच्छंसिधिष्ण्य, त्वं तुथो विश्ववेदाश्चासि । 'ब्रह्म वै तुथः' ( ४ । ३ । ४ । १५ ) इति श्रुतेः ब्रह्मरूपोऽसि । विश्वं वेत्ति विश्ववेदाः सर्वज्ञः । यद्वा तुथशब्देन देवान्प्रति दक्षिणानां विभागकर्ता पुरुष उच्यते । तदाह तित्तिरिः । तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजतीति ॥ ३१ ॥

## द्वात्रिंशी ।

उशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वान् शुन्ध्यूरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योऽसि पवमानो नभोऽसि प्रतक्वा मृष्टोऽसि हव्यसूदन ऋतधामासि स्वर्ज्योतिः ॥ ३२ ॥

**उ०** पोतुः । उशिगसि कविः । 'वश कान्तौ' । तस्य कृतसंप्रसारणस्योशिक् । कान्तोसि । कविः क्रान्तदर्शनः । नेष्टुः । अङ्घारिरसि बम्भारिः । अंहःशब्दः पापवचनः । तस्य हकारस्य घकारश्छान्दसः । तस्यारिः अङ्घारिः । बम्भारिः । 'डुभृञ् धारणपोषणयोः' । भर्ता । अच्छावाकस्य । अवस्यूरसि दुवस्वान् । अवसमन्नं तदिच्छति क्विप ऊप्रत्यय औणादिकः । स हि पुरोडाशबृगलमिच्छति । दुवस्वान् दुव इति हविर्नाम । दुवस्वान् हविष्मान् । अच्छावाको हि पुरोडाशबृगलं लभते । मार्जालीयः शुन्ध्यूरसि । शोधनः मार्जालीयः । 'मृजूष् शुद्धौ' तत्र हि पात्राणि प्रक्षाल्यन्ते । इत उत्तरमनुदिशति आहवनीयम् । सम्राडसि । सम्राट् संगतदीप्तिः । कृशानुः कृशो यजमानः पयोव्रतैरुपक्षीणः एनमनुगच्छतीति कृशानुः बहिष्पवमानदेशः । परिषद्योसि पवमानः । परिषदनीयः उद्गातृप्रभृतिभिः पवमानः । प्रसिद्धा चात्वालम् । नभोसि प्रतक्वा न भातीति नभः । यद्वा नभ आकाशः आकाशरूपः । प्रतक्वा । तकतिर्गत्यर्थः । प्रदक्षिणमेनं तकन्ति निर्गच्छन्ति ऋत्विजः स शामित्रदेशः । मृष्टोसि हव्यसूदनः । मृष्टो मृष्टकारी । शृतं हविर्मृष्टं भवति । हव्यसूदनः । सूदः सूपकार उच्यते । हविषः पक्ता । औदुम्बरी । ऋतधामासि स्वर्ज्योतिः । ऋतो यज्ञस्तस्य धाम स्थानं जन्म वा । तत्र हि उद्गातारो यज्ञस्य कारणभूतास्तिष्ठन्ति । जनयन्ति वा यज्ञम् । स्वर्ज्योतिः आदित्यज्योतिः ॥ ३२ ॥

**म०** पोतुः । हे पोतृधिष्ण्य, त्वमुशिक् कमनीयः कविः विद्वांश्चासि ॥ नेष्टुः अङ्घस्यांहसः पापस्यारिरङ्घारिः । बिभर्तीति बम्भारिः त्वं तद्रूपोसि हे नेष्टृधिष्ण्य । दिवि सोमरक्षकौ द्वावङ्घारिबम्भारी । तथाच सोमरक्षकमन्त्रे स्वानभ्राजाङ्घारे बम्भार । ( अध्या० ४ क० २७) इत्याम्नातम् । अच्छावाकस्य । हे अच्छावाकधिष्ण्य, त्वमवस्यूः दुवस्वान् चासि । अवोऽन्नमिच्छतीत्यवस्युः । 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) 'क्याच्छन्दसि' (पा० ३ । २ । १७० ) इति क्यजन्तादुप्रत्ययः दीर्घश्छान्दसः औणादिक ऊप्रत्ययो वा । दुवोऽस्यास्तीति दुवस्वान्हविष्मान् । दुव इति हविर्नाम । अच्छावाको हि पुरोडाशभागं लभते । एवं होत्रादिधिष्ण्यान्सदसि निर्माय वेदेर्दक्षिणभागे मार्जालीयं निर्माति । तदाह 'आग्नीध्राद्दक्षिणꣳसंप्रति वेद्यन्ते दक्षिणामुखो मार्जालीयमिति' (का०८।६।२१ ) । शुन्धयतीति शुन्ध्यूः मार्ष्टीति मार्जालीयः । तत्र हि पात्राणि प्रक्षाल्यन्ते । 'सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरीब्रह्मासनशालाद्वार्यप्रजाहितान् सम्राडसीति प्रतिमन्त्रमिति' ( का० ८ । ६ । २३ ) । सदोद्वारस्य पूर्वभागेऽवस्थायाहवनीयादीन् सम्राडसीत्याद्यष्टमन्त्रैः क्रमेण निर्दिशेदिति सूत्रार्थः । तत्रादावाहवनीयम् । हे उत्तरवेदिगताहवनीय, त्वं सम्राट् कृशानुश्चासि । बहुविधाहुत्याधारत्वेन सम्यग्राजत इति सम्राट् । पयोव्रतादिभिः कृशं क्षीणं यजमानमनुगच्छतीति कृशानुः । बहिष्पवमानदेशम् हे बहिष्पवमानदेश, त्वं परिषद्यः पवमानश्चासि। स्तोतुं समेता ऋत्विजः परिषत् तद्योग्यः परिषद्यः अतएव शुद्धत्वात्पवमानः । चात्वालं, हे चात्वाल, त्वं नभोसि खनने छिद्ररूपत्वादाकाशः, न भातीति वा । तथा प्रतक्वा प्रदक्षिणं तकन्ति गच्छन्ति ऋत्विजो यत्र स प्रतक्वा । तकतिर्गत्यर्थः 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति वनिप् । शामित्रम् पशुविशासनप्रदेशः शामित्रशब्देनोच्यते । हे शामित्र, त्वं मृष्टोऽसि पशुविशसनस्य विहितत्वेनाशुद्धिहेतुत्वाभावात्सत्यपि विशसने शुद्धोऽसि । यद्वा मृष्टः श्वतत्वान्मिष्टः पक्वं हविर्मृष्टं भवति । तथा हव्यस्य हृदयजिह्वादिरूपस्य हविषः सूदनः पाकहेतुश्चासि । औदुम्बरीम् हे औदुम्बरि, त्वमृतधामा ऋतं सामगानं धामोपवेशनस्थानं यस्याः सा । 'औदुम्बरीꣳ स्पृष्ट्वोद्गायति' इत्युक्तेः । स्वर्ज्योतिः उन्नतत्वेन स्वर्गे प्रकाशकः यद्वा सूर्यज्योतिः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

समुद्रोऽसि विश्वव्यचा अजोऽस्येकपादहिरसि बुध्न्यो वागस्यैन्द्रमसि सदोऽस्यृतस्य द्वारौ मा मा सन्ताप्तमध्वनामध्वपते प्र मा तिर स्वस्ति मेऽस्मिन्पथि देवयाने भूयात् ॥ ३३ ॥

**उ०** ब्रह्मासनम् । समुद्रोसि विश्वव्यचाः समुद्र इव त्वमसि सर्वव्यञ्चनः तत्र हि समुद्र इव अगाधो ज्ञानेन ब्रह्माधितिष्ठति । विश्वं च यज्ञं च व्यञ्चति कृताकृतप्रत्यवेक्षणेन । शालाद्वार्यम् । अजोऽस्येकपात् । अजः । 'अज गतिक्षेपणयोः' । अजनः अयमेवाहवनीयादिभावेन अजति गच्छति । एकपात् । एकः प्राजहितः । एकं पाति एकपात् । सह्यनुग-

तस्तस्माादुद्धियते । प्राजनितम् । अहिरसि बुध्न्यः । अहिः अयनः शालाद्वार्यादिभिर्भावैरिति बुध्नमादिरुच्यते तत्र भवो बुध्न्यः स हि प्रथमं मध्यते । नाम्नैवात्र धिष्ण्यानां स्तुतिः । उक्तंच । स्तुतिस्वनाम्ना वाथ कर्मरूपैः । सदोऽभिमृशति । वागस्यैन्द्रमसि । वाचास्मिन्कुर्वन्तीति वाक्शब्देनाभेदोपचारेण सदोऽभिधीयते। ऐन्द्रमसीति देवताभिप्रायं। सदोसीति नामव्युत्पत्त्यभिप्रायम् । सीदन्त्यस्मिन्ब्राह्मणा इति सदः । द्वार्ये । ऋतस्य द्वारौ ऋतस्य यज्ञस्य ये युवां द्वारौ द्वारदेशस्थायिनौ ते मां मा संताप्तम् । संतापश्च प्रवेशनिष्क्रमणस्खलनाभिप्रायः । अभिमन्त्रणमुत्तरैः । सूर्यमभिमन्त्रयते । अध्वनाम् । हे सूर्य, अध्वपते मार्गपते । अध्वनां संचाराणां मध्ये वर्तमानमिति शेषः । प्रमातिरः वर्धयस्व माम् । संचारेण हि गच्छतो वृद्धिर्भवत्येव । किंच त्वत्प्रसादात् स्वस्ति अविनाशः मे मम अस्मिन् पथि मार्गे । देवयाने देवयानप्रापके भूयात् भवेत् ॥ ३३ ॥

**म०** ब्रह्मासनम् हे ब्रह्मासन,त्वं समुद्रः विश्वव्यचाश्चासि। सर्वे देवाः सम्यगुत्कर्षेण द्रवन्त्यत्रेति समुद्रः समुद्र इवागाधो ज्ञानेन, ब्रह्मा यत्र तिष्ठतीति वा । विश्वं सर्वं यज्ञं व्यचति गच्छति कृताकृतप्रत्यवेक्षणायेति विश्वव्यचाः । शालाद्वार्यम्, हे प्राचीनवंशशालाद्वारवर्तिन्नग्ने, त्वमजोऽसि । अजति आहवनीयरूपेण यज्ञप्रदेशे गच्छतीत्यजः । यद्वा परब्रह्मत्वमुपचर्यते । न जायत इत्यजः । एकः पातीत्येकपात् । यद्वा एकः पादः सर्वाणि भूतानि यस्येत्येकपात् । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः । प्राजहितम् पत्नीशालापश्चिमभागवर्ती पुरातनो गार्हपत्योऽग्निः प्राजहित उच्यते । हे प्राजहित, त्वमहिरसि। न हीयत इत्यहिः शालाद्वारीये नूतने गार्हपत्ये उत्पन्नेऽपि अयमग्निः स्वरूपेण न हीयते । बुध्नो मूलं तत्र भवो बुध्न्यः । आधानकाले प्रथममाहितत्वान्मूलभावित्वम् । स हि प्रथमं मथ्यते । नामभिरेवात्र धिष्ण्यानां स्तुतिः । उक्तंच । 'स्तुतिः स्वनाम्ना कर्मणा वाथ रूपैरिति' ( का० ९ । ८ । २२ ) । वागसीति सदोऽभिमर्शनमिति । हे सदः, त्वं वागसि वाचास्मिन्कर्म कुर्वन्तीति वाक्शब्देनाभेदोपचारेण सद उच्यते । ऐन्द्रमिन्द्रदेवताकं चासि । सीदन्त्यस्मिन्निति सदः । 'ऋतस्य द्वाराविति द्वार्ये' ( का० ९ । ८ । २३ ) इति । द्वार्ये सदोद्वारशाखे अभिमृशतीति सूत्रार्थः । हे ऋतस्य यज्ञस्य द्वारौ द्वारदेशस्थायिन्यौ शाखे, युवां मा मां मा संताप्तं मा संतापयतं प्रवेशनिःक्रमणे स्खलनादिना । तपतेर्लुङि मध्यमैकवचने 'झलो झलि' ( पा० ८ । २ । २६ ) इति सिऽलोपे रूपम् । 'अभिमन्त्रणमुत्तरैरध्वनामध्वपत इति सूर्यम्' ( का० ५ । ८ । २४—२५ ) । उत्तरैस्त्रिभिर्मन्त्रैस्त्रयाणामभिमन्त्रणं दर्शनमित्यर्थः । तत्राध्वनामिति सूर्यमभिमन्त्रयत इति सूत्रार्थः । अध्वपते मार्गपालक रवे, अध्वनां मार्गाणां मध्ये वर्तमानं मा मां त्वं प्रतिर प्रवर्धय । तिरतिर्वृद्ध्यर्थः । किंच अस्मिन् देवयाने देवयानप्रापके पथि यज्ञमार्गे मे मम स्वस्ति कल्याणं भूयात् ॥ ३३ ॥

## चतुस्त्रिंशी ।

मित्रस्य मा चक्षुषेक्षध्वमग्नयः सगराः सगराः स्थ सगरेण नाम्ना रौद्रेणानीकेन पातमाग्नयः पिपृतमाग्नयो गोपायत मा नमो वोऽस्तु मा मा हिंᳪसिष्ट ॥ ३४ ॥

**उ०** ऋत्विजः मित्रस्य मा । मित्रस्यादित्यस्य चक्षुषा मामीक्षध्वम् । मित्रस्य हि शान्तं चक्षुः । धिष्ण्यान् । अग्नयः सगराः । 'गृ स्तुतौ' । हे अग्नयः, सगराः समानगराः समानस्तुतयः । ये यूयं समानस्तुतयो भवथ ते सगरेण नाम्ना समानस्तुतिनाम्नाभिहिताः सन्तः । समानं हि नाम धिष्ण्या इति । 'ते वै द्विनामानो भवन्ति' इति द्विनामता च। रौद्रेण रुद्रदैवत्येन अनीकेन मुखेन पातं पालयतं मा माम् । हे अग्नयः, पिपृतं पूरयत धनैर्माम् । हे अग्नयः, गोपायत रक्षत माम् । किंच हे अग्नयः, नमो वोस्तु । अयं नमस्कारो वो युष्मभ्यं भवतु । मा मा हिंᳪसिष्ट । 'तृहि हिसि हिंसायाम्' । मा हिंसिष्ट माम् । यदत्र पुनरुक्तं तत् 'अभ्यासेन भूयांसमर्थं मन्यन्ते' इति परिह्रियते ॥ ३४ ॥

**म०** 'मित्रस्येत्यृत्विजः' ( का० ९ । ८ । २६ ) इति । अभिमन्त्रयत इति शेषः । हे ऋत्विजः, मित्रस्यादित्यस्य चक्षुषा नेत्रेण मा मामीक्षध्वं पश्यत सख्युर्नेत्रेण वा सखा यथा सखायं हितचक्षुषा पश्यति तथा मां पश्यध्वमित्यर्थः । 'अग्नयः सगरा इति धिष्ण्यानि' ( का०९।८।२७ ) इति । अभिमन्त्रयत इति शेषः । हे अग्नयः सगराः । 'गृ स्तुतौ' गरेण स्तुत्या सहिताः सगराः यूयं सगरेण नाम्ना स्तुतिसहितेन नाम्ना धिष्ण्या इति नाम्ना व्यवह्रियमाणत्वात्सगराः स्थ समानस्तुतयो भवथ । समानो गरो येषां ते सगराः । हे अग्नयः, ते यूयं रौद्रेणानीकेन शत्रुविनाशकत्वादुग्रेण भवदीयेन सैन्येन मा मां पात रक्षत । यद्वा रुद्रदेवत्येन मुखेन मां पात अनीकं मुखं सैन्यं च । हे अग्नयः, मा मां पिपृत धनादिभिः पूरयत । मा मां गोपायत रक्षत। 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १०। ४२ ) इति यास्कोक्तेः निरन्तरं रक्षतेत्यर्थः । वो युष्मभ्यं नमोऽस्तु । मा मां मा हिंसिष्ट मा वधिष्ट । निर्विघ्नं यज्ञं कारयतेत्यर्थः ॥ ३४ ॥

## पञ्चत्रिंशी ।

ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳪसमित् । त्वᳪसोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथᳪस्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ ३५ ॥

**उ०** पृषदाज्यं गृह्णाति । ज्योतिरसि यथा त्वं ज्योतिरसि आज्यत्वाद् यथाच विश्वरूपं वैचित्र्यात्त्वमसि । एवं विश्वेषां देवानां समित् समिन्धनमसि वैसर्जितानि जुहोति । त्वꣳसोम । सौमी गायत्री अनवसानीया । हे सोम, त्वं तनूकृत्भ्यः । 'कृती छेदने' । तनूः शरीरम् तत्कृन्तन्ति छिन्दन्ति ये वृकादयः ते तनूकृतः तेभ्यः गोपायेत्येतदध्याह्रियते । द्वेषोभ्योऽन्यकृतेभ्यः यानि च द्वेषांसि अन्यकृतानि दुर्जनकृतानि तेभ्यश्च गोपाय । यतस्त्वं उरुयन्तासि बहुप्रकारं नियन्तासि नियामकोसि । किंच वरूथं गृहं च यज्ञरूपं मे गोपाय । यद्वा तन्वा शरीरेण क्रियन्ते यानि द्वेषांसि अन्यकृतानि पुत्रदारप्रभृतिभिः कृतानि तेभ्यो गोपायेति तुल्यम् । द्वितीयं जुहोति । जुषाणः । एकपदा विराड् अप्तुदेवत्या । अप्तुश्चात्र सोमः । जुषाणः सेवमानः प्रीयमाणो वा अप्तुः । आप्नोति तूर्णं पीतः सन् शरीरमित्यप्तुः सोमः । आज्यस्य वेतु पिबतु ॥ ३५ ॥

**म०** 'ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेन' ( का० ५ । ४ । २६ ) इति । हे आज्य, त्वं ज्योतिरसि । किंभूतम् । विश्वरूपं सर्वरूपं बहुप्वाहुतिष्पयुक्तत्वाद्विश्वरूपत्वम् । आज्यत्वाद्वा दीप्यमानत्वाद्वा ज्योतिष्ट्वम् । विश्वेषां सर्वेषां देवानां समित्समिन्धनं सम्यग्दीपकम् । देवा ह्याज्यं भुक्त्वा दीप्यन्ते । 'प्रदीप्तमिध्मं त्वꣳ सोमेति । प्रचरण्याभिजुहोति' ( का० ८ । ७ । १ ) इति । जुहूरिव होमसाधना काचित्स्रुक् प्रचरणीत्युच्यते । अवसानरहिता सोमदेवत्या गायत्री भृगुसुतकृतुदृष्टा । तनूं शरीरं कृन्तन्ति छिन्दन्तीति तनूकृतो राक्षसाः । 'कृती छेदने' । द्विषन्तीति द्वेषांसि दौर्भाग्यानि । अन्यैरस्मद्विरोधिभिः कृतानि प्रेरितान्यन्यकृतानि। हे सोम, त्वं तेभ्यो यन्ता नियन्तासि । यच्छतीति यन्ता 'यम उपरमे' तृच् । यथा तादृशा अस्मान्मा बाधन्ते तथास्मान्सुरक्षितप्रदेशे संस्थाप्य पालयसीत्यर्थः । तस्मात्त्वमेवास्माकमुरु प्रभूतं वरूथं बलमसि तस्मै तुभ्यमिदं हुतमस्तु । सोमं नेतुं तमुद्दिश्यासावाज्याहुतीर्हुतेति भावः । 'जुषाणोऽप्तुरिति द्वितीयाम्' (का० ७ । ८ ।२ ) इति । जुहोतीत्यनुवर्तते । अप्तुदेवत्यैकपदा विराट् यजुरन्ता । 'विराजो दश' इत्युक्तेर्दशाक्षरत्वाद्विराट् । अप्तुश्चात्र सोमः आप्नोति पीतः सन् शरीरमित्याप्तुः 'आपॄ व्याप्तौ' 'आप्नोतेर्ह्रस्वश्च' ( उणा० १ । ७४ ) इति तुप्रत्ययो धातोर्ह्रस्वश्च । जुषाणः प्रीयमाणोऽप्तुः सोम आज्यस्य वेतु आज्यं पिबतु । कर्मण्यपीति केचित् । स्वाहा तस्मै सुहुतमस्तु ॥ ३५ ॥

## षट्त्रिंशी ।

अग्ने नय॑ सुपथा॑ रा॒ये अ॒स्मान्विश्वा॑नि देव व॒युना॑नि वि॒द्वान् । यु॒यो॒ध्य॒स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठां ते॒ नम॑उक्तिं विधेम ॥ ३६ ॥

**उ०** वाचयति । अग्नेनयेति द्वे आग्नेय्यौ त्रिष्टुभौ । हे भगवन्नग्ने, नय प्रापय सुपथा शोभमानेन मार्गेण । राये धनाय यज्ञफलाय । अस्मान् विश्वानि सर्वाणि । देव दानादिगुणयुक्त, वयुनानि प्रज्ञानानि प्रकृष्टज्ञानानि । विद्वान् जानानः । नहि ते विज्ञानशक्तीनां प्रमाणमस्तीत्यभिप्रायः । किंच युयोधि । 'यु पृथग्भावे' पृथक्कुरु । अस्मत् मत्तः । जुहुराणमेनः । 'हुर्छा कौटिल्ये' । 'हूर्छतेः सनोलोपश्च'इत्यौणादिकेन सूत्रेण सिद्धिः । हूर्छितुमिच्छति कुटिलीकर्तुमिच्छतीति । यत् एनः पापम् अभिलषितक्रियाप्रतिबन्धि यत्पापम् । किं कारणमिति चेद् भूयिष्ठां बहुतमाम् ते तव । नमउक्तिं विधेम । नम इति अन्ननाम । 'वच परिभाषणे' । अस्य स्त्रियां क्तिन् । उक्तिर्भणनम् । नमसा हविर्लक्षणेन । पुरोनुवाक्यायाज्यावचनं नमउक्तिस्तां नमउक्तिं विधेम । दधातिः करोत्यर्थः । करवाम ॥ ३६ ॥

**म०** 'अग्ने नयेति वाचयति' ( का० ८ । ७ । ६ ) इति । आग्नेयी त्रिष्टुबगस्त्यदृष्टा । हे अग्ने हे देव, विश्वानि सर्वाणि वयुनानि मार्गान् ज्ञानानि वा विद्वान् जानानस्त्वमस्माननुष्ठातॄन् राये धनाय यज्ञफलाय सुपथा शोभनमार्गेण नय प्रापय । किंच अस्मदस्मत्तोऽनुष्ठातृभ्यः एनः पापं युयोधि पृथक्कुरु । 'यु मिश्रणामिश्रणयोः' यौते शपः श्लुः 'वा छन्दसि' ( पा० ३ । ४ । ८८ ) इति हेः पित्त्वपक्षे 'अङितश्च' ( पा० ६ । ४ । १०३ ) इति हेर्धिः पित्त्वाद्गुणः । किंभूतमेनः । जुहुराणम् । 'हुर्छा कौटिल्ये' अस्मात् हुर्छतेः सनो लुक् छलोपश्च (उणा० २ । ८८ ) औणादिकसूत्रेणानच्प्रत्यये रूपम् । हूर्छितुं कुटिलीकर्तुमिच्छतीति जुहुराणम् । अभिलषितक्रियाप्रतिबन्धकमित्यर्थः। किंच ते तव भूयिष्ठां बहुलतमां नमउक्तिं हविषां वचनं याज्यापुरोनुवाक्यालक्षणां विधेम करवाम । नम इत्यन्ननाम । यद्वा नमस्कारविषयामुक्तिं संपादयाम ॥ ३६ ॥

## सप्तत्रिंशी ।

अ॒यं नो॑ अ॒ग्निर्वरि॑वस्कृणोत्व॒यं मृधः॑ पु॒र ए॑तु प्रभि॒न्दन् । अ॒यं वाजा॑ञ्जयतु॒ वाज॑सातावय॒ꣳ शत्रू॑ञ्जयतु॒ जर्हृ॑षाणः॒ स्वाहा॑ ॥ ३७ ॥

**उ०** आग्नीध्राय जुहोति । अयं नः अयमग्निः नः अस्माकम् । वरिवः धनं कृणोतु करोतु। अयमेव च मृधः संग्रामान् प्रभिन्दन् पुर एतु अग्रतो यातु । अयमेव च वाजानन्नानि जयतु । वाजसातौ अन्नसंभजनसेवने निमित्तभूते । अयमेवच शत्रून् जयतु जर्हृषाणः । 'हृष तुष्टौ' । अत्यर्थं हृष्यन् तुष्यन् ॥ ३७ ॥

**म०** 'उत्तरेण सदो हत्वाग्नीध्रेऽग्निं निदधाति ग्रावद्रोणकलशसोमपात्राणि चायं न इति जुहोत्यस्मिन्' ( का० ८ । ७ । ७–९) इति । शालामुखीयमग्निं ग्रावादीनि च सदस उत्तरभागे

नीलाग्नीध्रमण्डपे निधाय तत्रत्यधिष्ण्यगतेऽग्नौ घृतेन जुहुयादिति सूत्रार्थः । आग्नेयी त्रिष्टुब्यजुरन्ता । अयमग्निर्नोऽस्माकं वरिवः धनं कृणोतु करोतु । अयमेवाग्निर्मृधः संग्रामान्प्रभिन्दन्विदारयन्सन् पुर एतु अग्रतो यातु । अयमेवाग्निर्वाजसातौ वाजानामन्नानां संभजने निमित्ते वाजान् शत्रुसंबन्धीन्यन्नानि अस्मभ्यं दातुं जयतु । ततोऽयमेवाग्निर्जर्हृषाणोऽत्यर्थं हृष्यन् शत्रूञ्जयतु स्वाहा तुभ्यं सुहुतमस्तु ॥ ३७ ॥

## अष्टात्रिंशी ।

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ॥ ३८ ॥

**उ०** आहवनीये जुहोति । उरुविष्णो । वैष्णव्यनुष्टुप् । हे विष्णो यज्ञ, उरु महत् विक्रमस्व व्याप्नुहि । देवयानाभिप्रायं त्रिलोकाभिप्रायं वा । उरु विस्तीर्णशरीरान् क्षयाय संनिवासाय । महत् । ब्रह्म गृहनिवासाय । नः अस्मान् कृधि कुरु । उरु 'क्षयो निवासे' इति आद्युदात्तत्वात् क्षयशब्दो निवासवचनः । किंच घृतं पिब घृतयोने अग्ने । 'अग्निर्यस्यै योनेरसृजत तस्यै घृतमुल्बमासीत्' इति श्रुतिः । प्रप्र यज्ञपतिं तिर । 'प्रसमुपोदः पादपूरणे' इत्यभ्यासः । तिरतिर्वृद्ध्यर्थः । प्रतिर प्रवर्धय यज्ञपतिं यजमानं पुत्रपश्वादिभिः ॥ ३८ ॥

**म०** 'उरु विष्णविति जुहोति' ( का० ८ । ७ । १५ )इति । पूर्वमन्त्रेणाग्नीध्रीये होमोऽनेन त्वाहवनीय इति सूत्रार्थः । वैष्णव्यनुष्टुब्यजुरन्ता । हे विष्णो व्यापिन् आहवनीय, उरु विक्रमस्व शत्रुषु बहुलं पराक्रमं कुरु । किंच क्षयाय ब्रह्मगृहनिवासाय नोऽस्मानुरु बहु यथा तथा कृधि कुरु । हे घृतयोने अग्ने, घृतं पिब हूयमानमिदमाज्यं भक्षय । 'अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीत्' इति श्रुतेर्घृतयोनित्वम् । किंच यज्ञपतिं यजमानं प्रतिर अतिशयेन वर्धय । 'प्रसमुपोदः पादपूरणे' ( पा० ८ । १ । ६ ) इति प्रशब्दस्य द्वित्वम् । स्वाहा तस्मै तुभ्यं सुहुतमस्तु ॥ ३८ ॥

## एकोनचत्वारिंशी ।

देव सवितरेष ते सोमस्तꣳरक्षस्व मा त्वा दभन् । एतत्त्वं देव सोम देवो देवाँ २॥ उपागा इदमहं मनुष्यान्सह रायस्पोषेण स्वाहा निर्वरुणस्य पाशान्मुच्ये ॥ ३९ ॥

**उ०** सोमं निदधाति । देवसवितः । हे देवसवितः, अयं तव सोमः समर्पितः तं रक्षस्व गोपाय । मा त्वा दभन् । तस्मिन्नक्षणकर्मणि प्रवृत्तं त्वां मा असुरा दभ्नुयुः । दभ्नोतिर्वधकर्मा । यजमान उपतिष्ठते । एतत्त्वं देव हे देव, सोम, एतत्त्वं देवः सन् देवान् उप अगाः उपागतवानसि । अभिनयेन दर्शयति । इदमहं मनुष्यान् । उपगच्छेयमित्यनुषङ्गः । सहरायस्पोषेण सहितो धनपोषेण । उपनिष्क्रामति । स्वाहा निर्वरुणस्य स्वाहा । स्वः अहमिति निगृह्यवचनम् । अनेन देवानां सोमप्रदानेनात्मानं निष्क्रीयस्व आत्मीयोहमस्मि अस्माच्च हेतोर्निर्मुच्ये निर्मुक्तोहं वरुणस्य संबन्धिनः पाशात् । यद्वा सुहुतः सोमोस्तु । अहं त्विदानीमेव वरुणस्य पाशान्निर्मुच्ये ॥ ३९ ॥

**म०** 'दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्सोमं निदधाति देव सवितः' ( का० ८ । ७ । १७ ) इति । अनसि शकटे । सावित्रं यजुः । हे सवितः सर्वस्य प्रेरक देव, एष सोमस्ते तवार्पितः तं तादृशं सोमं त्वं रक्षस्व पालय । मा त्वा दभन् सोमस्य रक्षितारं त्वामसुरा मा विहिंसिषुः । 'एतत्त्वमिति विसृज्योपतिष्ठते' ( का० ८ । ७ । १८ ) इति । कृष्णाजिने स्थापितं बद्धं सोमं विसृज्योपस्थानं कुर्यादिति सूत्रार्थः । सौम्यं यजुः । हे सोम देव, त्वं देवः सन्भवदीयान्देवानेतदिदानीमुपागाः प्राप्तोऽसि । अहं मनुष्यो यजमानो मदीयान्मनुष्यानिदमिदानीं रायस्पोषेण सह पश्वादिधनेन सार्धमुपागतोऽस्मीत्यनुषङ्गः । 'स्वाहा निरिति निष्क्रम्य' ( का० ८ । ७ । १९ )इति हविर्धानमण्डपान्निर्गत्येति सूत्रार्थः । हानं हा न हा अहा स्वस्याहा स्वाहा स्वत्यागः सोमेनात्मानं निष्क्रीयात्मीयोऽहमस्मीत्यर्थः । यद्वा स्वाहा सोमरूपमन्नं देवेभ्यो दत्तमस्तु । अनेन सोमप्रदानेनाहं वरुणपाशान्निर्मुच्ये निर्मुक्तोऽस्मि ॥ ३९ ॥

## चत्वारिंशी ।

अग्ने व्रतपास्त्वे व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि । यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पतिः ॥ ४० ॥

**उ०** समिधमादधाति । अग्ने व्रतपाः । यजमानोऽग्निशरीरेणात्मशरीरस्य कृतव्यत्ययोऽधस्तनकर्मकलापं कृत्वाथेदानीं यथास्वं शरीरेणानुकुर्वाण आह । अग्ने व्रतपाः त्वे व्रतपाः या तव तनूः । व्रतपाशब्दस्यामन्त्रितस्याभ्यासः । 'अभ्यासे भूयांसमर्थं मन्यन्ते' इत्यतिशयार्थः । त्वे इति द्वितीयार्थे शेप्रत्ययः । हे अग्ने, अतिशयेन व्रतस्य त्वं गोपाः अतस्त्वां ब्रवीमि या तव संबन्धिनी तनूर्मयि अभूत् । अभिनयेन दर्शयति । एषा सा त्वयि भवतु । यो मम तनूः । या तु मम तनूः त्वयि अग्ने, अभूद् इयं सा मयि भवतु । किंच यथायथं नौ व्रतपते व्रतानि यथायथं यथास्वं यथात्मीयम् आवयोः हे व्रतपते अग्ने, व्रतानि कर्माणि सन्तु । किंच अनु मे दीक्षां दीक्षापतिरमꣳस्त अन्वमंस्त अनुमतवान् मे मम दीक्षां दीक्षापतिः सोमः । अनुतपस्तपस्पतिः अनुमतवांश्च

तपः उपसदः तपस्पतिः तपसः पतिः सोमः तपःप्रधानत्वात् तपःशब्देनोपसद उच्यन्ते ॥ ४० ॥

**म०** 'अग्ने व्रतपा इत्याहवनीये समिधमाधायेति' ( का० ८ । ३ । ४ ) आग्नेयं यजुः यजमानोऽग्निशरीरेणात्मशरीरस्य कृतव्यत्ययोऽधस्तनं कर्मकलापं कृत्वाथ यथा स्वशरीरं कुर्वाण आह हे अग्ने, व्रतपाः स्वभावतः सर्वेषां व्रतानां पालकोऽसि तस्मात्कारणादिदानीमपि त्वे त्वं व्रतपाः मदीयव्रतस्य पालको भवेति शेषः । हे अग्ने, व्रतप्रार्थनकाले तव संबन्धिनी या तनूर्मयि अभूदवस्थिता सा एषा तव तनूः त्वयि भवत्विति शेषः । यो या उ या च मम तनूस्त्वय्यभूत्सा इयं मयि भवतु । किंच हे व्रतपते व्रतपालकाग्ने, नौ आवयोर्व्रतानि कर्माणि यथायथं यथास्वं स्वसंबन्धमनतिक्रम्य सन्त्विति शेषः । अनुष्ठानरूपं व्रतं ममास्तु तत्पालनरूपं व्रतं तवास्त्वित्यर्थः । किंच दीक्षापतिः दीक्षायाः पालकोऽग्निः मे दीक्षां मदीयदीक्षार्थं नियममन्वमंस्त अनुमतवान् । अङ्गीकृतवानित्यर्थः । तपस्पतिः तपसः पालकोऽग्निस्तपो मदीयामुपसदमन्वमंस्तानुमतवान् ॥ ४० ॥

## एकचत्वारिंशी ।

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ॥४१॥

**उ०** यूपाहुतिः । उरु विष्णो । व्याख्यातम् ॥ ४१ ॥

**म०** इदानीं यूपसंपादनमन्त्राः 'गृहेषु यूपाहुतिं जुहोति चतुर्गृहीताᳪ स्रुवेण वोरु विष्णविति' ( का० ६ । १ । ३—४ ) इति । चतुर्गृहीतमाज्यमाहवनीये जुहोति यूपं छेत्तुं गमिष्यन्सा यूपाहुतिरिति सूत्रार्थः । व्याख्याता ॥ ४१ ॥

## द्विचत्वारिंशी ।

अत्यन्याँ २ऽ अगां नान्याँ २ऽ उपागामर्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्यः । तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा । ओषधे त्रायस्व स्वधिते मैनᳪ हिᳪसीः ॥ ४२ ॥

**उ०** अभिमृशति यूपम् । अत्यन्यान् अतीत्यान्यान् । यूपलक्षणलक्षितान् वृक्षान् । अगाम् । त्वां प्रत्यागतः नान्यान् उपागाम् । भवन्तं च दृष्ट्वा न अन्यान् यूपवृक्षान् उपअगाम् । उप आगतवानस्मि । किंच अर्वाक् त्वा परेभ्यो विदन् । ये त्वत्तः पराञ्चो वृक्षास्तेभ्यस्त्वामर्वाक् अविदम् । विदिर्लाभार्थो ज्ञानार्थो वा । लब्धवानस्मि ज्ञातवान्वा । परः परस्ताच्च अवरेभ्यस्त्वाम् अविदमित्यनुवर्तते । तं त्वां लक्षण्यं जुषामहे सेवामहे । देव वनस्पते । देव दानादिगुणयुक्त वनस्पते । देवयज्यायै देवयागाय । किंच देवाश्च त्वां भवन्तं देवयागाय जुषन्तां सेवन्ताम् । उपस्पृशति । विष्णवे त्वा । तादर्थ्ये चतुर्थी । विष्णवे यज्ञाय त्वाम् । उपस्पृशामीति शेषः । कुशतरुणमन्तर्दधाति । ओषधे त्रायस्व व्याख्यातम् । प्रहरति । स्वधिते मैनᳪ हिᳪसीः व्याख्यातम् ॥ ४२ ॥

**म०** 'आज्यशेषमादाय स तक्ष्णा गच्छति यूपमभिमृशत्यत्यन्यानिति प्राङ् तिष्ठन्नभिमन्त्रयते वेति' ( का० ६ । १ । ५—७ ) । यूपाहुतिशेषाज्ययुतो यूपतक्षणार्थं वनं गत्वा यूपमभिमृशेदभिमन्त्रयेद्वेति सूत्रार्थः । वनस्पतिदेवत्यम् । वृक्षा द्विविधाः यूप्या अयूप्याश्च । पलाशखदिरबिल्वादयो यूप्याः निम्बजम्बीरादयस्त्वयूप्याः । हे पुरोवर्ति यूपवृक्ष, त्वत्तोऽन्यान्कांश्चिद्यूप्यानपि समप्रदेशजन्मादिलक्षणरहितानत्यगाम् अतिक्रान्तवानस्मि अन्यांश्चायूप्यान्नोपागाम् । किंच परेभ्यो वृक्षेभ्यो दूरवर्तिभ्योर्वाक् निकटं त्वा त्वामविदं लब्धवानस्मि । अवरेभ्यो निकटेभ्यः परः परस्तादविदं 'विद्लृ लाभे' 'पुषादि—' ( पा० ३।१।५५) इत्यङ् लुङि रूपम् । किंच हे वनस्पते वनस्य पते, हे देव दीप्यमान वृक्ष, देवयज्यायै देवयागार्थं तं तादृशं त्वां वयं जुषामहे सेवामहे । देवा अपि देवयज्यायै त्वा जुषन्तां सेवन्ताम् । 'स्रुवेणोपस्पृशति विष्णवे त्वेति' ( का० ६ । १ । ११ ) । हे यूपवृक्ष, त्वा त्वां विष्णवे यज्ञाय उपस्पृशामीति शेषः । 'यज्ञो वै विष्णुः' इति श्रुतेः 'ओषध इति कुशतरुणं तिरस्कृत्येति' ( का० ६ । १ । १२ ) । यूपवृक्षस्य कुशमन्तर्धानं कुर्यादिति सूत्रार्थः । हे ओषधे, त्वं त्रायस्व स्वधितिभयात् मां रक्ष । 'स्वधित इति परशुना प्रहरतीति' ( का० ६ । १ । १३ ) । हे स्वधिते परशो, एनं यूपं मा वधीः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

द्यां मा लेखीरन्तरिक्षं मा हिᳪसीः पृथिव्या संभव । अयᳪ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयᳪ रुहेम ॥४३

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां पंचमोऽध्यायः॥५॥

**उ०** पतन्तमभिमन्त्रयते । द्यां मा लेखीः 'लिख अक्षरविन्यासे' इह तु हिंसार्थः । द्युलोकं हिंसीः अन्तरिक्षं मा हिंसीः । पृथिव्या संभव संगतो भव । वज्ररूपत्वाद् यूपस्य लोकानां शान्तिराशास्यते । कस्मात्त्वमेवमुच्यसे द्यां मालेखीरित्यत आह । अयं हीति । हिशब्दो यस्मादर्थे । यस्मादयं त्वां स्वधितिः वज्ररूपः कुठारः तेतिजानः । 'तिज निशाने' इह तु हिंसार्थः । उत्सहमानः । प्रणिनाय प्रणयति । महते सौभगाय । सुभगो यज्ञः तस्य हि महदैश्वर्यं विद्यते शोभनं च । स्वार्थे अण् । महते यज्ञायेत्यर्थः । सौभाग्याय वा । स्थाणौ जुहोति । अतस्त्वम् । हे देव वनस्पते, अतः अस्मात् स्थाणोस्त्वं शतवल्शः बह्वङ्कुरः

शतशाखो विरोह । वयं च सहस्रवल्शाः बहङ्कुराः पुत्रपौत्रादिभिः । विरुहेम प्रजायेमहीत्याशीः ॥ ४३ ॥

इति उवटकृतौ मन्त्रभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

म० 'द्यां मा लेखीरिति पतन्तमभिमन्त्रयते' (का० ६। १।१६) इति । हे यूपवृक्ष, द्यां द्युलोकं त्वं मा लेखीः माहिंसीः। 'लिख अक्षरविन्यासे' इह तु हिंसार्थः । अन्तरिक्षं च मा हिंसीः पृथिव्या सह संभव सङ्गतो भव । यूपस्य वज्ररूपत्वाल्लोकानां शान्तिराशास्यत इति भावः । 'अयꣳहि त्वेति शोधनमभिमन्त्रणशेषो वा सविशेषोपदेशादिति' (का० ६ । १ । १८—१९) हि यस्मात् हे छिन्नवृक्ष, तेतिजानोऽतितीक्ष्णोऽयं स्वधितिः कुठारो महते सौभगाय सौभाग्याय दर्शनीयत्वाय । यद्वा सुभगो यज्ञः स एव सौभगः स्वार्थेऽण् । यज्ञाय त्वां प्रणिनाय प्रणयति यूपत्वं प्रापयति । 'छन्दसि लुङ्लङ्लिटः' (पा० ३ । ४। ६) इति वर्तमाने लिट् । 'तिज निशाने' अस्माद्यङन्ताच्छानचि तेतिजान इति रूपम् । अतस्त्वया छेदात्र भेतव्यमिति भावः । 'अतस्त्वमित्यावृश्चने जुहोति यूपे वेति' (का० ६ ।१। २०—२१) । हे देव वनस्पते, अतोऽस्मात्स्थाणोः त्वं शतवल्शः बहङ्कुरः सन् विरोह विशेषेण जायस्व। वयं च सहस्रवल्शाः पुत्रपौत्रादिभिर्बहुशाखोपेता विरुहेम प्रजायेमहि ॥ ४३ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे ।
आतिथ्यात्स्थाणुहोमान्तः पञ्चमोऽध्याय ईरितः ॥ ५ ॥
इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
पञ्चमोऽध्यायः ॥ ५ ॥

---

# षष्ठोऽध्यायः ।

## तत्र प्रथमा ।

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । आद॑दे॒ नार्य॑सी॒दम॒हꣳरक्ष॑सां ग्री॒वा अपि॑कृन्तामि । यवो॑ऽसि य॒वया॒स्मद्द्वेषो॑ य॒वयारा॑तीर्दि॒वे त्वा॒न्तरि॑क्षाय त्वा पृथि॒व्यै त्वा॒ शुन्ध॑न्तां॒ल्लो॒काः पि॑तृ॒षद॑नाः पितृ॒षद॑नमसि ॥ १ ॥

उ० अभ्रिमादत्ते । देवस्य त्वा । परिलिखति इदमहम् । यवानावपति यवोसि । प्रोक्षति दिवे त्वा । शेषमासिञ्चति शुन्धन्तां लोकाः पितृषदनाः । दर्भान् क्षिपति पितृषदनमसि । एतानि षट् यजूंषि व्याख्यातानि ॥ १ ॥

म० सौमिकवेदिप्रधाने पञ्चमाध्याये आतिथ्यमारभ्य यूपनिर्माणपर्यन्ता मन्त्रा उक्ताः अग्नीषोमीयपशुप्रधाने षष्ठेऽध्याये यूपसंस्कारमारभ्य सोमाभिषवोद्योगपर्यन्ता मन्त्रा उच्यन्ते । 'देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमिति' (का० ६ । २ । ८) 'यवोसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादवटे शेषमासिञ्चति शुन्धन्तामिति बर्हीꣳषि प्राग्युदञ्चि च प्रास्यति पितृषदनमसीति' (६ । २ । १५—१८) । एतानि षड्यजूंषि औदुम्बरीविषये (अ० ५ क० २६) व्याख्यातानि ॥ १ ॥



## द्वितीया ।

अ॒ग्रे॒णीर॑सि स्वावे॒श उ॑न्नेतॄ॒णामे॒तस्य॑ वित्ता॒दधि॑ त्वा स्थास्यति दे॒वस्त्वा॑ सवि॒ता मध्वा॑नक्तु सुपिप्प॒लाभ्य॒स्त्वौष॑धीभ्यः । द्यामग्रे॒णास्पृ॑क्ष॒ आन्तरि॑क्षं॒ मध्ये॑नाप्राः पृथि॒वीमुप॑रेणादृꣳहीः ॥ २ ॥

उ० प्रथमशकलं प्रास्यति । अग्रेणीरसि । अग्रे प्रथमं यूपस्य छिद्यमानस्यापनीयत इत्यग्रेणीः यूपावयवभूत इत्यर्थः। यद्वा अग्रेऽवस्थितो यूपमवटंप्रति नयतीत्यग्रेणीः पुरःसर इत्यर्थः । यस्त्वमग्रेणीरसि । स्वावेशमुन्नेतॄणाम् ऊर्ध्वं नेतॄणामध्वर्यूणां स्वावेशः । ते ह्येवमस्मिन्यूपावटे सुखेनावेशयन्ति स्थापयन्ति स हि लघुप्रमाणो भवति । स त्वं हे यूपशकल, एतस्य वित्तात् । 'विद ज्ञाने' । एतस्य कर्मणो विद्धि विदितार्थो भव । कतमं तत्कर्म चेत् । अधि त्वा स्थास्यति । अधीत्युपरिभावमैश्वर्यं वा । अधि उपरि यूपस्त्वां स्थास्यति । यूपमनक्ति । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। देवस्त्वा । देवः त्वां हे यूप, सवित्रा मध्वा मधुस्वादेन आज्येन आनक्तु म्रक्षयतु । चषालं प्रतिमुञ्चति । सुपिप्पलाभ्यः । पिप्पलं फलम् । शोभनफलाभ्य ओषधीभ्योर्थाय त्वाम् प्रतिमुञ्चामीति वाक्यशेषः । उच्छ्रयति । द्यामग्रेण । यूपस्य महिमोच्यते । द्यां द्युलोकम् अग्रेण अपस्पृक्षः पृष्टवानसि । आ अन्तरिक्षं मध्येनाप्राः। 'प्रा पूरणे'। आ अप्राः । आपूरितवानसि अन्तरिक्षं मध्येन । पृथिवीं उपरेण । उपरमित्यधस्तनेन प्रदेशेन, यूप इत्यपरशब्देन तेन प्रदेश उच्यते यूपस्य । अदृꣳहीः दृढीकृतवानसि॥ २ ॥

म० 'प्रथमशकलं चाग्रेणीरसीति' (का० ६ । २ । १९)। यूपावटे प्रथमशकलं निक्षिपेदिति सूत्रार्थः । हे यूपशकल, त्वमग्रेणीरसि अग्रे प्रथमं यूपस्य छिद्यमानस्य नीयतेऽपनीयत इत्यग्रेणीः । यूपस्य प्रथमावयवभूतो भवसीत्यर्थः । यद्वा अग्रे प्रथमं यूपमवटं प्रति नयतीत्यग्रेणीः पुरःसरः । किंभूतस्त्वम् । उन्नेतॄणामुन्नयनकर्तॄणामध्वर्यूणां स्वावेशः सुखेनावेशयितुं शक्यः ते ह्येनं यूपावटे सुखेनावेशयन्ति लघुत्वात् । स त्वमेतस्य कर्मणो वित्तात् । कर्मणि षष्ठी । एतत्कर्म विद्धि जानीहि । किं तत्कर्म । यत् यूपः त्वामधि स्थास्यति त्वदुपर्यवस्थानं करिष्यति तत्त्वया बोद्धव्यमित्यर्थः । 'देवस्य त्वेत्यनक्तीति' (का० ६ । ३ । २) यूपमिति शेषः । यूपदेवत्यम् । हे यूप, सविता देवः मध्वा मधुना मधुरेणाज्येन त्वा त्वामनक्तु । मध्वा । अनित्यमागमशासनमिति नुमभावः । 'चषालमुभय-

तोऽक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति' ( का० ६ । ३ । ३-४ )। अथ उपरि चाज्येन लिप्तं चषालं यूपाग्रे स्थापयेदिति सूत्रार्थः । हे चषाल, त्वां यूपस्याग्रे प्रतिमुञ्चामीति शेषः । किमर्थं-मोषधीभ्यः व्रीह्याद्योषधिनिष्पत्त्यर्थम् । किंभूताभ्य ओषधीभ्यः । सुपिप्पलाभ्यः शोभनफलयुक्ताभ्य इत्यर्थः । ( का० ६ । ३ । ७ ) द्यामग्रेणेत्युच्छ्रयतीति । उन्नतं कुर्यादित्यर्थः । यूपदेवत्यम् । यूपस्य महिमोच्यते । हे यूप, त्वमग्रेणाग्रभागेन द्यां दिवमस्पृक्षः स्पृष्टवानसि । स्पृशतेर्लुङि 'शल इगुपधादनिटः क्सः' ( पा० ३ । १ । ४५ ) इति क्सप्रत्ययः । मध्येन मध्यभागेनान्तरिक्षमा अप्राः आपूरितवानसि । 'प्रा पूरणे' । अपरेणाधोभागेन अनिष्टप्रदेशेन पृथिवीं भूमिमदंहीः दृढीकृतवानसि ॥ २ ॥

## तृतीया ।

या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि ॥ ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि । ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ॥ ३ ॥

**उ०** मिनोति या ते धामानि । 'डुमिञ् प्रक्षेपणे' । त्रिष्टुप् यूपदेवत्या । यूप उच्यते । यानि ते तव संबन्धीनि धामानि । स्थानजन्मज्योतिर्वचनो वा धामशब्दः । स्थानानीहाभिप्रेतानि । उश्मसि कामयामहे । गमध्यै गमनाय । यानि त्वदीयानि स्थानानि कामयामहे । वयं गमनायेति यद्वृत्तयोगादिह तदनुप्रयोगो भवितुमर्हति । तत्र तेषु स्थानेषु । गावो रश्मयः । भूरिशृङ्गा बहुदीप्तयः । ज्वलन्नामसु शृङ्गाणीति पठितम् । अयासः अयनाः गन्तारः । अत्राह तदुरुगायस्य विष्णोः । अत्रशब्दस्तत्रशब्दस्यार्थे परोक्षत्वात् । अह इति विनिग्रहार्थीयः । तत्र चैतद् उरुगायस्य महागतेर्विष्णोः संबन्धि परममुत्कृष्टं पदमादित्यमण्डलाख्यमर्वाचीनं भारि भाति । तकारस्य स्थाने छान्दसो रेफः । भूरि बहुप्रकारम् । पांसुभिः पर्यूहति । ब्रह्मवनि त्वा व्याख्यातम् । पर्यूषति । ब्रह्मदृꣳह व्याख्यातम् ॥ ३ ॥

**म०** 'या त इति मिनोतीति' ( का० ६ । ३ । ८ ) अवटे यूपं प्रक्षिपेदित्यर्थः । यूपदेवत्या त्रिष्टुप् दीर्घतमोदृष्टा । हे यूप, या यानि ते तव धामानि स्थानानि गमध्यै गन्तुं वयमुश्मसि उश्मः कामयामहे । 'तुमर्थे से-' (पा० ३ । ४ । ९) इत्यादिना । गच्छतेस्तुमर्थे कध्यैन्प्रत्ययः नित्त्वादाद्युदात्तः । उश्मसि 'वश कान्तौ' लटि उत्तमबहुवचने शपो लोपे संप्रसारणे 'इदन्तो मसि' ( पा० ७ । १ । ४६ ) इति इकारः । यानि तव स्थानानि गन्तुं वयमिच्छाम इत्यर्थः । किंच यत्र येषु तव स्थानेषु गावो रश्मयः । अयासः अयन्तीति अयाः 'अय गतौ' गन्तारो वर्तन्ते । सर्वे किरणा येषु स्थानेषु गता इत्यर्थः । किंभूता गावः । भूरिशृङ्गाः भूरि बहु शृङ्गं दीप्तिर्येषां ते भूरिशृङ्गाः । प्रज्वलन्नामसु शृङ्गाणीति पठितम् । अहेत्येवार्थे । विष्णोः व्यापकस्य ब्रह्मणः तत् परममुत्कृष्टं पदं भूरि महत् आदित्यमण्डललक्षणमत्रैव अवभारि अवभाति । तकारस्थाने छान्दसो रेफः । यद्वा भूरि बहुप्रकारं यथा तथा अत्राह अत्रैव एष्वेव स्थानेषु अवभाति शोभते । किंभूतस्य विष्णोः । उरुगायस्य 'गाङ्गतौ' गानं गायः उरुर्गायो गतिर्यस्य । महागतेरित्यर्थः । यद्वा उरुभिर्महात्मभिर्गीयते स्तूयतेऽसावुरुगायस्तस्य । तादृशस्थानप्राप्तिहेतुभूतकर्मणे हे यूप, त्वमत्रावटे तिष्ठेत्याशयः । 'ब्रह्मवनि त्वेति पाꣳसुभिः । ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषतीति' ( का० ६ । ३ । १०—११ ) । द्वे यजुषी औदुम्बरीविषये (अध्या० ५ क० २७ ) व्याख्याते ॥ ३ ॥

## चतुर्थी ।

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ४ ॥

**उ०** वाचयति । विष्णोः कर्माणि । द्वे गायत्र्यौ वैष्णव्यौ । हे ऋत्विजः, विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत यतः । तसिप्रकरणे आद्यादिभ्य उपसंख्यानं वक्तव्यम् । यतो यैर्वीर्यैः । व्रतानि । व्रतमिति कर्मनाम । आधानपशुसोमप्रभृतीनि कर्माणि आत्मनि । पस्पशे 'स्पश बन्धने' बद्धवान् । विष्णुर्हि अधिष्ठात्री देवता यज्ञानाम् । यद्वा विष्णोर्वीर्याणि पश्यत । यैर्वीर्यैस्तानि व्रतानि कर्माणि अग्निवायुसूर्याणां स्वानि स्वान्यप्रमत्ताः एतानि कुरुतेत्येवं पस्पशे निबद्धवान् । किंच यश्च विष्णुः इन्द्रस्य सखा वृत्रवधादिषु कर्मसु । कथंभूतः सखा । युज्यः 'युजिर् योगे' । योगार्हः अनुरूप इत्यर्थः ॥४॥

**म०** 'विष्णोः कर्माणीति वाचयति यूपमन्वारब्धमिति' ( का० ६ । ३ । १२ ) । यूपं स्पृष्टवन्तं यजमानं वाचयेदिति सूत्रार्थः । द्वे वैष्णव्यौ गायत्र्यौ मेधातिथिदृष्टे । हे ऋत्विजः, विष्णोः यज्ञाधिष्ठातुः कर्माणि सृष्टिसंहारादिचरितानि यूयं पश्यत । यतो यैः कर्मभिः व्रतानि भवदीयानि लौकिकवैदिककर्माणि पस्पशे बद्धवान् निर्मितवानित्यर्थः । 'स्पश बन्धने' स विष्णुरिन्द्रस्य युज्यः वृत्रवधादिकर्मसु योज्योऽनुरूपः सखा मित्रम् । यद्वा विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत यतो यैर्वीर्यैर्व्रतानि आधानपशुसोमादीनि कर्माणि पस्पशे आत्मनि बद्धवान् । यद्वा यैर्वीर्यैर्व्रतानि कर्माणि अग्निवायुसूर्याणां स्वानि स्वानि एतान्यप्रमत्ताः कुरुतेत्येवं पस्पशे निबद्धवान् । शिष्टं समानम् ॥ ४ ॥

## पञ्चमी।

तद्विष्णोः प॒र॒मं प॒दꣳ सदा॑ पश्यन्ति सू॒रयः॑। दि॒वी॒व॒ चक्षु॒राततम्॥ ५॥

**उ०** चषालमुदीक्षते। तद्विष्णोः। तदः प्रतियोगिनात्र पूर्वं यद्वृत्तेन भवितव्यम्। यद्विज्ञानघनबहुलमानन्दस्वभावं च तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः पण्डिताः वेदान्तज्ञानरहस्यविवृतसंपुटाः। कथंभूतं पदं पश्यन्ति। दिवीव द्युलोकमध्यगतमिव। चक्षुः आदित्यमण्डलम्। आततं विततं विस्तारितम्। चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते। 'चक्षुर्मित्रस्य वरुणस्याग्नेः' 'तच्चक्षुर्देवहितम्' इति च। यद्वा। यद्वृत्तसंबन्धो द्वितीयोर्धर्चः प्रथमः क्रियते। परमपदशब्देनादित्य उच्यते। इवश्चानर्थकः तद्दिवि चक्षुरादित्याख्यं विततं तद्विष्णोः परमं पदं तृतीयं सदा पश्यन्ति पण्डिता अधियज्ञविदः॥ ५॥

**म०** 'तद्विष्णोरिति चषालमीक्षमाणमिति' (का० ६। ३। १३) यूपकटकं प्रेक्षमाणं यजमानं वाचयेदिति सूत्रार्थः। सूरयः विद्वांसो वेदान्तपारगाः विष्णोः तत्परमं पदं स्वरूपं सदा पश्यन्ति। कीदृशम्। दिवि आकाशे निरावरणे चक्षुरिवाततं व्याप्तम्। यद्वा यत् दिवि आकाशे चक्षुरादित्यमण्डलमाततं विस्तारितम्। इवोऽनर्थकः। चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते। 'चक्षुर्मित्रस्य वरुणस्य' (अ० ७ क० ४२) 'तच्चक्षुर्देवहितम्' (अ० ३६ क० २४)॥ ५॥

## षष्ठी।

प॒रि॒वीर॑सि॒ परि॑ त्वा॒ दैवी॒र्विशो॑ व्ययन्तां॒ परी॒मं यज॑मान॒ꣳ रायो॑ मनु॒ष्या॒णाम्। दि॒वः सू॒नुर॑स्यै॒ष ते॑ पृथि॒व्यां लो॒क आ॑र॒ण्यस्ते॑ प॒शुः॥ ६॥

**उ०** परिव्ययति। परिवीरसि। 'व्येञ् संवरणे' इत्यस्य क्तप्रत्ययार्थे क्विपि संप्रसारणम्। अस्माभिः परिवीतः परिवारितः परिवेष्टितो वा त्वमसि। अतः परिव्ययन्तां त्वां हे यूप। दैवीर्विशः 'दैव्यो वा एता विशो यत्पशवः' इति श्रुतिः। त्वत्प्रसादाच्च परिव्ययन्ताम् परिवारयन्तु इमं यजमानं रायो धनानि। मनुष्याणां मनुष्याणां मध्ये। निर्धारणे षष्ठी। स्वरुमवगूहति। दिवः सूनुरसि। द्युलोकस्य त्वं सूनुः पुत्रोसि। द्युलोकाद्वर्षति तस्माद्यूपो जायते यूपात्स्वरुरित्यनया प्रणालिकया दिवः सूनुः स्वरुः। द्वादश उपशयस्तं निदधाति। एष ते पृथिव्याम्। एष ते तव पृथिव्यां लोकः आश्रयस्थानमित्यर्थः। 'पशवे यूपमुच्छ्रयन्ति' इति श्रुतिः। यूपस्य पशुना भवितव्यमित्यत आह। आरण्यस्तव पशुः॥ ६॥

**म०** 'त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति' (का० ६।३। १५)। त्रिभिर्गुणैरवयवैरुपेता त्रिव्याममिता कुशसंबन्धिनी या रशना रज्जुस्तया नाभिप्रमाणे यूपप्रदेशे आवृत्तित्रयं यथा भवति तथा यूपमावेष्टयेदिति सूत्रार्थः। यूपदैवत्यं यजुः। हे यूप, त्वं परिवीरसि परितो रशनया वीतो वेष्टितोऽसि। यद्वास्माभिः परिवारितोऽसि। 'व्येञ् संवरणे' इत्यस्य क्तप्रत्ययार्थे क्विपि संप्रसारणम्। किंच दैवीर्विशः देवसंबन्धिन्यः प्रजाः मरुद्गणादयः त्वा त्वां परिव्ययन्तां परितो वेष्टयन्तु। यद्वा दैवीर्विशः पशवः त्वा परिव्ययन्ताम्। 'दैव्यो वा एता विशो यत्पशवः' इति श्रुतेः। किंच मनुष्याणां संबन्धिन्यो रायो धनानि इमं यजमानं परिव्ययन्तां वेष्टयन्तु। यद्वा मनुष्याणामिति निर्धारणे षष्ठी। मनुष्याणां मध्ये रायो धनानि इमं यजमानमेव परिव्ययन्ताम्। 'यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां दिवः सूनुरसीति' (का० ६। ३। १७) अष्टास्रे यूपस्य याश्रिरग्निसमीपे स्थिता साग्निष्ठा तस्या उत्तरभागे रशनायां स्वरुनामकं शकलमवसृजेदिति सूत्रार्थः। हे स्वरो, त्वं दिवः द्युलोकस्य सूनुः पुत्रोऽसि। द्युलोकाद्वर्षति ततो यूपो जायते यूपात्स्वरुरिति प्रणालिकया दिवः सूनुः स्वरुः। 'वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येष त इति' (का० ८। ८। २३)। यूपैकादशिनीपक्षे वर्षिष्ठाद्यूपाद्दक्षिणभागे वितष्टमष्टाश्रिं द्वादशं यूपं निदधाति स्थापयति न तु निखनतीति सूत्रार्थः। यूपदेवत्यम्। हे यूप, पृथिव्यामेष ते तव लोकः आश्रयस्थानमित्यर्थः। ननु 'पशवो वै यूपमुच्छ्रयन्ति' (३। ७। ३। ४) इति श्रुतेः यूपे पशुना भवितव्यमित्यत आह। ते तव आरण्योऽरण्ये भवोऽरण्यसंबन्धी पशुः वने वर्तमानः पशुस्तवैवेत्यर्थः॥ ६॥

## सप्तमी।

उ॒पा॒वीर॑स्युप॑ दे॒वान्दैवी॒र्विशः॒ प्रागु॑रु॒शिजो॒ वह्नि॑तमान्। देव॑ त्वष्ट॒र्वसु॑ रम ह॒व्या ते॑ स्वदन्ताम्॥७॥

**उ०** तृणमादत्ते। उपावीरसि। उप समीपे अवस्थितः अवति रक्षतीत्युपावीः द्वितीयः सखा त्वमसीत्यर्थः। पशुमुपस्पृशति। उपदेवान् उपागुः उप गच्छन्तु देवान्प्रति। दैवीर्विशः। 'दैव्यो वा एता विशो यत्पशवः' इति श्रुतिः। कथंभूतान्देवान्। उशिजः मेधाविनः। वह्नितमान् वोढृतमान्। वहन्ति हि ते यजमानं स्वर्गं प्रति कर्मण्यङ्गभावमुपगच्छन्तः। हे देव त्वष्टः, वसु रम पशुलक्षणं वसु रमय। णिचो लोपश्छान्दसः। हव्या ते स्वदन्ताम्। एवं त्वष्टारमुक्त्वा अथेदानीं पशुमाह। हव्या हवींषि ते त्वदीयानि स्वदन्ताम्। 'स्वद स्वर्द आस्वादने'। णिचो लोपः। आस्वादयन्तु देवा इति शेषः॥ ७॥

**म०** 'उपावीरसीति तृणमादायेति' (का० ६। ३। १९) हे तृणविशेष, त्वमुपावीरसि उप समीपमवति गच्छतीत्युपावीः।

यद्वा उप समीपेऽवस्थितोऽवति रक्षतीत्युपावीः पशोर्द्वितीयः सखा त्वमसीत्यर्थः । 'तेन पशुमुपस्पृशत्युपदेवानिति' ( का० ६ । ३ । २० ) । गृहीतेन तृणेन पुरस्तात्प्रत्यञ्चं स्थितं पशुं स्पृशेदिति सूत्रार्थः । दैवीर्विशः पशवो देवानग्नीषोमादीनुप प्रागुः उपगच्छन्तु । 'दैव्यो वा एता विशो यत्पशवः' इति श्रुतेः । 'इण् गतौ' इत्यस्मात् 'छन्दसि लुङ्लङ्लिटः' (पा० ३ । ४ । ६ ) इति । कालमात्रे लुङ् । 'इणो गा लुङि' ( पा० २ । ४ । ४५ ) इति गादेशः । किंभूतान्देवान् । उशिजो मेधाविनः । यद्वा हवींषि कामयमानान् वहन्तीति वह्रयः अतिवह्रयो वहितमास्तान् । यजमानं स्वर्गं प्रति प्रापयतां देवानां मध्ये श्रेष्ठतमानित्यर्थः । एवं पशून्प्रार्थ्य त्वष्टारमाह । हे देव त्वष्टः, त्वं वसु पशुलक्षणं धनं रम रमय । 'छन्दस्युभयथा' ( पा० ३ । ४ । ११७ ) इति शपोऽप्यार्धधातुकसंज्ञत्वाण्णिचो लोपः । एवं त्वष्टारमुक्त्वा पुनः पशुमाह । हे पशो, ते तव हव्या हवींषि स्वदन्ताम् । 'स्वद स्वाद आस्वादने' । स्वादूनि भवन्तु । यद्वा हवींषि स्वदन्तामास्वादयन्तु देवा इति शेषः पूर्ववण्णिचो लोपः ॥ ७ ॥

## अष्टमी ।

रेव॑ती॒ रम॑ध्वं॒ बृह॑स्पते धा॒रया॒ वसू॑नि । ऋ॒तस्य॑ त्वा देवहविः॒ पाशे॑न॒ प्रति॑मुञ्चामि॒ धर्षा॒ मानु॑षः॥८॥

**उ० रेवती रमध्वम् । लिङ्गव्यत्ययः । हे रेवन्तो धनवन्तः । पशवः, रता भवत । त्वमपि बृहस्पते धारय निश्चलीकुरु वसूनि पशुलक्षणानि । पशुं बध्नाति । ऋतस्य त्वा । ऋतस्य यज्ञस्य पाशेन त्वा त्वां हे देवहविः पशो, पाशेन प्रतिमुञ्चामि । प्रतिपूर्वो मुञ्चिर्बन्धने वर्तते । बध्नामि । एवं पशुं संबोध्याथ मनुष्यस्य शमित्रादेः समर्पयति । धर्षा मानुषः । धर्षेति विकरणव्यत्ययश्छान्दसः । प्रथमपुरुषस्य स्थाने मध्यमः । धृष्णोतु शक्नोतु शामयितुं मानुषः । यद्वा यस्माद् ऋतस्य यज्ञस्य त्वां हे देव हविः, पाशेन प्रतिमुञ्चामि बध्नामि तस्माद् धृष्णोतु त्वां मानुषः॥ ८ ॥**

**म०** रयिर्धनं क्षीरादि यासां ता रेवत्यः । लिङ्गवचनव्यत्ययः रेवन्तः 'रेवन्तो हि पशवः' ( ३।७।३।१३) इति श्रुतेः हे रेवन्तः क्षीरादिधनवन्तः पशवः, यूयं यजमानगृहे रमध्वं संक्रीडध्वम् । एवं पशुमुक्त्वा बृहस्पतिमाह । हे बृहस्पते, हे ब्रह्मन्, वसूनि पशुलक्षणानि धारया निश्चलीकुरु । 'ब्रह्म वै बृहस्पतिः पशवो वसु' ( ३ । ७ । ३ । १३ ) इति श्रुतेः । 'द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति' (का० ६ । ३ । २६ ) । अवयवद्वयोपेतया व्यामद्वयपरिमितया कुशकृतया रज्ज्वा नागपाशं कृत्वा शृङ्गयोरन्तराले पशुं बध्नाति कथम् । अभिदक्षिणं दक्षिणशृङ्गमभिमुखं पाशं प्रतिमुञ्चेदिति सूत्रार्थः । हे देवहविः देवानां हवीरूप पशो, ऋतस्यावश्यंभाविफलोपेतत्वात्सत्यस्य यज्ञस्य पाशेन त्वा त्वां प्रतिमुञ्चामि बध्नामि । प्रतिपूर्वो मुञ्चतिर्बन्धने वर्तते । एवं पशुं संबोध्य शमित्रे समर्पयति मानुषो धर्षा । 'ञिधृषा प्रागल्भ्ये' विकरणपुरुषव्यत्ययः । मानुषः शमिता धृष्णोतु शमयितुं शक्नोतु पाशेन बद्धत्वादिति भावः । संहितायां 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति सूत्रेण धर्षेत्यत्र दीर्घः ॥ ८ ॥

## नवमी ।

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । अ॒ग्नीषोमा॑भ्यां॒ जुष्टं॒ नियु॑नज्मि । अ॒द्भ्यस्त्वौष॑धी॒भ्योऽनु॑ त्वा मा॒ता म॑न्यता॒मनु॑ पि॒तानु॒ भ्राता॒ सग॑र्भ्यो॒ऽनु सखा॒ सयू॑थ्यः । अ॒ग्नीषोमा॑भ्यां॒ त्वा॒ जुष्टं॒ प्रोक्षा॑मि ॥ ९ ॥

**उ०** **यूपे बध्नाति पशुम्** । देवस्य त्वा व्याख्यातः । अग्नीषोमाभ्यां जुष्टमभिरुचितं नियुनज्मि निबध्नामि । पशुं प्रोक्षति । अद्भ्यस्त्वौषधीभ्यः । हे पशो, अद्भ्यः त्वामारभ्य ओषधीभ्यश्च आरभ्य आदितः सर्वं संपद्यते । अग्नीषोमाभ्यां त्वां जुष्टमभिरुचितं पशुं प्रोक्षामि मेध्यं करोमि । अमुमेवार्थं श्रुत्या स्पष्टयति 'इदꣳ हि यदावर्षत्यथौषधयो जायन्ते' इत्यादिकया । अनुत्वेति व्याख्यातम् । इह त्वेवं संबन्धः । अद्भ्य आरभ्य अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि हे पशो, प्रोक्षमाणं त्वां मात्रादयोऽनुमन्यन्तामिति ॥ ९ ॥

**म०** 'देवस्य त्वेति यूप इति' ( का० ६ । ३ । २७ ) यूपे पशुं बध्नातीति शेष इति सूत्रार्थः । अग्नीषोमदेवताभ्यां जुष्टमभिरुचितं पशुं नियुनज्मि निबध्नामि व्याख्यातमन्यत् । 'अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षतीति' ( का० ६ । ३ । ३० ) हे पशो, अद्भ्यः ओषधीभ्यः । अत्र विभक्तिव्यत्ययः । अद्भिरोषधिभिश्च । त्वा त्वां प्रोक्षामि मेध्यं करोमि । किंभूतं त्वाम् । अग्नीषोमाभ्यां जुष्टं प्रीतं दर्भैरपामुत्पूतत्वादोषधीनामपि प्रोक्षणसाधनत्वमस्त्येव । स्वमातृभक्षिताभ्यां तृणोदकाभ्यां पशोरुत्पन्नत्वात्तेनोभयेन प्रोक्षणं युक्तम् । तदाह तित्तिरः 'अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः संभवति' । किंच हे पशो, एवं प्रोक्षितं त्वां माता भूमिरनुमन्यतां, तथा पिता द्यौरनुमन्यताम्, सगर्भ्यः समानगर्भे उदरे भवः सोदरो भ्राता अनुमन्यताम् । सयूथ्यः समानयूथे भवः सखा सुहृत् अनुमन्यताम् ॥ ९ ॥

## दशमी ।

अ॒पां पे॒रुर॑स्या॒पो॑ दे॒वीः स्व॑दन्तु स्वा॒त्तं चि॒त्सदे॑वह॒विः । सं ते॑ प्रा॒णो वाते॑न गच्छता॒ꣳ सम॒ङ्गा॑नि॒ यज॑त्रैः॒ सं य॒ज्ञप॑तिरा॒शिषा॑ ॥ १० ॥

**उ० आस्ये उपगृह्णाति । अपां पेरुः । अपां पानशील-**

स्वमसि हे पशो । अधस्ताद् प्रोक्षति । आपो देवीः । आपो देव्यः स्वदन्तु आस्वादयन्तु उक्षयन्त्वेनं पशुम् । को गुण इति चेत् । स्वात्तंचित्सद्देव हविः । आस्वादितं हि सत् शोभनं देवानां हविः पशुलक्षणं भूयात् । पशुं समनक्ति । संते प्राणः । संगच्छतां ते प्राणः वातेन हे पशो, समङ्गानि यजत्रैः । संगच्छतां हे पशो, तवाङ्गानि यजत्रैः यागैः । संयज्ञपतिराशिषा संगच्छतां यज्ञपतिर्यजमानः आशिषा यज्ञफलेन स्वरुशाखाभ्याम् ॥ १० ॥

'अपां पेरुरित्यस्य उपगृह्णातीति' ( का० ६ । ३ । ३१ ) पशोर्मुखे प्रोक्षणीर्धारयेदिति सूत्रार्थः । पशुदैवतम् । हे पशो, त्वमपां जलानां पेरुः पानशीलोऽसि । पिबतीति पेरुः औणादिक एरुप्रत्ययः । उदकपानशीलो भवसि तत इदं पिबेत्यर्थः । 'आपो देवीरित्यधस्तादुपोक्षतीति' ( का० ६ । ३ । ३२ । ) पशोरधोभागे हृदि प्रोक्षेदिति सूत्रार्थः । हे पशो, आपोदेवीः अब्रूपा देव्यः स्वदन्तु त्वामास्वादयन्तु भक्षयन्तु । यद्वा आपोदेव्यः स्वदन्तु पशुं भक्षयन्तु । को गुण इति चेत् स्वात्तं चित् । चिदित्यव्ययं हेत्वर्थे । हि यतो देवहविः देवानां हविः पशुलक्षणं स्वात्तमास्वादितं सत् शोभनं देवयोग्यं भूयादिति शेषः । अब्रस्त्वेत्यादिमन्त्रत्रयेणोपरिष्टान्मुखेऽधोभागे पशोः प्रोक्षणेन सर्वं मेध्यं करोतीति तित्तिरिणा प्रतिपादितम् । तदाह 'उपरिष्टात्प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत एवैनं मेध्यं करोत्यधस्तादुपोक्षति सर्वमेवैनं मेध्यं करोतीति' । 'उत्तरमाघारमाघार्य पशुं पूर्वेॅ समनक्ति ललाटांॅसश्रोणिषु सं त इति प्रतिमन्त्रमिति' (का० ६ । ४ । २) उत्तराघारहोमानन्तरं ध्रुवासमञ्जनादर्वागेव भाले अंसयोः श्रोण्योश्च जुह्वैव पशुं समनक्ति सं त इति त्रिभिः प्रतिमन्त्रमिति सूत्रार्थः । पशुदैवतयजूंषि । ललाटाञ्जनमन्त्रः हे पशो, ते तव प्राणो बाह्येन वातेन संगच्छताम् । अथांसयोर्मन्त्रावृत्तिः अङ्गानि अंसादीनि यजत्रैः यागैः संगच्छन्ताम् । इज्यन्त इति यजत्राः । अथ श्रोण्योः यज्ञपतिर्यजमान आशिषा यज्ञफलेन संगच्छताम् ॥ १० ॥

## एकादशी ।

घृतेनाक्तौ पशूॅस्त्रायेथाॅ रेवति यजमाने प्रियं धा आविश । उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव । वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥ ११ ॥

उ० पशोर्ललाटमुपस्पृशति घृतेन । स्वरुशासावुच्येते । घृतेनाक्तौ म्रक्षितौ भवन्तौ युवां पशून् । पूजनार्थं बहुवचनम् । पशूंस्त्रायेथां पालयेथाम् । यजमानं वाचयति । रेवति । वाग्वै रेवती । हे वाक् रेवति धनवति । यजमाने प्रियं धा आविश । अस्मिन् यजमाने प्रियमभिप्रेतं धाः धेहि आविश च यजमानम् । उरोर्महतोऽन्तरिक्षाच्च गोपायेति शेषः । सजूर्देवेन वातेन । समानप्रीतिः देवेन वातेन भूत्वा । किंच अस्य पशुलक्षणस्य हविषः त्मना यज आत्मना यज । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । समस्य तन्वा भव । संभव चास्य पशोः तन्वा शरीरेण । एतदुक्तं भवति । यजमानरूपेण पशुरूपेण वा त्मना भूत्वात्मनैव यज । हे रेवति, पश्चाच्च तृणमुपास्यति । वर्षो वर्षीयसि तृणमुच्यते । हे वर्षो वर्षप्रभव । अथवा विस्तीर्ण । वर्षीयसि विस्तीर्णतरे यज्ञे । यज्ञपतिं यजमानं धाः धेहि । जुहोति । स्वाहादेवेभ्यः । जुहोति देवेभ्यः स्वाहा । द्वे यजुषी ॥ ११ ॥

म० 'स्वरुमादायांक्तोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति' ( का० ६ । ४ । १२ ) । विशसित्रा दत्तं शासं गृहीत्वा स्वयमेव यूपात् स्वरुमादाय तावसिस्वरू जुह्वग्रे घृतेनांक्त्वा ताभ्यामसिस्वरुभ्यां पशोर्ललाटं स्पृशेदिति सूत्रार्थः । स्वरुशासदैवतम् हे स्वरुशासौ, युवां घृतेनाक्तौ सन्तौ पशून् । बहुवचनं पूजार्थम् । एतं पशुं त्रायेथां पालयेथाम् । 'रेवति यजमान इति वाचयतीति' ( का० ६ । ५ । ११ ) । यजमानं वाचयेदित्यर्थः । वाग्देवतम् 'वाग्वै रेवती' इति श्रुतेः ( ३ । ८ । १ । १२ ) हे रेवति धनवति वाग्देवते, यजमानेऽस्मिन् प्रियमभिप्रेतं धाः धेहि । 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६ । ४ । ७५ ) इत्यडभावः । आविश ज्ञानप्रदानेन यजमानं प्रविश । किंच हे रेवति, वातेन देवेन सजूः समानप्रीतिर्भूत्वा उरोर्विस्तीर्णादन्तरिक्षाद्यजमानं गोपायेति शेषः । किंचास्य पशुलक्षणस्य हविषा त्मना आत्मना यज । 'मन्त्रेष्वाङ्यादेरात्मनः' ( पा० ६ । ४ । १४१) इति आकारलोपः । किंचास्य पशोस्तन्वा शरीरेण संभव एकीभव । हे रेवति, यजमानरूपेण पशुरूपेण चात्मना भूत्वा त्मना च यजेति तात्पर्यार्थः । 'पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति' ( का० ६ । ५ । १५ ) । शामित्रस्य पश्चात्प्रागग्रं तृणमुपास्यति हस्तस्थतृणद्वयमध्ये एकं क्षिपति विशसनीयस्य पशोर्भूमिसंस्पर्शपरिहारार्थमिति सूत्रार्थः । तृणदैवतम् । हे वर्षो, वर्षादुत्पन्नं वर्षुः तत्संबोधनं वर्षो वर्षप्रसव हे तृण, यद्वा वर्षो विस्तीर्ण, वर्षीयसि विस्तीर्णतरे यज्ञे यज्ञपतिं यजमानं धाः धेहि । 'देवेभ्यः स्वाहेति जुहोतीति' ( का० ६ । ५ । २४ ) मन्त्रयोरैक्येऽपि पाठभेदतात्पर्यं तित्तिरिराह । 'पुरस्तात्स्वाहाकृतयोऽन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेति' ॥ ११

## द्वादशी ।

माहिर्भूर्मा पृदाकुर्नमस्त आतानानर्वा प्रेहि । घृतस्य कुल्या उप ऋतस्य पथ्या अनु ॥ १२ ॥

उ० नियोजनीं चात्वाले प्रास्यति । माहिर्भूः । रज्जु-

रुच्यते । मा सर्पाकारा भूयाः । मा च पृदाकुर्भूयाः । पृदाकुः अजगरः । पत्नीं पशुंप्रति नयन्वाचयति । नमस्त आतान । पत्नी नमस्कारादिराशिर्भिर्यज्ञं पूजयति । नमस्तव हे आतान यज्ञ । 'यज्ञो वा आतानो यज्ञं हि तन्यते' इति श्रुतिः । अनर्वा प्रेहि । अनर्वा अपृच्यतोऽन्यस्मिन् अनाश्रितोऽन्यस्मिन् प्र इहि प्रेहि प्रगच्छ आसमाप्तेः । घृतस्य कुल्या उप । कुल्या नद्यः घृतनदीरुपतिष्ठमानाः प्रेहि । बह्वत्र घृतमित्यभिप्रायः । ऋतस्य पथ्या अनु । ऋतस्य यज्ञस्य पथ्याः पथिभवाः पथ्याः घृतकुल्याः । सन्नाज्यपृषदाज्यकुल्योपलक्षणार्थं घृतकुल्याग्रहणम् । अनु प्रगच्छ ॥ १२ ॥

**म०** 'वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति' ( का० ६ । ५ । २६ ) वपा श्रप्यते याभ्यां ते वपाश्रपण्यौ काष्ठविशेषौ ताभ्यां कृत्वा नियोजनीं पशुबन्धनरज्जुं द्विगुणां चात्वाले क्षिपेदिति सूत्रार्थः । रज्जुदेवत्यम् । हे रज्जो, त्वमहिः सर्पाकारा मा भूः मा भूयाः । पृदाकुः अजगराकारापि मा भूः । 'पान्नेजनहस्तां वाचयति नयन्नमस्त आतानेति' ( का० ६ । ६।१ ) । पादौ निज्येते क्षाल्येते येन स पान्नेजनः पादनेजनार्थं उदककलशः । पादग्रहणमन्यावयवोपलक्षणम् । पान्नेजनो मुखाद्यवयवशोधनार्थो जलकलशो हस्ते यस्याः सा पान्नेजनहस्ता तां पत्नीं नयन् गार्हपत्यसमीपात्पशुशोधनाय नयन्सन् प्रतिप्रस्थातामुं मन्त्रं तां वाचयेदिति सूत्रार्थः । यज्ञदेवत्यम् । आ समन्तात्तन्यते विस्तार्यते इत्यातानो यज्ञः । 'यज्ञो वा आतानो यज्ञꣳहि तन्वते' ( ३ । ८ । २ । २ ) इति श्रुतेः । हे आतान यज्ञ, ते तुभ्यं नमः । त्वमनर्वा शत्रुरहितः सन् प्रेहि समाप्तिपर्यन्तं प्रकर्षेण गच्छ । इयर्ति वधार्थमित्यर्वा नास्त्यर्वा यस्यासावनर्वा । 'अनर्वा प्रेहीत्यसपत्नेन प्रेहि' इति श्रुतेः । 'अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै' इति तित्तिरिवाक्यात् । किंच ऋतस्य यज्ञस्य पथ्याः पथि भवाः घृतस्य कुल्याः घृतनदीः अनुलक्ष्य उप प्रेहि गच्छ । सान्नाय्यपृषदाज्यकुल्योपलक्षणार्थं घृतकुल्याग्रहणम् । अत्र यज्ञे बहु घृतमाहुतमित्यभिप्रायः ॥ १२ ॥

## त्रयोदशी ।

दे॒वीरा॑पः शु॒द्धा वो॑ढ्वꣳ सु॒परि॑विष्टा दे॒वेषु॑ सु॒परि॑विष्टा व॒यं परि॑वे॒ष्टारो॑ भूयास्म ॥ १३ ॥

**उ०** एवं यज्ञं स्तुत्वाथेदानीमपः प्राह । हे देव्यः आपः, शुद्धाः सत्यः वोढ्वं वहत यज्ञम् । सुपरिविष्टाः साधु सर्वतो निविष्टाः पान्नेजनीपात्रे देवेषु पशुं प्रापयतेति संबन्धः । किंच वयं सुपरिविष्टाः देवेष्वितीहाप्यनुवर्तते । देवेषु मध्येऽवस्थिताः तैरेव सुपरिविष्टा देवैः तेषामेव देवानां मध्यतः परिवेष्टारो भूयास्म वयमित्याशीः ॥ १३ ॥

**म०** एवं यज्ञं स्तुत्वेदानीमापः स्तूयन्ते । अर्धमब्देवत्यमर्धमाशीर्देवत्यम् । हे आपो देव्यः, यूयं देवेषु वोढ्वं पशुमिति शेषः । एनं पशुं देवान्प्रति वहत प्रापयत । 'वह प्रापणे' अस्य लुङि तङि मध्यमबहुवचने अडभावे रूपम् । किंभूता यूयम् । शुद्धाः स्वभावतः तथा सुपरिविष्टाः साधु परितः सर्वतो निविष्टाः पान्नेजनीपात्रे । किंच वयमपि सुपरिविष्टाः देवेष्विति पदमिहाप्यनुवर्तते वयमपि देवेषु मध्येऽवस्थितास्तैरेव देवैः सुपरिविष्टाः तर्पिताः संतस्तेषामेव देवानां परिवेष्टारः परिवेषणकर्तारो भूयास्मेत्याशीः ॥ १३ ॥

## चतुर्दशी ।

वाचं॑ ते शुन्धामि प्रा॒णं ते॑ शुन्धामि॒ चक्षु॑स्ते शुन्धामि॒ श्रोत्रं॑ ते शुन्धामि॒ नाभिं॑ ते शुन्धामि॒ मेढ्रं॑ ते शुन्धामि पा॒युं ते॑ शुन्धामि च॒रित्राꣳ॑स्ते शुन्धामि ॥ १४ ॥

**उ०** पशोः प्राणान् शुन्धयति पत्नी यथालिङ्गम् । वाचं ते शुन्धामि वाचं तव शोधयामि उदकेन उन्दनेन । एवं सर्वत्र व्याख्येयम् । मेढ्रशब्देन शिश्नमुच्यते । पायुशब्देन हदनप्रदेशः । चरित्राः पादाः । सुपरिचरन्ति गच्छन्त्येभिरिति चरित्राः । चरित्रशब्देन पादा उच्यन्ते ॥ १४ ॥

**म०** 'पशोः प्राणाञ्छुन्धति पत्नी मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्संꣳहृत्य वाचं ते शुन्धामीति प्रतिमन्त्रमिति' ( का० ६ । ६ । २—३ ) । पत्नी पशुसमीप उपविश्य मृतस्य पशोः प्राणान्मुखादीन्यष्टौ प्राणायतनानि प्रतिमन्त्रं शुन्धति शोधयति अद्भिः स्पृशतीति सूत्रार्थः । पशुदेवत्यानि । हे पशो, अहं ते तव वाचं वागिन्द्रियं शुन्धामि शोधयामि । एवमग्रेऽपि प्राणं प्राणवायुं प्राणेन्द्रियं चक्षुरिन्द्रियं श्रोत्रेन्द्रियं नाभिं नाभिच्छिद्रं मेढ्रं लिङ्गम् पायुं गुदम् चरन्ति गच्छन्त्येभिरिति चरित्राः पादाः एवं त्वदीयानि सर्वेन्द्रियाणि शुन्धामि ॥ १४ ॥

## पञ्चदशी ।

मन॑स्त॒ आप्या॑यतां॒ वाक्त॒ आप्या॑यतां प्रा॒णस्त॒ आप्या॑यतां॒ चक्षु॑स्त॒ आप्या॑यता॒ꣳश्रोत्रं॑ त॒ आप्या॑यताम् । यत्ते॑ क्रू॒रं यदास्थि॑तं॒ तत्त॒ आप्या॑यतां॒ निष्ट्या॑यतां॒ तत्ते॑ शुध्यतु॒ शमहो॑भ्यः । ओष॑धे॒ त्राय॑स्व॒ स्वधि॑ते॒ मैनं॑ꣳ हिꣳसीः ॥ १५ ॥

**उ०** अध्वर्युयजमानौ पशुमाप्याययतः । मनस्ते मनः ते तव आप्यायतां हे पशो । एवं वागादीन्यपि व्याख्येयान्यङ्गानि । यत्ते क्रूरम् । यत् तव हे पशो, क्रूरं विकृतमशान्तं वा । यच्चावयवरूपमास्थितम् अध्यवसितम् शमित्रा यत्र स्थितः

शमितेत्यर्थः । तत् आप्यायताम् निष्ट्यायताम् । 'ष्ट्यै संघाते' । संहतं भवतु संहननं भवतु । तत्ते शुध्यतु । तच्च तव शुध्यतु । जघनेन पशुमुदकं निनयतः । शमहोभ्यः शं सुखम् अहरादिभ्यः कालविशेषेभ्यः अस्माकमस्त्विति शेषः । पशोर्वा अहरादिभ्यः सुखं भवतु । अग्रेण नाभिं तृणं निदधाति । ओषधे त्रायस्व व्याख्यातः । प्रज्ञातयाऽभिनिदधाति । स्वधिते मैनम् । व्याख्यातः ॥ १५ ॥

म० 'शेषेण यजमानस्य शिरःप्रभृत्यनुषिञ्चतो मनस्त इति शिर इति' ( का० ६ । ६ । ४—५ ) । पान्नेजनशेषेण यजमानः चकारादध्वर्युश्च पशोः शिरआद्यङ्गान्यनुषिञ्चतः । तत्र शिरसो मन्त्रमाह मनस्त इति शिर इति सूत्रार्थः । पशुदेवतानि हे पशो, ते तव मनः आप्यायतां शाम्यतु । विलिङ्गत्वादस्य विनियोगः उक्तः । वाक्त आप्यायतामित्यादिमन्त्राणां लिङ्गादेव विनियोगः सिद्ध इति सूत्रकृता नोक्तः । वाक्त इति मुखं प्राणस्त इति नासिके चक्षुस्त इति चक्षुषी श्रोत्रं त इति कर्णौ एतानि मुखादीनि तव शाम्यन्तु । 'यत्ते क्रूरमित्यङ्गानीति' ( का० ६ । ६ । ६ ) । सर्वाङ्गान्यवशिष्टान्यनुषिञ्चत इत्यर्थः । हे पशो, यत्ते तव क्रूरं बन्धननिरोधादिकं क्रूरमस्माभिः कृतं यच्च आस्थितं छेदादिकं कर्तुमुपस्थितं शमित्रा तत्सर्वं ते तवाप्यायतां शाम्यतु । किंच तत्सर्वं निष्ट्यायतां संहतं भवतु । 'ष्ट्यै संघाते' अनुन्नं भवत्वित्यर्थः । तत्सर्वं तव शुध्यतु शुद्धं भवतु । 'शमहोभ्य इति पश्चात्पशोर्निषिञ्चत इति' ( का० ६ । ६ । ७ ) पशोर्जघनदेशे पान्नेजनशेषमुभावपि निषिञ्चतामिति सूत्रार्थः । अहोभ्यः दिवसादिकालविशेषेभ्यः शं सुखमस्माकं पशोर्वा भूयादिति शेषः । 'उत्तानं पशुं कृत्वाग्रेण नाभिं तृणं निदधात्योषध इति' ( का० ६ । ६ । ८ ) । नाभेरग्रेऽङ्गुलचतुष्टये तृणं निदध्यादिति सूत्रार्थः । मन्त्रो व्याख्यातः ( अ० ४ क० १ ) । 'स्वधित इति प्रज्ञातयाभिनिधाय छित्त्वेति' । ( का० ६ । ६ । ९ ) । प्रज्ञातया प्रस्तुतया कृतचिह्नया घृताक्तयासिधारयाभिनिधाय तृणोपर्यसिधारां निधाय तूष्णीं सतृणामुदरत्वचं छिन्द्यादिति सूत्रार्थः । एनं पशुं स्वधिते मा हिंसीः ॥ १५ ॥

## षोडशी ।

रक्ष॑सां भा॒गो॑ऽसि॒ निर॑स्तꣳ॒ रक्ष॑ इ॒दम॒हꣳ॒ रक्षो॒ऽभिति॑ष्ठामी॒दम॒हꣳ॒ रक्षो॒ऽव॑बाध इ॒दम॒हꣳ॒ र॒क्षो॒ऽध॒मं तमो॑ नयामि । घृ॒तेन॑ द्यावापृथिवी॒ प्रोर्णु॑वाथां॒ वायो॒ वे स्तो॒काना॑म॒ग्निराज्य॑स्य॒ वेतु॒ स्वाहा॒ स्वाहा॑कृते ऊ॒र्ध्वन॑भसं मारु॒तं ग॑च्छतम् ॥ १६ ॥

उ० रक्षसां भागः । व्याख्यातम् । अपास्यति । निरस्तꣳ रक्षः । 'असु क्षेपणे' । निक्षिप्तं रक्षः । यजमानोऽभितिष्ठति । इदमहम् । यदेतत्तृणमभितिष्ठामि तदिदमहं रक्षः अभितिष्ठामि । न केवलमभितिष्ठामि किंतर्हि, इदमहं रक्षः अवाचीनं बाधे । एवमेव इदमहं रक्षः अधमम् अध्यानलक्षणं निकृष्टं तमो नयामि । वपाश्रपण्यावाच्छादयति वपया । घृतेन द्यावापृथिवी । वपाश्रपण्यौ द्यावापृथिव्यावध्यास्ते उच्येते । हे द्यावापृथिव्यौ, युवां घृतेन उदकेन आत्मानं प्रोर्णुवाथाम् । 'ऊर्णुञ् आच्छादने' । आच्छादयेथां परस्परम् । आहुतिपरिमाणाभिप्रायमेतत् । तथाचोक्तम् । 'ते वा एते आहुती हुते उत्क्रामतः' इत्युपक्रम्य 'आहुतिपरिमाणमिदं जगदिति' । तृणाग्रमध्वर्युराहवनीये प्रास्यति । वायो वेः तोकानाम् । हे वायो, वेः । 'विद ज्ञाने' अस्य 'दश्च' इति रुत्वे कृते रूपम् । विद्धि अवगतार्थो भव । स्तोकानां विप्रुषां वपासंबन्धिनाम् । ते ह्यत्र प्रतिष्ठन्ति । वपामभिघारयति । अग्निराज्यस्य । आहवनीयोऽग्निः आज्यस्य घृतस्य वेतु पिबतु स्वाहा सुहुतमेतद्धविर्भवतु । वपाश्रपण्यावनुप्रास्यति । स्वाहाकृते । हे वपाश्रपण्यौ युवां स्वाहाकृते सत्यौ आहुतिभावमुपगते सत्यौ ऊर्ध्वनभसम् ऊर्ध्वं नभ आकाशो यस्य स ऊर्ध्वनभाः तमूर्ध्वनभसं आकाशं मारुतं वायुं वा गच्छतम् प्राप्नुतम् । वायुर्हि प्रतिष्ठा यज्ञस्य ॥ १६ ॥

म० 'अग्रꣳसव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति' ( का० ६ । ६ । ९ ) । यत्तृणं नाभ्यग्रे स्थापितं तस्य छिन्नस्य तृणस्याग्रं वामहस्तेन धृत्वा दक्षिणहस्तेन मूलं धृत्वा तद्द्विगुणीकृत्याग्रे मूले च पशुच्छेदनिष्पन्नेन रक्तेनाञ्ज्यादिति सूत्रार्थः । रक्षोदेवत्यम् । हे लोहिताक्त तृण, त्वं रक्षसां भागोऽसि । 'निरस्तमित्यपास्यतीति' ( का० ६ । ६ । १० ) । लोहिताक्तं तृणमुत्करे त्यजेदिति सूत्रार्थः । यद्यज्ञविघातकं रक्षोऽस्ति तन्निरस्तं परित्यक्तम् । 'इदमहमित्यभितिष्ठति यजमान इति' ( का० ६ । ६ । ११ ) । उत्करे क्षिप्तं रुधिराक्तं तृणं यजमानोऽभितिष्ठतीति सूत्रार्थः । यत्तृणरूपं रक्षोऽध्वर्युणा निरस्तं तदिदं रक्षोऽहं यजमानोऽभितिष्ठामि अभितः पादेनोत्क्रम्य तिष्ठामि । न केवलमभितिष्ठामि किंतु अहमिदं रक्षोऽवबाधे अवाचीनं यथा भवति तथा नाशयामि । किंच अहमिदं रक्षोऽधममत्यन्तनिकृष्टं तमो नरकं नयामि प्रापयामि । 'वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवी इति' ( का० ६ । ६ । १२ ) । पशूदराद्वपां निष्काश्य तया वपया वपाश्रपण्यावाच्छादयेदिति सूत्रार्थः । वपाश्रपण्योर्द्यावापृथिव्यावध्यस्ते उच्येते । हे द्यावापृथिवी, युवां घृतेनोदकेनात्मानं प्रोर्णुवाथामाच्छादयेथां परस्परम् । 'ऊर्णुञ् आच्छादने' । आहुतिपरिणामाभिप्रायमेतत् । तथा चोक्तं 'ते वा एते आहुती हुते उत्क्रामत इत्युपक्रम्याहुतिपरिणाममिदं जगदिति । तृणाग्रं चाध्वर्युर्वायो वेरिति' ( ६ । ६ । १५ ) । वामहस्तधृतं तृणाग्रमाहवनीये क्षिपेदिति सूत्रार्थः । वायुदेवत्यम् ।

हे वायो, त्वं स्तोकानां वपासंबन्धिनां विप्रुषां वेः कर्मणि षष्ठी। स्तोकान्विद्धि जानीहि ज्ञात्वा च पिबेत्यर्थः। ते ह्यत्र तिष्ठन्ति। 'विद ज्ञाने' इत्यस्य लुङि मध्यमैकवचने 'दश्च' (पा० ८।२।७५) इति दस्य रुत्वे कृते रूपम्। अडभाव आर्षः। वेः विद्धि। 'वपाᳫं स्रुवेणाभिघारयत्यग्निराज्यस्येति' (का० ६।६।१७)। अग्निराहवनीयः आज्यस्य वेतु आज्यं पिबतु स्वाहा सुहुतमस्तु। 'हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतिचीमितरां स्वाहाकृते इति' (का० ६।६।१८) वपां हुत्वोत्तरत उपविश्य वपाश्रपण्यावाहवनीय एव क्षिपेत्। तत्प्रकारः विशाखां द्विश्ङ्गां प्रागग्रां क्षिपेदितरामेकश्ङ्गां प्रत्यगग्रामिति सूत्रार्थः। स्वाहाकारेणाहुतिभावमुपगते सत्यौ युवां मारुतं गच्छतं वायुं प्राप्नुतं। वायुर्हि प्रतिष्ठा यज्ञस्य। किंभूतम्। ऊर्ध्वनभसमूर्ध्वं नभ आकाशो यस्य स ऊर्ध्वनभाः तं नभोमध्ये वर्तमानमित्यर्थः॥ १६॥

## सप्तदशी।

इ॒दमा॑पः॒ प्रव॑हताव॒द्यं च॒ मलं॑ च॒ यत्। यच्चा॑भिदु॒द्रोहानृ॑तं॒ यच्च॑ शे॒पे अ॑भी॒रुण॑म्। आपो॑ मा॒ तस्मा॒देन॑सः॒ पव॑मानश्च मुञ्चतु॥ १७॥

उ० चात्वाले मार्जयन्ते इदमापः। त्र्यवसाना महापङ्क्तिरब्देवत्या पावमानश्चान्त्यः पादः। हे आपः, इदं पशुसंज्ञपननिमित्तं पापं प्रवहत अपनयत। किंच अवद्यं च अवदनीयं च यत् अभिशापादि मलं च यत् यच्च मलं शरीरसंलग्नं प्रसिद्धं तच्च प्रवहत। यच्चाभिदुद्रोहानृतम्। 'द्रुह जिघांसायाम्'। यदपि चाभिद्रुग्धवानस्मि असत्यमुच्चार्य। यच्च शेपे अभीरुणम्। आक्रोशेन यच्च शपितवानस्मि अभीरुणमनपराधिनम्। अनपराधी हि न बिभेति। यद्वा अभिलुनाति छिनत्ति कर्माणि यदुच्चरितं सत् तदभीरुणम्। आपः मां तस्मात् एनसः पापात् पवमानश्च मुञ्चतु। पवमानः सोमो वायुर्वा मां मुञ्चतु पृथक्करोतु॥ १७॥

म० 'चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति' (का० ६।६।२९)। सर्वे ऋत्विजश्चात्वालसमीपेऽद्भिरात्मानमभ्युक्षन्तीति सूत्रार्थः। अब्देवत्या त्र्यवसाना महापङ्क्तिः पावमानश्चान्त्यः पादः। यस्याः षट् पादा अष्टाक्षराः सा महापङ्क्तिः। हे आपः, इदं पशुसंज्ञपननिमित्तं पापं प्रवहत। किंच यच्चावद्यमवदनीयमभिशापादि यच्च मलं शरीरलग्नं प्रसिद्धं तच्च प्रवहत अपनयत। किंच यदहमनृतमसत्यमुक्त्वाभिदुद्रोह द्रुग्धवानस्मि 'द्रुह जिघांसायाम्' यच्चाहमभीरुणं बिभेतीति भीरुर्नभीरुरभीरुस्तमभीरुणमनपराधिनमनपराधिनमपराधी हि बिभेति एवंविधं शेपे शपितवानस्मि। अनपराधिनं प्रति यन्मयाभिशापो दत्तः आपः तस्मादेनसः पापात् मा मां मुञ्चतु पृथक्कुर्वन्तु पवमानश्च सोमो वायुर्वा तस्मात्पापान्मां मुञ्चतु॥१७॥

## अष्टादशी।

सं ते॒ मनो॒ मन॑सा॒ सं प्रा॒णः प्रा॒णेन॑ गच्छताम्। रेड॑स्य॒ग्निष्ट्वा॑ श्रीणा॒त्वाप॑स्त्वा॒ सम॑रिण॒न्वात॑स्य त्वा॒ ध्राज्यै॑ पू॒ष्णो रᳫंह्या॑ ऊ॒ष्मणो॑ व्यथिष॒त्प्रयु॑तं॒ द्वेषः॑॥१८

उ० पशुहृदयमभिघारयति। सन्ते मनः। संगच्छतां ते तव मनः मनसा। अनेन पृषदाज्येनाभिघारितम्। संगच्छतां च प्राणः प्राणेन पृषदाज्येनाभिघारितस्य पशोः प्राणः। वसां गृह्णाति। रेडसि। रिषतिर्हिंसार्थः। या त्वं रिष्टासि हिंसितेवाभासि अल्पत्वात्। अल्पत्वं च पूष्णः श्रुतिः प्रतिपादयति। रेडसीति लेलयेव हियूः। लेलयशब्दश्चाल्पवचनः। अग्निष्ट्वा श्रीणातु। यां च त्वामग्निः श्रपयन् श्रीणाति भूयसीकरोति। आपः त्वा समरिणन्। यां च त्वामापः समरिणन्समभरन्। रिणातिर्बिभर्त्यर्थे। आपो हि पच्यमानेभ्यः पश्वङ्गेभ्यः यं रसमाददते सा वसेत्युच्यते। तां त्वां वातस्य ध्राज्यै। गृह्णामीति शेषः। ध्राजिर्गतिः। वातस्यान्तरिक्षेण गतिर्भवत्विति। पूष्णो रᳫंह्यै। पूषा आदित्यः। रंहतिर्गत्यर्थः। आदित्यस्य द्युलोकेन गतिर्भवत्विति गृह्णामि। ऊष्मणो व्यथिषत्। ऊष्मा अन्तरिक्षम्। तद्धि ब्रह्मण ऊष्मेव। अन्तरिक्षार्थं च वसा गृह्यते। होममन्त्रे अन्तरिक्षस्य हविरसीति लिङ्गात्। ऊष्मणोऽन्तरिक्षस्य या भोक्त्री शक्तिस्तां व्यथिषत् व्यथतु। इयं वसान्तरिक्षस्य तृप्तिं कृत्वातिरिक्ता भवत्वित्यर्थः। अन्तरिक्षे च तृप्ते तत्प्रभवत्वाद्वायुसूर्ययोरपि स्वकर्मक्षमता भवति। तस्मादुच्यते वातस्य त्वा ध्राज्या इत्यादि। प्रयौति। प्रयुतं द्वेषः। 'द्विष अप्रीतौ'। निवृत्तं पृथग्भूतं। वसाया द्वेषः॥ १८॥

म० 'सं ते मन इति हृदयमभिघार्य सर्वमिति' (का० ६।८।६) जुहूस्थेन पृषदाज्येन पूर्वं हृदयमभिघार्य तूष्णीं सर्वं पशुमभिघारयेदिति सूत्रार्थः। हृदयदेवत्यम्। हे हृदय, ते तव पशोर्मनः देवानां मनसा सङ्गच्छताम् पृषदाज्येनाभिघारितं सत्। ते तव प्राणोऽपि देवानां प्राणेन सङ्गच्छतां सङ्गतोऽस्तु अभिघारितः। 'रेडसीति वसां गृहीत्वेति' (का० ६।८।१२)। मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा तां गृह्णीयादिति सूत्रार्थः। वसादेवत्यम्। हे वसे। त्वं रेट् असि। रिषतिर्हिंसार्थः कर्मणि विच्। रिष्टासि हिंसितेवाभासि अल्पत्वात्। पूष्णोऽल्पत्वं श्रुत्योक्तम्। 'रेडसीति लेलयेव हि यूरिन्त्' (३।८।३।२०) लेलयाशब्दश्चाल्पवाचकः। अग्निः त्वा त्वां श्रीणातु 'श्री पाके' क्र्यादिः। श्रपयन् भूयसीं करोति। यद्वाग्निराहवनीयस्त्वां श्रीणातु स्वीकरोतु। किंच आपः त्वा त्वां समरिणन् 'री बधे गतौ' क्र्यादिः। अत्र रिणातिर्बिभर्त्यर्थे। समभरन्नपुष्णन्। यद्वा आपः त्वां समरिणन् सम्यक् प्राप्नुवन्तु। तव शोषो मा भूदित्यर्थः। आपो हि

पच्यमानेभ्यः पश्वङ्गेभ्यो यं रसमुत्पादयन्ति सा वसेत्युच्यते । तां त्वां गृह्णामीति शेषः । किमर्थम् । वातस्य ध्राज्यै गत्यै वातस्यान्तरिक्षे गतिर्भवत्विति । तथा पूष्णो रंह्यै आदित्यस्य गत्यै । रंहतिर्गत्यर्थः । आदित्यस्य द्युलोके गतिर्भवत्विति वाय्वादित्ययोरप्रतिहतगमनसिद्ध्यर्थं त्वां गृह्णामीत्यर्थः । किंच ऊष्मणो व्यथिष्यत् । ऊष्मान्तरिक्षं तद्धि ब्रह्मण ऊष्मेव ऊष्माणमन्तरिक्षं वसा व्यथरतु कर्मणि षष्ठी । यद्वा व्यत्ययेन प्रथमार्थे षष्ठी । ऊष्मा व्यथिष्यत् व्यथतां । वसां पीत्वा तृष्णाधिक्येन पथा सीदति । वसारूपं हविस्तथाविधं भवत्वित्यर्थः । हि वसा गृह्यते होममन्त्रे अन्तरिक्षस्य हविरसीति लिङ्गात् । इयं वसान्तरिक्षस्य तृप्तिं कृत्वातिरिक्ता भवत्वित्यर्थः । अन्तरिक्षे च तृप्ते तत्प्रभवत्वाद्वायुसूर्ययोरपि स्वकर्मक्षमता भवति तस्मादुच्यते वातस्य ते ध्राज्या इत्यादि । 'व्यथ भयचलनयोः' अस्य 'लिङर्थे लेट्' ( पा० ३ । ४ । ७ ) इति । लेटि 'सिब्बहुलं लेटि' ( पा० ३ । ४ । ३४ ) इति । सिप्प्रत्यये 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इति । तिप इकारलोपे 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इति अडागमे व्यथिषदिति रूपम् । 'द्विरभिघार्य प्रयुतमिति पार्श्वेन सꣳस्रजत्यसिना वेति' ( का० ६ । ८ । १२ ) वसां द्विरभिघार्य पार्श्वेनासिना वाज्यं वसां च मिश्रयेदिति सूत्रार्थः । द्वेषो दौर्भाग्यं प्रयुतं पृथग्भूतं वसायाः सकाशाद्घृतमिश्रणेन ॥ १८ ॥

## एकोनविंशी ।

घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ॥ १९ ॥

उ० वसां जुहोति । घृतं घृतपावानः वसायां हि घृतं विद्यते द्विरभिघारणस्य विहितत्वात् । अतएवमाह । घृतं पिबत हे घृतपावानः । 'धेट् पाने' । 'आतो मनिन्क्वनिप्' इत्यादिना वनिप् । पातार उपभोक्तारः । वसां पिबत हे वसायाः पातारः । हे वसे, त्वम् अन्तरिक्षस्य हविरसि स्वाहा सुहुतमेतद्धविर्भवतु । दिशो व्याघारयति । दिशः प्रदिशः । अत्र स्वाहाकारः सर्वत्र साकाङ्क्षत्वादिति कात्यायनः । अतएवं व्याख्या । दिग्भ्यः स्वाहा प्रदिग्भ्यः स्वाहा । आदिग्भ्यः स्वाहा । विदिग्भ्यः स्वाहा । उद्दिग्भ्यः स्वाहा । दिग्भ्यः स्वाहा इति ॥ १९ ॥

म० 'वसैकदेशं जुहोमि घृतं घृतपावान इति' ( का० ६ । ८ । १७ ) । वसाहोमहवन्या वसाया एकदेशं जुहुयादिति सूत्रार्थः । वैश्वदेवं यजुः । वसाया द्विरभिघारितत्वाद्घृतमस्ति तत्र । अत एवमाह । हे घृतपावानः, घृतं पिबन्तीति घृतपावानः 'पा पाने' । 'आतो मानिन्' ( पा० २ । २ । ७४ ) इत्यादिना वनिप् । घृतस्य पातारो देवाः, यूयं घृतं पिबत । हे वसापावानः वसायाः पातारो देवाः, यूयं वसां पिबत । एवं देवानुक्त्वा वसामाह हे वसे, त्वमन्तरिक्षस्य हविरसि स्वाहा सुहुतमस्तु । 'दिशो व्याघारयति वसाशेषेण वाजिनवदिति' ( का० ६ । ८ । २१ ) । यथा वाजिनशेषेण दिग्व्याघारणमुक्तं तथेत्यर्थः तद्यथा 'दिशो व्याघारयति दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथममुत्तमाभ्यां मध्ये पूर्वार्धे चेति' ( का० ४ । ४।१६–१७) । षट् दिग्देवतानि अत्र 'स्वाहाकारः सर्वत्र साकाङ्क्षत्वादिति' ( का० ४ । ४ । १८ ) वचनात् स्वाहा सर्वत्र युज्यते । दिग्भ्यः स्वाहा प्रदिग्भ्यः स्वाहा आदिग्भ्यः स्वाहा विदिग्भ्यः स्वाहा उद्दिग्भ्यः स्वाहा सर्वाभ्यो दिग्भ्यः सुहुतमस्त्वित्यर्थः ॥ १९ ॥

## विंशी ।

ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्र उदानो अङ्गे अङ्गे निधीतः । देव त्वष्टर्भूरि ते सꣳसमेतु सलक्ष्मा यद्विषुरूपं भवाति । देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥ २० ॥

उ० पशुं संमृशति । ऐन्द्रः प्राणः । इन्द्र आत्मा तस्य स्वभूतः प्राणः ऐन्द्रः प्राणः । अस्य पशोः अङ्गे अङ्गे । वीप्सा । यावन्ति पशोरङ्गानि तेषु सर्वेषु । निदीध्यत् 'दीधीङ् दीप्तिदेवनयोः' इत्यस्य धातोर्धात्वर्थे वर्तमानात्कर्मणि लकारश्छान्दसः । निधीयते निहितः । ऐन्द्रश्चास्य उदानः अङ्गे अङ्गे निधीतः निहितः । एवं तावदनेन यजुषा पश्वङ्गेषु प्राणं दत्वा अथेदानीं देवत्वष्टरित्यादिकयात्रिष्टुभोर्धर्चेन त्वष्टारमाह । त्वष्टा हि रूपाणामीष्टे । हे देवत्वष्टः, भूरि ते सꣳसमेतु । बहुप्रकारं तव संबन्धि रूपं यद्विकृतमसिना तत्संगत्य एकीभवतु । कथंभूतम् । सलक्ष्म समानलक्षणं सत् यद्विषुरूपं भवति तत्समेत्विति संबन्धः । एवं त्वां हे पशो, प्राणैश्चाङ्गैश्चानेन मन्त्रेण कृत्स्नीकृतं सन्तं दृढीकृतं सन्तं देवत्रा यन्तम् देवान् प्रति गच्छन्तम् । अवसे अवनाय प्रीत्यै । सखायः समानख्यानाः पशवः अनुमदन्तु अभ्यनुजानन्तु त्वां मातापितरश्च । बहुवचनं पूजार्थम् ॥ २० ॥

म० 'ऐन्द्रः प्राण इति पशुꣳसंमृशतीति' ( का० ६ । ९ । १ ) । पशुरूपं हविः स्पृशेदिति सूत्रार्थः । इन्द्र आत्मा तत्संबन्धी प्राणः प्राणवायुरस्य पशोरङ्गेअङ्गे सर्वेष्वङ्गेषु निदीध्यत् निहितः । 'दीधीङ् दीप्तिदेवनयोः' । अस्य धातोर्दधात्यर्थे वर्तमानात्कर्मणि लेट् परस्मैपदं व्यत्ययेन 'लेटोऽडाटौ' ( ३ । ४ । ९४ ) इत्यट् । तथा ऐन्द्रः इन्द्रसंबन्धी उदानवायुः पशोः सर्वेष्वङ्गेषु निधीतः निक्षिप्तः 'धीङ् आदरानादरयोः' । 'अङ्ग इत्यादौ च' ( पा० ६ । १ । ११९ ) इत्यङ्गशब्दस्य एङ् अति प्रकृत्या ॥ एवमनेन यजुषा पश्वङ्गेषु प्राणान्दत्वा [illegible]रमाह । त्वाष्ट्री त्रिष्टुप् हे त्वष्टः त्वष्टृनामक देव, यत् पश्वङ्गजातं सल-

क्ष्मा समानलक्षणं सत् छेदनेन विषुरूपं नानारूपं भवति भवति तत् सर्वं ते तवानुग्रहेण भूरि बहुलमत्यन्तं संसमेतु सम्यगेकीभवतु। 'प्रसमुपोदः पादपूरणे' ( पा० ८।१।६ ) इति समित्यस्य द्वित्वम्। पुनः पशुमाह। हे पशो, एवं प्राणैः स्वाङ्गैश्चानेन मन्त्रेण दृढीकृतं देवत्रा यन्तं देवान्प्रति गच्छन्तं त्वा त्वां सखायो मित्रभूता इतरे पशवो मातापितरश्च अनुमदन्तु अभ्यनुजानन्तु। बहुवचनं पूजार्थम्। अवसे अवितुं प्रीणयितुम्। तुमर्थे असेप्रत्ययः। यद्वा अवितुं तन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्वमवितुमित्यर्थः॥ २०॥

## एकविंशी।

स॒मु॒द्रं ग॑च्छ॒ स्वाहा॒न्तरि॑क्षं गच्छ॒ स्वाहा॑ दे॒वꣳ स॑वि॒तारं॑ गच्छ॒ स्वाहा॑ मि॒त्रावरु॑णौ गच्छ॒ स्वाहा॑हो॒रा॒त्रे ग॑च्छ॒ स्वाहा॒ छन्दाꣳ॑सि गच्छ॒ स्वाहा॒ द्यावा॑पृथि॒वी ग॑च्छ॒ स्वाहा॑ य॒ज्ञं ग॑च्छ॒ स्वाहा॒ सोमं॑ गच्छ॒ स्वाहा॑ दि॒व्यं नभो॑ गच्छ॒ स्वाहा॒ग्निं वै॑श्वान॒रं ग॑च्छ॒ स्वाहा॒ मनो॑ मे॒ हार्दि॑ यच्छ॒ दिवं॑ ते धू॒मो ग॑च्छतु॒ स्व॒र्ज्योतिः॑ पृथि॒वीं भस्म॒नापृ॑ण॒ स्वाहा॑॥ २१॥

उ० प्रतिप्रस्थातोपयजति। समुद्रं गच्छ। हविरुच्यते। समुद्रं गच्छ तर्पणायेति शेषः। एवमुत्तरेष्वपि योज्यम्। सुखं विसृष्टे। मनो मे मम हार्दि हृदये गच्छ निबध्नीहि। निबध्यमानो हि स्वादायतनान्न च्यवते। 'तथोहोपयष्टात्मानं नानुप्रवृणक्ति' इति श्रुतिः। स्वरुं जुहोति। दिवं ते। स्वरुरुच्यते। द्युलोकं तव धूमो गच्छतु। वृष्ट्यै स्वर्ज्योतिः। स्वःशब्देनादित्योऽभिधीयते। ज्योतिः आदित्यं गच्छतु तव। पृथिवीं च भस्मना आपृण आपूरय स्वाहा॥ २१॥

म० 'प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रमिति' ( का० ६।९।१० ) अनुयाजेषु हूयमानेषु प्रतिप्रस्थाता पूर्वं स्थापितं गुदतृतीयभागमेकादशधा तिर्यक्प्रच्छिद्य प्रतिमन्त्रं जुहोतीति सूत्रार्थः। हे हविर्गुडावयवरूप, त्वं समुद्रादिनामकान्देवान्गच्छ प्राप्नुहि। तर्पणायेति शेषः। स्वाहा सुहुतमस्तु। 'प्रतिवषट्कारꣳहुत्वा मनो म इति सुखोपस्पर्शनमिति' ( का० ६।९।११ ) प्रतिवषट्कारमेकैकं हुत्वा सर्वान्ते मुखं स्पृशेदिति सूत्रार्थः। हे समुद्रादिदेवतासमूह, हार्दि हृदयसंबन्धि मे मनो यच्छ निबध्नीहि। निबद्धं मनो हि स्वादायतनान्न च्यवते। 'अनुयाजान्ते स्वरुं जुहोति दिवं ते धूमः इति' ( का० ६।९।१२ ) स्वरुदैवतम्। हे स्वरो, ते तव धूमः दिवं द्युलोकं गच्छतु वृष्ट्यै। तव ज्योतिः ज्वाला स्वः आदित्यं गच्छतु। स्वःशब्देनादित्योऽभिधीयतेऽन्तरिक्षं वा। भस्मना पृथिवीमापृण समन्तात्पूरय। स्वाहा सुहुतमस्तु॥ २१॥

## द्वाविंशी।

मापो मौष॑धीर्हिꣳसी॒र्धाम्नो॑ धाम्नो राजँ॒स्ततो॑ वरुण नो मुञ्च। यदा॒हुर॒घ्न्या इति॒ वरु॒णेति॒ शपा॑महे॒ ततो॑ वरुण नो मुञ्च। सु॒मि॒त्रि॒या न॒ आप॒ ओष॑धयः सन्तु दुर्मित्रि॒यास्तस्मै॑ सन्तु॒ यो॒ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः॥ २२॥

उ० हृदयशूलमुपगूहति। मापो मौषधीः। इदं वै पशोः संज्ञप्यमानस्येत्युपक्रम्य हृदयशूलं शुक्समवैतीत्युक्तम्। अत एवमुच्यते। मा हिꣳसीरपः माच ओषधीः हिंसीः। इदानीं वरुणमाह। हे वरुण राजन्, धाम्नोधाम्नः। धामशब्दः स्थानवचनः। यतो यतः पापसमन्वितात्स्थानाद्बिभीमः ततः ततः नोऽस्मान्विमुञ्च। यदाहुः गायत्री वारुणी अनवसाना। यदाहुरघ्न्या इति। अघ्न्या गोनाम। प्रकरणादिहानूबन्ध्याविषयं बहुवचनम्। अनूबन्ध्याबहुत्वे अर्थवत्। एकानूबन्ध्यापक्षे तु पूजार्थम्। यद्वेदस्मृतिलोकवाक्यान्याहुः अघ्न्या अवध्या अहन्तव्या वन्द्याः पूजनीया इति। इतिकरणो वाक्यस्यार्थमभिनयेन दर्शयति। वयं तु हे वरुण इति शपामहे। इतिः करणप्रदर्शनार्थः। शपतिर्हिंसार्थः। एवमनेन विधिना हिंस्मः अघ्न्याः अतएव वयं याचामहे। ततो वरुण नो मुञ्च। ततस्तस्मादेनसो वरुण, नः अस्मान्विमुञ्च। अथाभिमन्त्रयते। सुमित्रियाः साधुमित्रत्वेनावस्थिताः। नः अस्माकं आप ओषधयश्च सन्तु। दुर्मित्रियाः दुष्टमित्रत्वेनावस्थितास्तस्मै सन्तु योऽस्मान्द्वेष्टि शत्रुः यं च शत्रुं द्विष्मो वयम्॥ २२॥

म० 'अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति शुगसि तमभिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मो मापो मौषधीरिति चेति' ( का० ६।१०।३ ) जले प्रविश्य आलब्धस्य पशोर्हृदयस्थं मांसं यस्मिन् श्रितं स हृदयशूलस्तं शुष्कार्द्रभूप्रदेशयोः सन्धौ निगूहेत् भूमावधोमुखं क्षिपेत् शुगसि माप इति मन्त्राभ्यामिति सूत्रार्थः। हृदयशूलदैवतं यजुः। हे हृदयशूल, त्वमपो जलानि ओषधीश्च मा हिꣳसीः। 'धाम्नो धाम्नः सुमित्रिया न इत्युपस्पृशन्त्यप इति' ( का० ६।१०।५ ) सर्वे ऋत्विग्यजमाना मन्त्राभ्यां जलं स्पृशन्तीति सूत्रार्थः। वरुणदेवतं यजुः। हे राजन् वरुण, धाम्नो धाम्नः यस्माद्यस्मात् त्वदीयपाशसमन्वितात्स्थानात् वयं बिभीमस्तस्मात्तस्मात्स्थानात् नोऽस्मान्मुञ्च मोचय। यदाहुः। वरुणदेवत्या गायत्री अवसानहीना। अघ्न्या इति गोनाम प्रकरणादिहानूबन्ध्याविषयम्। बहुवचनमनूबन्ध्याबहुत्वेऽर्थवत्। एकानूबन्ध्यापक्षेतु पूजार्थम्। अघ्न्या इति यदाहुः वेदस्मृतिलोकवाक्यानि अघ्न्या अहन्तव्या अवध्याः पूजनीया इति वदन्ति। इतिकरणेन वाक्यस्यार्थमभिनयेन दर्शयति। हे वरुण, वयं तु इति शपामहे। इतिकरणं

प्रदर्शनार्थम् । शपतिर्हिंसार्थः । इति एवमनेन विधिना अघ्न्या हिंस्यः । अतएव त्वां याचामहे हे वरुण, ततस्तस्मादघ्न्या वधजातादेनसो नोऽस्मान्मुञ्च मोचय । सुमित्रियाः आपः ओषधयश्च नोऽस्माकं सुमित्रियाः साधुमित्रत्वेनावस्थिताः सन्तु । यः शत्रुरस्मान्द्वेष्टि वयं च यं शत्रुं द्विष्मः द्वेषं कुर्मः तस्मै उभयात्मकाय शत्रवे आप ओषधयश्च दुर्मित्रियाः अमित्रत्वेनावस्थिताः सन्तु । धाम्नो धाम्न इति मन्त्रः शूलोपगूहनमन्त्रस्य शेषो वा । सुमित्रिया इति मन्त्रोऽपामभिमन्त्रणे वा ॥ २२ ॥

एवमग्नीषोमीयः पशुः समाप्तः ।

## त्रयोविंशी

ह॒विष्म॑तीरि॒मा आपो॑ ह॒विष्माँ॑ २ आ वि॑वासति। ह॒विष्मा॑न्दे॒वो अ॑ध्व॒रो ह॒विष्माँ॑ २॥ अस्तु॒ सूर्यः॑ २३

उ० वसतीवरीर्गृह्णाति । 'हविष्मतीः' अनुष्टुप् लिङ्गोक्तदेवता । हविष्मतीः हविषा संयुक्ता इमा आपः । 'यत्र वै यज्ञस्य शिरश्छिद्यते तस्य रसो द्रुत्वापः प्रविवेश' इत्येतदभिप्रायम् । हविष्मान् हविषा संयुक्तो यजमान आविवासति । विवासतिः परिचर्यायाम् । परिचरणं शुश्रूषा । इमा आपः हविष्मान् हविषा संयुक्तो देवोध्वरो यज्ञः आभिरद्भिः । हविष्मान् अस्तु सूर्यः । एतस्मै वै गृह्णाति य एष तपतीत्येतदभिप्रायम् ॥ २३ ॥

म० अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञानामपां ग्रहणमभिधीयते । 'अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणꣳस्यन्दमानानामनस्तमितेऽस्तमितश्चेन्निनाह्यात्पुरेजानश्चेदनीजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्योभयाभाव उल्कुषीꣳहिरण्यं वोपर्युपरि धारयन् हविष्मतीरिति' ( का० ८ । ९ । ७ । १० ) अग्नीषोमीयस्य पशोर्वपामार्जनपर्यन्ते कर्मणि कृते अनस्तंगते रवौ वहन्तीनामपामेकदेशाद्वसतीवरीसंज्ञानां सीमार्थानामपां ग्रहणं कार्यं हविष्मतीरिति मन्त्रेण । यदि रविरस्तं गतो यजमानश्च पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्यान्मणिकाद्वसतीवरीग्रहणम् । निनह्नीयो निखननीयो निनाह्यः । यदि च यजमानः पुरा न सोमयाजी तर्हि समीपस्थितस्य यष्टुर्मणिकाद्ग्रहणम् । स्वस्य अन्यस्य यज्ञकर्तृत्वाभावे उल्कां कनकं वा वहन्तीनामपां समीपे धारयन्वहन्तीभ्यो वसतीवरीर्गृह्णीयादिति सूत्रार्थः । अनुष्टुब्लिङ्गोक्तदेवता । हविष्मान् हविषा संयुक्तो यजमानः हविष्मतीर्हविषा संयुक्ता इमा आपः अपः आविवासति वसतीवरीः परिचरति । विवासतिः परिचर्यायाम् । 'यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य रसो द्रुत्वापः प्रविवेश' ( ३ । ९ । २ । १ ) इति श्रुतेरपां हविष्मत्त्वम् । ततो देवो द्योतमानोऽध्वरो यागोऽपि स्वशरीरनिष्पत्तये हविष्मानस्तु आभिरद्भिरित्यर्थः । किंच सूर्योऽपि देवो यजमानस्य फलदानाय तृप्त्यर्थं च हविष्मान्हविःसंपन्नोऽस्तु भवतु । एतस्मै वै गृह्णाति य एष तपति' ( ३ । ९ । २ । १२ ) इति श्रुतेर्वसतीवरीभिः सूर्यस्य हविष्मत्त्वम् ॥ २३ ॥

## चतुर्विंशी ।

अ॒ग्नेर्वोऽप॑न्नगृहस्य॒ सद॑सि सादयामीन्द्रा॒ग्न्योर्भा॑ग॒धेयी॑ स्थ मि॒त्रावरु॑णयोर्भाग॒धेयी॑ स्थ॒ विश्वे॑षां दे॒वानां॑ भाग॒धेयी॑ स्थ । अ॒मूर्या॒ उप॒ सूर्ये॒ याभि॑र्वा॒ सूर्यः॑ स॒ह । ता नो॑ हिन्वन्त्वध्व॒रम् ॥ २४ ॥

उ० शालाद्वार्यमपरेण निदधाति । अग्नेर्वः । अग्नेः वो युष्मान् अपन्नगृहस्य । पद्यतेरेतद्रूपम् । अग्नीणम् (?) । अपतितगृहस्येति पर्यायः । सदसि । सीदन्त्यस्मिन्निति सदः निकटस्थाने सादयामि । दक्षिणस्यामुत्तरवेदिश्रोणौ निदधाति । इन्द्राग्न्योर्भागधेयीस्थ । इन्द्राग्न्योः संबन्धिनो भागस्य धारयित्र्यः स्थ हे आपः । उत्तरस्यामुत्तरवेदिश्रोणौ निदधाति । मित्रावरुणयोर्भागधेयी स्थ । आग्नीध्रे निदधाति । विश्वेषां देवानां भागधेयी स्थ । ऋक् अमूर्याः । अब्देवत्या गायत्री । अभिनयेन दर्शयन्नाह । अमूर्या आपः उप समीपे । सूर्यस्येति विभक्तिव्यत्ययः । याभिर्वा सूर्यः सह । अथापि समुच्चयार्थे भवतीति वाशब्दः समुच्चयार्थीयः । याभिश्चाद्भिः सूर्यः सह याति ता आपः नः अस्माकं हिन्वन्तु । हिन्वतिस्तर्पणार्थः । तर्पयन्तु अध्वरं यज्ञम् ॥ २४ ॥

म० 'अग्नेर्व इति निदधाति शालाद्वार्यमपरेणेति' ( का० ८ । ९ । ११ ) नूतनगार्हपत्यात्पश्चिमभागे ता वसतीवरीरासादयतीति सूत्रार्थः । चत्वारि यजूंष्यब्देवत्यानि । हे वसतीवर्यः' वो युष्मान् अग्नेः शालाद्वार्यस्य सदसि सीदन्त्यस्मिन्निति सदो निकटस्थानं तत्र सादयामि स्थापयामि । किंभूतस्याग्नेः । अपन्नगृहस्य न पन्नं पतितं गृहं तस्य तस्य । अविनश्वरगृहस्येत्यर्थः । 'दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति' ( का० ८ । ९ । १८) शालाद्वार्यसमीपस्था वसतीवरीरादाय शालादक्षिणद्वारेण नीत्वोत्तरवेदेर्दक्षिणश्रोणौ निदध्यादिति सूत्रार्थः । हे वसतीवर्यः, यूयमिन्द्राग्न्योः इन्द्राग्निदेवतयोः स्थ भागधेय्यो भागरूपा भवथ । भागा एव भागधेय्यः । 'नामरूपभागेभ्यः स्वार्थे धेयप्रत्ययः' ( पा० ५ । ४ । ३६ ) 'केवलमामक-' ( पा० ४ । १ । ३० ) इत्यादिना ङीप् । 'उत्तरस्यां पूर्ववन्मित्रावरुणयोरिति वेति' ( का० ८ । ९ । २१—२२ ) पूर्ववदिन्द्राग्न्योरिति मन्त्रेणैव मित्रावरुणयोरिति मन्त्रेण वोत्तरवेदेरुत्तरश्रोणौ वसतीवरीर्निदध्यादिति सूत्रार्थः । हे वसतीवरीसंज्ञका आपः, यूयं मित्रावरुणयोर्देवतयोर्भागरूपा भवथ । 'विश्वेषां देवानामित्याग्नीध्र इति' (का० ८ । ९ । २३) उत्तरवेदिश्रोणेः सकाशाद्वसतीवरीरादायाग्नीध्रीयस्य पश्चान्निदध्यादिति सूत्रार्थः । हे वसतीवर्यः, यूयं सर्वेषां देवानां भागरूपा भवथ । इदानीमभिनयेन दर्शयन्नाह । अमूर्याः ऋक् अब्देवत्या गायत्री

याः प्रसिद्धा अमूरीदृश्यो वसतीवर्याख्या आपः। उपसूर्ये सूर्यसमीपे स्थिताः विभक्तिव्यत्ययः। याभिर्वा। वाशब्दः समुच्चये याभिश्चाद्भिः सह सूर्यो याति ता आपो नोऽस्माकमध्वरं यज्ञं हिन्वन्तु तर्पयन्तु। हिन्वतिः तर्पणार्थः॥ २४॥

## पञ्चविंशी।

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा। ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ॥ २५॥

उ० सोममुपावहरति। हृदे त्वा। सौम्यनुष्टुप् ब्रह्मर्षीया। बुद्ध्यै निश्चयात्मिकायै। कामाय एतन्मम स्यादिति। त्वां सोममुपावहरामि। दिवे त्वा। हे सोम, देवलोकप्राप्तये त्वामुपावहरामि। सूर्याय सूर्यप्रमुखेभ्यो देवेभ्यः हे देवसोम, त्वामुपावहरामि। त्वं चोपावहृतोऽभिष्टुत ऊर्ध्वमिममध्वरं यज्ञं कृत्वा दिवि देवलोके देवेषु च होत्राः। वषट्कारयाजिनोऽब्रह्मर्षयो होत्रा उच्यन्ते। यच्छ नियच्छीहि॥ २५॥

म० 'आज्यासादनात्कृत्वेषान्तरेणार्धसोममद्रिषु संमुखेषु निदधाति हृदे त्वेति' ( का० ९। १। १५ ) आज्यासादनपर्यन्तं कर्म कृत्वा सोममादाय हविर्धाने गत्वा सोमं विन्यस्य तदर्धं दक्षिणशकटेषान्तरालेन संमुखेष्वभिषवार्थपाषाणेषु निदध्यात्। अश्मनां स्थूलो भागो मुखमिति सूत्रार्थः। सोमदेवत्यानुष्टुप्। हे सोम, हृदे बुद्ध्यै निश्चयात्मिकायै एतन्मम स्यादिति कामरूपायै त्वा त्वामुपावहरामीति शेषः। मनसे संकल्पविकल्पात्मकाय त्वामुपावहरामि। त्वाशब्दानामावृत्त्या क्रियावृत्तिर्बोध्या। दिवे द्युलोकप्राप्तये त्वामुपावहरामि। सूर्याय सूर्यमुखेभ्यो देवेभ्यस्तत्तृप्तये त्वामुपावहरामि। यद्वायमर्थः। हे सोम, हृदे हृदयवद्भ्यो मनुष्येभ्यः। मनसे मनस्विभ्यः पितृभ्यः दिवे द्युलोकवासिभ्यो देवेभ्यो विशेषतः सूर्याय च त्वामुपावहरामीति शेषः। एतदर्थे तित्तिरिः 'स वा अध्वर्युः सोममुपावहरन्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरतीति'। किंच एवमुपावहृतोऽभिषुतश्च त्वमिममध्वरं मदीयं यज्ञमूर्ध्वमुत्कृष्टं कृत्वा दिवि द्युलोकवर्तमानेषु देवेषु होत्राः वषट्कारवादिनः सप्त होतृकान् यच्छ नियच्छीहि॥ २५॥

## षड्विंशी।

सोम राजन्विश्वास्त्वं प्रजा उपावरोह विश्वास्त्वां प्रजा उपावरोहन्तु। शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः। श्रोता ग्रावाणो विदुषो न यज्ञं शृणोतु देवः सविता हवं मे स्वाहा॥ २६॥

उ० किंच हे सोमराजन्, विश्वा सर्वाः त्वं प्रजा उपावरोह अधितिष्ठ आधिपत्याय राज्याय। विसृज्योपतिष्ठते। विश्वास्त्वां प्रजा उपावरोहन्तु प्रत्युत्थानाभिवादादिभिः। जुहोति। शृणोत्वग्निः। त्रिष्टुप् लिङ्गोक्तदेवता। शृणोत्वनुजानात्वग्निः। समिधा समित्पूर्विकयाहुत्या। हवमाह्वानम्। मे मम। शृण्वन्त्वापः धिषणाश्च वाचः धीसादिन्यो वा धीमानिन्यो वा। देवीर्देव्यः। चशब्दः समुच्चयार्थः। श्रोता ग्रावाणः। यूयमपि शृणुत हे ग्रावाणः। कथमिव विदुषो न यज्ञम्। उपमार्थीय उपरिष्टादुपाचारो नकारः। विदितार्थ इव परिदृष्टकारिणो यज्ञं। प्रत्यक्षकृतः पादो मध्यमपुरुषयोगात्। शृणोतु देवः सविता हवमाह्वानं मे मम स्वाहा सुहुतमस्तु। स्वाहा वागाह॥ २६॥

म० किंच। हे सोम राजन्, विश्वाः सर्वाः प्रजा उपावरोह आधिपत्यं प्रजानां कुर्वित्यर्थः। 'विश्वास्त्वामिति विसृज्योपतिष्ठत इति' ( का० ९। १। १६ ) ग्रावसु स्थापितं सोमं विमुच्योपस्थापनं कुर्यादिति सूत्रार्थः। हे सोम, विश्वाः सर्वाः प्रजाः त्वामुपावरोहन्तु प्रत्युत्थानाभिः प्राप्नुवन्तु। 'अभूदुषा रुशत्पशुरित्युच्यमाने चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति' (का०। ९।२।२४) अभूदिति मन्त्रे होत्रा शस्यमाने चतुर्गृहीतमाज्यं प्रचरणीसंज्ञया स्रुचाध्वर्युरतिप्रणीते जुहोतीति सूत्रार्थः। त्रिष्टुब्लिङ्गोक्तदेवता। अग्निः समिधा समित्पूर्विकया आहुत्या मे हवं मदीयमाह्वानं शृणोतु। आपो ममाह्वानं शृण्वन्तु। चकारः समुच्चयार्थः। धिषणा देवीः वाचो देव्यश्च मे हवं शृण्वन्तु। 'धिषणा धीसादिन्यो वा धीमानिन्यो वा' (निरु०। ८। ४)इति यास्कः। धियं सन्वन्ति ददति धिषणाः 'षणु दाने' तनादिः। तृतीयः पादः प्रत्यक्षकृतो मध्यमपुरुषयोगात्। हे ग्रावाणः, अभिषवार्थमिहोपस्थिता यूयं मम हवं श्रोत शृणुत। 'तप्तनप्तनथनाश्च' ( पा० ७। १। ४५ ) लोण्मध्यमपुरुषबहुवचनस्य तबादेशे गुणे विकरणव्यत्यये च श्रोतेति रूपम्। संहितायां तु दीर्घः। विदुषो न। न इवार्थे विभक्तिव्यत्ययः। विद्वांसो यज्ञमिव यथा विद्वांसः प्रत्यक्षतो जानन्तो यज्ञं शृण्वन्ति तथा यूयं हवं शृणुत। तथा सविता देवः मे मम हवं शृणोतु। स्वाहा सुहुतमस्तु स्वाहा वागाहेति वा॥ २६॥

## सप्तविंशी।

देवीरापो अपांनपाद्यो व ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमः। तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा॥ २७॥

उ० अप्सु जुहोति। देवीरापः पङ्क्तिरब्देवत्या। हे देव्यः आपः अपान्नपात्संज्ञकाः, यो वः युष्माकमूर्मिः अप्संघातः कल्लोलः हविष्यः यज्ञियः। इन्द्रियावान्। इन्द्रियशब्देन वीर्यमभिधीयते। इन्द्रियावान्वीर्यवान्। छान्दसं दीर्घत्वम्।

मदिन्तमः मदयितृतमः तर्पयितृतमः सृष्टत्वेन । तमूर्मिं देवेभ्यो देवत्रा । 'देवमनुष्य' इत्यादिनात्रा प्रत्ययः । देवान्प्रति यायिनं दत्त प्रयच्छत । शुक्रपेभ्यः शुक्रशब्द उपलक्षणार्थः । शुक्रादिसोमग्रहपातृभ्यो देवेभ्यः येषां च देवानां यूयं भागः स्थ भवत तेभ्यो दत्तेति संबन्धः ॥ २७ ॥

**म०** 'आपो गत्वा देवीराप इत्यप्सु जुहोतीति' (का० ९ । ३ । ७ ) यच्चतुर्गृहीतमाज्यं सहनीतं तज्जलं प्रति गत्वा जुहोतीति सूत्रार्थः । अब्देवत्या पङ्क्तिः पञ्चपदा चत्वारिंशद्वर्णा पङ्क्तिः । अत्र द्वितीयः सप्ताक्षरः तुर्यपञ्चमौ नवार्णौ तेनैकाधिका स्वाहेति यजुः । हे आपो देवीः देव्यः, वो युष्माकमपांनपात् अपत्यरूपो योऽयमूर्मिरप्सङ्घातः कल्लोलोऽस्ति देवत्रा देवान्प्रति यायिनं तमूर्मिं देवेभ्यो दत्त प्रयच्छत । येषां देवानां यूयं भागः स्थ भागरूपा भवथ । किंभूत ऊर्मिः । हविष्यः तथा इन्द्रियावान् इन्द्रियं वीर्यमस्यास्तीति इन्द्रियावान् । दीर्घश्छान्दसः । प्रीतः सन्निन्द्रियवीर्यवृद्धिकारी । तथा मदिन्तमः मदयतीति मदी अतिशयेन मदी मदिन्तमः पीयमानोऽत्यन्तहर्षकारी तर्पयितृतमः । 'नाद्धस्य' ( पा० ८ । २ । १७ ) इति तमपि नुमागमः । किंभूतेभ्यो देवेभ्यः । शुक्रपेभ्यः शुक्र इत्युपलक्षणम् । शुक्रादीन् सोमग्रहान् पिबन्तीति शुक्रपाः तेभ्यः । यद्वा शुक्रं दीप्तं सोमं पिबन्तीति । स्वाहा इदमाज्यं युष्मभ्यं हुतमस्तु । ग्रहीष्यमाणानामपां मूल्यत्वेनेयमाहुतिरित्युक्तं तित्तिरिणा । 'देवीरापो अपांनपादित्याहाहुत्या वै निष्क्रीय गृह्णातीति' ॥२७॥

## अष्टाविंशी ।

कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि । समापो अद्भिरग्मत समोषधीभिरोषधीः ॥ २८ ॥

**उ०** कार्षिरसि । अनुष्टुप् यथाविनियोगं देवताः । चमसेनाज्यमपोहति । कार्षिरसि । 'कृष विलेखने' । हे आज्य, आकृष्टं त्वमसि । त्वं देवतया भक्षितमित्यर्थः । तेन गृह्णाति । समुद्रस्य त्वा । 'आपो वै समुद्रः' इति श्रुतिः । वसतीवरीलक्षणस्याप्सु समुद्रस्य त्वाम् अक्षित्यै अनुपक्षीणतायै उन्नयामि उद्गृह्णामि । वसतीवरीणां हि वर्धनाय एता आपो गृह्यन्ते । संसृजन्ति । समापो अद्भिरग्मत । संगच्छताम् आपो वसतीवरीलक्षणा आभिरद्भिर्मैत्रावरुणचमसस्थाभिः संगच्छतां च ओषधीभिः व्रीहियवादिभिः । ओषधीः मुद्गमसूरादिकाः अपां करणभूतत्वादोषधीनामपि तथोपयोगो भवत्वित्यभिप्रायः ॥ २८ ॥

**म०** 'कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहतीति' (का० ९ । ३ । ८ ) । अप्सु हुतमाज्यं मैत्रावरुणचमसेन दूरीकरोतीति सूत्रार्थः । कार्षिरसीत्यादिमन्त्रत्रयं मिलित्वानुष्टुप्छन्दः । आद्यस्याज्यं देवता । हे आज्यपदार्थ, त्वं कार्षिराकृष्टोऽसि देवतया भक्षितोऽसीत्यर्थः । यद्वा कर्षतीत्येवंशीलः कार्षिः अन्तर्गतशमलापनेतासि । तदाह तित्तिरिः 'कार्षिरसीत्याह शमलमेवासामुपप्लावयतीति' । 'समुद्रस्य त्वेति तेन गृह्णातीति' ( का० ९ । ३ । ९ ) । मैत्रावरुणचमसेन तडागादिस्था अपो गृह्णातीति सूत्रार्थः, द्वे यजुषी अपि । 'आपो वै समुद्रः' ( ३ । ९ । ३ । २७ ) इति श्रुतेर्वसतीवरीलक्षणस्य समुद्रस्याक्षित्यै अक्षीणत्वाय हे जल, त्वा त्वामुन्नयामि गृह्णामि । वसतीवरीणां वृद्धौ जलमेतद्गृह्यते । 'प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च सꣳसर्शयति समाप इति' (का० ९ । ३ । १२ ) जलाशयात्प्रत्यागत्य चात्वालोपरि मैत्रावरुणचमसस्था अपो वसतीवरीभिः संयोजयतीति सूत्रार्थः । आपो मैत्रावरुणचमसस्था अद्भिः वसतीवरीभिः समग्मत संगच्छन्ताम् । गमेर्लुङि तङि प्रथमबहुवचने शपि लुप्ते 'गमहन–' (पा० ६ । ४ । ९८) इत्युपधालोपे समग्मतेति रूपम् । तथा ओषधीः ओषधयः मुद्गमसूरादिका ओषधीभिर्व्रीहियवादिभिः संगच्छन्ताम् अपां कारणभूतत्वादोषधीनामपि योगोऽस्तु ॥ २८ ॥

## एकोनत्रिंशी ।

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः स्वाहा ॥ २९ ॥

**उ०** जुहोति । यमग्ने । गायत्र्याग्नेयी । हे अग्ने, यं मर्त्यं मनुष्यं पृत्सु संग्रामेषु अवाः । अवते रक्षणार्थस्यैतद्रूपम् । अवसि रक्षसि । वाजेषु । वाज इत्यन्ननाम । हविर्लक्षणेष्वन्नेषु अभ्युद्यतेषु । यं च पुरुषं जुनाः जुनातिर्गत्यर्थः अभिगच्छसि । स पुरुषो यन्ता जिनात्यन्नं, तृजन्तमेतत् आद्युदात्तत्वात् । लब्धा ससतं भवति । शश्वतीः शाश्वतिकाः । इषः अन्नानि ॥ २९ ॥

**म०** 'प्रचरणीसꣳस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्ने' ( का० ९ । ३ । १६ ) इति अग्निष्टोमसंस्थे क्रतौ प्रचरणीपात्रलिप्तमाज्यशेषं जुहुयात् शेषाज्यस्य होमपर्याप्त्यभावे चतुर्गृहीतमादाय जुहोतीति सूत्रार्थः । आग्नेयी गायत्री मधुच्छन्दोदृष्टा । हे अग्ने, पृत्सु सङ्ग्रामेषु यं मर्त्यं मनुष्यं त्वमवाः अवसि रक्षसि । अवतेः 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७) इति सिप इकारलोपे 'लेटोऽडाटौ' (पा० ३ । ४ । ९४ ) इत्याडागमे वा इति रूपम् । किंच वाजेषु वाज इत्यन्ननाम । हविर्लक्षणेष्वन्नेषु अन्ननिमित्तं यं पुरुषं त्वं जुनाः गच्छसि । हवींषि ग्रहीतुं यस्य सकाशं गच्छसीत्यर्थः । 'जु गतौ' श्नाप्रत्ययः 'इतश्च लोपः–' ( पा० ३ । ४ । ९७ ) इतीकारलोपे रूपं जुना इति । स मर्त्यस्त्वदनुग्रहेण शश्वतीरिषः नित्यान्यन्नानि धनरूपाणि यन्ता नियस्यति प्राप्स्यतीत्यर्थः लुट् । स्वाहा सुहुतमस्तु । उक्थ्यसंस्थे यमग्ने इति मन्त्रेणाद्यं परिधिं स्पृशेत् । षोडशिसंस्थे रराटीं स्पृशेत् । अतिरात्रे छदिः स्पृशेत् । अन्यसंस्थासु हविर्धानं प्रविशेत् ॥ २९ ॥

## त्रिंशी।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे रावासि गभीरमिममध्वरं कृधीन्द्राय सुषूतमम्। उत्तमेन पविनोर्जस्वन्तं मधुमन्तं पयस्वन्तं निग्राभ्या स्थ देवश्रुतस्तर्पयत मा॥ ३०॥

**उ०** अद्रिमादत्ते। देवस्य त्वा व्याख्यातम्। आददे गृह्णामि। रावासि। रासतेर्दानार्थस्य रावा। 'एतद्धेषद्वयं रासतः' इति श्रुतेः। आहुतीनां च दातासि। गभीरं महान्तम् इमम् अध्वरं यज्ञं कृधि कुरु इन्द्राय इन्द्रार्थम्। सुषूतमम्। सुरुपसर्गः पूर्वः। 'षुञ् अभिषवे'। अस्य निष्ठातकारलोपः छान्दसः दीर्घत्वं च तमपि प्रत्यये। अथ कोऽर्थः। साधु अभिषुतम् अतिशयेन उत्तमेन उत्कृष्टेन पविना पावनेन सोमेन पवनशीलेन वा। ऊर्जस्वन्तं रसवन्तम् मधुमन्तं मधुस्वादुना रसेनोपेतम् पयस्वन्तं पयःस्वादुना रसेनोपेतम् अध्वरं कृधीति संबन्धः। निग्राभ्यास्थ वाचयति। निग्राभ्यास्थ। यस्मादिन्द्रेण यूयं गृहीतास्तस्मान्निग्राभ्या उच्यन्ते। यस्माद्देवं बहुमाननामधेयप्रतिलम्भयुक्ता भवथ। देवैश्च श्रुतास्तस्माच्च बहुनामान्विताः सत्यः तर्पयत मां समासव्यासेन॥ ३०॥

**म०** 'देवस्य त्वेत्यद्रिमादाय वाचं यच्छति प्राग्घिङ्कारात् स उपांशुसवन इति' (का० ९।४।५।६) सोमाभिषवहेतुमश्मानं गृहीत्वा हिङ्कारात्प्राक् मौनी स्यात् सोऽश्मोपांशुसवनसंज्ञः उपांशुग्रहाय सोमः सूयते येनेति सूत्रार्थः। देवस्य त्वेति व्याख्यातम्। हे अभिषवसाधन पाषाण, त्वं रावासि। 'रा दाने' रातीति रावा वनिप्। आहुतीनां दक्षिणानांच दाता भवसि। तत इममध्वरं मदीयं यागं गभीरं गम्भीरं महान्तं कृधि कुरु। 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' (पा० ६।४। १०२) इति हेर्धिः उत्तमेनोत्कृष्टेन पविना वज्रसदृशेन त्वयाहं सोममीदृशं करोमि। किंभूतम्। इन्द्रायेन्द्रार्थं सुषूतं सुष्ठु सूयत इति सुसुतः अतिशयेन सुसुतः सुसुततमः तं सुष्ठु अभिषुततमम्। निष्ठातकारलोपो दीर्घश्च छान्दसः। तथा ऊर्जस्वन्तं मधुस्वादेन रसेनोपेतं पयस्वन्तं पयःस्वादुना रसेनोपेतं एवंविधं सोमं त्वयाहं करोमीत्यर्थः। 'निग्राभ्यास्तु वाचयत्युरस्येनानिगृह्य निग्राभ्या स्थेति' (का० ९।४।७)। अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्यन्ते तासु गृह्यमाणासु वाचयेत् यजमानश्च स्वोरसि निग्राभ्या निगृह्यालभ्य च मन्त्रं वक्तीति सूत्रार्थः। हे आपः, यूयं निग्राभ्या निग्राह्या अस्माभिर्नितरां ग्रहीतव्याः स्थ भवथ। यस्मादिन्द्रेणीरसि यूयं ग्रहीतास्ततो निग्राभ्याः। हृग्रहोर्भः। देवश्रुतः देवैः श्रूयन्ते ताः देवेषु प्रख्याताः ततो बहुमानान्विता यूयं मा मां तर्पयत प्रीतिं कुरुत॥ ३०॥

## एकत्रिंशी।

मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्॥ ३१॥

**उ०** मनो मे मम तर्पयत इति विस्तारः व्यासेनोक्तः। समासेनाह। आत्मानं पिण्डशरीरम् प्रजां पशून् गणान्मनुष्यसंघातान्। गणाश्च मा वितृषन्। मद्द्रव्यदानेन पूरिता अपि सन्तो मा विगततृष्णा भवन्तु। अनुरक्तगणोहं भवेयमित्यर्थः॥ ३१॥

**म०** एवं समासेनोक्त्वा व्यासेनाह। मे मम मनः वाचं प्राणं चक्षुः श्रोत्रं तर्पयत। मदीयानि मनःप्रभृतीनीन्द्रियाणि तर्पयतेत्यर्थः। एवं व्यासेनोक्त्वा पुनः समासेनाह। आत्मानं शरीरं प्रजां पुत्रादिसंपत्तिं पशून्गवादीन्गणान् मनुष्यसङ्घांश्च तर्पयत। मे मदीया गणा मनुष्यसङ्घा मा वितृषन् मया द्रव्यदानेन पूरिता अपि सन्तो विगततृष्णा मा भवन्तु। अनुरक्तगणोऽहं भवेयमिति यजमान आशास्त इत्यर्थः॥ ३१॥

## द्वात्रिंशी।

इन्द्राय त्वा वसुमते रुद्रवत इन्द्राय त्वादित्यवत इन्द्राय त्वाभिमातिघ्ने। श्येनाय त्वा सोमभृतेऽग्नये त्वा रायस्पोषदे॥ ३२॥

**उ०** सोमं मिमीते। इन्द्राय त्वा वसुमते रुद्रवते। मिम इति शेषः। इन्द्राय त्वा आदित्यवते मिमे। प्रातःसवनमाध्यन्दिनसवनतृतीयसवनदेवतायुक्तायेन्द्रायेत्यर्थः। इन्द्राय त्वा अभिमातिघ्ने मिमे। 'सपत्नो वाभिमातिः' इति श्रुतिः। सपत्नस्य हन्त्रे। श्येनाय श्येनरूपिण्यै गायत्र्यै त्वां सोमभृते। 'हृग्रहोर्भश्छन्दसि' इति हस्य भकारः। सोमहृते सोमस्याहर्त्र्यै गायत्र्यै मिमे। अग्नये त्वा रायस्पोषदे। रायो धनं तस्य पोषो वृद्धिस्तं ददाति यस्तस्मै रायस्पोषदे अग्निशब्देनात्र गायत्र्यभिधीयते भक्तिश्रुतेः 'अथैतान्यग्निभक्तीन्ययं लोकः प्रातःसवनं वसन्तो गायत्री' इति॥ ३२॥

**म०** 'उपांशुसवने सोमं मिमीत इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रमिति' (का० ९।४।८) उपांशुसवनं पूर्वोक्तमश्मानमधिषवणचर्मणि निधाय तदुपरि पञ्च मन्त्रैः पञ्चवारमभिषोतव्यसोममुष्टिं प्रक्षिपतीति सूत्रार्थः। पञ्च यजूंषि सौम्यानि। तत्राद्यम् हे सोम, इन्द्रायेन्द्रार्थं त्वां त्वां मिमे इति शेषः। किंभूतायेन्द्राय। वसुमते वसवोऽस्य

सन्तीति वसुमान् तस्मै । वसुसंज्ञकप्रातःसवनदेवतायुक्तायेत्यर्थः । रुद्रवते रुद्राः सन्त्यस्येति रुद्रवान् तस्मै रुद्रनामकमाध्यन्दिनसवनदेवतायुक्ताय । अथ द्वितीयम् । आदित्यवते तृतीयसवनदेवतायुक्तायेन्द्राय हे सोम' त्वा त्वां मिमे । अथ तृतीयम् । अभिमातीन् शत्रून् हन्तीत्यभिमातिहा तस्मै अभिमातिघ्ने शत्रुहन्त्रे इन्द्राय सोम, त्वां मिमे । 'सपत्नो वा अभिमातिः' ( ३ । ९ । ४ । ९ ) इति श्रुतेः । अथ चतुर्थम् । सोमं हरतीति सोमहृत् तस्मै । 'ह्रग्रहोर्भश्छन्दसि' ( पा० ८ । २ । ३२ ) इति हस्य भः । सोमाहरणकर्त्रे श्येनाय श्येनपक्षिरूपायै गायत्र्यै हे सोम' त्वां मिमे । 'गायत्री श्येनो भूत्वा दिवः सोममाहरत्' ( ६ । ९ । ४ । १० ) इति श्रुतेः । अथ पञ्चमम् । रायस्पोषदे रा धनं तस्य पोषो वृद्धिः तं ददातीति रायस्पोषदास्तस्मै धनपुष्टिदात्रेऽग्नये हे सोम, त्वां मिमे ॥ ३२ ॥

## त्रयस्त्रिंशी ।

यत्ते॑ सोम दि॒वि ज्योति॒र्यत्पृ॑थि॒व्यां यदु॒रावन्त॑रि॑क्षे । तेना॒स्मै यज॑माना॒योरु रा॒ये कृ॒ध्यधि॑ दा॒त्रे वो॑चः ॥ ३३ ॥

**उ०** मितालम्भनम् । यत्ते सोम । सौमी विपरीता बृहती । श्रुत्युक्तमस्य मन्त्रस्य कारणं निदानम् । यदा किल देवानां हविरभूत् सोमः तदैषु लोकेषु तिस्रस्तनूर्विन्यदधात् । तासामनेनाप्तिः क्रियते । यत्ते तव हे सोम, दिवि द्युलोके ज्योतिः । यच्च पृथिव्यां ज्योतिः । यच्च उरौ विस्तीर्णे अन्तरिक्षे तेन तन्वाख्येन ज्योतिषा अस्मै यजमानाय अस्य यजमानस्य संबन्धिनि यज्ञे उरु विस्तीर्णं कृत्स्नं शरीरमात्मनः कृधि कुरु । ऋत्विजां च राये दक्षिणाप्राप्तये उरु शरीरं कृधि कुरु स्वकीयम् । किंच । अधिवोचः अधिब्रूहि । दात्रे यजमानाय । कृत्स्नोहमागत इति ॥ ३३ ॥

**म०** 'यत्त इति मितालम्भनमिति' ( का० ९ । ४ । ९ ) मितस्योपांशुसवने पञ्चवारं प्रक्षिप्तस्य सोमस्य स्पर्शं कुर्यादिति सूत्रार्थः । सोमदेवत्या विपरीता बृहती आद्यतृतीयावष्टार्णौ द्वितीयतुर्यौ द्वादशार्णौ पादौ सा विपरीता बृहती व्यूहेन द्वादशत्वम् । अस्य मन्त्रस्य श्रुतौ निदानमुक्तम् 'यदा सोमो देवानां हविरभूत्तदा तिस्रः स्वतनूरेषु लोकेषु न्यदधादिति' ( ३ । ९ । ४ । १२ ) । तासां तनूनामनेन मन्त्रेण प्राप्तिः क्रियते । हे सोम, दिवि द्युलोके ते तव यज्ज्योतिस्तेजः यच्च पृथिव्यां ज्योतिः उरौ विस्तीर्णे अन्तरिक्षे यत् ज्योतिः शरीरलक्षणं तेन तन्वाख्येन ज्योतिषा अस्मै यजमानाय । विभक्तिव्यत्ययः । अस्य यजमानस्य यज्ञे उरु विस्तीर्णं स्वशरीरं कृधि कुरु । राये धनाय ऋत्विजां दक्षिणाप्राप्तये च उरु शरीरं कृधि । किंच दात्रे अधि वोचः अधिकं ब्रूहि । यजमानाय कृत्स्नशरीरोऽहमागत इति वदेत्यर्थः । वचेर्लुङि 'वचेरुम्' ( पा० ७ । ४ । २० ) इति उमागमेऽडभावे च वोच इति मध्यमैकवचने रूपम् । यद्वास्य मन्त्रस्य व्याख्यान्तरम् । हे सोम, त्रिषु यत्त्वदीयं ज्योतिरस्ति तेन ज्योतिषास्मै यजमानाय राये । चतुर्थ्यर्थे तृतीया । राया धनेन समृद्धमुरु विस्तीर्णं स्थानं कृधि । किंच दात्रे फलदायेन्द्राय इति वोचः ब्रूहि । यत् अधि अधिकोयं यजमानो भवत्विति ॥ ३३ ॥

## चतुस्त्रिंशी ।

श्वा॒त्रा स्थ॑ वृत्र॒तुरो॒ राधो॑गूर्ता अ॒मृत॑स्य॒ पत्नीः॑ । ता दे॑वीर्देवत्रे॒मं य॒ज्ञं न॑यतोप॑हूताः॒ सोम॑स्य पिबत ॥ ३४ ॥

**उ०** आसिञ्चति निग्राभ्याः । श्वात्रा स्थ । उपरिष्टाद्बृहती निग्राभ्या आपो देवताः । या यूयं श्वात्राः स्थ श्वात्रमिति क्षिप्रनाम । क्षिप्रकारिण्यो भवथ शिवा वा भवथ । वृत्रतुरः । तुर्वतिर्वधकर्मा । वृत्रस्य हन्त्र्यः । राधोगूर्ता । राधो धनमुद्गिरन्तीति राधोगूर्ताः । अमृतस्य पत्नीः अमृतत्वस्य पालयित्र्यः ताः हे देवीः । 'वा छन्दसि' इति दीर्घत्वम् । देव्यः देवान् प्रति । इमं यज्ञं नयत प्रापयत । किंच अध्वर्युणा उपहूताः सत्यः सोमस्यापिवत ॥ ३४ ॥

**म०** 'श्वात्रा स्थेत्यासिञ्चति निग्राभ्या इति' ( का० ९ । ४ । १२ ) । सोमस्योपरि होतृचमसेनैव निग्राभ्या आसिञ्चतीति सूत्रार्थः । पथ्या बृहती तृतीयो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः पादा यस्याः सा पथ्याबृहती । इयं त्र्यधिका । हे आपः, यूयमेवंविधाः स्थ भवथ । किंभूताः । श्वात्राः । श्वात्रमिति क्षिप्रनाम । क्षिप्रकार्यकारिण्यः शिवा वा । वृत्रतुरः । तूर्वतिर्वधकर्मा । वृत्रं दैत्यं तूर्वन्ति हिंसन्ति ता वृत्रतुरः । क्विपि 'राल्लोपः' ( पा० ६ । ४ । २१ ) इति वलोपः । राधोगूर्ताः राधो धनं गुरन्ते उद्यच्छन्ति ददति ता राधोगूर्ताः । 'गुरी उद्यमे' अस्मात् 'नसत्तनिषत्त–' ( पा० ८ । २ । ६१ ) इत्यादिना कर्तरि क्तो नत्वाभावश्च निपात्यते । अमृतस्य सोमस्य पत्नीः पालयित्र्यः । हे देवीः देव्यः, तास्तथाविधा यूयमिमं यज्ञं देवत्रा देवान् प्रति नयत प्रापयत उपहूता अनुज्ञाताः सत्यो यूयं सोमस्य । कर्मणि षष्ठी । सोमं पिबत ॥ ३४ ॥

## पञ्चत्रिंशी ।

मा भे॒र्मा संवि॑क्था॒ ऊर्जं॑ धत्स्व॒ धिष॑णे वी॒ड्वी स॒ती वी॑डयेथा॒मूर्जं॑ दधाथां पा॒प्मा ह॒तो न सोमः॑ ॥ ३५ ॥

**प्रहरति । मा भेः । हे सोम, मा भैषीः । मा संविक्थाः । 'ओविजी भयचलनयोः' । संपूर्वः कम्पनमभिधत्ते । मा च त्वं कम्पनं कृथाः देवतर्पणार्थमहमभिषुणोमि । अतः**

ऊर्जं धत्स्व रसं धेहि । एवं सोमं संबोध्य अथेदानीं द्यावापृथिव्यौ संबोधयति । हे धिषणे हे द्यावापृथिव्यौ । वीड्वी सती वीडयेथाम् । वीडुशब्दो दृढवचनः । युवां स्वतएव दृढे सत्यौ वीडयेथां दृढमात्मानं कुरुतम् । अस्मात् ग्राव्णः उद्यतात् । किंच ऊर्जं रसं दधाथाम् । अस्मिन्सोमे अनेन उद्ग्राव्णा वज्रसंयुक्तेन पाप्मा यजमानस्य हतः नतु सोमः ॥ ३५ ॥

**म०** 'मा भेरिति प्रहरतीति' ( का० ९ । ४ । १५ ) उपांशुसवनेनाश्मना सोमे प्रहरेदिति सूत्रार्थः । अर्धं सौम्यमर्धं द्यावापृथिव्यम् । हे सोम, त्वं मा भेः मा भैषीः । शपो लुकि लङि रूपम् । मा संविक्थाः कम्पनं मा कृथाः । 'ओविजी भयचलनयोः' लुङि रूपम् । यतो देवतर्पणायाहं त्वामभिषुणोमि अत ऊर्जं धत्स्व रसं धेहि । एवं सोमं संबोध्य द्यावापृथिव्यौ संबोधयति । हे धिषणे हे द्यावापृथिव्यौ, युवां वीड्वी सती वीडयेथाम् । वीडुशब्दो दृढवचनः । दृढे सत्यावात्मानं दृढं कुरुतम् अस्मादुद्यताद्ग्राव्णः । किंच ऊर्जं दधाथां रसं धत्तम् अस्मिन् सोमे । अनेन तु वज्रसंस्तुतेन ग्राव्णा यजमानस्य पाप्मा हतो न तु सोमः ॥ ३५ ॥

## षट्त्रिंशी ।

प्रागपागुदगधराक्सर्वतस्त्वा दिश आधावन्तु । अम्ब निष्पर समरीर्विदाम् ॥ ३६ ॥

**उ०** निग्राभं वाचयति । प्रागपागुदक् । द्वाभ्यामृग्भ्यामुष्णिग्बृहतीभ्याम् । सौमी द्वितीया ऐन्द्री । सा दिग्भिर्मिथुनमिच्छति । तच्च देवाः संपादितवन्तः । तदेतच्चाभ्युक्तम् । हे सोम, प्राक् प्रागञ्चनाः । अपाक् अधराञ्चनाः । एवं सर्वतः त्वां दिशः आधावन्तु अभिसमागच्छन्तु । दिग्वासिनो वा जनाः किमभिभाषमाणाः परस्परं त्वामभिधावन्तु । अम्ब निष्पर । हे अम्ब, प्राच्यादिविशेषदिगभिधाने निश्चित्य सोमं पर । 'पॄ पालनपूरणयोः' इत्यस्यैतद्रूपम् । पूरय स्वैर्भागैरेतं सोमम् । किं प्रयोजनमिति चेत् समरीर्विदाम् । 'प्रजावा अरी' इति श्रुतिः । संविदा संविदन्ताम् । अरीः प्रजाः । एतदुक्तं भवति । सोमसमागमेऽस्माकं सन्ति नानादिग्वासिनो जनाः संजानते एवम् ॥ ३६ ॥

**म०** 'प्रतिवर्गं निग्राभं वाचयति होतृचमसेऽल्पानꣳशून्वधाय प्रागपागिति' ( का० ९ । ४ । २० ) प्रतिप्रहारवर्गं होतृचमसमध्ये स्तोकान्सोमांशून्निधाय प्रागपागिति ऋग्द्वयं निग्राभसंज्ञं यजमानं वाचयेदिति सूत्रार्थः । सोमदेवत्योष्णिक् । सोमो दिग्भिर्मिथुनमैच्छत्तच्च देवाः संपादितवन्तस्तदेतदचाभ्युक्तम् । हे सोम, प्राक् प्रागञ्चनाः अपाक् अपागञ्चनाः दक्षिणाः पश्चिमाश्च उदक् उदगञ्चना उत्तराः अधराक् अधराञ्चनाः एवं प्रागादयः सर्वा दिशः सर्वतः स्वस्वप्रदेशात्त्वा त्वामाधावन्तु आभिमुख्येन गच्छन्तु । परस्परं किं भाषमाणास्त्वामभिधावन्त्विति तदाह हे अम्ब हे मातः, निष्पर स्वैर्भागैः सोमं पूरय । 'पॄ पालनपूरणयोः' विकरणव्यत्यये लोटि रूपम् । किं प्रयोजनमिति चेत् । अरीः अर्यः प्रजाः संविदा संविदताम् 'प्रजा वा अरीः' ( ३ । ९ । ४ । २१ ) इति श्रुतिः । अस्माकं सोमसमागमं नानादिग्वासिनो जना जानन्त्वित्यर्थः । इति भाषमाणास्त्वामागच्छन्तु । 'विद ज्ञाने' अस्माल्लटि तङि प्रथमाबहुवचने 'आत्मनेपदेष्वनतः' ( पा० ७ । १ । ५ ) इति झस्यादादेशे 'लोपस्त आत्मनेपदेषु' ( पा० ७ । १ । ४१ ) इति तकारलोपे सवर्णदीर्घे विदामिति रूपम् । 'समो गम्' ( पा० १ । ३ । २९ ) इत्यादिना तङ् ॥ ३६ ॥

## सप्तत्रिंशी ।

त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ३७

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां षष्ठोऽध्यायः ॥६॥

**उ०** त्वमङ्ग । हे इन्द्र, यतः त्वम् अङ्ग । अङ्गेति क्षिप्रनाम । क्षिप्रं प्रशꣳसिषः । प्रशंससि । देवः सन् हे शविष्ठ बलिष्ठ मर्त्यं मनुष्यं यजमानम् । अतः कारणात् नत्वत् न त्वत्तः अन्यः हे मघवन् धनवन् अस्ति विद्यते मर्डिता 'मृड सुखने' । सुखयिता यजमानानाम् । इन्द्र ब्रवीमि अत्यद्भुतं तव संबन्धि वचः वचनमार्षम् ॥ ३७ ॥

इति उवटकृतौ मन्त्रभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

**म०** इन्द्रदेवत्या पथ्याबृहती गोतमदृष्टा । अङ्गेति क्षिप्रनाम । हे शविष्ठ अतिशयेन बलवन् इन्द्र, देवः दीप्यमानस्त्वं मर्त्यं मनुष्यं यजमानं प्रशंसिषः प्रशंससि स्तौषि । समीचीनोऽयं यजमानो होता श्रद्धावानित्यादिस्तुतिं करोषीत्यर्थः । 'शंसु हिंसास्तुत्योः' लिङर्थे लेट् मध्यमैकवचने सिबादेशः 'सिब्बहुलं लेटि' ( ३ । १ । ३४ ) सिप्प्रत्ययः तस्य 'आर्धधातुकस्येड्वलादेः' ( पा० ७ । २ । ३५ ) इति इडागमः 'लेटोऽडाटौ' (पा० ३ । ४ । ९४ ) इति सिपोऽडागमः 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इति सिप इकारलोपः । तस्य रुत्वविसर्गौ षत्वम् । प्रशंसिष इति रूपम् 'तिङ्ङतिङः' ( पा० ८ । १ २८) इति सर्वानुदात्तत्वम् । किंच हे मघवन् हे धनवन् इन्द्र, मर्डिता 'मृड सुखने' मृडतीति मर्डिता यजमानस्य सुखयिता त्वदन्यो नास्ति न विद्यते । अतो हे इन्द्र, ते तव वचः त्वमेव सुखयितेत्येवंरूपं त्वदीयं वचनमहं ब्रवीमि वदामि ॥३७॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अभ्र्यादानाद्वाचनान्तः षष्ठोऽध्यायः समीरितः ॥ ६ ॥

## सप्तमोऽध्यायः ।

### तत्र प्रथमा ।

वा॒चस्पत॑ये पवस्व॒ वृष्णो॑ अ॒ꣳशुभ्या॒ं गभ॑स्तिपूतः । दे॒वो दे॒वेभ्यः॑ पवस्व॒ येषां॑ भा॒गोसि॑ ॥ १ ॥

उ० वाचस्पतये । उपांशुग्रहणस्य पुरोरुक् । अनुष्टुप् प्राणदेवत्या । गृह्णाति । वाचस्पतये पवस्व । 'प्राणो वै वाचस्पतिः' इति श्रुतिः । वाचस्पतये प्राणाय पवस्व । पवनं गमनम् देवतार्थां प्रवृत्तिः । वृष्णो अꣳशुभ्यां गभस्तिपूतः । यस्त्वं वृष्णोर्वर्षितुः सोमस्यांशुभ्याम् अध्वर्योर्गभस्तिभ्यां पूतः । 'पाणी वै गभस्ती' इति श्रुतिः । द्वितीयं गृह्णाति । देवो देवेभ्यः पवस्व । देवः सन् देवेभ्योऽर्थाय पवस्व प्रवृत्तिं कुरु । न ह्यदेवो देवांस्तर्पयितुमलम् । केषां देवानाम् । येषां त्वं देवानां भागोसि ॥ १ ॥

म० षष्ठेऽध्याये यूपसंस्कारादिसोमाभिषवपर्यन्ता मन्त्रा उक्ताः । सप्तमे ग्रहग्रहणमन्त्रा उच्यन्ते । 'उपाꣳशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति' (का० ९ । ४ । २३ ) मन्त्रत्रयस्य प्रतीकोपादानात्तत्रैकैकेन मन्त्रेणोपांशुग्रहमेकैकवारं गृह्णीयात् । उपयामगृहीतोऽसीति मन्त्रत्रयस्यादौ योज्यम् । प्राणदेवत्या विराट् नववैराजत्रयोदशैर्नष्टरूपेति लक्षणान्नष्टरूपा विराट् प्रथमोऽष्टार्णस्तेनैकोना । पूर्वोत्तरार्धयोरुपांशुग्रहस्य प्रथमद्वितीयग्रहणे क्रमेण विनियोगः । हे सोम, त्वं वाचस्पतये प्राणाय पवस्व गच्छ । 'पव गतौ' । 'प्राणो वै वाचस्पतिः' ( ४ । १ । १ । ९ ) इति श्रुतेः । यद्वा पतये पालकदेवार्थं वाचः वाचा । विभक्तिव्यत्ययः । मन्त्रेण वाचः संबन्धिना मन्त्रेण वा पवस्व शुद्धो भव । किंभूतस्त्वम् । वृष्णः वर्षितुस्तव संबन्धिभ्यामंशुभ्यां तौ हि तत्र क्षिप्येते । तथा गभस्तिपूतः 'पाणी वै गभस्ती' ( ४ । १ । १ । ९ ) इति श्रुतेरध्वर्योर्गभस्तिभ्यां पाणिभ्यां च पूतः । समासगतः पूतशब्दो विच्छिद्यांशुभ्यामित्यनेनापि योज्यः । द्वितीयं गृह्णाति । हे सोम, देवः सन् देवेभ्योऽर्थाय पवस्व प्रवृत्तिं कुरु । न ह्यदेवो देवांस्तर्पयितुमलम् । केभ्यो देवेभ्यः । येषां देवानां त्वं भागोऽसि तान्प्रति गच्छेत्यर्थः ॥ १ ॥

### द्वितीया ।

मधु॑मती॒र्न॒ इष॑स्कृधि॒ यत्ते॑ सो॒मादा॑भ्य॒ं नाम॒ जागृ॑वि॒ तस्मै॑ ते सोम॒ सोमा॑य॒ स्वाहा॒ स्वाहो॒र्व॒न्तरि॑क्ष॒मन्वे॑मि ॥ २ ॥

उ० तृतीयं गृह्णाति । मधुमतीः । मधुरस्वादोपेताः नः अस्माकम् इषः अन्नानि कृधि कुरु । गृह्यमाणः अंशून् सोमे निदधाति । यत्ते सोम । यत् ते तव हे सोम । अदाभ्यं नाम । दभ्नोतिर्हिंसार्थः । अनुपहिंसितं नाम । किं तत् सोमेति । जागृवि जागरणशीलं च अनुपहतं मानुषैर्धर्मैः । तस्मै ते तव हे सोम, सोमाय स्वाहा । स्वाहा इत्युक्त्वा निष्क्रामति । उर्वन्तरिक्षमन्वेमि । व्याख्यातम् ॥ २ ॥



म० तृतीयं गृह्णाति । लिङ्गोक्तदेवतम् । हे सोम, त्वं नोऽस्माकमिषोऽन्नानि मधुमतीः मधुररसोपेताः कृधि कुरु । 'यत्त इत्यात्तान्सोमे निदधाति' (का० ९ । ४ । २८ ) इति स्वीकृतानंशून्सोमे स्थापयेत् । सौम्यम् । हे सोम, ते तव अदाभ्यमहिंस्यम् । दभ्नोतिर्हिंसार्थः । जागृवि जागरणशीलं यन्नामास्ति सोमेति हे सोम, तस्मै तन्नामवते तुभ्यं सोमाय स्वाहा दत्तमस्तु । 'स्वाहेत्युक्त्वोर्वन्तरिक्षमिति निष्क्रमणमिति' ( का० ९ । ४ । ३४ ) 'स्वाहेत्यक्षरद्वयमुक्त्वा निष्क्रमेत' । उरु विस्तीर्णमन्तरिक्षमन्वेमि अनुगच्छामि ॥ २ ॥

### तृतीया ।

स्वाङ्कृ॑तोऽसि॒ विश्वे॑भ्य इन्द्रि॒येभ्यो॑ दि॒व्येभ्यः॒ पार्थि॑वेभ्यो॒ मन॑स्त्वाष्टु॒ स्वाहा॑ त्वा सुभव॒ सूर्या॑य दे॒वेभ्य॑स्त्वा मरीचि॒पेभ्यो॑ देवाꣳशो॒ यस्मै॑ त्वे॒डे॑ तत्स॒त्यमु॑परि॒प्रुता॑ भ॒ङ्गेन॑ ह॒तो॒ऽसौ फट् प्रा॒णाय॑ त्वा व्या॒नाय॑ त्वा ॥ ३ ॥

उ० जुहोति । स्वांकृतोऽसि स्वयं कृतोऽसि । स्वयं कृतोसीति प्राप्ते छन्दसि यकारलोपः । स्वयमुत्पन्नोसि । 'प्राणो वा अस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातः' इति श्रुतिः । स्वयमुत्पन्नोऽसि विश्वेभ्य इन्द्रियेभ्यः सकाशात् । दिव्येभ्यः देवेभ्यः पार्थिवेभ्यः द्विपदचतुष्पदेभ्यः सकाशात् स्वयमुत्पन्नोसि इत्यनुवर्तते । यस्त्वमेवं स्वतन्त्रोऽकृतकः तं मनः त्वाष्टु । मनः प्रजापतिः त्वां व्याप्नोतु । 'प्रजापतिर्वै मनः । प्रजापतिष्ट्वाश्नुताम्' इति श्रुतिः । स्वाहा त्वा सुभव सूर्याय । स्वाहाकारेण त्वां जुहोमीति शेषः । हे शोभन, भव ग्रह सूर्याय प्रागुपमार्ष्टि मध्यमे परिधौ । देवेभ्यः त्वा । देवेभ्यो मरीचिपेभ्योऽर्थाय त्वामुपमार्ज्मीति शेषः । बाह्वादिश्लिष्टमंशुमभिचारं जुहुयात् । देवांꣳशो । हे देव सोमांशो, यस्मै वधाय त्वाम् ईडे । ईडिरध्येषणाकर्मा । प्रार्थयामि । तत्सत्यमस्त्विति शेषः । उपरिप्लुता प्लवतिर्गत्यर्थः । उपर्युपरिगतेन भङ्गेन आमर्दनेन हतो निहतः असाविति नामादेशः । फट् । 'जिफला विशरणे' । क्विबन्तस्यैतद्रूपम् डलयोरेकत्वात् । विशीर्यतु । फटिति अभिचारे स्वाहाकारस्य स्थाने प्रयुज्यते । पात्रासादनम् । प्राणाय त्वा । सादयामीति शेषः । उपांशुसवनं सादयति । व्यानाय त्वा ॥ ३ ॥

म० 'स्वांकृत इति हुत्वा पात्रमुन्मार्ष्टीति' (का० ९।४।३७) उपांशुग्रहं हुत्वा पात्रमार्जनं कुर्यात् । ग्रहदैवतम् । 'प्राणो वा अस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातः' ( ४ १ । १ । २२)

१ उपरिप्रुता इति पाठः.

इति श्रुतेरुपांशुग्रहः प्राणः । हे प्राणरूपोपांशुग्रह, त्वं स्वांकृतो भवसि स्वयं स्वेनैव कृतो भवसि । छान्दसो यलोपः । स्वयमुत्पन्नोऽसि । केभ्यः । विश्वेभ्यः सर्वेभ्यः इन्द्रियेभ्यः सकाशात् दिव्येभ्यः दिवि भवा दिव्या देवास्तेभ्यश्च सकाशात् पार्थिवेभ्यः पृथिवीभवेभ्यो द्विपदचतुष्पदेभ्यः सकाशात्स्वयमुत्पन्न इत्यनुवर्तते । यस्त्वमेवमकृतकः स्वतन्त्रस्तं त्वां मनः प्रजापतिरष्टु व्याप्नोतु । 'अशूङ् व्याप्तौ' पदविकरणव्यत्ययः । 'प्रजापतिर्वै मनः प्रजापतिष्ट्वाश्नुताम्' ( ४।१।१।२२ ) इति श्रुतेः । शोभनो भव उत्पत्तिर्यस्य तत्संबोधनं हे सुभव उत्तमजन्मन् ग्रह, सूर्याय सूर्यार्थं त्वा त्वां स्वाहाकारेण जुहोमि । यद्वास्य होममन्त्रस्यायमर्थः । हे प्राणरूप ग्रह, त्वं स्वांकृतोऽसि मया स्वीकृतोऽसि । किमर्थम् । दिव्येभ्यः देवजन्मनि स्थितेभ्यः पार्थिवेभ्यः मनुष्यजन्मनि स्थितेभ्यः सर्वेभ्य इन्द्रियेभ्यः इन्द्रियाणां हितायेत्यर्थः । मनश्च तेषामिन्द्रियाणामधीशं त्वामष्टु व्याप्नोतु । हे सुभव प्राणरूपोपांशुग्रह, तादृग्रूपं त्वां बहिःप्राणरूपाय सूर्याय स्वाहाकारेण जुहोमि । 'आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णीत' इत्याथर्वणिकश्रुतेः सूर्यस्य बहिःप्राणत्वम् । स्वांकृतशब्देन प्राणरूपग्रहस्य स्वाधीनत्वं दिव्यपार्थिवशब्दाभ्यां च जन्मद्वयं विवक्षितमिति तित्तिरिणोक्तम् । 'स्वांकृतोऽसीत्याह प्राणमेव समकृत विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान् दधातीति' । 'प्रथमे परिधावुत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति' ( का० ९।४।३८ ) । पश्चिमस्थे परिधौ सोमलिप्तमूर्ध्वाभिमुखं हस्तं कृत्वा प्रागभिमुखं यथा तथा मार्जनं कुर्यात् । दैवं यजुः । हे लेप, मरीचिपेभ्यः मरीचिपालकेभ्यो देवेभ्योऽर्थाय त्वा त्वां परिधौ मार्ज्मि इति शेषः । 'वास उरोबाहुषु श्लिष्टमᳯशुमभिचरञ्जुहुयाद्देवाᳯशविति' (का० ९।४।३९) । वस्त्रादिषु श्लिष्टो यः सोमांशुस्तमभिचारार्थं जुहुयात् । आभिचारिकं सोमांशुदेवतं यजुः । हे देव दीप्यमान हे अंशो सोमांशो, यस्मै वधाय त्वामीडे प्रार्थयामि । ईडिरध्येषणकर्मा । तत् वधकर्म सत्यमस्त्विति शेषः । उपरि प्रवते गच्छतीत्युपरिप्रुत् । प्रवतिर्गत्यर्थः । तेनोपरि आगतेन भङ्गेनामर्देनासाविति देवदत्तादिनामनिर्देशः । असौ द्वेष्यो हतो निहतः सन् फट् विशीर्णो भवतु ।'ञिफला विशरणे' अस्य क्विबन्तस्यैतद्रूपम् । फलतीति फट् डलयोरैक्यम् । स्वाहाकारस्थाने फडित्यभिचारे प्रयुज्यते । 'प्राणाय त्वेति पात्रासादनम्' ( का० ९।४।४१ ) । यस्मिन्प्रदेशे पूर्वमुपांशुपात्रं स्थापितं तत्रैव स्थापयेत् । हे उपांशुपात्र, प्राणदेवतासंतोषार्थं त्वाम् आसादयामीति शेषः । 'उपाᳯशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति सᳯस्पृष्टमिति' ( का० ९।४।४२ ) । येनाश्मना सोमोऽभिषुतः स उपांशुसवनस्तं हस्तेन प्रमृज्योदगभिमुखग्रहसंलग्नं सादयेत् । हे उपांशुसवन, व्यानदेवताप्रीत्यर्थं त्वामासादयामि ॥ ३ ॥

## चतुर्थी ।

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोमम् । उरुष्य राय एषो यजस्व ॥ ४ ॥

उ० अन्तर्यामं गृह्णाति । उपयामगृहीतोसि । उपयमती-त्युपयामः । उपयामेन गृहीतः त्वमसि । 'इयं वा उपयाम इयं वा इदम्' इत्यादिश्रुतिः । अन्तर्यच्छ मघवन् हे मघवन्, अन्तर्मध्ये ग्रहपात्रे यच्छ निगृह्णीष्व । ततः पाहि गोपाय पात्रस्थं सोमम् । ततोऽनन्तरम् उरुष्य रायः उरुष्यतिर्गोपायनार्थः । 'पशवो वै रायः' इति श्रुतिः । गोपाय पशून् । इषो यजस्व इषोऽन्नानि तत्प्रभवत्वात्प्रजा लक्षणया इष उक्ताः । 'प्रजा वा इषः' इति श्रुतिः । यजस्व यायजूकाः कुरु । अस्मिन्नर्थे श्रुत्या एतत्पदं व्याख्यातम् ॥ ४ ॥

म० 'उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति' ( का० ९।६।१ ) । सूर्योदयानन्तरमन्तर्यामग्रहं गृह्णीयात् । उपयामयती-त्युपयामो ग्रहस्तेन गृह्यत इत्युपयामगृहीतः पचाद्यच् चित्त्वादन्तोदात्तः 'यमोऽपरिवेषणे' इति परिवेषणादन्यत्र मित्वाभावाद्वृद्धिः । 'तत्पुरुषे तुल्यार्थ–' ( पा० ६।२।२ ) इति पूर्वपदस्वरं बाधित्वा 'थाथघञ्–' ( पा० ६।२।१४४ ) इति अजन्तस्यान्तोदात्तत्वम् । पुनस्तृतीयासमासे 'तत्पुरुषे तुल्यार्थ–' ( पा० ६।२।२ ) इत्यादिना तृतीयान्तस्य प्रकृतिस्वरत्वेन तदेव स्थितम् । हे सोमरस, त्वं तादृशोऽसि । हे मघवन् धनवन्निन्द्र, त्वं तादृशं रसमन्तर्ग्रहपात्रमध्ये यच्छ निगृह्णीष्व । यद्वा शत्रुभ्योऽन्तर्धानं व्यवधानं यथा तथा नियमय । ततः सोमं पाहि पालय । तथा रायो धनानि उरुष्य रक्ष । उरुष्यती रक्षणकर्मा । यद्वा 'पशवो वै रायः' ( ४।१।१५ ) इति श्रुतेः पशूत्रक्ष । आ इषो यजस्व इषोऽन्नानि आयजस्व समन्ताद्देहि । यद्वान्नप्रभवत्वादिषो लक्षणया प्रजाः । 'प्रजा वा इषः' ( ४।१।२।१५ ) इति श्रुतेः । ता यजस्व याजयस्व यायजूकाः कुरु । श्रुत्यैवं व्याख्यातत्वात् ॥ ४ ॥

## पञ्चमी ।

अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ॥ ५ ॥

उ० अन्तस्ते । अन्तर्यामं पुरोरुक् त्रिष्टुप् मघवद्देवत्या । यस्य तव प्राणरूपापन्नस्यान्तः शरीरमध्ये द्यावापृथिव्यौ दधामि स्थापयामि । अन्तर्मध्ये च दधामि उरु विस्तीर्णमन्तरिक्षम् । स त्वं सजूः समानजोषणः सह प्रीयमाणः । देवेभिर्देवैः । 'अतो भिस ऐस्' 'बहुलं छन्दसि' इति भिस् । अवरैः परैश्च । अवरैः पृथिवीस्थानैः परैः द्युस्थानैः अन्त-

र्यामे अस्मिन्ग्रहे होमायोद्यते हे मघवन्, मादयस्व हर्षय-स्वात्मानम् ॥ ५ ॥

म० मघवद्देवत्या त्रिष्टुप् अन्तर्यामग्रहण एव विनियोगः । हे मघवन्, ते तवानुग्रहात् द्यावापृथिवी अन्तर्दधामि व्यवधायिके करोमि । यद्वा हे अन्तर्याम, प्राणरूपापन्नस्य तवान्तः शरीरमध्ये द्यावापृथिव्यौ दधामि स्थापयामि । किंच उरु विस्तीर्णमन्तरिक्षमन्तर्मध्ये च दधामि द्यावापृथिव्योर्मध्ये स्थापयामि । हे मघवन्धनवन्निन्द्र, अवरैः पृथिवीस्थानैः देवेभिर्देवैः परैः द्युस्थानैश्च देवैः सजूः समानजोषणः समानप्रीतियुक्तः सन्नन्तर्यामे ग्रहे मादयस्व हर्षयस्वात्मानम् । यद्वा तृप्यस्व 'मद तृप्तौ' चुरादिरात्मनेपदी । देवेभिरित्यत्र 'बहुलं छन्दसि' (पा० ७।१।१०) इति ऐसोऽभावे 'बहुवचने झल्येत्' (पा० ७।३।१०३) इति एकारः ॥ ५ ॥

## षष्ठी ।

स्वाङ्कृतोसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य उदानाय त्वा ॥ ६ ॥

उ० जुहोति । स्वांकृतोसि । व्याख्यातम् । पात्रमासादयति । उदानाय त्वा ॥ ६ ॥

म० स्वांकृत इति निःशेषस्यैव होमस्तिष्ठतः । व्याख्यातः । 'प्रथमे च न्युब्जेन पाणिना प्रत्यगिति' (का० ९।६।४)। प्रथमे परिधावधो मुखहस्तेन प्रत्यक्संस्थं मार्ष्टि देवेभ्यस्त्वेति मन्त्रेण । व्याख्यातः । उदानाय त्वेति पात्रासादनम् । हे ग्रह, उदानसन्तोषार्थं त्वां सादयामि ॥ ६ ॥

## सप्तमी ।

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वा ॥ ७ ॥

उ० ऐन्द्रवायवं गृह्णाति । आ वायो भूष । त्रिष्टुप् वायुदेवत्या । हे वायो, आ अभूष अभ्याक्रमस्व । हे शुचिपाः, पवित्रं सोमं प्रथमवषट्कारवषट्कृतमप्राप्तमन्यैर्देवताविशेषैः पिबतीति शुचिपाः उप नः उप समीपे नः अस्माकम् अभ्याक्रमस्वेति संबन्धः । केनाहमभ्याक्रम इति चेत् सहस्रं ते नियुतो विश्ववार । बहवः ते नियुद्गुणयुक्ता अश्वा विद्यन्ते । हे विश्ववार, विश्वं सर्वं वृणोति विश्वैः सर्वैर्वा व्रियते प्राणिभिरिति विश्ववारः तस्य संबोधनं हे विश्ववार । किंच उपोते अन्धो मद्यमयामि । उपगमयामि च ते तव स्वभूतम् अन्धोन्नं मद्यं मदनीयम् । कथंभूतम् । यस्य सोमस्य हे देव, दधिषे धारयसि पूर्वपेयं प्रथमवषट्कारलक्षणम् । पूर्वपानं प्रथमवषट्कार एव ते सोमस्य राज्ञ इत्याशयः । वायवे त्वेति देवतोद्देशः ॥ ७ ॥

म० 'ऐन्द्रवायवं गृह्णात्या वायविति' (का० ९।६।५)। वायुदेवत्या त्रिष्टुप् वसिष्ठदृष्टा वायवे त्वेति यजुरन्ता । हे वायो, हे शुचिपाः शुचिं पवित्रं प्रथमं वषट्कृतमप्राप्तमन्यदेवैः ईदृशं सोमं पिबतीति शुचिपाः पवित्रसोमपान, त्वं नोऽस्माकमुप समीपे आ भूष आक्रमस्वागच्छेत्यर्थः । 'भूष अलंकारे' इह गत्यर्थः । केनाहं आक्रमे इति चेत् । सहस्रं ते नियुतो विश्ववार । विश्वं सर्वं वृणोति व्याप्नोति विश्वैर्वा व्रियते प्रार्थ्यते इति विश्ववारस्तत्संबोधनम् हे विश्ववार सर्वव्यापक, ते तव सहस्रं नियुतः सन्ति । 'नियुतो वायोः' इत्युक्तेर्नियुच्छब्देन वायुवाहनभूता मृगा उच्यन्ते । तवासंख्याता वाहनभूता मृगास्तैरागच्छेत्यर्थः । किंच मद्यं मदनीयं तृप्तिजनकमन्धः सोमलक्षणमन्नं ते तव उप समीपे एव अयामि गमयामि । सोमं ते समर्पयामीत्यर्थः । हे देव दीप्यमान वायो, यस्य सोमस्य पूर्वपेयं प्रथमवषट्कारलक्षणं पूर्वपानं त्वं दधिषे धारयसि । दधातेर्लिटि रूपम् । एवं वायुं प्रार्थ्य सोममाह हे सोमरस, वायवे वायुदेवतार्थं त्वां गृह्णामीति शेषः ॥ ७ ॥

## अष्टमी ।

इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोसि वायव इन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वा ॥ ८ ॥

द्वितीया पुरोरुक् । इन्द्रवायू । वायवी गायत्री । हे इन्द्रवायू, इमे अभिषुताः सोमाः अतः कारणात् उपप्रयोभिरागतम् । उपेत्ययमुपसर्ग आगतमित्यनेन संबध्यते । उपागतम् उपगच्छतम् । प्रयोभिः । प्रयःशब्दः 'इण् गतौ' इत्यस्य धातोः शतृप्रत्ययान्तस्य । 'इणो यण्' इति यणादेशः भिस् । ततस्तकारस्य छान्दसः सकारः । ततो रुत्वादि ततः प्रपूर्वस्य प्रयोभिरिति सिद्ध्यति । प्रयद्भिरश्वैः शीघ्रैरागच्छतम् । किंच । इन्दवो वामुशन्ति हि । हिशब्दो यस्मादर्थे । यस्मादिन्दवः सोमाः वां युवाम् उशन्ति । 'वश कान्तौ' कामयन्ते । यद्यस्मादिन्द्रवायू पिबतमिति । उपयामगृहीतोसि वायव इन्द्रवायुभ्यां च त्वा । गृह्णामीति शेषः । सादयति एष ते योनिः । एष पृथिवीलक्षणः ते तव योनिः स्थानम् । योनिशब्दो हि स्थानवचनः । सजोषाभ्यां सहप्रीतिभ्यां त्वां सादयामीति शेषः ॥ ८ ॥

म० 'अपगृह्य पुनरिन्द्रवायू इतीति' (का० ९।६।६)। एकवारमर्धमादाय पृथक्कृत्य पुनरैन्द्रवायवं गृह्णाति । ऐन्द्रवायवी गायत्री मधुच्छन्दोदृष्टा । उपयामेति यजुःसहितो मन्त्रः । हे इन्द्रवायू, युष्मदर्थमिमे सोमाः सुता अभिषुताः । प्रय इत्यन्ननाम । प्रयोभिः एतैः सोमरसरूपैरन्नैर्निमित्तैरुप समीपे युवामागत-

मागच्छतम् । यद्वा प्रयःशब्द 'इण् गतौ' इति धातोः शतृप्रत्ययान्तस्य रूपम् । प्रैतीति प्रयन् । इणो यण् तस्य भिसि परे तकारस्य छान्दसः सकारः तस्य रुत्वादौ प्रयोभिरिति सिध्यति । प्रयोभिः प्रयद्भिः शीघ्रैरश्वैरागच्छतम् । हि यस्मादिन्दवः सोमा वां युवामुशन्ति कामयन्ते तस्मादागच्छतमित्यर्थः । सोममाह हे सोमरस, त्वमुपयामेन पात्रेण गृहीतोऽसि वायवे वायुदेवतार्थं इन्द्रवायुभ्यां इन्द्रवायुदेवतार्थं च त्वां गृह्णामीति शेषः । 'दशापवित्रेण परिमृज्यैष ते योनिरिति ग्रहसादनमिति' ( का० ९ । ५ । २५ ) । दशापवित्रेण गृहीतं ग्रहं परिमृज्य पात्राद्बहिर्निर्गतं सोमं मार्जयित्वा एष ते योनिरिति मन्त्रेण ग्रहस्य सादनं करोति । वीप्सा सर्वग्रहार्था इति सूत्रार्थः । हे पात्र, एष खरस्यैकदेशः ते योनिः तव स्थानम् । अतोऽत्र सजोषोभ्यां समानप्रीतिभ्यामिन्द्रवायुभ्यामर्थं त्वां सादयामीति शेषः ॥ ८ ॥

## नवमी ।

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳहवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥ ९ ॥

**उ०** मैत्रावरुणस्य पुरोरुक् । अयं वाम् । गायत्री मैत्रावरुणी । हे मित्रावरुणौ, अयं वां युवयोः अयमभिषुतः सोमः हे ऋतावृधौ सत्यवृधौ वा यज्ञवृधौ वा । अतः कारणात् मम इत् इह श्रुतं हवम् । इदिति निपात एवार्थे । ममैव इह यजमानानां मध्ये श्रुतम् आह्वानम् । उपयाम गृहीतोसि मित्रावरुणाभ्यां त्वा । देवतादेशः ॥ ९ ॥

**म०** 'मैत्रावरुणमयं वामिति' ( का० ९ । ६ । ७ ) मैत्रावरुणं ग्रहं गृह्णीयात् । मित्रावरुणदेवत्या गायत्री गृत्समदद्दृष्टा यजुरन्ता । हे मित्रावरुणौ, विभक्तेराकारः । हे ऋतावृधा, ऋतं यज्ञं सत्यं वा वर्धयत इति ऋतवृधौ ऋतस्य वर्धयितारौ वां युवयोरर्थायायं सोमः सुतः अभिषुतः तस्मादिहास्मिन् यज्ञे ममेत् । इत् एवार्थे । ममैव यजमानानां मध्ये ममैव हवमाह्वानं श्रुतं युवां शृणुतम् । हे सोमरस, त्वमुपयामेन मैत्रावरुणग्रहपात्रेण गृहीतोऽसि । मित्रावरुणाभ्यामर्थे त्वा त्वां गृह्णामीति शेषः ॥ ९ ॥

## दशमी ।

राया वयꣳससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यां त्वा ॥ १० ॥

**उ०** पयसा श्रीणाति । राया वयम् । मैत्रावरुणी त्रिष्टुप् । उपरितनेर्धर्चे तदःश्रवणादिह यदोध्याहारः । इह कामदुघां प्रार्थयते मन्त्रदृक् । यया धेन्वा गृहेसत्या । राया वयꣳससवाꣳसो मदेम । राया धनेन वयं ससवांसः । 'वन षण संभक्तौ' । संभक्ताः सन्तो हृष्टाः स्याम । कथमिव । हव्येन देवाः यथा हविषा संभक्ता देवा हृष्यन्ति । यथाच यवसेन गवाह्निकादिना गावो हृष्टा भवन्ति तां तथाभूतां धेनुं हे मित्रावरुणौ, युवं युवां नः अस्मभ्यं विश्वाहा सर्वदा । धत्तं दत्तं । अनपस्फुरन्तीम् । स्फुरतिर्गत्यर्थः । अपेत्यापेत्य या पुरुषान्तरात्पुरुषान्तरं गच्छति सा अपस्फुरन्ती अपस्फुरन्ती न भवतीत्यनपस्फुरन्ती ताम् । अनन्यगामिनीं दत्तमित्यर्थः । विश्वाहेति सततं दानक्रियार्थम् । एष ते योनिः ऋतायुभ्यां त्वा । सादयामीति शेषः । ऋतशब्देनात्र मित्रोऽभिधीयते । अयुशब्देन वरुणः । अयं तावत् श्रुत्यभिप्रायः येनैवमाह । 'ब्रह्म वा ऋतं ब्रह्म हि मित्रो ब्रह्म ह्यृतं वरुण एवायुरिति' । पदकारस्तु ऋतायुवाभ्यामित्येकं पदं कृतवान् तस्यायमभिप्रायः । ऋतं सत्यं यज्ञं वा यौ कामयेते तौ ऋतायू ताभ्यामृतायुभ्याम् ॥ १० ॥

**म०** 'पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति' ( का० ९ । ६ । ८ ) मैत्रावरुणपात्रे कुशद्वयं व्यवधाय तत्र स्थं सोमरसं क्षीरेण मिश्रीकुर्यात् । मित्रावरुणदेवत्या त्रिष्टुप् त्रसदस्युदृष्टा । उत्तरार्धे तामिति तदःश्रवणादिह यदोऽध्याहारः । मन्त्रदृक्कामदुघां प्रार्थयते । यया धेन्वा गृहे सत्या वयं राया धनेन ससवांसः । 'वन षण संभक्तौ' इत्यस्य क्वसौ रूपम् । धनेन संभक्ताः संपन्नाः सन्तो मदेम हृष्टाः स्याम । कथमिव । हव्येनेव । यथा हविषा संभक्ता देवा हृष्यन्ति, यथाच यवसेन घासेन गवाह्निकादिना गावो हृष्यन्ति हे मित्रावरुणौ, युवं युवां तां धेनुं नोऽस्मभ्यं विश्वाहा सर्वदा धत्तं दत्तम् । किंभूतां धेनुम् । अनपस्फुरन्तीम् । स्फुरतिर्गत्यर्थः । अपस्फुरति पुरुषान्तरं गच्छतीत्यपस्फुरन्ती न अपस्फुरन्ती ताम् । अनन्यगामिनीं दत्तमित्यर्थः । एष त इति सादनम् । हे ग्रह, एष ते योनिः स्थानम् ऋतायुभ्यां मित्रावरुणाभ्यामर्थे त्वां सादयामीति शेषः । 'ब्रह्म वा ऋतं ब्रह्म हि मित्रो ब्रह्म ह्यृतं वरुण एवायुः' ( ४ । १ । ४ । १० ) इति श्रुतेः ऋतशब्देन मित्रः आयुशब्देन वरुणः इति श्रुतिव्याख्या । पदकारस्तु ऋतयुभ्यामिति पदं कृतवान् तेन ऋतं सत्यं यज्ञं वा कामयेते तौ ऋतयू ताभ्यामृतयुभ्याम् । संहितायां दीर्घः । यज्ञमिच्छद्भ्यां मित्रावरुणाभ्यामित्यर्थः पदकारस्य ॥ १० ॥

## एकादशी ।

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ॥ ११ ॥

**उ०** आश्विनस्य पुरोरुक् । या वां कशा । गायत्री आश्विनी । हे आश्विनौ या वां युवयोः कशा । कशेति वाङ्-

नाम । सा प्रकाशयति अर्थान् । मधुमती मधुब्राह्मणोपनिषत् प्रशंसायुक्ता । सूनृतावती शोभना प्रिया ऋतावती सत्यवती च या वाक् सा सूनृतावती । तया यज्ञं मिमिक्षतम् । 'मिह सेचने' । सिञ्चतम् । अश्विनौ हि यज्ञे अध्वर्यू अत एवमुच्यते । उपयाम गृहीतोऽस्यश्विभ्यां त्वा गृह्णामि । एप ते योनिः माध्वीभ्यां त्वा सादयामि । 'दध्यङ् ह वा आभ्यामाथर्वणो मधुनामब्राह्मणमुवाच इत्युपक्रम्य 'तस्मान्मधुमत्यर्वाक् गृह्णाति माध्वीभ्यां त्वेति सादयति' इत्याह श्रुतिः । अतएवं व्याख्येयम् । मधु ब्राह्मणं यावधीयाते तौ माध्वी इत्युच्येते । इकारोऽत्र तद्धितः ॥ ११ ॥

**म०** 'आश्विनं गृह्णात्यन्वारब्धे वा या वामिति' ( का० ९ । ७ । ८ ) । यजमानेऽन्वारब्धे वाश्विनं ग्रहं गृह्णाति । आश्विनी गायत्री मेधातिथिदृष्टा यजुरन्ता । हे अश्विना अश्विदेवौ, वां युवयोर्या कशा । कशेति वाङ्नामसु पठितम् । काशयति प्रकाशयति वाङ्मयमिति कशा वाक् । किंभूता । मधुमती मधु ब्रह्म तद्वती मधुब्राह्मणोपनिषत्प्रशंसायुता । तथा सूनृतावती प्रियं सत्यं वचः सूनृतं तद्वती सत्यप्रियवचनोपेता । हे अश्विनौ, तया वाचास्मदीयं यज्ञं मिमिक्षतं 'मिह सेचने' सनन्तः । सेक्तुमिच्छतम् । निष्पादयतमित्यर्थः । हे ग्रह, त्वमुपयामेन गृहीतोऽसि अश्विभ्यामर्थे त्वां गृह्णामीति शेषः । ( का० ९ । ६ । ८ ) सादयत्येष ते हे ग्रह, एष ते योनिः स्थानं माध्वीभ्यां मधुब्राह्मणाध्येतृभ्यामश्विभ्यामर्थे त्वां सादयामीति शेषः । मधुब्राह्मणं यावधीयाते तौ माध्व्यौ ताभ्याम् । तद्धित ईप्रत्ययः । 'दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच' ( ४ । १ । ५ । १८ ) इति श्रुतेः ॥ ११ ॥

## द्वादशी ।

तं प्र॒त्नथा॑ पू॒र्वथा॑ वि॒श्वथे॒मथा॑ ज्ये॒ष्ठता॑तिं बर्हि॒षदं॑ᳪ स्व॒र्विद॑म् । प्र॒ती॒ची॒नं वृ॒जनं॑ दोहसे॒ धुनि॑मा॒शुं जय॑न्त॒मनु॒ यासु॒ वर्ध॑से ॥ उ॒प॒या॒मगृ॑हीतोऽसि॒ शण्डा॑य त्वै॒ष ते॒ योनि॑र्वी॒रतां॑ पा॒ह्यप॑मृष्टः॒ शण्डो॑ दे॒वास्त्वा॑ शुक्र॒पाः प्रण॑यन्त्वना॑धृष्टासि ॥ १२ ॥

**उ०** शुक्रं गृह्णाति । तस्य पुरोरुक् । तं प्रत्नथा । जगती अनिरुक्ता प्रकरणाच्च शुक्रोभिधीतते । अत्र च व्यवहितैः पदैः वाक्यं प्रायशः कल्प्यते।हे सोम, तमिन्द्रं ज्येष्ठतातिम् उत्कृष्टतातिं उत्कृष्टविस्तारम् । अथवा 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि' इति तद्धितः प्रशंसायाम् । ज्येष्ठतातिं ज्येष्ठप्रशस्यम् । बर्हिषदम् यज्ञेषु बर्हिषि सीदतीति बर्हिषदम् । स्वर्विदम् । स्वशब्देन द्युलोकोऽभिधीयते । द्युलोकं जानाति तत्र हि तस्य निवासः । धुनिम् । 'धूञ् कम्पने' । कम्पयितारं शत्रूणाम् । आशुं जयन्तम् शीघ्रं जयन्तं जेतव्यानि वस्तूनि । तमेवंगुणविशिष्टमिन्द्रं हे सोम, यासु अनु वर्धसे । यासु विक्षु येषु यजमानेषु वर्धसे पुनःपुनः संस्क्रियसे तासु तासु क्रियासु त्वमवस्थितः तत्र प्रतीचीनं वृजनं दोहसे । प्रतीचीनमात्मनोऽभिमुखमिन्द्रमवस्थाप्य स्ववीर्येण तर्पयित्वा अस्मे यजमानाय वृजनम् । वृजनमिति बलनाम । बलवच्च यज्ञफलं दोहसे प्रक्षारयसि । कथं पुनर्दोहसे प्रत्नथा । था उपमार्थीयः । प्रत्नशब्दः पुराणवचनः । चिरन्तनानामिव ऋषीणां भृगुप्रभृतीनां दोहसे । इमथा । इदानीन्तनानामिव यजमानानां दोहसे । अस्य यजमानस्य । उपयामगृहीतोसि शण्डाय त्वा गृह्णामि । शण्डोऽसुरः । एष ते योनिः वीरतां वीरत्वं पाहि गोपाय । सादयामीति शेषः । यूपशकलेनाभिमार्ष्टि । अपमृष्टः शण्डः अपमार्जनीकृतोऽस्य ग्रहस्य शण्डोऽसुरः । निष्क्रामति । देवास्त्वा । देवास्त्वां हे ग्रह, शुक्रपाग्निः यजतिस्थानं प्रापयन्तु दक्षिणस्यां वेदिश्रोणावासादयति । अनाधृष्टासि अनुपहिंसितासि ॥ १२ ॥

**म०** 'शुक्रं वैल्वेन वा तं प्रत्नथेति' (का० ९ । ६ । १० ) विल्वपात्रेण वैकङ्कतेन वा शुक्रं ग्रहं गृह्णाति । जगती वैश्वदेवी काश्यपावत्सारदृष्टा द्वादशार्णचतुःपादा जगती उपयामेत्यन्ते यजुः । हे इन्द्र, त्वं यासु यज्ञक्रियासु अनुवर्धसे पुनः पुनः सोमपानेन वृद्धिं प्राप्नोषि तासु । वृजनमिति बलनाम । बलं बलवद्यज्ञफलं दोहसे क्षारयसि ददासीत्यर्थः । यजमानायेति शेषः । कथं दोहसे तत्र दृष्टान्तमाह । प्रत्नथा । 'प्रत्नपूर्व-' ( पा० ५ । ३ । १११ ) इत्यादिना थाल्प्रत्ययः उपमार्थीयः । प्रत्नशब्दः पुराणवचनः । चिरन्तनानां भृग्वादीनामिव फलं दोहसे । पूर्वथा पूर्वेषामिव ऋषीणां साध्यादीनामिव । विश्वथा विश्वेषां सर्वेषामृषिपुत्राणामिव । इमथा इदानीन्तनानां यजमानानामिवास्य फलं दोहसे तं त्वां स्तुम इति शेषः । किंभूतं तम् । ज्येष्ठतातिम् तननं तातिः विस्तारः । ज्येष्ठा उत्कृष्टा तातिर्विस्तारो यस्य तम् । यद्वा 'वृकज्येष्ठाभ्याम्-' ( पा० ५ । ४ । ४१ ) इत्यादिना प्रशंसायां तातिल्प्रत्ययः । प्रशस्तो ज्येष्ठो ज्येष्ठेषु प्रशस्यो वा ज्येष्ठतातिः । तथा बर्हिषदं यज्ञेषु बर्हिषि सीदतीति बर्हिषदस्तम् । स्वर्विदम् । स्वः द्युलोकं वेत्ति जानातीति स्वर्वित्तम् । तत्र हि तस्य निवासः । प्रतीचीनमात्मनोऽभिमुखं धुनिम् । 'धूञ् कम्पने' । कम्पितारं शत्रूणाम् आशुं शीघ्रं जयन्तं जेतव्यानि वस्तूनि । यद्वास्या ऋचोऽर्थान्तरम्। हे इन्द्र, यस्त्वं प्रतीचीनं प्रतिगमनमस्मत्प्रतिकूलं वृजनं वर्जनीयमालस्याश्रद्धादिकं दोहसे रिक्तीकरोषि विनाशयसि । 'दुह प्रपूरणे' प्रपूरणं रिक्तीकरणमिति क्षीरस्वामी । किंच यासु क्रियासु धुनिं त्वदनुप्रदाच्छत्रून्कम्पयन्तमाशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तराण्यतिशयानमेनं यजमानमनु सोमपानेन स्तुत्वा च यः त्वं वर्धसे तासु क्रियासु तं त्वां स्तुम इति शेषः । कथमिव । प्रत्नथा थाप्रत्यय उपमार्थः । प्रत्नाः पुरातना भृग्वादयो यथा त्वामस्तुवन् पूर्वथा

पूर्वे पित्रादय इव विश्वथा अतीताः सर्वे यजमाना इव इमथा इदानीन्तना वर्तमाना यजमाना इव वयं त्वां स्तुम इत्यर्थः। कीदृशं त्वाम्। ज्येष्ठतातिं स्वार्थे तातिः ज्येष्ठमित्यर्थः। बर्हिषदं यागे संनिहितत्वेन तिष्ठन्तम्। स्वर्विदं यजमानाय दातव्यं स्वर्गं वेत्तीति स्वर्वित्। एवमिन्द्रमुक्त्वा सोममाह। हे शुक्रग्रह, त्वमुपयामेन गृहीतोऽसि शण्डाय शुक्रपुत्राय शण्डनाम्नेऽसुराय वा त्वां गृह्णामीति शेषः। सादयत्येष ते। हे ग्रह, एष खरप्रदेशस्तव स्थानम्। त्वं यजमानस्य वीरतां वीरत्वं शूरत्वं पाहि पालय। 'शुक्रामन्थिभ्यां चरतः शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता प्रोक्षिताप्रोक्षितौ यूपशकलावादायापिधानं प्रोक्षिताभ्यामपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड इत्यध्वर्युरिति' ( का० ९। १०। १—५ ) अध्वर्युप्रतिप्रस्थातारौ शुक्रामन्थिग्रहाभ्यां यथाक्रममनुतिष्ठेताम्। तत्प्रकारः। प्रोक्षिताभ्यां द्वाभ्यां यूपशकलाभ्यां सहाप्रोक्षितौ द्वौ यूपशकलावादाय प्रोक्षिताभ्यां तयोर्ग्रहयोः क्रमेणाच्छादनं कृत्वा प्रोक्षिताभ्यां ग्रहावपमृज्यात्। तत्र प्रोक्षितेन शकलेन ग्रहं पिधायाप्रोक्षितेनाध्वर्युः शुक्रग्रहमपमार्ष्टि इति सूत्रार्थः। आभिचारिकं यजुः। शण्डनामकोऽसुरपुरोहितः शुक्रपुत्रोऽपमृष्टः अपमार्जनीकृतः। 'देवास्त्वेति निष्कामतो यथालिङ्गमिति' ( का० ९। १०। ६ ) अध्वर्युप्रतिप्रस्थातारौ यथाक्रमेण शुक्रमन्थीत्येतत्पदद्वयवाचकमन्त्रलिङ्गमनतिक्रम्य हविर्धानमध्यान्निर्गच्छेताम्। तत्र शुक्रलिङ्गेनाध्वर्युर्निष्कामति। शुक्रदैवतम्। शुक्रनामकग्रहस्थं सोमं पिबन्ति शुक्रपा देवाः हे शुक्रग्रह, त्वां प्रणयन्तु यजतिस्थानं प्रापयन्तु ( का० ९। १०। ७ )। अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजन्तो दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थातानाधृष्टासीति। अध्वर्युप्रतिप्रस्थातारौ वेदिपश्चाद्भागे अरत्नी संयोज्य ग्रहयोर्विसर्गमकुर्वन्तौ उत्तरवेदिश्रोण्योर्ग्रहौ सादयतः दक्षिणश्रोणावध्वर्युः शुक्रम् उत्तरवेदिश्रोणौ प्रतिप्रस्थाता मन्थिनं सादयति। वेदिश्रोणिदैवतम्। हे उत्तरवेदिश्रोणे, त्वमनाधृष्टानुपहिंसितासि ॥ १२ ॥

## त्रयोदशी।

सुवीरो वीरान्प्रजनयन्परीह्यभिरायस्पोषेण यजमानम्। संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा निरस्तः शण्डः शुक्रस्याधिष्ठानमसि ॥ १३ ॥

**उ०** यूपदेशं गच्छति। सुवीरो वीरान् हे ग्रह, कल्याणवीरः स त्वं यजमानस्य वीरान् प्रजनयन् उत्पादयन् परीहि परिगच्छ। किंच अभिरायस्पोषेण यजमानम् अभियोजयस्व धनस्य पोषेण यजमानम्। परीहीत्यनुवर्तते। अपरेण यूपमरत्नी संधत्त। संजग्मानः अयं शुक्रः संगच्छमानः दिवा द्युलोकेन संगच्छमानश्च पृथिव्या पृथिवीलोकेन संगच्छमानश्च। कोसौ शुक्रः। शुक्रशोचिषा शुक्रदीप्त्या प्रजा बिभर्तीति शेषः। यूपशकलं निरस्यति। निरस्तः शण्डः। निःक्षिप्तः शण्डो यज्ञाद्बहिःकृतः। आहवनीये प्रोक्षितं प्रास्यति। शुक्रस्याधिष्ठानमसि। शुक्रो ग्रहः तस्याधिष्ठानम् अधिकरणमसि ॥ १३ ॥

**म०** 'सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युरिति' ( का० ९। १०। ८ )। शुक्रदैवतम्। हे शुक्रग्रह, त्वं सुवीरः शोभनवीर्योपेतः सन् वीरान् यजमानस्य शौर्योपेतान्भृत्यादीन् प्रजनयन्नुत्पादयन् रायः पोषेण धनस्य पुष्ट्या यजमानमभिलक्ष्य परीहि परितो गच्छ। 'अपरेण यूपमरत्नी संधत्तः संजग्मान इति यथालिङ्गमिति' (का० ९। १०। १०) अध्वर्युप्रतिप्रस्थातारौ यूपपश्चिमभागे तत्तद्ग्रहवाचकपदलिङ्गमनतिक्रम्यारत्न्योः संधानं कुर्यातां शुक्रलिङ्गेनाध्वर्युः। शुक्रो ग्रहः शुक्रशोचिषा शुद्धदीप्त्या कृत्वा यूयं बिभर्तीति शेषः। किंभूतः शुक्रः। दिवा द्युलोकेन पृथिव्या भूलोकेन च संजग्मानः सङ्गच्छमानः। 'अप्रोक्षितौ निरस्यति निरस्तः शण्ड इत्यध्वर्युरिति' ( का० ९। १०। १२ ) अध्वर्युरप्रोक्षितं यूपशकलं निरस्येत्। आभिचारिकं शण्डनामकः शुक्रपुत्रोऽसुरपुरोहितो निरस्तः यज्ञाद्बहिर्निक्षिप्तः। 'आहवनीये प्रोक्षितौ प्रास्यतः शुक्रस्याधिष्ठानमित्यध्वर्युरिति' ( का० ९। १०। १३) अध्वर्युराहवनीये प्रोक्षितं यूपशकलं क्षिपेत्। शकलदैवतम्। हे यूपशकल, त्वं शुक्रग्रहस्याधिष्ठानमधिकरणमसि ॥ १३ ॥

## चतुर्दशी।

अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम। सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः ॥ १४ ॥

**उ०** जपति। अच्छिन्नस्य। हे देव सोम, अच्छिन्नस्य अनवखण्डितस्य ते तव सुवीर्यस्य कल्याणप्रभावस्य रायस्पोषस्य धनपोषस्य ददितारो भवेम। त्वत्प्रसादात् भूयोभूयःकरणं यज्ञस्याशास्यते। जुहोति। सा प्रथमा यस्येन्द्रस्य सा प्रथमा संस्कृतिः। स प्रथमः सोमसत्कारः क्रियते सोमक्रये। सा दिवि देवमच्छेहीन्द्राय सोममिति। कथंभूता संस्कृतिः। विश्ववारा विश्वैः सर्वैर्यत्र सोमो व्रियते ऋत्विग्भिराहुतिभिश्च। विश्वं वा वृणोतीति। सोमे क्रीयमाणे यत्र जगदुत्पत्तिबीजत्वात् सा विश्ववारा संस्कृतिः। स च प्रथमो वरुणःस च प्रथमो मित्रः स च प्रथमोग्निः यस्येन्द्रस्यान्येषां देवगणानां प्रभुः ॥ १४ ॥

**म०** 'अच्छिन्नस्येति जपित्वेति' ( का० ९। १०। १४ ) यजमानो जपति। सौम्यम्। हे देव दीप्यमान सोम, अच्छिन्नस्य अनवखण्डितस्य संततस्य सुवीर्यस्य कल्याणप्रभावस्य ते तव ददितारः दातारः वयं स्याम भवेम। रायः पोषस्य धनपोषस्य च दातारः स्याम। भूयोभूयो यज्ञकरणमाशास्यते। यद्वा ते तव प्रसादात् रायःपोषस्य ददितारः स्याम। अच्छिन्नस्येति विशेषणद्वयं धनपोषस्यैव। 'उभयतो यूपं प्रत्यङ्मुखौ

जुहुतः सा प्रथमेत्यध्वर्युः प्रथमं तमनु प्रतिप्रस्थातेति' ( का० ९ । ११ । १ ) अध्वर्युप्रतिप्रस्थातारौ यूपोभयपार्श्वयोः स्थित्वा पश्चिमाभिमुखौ सन्तौ जुहुयाताम् । अध्वर्युरादौ शुक्रं प्रतिप्रस्थाता ततो मन्थिनं जुहोति । इन्द्रदेवत्या त्रिष्टुप् । सा प्रथमा मुख्या संस्कृतिः सोमसंस्कारो यस्येन्द्रस्य क्रियते इन्द्रार्थं क्रियत इत्यर्थः । सोमक्रये सा देवि देवमच्छेहीन्द्राय सोममित्युक्तत्वात् ( अध्या० ४ क० २० ) । किंभूता संस्कृतिः । विश्ववारा विश्वैः सर्वैर्ऋत्विग्भिरनृत्विग्भिश्च व्रियते यत्र सोमः सा विश्ववारा । यद्वा विश्वं वृणोति क्रियमाणः सोमो यत्रेति विश्ववारा जगदुत्पत्तिवीजत्वात् । सोमस्य वरुणो मित्रः अग्निश्च स प्रसिद्धो यस्य प्रथमो मुख्यो भृत्य इति शेषः । वरुणमित्राग्नयोऽन्येषामप्युपलक्षकाः । देवगणानां यः प्रभुरित्यर्थः ॥ १४ ॥

## पञ्चदशी ।

स प्र॒थ॒मो बृह॒स्पति॑श्चिकि॒त्वांस्तस्मा॒ इन्द्रा॑य सु॒तमाजु॑होत॒ स्वाहा॑ ॥ तृम्पन्तु॒ होत्रा॒ मध्वो॒ याः स्वि॑ष्टा॒ याः सुप्री॑ताः॒ सुहु॑ता॒ यत्स्वाहाया॒ऽड्ग्नीत् ॥ १५ ॥

उ० स प्रथमः । स च प्रथमो बृहस्पतिः । चिकित्वान् चेतनावान् उत्कृष्टधीः । अन्येषां मन्त्रिगणानां यस्येन्द्रस्य तस्मै इन्द्राय सुतमभिषुतं सोमम् आजुहोत क्षारयत स्वाहाकारेण हे ऋत्विजः । जपति । तृम्पन्तु होत्राः । होत्राशब्देन होत्रिकयाज्याछन्दांस्यभिधीयन्ते । तृम्पन्तु । 'तृप तृम्प तृप्तौ' । तृम्पन्तु होत्रा याज्याछन्दांसि । मध्वः मधुसोममित्यौपमिकम् । माद्यतेः मधुस्वादस्य सोमस्य । याः स्विष्टा याः शोभनमिष्टाः याः सुप्रीताः याः साधुप्रीताः । कथमेतज्ज्ञायत इति चेत् सुहुतायत्स्वाहा । साधुहुता यस्मात्स्वाहाकारेण । प्रत्यङ् उपविशति । अयादग्नीत् अग्नीत् एवं होतुराचष्टे ॥ १५ ॥

म० स प्रसिद्धः चिकित्वान् चेतनावानुत्कृष्टधीः बृहस्पतिः यस्येन्द्रस्य प्रथमो मुख्यो मन्त्री इति शेषः । यद्वा संस्कृतिः समीचीना कृतिर्विश्वैर्देवैर्वरणीया सा प्रथमा देवानां मध्ये मुख्या यस्येन्द्रस्य वरुणमित्राग्नयोऽपि स प्रथम इन्द्र एव । चिकित्वान् बृहस्पतिरपि स इन्द्र एव हे ऋत्विजः, तस्मै तादृशायेन्द्राय सुतमभिषुतं सोमं स्वाहेति स्वाहाकारेणाजुहोत आभिमुख्येन जुहुत. स्वाहाकारेण होमं कुरुत । 'तृम्पन्त्विति जपतीति' ( का० ९ । ११ । ९ ) होत्रादैवतम् । ताः होत्राः छन्दोभिमानिन्यो देवताः तृम्पन्तु तृप्ता भवन्तु । 'तृम्प प्रीतौ' । होत्राशब्देन याज्याच्छन्दांस्यभिधीयन्ते । ताः काः । याः मध्वो मधुनो मधुस्वादस्य सोमस्य स्विष्टाः साधु इष्टाः तद्धोमे नियुक्तत्वात् याश्च होत्राः सुष्ठु प्रीताः । कथं ज्ञायन्ते । यद् यस्मात् स्वाहाकारेण सुहुताः साधु हुताः । होमार्थं नियुक्ता इत्यर्थः । 'होतारं प्रत्यङ्ङुपसीदव्ययाऽग्नीदिति' ( का० ९ । ११ । १० ) । अध्वर्युर्होतृसमीपे प्रत्यङ्मुखस्तिष्ठेत् । होतृदैवतम् । अग्निरयाद् अयाक्षीत् अग्निधा यागः कृत इति होतुः कथयति ॥ १५ ॥

## षोडशी ।

अ॒यं वे॒नश्चो॑दय॒त्पृश्नि॑गर्भा॒ ज्योति॑र्जरायू॒ रज॑सो वि॒माने॑ । इ॒मम॒पाᳪ᳖ स॑ङ्ग॒मे सूर्य॑स्य॒ शिशुं॒ न विप्रा॑ म॒तिभी॑ रिहन्ति ॥ उ॒प॒या॒मगृ॑ही॒तोऽसि॒ मर्का॑य त्वा ॥ १६ ॥

उ० मन्थिनं गृह्णाति । अयं वेनः । सोमपानया त्रिष्टुभाधिदैवमधियज्ञं चावस्थितः स्तूयते । अधिदैवं तावच्चन्द्रात्मना संस्तूयते । अयं वेनश्चोदयत्पृश्निगर्भाः । वेनः वेनतेः कान्तिकर्मणः अयं चन्द्रमा वेनः कान्तः । चोदयत् । 'चुद संचोदने' । प्रेरयति पृश्निगर्भाः द्युलोकः पृश्निरादित्यो वा । साधारणत्वाद् द्युलोकगर्भा वा आदित्यगर्भा वा आपः । ज्योतिर्जरायू । ज्योतिरस्य जरायुस्थानीयं भवति चन्द्रमसः । रजसो विमाने । उदकं रज उच्यते । उदकस्य विनिर्माणकाले प्राप्ते ग्रीष्मान्ते । इदानीमधियज्ञमवस्थितमुच्यते । इममेव च सोम मयां च सूर्यस्य च संगमे गृहीताभिरद्भिर्वसतीवरीलक्षणाभिरभिषुतं सन्तं शिशुं न शिशुमिव विप्रा मेधाविनो ब्राह्मणाः मतिभिः रिहन्ति स्तुवन्ति स्तोत्रशस्त्रैः । रिहतिर्हि अर्चतेः कर्मसु पठितः । वसतीवर्यश्चापः अपां संगमे सूर्यस्य च संगमे गृह्यन्ते । तत्रह्येवं पठ्यते । ता वै स्यन्दमानानां गृह्णीयात् दिवा गृह्णीयादिति च । उपयामगृहीतोसि मर्काय त्वा गृह्णामि । मर्कोऽसुरः ॥ १६ ॥

म० *'मन्थिनमयं वेन इति' ( ९ । ६ । १२ ) । मन्थिग्रहं गृह्णीयात् । त्रिष्टुप् अनयाधिदैवमधियज्ञं चावस्थितः सोमः* स्तूयते । अधिदैवं *चन्द्रात्मना स्तूयते । 'वेनो वेनतेः कान्तिकर्मणः' (नि० १० । ३८) इति यास्कः । 'विनि कान्तौ' इत्यस्य* रूपम् । अयं वेनः कान्तश्चन्द्रो रजसो विमाने उदकं रज उच्यते । उदकस्य निर्माणकाले ग्रीष्मान्ते प्राप्ते पृश्निगर्भा अपः चोदयत् चोदयति प्रेरयति वर्षतीत्यर्थः । पृश्निरादित्यो द्युलोको वा गर्भोऽवस्थानं यासां ताः द्युलोकस्था रविस्था वा अपो वर्षति । किंभूतो वेनः । ज्योतिर्जरायुः ज्योतिर्विद्युल्लक्षणं जरायुवद्वेष्टनं यस्य स ज्योतिर्जरायुः । इदानीमधियज्ञं लतात्मना सोमः स्तूयते । विप्रा मेधाविनो ब्राह्मणा इमं सोमं शिशुं न शिशुमिव बालमिव मतिभिः मतिपूर्वाभिर्वाग्भिः रिहन्ति स्तुवन्ति । बालं यथा कश्चिल्लालयति तद्वत् सोमं स्तोत्रशस्त्ररूपाभिर्वाग्भिः स्तुवन्ति । रिहतिरर्चनकर्मसु पठितः । अर्चनं स्तवनमेव । किंभूतमिमम् । सूर्यस्यापांच सङ्गमे गृहीताभिरद्भिरभिषुतमिति शेषः । सोमाभिषवार्थं वसतीवर्य आपो अपां सूर्यस्य च सङ्गमे गृह्यन्ते 'ता वै वहन्तीनां स्यन्दमानानां गृह्णीयाद्दिवा गृह्णीयात्' इति श्रुतेः । यद्वायमर्थः । अपां सूर्यस्य सङ्गमे निमित्ते उदक-

सूर्यसमागमनिमित्तं वृष्टिगर्भनिष्पत्त्यर्थं विप्रा इमं सोमं स्तुवन्ति यथा बालं कस्यचिद्वस्तुनो लाभाय यथा कश्चित्स्तौति । ईदृश हे सोम, त्वमुपयामेन ग्रहपात्रेण गृहीतोऽसि मर्कः शुक्रपुत्रोऽसुरपुरोहितस्तस्मै त्वां गृह्णामीति शेषः ॥ १६ ॥

## सप्तदशी ।

**मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता । आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तौ ॥ एष ते योनिः प्रजाः पाह्यपमृष्टो मर्को देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि ॥ १७ ॥**

**उ०** सक्तुभिः श्रीणाति । मनो न येषु । त्रिष्टुप् शुक्रामन्थिप्रचाराधियज्ञानुवादिनी । मनोन मनइव क्षिप्रम् येषु हवनेषु सोमहवनेषु सोमहोमेषु । तिग्मम् । तेजतेरुत्साहकर्मणः उत्साहयुक्तम् । विपः विपश्चितौ मेधाविनौ अध्वर्यू । छान्दसः प्रातिपदिकैकदेशलोपः । शच्या । शचीति कर्मनाम । कर्मणा निमित्तभूतेन । वनुथः प्रथमपुरुषस्य स्थाने मध्यमपुरुषश्छान्दसः । वनुतः व्याप्नुवतो युगपत् । शुक्रामन्थिहोमं द्रवन्तौ गच्छन्तौ तेष्वेव होमेषु कर्तव्येषु । आयः शर्याभिस्तुविनृम्णो अस्याश्रीणीत । योध्वर्युः अश्रीणीत शर्याभिरङ्गुलीभिः । तुविनृम्णः। तुवीति बहुनाम नृम्णमितिधननाम बहुधनो महादक्षिणः । अस्येति गृहनिर्देशः। अस्य मन्थितः अश्रीणीत । आदिशं प्रतिदिशम् । क्वावस्थितस्य सतः । गभस्तौ पाणौ । यद्यप्यत्राध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः श्रपणं करोति स एव प्रधानमित्याशयः । एष ते योनिः प्रजाः पाहि । यजमानसंबन्धिनीः प्रजाः गोपाय । यूपशकलेनोपमार्ष्टि । अपमृष्टो मर्कः अपमार्जनीकृतो मर्कोऽसुरः । निष्क्रामति । देवाः त्वा मन्थिपाः प्रणयन्तु प्रापयन्तु यजतिस्थानम् । मन्थीति ग्रहनाम । अनाधृष्टासि । निर्विशेषम् ॥ १७ ॥

**म०** 'सक्तुभिः श्रीणात्येनं मनो न येष्विति' (का० ९ । ६ । १३ ) । एनं मन्थिग्रहं यवपिष्टैर्मिश्रीकुर्यात् । त्रिष्टुप् सोमस्तुतिः । विपः विपश्चितौ मेधाविनौ अध्वर्युप्रतिप्रस्थातारौ । विप इत्यत्र छान्दसः प्रातिपदिकैकादेशलोपः । येषु हवनेषु सोमहोमेषु शच्या कर्मणा कृत्वा । शचीति कर्मनाम । मनोन मनइव तिग्मम् । 'तिग्मं तेजतेरुत्साहकर्मणः' (नि०१० । ६ ) । इति यास्कः। मनोवदुत्साहयुक्तं यथा तथा वनुथः । प्रथमपुरुषस्थाने मध्यमपुरुषश्छान्दसः । वनुतः व्याप्नुतः युगपत् शुक्रामन्थिग्रहाविति शेषः । शच्येति निमित्ततृतीया वा । कर्मनिमित्तं व्याप्नुत इत्यर्थः । किंभूतौ । विपश्चितौ द्रवन्ता द्रवन्तौ गच्छन्तौ हवनेषु तेष्वेव कर्तव्येषु होमेषु प्रचरन्तौ । योऽध्वर्युः शर्याभिः अङ्गुलीभिर्गभस्तौ पाणौ स्थितस्यास्य मन्थिग्रहस्य । कर्मणि षष्ठी। इमं मन्थिनमादिशं प्रतिदिशमा अश्रीणीत समन्तात् श्रीणीते सक्तुभिर्मिश्रयति । किंभूतो यः । तुविनृम्णः तुवि नृम्णं यस्य बहुधनः महादक्षिणः । तुवीति बहुनाम । नृम्णमिति धननाम । यद्यप्यत्राध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः सक्तुभिः श्रपणं करोति स एव प्रधान इत्याशयः । एष त इति सादयति । हे मन्थिग्रह, ते तव एष योनिः प्रदेशः त्वं प्रजाः यजमानसंबन्धिनीः पाहि पालय । 'अपमृष्टो मर्क इति प्रतिप्रस्थातेति' ( का० ९ । १० । ५ ) प्रतिप्रस्थाता प्रोक्षितेन् यूपशकलेन मन्थिनमाच्छायाप्रोक्षितेनापमार्ष्टि । अपमार्जनीकृतो मर्को नामासुरपुरोहितः ( का० ९ । १० । ६ ) देवास्त्वेति निष्कामतो यथालिङ्गमिति । प्रतिप्रस्थाता हविर्धानान्निष्क्रामेत् । मन्थिदैवतम् हे मन्थिग्रह, मन्थिनं ग्रहं पिबन्तीति मन्थिपाः देवाः त्वा प्रणयन्तु यजतिस्थानं प्रापयन्तु । अनाधृष्टासीति मन्त्रो विनियोगसहितः पूर्वं व्याख्यातः ॥ १७ ॥

## अष्टादशी ।

**सुप्रजाः प्रजाः प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् । संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा निरस्तो मर्को मन्थिनोऽधिष्ठानमसि ॥ १८ ॥**

**उ०** पूर्वेण गच्छति । सुप्रजाः । यतस्त्वं सुप्रजाः । हे मन्थिन्, सुप्रजाः । अतस्त्वं सुप्रजाः यजमानस्य प्रजनयन्परीहि परिगच्छ । किंच अभि गच्छस्व धनस्य पोषेण यजमानम् । परीहीत्यनुवर्तते । अपरेण यूपमरत्नी संधत्तः । संजग्मानः संगच्छमानो दिवा द्युलोकेन संगच्छमानश्च पृथिव्या पृथिवीलोकेन । कोसौ मन्थी मन्थिशोचिषा च । मन्थिनः शोचिर्दीप्तिः मन्थिशोचिः तेन मन्थिशोचिषा । संजग्मान इति वर्तते । यूपशकलं प्रास्यति । निरस्तो मर्कोऽसुरः । आहवनीये प्रास्यति । मन्थिनोऽधिष्ठानमसि । मन्थीग्रहः । अधिष्ठानमधिकरणम् ॥ १८ ॥

**म०** 'सुप्रजा इति प्रतिप्रस्थातोत्तरमिति' ( का० ९ । १० ९ ) । प्रतिप्रस्थातोत्तरं यूपदेशं गच्छति । मन्थिदैवतम् । हे मन्थिग्रह, शोभना प्रजा यस्य स सुप्रजास्त्वं यजमानसंबन्धिनोः प्रजाः प्रजनयन्नुत्पादयन्सन् रायस्पोषेण धनस्य पुष्ट्या सह यजमानमभि यजमानसंमुखं परीहि परिगच्छ आगच्छ । 'अपरेण यूपमरत्नी संधत्तः संजग्मान इति' ( का० ९ । १० । १० ) । प्रतिप्रस्थातारत्नी संधत्त इत्युक्तम् । मन्थी नाम ग्रहो दिवा पृथिव्या द्युलोकभूलोकाभ्यां संजग्मानः संगच्छमानः सन्मन्थिशोचिषा मन्थिनः स्वस्यैव दीप्त्या यूपं बिभर्तीति शेषः 'निरस्तो मर्क इति प्रतिप्रस्थातेति' ( का० ९ । १० । ११ ) । प्रतिप्रस्थाता अप्रोक्षितं यूपशकलं निरस्येत् । आभिचारिकम् । मर्कनामासुरपुरोहितो निरस्तो तिराकृतः । 'मन्थिन इति प्रति-

प्रस्थातेति' ( का० ९ । १० । १३ ) प्रतिप्रस्थाता प्रोक्षितं यूपशकलमाहवनीये प्रक्षिपेत् । शकलदैवतम् । हे यूपशकल, त्वं मन्थिग्रहस्याधिष्ठानमधिकरणमसि ॥ १८ ॥

## एकोनविंशी ।

ये दे॑वासो दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ । अ॒प्सु॒क्षितो॑ मह्नि॒नैका॑दश॒ स्थ ते दे॑वासो य॒ज्ञमि॒मं जु॑षध्वम् ॥ १९ ॥

उ० आग्रयणं गृह्णाति । ये देवासः वैश्वदेवी त्रिष्टुप् । ये यूयं हे देवासः । 'आज्जसेरसुक्' छान्दसः । दिवि द्युलोके एकादश संख्यया भवथ । पृथिव्याम् अधि उपरि एकादश स्थ । ये च यूयम् अप्सुक्षितः । अप्सु इत्यन्तरिक्षनामसु पठितम् । क्षियतिर्निवासार्थः अन्तरिक्षनिवासिनः । महिना महाभाग्येन एकादश स्थ । महिनेति त्रिष्वपि स्थानेषु संबध्यते । सर्वत्र हि महाभाग्याविशेषात् ते यूयं हे देवाः यज्ञमिमम् आग्रयणलक्षणम् । जुषध्वं सेवध्वम् ॥ १९ ॥

म० 'आग्रयणं द्वयोर्धारयोर्ये देवास इति' ( का० ९ । ६ । १४ ) । धाराद्वये क्षरति सत्याग्रयणं ग्रहं गृह्णीयात् । वैश्वदेवी त्रिष्टुप् परुच्छेपदृष्टा । हे देवासः देवाः, ये यूयं दिवि द्युलोके एकादश स्थ एकादशसंख्याका भवथ । केन । महिना महिम्ना स्वस्वमहिम्ना स्वस्वमाहात्म्येन । महिनेति पदं त्रिष्वपि स्थानेषु संबध्यते । सर्वत्र महाभाग्याविशेषात् । तथा पृथिव्यामधि पृथिव्युपरि एकादश स्थ । तथा ये यूयमप्सुक्षितः अन्तरिक्षनिवासिन एकादश स्थ भवथ । अप्स्वित्यन्तरिक्षनामसु पठितम् । क्षियतिर्निवासार्थः । अप्सु अन्तरिक्षे क्षियन्ति निवसन्तीत्यर्थः । हे देवासः देवाः, ते त्रिविधा यूयमिमं यज्ञं यजनीयमाग्रयणग्रहं जुषध्वं सेवध्वम् ॥ १९ ॥

## विंशी ।

उ॒प॒या॒मगृ॑हीतोऽस्याग्रय॒णोऽसि॒ स्वाग्रयणः पा॒हि य॒ज्ञं पा॒हि य॒ज्ञप॑तिं विष्णु॒स्त्वामि॑न्द्रि॒येण॑ पातु॒ विष्णुं॒ त्वं पा॑ह्य॒भि सव॑नानि पाहि ॥ २० ॥

उ० उपयामगृहीतोसि । व्याख्यातम् । आग्रयणोसीति नाम्ना संबोधनं स्तुत्यर्थम् । नामधेयप्रतिलम्भो ह्यस्य साधुक्रियायोगात् । स्वाग्रयणः यस्मिन् त्वयि गृहीते अग्रे प्रथमं वाचः अयनं गमनम् उत्सर्गः अध्वर्योः संजातः । यस्त्वमेवं साधुकारी तं त्वां ब्रवीमि । पाहियज्ञं पाहियज्ञपतिम् । गोपाय यज्ञं गोपाय यजमानम् । किंच विष्णुः त्वामिन्द्रियेण पातु । विष्णुर्यज्ञस्याधिष्ठात्री देवता स त्वामिन्द्रियेण वीर्येण पातु । विष्णुं त्वं पाहि त्वं च विष्णुं गोपाय । अभिसवनानि पाहि । अभितः सर्वतः सवनानि पाहि त्रीण्यपि । सर्वेषु स हि सवनेषु गृह्यते ॥ २० ॥

म० आग्रयणदेवतं यजुराग्रयणग्रहण एव विनियुक्तम् । हे आग्रयणग्रह, त्वमुपयामेन पात्रेण स्वीकृतोऽसि । आग्रयणोऽसि आग्रयणनामा भवसि । किंभूतस्त्वम् । स्वाग्रयणः अग्रस्य भावः आग्रम् सुष्ठु आग्रं स्वाग्रं श्रैष्ठ्यम् अयति प्रापयतीति स्वाग्रयणः । अग्रशब्दस्यायतौ परे टिलोपः । तादृशस्त्वं यज्ञं पाहि रक्ष । यज्ञपतिं यजमानं च पाहि । विष्णुः यज्ञाधिष्ठाता देव इन्द्रियेण स्वसामर्थ्येन त्वां पातु । त्वमपि तादृशं विष्णुं पाहि रक्ष । सवनानि प्रातरादीनि अभि पाहि सर्वतो रक्ष ॥ २० ॥

## एकविंशी ।

सोम॑ः पवते॒ सोम॑ः पवते॒ऽस्मै ब्रह्म॒णेऽस्मै क्षत्रा॑यास्मै॑ सु॒न्वते॒ यज॑मानाय पवत इ॒ष ऊ॒र्जे प॑वते॒ऽद्भ्य ओष॑धीभ्यः पवते॒ द्यावा॑पृथि॒वीभ्यां॑ पवते सुभू॒ताय॑ पवते॒ विश्वे॑भ्यस्त्वा दे॒वेभ्य॑ः । ए॒ष ते॒ योनि॒र्विश्वे॑भ्यस्त्वा दे॒वेभ्य॑ः ॥ २१ ॥

उ० सोमः पवते । पवत इति गतिकर्मसु पठितम् । ग्रहपात्रेषु गच्छति स्वकीये कर्मणि प्रवर्तते । अस्मै ब्रह्मणे उत्पत्तिस्थित्यर्थं पवते । अस्मै क्षत्राय । पूर्ववद्व्याख्या । अस्मै सुन्वते यजमानाय कामप्राप्त्यर्थं पवते । इषे ऊर्जे अन्नाय तदुपसेचनाय क्षीरादेः पवते । अद्भ्यः ओषधीभ्यः पवते । अद्भ्यो वृष्टिभ्यः ओषधीभ्यो यवादिभ्यः । उत्पत्तिस्थितये पवते । द्यावापृथिवीभ्यां प्रीणनाय पवते सुभूताय पवते । किंवा बहुनोक्तेन सर्वस्मै साधुभवनाय पवते । विश्वेभ्यः त्वा देवेभ्यः देवतादेशः । एष ते योनिर्विश्वेभ्यः त्वा देवेभ्यः । सादयामीति शेषः ॥ २१ ॥

म० 'त्रिर्हिङ्कृत्य सोमः पवत इति' ( का० ९ । ६ । १५ ) हिङ्कारत्रयं कृत्वा जपेदिति शेषः । वैश्वदेवत्वम् । सोमः पवते । पवतिर्गत्यर्थः । सोमो गच्छति ग्रहपात्रेषु स्वकीये कर्मणि प्रवर्तत इत्यर्थः । द्विरुक्तिरादरार्था । किमर्थम् । अस्मै ब्रह्मणे ब्राह्मणजातिप्रीत्यर्थम् । अस्मै क्षत्राय एतत्क्षत्रियजातिप्रीत्यर्थम् । अस्मै सुन्वते सोमाभिषवं कुर्वते यजमानाय कामप्राप्त्यर्थं पवते इषेऽन्नाय ऊर्जे तदुपसेचनाय क्षीरादये पवते निष्पत्त्यर्थमित्यर्थः । अद्भ्यो वृष्टिभ्यः ओषधीभ्यो व्रीहियवादिभ्यस्तत्सिद्ध्यर्थं पवते । द्यावापृथिवीभ्यां लोकद्वयप्रीणनाय पवते । किंवा बहुनोक्तेन । सुभूताय सर्वेषां साधुभवनाय पवते । हे आग्रयणग्रह, तादृशं त्वा त्वां विश्वेभ्यो देवेभ्यः सर्वदेवताप्रीत्यर्थं गृह्णामीति शेषः । एष त इति सादयति । हे ग्रह, एष ते योनिः स्थानं विश्वेभ्यः सर्वेभ्यो देवेभ्योऽर्थे त्वां सादयामीति शेषः ॥ २१ ॥

## द्वाविंशी ।

उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा बृ॒हद्व॑ते॒ वय॑स्वत उक्था॒व्यं॑ गृह्णामि । यत्त॑ इन्द्र बृ॒हद्वय॒स्तस्मै॑ त्वा

विष्णवे त्वा एष ते योनिरुक्थेभ्यस्त्वा । देवेभ्यस्त्वा देवाव्यं गृह्णामि यज्ञस्यायुषे गृह्णामि ॥ २२ ॥

**उ०** उक्थं गृह्णाति । उपयामगृहीतोसि । इन्द्राय त्वां गृह्णामीति संबन्धः । कथंभूताय । बृहद्वते बृहदितिसामाभिप्रायम्। वयस्वते विशिष्टं यौवनलक्षणवीर्यसमेतं सदाकालं वयो यस्य स तथोक्तः तस्मै वयस्वते । कथंभूतं त्वां गृह्णामि । उक्थाव्यं उक्थानि मैत्रावरुणब्राह्मणाच्छꣳस्यच्छावाकसंबन्धीनि अवति गोपायतीत्युक्थाव्यम् । तत्र ह्यस्य विनियोगः । यत्ते तव हे इन्द्र, बृहत् महत् ऊर्जितं वयो यौवनलक्षणं तस्मै त्वां गृह्णामि ।अत्र च ते इन्द्रेति युष्मदामन्त्रिताभ्यां प्रत्यक्षमिन्द्र उच्यते । त्वेति युष्मदादेशोऽपि प्रत्यक्ष एव । तयोः सामर्थ्यं कथमितिचेत् । यस्येन्द्रस्य बृहद्वयस्तस्मै त्वां गृह्णामीति पदद्वयस्य व्यत्ययेनेति ब्रूमः । ते इत्यस्य पदस्य यस्येत्यनेन पदेन व्यत्ययः । इन्द्र इत्यस्य पदस्य इन्द्रस्येत्यनेन व्यत्ययः । विष्णवे यज्ञाय च त्वां गृह्णामीति शेषः । एष ते योनिः उक्थेभ्यः त्वां सादयामीति शेषः । विगृह्णाति । देवेभ्यस्त्वा । देवेभ्योऽर्थाय त्वां देवाव्यं देवतर्पणम् । यज्ञस्यायुषे । अनवच्छिन्ना आकस्मिकभ्रेषरहिता परिसमाप्तिः यज्ञस्यायुः । यज्ञस्यायुषे यज्ञस्य समाप्तये गृह्णामि । यद्वा यज्ञो यजमानस्य शरीरमिति यजमानस्यायुराशास्यते ॥ २२ ॥

**म०** 'उक्थ्यमुपयामगृहीत इति' ( का० ९ । ६ । २० ) उक्थ्यं ग्रहं गृह्णीयात् । उपयामग्रहदेवतानि यूंजषि । हे सोम, त्वमुपयामेन पात्रेण गृहीतोऽसि । हे उक्थ्यग्रह, त्वा त्वामिन्द्रार्थं गृह्णामि स्वीकरोमि । किंभूतायेन्द्राय । बृहद्वते बृहत्साम तद्वते । बृहत्सामप्रियायेत्यर्थः । तथा वयस्वते वयः सोमरूपमन्नं तद्वते । यद्वा वयो यौवनलक्षणं वीर्यसमेतं सदा तद्वते । किंभूतं त्वाम् । उक्थाव्यं उक्थानि मित्रावरुणब्राह्मणाच्छंस्यच्छावाकसंबन्धीनि शस्त्राणि अवति रक्षतीत्युक्थावीः तम् । तत्र ह्यस्य विनियोगः । किंच एवं सोममुक्त्वा इन्द्रमाह । हे इन्द्र, यत्ते तव बृहत् महत् वयोऽन्नं सोमरूपमस्ति तस्मै तत्पानार्थं त्वां प्रार्थये इति शेषः । हे सोम, विष्णवे विष्णुदेवतार्थं त्वां गृह्णामि । यद्वा हे इन्द्र, यत्ते तव बृहत् महत् ऊर्जितम् वयः यौवनलक्षणं तस्मै सोम, त्वां गृह्णामि । अत्र च ते इन्द्रेति युष्मदामन्त्रिताभ्यां प्रत्यक्ष इन्द्र उच्यते । त्वेति युष्मदा सोम उच्यते प्रत्यक्षतः तयोः सामर्थ्यं नास्ति । ततस्ते इत्यस्य पदस्य अस्येत्यनेन व्यत्ययः । इन्द्रेत्यस्येन्द्रस्येत्यनेन पदेन व्यत्ययः । ततश्चायमर्थः । हे सोम, यदस्येन्द्रस्य बृहद्वयः तस्मै त्वां गृह्णामि विष्णवे यज्ञाय च त्वां गृह्णामि । एष त इति सादनम् । हे ग्रह, एष ते तव योनिः स्थानमुक्थेभ्योऽर्थाय त्वां सादयामीति शेषः । 'उक्थं विगृह्णाति त्रैधं देवेभ्यस्त्वेति सर्वेभ्य इति' (का० ९ । १४ । ८) । उक्थस्थालीस्थं सोमं त्रेधा विभज्य गृह्णाति । सर्वेभ्यः प्रशास्तृब्राह्मणाच्छंस्यच्छावाकेभ्यस्तत्कृतयागार्थमित्यर्थः । हे सोम, देवेभ्योऽर्थाय त्वां गृह्णामि । किंभूतं त्वाम् । देवाव्यं देवानवति तर्पयतीति देवावीस्तम् । किमर्थम् । यज्ञस्यायुषे अनवच्छिन्ना कर्मैकदोषरहिता परिसमाप्तिर्यज्ञस्यायुस्तस्मै यज्ञसमाप्तये फलपर्यन्तमवस्थानाय च गृह्णामि । यद्वा यज्ञो यजमानस्य शरीरमिति यजमानस्यायुषे गृह्णामि ॥ २२ ॥

## त्रयोविंशी ।

मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीन्द्राग्निभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीन्द्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीन्द्राबृहस्पतिभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीन्द्राविष्णुभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ॥ २३ ॥

**उ०** उक्थविग्रहणेषु द्वितीयो मन्त्रविकल्पो मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां यथासंख्यम् । मित्रावरुणाभ्यां त्वा इन्द्राय त्वा इन्द्राग्निभ्यां त्वा एवमादयो मन्त्रा ऋजवः । चरकाणां मन्त्रविकल्पाः।इन्द्रावरुणाभ्यां त्वा । इन्द्राबृहस्पतिभ्यां त्वा इन्द्राविष्णुभ्यां त्वा । एतेपि ऋजवः ॥ २३ ॥

**म०** 'मित्रावरुणाभ्यां त्वेति वा प्रशास्त्र इति' ( ९ । १४ । ९ ) । मैत्रावरुणायोक्थ्यविग्रहे मन्त्रविकल्पः । मित्रावरुणाभ्यामर्थे देवाव्यं देवतर्पकं त्वां यज्ञस्यायुषे गृह्णामि । 'एवं प्रतिप्रस्थातोत्तराभ्यामिन्द्राय त्वेति ब्राह्मणाच्छꣳसिन इन्द्राग्निभ्यां त्वेत्यच्छावाकायेति' (का० ९ । १४ । १५) ब्राह्मणाच्छंस्यच्छावाकाभ्यां मन्त्रविकल्पावेवम् । इन्द्राय त्वां गृह्णामि इन्द्राग्निभ्यामर्थे त्वां गृह्णामि । शेषं पूर्ववत् । 'उत्तरेष्विन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति' (का० १० । ७ । ११) उक्थ्यादिसोमसंस्थेषु मैत्रावरुणादीनां तृतीयसवने उक्थ्यविग्रहमन्त्राः । इन्द्रावरुणयोरर्थे त्वां देवाव्यं यज्ञस्यायुषे गृह्णामि । एवमिन्द्राबृहस्पतिभ्यामर्थे त्वां गृह्णामि । इन्द्राविष्णुभ्यामर्थे त्वां गृह्णामि । मित्रावरुणाभ्यामित्यादौ 'देवताद्वन्द्वेच' ( पा० ६ । ३ । २६ ) इति पूर्वपदान्तस्य दीर्घः ॥ २३ ॥

## चतुर्विंशी ।

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् । कविꣳसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ २४ ॥

**उ०** ध्रुवं गृह्णाति । मूर्धानं दिवः वैश्वानरी त्रिष्टुप् । वैश्वानरर्चात्र सर्वात्मा स्तूयते । यं वैश्वानरमित्थंभूतं जनयन्त देवाः । मूर्धानं दिवः द्युलोकस्य सूर्यात्मनावस्थितं मूर्धानं शिरः आहुर्ब्रह्मविदः । यं च अरतिं पृथिव्याः। पृथिवीशब्देनात्रान्तरिक्षमभिधीयते । पठितं चैतदन्तरिक्षनामसु । एतद् अन्तरिक्षम् आकाशम् आपः पृथिवीति । अरतिम् अल-

मतिं पर्याप्तमतिं पृथिव्या अन्तरिक्षलोकस्याहुः । तत्र ह्यसौ स्थितो यथाकालं वृष्ट्या पुष्णाति भूतानि । वैश्वानरमृतआजातमग्निम् । यं वैश्वानरम् ऋते यज्ञे आजातमुत्पन्नम् अरणिद्वयाद् अग्निमाहुः । यं च कविं क्रान्तदर्शनमाहुः । सम्राजं सम्यगैश्वर्येण युक्तमाहुः । यं च अतिथिं जनानामाहुः । विज्ञायते हि अग्निरतिथिरूपेण गृहान्प्रविशति तस्मात्तस्योदकमाहरन्ति । आसन्ना पात्रं जनयन्त देवाः । योयमुक्तगुणो वैश्वानरस्तमासन् । आस्यशब्दस्य 'पद्दन्–' इत्यादिना आसन् आदेशः । सप्तम्याश्छान्दसो लोपः । देवानामासनि आस्ये मुखे । आ आभिमुख्येन । पात्रं पीयतेऽनेनेति पात्रम् । विज्ञायते हि चमसो देवपान इति । 'चमसेन ह वा एतेन भूतेन देवा भक्षयन्तीति' । जनयन्त देवा इन्द्रादयः ॥ २४ ॥

**म०** 'ध्रुवं मूर्धानं दिव इति' (का० ९ । ६ । २१ ) ध्रुवसंज्ञं ग्रहं गृह्णीयात् । वैश्वानरदेवत्या त्रिष्टुब्भरद्वाजदृष्टा । वैश्वानरश्चात्र सर्वात्मना स्तूयते । देवा ईदृशमग्निं जनयन्त उत्पादितवन्तः । अडागमाभाव आर्षः । किंभूतमग्निम् । दिवो मूर्धानं द्युलोकस्य शिरोवदुन्नतप्रदेशे सूर्यरूपेणावस्थाय भासकम् । तथा पृथिव्या अरतिम् रतिरुपरतिस्तद्रहितम् । नहि पृथिव्या उपरि कदाचिदप्यग्निरुपरमते । किंतु दाहपाकप्रकाशैः सर्वाननुगृह्णन् सर्वदा वर्तत एव । यद्वा पृथिवीशब्देनान्तरिक्षमुच्यते । आकाशं आपः पृथिवीत्यन्तरिक्षनामसु पठितत्वात् पृथिव्या अन्तरिक्षस्यारतिमलमतिं पर्याप्तमतिं पूरकमित्यर्थः । तत्र स्थितोऽसौ यथाकालं वृष्ट्या भूतानि पुष्णाति तथा वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितो वैश्वानरस्तम् । जठराग्निरूपेणान्नपाचकत्वात् । तथा ऋते यज्ञे यज्ञनिमित्तमाजातम् उत्पन्नमरणिद्वयात् । तथा कविं क्रान्तदर्शनं स्वभक्ताननुग्रहीतुमभिज्ञमित्यर्थः । तथा सम्राजं सम्यग्दीप्यमानमैश्वर्येण युक्तमित्यर्थः।तथा जनानां यजमानानामतिथिं हविर्भिः सत्कारयोग्यम् । विज्ञायते हि अग्निरतिथिरूपेण गृहान्प्रविशति तस्मात्तस्योदकमाहरन्ति । आसन् आपात्रम् आस्यशब्दस्य सप्तम्येकवचने 'पद्दन्–' (पा० ६ । १ । ६३ ) इति सूत्रेणासन्-आदेशः 'सुपां सुलुक्' ( पा० ७१ । ३९ ) इति सप्तमीलोपः । आसन् आसनि आस्ये मुखे आपात्रम् आभिमुख्येन पीयतेऽनेनेत्यापात्रम् । 'विज्ञायते हि चमसो देवपान इति चमसेन ह वा एतेन भूतेन देवा भक्षयन्ति' ( १ । ४ । २ । १४ ) इति श्रुतेः । ईदृशमग्निं देवा इन्द्रादयोऽजनयन्तेत्यर्थः ॥ २४ ॥

## पञ्चविंशी ।

उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वा । ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि । अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करत् ॥ २५ ॥

**उ०** उपयामगृहीतोसि ध्रुवोसि नाम्ना । क्रियाजमेतत्तवनामेति प्रशंसा । ध्रुवक्षितिर्ध्रुवाणाम् । 'क्षि निवासगत्योः' । ध्रुवाणामपि त्वं ध्रुवक्षितिः ध्रुवनिवासः ध्रुवतमोऽच्युतानाम् । अच्युतानामपि त्वमेव ध्रुवतमः । अच्युतक्षित्तमः अच्युते क्षियतीत्यच्युतक्षित् अतिशयेन अच्युतक्षित् अच्युतक्षित्तमः । सादयति।एष ते योनिः वैश्वानराय त्वा । सादयामीति शेषः । ध्रुवं निनयति ध्रुवं ध्रुवेण । बृहती । पूर्वोर्धर्चो ध्रुवदेवत्यः उत्तर ऐन्द्रः। ध्रुवं त्वाम् अवनयामि अवसिञ्चामि । ध्रुवेण एकाग्रेण मनसा वाचा च तन्मन्त्रोच्चारणप्रवणया सोमं प्रति । स हि होतृचमसे अवसिच्यते द्वादशे शस्त्रे । अथानः अथास्माकमवसिक्तसोमानाम् । इन्द्र इत् । इच्छब्द एवार्थे । इन्द्र एव विशः मनुष्यान् असपत्नाः सपत्नरहितान् । समनसः समनस्कान् वृत्त्यायुक्तानकरत् करोतु ॥ २५ ॥

**म०** ध्रुवदैवतं यजुः ध्रुवग्रहण एव विनियुक्तम् । हे सोम, त्वमुपयामेन पात्रेण गृहीतोऽसि ध्रुवोऽसि ध्रुवनामकोऽसि । कीदृशस्त्वम् । ध्रुवा स्थिरा क्षितिर्निवासो यस्य स ध्रुवक्षितिः । 'क्षि निवासगत्योः' स्थिरनिवासः आ वैश्वदेवीशंसनप्रस्थानात् । तथा ध्रुवाणामादित्यस्थाल्यादीनां मध्ये ध्रुवतमः अतिशयेन स्थिरः । तथा अच्युतानां च्युतिरहितानां क्षरणशून्यानां मध्ये अच्युतक्षित्तमः । अच्युते च्युतिरहिते पात्रे क्षियति निवसतीति अच्युतक्षित् अतिशयेनाच्युतक्षित् अच्युतक्षित्तमः । एष त इति सादनम् । हे ग्रह, एष ते योनिः स्थानं वैश्वानरायाग्नये त्वा त्वां सादयामि । 'ध्रुवꣳहोतृचमसेऽवनयति ध्रुवं ध्रुवेणेति' । ध्रुवपात्रस्थं सर्वं सोमं होतृचमसे सिञ्चेत् । बृहती पूर्वोऽर्धर्चो ध्रुवदैवतः उत्तर ऐन्द्रः । प्रथमतृतीयावष्टाक्षरौ पादौ द्वितीयचतुर्थौ दशाक्षरौ सा बृहती 'वैराजौ गायत्रौ च' इति पिङ्गलोक्तेः । ध्रुवेणैकाग्रेण मनसा वाचा तन्मन्त्रोच्चारणप्रवणया ध्रुवं ध्रुवग्रहेऽवस्थितं सोममवनयामि होतृचमसेऽवसिञ्चामि । यद्वा ध्रुवं ग्रहं सोमं होतृचमसस्थं प्रत्यवनयामि । अथा अनन्तरमिन्द्र इत् । इदेवार्थे । इन्द्र एव नोऽस्माकं विशः प्रजाः ईदृशीः करत् 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इतीलोपः 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्यडागमः । कीदृशीर्विशः । असपत्नाः नास्ति सपत्नो यासां ताः सपत्नरहिताः शत्रुशून्याः । तथा समनसः समानं मनो यासां ताः स्थिरमनस्काः धृतियुक्ता इत्यर्थः ॥ २५ ॥

## षड्विंशी ।

यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् । अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतꣳस्वाहा देवानामुत्क्रमणमसि ॥ २६ ॥

**उ०** विप्रुषां होमः । यस्ते द्रप्सः । सौमी त्रिष्टुप् यजुरन्ता । स्वाहादेवानामुपक्रमणमिति यजुः । हे सोम, यस्ते

द्रप्सः विप्रुड् रसैकदेशः स्कन्दति भूमौ वा अन्यत्र वा पतति। यश्च तव अंशुः स्कन्दति ग्रावच्युतः ग्राव्णश्च्युतः पतितः। अधिषणयोरुपस्थात् अधिषवणफलकयोः उपस्थाद् उत्सङ्गात्। अध्वर्योर्वा यः स्कन्दति। परि वा यः पवित्रात्। परिस्कन्दति वा यः पवित्रात्। यतः कुतश्चित्स्कन्दतीत्यभिप्रायः। तं ते जुहोमि तं विप्रुषं ते तव संबन्धिनमंशुं वा अग्नौ जुहोमि। मनसा संकल्पय वषट्कृतं स्वाहा। वषट्कारेण स्वाहाकारेण वेत्यर्थः। तृणं चात्वाले प्रास्यति देवानामुत्क्रमणमसि। चात्वालमुच्यते। अतो हि देवाः स्वर्गं लोकमुपोदक्रामन्॥ २६॥

**म०** 'यस्त इति विप्रुषाᳬंहोमं जुहुतीति' (का० ९।६।२८) अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात्तत्प्रत्यवायपरिहाराय घृतहोमस्य विप्रुड्ढोम इति संज्ञा तमध्वर्य्वादयो जुहति। सौमी त्रिष्टुप् स्वाहेति यजुरन्ता देवश्रवोदृष्टा। हे सोम, ते तव यो द्रप्सः रसैकदेशः स्कन्दति भूमावन्यत्र वा पतति। यश्च ते तवांशुः खण्डः। ग्रावच्युतः ग्राव्णः सकाशात्पतितः। यश्च अधिषणयोः अधिषवणफलकयोरुपस्थादुत्सङ्गात्स्कन्दति। वाथवा य अंशुरध्वर्योः सकाशात्स्कन्दति। वाथवा यः अंशुः पवित्रात्परिस्कन्दति। यतः कुतश्चित्परिस्कन्दतीति भावः। हे सोम, ते तव तं द्रप्समंशुं च स्वाहाकारेण जुहोमि। किंभूतं तम्। मनसा वषट्कृतं संकल्पितं वषट्कारेण च स्वाहाकारेण च जुहोमीत्यर्थः। 'अन्यतरत्तृणं चात्वाले प्रास्यतीति' (का० ९।६।३२) अध्वर्युणा वेदेर्थे तृणे गृहीते तयोरेकं चात्वाले क्षिपेत्। चात्वालदैवतम्। हे चात्वाल, त्वं देवानामुत्क्रमणमसि उत्क्रामन्ति गच्छन्ति स्वर्गं यस्मात्तदुत्क्रमणं देवास्त्वत्तः स्वर्गं गच्छन्ति 'अतो हि देवाः स्वर्गमुपोदक्रामन्' (४।२।५।५) इति श्रुतेः॥ २६॥

## सप्तविंशी।

प्राणाय॑ मे वर्चो॒दा वर्च॑से पवस्व व्या॒नाय॑ मे वर्चो॒दा वर्च॑से पवस्वोदा॒नाय॑ मे वर्चो॒दा वर्च॑से पवस्व वा॒चे मे॑ वर्चो॒दा वर्च॑से पवस्व क्रतू॒दक्षा॒भ्यां मे वर्चो॒दा वर्च॑से पवस्व॒ श्रोत्रा॑य मे वर्चो॒दा वर्च॑से पवस्व॒ चक्षु॑र्भ्यां मे वर्चो॒दसौ॒ वर्च॑से पवेथाम्॥२७॥

**उ०** ग्रहान्दर्शयत्यवकाशान्वाचयन् यज्ञस्यैते प्राणा यजमानस्य वानूचानस्य उपांशुं प्राणरूपेण दर्शयति। प्राणाय मे वर्चोदाः। हे उपांशो, यस्त्वं स्वभावत एव वर्चोदास्तं त्वां ब्रवीमि। प्राणाय मे मदीयाय वर्चसे पवस्व प्रवर्तयस्व। अनेन तुल्यव्याख्याना अवकाशमन्त्राः। उपांशुसवनम्। व्यानाय मे। अन्तर्यामम्। उदानाय मे। ऐन्द्रवायवम्। वाचे मे। मैत्रावरुणम्। क्रतूदक्षाभ्यां मे। कामः क्रतुरुच्यते। तस्य समृद्धिर्दक्षः। आश्विनम्। श्रोत्राय मे। शुक्रामन्थिनौ युगपत्। चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम्। शुक्रामन्थिविषयं द्विवचनम्॥ २७॥

**म०** 'ग्रहानवेक्षयति यथागृहीतमवकाशान् वाचयन् प्राणायाम इति प्रतिमन्त्रमिति' (का० ९।७।९) प्राणायेत्यादयो मन्त्रा अवकाशसंज्ञास्तान्वाचयेत्। ग्रहणक्रमेण ग्रहान्यजमानं दर्शयति। लिङ्गोक्तदेवतान्येकादश। यज्ञस्यैते प्राणास्तान्प्राणरूपेण दर्शयति। हे उपांशो, यस्त्वं स्वभावत एव वर्चोदाः तेजसो दाता सः त्वं मे मम प्राणाय हृदयस्थितवायोर्वर्चसे पवस्व प्रवर्तस्व। उपांशुसवनम्। व्यानाय मे सर्वशरीरगतवायवे पवस्व। अन्यत्पूर्ववत्। अन्तर्यामं कण्ठदेशस्थो वायुरुदानः। ऐन्द्रवायवम्। वागिन्द्रियाय मैत्रावरुणम्। क्रतुः कामः दक्षस्तस्य समृद्धिः तद्द्वयसाधनरूपाय वर्चसे प्रवर्तस्व। आश्विनं श्रोत्राय श्रोत्रेन्द्रियाय। शुक्रामन्थिनौ युगपत् हे शुक्रामन्थिनौ, मे मम चक्षुषोः पाटवाय तद्रूपाय वर्चसे युवां पवेथां प्रवर्तेथाम्॥ २७॥

## अष्टाविंशी।

आ॒त्मने॑ मे वर्चो॒दा वर्च॑से पव॒स्वौज॑से मे वर्चो॒दा वर्च॑से पव॒स्वायु॑षे मे वर्चो॒दा वर्च॑से पवस्व॒ वि॒श्वा॑भ्यो मे प्र॒जाभ्यो॒ वर्चो॒दसौ॒ वर्च॑से पवेथाम् २८

**उ०** आग्रयणम्। आत्मने मे। उक्थ्यम्। ओजसे मे। ओजो जेष्यामीत्याशंसा। ध्रुवम्। आयुषे मे। पूतभृदाहवनीयौ च युगपत्। विश्वाभ्यां मे। यौ युवां स्वभावत एव वर्चोदसौ तौ ब्रवीमि। विश्वाभ्यः सर्वाभ्यो मे मम प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् प्रवृत्तिं कुरुतम्॥ २८॥

**म०** आग्रयणम्। ममात्मने जीवस्य स्वास्थ्याय वर्चसे पवस्व उक्थ्यम्। ओजः सर्वेन्द्रियपाटवं शारीरं बलं वा तद्रूपाय वर्चसे पवस्व। ध्रुवम् आयुर्निर्दुष्टजीवनं तद्रूपाय वर्चसे पवस्व। पूतभृदाहवनीयौ युगपदवेक्षते। हे पूतभृदाहवनीयौ, सर्वाभ्यो मम प्रजाभ्यः प्रजार्थं यद्वर्चस्तेजस्तदर्थं युवां पवेथाम्। किंभूतौ युवाम्। वर्चो दत्तस्तौ वर्चोदसौ। सर्वत्र ददातेरसुन्प्रत्ययः। यद्वात्र प्राणायेत्यादिचतुर्थीनां षष्ठ्या विपरिणामः। प्राणव्यानादीनां यद्वर्चस्तदर्थं पवस्वेत्यर्थः। यद्वा यस्त्वं प्राणाय वर्चोदाः स मे वर्चसे ब्रह्मवर्चसाय पवस्व एवं सर्वत्र॥ २८॥

## एकोनत्रिंशी।

कोऽसि कत॒मोऽसि॒ कस्या॑सि॒ को नामा॑सि। यस्य॑ ते॒ नामाम॑न्महि॒ यं त्वा॒ सोमे॒नाती॑तृपाम। भूर्भु॒वः॒ स्वः॒ सु॒प्र॒जाः प्र॒जाभि॑ः स्याᳬं सु॒वीरो॒ वी॒रैः सु॒पोषः॒ पोषैः॥ २९॥

अथ द्रोणकलशम्। कोसि। वर्धमान उष्णिक् अनुष्टुप्

वा । अध्यस्तं प्रजापतिरूपं द्रोणकलशमाह । कोऽसि कः प्रजापतिः स त्वमसि । कतमोऽसि अतिशयेन प्रजापतिरसि । अनन्यभूतः प्रजापतिना । कस्यासि कस्य प्रजापतेरनन्यभूतोसि । कोनामासि प्रजापतिनामासि । किंच यस्य तव नामामन्महि । 'मन ज्ञाने' । विजानीमः । यं च त्वां सोमेनातीतृपामः तर्पितवन्तः सोऽस्मान्विदितनाम्नः कुरु तर्पय च कामैरिति शेषः । जपति । भूर्भुवःस्वरिति व्याख्यातम् २९

**म०** 'कोऽसीति द्रोणकलशमिति' (का० ९।७।१४)। द्रोणकलशमवेक्षते। प्राजापत्या वर्धमानोष्णिक् । यस्याः प्रथमः पादः षडक्षरो द्वितीयः सप्ताक्षरस्तृतीयोऽष्टार्णश्चतुर्थो नवाक्षरः सा त्रिंशद्वर्णा वर्धमानोष्णिक् । अध्यस्तप्रजापतिं द्रोणकलशमाह हे द्रोणकलश, त्वं कः प्रजापतिरसि । कतमोऽतिशयेन प्रजापतिरसि तथा कस्य प्रजापतेरसि । को नाम प्रजापतिनामासि। प्रजापतेरनन्यभूतोऽसीत्यर्थः। किंच वयं यस्य ते तव नाम असन्महि विजानीमः 'मन ज्ञाने'। च पुनर्यं द्रोणकलशरूपं त्वां वयं सोमेन अतीतृपाम तर्पितवन्तः स त्वमस्मान् विदितनाम्नः कुरु तर्पय च कामैरिति शेषः । 'भूर्भुवः स्वरिति जपतीति' (का०९।७।१५) हे भूर्भुवःस्वः अग्निवायुसूर्याः, प्रजाभिः अहं सुप्रजाः शोभनप्रजायुक्तः स्यां भवेयम्। वीरैः पुत्रैः सुवीरः स्यां पोषैः धनादिपुष्टिभिः सुपोषः शोभनपोषो भवेयम् ॥ २९ ॥

## त्रिंशी ।

उपयामगृहीतोऽसि मधवे त्वोपयामगृहीतोऽसि माधवाय त्वोपयामगृहीतोऽसि शुक्राय त्वोपयामगृहीतोऽसि शुचये त्वोपयामगृहीतोऽसि नभसे त्वोपयामगृहीतोऽसि नभस्याय त्वोपयामगृहीतोऽसीषे त्वोपयामगृहीतोऽस्यूर्जे त्वोपयामगृहीतोऽसि सहसे त्वोपयामगृहीतोऽसि सहस्याय त्वोपयामगृहीतोऽसि तपसे त्वोपयामगृहीतोऽसि तपस्याय त्वोपयामगृहीतोऽस्यꣳहसस्पतये त्वा ॥ ३० ॥

**उ०** ऋतुग्रहांस्त्रयोदश गृह्णाति त्रयोदशभिर्मन्त्रैः। मन्त्राणां नामान्येव । उपयाम गृहीतोसि मधवेत्वा । उपयामगृहीतोसि माधवायत्वा । वासन्तिकौ श्रुत्युक्तौ व्युत्पत्तय उच्यन्ते । मधुप्रमुखमन्नं वसन्ते उत्पद्यत इति मधुमाधवौ मासौ । शुक्राय शुचये ग्रैष्मौ मासौ । उभावपि शोचतेः शुष्यत्यर्थस्य । नभसे नभस्याय वार्षिकौ मासौ । नह्यत्र सूर्यो भाति मेघप्रचुरत्वात् तस्मान्नभो नभस्यश्च । इषे ऊर्जे शारदौ मासौ । इषमन्नमूर्जं तदुपसेचनं दध्यादि तदिह प्रचुरं भवति इति मतुब्लोपादभेदोपचारात् द्वौ मासावुच्येते। सहसे सहस्याय हैमन्तिकौ मासौ । सहतेः प्रसहनार्थस्य । अभिभवति ह्यसौ शीतेन। तपसे तपस्याय शैशिरौ मासौ । एतयोर्हि बलिष्ठं तपति सूर्यः । अꣳहसस्पतये त्रयोदशो मासः । अंहः पापं तस्य पतिः । अयं च द्वादशस्वपि पतति ॥ ३० ॥

**म०** 'ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोऽसि मधवे त्वेति द्वादश प्रतिमन्त्रमध्वर्योः पूर्वः पूर्वो मन्त्र उत्तर उत्तरः प्रतिप्रस्थातुरिति' ( का० ९।१३।१-४) । अध्वर्युप्रतिप्रस्थातारावृतुग्रहैर्द्वादशभिरनुतिष्ठतः उपयामेत्यादयो द्वादश मन्त्राः तत्र षट्सु मन्त्रयुग्मेषु पूर्वः पूर्वो मन्त्रोऽध्वर्योः उत्तर उत्तरः प्रतिप्रस्थातुरिति मन्त्रविवेकः । द्वादश लिङ्गोक्तानि । हे ऋतुग्रह, त्वमुपयामेन गृहीतोऽसि मधवे मधुनाम्ने चैत्रमासाय त्वां गृह्णामीति शेषः । माधवाय वैशाखाय त्वां गृह्णामि । मधुमाधवौ वासन्तौ मधुप्रमुखमन्नं वसन्ते प्रपद्यते । शुक्राय ज्येष्ठाय त्वां गृह्णामि । शुचये आषाढमासाभिमानिदेवार्थं त्वां गृह्णामि । शुक्रशुची ग्रीष्ममासौ 'शुच शोषणे' इत्यस्य धातोः । नभसे श्रावणमासाय सोम, त्वां गृह्णामि । नभस्याय भाद्रपदमासाभिमानिने त्वां गृह्णामि । नभोनभस्यौ वार्षिकौ मासौ मेघबाहुल्यान्न भात्यत्र सूर्य इति नभा नभस्यश्च । इषे आश्विनमासाय त्वां गृह्णामि ऊर्जे कार्तिकमासाय त्वां गृह्णामि । इषमन्नम् ऊर्जं तदुपसेचनं दध्यादि तदत्र प्रचुरं भवति । मतुपो लोपादभेदोपचाराद्वा ऊर्क्शब्देन शारदौ मासावुच्येते। सहसे मार्गशीर्षमासाय । सहस्याय पुष्यमासाय । सहःसहस्यौ हैमन्तिकौ मासौ । सहतेः प्रसहनार्थस्य प्रयोगः । प्रसहनमभिभवनम् । यतो हेमन्तः शीतेन नरानभिभवति । तपसे माघमासाय तपस्याय फाल्गुनाय । तपस्तपस्यौ शैशिरौ मासौ । तपति सूर्यो यत्रात्यन्तं स तपास्तपस्यश्च । 'त्रयोदशं गृह्णीयादिच्छन्नुपयामगृहीतोऽस्यꣳहसस्पतये त्वा' (का० ९।१३।१८) इति। इच्छन्नध्वर्युस्त्रयोदशमृतुग्रहं गृह्णीयात् ऐच्छिको विकल्पः । हे ग्रह, त्वमुपयामेन पात्रेण गृहीतोऽसि तादृशं त्वामंहसः पतयेऽधिकमासाधिष्ठात्रे गृह्णामीति शेषः । अंहः पापं तस्य पतिः । मलमासत्वादयं द्वादशस्वपि पतति यद्वांहतेर्गतिकर्मणोऽसुन्प्रत्ययान्तस्य रूपसंह इति । अंहनमंहो गतिस्तस्य पतिः त्रयोदशो मासः आदित्यगतिवशेन जायते ॥ ३० ॥

## एकत्रिंशी ।

इन्द्राग्नी आगतꣳसुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा ॥ ३१ ॥

**उ०** ऐन्द्राग्नं ग्रहं गृह्णाति । इन्द्राग्नी आगतम् । गायत्री ऐन्द्राग्नी । हे इन्द्राग्नी, आगतम् आगच्छतम् सुतमभिषुतं सोमं प्रति । गीर्भिर्नभोवरेण्यम् । गीर्भिस्त्रयीलक्षणाभिर्वाग्भिः । नभोवरेण्यम् । 'नभ आदित्यो भवति नेता भासां ज्योतिषां प्रभवः' । लुप्तोपमं चैतत् । नभ इव आदित्यमिव वरणीयं । सोममागत्य च अस्य सोमस्य पातं पि-

**बतम् । धियेषिता यजमानस्य संबन्धिन्या बुद्धा इषिता प्रेषितौ सन्तौ । उपयामगृहीतोसीन्द्राग्निभ्यां त्वा गृह्णामि। एष ते योनिः इन्द्राग्निभ्यां त्वा सादयामि ॥ ३१ ॥**

**म०** 'ऐन्द्राग्नं गृह्णाति' ( का० ९ । १३ । २० ) । प्रतिप्रस्थातेन्द्राग्निदेवताकं ग्रहं गृह्णीयात् । ऐन्द्राग्नी गायत्री विश्वामित्रदृष्टा । हे इन्द्राग्नी, युवां सुतमभिषुतं सोमं प्रति आगतमागच्छतम् । गच्छतेर्व्यत्ययेन शपो लुक् 'अनुदात्त–' (पा० ६ । ४ । ३७ ) इति मलोपश्च । किंभूतं सोमम् । गीर्भिर्नभोवरेण्यं गीर्भिः त्रयीलक्षणाभिर्वाग्भिः नभ इवादित्य इव वरेण्यो वरणीयः प्रार्थनीयस्तम् । 'नभ आदित्यो भवति नेता भासां ज्योतिषां प्रभवोऽपि' ( नि० २ । २२ ) इति यास्कोक्तेर्नभ आदित्यः लुप्तोपमानम् । यद्वा गीर्भिः स्तुतिरूपाभिर्वाग्भिः युतमिति शेषः। नभो नभःस्थितैः स्वर्गस्थैर्देवैर्वरेण्यं प्रार्थनीयम् । नभःशब्देन लक्षणया नभःस्था देवा उच्यन्ते । किंच हे इन्द्राग्नी, युवामस्य सोमस्य संबन्धिनं स्वमंशं पातं पिबतम् । पिबादेशाभावश्छान्दसः । किंभूतौ युवाम् । धियेषिता धिया यजमानबुद्धा इषितौ प्रेषितौ प्रार्थितौ । एवं देवावुक्त्वा सोममाह हे सोम, उपयामेन ग्रहेण गृहीतोऽसि हे ग्रह, इन्द्राग्निभ्यामर्थे त्वां गृह्णामीति शेषः । एष त इति सादनम् । एष तव योनिः स्थानम् । इन्द्राग्निभ्यामर्थे त्वां सादयामि ॥ ३१ ॥

## द्वात्रिंशी ।

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ॥ उपयामगृहीतोऽस्यग्नीन्द्राभ्यां त्वैष ते योनिरग्नीन्द्राभ्यां त्वा ॥ ३२ ॥

**उ० ग्रहस्य द्वितीयो मन्त्रविकल्पः आ घा ये । आग्नीन्द्री गायत्री । आघाये अग्निमिन्धते । 'इन्धी दीप्तौ' । आदीपयन्ति. ये अग्निम् इष्टिपशुसोमचातुर्मास्यैर्यज्वानः । घ इति निपातोऽनर्थकः । ये च स्तृणन्ति बर्हिः आनुषक् । आनुषगिति नामानुपूर्वस्यानुषक्तं भवति । आनुपूर्व्येण क्रमेण किं तेषामिति । येषामिन्द्रः युवा । अनुपहतजरामृत्युशरीरः । सखा समानख्यानः नेतरेषामयज्वनाम् । उपयाम इति व्याख्यातम् ॥ ३२ ॥**

**म०** अग्नीन्द्रदेवत्या गायत्री त्रिशोकदृष्टा । अस्या विनियोगः कात्यायनेनोक्तः । ऐन्द्राग्नग्रहे एव विकल्पः शाखान्तरे । ये यजमाना अग्निमा इन्धते आदीपयन्ति इष्टिपशुसोमचातुर्मास्यैर्यजन्तीत्यर्थः । घेत्यनर्थको निपातः । तस्य संहितायाम् 'ऋचि तुनुघ–' ( पा० ६ । ३ । १३३ ) इत्यादिना दीर्घः । ये चानुषक् आनुपूर्व्येण क्रमेण बर्हिः स्तृणन्ति आच्छादयन्ति अनुषज्यते अनु क्रमेणासज्यते स्तीर्यत इत्यनुषक् । कर्मणि क्विप् । अकारस्य संहितायां दीर्घः । 'आनुषगिति नामानुपूर्वस्यानुषक्तं भवति' (नि० ६ । १४) इति यास्कोक्तेरानुषक्शब्देनानुपूर्वमुच्यते । किंच येषां यज्वनां युवा जरामृत्युरहित इन्द्रः सखा मित्रवदुपकारकः । हे सोम, तेषां यज्ञे उपयामेन ग्रहेण त्वं स्वीकृतोऽसि अग्नीन्द्रदेवार्थं त्वां गृह्णामि । सादयति हे सोम, एष ते योनिः अग्नीन्द्राभ्यामर्थे त्वां सादयामि ॥ ३२ ॥

## त्रयस्त्रिंशी ।

ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वांसो दाशुषः सुतम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ३३ ॥

**उ०** वैश्वदेवं गृह्णाति । ओमासः वैश्वदेवी गायत्री । हे ओमासः अवितारः तर्पयितारः तर्पणीया वा । चर्षणीधृतः चर्षणयो मनुष्यास्तान्धारयन्ति तैर्वा ध्रियन्ते चर्षणीधृतः । विश्वेदेवास आगत । हे विश्वेदेवाः, ये यूयम् । ओमासः अवितारो रक्षितारः। चर्षणीनां मनुष्याणाम् । तेनोपकारेणावनीया वा तर्पणार्हाः धारयितारश्च संवित्तिकर्तारः ते यूयम्। दाश्वांसः चेतसा दत्तवन्तः कृतसंकल्पा भूत्वा इदं नामास्माभिरस्मै देयमिति ततोऽस्य दाशुषः दत्तवतो यजमानस्यैतमभिषुतं सोमं पातुमागच्छत इत्येवमाशास्महे । हे विश्वेदेवाः, इहागच्छत । कथंभूताः । दाश्वांसः 'दाशृ दाने' 'दाश्वान्-' इति निपात्यते । दत्तवन्तो यजमानस्य कामान् । किमर्थं पुरस्कृत्यागच्छत । दाशुषः सुतम् हवींषि दत्तवतो यजमानस्याभिषुतं सोमं पातुम् । उपयाम इत्यादि व्याख्यातम् ॥ ३३ ॥

**म०** 'वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणकलशादन्वारब्धे-वौमास इति' ( का० ९ । १४ । १ ) । अध्वर्यौ यज्वना स्पृष्टेऽस्पृष्टे वा सति द्रोणकलशाच्छुक्रपात्रेण वैश्वदेवं ग्रहं गृह्णीयात् । वैश्वदेवी गायत्री मधुच्छन्दोदृष्टा । हे विश्वेदेवासः विश्वेदेवाः, यूयमागत आगच्छत । किंभूता यूयम् । ओमासः ओमाः 'अवन्तीत्योमा रक्षितारः अवितारो वावनीया वा' (नि० १२।४० ) इति यास्कोक्तेः । तर्पयितारस्तर्पणीया वा । अवतेर्मक्प्रत्ययः संप्रसारणं च । तथा चर्षणीधृतः चर्षणयो मनुष्यास्तान्धरन्ति पुष्णन्ति तैर्वा ध्रियन्ते ते चर्षणीधृतः । चर्षणिशब्दस्य संहितायां दीर्घः । अनिष्टनिरसनं रक्षणम् इष्टप्रापणं पोषणमित्यवनधरणयोर्भेदः । तथा सुतमभिषुतं सोमं दाशुषः दत्तवतो यजमानस्य दाश्वांसः फलं दत्तवन्तः । कामान्पूरयन्त इत्यर्थः । यद्वा सुतं सोमं पातुमिति शेषः । 'दाश्वान्–' ( पा० ६। १ । १२ ) इत्यादिना निपातः । हे सोम, त्वमुपयामेन स्वीकृतोऽसि । विश्वेभ्यो देवेभ्योऽर्थाय त्वां गृह्णामीति शेषः । सादयति एष ते योनिः विश्वेभ्यो देवेभ्योऽर्थाय त्वां सादयामि ॥ ३३ ॥

## चतुस्त्रिंशी ।

विश्वेदेवास आगत शृणुता म इमꣳहवम् । एदं बर्हिर्निषीदत । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥३४॥

उ० द्वितीयो मन्त्रविकल्पः वैश्वदेवीगायत्री । हे विश्वेदेवाः, इह आगच्छत । आगत्य च शृणुत मे मम इमं हवमाह्वानम् । श्रुत्वा चावधार्य च आनिषीदत इदमस्मदीयं बर्हिः । उपयामगृहीतोसीत्यादि व्याख्यातम् ॥ ३४ ॥

म० वैश्वदेवी गायत्री गृत्समददृष्टा वैश्वदेवग्रहग्रहण एव विकल्पेनाम्नाता । हे विश्वेदेवासः, यूयमागत अस्मद्यज्ञं प्रत्यागच्छत । आगत्य च मे ममेमं हवमाह्वानं शृणुत । श्रुत्वा इदं मदीयं बर्हिः आनिषीदत बर्हिष उपर्युपविशत । उपयामेति पूर्ववत् ॥ ३४ ॥

## पञ्चत्रिंशी ।

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः ॥ उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३५ ॥

उ० मरुत्वतीयं गृह्णाति । इन्द्र मरुत्वः । मरुद्भिः सहित इन्द्रो देवता । इत उत्तरं च तिसृणामृचां त्रिष्टुभामिन्द्रार्षं प्राञ्चाहेन्द्रात् । हे इन्द्रमरुत्वः 'मतुवसो रु संबुद्धौ छन्दसि' इति रुत्वम् मरुत्वः हे मरुत्वन्।मरुद्भिः सहित, इहास्मदीये यज्ञे पाहि पिब सोमम् । कथं पिबेत्यत आह । यथा शार्याते अपिबः । शार्यातो मानवः तस्यापत्यं शार्यातः । 'शार्यातो ह वा इदं मानवो ग्रामेण चचार' इति श्रुतिः । यथा येन प्रकारेण शार्याते राजनि अपिबः पीतवानसि । सुतस्य अभिषुतस्य सोमस्य स्वमंशम् । किंच । तव प्रणीत्या प्रणयनेन तव च शूरशर्मन् शर्मणि शरणे यज्ञगृहे।आविवासन्ति विवासतिः परिचर्यायाम् । आभिमुख्येनावस्थितास्त्वां परिचरन्ति कवयः क्रान्तदर्शनाः । सुयज्ञाः कल्याणयज्ञाः । उपयामेत्यादि व्याख्यातम् ॥ ३५॥

म० एते प्रातःसवनग्रहाः पूर्णाः । अथ माध्यन्दिनसवनग्रहा उच्यन्ते । 'माध्यन्दिने सवने मरुत्वतीया गृह्यन्ते' इति तित्तिरिवचनात् । तेषु त्रयो मरुत्वतीयास्तत्र प्रथममाह । 'मरुत्वतीयमृतुपात्रेणेन्द्र मरुत्व इति' (का० १०।१।१४) ऋतुपात्रेण मरुत्वतीयं ग्रहं गृह्णीयात् । ऐन्द्रमारुतीश्चतस्त्रस्त्रिष्टुभो विश्वामित्रदृष्टाः । मरुतो देवा विद्यन्ते यस्य स मरुत्वान् तस्य संबोधनं हे मरुत्वः, 'मतुवसो रु संबुद्धौ छन्दसि' (पा० ८।३।१) इति रुत्वम् । मरुद्भिः सहित हे इन्द्र, इहास्मदीये यज्ञे सोमं पाहि पिब । कथं पातव्यस्तत्राह । यथा शार्याते शर्यातिर्नाम कश्चिद्राजा तस्य संबन्धिनि यज्ञे सुतस्याभिषुतस्य सोमस्यांशमपिबः पीतवानसि तद्वदिह पिब । 'शार्यातो ह वा इदं मानवो ग्रामेण चचार' (४।१।५।२) इति श्रुतिः। किंच हे शूर वीर, तव प्रणीती प्रणीत्या प्रणयनेनानुज्ञया सुयज्ञाः कल्याणयज्ञाः कवयः क्रान्तदर्शनास्तव शर्मन्सुखनिमित्ते शर्मणि यज्ञगृहे वा आविवासन्ति त्वां परिचरन्ति । विवासतिः परिचर्यार्थः । उपयामेन सोम, त्वं गृहीतोऽसि मरुत्वत इन्द्राय त्वां गृह्णामि । सादयति एष ते योनिः मरुत्वते इन्द्राय त्वां सादयामि ॥ ३५ ॥

## षट्त्रिंशी ।

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳशासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रꣳसहोदामिह तꣳहुवेम ॥ उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते । उपयामगृहीतोऽसि मरुतां त्वौजसे ॥ ३६ ॥

उ० द्वितीयं मरुत्वतीयं गृह्णाति । मरुत्वन्तं । मरुद्भिस्तद्वन्तमिन्द्रम् वृषभं वर्षितारम् वावृधानं वर्धमानम् अकवारिं अकुत्सितारिम् । शत्रवोऽपि यस्याऽकुत्सितावृत्रादयः । अथवा अकुत्सितदानं अकुत्सितैश्वर्यम्। दिव्यं द्युलोकजम्। शासं प्रशासनवन्तं शासितारं वा । विश्वासाहम् । सहतिरभिभवार्थः । स्वधर्मच्युतस्य सर्वस्याभिभवितारम् । उग्रम् उद्गूर्णवज्रम् सहोदाम् बलस्य दातारम् यमित्थंभूतमिन्द्रमाहुस्तम् अवसे नूतनाय । अवनाय चिरन्तनाय । इह यज्ञगृहे हुवेम आह्वयामः। उपयामगृहीत इत्यादि व्याख्यातम् । तृतीयं मरुत्वतीयं यजुषा ग्रहं गृह्णाति । उपयाम गृहीतोसि मरुतां त्वा ओजसे गृह्णामीति शेषः । ओज इति बलनाम । स्वकीयमोजो निधाय इन्द्रं प्रति मरुत आयातास्ततोऽनेन गृहीतेन सबला आयाताः तदेतद्यजुर्वदति ॥ ३६ ॥

म० द्वितीयं मरुत्वतीयमाह 'वशिना मरुत्वतीयग्रहणं मरुत्वन्तमिति' (का० १०।३।६)। रिक्तेन पात्रेण सशस्त्रमरुत्वतीयग्रहणम् । इहास्मिन्नस्मदीये यज्ञे तमिन्द्रं वयं हुवेम आह्वयामः । ह्वेञः शपि व्यत्ययेन संप्रसारणम् । किंभूतमिन्द्रम्। मरुत्वन्तं मरुद्गणोपेतम् । वृषभं जलस्य वर्षितारम् । वावृधानम्। संहितायां दीर्घः । वर्धते कामान्वर्धयति वा वव्रधानस्तम् 'बहुलं छन्दसि' (पा० २।४।७६) इति वर्धतेः शानचि जुहोत्यादित्वेन श्लुः 'श्लौ' (पा० ६।१।१०) इति द्वित्वम्। अकवारिं कुत्सिता अरयो यस्य स कवारिः न कवारिरकवारिस्तं यस्य शत्रवोऽप्यकुत्सिता वृत्रादयः । यद्वा अकुत्सितमियर्ति ऐश्वर्यं प्राप्नोतीत्यकवारिस्तम् उत्कृष्टैश्वर्यम् । दिव्यं दिवि भवं द्युलोकस्थम् । शासं शास्तीति शासः पचाद्यच् । शासितारं

दुष्टानाम् । यद्वा शासनं शासस्तद्वन्तम् । अर्शआदित्वादच् । प्रशासनवन्तम् । विश्वासाहं विश्वं पालयितुं सहते स विश्वासाट् तम् । अनलसमित्यर्थः । 'भजसहवहाम्' इति विण् । यद्वा सहतिरभिभवार्थः । स्वधर्मच्युतस्य विश्वस्य सर्वस्याभिभवितारम् । नूतनाय अवसे नवीनाय पालनाय इदानींतनयजमानरक्षणाय उग्रमुद्गूर्णवज्रम् । सहोदां सहो बलं ददाति सहोदास्तं क्विप् बलप्रदम् । उपयाम एष ते एतद्यजुर्द्वयं व्याख्यातम् । तृतीयं मरुत्वतीयमाह । 'ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजस इति' (का० १० । ३ । ३)। मरुत्वतीयोऽयम् । मरुत्वद्देवत्यं यजुः । हे मरुत्वतीय ग्रह, मरुतां देवानामोजसे बलाय त्वा त्वां गृह्णामीति शेषः । ओज इति बलनाम । स त्वमुपयामेन गृहीतोऽसि स्वबलं निधायेन्द्रं प्रत्यागता मरुतोऽनेन ग्रहेण गृहीतेन सबला जाता इति भावः ॥ ३६ ॥

## सप्तत्रिंशी ।

सुजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् । जहि शत्रूँ २॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३७ ॥

**उ०** द्वितीयो मन्त्रविकल्पः । सजोषा इन्द्रः । हे इन्द्र, यः त्वं सजोषाः समानजोषणः समानपात्रभोजनः तं त्वां ब्रवीमि । समानगणो मरुद्भिः सोमं पिब । समानगणो मरुद्भिः भूत्वा सोमं पिब । वृत्रहा वृत्रस्य हन्ता भविष्यामीति शेषः । हे शूर विक्रान्त । विद्वान् एतमर्थं संजानानः । ततः पीत्वा सोमं मरुद्भिः सह । जहि शत्रून् वृत्रप्रमुखान् । अप मृधो नुदस्व । अपनुदस्व मृधः । 'नुद प्रेरणे' मृधः संग्रामात् । हत्वा शत्रून् ये हतावशिष्टाः शत्रवः तान् संग्रमात् प्रेरयस्व । अथाभयं कृणुहि विश्वतो नः । अथानन्तरमभयं कुरु सर्वतोऽस्माकम् । उपयाम इत्यादि व्याख्यातम् ॥ ३७ ॥

**म०** सजोषा इन्द्रेति ( ३७ ) मरुत्वां इन्द्रेति ( ३८ ) ऋग्द्वयस्य सोपयामस्य मरुत्वतीयग्रहणे एव विनियोगः वाचस्तोमे 'वाचस्तोमाश्चत्वारः' ( २२ । ६ । २४ ) इति कात्यायनोक्तेः मरुत्वां इन्द्रेति मरुत्वतीयमित्याश्वलायनोक्तेश्च । हे इन्द्र, हे शूर वीर, त्वं सोमं पिब । किंभूतस्त्वम् । सजोषाः 'जुषी प्रीतिसेवनयोः' जोषणं जोषः प्रीतिः असुन्प्रत्ययः । तेन सह वर्तमानः संतुष्टः मरुद्भिः कृत्वा सगणः सपरिवारः । मरुद्गणसहित इत्यर्थः । वृत्रहा वृत्रं दैत्यं हन्तीति अनेन सोमपानेन वृत्रं हनिष्यसीत्यर्थः । विद्वानेतमर्थं जानानः ततः सोमं पीत्वा शत्रून् वृत्रादीन् जहि मारय । किंच मृधः सङ्ग्रामान् अपनुदस्व । 'नुद प्रेरणे' । युद्धं निवर्तयेत्यर्थः । 'दीर्घादटि समानपदे' ( पा० ८ । ३ । ९ ) इति शत्रूनिति नस्य रुत्वं पूर्वस्य सानुनासिकत्वम् । यद्वा मृधः इति पञ्चम्येकवचनं । मृधः सङ्ग्रामात् अपनुदस्व शत्रूनित्यस्यानुषङ्गः । ये हतावशिष्टाः शत्रवस्तान् सङ्ग्रामात् पलायनार्थं प्रेरयस्व । प्राणदानं कुर्वित्यर्थः । एवं रिपुनाशं कृत्वाथानन्तरं नोऽस्माकं विश्वतः सर्वतः अभयं कृणुहि कुरु 'कृञ् करणे' स्वादिः । उपयामेति व्याख्यातं । शत्रूनपेत्यत्र 'दीर्घादटि समानपदे' ( पा० ८ । ३ । ९ ) इति नस्य रुत्वम् 'अत्रानुनासिकः पूर्वस्य तु वा' ( पा० ८ । ३ । २ ) तत्पूर्वस्य ऊकारस्यानुनासिकत्वम् ॥ ३७ ॥

## अष्टत्रिंशी ।

मरुत्वाँ २॥ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय । आसिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳराजासि प्रतिपत्सुतानाम् ॥ उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३८ ॥

**उ०** मरुत्वां इन्द्र हे इन्द्र, यस्त्वं मरुत्वान् मरुद्गणयुक्तश्च वृषभश्च वर्तिषा अपामन्तरिक्षेऽवस्थितः तं त्वां ब्रवीमि रणाय पिब सोमम् । रणं संग्रामं करिष्यामीति पिब सोमम् । 'अनुष्वधम् अनुपश्चात् स्वधान्नं पुरोडाशधानामन्थदधिपयस्यालक्षणं यस्य स तथोक्तः । मदाय । मदे हि सति योद्धा भवतीन्द्रः । कथं पुनः पिब । आसिञ्चस्व जठरे मध्व ऊर्मिम् । अकृपणमासिञ्च स्वजठरे उदरे । मध्वः मधुसोममित्यौपमिकं माद्यतेः । मधुस्वादस्य सोमस्योर्मिं महासंघातम् । विशिष्टस्य सोमपानस्य मन्त्रदृक् हेतुमाह । हे इन्द्र त्वं राजासि प्रतिपत्सुतानाम् । यतस्त्वमेव राजा ईश्वरोसि प्रतिपत्प्रमुखास्वपि तिथिषु सुतानामभिषुतानां सोमानाम् । किमुत चतुर्दश्यन्तेऽभिषुतानाम् । त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयत इत्यभिप्रायः । छन्दोगानामपि प्रतिपद्विद्यते तदभिप्रायं चैतत् । उपयाम इत्यादि व्याख्यातम् ॥ ३८ ॥

**म०** हे इन्द्र, त्वं सोमं पिब 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति संहितायां दीर्घः । किमर्थम् । मदाय तृप्तये रणाय सङ्ग्रामाय च । मदे सतीन्द्रो योद्धा भवति । किंभूतस्त्वम् । मरुत्वान् मरुतोऽस्य सन्तीति मरुद्गणसंयुक्तः । वृषभः वर्षिता जलानाम् । किंभूतं सोमम् । अनुष्वधम् अनु पश्चात् स्वधान्तानि पुरोडाशधानामन्थदधिपयस्यालक्षणानि यस्य सोऽनुष्वधस्तं 'पूर्वपदात्–' ( पा० ८ । ३ । १०६ ) इति षत्वम् । कथं पिबेत्यत्राह । मध्वः मधुनो मधुस्वादोपेतस्य ऊर्मिं कल्लोलं जठरे उदरे आसिञ्चस्व । 'अनित्यमागमशासनम्' इति मध्व इत्यत्र नुमभावः । सोमपाने हेतुमाह । हे इन्द्र, त्वं प्रतिपत्सुतानां प्रतिपत्प्रभृतिषु तिथिषु अभिषुतानां सोमानां राजासि ईश्वरोऽसि

किमुत चतुर्दश्यन्तेऽभिषुतानां त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयत इत्यभिप्रायः । छन्दोगानां सवने प्रतिपद्विधेत इति प्रतिपद्ग्रहणम् । उपयाम एष ते इति व्याख्याते ॥ ३८ ॥

## एकोनचत्वारिंशी ।

म॒हाँ २ ॥ इन्द्रो॑ नृ॒वदाच॑र्षणि॒प्रा उ॒त द्वि॒बर्हा॑ अमि॒नः सहो॑भिः । अ॒स्म॒द्र्य॒ग्वावृधे वी॒र्या॒योरुः पृ॒थुः सुकृ॑तः क॒र्तृभि॑र्भूत् ॥ उ॒प॒या॒मगृ॑हीतोऽसि म॒हे॒न्द्राय॑ त्वै॒ष ते॒ योनि॑र्म॒हे॒न्द्राय॑ त्वा ॥ ३९ ॥

**उ०** माहेन्द्रं गृह्णामि। महाँ॒ इन्द्रः। त्रिष्टुम्माहेन्द्री महान्प्रभावत इन्द्रस्तथापि नृवत् मनुष्यवदाहूयमानं आगच्छति। आचर्षणिप्राः। चर्षणयो मनुष्याः । 'प्रा पूरणे' । आगत्य च चर्षणीनां मनुष्याणां पूरयिता कामैः । किंच उत द्विबर्हाः। अपि द्वयोः स्थानयोः परिवृढः मध्यमे च स्थाने उत्तमे च परिवृढः प्रभुः । अमिनः सहोभिः । अमिनोऽमितमात्रः सहोभिर्बलैः अप्राक्तोलितबलः । यद्वा । अनुपहिंसितः शत्रुबलैः अस्मद्र्यग्वावृधे वीर्याय । अस्मद्दर्शनोत्सुकः सन् वर्धते वीर्याय वीरकर्मणे य इन्द्रः सोऽस्मदीयैः कर्तृभिः स्तूयमानः उरुः प्रमाणतः पृथुश्च विस्तारेण । सुकृतः शोभनकृत्यभिप्रायः भूत् भूयात् । उपयाम इत्यादि व्याख्यातम् ॥३९॥

**म०** 'माहेन्द्रं गृह्णाति वैश्वदेववन्महाँ॒ इन्द्र इति' (का० १०।३।१०)। यथा वैश्वदेवग्रहः शुक्रपात्रेण गृहीतस्तथा माहेन्द्रं ग्रहं तेनैव गृह्णीयात्। माहेन्द्री त्रिष्टुप् भरद्वाजदृष्टा। तृतीयपादो नवाक्षरः। इन्द्रो वीर्याय वीरकर्मणे वावृधे ववृधे वर्धते। 'छन्दसि लुङ्लङ्लिटः' (पा० ३।४।६) इति वर्तमाने लिट्, संहितायामभ्यासदीर्घः। किंभूत इन्द्रः। महा महान्महाप्रभवः तथापि नृवन्मनुष्यवत् आहूयमान आगच्छति। यद्वा नृवन्मनुष्यवत् आचर्षणिप्राः आ समन्ताच्चर्षणीन्मनुष्यान् प्राति अभीष्टकामैः पूरयतीत्याचर्षणिप्राः। 'प्रा पूरणे' क्विप्। यथा राजा अमात्यादिर्मनुष्यः सेवकानभीष्टकामैः पूरयति तद्वत्। उतापि च द्विबर्हाः 'बृहि वृद्धौ' बर्हणं बर्हः वृद्धिः असुन्प्रत्ययः। द्वयोः प्रकृतिविकृतिरूपयोः सोमयागयोर्बर्हो यस्य स द्विबर्हाः। यद्वा द्वयोः स्थानयोर्बर्हाः वृद्धः परिवृद्धः प्रभुः मध्यमे स्थाने उत्तमे च। तथा सहोभिः बलैः अमिनः अमितः उपमारहितः। अतोलितबल इत्यर्थः। 'अमिनोऽमितमात्रो महान्भवत्यभ्यमितो वा' (नि० ६।१६) इति यास्कोक्तेः। यद्वा सहोभिः शतबलैरभितः अप्रक्षिप्तो अनुपहिंसित इत्यर्थः। 'डुमिञ् प्रक्षेपे'। 'मीञ् हिंसायाम्' इत्यस्य वा प्रयोगः। पूर्वपक्षे माने सर्वत्र निष्ठानत्वमार्षम्। तथा अस्मद्र्यक् अस्मान् प्रत्यञ्चतीत्यस्मद्र्यक् अस्मदभिमुखः। अस्मच्छब्दे उपपदेऽञ्चतेः क्विप् 'विष्वग्देवयोश्च' (पा० ६।३।९२) इत्यादिना क्विबन्तेऽञ्चतौ परेऽस्मच्छब्दस्य टेरद्र्यादेशः 'उगिदचाम्–' (पा० ७।१।७०) इति प्राप्तस्य नुमोऽभावश्छान्दसः। स वर्धमान इन्द्र ईदृशो भूत् भवतु। लोडर्थे लुङ्। अडभावश्छान्दसः। कीदृशः। उरुः यशसा विपुलः पृथुः बलेन विस्तृतः कर्तृभिर्यजमानैः सुकृतः साधुकृतः सत्कृतः पूजित इत्यर्थः। हे ग्रह, त्वमुपयामेन गृहीतोऽसि महेन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः महेन्द्राय त्वा सादयामि ॥ ३९ ॥

## चत्वारिंशी ।

म॒हाँ २॥ इन्द्रो॑ य ओज॑सा प॒र्जन्यो॑ वृष्टि॒माँ २॥ इ॑व । स्तोमै॑र्व॒त्सस्य॑ वावृधे । उ॒प॒या॒मगृ॑हीतोऽसि म॒हे॒न्द्राय॑ त्वै॒ष ते॒ योनि॑र्म॒हे॒न्द्राय॑ त्वा ॥ ४० ॥

**उ०** द्वितीयो मन्त्रविकल्पः । महाँ॒ इन्द्रः । गायत्री माहेन्द्री। महानिन्द्रो यः प्रभावतः स ओजसा बलेन पर्जन्यो वृष्टिमानिव यथा हि वृष्टिमान्पर्जन्यो धाराभिरसंख्याभिरपरिच्छिन्नसंख्यः एवमोजसा असंख्यातमहाभाग्येन । स्तोमैः स्तूयमानो वत्सस्य वसनशीलस्य यजमानस्य वावृधे वर्धते। उपयाम इत्यादि समानम् ॥ ४० ॥

**म०** माहेन्द्री गायत्री वत्सदृष्टा। माहेन्द्रग्रहण एव विकल्पेन विनियुक्ता। य इन्द्रः वत्सस्य वसनशीलस्य वत्सस्थानीयस्य वा यजमानस्य स्तोमैः स्तोत्रैर्वावृधे ववृधे वर्धते। कीदृश इन्द्रः। ओजसा तेजसा महान्। क इव वृष्टिमान्वृष्टियुक्तः पर्जन्य इव यथा वर्षन्मेघो धाराबलेन महान्वर्धते। उपयाम एष ते इति व्याख्याते ॥ ४० ॥

## एकचत्वारिंशी ।

उदु॒ त्यं जा॒तवे॑दसं दे॒वं व॑हन्ति के॒तवः॑ । दृ॒शे विश्वा॑य॒ सूर्य॒ꣳ स्वाहा॑ ॥ ४१ ॥

**उ०** दाक्षिणानि जुहोति। उदु त्यम्। सौरी गायत्री। उत् इत्ययमुपसर्गो वहन्तीत्यनेन संबध्यते । उद्वहन्ति। कम्। त्यं तं सूर्यम्। जातवेदसम् जातप्रज्ञानम्। देवं दातारं द्युस्थानं वा। केतवो रश्मयः । किमर्थमुद्वहन्ति । दृशे दर्शनाय। विश्वाय षष्ठ्यर्थे चतुर्थी। विश्वस्य जगतः ॥४१॥

**म०** 'शालाद्वार्ये दाक्षिणहोमो वासःप्रबद्धꣳ हिरण्यꣳ हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति' (का० १०।२।४।५)। वस्त्रबद्धं स्वर्णं जुह्वां निधाय शालाद्वार्येऽग्नौ चतुर्गृहीताज्येन दाक्षिणसंज्ञो होमः कार्यः। सौरी गायत्री प्रस्कण्वदृष्टा। तृतीयः पादः सप्तार्णः । उ निपातः पादपूरणः । त्यमिति त्यच्छब्दश्छान्दसः तच्छब्दार्थे। केतवो रश्मयः त्यं तं प्रसिद्धं सूर्यं देवमुद्वहन्ति । 'देवो दानाद्द्योतनाद्वा' (नि० ७।२०) इति यास्कः। किंभूतं सूर्यम् । जातवेदसं जातं वेदो ज्ञानं धनं वा यस्मात्तम् । किमर्थमुद्वहन्ति । विश्वाय दृशे षष्ठ्यर्थे चतुर्थी। विश्वस्य दर्शनाय जगद्द्रष्टुमित्यर्थः।'दृशे विख्येच'

(पा० ३ । ४ । ११ ) इति तुमर्थे निपातः । तस्मै स्वाहा सुहुतमस्तु ॥ ४१ ॥

## द्विचत्वारिंशी ।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳसूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ४२ ॥

उ० द्वितीयं जुहोति । चित्रं देवानाम् । सौरी त्रिष्टुप् । सूर्यश्चात्र परापररूपेणावस्थितः स्तूयते । चित्रं देवानामुदगादनीकम् । उदयकालादारभ्य तावदपररूपेण स्तूयते । चित्रमिति क्रियाविशेषणम् । यश्चित्रमुदगात् चित्रमाश्चर्यभूतमुदगमत् । आश्चर्यं हि यः स्वकीयेन ज्योतिषा शार्वरं तमोपहत्यान्येषां ज्योतिषां ज्योतिरादायोद्गच्छति । यद्वा चित्रं चायनीयं पूजनीयमुदगमत् । देवानामनीकमित्यनयोः पदयोः संबन्धः । देवानां रश्मीनामनीकं मुखम् । यच्च चक्षुर्मित्रस्य चक्षुर्मित्रादिकस्य सदेवमनुष्यस्य जगतः । आदित्योदये हि रूपाण्यभिव्यज्यन्ते । यच्च आप्रा द्यावापृथिवी अन्तरिक्षम् यच्च उदयसमनन्तरमेव आ अप्राः 'प्रा पूरणे' आपूरितवत् स्वकीयेन प्रकाशेन द्यावापृथिव्यौ अन्तरिक्षं च । अधस्तनानि विशेषाणानि मण्डलाभिप्रायान्नपुंसकलिङ्गान्यनूद्य अथेदानीं पररूपेण स्तौति । सूर्य आत्मा पुरुषाभिप्रायमेतत् । जगतो जङ्गमस्य तस्थुषश्च स्थितिमतः स्थावरस्य चेत्यर्थः । तथाच श्रुतिः 'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः प्रजापतिस्तद्ब्रह्म' इति । सूर्याद्वैतमनेन मन्त्रेण ख्याप्यते स सूर्यात्मत्वेनापोस्यः । एवं तावदधियज्ञं गतोऽप्ययं मन्त्रोऽधिदैवमाचष्टे । अध्यात्मं तु वक्ष्यति । 'यो वासावादित्ये पुरुषः' इत्यादिना ॥ ४२ ॥

म० 'चित्रं देवानामिति द्वितीयामिति' ( का० १० । २ । ६ ) । चतुर्गृहीतेन शालाद्वार्ये द्वितीयामाहुतिं जुहोति । सौरी त्रिष्टुप् कुत्सदृष्टा । परापररूपेण स्थितः सूर्योऽत्र स्तूयते । सूर्यः चित्रमाश्चर्यं यथा तथा उदगात् उदयं प्राप्तः उद्गच्छति वा । लडर्थे लुङ् । उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींष्यादत्त इत्याश्चर्यम् । किंभूतः सूर्यः । देवानाम् दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषामनीकं मुखमाश्रय इत्यर्थः । यद्वानीकं समूहः । किरणपुञ्ज इत्यर्थः । तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत्प्रकाशक इत्यर्थः । मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभिव्यज्यन्ते । अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन् द्यावापृथिवी दिवं भूमिं चान्तरिक्षं चाप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः । एवमपररूपेण स्तुत्वा पररूपेण स्तौति । किंभूतः सूर्यः । जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मान्तर्यामी । 'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्म' इति श्रुतेः सूर्याद्वैतमनेनोच्यत इति भावः । तस्मै स्वाहा सुहुतमस्तु ॥ ४२ ॥

## त्रिचत्वारिंशी ।

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा ॥ ४३ ॥

उ० आग्नीध्रे जुहोति । अग्ने नय ॥ ४३ ॥

म० 'आग्नीध्रीयेऽग्ने नयेत्याग्नीध्रीयेऽग्नौ सकृद्गृहीतमाज्यं जुहोति' ( का० १० । २ । ७ ) । 'अयं न इत्यपरामिति' ( का० १० । २ । ८ ) द्वितीयामाहुतिमाग्नीध्रीये जुहोति । इमे द्वे ऋचौ पञ्चमेऽध्याये व्याख्याते ॥ ४३ ॥ ४४ ॥

## चतुश्चत्वारिंशी ।

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसातावयꣳशत्रूञ्जयतु जर्हृषाणः स्वाहा ॥ ४४ ॥

उ० अयं नो अग्निरित्युक्तार्थौ मन्त्रौ । चतस्रोऽध्येता यजुरन्ताः स्वाहाकारेण अग्रेण शालां तिष्ठन्नभिमन्त्रयते । दक्षिणतः स्थिताः दक्षिणाः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु । ऋतस्य पथा प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः ॥ ४५ ॥

उ० रूपेण वो रूपम् । अग्रे पशव आत्मनो दानमसहमाना अन्यानि रूपाण्याददिरे तान्देवाः स्वैः रूपैः प्रत्युपतिष्ठन्त ततस्ते स्वैः रूपैराजग्मुः । एतन्निदानमस्य मन्त्रस्य । रूपेण मूर्त्या । वः युष्मत्संबन्धि रूपम् । अभ्यागाम् अभ्यागतः । सर्वो हि स्वं रूपमागच्छतीत्यभिप्रायः । किंच तुथो वो विश्ववेदा विभजतु । तुथो ब्रह्मा प्रजापतिः । वः युष्मान् विश्ववेदाः सर्वज्ञो विभजतु यथार्हमृत्विजां विभागं करोतु । यूयं चैतज्जानानाः ऋतस्य यज्ञस्य प्रस्तुतस्य पथा मार्गेण प्रेत प्रगच्छत । चन्द्रदक्षिणाः । चन्द्रं सुवर्णं यजमानस्य हस्तगतं द्वितीयं यासां ताश्चन्द्रद्वितीयदक्षिणा इति प्राप्ते चन्द्रदक्षिणा इत्युक्ताः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । सदो गच्छति । वि स्वः पश्य व्यन्तरिक्षमिति । दक्षिणोच्यते । विपश्यामि त्वया दक्षिणया सोपानभूतया स्वः स्वर्गं देवयानमार्गम् विपश्यामि च अन्तरिक्षलोकं पितृयानमार्गम् । विपश्येति मध्यमपुरुषस्योत्तमपुरुषो व्याख्यातः श्रुत्या । सदसि स्थितान्ब्राह्मणान्प्रेक्षते । यतस्व सदस्यैः । दक्षिणोच्यते । 'यती प्रयत्ने' । तथाभूतं यत्नमातिष्ठस्व यथा सदस्यैः पूरितैरतिरिच्यसे ॥ ४५ ॥

म० 'सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो रूपेण व इति' ( का०

१०।२।१०) दक्षिणा गाः अभिमन्त्रयते । नष्टरूपानुष्टुप् दक्षिणदेवत्या । नववैराजत्रयोदशैनष्टरूपेति लक्षणात् । अत्र द्वितीय एकादशार्णस्तृतीयो द्वादशार्णस्तेन पूर्णैव । पूर्वं पशवः स्वदानमसहमाना रूपान्तराणि जगृहुः देवाः स्वैः रूपैस्तानुपागतास्ततस्ते स्वैः रूपैराजग्मुः (४।३।४।१४) इति मन्त्रस्य निदानम् । हे दक्षिणारूपा गाः, रूपेण मूर्त्या वो युष्माकं रूपमहमभ्यागामभ्यागतोऽस्मि। अतो भवतीभिरागन्तव्यं सर्वे हि स्वरूपमागच्छन्तीति भावः । किंच तुथो ब्रह्मरूपः प्रजापतिर्वो युष्मान् विभजतु यथायोग्यमृत्विग्भ्यो विभज्य ददातु । 'ब्रह्म वै तुथः' (४।३।४।१५) इति श्रुतेः । किंभूतस्तुथः । विश्ववेदाः वेदनं वेदो ज्ञानं विश्वं सर्वं वेदो यस्य स विश्ववेदाः सर्वज्ञः । किंच यूयमेतज्ज्ञात्वा ऋतस्य यज्ञस्य पथा मार्गेण प्रेत प्रगच्छत । किंभूता यूयम् । चन्द्रदक्षिणाः चन्द्रमिति हिरण्यनाम । चन्द्रं सुवर्णं यजमानहस्तस्थं द्वितीयं दक्षिणा यासां ताश्चन्द्रद्वितीयदक्षिणा इति प्राप्ते शाकपार्थिवादित्वात् (पा० २।१।६९) द्वितीयपदलोपः । 'सदो गच्छति वि स्वरिति' (का० १०।२।१७) दक्षिणादैवत्यम् । हे दक्षिणाः, अहं स्वः स्वर्गं देवयानमार्गं विपश्य विपश्यामि विलोकयामि । अन्तरिक्षं पितृयानमार्गं च विपश्यामि । भवतीभिः सोपानभूताभिरिति भावः । 'व्यत्ययो बहुलम्' (पा०६।१।८५) इति उत्तमपुरुषस्थाने पश्येति मध्यमः पुरुषः । श्रुत्या तथा व्याख्यातत्वात् । प्रेक्षते । 'यतस्व सदस्यानिति सदस्यान्' (का० १०।२।१८) यजमान ऋत्विजः प्रेक्षते । दक्षिणादैवतम् । हे दक्षिणे, त्वं यतस्व यत्नं कुरु । यथा सदस्यैः ऋत्विग्भिः पूरितैरप्यतिरिच्यस इति शेषः । तथा त्वया यतितव्यं यथा ऋत्विजो धनैः संपूर्णाधिका भवेयुरिति भावः ॥ ४५ ॥

## षट्चत्वारिंशी ।

ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम् । अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥ ४६ ॥

**उ०** आग्नीध्रं गच्छति । ब्राह्मणमद्य । ब्राह्मणम् अद्य अस्मिन् विदेयं लभेयम् अनुशिष्टेन अतिविशिष्टेन पित्रा जातम् । नहि कश्चिद्विना पित्रा जायते । पैतृमत्यम् यस्य पितामहप्रभृतयोऽपि वश्याः श्रोत्रियाः स एवमुच्यते । ऋषिमार्षेयम् ऋषिर्मन्त्राणां व्याख्याता । आर्षेयो जात्या प्रवरैश्च जातः । सुधातुदक्षिणम् शोभनो धातुः सुवर्णं दक्षिणा यस्य स सुधातुदक्षिणः तम् । सुवर्णं हि आग्नीध्रे दीयते । दक्षिणां ददाति । अस्मद्राताः । 'रा दाने' । हे दक्षिणाः, अस्माभिः राताः दत्ताः सत्यो देवत्रा गच्छत । देवान्प्रति गच्छत । ततोऽनन्तरं यज्ञफलं साधयन्त्यः प्रदातारमाविशत प्रकर्षेण दातारम् आविशत यजमानम् ॥ ४६ ॥

**म०** 'ब्राह्मणमद्येत्याग्नीध्रगमनमिति' (का० १०।२।१९) । आग्नीध्रमृत्विजं स्वस्थानस्थं प्रति यजमानो गच्छति । ब्राह्मणदैवत्यम् । अहमद्यास्मिन्दिने ईदृशं ब्राह्मणं विदेयं लभेय 'विद्लृ लाभे' । किंभूतम् । पितृमन्तं प्रशस्तः पितास्यास्तीति पितृमान् तम् । पित्रा विना न कश्चिज्जायतेऽतोऽत्र प्राशस्त्यार्थे मतुप् । विशिष्टजनकोत्पन्नमित्यर्थः । तथा पैतृमत्यम् पितुरिमे पैतरः । तद्धितप्रत्ययलोपेऽपि छान्दसी वृद्धिः । मता एव मत्याः । स्वार्थे यत् । पैतरः पितामहादयो मताः संमता जगन्मान्या यस्य स पैतृमत्यस्तम् । यद्वा पितरः पूर्वजाः मताः संमताः श्रोत्रिया यस्य स पितृमतः पितृमत एव पैतृमत्यः । यद्वा प्रशस्तजनकोत्पन्नः पितृमानित्युक्तं तदपत्यं पैतृमत्यः । सर्वथा यस्य पितामहादयः श्रोत्रियाः स पैतृमत्य इत्यर्थः । तथा ऋषिं मन्त्राणां व्याख्यातारम् । तथा आर्षेयम् ऋषिषु विख्यात आर्षेयस्तम् जात्या प्रवरैर्ज्ञानेन सुज्ञातमित्यर्थः । तथा सुधातुदक्षिणम् शोभनो धातुः सुवर्णं दक्षिणा यस्य स सुधातुस्तम् । 'उपविश्य हिरण्यमस्मै ददात्यस्मद्राताः' (का० १०।२।२०) इति अस्मै आग्नीध्राय दक्षिणादैवत्यं । हे दक्षिणाः, यूयमस्मद्राताः । 'रा दाने' अस्माभिः राता दत्ताः सत्यो देवत्रा देवान्प्रति गच्छत । तानेत्य तेषां तृप्तिं कृत्वा ततः दातारं प्राविशत यज्ञफलं साधयन्त्यो यजमानं प्राविशतेत्यर्थः ॥ ४६ ॥

## सप्तचत्वारिंशी ।

अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्र एधि वयो मह्यं प्रतिग्रहीत्रे बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे यमाय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय हयो दात्र एधि वयो मह्यं प्रतिग्रहीत्रे ॥ ४७ ॥

**उ०** इतउत्तरं पञ्च प्रतिग्रहमन्त्राः । हिरण्यं प्रतिगृह्णाति । अग्नये त्वा मह्यं वरुणो ददातु । अग्निरूपापन्नाय मह्यं हे हिरण्य, त्वां वरुणो ददातु । वरुणेन हि हिरण्यमग्नये दत्तं पूर्वमतस्तेनैवात्मना गृह्णानो न रिष्यामीति देवतादेशः । सोऽमृतत्वमशीय सोहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम् । आयुर्दात्रे एधि आयुष्मान्दाता भवतु । मयो मह्यं प्रतिग्रहीत्रे मयः सुखम् एधि भव मह्यं प्रतिग्रहीत्रे । गां प्रतिगृह्णाति । रुद्राय त्वा । रुद्रभूताय मह्यं हे गौः, त्वां वरुणो ददातु । सोहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम् । प्राणो दात्रे एधि । प्राणरूपा दात्रे भव । वयो मह्यं प्रतिग्रहीत्रे वयोऽन्नं पशुर्वा भव मह्यं प्रतिग्रहीत्रे । वासो

गृह्णाति बृहस्पतये बृहस्पतिरूपापन्नाय मह्यं त्वां वरुणो ददातु। सोऽहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम्। त्वग्दात्र एधि भव। मयः सुखं भव मह्यं प्रतिग्रहीत्रे। अश्वं प्रतिगृह्णाति। यमाय त्वा यमरूपापन्नाय मह्यं त्वां वरुणो ददातु। सोऽहं यमरूपापन्नोऽमृतत्वं व्याप्नुयाम्। हयोऽश्वः दात्रे भव। वयोऽन्नं पशुर्वा भव ममत्वं प्रतिग्रहीत्रे ४७

**म०** 'अग्नये त्वेति हिरण्यं प्रतिगृह्णीत इति' (का० १०। २। २८) अध्वर्युप्रतिप्रस्थाताराविति शेषः। हिरण्यदैवत्यम्। हे हिरण्य, वरुणोऽग्नयेऽग्निरूपापन्नाय मह्यं त्वा त्वां ददातु पूर्वं वरुणेन कनकाद्यग्न्यादिभ्यो दत्तमतस्तेन तेनात्मना प्रतिगृह्णानो विप्रो न नश्यतीति देवतादेशः। अनेन विधिना गृह्णानः सोऽहममृतत्वमारोग्यमशीय व्याप्नुयाम्। हे हिरण्य, त्वं दात्रे आयुर्जीवनमेधि भव। प्रतिग्रहीत्रे प्रतिग्रहकर्त्रे मह्यं मयः सुखमेधि दाता आयुष्मान्भवतु अहं सुखी स्यामिति भावः। 'रुद्राय त्वेति गामिति' (का० १०। २। २९)। गां प्रतिगृह्णीतः। गोदैवत्यम्। हे गौः, रुद्ररूपाय मह्यं वरुणः त्वा ददातु सोऽहममृतत्वं प्राप्नुयाम्। हे गौः, त्वं दात्रे यजमानाय प्राणः प्राणरूपा एधि। मह्यं प्रतिग्रहीत्रे वयोऽन्नं पशुर्वा भव। दुग्धदध्यादिरूपेणान्नं संततिद्वारा पशुश्च भवेत्यर्थः। 'बृहस्पतये त्वेति वास इति' (का० १०। २। ३०)। वस्त्रं गृह्णीतः। वासोदैवत्यम्। हे वासः, बृहस्पतिरूपाय मह्यं वरुणः त्वां ददातु सोऽहममृतत्वमशीय त्वंच दात्रे त्वगेधि त्वगिन्द्रियसुखकारी भव। प्रतिग्रहीत्रे मह्यं मयः सुखं च भव। 'यमाय त्वेत्यश्वमिति' (का० १०। २। ३१) हयं गृह्णीतः। अश्वदैवत्यम्। हे अश्व, यमरूपाय मह्यं वरुणः त्वां ददातु। स यमरूपोऽहमश्वं गृह्णानोऽमृतत्वं व्याप्नुयाम्। हे अश्व, त्वं दात्रे हयोऽश्वो भव मह्यं प्रतिग्रहीत्रे वयोऽन्नं तद्दाता पशुर्वा संततिद्वारा भव ॥४७॥

## अष्टचत्वारिंशी।

कोऽदात्कस्मा अदात्कामोऽदात्कामायादात्कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ ४८ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां सप्तमोऽध्यायः॥७॥

**उ०** अथ यदन्यद्ददाति तदनेन प्रतिगृह्णाति। कोदात् कः पुरुषः अदात् दत्तवान् एकः प्रश्नः। कस्मै पुरुषाय अदात् दत्तवान् द्वितीयः प्रश्नः। कामोदात् कामायादात् द्वौ प्रतिप्रश्नौ यथासंख्यम्। एवं चेत्काम एव दाता कामः प्रतिग्रहीता च। अतो ब्रवीमि हे काम, एतद्द्रव्यं ते तव। त्वमेव केनचित्प्रयोजनेन ददासि त्वमेव च केनचित्प्रयोजनेन प्रतिगृह्णासीति ॥४८॥

इति उवटकृतौ मन्त्रभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

**म०** 'कोऽदादित्यन्यदिति' (का० १०। २। ३२)। अन्यन्मन्यौदनतिलादि गृह्णीतः। कामदैवत्यम्। दातुर्दानाभिमानाभावाय स्वस्य प्रतिग्रहजदोषाभावाय च देहेन्द्रियात्मसङ्घाते कामं विविनक्ति। को नरोऽदाद्दत्तवान् कस्मै नरायादात्। प्रश्नद्वयस्योत्तरमाह। कामोऽदात्कामायैवादात् न त्वं दाताहं प्रतिग्रहीता। त्वत्कामाभिमानी देवो मत्कामाभिमानिनेऽदात्। एवं च काम एव दाता काम एव प्रतिग्रहीता नान्यः। हे काम, एतद्द्रव्यं ते तव दातृप्रतिग्रहीतृत्वात् ॥ ४८ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
उपांश्वादिप्रदानान्तः सप्तमोऽध्याय ईरितः ॥ ७ ॥

---

# अष्टमोऽध्यायः।

## तत्र प्रथमा।

उपयामगृहीतोऽस्यादित्येभ्यस्त्वा विष्ण उरुगायैष ते सोमस्तꣳरक्षस्व मा त्वा दभन् ॥ १ ॥

**उ०**आदित्यग्रहसंस्रवोत्यर्थं प्रतिप्रस्थातादित्यपात्रे द्रोणकलशादुपयामगृहीतोसीति गृहीत्वा द्विदेवत्याननुजुहोति। तत्रैते मन्त्राः। उपयाम गृहीतोस्यादित्येभ्यस्त्वा गृह्णामीति शेषः। आदित्यस्थालीं पात्रेणापिदधाति विष्णो उरुगाय। हे विष्णो, उरुगमनाय एष ते तव सोमः समर्पितः। तं रक्ष गोपाय। गोपायनप्रवृत्तं च त्वां मा दभ्नुयुः हिंस्युः रक्षांसि। दभ्नोतिर्हिंसाकर्मा ॥ १ ॥

**म०** सप्तमेऽध्याये उपांशुग्रहादिसवनद्वयगता मन्त्रा दक्षिणादानान्ता उक्ताः। अष्टमे तृतीयसवनगता आदित्यग्रहादिमन्त्रा उच्यन्ते। तत्र 'प्रतिप्रस्थातादित्यपात्रेण द्रोणकलशादुपयामगृहीतोऽसीति गृहीत्वा द्विदेवत्याननु जुहोत्युत्तरार्ध इति' (का० ९। ९। १५)। द्विदेवत्यैः सह होमाय प्रतिप्रस्थातादित्यग्रहपात्रेण द्रोणकलशात्सोमं गृह्णाति। सोमदैवत्यम्। हे सोम, उपयामेन पात्रेण त्वं गृहीतोऽसि मया। 'शेषꣳशेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेति' (का० ९। ९। २०)। द्विदेवत्याननु हुत्वा हुतशेषमादित्यस्थाल्यां क्षिपेत्। सोमदैवत्यम्। हे सोम, आदित्येभ्योऽर्थाय त्वा त्वां सिञ्चामीति शेषः। 'समासिच्य तेनापिदधाति विष्ण उरुगायेति' (का० ९। ९। २१)। संस्रवमासिच्य तेनादित्यपात्रेण स्थालीं पिदधाति। विष्णुदैवतम्। हे विष्णो यज्ञपुरुष, हे उरुगाय, उरुभिर्बहुभिर्गीयते स्तूयत इत्युरुगायस्तत्संबोधनम्। एष सोमस्ते तवार्पितः तं सोमं रक्षस्व गोपाय। आत्मनेपदमार्षम्। हे सोम, रक्षणे प्रवृत्तं त्वा त्वां मा दभन् मा दभ्नुयुः मा हन्युः। रक्षांसीति शेषः। दभ्नोतिर्हिंसाकर्मा ॥ १ ॥

## द्वितीया।

कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वा ॥ २ ॥

उ० आदित्यग्रहं गृह्णाति। कदाचन। व्याख्यातोयं मन्त्रः। यदि नाम अधस्तादैन्द्रः। इयांस्तु विशेषः। इह त्वादित्यदेवतो यजुरन्तः। आदित्येभ्यस्त्वेति यजुः॥ २॥

म० 'आदित्यग्रहं गृह्णाति सꣳस्रवेभ्यः कदाचनेति' (का० १०।४।४) होमशेषाः संस्रवास्तेभ्यः सकाशात्। आदित्यदेवत्ये बृहत्यौ यजुरन्ते। आदित्येभ्यस्त्वेति यजुः। तृतीयो द्वादशार्णस्त्रयोऽन्येऽष्टार्णाः। सा बृहती तृतीयेऽध्याये बृहदुपस्थानमध्ये (क० ३४) इन्द्रदेवत्या प्रथममुक्ता व्याख्याता च। इह त्वादित्यदेवत्या यजुरन्ता चेति विशेषः। हे इन्द्र, त्वं कदाचन कदाचिदपि स्तरीर्हिंसको नासि किंतु दाशुषे। षष्ठ्यर्थे चतुर्थी। हविर्दत्तवतो यजमानस्य हविः सश्चसि सेवसे। कुत्र। उप उप इत् नु यजमानस्यात्यन्तसमीप एव हे मघवन् धनवन्निन्द्र, भूय इत् नु पुनरेव च देवस्य ते तव दानं दीयत इति दानम् तव देयं हविः पृच्यते त्वया संबध्यते। यजमानेन दत्तं हविस्त्वयाङ्गीक्रियत इत्यर्थः। हे ग्रह, आदित्येभ्योऽर्थाय त्वां गृह्णामीति शेषः। अत्रेन्द्रनामभिरप्यादित्य एव स्तूयते॥ २॥

## तृतीया।

कदाचन प्रयुच्छस्युभे निपासि जन्मनी। तुरीयादित्य सवनं त इन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वा॥ ३॥

उ० द्वितीयं गृह्णाति। कदाचन। बृहत्यादित्यदेवत्या यजुरन्ता। आदित्येभ्यस्त्वेति यजुः। कदाशब्दः कालवचनः। चनेति निपातः पुनरर्थे। प्रयुच्छतिः प्रमादार्थः। हे भगवन्नादित्य, कस्मिन्नहनि पुनः प्रमाद्यसि उदयतापपाकप्रकाशादीननुग्रहान्प्राणिषु कुर्वन्। न कदाचिदित्यभिप्रायः। एवं काकुगतेन विशेषणेन व्याख्येयम्। अथवा कदाचनेति व्यतिकीर्णमेतत्पदद्वयं व्याख्येयम्। यत्र कदाचिदपीत्यनेनार्थे-'नार्थवत्त्वम्। चकारगर्भं सवितुर्निधानम्। अस्य भाष्यं चकारैनां गर्भनिधानमिति यथा यास्केन दर्शितम्। न कदाचित्प्रमाद्यसि स्वकीयं कर्म कुर्वन्। उभे च नितरां पासि गोपायसि देवमनुष्यसंबन्धिनी जन्मनी। तुरीयेत्यविभक्तिको निर्देशः। तुरीयं च आदित्यसवनम्। तव इन्द्रियं च वीर्यं च तवैव आतस्थौ उपस्थितम् अमृतम् अनश्वरं विज्ञानानन्दस्वभावम् दिवि द्युलोके आदित्यमण्डलान्तःस्थम्। तदुक्तम् 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति। एवं परापररूपेणास्यामृच्यादित्यस्तुतिः। आदित्येभ्यस्त्वा गृह्णामीति शेषः॥ ३॥

म० 'अपगृह्य पुनः कदाचनेति' (का० १०।४।५)। धारातो विच्छिद्य पूतभृतः सकाशादातमसमीपं नीत्वा तथैव पुनरादित्यग्रहं गृह्णीयात्। कदाशब्दः कालवाची। चनेति निपातः पुनरर्थे। हे आदित्य, त्वं कदाचन प्रयुच्छसि कस्मिन् काले पुनः प्रमाद्यसि। 'युच्छ प्रमादे' न प्रमाद्यसीति काकुः। उदयतापपाकप्रकाशैः प्राणिनोऽनुगृह्णन् कदाचिदालस्यं करोषीति भावः। यद्वा कदा च नेति पदत्रयम् चकारोऽप्यर्थे। कदापि न प्रयुच्छसि स्वकर्मणि। किंच उभे जन्मनी देवमनुष्यसंबन्धिनी निपासि नितरां पालयसि। किंच तुरीय 'सुपां सुलुक्' (पा० ७।१।३९) इति विभक्तिलोपः। ते तव तुरीयं चतुर्थं मायातीतं शुद्धं सवनं सुवति स्वकार्ये जगत्प्रेरयतीति सवनम्। नन्द्यादित्वाल्ल्युप्रत्ययः। जगत्प्रवर्तकं अमृतमनश्वरं विज्ञानानन्दस्वभावं यदिन्द्रियं वीर्यं तद्दिवि द्युलोके मण्डलान्तरे आतस्थौ आभिमुख्येन स्थितम्। तदुक्तं 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'। एवमादित्यः परापररूपेणास्यामृचि स्तुतः। यद्वास्या ऋचोऽर्थान्तरम्। प्रशब्दो निषेधे। चनशब्दोऽप्यर्थे। हे आदित्य, त्वं कदाच कदापि न प्रयुच्छसि न प्रमाद्यसि किंतु उभे वर्तमानभाविनी जन्मनी निपासि रक्षसि। तृतीयमित्यर्थे व्यत्ययेन तुरीयशब्दः प्रयुक्तः। हे आदित्य, ते तव यत् तृतीयं सवनं तस्मिन् दिवि द्युलोकसमाने सवने इन्द्रियमिन्द्रियवृद्धिकरणममृतं सुधासमं हविः आतस्थौ समन्तात्स्थितम्। हे आदित्यग्रह, आदित्येभ्योऽर्थाय त्वां गृह्णामीति शेषः॥ ३॥

## चतुर्थी।

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वा॥ ४॥

उ० दध्ना श्रीणाति। यज्ञो देवानाम् त्रिष्टुप् यजुरन्ता आदित्यदेवत्या। आदित्येभ्यस्त्वेति यजुः। यस्माद्यज्ञो देवतानामादित्यानां सुम्नं सुखं कर्तुं प्रत्येति तस्माद्धेतोः हे आदित्यासः आदित्या एव आदित्यासः। आज्जसेरसुक्। भवता मृडयन्तः। 'मृड सुखने' तृचोर्थे शतृप्रत्ययोऽत्र छान्दसः। मृडयितारः सुखयितारो भवतास्माकम्। आवोऽर्वाची सुमतिर्ववृत्यात्। आवृता भवतु वः युष्मत्संबन्धिनी सुमतिः अर्वाची च अस्मदभिमुखा च। अꣳहोश्चिद्या वरिवोवित्तरासत्। अंहुः पापकारी। चिच्छब्दोऽप्यर्थे। अंहोः पापकारिणोपि या सुमतिः। वरिवोवित्तराः। वरिव इति धननाम। अतिशयेन धनस्य लब्ध्री असत् भवतु। सा सुमतिः अस्मदभिमुखी आववृत्यादिति संबन्धः॥ ४॥

म० 'दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा यज्ञो देवानामिति' (का० १०।४।६)। एनमादित्यग्रहं दध्ना मिश्रीकुर्यात्। आदित्यदेवत्या यजुरन्ता त्रिष्टुप् कुत्सदृष्टा आदित्येभ्यस्त्वेति यजुः। यज्ञो देवानामादित्यानां सुम्नं सुखं कर्तुं प्रत्येति प्रत्यागच्छति। अतो हे आदित्यासः आदित्याः, यूयं मृडयन्तः सुखयन्तः सुखकर्तारोऽस्माकं भवत। 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति संहितायां दीर्घः।

किंच वो युष्माकं या सुमतिः शोभनबुद्धिर्भक्तानुग्रहपरा सा अर्वाची अस्मदभिमुखी आववृत्यात् आवर्ततताम्। 'बहुलं छन्दसि' ( पा० २।४।७६ ) इति वर्ततेर्लिङि जुहोत्यादित्वाच्छपः श्लोर्द्वित्वं च। किंच अंहोश्चित् अंहुः पापकारी। चित् अप्यर्थे। अंहोर्हननशीलस्य पापिनोऽपि या सुमतिर्वरिवोवित्तरा वरिवो धनं विन्दति लभत इति वरिवोवित् अत्यन्तं वरिवोवित् वरिवोवित्तमः पापिनो या सुमतिर्धनलब्ध्री असत् भवेत् सा सुमतिरस्मदभिमुखी आववृत्यादिति संबन्धः। हे सोम, आदित्येभ्यो देवेभ्यस्त्वां दध्ना मिश्रयामीति शेषः॥ ४॥

## पञ्चमी।

✓ विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व। श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः। पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे॥ ५॥

**उ०** **उपांशुसवनेन ग्रहं विमिश्रयति। विवस्वन्नादित्य। तमांसि विवासयतीति विवस्वान् आदित्य उच्यते। हे विवस्वन् आदित्य, एष ते सोमपीथः एतत्तव सोमपानम् तस्मिन्मत्स्व। 'मद तृप्तौ' तृप्तिं कुरु, क्षिप्तमाशिरं सोमे। अवेक्षते पत्नी। श्रदस्मै नरः। जगती आशीर्यजमानपत्नीविषया। श्रदिति सत्यनामसु पठितम्। श्रद्धातन श्रद्धानान्कुरुत 'नेत्यनर्थका उपजना भवन्ति' इति नकारोऽनर्थकः। श्रद्धां कुरुत अस्मै वर्चसे हे नरः ऋत्विग्यजमानाः। यत् किमित्यत आह। आशीर्दा आशिषो दातारः। दम्पती पत्नीयजमानौ। वामं वननीयम्। अश्नुतः व्याप्नुतः यज्ञफलम्। किंच इहैव पुमान् पुत्रो जायते। दुहितापि पुत्रशब्देनोच्यत इत्यतः पुमानिति विशेष्यते। किंच विन्दते वसु लभते धनम्। अधा अथेत्येतौ छन्दसि समानार्थौ। विश्वाहा सर्वदा। अरपः। रपो रिप्रमिति पापनामनी भवतः। अपापः सन् एधते वर्धते गृह एवावस्थितः॥ ५॥**

**म०** 'उपांशुसवनेन मिश्रयति विवस्वन्नादित्येति' ( का० १०।४।७ ) पाषाणेन दधि सोमं च मिश्रयेत्। आदित्यदैवत्यम्। तमांसि विवासयति नाशयतीति विवस्वान्। यद्वा विशिष्टं वसु धनमस्येति विवस्वान्। मतौ टिलोपश्छान्दसः तत्संबोधनं हे विवस्वन् हे आदित्य, एष पात्रस्थस्ते तव सोमपीथः पातुं योग्यः पीथः पीथश्चासौ सोमश्च सोमपीथः पातव्यः सोमः। आहिताग्न्यादित्वात्पीथशब्दस्य परत्वम् तस्मिन्पातव्ये सोमे त्वं मत्स्व 'मद तृप्तौ' तृप्तिं कुरु। 'बहुलं छन्दसि' (पा०२।४।७३) इत्यदादित्वाच्छपो लुक्। 'श्रदस्मै नर इत्येनमवेक्षते पत्नीति' ( का० १०।५।४ ) पत्न्येनं पूतभृतं पश्येत्। आशीर्देवत्या जगती नरदेवत्या वा द्वादशाक्षरचतुःपादा जगती। पत्नी वदति। हे नरो नेतारः ऋत्विग्यजमानाः, आशीर्दा आशिषो ददति ते आशीर्दाः। सुब्लोपश्छान्दसः। आशिषः दातारो यूयमस्मै वचसे आशीर्वचनाय श्रद्धातन। श्रदिति सत्यनामसु पठितम्। 'तप्तनप्तनथनाश्च' ( पा० ७।१।४५ ) इति मध्यमबहुवचनस्य तनादेशः। श्रद्धां कुरुत। आस्तिक्यबुद्धिं कुरुतेत्यर्थः। मदुक्तमाशीर्वचनं भवद्भिः श्रद्धया धारितं तथैव स्यादिति भावः। किं तदाशीर्वचनमत आह। यत् दम्पती जायापती पत्नीयजमानौ वामं वननीयं संभजनीयं यज्ञफलमश्नुतः प्राप्नुतः। किंच इहैव पुमान्पुंस्त्वधर्मसंपन्नः पुत्रः जायते। किंच स च पुत्रो वसु धनं विन्दते लभते। अध अथेत्यर्थः। 'निपातस्य च' ( पा० ६।३।१३६ ) इति संहितायां दीर्घः। अथानन्तरं विश्वाहा विश्वानि च तान्यहानि च विश्वाहा। 'कालाध्वनोरत्यन्तसंयोगे' ( पा० २।३।५ ) इति द्वितीया। 'राजाहःसखिभ्यष्टच्' ( पा० ५।४।९१ ) इति प्राप्तस्य टच्प्रत्ययस्य वैकल्पिकत्वाच्छान्दसो वाभावः। अनन्तरं धने लब्धे सति विश्वाहा सर्वदा अरपः पापरहितः सन् गृहे स्वसदने एधते वर्धते। नास्ति रपो यस्यासावरपः। 'रपो रिप्रमिति पापनामनी भवतः' ( निरु ४।२१ ) इति यास्कः। आशीर्दा आशिषो दातारौ इति दम्पतीविशेषणं वा। विभक्तेराकारः। दम्पती यज्ञफलं प्राप्नुताम् तयोः पुत्रो जायताम् स च धनं लब्ध्वा निष्पापः स्वगृहे वर्धतामिति आशीर्वचने श्रद्धां कुरुतेति सर्वार्थः॥ ५॥

## षष्ठी।

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम॥ ६॥

**उ०** **सावित्रं गृह्णाति। वाममद्य। सावित्री त्रिष्टुप्। हे सवितः, वामं वननीयम् अद्य अस्मिन् अद्य सावीरिति संबन्धः। वाममु श्वः। वामं च उपाशंसनीये काले सावीः श्व उपांशुशंसनीयः काल इति हि यास्क आह। किंवा बहुनोक्तेन दिवे दिवे वाममस्मभ्यं सावीः। अहन्यहनि वाममस्माकं प्रसूयाः। किंच वामस्य हि क्षयस्य देवभूरेः। क्षयशब्दो निवासवचन आद्युदात्तत्वात्। 'क्षयो निवासे' इति हि पाणिनिराद्युदात्तत्वं स्मरति। वामस्य च निवासस्य हे देव दानादिगुणयुक्त, भूरेर्बहुनो धनपूर्णस्य दाता भवेति शेषः। अनया धिया। धीरिति कर्मनाम। अनेन च सोमाख्येन कर्मणा वामभाजः अभिलषितभाजिनो वयं संभवेम॥ ६॥**

**म०** 'भक्षयित्वेडामुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति' ( का० १०।५।१३ )। सवनीयपुरोडाशेडां भक्षयित्वा सवनीयसंबन्धि कर्म समाप्य उपांश्वन्तर्यामयोरन्यतरेण सावित्रं गृह्णाति। कण्डिकाद्वयात्मको मन्त्रः। सवितृदेवत्या त्रिष्टुब् भरद्वाजदृष्टा। हे सवितः, सर्वस्य प्रेर-

यितर्देव, अद्यास्मिन्दिने अस्मभ्यमस्मदर्थे वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः । 'षू प्रेरणे' लुङ् अडभावश्छान्दसः । वाममु श्वः । उ अप्यर्थे । श्वोऽपि समनन्तरदिनेऽपि वामं सावीः । दिवेदिवे तत ऊर्ध्वं दिनेदिनेऽस्मभ्यं वामं सावीः । हि यस्मादयानया । नलोपश्छान्दसः । धिया श्रद्धायुक्तया बुद्ध्या वयं वामभाजः स्याम भवेम । वामं वननीयं यज्ञकर्म भजन्ति वामभाजः यज्ञानुष्ठातारो भवेम । किमर्थम् । वामस्य संभजनीयस्य भूरेः विस्तीर्णस्य बहुकालीनस्य क्षयस्य स्वर्गनिवासस्य सिद्धय इति शेषः । 'क्षयो निवासे' इत्याद्युदात्तत्वात् क्षयशब्दो निवासार्थः । दिवेदिवे इत्यह्नो नामसु पठितम् । यद्वोत्तरार्धस्यायमर्थः । हे देव, वामस्य वननीयस्य भूरेः धनपूर्णस्य क्षयस्य निवासस्य दाता भवेति शेषः । धीरिति कर्मनाम । अनया धिया सोमाख्येन कर्मणा वयं वामभाजोऽभिलषितभागिनो भवेम ॥ ६ ॥

## सप्तमी ।

उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे ॥ ७ ॥

**उ०** उपयामगृहीतोसि सावित्रोसि । सवितृदेवत्योसि चनोधाश्चनोधा असि । चन इत्यन्ननाम । अभ्यासे भूयांसमर्थं मन्यन्ते । अतिशयेन चान्नस्य धारयितासि । अतः चनोऽन्नं मयि धेहि स्थापय । किंच जिन्व यज्ञम् । जिन्वतिः प्रीतिकर्मा । तर्पय यज्ञं तर्पय च यज्ञपतिं यजमानम् भगाय यज्ञफलाय । देवाय सवित्रे त्वा गृह्णामीति शेषः ॥ ७ ॥

**म०** सावित्रम् । हे सोम, त्वमुपयामेन ग्रहेण गृहीतोऽसि हे ग्रह, त्वं सावित्रः सवितृदेवत्योऽसि । चन इत्यन्ननाम । चन चनोऽन्नं धत्त इति चनोधाः अन्नस्य धारयिता । 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १० । ४२ ) इति यास्कोक्तेः । यतस्त्वमत्यन्तं चनोधा असि अतश्चनोऽन्नं मयि धेहि स्थापय । किंच यज्ञं जिन्व प्रीणय । जिन्वतिः प्रीतिकर्मा । यज्ञपतिं यजमानं च जिन्व तर्पय । भगाय ऐश्वर्यादिगुणयुक्ताय सवित्रे सर्वप्राणिनां प्रसवादिकर्त्रे देवाय त्वां गृह्णामीति शेषः । भगमस्यास्तीति भगः अर्शआदित्वादच् । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति ॥ ७ ॥

## अष्टमी ।

उपयामगृहीतोसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षाय नमः । विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ८ ॥

**उ०** वैश्वदेवं गृह्णाति । उपयामगृहीतोसीति व्याख्यातम् । सुशर्मासि स्वाश्रयोसि । सुप्रतिष्ठानः शोभनं प्रतिष्ठानं प्रतिष्ठा अस्येति सुप्रतिष्ठानः महत्साधनसंपन्नः । 'प्राणो वै सुशर्मा सुप्रतिष्ठानः' इति श्रुतिः । प्राणहेतुत्वात्प्राण इत्युच्यते । अन्नं वै ग्रहो अन्नं वै प्राणहेतुः । यस्मात्त्वं सुशर्मासि सुप्रतिष्ठानश्च तस्मात् बृहदुक्षाय नमः महासेचनाय जगदुत्पत्तिबीजाय प्रजापतये नमो भवितुमर्हतीति शेषः । नम इत्यन्ननामसु पठितम् । 'प्रजापतिर्वै बृहदुक्षः' इति श्रुतिः । विश्वेभ्यस्त्वा देवेभ्य इति व्याख्यातम् ॥ ८ ॥

**म०** 'अभक्षितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति' ( का० १० । ६ । २ ) अभक्षितेनैव सावित्रग्रहपात्रेण पूतभृतः सकाशान्महावैश्वदेवग्रहस्य ग्रहणं करोत्यध्वर्युः । वैश्वदेवम् । हे वैश्वदेव ग्रह, त्वमुपयामेन गृहीतोऽसि । यतः सुशर्मासि शोभनं शर्म सुखमाश्रयो वा यस्य स सुशर्मा । तथा सुप्रतिष्ठानः सुष्ठु प्रतिष्ठानं पात्रे स्थितिर्यस्य तादृशोऽसि । विशेषणद्वयेन प्राणरूपोऽसीत्यर्थः । 'प्राणो वै सुशर्मा सुप्रतिष्ठानः' ( ४ । ४ । १ । १४ ) इति श्रुतेः ग्रहस्यान्नरूपत्वादन्नस्य च प्राणहेतुत्वाद् ग्रहस्य प्राणत्वम् । यस्मादीदृशोऽसि तस्माद् बृहदुक्षाय बृहन्महांश्चासौ उक्षा सेक्ता च बृहदुक्षः तस्मै महते सेक्त्रे जगदुत्पादयित्रे प्रजापतये नमोऽन्नं भवितुमर्हसीति शेषः । नम इत्यन्ननाम । 'प्रजापतिर्वै बृहदुक्षः' ( ४ । ४ । १ । १४ ) इति श्रुतेः बृहदुक्षशब्देन प्रजापतिः । विश्वेभ्यो देवेभ्योऽर्थाय त्वां गृह्णामि । सादयति एष ते व्याख्यातम् ॥ ८ ॥

## नवमी ।

उपयामगृहीतोसि बृहस्पतिसुतस्य देव सोम त इन्दोरिन्द्रियावतः पत्नीवतो ग्रहाँ २॥ ऋध्यासम् । अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताभूत् । अहꣳसूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यत् ॥ ९ ॥

**उ०** पात्नीवतं गृह्णाति । उपयामगृहीतोसीति । बृहस्पतिसुतस्य ब्रह्मणाभ्यनुज्ञातस्य । हे देवसोम, ते तव इन्दोः इन्द्रियावतः वीर्यवतः पत्नीवतः पत्नीसंयुक्तस्य सतो ग्रहानन्यानुपांशुप्रभृतीन् ऋध्यासं समर्धयेयम् । प्रचरणीसंस्रवशेषेण श्रीणाति । अहं परस्ताम् । त्रिष्टुप् । प्रजापतिरूपेणात्मानं पश्यन् श्रीणाति । अहं परस्तादस्य जगतः अहं चाधस्तात् । यच्चैतदन्तरिक्षं तदु मे तदेव मे पिता पाताभूत् । अहं च सूर्यमुभयतो ददर्श । परस्तादधस्ताच्च पश्यामि । सूर्यस्य परस्तान्मम शिर इत्यभिप्रायः । यच्च देवानां परमं गुहा तदप्यहमेव ॥ ९ ॥

**म०** 'उपयामगृहीतोऽसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं गृह्णातीति' ( का० १० । ६ । १६ ) उपांश्वन्तर्यामपात्रयोरेकतरेण प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति सोमदेवत्यम् । हे देव दीप्यमान हे सोम, त्वमुपयामेन पात्रेण गृहीतोऽसि

अतस्ते तव संबन्धिनोऽन्यान् ग्रहानुपांशुप्रभृतीनहमृध्यासं समर्धयेयम् । किंभूतस्य ते बृहस्पतिसुतस्य बृहतो महतो यज्ञकर्मणः पतिर्बृहस्पतिर्यजमानस्तेन सुतस्याभिसुतस्य । यद्वा बृहस्पतयो ब्राह्मणा ऋत्विजस्तैरभिसुतस्य । तथा इन्दोः 'उन्दी क्लेदे' उनत्तीतीन्दुस्तस्य क्लेदनरूपस्य रसरूपस्येत्यर्थः । तथा इन्द्रियावतः इन्द्रियं वीर्यमस्यास्तीतीन्द्रियवान् तस्य । संहितायां दीर्घः । तथा पत्नीवतः पत्नीसंयुक्तस्य । 'प्रचरणीशेषेण श्रीणात्येनमहं परस्तादिति' ( का० १० । ६ । १७ ) प्रचरणीशिष्टेनाज्येन पात्नीवतग्रहं मिश्रयेत् । प्रजापतिरूपात्मदेवत्या त्रिष्टुप् । अत्र मन्त्रद्रष्टा स्वस्य सर्वगतपरमात्मरूपत्वमभिप्रेत्य वदति । अहं परमात्मरूपः सन् परस्तात् उपरि द्युलोकादौ तथाहमवस्तात् अधस्तनभूलोकादौ च तिष्ठामीति शेषः । यदन्तरिक्षं मध्यवर्तिलोकरूपमस्ति तदु तदेव मे देहधारिणो मम पिताभूत् पितृवत्पालकं भवति । अहं परमात्मरूपः सन्नुभयतः उपरिष्टादधस्ताच्च स्थित्वा सूर्यं ददर्श पश्यामि । देवानामिन्द्रादीनां यत्परमं गुहा अत्यन्तं गोप्ये हृदयेऽस्ति तदेवाहमस्मि ॥ ९ ॥

## दशमी ।

अग्ना३॥ इ पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा । प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ॥ १० ॥

**उ०** जुहोति । अग्नाऽइपत्नीवत् । 'एचो प्रगृह्यस्यादूराद्धूते' इति प्लुतः । हे अग्ने पत्नीसंयुक्त । सजूर्देवेन त्वष्ट्रा । समप्रीतिर्देवेन त्वष्ट्रा सोमं पिब स्वाहा पत्नी उद्गातारमवेक्षते । प्रजापतिः । त्वं प्रजापतिः वृषा च । रेतोधाः रेतसः सेक्ता धारयितासि स्वभावत एव त्वां ब्रवीमि । रेतो मयि धेहि स्थापय । प्रजापतेश्च तव वृष्णः सेक्तुः रेतोधसः रेतोधारयितुः स्वभूतं रेतोधां रेतसो धारयितारम् पुंस्पुत्रम् अशीय प्राप्नुयाम् ॥ १० ॥

**म०** 'अग्ना ३ इ पत्नीवन्नित्युत्तरार्धे जुहोतीति पात्नीवतं ग्रहमग्नेरुत्तरभागे जुहोति' ( का० १० । ६ । १६ ) । अग्निदेवत्यम् । 'एचोऽप्रगृह्यस्य' ( पा० ८ । २ । १०७ ) इत्यादिना अग्नेशब्दगतस्य एकारस्य आ इ इत्यादेशौ आकारस्य प्लुतत्वम् । हे अग्ने, हे पत्नीवन् पत्नीयुक्त, त्वष्ट्रा देवेन सजूः समानप्रीतिः सन् त्वं सोमं पिब स्वाहा सुहुतमस्तु । 'पत्नीᳬ सदः प्रवेश्यापरेणोत्तरत उपविष्टामुद्गात्रा समीक्षयति प्रजापतिर्वृषासीति' ( का० १० । ७ । ३ ) नेष्टा पश्चिमद्वारेण पत्नीं सदः प्रवेश्योद्गातुरुत्तरतः स्थितामुद्गातारं पश्येति प्रेषयेत् सा च तं पश्येत् । हे उद्गातः, प्रजापतिः प्रजानां पालकस्त्वं वृषासि सेक्ता भवसि । रेतोधा रेतसो वीर्यस्य धारयिता चासि । एवंभूतस्त्वं रेतो वीर्यं मयि धेहि स्थापय । ततो वृष्णो वीर्यसेक्तः रेतोधसो वीर्यस्य धारयितुः प्रजापतेस्ते तवानुग्रहात् रेतोधां रेतसो धारयितारं प्रजोत्पादनसमर्थं पुत्रमशीय प्राप्नुयाम् । अश्नोतेर्व्यत्ययेनादादित्वं लिङ्युत्तमैकवचने ॥ १० ॥

## एकादशी ।

उपयामगृहीतोसि हरिरसि हारियोजनो हरिभ्यां त्वा । हर्योर्धाना: स्थ सहसोमा इन्द्राय ॥११॥

**उ०** हारियोजनं गृह्णाति । उपयामगृहीतोसि हरिरसि हरितवर्णोऽसि । हरिः सोमो हरितवर्ण इति । हारियोजनः । इन्द्राश्वौ हरितावत्र युज्यते इति हरियोजनः । हरियोजन एव हारियोजनः । स्वार्थे तद्धितः 'ऋक्सामे वै हरी' इति श्रुत्यपेक्षः । हरिभ्यां त्वा । गृह्णामीति शेषः । धाना आवपति । हर्योर्धानास्थ हरितवर्णयोरिन्द्राश्वयोर्धाना भवथ यूयं । सोमेन च सहिता इन्द्राय भवथ प्राणभक्षः ॥ ११ ॥

**म०** 'द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोऽसि हरिरसीति' ( का० १० । ८ । १ ) । आग्रयणादिति शेषः । ऋक्सामदेवत्यम् । हे ग्रह, त्वं हरिर्हरितवर्णोऽसि 'हरी रश्मिर्हरिः सोमो हरिर्हरितवर्णवान्' इत्यभिधानात् । उपयामेन गृहीतश्चासि । किंभूतस्त्वम् । हारियोजनः हरी इन्द्राश्वौ योजयतीति हरियोजन इन्द्रस्तस्यायं हारियोजन इन्द्रसंबन्धी तं त्वा त्वां हरिभ्यामृक्साममन्त्राभ्यां गृह्णामीति शेषः । 'ऋक्सामे वै हरी ऋक्सामाभ्याᳬ ह्येनं गृह्णाति' ( ४ । ४ । ३ । ६ ) इति श्रुतेः 'धानाश्चावपति हर्योर्धाना इति' ( का० १० । ८ । २ ) । हारियोजने भ्रष्टयवान्निदध्यात् । धानादेवत्यम् । सहसोमाः सोमेन सहिता धाना भ्रष्टयवा यूयमिन्द्राय इन्द्रस्य हर्योः हरितवर्णयोरश्वयोः स्थ भवथ इन्द्राश्वसंबन्धिनो यूयमित्यर्थः ॥ ११ ॥

## द्वादशी ।

यस्ते अश्वसनिर्भक्षो यो गोसनिस्तस्य त इष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि ॥ १२ ॥

**उ०** यस्ते अश्वसनिः । यस्तवाश्वं सनोति संभजते भक्षः । यश्च गाः सनोति तस्य तव संबन्धिनः । इष्टयजुषः इष्टानि हि यजूंषि भवन्ति । स्तुतस्तोमस्य । अस्मिन्नेवावसरे स्तुताः स्तोमा भवन्ति । शस्तोक्थस्य । शस्तानि ह्युक्थानि भवन्ति । उपहूतस्य अभ्यनुज्ञातस्य उपहूतोऽभ्यनुज्ञातो भक्षयामि ॥ १२ ॥

**म०** 'यस्ते अश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्तीति' ( का० १० । ८ । ५ ) । सर्वेर्त्विजो धाना आदाय मन्त्रेणावघ्रायोत्तरवेदौ क्षिपन्ति । भक्षद्रव्यदैवत्यम् । हे धानासहित सोम भक्षद्रव्य, यस्ते तव भक्षो भक्षणमश्वसनिः । 'षणु दाने' अश्वान्सनोतीत्यश्वसनिः अश्वानां दाता । यश्च ते

भक्षो गाः सनोति गवां दाता तस्य तादृशस्य ते तव तादृशं भक्षमुपहूतोऽनुज्ञातोऽहं भक्षयामि। कीदृशस्य ते। इष्टयजुषः इष्टानि यजूंषि यस्य स इष्टयजुस्तस्य। तथा स्तुतस्तोमस्य उद्गातृभिः स्तुताः स्तोमाः स्तोत्राणि यस्य स स्तुतस्तोमस्तस्य। तथा शस्तोक्थस्य होतृभिः शस्तानि उक्थानि शस्त्राणि यस्य स शस्तोक्थस्तस्य। तथा उपहूतस्याभ्यनुज्ञातस्य तदेतानि भवन्तीत्यर्थः॥ १२॥

## त्रयोदशी।

देवकृ॑तस्यैन॑सोऽवयज॑नमसि मनुष्यकृ॑तस्यैन॑सोऽवयज॑नमसि पितृकृ॑तस्यैन॑सोऽवयज॑नमस्यात्मकृ॑तस्यैन॑सोऽवयज॑नमस्येन॑स एन॒सोऽवयज॑नमसि। यच्चा॒हमेनो॑ वि॒द्वांश्च॒कार॒ यच्चावि॑द्वांस्तस्य॒ सर्व॑स्यैन॑सोऽव॒यज॑नमसि॥ १३॥

**उ०** शकलाधानम्। देवकृतस्य देवविषयकृतस्य। एनसः पापस्य अवयजनम्। अवपूर्वो यजिर्नाशने वर्तते। नाशनं भवसि। मनुष्यविषयस्य पापस्य नाशनमसि पितृविषये कृतस्य पापस्य नाशनमसि। आत्मविषये कृतस्य पापस्यात्मनिन्दादेः नाशनमसि। एनसएनसः यावन्ति पापानि तेषां सर्वेषां नाशनमसि। यच्चान्यदप्येनः पापं विद्वान् चकार कृतवान्। यच्चाविद्वान् अजानानः तस्य सर्वस्य नाशनमसि॥ १३॥

**म०** 'शाकलाधानं देवकृतस्येति प्रतिमन्त्रमिति' (का० १०।८।६)। षट् षड्यूपशकलानि सर्वेऽग्नौ निदध्युः। षड्यजूंष्यग्निदेवत्यानि। हे शकल, त्वं देवकृतस्य देवविषये विहितस्य एनसो यजनाभावादिलक्षणस्य पापस्य त्वमवयजनमसि नाशकं भवसि। अवपूर्वो यजिर्नाशनार्थः। अवयजतीत्यवयजनम्। मनुष्यकृतस्य मनुष्येषु कृतस्य द्रोहनिन्दादेरेनसोऽवयजनमसि। पितृकृतस्य पितृषु कृतस्यैनसः श्राद्धाकरणादेर्नाशनमसि। आत्मविषये कृतस्य पापस्यात्मनिन्दादेर्नाशनमसि। एनसएनसः यावन्ति पापानि तावतां सर्वेषां नाशनमसि। किंच विद्वान् जानानो ज्ञानपूर्वकं यदेनः पापमहं चकार कृतवान् अविद्वान् अज्ञानपूर्वं च यदहमेनश्चकार तस्य सर्वस्यैनसः ज्ञानाज्ञानपूर्वस्य पापस्य त्वमवयजनं नाशनमसि॥ १३॥

## चतुर्दशी।

सं वर्च॑सा॒ पय॑सा॒ संत॒नूभि॒रग॑न्महि॒ मन॑सा॒ सꣳ शि॒वेन॑। त्वष्टा॑ सु॒दत्रो॒ विद॑धातु रा॒योऽनु॑मार्ष्टु त॒न्वो॒ यद्विलि॑ष्टम्॥ १४॥

**उ०** चमसानभिमृशन्ति। संवर्चसेति व्याख्यातम्॥ १४॥

**म०** 'अपरेण चात्वालं यथाखं चमसान् पूर्णपात्रानवमृशन्ति हरितकुशानवधाय सं वर्चसेति' (का० १०।८।७) पूर्णपात्रानुदकपूर्णानित्यर्थः। त्वाष्ट्री त्रिष्टुप् (अ० २ क० २४) व्याख्यातापि व्याख्यायते। वर्चसा ब्रह्मवर्चसेन वयं समगन्महि सङ्गता भवाम। गच्छतेर्लङि अदादित्वाच्छपो लुकि उत्तमबहुवचने 'मो नो धातोः' (पा० ८।२।६४) इति मस्य नकारः। पयसा क्षीरादिरसेन समगन्महीत्यनुवर्तते। तनूभिरनुष्ठानक्षमैः शरीरावयवैः समगन्महि। शिवेन समीचीनेन कर्मश्रद्धायुक्तेन मनसा समगन्महि। किंच सुदत्रः शोभनदानः त्वष्टा देवो रायो धनानि विदधातु। तन्वः शरीरस्यास्मदीयस्य यद्विलिष्टं विश्लिष्टम्। 'लिश अल्पीभावे' निष्ठान्तः। विशेषेण न्यूनमङ्गं तदनुमार्ष्टु न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु॥ १४॥

## पञ्चदशी।

समि॑न्द्र णो॒ मन॑सा नेषि॒ गोभि॒ः सꣳ सू॒रिभि॑र्मघवन्त्सꣳ स्व॒स्त्या। सं ब्रह्म॑णा दे॒वकृ॑तं॒ यदस्ति॒ सं दे॒वाना॑ꣳसुम॒तौ य॒ज्ञिया॑नाꣳ स्वाहा॑॥ १५॥

**उ०** नव समिष्टयजूंषि जुहोति। समिन्द्रेण इत्याद्याः षट् त्रिष्टुभः। तत्र त्रिभिः परिधीनाप्याययति त्रिभिर्देवता व्यवसृजति। समिन्द्र णः। ऐन्द्री। समित्ययमुपसर्गो नेषीत्यनेन क्रियापदेन संबध्यते। हे भगवन्निन्द्र, संनेषि संगमयसि नः अस्मान्। मनसा संगमयसि च गोभिर्वाग्भिर्वादिभिः पशुभिः संगमयसि च सूरिभिः पण्डितैः। हे मघवन्, संगमयसि च स्वस्त्या अविनाशेन। स्वस्तीत्यविनाशनाम। संगमयसि च ब्रह्मणा देवकृतं देवैर्दृष्टं त्रयीलक्षणम्। तदेव स्पष्टयति। यदस्ति यन्नित्यमित्यर्थः। संगमयसि च देवानां सुमतौ। तृतीयया विपरिणामः। शोभनया मत्या। यज्ञियानां यज्ञसंपादिनाम्। यस्त्वमस्मानेवं सर्वैर्मनःप्रभृतिभिः संगमयसि तस्मै त एतद्धविः स्वाहा सुहुतमस्तु इति शेषः॥ १५॥

**म०** 'समिन्द्र ण इति नव समिष्टयजूꣳषि जुहोति प्रतिमन्त्रमिति' (का० १०।८।११)। नवभिर्मन्त्रैः समिष्टयजुःसंज्ञा नवाहुतीर्जुहुयात्। तत्राद्यः विश्वदेवदेवता त्रिष्टुप् अत्रिदृष्टा। समित्युपसर्गो नेषीत्यनेन संबध्यते न इत्यस्य णत्वम्। हे मघवन्धनवन् हे इन्द्र, मनसानुग्रहयुक्तेन नोऽस्मान् त्वं संनेषि संनयसि संयोजयसि। गोभिः वाग्भिर्गवादिपशुभिर्वा संनेषि। व्यत्ययेन शपो लुकि लटि मध्यमैकवचने नेषीति रूपम्। सूरिभिः पण्डितैर्होत्रादिभिः संयोजयसि स्वस्त्या क्षेमेण च संनेषि। ब्रह्मणार्थज्ञानसहितेन वेदेन संनेषि। देवकृतं देवार्थं कृतं कर्म यदस्ति यज्ञाख्यं देवैः कृतं दृष्टं वा यत्कर्म तेन संनेषि। तथा यज्ञियानां यज्ञसंबन्धिनां देवानां सुमतौ सुमत्यानुग्रहबुद्ध्या संयोजयसि। 'सुपां सुपो भवन्ति' (पा० ७।१।३९) इति तृतीयार्थे सप्तमी। यस्त्वमस्मानेवं मनआदिभिः संयोजयसि तस्मै स्वाहा एतद्धविः सुहुतमस्तु॥ १५॥

## षोडशी ।

सं वर्च॑सा पय॑सा सं त॒नूभि॒रग॑न्महि॒ मन॑सा सꣳशि॒वेन॑ । त्वष्टा॑ सु॒दत्रो॒ विद॑धातु॒ रायो॑ऽनुमार्ष्टु त॒न्वो॒ यद्विलि॑ष्टम् ॥ १६ ॥

**उ०** संवर्चसा पयसा । व्याख्यातम् ॥ १६ ॥

**म०** अथ द्वितीयः । त्वाष्ट्री त्रिष्टुप् प्रजापतिदृष्टा व्याख्याता [ क० १४ ] ॥ १६ ॥

## सप्तदशी ।

धा॒ता रा॒तिः स॑वि॒तेदं जु॑षन्तां प्र॒जाप॑ति॒र्नि॑धि॒पा दे॒वो अ॒ग्निः । त्वष्टा॒ विष्णुः॑ प्र॒जया॑ सꣳर॒राणा॒ यज॑मानाय॒ द्रवि॑णं दधात॒ स्वाहा॑ ॥ १७ ॥

**उ०** धाता रातिः । षट् देवता अस्यामृचि । धाता सविता प्रजापतिः अग्निः त्वष्टा विष्णुः एते षट् निधिपा देवाः । इदं समिष्टयजुर्लक्षणं रातिर्दानम् जुषन्तां सेवन्ताम् । जुषित्वा च प्रजया रराणाः यजमानसंबन्धिन्या प्रजया संरममाणाः । यजमानाय एतद्द्रविणं । दधातेति प्रथमपुरुषस्य स्थाने मध्यमपुरुषश्छान्दसः । दधतु स्थापयन्तु । एवं तावदस्य मन्त्रस्य सम्यग्योजना प्रतिभाति ॥ १७ ॥

**म०** अथ तृतीयः । धातृसवितृप्रजापतिदेवाग्नित्वष्टृविष्णुदेवत्या त्रिष्टुप् । धाता सविता प्रजापतिः अग्निः त्वष्टा विष्णुः एते षट् देवा इदमस्मद्धविः समिष्टयजुर्लक्षणं जुषन्तां सेवन्ताम् । किंभूतो धाता । रातिः राति प्रयच्छतीति रातिः दानशीलः । 'क्तिच्क्तौ च संज्ञायाम्' ( पा० ३ । ३ । १७४ ) इति कर्तरि क्तिच्प्रत्ययः चित्त्वादन्तोदात्तः । किंभूतः प्रजापतिः । निधिपाः निधीन्पातीति निधिपाः महापद्मशङ्खपद्मादिनिधीनां नवानां पालयिता । किंभूतोऽग्निः । देवः दीप्यमानः । किंच ते एते देवाः प्रजया यजमानसंबन्धिन्या सन्तत्या सह संरराणाः सम्यग्रममाणाः सन्तः यजमानाय द्रविणं धनं दधात दधतु ददतु । व्यत्ययेन प्रथमपुरुषस्थाने मध्यमः पुरुषः 'तप्तनप्तनथनाश्च' ( पा० ७ । १ । ४५ ) इति तबादेशः तस्य तेनालोपाभावः । स्वाहा एतेभ्यः सुहुतमस्तु ॥ १७ ॥

## अष्टादशी ।

सु॒गा वो॑ देवाः॒ सद॑ना अकर्म॒ य आ॑ज॒ग्मेदꣳ सव॑नं जुषा॒णाः । भर॑माणा॒ वह॑माना ह॒वीꣳष्य॒स्मे ध॑त्त वसवो॒ वसू॑नि॒ स्वाहा॑ ॥ १८ ॥

**उ०** सुगा वः । हे देवाः सुगमनीयानि वो युष्माकं सदनानि स्थानानि । अकर्म कृतवन्तो वयं ये यूयमाजग्मुः आगताः । सवनमिदं जुषाणाः यज्ञमेतं सेवमानाः । अथेदानीं परिसमाप्ते यज्ञे । भरमाणा वहमाना हवींषि । ये तु रथिनः ते रथेषु भरमाणा वहमाना हवींषि । ये तु अरथिनस्ते स्कन्धावसक्तिकासु हवींषि वहमानाः । अस्मे धत्त वसवो वसूनि । अस्मासु दत्त हे वसवो वासयितारः, वसूनि धनानि ॥ १८ ॥

**म०** अथ चतुर्थः । देवदेवत्या त्रिष्टुप् तुर्यः पादो दशार्णः । हे देवाः, ये यूयमिदं सवनं यज्ञं जुषाणाः सेवमानाः सन्तः आजग्म आगताः । गमेर्लिटि मध्यमबहुवचनम् । तेषां वो युष्माकं सदना सदनानि स्थानानि सुगा सुगानि सुखेन गम्यते येषु तानि सुगानि सुगमनीयानि वयमकर्म अकार्ष्म कृतवन्तः । 'सदुरोरधिकरणे' ( पा० ३ । २ । ४८ ) इति सुउपसर्गे गमेर्डप्रत्यये सुगेति रूपं विभक्तेराकारः । करोतेश्चिल्लोपे लुङि उत्तमबहुवचने अकर्मेति रूपम् । किंच हे वसवः वासयन्तीति वसवो वासयितारो विवासहेतवो देवाः । अस्मे अस्मासु यूयं वसूनि धनानि धत्त स्थापयत । किंभूता यूयं यज्ञसमाप्तौ हवींषि भरमाणा ये रथिनस्ते तु रथेषु बिभ्रतः रथहीना वहमानाः स्कन्धेषु हवींषि वहन्तः । यद्वा भरमाणाः पुष्णन्तः वहमानाः रथादिभिर्नयन्तः तेभ्यो युष्मभ्यं स्वाहा सुहुतमस्तु ॥ १८ ॥

## एकोनविंशी ।

याँ२ऽआव॑ह उश॒तो दे॑व दे॒वांस्तान्प्रेर॑य॒ स्वे अ॑ग्ने स॒धस्थे॑ । ज॒क्षि॒वाꣳसः॑ पपि॒वाꣳस॑श्च॒ विश्वेऽसुं॑ घ॒र्मꣳ स्वरा॑तिष्ठता॒नु स्वाहा॑ ॥ १९ ॥

**उ०** याँ आवहः । हे भगवन्नग्ने, यान् आवहः आहूतवानसि । उशतः कामयमानान् । हे देव, देवान् तान् प्रेरय अनुव्रज्यादिभिः । स्वे स्वकीये सधस्थे सहस्थाने गृहे । किमुक्त्वा प्रेरयेतिचेदत आह । ये यूयं जक्षिवांसः पशून् पुरोडाशं च । पपिवांसश्च सोमम् । विश्वे सर्वे ते इदानीं परिसमाप्ते यज्ञे असुं घर्मं स्वरातिष्ठतानु । 'अनुर्लक्षणे' इति कर्मप्रवचनीयसंज्ञा । असुं प्राणवातमन्वातिष्ठत । घर्मं चादित्यमन्वातिष्ठत । स्वर्द्युलोकमन्वातिष्ठत । यस्य यत्र गृहा इत्यभिप्रायः ॥ १९ ॥

**म०** अथ पञ्चमो मन्त्रः । आग्नेयी त्रिष्टुप् । इदानीं देवान् विसृजति । हे अग्ने, हे देव दीप्यमान, उशतो हवींषि कामयमानान् यान्देवान् त्वमावहः आहूतवानसि तान् देवान् स्वे स्वकीये सधस्थे सहनिवासस्थाने प्रेरय प्रस्थापय सह तिष्ठन्ति यस्मिन् तत्सधस्थम् 'सधमादस्थयोश्छन्दसि' ( पा० ६ । ३ ९६ ) इति स्थे परे सहस्य सधादेशः । किमुक्त्वा प्रेरयामीति चेत् अत आह । हे देवाः, विश्वे सर्वे यूयं जक्षिवांसः 'घस्लृ अदने' 'क्वसुश्च' ( पा० ३ । २ । १०७ ) इति क्वसुः । 'वस्वेकाजाद्घसाम्' ( पा० ७ । २ । ६७ ) इतीट् । सवनीयपशुपुरोडाशान् भक्षितवन्तः । तथा पपिवांसः सोमपानं कृतवन्तश्चेदानीं यज्ञसमाप्तौ असुं हिरण्यगर्भप्राणलक्षणं वायुं वायुमण्डलमित्यर्थः । घर्ममादित्यमण्डलं वा स्वः द्युलोकं वा अन्वा-

तिष्ठत आश्रयत । यस्य यस्य यत्र गृहाः सन्ति तांस्तानन्वातिष्ठते-त्यर्थः । 'छन्दसि परेऽपि' ( पा० १।४।८१ ) इति अनोः क्रियापदात्परत्वम् । स्वाहा सुहुतमस्तु हविः ॥ १९ ॥

## विंशी ।

वयꣳहि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृ-णीमहीह । ऋधगया ऋधगुताशमिष्ठाः प्रजानन्य-ज्ञमुपयाहि विद्वान्स्वाहा ॥ २० ॥

**उ०** वयꣳहि त्वा । अग्निं व्यवसृजति । वयमेव त्वां प्रयति प्रगच्छति प्रारभ्यमाणे यज्ञे अस्मिन् हे अग्ने । होता-रमवृणीमहि वृतवन्तः । इह मन्त्रे अग्निर्देवो होतेति । त्वं च वृतः सन् ऋधगयाः । ऋध्नोतेः पूर्वं पदं, यजतेरुत्तरं पदम् । ऋध्नुवन्नयाक्षीः समर्धयन्निष्टवानसि । किंच ऋधगु-ताशमिष्ठाः । उत अपि च ऋध्नुवन्नेव यज्ञप्रायश्चित्तं शमि-तवानसि । इदानीं प्रजानन्यज्ञपरिसमाप्तिं गृहमुपयाहि । विद्वान् जानानः स्वमधिकारम् ॥ २० ॥

**म०** अथ षष्ठः । आग्नेयी त्रिष्टुप् इदानीमग्निं विसृजति । हे अग्ने, हि यस्मात्कारणादिहास्मिन् दिने स्थाने वा अस्मिन् यज्ञे प्रयति प्रवर्तमाने सति होतारं देवानामाह्वातारं होम-निष्पादकं वा त्वा त्वां वयमवृणीमहि वृतवन्तः । 'अग्निर्वै दैव्यो होते'ति श्रुतेः तस्मात्कारणाद्वृतस्त्वमृधक् समृद्धं यथा भवति तथा अयाः । यद्वा ऋध्नोतीति ऋधक् ऋध्नुवन् यज्ञं समर्धयन्सन् अयाः अयाक्षीः इष्टवानसि । यज्ञं कारितवानसीत्यर्थः । यज-तेश्लिलोपे यकारस्य छान्दसं रुत्वम् । उतापि च ऋधक् ऋध्नु-वन्नेव अशमिष्ठाः यज्ञप्रायश्चित्तं शमितवानसि विघ्नशान्तिं वा अकार्षीः स त्वमिदानीं यज्ञं प्रजानन् यज्ञं समाप्तमवगच्छन् उपयाहि स्वगृहं गच्छ । किंभूतस्त्वम् विद्वान्पण्डितः स्वाधिकारं जानन्नित्यर्थः । स्वाहा तुभ्यं सुहुतमस्तु ॥ २० ॥

## एकविंशी ।

देवा गातुविदो गातुं वित्त्वा गातुमित । मनस-स्पत इमं देव यज्ञꣳस्वाहा वाते धाः ॥ २१ ॥

**उ०** देवागातुविद इति व्याख्यातम् ॥ २१ ॥

**म०** अथ सप्तमः । वातदेवत्या विराट् मनसस्पतिदृष्टा व्याख्यातापि ( अध्या० २ क० २१ ) उच्यते । 'कै गै शब्दे' गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यत इति गातुर्यज्ञस्तं विदन्ति जानन्तीति गातुविदः तादृशा हे देवाः, गातुं वित्त्वा अस्मदीयो यज्ञः प्रवृत्त इति विदित्वा गातुमित यज्ञं गच्छत । यद्वा गातुं वित्त्वा यज्ञं समाप्तं विदित्वा गातुमित । 'गाङ् गतौ' गायते गम्यते यत्र स गातुर्मार्गस्तं गच्छत यज्ञं समाप्तं मत्वा यज्ञेन तुष्टाः सन्तः स्वकीयं मार्गं गच्छत । एवं देवानुक्त्वा प्रजापतिमाह । हे मनसस्पते, अस्मदीयस्य मनसो यष्टुं प्रेरणेन पालक परमेश्वर हे देव, इममनुष्ठितं यज्ञं स्वाहा त्वदुक्ते दधामि । त्वं च वाते धाः वायुरूपे देवे यज्ञं धेहि स्थापय ॥ २१ ॥

## द्वाविंशी ।

यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा । एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्व-वीरस्तं जुषस्व स्वाहा ॥ २२ ॥

**उ०** यज्ञं विसृजति । यज्ञ यज्ञं गच्छ । हे यज्ञ, यज्ञ-मेव त्वं गच्छ । नहि त्वत्तोऽन्यदस्ति सर्वात्मनाहि त्वमित्यभि-प्रायः । यज्ञपतिं यजमानं गच्छ स्वां च योनिं गच्छ । द्रव्यं देवता हि यज्ञस्य स्वा योनिः । एष ते यज्ञः । अयं तव शरीरभूतो यज्ञः संस्कृतः ऋत्विग्भिः । हे यज्ञपते, सह सूक्त-वाकः साङ्गः सर्वशरीरः सर्वैर्वीरैरुपेतः । सोमः पशुः स-वनीयाश्च पुरोडाशा वीरा उच्यन्ते । तं च जुषस्व आ-सेवस्व ॥ २२ ॥

**म०** अथाष्टमः । यज्ञदैवतं यजुः । यज्ञं विसृजति । हे यज्ञ, त्वं यज्ञं गच्छ स्वप्रतिष्ठार्थं यज्ञनामकं विष्णुं गच्छ । यज्ञ-पतिं यजमानं गच्छ । फलप्रदानेन यजमानं प्राप्नुहीत्यर्थः । स्वां योनिं गच्छ । स्वनिष्पत्त्यर्थं स्वां योनिं स्वकारणभूतां वायोः क्रियाशक्तिं गच्छ । द्रव्यं देवता च यज्ञस्य योनिः सर्वात्मा त्वमिति भावः । स्वाहा सुहुतमस्तु । अथ नवमः समिष्टयजु-र्मन्त्रः । यज्ञपतिदैवतम् । हे यज्ञपते यजमान, एषोऽनुष्ठीय-मानो यज्ञस्ते तव त्वदीयोऽस्ति । कीदृशः सहसूक्तवाकः सूक्तवाकैः स्तोत्रैः सहितः । तथा सर्ववीरः सर्वे वीरा यस्मिन् स तथा सोमः पशुः । सवनीयचरुपुरोडाशा वीरा उच्यन्ते तैः सहितः य ईदृशस्तं यज्ञं जुषस्व फलभोगेन सेवस्व । स्वाहा सुहुतमस्तु ॥ २२ ॥

## त्रयोविंशी ।

माहिर्भूर्मा पृदाकुः । उरुꣳहि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधात-वेऽकरुतापवक्ता हृदयाविधश्चित् । नमो वरुणायाभि-ष्ठितो वरुणस्य पाशः ॥ २३ ॥

**उ०** कृष्णविषाणमेखले चात्वाले प्रास्यति । माहिर्भूः । व्याख्यातम् । आपोऽवक्रमयन्वाचयति । उरुꣳहि । वारुणी त्रिष्टुप् । एकं तावद् उरुं विस्तीर्णं हि अतिशयेन राजा वरुणः चकार कृतवान् । सूर्याय । षष्ठ्यर्थे चतुर्थी । सूर्यस्य पन्थानम् । अन्वेतवाउ अन्वेतवान् अन्वहमागमनाय । अपरम् । अपदे पादा प्रतिधातवेऽकः । यत्र पदं दत्तं प्रतिमुद्रान्यायेन नो-पलक्ष्यते तस्मिन् पदे पथि अन्तरिक्षलोके पादा पादानाम् । षष्ठीबहुवचनस्थाने आकारः । प्रतिधातवे प्रतिनिधाय अकः कृतवान् आलम्बनमिति शेषः । सूर्यस्यैव । उतापवक्ता हृदया-

विधश्चित् । उत अपिच । अपवक्ता अपवदिता आक्षेसा हृदयाविधश्चित् । चिच्छब्दोऽप्यर्थे । हृदयं यो विध्यति मर्माण्युच्चार्योच्चार्य पिशुनः तस्याप्यपवदिता किमुतान्येषामत्युक्तकारिणामिति । य इत्थंभूतो वरुणः सोऽवभृथाय तीर्थं ददात्विति शेषः । अपोवक्रमयन्वाचयति । नमो वरुणाय । अधिष्ठितः आक्रान्तः वरुणस्य पाशो नालं बन्धनाय ॥ २३ ॥

**म०** 'कृष्णविषाणमेखले चात्वाले प्रास्यति माहिर्भूरिति' ( का० १० । ८ । १३ ) । यजमानहस्तस्थं मृगशृङ्गं मध्ये बद्धा मेखला चेत्युभे विस्रस्य चात्वाले क्षिपेत् । रज्जुदेवत्यम् । हे रज्जो, त्वमहिः सर्पो मा भूः । पृदाकुः अजगरः सर्पविशेषः सोऽपि मा भूः । 'उरुꣳहीति वाचयतीति' ( का० १० । ८ । १५ ) । अवभृथाय जिगमिषुरध्वर्युश्चात्वालसमीपस्थं प्राङ्मुखं यजमानं वाचयेत् । वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा । उशब्दोऽवधारणे । वरुण एव राजा सूर्याय अन्वेतवै । षष्ठ्यर्थे चतुर्थी । सूर्यस्यान्वेतुमनुक्रमेणान्वहं गन्तुं हि यस्मात् उरुं विस्तीर्णं पन्थां पन्थानं मार्गं चकार । क अपदे नास्ति पदं यस्मिन् यत्र दत्तं पदं प्रतिमुद्रितं न भवति तस्मिन्नन्तरिक्षे मार्गं कृतवानित्यर्थः । तस्मादस्माकमपि अपदे अन्तरिक्षे पादा प्रतिधातवे पादौ निक्षेप्तुं । विभक्तेराकारः । मार्गं कः करोतु । स्वर्गगमनाय मार्गं करोत्वित्यर्थः । करोतेरदादित्वेन लङि शपो लुक् अडभाव आर्षः । किंच यो वरुणः उतापिच हृदयाविधश्चिदपवक्ता हृदयं विध्यति मर्मोच्चारणेन पीडयति हृदयवित् 'नहिवृतिवृषि–' ( पा० ६ । ३ । ११६ ) इत्यादिना क्विबन्ते व्यधौ परे हृदयस्य दीर्घः । तस्य हृदयाविधः पिशुनस्यापि अपवदिता चिच्छब्दोऽप्यर्थे । निन्दकस्यापि तिरस्कर्ता किमुतान्येषां पापकारिणामित्यर्थः । ईदृशो वरुणोऽवभृथाय मार्गं ददात्वित्यर्थः । अन्वेतवै प्रतिधातवे । अनुपूर्वादिणः प्रतिपूर्वाद्दधातेश्च 'तुमर्थे सेसे–' (पा० ३।४।९ ) इत्यादिना क्रमात्तवैतवेप्रत्ययौ 'नमो वरुणायेति वाचयत्यपोऽवक्रमयन्निति' ( का० १० । ८ । २१ ) । अवभृथस्नानार्थमपः प्रवेशयन्यजमानं वाचयेत् । वारुणं यजुः । वरुणस्य पाशोऽभिष्ठितः आक्रान्तस्तस्मान्न बन्धनक्षमस्तस्मै वरुणाय नमो नमस्कारोऽस्त्विति शेषः ॥ २३ ॥

## चतुर्विंशी ।

अ॒ग्नेरनी॑कम॒प आवि॑वेशा॒पांनपा॑त्प्रति॒रक्ष॑न्नसु॒र्य॑म् । दमे॑दमे स॒मिधं॑ यक्ष्यग्ने॒ प्रति॑ ते जि॒ह्वा घृ॒तमुच्च॑रण्य॒त्स्वाहा॑ ॥ २४ ॥

**उ०** समिधं प्रास्याभिजुहोति । अग्नेरनीकम् । आग्नेयी त्रिष्टुप् । अग्नेरनीकमिति परोक्षलिङ्गम् । दमेदमे समिधं यक्ष्यग्ने । प्रत्यक्षं लिङ्गमेवास्मिन्वाक्ये अत एवं व्याख्यायते । यस्य तवाग्नेः सतः अनीकं सुखम् । अप उदकमाविवेश प्रविवेश प्रविष्टम् । अपान्नपात्संज्ञकं प्रति रक्षत् असुर्यम् असुरस्य स्वं मायादिकम् । स त्वमिदानीं दमेदमे । दम इति गृहनाम । यज्ञगृहे यज्ञगृहे । अश्वमेधविषया वीप्सा । तत्र हि नानावभृथान्यहानि भवन्ति । समिधं यक्षि यजति । यजतिः संगतिकरणार्थः । समिधं संगतां कुरु आत्मसात्कुरु । ततोऽनन्तरं हुतं प्रति ते तव जिह्वा ज्वालाउच्चरण्यत् उच्चरन्तु समिधः सकाशात् ॥ २४ ॥

**म०** 'प्रास्य समिधं चतुर्गृहीतेनाभिजुहोति अग्नेरनीकमिति' ( का०१० । ८ । २२ ) । अप्सु समिधं प्रक्षिप्य चतुर्गृहीतेनाज्येन तदुपरि जुहुयात् । अग्निदेवत्या त्रिष्टुप् । अग्नेरनीकमिति परोक्षलिङ्गं समिधं यक्ष्यग्न इति प्रत्यक्षलिङ्गमेकस्मिन्वाक्ये त्वसङ्गतमतो यच्छब्दाध्याहारेण योज्यम् । हे अग्ने, यस्य तवाग्नेः अङ्गनशीलस्य सतोऽपान्नपात्संज्ञमनीकं मुखमप उदकान्याविवेश आभिमुख्येन प्रविवेश हे अग्ने, स त्वं दमेदमे तत्तद्यज्ञगृहे असुर्यमसुरैः कृतं यज्ञविघ्नं प्रतिरक्षन्निवर्तयन्सन् समिधं समिन्धनसाधनं घृतं यक्षि यज सङ्गतं कुरु । यजतिः सङ्गतिकरणार्थः शपो लुकि लटि रूपम् । घृतमात्मसङ्गतं कुर्वित्यर्थः । ततोऽनन्तरं ते तव जिह्वा ज्वाला घृतं प्रति उच्चरण्यत् उच्चरतु उद्युक्तास्तु । स्वाहा सुहुतमस्तु । दमेदमे इति वीप्साश्वमेधविषया । तत्र हि नानावभृथान्यहानि भवन्ति । उत्पूर्वाच्चरतेर्लोडर्थे न्यत्प्रत्यय औणादिकः ॥ २४ ॥

## पञ्चविंशी ।

स॒मु॒द्रे ते॒ हृद॑यम॒प्स्व॒न्तः सं त्वा॑ विश॒न्त्वोष॑धीरु॒तापः॑ । य॒ज्ञस्य॑ त्वा यज्ञपते सू॒क्तोक्तौ॑ नमोवा॒के वि॑धेम॒ यत्स्वाहा॑ ॥ २५ ॥

**उ०** ऋजीषकुम्भं प्लावयति । समुद्रे ते । सौमी विराट् । यदित्ययं निपातो हृदयशब्देन सह संबध्यते समानलिङ्गत्वात् । यद्धृदयं समुद्रे ते तव अप्सु अन्तः अपां च अन्तर्मध्ये वर्तते तत्र त्वां गमयामि । तत्रस्थं च त्वां संविशन्तु ओषधीः । उत अपि च आपः । किंच यज्ञस्य च सूक्तोक्तौ शोभनवचनोच्चारणेन नमोवाकेन नमस्कारवचनेन च विधेम । विधतिः स्थापनार्थः । हे यज्ञपते सोम ॥ २५ ॥

**म०** 'समुद्रे त इति ऋजीषकुम्भं प्लावयतीति' ( का० १० ९ । १ ) । गतसारः सोम ऋजीषस्तेन पूर्णं कुम्भमप्सु क्षिपेत् । सोमदेवत्या विराट् दशाक्षरचतुःपादा । अन्ते वर्तमानो यच्छब्दो हृदयेन संबध्यते । हे सोम, यत्ते तव हृदयं समुद्रे अप्सु समुद्रसमानासु अप्सु बहुलोदकेषु अन्तर्मध्ये तिष्ठते वर्तत इति वा शेषः । तत्र त्वां गमयामीति शेषः । तत्रस्थं त्वा त्वामोषधीरोषधयः संविशन्तु । उत अपि च आपो जलानि त्वां संविशन्तु । किंच हे यज्ञपते, यज्ञस्य पालक सोम, यज्ञस्य सूक्तोक्तौ शोभनवचनोच्चारणे नमोवाके नमसो वाके नमस्कारवचने च त्वा त्वां विधेम स्थापयामः । विधतिः स्थापनार्थः । स्वाहा सुहुतमस्तु ॥ २५ ॥

## षड्विंशी ।

देवी॑राप एष वो॒ गर्भ॒स्तᳯं सुप्री॑तᳯं सुभृ॑तं बिभृत । देव॑ सोमैष ते॒ लो॒कस्तस्मि॒ञ्छं च॒ वक्ष्व॒ परि॑ च वक्ष्व ॥ २६ ॥

**उ०** विसृज्योपतिष्ठते । देवीरापः । पङ्क्तिर्वा बृहती वा । अपां च सोमस्य च संगतिं वदति । हे देव्य आपः, एष सोमो वः युष्माकं गर्भो वर्तते । तं सुप्रीतं साधुतर्पितम् । सुभृतं सुपुष्टम् बिभृत धारयत । हे देव सोम, एष ते लोकः स्थानं तस्मिन्नवस्थितः शं च वक्ष्व परि च वक्ष्व शं सुखमस्मान् प्रति वह प्रापय । परिवह च अस्मत्तः सर्वा आर्तीः तस्मिन्नः शं चैधि । सर्वाभ्यश्च न आर्तिभ्यो गोपायेति श्रुतिः ॥ २६ ॥

**म०** 'देवीराप इति विसृज्योपतिष्ठत इति' ( का० १० । ९ । २ ) । ऋजीषकुम्भमुक्तोपस्थानं कुर्यात् । अष्टत्रिंशदक्षरत्वात्पङ्क्तिर्बृहती वा । पूर्वार्धमब्देवतमुत्तरार्धं सोमदेवतम् । हे देवीर्देव्यः हे आपः, वो युष्माकमेष सोमो गर्भस्थानीयः तं तादृशं सोमं यूयं बिभृत धारयत । किंभूतं तम् । सुप्रीतं शोभनप्रीतियुक्तं साधुतर्पितं वा तथा सुभृतं सुपुष्टम् । इदानीं सोमं वदति । हे सोम, हे देव दीप्यमान, ते तव एष जललक्षणो लोकः स्थानं तस्मिन्नवस्थितः सन् त्वं शं वक्ष्व वह शं सुखं प्रतिप्रापय परिवक्ष्व च परिवह निवर्तय अस्मत्तः सर्वा आर्तीरिति शेषः । 'तस्मिन्नः शं चैधि सर्वाभ्यश्च न आर्तिभ्यो गोपाय' ( ४ । ४ । ५ । २१ ) वहतेर्लोट् मध्यमैकवचने तङि शपि लुप्ते रूपं वक्ष्वेति ॥ २६ ॥

## सप्तविंशी ।

अव॑भृथ निचुम्पुण निचे॒रुर॑सि निचुम्पु॒णः । अव॑ दे॒वैर्दे॒वकृ॑त॒मेनो॑ऽयासिष॒मव॒ मर्त्यै॒र्मर्त्य॑कृतं पु॒रु॒राव्णो॑ देव रि॒षस्पा॑हि । दे॒वाना॑ᳯं स॒मिद॑सि ॥२७॥

**उ०** मज्जति । अवभृथेति । व्याख्यातम् । समिधमादधाति । देवानाम् दैवीभूतानामस्माकं समिन्धनं त्वं भवसि ॥ २७ ॥

**म०** 'अवभृथेति मज्जयतीति' ( का० १० । ९ । ३ ) । ऋजीषकुम्भं जले प्रवेशयेत् । यज्ञदैवतम् । अवाचीनानि पात्राणि जलमध्ये भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽवभृथः तत्संबोधनं हे अवभृथ, त्वं निचुम्पुण नितरां मन्दं गच्छ । 'चुपि मन्दायां गतौ' इति धातोः । यद्यपि त्वं निचेरुरसि नितरां चरणशीलोऽसि तथाप्यत्र निचुम्पुणं नितरां मन्दं गच्छ । किं प्रयोजनमिति चेत् उच्यते । देवैर्द्योतनात्मकैरस्मदीयैरिन्द्रियैर्देवकृतं देवेषु हविःस्वामिषु कृतमेनः पापं यदस्ति तदवयासिषं जले अवनीतवानस्मि । 'देवः सुरे धने राज्ञि देवमाख्यातमिन्द्रिय'मित्यभिधानात् । तथा मर्त्यैर्मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदप्यहमवायासिषमित्यनुवर्तते । इदमस्माभिः परित्यक्तमेनो यथा त्वां न प्राप्नोति तथा हे यज्ञ, मन्दं गच्छेति भावः । किंच हे देवावभृथाख्य यज्ञ, रिषः वधात्पाहि अस्मान्पालय । 'रिष वधे' क्विप् । किंभूताद्रिषः । पुरुराव्णः पुरु बहु विरुद्धं फलं राति ददातीति पुरुरावा । 'रा दाने' 'आतो मनिन्–' ( पा० ३ । २ । ७४ ) इत्यादिना वनिप् । विरुद्धफलदायी वधः त्वत्प्रसादादस्माकं मा भूदित्यर्थः । 'आहवनीये समिदाधानं देवानाᳯंसमिदसीति' (का० ५ । ५ । ३५) । स्नानानन्तरमाहवनीयमेत्य तस्मिन्समिधं दध्यात् । अग्निदेवतं यजुः । देवानां संबन्धिनी समित् इन्धनमसि । यद्वा । देवभूतानामस्माकं समिन्धनं भवसि ॥ २७ ॥

इतः परमनुबन्ध्यायां गर्भिण्यां प्रायश्चित्तं कथ्यते ॥

## अष्टाविंशी ।

एज॑तु दश॑मास्यो गर्भो॑ ज॒रायु॑णा स॒ह । यथा॒यं वा॒युरेज॑ति॒ यथा॑ समु॒द्र एज॑ति । ए॒वायं दश॑मास्यो॒ अस्र॑ज्ज॒रायु॑णा स॒ह ॥ २८ ॥

**उ०** इत उत्तरमनूबन्ध्या यदि गर्भिणी स्यात्तत्र प्रायश्चित्तिरुच्यते । त्र्यवसाना महापङ्क्तिः । एजतु दशमास्यः एजतु चलतु । 'एजृ कम्पने' । दशमासकालावच्छिन्न इव गर्भो जरायुणा सह । जरायुर्गर्भवेष्टनम् । कथं चलतु इत्यत उपमया दर्शयति । यथायं वायुरेजति यथा च समुद्रश्चलति । एतौ हि सदा चलनौ । एवमयं दशमास्यः । 'तमेतदथ दशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोतीति' श्रुतिः । अस्रत् । स्रंसतेरेतद्रूपं स्रवतेर्वा । स्रंसतु स्रवतु वा । जरायुणा सह अस्रद् अपसरतु गर्भो वेष्टनेन सह ॥ २८ ॥

**म०** 'निरुह्यमाणमभिमन्त्रयत एजतु दशमास्य इति' (का० २५ । १० । ७ ) । यद्यनूबन्ध्या वशा गर्भिणी स्यात्तदा विशसने मातुः सकाशात्पृथक् क्रियमाणं गर्भमभिमन्त्रयेत । अवसानत्रययुक्ता गर्भदेवत्या महापङ्क्तिः । अष्टाक्षराः षट् पादा यस्याः सा महापङ्क्तिः । गर्भः जरायुणा सह एजतु । 'एजृ कम्पने' । जरायुर्गर्भवेष्टनं तेन सह कम्पतां चलतु । किंभूतो गर्भः । दशमास्यः दश मासा जाता यस्य सः । दशमासकालावच्छिन्न इव चलत्वित्यर्थः । कथं चलतु तत्राह । यथा येन प्रकारेणायं वायुरेजति चलति यथा च समुद्र एजति । एतौ हि सदा कम्पनशीलौ । एवेति निपात एवमर्थे । एवमयं दशमास्यः संपूर्णावयवो गर्भो जरायुणा सह अस्रत्स्रंसतां निर्गच्छतु । यद्यप्ययं गर्भो दशमास्यो नास्ति तथापि संपूर्णस्येव निर्गमनमाशास्यते । 'तमेतदप्यदशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति' (४ । ५ । २ । ४) इति श्रुतेः 'स्रंस अधःपतने' व्यत्ययेन परस्मैपदे शपो लुकि च कृते 'हल्ङ्याब्भ्यः–' (पा० ६ । १ । ६८ ) इति तिपि लुप्ते 'वावसाने' ( पा० ८ । ४ । ५६ )

इति सस्य दत्वे 'अनिदिताम्–' (पा० ६।४।२४) इति नलोपे अडागमे च असदिति रूपम् ॥ २८ ॥

## एकोनत्रिंशी ।

यस्यै ते यज्ञियो गर्भो यस्यै योनिर्हिरण्ययी । अङ्गान्यह्रुता यस्य तं मात्रा समजीगमꣳ स्वाहा २९

उ० अवदानान्यनुजुहोति । यस्यै ते यज्ञियः । अनुष्टुप् वशोच्यते । यस्यास्ते तव यज्ञियो गर्भः यज्ञार्हो गर्भः यस्याश्च तव योनिर्हिरण्ययी क्रियते ब्रह्मणा यजुषा तां त्वां गर्भेण संगमयामि । यस्य च गर्भस्य अङ्गानि अह्रुता अह्रुतानि अनवखण्डितानि । 'ह्रुह्वरेश्छन्दसी'ति ह्रुरादेशः । तं गर्भं मात्रा अनूबन्ध्यालक्षणया समजीगमं संगमयामि ॥ २९ ॥

म० 'अवदानान्यनुजुहोति यस्यै त इति' (का० २५।१०।११)। वशावदानानि हुत्वा गर्भरक्तं जुहुयात् । वशादेवत्यानुष्टुप् । हे वशे, यस्यास्ते तव गर्भो यज्ञियः यज्ञार्हः यस्यै यस्याश्च तव योनिर्हिरण्ययी सुवर्णमयी 'ऋत्व्यवास्त्व्य–' (पा० ६।४।१७५) इति निपातः । सुवर्णमयी मन्त्रेण क्रियत इत्यर्थः । तादृशीं त्वां गर्भेण सङ्गमयामीति शेषः । यस्य गर्भस्याङ्गान्यह्रुता । 'ह्वृ कौटिल्ये' 'ह्रुह्वरेश्छन्दसि' (पा०७।२।३१) इति ह्रुरादेशो निष्ठायामकुटिलानि अखण्डितानि तं गर्भं मात्रा जनन्यानूबन्ध्यालक्षणया समजीगमं सङ्गमयामि । गमेर्ण्यन्तस्य लुङि चङि रूपम् । स्वाहेति होमार्थः ॥ २९ ॥

## त्रिंशी ।

पुरुदस्मो विषुरूप इन्दुरन्तर्महिमानमानञ्ज धीरः । एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्ताꣳ स्वाहा ॥ ३० ॥

उ० अध्वर्योरनुहोममेधं जुहोति । गर्भः स्तूयते इन्दुसंस्तवेन । पुरुदस्मो बहुदानः । विषुरूपः बहुरूपो हि गर्भो भवति । इन्दुः सोमः । पशोर्हि सोमसंस्तवो विद्यते । अन्तरुदरे व्यवस्थितो महिमानं महाभाग्यम् आनञ्ज । अञ्जतेर्व्यक्तीकरणार्थस्यैतद्रूपम् । व्यक्तीकरोति । धीरः मेधावी । इत्थंभूतं महिमानमानञ्ज धीरो येन एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीमपि वशामवगणयित्वा भूतरूपेण भुवनानि भूतजातानि अनुप्रथन्ताम् । वशाया अङ्गमनुप्रथयते वृद्धिरेवं भूतानां भविष्यतीत्यभिप्रायः । कथमियं वशा चतुष्पदी सती एकपद्यादिभेदैरुच्यते । अवद्युत्य स्तूयत इति ब्रूमः । वशैत्येकपदी, वपया अङ्गैश्च द्विपदी, उपयट् होमैश्च त्रिपदी चतुष्पदी पत्नीसंयाजैश्चतुर्भिर्वा पादैः । अष्टापदी तु गर्भसंबन्धिभिः पादैः ॥ ३० ॥

म० 'स्विष्टकृतमनुजुहोति पुरुदस्म इति' (का० २५।१०।१५)। प्रचरण्यां स्रुचि प्रतिप्रस्थाता सर्वं गर्भरसमवदायाध्वर्युणा स्विष्टकृद्धोमे कृते सति जुहुयात् ॥ गर्भदैवत्यं यजुः । इन्दुरूपेण गर्भः स्तूयते । इन्दुः क्लेदनरूपः सोमसदृशो गर्भो महिमानं महत्त्वमानञ्ज व्यक्तीकरोतु । अञ्जतेर्व्यक्तीकरणार्थस्य लिटि रूपम् 'तस्मान्नुड् द्विहलः' (पा० ७।४।७१) इति नुडागमः । विशेषणैर्महिमानमाह । कीदृश इन्दुः । पुरुदस्मः पुरु दस्म यस्य बहुदानयुक्तः । विषुरूपः बहुरूपः अन्तरुदरे स्थितः धीरो मेधावी एवंभूतं महिमानमानञ्जेत्यर्थः । एवं महिमवतो गर्भस्य मातरमनूबन्ध्यां भुवना भुवनानि भूतजातानि अनुप्रथन्तां प्रख्यातां कुर्वन्तु।विशेषणैः प्रख्यातिमाह कीदृशीम्। एकपदीमेकं पदं यस्यास्तां वपयैकपदयुताम् । द्विपदीं वपया अङ्गैश्च द्विपदयुताम् । त्रिपदीं त्रीणि पदानि यस्यास्तामुपयड्ढोमैस्त्रिपदीं । चतुष्पदीं पत्नीसंयाजैश्चतुर्भिः पादैर्वा चतुःपादयुताम् । अष्टापदीं स्वपादैर्गर्भपादैश्चाष्टपादयुताम् एवंभूतां वशां गणयित्वा भूतान्यनुप्रथन्तामिति संबन्धः । स्वाहा सुहुतमस्तु ॥ ३० ॥

## एकत्रिंशी ।

मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥ ३१ ॥

उ० जुहोति मरुतो यस्य । मारुती गायत्री । मरुतः यस्य क्षये निवासगृहे । 'क्षयो निवास' इत्याद्युदात्तः। पाथ 'पा पाने' शपो लुप् । पिबथ पानादीन्कुरुथ । हे दिवोविमहसः द्युलोकस्य महयितारः पूजयितारः । ससुगोपातमोजनः ससुगुप्ततमो यजमानजनः । युष्मद्गुप्तानां न भयमस्तीत्यभिप्रायः ॥ ३१ ॥

म० 'समिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृतेति' (का० २५।१०।१८)। समिष्टयजुर्होमान्ते शामित्राग्नावेव स्वाहान्तेन मन्त्रेणोष्णीषवेष्टितं गर्भं जुहोति मन्त्रान्ते स्वाहाकारमनुच्चार्य जुहुयादित्यर्थः । मरुद्देवत्या गायत्री गोतमदृष्टा । हे दिवो विमहसः विशिष्टं महो येषां ते द्युलोकसंबन्धिना विशिष्टेन महसा तेजसा युक्ताः । यद्वा विशिष्टं महन्ति पूजयन्ति ते विमहसः द्युलोकस्य पूजयितारो हे मरुतः, यस्य यजमानस्य क्षये यज्ञगृहे यूयं पाथ सोमपानं कुरुथ । 'पा पाने' शपो लुक् पिबादेशाभावश्च छान्दसः संहितायां दीर्घः 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति सूत्रेण । हि निश्चितं स जनः यजमानाख्यः सुगोपातमः गोपायतीति गोपा रक्षकः अत्यन्तं शोभनो गोपा यस्य स सुगोपातमः युष्मद्गुप्तानां भयं नास्तीत्यर्थः ॥ ३१ ॥

## द्वात्रिंशी ।

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ ३२ ॥

उ० अङ्गैरभिसमूहति महीद्यौः द्यावापृथिव्यौ गायत्री । महती द्यौः पृथिवी च नः अस्माकमिमं यज्ञं मिमिक्षताम् । 'मिह सेचने' । सिञ्चतु स्वैः स्वैर्भागैः पिपृतां नः बिभृतां नः

अस्मान् भरीमभिः भरणैः हिरण्यपशुधान्यादिभिः। समाप्तोऽग्निष्टोमः ॥ ३२ ॥

**म०** 'मही द्यौरित्यङ्गारैरभ्यूहतीति' (का० २५।१०।१८)। शामित्रे क्षिप्तं गर्भमङ्गारैश्छादयेत्। द्यावापृथिवीदेवत्या गायत्री मेधातिथिदृष्टा। मही महती द्यौः द्युलोकः पृथिवी भूलोकश्च नोऽस्माकमिमं यज्ञं मिमिक्षताम्। 'मिह सेचने' सनन्तः सेक्तुमिच्छतां। स्वैःस्वैर्भागैः पूरयतामित्यर्थः। भरीमभिः भरणैर्हिरण्यपशुधान्यादिभिः स्वैः स्वैर्भागैर्नोऽस्मदीयं गृहं पिपृतां पूरयताम् ॥ ३२ ॥ इत्यग्निष्टोममन्त्राः समाप्ताः ॥

## त्रयस्त्रिंशी।

आति॑ष्ठ वृत्रह॒न्रथं॑ यु॒क्ता ते॒ ब्रह्म॑णा॒ हरी॑। अ॒र्वा॒ची॒नꣳसु ते॒ मनो॒ ग्रावा॑ कृणोतु व॒ग्नुना॑। उ॒प॒या॒मगृ॑ही॒तोसीन्द्रा॑य त्वा षोड॒शिन॑ ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा षोड॒शिने॑ ॥ ३३ ॥

**उ०** अथ षोडशी अग्नेपवस्वेत्येतस्मात्प्राक्। आतिष्ठ। तिस्र ऐन्द्योऽनुष्टुभः। आतिष्ठ अधितिष्ठ आरोह हे वृत्रहन् वृत्रस्य हन्तः, रथं युक्तौ ते तव ब्रह्मणा त्रयीलक्षणेन इन्द्रागच्छेत्यादिना हरी हरितवर्णावश्वौ। तौ हि आह्वानानीन्द्रस्योपश्रुत्य, प्राप्त आवयोर्नियोजनकाल इति मन्यमानौ स्वयमेवात्मानं रथे युञ्जाते अत एवमाह युक्ता ते ब्रह्मणा हरी इति। अथेदानीं रथारूढस्य अर्वाचीनम् अस्मदभिमुखम् सु साधु ते तव मनः हे इन्द्र, ग्रावा सोमाभिषवकारी कृणोतु करोतु वग्नुना वग्नुरिति वाङ्नामसु पठितम्। सोमाभिषवध्वनिना। उपयाम गृहीतोसीन्द्राय त्वा षोडशिनं गृह्णामि एष ते योनिः इन्द्राय त्वा षोडशिने ॥ ३३ ॥

**म०** अथ षोडशी अग्ने पवस्व (क० ३७) इत्यस्मात्प्राक् 'प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिनातिष्ठ युक्ष्वा हीति वेति' (का० १२।५।२)। प्रातःसवने आग्रयणग्रहणानन्तरमाग्नेयमतिग्राह्यमादाय चतुःकोणेन खादिरोलूखलेनातिष्ठ युक्ष्वा हीति मन्त्रयोरन्यतरेण सोपयामेन षोडशिग्रहं गृह्णीयात्। इन्द्रदेवत्यानुष्टुव् गोतमदृष्टा। हे वृत्रहन्निन्द्र। ते तव हरी हरितवर्णावश्वौ ब्रह्मणा त्रयीलक्षणेन इन्द्रागच्छेत्यादिमन्त्रेण युक्ता रथे संयुक्तौ अतस्त्वं रथमातिष्ठ आरोह। इन्द्राह्वानं श्रुत्वास्मन्नियोजनकालः प्राप्त इति मत्वाश्वौ स्वयमेव रथे युञ्जाते इति युक्ता इत्युक्तम्। किंच ग्रावा सोमाभिषवपाषाणः ते तव रथारूढस्य मनोऽर्वाचीनमस्मद्यज्ञाभिमुखं सु कृणोतु सुतरां करोतु। केन वग्नुना। वग्नुरिति वाङ्नामसु पठितम्। वाचा श्रवणीयेन सोमाभिषवशब्देन। हे सोम, उपयामेन गृहीतोऽसि षोडशिने। षोडशं स्तोत्रमस्यास्तीति षोडशी तस्मै इन्द्राय त्वा त्वां गृह्णामीति शेषः। सादयति हे ग्रह, एष ते योनिः स्थानं षोडशिन इन्द्राय त्वां सादयामीति शेषः ॥ ३३ ॥

## चतुस्त्रिंशी।

यु॒क्ष्वा हि के॒शिना॒ हरी॒ वृष॑णा कक्ष्य॒प्रा। अथा॑ न इन्द्र सोमपा गि॒रामुप॑श्रुतिं चर। उ॒प॒या॒मगृ॑ही॒तोऽसीन्द्रा॑य त्वा षोड॒शिन॑ ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा षोड॒शिने॑ ॥ ३४ ॥

**उ०** द्वितीयो ग्रहणमन्त्रः। युक्ष्वा हि। 'युजिर् योगे' युङ्ग्धि। हि यस्मात् केशिनौ प्रलम्बकेसरौ हरी हरितवर्णावश्वौ वृषणौ वर्षितारौ सेक्तारौ तरुणौ। कक्ष्यप्रा कक्ष्या अश्वस्य संनाहरज्जुः। 'प्रा पूरणे'। कक्ष्यां यावापूरयतः तावेवमुच्येते। तौ युक्त्वा रथे तमास्थाय। अथ समनन्तरमेव नोऽस्माकम् हे इन्द्र, सोमपाः सोमपानशीलः गिरामुपश्रुतिं चर स्तुतिलक्षणां गिरं वाचमुपश्रुत्य चर आगच्छास्मद्गृहम्। उपयामेत्यादि समानम् ॥ ३४ ॥

**म०** द्वितीयो ग्रहणमन्त्रः। इन्द्रदेवत्यानुष्टुव् मधुच्छन्दोदृष्टा। हे इन्द्र, हि निश्चितं हरी हरितवर्णौ त्वदीयावश्वौ युक्ष्व रथेन संयोजय। कीदृशौ हरी। केशिना प्रलम्बकेसरौ तथा वृषणा। 'वृष सेचने'। वृषणौ वर्षितारौ सेक्तारौ तरुणौ। 'वा षपूर्वस्य निगमे' (पा० ६।४।९) इति दीर्घाभावः। तथा कक्ष्यप्रा कक्षे भवः कक्ष्यः अश्वसन्नाहरज्जुः कक्ष्यं मध्यबन्धनं प्रातः पूरयतस्तौ कक्ष्यप्रौ स्थूलावयवावित्यर्थः। अथानन्तरं रथारोहणानन्तरं हे इन्द्र, सोमपाः सोमपानं कुर्वन्नोऽस्मदीयानां गिरामृग्यजुःसामलक्षणानां वाचामुपश्रुतिमुपश्रवणं चर गच्छ प्राप्नुहि। अस्मद्गिरः शृण्वित्यर्थः। वाचं श्रुत्वास्मद्गृहमागच्छेत्यर्थः। उपयाम एष ते एते व्याख्याते। अथेत्यत्र संहितायां दीर्घः ॥ ३४ ॥

## पञ्चत्रिंशी।

इन्द्र॒मिद्धरी॑ वह॒तोऽप्र॑तिधृष्टशवसम्। ऋषी॑णां च स्तु॒तीरुप॑ य॒ज्ञं च॒ मानु॑षाणाम्। उ॒प॒या॒मगृ॑ही॒तोऽसीन्द्रा॑य त्वा षोड॒शिन॑ ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा षोड॒शिने॑ ॥ ३५ ॥

**उ०** तृतीयो मन्त्रविकल्पः। इन्द्रमिद्धरी। इच्छब्द एवार्थे इन्द्रमेव हरितवर्णावश्वौ वहतः प्रापयतः। अत्र 'ऋक्सामे वै हरी' इति श्रुतेः द्विवचनान्तहरिशब्दस्य ऋक्सामवाचकत्वाद्धरितवर्णावश्वाविन्द्रमेनं वहतमिति व्याख्यानं न घटते। हरितवर्णयोर्ह्यश्वयोः सर्वत्र सुलभत्वात्। इन्द्राश्वयोश्च हरितवर्णत्वमप्रसिद्धम् 'मयूररोमभिः पृषती अभूताम्' इत्यादिश्रुतेर्दर्शनात्। 'पशवो वै देवानां छन्दाꣳसि' इत्यादिश्रुतिपर्यालोचनया नानावर्णच्छन्दोमये ऋक्सामे एवेन्द्रं वहत इति युक्तं नतु हरितवर्णावश्वौ। कथंभूतमिन्द्रम्। अप्रतिधृष्टशवसम् न प्रतिधर्षयितुं शक्यते शवो बलं यस्य स अप्र-

तिधृष्टशवाः तमप्रतिधृष्टशवसम् । क वहत इत्याह । ऋषीणां च वसिष्ठप्रभृतीनां च स्तुतीः उप समीपे । यज्ञं च मानुषाणाम् मनुष्याणां यजमानानामुप समीपे वहत इति वर्तते। उपयामेत्यादि समानव्याख्यानम् ॥ ३५ ॥

म० षोडशिग्रहे तृतीयो मन्त्रविकल्पः 'आग्रयणाद्वेन्द्रमिद्धरी इति गृहीत्वेति' कठसूत्रोक्तेः । इन्द्रदेवत्यानुष्टुब् गोतमदृष्टा । इत् एवार्थे । हरी हरितवर्णावश्वौ ऋषीणां स्तुतीरुप वसिष्ठादीनां मुनीनां स्तुतिसमीप इन्द्रमित् इन्द्रमेव वहतः प्रापयतः । च पुनः मानुषाणां यजमानानां यज्ञमुप यज्ञसमीपे च हरी इन्द्रं वहतः । किंभूतमिन्द्रम् । अप्रतिधृष्टशवसम् प्रतिधर्षयितुं पराभवितुं शक्यं प्रतिधृष्टं न प्रतिधृष्टमप्रतिधृष्टं शवो बलं यस्य सोऽप्रतिधृष्टशवास्तम् । उपयाम एष ते इति व्याख्याते ॥३५॥

## षट्त्रिंशी ।

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ ३६ ॥

उ० षोडशिग्रहमुपतिष्ठते । यस्मान्न जातः । त्रिष्टुप् । षोडशी परब्रह्मरूपेण स्तूयते । यस्मादन्यः पर उत्कृष्टो जातो देवो नास्ति न विद्यते महिम्नातश्चाविवेश आविशति भुवनानि भूतजातानि विश्वा विश्वानि सर्वाणि अन्तर्यामिरूपेण । तथाच श्रुतिः 'यः सर्वेषु भूतेषु तिष्ठति यश्च प्रजापतिर्भवति' इति। प्रजया संरराणः संरममाणः क्रीडन् । यश्च त्रीणि ज्योतींषि अग्निवायुसूर्यलक्षणानि सचते सेवते परमात्मरूपेण स षोडशीग्रहः ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानयुक्ता ॥ ३६ ॥

म० 'उपस्थायैनं यस्मान्न जात इति' ( का० १२।५।१९ ) । षोडशिग्रहमुपतिष्ठेत् । इन्द्रदेवत्या त्रिष्टुप् विवस्वदृष्टा। परब्रह्मरूपेण षोडशी स्तूयते । यस्मात्पुरुषादन्यो व्यतिरिक्तः परः उत्कृष्टो देवादिर्जातः संभूतो नास्ति न विद्यते यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आविवेश अन्तर्यामिरूपेण प्रविष्टवान्सः प्रजापतिः स्वोत्पन्नप्रजापालकस्त्रीणि ज्योतींषि अग्निवायुसूर्यलक्षणानि तेजांसि विषयज्ञापकानि सचते सेवते । स्वतेजसा तज्ज्योतिषामुज्जीवनं करोतीत्यर्थः । 'येन सूर्यस्तपति तेजसेद्धः' इत्यादिश्रुतेः । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' ( भ० गी० १५।१२) इति स्मृतेश्च । किंभूतः प्रजापतिः । प्रजया संरराणः प्रजारूपेण सम्यग्रममाणः । तथा षोडशी षोडशकलात्मकलिङ्गशरीरोपहितः स एव सर्वव्यवहाराश्रय इत्यर्थः । 'यः सर्वेषु भूतेषु तिष्ठन्नि'त्यादिश्रुतेः ॥३६॥

## सप्तत्रिंशी ।

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥३७॥

उ० षोडशिनं भक्षयति । इन्द्रश्च सम्राट् त्रिष्टुप् यजुरन्ता । सह प्राणेनेति यजुः । इन्द्रवरुणौ देवता षोडशीग्रहो वा । इन्द्रश्च सम्राट् यो वाजपेययाजी । वरुणश्च । चकारौ समुच्चयार्थीयौ । राजा यो राजसूययाजी । 'राजा वै राजसूयेनेष्ट्वा भवति सम्राट् वाजपेयेन' इति श्रुतिः । ताविन्द्रवरुणौ ते तव हे षोडशिग्रह, भक्षं चक्रतुः कृतवन्तौ । अग्रे प्रथमम् । एतमित्यस्य भक्षेण सह संबन्धः । तयोर्भक्षमनु कुर्वन्नहं भक्षं भक्षयामि । मदीयेन च भक्षणेन वाग्देवी जुषाणा सेवमाना सोमस्य तृप्यतु सह प्राणेन ॥ ३७ ॥

म० 'इन्द्रश्च सम्राडिति भक्षणमिति' । षोडशिग्रहं भक्षयेत् । इन्द्रवरुणदेवत्या षोडशिदेवत्या वा त्रिष्टुब् यजुरन्ता । अन्त्यपादौ द्वादशार्णौ सह प्राणेनेति यजुः विवस्वदृष्टा । हे षोडशिग्रह, तौ देवौ इन्द्रावरुणौ ते तव एतं सोममग्रे प्रथमं भक्षं चक्रतुः । तौ कौ । इन्द्रो वरुणश्च । चकारौ समुच्चये । किंभूत इन्द्रः । सम्राट् परमैश्वर्ययुक्तः वाजपेययाजीत्यर्थः । किंभूतो वरुणः । राजा राजसूययाजी 'राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन' (५।१।१।१३) इति श्रुतेः । तयोरिन्द्रावरुणयोः संबन्धिनं भक्षमनु पश्चात् अहम् भक्षयामि सोमं पिबामि । जुषाणा मदीयेन भक्षेण सेवमाना वाग्देवी सरस्वती प्राणेन प्राणदेवतया सह सोमस्य तृप्यतु सोमेन तृप्ता भवतु ।'तृप्त्यर्थानां करणे षष्ठी वे'ति सोमशब्दात् षष्ठी । स्वाहा सुहुतमस्तु ॥ ३७ ॥ इति षोडशियागः संपूर्णः ॥

## अष्टत्रिंशी ।

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ उपयामगृहीतोऽस्यग्नये त्वा वर्चसे एष ते योनिरग्नये त्वा वर्चसे । अग्ने वर्चस्विन्वर्चस्वांस्त्वं देवेष्वसि वर्चस्वानहं मनुष्येषु भूयासम् ॥ ३८ ॥

उ० अथातिग्रहपुरोरुचस्तिस्रो गायत्र्योऽग्नीन्द्रसूर्यदेवत्याः अग्ने पवस्व हे भगवन्नग्ने, पवस्व । पवतिः प्रवृत्त्यर्थोऽन्तर्भावितण्यर्थः । पवस्व प्रवर्तयस्व । यस्त्वं स्वपा सुकर्मा । अप इति कर्मनामसु पठितम् । अस्मे अस्मासु वर्चः ब्रह्मवर्चसम् । सुवीर्यं शोभनवीर्यम् । दधद्रयिं मयि पोषम् धारयन् स्थापयन् रयिं धनं मयि पोषं पुष्टिं च प्रवर्तयस्वेति संबन्धः । उपयाम गृहीतोसि अग्नये त्वा वर्चसे । एष ते योनिः अग्नये त्वा वर्चसे । व्याख्यातम् । भक्षमन्त्रः अग्ने वर्चस्विन् । हे अग्ने, वर्चस्विन् ब्रह्मवर्चसेन संयुक्त । यथा त्वं देवेष्वसि वर्चोयुक्तः एवमहं मनुष्येषु वर्चोयुक्तो भूयासं भवे-

यम् । स्वयंभूरसीत्येतस्मिन्मन्त्रे वर्चोदा असीति वर्चःशब्दो ब्रह्मवर्चसपर्यायो वर्णितः श्रुत्या 'तत्रैव ब्राह्मणेनेष्टव्यं यद्ब्रह्मवर्चसे स्यात्' इति ।अतोऽस्मिन्मन्त्रे वर्चश्शब्दो ब्रह्मवर्चसपर्यायो दर्शितः ॥ ३८ ॥

म० अथ द्वादशाहमन्त्राः । 'पृष्ठ्यः षडहस्तत्रातिग्राह्यग्रहणं त्र्यहे पूर्णेऽग्ने पवस्वोत्तिष्ठन्नदृश्रमित्यन्वहमेकैकम्' ( का० १२ । ३ । १—२ ) 'अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठेति भक्षणं यजमानैरिति' ( क० ६ ) अस्ति कश्चित् पृष्ठ्यः षडहाख्यः क्रतुः स तु षड्भिरहोभिर्निष्पाद्यः। तत्र पूर्वस्मिन्नहस्त्रये क्रमेणाग्ने पवस्वेत्यादिभिर्मन्त्रैरतिग्राह्यान्ग्रहान् गृह्णीयात्तथैवाग्ने वर्चस्विन्नित्यादिभिर्मन्त्रैस्तत्तद्ग्रहशेषं भक्षयेत् । तत्र प्रथमो यथा । अग्ने पवस्व । अग्निदेवत्या गायत्री वैखानसदृष्टा । आद्यौ सप्तार्णौ पादौ एषा यजुरन्ता । उपयाम एष त इति द्वे यजुषी । हे अग्ने, त्वमस्मे अस्मासु सुवीर्यं शोभनं वीर्यं यस्मिंस्तादृशं शोभनसामर्थ्यार्पितं वर्चो ब्रह्मवर्चसं पवस्व । पव गत्यर्थः अन्तर्भूतण्यर्थः। गमय प्रापय । 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति विभक्तेः शेआदेशे अस्मे इति रूपम् । किंभूतस्त्वम् । स्वपाः । अप इति कर्मनाम । शोभनान्यपांसि यस्य स स्वपाः सुकर्मा । एवमृत्विग्भिः सह संप्रार्थ्य स्वयं याचते । मयि यजमाने रयिं धनं दधत् धारयन् स्थापयन्सन् पोषं पुष्टिं पुत्रपश्वादिवृद्धिं पवस्व प्रवर्तयेति संबन्धः । उपयामयतीत्युपयामो ग्रहः हे सोम, तेन त्वं गृहीतोऽसि । हे ग्रह, वर्चसे वर्चस्विने तेजस्विनेऽग्नये त्वां गृह्णामीति शेषः । सादयति एष खरप्रदेशस्तव योनिः स्थानं वर्चस्विनेऽग्नये त्वां सादयामीति शेषः । भक्षणमन्त्रः । हे वर्चस्विन् विशिष्टतेजोयुक्त हे अग्ने, त्वं देवेषु इन्द्रादिषु मध्ये वर्चस्वानतिदीप्तिमानसि अतस्त्वत्प्रसादादहमपि मनुष्येषु मध्ये वर्चस्वान्ब्रह्मवर्चससंपन्नो भूयासं भवेयम्॥३८॥

## एकोनचत्वारिंशी ।

उत्तिष्ठन्नोज॑सा स॒ह पी॒त्वी शिप्रे॑ अवेपयः । सोम॑मिन्द्र च॒मूसु॑तम् । उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य॒ त्वौज॑स ए॒ष ते॒ योनि॒रिन्द्रा॑य॒ त्वौज॑से । इन्द्रौ॑जि॒ष्ठौजि॑ष्ठ॒स्त्वं दे॒वेष्व॒स्योजि॑ष्ठो॒ऽहं म॑नु॒ष्ये॒षु भूयासम् ॥३९॥

उ० उत्तिष्ठन्नोजसा । मातुरुत्सङ्गादुत्तिष्ठन् ओजसा बलेन सह पीत्वी पीत्वा । शिप्रे अवेपयः । शिप्रे हनू नासिके वा 'टुवेपृ कम्पने' । अतिपानोद्वेगान्नासिके कम्पितवानसि । किं तद्द्रव्यं यत्पीत्वा अवेपय इत्यत आह । सोमम् । हे भगवन् इन्द्र, चमूसुतम् । अधिषवणचर्म चमूशब्देनोच्यते । अधिषवणचर्मण्यभिषुतं सोमं पीत्वा अवेपय इति संबन्धः । उपयाम गृहीतोसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजसे । प्रगुणं ग्रहं भक्षयति । इन्द्रौजिष्ठ । हे इन्द्र, ओजिष्ठ अतिशयेनौजसा युक्त । यथा ओजिष्ठस्त्वं देवेष्वसि एवमोजिष्ठोऽहं मनुष्येषु भूयासम् ॥ ३९ ॥

म० द्वितीयोऽतिग्राह्यग्रहणमन्त्रः । इन्द्रदेवत्या गायत्री कुरुस्तुतिदृष्टा यजुरन्ता । हे इन्द्र, त्वमोजसा बलेन सह उत्तिष्ठन्नुत्सङ्गादुद्गच्छन्सन् शिप्रे हनू नासिके वा अवेपयः 'टुवेपृ कम्पने' कम्पितवानसि । किं कृत्वा सोमं पीत्वी पीत्वा । 'स्नात्व्यादयश्च' (पा० ७ । १ । ४९) इति निपातः । किंभूतं सोमम्। चमूसुतं चम्वामधिषवणचर्मणि सुतमभिषुतम् सोमपानं कृत्वातिहर्षवशान्नासे कम्पितवानित्यर्थः । हे ग्रह, त्वमुपयामगृहीतोऽसि ओजसे बलवते इन्द्राय त्वां गृह्णामि । सादयति एष ते योनिः ओजस इन्द्राय सादयामि । भक्षणमन्त्रः । हे इन्द्र, हे ओजिष्ठ ओजो बलमस्यास्तीत्योजस्वी । 'अस्माया–' ( पा० ५ । २ । १२१) इत्यादिना विनिप्रत्ययः । अत्यन्तमोजस्वी ओजिष्ठः 'अतिशायने तमबिष्ठनौ' ( पा० ५ । ३ । ५५ ) इति इष्ठन्प्रत्ययः । 'विन्मतोर्लुक्' ( पा० ५ । ३ । ६५ ) इतीष्ठनि परे विनिलोपः टिलोपश्च । तत्संबोधनमोजिष्ठ अतिबलयुक्त, त्वं यथा देवेष्वोजिष्ठोऽसि एवं मनुष्येषु मध्येऽहमोजिष्ठोऽतिबलो भूयासम् ॥ ३९ ॥

## चत्वारिंशी ।

अदृ॑श्रमस्य के॒तवो॒ वि र॒श्मयो॒ जनाँ॒२ऽअनु॑ । भ्राज॑न्तो अ॒ग्नयो॒ यथा । उ॒प॒या॒मगृ॑हीतो॒ऽसि॒ सूर्या॑य त्वा भ्रा॒जायै॒ष ते॒ योनिः॒ सूर्या॑य त्वा भ्रा॒जाय॑ । सूर्य॑ भ्राजिष्ठ॒ भ्राजि॑ष्ठ॒स्त्वं दे॒वेष्व॑सि॒ भ्राजि॑ष्ठो॒ऽहं म॑नु॒ष्ये॒षु भूयासम् ॥ ४० ॥

उ० अदृश्रमस्य । 'दृशिर् प्रेक्षणे' । अस्य कर्मणि प्रथमपुरुषबहुवचनस्थाने छान्दसं रूपमदृश्रमिति । दृश्यन्ते अस्य सूर्यस्य प्रज्ञानकृतत्वात्केतवो रश्मयः । केतुरिति प्रज्ञानामसु पठितम् । वि इत्यनर्थको निपातः । अथवा व्यदृश्रमिति संबन्धः । जनान् अनु अनुगताः भ्राजन्तः देदीप्यमानाः । कथंभूता दृश्यन्ते । अग्नयो यथा अग्नय इव । उपयाम गृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्यायत्वा भ्राजाय । भक्षयति । हे सूर्य भ्राजिष्ठ अतिशयेन भ्राजिष्ठ । यथा भ्राजिष्ठस्त्वं देवेष्वसि एवं भ्राजिष्ठोऽहं मनुष्येषु भूयासम् ४०

म० तृतीयोऽतिग्राह्यमन्त्रः । सूर्यदेवत्या गायत्री प्रस्कण्वदृष्टा यजुरन्ता । दृशेर्लुङि 'इरितो वा' ( पा० ३ । १ । ५७ ) इति च्लेरङादेशे 'ऋदृशोऽङि गुणः' (पा० २ । ४ । १६) इति उत्तमैकवचने अदर्शमिति प्राप्ते 'शीङो रुड्' 'लोपस्त' ... बहुलं छन्दसीति' ( पा० ७ । १ । ६—८ ) दृशेरुत्तरस्य मिबादेशस्यासो रुडागमो धातोर्गुणाभावश्छान्दसः । अदृश्रमिति रूपम् । कर्मणि लुङि प्रथमपुरुषबहुवचनस्थाने द्रष्टव्यमदृश्यन्तेत्यर्थे । वीत्युपसर्गोऽदृश्रमित्यनेन संबध्यते । केतुरिति प्रज्ञानामसु

पठितम्। अस्य सूर्यस्य केतवः प्रज्ञाहेतवः सर्वपदार्थज्ञानकृतो रश्मयः किरणा जनाननु सर्वप्राणिनोऽनुगता वि अदृश्रम् विशेषेणादृश्यन्त। सूर्यकराः सर्वजनानुगता व्यापका दृश्यन्त इत्यर्थः। तत्र दृष्टान्तः। भ्राजन्तो ज्वलन्तोऽग्नयो वह्नयो यथा जनानुगता दृश्यन्ते तद्वत्। हे ग्रह, त्वमुपयामेन गृहीतोऽसि भ्राजते दीप्यतेऽसौ भ्राजस्तस्मै सूर्याय त्वां गृह्णामि। सादयति एष तव योनिः भ्राजाय दीप्ताय सूर्याय त्वां सादयामि। तृतीयोतिग्राह्यभक्षणमन्त्रः। अत्यन्तं भ्राजो भ्राजिष्ठः हे भ्राजिष्ठ अतिदीप्त हे सूर्य, त्वं यथा देवेषु भ्राजिष्ठोऽसि तथाहमपि मनुष्येषु भ्राजिष्ठोऽतिदीप्तिमान्भूयासम् ॥ ४० ॥ इति द्वादशाहः संपूर्णः ॥

## एकचत्वारिंशी।

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्। उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ॥ ४१ ॥

**उ०** विषुवति ग्रहं गृह्णाति। उदुत्यं जातवेदसम्। व्याख्यातम्। देवार्षंतु ॥ ४१ ॥

**म०** 'उदुत्यमिति ग्रहग्रहणमिति' ( का० १३।२।११) गवामयनाख्यस्य संवत्सरसत्रस्य विषुवन्नामके मध्यमेऽहनि सौर्यपशुपालम्भादूर्ध्वमतिग्राह्यग्रहणं कार्यम्। सौरी गायत्री देवदृष्टा पुनर्व्याख्यायते (अ० ७। क० ४१)। त्यं तं प्रसिद्धं जातवेदसं जातानां प्रजानां ज्ञातारं जातप्रज्ञं वा देवं देवनशीलं सूर्यं केतवः प्रज्ञाहेतवः किरणा उ आशु उद्वहन्ति उदयाचलादुद्गमयन्ति। किमर्थं विश्वाय। षष्ठ्यर्थे चतुर्थी। विश्वस्य दृशे दर्शनाय सर्वं जगद्द्रष्टुमित्यर्थः। उपयाम एष ते व्याख्याते ॥ ४१ ॥

## द्विचत्वारिंशी।

आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः ॥ ४२ ॥

**उ०** अथ रोहिणीगोरभिमन्त्रणं द्वाभ्यामृग्भ्यां महापङ्क्तिप्रस्तारपङ्क्तिभ्यां द्रोणकलशमवघ्रापयति। आजिघ्र। कुसुरुविन्दोरार्षम्। महीति गोनामसु पठितम्। आभिमुख्येन जिघ्र द्रोणकलशं हे महि। किंच आ त्वा विशन्त्विन्दवः। आविशन्तु त्वामिन्दवः सोमाः य एते द्रोणकलशसंबन्धिनः। किंच। पुनरपि ऊर्जा अन्नेन सहिता निवर्तस्व। यां त्वामेवं स्तुमः स नः अस्माकं सहस्रं गवां यदेतदस्माभिर्दत्तं तत् धुक्ष्व। दुहतिर्दानार्थः। पुनर्देहि। त्वत्प्रसादाच्च उरुधारा बहुधारा पयस्वती पयसा संयुक्ता पुनरपि मामाविशतात् आविशतु। रयिः धनम् ॥ ४२ ॥

**म०** 'हविर्धानाग्नीध्रयोरन्तरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति' (का० १३।४।१९)। गर्गत्रिरात्रादावहीने त्रिसुत्ये गोसहस्रं दक्षिणास्ति तत्र सहस्रसंख्यापूरणी रोहिणी धेनुस्तां हविर्धानाग्नीध्रयोर्मध्यस्थां द्रोणकलशमाघ्रापयेत्। गोदेवत्या महापङ्क्तिः कुसुरुविन्दुदृष्टा अष्टार्णषट्पादा। महीति गोनाम। हे महि हे धेनो, त्वं कलशं द्रोणकलशाख्यं पात्रमाजिघ्र आभिमुख्येनाघ्राणं कुरु। किंच हे धेनो, इन्दवः सोमाः त्वा त्वामाविशन्तु द्रोणकलशस्थाः सोमास्त्वां प्रविशन्तु। किंच ऊर्जा विशिष्टरसेन पयोभूतेन सह पुनः अस्मान्प्रति निवर्तस्व। या त्वमेवं मया स्तुता सा त्वं नोऽस्माकं सहस्रं धुक्ष्व सहस्रसंख्यं धनं देहि। यद्वा गवां सहस्रं यदस्माभिर्दत्तं तन्नोऽस्मभ्यं धुक्ष्व पुनर्देहि। दुहतिर्दानार्थः। किंच त्वत्प्रसादादुरुधारा बहुपयोयुक्ता पयस्वती धेनुर्मा मां पुनराविशतात्। आगच्छत्वित्यर्थः। तथा रयिः धनमपि मा मामाविशतात् ॥ ४२ ॥

## त्रिचत्वारिंशी।

इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति। एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात् ॥ ४३ ॥

**उ०** दक्षिणेऽस्याः कर्णे यजमानो जपति। इडे रन्ते। हे इडे। इडानाम मनोर्दुहिता तया गौरुपमीयते। इडेव त्वमसि। रन्ते रमयतीति रन्ता। हव्ये हूयन्तेऽस्या विकारा यज्ञेष्विति हव्या। काम्ये मनुष्याणां ह्येतासु कामाः प्रविष्टाः। चन्द्रे चन्द्र इवाह्लादयतीति चन्द्रा। ज्योते तस्यैव ज्योतिर्ज्योत्स्ना। 'द्युत दीप्तौ' अस्य ज्योता। अदिते अदीने। सरस्वति सर इत्युदकनाम सर्तेः तद्वति। हे महि महति। विश्रुति विविधं श्रूयत इति विश्रुति। एतानि ते तव हे अघ्न्ये, अहन्तव्ये नामानि अतिशयगुणयुक्तानि तैरभिहिता सती देवेभ्यो मां सुकृतं सुकृतकारिणं ब्रूतात् ब्रूहि ॥ ४३ ॥

**म०** 'इडे रन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपतीति' ( का० १३।४।२०)। पूर्वोक्ताया धेनोर्दक्षिणकर्णे यजमानो जपेत्। गोदेवत्या प्रस्तारपङ्क्तिः कुसुरुविन्दुदृष्टा। यस्या आद्यौ पादौ द्वादशार्णौ अन्त्यावष्टार्णौ सा प्रस्तारपङ्क्तिः। ईड्यते स्तूयते इति इडा मनोर्दुहिता तत्तुल्या। रमयतीति रन्ता। हूयते यद्गुग्धं यज्ञेष्विति हव्या, हूयते आहूयते सर्वैरिति वा हव्या। काम्यत इति काम्या 'मनुष्याणाᳬंह्येतासु कामाः प्रविष्टाः' इति श्रुतेः। चन्दयत्याह्लादयतीति चन्द्रा। 'द्युत दीप्तौ' द्योतयति प्रकाशयतीति ज्योता दकारस्य जः। अदितिरदीनाऽनवखण्डिता। सरस्वति सरतीति सरः क्षीरं तद्वति। सर इत्युदकनाम सर्तेरिति ( नि० ९।२६ ) यास्कोक्तेः। उदकशब्देनात्र क्षीरमुच्यते। मही महती। विविधं श्रूयते

स्तूयत इति विश्रुतिः । न हन्तुं योग्या अघ्न्या अहन्तव्या । तासां संबोधनानि हे धेनो एवंभूते, ते तव एता एतानि अतिशयगुणयुक्तानि नामानि एतैर्नामभिरभिहिता सती देवेभ्यः सुकृतं सुष्ठु करोतीति सुकृत् तं सुकृतं शोभनकर्मकारिणं मां त्वं ब्रूताद्ब्रूहि वद । अयं यजमानः पुण्यकर्तेति देवेभ्यो वदेत्यर्थः ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

वि न॑ इन्द्र॒ मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः । यो अ॒स्माँ २ऽअ॑भि॒दास॒त्यध॑रं गमया॒ तमः॑ । उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा वि॒मृध॑ ए॒ष ते॒ योनि॒रि॒न्द्रा॑य त्वा वि॒मृधे॑ ॥ ४४ ॥

**उ०** महाव्रतीयं ग्रहं गृह्णाति । विन इन्द्र । अनुष्टुप् । इन्द्रो विमृद्गुणयुक्तो देवता । वि न इन्द्र मृधो जहि वि जहि विनाशय नः अस्माकं हे इन्द्र, मृधः संग्रामान् । किंच नीचा यच्छ पृतन्यतः । ये पृतनां संग्राममिच्छन्ति ते पृतन्यतः तान्पृतन्यतो मनुष्यान् नीचा यच्छ नीचैर्निगृह्णीष्व । यश्चास्मान् अभिदासति 'दसु उपक्षये' । उपक्षिपति तमधरं निकृष्टमर्वाचीनं तमो गमय । उपयाम गृहीतोसीन्द्राय त्वा विमृध एष ते योनिरिन्द्राय त्वा विमृधे । व्याख्यातम् ॥ ४४ ॥

**म०** 'ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वेति' ( का० १३ । २ । १७ ) गवानयनस्योपान्त्ये महाव्रतेऽहनि प्राजापत्यपशूपालम्भादूर्ध्वमैन्द्रग्रहग्रहणे मन्त्रत्रयम् । तत्राद्यः । इन्द्रदेवत्यानुष्टुप् शासदृष्टा । हे इन्द्र, नोऽस्माकं मृधः शत्रून्संग्रामान्वा विजहि विशेषेण नाशय । किंच पृतन्यतः नीचा यच्छ । पृतनां संग्रामं सेनां वा इच्छन्ति पृतन्यन्ति पृतन्यन्तीति पृतन्यन्तस्तान् 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८) इति पृतनाशब्दात्क्यचि प्रत्यये 'कव्यध्वरपृतनस्यर्चि लोपः' ( पा० ७ । ४ । ३९ ) इति टिलोपे शतृप्रत्यये च रूपम् । पृतन्यतः सेनामिच्छतः शत्रूनीचान्यग्भूतान् यच्छ निगृह्णीष्व । युद्धादुपरतान्कुर्वित्यर्थः । किंच यश्चान्योऽस्मानभिदासति । 'दसु उपक्षये' । उपक्षयति तं शत्रुमधरं निकृष्टं तमो नरकं गमय प्रापय । संहितायां दीर्घः । हे ग्रह, त्वमुपयामेन गृहीतोऽसि विशिष्टो मृत् संग्रामो यस्य तस्मै विमृधे विशिष्टसंग्रामवते इन्द्राय त्वां गृह्णामि । सादयति एष तव योनिः विमृद्गुणविशिष्टायेन्द्राय त्वां सादयामि ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

वा॒चस्पतिं॑ वि॒श्वक॑र्माणमू॒तये॑ मनो॒जुवं॒ वाजे॑ अ॒द्या हु॑वेम । स नो॒ विश्वा॑नि॒ हव॑नानि जोषद्वि॒श्वश॑म्भू॒रव॑से सा॒धुक॑र्मा ॥ उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा वि॒श्वक॑र्मण ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा वि॒श्वक॑र्मणे ॥ ४५ ॥

**उ०** द्वितीयो मन्त्रविकल्पः । वाचस्पतिं । त्रिष्टुप् विश्वकर्मणी । स नो विश्वानीति तदः श्रवणाद्यदोऽध्याहारः कर्तव्यः । नित्यसंबन्धौ हि यत्तदौ । यं वाचोधिपतिं प्राणरूपेण इन्द्ररूपेण वा विवक्ष्यते । 'तस्मादाहुरिन्द्रो वाग्' इति श्रुतिः । विश्वकर्माणं सर्वस्य कर्तारम् । ऊतये अवनाय तर्पणाय वा । मनोजुवम् मनस इव यस्य जुवः मनोजुवः स एवमुच्यते । मनोगतिमित्यर्थः । वाजे अन्ने अस्मिन्महाव्रतीयलक्षणे विषयभूते । अद्य अस्मिन् द्यवि हुवेम आह्वयामः । स आहूतः सन् नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वानानि जोषत् जुषतां सेवताम् । विश्वशंभूः । शमिति सुखनाम । सर्वस्य सुखेन भावयिता । अवसे अव इत्यन्ननाम । अस्माकमन्नदानाय साधुकर्मा । उपयामगृहीतोसीति व्याख्यातम् ॥ ४५ ॥

**म०** अथ द्वितीयः । विश्वकर्मदेवता त्रिष्टुप् शासदृष्टा । ईदृशमिन्द्रं वाजे महाव्रतीयलक्षणान्नविषये अद्यास्मिन् दिने वयं हुवेम आह्वयाम । किमर्थम् । ऊतये अवनाय रक्षणाय । किंभूतम् । विश्वकर्माणं विश्वानि समस्तानि जगदुत्पत्त्यादीनि कर्माणि यस्य तम् । तथा वाचस्पतिं वाचां पालयितारं वाचोऽधिपतिं । 'तस्मादाहुरिन्द्रो वाक्' इति श्रुतेः । तथा मनोजुवम् । जूरिति जवनाम । मनसो जूरिव जव इव जवो यस्य स मनोजूस्तम् । स ईदृश इन्द्रो नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वानानि अवसेऽन्नायान्नसमृद्ध्यै रक्षणाय वा जोषत् जुषताम् अस्मदाह्वानं साधु साध्विति सेवताम् । 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्यडागमे 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) तिप इलोपे जोषदिति रूपम् । किंभूतः सः । विश्वशंभूः विश्वस्य शं सुखं भवत्यस्मादिति विश्वशंभूः साधुकर्मा शोभनकर्मकर्ता । हे ग्रह, उपयामगृहीतोऽसि विश्वकर्मणे सर्वकर्त्रे इन्द्राय त्वां गृह्णामि । सादयति एष ते योनिः विश्वकर्मणे इन्द्राय त्वां सादयामि ॥ ४५ ॥

## षट्चत्वारिंशी ।

विश्व॑कर्मन्ह॒विषा॒ वर्ध॑नेन त्रा॒तार॒मिन्द्र॑मकृणोरव॒ध्यम् । तस्मै॒ विशः॒ सम॑नमन्त पू॒र्वीर॒यमु॒ग्रो वि॒हव्यो॒ यथास॑त् । उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा वि॒श्वक॑र्मण ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा वि॒श्वक॑र्मणे ॥ ४६ ॥

**उ०** अपरो मन्त्रविकल्पः । विश्वकर्मन्हविषा । त्रिष्टुबैन्द्री वैश्वकर्मणी च । हे विश्वकर्मन्, अन्नेन हविषा महाव्रतीयलक्षणेन वर्धनेन च वर्धयित्रा । त्रातारं जगतः इन्द्रम् अकृणोः कृतवानसि अवध्यं च । तस्मै चैवंप्रभावायेन्द्राय विशो मनुष्याः समनमन्तपूर्वीः सन्नताः पूर्वे वसिष्ठप्रभृतयः । इदानींतना अपि सन्नताः । अयमेव हि इन्द्रः उग्रः उद्गूर्णवज्रः विहव्यश्च ।

विविधेषु कार्येषु आहूयत इति विहव्यः यथा असत्। पञ्चम्यर्थे थाल्प्रत्ययः। यतः कारणादसत् भवेत् हे विश्वकर्मन् त्वद्धविस्सामर्थ्यादिन्द्रस्यायं प्रभाव इत्यभिप्रायः। उपयाम गृहीतोसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे इति व्याख्यातम् ॥ ४६ ॥

**म०** तृतीयो मन्त्रविकल्पः । इन्द्रविश्वकर्मदेवत्या त्रिष्टुप् शासदृष्टा। हे विश्वकर्मन्, वर्धनेन वर्धमानेन वर्धयित्रा वा हविषा त्वमिन्द्रं त्रातारं जगतो रक्षकमवध्यं हन्तुमशक्यमप्रतिभटं चाकृणोः कृतवानसि । तस्मै तादृशायेन्द्राय पूर्वीर्विशः प्रजाः पूर्वे वसिष्ठादयो मनुष्याः समनमन्त सम्यङ्नताः। पञ्चम्यर्थे थाल्प्रत्ययः । यथा यतः कारणात् अयमिन्द्रः उग्र उद्गूर्णवज्रो विहव्यो विविधेषु कार्येषु आहूयत इति विहव्यश्च असदभूत्तस्माद्विशस्तस्मै नता इत्यर्थः। विश्वकर्मन्, त्वद्धविःसामर्थ्यादिन्द्रस्यायं प्रभाव इति भावः । उपयाम एष ते इति व्याख्याते ॥ ४६ ॥

## सप्तचत्वारिंशी ।

उपयामगृहीतोस्यग्नये त्वा गायत्रच्छन्दसं गृह्णामीन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामि विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णाम्यनुष्टुप्तेऽभिगरः ॥ ४७ ॥

**उ०** अदाभ्यं गृह्णाति । उपयाम गृहीतोसि । देवानामार्षम् । अग्नये त्वां गायत्रछन्दसं गृह्णामि एकं ग्रहणम् । इन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामि द्वितीयं ग्रहणम् । विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामि तृतीयं ग्रहणम् । एवं सवनदेवताभ्यः स्वछन्दस्कं सोमं गृहीत्वा अथेदानीमाह। अनुष्टुप् ते तव हे सोम, अभिगरः । 'गृ स्तुतौ'। अभिष्टव इत्यर्थः । यद्वा 'ऊर्ध्वᳬसवनेभ्यस्तदानुष्टुभम्' इति श्रुतिः ॥ ४७ ॥

**म०** 'अदाभ्यं गृह्णात्यासिच्य निग्राभ्याः पात्रे तस्मिंस्तूर्ष्णीं त्रीनᳬशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्रमुपयामः सर्वत्राविशेषादिति' (का० १२ । ५ । १३–१५)। यस्मिन्नौदुम्बरे पात्रे अंशुर्गृहीतस्तस्मिन्होतृचमसस्था निग्राभ्यासंज्ञा अप आनीय तस्मिंस्त्रिस्रः सोमलताः प्रक्षिप्याग्नये त्वेत्यादित्रिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति। मन्त्रैः सोमलताप्रक्षेपो वेति केचित् । उपयामगृहीतोऽसीत्येतत्रिष्वपि मन्त्रेष्वादावनुषञ्जनीयं सर्वशेषत्वादाम्नानस्येति सूत्रार्थः । तत्र प्रथमो मन्त्रः। अदाभ्यदेवत्यानि त्रीणि यजूंषि देवदृष्टानि । हे सोम, त्वमुपयामेन ग्रहेण गृहीतोऽसि हे ग्रह, गायत्री छन्दो यस्य ग्रहस्य तं गायत्रीच्छन्दसं त्वामग्नयेऽग्निप्रीत्यर्थं गृह्णामि । द्वितीयो मन्त्रः। उपयामेन गृहीतोऽसि हे ग्रह, त्रिष्टुप् छन्दो यस्य तादृशं त्वामिन्द्राय गृह्णामि । तृतीयो मन्त्रः। उपयाम० जगती छन्दो यस्य तादृशं त्वां हे ग्रह, विश्वेभ्यो देवेभ्योऽर्थाय गृह्णामि । एवं सवनदेवताभ्यो वारत्रयं ग्रहणम् । 'अनुष्टुप्त इत्युक्त्वेति' ( का० १२ । ५ । १७ ) । एनं मन्त्रं पठेत् । अदाभ्यदेवत्यं देवदृष्टम् । एवं स्वच्छन्दसं सोमं गृहीत्वाथ तमाह हे सोम, अनुष्टुप् छन्दस्ते तवाभिगरः अभिष्टव इत्यर्थः । 'गृ स्तुतौ' यद्वा 'ऊर्ध्वᳬ सवनेभ्यस्तदानुष्टुभम्' ( ११ । ५ । ९ । ७ ) इति श्रुतेः ॥ ४७ ॥

## अष्टचत्वारिंशी ।

व्रेशीनां त्वा पत्मन्नाधूनोमि कुकूननानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा पत्मन्नाधूनोमि मधुन्तमानां त्वा पत्मन्नाधूनोमि शुक्रं त्वा शुक्र आधूनोम्यह्नो रूपे सूर्यस्य रश्मिषु ॥ ४८ ॥

**उ०** ग्रहपात्रस्थासु निग्राभ्यासु अंशूनाधुनोति। व्रेशीनां त्वापत्मन्नाधूनोमि । मेघस्य व्रजत उदरे शेरत इति व्रेश्य उदरस्था आप उच्यन्ते । हे सोम, व्रेशीनामपां त्वां पत्मन् पतने आधूनोमि कम्पयामि । कुकूननानां त्वा। 'कूङ् शब्दे'। अत्यर्थं कुवत्यः शब्दं कुर्वाणाः नमन्ते प्रह्वीभवन्तीति कुकूननाः मेध्या आपः । भन्दनानाम् 'भदि कल्याणे सुखे च'। कल्याणकारिण्यः सुखयित्र्यो वा भन्दनाः । मदिन्तमानाम् अत्यर्थं मदयन्ति तर्पयन्तीति मदिन्तमाः। माद्यतेः 'नाद्घस्य' इति नुमागमः । मधुन्तमानाम् अतिशयेन मधुस्वादोपेता मधुन्तमाः । शुक्रं त्वा शुक्रमक्लिष्टकर्माणं त्वां शुक्रे अक्लिष्टकर्मणि निग्राभ्यालक्षणे उदके आधूनोमि । अह्नोरूपे दिवसस्य रूपे तदपि शुक्रमेव भवति । सूर्यस्य च रश्मिषु । रश्मयस्तु प्रकाशरूपत्वादेवं भवन्ति ॥ ४८ ॥

**म०** 'धूनोत्यᳬशुभिर्व्रेशीनां त्वेति गच्छन्नाहवनीयमिति' ( का० १२ । ५ । १७ ) । आहवनीयसमीपं गच्छन्नंशुभिरदाभ्यग्रहस्थानि जलानि चालयेत् । एतदादीनि विश्वेषां देवानामित्यन्तानि सोमदेवत्यानि देवदृष्टानि । हे सोम, व्रेशीनां व्रजतो मेघस्योदरे शेरते ता व्रेश्यो मेघोदरस्था आपस्तासां पत्मन् पतने निमित्ते वृष्टिनिष्पत्त्यर्थं त्वा त्वामाधूनोमि कम्पयामि । कुकूननानाम् । 'कुङ् शब्दे' अत्यर्थं कुवन्त्यः शब्दं कुर्वाणा नमन्ति प्रह्वीभवन्तीति कुकूनना मेघस्था आपस्तासां पतने त्वां कम्पयामि । भन्दनानाम् । 'भदि कल्याणे सुखे च' भन्दन्तीति भन्दनाः कल्याणकारिण्यः सुखयित्र्यो वा मेध्या आपः अन्यत्पूर्ववत् । मदिन्तमानाम् मादयन्तीति मदिन्यः अत्यर्थं मदिन्यो मदिन्तमाः। तमपि पुंवद्भावः 'नलोपः प्रातिपदिकान्तस्य' ( पा० ८ । २ । ७ ) इति नलोपः 'नाद्घस्य' ( पा० ८ । २ । १७ ) इति छान्दसो नुडागमः । अत्यन्तं तर्पयन्त्यो मेध्या आपः । मधुन्तमानाम् अत्यन्तं मधुस्वादोपेता मधुन्तमाः एवंविधानामपां पतने त्वां धूनोमि । किंच शुक्रं शुद्धमक्लिष्टकर्माणं त्वां शुक्रे शुद्धे अक्लिष्टकर्मणि निग्राभ्या-

लक्षणे जले त्वामाधूनोमि । किंच अह्नो दिवसस्य रूपे सूर्यस्य रश्मिषु हे सोम, त्वामाधूनोमि ॥ ४८ ॥

## एकोनपञ्चाशी ।

ककुभᳬरूपं वृषभस्य रोचते बृहच्छुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाः । यत्ते सोमादाभ्यं नाम जागृवि तस्मै त्वा गृह्णामि तस्मै ते सोम सोमाय स्वाहा ॥ ४९ ॥

**उ०** ककुभᳬरूपं वृषभस्य । ककुभमिति महन्नामसु पठितम् । अस्य सोमलक्षणस्य वृषभस्य ककुभमादित्यलक्षणं रूपं रोचते देदीप्यते । बृहन्महत्प्रभावतः शुक्रः शुक्रस्य पुरोगाः । शुक्र आदित्यः शुक्रस्य आदित्यस्य पुरोगामी । सोम एव सोमस्य पुरोगामी भवितुमर्हति यस्माद् अतः कारणात् यत्ते तव हे सोम, अदाभ्यमनुपहिंस्यं नाम जागृवि जागरणशीलं तस्मै त्वा गृह्णामि । जुहोति । तस्मै ते तव हे सोम, सोमाय स्वाहा । 'तत्सोममेवैतत्सोमाय जुहोति' इति श्रुतिः ॥ ४९ ॥

**म०** हे सोम, वृषभस्य श्रेष्ठस्य तव ककुभं महत् आदित्यलक्षणं रूपं रोचते दीप्यते । ककुभमिति महन्नामसु पठितम् । बृहत् महान् शुक्रः शुद्ध आदित्यः शुक्रस्य शुद्धस्य सोमस्य तव पुरोगाः पुरोगामी । सोम एव सोमस्य पुरोगाः पुरोगामी भवितुमर्हति । हे सोम, ते त्वदीयमदाभ्यमनुपहिंसितं जागृवि जागरणशीलं यन्नामास्ति तस्मै त्वां गृह्णामि । 'तस्मै त इति जुहोतीति' । ( का० १२ । ५ । १७ ) अदाभ्यं जुहोति । सौम्यम् हे सोम, तस्मै तादृशाय ते तुभ्यं स्वाहा सुहुतमस्तु । 'तत्सोममेवैतत्सोमाय जुहोति' ( ११ । ५ । ९ । ११ ) इति श्रुतेः ॥ ४९ ॥

## पञ्चाशी ।

उशिक्त्वं देव सोमाग्नेः प्रियं पाथोऽपीहि वशी त्वं देव सोमेन्द्रस्य प्रियं पाथोऽपीह्यस्मत्सखा त्वं देव सोम विश्वेषां देवानां प्रियं पाथोऽपीहि ॥५०॥

**उ०** अंशून् सोमे निदधाति । उशिक्त्वम् । 'वश कान्तौ' अस्य क्विपि उशिगिति भवति । यतः उशिक् कान्तः वल्लभः त्वं हे देव सोम, अस्माकमतः अग्नेः प्रियं पाथः अन्नम् अपि इहि अपि गच्छ । वशी च त्वम् । 'वश कान्तौ' । शेषं व्याख्यातम् । अस्मत्सखा अस्माकं सखा । शेषं प्रगुणम् ॥ ५० ॥

**म०** 'अंᳬशून्सोमे निदधात्युशिक्त्वमिति प्रतिमन्त्रमिति' ( का० १२ । ५ । १८ ) मन्त्रत्रयेणोलूखलस्थानंशून्सोमे क्षिपेत् । तत्राद्यः । हे देव, दीप्यमान हे सोम, उशिक् कामयमानस्त्वमग्नेः प्रियं पाथोऽन्नमपीहि अपिगच्छ । द्वितीयः । हे देव सोम, वशी कान्तस्त्वमिन्द्रस्य प्रियमन्नं प्राप्नुहि । अथ तृतीयो मन्त्रः । हे देव सोम, अस्मत्सखा अस्माकं मित्रभूतस्त्वं विश्वेषां देवानां प्रियमभिरुचितमन्नं प्राप्नुहि 'अग्निर्वै प्रातःसवनमिन्द्रो माध्यन्दिनं सवनᳬ विश्वेदेवास्तृतीयᳬ सवनम्' इति श्रुतेः सवनदेवेभ्योऽर्पणम् ॥ ५० ॥

## एकपञ्चाशी ।

इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा । उपसृजन्धरुणं मात्रे धरुणो मातरं धयन् । रायस्पोषमस्मासु दीधरत्स्वाहा ॥ ५१ ॥

**उ०** सत्रोत्थानं देवानामार्षम् । गार्हपत्ये द्वे आहुती जुहोति । इह रतिः । उत्क्रामन्ते पशवो नियम्यन्ते । इह यजमानेषु भवतां रतिः रमणम् । रम्णातिः संयमनकर्मा । यत एवमत इहैव रमध्वम् । इह धृतिर्भूयात् । इह स्वधृतिः । यत एवमत इहैव साधु धारणं भूयात् । पशूनां यजमानविषया धृतिः प्रार्थ्यते । द्वितीयां जुहोति । उपसृजन् उष्णिक् । उपसृजन्संसृजन् धरुणं धारयितारमग्निं मात्रे पृथिव्यै । मातात्र पृथिव्युच्यते । धरुणो धारयिताग्निर्मातरं पृथिवीं धयन् पिबन् रायस्पोषम् । 'पशवो वै रायस्पोषः' इति श्रुतिः । पशून् अस्मासु दीधरत् धारयतु ॥ ५१ ॥

**म०** अथ सत्रोत्थानमन्त्रा देवदृष्टाः । 'शालाद्वार्येऽन्वारब्धेष्विह रतिरिति जुहोतीति' ( का० १२ । ४ । १० ) । सर्वेषु दीक्षितेष्वध्वर्युस्पृष्टेष्विदानींतनगार्हपत्ये घृतं जुहुयात् । पशुदैवतं यजुः । हे गावः, युष्मदीया रतिः रमणमिह यजमानेष्वस्तु । इहैव यूयं रमध्वम् । युष्माकमिह यजमानेषु धृतिः संतोषोऽस्तु । स्वधृतिः स्वकीयानामपि धृतिरिहैवास्तु । स्वाहा सुहुतमस्तु । 'अपरामुपसृजन्निति' ( का० १२ । ४ । ११ ) शालाद्वार्ये एव द्वितीयाहुतिः । उष्णिक् आद्यावष्टाक्षरौ तृतीयो द्वादशार्णः सोष्णिक् । धारयतीति धरुणोऽग्निरस्मासु रायस्पोषं रायो धनस्य पशुपुत्रसुवर्णादेः पुष्टिं दीधरत् धारयतु । धारयतेर्लुङि रूपम् । अडभाव आर्षः । किंभूतो धरुणः । मात्रे धरुणम् । षष्ठ्यर्थे चतुर्थी । मातुः पृथिव्या धारयितारमग्निमुपसृजन् समीपं प्रापयन् तथा मातरं पृथिवीं धयन्पिबन् । तत्रोत्पन्नं हविर्भक्षयन्नित्यर्थः । स्वाहेति होमार्थः ॥ ५१ ॥

## द्विपञ्चाशी ।

सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम । दिवं पृथिव्या अध्यारुहामाविदाम देवान्स्वर्ज्योतिः ॥५२॥

**उ०** सत्रस्य ऋद्धिं गायन्ति । सत्रस्य ऋद्धिरसि । बृहती । यजमानानां संस्तवः । सत्रस्य समृद्धिस्त्वमसि । यतोऽगन्म आगताः ज्योतिरादित्यलक्षणम् । अमृताश्च अभूम भूताः । दिवं चाध्यारुहाम अध्यारूढाः । पृथिव्याः सकाशात् द्युलोकं चारूढाः सन्तः अविदाम देवान् जानीमः पश्यामो देवान्

स्वः स्वर्गं च पश्यामः ज्योतिरादित्यलक्षणं च। अविदाम इत्यनुवर्तते ॥ ५२ ॥

**म०** 'सत्रस्यर्धिं गायन्ति सत्रस्य ऋद्धिरिति' ( का० १२। ४।१२ )। सर्वे दीक्षिता उत्तरहविर्धानापरकूबरीमालम्ब्य सत्रर्धिसंज्ञकं साम गायन्ति। बृहती यजमानानामात्मस्तुतिः सप्तैकादशनवार्णपादा। हे साम, सत्रस्य ऋद्धिः समृद्धिः त्वमसि अतो वयं यजमाना ज्योतिरादित्यलक्षणमगन्म प्राप्ताः। ततः अमृता अमरणधर्माणः अभूम भूताः। पृथिव्याः सकाशाद्दिवं द्युलोकमध्यारुहाम। अध्यारूढाः द्युलोकारूढाः ततो देवानिन्द्रादीनविदाम जानीमः पश्याम इत्यर्थः। वेत्तेर्व्यत्ययेन तुदादित्वे लङि रूपम्। ज्योतिर्ज्योतीरूपं स्वः स्वर्गं चाविदाम ॥ ५२ ॥

## त्रिपञ्चाशी।

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तन्तमिद्धतम्। दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत्। अस्माकंशत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः। भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ॥ ५३ ॥

**उ०** दक्षिणस्य हविर्धानस्याधोक्षं संसर्पन्ति। युवं तमिन्द्रापर्वता। अतिच्छन्दा अष्टिः अत्यष्टिर्वा त्र्यवसाना ऐन्द्री। प्रथमोऽर्धर्च ऐन्द्रापार्वतः। हे इन्द्रापर्वतौ, युवं तं यत्नमनुतिष्ठतम्। येन यत्नेन पुरोयुधा पुरोग्रे युत् युध्यति पुरोयुत् तेन पुरोयुधा बलेन। यो नः पृतन्यात् अप तं तमिद्धतमिति तदो वीप्साश्रवणाद्दोपि वीप्सा क्रियते। यो यः शत्रुर्नोऽस्मान् पृतन्यात्संग्रमयेद्योधयेत्। अप तं तम् इद्धतम्। अपहतं विनाशयतं शत्रुम्। इच्छब्दोऽनर्थकः। वज्रेण तं तम् इत् हतम्। वज्रेणेत्यायुधनियमः शत्रूणामुन्मूलनाय। व्याख्यातमन्यत्। इत उत्तरमिन्द्रः प्रत्यक्षो वज्रस्य तु कर्तृत्वं विवक्षितं परोक्षस्य सतः। दूरे चत्ताय छन्त्सत्। चततिर्गतिकर्मा। दूरे गताय नष्टाय शत्रवे। छन्त्सत्। छन्दतिः कामनार्थः। कामयताम्। हे इन्द्र, त्वदीयो वज्रः शत्रवे विनाशं कामयताम्। कथं परवशो वर्ततामिति चेत् कथं वज्रस्य शत्रुविनाशकामना इति चेत्, आत्मैषां रथो भवत्यात्माश्व आत्मायुधमित्यदोषः। गहनं यदिनक्षत्। गहनं वनमुच्यते उदकं वा इनक्षतिर्व्याप्तिकर्मा। इनक्षत् रूपसादृश्याद्दुदकं वनं वा यत् व्याप्नोति पलाय्य गच्छति तथापि विनाशयति शत्रुमीहरूपेण तस्यापि विनाशं कामयतां त्वदीयो वज्रः। अस्माकं शत्रून्परिशूर विश्वतो दर्मा दर्षीष्ट। हे शूर, त्वदीयो वज्रः अस्माकं ये शत्रवः तान्परिदर्षीष्ट। 'दॄ विदारणे'। परिविदारयतु। कथंभूतो वज्रः। दर्मा विदारणशीलः। कुतोऽवस्थितान् शत्रून्। विश्वतः सर्वतः। जपन्ति भूर्भुवःस्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः। एकवचनान्तो व्याख्यातः। अयं तु बहुवचनान्तः ॥ ५३ ॥ सत्रोत्थानं समाप्तम् ॥

**म०** 'युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निःक्रामन्तीति' ( का० १२।४।१४ )। सर्वे यजमाना दक्षिणहविर्धानाक्षाधोमार्गेण प्राङ्मुखाः निःसरन्ति। इन्द्रदेवत्यात्यष्टिरवसानत्रयोपेता षट्षष्ट्यक्षरत्वात् न्यूना आद्योऽर्धर्च इन्द्रपर्वतदेवत्यः। हे पुरोयुधा पुरोयुधौ पुरोऽग्रे युध्येते तौ पुरोयुधौ 'इगुपध–' ( पा० ३।१।१३५ ) इति कप्रत्ययः। शत्रूणां पुरतो युद्धस्य कर्तारौ हे इन्द्रापर्वता इन्द्रपर्वतौ, युवं युवां तं शत्रुमपहतं विनाशयतम्। आदरे वीप्सा तंतम्। इदेवार्थे। तं तमेव शत्रुमपहतं तत्तत्समानमेव सर्वमपि शत्रुं विनाशयतम्। तत्रापि विशेष्यते। वज्रेण वज्राख्येनायुधेन तंतमित् तंतमेव शत्रुं विनाशयतम्। तदो वीप्साश्रवणाद्यदोऽपि वीप्सा। यो यः शत्रुर्नोऽस्मान्पृतन्यात् पृतनां सेनां कुर्यात्। योधयेदित्यर्थः। इदानीमिन्द्रः प्रत्यक्षो वज्रस्य कर्तृत्वं चोच्यते। हे शूर इन्द्र, त्वदीयो वज्रो यद्यदा गहनमत्यन्तगम्भीरं वनं जलं वा प्रति दूरे चत्ताय। चततिर्गतिकर्मा। वनेऽतिदूरगताय शत्रवे छन्त्सत्। छन्दतिः कामनार्थः। शत्रुं प्राप्तुं कामयते तदा तमपि दूरगतमिनक्षन्प्राप्नुयात्। इनक्षतिर्व्याप्तिकर्मा। वने दूरगतमपि इच्छन् गृह्णात्येवेत्यर्थः। ततो दर्मा दारयतीति दर्मा 'दॄ विदारणे' 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३।२।७५ ) इति मनिन्प्रत्ययः। विदारणशीलो वज्रः अस्माकमस्मदीयान् विश्वतः सर्वतः स्थितान् विश्वतः सर्वाञ्शत्रून् परिदर्षीष्ट परितो विदारयतु। दीर्यतेराशीर्लिङि तङि रूपम्। 'पृथक्कामेषु भूर्भुव इति' ( का० १२।४।२८ )। नानाकामेषु यजमानेषु सर्वे वाग्विसर्जनं कुर्युः। हे भूर्भुवःस्वः अग्निवायुसूर्याः, वयं प्रजाभिः सुप्रजाः स्याम वीरैः पुत्रैः सुवीराः स्याम। पोषैः पुष्टिभिः सुपोषाः स्याम भवेम। एकवचनान्तोऽयं व्याख्यातः। अत्र तु बहुवचनान्तो मन्त्रः ॥ ५३ ॥

## चतुःपञ्चाशी।

परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः। सविता सन्यां विश्वकर्मा दीक्षायां पूषा सोमक्रयण्याम् ॥ ५४ ॥

**उ०** परमेष्ठ्यभिधीतः। आअध्यायसमाप्तेर्नैमित्तिकानि। वसिष्ठस्यार्षम्। परमेष्ठ्यादिश्रुतिः चतुस्त्रिंशत्सु सोमावस्थासु चतुस्त्रिंशद्देवताभिधायिनी ऋग्वर्था। अभिधीतः अभिध्यातः संकल्पितो यजमानेन। सोमोपनायनमेतत् वाचोभिर्व्याहृतः। अहं सोमेन यक्ष्ये इत्युक्तं भवति। अच्छेतः। अच्छाभेराप्तुमिति शाकपूणिः। सोममभि इतो गतः सोमं व्याप्तुमितो गतः। अन्धोऽन्नमुच्यते सविता सन्याम्। सनोतिः संभजनार्थः। सोमसंभक्तौ सत्याम् सलिलः प्लुतः प्लुतोनिमग्नः। शेषं प्रगुणम् ॥ ५४ ॥

**म०** 'परमेष्ठ्यादींश्चतुस्त्रिंᳪशतं जुहोति घर्मदुग्घ्वाले चादोहे चोदीच्या दोहस्थानेऽन्यस्याः शालाया वा पुरस्तात्प्राच्याः पुच्छकाण्डाद्दक्षिणेऽस्थनि हुत्वा दोहयेत् पृषदाज्यस्कन्दने चैक इति' ( का० २५।६।१—६ )। मृण्मयघर्मपात्रभेदे भिन्नमभिमृश्य परमेष्ठिने स्वाहा प्रजापतये स्वाहेत्यादीन्सलिलाय स्वाहेत्यन्तांश्चतुस्त्रिंशद्धोमाञ्जुहोति। घर्मदुहो गोर्मरणे तत्स्थाने उदङ्मुख्याः स्थितायाः पत्नीशालापूर्वभागे प्राङ्मुख्या वा पुच्छादृक्षिणेऽस्थनि परमेष्ठिने स्वाहेति चतुस्त्रिंशतमाज्याहुतीर्हुत्वा तां दोहयत्। स्थालीस्थस्य स्रुक्स्थस्य वा पृषदाज्यस्य वा भ्रंशे एके आचार्याः परमेष्ठ्यादीञ्जुह्वतीति सूत्रार्थः। परमेष्ठ्यादयो देवा यज्ञस्य शरीराणि तस्मात्तत्तदवस्थायां होमे यज्ञश्चिकित्सितः प्रतिसंहितो भवति। तथाच श्रुतिः 'सोमो वै राजा यज्ञः प्रजापतिस्तस्यैतास्तन्वो या एता देवता या एता आहुतीर्जुहोति स यद्यज्ञस्याच्छेंवां तत्प्रति देवतां मन्येत तामनुसमीक्ष्य जुहुयाद्यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत आग्नीध्रे विवा एतद्यज्ञस्य पर्व स्रᳪसते यद्ब्लति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञं भिषज्यति तया देवतया यज्ञं प्रतिसन्दधातीति' ( १२।५।१।१—२ )। अथ मन्त्रार्थः। आध्यायाद्वसिष्ठ ऋषिः। यदा सोमो यजमानेनाभिधीतः संकल्पितो भवति। मनसाभिध्यातस्तदा परमेष्ठी भवति। अयमर्थः। मनसा ध्यातः सोमो यदि नोपनमेत् तदा परमेष्ठिने स्वाहेति जुहुयादिति। तथाच श्रुतिः 'स यद्येनं मनसाभिध्यातो यज्ञो नोपनमेत् परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्यपपाप्मानᳪ हत उपेनं यज्ञो नमतीति' ( १२।५।१।३ )। वाचि व्याहृतायां सोमेन यक्ष्ये इति वचस्युच्चारिते सति सोमः प्रजापतिनामको भवति तदा प्रायश्चित्तापत्तौ प्रजापतये स्वाहेति जुहुयादित्यर्थः। यदा सोमः अच्छाभिमुख्येन इतः प्राप्तस्तदा अन्धो भवति। सोमं प्रति गतौ किंचिन्निमित्तं चेत्तदा अन्धसे स्वाहेति जुहुयात्। सन्यां सोमस्य संभक्तौ सत्यां सोमः सवितृनामको भवति तदा प्रायश्चित्तापत्तौ सवित्रे स्वाहेति जुहुयात्। 'अथ यदि सातः किंचिदापद्येत सवित्रे स्वाहेति जुहुयात्' (१२।५।१।६) इति श्रुतेः। दीक्षायां सत्यां सोमो विश्वकर्मेत्युच्यते तदा विश्वकर्मणे स्वाहेति जुहुयात्। सोमः क्रीयतेऽनया सा सोमक्रयणी गौस्तस्यामानीतायां सत्यां सोमः पूषा भवति। तदा निमित्ते पूष्णे स्वाहेति जुहुयात्॥ ५४॥

## पञ्चपञ्चाशी।

इन्द्रश्च मरुतश्च क्रयायोपोत्थितोऽसुरः पण्यमानो मित्रः क्रीतो विष्णुः शिपिविष्ट ऊरावासन्नो विष्णुर्नरन्धिषः॥ ५५॥

**म०** क्रयाय द्रव्यदानेनात्मसात्करणायोपोत्थितः उपस्थापितः सोम इन्द्रामरुन्नामकश्च भवति तदा इन्द्राय मरुद्भ्यश्च स्वाहेति जुहुयात्। क्रीयमाणः सोमोऽसुरो भवति असुराय स्वाहेति तदा जुहुयात्। यजमानेन क्रीतः सोमो मित्रो भवति तदा मित्राय स्वाहेति जुहुयात्। ऊरौ यजमानोत्सङ्गे आसन्नः स्थितः सोमः शिपिविष्टो विष्णुर्भवति। शिपिषु प्राणिषु यज्ञेषु वा विष्टः प्रविष्ट एतद्गुणको विष्णुरित्यर्थः। तदा प्रायश्चित्तापत्तौ विष्णवे शिपिविष्टाय स्वाहेति जुहुयात्। प्रोह्यमाणः शकटेनोह्यमानः सोमो विष्णुर्नरन्धिषो भवति नरो ध्रीयन्ते आरोप्यन्ते यस्मिन् स नरन्धिः संसारः तं स्यति नाशयति नरन्धिषः जगत्संहर्तृविशिष्टो विष्णुः। यद्वा 'रध हिंसायाम्' रध्यति हिनस्ति रन्धिषः हन्ता न रन्धिषः नरन्धिषः जगत्पालको वा विष्णुः। तदा विष्णवे नरन्धिषाय स्वाहेति जुहुयात्॥ ५५॥

## षट्पञ्चाशी।

प्रोह्यमाणः सोम आगतो वरुण आसन्द्यामासन्नोऽग्निराग्नीध्र इन्द्रो हविर्धानेऽथर्वोपावह्रियमाणः ५६

**म०** शकटादागतोऽवरूढः सोमनामको भवति तदा सोमाय स्वाहेति जुहुयात्। आसन्यां मञ्चिकायामुपविष्टः सोमो वरुणो भवति तदा वरुणाय स्वाहेति जुहुयात्। आग्नीध्रे वर्तमानः सोमोऽग्निर्भवति तदाग्नये स्वाहेति जुहुयात्। हविर्धाने वर्तमानः सोम इन्द्रो भवति तदेन्द्राय स्वाहेति जुहुयात्। 'हृदे त्वा मनसे त्वे' ( अ० ७ क० १९ ) ति मन्त्रेण कण्डनार्थमुपावह्रियमाणः आनीयमानः सोमोऽथर्वनामको भवति तदाथर्वणे स्वाहेति जुहुयात्॥ ५६॥

## सप्तपञ्चाशी।

विश्वेदेवा अᳪशुषु न्युप्तो विष्णुराप्रीतपा आप्याय्यमानो यमः सूयमानो विष्णुः संभ्रियमाणो वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः॥ ५७॥

**म०** अंशुषु सोमखण्डेषु न्युप्तः कण्डनं कृत्वारोपितः सोमो विश्वदेवनामको भवति तदा विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात्। 'अᳪशुरᳪशुष्टे' ( अ० ५। क० ७ ) इत्यादिमन्त्रेण आप्याय्यमानः वर्ध्यमानः सोम आप्रीतपा विष्णुर्भवति। आ समन्तात्प्रीतान्स्वस्मिन्प्रीतिमतो भक्तान्पाति रक्षतीत्याप्रीतपाः सद्गुणविशिष्टः। तदा विष्णवे आप्रीतपाय स्वाहेति जुहुयात्। अभिषूयमाणः सोमो यमो भवति तदा यमाय स्वाहेति जुहुयात्। सम्यग्भ्रियमाणः पुष्यमाणः सोमो विष्णुर्भवति तदा विष्णवे स्वाहेति जुहुयात्। दशापवित्रेण पूयमानः सोमो वायुर्भवति तदा वायवे स्वाहेति जुहुयात्। पूतः सोमः शुक्रो भवति तदा शुक्राय स्वाहेति जुहुयात्। क्षीरेण दुग्धेन श्रीयते मिश्रीक्रियत इति क्षीरश्रीः तदा शुक्र एव सोमो भवति तदापि शुक्राय स्वाहेति जुहुयात्। सक्तुभिर्मिश्रितः सोमो मन्थी भवति तदा मन्थिने स्वाहेति जुहुयात्॥ ५७॥

१ इत श्चतुर्णां मन्त्राणां भाष्यमसत्संपादितेषु चतुर्ष्वप्यादर्शेषु नोपलभ्यते।

## अष्टपञ्चाशी ।

विश्वेदेवाश्चमसेषून्नीतोऽसुर्होमायोद्यतो रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः प्रतिख्यातो भक्षो भक्ष्यमाणः पितरो नाराशꣳसाः ॥ ५८ ॥

म० चमसेषु ग्रहपात्रेषून्नीतो गृहीतः सोमो विश्वदेवसंज्ञो भवति तदा विश्वेभ्योदेवेभ्यः स्वाहेति जुहुयात् । होमार्थमुद्यतः सोमोऽसुसंज्ञो भवति तदा असवे स्वाहेति जुहुयात् । हूयमानः सोमो रुद्रो भवति तदा रुद्राय स्वाहेति जुहुयात् । अभ्यावृत्तः होमशेषीभूतः सदः प्रति भक्षणार्थमानीतः सोमो वातो भवति तदा वाताय स्वाहेति जुहुयात् । प्रतिख्यातः ब्रह्मन्नुपह्वयस्वेत्यादिना भक्षणार्थं पृष्टः सोमो नृचक्षा भवति नॄन् मनुष्यान् चष्टे शुभाशुभकारिणः पश्यतीति नृचक्षाः तदा नृचक्षसे स्वाहेति जुहुयात् । भक्ष्यमाणः पीयमानः सोमो भक्षो भवति तदा भक्षाय स्वाहेति जुहुयात् । भक्षयित्वा सन्नः खखरेषु सादितः सोमो नाराशंसाः पितरो भवन्ति नरो अस्मिन्नासीनाः शंसन्तीति नराशंसो यज्ञस्तत्र हिता योग्या वा नाराशंसा नाराशंसगुणविशिष्टाः पितरः तदा निमित्तापत्तौ पितृभ्यो नाराशंसेभ्यः स्वाहेति जुहुयात् ॥ ५८ ॥

## एकोनषष्टी ।

सन्नःसिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतो ययोरोजसा स्कभिता रजाꣳसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥ ५९ ॥

उ० स्कन्नमभिमृशति । ययोरोजसा । वैष्णवीवारुणी त्रिष्टुप् । ययोर्विष्णुवरुणयोः ओजसा बलेन । स्कभितारजाꣳसि । स्कभ्नोतिः स्तम्भनार्थः । लोका रजांस्युच्यन्ते । स्तंभिता लोका न चलन्ति । यौ च वीर्येभिर्वीर्यैः स्वकीयैर्वीरतमौ शविष्ठौ बलिष्ठौ च श्येनाविव परबलेषु पततः । अप्रतीतौ अप्रतिगतौ अनन्याश्रितौ । सहोभिः स्वकीयैरेव बलैः तौ विष्णुवरुणौ तुल्यकार्यत्वादुभावपि विष्णू उभावपि वरुणौ । द्वितीयाद्विवचनमेतत् । अगन् गतो यज्ञः । यज्ञसाधनभूतं स्कन्नं द्रव्यं यज्ञशब्देनोच्यते । पूर्वहूतौ पूर्वस्मिन्नाह्वाने यावत्प्रधानं न हूयते तावद्विष्णुवरुणौ प्रति यज्ञो गत इत्यर्थः । यद्वा पूर्वं हूयेते इति पूर्वहूतौ विष्णुवरुणौ प्रतिअगन्प्रत्यगच्छत् । गतो यज्ञ इति संबन्धः ॥ ५९ ॥

म० अवभृथार्थमुद्यतः सोमः सिन्धुर्भवति तदा सिन्धवे स्वाहेति जुहुयात् । जलमभिमुखं नीयमानः सोमः समुद्रो भवति तदा समुद्राय स्वाहेति जुहुयात् । प्रप्लुतोऽप्सु निमग्नः सोमः सलिलो भवति तदा प्रायश्चित्तापत्तौ सलिलाय स्वाहेति जुहुयात् । एताभिर्यज्ञाहुतिभिर्यज्ञः चिकित्सितः प्रतिसंहितश्च भवतीत्यर्थः । तथाच श्रुतिः 'ता वा एताश्चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳश एतदु सर्वैर्देवैर्यज्ञं भिषज्यति सर्वैर्देवैर्यज्ञं प्रतिसंदधातीति' ( १२ । ५ । १ । ३७ ) । 'ययोरोजसेति चोदकेनोपसिञ्चेदिति' ( का० २५ । २ । ९ ) । अभिमर्शनेन विकल्पः । स्कन्नं रसरूपं सोमं जलेन सिञ्चेत् कालाहुतिहोमं वाचनं च कृत्वेति ज्ञेयम् । विष्णुवरुणदेवत्या त्रिष्टुप् । पूर्वार्धे यच्छब्दोपादानात्तच्छब्दाध्याहारः । तौ विष्णू तौ वरुणौ । एकत्र विष्णुशब्दस्यैकशेषोऽन्यत्र वरुणशब्दस्य तुल्यकार्यत्वादुभावपि विष्णू उभावपि वरुणौ कर्मभूतौ प्रति अगन् गतं स्कन्नं यज्ञसाधनमिति शेषः । कदा पूर्वहूतौ पूर्वस्मिन्नाह्वाने यावत्प्रधानं हूयते तावदेव विष्णुं वरुणं च प्रति स्कन्नं हविर्गतमित्यर्थः । विशेषणं वा । पूर्वं हूयेते तौ पूर्वहूतौ विष्णुवरुणौ प्रति हविरगन्निति संबन्धः । तौ कौ ययोर्विष्णुवरुणयोरोजसा बलेन रजांसि लोकाः स्कभिता स्तम्भितानि । 'लोका रजांस्युच्यन्ते' ( नि० ४ । १९ ) इति यास्कः । स्कभ्नोतिः स्तम्भनार्थः । किंच या यौ विष्णुवरुणौ पत्येते ईशाते ऐश्वर्यं कुर्वाते जगतामीश्वरावित्यर्थः । 'पत ऐश्वर्ये' दिवादिरात्मनेपदी । यद्वा पत्येते परसैन्येषु श्येनाविव पततः । किंभूतौ वीर्येभिर्वीर्यैर्बलैर्वीरतमा अत्यन्तं वीरौ । तथा शविष्ठा । शव इति बलनाम । अत्यन्तं बलवन्तौ अतिशवस्विनौ शविष्ठौ 'विन्मतोर्लुक्' ( पा० ५ । ३ । ६५ ) इति विनिलोपे इष्ठनि टिलोपे शविष्ठाविति रूपम् । तथा सहोभिर्बलैरप्रतीता अप्रतिगतौ न केनापि संमुखं गन्तुं शक्यौ अनन्ययोध्यावित्यर्थः । न प्रतीयेते तावप्रतीतौ । एवंविधौ विष्णुवरुणौ प्रति स्कन्नं हविर्गतमित्यर्थः ॥ ५९ ॥

## षष्टी

देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितॄन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यं कं च लोकमगन्यज्ञस्ततो मे भद्रमभूत् ॥ ६० ॥

उ० द्वितीयो मन्त्रविकल्पः । देवान्दिवम् । देवान् प्राप्य दिवं द्युलोकम् अगन् गतो यज्ञः ततोमा द्रविणमष्टु । ततो द्युलोकाद् द्रविणं यज्ञफलम् उत्पन्नं माम् अष्टु व्याप्नोतु । मनुष्यान् प्राप्य अन्तरिक्षलोकं गतो यज्ञः ततः उत्पन्नं फलं मां व्याप्नोतु पितॄन्प्राप्य पृथिवीलोकमगन् यज्ञः तत उत्पन्नं फलं माः व्याप्नोतु । अन्यमपि यं च कंच लोकं गतो यज्ञफलविशेष ततो लोकात् मे मम भद्रमभूत् भवतु ॥ ६० ॥

म० 'देवान् दिवमिति सोमे' ( का० २५ । २ । ८ ) । सोमे स्कन्ने देवान् दिवमित्यभिमर्शनम् । अत्लष्टिर्यज्ञदेवत्या यजमानाशीः । अयं यज्ञो देवान्वाय्वादीन्प्राप्य दिवं द्युलोकमगन् अगच्छत् । ततो द्युलोकस्थाद् यज्ञात् द्रविणं विशिष्टभोगसाधनरूपं धनं यज्ञफलभूतं मा मामष्टु व्याप्नोतु । अश्नोतेः पदविकरणयोर्व्यत्ययः । अनेन सुकृतिनामारोहक्रममभिधाये-

दानीमवरोहक्रममाह। ततो द्युलोकादवरोहणकाले यज्ञो मनुष्यात् मनुष्यलोकमागच्छन् अन्तरिक्षलोकमगन् गतः तत्र स्थितात् यज्ञाद् द्रविणं यज्ञफलं मामष्टु व्याप्नोतु। दक्षिणायने गमनागमनमाह। अयं यज्ञो धूमादिमार्गेण पितॄन्प्राप्य पृथिवीं भूलोकमगन् तत्र स्थितायज्ञाद्द्रविणं मामष्टु व्याप्नोतु। किं बहुना। यं कंच यं कमपि लोकं यज्ञोऽगन् गतस्तस्माद् यज्ञात् मे मम भद्रं कल्याणमभूद्भूयादिति यजमानेनाशास्यते॥ ६०॥

## एकषष्टी।

चतुस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते। तेषां छिन्नꣳसम्वेतद्दधामि स्वाहा घर्मो अप्येतु देवान्॥ ६१॥

**उ०** महावीरभेदे होमः। चतुस्त्रिꣳशत्। पङ्क्तिर्वा त्रिष्टुब्वा। चतुस्त्रिंशत्तन्तवो यज्ञस्य परमेष्ठ्यादयो ये यज्ञं वितत्निरे वितन्वन्ति। ये च इमं यज्ञं स्वधया अन्नेन ददन्ते। 'दद दाने'इत्यस्यैतद्रूपम्। पुष्यत्यर्थस्य तु पुष्णन्ति तेषां वितन्वतां यच्छिन्नं तदेतत्संदधामि। उकारोऽनर्थकः। स्वाहा सुहुतमस्तु। घर्मो महावीरो देवान् अपि गच्छतु॥ ६१॥

**म०** घर्मदेवत्या पङ्क्तिस्त्रिष्टुब् वा द्वाचत्वारिंशदक्षरत्वात्। कात्यायनेनास्या विनियोगो नोक्तः। महावीरभेदे घृतहोमः शाखान्तरे। तन्वन्ति प्रायश्चित्तशमनेन यज्ञं विस्तारयन्तीति तन्तवो देवाश्चतुस्त्रिंशत्संख्याका ये परमेष्ठ्यादय इमं यज्ञं वितत्निरे वितेनिरे वितन्वन्ति। तनोतेर्लिटि तङि प्रथमबहुवचने 'लिटि धातोरनभ्यासस्य' (पा० ६।१।८) इति द्वित्वे 'तनिपत्योश्छन्दसि' (पा० ६।४।९९) इत्युपधालोपे तत्निरे इति रूपम्। ये चेमं स्वधयान्नेन ददन्ते धारयन्ति 'दद दानधारणयोः' तेषां यज्ञं वितन्वतां देवानां यत् छिन्नं तदेतत् अहं संदधामि। उकारः पादपूरणः। स्वाहा सुहुतमस्तु। अनेन घृतहोमेन महावीरः संहितो भवत्वित्यर्थः। घर्मो महावीरः सविता सन्देवानप्येतु देवान्प्रति गच्छतु॥ ६१॥

## द्विषष्टी।

✓यज्ञस्य दोहो विततः पुरुत्रा सो अष्टधा दिवमन्वाततान। स यज्ञ धुक्ष्व महि मे प्रजायाꣳरायस्पोषं विश्वमायुरशीय स्वाहा॥ ६२॥

**उ०** यज्ञस्य दोह इति वाचयति। त्रिष्टुप्। प्रथमोऽर्धर्चो परोक्षो यज्ञः द्वितीये प्रत्यक्षो यज्ञः, अतो यत्तच्छब्दाभ्यां वाक्यपरिपूर्तिः क्रियते। यस्य तव यज्ञस्य सतः दोहः आहुतिपरिणामः विततः प्रसारितः पुरुत्रा बहुधा। ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामो यज्ञपरिणाम इत्याशयः। य एवं दोहो दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वाततान भूमिमन्तरिक्षं च व्याप्य द्युलोकमन्वाततान। स त्वं हे यज्ञ, धुक्ष्व प्रक्षर दोहं महि महान्तम् मे। मम प्रजायाम्। अहं च रायस्पोषं धनस्य पुष्टिं विश्वं सर्वं च आयुः अशीय व्याप्नुयां त्वत्प्रसादात्॥ ६२॥

**म०** 'सोमेज्योपपाते चैकैकां यथाकालꣳ हुत्वा यज्ञस्य दोह इति वाचयतीति' (का० २५।६।७)। सोमयागे यज्ञाङ्गविनाशे परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये यथाकालम् 'अथ यदि पण्यमाने' (१२।५।१।१०) इत्यादिश्रुत्युक्ते काले एकैकामाहुतिं हुत्वा यजमानं वाचयेत्। यज्ञदेवत्या त्रिष्टुप्। पूर्वार्धः परोक्षो द्वितीयः प्रत्यक्षोऽतो यच्छब्दाध्याहारेण योजना। हे यज्ञ, स त्वं मे मम प्रजायां सन्ततौ महि महिमानं धुक्ष्व क्षर देहीत्यर्थः। यद्वा महि महान्तं पूर्वोक्तं दोहं धुक्ष्व। अहं च त्वत्प्रसादाद्रायो धनस्य पोषं पुष्टिं विश्वं सर्वमायुश्चाशीय व्याप्नुयाम्। स कः। यस्य यज्ञस्य यजनीयस्य तव दोह आहुतिपरिणामः स प्रसिद्धो यज्ञफलरूपः पुरुत्रा बहुधा विततः प्रसृतः सन् दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वाततान व्याप। भूमिमन्तरिक्षं च व्याप्य स्वर्गं व्यापेत्यर्थः। ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामो यज्ञपरिणाम इति भावः॥ ६२॥

## त्रिषष्टी।

आपवस्व हिरण्यवदश्ववत्सोम वीरवत्। वाजं गोमन्तमाभर स्वाहा॥ ६३॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायामष्टमोऽध्यायः॥८॥

**उ०** ध्वाङ्क्षारोहणे यूपस्य होमः। आपवस्व। गायत्री सौमी पावमानी। हे सोम, आपवस्व प्रक्षर। हिरण्यवत्। क्रियाविशेषणान्येतानि। हिरण्यसंयुक्तम्। अश्ववदश्वसंयुक्तम्। वीरवत् वीरैः संयुक्तम्। वाजमन्नं च गोमन्तं गोभिः संयुक्तम् आभर। 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः। अकृपणमाहर॥ ६३॥

इति उवटकृतौ मन्त्रभाष्ये अष्टमोऽध्यायः॥ ८॥

**म०** 'आपवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्येति' (का० २५।६।९)। पशौ सोमे च यूपस्य काकारोहणे उद्गात्रा होमः कार्यः। सोमदेवत्या गायत्री कश्यपदृष्टा। हे सोम, त्वमापवस्व आगच्छ। तत्र क्रियाविशेषणानि। कथं हिरण्यवत्कनकयुक्तमश्ववदश्वयुक्तं वीरवद् वीरयुक्तं यथा तथा याहीत्यर्थः। स्वर्णाश्ववीरान्मह्यं देहीत्यर्थः। किंच हे सोम, गोमन्तं धेनुयुक्तं वाजमन्नमाभर आहर। अन्नं धेनूंश्च देहीत्यर्थः। स्वाहा सुहुतमस्तु 'हृग्रहोर्भश्छन्दसि' (पा० ८।२।३२) इति भकारः॥ ६३॥ प्रायश्चित्तानि समाप्तानि।

श्रीमन्महीधरकृते वेददीपे मनोहरे।
ग्रहग्रहानिमित्तान्तोऽष्टमोऽध्यायः समीरितः॥ ८॥

## नवमोऽध्यायः ।

### तत्र प्रथमा ।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु स्वाहा ॥ १ ॥

उ० देव सवितः। वाजपेयिका मन्त्रा एष ते निर्ऋते भाग इत्येतस्मात्प्राक् । बृहस्पतेरार्षम् इन्द्रस्य च । कर्मणः कर्मणः पुरस्तादाहुतिं जुहोति गायत्र्या त्रिष्टुभा । हे देव सवितः, प्रसुव अभ्यनुजानीहि वाजपेयलक्षणं यज्ञम् । अभ्यनुजानीहि यजमानं यज्ञपतिम् । भगाय भजनीयाय यज्ञफलाय । एवं पुरुषमुक्त्वा अथेदानीं मण्डलमाह । त्वत्प्रसादाच्च मण्डललक्षणो दिव्यो दिवि भवो गन्धर्वो गवां वाचां रश्मीनां वा धारयिता केतपूः । केतशब्देनान्नमुच्यते । अन्नस्य पविता । केतमन्नं नोऽस्माकं पुनातु शोधयतु । त्वत्प्रसादाच्च वाचस्पतिः वाजमन्नं नोऽस्माकं स्वदतु । 'स्वद आस्वादने' । आस्वादयतु ॥ १ ॥

म० चतुर्थाध्यायमारभ्याष्टमान्तमध्यायपञ्चके अग्निष्टोममन्त्रास्तदीयप्रासङ्गिका मन्त्राश्चोक्ताः । नवमेऽध्याये वाजपेयमन्त्रा उच्यन्ते चतुस्त्रिंशत्कण्डिकापर्यन्तम् । तेषां बृहस्पतीन्द्रावृषी । तत्र 'देव सवितरिति जुहोति यजुत्वादिद्वित्वि' ( का० १४ । १ । ११ ) । वाजपेयाङ्गभूतानां यजतीनां दीक्षणीयाप्रापणीयादीनामादिषु सकृद्गृहीतमाज्यं जुहोति । सवितृदेवत्या त्रिष्टुप् । हे सवितः सर्वस्य प्रेरकान्तर्यामिन्, हे देव दीप्यमान, यज्ञं वाजपेयलक्षणं यागं प्रसुव अभ्यनुजानीहि प्रवर्तयेत्यर्थः । यज्ञपतिं यजमानं भगाय भजनीयायानुष्ठानरूपायैश्वर्याय प्रसुव प्रेरय । एवं मण्डलाधिष्ठातारं पुरुषमुक्त्वेदानीं मण्डलं प्रत्याह । त्वत्प्रसादाद्दिवि भवो दिव्यो गन्धर्वो गवां रश्मीनां धारयिता केतपूः । केतशब्देनान्नमुच्यते । केतमन्नं पुनातीति केतपूः । अन्नस्य पावयिता सूर्यमण्डलरूपो देवो नोऽस्माकं केतमन्नं पुनातु शोधयतु । किंच त्वत्प्रसादाद्वाचस्पतिः प्रजापतिर्नोऽस्माकं वाजमन्नं हविर्लक्षणं स्वदतु आस्वादयतु स्वाहा सुहुतमस्तु ॥ १ ॥

### द्वितीया ।

ध्रुवसदं त्वा नृषदं मनःसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ अप्सुषदं त्वा घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ पृथिविसदं त्वान्तरिक्षसदं दिविसदं देवसदं नाकसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ २ ॥

उ० पञ्च वाजपेयिका ग्रहा गृह्यन्ते ऐन्द्राः । ध्रुवसदं त्वा सोमाहुतिपरिणामभूतो रस एषु लोकेष्वावर्तमान इह गृह्यते सोमाध्यस्तः । ध्रुवे अस्मिन् लोके सीदतीति ध्रुवसत् ध्रुवसदं त्वाम् नृषदं मनुष्यसदम् । मनसि सीदतीति मनःसदम् । इन्द्राय त्वां जुष्टमभिरुचितं गृह्णामि उपयामगृहीतोसीत्ययं भिन्नक्रमः । आदौ मन्त्रावयवो द्रष्टव्यः अर्थसंबन्धात् सादयति । एष ते योनिरिन्द्राय त्वा जुष्टतममभिरुचिततमम् । द्वितीयं गृह्णाति । अप्सुषदमुदकसदं त्वां घृतसदं व्योमसदम् । व्योमशब्देनान्तरिक्षमभिधीयते । शेषं व्याख्यातम् । तृतीयं गृह्णाति । पृथिवीसदं त्वान्तरिक्षसदं दिविसदं देवसदं नाकसदम् । कमिति सुखनाम तत्प्रतिषिद्धं दुःखं प्रतिषिध्यते । यत्र गतानामल्पमप्यसुखं न विद्यते स नाको लोकः स्वर्लोकविशेषः । शेषमृजु ॥ २ ॥

म० 'प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं पञ्च चैन्द्रान्ध्रुवसदमिति प्रतिमन्त्रमिति' ( का० १४ । १ । २६ १ ) । प्रातःसवन आग्रयणानन्तरं त्रीनतिग्राह्यानादाय षोडशिनं चादाय पञ्चेन्द्रदेवत्यान्ग्रहान्गृह्णीयात् । त्रीणि यजूंष्यैन्द्रदेवत्यानि । हे सोम, त्वम् उपयामयतीत्युपयामो ग्रहस्तेन गृहीतोऽसि । इन्द्राय जुष्टं प्रियं त्वा त्वां गृह्णामि । किंभूतं त्वाम् । ध्रुवसदं ध्रुवे स्थिरेऽस्मिन् लोके सीदतीति ध्रुवसत्तम् । नृषु मनुष्येषु सीदतीति नृषत्तम् । मनसि सीदतीति मनःसत्तम् । सोमाहुतिपरिणामभूतो रस एषु लोकेष्वावर्तमानः सोमाध्यास्त उच्यते । सादयति हे ग्रह, एष खरप्रदेशस्तव स्थानम् । इन्द्राय प्रियतमं त्वां सादयामीति शेषः । अथ द्वितीयम् । अप्सुषदमुदकसदं घृते सीदतीति व्योम्नि अन्तरिक्षे सीदतीति । शेषो व्याख्यातः । अथ तृतीयम् । पृथिव्यामन्तरिक्षे दिवि स्वर्गे देवेषु नास्ति अकं दुःखं यस्मिन् तस्मिन्नाके सुखान्विते स्वर्गविशेषे सीदतीति तादृशम् । शेषमृजु ॥ २ ॥

### तृतीया ।

अपांꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमाहितम् । अपांꣳरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ३ ॥

उ० चतुर्थं गृह्णाति । अपांꣳरसम् । रसदेवत्यानुष्टुप् । रसः सारः सोपां वायुः । एष वा अपां रसो योयं पवत इति श्रुतिः । उद्वयसम् । उद्गतं वयोऽन्नं यस्माद्वायोस्तमुद्वयसं वायुम् सूर्ये सन्तं समाहितमित्यनयोः पदयोर्व्यत्ययोऽर्थसंबन्धात् । सूर्ये समाहितं सन्तं समारोपितं स्थापितं सन्तं गृह्णामीति वक्ष्यमाणेन संबन्धः । अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् । अपां रसो वायुस्तस्यापि रसः प्रजापतिः, स हि यज्ञलोककालाग्निवायुसूर्यर्ग्यजुःसामादि-

वपुः तं वःशब्देनाह । हे आपः, गृह्णामि उत्तमम् उत्कृष्टतमम् । यद्वा वःशब्दोऽनर्थकः । अपां रसस्य वायोर्यो रसः प्रजापतिस्तं गृह्णामीति तस्मिन्पक्षे योजना । उपयाम इत्यादि समानम् ॥ ३ ॥

म० अथ चतुर्थम् । रसदेवत्यानुष्टुप् । सूर्ये समाहितं समारोपितं स्थापितं सन्तमपामुदकानां रसं सारं वायुमहं गृह्णामि । 'एष वा अपाᳫं रसो योऽयं पवते' (५।१।२।६) इति श्रुतेः । किंभूतं रसम् । उद्वयसमुद्गतं वयोऽन्नं यस्माद्वायोः स उद्वयास्तम् । वायुनैव धान्यानि निष्पद्यन्ते । किंच अपां रसस्य वायोर्यो रसः सारः प्रजापतिर्हिरण्यगर्भः स हि यज्ञलोककालाग्निवायुसूर्यर्ग्यजुःसामादिवपुः हे देवाः, वो युष्मदर्थं तं प्रजापतिमहं गृह्णामि । किंभूतम् । उत्तमसमुत्कृष्टतमम् । वःशब्दोऽनर्थको वा । सोमरूपेण वायुं तदभिमानिनं प्रजापतिं च गृह्णामीत्यर्थः । उपयामेति व्याख्यातम् । एष त इति सादनम् ॥ ३ ॥

## चतुर्थी ।

ग्रहा॑ ऊर्जाहुतयो॒ व्यन्तो॒ विप्रा॑य म॒तिम् । तेषां॒ विशि॑प्रियाणां॒ वोऽह॒मिष॒मूर्ज॒ᳪ सम॑ग्रभमु॒पया॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा॒ जुष्टं॑ गृह्णाम्ये॒ष ते॒ योनि॒रिन्द्रा॑य त्वा॒ जुष्ट॑तमम् । स॒म्पृचौ॑ स्थः सं मा॑ भ॒द्रेण॑ पृङ्क्तं वि॒पृचौ॑ स्थो॒ वि मा॑ पा॒प्मना॑ पृङ्क्तम् ॥ ४ ॥

उ० पञ्चमं गृह्णाति । ग्रहा ऊर्जाहुतयः । अनुष्टुप् । हे ग्रहाः ऊर्जमन्नं रसं ये आह्वयन्ति ते ऊर्जाहुतयः । व्यन्तः पश्यन्तो जानन्तः विप्राय मेधाविने इन्द्राय मतिं विशिप्रिया भवतेति शेषः । शिप्रे हनूनासिके वेत्युक्तम् । इह तु हनू एव गृह्येते । विगतं हन्वोः कर्म येषु ग्रहेषु ते विशिप्रियाः शोभनाभिषवसंस्कृताः सुपूताश्च विशिप्रिया उच्यन्ते । तत्र हि हन्वोर्व्यापारो न भवति । तेषां च विशिप्रियाणां सतां वः संबन्धिनाम् अहम् इषमन्नम् ऊर्जं च रसम् समग्रभम् संगृह्णामि । शेषं व्याख्यातम् । उपयाम इत्यादि व्याख्यातम् । उपर्युपर्यक्षं सोमग्रहं करोत्यध्वर्युः । अधोऽधोऽक्षं नेष्टा सुराग्रहं करोति संपृचौस्थः । 'पची संपर्के' । यौ युवां ग्रहौ संपृक्तौ स्थः तौ संपृङ्क्तं संसृजतं मां भद्रेण भन्दनीयेन कल्याणेन । तौ पुनर्विहरतः विपृचौ स्थः । यतो युवां विगतसंसर्गौ स्थः ततो वि मा पाप्मना पृङ्क्तम् विगतसंसर्गं पाप्मना मां कुरुतम् ॥ ४ ॥

म० अथ पञ्चमम् । ग्रहदेवत्यानुष्टुप् । हे ग्रहाः, तेषां वो युष्माकं संबन्धिनमिषमन्नमूर्जं रसं चाहं समग्रभं समग्रहं सम्यग्गृह्णामि । किंभूतानां । विशिप्रियाणाम् शिप्रे हनू नासिके वा । इह तु हनू । शिप्रयोर्हन्वोः कर्म शिप्रियं हनुचलनम् । विगतं शिप्रियं येषु ग्रहेषु ते विशिप्रियाः सम्यगभिषुताः सुपूताश्च । तत्र हि हन्वोर्व्यापारो नास्ति सुपेयत्वात् । तेषां केषां । ये यूयमूर्जाहुतयः ऊर्जमन्नरसमाह्वयन्ति ये यैर्वा ते ऊर्जाहुतयः । तथा विप्राय मेधाविने इन्द्राय मतिं विशिष्टबुद्धिं व्यन्तः जानन्तो गमयन्तो वा । वीत्यस्य गतिकर्मणो धातोः शतृप्रत्यये रूपम् । उपयाम० एष ते इति व्याख्याते । (का० १४ । २ । ७) उपर्युपर्यक्षमध्वर्युर्धारयत्यधोऽधो नेष्टा संपृचाविति । अध्वर्युः सोमग्रहमक्षोपरि धारयति नेष्टा सुराग्रहमक्षाधस्तात् । सहैव धारणं मन्त्रपाठश्च । ग्रहदेवते यजुषी । हे सोमसुराग्रहौ, यौ युवां संपृचौ स्थः संपृक्तौ भवथः । 'पृची संपर्के' क्विप् । तौ युवां मा मां भद्रेण भन्दनीयेन कल्याणेन संपृङ्क्तं संसृजतं संयोजयतम् । 'विपृचाविल्याहरते' ( का० १४ । २ । ८ ) इति । अध्वर्युनेष्टारौ स्वं स्वं ग्रहं स्वसमीपमानयतः । हे ग्रहौ, यतो युवां विपृचौ वियुक्तौ स्थः ततो मा मां पाप्मना विपृङ्क्तं वियोजयतम् ॥ ४ ॥

## पञ्चमी ।

इन्द्र॑स्य॒ वज्रो॑ऽसि वाज॒सास्त्वया॒यं वाज॒ᳪ सेत् । वाज॑स्य॒ नु प्र॑स॒वे मा॒तरं॑ म॒हीमदि॑तिं॒ नाम॒ वच॑सा करामहे । यस्या॑मि॒दं विश्वं॒ भुव॑नमावि॒वेश॒ तस्यां॑ नो दे॒वः स॑वि॒ता धर्म॑ साविषत् ॥ ५ ॥

उ० रथमुपावहरति । इन्द्रस्य वज्रोसि । इन्द्रोह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य रथस्तृतीयं वा यावद्वेति यदुक्तं तदिदमभिधीयते । यस्त्वमिन्द्रस्य वज्रोसि वाजसाश्च । वाजमन्नं सनोतीति वाजसाः तं त्वां ब्रवीमि । त्वया वज्रीभूतेनायं यजमनो वाजमान्नं सेत् । सनोतेर्वा एतद्रूपम् । सनुयात् संभजेदित्यर्थः । सिनुयाद्बध्नीयादित्यर्थः । धूर्गृहीतमभ्यावर्तयति । वाजस्य नु । जगत्यतिजगती वा पार्थिवी । चतुर्थः पादः सावित्रः । वाजस्य अन्नस्य । नु अनर्थकः । प्रसवे अभ्यनुज्ञायां वर्तमाना इति शेषः । या मातरं जगन्निमात्रीं महीं महतीम् अदितिम् अदीनां नाम । ताम् अनुकूलां वचसा वेदवाक्येनानेन करामहे कृतवन्तः साहसिकाः । आत्मनेपदं करोतेः । यस्यां चेदं विश्वं भुवनं भूतजातम् आविवेश आविष्टम् । तस्यां पृथिव्यां नोऽस्माकं देवः दानादिगुणयुक्तः सविता सर्वस्य प्रसविता । धर्मं धारणमवस्थानं साविषत् प्रसुवताम् ॥ ५ ॥

म० 'मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणमिति' ( का० १४ । ३ । १ ) । महामरुत्वतीयान्ते माहेन्द्रात्पूर्वं रथवाहनाच्छकटाद्रथमवतारयति । रथदेवत्यं यजुः । हे रथ, त्वमिन्द्रस्य वज्रोऽसि । इन्द्रेण यदा वृत्राय वज्रं प्रहृतं तत्त्रिधा जातं तस्यैको भागो रथ इति 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार' ( १।२।४ । १ ) इत्यादिश्रुत्या उक्तम् । किंभूतस्त्वम् । वाजसाः वाजमन्नं सनोति ददातीति वाजसाः । 'षणु दाने' विट्प्रत्ययः 'विड्वनोरनुनासिकस्यात्–' (पा० ६।४।४१) इत्याकारः । किंच

अयं यजमानस्त्वया वज्रीभूतेन सहायेन वाजमन्नं सेत् । सनोतेः सिनोतेर्वा रूपम् । अन्नं सनुयात्संभजेत् । यद्वा सिनुयाद्बध्नीयात् । बह्वन्नवान्भूयादित्यर्थः । 'चात्वालमावर्तयति वाजस्येति धूर्गृहीतमिति' ( का० १४ । ३ । २ ) । अवतारितं रथं धुरि गृहीत्वा चात्वालाद्दक्षिणेनानीय वेद्यां स्थापयेत् । पृथिवीदेवत्यातिजगती अन्त्यः पादः सवितृदेवत्यः । नु एवार्थे । वाजस्यान्नस्य प्रसवेऽनुज्ञायामेव वर्तमाना वयं यां भूमिं नाम प्रसिद्धं यथा तथा वचसा वेदवाक्येन एवंविधामनुकूलां करामहे कृतवन्तः कुर्महे वा । करोतेः शपि रूपम् । किंभूतां भूमिम् । मातरं जगन्निर्मात्रीं महीं महतीं महनीयां वा अदितिमदीनामखण्डितां वा । किंच इदं विश्वं भुवनं सर्वं भूतजातं यस्यां भूमावाविवेश आविष्टम् । सविता देवस्तस्यां भूमावेव नोऽस्माकं घर्मं धारणमवस्थानं साविषत् प्रसुवतां प्रेरयतु । 'षू प्रेरणे' इति धातोर्णिजन्तस्य लेटि साविषदिति रूपम् 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इति सूत्रैः ॥ ५ ॥

## षष्ठी ।

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः । देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजꣳसेत् ॥ ६ ॥

**उ०** अश्वानद्भिरभ्युक्षति । अप्स्वन्तः । अनवसाना पुरउष्णिक् अश्वदेवत्या । अप्सु अन्तरवस्थितममृतम् अप्सु च भेषजम् । तत्र हे अश्वाः, यूयं भवत वाजिनः । वाज इत्यन्ननाम तद् येषु विद्यते ते वाजिनः । अन्नवन्तो यूयं तत्र भवतेत्यर्थः । अपामुत प्रशस्तिषु । उत अपिच अपां प्रशस्तिषु प्रशस्तेषु पवित्रेषु भागेषु भवतेत्यनुषज्यते । द्वितीयः प्रोक्षणमन्त्रः । देवीरापः । हे देव्यः आपः, यो व ऊर्मिः प्रतूर्तिः । वो युष्माकम् ऊर्मिः कल्लोलो महानुदकसन्नाहः । प्रतूर्तिः प्रत्वरणः । ककुन्मान् । ककुदितिशब्देन ऋषभस्य स्कन्धदेश उन्नत उच्यते । तत्सामान्यादुदकसंघातोप्युन्नततमः ककुच्छब्देनोच्यते । बहुभिरुदकनिचयैः संयुक्तो महाप्राग्भार इत्यर्थः । वाजसाः अन्नस्य संभक्ता । तेनायमश्वः प्रोक्षितो वाजमन्नं सेत् । सनोतेः सिनोतेर्वा लिटि एतद्रूपम् । सनुयात् संभजेत् । सिनुयात् बध्नीयात् ॥ ६ ॥

**म०** 'अश्वान् प्रोक्षत्यपोऽवनीयमानान् स्नातान्वागतानप्स्वन्तरिति देवीराप इति वा समुच्चयो वेति' ( का० १४ । ३ । ३ । ५ ) स्नानार्थमपो नीयमानान् स्नात्वागतान्वाश्वानप्स्वन्तरिति देवीराप इति मन्त्रेण वोभाभ्यां वा प्रोक्षेत् । अश्वदेवत्यावसानरहिता पुरउष्णिक् । अस्याः पाद आद्यो द्वादशाक्षरो द्वावष्टाक्षरौ । अप्सु उदकेषु अन्तर्मध्ये अमृतमवस्थितमप्सु भेषजमारोग्यपुष्टिकरमौषधं चावस्थितम् । हे अश्वाः, यूयं तत्रामृतभेषजयुतास्वप्सु वाजिनोऽन्नवन्तो भवत । उतापि च अपां प्रशस्तिषु प्रशस्तेषु भागेषु यूयं भवत । द्वितीयः प्रोक्षणमन्त्रः अब्देवत्यं यजुः । हे देवीः देव्यो दीप्यमाना आपः, वो युष्माकं य ऊर्मिः कल्लोलस्तेन सिक्तोऽयमश्वो वाजमन्नं सेत् सनुयाद् बध्नीयाद्वा । किंभूत ऊर्मिः । प्रतूर्तिः प्रकृष्टा तूर्तिर्वेगो यस्य प्रत्वरणशीलः । तथा ककुन्मान् ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते सादृश्ये मतुप् । तत्सामान्यादुदकनिचयैः संयुक्तो बहुलोदकसंघातवान्ककुन्मानित्युच्यते । तथा वाजसाः अन्नस्य दाता ॥ ६ ॥

## सप्तमी ।

वातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः । ते अग्रेऽश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः ॥ ७ ॥

**उ०** अश्वं युनक्ति । वातो वा उष्णिक् अश्वस्तुतिः । वाशब्दः समुच्चयार्थीयः । वनश्च मनश्च गन्धर्वाश्च सप्तविंशतिर्नक्षत्राणि । एते त्वां युञ्जन्तु । त्वयि च जवमादधातु । यतस्ते अग्रे प्रथममश्वमयुञ्जन् । ते अस्मिन् जवमादधुः ते च अस्मिन् जवं वेगमाहितवन्तः ॥ ७ ॥

**म०** 'दक्षिणं युनक्ति वातो वेति' ( का० १४ । ३ । ६ ) । दक्षिणमश्वं रथे योजयेत् । अश्वदेवत्या उष्णिक् । वाशब्दौ समुच्चयार्थौ । वातो वायुर्मन इन्द्रियं सप्तविंशतिर्नक्षत्राणि गन्धर्वा गोर्भूमेर्धर्तारः ते वातादयोऽग्रे पूर्वमश्वमयुञ्जन् रथे योजितवन्तः ते च वातादयोऽस्मिन्नश्वे जवं वेगमादधुः स्थापितवन्तः ॥ ७ ॥

## अष्टमी ।

वातरꣳहा भव वाजिन्युज्यमान इन्द्रस्येव दक्षिणः श्रियैधि । युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवं दधातु ॥ ८ ॥

**उ०** द्वितीयं युनक्ति । वातरंहा त्रिष्टुप् अश्वस्तुतिः । रिहतिर्गत्यर्थः । वातजवो भव हे वाजिन्, युज्यमानः सन् । इन्द्रस्येव च दक्षिणोऽश्वः श्रिया एधि भव अस्य यजमानस्य । युञ्जन्तु त्वां मरुतो विश्ववेदसः सर्वधना वा सर्वज्ञाना वा । आदधातु च ते तव त्वष्टा पत्सु पादेषु जवं वेगं युक्तस्य सतः ॥ ८ ॥

**म०** 'उत्तरं वातरꣳहा इति' ( का० १४ । ३ । ७ ) । उत्तरमश्वं युनक्ति । अश्वदेवत्या त्रिष्टुप् । हे वाजिन् वेगवन्नश्व, युज्यमानः सन् त्वं वातरंहा वातवद्वेगयुक्तो भव वातस्येव रंहो यस्य । किंच दक्षिणो दक्षिणभागे स्थितस्त्वमिन्द्रस्याश्व इव श्रिया शोभया युक्त एधि भव । किंच विश्ववेदसः सर्वज्ञाः सर्वधना वा मरुतः हे अश्व, त्वां युञ्जन्तु रथे नियोजयन्तु । किंच त्वष्टा देवः हे अश्व, ते तव पत्सु पादेषु जवं वेगमादधातु स्थापयतु ॥ ८ ॥

## नवमी ।

जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वाते । तेन नो वाजिन्बलवान्बलेन वाजजिच्च भव समने च पारयिष्णुः ॥ वाजिनो वाजजितोवाजꣳ सरिष्यन्तो बृहस्पतेर्भागमवजिघ्रत ॥९॥

उ० तृतीयं युनक्ति । जवो यस्ते । जगती अश्वस्तुतिः । जवो वेगो यस्ते तव हे वाजिन्, निहितः स्थापितः गुहा । गुहायामिति विभक्तिव्यत्ययः । गुहाशब्दो रहस्यवचनः । यश्च श्येने पक्षिणि परीत्तः । परिपूर्वस्य तनोतेरेतद्रूपम् । परिततो व्यवस्थितः अचरच्च वाते यश्च वाते त्वदीयो जवः अचरत् । तेन नो वाजिन्बलवान्बलेन वेगलक्षणेन बलेन बलवान् भूत्वा हे वाजिन्, नोऽस्माकं वाजजिच्च भव अन्नस्य च जेता भव । समने च पारयिष्णुः समने च संग्रामे च पारयिता भव । बार्हस्पत्यमश्वानवघ्रापयति । वाजिनो वाजजितः । हे वाजिनोऽश्वाः वाजजितः अन्नस्य जेतारः, वाजमन्नं जेतुं सरिष्यन्तो बृहस्पतेर्भागं चरुम् अवजिघ्रत ॥ ९ ॥

म० 'दक्षिणाप्रष्टिं जवो यस्त इति' (का० १४।३।८)। दक्षिणायां धुरि प्रकृष्टं देशमश्नुत इति दक्षिणाप्रष्टिस्तादृशं तृतीयमश्वं युनक्ति । अश्वदेवत्या जगती । हे वाजिन्नश्व, यस्ते तव जवो वेगः गुहा गुहायां हृदयप्रदेशे निहितोऽवस्थापितः । 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति गुहाशब्दात् ङेर्लुक् । श्येने श्येनाख्ये पक्षिणि यो जवः परीत्तः त्वयैव परिदत्तः सन् अचरत् चरति प्रवर्तते । यश्च ते जवः परिदत्तः सन् वाते अचरत् वायौ चरति । परिपूर्वाद्ददातेर्निष्ठायां 'अच उपसर्गात्तः' ( पा० ७।४।४७ ) इति तादेशे 'दस्ति' ( पा० ६।३।१२४ ) इति दादेशे तकारे परे इगन्तोपसर्गस्य दीर्घे परीत्त इति । हे वाजिन्, तेन त्रिविधेन बलेन वेगलक्षणेन बलवान्वेगवान्सन्नोऽस्माकं वाजजित् अन्नस्य जेता भव । च पुनः समने सङ्ग्रामे पारयिष्णुः पारयिता च पारप्रापको भव । 'पार तीर कर्मसमाप्तौ' इत्यस्माच्चुरादिणिजन्तात् 'णेश्छन्दसि' ( पा० ३।२।१३७ ) इतीष्णुप्रत्ययः । 'बार्हस्पत्येनानाघ्रापयति वाजिन इति' (का०१४।३।१०) । बार्हस्पत्यं चरुमश्वानाघ्रापयेत् । अश्वदेवत्यं यजुः । वाजजितोऽन्नस्य जेतारो वाजमन्नं प्रति सरिष्यन्तो गमिष्यन्तो हे वाजिनोऽश्वाः, यूयं बृहस्पतेर्भागं चरुमवजिघ्रत आघ्राणं कुरुत ॥ ९ ॥

## दशमी ।

देवस्याहꣳसवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकꣳरुहेयम् । देवस्याहꣳसवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳरुहेयम् । देवस्याहꣳसवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहम् । देवस्याहꣳसवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहम् ॥ १० ॥

उ० ब्रह्मा रथचक्रमारोहति । देवस्याहं सवितुः सवे अभ्यनुज्ञायां सत्यसवसः सत्याभ्यनुज्ञायां वर्तमानस्य बृहस्पतेः संबन्धि उत्तममुत्कृष्टं नाकं स्वर्गलोकं रुहेयम् आरोहामि । देवस्याहं सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकं रुहेयमिति देवतामात्रं विशेषः । रथचक्रादवतरति । देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकम् अरुहम् । प्रशब्दः प्रकर्षद्योतनार्थः । अरुहमिति च भूतकालाभिधायी । भूतो हि कालः । आरूढवानस्मीत्यर्थः । शेषमारोहणमन्त्रेण समानम् । इन्द्रस्य इति उत्तरे मन्त्रे विशेषः ॥ १० ॥

म० 'देवस्याहमिति ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितमिति' ( का० १४।३।१२ ) । उत्करप्रदेशे निखातस्य नाभिमात्रकाष्ठस्याग्रे स्थितं रथचक्रं ब्रह्मारोहेत् । ब्राह्मणकर्तृके वाजपेये लिङ्गोक्तदेवतम् । सत्यसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्तमानोऽहं बृहस्पतेः संबन्धिनमुत्तममुत्कृष्टं नाकं स्वर्गं रुहेयमारोहामि । क्षत्रियवाजपेये चक्रारोहमन्त्रः । तत्र इन्द्रस्य नाकं रुहेयमिति विशेषः । 'आगतेषु ब्रह्मावरोहति देवस्याहमिति' ( का० १४।४।८ ) । यजमानादीनां सप्तदशरथेषु सप्तदशशरप्रक्षेपप्रदेशे निखातामौदुम्बरीं शाखां प्रदक्षिणीकृत्य देवयजनदेशमागतेषु सत्सु ब्रह्मा रथचक्रादवरोहति । विप्रयज्ञे पूर्वमन्त्रेण क्षात्रे उत्तरेण । सत्यं प्रकृष्टं च सवो यस्येति सत्यप्रसवाः । अत्र प्रशब्दः प्रकर्षद्योतकः । अरुहमिति भूतकालः नाकमारूढवानस्मीत्यर्थः । शेषं पूर्ववत् ॥ १० ॥

## एकादशी ।

बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयत । इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत ॥ ११ ॥

उ० दुन्दुभिमाहन्त्येकं सर्वेषां तु संस्कारो बहुवचनान्तत्वान्मन्त्रस्य । बृहस्पते वाजं जय । हे दुन्दुभयः यूयमुच्यध्वम् बृहस्पते वाजमन्नं जय इत्थंभूतां वाचं बृहस्पतयेऽर्थाय वदत । बृहस्पतिं च वाजमन्नं जेष्यामीति जापयत । 'जप जल्प व्यक्तायां वाचि' । जपतेः 'हेतुमति च' इति णिच् लोट् मध्यमपुरुषस्य बहुवचनम् । जापयत उद्वादयत । बृहस्पतिना वाजं जितमित्यर्थः । 'जि जये' इत्यस्य वा जयं कारयतेति वा । इन्द्रवाजं जयेति देवतामात्रविशेषः ॥ ११ ॥

म० 'बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति तूष्णीमितरानिति' ( का० १४।३।१५ ) अनुवेद्युच्छ्रितस्थाण्वारोपितसप्तदशदुन्दुभीनां मध्ये एकं मन्त्रेणाहन्ति षोडश तूष्णीम् । यजुः विप्रयज्ञे मन्त्रः । हे दुन्दुभयः, यूयं बृहस्पतये इति वाचं

वदत । किम् । यत् हे बृहस्पते, त्वं वाजमन्नं जय । किंच हे दुन्दुभयः, यूयमेव बृहस्पतिं वाजमन्नं जापयत । बृहस्पतिनान्नजयं कारयतेत्यर्थः । 'जि जये' इत्यस्य हेतुमण्णिचि 'क्रीङ्जीनां णौ' ( पा० ६ । १ । ४८ ) इति धातोराकारे कृते 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ' ( पा० ७ । ३ । ३६ ) इति पुगागमे लोण्मध्यमबहुवचने जापयतेति रूपम् । क्षत्रयज्ञे दुन्दुभिवादनमन्त्रः । हे दुन्दुभयः, यूयमिन्द्रायेति वाचं वदत यत् हे इन्द्र, त्वं वाजं जय । इन्द्रवाजं यूयं जापयतेति पूर्ववत् ॥ ११ ॥

## द्वादशी ।

एषा वः सा सत्या संवाग्भूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम् । एषा वः सा सत्या संवाग्भूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं वनस्पतयो विमुच्यध्वम् ॥ १२ ॥

**उ०** दुन्दुभिमवहरति । एषा वः । एषा वः युष्माकं सा सत्या अवितथा संगतवादिनी वाक् अभूत् यया वाचा बृहस्पतिं वाजमन्नं जेष्यामीति इत्थमीदृशम् अजीजपत् । जपतेर्णिचि लुङि चङि एतद्रूपं भवति । जापितवन्तः । उद्वादितवन्त इत्यर्थः । यच्च यूयमजीजपद्बृहस्पतिं वाजमन्नं जेष्यामीति तच्च बृहस्पतिना जितम् । अतो यूयं कृतकृत्याः सन्तः हे वनस्पतयो वा वानस्पत्या दुन्दुभयो विमुच्यध्वम् । उत्तरोपि मन्त्रोऽनेनैव व्याख्यातो देवतामात्रं तु विशेषः ॥ १२ ॥

**म०** 'एषा व इति मन्त्राहतमवहरते तूष्णीमितरानिति' ( का० १४ । ४ । ९ । १० ) सप्तदशदुन्दुभीनां मध्ये मन्त्रवादितं मन्त्रेणावतारयति षोडश तूष्णीं स्थाणुभ्यः । पूर्वो मन्त्रो विप्रयज्ञे उत्तरः क्षात्रे । हे दुन्दुभयः, वो युष्माकमेषा वाक् सत्या समभूत् तथ्या जाता । यया वाचा बृहस्पतिं वाजमजीजपत । पुनर्बृहस्पतिं वाजमजीजपत 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( नि० १० । ४२ ) इति यास्कोक्तेर्भूयानर्थो ग्राह्यः । अत्यन्तं बृहस्पतिमन्नजयं कारितवन्तो यूयं यया वाचा सा सत्या जातेत्यर्थः । जयतेर्णिजन्तस्य लुङि मध्यमबहुवचनेऽजीजपतेति रूपम् । हे वनस्पतयो वनस्पतिविकारा दुन्दुभयः, यूयं विमुच्यध्वं कृतकृत्याः सन्तो विमोचनं कुरुत । क्षात्रे यज्ञे उत्तरो मन्त्रः । यया वाचा इन्द्रं वाजमजीजपत सा सत्याभूदतो यूयं विमुच्यध्वं तुल्यम् ॥ १२ ॥

## त्रयोदशी ।

देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषम् । वाजिनो वाजजितोऽध्वनः स्कभ्नुवन्तो योजना मिमानाः काष्ठां गच्छत ॥ १३ ॥

**उ०** रथमारोहयति यजमानः । देवस्याहम् । देवस्य सवितुः सत्यप्रसवसः प्रसवे अहं वर्तमानः बृहस्पतेर्वाजस्य जेतुः संबन्धि वाज्यमन्नं जेषम् । वाचयति वाजिनो वाजजितः अश्वा उच्यन्ते । हे वाजिनः. वाजजितः अन्नस्य जेतारः, अध्वनः मार्गान् स्कभ्नुवन्तः क्षोभयन्तः । स ह्यश्वानां स्वभावः । योजनानि अतिशीघ्रतया मिमानाः परिच्छिन्दन्तः शीघ्रं काष्ठाम् आज्यन्तं गच्छत आज्यन्तोपि काष्ठोच्यते क्रान्त्वा स्थितो भवति ॥ १३ ॥

**म०** 'देवस्याहमिति यजुर्युक्तमारोहति यजमानः' ( का० १४ । ३ । १८ ) मन्त्रयुक्तं रथं यजमान आरोहेत् । सत्यप्रसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्तमानोऽहं वाजजितोऽन्नजेतुर्बृहस्पतेः संबन्धिनं वाजमन्नं जेषं जयेयं । जयतेर्लेटि उत्तमैकवचने 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्यडागमे 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) इति सिप्प्रत्ययः 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इति मिप इकारलोपे गुणे च जेषमिति रूपम् । यद्वा लुङि अडि उत्तमैकवचनेऽडभावे । 'वाजिन इति वाचयतीति' ( का० १४ । ३ । २२ ) । हे वाजिनोऽश्वाः, यूयं काष्ठां गच्छत आज्यन्तं प्राप्नुत । उत्कर्षं गच्छतेत्यर्थः । आज्यन्तोऽपि काष्ठोच्यते । 'क्रान्त्वा स्थितो भवति' ( नि० २ । १८ ) इति यास्कोक्तेः । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यभिधानाच्च । किंभूता यूयम् । वाजजितः अन्नस्य जेतारः । तथा अध्वनो मार्गान् स्कभ्नुवन्तः रुन्धन्तः क्षोभयन्तः । स ह्यश्वस्वभावः । तथा योजना योजनानि मिमानाः अतिशीघ्रतया परिच्छिन्दन्तः ॥ १३ ॥

## चतुर्दशी ।

एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुं दधिक्रा अनु सꣳसनिष्यदत्पथामङ्काꣳस्यन्वापनीफणत्स्वाहा ॥ १४ ॥

**उ०** द्वाभ्यां जगतीभ्यामश्वदेवत्याभ्यां जुहोति । एषस्य वाजी अयं स वाजी वेजनवान् । क्षिपणिं तुरण्यति क्षपणमनु कशाघातमनु । तुरण्यति तूर्णमश्नुतेऽध्वानम् । कथंभूतः सन् इत्यत आह । ग्रीवायां बद्धोपि बद्ध आसनि ग्रीवायामुरोवध्रेण बद्धः । कक्षे पर्याणप्रदेशे सन्नाहरज्ज्वा बद्धः । आसनि आस्ये च मुखे कविकया बद्धः । किंच क्रतुं दधिक्रा अनुसंसनिष्यदत् क्रतुं कर्म प्रज्ञां वा दधिक्रा अश्वः । स हि अश्ववारं दधत् क्रामति । सनिष्यदत् । स्यन्दतेस्तनोत्यर्थे वर्तमानाद्यङ्लुकि निपात्यते । अथ कोर्थः । स्वकीयं कर्म प्रज्ञां वा दधिक्रा अत्यर्थमनुसंतनोति । किंच पथामङ्काꣳस्यन्वापनीफणत् । पथां कुटिलानि चक्राणि अतिशीघ्रतया क्षिप्रं प्राप्नोति । अन्वाङ्पूर्वस्य फणतेर्गत्यर्थे वर्तमानस्य चर्करीतवृत्तम् ॥ १४ ॥

म० 'एष स्य इति प्रत्यृचं जुहोत्यनुमन्त्रयते वेति' ( का० १४ । ४ । ३–४ ) । ऋग्द्वयेनाज्यं जुहोत्यश्वाननुमन्त्रयते वा । अश्वदेवत्ये जगत्यौ दधिक्रावदृष्टे । त्यच्छब्दस्तच्छब्दपर्यायश्छान्दसः स्यः । एष वाजी सोऽयमश्वः क्षिपणिम् क्षिप्यते प्रेर्यतेऽनया सा क्षिपणिस्तां कशां कशाघातमनु तुरण्यति तूर्णमध्वानमश्नुते । यद्वा क्षिपणिं तुरण्यति कशां त्वरयति । कशायास्त्वरया शीघ्रं धावतीत्यर्थः । किंभूतोऽश्वः । ग्रीवायामपि कक्षे आसनि आस्ये च बद्धः तत्तदुचितरज्जुविशेषैः । 'पद्दन्–' ( पा० ६ । १ । ६३ ) इत्यादिना आस्यशब्दस्यासन्नादेशः सप्तम्याम् । ग्रीवायामुरोवध्रेण बद्धः । कक्षयोः समीपे अपिकक्षं पर्याणदेशस्तत्र सन्नाहरज्ज्वा बद्धः । आस्ये मुखे कविकया बद्धः । तथा दधिक्राः दधाति अश्ववारमिति दधिः । 'आदृगम–' ( पा० ३ । २ । १७१ ) इति किप्रत्ययः । दधिः सन् क्रमतेऽध्वानमिति दधिक्राः । विटि क्रमतेराकारः । यद्वा दधीन्धारकान्मार्गावरोधानद्रिपाषाणगर्तकण्टकादीनप्यतिक्रामतीति दधिक्राः । तथा क्रतुं सादिनोऽभिप्रायमनु संसनिष्यदत्सम्यगनुसंदधानः सादिसंकल्पानुसारेण गच्छन् 'दाधर्तिदर्धर्ति' ( पा० ७ । ४ । ६५) इत्यादिना स्यन्दतेर्यङ्लुकि निपातोऽयम् । तथा पथां मार्गाणामङ्कांसि लक्षणानि कुटिलानि निम्नोन्नतानि अन्वापनीफणत् अतिशीघ्रं प्राप्नुवन् । समत्वमापादयन्नित्यर्थः । अन्वाङ्पूर्वस्य फणतेर्गत्यर्थस्य यङ्लुकि निपातः । पूर्ववत् । एवंविधोऽश्वस्तुतीति संबन्धः । स्वाहा सुहुतमस्तु ॥ १४ ॥

## पञ्चदशी ।

उत स्मा॑स्य॒ द्रव॑तस्तुरण्य॒तः प॒र्णं न वेर॒नु॑वाति प्रग॒र्धिनः॑ । श्ये॒नस्ये॑व॒ ध्रज॑तो अङ्क॒सं परि॑ द॒धि॒क्राव्णः॑ स॒होर्जा तरि॑त्रतः॒ स्वाहा॑ ॥ १५ ॥

उ० उत स्मास्य । यजमानरथस्यायुक्तश्चतुर्थोऽश्वोऽनुगच्छति कविकापर्याणयुक्तः । तदभिप्रायेणाधस्तनो मन्त्रो व्याख्यातः । अथेदानीं रथयुक्ताश्वानेकशः स्तौति । अपिच अस्य रथयुक्तस्याश्वस्य द्रवतो गच्छतः आज्यन्तं, तुरण्यतः तूर्णमश्नुवानस्याध्वानम् । पर्णं न वेरनुवाति प्रगर्धिनः । निरिति शकुनिनाम । पर्णं पत्रम् । न उपमार्थीयः । पक्षमिव शकुनेः रथोऽनुवाति वातोद्धतः । प्रगर्धिनः आजिं जेतुं प्रगर्धोऽस्यास्तीति प्रगर्धी अश्वः तस्य प्रगर्धिनः । यद्वा शकुनिविशेषणं आमिषं प्रगर्धिनः शकुनेः । स ह्यामिषग्रहणार्थमतिशयेन धावति अतस्तेनोपमीयते । दक्षिणाप्रष्टिं स्तौति उत्तरेणार्धर्चेन । श्येनस्येव ध्रजतः यथा श्येनस्य ध्रजतोऽतिशयेन गच्छतः । अङ्कसम् अङ्कशब्दः शरीरवचनः । शरीरासक्तं परिपश्यन्ति । पक्षिणं भक्षणाय गृहीतम् । तथा तस्य दधिक्राव्णः अश्वस्य रथं सक्तं परिपश्यन्ति । सहोर्जातरित्रतः सहान्नेन तरतोऽतिशयेनाध्वानम् । नैवारं चरुमवजिघ्रति तदभिप्रायेण सहोर्जेत्युक्तम् ॥ १५ ॥

म० उत स्म अपिच अस्याश्वस्य अङ्कसं शृङ्गारचिह्नं वस्त्रचामरादिकं परि सर्वस्मिन्नपि देहे वर्तमानं सत् अनुवाति गच्छन्तमश्वमनु उत्क्षिप्तत्वेन दृश्यमानं गच्छति । कस्य किमिव । वेः पक्षिणः पर्णं न पक्ष इव यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्यांकसरूपं वस्त्रचामरादिकं विसृष्टमवलोक्यत इत्यर्थः । किंभूतस्याश्वस्य । द्रवतो गच्छतः तथा तुरण्यतस्त्वरयतः प्रगर्धिनः प्रगृध्यतीति प्रगर्धी अवधिं प्राप्तुं काङ्क्षतः पक्षिमात्रस्य पर्णमङ्कसदृष्टान्तत्वेनाभिहितम् । शीघ्रधावने श्येनदृष्टान्त उच्यते । श्येनस्येव ध्रजतो गच्छतो वेगेन 'ध्रज गतौ' दधिक्राव्णः दधीन्क्रमते दधिक्रावा धारकपर्वताद्यतिक्रामिणः । 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति क्रमतेर्वनिपि 'विड्वनोः–' । (पा० ६ । ४ । ४१ ) इति आकारः । ऊर्जा बलेन सह तरित्रतः मार्गं भृशं तरतः । यङ्लुकि निपातोऽयम् । स्वाहा सुहुतमस्तु ॥ १५ ॥

## षोडशी ।

शं नो॑ भवन्तु वा॒जिनो॒ हवे॑षु दे॒वता॑ता मि॒तद्र॑वः स्व॒र्काः । ज॒म्भय॒न्तोऽहिं॒ वृकं॒ रक्षा॑ᳪसि॒ सने॑म्य॒स्मद्यु॑यव॒न्नमी॑वाः ॥ १६ ॥

उ० उत्तरेण तृचेनैतानेवाश्वान्स्तौति । शंनो भवन्तु । त्रिष्टुप् विराड् वा । शमिति सुखनाम । सुखरूपा भवन्तु नः अस्माकं वाजिनोऽश्वाः हवेषु आह्वानेषु । देवताता देवतातौ यज्ञे मितद्रवः । ते हि मितं द्रवं गच्छन्ति सुखकरम् । स्वर्काः सुरोचनाः स्वंचना वा । किंच जम्भयन्तः क्षोभयन्तः अहिं सर्पं च वृकं च रक्षांसि च । सनेमीति पुराणनाम । इह तु क्षिप्रवचनो वाक्यवशात् । सनेमि क्षिप्रम् अस्मत् अस्मत्तः । युवन् पृथग्भावे । पृथक् कुर्वन्तु अमीवाः व्याधीन् ॥ १६ ॥

म० 'उत्तरेण तृचेन चेति' ( का० १४ । ४ । ५ ) शं न इति ऋक्त्रयेणाज्यहोमोऽश्वाभिमन्त्रणं वा । अश्वदेवत्या विराड्सिष्ठदृष्टा दशाक्षरचतुःपादा । देवानां कर्म देवतातिः 'सर्वदेवात्तातिल्' ( पा० ४ । ४ । १४२ ) इति देवशब्दात् कर्मणि तातिल्प्रत्ययः 'लिति' ( पा० ६ । १ । १९३ ) इति प्रत्ययात्पूर्वस्य वकारस्योदात्तत्वम् । तस्य सप्तम्यां 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्यादिना ङेराकारः । देवताता देवतातौ यज्ञे हवेषु आह्वानेषु सत्सु वाजिनोऽश्वा नोऽस्माकं शं सुखकरा भवन्तु । किंभूताः । मितद्रवः मितं परिमितं द्रवन्ति गच्छन्तीति मितद्रवः । क्विपि तुगभाव आर्षः । स्वर्काः शोभनोऽर्को येषां ते सुरुचः स्वञ्चना वा । तथा अहिं सर्पं वृकमरण्यश्वानं रक्षांसि राक्षसान् च जम्भयन्तो नाशयन्तः । किंच तेऽश्वा अस्मत्सकाशात्सनेमि क्षिप्रम् अमीवा व्याधीन्युयवन् पृथक्कुर्वन्तु । 'यु पृथग्भावे' अस्य ह्वादित्वे लङि रूपम् गुणाडभावावार्षौ । सनेमीति पुराणनाम । इह तु क्षिप्रवाचकः ॥ १६ ॥

## सप्तदशी।

ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः। सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳसमिथेषु जभ्रिरे ॥ १७ ॥

उ० तेनो अर्वन्तः। जगती। ते अर्वन्तः अश्वाः नोऽस्माकं हवनश्रुतः। हवनमाह्वानं ये स्वभावत एव शृण्वन्ति त एवमुच्यन्ते। हवमाह्वानं विश्वे सर्वे शृण्वन्तु वाजिनोऽश्वा मितद्रवः। यजमानमपरिच्छिन्नं ये गच्छन्ति त एवमुच्यन्ते। मितद्रवः शोभनगमना वा। सहस्रसाः सहस्रस्य सनितारः संभक्तारः। मेधसाता मेधो यज्ञः स यत्र सन्यते संभज्यते स मेधसातिः तत्र मेधसातौ। सप्तम्यर्थे आकारः। सनिष्यवः संभक्तारः। महो महान्तः ये धनं समिथेषु संग्रामेषु जभ्रिरे आहृतवन्तः। तेनोऽर्वन्त इत्यतिक्रान्तं प्रतिवचनम् ॥ १७ ॥

म० अश्वदेवत्या जगती नाभानेदिष्ठदृष्टा। विश्वे सर्वे ते वाजिनोऽश्वा नोऽस्माकं हवमाह्वानं शृण्वन्तु। किंभूताः अर्वन्तः। इयर्ति कुटिलं गच्छन्तीत्यर्वन्तः। 'ऋ गतौ' इत्यस्माद्वनिप् 'अर्वणस्त्रसावनञः' (पा० ६।४।१२७) इति त्रन्तादेशे रूपम्। हवनश्रुतः हवनमाह्वानं शृण्वन्तीति हवनश्रुतः। मितद्रवः यजमानचित्तानुकूल्येन परिमितगामिनः। सहस्रसाः सहस्रस्यानेकजनतृप्तिक्षमस्य महतोऽन्नराशेः सनितारो दातारः। मेधसाता सनिष्यवः मेधो यज्ञः सन्यते संभज्यते यत्र सा मेधासातिर्यज्ञशाला ङेर्डाकारः। तस्यां सनिष्यवः संभक्तारः पूरयितारः। ते के। येऽश्वाः समिथेषु संग्रामेषु महः महत्पूज्यं वा धनं जभ्रिरे जह्रिरे आहृतवन्तः ॥ १७ ॥

## अष्टादशी।

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ १८ ॥

उ० वाजेवाजे। त्रिष्टुप्। अन्नेअन्ने उपस्थितेसति अवत पालयत हे वाजिनोऽश्वाः, नोऽस्मान् धनेषु च उपस्थितेषु पालयत हे विप्राः मेधाविनः परिदृष्टकारिणः, अमृताः अमरणधर्माणः। ऋतज्ञाः सत्यज्ञा वा यज्ञज्ञा वा। किंच अस्य नैवारचरुलक्षणस्य मध्वः मधुनः पिबत। मादयध्वं तृप्यध्वम्। नैवारं चरुमवजिघ्रन्त्यश्वस्य तदभिप्रायमेतत्। तृप्ताश्च सन्तः यात पथिभिर्देवयानैः देवाध्यासितैः ॥ १८ ॥

म० अश्वदेवत्या त्रिष्टुव् वसिष्ठदृष्टा। हे वाजिनोऽश्वाः, वाजेवाजे सर्वस्मिन्नन्ने उपस्थिते सति धनेषु चोपस्थितेषु सत्सु नोऽस्मानवत पालयत। किंभूता यूयम्। विप्रा मेधाविनः परिदृष्टकारिणः अमृता अमरणधर्माणः ऋतज्ञाः सत्यज्ञाः यज्ञज्ञा वा। किंच अस्य मध्वः पिबत। कर्मणि षष्ठी। इदं मधु धावनात्पूर्वं पश्चाच्चावघ्रायमाणं नैवारचरुलक्षणं मधुरं हविः पिबत पीत्वा च मादयध्वं तृप्ता भवत ततस्तृप्ताः सन्तो देवयानैर्देवाधिष्ठितैः पथिभिर्मार्गैर्यात गच्छत ॥ १८ ॥

## एकोनविंशी।

आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे। आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात्॥ वाजिनो वाजजितो वाजꣳससृवाꣳसो बृहस्पतेर्भागमवजिघ्रत निमृजानाः ॥ १९ ॥

उ० यजमानो नैवारं चरुमालभते। आ मा वाजस्य। त्रिष्टुप्। आजगम्यात् आगच्छेत् मा मां प्रति वाजस्यान्नस्य प्रसवोऽभ्यनुज्ञा। आ इमे द्यावापृथिवी विश्वरूपे। आगच्छेतां च इमे द्यावापृथिव्यौ विश्वरूपे सर्वरूपे। आमागन्तां पितरा मातरा च आगन्तामागच्छेतां च मां प्रति मातापितरौ 'पितरामातरा च छन्दसि' इति विरूपैकशेषो निपात्यते। आ मा सोमो अमृतत्वेन गम्यात्। आगच्छेच्च मां प्रति सोमो अमृतत्वेन सहितः। अश्वानवघ्रापयति नैवारं चरुम्। वाजिनो वाजजितः। हे वाजिनोऽश्वाः, वाजस्यान्नस्य जेतारः। वाजमन्नं जेतुं सस्रवांसः सृप्तवन्तः सन्तो बृहस्पतेः संबन्धिनं भागमवजिघ्रत निमृजानाः। 'मृजूष् शुद्धौ'। शोधयन्त एनं चरुं यजमानं च ॥ १९ ॥

म० 'अवरुह्य नैवारमालभते तीर्थे स्थितमामा वाजस्येति' (का० १४।४।११) यजमानो रथादवतीर्य चात्वालोत्करान्तरे स्थितं नैवारं चरुं स्पृशति। प्रजापतिर्देवत्या त्रिष्टुव् वसिष्ठदृष्टा। वाजस्यान्नस्य प्रसव उत्पत्तिर्मा मामाजगम्यात् आगच्छतु। गच्छतेर्व्यत्ययेन ह्वादित्वे लिङि रूपम्। आ इमे विश्वरूपे सर्वरूपात्मिके इमे द्यावापृथिव्यौ मां प्रत्यागच्छेताम्। पितरा मातरा। 'पितरामातरा च छन्दसि' (पा० ६।३।३३) इति द्विरूपैकशेषो निपात्यते। अस्मदीयः पिता माता च मा मां प्रति आगन्तामागच्छताम्। व्यत्ययेनादादित्वे लोटि रूपम्। सोमश्चामृतत्वेन सहितो मा मामागम्यात्। चतुर्थ्यर्थे तृतीया। अमृतत्वाय मम देवलजन्मने सोमो मां प्रत्यागच्छेत् लिङि रूपम्। 'यजुर्युक्तानाघ्रापयति वाजिन इति' (का० १४।४।१२) इति। मन्त्रेण युक्तानश्वान्नैवारचरुमाघ्रापयेत्। अश्वदेवत्यं यजुः। हे वाजिनोऽश्वाः, यूयं बृहस्पतेः संबन्धिनं भागं चरुमवजिघ्रत आघ्राणं कुरुत। किंभूताः। वाजजितः वाजस्यान्नस्य जेतारः। वाजमन्नं जेतुं सस्रवांसः सृतवन्तो गतवन्त। सर्तेः क्वसुप्रत्यये रूपम्। निमृजानाः 'मृजूष् शुद्धौ' शानच्प्रत्ययः- शोधयन्तः चरुमेनं यजमानं वा पुनन्त इत्यर्थः ॥ १९ ॥

## विंशी ।

आपये स्वाहा स्वापये स्वाहापिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा ॥ २० ॥

उ० द्वादशाहुतीर्जुहोति । आपये स्वाहा । प्रजापतेः संवत्सरस्य यज्ञस्य चैतानि नामानि । आप्नोतीत्यापिः शोभनमाप्नोतीति स्वापिः । अपि जायत इति अपिजः क्रतुः संकल्पो यज्ञो वा । वसुः वासयिता । अह्नां पतिः अहर्पतिः । अह्ने मुग्धाय । 'मुह वैचित्ये' । दिनाय मुग्धाय । वैनꣳशिनाय विनाशसंयुक्तेषु वसतीति वैनंशिनः । विनंशिने आन्त्यायनाय । अन्त्येऽयने भव आन्त्यायनः । अन्त्याय भौवनाय अन्ते भवोऽन्त्यः भुवने भवो भौवनः । उभयविशेषणविशिष्टमप्येकं नाम । भुवनस्य पतये अधिपतये । प्रकटार्थे नामनी ॥ २० ॥

म०'द्वादश सुवाहुतीर्जुहोत्यापये स्वाहेति प्रतिमन्त्रं वाचयति वेति' ( का० १४।५।१ ) प्राजापत्यानि द्वादश यजूंषि । संवत्सराभिमानी प्रजापतिः स्तूयते तस्यैवैतानि नामानि । आप्नोतीत्यापिस्तस्मै सुहुतमस्तु । शोभनमाप्नोतीति स्वापिः तस्मै । अपि जायते पुनःपुनरुत्पद्यते इत्यपिजस्तस्मै स्वाहा । क्रतुः संकल्पो भोगादिविषयो यज्ञो वा तस्मै । वसवे निवासहेतवे । अह्नां दिवसानां पतिरहर्पतिस्तस्मै । अतश्चत्वारि नामान्युभयविशेषणविशिष्टानि । 'मुह वैचित्ये' मुह्यतीति मुग्धस्तस्मै अह्ने दिवसाय । विनश्यन्तीति विनंशिनः विनाशशीलाः पदार्थाः । 'मस्जिनशोर्झलि' ( पा० ७।१।६० ) इति छान्दसत्वादझल्यपि नुमागमः । विनंशिषु भवो वैनंशिनस्तस्मै मुग्धाय मोहकाय स्वाहा । अन्ते भवमन्त्यमन्त्यं च तदयनं च अन्त्यायनमन्त्यस्थानं तत्र भव आन्त्यायनस्तस्मै विनंशिने विनाशशीलाय स्वाहा । अन्ते भवोऽन्त्यः भुवने भवो भौवनस्तदुभयविशिष्टाय स्वाहा । भुवनस्य पतये जगतः पालयित्रे । अधिपतये सर्वलोकानां स्वामिने स्वाहा सुहुतमस्तु ॥ २० ॥

## एकविंशी ।

आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳश्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् । प्रजापतेः प्रजा अभूम स्वर्देवा अगन्मामृता अभूम ॥ २१ ॥

पट् कृप्तीः । आयुर्यज्ञेन कल्पताम् । मदीयमायुरनेन यज्ञेन कृप्तं भवतु । एवमुपरितनानि व्याख्येयानि । मुखनासिकाप्रभवो वायुः प्राणः । चक्षुः श्रोत्रं च प्रकटार्थम् । पृष्ठं रथन्तरादि । शरीरस्य वा पृष्ठम् । अयं चास्मदीयो यज्ञो वाजपेयाख्येन यज्ञेन कृप्तो भवतु । यूपं यजमान आरोहति । प्रजापतेः प्रजा अभूम । कृतमिदमस्माभिः कर्म अतो वयं प्रजापतेः अपत्यभूताः संजाताः । गोधूमानुपस्पृशति । स्वर्देवाः । हे देवाः, स्वः स्वर्लोकमगन्म गताः । शिरसा यूपमत्युजिहीते । अमृता अभूम अमृताश्च संजाताः ॥ २१ ॥

म० 'षट् चोत्तराः षट् आयुर्यज्ञेनेत्याद्याश्वशब्दाज्जुहोति वाचयति वा' ( का० १४।५।२ ) प्राजापत्यानि षड्यजूंषि । मदीयमायुर्यज्ञेन वाजपेयाख्येन कल्पतां कृप्तं भवतु । मुखनासिकाप्रभवः पञ्चवृत्तिकः प्राणवायुरप्यनेन यज्ञेन कृप्तो भवतु । चक्षुरिन्द्रियं यज्ञेन कृप्तं भवतु । श्रोत्रेन्द्रियं यज्ञेन कृप्तमस्तु । पृष्ठं रथन्तरादिकं शरीरस्य पृष्ठं वा यज्ञेन कल्पताम् । यज्ञेन मदीयेन वाजपेयाख्येन यज्ञो यज्ञाधिष्ठाता विष्णुः कल्पताम् । 'प्रजापतेरित्यारोहत इति' ( का० १४।५।६ ) पत्नीयजमानौ निश्रेण्या यूपमारोहतः । यजमानदेवत्यानि त्रीणि यजूंषि । वयं प्रजापतेः संबन्धिन्यः प्रजा अभूम अपत्यानि जातानि । 'स्वरिति गोधूममालभत इति' ( १४।५।७ ) । गोधूमपिष्टनिर्मितं चषालं यजमानः स्पृशेत् । हे देवाः, वयं स्वः स्वर्गमगन्म प्राप्ताः । 'शिरसा यूपमुज्जिहीतेऽमृता इति' ( १४।५।८ ) । यूपादूर्ध्वं शिरः करोति । वयममृता मरणधर्मरहिता अभूम संभूताः ॥ २१ ॥

## द्वाविंशी ।

अस्मे वो अस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्चाꣳसि सन्तु वः । नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या इयं ते राड्यन्तासि यमनो ध्रुवोऽसि धरुणः । कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा ॥ २२ ॥

उ० दिशोनुवीक्षते । अस्मे वो अस्त्विन्द्रियम् । अस्मे अस्मासु वः युष्मत्संबन्धि अस्तु भवतु इन्द्रियं वीर्यम् । अस्मे नृम्णम् अस्मासु च धनं युष्मत्संबन्धि भवत्वित्यनुषङ्गः । उत क्रतुः अपिच क्रतुः कर्म युष्मत्संबन्धि भवत्वित्यनुषङ्गः । अस्मे वर्चाꣳसि सन्तु वः अस्मासु च तेजांसि भवन्तु युष्मत्संबन्धीनि । पृथिवीमवेक्षते यजमानः नमो मात्रे पृथिव्यै । पृथिवीं मातरं ब्रवीमीति नमस्करोति च । अभ्यासे भूयांसमर्थं मन्यन्त इति द्विर्वचनम् । औदुम्बरीमासन्दीं बस्तचर्मणा स्तृणाति । इयं ते राट् । इयमिति लिङ्गव्यत्ययः । इदं ते तव राट् राज्यम् । अभिषिक्तोसि त्वमित्येतत्कथयति । सुव्रतमस्यामुपवेशयति । यन्तासि नियन्ता त्वमसि । तवानवच्छिन्नं यमनं कालान्तरेऽपि । ध्रुवोऽसि स्थिरोसि । धरुणः धार-

कोऽसि कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा। कर्षणाय त्वाम् क्षेमाय च धनाय च पुष्ट्यर्थं चोपवेशयामीतिशेषः २२

**म०** 'अस्मै व इति दिशो वीक्षत इति' (१४।५।९) यूपारूढ एव यजमानो दिशः पश्यति। दिग्देवत्यम्। हे दिशः, वो युष्मत्संबन्धि इन्द्रियं वीर्यमस्मे अस्मास्वस्तु। नृम्णं धनं युष्मत्संबन्धि अस्मे अस्मास्वस्तु। उत अपि च क्रतुः कर्म युष्मत्संबन्धि अस्मास्वस्तु। वो युष्माकं वर्चांसि तेजांसि अस्मे अस्मासु सन्तु भवन्तु। अस्माकं संबन्धि युष्मत्सामर्थ्यमस्त्विति भावः। 'नमो मात्र इति भूमिमवेक्षत इति' (१४।५।१२)। यूपारूढ एव यजमानो भूमिं पश्यति। पृथिवीदेवत्यम्। मात्रे मातृरूपायै पृथिव्यै नमो नमस्कारोऽस्तु। 'अभ्यासे भूयांसमर्थं मन्यन्ते' (निरु० १०।४२) इति द्विरुक्तिः। 'उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्मणा स्तृणातीयं त इति' (का० १४।५।१३) आसन्दीदेवत्यम्। हे आसन्दि, ते तव इयं राट् इदं राज्यं राजनं राट्। संपदादित्वाद्भावे स्त्रियां क्विप्। अभिषिक्तासि त्वमिति भावः। 'सुन्वन्तमस्यामुपवेशयति यन्तासीति' (का० १४।५।१४)। आसन्द्यां यजमानमुपवेशयेत्। यजमानदेवत्यम्। हे यजमान, त्वं यन्ता सर्वस्य नियन्तासि। यमनः स्वयं संयमनकर्ता भवसि। अनवच्छिन्नं तव यमनमिति भावः। तथा ध्रुवः स्थिरोऽसि धरुणो धारकोऽसि। कृष्यै कर्षणाय कृषिसिद्ध्यर्थं त्वा त्वामुपवेशयामीति सर्वत्र शेषः। क्षेमाय लब्धपरिपालनाय त्वामुप०। रय्यै धनाय त्वामुप०। पोषाय पशुपुत्रादिपुष्ट्यै त्वामुप०॥२२॥

## त्रयोविंशी।

वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳराजानमोषधीष्वप्सु। ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳराष्ट्रे जागृयाम पुरोहिताः स्वाहा॥ २३॥

**उ०** वाजप्रसवीयानि जुहोति। वाजस्येमम्। तिस्रस्त्रिष्टुभो वाजप्रसवीयदेवत्याः। अत्र प्रायशो व्यवहितानां पदानां संबन्धः। वाजस्येमं प्रसवः सुषुवे। वाजस्यान्नस्य संबन्धी प्रसवः अभ्यनुज्ञानम्, इमं सोमं राजानम् अग्रे प्रथमं सुषुवे। 'षूङ् प्राणिगर्भविमोचने' इत्यस्यैतद्रूपम्। जनितवानित्यर्थः। कुतः सुषुवे। ओषधीष्वप्सु ओषधीषु वर्तमानमप्सु च वर्तमानम्। या इत्थंभूताः सोमस्य जनयित्र्य ओषधय आपश्च। ता अस्मभ्यम् अस्मदर्थम् मधुमती रसवतीः रसवत्यः भवन्तु भोग्या वा भवन्तु। वयं च ताभिरद्भिरभिषिक्ताः सन्तः स्वकीये राष्ट्रे जागृयाम अप्रमत्ताः स्याम। पुरोहिताः अग्रतो व्यवस्थिताः प्रधाना इत्यर्थः २३

**म०** 'स्रुवेण संभृताञ्जुहोति वाजस्येममिति प्रतिमन्त्रमिति (का० १४।५।२१)। औदुम्बरपात्रे एकीकृतादुग्धव्रीह्यादिधान्यात्स्रुवेणाहवनीये सप्त मन्त्रैर्जुहोति। तिस्रस्त्रिष्टुभः प्रजापतिदेवत्याः। प्रसूतेऽसौ प्रसवः पचादित्वादच् वाजस्यान्नस्य प्रसव उत्पादकः प्रजापतिः अग्रे सृष्ट्यादौ ओषधीषु अप्सु च वर्तमानमिमं सोमं वल्लीरूपं राजानं दीप्तिमन्तं पदार्थं सुषुवे उत्पादयामास। ता इत्थंभूताः सोमस्य जनयित्र्य ओषधय आपश्चास्मभ्यमस्मदर्थं मधुमतीर्मधुमत्यो रसवत्यो माधुर्योपेता भवन्तु भोगयोग्या भवन्तु। वयं च ताभिरभिषिक्ता राष्ट्रे स्वकीये देशे जागृयाम अप्रमत्ता भवाम। पुरोहिताः यागानुष्ठानादौ पुरोगामिनः प्रधाना इत्यर्थः। स्वाहा सुहुतमस्तु॥ २३॥

## चतुर्विंशी।

वाजस्येमां प्रसवः शिश्रिये दिवमिमां च विश्वा भुवनानि सम्राट्। अदित्सन्तं दापयति प्रजानन्स नो रयिꣳसर्ववीरं नियच्छतु स्वाहा॥ २४॥

**उ०** वाजस्येमां प्रसवः। यस्य वाजस्यान्नस्य संबन्धी प्रसवोऽभ्यनुज्ञानम्। शिश्रिये आश्रयति। इमां पृथिवीं दिवं द्युलोकं च विश्वा भुवनानि सम्राट् इमानि च सर्वाणि भूतजातानि शिश्रिये आश्रयति। सम्राट्लक्षणः। यश्च अदित्सन्तं दापयति अदातुमिच्छन्तं दापयति। प्रजानन् स्वमधिकारम्। स नो रयिं स मे वीरं नियच्छतु सोऽस्मभ्यं धनं सर्वैर्वीरैः संयुक्तं नियच्छतु निगृह्णातु ददात्वित्यर्थः॥ २४॥

**म०** वाजस्यान्नस्य प्रसव उत्पादक ईश्वर इमां पृथिवीं दिवं द्युलोकं च इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि च शिश्रिये आश्रितवान्। स च सम्राट् सर्वेषां भुवनानां राजा भूत्वा अदित्सन्तं हविर्दातुमनिच्छन्तं मां प्रजानन् अवगच्छन् मदीयबुद्धिप्रेरणेन हविर्दापयति। ततो नोऽस्मभ्यं सर्ववीरं सर्वैः पुत्रभृत्यादिभिर्युक्तं रयिं धनं नियच्छतु नियमनेन ददातु 'दाण् दाने' 'पाघ्राध्मा' (पा. ७।३।७८) इत्यादिना यच्छादेशः। स्वाहा सुहुतमस्तु॥ २४॥

## पञ्चविंशी।

वाजस्य नु प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः। सनेमि राजा परियाति विद्वान्प्रजां पुष्टिं वर्धयमानो अस्मे स्वाहा॥ २५॥

**उ०** वाजस्य नु प्रसव आबभूव। योसौ वाजस्यान्नस्य प्रसवः अभ्यनुज्ञानं विसर्गो वा। नु इति विस्मयार्थः। आबभूव ब्रह्माण्डरूपेण संबभूव जात्येन। इमा च विश्वा भुवनानि सर्वतः इमानि च विश्वानि भूतानि हिरण्यगर्भप्रभृतीनि स्तम्बपर्यन्तानि। आबभूवेत्यनुवर्तते। सर्वतः सर्वतोऽवस्थितानि। सनेमि राजा परियाति विद्वान्। सनेमीति पुराणवचनः। सोऽयमन्नस्य प्रसवश्चिरंतनो राजा परियाति सर्वतो याति स्वेच्छाचारी सन्। विद्वान् स्वमधिकारं जानानः प्रजां च पुष्टिं च वर्धयमानः अस्मे अस्माकम्॥ २५॥

**म०** नु इति विस्मये। वाजस्य प्रसवः प्रजापतिः इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतानि सर्वतोऽवस्थि-

तानि हिरण्यगर्भादिस्तम्बपर्यन्तानि आबभूव संभावितवान् । उत्पादितवानित्यर्थः । सनेमीति पुराणनाम । सनेमि चिरंतनो राजा दीप्तः सन् परियाति सर्वतः स्वेच्छया गच्छति । किंभूतः । विद्वान्स्वाधिकारं जानन् । तथा अस्मे अस्मासु प्रजां पुत्रादिसन्ततिं पुष्टिं धनपोषं च वर्धयमानः वर्धयन्स्वाहा सुहुतमस्तु ॥ २५ ॥

## षड्विंशी ।

सोमꣳराजानमवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुꣳसूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥२६॥

**उ०** सोमं राजानम् । अनुष्टुप् लिङ्गोक्तदेवत्या । सोमं राजानम् अवसे तर्पणाय अग्निं च अन्वारभामहे । अन्वारम्भश्च तर्पणार्थ एव । आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् अन्वारभामहे । तर्पणायेति सर्वेषां शेषः ॥ २६ ॥

**म०** तिस्रोऽनुष्टुभस्तापसदृष्टाः प्रथमा सोमाग्न्यादित्यविष्णुसूर्यबृहस्पतिदेवत्या । अवसे रक्षणार्थं तर्पणाय वा सोमं राजानमग्निं वैश्वानरमादित्यान्द्वादश विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं चान्वारभामहे अन्वारम्भणमाह्वानं कुर्महे । स्वाहा सुहुतमस्तु ॥ २६ ॥

## सप्तविंशी ।

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुꣳसरस्वतीꣳसवितारं च वाजिनꣳस्वाहा ॥ २७ ॥

**उ०** अर्यमाणं बृहस्पतिम् । अनुष्टुप् लिङ्गोक्तदेवत्या । अर्यमणं बृहस्पतिम् इन्द्रं दानाय दानार्थं चोदय प्रेरय । आहुतिरुच्यते । वाचं विष्णुं सरस्वतीं सवितारं च वाजिनं च । वाजिनो देवाश्वाः ॥ २७ ॥

**म०** अर्यमबृहस्पतीन्द्रवाग्विष्णुसरस्वतीसवितृदेवत्या । हे ईश्वर, त्वमर्यमादीन्देवान्दानाय धनप्रदानार्थं चोदय प्रेरय । बृहस्पतिमिन्द्रं देवेशं वाचं वागधिष्ठात्रीं सरस्वतीं विष्णुं सवितारं सर्वस्य प्रसवकर्तारं सूर्यम् । वाजिनमन्नवन्तमिति सर्वेषां विशेषणम् । वाजिनं देवाश्वं वा । स्वाहा सुहुतमस्तु ॥ २७ ॥

## अष्टाविंशी ।

अग्ने अच्छा वदेह नः प्रति नः सुमना भव । प्र नो यच्छ सहस्रजित्त्वꣳहि धनदा असि स्वाहा ॥ २८ ॥

**उ०** अग्ने अच्छ । अनुष्टुप् आग्नेयी । अच्छाभेराप्तुमिति शाकपूणिः । हे अग्ने, अभिवद इहावस्थितान् आसंद्यां नः अस्मान् प्रति । नः सुमना भव । प्रति न इत्यनयोः पदयोः व्यत्ययः कर्तव्य इति । अस्मान्प्रति सुमनाः शोभनमनस्को भव । प्र नो यच्छ सहस्रजित् । प्रयच्छ देहि नः अस्मभ्यं हे सहस्रजित् बहुनो वसुनो जेतः, त्वं हि धनदा असि । हिशब्दो यस्मादर्थे । यस्मात्त्वमेव धनस्य दातासि नान्यः कश्चिद्देवताविशेषः ॥ २८ ॥

**म०** अग्निदेवत्या । हे अग्ने, इहास्मिन्कर्मणि नोऽस्माकमच्छ वद आभिमुख्येन ब्रूहि हितमिति शेषः । 'निपातस्य च' (पा० ६ । ३ । १३६) इति संहितायां दीर्घोऽच्छशब्दस्य । किंच नोऽस्मान्प्रति सुमनाः करुणार्द्रचित्तो भव । हे सहस्रजित् सहस्रस्य बहुनो वसुनो जेतः, सहस्राणां योधानां वा जेतः, हि यस्मात्त्वं स्वभावतो धनदा धनस्य दातासि अतस्त्वं नोऽस्मभ्यं प्रयच्छ धनं देहि स्वाहा ॥ २८ ॥

## एकोनत्रिंशी ।

प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहा ॥ २९ ॥

**उ०** प्र नो यच्छतु । गायत्री लिङ्गोक्तदेवत्या । प्रयच्छतु नोऽस्मभ्यं अर्यमा । प्रयच्छतु च बृहस्पतिः । प्रकर्षेण च वाग्देवी दानादिगुणयुक्ता । ददातु नः अस्मभ्यम् ॥ २९ ॥

**म०** गायत्री अर्यमपूषबृहस्पतिवाग्देवत्या । अर्यमा सूर्यविशेषो नोऽस्मभ्यं प्रयच्छतु अभीष्टं ददातु । पूषा प्रयच्छतु । उपसर्गावृत्त्या क्रियापदावृत्तिः । बृहस्पतिः प्रयच्छतु । देवी दीप्यमाना वाक् नोऽस्मभ्यं ददातु स्वाहा ॥ २९ ॥

## त्रिंशी ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ३० ॥

**उ०** अथैनं परिशिष्टेनाभिषिञ्चति । देवस्यत्वेति व्याख्यातम् । सरस्वत्यै वाचो यन्तुः सरस्वत्या वाचः नियमनकर्त्र्याः यन्त्रिये नियमने ऐश्वर्ये दधामि स्थापयामि । बृहस्पतेष्ट्वा बृहस्पतेश्च त्वां साम्राज्येन सम्राड्भावेन अभिषिञ्चामि । असाविति नामग्रहणम् ॥ ३० ॥

**म०** 'शेषेणाभिषिञ्चति यजमानं देवस्य त्वेति' । (का० १४ । ५ । २२) होमद्रव्यशेषेण यजमानं शिरसि सिञ्चेत् । यजमानदेवत्यम् । सवितुर्देवस्य प्रसवे वर्तमानोऽहमश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वा त्वां वाचो वाण्या यन्तुर्यन्त्र्या । पुंस्त्वमार्षम् । नियमनकर्त्र्याः । सरस्वत्यै षष्ठ्यर्थे चतुर्थी । सरस्वत्याः यन्त्रिये नियमने ऐश्वर्ये दधामि स्थापयामि । किंच बृहस्पतेः साम्राज्येन सम्राड्भावेन त्वा त्वामभिषिञ्चामि । असाविति तन्नामग्रहणम् ॥ ३० ॥

## एकत्रिंशी ।

अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्यानुदजयतां तानुज्जेषं विष्णु-

रुयक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषᳫं सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम् ॥ ३१ ॥

**उ०** अथोज्जितीर्वाचयति। अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषम् । ओश्रावयेति चतुरक्षरम्, अस्तुश्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, येयजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः । स एष सप्तदशप्रजापतिरधियज्ञं समासव्यासाभ्यामुज्जीयते । अग्निः एकाक्षरेण च्छन्दसा प्राणमुदजयत् तमहमप्येकाक्षरेण च्छन्दसा उज्जेषम् । एवं सप्तदशोज्जितीर्व्याख्येयाः ॥ ३१ ॥

**म०** 'अग्निरेकाक्षरेणेत्यनुवाकं द्वादशवत् कृत्वेति' । ( का० १४।५।२६ ) चतुःकण्डिकात्मकमनुवाकं द्वादशवत् द्वादश स्रुवाहुतीर्जुहोत्याप्यये स्वाहेति प्रतिमन्त्रं वाचयति वेति यत्पूर्वमुक्तं तद्वत्कृत्वेत्यर्थः । तेनैतैर्मन्त्रैर्जुहोति सप्तदश मन्त्रान् वाचयति वेत्यर्थः । एते मन्त्रा उज्जितिसंज्ञाः । सप्तदश यजूंषि लिङ्गोक्तदेवतानि । ओश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष सप्तदशाक्षरात्मकः प्रजापतिरधियज्ञं समासव्यासाभ्यामुज्जीयते । अग्निरेकाक्षरेण छन्दसा प्राणं पञ्चवृत्तिकमुदजयत् उत्कृष्टं जितवान् । तथाहमपि तादृशं तं प्राणमुज्जेषमुत्कृष्टं जयेयं वशीकुर्यामित्यर्थः । अश्विनौ देवौ द्व्यक्षरेण अक्षरद्वयात्मकेन छन्दसा द्विपदः पादद्वयोपेतान्मनुष्यानुदजयतां जितवन्तौ तथाहमपि तेनैव द्व्यक्षरेण छन्दसा तान् तादृशान्मनुष्यानुज्जेषमधिकं जयेयम् । विष्णुस्त्र्यक्षरेणाक्षरत्रयात्मकेन छन्दसा त्रीन्भूरादीन् लोकानुदजयत् अहमपि ताँल्लोकानुज्जेषम् । सोमोऽक्षरचतुष्टयात्मकेन छन्दसा चतुःपदः पादचतुष्टयोपेतान्पशूनुदजयत् अहमपि तेन तान्पशूनुज्जेषम् ॥ ३१ ॥

## द्वात्रिंशी ।

पूषा पञ्चाक्षरेण पञ्च दिश उदजयत्ता उज्जेषᳫं सविता षडक्षरेण षडृतूनुदजयत्तानुज्जेषं मरुतः सप्ताक्षरेण सप्त ग्राम्यान्पशूनुदजयँस्तानुज्जेषं बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम् ॥ ३२ ॥

**म०** पूषा देवः पञ्चाक्षरेण छन्दसा पञ्चसंख्याः पूर्वाद्याश्चतस्रोऽवान्तरदिशं चेति पञ्च दिश उदजयत् अहमपि ता दिशो जयेयम् । सविता सर्वस्य प्रेरको देवः षडक्षरेण छन्दसा षट्संख्यानृतूनुदजयत् तानृतूनहमुज्जेषम् । मरुतो देवाः सप्ताक्षरेण छन्दसा सप्तसंख्यान् ग्राम्यान् पशून् गवादीनुदजयन् अहं तान् ग्राम्यान्पशूञ्जयेयम् । बृहस्पतिरष्टाक्षरात्मकेन छन्दसा गायत्रीच्छन्दोभिमानिनीं देवतामुदजयत् तां तादृशीं गायत्रीं जयेयम् ॥ ३२ ॥

## त्रयस्त्रिंशी ।

मित्रो नवाक्षरेण त्रिवृतᳫं स्तोममुदजयत्तमुज्जेषं वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषमिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषं विश्वेदेवा द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषम् ॥ ३३ ॥

**म०** मित्रो देवो नवाक्षरेण छन्दसा त्रिवृतं स्तोममुदजयत्तं तादृशं स्तोममहं जयेयम् । वरुणो देवो दशाक्षरेण छन्दसा विराजम् दशाक्षरा विराडिति श्रुतिप्रसिद्धां तदभिमानिनीं देवतामुदजयत्तां विराजमहमप्युज्जेषम् । इन्द्रो देव एकादशाक्षरेण छन्दसा त्रिष्टुप्छन्दोऽभिमानिनीं देवतामुदजयत् तां त्रिष्टुभमहमुज्जेषम् । विश्वेदेवा द्वादशाक्षरेण छन्दसा जगत्यभिमानिदेवतामुदजयन् अहमपि तां जगतीं जयेयम् ॥ ३३ ॥

## चतुस्त्रिंशी ।

वसवस्त्रयोदशाक्षरेण त्रयोदशᳫं स्तोममुदजयँस्तमुज्जेषᳫं रुद्राश्चतुर्दशाक्षरेण चतुर्दशᳫं स्तोममुदजयँस्तमुज्जेषमादित्याः पञ्चदशाक्षरेण पञ्चदशᳫं स्तोममुदजयँस्तमुज्जेषमदितिः षोडशाक्षरेण षोडशᳫं स्तोममुदजयत्तमुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशᳫं स्तोममुदजयत्तमुज्जेषम् ॥ ३४ ॥

**उ०** ॥ ३२ ॥ ३३ ॥ ३४ ॥ वाजपेयः समाप्तः ।

**म०** वसवस्त्रयोदशाक्षरेण छन्दसा त्रयोदशं स्तोममुदजयन् तं स्तोमं जयेयम् । रुद्रा देवाश्चतुर्दशाक्षरेण छन्दसा चतुर्दशं स्तोममुदजयन् तं स्तोममहमपि जयेयम् । आदित्या देवाः पञ्चदशाक्षरेण छन्दसा पञ्चदशं स्तोममुदजयन् तं स्तोमं जयेयम् । अदितिर्देवमाता षोडशाक्षरेण छन्दसा षोडशं स्तोममुदजयत् तेनाहमपि तं स्तोममुज्जेषम् । प्रजापतिः सप्तदशाक्षरेण छन्दसा सप्तदशाख्यं स्तोममुदजयत् तं स्तोमं तेन छन्दसाहमपि जयेयम् । एतान्मन्त्राञ्जपेदेतैर्जुहुयाद्वा ॥ ३४ ॥ इति वाजपेयमन्त्राः समाप्ताः ॥

## पञ्चत्रिंशी ।

एष ते निर्ऋते भागस्तं जुषस्व स्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ॥ ३५ ॥

**उ०** अथ राजसूयं वरुणोऽपश्यत् । एष ते निर्ऋते भागः स्वयं प्रदीर्णेन जुहोति । पृथिव्यत्र निर्ऋतिशब्देनोच्यते । एष ते तव हे निर्ऋते, भागः तं च सेवस्व । पञ्चधाहवनीयं व्युह्य प्रतिदिशं जुहोति । अग्निनेत्रेभ्यो देवेभ्यः । देवार्षं ग्रागध्यायात् । अग्निनेत्रेभ्यो देवेभ्यः ।

अग्निर्नेता येषां देवानां ते अग्निनेत्राः तेभ्यो देवेभ्य इति तादर्थ्ये चतुर्थी । पुरःसद्भ्यः पुरः सीदन्तीति पुरःसदः तेभ्यः सुहुतमस्तु । अथ दक्षिणार्धे जुहोति । यमनेत्रेभ्यो देवेभ्यः । शेषं तुल्यव्याख्यानम् । अथ पश्चार्धे जुहोति । विश्वदेवनेत्रेभ्यो देवेभ्यः । अथोत्तरार्धे जुहोति । मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो देवेभ्यः । अथ मध्ये जुहोति । सोमनेत्रेभ्यो देवेभ्यः दुवस्वद्भ्यः । दुवःशब्देन हविरभिधीयते तद्येष्वस्ति ते दुवस्वन्तः तेभ्यो दुवस्वद्भ्यः ॥ ३५ ॥

**म०** अथ राजसूयमन्त्राः । तेषां वरुण ऋषिः । 'अष्टाकपालोऽनुमत्यै शम्यायाः पश्चाद्धविष्यमन्त्रᳪस्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयमप्रदीर्णे इरिणे वाग्नौ जुहोत्येष ते निर्ऋत इति' ( का० १५ । १ । ९—१० ) । फाल्गुनाद्यदशम्यामनुमत्यै अष्टाकपालः पुरोडाशो भवति तदर्थं गृहीतहविषः पेषणकाले दृषदधस्तान्निहितशम्यापश्चाद्भागे पन्नं पतितं यद्धविस्तण्डुलपिष्टरूपं तत् स्रुवे निधाय दक्षिणाग्नेरुल्मुकमादाय दक्षिणस्यां दिशि गत्वा स्वयं स्फुटिते भूभागे ऊषरे वोल्मुकाग्निं संस्थाप्य तद्धविर्जुहोतीति सूत्रार्थः । पृथिवीदेवत्यम् । निर्ऋतिरत्र पृथिवी । हे निर्ऋते पृथिवि, एष पिष्टरूपस्ते तव भागः तं भागं त्वं जुषस्व सेवस्व स्वाहा सुहुतमस्तु । 'पञ्चवातीयमाहवनीयं प्रतिदिशं व्यूह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति प्रतिमन्त्रमिति' ( का० १५ । १ । २० ) । एवं वर्षमिष्टाः कृत्वा पञ्चवात्रीयाख्यं कर्म विधेयं तत्राहवनीयं प्रागादिदिक्षु कृत्वा मध्ये चावशिष्य स्रुवेणाज्यं पञ्चस्वग्निषु यथालिङ्गं जुहोति । अध्यायसमाप्तिपर्यन्तं देवा ऋषयः । दश यजूंषि देवदेवत्यानि । अग्निर्नेता येषां ते अग्निनेत्रास्तेभ्यः । पुरः पुरस्तात्पूर्वस्यां दिशि सीदन्तीति पुरःसदस्तेभ्यो देवेभ्यः स्वाहा सुहुतमस्तु । अथ दक्षिणे जुहोति । यमनेत्रेभ्यः यमो नेता येषां तेभ्यः । दक्षिणस्यां सीदन्तीति दक्षिणासदस्तेभ्यो देवेभ्यः स्वाहा । अथ पश्चाज्जुहोति । विश्वदेवनेत्रेभ्यः विश्वेदेवा नेतारो येषां तेभ्यः पश्चात्सीदन्तीति पश्चात्सदस्तेभ्यः स्वाहा । अथोत्तरार्धे जुहोति । मित्रावरुणनेत्रेभ्यः मित्रावरुणौ नेतारौ येषां ते मित्रावरुणनेत्राः वा यद्वा मरुतो नेतारो येषां ते मरुन्नेत्राः । उत्तरस्यां सीदन्तीत्युत्तरासद उत्तरभागार्थास्तेभ्यो देवेभ्यः स्वाहा । अत्र मित्रावरुणनेत्रेभ्यो देवेभ्य उत्तरासद्भ्यः मरुन्नेत्रेभ्यो देवेभ्य उत्तरासद्भ्य इति मन्त्रयोर्विकल्पः । मध्ये जुहोति । सोमनेत्रेभ्यः सोमो नेता येषां तेभ्यः । उपरि सीदन्ति तिष्ठन्तीत्युपरिसदस्ते । दुवस्वद्भ्यः परिचर्यावद्भ्यः । यद्वात्र दुवःशब्देन हव्यं तद्येषामस्ति ते दुवस्वन्तस्तेभ्यो देवेभ्यः स्वाहा ॥ ३५ ॥

## षट्त्रिंशी ।

ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा ॥ ३६ ॥

**उ०** साधं समुह्य जुहोति । ये देवा अग्निनेत्राः पुरःसदः तेभ्यः स्वाहा । तुल्यव्याख्याना पञ्चमन्त्रा ऋजवः ॥ ३६ ॥

**म०** 'उत्तराः समस्य ये देवा इति प्रतिमन्त्रमिति' ( का० १५ । १ । २१ ) पञ्चधा विभक्तमाहवनीयमेकीकृत्य ये देवा इति पञ्च मन्त्रैः प्रत्येकं जुहुयादिति शेषः । ये देवा अग्निनेत्राः पुरःसदस्तेभ्यो देवेभ्यः स्वाहा । ये देवा यमनेत्राः पूर्ववद्व्याख्या । ये देवा विश्वदेवनेत्राः पश्चात्सदः । ये देवा मित्रावरुणनेत्राः ये देवा मरुन्नेत्रा इति मन्त्रयोर्विकल्पः । ये देवाः सोमनेत्राः उपरिसदः उपरि स्थिता दुवस्वन्तो हव्यवन्तस्तेभ्यः स्वाहा ॥ ३६ ॥

## सप्तत्रिंशी ।

अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चोधा यज्ञवाहसि ॥ ३७ ॥

**उ०** अपामार्गहोमः । उल्मुकमादत्ते । अग्ने सहस्व पृतनाः आग्नेय्यनुष्टुप् । हे भगवन्नग्ने, सहस्वाभिभव पृतनाः संग्रामान् । किंच अभिमातीरपास्य । सपत्नोऽभिमातिरुच्यते । सपत्नांश्च अपास्य । 'असु क्षेपणे' इत्यस्यैतद्रूपम् । अपक्षिप । कस्मात्पुनरेवं त्वमुच्यसे अत आह । दुष्टरस्तरन्नरातीः तरतेस्तृणातेर्वा दुष्टरः अशक्यप्रतिक्रियो दुर्निवारस्त्वम् । किंकुर्वन् तरन्नरातीः विनाशयन् शत्रुसेनाः । किंच वर्चोधा यज्ञवाहसि । वर्च इत्यन्ननामसु पठितम् । अन्नस्य धाता दाता वा वर्चस ओजसो वा धारयितासि । यज्ञं वहतीति यज्ञवाहास्तस्मिन्यज्ञवाहसि यजमाने ॥ ३७ ॥

**म०** 'अग्ने सहस्वेत्युल्मुकादानमिति' ( का० १५ । २ । ५ ) अपामार्गतण्डुलहोमार्थं दक्षिणाग्नेरुल्मुकमादद्यात् । अग्निदेवत्यानुष्टुब्देवश्रवोदेववातदृष्टा । हे अग्ने, त्वं पृतनाः शत्रुसेनाः सहस्व अभिभव । तथा अभिमातीः सपत्नोऽभिमातिरुच्यते स्त्रीत्वमार्षम् । अभिमातीन् शत्रून् अपास्य अपक्षिप निवर्तय । 'असु क्षेपणे' अस्य लोटि रूपम् । किंच यज्ञं वहतीति यज्ञवाहास्तस्मिन् यज्ञवाहसि यज्ञनिर्वाहके यजमाने वर्चोऽन्नं धाः धेहि । दधातेर्लुङि रूपम् 'बहुलं छन्दस्यमाङ्योगेऽपि '( पा० ६।४।७५ ) इत्यडभावः । किंभूतस्त्वम् । दुष्टरः दुस्तरः केनापि तर्तुमशक्यः अशक्यप्रतिक्रियो दुर्निवार इत्यर्थः । अरातीः शत्रून् तरन् तिरस्कुर्वन्विनाशयन्नित्यर्थः ॥ ३७ ॥

## अष्टात्रिंशी ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । उपांᳪशोर्वीर्येण जुहोमि हतᳪरक्षः

स्वाहा रक्षसां त्वा वधायावधिष्म रक्षोऽवधिष्मामुमसौ हतः ॥ ३८ ॥

**उ०** जुहोति देवस्य त्वा व्याख्यातम् । उपांशोर्वीर्येण जुहोमि । अतो हतं हिंसितं रक्षः स्वाहा सुहुतं चैतद्धविर्भवतु । स्रुवं प्रास्यति । रक्षसां त्वा वधार्थम् प्रास्यामीति शेषः । प्रत्यागच्छति । अवधिष्म हतवन्तो वयं रक्षः । जातावेकवचनम् । अवधिष्म । अमुमिति नामग्रहणं असाविति च । अथ कोर्थः । हतवन्तो वयं खदिरवर्माणं खदिरवर्मा वा हतोस्माभिः ॥ ३८ ॥

**म०** 'देवस्य त्वेति जुहोतीति' ( का० १५ । २ । ६ ) प्रागुदग्वा गत्वा गृहीतमुल्मुकं संस्थाप्य स्रुवेणापामार्गतण्डुलाञ्जुहुयात् । देवस्य त्वा व्याख्यातम् । उपांशोः त्रीणि यजूंषि रक्षोघ्नदेवत्यानि । उपांशुर्नाम प्रथमो ग्रहस्तस्य वीर्येण सामर्थ्येनाहं जुहोमि । अतएव रक्षो राक्षसजातिर्हतं निहतम् स्वाहा सुहुतं हविरस्तु । 'रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोतीति' ( का० १५ । २ । ७ ) यस्यां दिशि होमं कुर्यात्तां दिशं प्रति स्रुवं प्रक्षिपेत् । रक्षसां राक्षसानां वधाय नाशार्थं त्वा त्वां प्रास्यामीति शेषः । 'अवधिष्म इत्यायन्त्यनपेक्षमिति' ( का० १५ । २ । ७ ) । अध्वर्य्वादयः पश्चादनवलोकयन्तो देवयजनं प्रत्यागच्छन्ति । रक्षो राक्षसजातिं वयमवधिष्म हतवन्तः जातावेकवचनम् । अमुमिति शत्रुनामग्रहणम् असाविति च । अमुं देवदत्तं वयमवधिष्म असौ देवदत्तो हतो मारितोऽस्माभिः ॥ ३८ ॥

## एकोनचत्वारिंशी ।

सविता त्वा सवानाᳪं सुवतामग्निर्गृहपतीनाᳪं सोमो वनस्पतीनाम् । बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥ ३९ ॥

**उ०** गृहीत्वा दक्षिणं यजमानबाहुं जपति । सविता त्वां सवानाम् प्रसवानामाधिपत्ये सुवतां प्रसुवताम् अभ्यनुजानतु । स हि तेषामीष्टे अग्निर्गृहपतीनाम् आधिपत्ये सुवतामित्यनुवृत्तिः । सोमो वनस्पतीनामाधिपत्ये सुवताम् । बृहस्पतिर्वाचे वागर्थमभ्यनुजानातु । इन्द्रो ज्येष्ठ्याय ज्येष्ठभावायार्थं सुवताम् । रुद्रः पशुभ्यः पश्वर्थं सुवताम् । मित्रः सत्यः सत्यायेति विभक्तिव्यत्ययः । सत्यार्थं सुवताम् । वरुणो धर्मपतीनामाधिपत्ये सुवताम् ॥ ३९ ॥

**म०** 'उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा नामास्य गृह्णाति मन्त्रे यथास्थानं मातापित्रोश्च यस्याश्च जाते राजा भवतीति' ( का० १५ । ४ । १३—१५ ) । अष्टौ देवसूहवींषि । तत्रान्तिमेन वरुणाय धर्मपतय इति वारुणेन चरुणा चरित्वा यजमानान्तिके गत्वा स्रुचौ सव्ये पाणौ कृत्वा दक्षिणं तद्बाहुमादाय सविता त्वेति कण्डिकाद्वयरूपं मन्त्रमाह । मन्त्रे यथास्थानं यजमानस्य तन्मातापित्रोर्यस्या जनपदजाते राजा भवति तस्याश्च नामानि गृह्णातीति सूत्रार्थः । अतिजगती यजमानदेवत्या । सविता सवानां प्रसवानामाज्ञानामाधिपत्ये हे यजमान, त्वा त्वां सुवतां प्रेरयतु । सर्वेषामाज्ञादानेऽधिकारी भवेत्यर्थः । अग्निर्गृहपतीनां गृहस्थानामाधिपत्ये त्वां सुवताम् । सोमो वनस्पतीनां वृक्षाणामाधिपत्ये त्वां सुवतां । वृक्षाः सर्वे तवोपकारका भवन्त्वित्यर्थः । बृहस्पतिर्वागर्थं त्वां सुवतां पाण्डित्याय प्रेरयतु । यद्वा षष्ठ्यर्थे चतुर्थी । वाचआधिपत्ये सुवताम् । इन्द्रो देवो ज्यैष्ठ्याय ज्येष्ठभावाय त्वां सुवताम् । रुद्रः पशुभ्यः पश्वर्थं पश्वाधिपत्ये वा त्वां सुवताम् । मित्रो देवः सत्यः 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्यादिना चतुर्थ्याः सुआदेशः । सत्याय सत्यवाक्याय सत्यं वदितुं त्वां सुवताम् । वरुणो धर्मपतीनां धर्मेश्वराणां धर्मशीलानामाधिपत्ये त्वां सुवताम् । सवित्रादयोऽष्टौ देवसूहविषां देवतास्त्वां नानाधिपत्यानि ददत्विति वाक्यार्थः ॥ ३९ ॥

## चत्वारिंशी ।

इमं देवा असपत्नᳪं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳪं राजा ॥ ४० ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
नवमोऽध्यायः ॥ ९ ॥

**उ०** इमं देवा असपत्नं सुवध्वम् । इमं राजानं हे देवाः, अपसपत्नं सुवध्वम् । महते क्षत्राय महते ज्यैष्ठ्याय ज्येष्ठभावाय । महते च जनानां राज्याय । इन्द्रस्य च इन्द्रियाय वीर्याय । सुवध्वमिति प्रत्येकं संबन्धः । इमम् अमुष्यपुत्रम् । अमुष्येति यजमानस्य पितुः षष्ठ्यन्तं नाम गृह्यते । अमुष्यै पुत्रम् । अमुष्यै इति यजमानस्य मातुर्नामग्रहः । 'स आदित्येन दिनं मिथुनं समभवत्' इत्यादिश्रुतिः । इमममुष्य पुत्रमित्यादिस्तृतीयपादः सोमपरत्वेन व्याख्येयः । अस्यै विशे । जनपदनामग्राहः । एष वः अमी राजा । एष वः कौरवो राजा सोमः अस्तु । अस्माकं ब्राह्मणानां राजा ॥ ४० ॥

इति उवटकृतौ मन्त्रभाष्ये नवमोऽध्यायः ॥ ९ ॥

**म०** अत्यष्टिर्यजमानदेवत्या । हे देवाः सवित्रादयः, इममसुकसंज्ञं यजमानमसपत्नं सपत्नरहितं कृत्वा सुवध्वं प्रेरयध्वम् । किमर्थं महते क्षत्राय महत्यै क्षत्रपदव्यै । महते ज्यैष्ठ्याय ज्येष्ठभावाय । महते जानराज्याय जनानामिदं जानं जानं च तद्राज्यं च जानराज्यं । जनानामाधिपत्यायेत्यर्थः । इन्द्रस्यात्मन इन्द्रियाय वीर्याय आत्मज्ञानसामर्थ्याय इमं यजमानं

सुवर्धयमित्यर्थः । किंभूतमिमम् । अमुष्य पुत्रम् । अमुष्येति षष्ठ्यन्तं यजमानपितुर्नाम ग्राह्यम् । तथा अमुष्यै षष्ठ्यर्थे चतुर्थी । अमुष्याः देव्याः पुत्रम् । अमुष्या इति यजमानमातुर्नामग्रहः । अस्यै विशे अस्याः कौरव्याः विशः प्रजाया अधिपतिमिति शेषः । अस्यै इति षष्ठ्यन्तं जातिनाम ग्राह्यम् । अमी इति प्रथमान्तं देशनाम ग्राह्यम् । अमी हे कुरवः पञ्चालाः, वो युष्माकमेष खदिरवर्मा राजास्तु । अस्माकं ब्राह्मणानां तु सोमश्चन्द्रो वल्लीरूपो वा सोमो राजा प्रभुरस्तु ॥ ४० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
वाजपेयो राजसूयारम्भान्तो नवमोऽगमत् ॥ ९ ॥

---

## दशमोऽध्यायः ।

### तत्र प्रथमा ।

अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥

**उ०** अपो देवा मधुमतीः । वरुणस्यार्षं प्राक् चरकसौत्रामण्याः । अब्देवत्या त्रिष्टुप् । या अपो देवाः मधुमतीः मधुस्वादोदकाः । अगृभ्णन् गृहीतवन्तः । ऊर्जस्वतीः अन्नवतीः । राजस्वः राजानं याः सुवन्ति जनयन्ति ता राजस्वः । चितानाः चेतयमानाः परिदृष्टकारिण्यः । किंच याभिरद्भिर्मित्रावरुणावभ्यषिञ्चन्नभिषिक्तवन्तः । देवा इत्यनुवृत्तिः । याभिः इन्द्रम् अनयन् नीतवन्तः । अत्यरातीः अतीत्य अरातीः अदनवतीः शत्रुसेनाः । प्रकृतत्वाद्देवाः पदमस्ति ताः गृह्णामीति शेषः ॥ १ ॥

**म०** नवमेऽध्याये वाजपेयो राजसूयसंबन्धि कियदपि कर्मोक्तं । दशमेऽभिषेकार्थजलादानादिराजसूयशेषश्चरकसौत्रामणी चोच्यते । तत्र इडान्तेऽपो गृह्णाति यूपमुत्तरेण नैमित्तिकीरसंभवाद्गत्वेतराः पृथक् पात्रेष्वौदुम्बरेषु ( का० १५ । ४ । २०–२२ ) 'सारस्वतीर्गृह्णात्यपो देवाः' ( १५ । ४ । ३३ ) इति । इडाग्रहणं कार्यशेषोपलक्षणम् । देवसूहविषां भागपरिहरणान्ते कृते अभिषेकार्था वक्ष्यमाणा अपो वक्ष्यमाणप्रकारेणौदुम्बरवृक्षपात्रेषु पृथग्गृह्णाति । तत्र विशेषः । निमित्तवशात्प्राप्या नैमित्तिक्यः यथान्तरिक्षात्प्रतिगृह्यातपवर्षाः प्रुष्वाः गोरुल्व्या इत्याद्याः ता राजसूयारम्भात् प्रागेव संपाद्य तदानीं यूपमुत्तरेण गृह्णीयात्कुतः असंभवात् तदानीमातपवर्षणादेर्निमित्तस्याभावात् इतरा अनैमित्तिकीरपो गत्वा तदानीमेव गृह्णीयात् । तत्र मन्त्रानाह । अपो देवा इति सरस्वतीनदीसंबन्धिनीरप आदौ गृह्णाति । चरकसौत्रामण्याः प्राग्वरुण ऋषिः । अब्देवत्या त्रिष्टुप् । देवा इन्द्रादयो या अपोऽगृभ्णन् गृहीतवन्तः । किंभूता अपः । मधुमतीः मधुरस्वादोपेताः । तथा ऊर्जस्वतीः ऊर्जो विद्यते यासु । विशिष्टान्नरसवतीः । राजस्वः राज्ञः सूयन्ते जनयन्तीति राजस्वः नृपोत्पादिकाः । चितानाः चेतयमानाः सदेवतत्वात्परिदृष्टकारिणीः । पुनस्ता एव विशिनष्टि । याभिरद्भिर्देवा मित्रावरुणौ अभ्यषिञ्चन् मित्रावरुणयोरभिषेकं कृतवन्तः । याभिरद्भिर्देवा इन्द्रं देवमरातीः शत्रून् अत्यनयन् अतीत्य नीतवन्तः इन्द्रं शत्रूनत्यक्रामयन्नित्यर्थः । 'छन्दसि परेऽपि' ( पा० १ । ४ । ८१ ) इति अतेरुपसर्गस्य क्रियापदात्परत्वम् । ता अपो गृह्णामीति शेषः ॥ १ ॥

### द्वितीया ।

वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥ २ ॥

**उ०** अनेन मन्त्रेण सारस्वतीर्गृहीत्वा अनन्तरं हुत्वा षोडशापो गृह्यन्ते । तत्र प्रथमो होममन्त्रः । द्वितीयो ग्रहणमन्त्रः । नदीप्रवाहेऽवस्थितस्य पशोर्वा पुरुषस्य वा यौ ऊर्मी व्यर्दतः तौ गृह्णाति । स यः प्राङुदर्दति प्राङुदृच्छति तं गृह्णाति । वृष्ण ऊर्मिरसि राष्ट्रदाः । यस्त्वं वृष्णो वर्षितुः सेक्तुः संबन्ध्य ऊर्मिरसि । वृषा हि यदि पुरुषो यदि पशुः राष्ट्रदाश्च । राष्ट्रं जनपदः तस्य स्वभावत एव दातासि तं त्वां ब्रूमो राष्ट्रं मे मह्यं देहि । स्वाहा गृह्णामि । वृष्ण ऊर्मिरसि राष्ट्रदाः राष्ट्रममुष्मै । अमुष्मा इति यजमानस्य नामग्रहः । देहि । एवमुपरितना अपि मन्त्रा व्याख्येयाः । द्वितीयमूर्मिं गृह्णाति । वृषसेनोसि । वृषा युवोच्यते । वृषप्रधाना सेना यस्य स वृषसेनः । स्यन्दमानाः ॥ २ ॥

**म०** 'जुहोत्युत्तरासु चतुर्गृहीतं वृष्ण ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति' ( का० १५ । ४ । ३४ ) 'अवगूढात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मी इति' । ( १५ । ४ । २३ ) सारस्वतीरादायोत्तरासु षोडशस्वप्सु, वृष्ण ऊर्मिरित्यादिभिः स्वाहान्तैः पूर्वपूर्वमन्त्रैश्चतुर्गृहीताज्यानि गृह्यमाणासु जुहुयात् उत्तरैः स्वाहाहीनैर्मन्त्रैस्ताः क्रमेण गृह्णाति । उत्तरमन्त्रेषु अमुष्मै इति पदस्थाने चतुर्थ्यन्तं यजमाननाम ग्राह्यम् । वृष्ण ऊर्मिरित्यादयो विश्वभृत स्थेत्यन्ता मन्त्राः संहितायां द्विशः पठितास्तेषां पूर्वैः पूर्वैः स्वाहान्तस्तेनाज्यहोमः उत्तरोत्तरः स्वाहाहीनस्तेनापामादानम् । तत्र गत्वा जले प्रविष्टात्पशोर्नराद्वा यौ पूर्वापरौ कल्लोलौ तौ हुत्वा गृह्णातीति सूत्रार्थः । वृष्ण ऊर्मिरसीत्यादीनि आपः स्वराज इत्यन्तानि यजूंषि लिङ्गोक्तदेवतानि । हे कल्लोल, त्वं वृष्णो वर्षितुः सेक्तुः पशोर्नरस्य वा संबन्धी ऊर्मिः कल्लोलोऽसि । राष्ट्रदाः राष्ट्रं जनपदं ददातीति राष्ट्रदाः स्वभावत एव देशप्रदो भवसि अतो राष्ट्रं मे मह्यं देहि स्वाहा हविर्दत्तमस्तु । एवं हुत्वाथ गृह्णाति वृष्ण ऊर्मिरसि

राष्ट्रदा अतोऽमुष्मै यजमानाय राष्ट्रं जनपदं देहि । अमुष्मै इति चतुर्थ्यन्तं यजमाननाम ग्राह्यम् । एवमुपरितना अपि मन्त्रा व्याख्येयाः । अपरोर्मिं गृह्णाति वृषसेनोऽसि वृषा सेचनसमर्था सेना जलराशिरूपा यस्य स वृषसेनः । व्याख्यातमन्यत् ॥ २ ॥

## तृतीया

अर्थेतं स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽर्थेतं स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥ ३ ॥

**उ०** अर्थेतस्थ राष्ट्रदाः । अर्थं प्रयोजनं निष्पादयितुं याः यन्ति गच्छन्ति ता अर्थेतः । अस्तेर्बहुवचनं स्थइति । राष्ट्रदाः । एतदपि बहुवचनम् । राष्ट्रं मे दत्त । दत्तेति ददातेर्बहुवचनम् । व्याख्यातमन्यत् । प्रतिलोमाः तु ओजस्वतीः ओजसा बलेन युक्ताः सत्यः एताः प्रतिलोमाः स्यन्दन्ते । अपयतीः आपः परिवाहिणीः । हे आपः, याः यूयं परिवाहिणीः सर्वतो वहनशीलाः स्थ उक्तमन्यत् । नदीपतिः अपांपतिरसि । ऋज्वर्थः । निवेष्ट्यम् 'वेष्ट वेष्टने' अस्य निपूर्वस्यान्त्यव्यापत्या निवेष्ट्य आवर्त उच्यते । स्यन्दमानाः स्थावराः प्रत्यागता आपः ॥ ३ ॥

**म०** 'स्यन्दमाना इति नद्यादिप्रवाहस्था अपो गृह्णाति' । ( का० १५ । ४ । २४ ) अर्थेतः अर्थं प्रयोजनमुद्दिश्य नद्यादेः सकाशाद् यज्ञदेशं यन्ति गच्छन्तीत्यर्थेतः । इणः क्विपि तुगागमः । तथाविधा यूयं राष्ट्रदा देशदात्र्यः स्थ भवथ । मे राष्ट्रं दत्त यच्छत । दत्तेति बहुवचनम् अन्यद्व्याख्यातम् ( का० १५ । ४ । २५ ) । प्रतिलोमाः । वहन्तीनां याः प्रतिगच्छन्ति तासु होमादाने । हे आपः, यूयमोजस्वतीः ओजसा बलेन युक्ता भवथ । 'अपयतीरिति' ( का० १५ । ४ । २६ ) वहन्तीनामपां मध्याद्या मार्गान्तरेण गत्वा पुनस्तत्र मिलन्ति ता अपयत्यस्तासु होमादाने । हे आपः, यूयं परिवाहिणीः स्थ परि सर्वतो वहन्तीति परिवाहिण्यः सर्वतोवहनशीला भवथ उक्तमन्यत् ( का० १५ । ४ । २७ ) नदीपतिमिति । –समुद्रस्यापां होमादाने । अपां जलानां पतिः स्वामी पालकोऽसि । ( का० १५ । ४ । २९ ) निवेष्या इति । निवेष्य आवर्तस्तद्भवा निवेष्याः नद्यादौ यत्राम्भोभ्रमस्तत्र होमादाने हे जलभ्रम, त्वमपां गर्भो मध्यवर्ती भवसि ॥ ३ ॥

## चतुर्थी ।

सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । मधुमतीर्मधुमतीभिः पृच्यन्तां महि क्षत्रं क्षत्रियाय वन्वाना अनाधृष्टाः सीदत सहौजसो महि क्षत्रं क्षत्रियाय दधतीः ॥ ४ ॥

**उ०** सूर्यत्वचसस्थ । सूर्यस्येव त्वक् यासां ताः सूर्यत्वचस आतपवर्ष्याःस्थ । सूर्यवर्चसः स्थ राष्ट्रदाः सूर्यवर्चसः सूर्यस्येव वर्चस्तेजो यासां ताः सूर्यवर्चसः । सरस्याः मान्दास्थ मन्दतेर्मोदनार्थस्य मन्दः । तत्र हि मोदन्ति भूतानि बहूदकत्वात्, तत्र भवा आपो मान्दाः । कूप्याः गृह्णाति । व्रजक्षितस्थ । व्रज इति मेघनामसु पठितम् । इह तूदकवत्वसाम्यात्कूप उच्यते । व्रजे क्षियन्ति व्रजक्षितः पुष्या अवस्यायाः । वाशीस्थ । 'वश कान्तौ' । कामिता अभिलषिताः स्थ । ता हि सर्व एव कामयन्ते अन्नहेतुत्वात् । मधुशविष्ठास्थ । शव इति बलनाम शविष्ठा बलिष्ठाः । बलिष्ठं हि मधु त्रिदोषशमनत्वात् । उक्तंच 'त्रिदोषघ्नं मधु प्रोक्तं केचिदिच्छन्ति वातलम्' इति । गोरुल्व्यागृह्णाति । शक्वरीस्थ । 'शक्लृ शक्तौ' 'आतो मनिन्क्वनिब्वनिपश्च' । शक्नुवन्ति हि गावो जगदुद्धर्तुं वाहदोहादिभिः । पयः जनभृतः । जनान् हि पयो बिभर्ति बालभावे धृतं । विश्वभृतः विश्वं सर्वं देवाद्यपि धृतं बिभर्ति । मरीचीः । आपः स्वराजस्थ । हे आपः या यूयं स्वराजस्थ स्वकीयमेव राज्यं यासां तास्तथोक्ताः । अनन्याश्रितराज्या इत्यर्थः । व्याख्यातमन्यत् । औदुम्बरपात्रे संमासिच्येता मधुमतीः मधुमतीर्मधुररसवत्यः मधुररसवतीभिर-

द्भिः पृच्यन्तां सृज्यन्ताम्। महि महत् क्षत्रं क्षत्रियाय राज्ञे वन्वानाः। वनोतिः संभजनार्थः। संभजमानाः। मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति। अनाधृष्टाः अनाधर्षिताः रक्षोभिः सीदत उपविशत। सहोजसः सवीर्याः सहबलेन। किंकुर्वाणाः। महि महत्क्षत्रं क्षत्रियाय राज्ञे दधतीः स्थापयन्त्यः॥ ४॥

**म०** 'स्यन्दमानानां स्थावराः प्रत्यातप इति'। (का० १५। ४। ३०) वहदपां मध्ये याः स्थिराः सदा घर्मे वर्तमानास्तासु होमादाने। हे आपः, यूयं सूर्यत्वचसो भवथ सूर्यस्येव त्वचस्त्वक् यासां ताः सूर्यत्वचसः सदा तापे वर्तमानत्वात् त्वचःशब्दः सान्तस्त्वग्वाची। 'अन्तरिक्षात्प्रतिगृह्यातपवर्ष्या इति' (का० १५। ४। ३१) आतपे वर्षति सति गगनादप आदायादौ संपादिताः सन्ति यूपमुत्तरेण तासु होमादाने। सूर्यस्येव वर्चस्तेजो यासां ताः सूर्यवर्चसः तादृश्यो भवथ। 'सरस्या इति' (का० १५। ४। ३२) तडागभवास्वप्सु होमादाने। हे आपः, यूयं मान्दाः स्थ। मन्दतेर्मोदनार्थस्य रूपं मन्दन्ते भूतानि यत्र बहूदकत्वात्ता मान्दाः भवथ। 'कूप्य इति'। (का० १५। ४। ३) कूपे भवाः कूप्यास्तत्र होमादाने। हे आपः, यूयं व्रजक्षितो भवथ। व्रज इति मेघनामसु पठितम् अत्र तूदकधारणसामर्थ्यात् कूप उच्यते। व्रजे कूपे क्षियन्ति निवसन्ति व्रजक्षितः। (का० १५। ४। ३२) प्रुष्वा इति। 'प्रुष सेचने' प्रुष्णन्ति ओषधीः सिञ्चन्तीति प्रुष्वाः अवश्यायरूपाः तृणाग्रेषु स्थितास्तासु वस्त्रक्षेपेण या आत्ताः सन्ति ता यूपमुत्तरेण हुत्वा ग्राह्याः। वाशाः स्थ। 'वश कान्तौ' उश्यन्ते जनैः काम्यन्तेऽन्ननिष्पत्तिहेतुत्वाद्वाशा यूयं भवथ। 'मध्विति' (का० १५। ४। ३२) मधुनि होमादाने। हे मधुरूपा आपः, यूयं शविष्ठाः। 'शव' इति बलनाम। बलिष्ठा बलदात्र्यो भवथ। त्रिदोषबलशमनत्वाद्बलकरं मधु। 'गोरुल्व्या इति' (का० १५। ४। ३२) उल्वं गर्भवेष्टनं तत्र भवा उल्व्याः प्रसूयमानधेनुगर्भवेष्टनोत्थजलं पूर्वं गृहीतमस्ति यूपमुत्तरेण तत्र होमादाने। शक्करीः। 'शक्लृ शक्तौ' 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३। २। ७५) इति वनिप्प्रत्ययः 'वनो र च' (पा०४।१।७) इति ङीप् रेफश्च। शक्नुवन्ति वाहदोहादिभिर्जगदुद्धर्तुमिति शक्कर्यो गावस्तत्संबन्धिन्यो यूयं भवथ। 'पय इति' (का० १५। ४। ३२) दुग्धस्य होमपूर्वं ग्रहणम्। हे आपः, यूयं जनभृतो भवथ बालभावे जनान् जन्तूनि बिभ्रति पुष्णन्तीति जनभृतः। 'घृतमिति' (का० ५। ४। ३२) घृते होमादाने। हे घृतरूपा आपः, यूयं विश्वभृतः विश्वं सर्वं जगद्देवादिकं बिभ्रति विश्वभृतो भवथ राष्ट्रदाः। एवं सारस्वत्यादयो घृतान्ताः सप्तदशाप उक्ताः। 'आपः स्वराज इति मरीचीर्गृहीत्वा गृहीताञ्जलिना सर्वासु सꣳसृजतीति' (का० १५। ४। ३५) रविकरतप्ता आपो मरीचयस्ता अञ्जलिनादाय पूर्वगृहीतास्वप्सु योजयेत् प्रतिग्रहणमन्त्रः संसर्गस्तूष्णीम्। 'नात्र होमः षोडशाहुतीर्जुहोति द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु च'



(५। ३। ४। २३) इति श्रुतेः। हे आपः, मरीचिरूपा यूयं स्वराजः स्थ स्वेनैव राजन्ते ताः स्वराजः अनन्याश्रितराज्या भवथ राष्ट्रदाः अतोऽमुष्मै यजमानाय राष्ट्रं देशं दत्त। 'औदुम्बरे पात्रे समासिञ्चत्येना मधुमतीरिति' (का० १५। ४। ३६) एनाः सारस्वत्याद्या अप उदुम्बरकाष्ठपात्रे एकीकरोति मन्त्रावृत्तिः। अब्देवत्यं यजुः। मधुमतीः मधुरसवत्य एता आपो मधुमतीभिर्मधुरस्वादोपेताभिरद्भिः पृच्यन्तां संसृज्यन्ताम्। किंभूता एताः। महि महत् क्षत्रं बलं क्षत्रियाय राज्ञे यजमानाय वन्वानाः संभजमानाः ददत्य इत्यर्थः। वनोतिः संभजनार्थः। 'मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टा सीदतेति' (का० १५। ४। ३७) औदुम्बरे पात्रे एकीकृतास्ता अपो मैत्रावरुणधिष्ण्याग्रे सदसि सादयति। अब्देवत्यम्। हे आपो, यूयं सीदत तिष्ठत। किंभूता यूयम्। अनाधृष्टाः अपराभूता रक्षोभिः। सहोजसः ओजसा सहिताः बलयुक्ताः। तथा महि महत्क्षत्रं बलं क्षत्रियाय राज्ञे दधतीः दधत्यः स्थापयन्त्यः॥ ४॥

## पञ्चमी।

सोम॑स्य॒ त्विषि॑रसि॒ तवे॑व मे॒ त्विषि॑र्भूयात्। अ॒ग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहा॑ सवि॒त्रे स्वाहा॒ सर॑स्वत्यै॒ स्वाहा॑ पू॒ष्णे स्वाहा॒ बृह॒स्पत॑ये॒ स्वाहेन्द्रा॑य॒ स्वाहा॒ घोषा॑य॒ स्वाहा॒ श्लोका॑य॒ स्वाहा॒ अꣳशा॑य॒ स्वाहा भगा॑य॒ स्वाहा॑र्य॒म्णे स्वाहा॑॥ ५॥

**उ०** व्याघ्रचर्मारोहति। सोमस्य त्विषिः सोमस्य दीप्तिर्भवसि यतः अतः तव इव यथा तव त्विषिरेवं मम त्विषिर्भूयात्। 'यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिः' इति श्रुतिः। षट् पुरस्तादभिषेकस्य पार्थानि जुहोति। अग्नये स्वाहेति प्रतिमन्त्रम्, षडुपरिष्टात् इन्द्राय स्वाहेति प्रतिमन्त्रम्॥ ५॥

**म०** 'व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति' (का० १५। ५। १)। मैत्रावरुणधिष्ण्याग्रासादितपालाशादिपात्रचतुष्टयस्य पुरस्ताद्व्याघ्रचर्मास्तृणाति। चर्मदेवत्यम्। हे चर्म, त्वं सोमस्य त्विषिर्दीप्तिरसि भवसि अतस्तवेव त्वत्सदृशी मे मम त्विषिः कान्तिर्भूयात्। 'यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिः' (५। ३। ५। ३) इति श्रुतेः। 'पार्थानामग्नये स्वाहेति षट् जुहोति प्रतिमन्त्रम्' (का० १५। ५। ३) 'पार्थानामिन्द्राय स्वाहेति षट् जुहोति प्रतिमन्त्रमिति' (का० १५। ५। ३४)। पार्थसंज्ञानां द्वादशमन्त्राणां मध्ये अग्नय इत्यादीनि षट् पार्थान्यभिषेकादौ जुहोति इन्द्रायेत्यादि षट् अभिषेकान्ते सकृद्गृहीताज्यैः। लिङ्गोक्तानि द्वादश यजूंषि अङ्गतीत्यग्निः। सुनोति सोमः। सूते सुवति प्रेरयति वा सविता। सरः शब्दप्रवाहो यस्याः सा सरस्वती। पुष्णाति पूषा। बृहतां साम्नां पतिर्बृहस्पतिः। इन्दति ईष्टे इन्द्रः। घु-

ष्यति शब्दं करोति घोषः । श्लोक्यते कीर्त्यते जनैरिति श्लोकः । अंशयति विभाजयति पुण्यपापे तत्फलदानेनेति अंशः । 'अंश विभाजने' धातुः । भज्यते सेव्यते स भगः । इयर्ति व्याप्नोति विश्वमित्यर्यमा । एतेभ्यः सुहुतमस्तु ॥ ५ ॥

## षष्ठी ।

प॒वित्रे॑ स्थो वैष्ण॒व्यौ॑ सवि॒तुर्वः॑ प्रस॒व उत्पु॑नाम्य॒च्छिद्रे॑ण प॒वित्रे॑ण॒ सूर्य॑स्य र॒श्मिभिः॑ । अनि॑भृष्टमसि वा॒चो ब॒न्धु॑स्तपो॒जाः सोम॑स्य दा॒त्रम॑सि॒ स्वाहा॑ राज॒स्वः॑ ॥ ६ ॥

उ० पवित्रे करोति । पवित्रे स्थः । पवित्रे स्थो वैष्णव्यौ व्याख्यातम् । उत्पुनाति । सवितुर्वः । व्याख्यातम् । अनिभृष्टमसि । अत्र मन्त्रावयवा एकवचनान्ताः श्रुत्या तु बहुवचनान्ता व्याख्याताः । आपो ह्यत्राभिधेयमिति । अतः श्रुत्यर्थोनुक्रियते । 'भ्रस्जो पाके' इत्ययं धातुः ऋषिणा व्याख्यातः । अनिभृष्टमसीति । कोर्थः अनाधृष्टाः स्थ रक्षोभिः । वाचोबन्धुः । वाचः बन्धुभूताः । 'यावद्वै प्राणेष्वापो भवन्ति तावद्वाचो वदति' इति श्रुतिः । तपोजाः । तपःशब्देनाग्निरुच्यते तस्माज्जायन्ते । 'अग्नेर्वै धूमो जायते' इत्यादिश्रुतिः । सोमस्य दात्रमसि सोमस्य दात्र्यः स्थ । 'यदा वा एनमेताभिरद्भिः पुण्वन्ति' इत्यादिश्रुतिः । स्वाहाराजस्वः । स्वाहाकारेण पूताः सत्यः राजस्वः भवथ । राजानं या सुवन्ति जनयन्ति ता राजस्वः ॥ ६ ॥

म० 'पवित्रे कृत्वा हिरण्यमेनयोः प्रवयतीति' ( का० १५ । ५ । ४ ) । प्रकृतिवत्पवित्रे स्थ इति पवित्रे कृत्वा तयोः स्वर्णं बध्नाति । पवित्रे स्थः व्याख्यातम् [ अध्या० १ क० १२ ] । 'ताभ्यामुत्पुनात्यपः सवितुर्व इति' ( का० १५ । ५ । ५ ) । सहिरण्याभ्यां दर्भपवित्राभ्यां मैत्रावरुणधिष्ण्याग्रासादिता औदुम्बरपात्रस्थाः अभिषेकार्था अप उत्पुनाति सवितुरित्यादिना राजस्व इत्यन्तेन मन्त्रेण । अब्देवत्यम् । सवितुः सर्वप्रेरकस्य परमेश्वरस्य प्रसवेऽनुज्ञायां स्थितोऽहम् अच्छिद्रेण छिद्ररहितेन समीचीनेन पवित्रेण सूर्यस्य किरणैश्चोत्पुनामि हे आपः; वो युष्मान् उत्पवनं करोमि । अनिभृष्टमसि । आपोऽत्राभिधेयाः अतोऽत्रैकवचनान्ता मन्त्रावयवाः श्रुत्या बहुवचनान्ता व्याख्याताः अतः श्रुत्यनुसारेण व्याख्यायते । हे आपः; यूयमनिभृष्टा स्थ । 'भ्रस्ज पाके' अयं धातुर्धृष्यर्थे । व्याख्यातः अनिभृष्टाः न नितरां धृष्टाः अपराभूताः रक्षोभिः । वाचो बन्धुः वाण्या बन्धुभूताः 'यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा वदति' ( ५ । ३।४।१६) इति श्रुतेः 'आपोमयी वाक्' इति सामश्रुतेश्च । तथा तपोजाः तपःशब्देनात्राग्निरुच्यते तपसोऽग्नेर्जातास्तपोजाः । 'अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजाः' ( ५ । ३ । ५ । १७ ) इति श्रुतेः 'वायोरग्निरग्नेरापः' ( तैत्ति० आर० ८ । १ ) इति श्रुत्यन्तरात् सोमस्य दात्रमसि सोमस्य दात्र्यो दानकर्त्र्यो स्थ 'यदा वा एनमेताभिरभिषुण्वन्त्यथाहुतिर्भवति' ( ५ । ३ । ५ । १८ ) इति श्रुतेः सोमदात्र्य आपः । स्वाहा राजस्वः स्वाहाकारेण पूताः सत्यः राजस्वो जनस्य राजानं सुवते जनयन्तीति राजस्वो राजजनिका भवथ ॥ ६ ॥

## सप्तमी ।

स॒ध॒मादो॑ द्यु॒म्निनी॒राप॑ ए॒ता अना॑धृष्टा अप॒स्यो॒ वसा॑नाः । प॒स्त्या॒सु च॒क्रे वरु॑णः स॒धस्थ॑म॒पाᳬशिशु॑र्मा॒तृत॑मास्व॒न्तः ॥ ७ ॥

उ० अभिषेचनीष्वेनां व्यानयति । सधमादो द्युम्नीः । अब्देवत्या वारुणी त्रिष्टुप् । या एताः सधमादः सहमदनाः सह एकस्मिन्पात्रे माद्यन्ति मदनं कुर्वन्ति ताः । द्युम्नीः वीर्यवत्यः आपः एताः अनाधृष्टाः अनभिभूता रक्षोभिः । अपस्यः अप इति कर्मनाम तत्र साधुः अपस्यः । वसानाः 'वस आच्छादने' आच्छादयन्त्यः पात्राण्यवस्थिताः । तास्वप्सु पस्त्यासु । पस्त्यमिति गृहनामसु पठितम् । गृहरूपासु विशां रूपेणावस्थितासु । चक्रे कृतवान् वरुणो राजा सधस्थं सहस्थानं प्रतिष्ठाम् । कथंभूतो वरुणः । अपां शिशुः । 'अपां वा एष शिशुर्भवति यो राजा राजसूयेन यजति' इति श्रुतिः । मातृतमासु अतिशयेन निर्मात्रीषु । अन्तर्मध्ये चक्रे सधस्थमिति संबन्धः ॥ ७ ॥

म० 'अभिषेचनीयेष्वेनां व्यानयति सधमाद इति' ( का० १५ । ५ । ६ ) । उत्पूता अभिषेकार्था आपोऽभिषेकार्थेषु पालाशौदुम्बरवाटाश्वत्थेषु पात्रेषु पूर्वासादितेषु चतुर्धा विभज्य निनयति । वरुणदेवत्या त्रिष्टुप् । या एता आपो वर्तन्ते । कीदृश्यः । सधमादः सह एकस्मिन् पात्रे माद्यन्ति हृष्यन्ति मादयन्ते प्रीणयन्ति वा ताः सधमादः । सहपूर्वान्मादयतेः क्विप् 'सध मादस्थयोश्छन्दसि' ( पा० ६ । ३ । ९६ ) इति सहस्य सधादेशः । द्युम्निनीः द्युम्नं वीर्यमस्ति यासां ता द्युम्निन्यः पूर्वसवर्णदीर्घः । 'द्युम्नं द्योततेर्यशो वान्नं वा' (नि० ५ । ५) इति यास्कः । अनाधृष्टाः रक्षोभिरनभिभूताः । अपस्यः । अप इति कर्मनाम । अपसि कर्मणि साध्व्यः अपस्यः । 'तत्र साधुः' ( पा० ४ । ४ । ९८ ) इति यत् 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति जसः सुरादेशः । वसानाः 'वस आच्छादने' वसते आच्छादयन्ति पात्राणीति वसानाः । या एवंविधा आपस्तासु अन्तर्मध्ये वरुणो देवः सधस्थं सहस्थानं चक्रे कृतवान् । सह स्थीयते यस्मिन् तत् सधस्थम् । किंभूतो वरुणः । अपां शिशुः बालकः 'अपां वा एष शिशुर्भवति यो राजसूयेन यजते' ( ५ । ३ । ५ । १९ ) इति श्रुतेः वरुणो राजसूययाजित्वादपां शिशुः । किंभूतास्वप्सु । पस्त्यासु पस्त्यमिति गृहनामसु पठितम् । गृहरूपासु सर्वेषामाधारत्वात् तथा मातृतमासु अतिशयेन जगन्निर्मात्रीषु ॥ ७ ॥

## अष्टमी ।

क्षत्रस्योल्वमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं वृत्रं वधेत् । दृवासि रुजासि क्षुमासि । पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पात ॥ ८ ॥

**उ०** तार्प्यं परिधापयति । क्षत्रस्योल्वमसि । उल्वं गर्भाधारमुदकम् । पाण्ड्वं परिधापयति । क्षत्रस्य जराय्वसि । जरायुर्गर्भवेष्टनम् । अधिवासं प्रतिमुञ्चति । क्षत्रस्य योनिरसि । गर्भसंभवस्थानं योनिः । उष्णीषं संहृत्य पुरस्तादवगूहति । क्षत्रस्य नाभिरसि । नाभ्या सन्नद्धा गर्भा जायन्त इत्याशयः । अथ धनुरधितनोति । इन्द्रस्य वार्त्रघ्नमसि । इन्द्रस्य संबन्धि यद्वार्त्रघ्नम्, वृत्रो येन हत इति वार्त्रघ्नं धनुरासीत्तत्त्वमसीति शेषः । बाहू विमार्ष्टि । मित्रस्य त्वमसि मित्रस्य संबन्धी त्वमसीति दक्षिणम् । वरुणस्यासि वरुणस्य संबन्धि त्वमसीति सव्यम् । धनुः प्रयच्छति । त्वयायं वृत्रं वधेत् धनुषा अयं यजमानो वृत्रं शत्रुं वधेत् हन्यात् । तिस्र इषूरादत्ते । दृवासि 'दृ विदारणे' दृणातीति दृवा । रुजासि 'रुजो भङ्गे' अस्य रुजा । क्षुमासि । 'क्षमायी विधूनने' अस्य क्षुमा । यजमानाय प्रयच्छति । पातैनं प्राञ्चम् । पात पालयत एनं यजमानं प्रागञ्चनं प्रत्यगञ्चनं तिर्यगञ्चनम् । दिग्भ्यः पातं अन्याभ्योऽपि दिग्भ्यः पालयत ॥ ८ ॥

**म०** 'तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम्' ( का० १५ । ५ । ५ ) 'तार्प्यं परिधापयतीति' ( १५ । ५ । ७ ) । तार्प्यपाण्ड्वाधीवासोष्णीषाणि क्रमेण चतुर्भिर्यजुर्भिः परिधत्ते । तार्प्यं क्षौमं वल्कलं घृताक्तवस्त्रं वा तार्प्यदैवतम् । हे तार्प्य, त्वं क्षत्रस्य यजमानस्य उल्वं गर्भाधारभूतमुदकमसि । यजमानो गर्भस्थानीयः । 'पाण्ड्वं निवस्त इति' ( का० १५ । ५ । १२ ) । रक्तकम्बलं परिधत्ते । पाण्ड्वदैवतम् । क्षत्रस्य गर्भस्थानीयस्य यजमानस्य जरायु गर्भवेष्टनचर्म हे पाण्ड्व, त्वमसि । 'अधीवासं प्रतिमुच्येति' (का०१५ । ५ । १३ ) कञ्चुकं गले बध्नाति । अधीवासदैवतम् । हे अधीवास, त्वं क्षत्रस्य योनिरसि गर्भसंभवस्थानं योनिः । 'उष्णीषꣳ संवेष्ट्य निवीतेऽवगूहते नाभिदेशे परिहरते वेति' ( का० १५ । ५ । १३ ) शिरोवेष्टनं शिरसि संवेष्ट्य तत्प्रान्तौ परिहितवासोनीव्यां गोपयति नाभिदेशे वेष्टयति वा । उष्णीषदैवतम् । हे उष्णीष, त्वं क्षत्रस्य नाभिर्गर्भबन्धनस्थानमसि नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुः । 'इन्द्रस्य वार्त्रघ्नमिति धनुरातनोतीति' (का० १५ । ५ । १७) । अध्वर्युर्धनुरधिज्यं करोति । धनुर्दैवतम् । हे धनुः, त्वमिन्द्रस्य संबन्धि वार्त्रघ्नं वृत्रोऽनेन हन्यत इति वार्त्रघ्नं वृत्रनाशकं धनुरसि । तदातनोमीति शेषः । 'मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टीति' ( का० १५ । ५ । १८ ) । मित्रस्य वरुणस्येति मन्त्राभ्यामस्य धनुषो बाहू प्रान्तौ करेण प्रत्येकं विमार्ष्टि । बाहुदैवते यजुषी । हे दक्षिणकोटे, त्वं मित्रसंबन्धी भवसि । हे वामबाहो, त्वं वरुणसंबन्धी भवसि । 'धनुः प्रयच्छति त्वयायमिति' ( का० १५ । ५ । १९ ) । यजमानाय धनुर्ददाति । धनुर्दैवतम् । हे धनुः, अयं यजमानस्त्वया धनुषा कृत्वा वृत्रं शत्रुं वधेत् हन्यात् । 'दृवासीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति प्रतिमन्त्रमिति' ( का० १५ । ५ । २० ) । दृवासीत्यादिमन्त्रत्रयेण बाणत्रयमादाय पातैनमित्यादिमन्त्रत्रयेण प्रत्येकं यजमानाय ददाति । षड्यजूंषि इषुदेवत्यानि । हे इषो, त्वं दृवासि 'दृ विदारणे' दृणाति शत्रून्विदारयतीति दृवा । हे इषो, त्वं रुजासि 'रुजो भङ्गे' रुजति शत्रून्भनक्ति रुजा । हे इषो, त्वं क्षुमासि 'क्ष्मायी विधूनने' क्ष्मायति शत्रून् कम्पयति क्षुमा । यजमानाय ददाति । हे इषवः, प्राञ्चं प्रागञ्चनं पूर्वदिश्यवस्थितमेनं यजमानं यूयं पात पालयत । प्रत्यञ्चं प्रत्यगञ्चनं पश्चिमदिश्यवस्थितमेनं यजमानं पात । तिर्यञ्चं तिर्यगञ्चनमितस्ततोऽवस्थितमेनं यजमानं पात । दिग्भ्योऽन्याभ्योऽपि दिग्भ्यः सकाशादेनं पात रक्षत ॥ ८ ॥

## नवमी ।

आविर्मर्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवा आवित्तौ मित्रावरुणौ धृतव्रतावावित्तः पूषा विश्ववेदा आवित्ते द्यावापृथिवी विश्वशंभुवावावित्तादितिरुरुशर्मा ॥ ९ ॥

**उ०** अथैनमाविदो वाचयति । आविर्मर्याः । आवेदयन्ति ज्ञापयन्ति यजमानमेताभिर्मन्त्रव्याहृतिभिरेताभ्यो देवताभ्य इत्याविद आविर्मर्याः । मर्या इति मनुष्यनाम । हे मर्याः, आविः प्रकाशः प्रकटोऽयं यजमानो युष्मत्समक्षं कथ्यते । कथिते च श्रुतिः प्रयोजनं वदति । सोस्मै सवमनुमन्यते इत्याविर्मर्या इत्येकवचनादिभिः । सवो जन्म । उत्पत्तिरिति यावत् । आवित्तो अग्निर्गृहपतिः । श्रुत्युक्तैर्विभक्तिव्यत्ययैर्व्याख्यायन्ते । आविदितो ज्ञापितोऽग्नये गृहपतये यजमानः । आवित्त इन्द्रः आवेदित इन्द्राय वृद्धश्रवा वृद्धं श्रवो धनं यस्य स वृद्धश्रवाः । आवित्तौ मित्रावरुणौ । आविदितौ मित्रावरुणाभ्यां धृतव्रताभ्यां व्रतमिति कर्मनाम । धारितकर्मभ्याम् । आवित्तः पूषा आवेदितः पूष्णे । विश्ववेदसे सर्वज्ञाय सर्वधनाय वा । आवित्ते द्यावापृथिवी । आविदितो द्यावापृथिवीभ्यां विश्वशंभूभ्याम् सर्वं सुखेन संभावयित्रीभ्याम् । आवित्तादितिः आविदितोऽदितये । उरुशर्मणे उरु पृथु महत् शर्म शरणं यस्याः सा तथोक्ता । सर्वा एवाविदः श्रुत्या लक्षणया व्याख्याताः । तद्यथा 'आविर्मर्या इत्यनिरुक्तं प्रजापतिर्वा अनि-

रुक्तः' इत्यादिस्तास्तथा व्याख्येयाः। एवं वा मन्त्राणां प्रत्यक्षवृत्तित्वात् ॥ ९ ॥

**म०** 'आविर्मर्या इति वाचयतीति' ( का० १५।५।२१ )। इषुसमर्पणानन्तरमाविर्मर्या इत्यादीन् सप्त मन्त्रानाविस्संज्ञान् यजमानं वाचयति । प्रजापतिर्दैवतम् । मर्या इति मनुष्यनामसु पठितम् । हे मर्या मनुष्या ऋत्विजः, यूयमाविः प्रकटा भवथेति शेषः। सम्यक्कर्मानुतिष्ठतेत्यर्थः। यद्वा हे मर्याः, ऋत्विजः, अयं यजमानः आविः प्रकटो युष्मत्समक्षं कथ्यते इति शेषः। आवित्तो अग्निर्गृहपतिः। श्रुत्युक्तैर्विभक्तिव्यत्ययैर्व्याख्यायते गृहपालकायाग्नयेऽयं यजमान आवित्त आवेदितः ज्ञापितः। प्रथमान्तं पदद्वयं प्रतिमन्त्रं चतुर्थ्यर्थे। वृद्धं श्रवो धनं कीर्तिर्वा यस्य स वृद्धश्रवाः तस्मै इन्द्रायायं यजमान आवित्तः। व्रतमिति कर्मनाम । धृतं व्रतं कर्म याभ्यां तौ धृतव्रतौ ताभ्यां धारितकर्मभ्यां मित्रावरुणाभ्यामावित्तौ। आवित्तः आवेदितः। विश्ववेदसे सर्वज्ञाय पूष्णेऽयमावित्तः । विश्वस्य सर्वस्य शं सुखं भवति याभ्यां ते विश्वशंभुवौ ताभ्यां द्यावापृथिवीभ्यामावित्ते वचनलिङ्गव्यत्ययः आवित्तः। उरु महत् शर्म शरणं सुखं वा यस्याः सा उरुशर्मा तस्यै अदितये आवित्ता आवित्तोऽयं यजमानः। यद्वा यथाश्रुतमेव व्याख्या। गृहपतिरग्निरावित्त आवेदितो यजमानमिति शेषः। एवमग्रेऽपि ॥ ९ ॥

## दशमी ।

अवे॑ष्टा दन्द॒शूका॒ः प्राची॒मारो॑ह गाय॒त्री त्वा॑वतु रथन्त॒रꣳसाम॑ त्रि॒वृत्स्तोमो॑ वस॒न्त ऋ॒तुर्ब्रह्म॒द्रवि॑णम् ॥ १० ॥

**उ०** केशवास्ये लोहायसमाविध्यति। अवेष्टा दन्दशूकाः अवेष्टाः। अवपूर्वो यजिर्नाशने वर्तते । नाशिताः दन्दशूकाः अत्यर्थं दशनशीलाः मृत्यव इहाभिप्रेताः। 'तद्यो मृत्युर्यो वधस्तमेवैतदतिनयति' इति श्रुतेः । सुन्वन्तमाक्रमयन् दिशो वाचयति। प्राचीमारोह प्राचीं दिशमाक्रमस्व। आक्रममाणं च त्वा गायत्री अवतु पालयतु। रथन्तरं च साम त्वामवतु। त्रिवृत्स्तोमः त्वामवतु। वसन्तऋतुः त्वामवतु। ब्रह्मद्रविणं ब्राह्मणजातिर्धनभूता त्वामवतु इति वाक्यशेषः। ब्राह्मणजातेः साधनभावाद्धनत्वमुच्यते ॥ १० ॥

**म०** 'अवेष्टा इति लोहायसमाविध्यति केशवास्ये सदोऽन्तरुपविष्टायेति' ( का० १५।५।२२ )। सदःसमीपोपविष्टस्य दीर्घकेशनरस्य मुखे ताम्रं क्षिपति । मृत्युनाशनं यजुः । अवपूर्वो यजिर्नाशनार्थः । दन्दशूका अत्यर्थं दशनशीला मृत्युहेतवः सर्पसदृशा यज्ञविघ्नकारिणो राक्षसादयोऽवेष्टा नाशिता भवन्त्विति शेषः । 'तद्यो मृत्युर्यो वधस्तमेवैतदतिनयति' (५।४।१।११) इति श्रुतिः 'सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गमिति' ( का० १५।५।२३ )। यजमानं यथालिङ्गं प्रतिमन्त्रं प्रतिदिशं दिश आक्रमयन् वाचयति । पञ्च यजूंषि यजमानदेवत्यानि। हे यजमान, त्वं प्राचीं दिशमारोह आक्रमस्व। तथाविधं त्वा छन्दसां मध्ये गायत्री छन्दोऽवतु रक्षतु। साम्नां मध्ये अभि त्वा शूर नोनुम इत्यस्यामृच्युत्पन्नं रथन्तरं साम। ( छ० सं० १।३।१।५।१ ) त्वां रक्षतु। स्तोमानां मध्ये त्रिवृत्स्तोमोऽवतु। ऋतूनां मध्ये वसन्त ऋतुरवतु। ब्रह्म ब्राह्मणजातिस्त्वदीयं द्रविणं धनं रक्षतु। यद्वा धनरूपा ब्राह्मणजातिस्त्वामवतु। ब्राह्मणादीनां धनसाधनत्वाद्धनत्वमुच्यते। त्रिवृत्स्तोमस्य स्वरूपं सामब्राह्मणे ( २५ तमे ब्रा० २।१) आम्नातम्। 'तिसृभ्यो हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमयोद्यतौ त्रिवृतौ विष्टुतिरिति'। अस्यायमर्थः। उपास्मै गायतेत्यादीनि (ऋ० सं० ६।७।३६) तृचात्मकानि त्रीणि सूक्तानि सन्ति तेषु तिसृभिर्ऋग्भिर्गायेत्। काभिस्तिसृभिः। प्रथमया त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्गाता गायेत्। तथा सति तिसृभिर्गीतं भवति सोऽयं प्रथमपर्यायः । द्वितीये पर्याये सूक्तत्रयगतयोत्तमया गायेत्। अनेन प्रकारेण त्रिवृत्स्तोमसंबन्धिनी विशिष्टा स्तुतिः संपद्यते सेयं स्तुतिरुद्यतीति नाम्ना संपद्यत इत्यर्थः ॥ १० ॥

## एकादशी ।

दक्षि॒णामारो॑ह त्रि॒ष्टुप्त्वा॑वतु बृ॒हत्साम॑ पञ्चद॒श स्तोमो॑ ग्री॒ष्म ऋ॒तुः क्ष॒त्रं द्रवि॑णम् ॥ ११ ॥

**उ०** एवं दक्षिणामारोहेति चतस्रः कण्डिका व्याख्येयाः। छन्दःसामस्तोमऋतुद्रविणप्रभृतिभिर्भेदः चतुर्थ्यां कण्डिकायां फलं द्रविणमिति पठ्यते ॥ ११ ॥

**म०** अथ द्वितीयो मन्त्रः। हे यजमान, त्वं दक्षिणां दिशमाक्रम । त्रिष्टुप् छन्दः । त्वामिद्धि हवामहे इत्यस्यामृच्युत्पन्नं बृहत्साम ( छ० सं० १।३।१।१।५ )। पञ्चदश स्तोमः । ग्रीष्म ऋतुः । द्रविणरूपं क्षत्रं क्षत्रियजातिः एते त्वामवन्तु । क्षत्रं तव द्रविणमवत्विति वा । पञ्चदशस्तोमस्त्वेवमाम्नातः ( २५ तमब्रा० २।४ ) 'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया २ पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिरिति'। पूर्वोक्तस्त्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः। अन्ये तु स्तोमा एकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्रायं क्रमः। प्रथमपर्याये आवृत्तिः पञ्चभिस्तत्रादौ तिसृभिर्ऋग्भिर्गायेत् इतरे द्वे सकृत्सकृद्गायेत्। द्वितीयपर्याये प्रथमां सकृत् मध्यमां तिसृभिः तृतीयां सकृत् । तृतीयपर्याये आद्ये द्वे सकृत् तृतीयां तिसृभिरिति पञ्चदशस्तोमसंबन्धिनी विष्टुतिः पञ्चपञ्चिनीत्यभिधीयत इत्यर्थः ॥ ११ ॥

## द्वादशी ।

प्रतीचीमारोह जगती त्वावतु वैरूपꣳसाम सप्तदश स्तोमो वर्षा ऋतुर्विड्द्रविणम् ॥ १२ ॥

**म०** अथ तृतीयो मन्त्रः । हे यजमान, त्वं प्रतीचीं दिशमारोह । जगती छन्दः त्वामवतु । यद्द्याव इन्द्र ते शतमित्यस्यामृच्युत्पन्नं वैरूपं साम ( छ० सं० १ । ३ । २ । ४ ) । सप्तदशः स्तोमः । वर्षा ऋतुः । विट् वैश्यजातिलक्षणं द्रविणम् । एते त्वामवन्तु । यद्वा वैश्यजातिस्ते द्रविणमवतु । सप्तदशस्तोमस्त्वेवमाम्नातः (२५ तमब्रा० २ । ७) 'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिर्दशसप्ता सप्तदशस्य विष्टुतिरिति' । प्रथमपर्याये प्रथमां त्रिर्गायेत् मध्यमोत्तमे सकृत् । द्वितीयपर्याये प्रथमोत्तमे सकृन्मध्यमां त्रिर्गायेत् । तृतीयपर्याये प्रथमां सकृद्गायेन्मध्यमोत्तमे त्रिरिति सप्तदशस्तोमस्य विविधस्तुतिर्दशसप्तेत्यभिधीयत इत्यर्थः ॥ १२ ॥

## त्रयोदशी ।

उदीचीमारोहानुष्टुप्त्वावतु वैराजꣳसामैकविꣳशस्तोमः शरदृतुः फलं द्रविणम् ॥ १३ ॥

**उ०** तत्र धान्यफलं वा यज्ञफलं वा अभिप्रेतम् ॥१३॥

**म०** अथ चतुर्थो मन्त्रः । हे यजमान, त्वमुदीचीं दिशमारोह । अनुष्टुप् छन्दः । पिबा सोममिन्द्र मन्दतु त्वा एतस्यामृच्युत्पन्नं वैराजं साम ( छ० सं० १ । ५ । १ ) । एकविंशः स्तोमः । शरदृतुः । फलं यज्ञफललक्षणं द्रविणं धनम् । एते त्वामवन्तु । एकविंशस्तोमस्त्वेवमाम्नातः (२५तमब्रा० २ । १४ ) 'सप्तभ्यो हिंकरोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिंकरोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिरिति' । प्रथमपर्याये प्रथममध्यमे त्रिर्गायेदुत्तमां सकृत् । द्वितीयपर्याये प्रथमां सकृद्गायेन्मध्यमोत्तमे त्रिः । तृतीयपर्याये मध्यमां सकृद्गायेत् प्रथमोत्तमे त्रिरित्येकविंशस्तोमस्य विष्टुतिः सप्तसप्तिनीत्युच्यत इत्यर्थः ॥ १३ ॥

## चतुर्दशी ।

ऊर्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणं प्रत्यस्तं नमुचेः शिरः ॥ १४ ॥

**उ०** वर्चो द्रविणमित्यत्रापि तेजो ब्रह्मवर्चसं वा अभिप्रेतम् । सीसं निरस्यति । प्रत्यस्तम् । 'असु क्षेपणे' प्रतिगृह्य क्षिप्तम् । नमुचेरसुरस्य शिरः ॥ १४ ॥

**म०** अथ पञ्चमो मन्त्रः । हे यजमान, ऊर्ध्वां दिशमारोह । पङ्क्तिश्छन्दः । प्रोष्वस्मै पुरोरथमित्येतस्यामृच्युत्पन्नं शाक्वरं साम ( छ० सं० २ । ९ । १ । १४ । १ ) रेवतीर्नः सधमाद इत्येतस्यामृच्युत्पन्नं साम रैवतम् ( छ० सं० १ । २ । २ । १ । ९–२ ) । त्रिणवत्रयस्त्रिंशौ स्तोमौ । हेमन्तशिशिरावृतू । वर्चस्तेजो ब्रह्मवर्चसं वा द्रविणम् । एते त्वामवन्तु । यद्वा वर्चस्तेजोऽभिमानी देवस्ते धनं रक्षतु । त्रिणवः स्तोम एवमाम्नातः ( प० ब्रा० ३ । १ ) 'नवभ्यो हिंकरोति स तिसृभिः स पञ्चभिः स एकया नवभ्यो हिंकरोति स एकया स तिसृभिः स पञ्चभिर्नवभ्यो हिंकरोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणव इति' । प्रथमपर्याये प्रथमां त्रिर्गायेन्मध्यमां पञ्चकृत्वः उत्तमां सकृत् । द्वितीयपर्याये प्रथमां सकृद्गायेन्मध्यमां त्रिरुत्तमां पञ्चकृत्वः । तृतीयपर्याये प्रथमां पञ्चकृत्वो मध्यमां सकृदुत्तमां त्रिर्गायेत् सोऽयं त्रिरावृत्तनवसंख्योपेतत्वात्त्रिणवनामको वज्रसमानः स्तोमः । त्रयस्त्रिंशः स्तोम एवमाम्नातः ( प० ब्रा० ३ । ३ ) 'एकादशभ्यो हिंकरोति स तिसृभिः स सप्तभिः एकैकैकादशभ्यो हिंकरोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिंकरोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिंश इति' । प्रथमपर्याये प्रथमां त्रिर्गायेन्मध्यमां सप्तकृत्व उत्तमां सकृत् । द्वितीयपर्याये प्रथमां सकृन्मध्यमां त्रिरुत्तमां सप्तकृत्वः । तृतीयपर्याये प्रथमां सप्तकृत्वो मध्यमां सकृदुत्तमां त्रिर्गायेत् । सोऽयं त्रयस्त्रिंशः स्तोमः सर्वेषां स्तोमानामन्तः । 'आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तमिति' ( का० १५ । ५ । २४ ) । व्याघ्रचर्मपश्चाद्भागे निहितं सीसमाक्रम्य पादेन क्षिपेत् । असुरदेवत्यम् । नमुचेरसुरस्य शिरो मस्तकं प्रत्यस्तम् । 'असु क्षेपणे' प्रतिगृह्य क्षिप्तं सीसरूपेण ॥ १४ ॥

## पञ्चदशी ।

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् । मृत्योः पाह्योजोऽसि सहोऽस्यमृतमसि ॥ १५ ॥

**उ०** व्याघ्रचर्मारोहति । सोमस्य त्विषिरसि व्याख्यातम् । रुक्ममधःपदं कुरुते । मृत्योः पाहि । हे रुक्म, मृत्योः सकाशान्मां गोपाय । शिरसि च रुक्मं करोति । ओजोसि ओज इति मनोवृत्तिः, जेष्याम्यमुमिति या प्रतिज्ञा सोच्यते । सह इति बाह्यं बलमुच्यते । अमृतमिति प्रकटार्थम् ॥ १५ ॥

**म०** 'व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति' (का० १५ । ५ । २५ ) । अभिषेकार्थं राजानं व्याघ्रचर्मणि स्थापयेत् । चर्मदेवत्यं व्याख्यातम् ( क० ५ ) । 'रुक्ममधः पदं कुरुते मृत्योरिति' ( का० १५ । ५ । २६ ) । पादतले हिरण्यं कुर्यात् । रुक्मदैवतम् । हे सुवर्ण, मृत्योः सकाशान्मां पाहि पालय । 'शिरसि च नवतर्दꣳ शततर्दं वौजोऽसीति' ( का० १५ । ५ । २७ ) । नवच्छिद्रं शतच्छिद्रं वा सौवर्णमण्डलं यजमानशिरसि कुर्यात् । रुक्मदैवतम् । हे हिरण्य, त्वमोजो-

ऽसि असुं जेष्यामीति मनोवृत्तिरोजः तद्रूपं त्वमसि । शारीरं बलं सहस्तद्रूपमसि । अमृतं विनाशरहितं त्वमसि ॥ १५ ॥

## षोडशी ।

हिर॑ण्यरूपा उ॒षसो॑ विरो॒क उ॒भावि॑न्द्रा उ॒दि॑थः सूर्य॑श्च । आरो॑हतं वरुण मित्र॒ गर्तं॒ तत॑श्चक्षाथा॒म-दि॑तिं॒ दिति॑ञ्च मि॒त्रोऽसि॒ वरु॑णोऽसि ॥ १६ ॥

**उ०** बाहू उद्गृह्णाति । हिरण्यरूप उषसो मैत्रावरुणीत्रिष्टुप् यजुरन्ता । मित्रोसि वरुणोसीतियजुः । हे हिरण्यरूपौ मित्रावरुणौ, यौ युवां उषसो विरोके उषसो व्युत्थानकाले । उभावपि हे इन्द्रौ । 'इदि परमैश्वर्ये' परमेश्वरौ उदिथः उद्गच्छथः । सूर्यश्च ययोर्युवयोः कार्यसंपादनाय सूर्य उदेति तौ युवाम् आरोहतम् । हे वरुण, हे मित्र, गर्तं पुरुषम् । 'बाहू वै मित्रावरुणौ पुरुषो गर्तः' इति श्रुतिः । अध्यात्मविषयं व्याचष्टे अधिदैवं तु गर्तो रथः । ततश्चक्षाथामदितिं दितिं च ततोऽनन्तरं पश्यतम् । अदितिम् अदीनम् स्वकर्मविहितानुष्ठातारम्, दितिं दीनं नास्तिकवृत्तिम् । अमुमेवार्थं श्रुतिराह । ततः पश्यतं स्वं चारणं चेत्येवैतदाह । अपरो मन्त्रविकल्पः । मित्रोसि वरुणोसि । बाहू एवोच्येते । मित्रस्त्वमसि वरुणस्त्वमसि ॥ १६ ॥

**म०** 'बाहू उद्गृह्णाति हिरण्यरूपा इति' ( का० १५ । ५ । २८ ) । यजमानबाहू ऊर्ध्वौ करोति । मित्रावरुणदेवत्या त्रिष्टुप् यजुरन्ता मित्रोऽसीति यजुः । हे वरुण शत्रुनिवारक, दक्षिणबाहो, हे मित्र सखिवत्पालक वामबाहो, तौ युवां गर्तं पुरुषमारोहतमारोहणं कुरुतम् । 'बाहू वै मित्रावरुणौ पुरुषो गर्तः' ( ५ । ४ । १ । १५ ) इति श्रुतिरध्यात्मविषयं वाचष्टे । पुरुषारोहणानन्तरमदितिमखण्डितां स्वसेनां दितिं खण्डितां परसेनां चक्षाथां क्रमेणानुग्रहदृष्ट्या समीक्षेथाम् । तौ कौ । यौ युवामुभौ द्वौ उषसो विरोके रात्रेः समाप्तौ उदिथः उदयं कुरुथः । एतेर्लटि मध्यमद्विवचने इथ इति रूपम् । सूर्योदयानन्तरं स्वस्वव्यापारे प्रवर्तेथे इत्यर्थः । सूर्यश्च उदेति ययोर्युवयोः कार्यसंपादनायेत्यर्थः । किंभूतौ युवाम् । हिरण्यरूपौ हिरण्यवद्रूपं ययोस्तौ सुवर्णखचितकटकाद्यलंकारेण हिरण्यवद्भासमानौ । तथा इन्द्रौ सामर्थ्योपेतौ । एवमध्यात्ममर्थः । अधिदैवं त्वयमर्थः । हे वरुण, हे मित्र मित्रावरुणौ देवविशेषौ, युवां गर्तं रथोपरिभागं गर्तसदृशमारोहतम् । परबाणेभ्यो रक्षितुं चर्मकीलकादिभिराच्छादितो रथस्योपरिभागो गर्तसदृशो भवति । रथोऽपि गर्त उच्यते 'गृणातेः स्तुतिकर्मणः' (नि० ३ । ५) इति यास्कोक्तेर्गर्तो रथः । यौ युवामुषसो विरोके उषःकालानन्तरम् उदिथः उद्गच्छथः सूर्यश्चेत्तदा उदेति । किंभूतौ । हिरण्यरूपौ अतितेजस्विनौ । इन्द्रौ परमेश्वरौ । ततो रथारोहणानन्तरम-दितिं दितिं च युवां चक्षाथाम् अदितिमदीनं विहितानुष्ठातारं दितिं दीनं नास्तिकवृत्तं च पश्यतम् । अयं पापी अयं पुण्यवानिति युवां पश्यतमित्यर्थः । अमुमर्थं श्रुतिराह 'ततः पश्यतꣳ स्वं चारणं चेत्येवैतदाहेति' (५ । ४ । १ । १५) । 'मित्रोऽसि वरुणोऽसीति वा' (का० १५ । ५।२९) । अनेन मन्त्रेण वा बाहू उद्गृह्णाति । हे वामबाहो, मित्रोऽसि । हे दक्षिणबाहो, त्वं वरुणोऽसि ॥१६॥

## सप्तदशी ।

सोम॑स्य त्वा द्यु॒म्नेना॒भिषि॑ञ्चाम्य॒ग्नेर्भ्राज॑सा॒ सूर्य॑स्य॒ वर्च॒सेन्द्र॑स्ये॒न्द्रियेण॑ । क्ष॒त्राणां॑ क्ष॒त्रप॑तिरे॒ध्यति॑ दि॒द्यून्पा॑हि ॥ १७ ॥

**उ०** यजमानमभिषिञ्चति । सोमस्य त्वा द्युम्नेन । 'द्युम्नं द्योततेर्यशो वा अन्नं वा' । सोमस्य त्वा द्युम्नेन अभिषिञ्चामि । अग्नेर्भ्राजसा अग्नेर्दीप्त्या । सूर्यस्य वर्चसा सूर्यस्य रोचिषा । इन्द्रस्येन्द्रियेण वीर्येण । श्रुत्वा च सर्वाण्येव वीर्याणि व्याख्यातानि । अभिषिञ्चामीति सर्वशेषः । क्षत्राणां क्षत्रपतिरेधि इति सर्वशेषः । त्वं च एतैरभिषिक्तः सन् क्षत्राणां सर्वेषामधिपतिः एधि भव । अतिदिद्यून्पाहि अतीत्यातिक्रम्य दिद्यून् इषून् पाहि गोपायात्मानम् । 'इषवो वै दिद्यव इषुवधमेवैनमेतदतिनयति' इति श्रुतिः ॥ १७ ॥

**म०** 'स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्वस्तृतीयेनामित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रमभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् क्षत्राणां क्षत्रपतिरेधीति चेममसुष्येति च प्रथमो देवसूवदिति' ( का० १५ । ५ । ३०-३३ ) । अस्यार्थः । रुक्मसहितव्याघ्रचर्मणि प्राङ्मुखमवस्थितं राजानं पुरोहितादयः पुरस्तादवस्थायाभिषिञ्चेयुः । पालाशौदुम्बरन्यग्रोधाश्वत्थानि चतुर्विधान्यभिषेकजलपात्राणि स्थापितानि । तत्र पालाशपात्रेण पुरोहिताध्वर्य्वोरन्यतरः प्रथममभिषिञ्चेत् । इतरे स्वादयः पश्चादवस्थिता अभिषिञ्चेयुः । तानेवाह । स्वो राज्ञो भ्राता द्वितीयेनौदुम्बरपात्रेण मित्रभूतः कश्चित् क्षत्रियस्तृतीयेन वटपात्रेण वैश्यश्चतुर्थेनाश्वत्थपात्रेणाभिषिञ्चति । चतुर्णामभिषेक्तॄणां क्रमेण सोमस्याग्नेः सूर्यस्येन्द्रस्य ते चत्वारो मन्त्राः । अभिषिञ्चामीति पदमग्रिमेषु त्रिषु मन्त्रेष्वनुवर्तते । क्षत्राणामित्यवयवोऽपि प्रथमादिमन्त्रेषु योज्यः । इमममुष्येति मन्त्रं प्रथमः पुरोहितोऽध्वर्युर्वा देवसूहविःष्विव नामग्रहणयुक्तं पठति । प्रथमग्रहणादन्येषामिमममुष्येति मन्त्रशेषो न भवति ब्राह्मणानाꣳ राजेति मन्त्रलिङ्गादिति सूत्रार्थः । चतुर्णां मन्त्राणां यजमानो देवता । हे यजमान, सोमस्य द्युम्नेन चन्द्रस्य यशसा त्वा त्वामभिषिञ्चामि तेनाभिषिक्तः सन् क्षत्राणां क्षत्रपतिरेधि क्षत्रियाणां सर्वेषां मध्ये क्षत्रपतिः क्षत्रियेश्वरः एधि भव । अति दिद्यून् पाहि । 'दो अवखण्डने' द्यन्ति खण्डयन्ति दिद्यवो बाणाः । 'इषवो वै दिद्यव इषुवधमेवैनमेतदतिनयति' ( ५ । ४ । २ । २ ) इति श्रुतेः तानतिक्रम्य शत्रुप्रयुक्तानिष्वादीनपसार्य इमं यजमानं हे सोम, त्वं पाहि पालय ॥ १७ ॥

## अष्टादशी ।

इमं देवा असपत्नꣳसुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳराजा ॥ १८ ॥

उ० इमं देवाः व्याख्यातम् ॥ १८ ॥

म० इमं देवाः । व्याख्यातापि व्याख्यायते । हे देवाः सोमादयः, दशरथस्य पुत्रं कौशल्यायाः पुत्रं कोशलायै विशे प्रजायै तिष्ठन्तमिमं राममसपत्नं शत्रुरहितं कृत्वा महते क्षत्राय महते ज्येष्ठत्वाय महते जानराज्यायेन्द्रस्यैश्वर्याय यूयं सुवध्वं प्रेरयध्वम् । हे अमी कोशलाः, एष रामो वो युष्माकं राजा अस्माकं ब्राह्मणानां तु सोमो राजा । एतावन्तं मन्त्रं पठित्वा पुरोहितोऽध्वर्युर्वाभिषिञ्चेत् । राजभ्रातुर्मन्त्रमाह । अग्नेर्भ्राजसाभिषिञ्चामि क्षत्राणामित्यादि इन्द्रस्येन्द्रियायेत्यन्तो मन्त्रः । हे यजमान, अग्नेर्वैश्वानरस्य भ्राजसा तेजसा त्वामभिषिञ्चामि । क्षत्राणामित्यादेः पूर्ववद्व्याख्या । राजमित्रमन्त्रमाह । सूर्यस्य वर्चसाभिषिञ्चामि । क्षत्राणामित्यादि पूर्ववत् । हे यजमान, सूर्यस्य तेजसा त्वामभिषिञ्चामि । अन्यत्पूर्ववत् । वैश्यमन्त्रमाह । इन्द्रस्येन्द्रियेणाभिषिञ्चामि क्षत्राणामित्यादि पूर्ववत् । हे यजमान, इन्द्रस्य वीर्येण त्वामभिषिञ्चामि क्षत्राणामित्यादि पूर्ववत् । श्रुत्वा तु युम्नादिशब्दैर्वीर्याण्येव व्याख्यातानि ॥ १८ ॥

## एकोनविंशी ।

प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः । ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनु रीयमाणाः। विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि ॥ १९ ॥

उ० कण्डूयनाभिषेकेण कणान्प्रलिम्पति प्रपर्वतस्य । अब्देवत्या त्रिष्टुप् । या एता आहुतिपरिणामभूता आपः ताः पर्वतस्य पर्ववतोऽग्नेः पार्थिवस्य । स हि पर्ववान् पौर्णमास्यमावस्याचातुर्मास्यादिभिः पर्वभिः । वृषभस्य वर्षितुः पृष्ठात् । उत्थायेति शेषः । नावः । 'णू स्तुतौ' । नूयन्ते स्तूयन्ते स्तोत्रशस्त्रहोममन्त्रैरिति नाव आहुतिपरिणामभूता आपः चरन्ति गच्छन्ति आदित्यमण्डलं प्रति । स्वसिचः स्वयमेव सिञ्चन्तीति स्वसिचः । इयानाः । 'इण् गतौ' । 'ताच्छील्यवयोवचन' इत्यादिना चानश् । गमनशीलाः । ता हि आदित्यमण्डलं प्राप्य मध्यस्थानमागच्छन्ति । मध्यस्थानात्पृथिवीम् । तथा चोक्तम् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति । ता आववृत्रन्नधरागुदक्ताः । आववृत्रन् आदित्यमण्डलं प्राप्य ता एवावर्तन्ते । अधराक् अधोञ्चनाः । उदक्ताः । 'उन्दी क्लेदने' क्विप् । उन्दनेन क्लेदनेन स्तम्भनेनाभ्यक्ता आपः । अहिंबुध्न्यम् । अहिमेव बुध्नमन्तरिक्षं तत्र भवो बुध्न्यो मेघस्तं बुध्न्यं मेघं मध्यस्थानम् । अनुरीयमाणाः । रीयतिर्गत्यर्थः । अनुप्रविश्य मेघच्छिद्रैर्गच्छन्त्यो भूमिं प्राप्नुवन्तीति शेषः । अथवा आदित्यः पर्वतशब्देनोच्यते । या एताः पर्वतस्यादित्यस्य वृषभस्य पृष्ठात् इयनाः निर्गच्छन्त्यः नावः नाव्या आपः । प्रचरन्ति सर्वतो गच्छन्ति स्वयं सिक्ताः । नाव्या आदित्यस्य या उपरिष्टादापस्ता उच्यन्ते । तथाच श्रुतिः 'नाव्या उ एव यजुष्मत्य इष्टका' इत्युपक्रम्य 'षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्ति' इत्याह । ताः प्रावृट्काले आवर्तन्ते । अधराञ्चः उदक्ता व्यक्ताः । अहिं मेघं बुध्न्यम् अनुरीयमाणाः अनुप्रविश्य शुषिरैरनुगच्छन्त्यः । अथवा याः पर्वतस्य हिमवद्विन्ध्याद्रेः वृषभस्य वर्षितुः सेक्तुः पृष्ठात् इयानाः नावश्चरन्ति । नावा तार्या महानद्यः प्रचरन्ति स्वयं सिक्ताः, ता एव राजसूययाजिनोर्थाय आवर्तन्ते गृह्यमाणाः अभिषेकपात्रेषु उदक्ता उत्क्षिप्ताः । उत्पूर्वस्याञ्चतेरेतद्रूपम् । अधराक् अधराञ्चः अधोञ्चनाः । अहिम् अहन्तारं यजमानं शत्रूणाम् बुध्नम् बुध्नशब्देन मूलमुच्यते तत्रभवं यजमानं बुध्न्यं प्रधानमित्यर्थः । अनुरीयमाणाः यजमानं प्रत्यनुसिच्यमानाः । ता आववृत्रन्नित्यादिसंबन्धनीयम् । चर्मणि त्रिर्विक्रमयति यजमानम् । विष्णोर्विक्रमणम् । विष्णोः यज्ञस्य विक्रमणं यच्च विक्रान्तं यच्च क्रान्तं तत्सर्वं त्वमसि इति योजना ॥ १९ ॥

म० 'कण्डूयन्याभिषेकेण प्रतिलिम्पते प्र पर्वतस्येति' ( का० १५ । ६ । ८ ) । यजमानः कृष्णविषाणया कृत्वाभिषेकोदकेन स्वाङ्गलग्नेन स्वाङ्गं लिम्पति । अब्देवत्या त्रिष्टुप् । प्रेत्युपसर्गश्चरन्तीति पदेन संबध्यते । नावः प्रचरन्ति । नूयन्ते स्तूयन्ते स्तोत्रशस्त्रमन्त्रैरिति नावः । यद्वा नुदन्ति प्रेरयन्ति फलप्राप्त्यै ता नावः । आहुतिपरिणामभूता आपः प्रचरन्ति गच्छन्ति आदित्यमण्डलं प्रति । 'ग्लानुदिभ्यां डौः' ( उ० २ । ६४ ) इति नुदतेर्डौप्रत्ययः । किं कृत्वा । वृषभस्य वर्षितुरग्नेः पृष्ठात् पृष्ठप्रदेशात् उत्थायेति शेषः । किंभूतस्य वृषभस्य । पर्वतस्य पर्वाणि पौर्णमास्यमावास्याचातुर्मास्यादीनि विद्यन्ते यस्य स पर्वतस्तस्य 'तप्पर्वमरुद्भ्यां' इति तप्रत्ययः । किंभूता नावः । स्वसिचः स्वेनैवात्मनैव सिञ्चन्ति विश्वमभिषिञ्चन्ति स्वसिचः । तथा इयानाः यन्तीत्येवंशीला इयानाः । एतेः 'ताच्छील्यवयोवचनशक्तिषु चानश्' ( पा० ३ । २ । १२९ ) इति चानश्प्रत्ययः चित्वादन्तोदात्तं पदम् । गमनशीलाः ता हि आदित्यमण्डलं प्राप्य मध्यस्थानमागच्छन्ति मध्यस्थानात्पृथिवीम् । तदुक्तम् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ( म० ३ । ७६ ) इति । ता आहुतिपरिणामभूता आप आदित्यमण्डलं प्राप्य अधराक् आववृत्रन् अधस्तादावर्तन्ते । वृतेर्णिजन्ताल्लुङि रगागमश्छान्दसः । किंभूतास्ताः । उदक्ताः ऊर्ध्वमक्ताः । 'अञ्चु गति-

पूजनयोः' । ऊर्ध्वं गताः सत्यः अहिं मेघमनु रीयमाणाः मेघमनुसरन्त्यः। रियतिर्गत्यर्थः । किंभूतमहिम्। बुध्न्यं बुध्नमन्तरिक्षं तत्र भवो बुध्न्यः अन्तरिक्षे वर्तमानम् । यद्वायमर्थः । पर्वतशब्देनादित्य उच्यते वृषभस्य वर्षितुः पर्वतस्यादित्यस्य पृष्ठादियानाः निर्गच्छन्त्यो नावः स्तुत्या आपः प्रचरन्ति सर्वतो गच्छन्ति। किंभूताः स्वसिचः स्वयं सेक्त्र्यः आदित्योपरिष्टादापो नाव्या उच्यन्ते । तथा च श्रुतिः 'नाव्या आप एव यजुष्मत्य इष्टकाः' ( १० । ५ । ६ । १४ ) इत्युपक्रम्य 'षष्टिश्च वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्तीत्याह' । ता उदक्ता व्यक्ताः सत्यः बुध्न्यमन्तरिक्षस्थमहिं मेघमनुरीयमाणा अनुप्रविश्य गच्छन्त्यः सत्यः प्रावृट्काले अधराक् अधस्ताद्भूमिं प्रति आववृत्रन् आवर्तन्ते आगच्छन्ति। यद्वायमर्थ ऋचोऽस्याः। वृषभस्य वर्षणसमर्थस्य पर्वतस्य हिमवद्विन्ध्यादेः पृष्ठादियाना गच्छन्त्यो वहन्त्यो नावो नौतार्या महानद्यो गङ्गाद्याः प्रचरन्ति स्वसिचः स्वमात्मीयं यजमानक्षेत्रं सिञ्चन्ति ताः ता एवं नावोऽधराक् अधस्तात् आववृत्रन् राजसूययाजिनोऽर्था वर्तन्ते । किंभूताः उदक्ता अभिषेकपात्रेषु उत्क्षिप्ताः प्रक्षिप्ताः । तथा बुध्न्यं बुध्नशब्देन मूलमुच्यते तत्र भवं बुध्न्यं प्रधानमित्यर्थः । अहिमहन्तारं शत्रूणां यजमानमनुरीयमाणाः यजमानं प्रति सिच्यमानाः । 'चर्मणि त्रिर्विक्रमयति विष्णोरिति प्रतिमन्त्रमिति' ( का० १५ । ६ । ९ ) । अध्वर्युर्यजमानेन व्याघ्रचर्मणि त्रिभिर्मन्त्रैस्त्रिवारं पादप्रक्षेपं कारयेत् । त्रीणि यजूंषि यजमानदेवत्यानि । हे मदीय प्रथमप्रक्रम, त्वं विष्णोर्व्यापनशीलस्य यज्ञपुरुषस्य जगदीश्वरस्य त्रिविक्रमावतारस्य विक्रमणं प्रथमपादप्रक्षेपेण जितो भूलोकोऽसि । हे द्वितीयप्रक्रम, त्वं विष्णोः विक्रान्तं द्वितीयपादप्रक्षेपेण जितमन्तरिक्षमसि । हे तृतीयप्रक्रम, त्वं विष्णोः क्रान्तं तृतीयपादप्रक्षेपेण जितं त्रिविष्टपमसि । इदं मन्त्रत्रयं लोकत्रयजये हेतुभूतं तित्तिरिराह 'विष्णुक्रमान्क्रमते विष्णुरेव भूत्वेमांल्लोकानभिजयतीति' । 'इमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तम्' ( ५ । ४ । २ । ६ ) इति श्रुतेः ॥ १९ ॥

## विंशी ।

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितासावस्य पिता वयꣳस्याम पतयो रयीणाꣳस्वाहा । रुद्र यत्ते क्रिवि परं नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहा ॥ २० ॥

उ० जुहोति प्रजापतेन । प्राजापत्या त्रिष्टुप् यजुर्मध्या । अयममुष्य पितासावस्य पितेति यजुः । हे प्रजापते, नत्वदेतान्यन्यो विश्वरूपाणि परिता बभूव। त्वत्तोन्यो देवताविशेषः एतानि सर्वाणि नानाजातीयानि वर्तमानकालसंबन्धीनि रूपाणि परि समन्ततः । ता तानि च यान्युत्पन्नानि उत्पत्स्यन्ते वा । बभूव । अत्र नकारः संबध्यते । न बभूव न भवति आत्मरूपत्वेन यस्मात् अतो ब्रवीमि यत्कामास्ते जुहुमस्तन्नो अस्तु येन कामेन ते तव जुहुमः तत्कामरूपमस्माकमस्तु । यजुः कथंभूतम् । व्याख्यायते । अयममुष्य पिता अयं पुत्रः अमुष्य यजमानस्य पिता । असावस्य पिता असौ यजमानः अस्य पुत्रस्य पिता । सर्वथा सपुत्रा वयमेव स्याम भवेम । पतयो रयीणां धनानाम् । स्वाहा सुहुतमस्तु । जुहोति । रुद्र यत्ते हे भगवन् रुद्र,यत् ते तव क्रिवि 'क्रिवि हिंसाकरणयोः' कर्तृ हिंसितृ वा परमुत्कृष्टं नाम नमनम् । एवं रुद्रं संबोध्य अथेदानीं हव्यमाह । तस्मिन् नाम्नि हुतम् असि अमेष्टमसि । अमाशब्दो गृहवचनः । गृहे इष्टमसि स्वाहा ॥ २० ॥

म० 'शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापत इति' ( का० १५ । ६ । ११ ) । ततः सदसः शालायामागत्य पुत्रेऽन्वारब्धे शालाद्वार्येऽग्नौ जुहोति । प्रजापतिदेवत्या त्रिष्टुप् यजुर्मध्या तृतीयचतुर्थपादमध्येऽयममुष्येति यजुर्युक्ता । हे प्रजापते, त्वत्त्वत्तः अन्यो देवताविशेषः तानि एतानि विश्वा विश्वानि सर्वाणि रूपाणि नानाजातीयानि वर्तमानभूतभविष्यत्कालविषयाणि न परिबभूव परिभवितुं समर्थो नाभूत् । परिभवः सृष्टेरप्युपलक्षणम्। त्वदन्यो देव एतानि भूतानि स्रष्टुं संहर्तुं चाप्यशक्त इत्यर्थः । अतो वयं यत्कामास्ते जुहुमः यः कामो येषां ते यत्कामाः येन कामेन त्वां जुहुमः तत्कामरूपं फलं नोऽस्माकमस्तु । यजुर्व्याख्यायते । अयममुष्य पितेति पुत्रं पित्रीकृत्य तयोर्नाम गृह्णाति। अयं रामोऽमुष्य दशरथस्य पिता। असावस्य पितेति यथायथमेव नामग्रहः । यथा असौ दशरथोऽस्य रामस्य पितेति । सर्वथा सपुत्रा वयं रयीणां धनानां पतयः स्याम भवेम । 'आग्नीध्रीये पालाशेन शेषान् जुहोति रुद्र यत्त इत्युत्तरार्ध इति' । 'पालाशेनाभिषेकपात्रेणाभिषेकोदकशेषानाग्नीध्रीयाग्नेरुत्तरभागे जुहोति' ( का० १५ । ६ । १२ ) । रुद्रदेवत्यम् । हे रुद्र, यत्ते तव क्रिवि कर्तृ हिंसितृ वा परमुत्कृष्टं नामास्ति । 'क्रिवि हिंसाकरणयोः' इप्रत्ययः । एवं रुद्रं संबोध्य होमद्रव्यमाह । हे हविः, तस्मिन् रुद्रनाम्नि त्वं हुतमसि अमेष्टं चासि । अमाशब्दो गृहवाची । मदीये गृहे इष्टं दत्तमसि स्वाहा सुहुतमस्तु ॥ २० ॥

## एकविंशी ।

इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि । अव्यथायै त्वा स्वधायै त्वारिष्टो अर्जुनो मरुतां प्रसवेन जयापाम मनसा समिन्द्रियेण ॥ २१ ॥

उ० रथमुपावहरति । इन्द्रस्य वज्रोसि । व्याख्यातम् ।

तं युनक्ति । मित्रावरुणयोर्देवयोः त्वा त्वां प्रशास्त्रोः । प्रशिषा प्रशासनेन युनज्मि तमातिष्ठति । अव्यथायै । 'व्यथ भयचलनयोः' । अभयाय अचलनाय वा त्वामधितिष्ठामि । स्वधायै अन्नरसाय च त्वामधितिष्ठामीति शेषः । अरिष्टः अनुपहिंसितः । अर्जुनः अर्जुनशीलः । 'अर्जुनो ह वै नामेन्द्रः' इति श्रुतिः । 'दक्षिणधुर्यं प्राजति' । मरुतां प्रसवेन जय मरुतां संबन्धिन्यामभ्यनुज्ञायां वर्तमानः सन् शत्रून् जय । मध्ये गवामुद्यच्छति । अपाम मनसा व्याप्तवन्तो मनसा वयम् । तदुपरि क्रान्तभर्गः धनुरात्न्या गामुपस्पृशति । समिन्द्रियेण संगताः स्म वयमिन्द्रियेण वीर्येण ॥ २१ ॥

**म०** 'वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिरिति' (का० १५ । ६ । १५)। वाजपेये इव रथवाहणाद्रथमिन्द्रस्य वज्रोऽसीति मन्त्रेण भूमाववतार्य मित्रावरुणयोरिति मन्त्रेण चतुर्भिरश्वैर्वाजपेयवदेव युनक्ति । प्रत्यश्वं मन्त्रः इन्द्रस्य वज्रोऽसीत्येव मन्त्रो न वाजपेयसंबन्धी सर्वः । तावन्मात्रस्यैवात्र पाठात्पूर्ववदिति धूर्गृहीतं दक्षिणश्रोणिदेशे वेद्यामानीय युनक्ति पूर्वं दक्षिणं तत उत्तरं ततो दक्षिणाप्रष्टिं ततः सव्याप्रष्टिम् । अनिर्देशात्त्रयाणां योजने प्राप्ते चतुर्भिरित्युक्तमिति सूत्रार्थः । रथदेवत्यम् । हे रथ, त्वमिन्द्रस्य वज्रोऽसि । युनक्ति । रथदेवत्यम् । प्रशास्त्रोः मित्रावरुणयोः देवयोः प्रशिषा प्रशासनेन हे रथ, त्वां युनज्मि योजयामि । 'अव्यथायै त्वेति सुन्वन्नारोहतीति' ( का० १५ । ६ । १७) यजमानश्चात्वालदेशस्थः रथमारोहति । रथदेवत्यम्। अरिष्टोऽनुपहिंसितः अर्जुनोऽर्जुनतुल्य इन्द्र इत्यर्थः । अर्जुनो ह वै नामेन्द्रः' ( ५ । ४ । ३ । ७ ) इति श्रुतेः । एवंभूतोऽहं हे रथ, त्वा त्वामव्यथायै । 'व्यथ भयचलनयोः' । अभयाय अचलनाय वा । स्वधायै अन्नरसाय च त्वामधितिष्ठामि । 'मरुतामिति दक्षिणधुर्यं प्राजतीति' ( का० १५ । ६ । १८ )। यजमानेन सहारूढो यन्ता दक्षिणाश्वं कशया प्रेरयेत् । धुर्यदेवत्यम् । हे धुर्य, मरुतां देवानां प्रसवेनाज्ञया त्वं जय शत्रूनिति शेषः । 'गवां मध्ये स्थापयत्यपामेति' ( का० १५ । ६ । १९ )। पूर्वमेवाहवनीयोत्तरतः स्थापितानां गवां मध्ये तं रथं स्थापयेत् । यजमानदेवत्यम् । वयं मनसा सह अपाम प्राप्तवन्तो यदुपक्रान्तं तत्कर्म 'धनुरात्न्र्योपस्पृशति गां यजमानः समिन्द्रियेणेति' ( का० १५ । ६ । २० )। धनुःकोट्या गां स्पृशेत् । यजमानदेवत्यम् । वयमिन्द्रियेण वीर्येण सङ्गताः स्मः ॥ २१ ॥

## द्वाविंशी ।

मा त इन्द्र ते वयं तुराषाडयुक्तासो अब्रह्मता विदसाम । तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वान् ॥ २२ ॥



**उ०** अग्रेण शालामुद्यच्छति । मा त इन्द्र ऐन्द्री त्रिष्टुप् । अत्र द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । तिष्ठा रथमधि यं वज्रहस्त । लडर्थे लोट् । यं रथमधितिष्ठसि हे वज्रहस्त, यस्मिंश्चावस्थितः आरश्मीन्देव यमसे आयमसि आयच्छसि रश्मीन्प्रग्रहान् हे देव, स्वश्वान् शोभनाश्वान् । इदानीं प्रथमोऽर्धर्चो व्याख्यायते । व्यवहितपदसंबन्धः । प्रायः तस्मिन्रथे ते तव स्वभूते वयम् अयुक्तासः अयुक्ता एव अयुक्तासः । 'आज्जसेरसुक्' । मा विदसाम । 'दसु उपक्षये' कर्मणि लकारः । मा विदस्येमहि मा उपक्षीयेमहि । हे इन्द्र, तुराषाट् तूर्णं सहत इति तुराषाट् तस्य संबोधनं हे तुराषाट्, त इति द्वे पदे अत्रानुदात्ते तयोरेकोऽनर्थकः । माविदस्येमहीत्युक्तम् तदुपमया दर्शयितुमाह । अब्रह्मता । लुप्तोपममेतत् । अब्रह्म ते तव । ब्रह्मविज्ञानानन्दस्वभावमविनश्वरं तस्य भावो ब्रह्मता न ब्रह्मता अब्रह्मता । यथा ब्रह्मभावादन्यद्विदस्येत् एवं मा विदस्येमहीत्युपमार्थः ॥ २२ ॥

**म०** 'तावद्भूयो वा गोस्वामिने दत्त्वा पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा त इति' ( का० १५ । ६ । २२ )। स्थापितगवां पतये स्वभ्रात्रे तावत् शतमधिकं वान्यद्दत्त्वा यूपात् पूर्वदिशि परीत्यान्तःपात्यदेशे रथं स्थापयेत् । इन्द्रदेवत्या त्रिष्टुप् संवरणदृष्टा । हे वज्रहस्त, वज्रं हस्ते यस्य तत्संबुद्धिः हे देव दीप्यमान, त्वं यं रथमधितिष्ठ लडर्थे लोट् । अधितिष्ठसि । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति दीर्घः । यस्य च रश्मीन्प्रग्रहानायमसे आयच्छसि । किंभूतान् रश्मीन् स्वश्वान् । शोभना अश्वा येषु तान् । हे तुराषाट्, तूर्णं सहते शत्रूनभिभवतीति तुराषाट् हे इन्द्र ऐश्वर्ययुक्त, ते त्वदीया वयं ते तव तस्मिन् रथे आयुक्ताः तस्माद्भिन्नाः सन्तो मा विदसाम 'दसु उपक्षये' विविधमुपक्षीणा मा भवाम । तत्र दृष्टान्तः । अब्रह्मतां लुप्तोपमानम् । अब्रह्मतेव ब्रह्म विज्ञानानन्दस्वभावमनश्वरम् तस्य भावो ब्रह्मता न ब्रह्मता अब्रह्मता यथा ब्रह्मभावादन्यद्वस्तु विदस्येदेवं वयं मा विदस्येमहीत्यर्थः ॥ २२ ॥

## त्रयोविंशी ।

अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा, मरुतामोजसे स्वाहेन्द्रस्येन्द्रियाय स्वाहा । पृथिवि मातर्मा मा हिꣳसीर्मो अहं त्वाम् ॥ २३ ॥

**उ०** चत्वारि रथविमोचनीयानि जुहोति । अग्नये गृहपतये स्वाहा सोमाय वनस्पतिरूपाय । मरुतां संबन्धिने ओजसे । इन्द्रस्य संबन्धिने इन्द्रियाय वीर्याय । भूमिमवेक्षते । पृथिविमातः, मा हिंसीर्माम् । मो अहं त्वाम् । मो च त्वाम् अहं हिंसिषम् ॥ २३ ॥

**म०** 'अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि

जुहोति प्रतिमन्त्रमिति' ( का० १५ । ६ । २३ ) । रथविमोचनीयसंज्ञाश्चतस्र आहुतीर्जुहोति । चत्वारि यजूंषि लिङ्गोक्तदेवत्यानि । गृहाश्रमपालकायाग्नये स्वाहा सुहुतमस्तु । वनस्पतिरूपिणे सोमाय हविर्दत्तमस्तु । इन्द्रस्येन्द्रसंबन्धिने इन्द्रियाय वीर्याय स्वाहा । मरुतां संबन्धिने ओजसे बलाय हविर्दत्तमस्तु । 'भूमिमवेक्षते पृथिवि मातरिति' ( का० १५ । ६ । २४ ) । रथस्थ एव यजमानो भूमिं पश्येत् । भूमिदेवत्यम् । हे मातर्जगन्निर्मात्रि, हे पृथिवि भूमे, त्वं मा मां मा हिंसीः हिंसां मा कार्षीः । अहमपि त्वां पृथिवीं मो मा उ हिंसिषम् ॥२३॥

## चतुर्विंशी ।

हृ॒ꣳसः शु॑चि॒षद्वसु॑रन्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् । नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॒तजा अ॑द्रि॒जा ऋ॒तं बृ॒हत् ॥ २४ ॥

उ० अवतरति । हꣳसः शुचिषत् ।'सप्रपञ्चपरब्रह्माभिधायिनी अतिच्छन्दा अतिजगती'इति श्रुतेः। हंसः शुचिषत् हन्त्यध्वानमिति हंसो भगवानादित्यः शुचिषत् । शुचौ दीप्तौ सीदतीति शुचिषत् । य आदित्यरूपेण शुचिषत् यश्च वसुर्वासयिता वायुरूपेणान्तरिक्षे सीदति । यश्च होता आह्वाता अग्निरूपेण वेदौ सीदति । यश्च अतिथिरूपेण दुरोणे गृहे सीदति। यश्च नृषु मनुष्येषु प्राणभावेन सीदति । यश्च वरेषूत्कृष्टेषु सीदति । यश्च ऋते सत्ये सीदति । यश्च व्योमसु अन्तरिक्षेषु सर्वेषु सीदति । एवं सर्वत्र स्थितिभावेन स्तुत्वा अथेदानीं सर्वत्रोत्पत्तिद्वारेण स्तौति । यश्च अब्जा अप्सु जायत इत्यब्जाः । यश्च गवि पृथिव्यां चतुर्विधभूतग्रामरूपेण जायते । यश्च ऋते सत्ये जायते । यश्च अद्रौ पाषाणे अग्निरूपेण जायते मेघोप्यद्रिरुच्यते । मेघे वा उदकरूपेण जायते । तत् ऋतम् । 'ऋ गतौ' । सर्वतो गतं परब्रह्म । बृहत् परिवृद्धम् । अनन्तमपर्यन्तम् । एवं परब्रह्मवादिनोऽस्य मन्त्रस्य तत्परब्रह्मप्रत्यवतरामीति वाक्यशेषः ॥ २४ ॥

म० 'अवरोहति हꣳसः शुचिषदिति' ( का० १५ । ६ । २५ ) । यजमानो रथादवरोहति । सप्रपञ्चपरब्रह्माभिधायिनी सूर्यदेवत्यातिजगती वामदेवदृष्टा । हन्त्यहंकारमिति हंसो भगवानादित्य एवंविधः त्वं प्रत्यवतरामीति वाक्यशेषः । किंभूतो हंसः । शुचिषत् शुचौ दीप्तौ सीदतीति शुचिषत् आदित्यरूपेण । तथा वसुर्वासयिता नराणां प्रवर्तकः अन्तरिक्षे सीदतीत्यन्तरिक्षसत् वायुरूपेण । होता आह्वाता देवानाम् । वेदौ सीदतीति वेदिषत् अग्निरूपेण । अतिथिः सर्वेषां पूज्यः । दुरोणे यज्ञगृहे सीदतीति दुरोणसत् आहवनीयादिरूपेण । नृषु मनुष्येषु प्राणभावेन सीदतीति नृषत् । वरेषु उत्कृष्टेषु स्थानेषु सीदति वरसत् । ऋते यज्ञे सीदतीति ऋतसत् । व्योम्नि आकाशे मण्डलरूपेण सीदतीति व्योमसत् । एवं सर्वत्र स्थितत्वेन स्तुत्वा सर्वत्रोत्पत्तिद्वारेण स्तौति । यः अब्जाः अप्सु उदकेषु जायते मत्स्यादिरूपेणेत्यब्जाः । गवि पृथिव्यां जायते चतुर्विधभूतग्रामरूपेणेति गोजाः । ऋते सत्ये जायते ऋतजाः । अद्रौ पाषाणे अग्निरूपेण जायत इत्यद्रिजाः । अद्रिर्मेघो वा अद्रौ मेघे जलरूपेण जायत इति वा । ऋतम् 'ऋ गतौ' सर्वत्र गतम् । बृहत् महत्परिवृद्धमपर्यन्तं परब्रह्मरूपो यो हंसस्तं प्रति रथादवतरामीति भावः । यद्वा हंसशब्देन रथ उच्यते । हन्ति पृथिवीमिति हंसः रथः । बृहत् महत् प्रौढमृतं यज्ञं संपादयत्विति शेषः । किंभूतो हंसः । शुचिषत् शुचौ देवयजने रथवाहने वा सीदतीति । वसुः स्वस्योपरि यजमानं वासयतीति । अन्तरिक्षसत् वृक्षगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीति । होता होतृसमानः । तदेव कथमित्यत आह । वेदिषत् वेद्यां सीदतीति । अतिथिः अतिथिवत्पूज्यः । दुरोणसत् दुरोणे यज्ञगृहे सीदतीति । नृषत् नृषु वाहकत्वेन सीदतीति । वरसत् वरे श्रेष्ठे राजगृहे सीदतीति । ऋतसत् ऋते यज्ञे, वाजपेयादौ सीदतीति व्योमसत् । सूर्यं वोढुं व्योमन्याकाशे सीदतीति । अब्जाः 'अप्सुयोनिर्वा अश्व' इति श्रुतेरब्ज्यो जातैरश्वैरुपेतत्वादब्जाः । गोजाः गोशब्दवाच्याद्गव्राज्जायत इति गोजाः । 'इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत्तस्य स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्' इति तैत्तिरीयश्रुतेः । ऋतजाः ऋतं यज्ञमुद्दिश्य जातत्वादृतजाः । अद्रिजाः अद्रिभ्यः पाषाणसदृशकाष्ठेभ्यो जातत्वाददिजाः ॥ २४ ॥

## पञ्चविंशी ।

इ॒यद॒स्यायु॑र॒स्यायु॒र्मयि॑ धेहि॒ युङ्ङ॑सि॒ वर्चो॑ऽसि॒ वर्चो॒ मयि॑ धे॒ह्यूर्ग॒स्यूर्जं॒ मयि॑ धेहि । इन्द्र॑स्य वां वी॒र्य॒कृतो॑ बा॒हू अ॒भ्युपाव॑हरामि ॥ २५ ॥

उ० उपस्पृशति शतमानौ इयदसि । इयदिति परिमाणवचनोयं शब्दः । शतमानमसि आयुरसि । 'आयुर्हिरण्यम्' इतिश्रुतिः । आयुर्मयि धेहि । यो हि यदात्मको भवति स तद्दातुमुत्सहते । यस्माच्छतमानं हिरण्यं त्वमसि तस्मात् शताब्दपरिमाणमायुर्मयि धेहि । युङ्ङसि युनक्ति यज्ञं संभारनिवापेन दक्षिणादानेन वेति युङ् । वर्चोसि । वर्चस्तेजः । यस्मात्त्वं वर्चोसि अतोऽस्माभिः प्रार्थ्यसे । वर्चो मयि धेहि । औदुम्बरीं शाखामुपस्पृशति । ऊर्गस्यूर्जं मयि धेहि । ऊर्जमन्नमुच्यते । अवहरति बाहू । इन्द्रस्य वाम् । यौ इन्द्रस्य यजमानस्य वां युवां वीर्यकृतो वीर्यकारिणः संबन्धिनौ बाहू तौ अभ्युपावहरामि मैत्रावारुणीपयस्यांप्रति ॥ २५ ॥

म० 'उपस्पृशति शतमानावियदसीति' ( का० १५ । ६ । २९ ) । शालादक्षिणभागे स्थापितस्य रथवाहनस्य दक्षिणचक्रे बद्धौ शतमानौ शतरक्तिकानिर्मितौ सौवर्णौ मणी यजमानः स्पृशति । द्वादशाक्षरे यजुषी शतमानदेवत्ये । हे रुक्म, त्वमियदसि एतावत्परिमाणं शतरक्तिकापरिमितमसि आयुरसि जीवनमसि तस्मादायुः शताब्दपरिमितं मयि धेहि । यो हि

यदात्मकः स तद्दातुमुत्सहते । यतस्त्वं शतमानमसि ततः शताब्दपरिमितमायुर्मयि रोपय । युङ्ङसि युनक्ति यज्ञं संभारनिचयेन दक्षिणादानेन वेति युङ् वर्चस्तेजस्वी भवसि । अतो मे मम वर्चः तेजो धेहि । 'तौ ब्रह्मणे दत्त्वौर्गसीति शाखामुपस्पृशतीति' ( का० १५ । ६ । ३० ) । तौ शतमानौ ब्रह्मणे दत्त्वा पूर्वोक्तरथवाहने एवोपगूहितारमौदुम्बरीं शाखामुपस्पृशेत् । शाखादेवत्यम् । हे औदुम्बरि शाखे, त्वमूर्गसि अन्नरूपा भवसि । तत ऊर्जमन्नं मयि धेहि स्थापय । 'इन्द्रस्य वामित्यवहरते बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायामिति' ( का० १५ । ६ । ३१ ) । अध्वर्युयजमानबाहू व्याघ्रचर्मस्थापितायां मैत्रावरुण्यां पयस्यायां नीचौ करोति । बाहुदेवत्यम् । वीर्यकृतो वीर्यकारिणः इन्द्रस्य परमैश्वर्ययुक्तस्य यजमानस्य संबन्धिनौ हे बाहू, अहं वां युवामुपावहरामि मैत्रावरुणीपयस्यां प्रति नीचौ करोमि ॥ २५ ॥

## षड्विंशी ।

स्योनासि सुषदासि क्षत्रस्य योनिरसि । स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद॥२६॥

उ० आसंदीं निदधाति । स्योनासि । स्योनमिति सुखनाम । स्योनासि सुखरूपासि । सुषदासि सुखेन यस्यां सीदन्ति सा तथोक्ता । क्षत्रस्य योनिः स्थानमसि । सुन्वन्तमस्यामुपवेशयति । स्योनामासीद सुखरूपामासन्दीमासीद अधिरोह । सुषदाम् अधिरोह च । क्षत्रस्य स्थानमधिरोह ॥२६॥

म० 'प्राक् स्विष्टकृतः खादिरीमासन्दीं रज्जूतां व्याघ्रचर्मदेशे निदधाति स्योनासीतीति' ( का० १५ । ६ । ३३-७ ) । पयस्यायाः स्विष्टकृद्धोमात्प्राक् रज्जुभिर्व्यूतां खादिरीमश्रिकां व्याघ्रचर्मदेशे मैत्रावरुणधिष्ण्यस्य पुरो निदधाति । आसन्दीदेवत्यम् । हे आसन्दि, त्वं स्योना सुखरूपासि सुखकारी भवसि । सुषदासि सुखेन सीदन्ति यस्यां सा सुषदा सुखेनोपवेष्टुं योग्यासि । 'अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति' ( का० १५ । ७ । २ ) । आसन्द्यां वस्त्रमाच्छादयति । अधीवासदैवतम् । हे अधीवास, त्वं क्षत्रस्य क्षत्रियस्य योनिर्मातृवद्धारकत्वेन कारणमसि । 'सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति' ( का० १५ । ७ । ३ ) । आसन्द्यां यजमानं स्थापयेत् । यजमानदेवत्यम् । हे यजमान, स्योनां सुखकरीमासन्दीमासीद आरोह ।सुषदां सुखोपवेशनयोग्यामासीद। क्षत्रस्य योनिं स्थानमासन्दीमासीद ॥ २६ ॥

## सप्तविंशी ।

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ २७ ॥

उ० यजमानस्य उरोभिमृश्य जपति । निषसाद धृतव्रतः । वारुणी गायत्री । अधियज्ञं यजमानो वरुणः निषसाद निषण्णः धृतव्रतः । धृतं व्रतं कर्म येन स तथोक्तः । 'धृतव्रतो वै राजा न वा एष सर्वस्मा इव वदनाय न सर्वस्मा इव कर्मणे यदेव साधु वदेद्यत्साधु कुर्यात् तस्मै वा एष श्रोत्रियश्च'इति श्रुतिः । पस्त्यासु प्रजासु । आधिपत्येनेत्युपसर्गादर्थपरिपूर्तिः। साम्राज्याय 'सम्राड्भावाय राज्याय'इति श्रुतिः । सुक्रतुः सुकर्मा । शोभनप्रज्ञो वा ॥ २७ ॥

म० 'निषसादेत्युरोऽस्यालभत इति' ( का० १७ । ४ । ७ ) । अध्वर्युर्यजमानहृदयं स्पृशति । वरुणदेवत्या गायत्री शुनःशेपदृष्टा अष्टषट्सप्तवर्णपादत्वाद्वर्धमाना गायत्री । असौ यजमानः पस्त्यासु विक्षु प्रजासु आ निषसाद । 'विशो वै पस्त्याः' ( ५ । ४ । ४ । ५) इति श्रुतेः । आधिपत्येनोपविवेश। यदासन्द्यां निषण्णः स प्रजास्वेव निषण्ण इत्यर्थः । 'व्यवहिताश्च' ( पा० १ । ४ । ८२ ) इति आङ उपसर्गस्य क्रियापदेन व्यवस्थानम् । किंभूतो यजमानः । धृतव्रतः धृतं व्रतं यज्ञलक्षणं कर्म येन स्वीकृतयज्ञः । वरुणः वारयत्यनिष्टमिति वरुणः । तथा सुक्रतुः शोभनसंकल्पः शोभनप्रज्ञो वा । किमर्थं निषसाद । साम्राज्याय सम्राजो भावः साम्राज्यम् । 'सम्राड्भावाय राज्याय' ( ५ । ४ । ४ । ५ ) इति श्रुतेः ॥ २७ ॥

## अष्टाविंशी ।

अभिभूरस्येतास्ते पञ्च दिशः कल्पन्तां ब्रह्मंस्त्वं ब्रह्मासि सवितासि सत्यप्रसवो वरुणोऽसि सत्यौजा इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेवः । बहुकार श्रेयस्कर भूयस्करेन्द्रस्य वज्रोऽसि तेन मे रध्य ॥२८॥

उ० पञ्चाक्षान्पाणावावपति । अभिभूरसि । कृतत्रेताद्वापरकलयश्चत्वारोऽक्षाः पञ्चमो रमणः । तत्र कलिः सर्वानन्यान् अभिभवति स उच्यते । यजमानो वा तत्संबन्धेन । अभिभूरसि अभिभवितासि । एतास्तव पञ्चदिशः कपटोपलक्षिताः क्लृप्ताः भवन्तु । ब्रह्मन्निति प्रथममामन्त्रयते यजमानः ब्रह्माणम् त्वं ब्रह्मासि सवितासि सत्यप्रसव इति । ब्रह्माह त्वमेव ब्रह्मासि भवसि सविता चासि सत्याभ्यनुज्ञः । द्वितीयं प्रत्याह त्वं ब्रह्मासि वरुणोसि सत्यौजाः सत्यमोजो यस्य स सत्यौजाः । तृतीयं प्रत्याह त्वं ब्रह्मासि इन्द्रश्च त्वमसि विशौजाः विश् ओजो यस्य स विडोजा इति प्राप्ते विशौजा इत्यन्याय्यसमासः । अतएव पदकारो नावगृह्णाति । चतुर्थं प्रत्याह । त्वं ब्रह्मासि रुद्रश्च त्वमसि सुशेवः । शेव इति सुखनाम । शोभनं सुखयिता । सुमङ्गलनामानं ध्वनयति । बहुकारः बहु करोतीति बहुकारः । श्रेयस्करः श्रेयः करोतीति श्रेयस्करः । भूयः करोतीति भूयस्करः तेषां संबोधनम् हे बहुकार श्रेयस्कर भूयस्कर । स्फ्यमस्मै प्रयच्छति । इन्द्रस्य वज्रोसि । यतः 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार' इत्युपक्रम्य 'स स्फ्यस्ततोयं च' इत्यादिना श्रुतिग्रन्थे उक्तः । अतस्त्वां ब्रवीमि तेन हेतुना मे मम यजमानं रध्य । रध्यतिर्वशगमने । वशव-

र्तिनं कुरु । 'यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान्भवति' इति श्रुतिः ॥ २८ ॥

**म०** 'अभिभूरित्यस्मै पञ्चाक्षान्पाणावाधायेति' (का० १५।७।५)। यजमानहस्ते द्यूतसाधनभूतान् पञ्चाक्षान् सौवर्णकपर्दान्निदध्यात्। अक्षा यजमानो वा देवता। चतुर्णामक्षाणां कृतसंज्ञा पञ्चमस्य कलिरिति। यदा पञ्चाप्यक्षा एकरूपाः पतन्ति उत्ताना अवाञ्चो वा तदा देवितुर्जयः। तत्र कलिः सर्वानक्षानभिभवति तं प्रत्युच्यते, तत्संबन्धेन यजमानं प्रति वा। हे अक्ष, यद्वा हे यजमान, त्वमभिभूरसि अभिभविता अभितो व्याप्तासि। एताः कपर्दिकोपलक्षिताः पञ्च दिशः पूर्वाद्यश्चतस्र ऊर्ध्वा चेति पञ्च दिशः ते त्वदर्थं कल्पन्तां त्वत्प्रयोजनसमर्था भवन्तु। कलेः सर्वाक्षाभिभावकत्वात्सुन्वतोऽपि जयापेक्षित्वात् पञ्चाक्षव्यापकत्वमिति भावः। 'वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः प्रत्याह व्यत्यासꣳ सविता वरुण इन्द्रो रुद्र इति त्वं ब्रह्मासीत्यादिभिरादिनैवान्त्यमिति' (का० १५।७।७।९) यजमानो राज्यं मेऽस्त्वित्यादि द्रव्यं संप्रार्थ्य पञ्चवारं ब्रह्मन्निति मन्त्रेण ब्रह्माणमामन्त्रयते। एवमामन्त्रितो ब्रह्मा त्वं ब्रह्मासीत्यादिभिः सवितासि वरुणोऽसि इन्द्रोऽसि रुद्रोसीत्येतैर्मन्त्रैर्व्यत्यासं यजमानं प्रत्याह। तेन चतुर्णामपि मन्त्राणामादौ त्वं ब्रह्मासीति प्रयोगः। व्यत्यासमित्यादौ यजमानो ब्रह्मन्नित्यामन्त्रयते। ब्रह्मा त्वं ब्रह्मासि सवितासि सत्यप्रसव इति प्रत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते। ब्रह्मा त्वं ब्रह्मासि वरुणोऽसि सत्यौजा इति प्रत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते ब्रह्मा त्वं ब्रह्मासि इन्द्रोऽसि विशौजा इत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते। ब्रह्मा त्वं ब्रह्मासि रुद्रोऽसि सुशेव इत्याह। अन्त्यं च पञ्चमं प्रतिवचनमादिनैव त्वं ब्रह्मासीत्येतावतैव कार्यं ब्रह्मणेति सूत्रार्थः। ब्रह्मन् ब्रह्मदेवत्यम्। यजमानः प्रथमं ब्रह्माणमामन्त्रयते। हे ब्रह्मन्, ऋत्विक्, त्वामामन्त्रय इति शेषः। त्वं ब्रह्मासि। पञ्च यजूंषि यजमानदेवत्यानि। ब्रह्मामन्त्रितो यजमानं प्रत्याह हे यजमान, त्वं ब्रह्मासि महान् भवसि सविता प्रेरकश्चासि। सत्यप्रसवः सत्यः प्रसवोऽनुज्ञा यस्य। द्वितीयं प्रत्याह त्वं ब्रह्मासि वरुणोऽनिष्टनिवारकोऽसि। सत्यौजाः सत्यमोजो यस्य अमोघवीर्योऽसि सत्ये वा ओजो यस्य। तृतीयं प्रत्याह त्वं ब्रह्मासि इन्द्रोऽसि ऐश्वर्यवानसि विशौजाः विक्षु प्रजास्वोजस्तेजो यस्य विडोजा इति प्राप्ते विशौजा इति छान्दसम्। अतएव पदकारो नावग्रहं चकार। चतुर्थं प्रत्याह त्वं ब्रह्मासि रुद्रोऽसि हे राजन्, त्वं रुद्ररूपोऽसि शत्रूणां रोदनाद्द्रावणाच्च। सुशेवः शेव इति सुखनाम। शोभनं शेवः सुखं यस्मात् शोभनं सुखयिता। त्वं ब्रह्मासीत्येतावदेव पञ्चमं प्रतिवचनम्। 'बहुकारेति च ह्वयत्येवंनामानमिति' (का० १५।७।१०)। यजमानं बहुकारेत्यादिसुमङ्गलनामानं नरमाकारयति। लिङ्गोक्तदैवतम्। हे बहुकार, बहु कार्यं करोति बहुकारः श्रेयःकरोति श्रेयस्करः भूयो बहुतरं करोति भूयस्करः तेषां संबोधनानि हे बहुकारेत्यादि। कल्याणनामन्, त्वामाह्वय इति शेषः। 'स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति' (का० १५।७।११)। असै यजमानाय स्फ्यं ददाति द्यूतभूमिकरणाय। स्फ्यदेवत्यम्। हे स्फ्य, इन्द्रस्य वज्रस्त्वमसि। 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार'इत्यादि 'तस्य स्फ्यस्तृतीयम्' (१।२।४।१) इति श्रुतेः। तेन हेतुना मे मम यजमानं रध्य। रध्यतिर्वशगमने। वशवर्तिनं कुरु। 'यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान्भवति' (५।४।४।१५) इति श्रुतेः। यद्वा तेन मे रध्य यस्मात्त्वं वज्ररूपस्तेन कारणेन मम रध्य द्यूतभूमौ परिलेखनरूपं कार्यं साधय ॥ २८ ॥

## एकोनत्रिंशी।

अ॒ग्निः पृ॑थु॒र्धर्म॑ण॒स्पति॒र्जुषा॒णो अ॒ग्निः पृ॑थु॒र्धर्म॑ण॒स्पति॒राज्य॑स्य वेतु॒ स्वाहा॑ स्वाहा॑कृताः॒ सूर्य॑स्य र॒श्मिभि॑र्यतध्वꣳ सजा॒ताना॑म्मध्यमे॒ष्ठ्याय ॥ २९ ॥

**उ०** हिरण्यमस्मिन्निधायाभिजुहोति। अग्निः पृथुः। योयं देवानामग्निः पृथुः इतरस्मादग्ने धर्मणस्पतिः धारणस्य पतिः स जुषाणः सेवमानः प्रीयमाणो वा। अग्निः पृथुः धर्मणस्पतिः आज्यस्य घृतस्य वेतु पिबतु स्वाहा सुहुतं चैतद्धविर्भवतु। अक्षान्निर्वपति। स्वाहाकृताः हे अक्षाः, स्वाहाकारपूर्विकयाहुत्या तर्पिताः सन्तः सूर्यस्य रश्मिभिर्यतध्वं स्पर्धां कुरुत। सजातानां समानजन्मनां वा भ्रातृणां क्षत्रियाणां वा। मध्यमे। 'मध्यान्मः'। मध्ये भवो मध्यमः। मध्यमे प्रदेशेऽवस्थानाय यजमानस्य। यतध्वमित्यनुवर्तते ॥ २९ ॥

**म०** 'द्यूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति' (१५।७।१६)। एवं कृतायां द्यूतभूमौ कनकं निधाय तदुपरि चतुर्गृहीताज्यं जुहुयात्। अग्निदेवत्यम्। अग्निः आज्यस्य वेतु। कर्मणि षष्ठी। घृतं पिबतु स्वाहा सुहुतमस्तु। किंभूतोऽग्निः। पृथुः देवानां प्रथमत्वाद्विशालः। तथा धर्मणः पतिः धारणं धर्म जगतो धारणस्य धर्मस्य वा स्वामी। जुषाणः प्रीयमाणः हूयमानं हविः सेवमानो वा। अग्निः पृथुर्धर्मणस्पतिरिति पुनःपाठ आदरार्थः। 'अक्षान्निवपति स्वाहाकृता इति' (का० १५।७।१६)। पूर्वोक्तपञ्चाक्षान्द्यूतभूमौ क्षिपति। अक्षदेवत्यम्। हे अक्षाः, यूयं स्वाहाकृताः स्वाहाकारपूर्विकयाहुत्या तर्पिताः सन्तः सूर्यस्य रश्मिभिः किरणैर्यतध्वं स्पर्धां कुरुत। सजातानां समानजन्मनां भ्रातृणां क्षत्रियाणां मध्यमेष्ठ्याय मध्यमप्रदेशे यजमानावस्थानाय च यतध्वं यत्नं कुरुत। यजमानं सर्वक्षत्रियश्रेष्ठं कुरुतेत्यर्थः। मध्ये भवो मध्यमः मध्यमे प्रदेशे तिष्ठतीति मध्यमेष्ठः तस्य भावो मध्यमेष्ठ्यं तस्मै ॥ २९ ॥

## त्रिंशी ।

सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा विष्णुना दशम्या देवतया प्रसूतः प्रसर्पामि ॥ ३० ॥

उ० सर्पति । सवित्रा प्रसवित्रा । सवित्रा अभ्यनुज्ञातस्य कर्त्रा प्रसूतः प्रसर्पामि । एवं सरस्वत्यादिभिर्योजनीयम् । इन्द्रेणास्मे । अस्मे इति इह तृतीयान्तम् । इन्द्रेण मया । शेषं सुबोधम् ॥ ३० ॥

म० 'पितामहदशगणꣳ सोमपानाꣳ संख्याय सर्पणꣳ सवित्रेति वानुवाकमुक्त्वेति' ( का० १५ । ८ । १५–१६ ) । पित्रादयः पूर्वजाः पितामहशब्देनोच्यन्ते । ऋत्विजोऽन्ये विप्राश्च मिलिताः शतसंख्याः सन्तो दशपेययागे सौत्येऽहनि प्रतिसवनं सर्पणात्प्राक् स्वं स्वं सोमयाजिनां पित्रादीनां दशानां गणं गणयित्वा अमुकः प्रथमः सोमपः असौ द्वितीयोऽसौ तृतीय इत्यादिदशमपर्यन्तान् सोमयाजिनो गणयित्वा विभूरसीत्यादिसर्पणं धिष्ण्योपस्थानं कुर्वन्ति । सर्पणं भक्षणकाले सदःप्रवेशो वा । पक्षान्तरमाह सवित्रेति । यद्वा सवित्रा प्रसवित्रेत्येककण्डिकात्मकमनुवाकं पठित्वा शतं विप्राः सर्पणं कुर्वन्ति । दशानां सोमयाजिनामसंभवादयमेव पक्षः श्रेयानिति सूत्रार्थः । सवित्रादिदेवत्यात्यष्टिः । एताभिर्दशभिर्देवताभिः प्रसूत आज्ञप्तोऽहं प्रसर्पामि सर्पणं करोमि । प्रत्येकपाठादेकवचनं सर्पामीति । काभिर्दशभिः प्रसूत इत्यत आह । प्रसवित्रा अभ्यनुज्ञानकारिणा सवित्रा सूर्येण । वाचा वाग्रूपया सरस्वत्या । रूपैरुपलक्षितेन त्वष्ट्रा देवेन 'त्वष्टा रूपाणामधिपतिः' इत्युक्तेः । पशुभिरुपलक्षितेन पूष्णा देवेन । अस्मे अनेन इन्द्रेण । विभक्तेः शेआदेशः । ब्रह्मणा देवयागे ब्रह्मत्वकर्त्रा बृहस्पतिना । ओजसा ओजस्विना वरुणेन । तेजसा तेजस्विना अग्निना । राज्ञा ओषधिविप्राधिपेन दीप्यमानेन वा सोमेन चन्द्रेण । दशम्या दशसंख्यापूरिकया । विष्णुना देवतया यज्ञाधिष्ठात्रा विष्णुरूपेण देवेन । एतैराज्ञप्तः प्रसर्पामीत्यर्थः ॥ ३० ॥

इति राजसूयः समाप्तः ॥

## एकत्रिंशी ।

अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व । वायुः पूतः पवित्रेण प्रत्यङ्सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखा ॥ ३१ ॥

उ० इतउत्तरं चरकसौत्रामणीयं । अश्विनोरार्षम् । सुरां संदधाति अश्विभ्यां पच्यस्व । पाको नामान्नविपरिणामः । ज्येष्ठता । सरस्वत्यै इन्द्राय सुत्राम्णे शोभनत्राणाय सुत्रातव्याय वा । भैषज्यं हीन्द्रस्य कर्तव्यं सौत्रामण्या सुरां पुनाति । वायुः पूतः । सौमी गायत्री । यः सोमः वायुना पूतः । सोमः प्रथमं पूतिगन्ध आसीत् । ततो देवैर्वायुरुक्तः अपहतविरूपगन्धं सोमं कुर्विति । ततो वायुनापहतः सोमस्य गन्धः । ऐन्द्रवायवब्राह्मणे एतत्प्रतिपादितं तदेतदस्माभिर्व्याख्यातं विभक्तिव्यत्ययेन । यद्वा यो वायुरूपः सोमः पूतः यश्च पवित्रेण प्रत्यङ् नीचैः अधोमुखम् अतिस्रुतः 'स्रु गतौ' । अतिक्रम्य गतः । स सोमः । इन्द्रस्य युज्यः समानयोगी च । सखा च समानख्यानः । कथमिन्द्रं हिनस्तीति शेषः ॥ ३१ ॥

म० अथ राजसूयगतचरकसौत्रामणीमन्त्रा उच्यन्ते । राजसूयप्रान्ते विहिता सौत्रामणी चरकसौत्रामणीत्युच्यते तन्मन्त्राणामश्विनावृषी । 'पक्त्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति सꣳसृजतीति' ( का० १५ । ९ । २५ ) । विरूढा जाताङ्कुरा अजाताङ्कुराश्च व्रीहयः क्षौमे बद्धाः सन्ति तन्मध्ये अजाताङ्कुराणां व्रीहीणामोदनं पक्त्वा विरूढान्व्रीहींश्चूर्णीकृत्यौदनेन मिश्रयति । त्रीणि यजूंषि सुरादेवत्यानि । हे सुरे, त्वमश्विभ्यां पच्यस्व अश्विनोरर्थाय पाकं कुरु । पाको नाम विपरिणामश्रेष्ठता । सरस्वत्यै देव्यै पच्यस्व । सुष्ठु त्रायत इति सुत्रामा तस्मै सुत्राम्णे शोभनत्राणकर्त्रे सुत्रातव्याय वा इन्द्राय पच्यस्व । यतः सौत्रामण्येन्द्रस्य भैषज्यं कर्तव्यमस्ति । 'वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति' ( का० १५ । १० । १० ) । पशूनां वपामार्जनान्ते कर्मणि कृते दर्भैः सुरां कस्मिंश्चित्पात्रे पुनाति । सोमदेवत्या गायत्री । वायुः 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्यादिना तृतीयैकवचनस्य सु आदेशः । सोमो वायुः वायुना पूतः शोधितः पवित्रेण कुशमयेन पूतः सन् प्रत्यङ् नीचैरधोमुखः सन् अतिस्रुत अतिक्रम्य गतः । किंभूतः । इन्द्रस्य युज्यो योगार्हः सखा सखिभूतः । 'सोमः पूर्वं पूतिगन्धोऽभूत्ततो देवैर्वायुरुक्तस्त्वं सोमꣳ सुगन्धं कुर्विति ततो वायुना सोमो दुर्गन्धमपहृत्य सुगन्धः कृतः' ( १२ । ७ । ३ ) इति श्रुत्योक्तम् तदयं मन्त्रो वदतीत्यर्थः ॥ ३१ ॥

## द्वात्रिंशी ।

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति ॥ उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥ ३२ ॥

उ० ग्रहं गृह्णाति । कुविदङ्ग । अनिरुक्ता सौमी त्रिष्टुप् । कुविदिति बहुनाम । अङ्गेति क्षिप्रनाम । हे सोम, यथा केचिज्जनपदाः कुविद्बहुक्षेत्रम् अङ्गं क्षिप्रम् । यवमन्तः बहुयवाः । यतः सोमः यवं चित् । चिच्छब्दो वितर्के । यवं वितर्क्य दान्ति । 'दाप् लवने' । लुनन्ति । अनुपूर्वम् आनुपूर्व्येण वियूय पृथक्कृत्य अमिश्रित्य । एवम् इहेहैषां कृणुहि भोजनानि भोग्यानि वस्तूनि । ये बर्हिषो नमउक्तिं यजन्ति । ये यज-

मानाः बर्हिष उपरिस्थिताः नमउक्तिम् । नम इत्यन्ननाम । उक्तिर्वचनम् । हविर्लक्षणं नमोन्नमादाय उक्तिं याज्यामभिधाय यजन्ति यागं कुर्वन्ति । उपयामगृहीतोसीत्यादि व्याख्यातम् ॥ ३२ ॥

**म०** 'ग्रहं गृह्णाति कुविदङ्गेति त्रीन् वा प्रतिदेवतमेतयैवेति' ( का० १५।१०।१२ )। पूतायां सुरायां बदरीफलचूर्णं प्रक्षिप्य कुविदङ्गेत्येकं ग्रहं वैकङ्कतपात्रेण गृह्णाति । यद्वा कुविदङ्गेत्यृचैव त्रीन् ग्रहान्प्रतिदेवतं गृह्णाति । यथा । कुविदङ्ग० उपयामगृहीतोऽस्यश्विभ्यां त्वेति प्रथमम् । कुविदङ्ग० उपयामगृहीतोऽसि सरस्वत्यै त्वेति द्वितीयम् । कुविदङ्ग० उपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्ण इति तृतीयम् । तृचं काक्षीवतसुकीर्तिदृष्टम् । आद्या सोमदेवत्याऽनिरुक्ता त्रिष्टुप् । कुविदिति बहुनाम । 'अङ्गेति क्षिप्रनाम' ( नि० ५।१७ ) चिदिति वितर्के । हे सोम, यथा यवमन्तः । यवा विद्यन्ते येषां ते यवमन्तः । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' (पा० ८।२।९ ) इति यवादीनां निषेधान्मतोर्मकारस्य वकाराभावः । बहुयवसंपन्नाः कृषीवलाः । कुवित् बहुलं यवं सर्वं यवमयं सस्यं चित् विचार्य अनुपूर्वमानुपूर्व्येण वियूय पृथक्कृत्य अङ्ग क्षिप्रं दान्ति लुनन्ति । 'दाप् लवने' लट् तथा एषां यजमानानां संबन्धीनि भोजनानि भोज्यानि वस्तूनि इह अस्मिन्नेव यजमाने कृणुहि कुरु । एषां केषाम् । ये यजमाना बर्हिष उपरि स्थिता नमउक्तिं यजन्ति । नम इत्यन्ननाम । उक्तिर्वचनम् । हविर्लक्षणमन्नमादाय उक्तिं याज्यामभिधाय यजन्ति यागं कुर्वन्ति । हे सोम, त्वमुपयामेन गृहीतोऽसि अश्विभ्यां त्वा त्वां गृह्णामि सरस्वत्यै त्वां गृह्णामि सुत्राम्णे रक्षकायेन्द्राय त्वां गृह्णामि ॥ ३२ ॥

## त्रयस्त्रिंशी ।

युवꣳसुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ ३३ ॥

**उ०** युवं सुरामम् । अनुवाक्या । पुत्रमिव याज्या । अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदेवत्ये । तत्रेतिहासमाचक्षते । नमुचिर्नामासुर इन्द्रस्य सखिभूत आस । स इन्द्रस्य विश्वस्तस्य सुरया वीर्यं पपौ । सोऽश्विनौ च सरस्वतीं चोपाधावत् पीतवीर्योऽहं नमुचिना ततोपां फेनं वज्रमसिञ्चत् तेनेन्द्रो नमुचेः शिरश्चिच्छेद । तत्र लोहितमिश्रः सुरासोमोऽतिष्ठत् तदेतदुच्यते । हे अश्विनौ, युवां सुरामम् सुरामयं सोमं सुरमणीयं वा । नमुचौ आसुरे अवस्थितम् । सचा सहभूत्वा एकीभूय । विपिपाना विविधं पिबन्तौ । हे शुभस्पती स्वामिनौ इन्द्रं कर्मसु निमित्तभूतेषु स्वकर्मकरणार्थम् आवतं पालयतम् । स्वकर्मक्षमं कुरुतमित्यर्थः ॥ ३३ ॥

**म०** 'ग्रहाणां युवꣳ सुरामं पुत्रमिवेति' ( का० १५।६।८ )। युवं सुरामं पुत्रमिवेद्वेति ऋचौ सुराग्रहाणां याज्यानुवाक्ये प्रथमानुवाक्या पुत्रमिवेति याज्या । अनुष्टुप् अश्विसरस्वतीन्द्रदेवत्या । हे अश्विना अश्विनौ, युवं युवां कर्मसु निमित्तेषु इन्द्रमावतमपालयतं स्वकर्मक्षममकुरुतमित्यर्थः । अवतेर्लङि मध्यमद्विवचनम् । किंभूतौ युवाम् । असुर एव आसुरस्तस्मिन्नमुचौ नमुचिसंज्ञे आसुरे असुरे दैत्ये स्थितं सुरामं सुष्ठु रमयतीति सुरामं सुष्ठु रमणीयं सोमं सचा सह एकीभूय विपिपाना विपिपानौ विविधं पिबन्तौ विविधं पिबतस्तौ विपिपानौ । पिबतेर्व्यत्ययेन ह्वादित्वे शानच्प्रत्यये रूपम् । तदर्थे श्रुतावितिहासः । ( १२।३।४।१ ) नमुचिर्नामासुर इन्द्रस्य सखासीत् । स विश्वस्तस्येन्द्रस्य वीर्यं सुरया सोमेन सह पपौ । तत इन्द्रोऽश्विनौ सरस्वतीं चोवाचाहं नमुचिना पीतवीर्योऽस्मि ततोऽश्विनौ सरस्वती चापां फेनरूपं वज्रमिन्द्राय ददुः तेनेन्द्रो नमुचेः शिरश्चिच्छेद ततो लोहितमिश्रः ससुरः सोमस्तदुदराद्श्विभ्यां पीत्वा शुद्ध इन्द्रायार्पित इति तदर्पणेनेन्द्रमश्विनावरक्षतामित्यर्थः । पुनः कीदृशौ । शुभः पती शोभनं शुप् 'शुभ दीप्तौ'इत्यस्मात् संपदादित्वाद्भावे क्विप् तस्य शुभः शोभनस्य कर्मणः पती पालकौ । 'षष्ठ्याः पतिपुत्र'इत्यादिना (पा० ८।३।४३ ) पतिशब्दे परे विसर्गस्य सकारः ॥ ३३ ॥

## चतुस्त्रिंशी ।

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ३४ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
दशमोऽध्यायः ॥ १० ॥

**उ०** पुत्रमिव पितरौ यथा मातापितरौ पुत्रं पालयतः एवमुभावप्यश्विनौ हे इन्द्र, त्वाम् आवथुः। पुरुषव्यत्ययः। त्वां पालितवन्तौ। काव्यैः कविकर्मभिः। मन्त्रदर्शनैरित्यर्थः। दंसनाभिः। दंस इति कर्मनाम । कर्मभिश्च मन्त्रैश्चेत्यर्थः । कथमवगम्यते अश्विनौ त्वां पालितवन्तावित्याह। यत्सुरामं व्यपिबः शचीभिः। यस्मात्त्वं सुरामयं विविधं पीतवानसि । शचीभिः कर्मभिः । नमुचेः शिरश्छेदनं कर्म कृत्वा स्ववीर्येण नह्यदढ एतत्कर्म कर्तुं शक्त इत्यभिप्रायः । सरस्वती त्वा मघवन्नभिष्णक् सरस्वती च त्वां हे मघवन् धनवन्, अभिष्णक् । अभिष्णक्शब्दः कण्ड्वादिषु पठ्यते तस्यैतद्रूपम् । अभिषज्यताभिषजितवती सरस्वती च त्वाम् ॥ ३४ ॥

इति उवटकृतौ मन्त्रभाष्ये दशमोऽध्यायः ॥ १० ॥

**म०** त्रिष्टुप् अश्विसरस्वतीन्द्रदेवत्या । हे इन्द्रोभा अश्विना उभौ अश्विनौ, त्वामावथुः । अवतेर्लिटि मध्यमद्विवचनं पुरुषव्यत्ययः। आवथुः पालितवन्तौ। कैः काव्यैः कवीनां मन्त्रद्रष्टॄणां संबन्धिभिर्मन्त्रैः कवीनामिमे काव्यास्तैः । तथा दंसनाभिः । दंस इति कर्मनाम । दंससः करणं दंसना 'तत्करोति तदाचष्टे'

( पा० ३ । १ । २६ ) इति णिचि जाते 'ण्यासश्रन्थो युच्' ( पा० ३ । ३ । १०७ ) इति युच्प्रत्यये दंसनेति रूपम् । दृष्टान्तमाह । पुत्रमिव पितरौ यथा मातापितरौ पुत्रं पालयतस्तथाश्विनौ त्वामावथुः।अश्विनाविन्द्रस्य रक्षणं कृतवन्ताविति कथमवगम्यते तत्राह। यदिति। यद्यस्मात्कारणात् हे इन्द्र, त्वं शचीभिः कर्मभिर्नमुचिवधादिकर्माणि कृत्वेत्यर्थः । सुरामं सुष्ठु रमणीयं सोमं व्यपिबः विशेषेण पीतवानसि । पिबतेर्लङि मध्यमैकवचने रूपम् । हे मघवन् धनवन्निन्द्र, यस्माच्च सरस्वती देवी त्वा त्वामभिष्णक् उपसेवते त्वत्कृतसोमपानेन सरस्वतीकृतत्वत्सेवनेन च अश्विनौ त्वामावतुरिति ज्ञायत इत्यर्थः । 'भिष्णज् उपसेवायां' कण्ड्वादिः अस्माल्लङि 'कण्ड्वादिभ्यो यक्' ( पा० ३ । १ । २७ ) इति प्राप्तस्य यको व्यत्ययेन लुक् 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' ( पा० ६ । १ । ६८ ) इति तिपो लुक् 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' ( पा० ६ । ४ । ७१ ) अडागमः 'वावसाने' ( पा० ८ । ४ । ५६ ) इति जकारस्य ककारः अभिष्णगिति रूपम् ॥ ३४ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अगमद्दशमोऽध्यायो राजसूयान्तवर्णनः ॥ १० ॥

---

# एकादशोऽध्यायः ।

## तत्र प्रथमा ।

युञ्जानः प्रथमं मनस्तत्वाय सविता धियः ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥

उ० अष्टावध्याया अग्निसंबद्धास्तान्प्रजापतिर्ददर्श । साध्या वा ऋषयः प्रजापतेः प्राणभूताः । अथ पञ्चधा दर्शितः 'प्रजापतिः प्रथमां चितिमपश्यत् प्रजापतिरेव तस्या आर्षेयम् । देवा द्वितीयां चितिमपश्यन् त एव तस्या आर्षेयम् । इन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यन् त एव तस्या आर्षेयम् । ऋषयश्च चतुर्थीं चितिमपश्यन् ऋषय एव तस्या आर्षेयम् । परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयमिति' । अथवा प्रतिकर्मदर्शी नः सवितैतानि सावित्राण्यपश्यदिति । युञ्जानः प्रथमं मनः । अष्टौ कण्डिकाः सवित्रा दृष्टाः सवितृदेवत्याः ताभिः संतताज्याहुतिर्हूयते । प्रथमाऽनुष्टुप् । अभ्यारंभे सविता युञ्जानः नियुञ्जानः प्रथमं मनः ततोऽनन्तरम् तत्वाय । 'तनु विस्तारे' । क्त्वो यप् छान्दस उपजनः । तनित्वा विस्तार्य धियः बुद्धीः । मनसा पर्यालोच्य बुद्ध्याऽवधार्येत्यर्थः । अग्नेर्ज्योतिः अग्निसंबन्धि ज्योतिः । पञ्चसु पशुषु प्रविष्टं । निचाय्य उपलभ्य । 'यथा वा अग्निः समिद्धो दीप्यते' इत्यादिना । ततः पशुक्रुधन्वितायाः(?) पृथिव्या अध्याभरत् अध्याहृतवानग्निं इष्टकां कृत्वोचितवानग्निम् । श्रुतौ प्रजापतिः कर्तोपदिष्टः तदनुकृत्या इदानींतना यजमाना उपदिश्यन्ते प्रजापतिर्वै युञ्जान इति ॥ १ ॥

म० रमाकान्तं नमस्कृत्य गणेशं शारदां गुरुम् । संहितैकादशाध्याये मन्त्रदीपो वितन्यते ॥ एकादशमारभ्याष्टादशाध्यायपर्यन्तमग्निचयनमन्त्राः । तेषां प्रजापतिर्ऋषिः साध्या ऋषयो वा । सोऽग्निः पञ्चचितियुक्तः प्रथमचितिमन्त्राणां प्रजापतिर्ऋषिः द्वितीयचितेर्देवा ऋषयः तृतीयचितेरिन्द्राग्निविश्वकर्माण ऋषयः चतुर्थचितेर्ऋषय एवर्षयः । पञ्चमचितिमन्त्राणां परमेष्ठी ऋषिः । तथाच श्रुतिः 'प्रजापतिः प्रथमां चितिमपश्यत् प्रजापतिरेव तस्या आर्षेयं देवा द्वितीयां चितिमपश्यन् देवा एव तस्या आर्षेयमिन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यंस्त एव तस्या आर्षेयमृषयश्चतुर्थीं चितिमपश्यन्नृषय एव तस्या आर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयमिति' ( ६ । २ । ३ । १० ) । चयनं कर्तुमिच्छन् फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं कृत्वा पुरुषाश्वगोऽव्यजानालभ्याजेन यागं कृत्वा पञ्चानां शिरांसि घृताक्तानि प्रथमचितावुपधानार्थं क्वचित्संस्थाप्य तेषां कवन्धान्यज्ञशेषं च मृद्युक्ते तडागादिजले प्रास्येत् । उखार्थमिष्टकार्थं च मृदं जलं च तत एवादेयम् । ततः फाल्गुनकृष्णाष्टम्यामुखासंभरणम् तदर्थमाहवनीयदक्षिणाग्नी उद्धृत्याहवनीयात् प्राक् कृते चतुष्कोणे गर्ते ततस्तडागान्मृत्पिण्डमानीय भूसमं स्थापयेत् । पिण्डाहवनीयान्तराले सच्छिद्रां वल्मीकमृदं निदध्यात् ।आहवनीयाद्दक्षिणदेशेऽश्वगर्दभाजाः प्राङ्मुखाः प्रागपरा मुञ्जरसनाबद्धाः स्थाप्याः । आहवनीयोत्तरे वैण्युभयतस्तीक्ष्णा कल्माषी हिरण्मयी वाभ्रिः स्थाप्या । ततः कर्माह 'अष्टागृहीतं जुहोति सन्ततमुद्द्रवन् युञ्जानः' ( का० १६ । २ । ७ ) इति । अस्यार्थः । गार्हपत्ये घृतं संस्कृत्य जुहूं स्रुवं च संमृज्य स्रुच्यष्टागृहीतमाज्यमाहवनीये परिस्तरणसमिदाधानपूर्वकं सन्ततमविच्छिन्नधारया स्रुचमूर्ध्वां कुर्वन्नध्वर्युर्जुहोति युञ्जान इत्याद्यष्टकण्डिकाभिः । सान्तत्यं चाष्टर्चान्ते स्वाहाकारपर्यन्तम् । आद्यानुष्टुप् तृतीयः सप्ताक्षरः । अष्टानां सवितापि ऋषिः देवोऽपि सविता । अथ मन्त्रार्थः । सविता सर्वस्य प्रेरकः प्रजापतिः अग्नेर्ज्योतिः चीयमानस्य वह्नेः संबन्धि तेजः निचाय्य पञ्चपशुषु प्रविष्टं निश्चित्योपलभ्य । यद्वा सफलानां कर्मणां साधनभूतं निश्चित्य । पृथिव्याः पशुशरीरान्वितायाः भूमेः सकाशादध्याभरत् अध्याहृतवान् । इष्टकाः कृत्वाग्निं चितवानित्यर्थः । सवितृशब्देन श्रुतौ प्रजापतिरुक्तः 'प्रजापतिर्वै युञ्जानः' ( ६ । ३ । १ । १२ ) इति श्रुतेः । किंभूतः । प्रथममभ्यारम्भे मनो युञ्जानः समादधानः युङ्क्तेऽसौ युञ्जानः । किं कृत्वा । धियो बुद्धीरिष्टकादिविषयाणि ज्ञानानि तत्वाय तनित्वा विस्तार्य । मनसा पर्यालोच्य बुद्ध्यावधार्येत्यर्थः । 'तनु विस्तारे' 'समानकर्तृकयोः पूर्वकाले' ( पा० ३ । ४ । २१ ) इति क्त्वाप्रत्ययः।अनित्यमागमशासनमितीडागमाभावः । 'अनुदात्तोपदेश—' (पा० ६ । ४ । ३७) इत्यादिना नलोपः 'क्त्वो यक्' ( पा० ७।१।४७ ) इति क्त्वाप्रत्ययान्तस्य यगागमः ॥१॥

## द्वितीया ।

युक्तेन मन॑सा व॒यं दे॒वस्य॑ सवि॒तुः स॒वे । स्व॒र्ग्या॑य॒ शक्त्या॑ ॥ २ ॥

उ० युक्तेन मनसा । गायत्री । युक्तेन एकाग्रेण मनसा वयं देवस्य सवितुः सवे प्रसवे वर्तमानाः स्वर्ग्याय स्वर्गसाधनाय कर्मणे । शक्त्या यथाशक्त्या प्रयत्नं कुर्म इति शेषः ॥ २ ॥

म० गायत्री । तृतीयः पादः पञ्चार्णस्तेन शङ्कुमती । तदुक्तं पिङ्गलेन 'एकस्मिन्पञ्चके छन्दः शङ्कुमती' इति । सवितुर्देवस्य प्रजापतेः सवे प्रसवे आज्ञायां वर्तमाना वयं यजमाना युक्तेनेन्द्रियेभ्यो नियमितेनैकाग्रेण मनसा स्वर्ग्याय स्वर्गसाधकाय कर्मणे शक्त्या स्वसामर्थ्येन प्रयत्नं कर्म इति शेषः ॥ २ ॥

## तृतीया ।

यु॒क्त्वाय॑ सवि॒ता दे॒वान्स्व॑र्य॒तो धि॒या दिव॑म् । बृ॒हज्ज्योतिः॑ करिष्य॒तः स॑वि॒ता प्र सु॑वाति॒ तान् ॥३॥

उ० युक्त्वाय अनुष्टुप् । सविता प्रसुवाति तानिति तदोदर्शनादिह यद्योगः कर्तव्यः । नित्यसंबन्धौ हि यत्तदौ । युक्त्वाय । यकार उपजनोऽनर्थान्तरवचनः । युक्त्वाय सविता यत् देवान् अग्निकर्मणि अन्येन कर्मणा स्वर्यतः स्वर्लोकं गच्छतः धिया बुद्ध्या कर्मणा वा दिवं द्योतनं स्वर्गम् । बृहत् महत् ज्योतिरादित्यलक्षणम् । आत्मत्वेन करिष्यतः संस्कुर्वतः । सविता प्रसुवाति प्रसौति अभ्यनुजानाति । तानेव देवान् ॥ ३ ॥

म० अनुष्टुप् द्वितीयः सप्तार्णस्तेनैकोना । सविता तान् प्रसिद्धान् देवान् प्रसुवाति । 'षू प्रेरणे' तुदादिः 'लेटोऽडाटौ' इत्याडागमः । प्रसौति अभ्यनुजानाति प्रेरयतीत्यर्थः । किं कृत्वा । युक्त्वाय युक्त्वा क्त्वो यक् अग्निकर्मणि संयोज्य । किंभूतान्देवान् धिया बुद्ध्या कर्मणा वा अन्येन दिवं दीव्यति प्रकाशत इति दिवम् 'इगुपध' ( पा० ३ । १ । १३५ ) इति कप्रत्ययः । द्योतनं स्वः स्वर्गं यतो गच्छतः । इणः शत्रन्तस्य यत इति रूपम् । पुनः कीदृशान् । बृहत् महत् ज्योतिः आदित्यलक्षणमात्मत्वेन करिष्यतः संस्कुर्वतः । कीदृशः सविता । सविता प्रेरयिता अन्येन कर्मणा स्वर्गं गच्छतो देवानग्निकर्मणि सविता प्रेरयिता सविता प्रजापतिः तान्देवानिन्द्रियविशेषान्युक्त्वा विषयेभ्यो नियम्य प्रसुवाति प्रकर्षेणाग्निकर्मणि प्रेरयति । कीदृशान् । स्वर्यतः स्वर्गप्राप्त्यै उद्यतान् । तथा बृहत् प्रौढं ज्योतिः चीयमानस्याग्नेस्तेजः धिया दिवं करिष्यतः तत्तदिष्टकादिविषयया प्रज्ञया द्योतमानं कर्तुमुद्यतान् ॥ ३ ॥

## चतुर्थी ।

यु॒ञ्जते॒ मन॑ उ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चितः॑ । वि होत्रा॑ दधे वयुना॒विदेक॒ इन्म॒ही दे॒वस्य॑ सवि॒तुः परि॑ष्टुतिः ॥ ४ ॥

उ० युञ्जतेमनः इत्यादि व्याख्यातम् । इयांस्तु विशेषः । प्रजापतिर्विप्रः बृहद्विपश्चिदित्युच्यते । देवा विप्राः ॥ ४ ॥

म० जगती व्याख्यातापि ( पूर्वं अ० ५ क० ४ ) विशेषतो व्याख्यायते । विप्रस्य ब्राह्मणस्य यजमानस्य विशेषेण प्राति पूरयति दक्षिणान्नदानादिनेति विप्रस्तस्य संबन्धिनो विप्रा ऋत्विजो मनो युञ्जते प्रथमं स्वकीयं मनो विषयेभ्यो निवर्त्य समाहितं कुर्वते । उत अपिच । धिय इष्टकादिविषयाणि ज्ञानानि युञ्जते संपादयन्ति । कीदृशस्य विप्रस्य । बृहतः प्रभोः अग्निचयनोद्योगेनाभिवृद्धस्य । तथा विपश्चितः विदुषः प्रयोगाभिज्ञस्य । विप्राः कीदृशाः । होत्राः होमशीलाः जुह्वतीति होत्राः त्रप्रत्ययः । कर्मण्यालस्यरहिता इत्यर्थः । नन्विदमृत्विग्यजमानादिकं कुतो जातं तत्राह । एक एव सविता विदधे सर्वमिदं निर्मितवान् । कीदृशः वयुनावित् वयुनानि प्रज्ञानानि वेत्तीति वयुनावित् 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति दीर्घः विपश्चित् ऋत्विग्यजमानाभिप्रायज्ञः । कथमेक एव सर्वमिदं कृतवानित्यत आह । यतः सवितुर्देवस्य परिष्टुतिर्मही परितः सर्ववेदेषु श्रूयमाणा स्तुतिर्महती । अचिन्त्यः सवितुर्महिमेत्यर्थः ॥ ४ ॥

## पञ्चमी ।

यु॒जे वां॒ ब्रह्म॑ पू॒र्व्यं नमो॑भि॒र्विश्लोक॑ एतु प॒थ्येव सू॒रेः । शृ॒ण्वन्तु॒ विश्वे॑ अ॒मृत॑स्य पु॒त्रा आ ये धामा॑नि दि॒व्यानि॑ त॒स्थुः ॥ ५ ॥

उ० युजे वाम् । त्रिष्टुप् । दम्पतीयजमानौ वामित्यनेन पदेनोच्येते । युजे युनज्मि । वां युवाभ्यामर्थाय । ब्रह्म पूर्व्यं नमोभिः । प्राणाः सप्त ऋषयो ब्रह्मणा ब्रह्मशब्देनोच्यन्ते । पूर्व्यशब्देन च । नमोभिरन्नैः सहितम् । इयमेवाहुतिरन्नशब्देनोच्यते । किं प्रयोजनमिति चेत् । विश्लोक एतु पथ्येव सूरेः विविधमेतु आगच्छतु श्लोकः कीर्तिः सूरेः पण्डितस्य यजमानस्य । कथमिव । पथ्येव पथः अनपेता पथ्या । यज्ञमार्गप्रवृत्ताहुतिरुभयलोकसंचारिणी भवति एवं यजमानस्योभयलोकसंचारी श्लोको भवत्वित्यभिप्रायः । शृण्वन्तु च विश्वे सर्वे । अमृतस्य अमरणधर्मिणः प्रजापतेः पुत्रा देवाः कीर्तिम् । आये धामानि दिव्यानि तस्थुः । आतस्थुः आस्थिताः ये देवाः धामानि स्थानानि दिव्यानि ॥ ५ ॥

म० त्रिष्टुप् आद्यद्वितीयतुर्याणां व्यूहेन पूरणम् । पत्नीयजमानौ वामिति पदेनोच्येते । हे पत्नीयजमानौ, वां युवयोरर्थे नमोभिरन्नैः इदानीं हुतैर्घृतैः सहितं पूर्व्यं पुरातनैर्महर्षिभिरनुष्ठितं ब्रह्म परिवृढमग्निचयनाख्यं कर्माहं युजे युनज्मि संपादयामि । व्यत्ययेन तुदादित्वाच्छः । यद्वा ब्रह्मशब्देन प्राणाः

सप्त ऋषयो ब्राह्मणाश्चोच्यन्ते। वामर्थं पूर्व्यं पुरातनं ब्रह्म ब्राह्मणजातिं नमोभिरन्नैर्युजे योजयामि । अन्नैर्विप्रांस्तर्पयामीत्यर्थः । किमर्थमिति चेत् सूरेः पण्डितस्य यजमानस्य श्लोकः कीर्तिर्व्येतु विविधं गच्छतु लोकद्वयं व्याप्नोतु। 'व्यवहिताश्च' ( पा० १ । ४ । ८२ ) इति वि एतु अनयोर्व्यवधानम् । तत्र दृष्टान्तः । पथ्या इव पथोऽनपेता पथ्या यज्ञभागप्रवृत्ता आहुतिर्यथा लोकद्वयं व्याप्नोति एवं यजमानस्य श्लोक उभयलोकसंचारी भवत्विति भावः । किंच अमृतस्य मरणधर्मरहितस्य प्रजापतेः पुत्रा विश्वे सर्वे देवा यजमानस्य श्लोकं शृण्वन्तु । के । ये दिव्यानि दिवि भवानि स्थानानि आतस्थुः अधिष्ठितवन्तः ते सर्वेऽस्य कीर्तिं शृण्वन्त्वित्यर्थः ॥ ५ ॥

## षष्ठी ।

यस्य॑ प्र॒याण॒मन्व॒न्य इद्य॒युर्दे॒वा दे॒वस्य॑ महि॒मान॒मोज॑सा । यः पार्थि॑वानि विम॒मे स एत॑शो रजा॑ᳩसि दे॒वः स॑वि॒ता म॑हित्व॒ना ॥ ६ ॥

**उ०** यस्य प्रयाणम् । जगती । सवितैव प्रजापतिरत्राभिप्रेयते । व्यवहितपदप्रायमिदं मन्त्रवाक्यम् । यस्य देवस्य प्रयाणं अनु प्रगममनु अन्ये देवा ययुः जग्मुः । इच्छब्दोऽनर्थकः । महिमानमोजसा । महिमानं महाभाग्यं विभूतिम् ओजसा बलेन ययुर्देवाः । यश्च सविता देवः पार्थिवानि रजांसि विममे । 'लोका रजांस्युच्यन्ते' । पृथिवीप्रभृतीन् लोकान्मिमीते महित्वना स्वकीयेन महाभाग्येन । स एतशः एतज्जगत्स्थावरजङ्गमं प्राणभावेन शेत इति सविता एतश इत्युच्यते । यद्वा एतश इत्यश्वनामसु पठितम् । सोऽश्वरूपेण समस्तमेतज्जगदवष्टभ्य स्थितः तदुक्तम् । 'उषा वा अश्वस्य मेध्यस्य शिरः' इत्यादिना 'सूरादश्वं वसवो निरतष्ट' इति च ॥ ६ ॥

**म०** सावित्री जगती प्रथमस्य व्यूहेन पूरणम् । अन्ये देवा यस्य सवितुः प्रयाणं प्रवृत्तिमनुययुरित् अवश्यमनुगच्छन्त्येव । यत्प्रवृत्तिमनुवर्तन्त इत्यर्थः । अन्ये देवा यस्य देवस्य महिमानं महत्त्वंच ओजसा बलेनानुययुः । यश्च सविता पार्थिवानि रजांसि विममे पृथिवीप्रभृतींस्त्रींल्लोकान्मिमीते । 'लोका रजांस्युच्यन्ते' ( निरु० ४ । १९ ) इति यास्कः । स देवः महित्वना स्वकीयेन महाभाग्येन एतशः एतज्जगत्रयं स्थावरजङ्गमं प्राणभावेन शेते व्याप्नोतीत्येतशः महेर्महतो भावो महित्वं तेन । भावे छान्दसस्त्वन्प्रत्ययः । यद्वा एतश इत्यश्वनामसु पठितम् । स देव एतशः अश्वरूपेण सर्वं जगदवष्टभ्य स्थितः । 'उषा वा अश्वस्य मेध्यस्य शिरः' ( १० । ६ । ४ । १ ) इति श्रुतेः 'सूरादश्वं वसवो निरतष्टे' ति वक्ष्यमाणत्वाच्च ( अ० २९ का० १३ ॥ ६ ॥

२४ य० उ०

## सप्तमी ।

देव॑ सवितः॒ प्रसु॑व य॒ज्ञं प्रसु॑व य॒ज्ञप॑तिं॒ भगा॑य । दि॒व्यो ग॑न्ध॒र्वः के॑त॒पूः केतं॑ नः पुनातु वा॒चस्पति॒र्वाचं॑ नः स्वदतु ॥ ७ ॥

**उ०** देवसवितरिति व्याख्यातम् । इयांस्तु विशेषः । वाचस्पतिर्वाचं नः स्वदतु इति । 'वाचा वा इदं कर्म प्राणो वाचस्पतिः' इति ॥ ७ ॥

**म०** त्रिष्टुप् । व्याख्यातापि ( अ० ९ का० १ ) कथ्यते । हे देव सवितः, यज्ञं प्रसुव प्रकर्षेण प्रेरय यज्ञपतिं यजमानं च भगाय सौभाग्याय प्रसुव । किंच दिव्यो दिवि भवः स्वर्गस्थः केतपूः केतं परचित्ते वर्तमानं ज्ञानं पुनाति शोधयतीति केतपूः ईदृशो गन्धर्वः गां वाचं धारयतीति गन्धर्वः सविता नोऽस्माकं केतं चित्तवर्ति ज्ञानं पुनातु ब्रह्मविवर्तनेन शोधयतु । वाचः वाण्याः पतिः सविता नोऽस्मदीयां वाचं स्वदतु स्वादयतु। अस्मदुक्ता वाक्तस्मै रोचतामित्यर्थः ॥ ७ ॥

## अष्टमी ।

इ॒मं नो॑ देव सवितर्य॒ज्ञं प्रण॑य देवा॒व्य॑ᳩसखि॒विद॑ᳩसत्रा॒जितं॑ धन॒जित॑ᳩस्व॒र्जित॑म् । ऋ॒चा स्तोम॑ᳩसम॑र्धय गाय॒त्रेण॑ रथन्त॒रं बृ॒हद्गा॑यत्रव॑र्तनि॒ स्वाहा॑ ॥ ८ ॥

**उ०** इमं नो देव । आ अवसानाद्यजुः । इमं यज्ञं नोस्माकं हे देवसवितः, प्रणय प्रापय । कथंभूतं यज्ञम् । देवाव्यम् देवा यस्मिन्नव्यन्ते तर्प्यन्ते स देवाव्यः । सखिविदम् सखायो यस्य विद्यन्ते स सखिवित्, सखीन्वा यो विन्दते स सखिवित् तं सखिविदम् । सत्राजितम् । सत्राशब्दः सत्यवचनः । सत्यं ब्रह्म यो जयति स सत्राजित् तं सत्राजितम् । धनं यो गवादि जयतीति धनजित् तं धनजितम् । स्वर्गलोकं यो जयति स स्वर्जित् तंस्वर्जितं । ऋचा स्तोमम् गायत्र्यनवसानया ऋचा ऋग्वेदेन सह स्तोमं त्रिवृदादि समर्धय । गायत्रेण साम्ना सह रथंतरं समर्धय । बृहत् महत् । कथंभूतं महत् । गायत्रवर्तनि गायत्रं यस्य बृहतो वर्तनि वर्त्मभूतम् ॥ ८ ॥

**म०** अवसानपर्यन्तं यजुः तस्य प्राजापत्या जगती छन्दः । हे सवितर्देव, नोऽस्माकमिमं यज्ञं प्रणय प्रापय । कीदृशं यज्ञम् । देवाव्यं देवा अव्यन्ते तर्प्यन्ते यस्मिन्नसौ देवावीः तम् । 'अव प्रीणनादौ' अस्मादौणादिक ईप्रत्ययः । तथा सखिविदं सखायं स्वनिष्पादकं यजमानं वेत्तीति तम् । 'विद ज्ञाने' सखीनृत्विजो विन्दते प्राप्नोतीति वा सखिवित्तम् 'विदॢ लाभे' सखायो विद्यन्ते यस्मिन्निति वा 'विद सत्तायाम्' । सत्राजितं सत्राणि द्वादशाहादीनि जयति वशीकरोतीति सत्रजित्तम् तानि हि चीयमानमग्निमपेक्षन्ते । यद्वा सत्राशब्दः सत्यवाची । सत्रा

सत्यं ब्रह्म जयतीति । धनजितं धनं गवादि फलरूपेण यो जयति संपादयतीति धनजित् । स्वर्जितं स्वः स्वर्गं जयति फलत्वेन संपादयति स स्वर्जित्तम् । किंच ऋचा स्तोमम् गायत्री अवसानरहिता यजुरन्ता स्वाहेति यजुः । हे सवितः, ऋचा स्तोत्रहेतुसामाधारभूतया ऋचा सह स्तोमं त्रिवृदादिकं समर्धय समृद्धं कुरु । गायत्रेण साम्ना सह रथन्तरं साम समर्धय बृहत् साम च समर्धय । कीदृशं बृहत् । गायत्रवर्तनि गायत्रं सामैव वर्तनिर्मार्गो यस्य तत् । बृहत्साम्नो गायत्रं साम वर्त्मभूतमित्यर्थः ॥ ८ ॥

## नवमी ।

देवस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । आद॑दे गाय॒त्रेण॒ छन्द॑साङ्गिर॒स्वत्पृ॑थि॒व्याः स॒धस्था॑द॒ग्निं पु॑री॒ष्य॒मङ्गिर॒स्वदाभ॑र॒ त्रैष्टु॑भेन॒ छन्द॑साङ्गिर॒स्वत् ॥ ९ ॥

**उ०** अग्निमादत्ते देवस्य त्वा । व्याख्यातम् । आददे गृह्णामि अहं गायत्रेण छन्दसा । अङ्गिरस्वत् अङ्गिरसा तुल्यमङ्गिरोवदिति प्राप्ते 'अयस्मयादीनि छन्दसि' इति भसंज्ञा । श्रुतौ तु अग्निवदिति व्याख्यातम् । अग्निरुच्यते । त्वं च गृहीता सती पृथिव्याः सधस्थात्समानस्थानात् । अग्निं पुरीष्यं पशव्यम् । अङ्गिरस्वदाभर अङ्गिरसा तुल्यम् अग्निवद्वा आभर । 'हृग्रहोर्भश्छन्दसि' हस्येति हकारस्य भकारः । आहर त्रैष्टुभेन च्छन्दसा अङ्गिरस्वत् ॥ ९ ॥

**म०** 'देवस्य त्वेत्यग्निमादाय हस्त आधायेत्येनामभिमन्त्रयते' (का० १६ । २ । ८) । अस्यार्थः । देवस्य त्वेति कण्डिकाद्वयात्मकमन्त्रेण वैणवीमभ्रिमादाय हस्त आधायेति ऋचा ( क० ११ ) एनामभ्रिमभिमन्त्रयते । देवस्य त्वा प्रजापतिः साध्या वा ऋषयः सावित्रं यजुः । व्याख्यातम् । आददे अग्निर्देवता अतिधृतिश्छन्दः । हे अभ्रे, सवितुर्देवस्य प्रसवे प्रेरणे सति अश्विनोः संबन्धिभ्यां मणिबन्धपर्यन्ताभ्यां बाहुभ्यां पूष्णः संबन्धिभ्यां साङ्गुलिभ्यां हस्ताभ्यां साधनभूताभ्यां गायत्रेण छन्दसा सहायभूतेन युक्तः सन् त्वा त्वामाददे गृह्णामि । तत्र दृष्टान्तः । अङ्गिरस्वत् अङ्गिरोभिस्तुल्यमङ्गिरोवदिति प्राप्ते 'अयस्मयादीनि छन्दसि' ( पा० १ । ४ । २० ) इति भसंज्ञायामङ्गिरस्वदिति रुत्वाभावः । अङ्गिरस ऋषयः पूर्वं यथा त्वामगृह्णन् तद्वत् । हे अभ्रे, त्वं गृहीता सती पृथिव्याः सधस्थात् सहस्थानादुत्सङ्गात् अग्निमाभर आहर 'हृग्रहोर्भश्छन्दसि' ( पा० ८ । २ । ३२ वा० १ ) इति हस्य भः । त्रैष्टुभेन छन्दसा कृत्वा अङ्गिरस्वत् अङ्गिरसो यथाग्निमाजह्रुः पुनरङ्गिरस्वदिति दृष्टान्तार्थातिशयार्थः 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १० । ४२ ) इति यास्कोक्तेः । किंभूतमग्निम् पुरीष्यं 'पशवो वै पुरीषम्' ( ६ । ३ । १ । ३८ ) इति श्रुतेः पुरीषेभ्यः पशुभ्यो हितः पुरीष्यस्तं पशव्यम् । यद्वा पुरीषशब्देन पांशुरूपा शुष्का मृदुच्यते तदर्हतीति पुरीष्योऽग्निः मृदमादायोखां कृत्वा तस्यामग्निः स्थाप्यते यतोऽतो मृदग्न्योरभेदोपचारेण मृदाहरणमेवाग्न्याहरणमित्यभिप्रायेण पुरीष्यमग्निमाहरेत्युच्यते । अयं चोपचारोऽग्निचयनप्रकरणे सर्वत्रानुवर्तिष्यते ॥ ९ ॥

## दशमी ।

अभ्रि॑रसि॒ नार्य॑सि॒ त्वया॑ व॒यम॒ग्निँ श॑केम॒ खनि॑तुँ स॒धस्थ॒ आ जाग॑तेन॒ छन्द॑साङ्गिर॒स्वत् ॥ १० ॥

**उ०** अभ्रिरसि । नारी स्त्री त्वमसि । किंच त्वया वयम् अग्निं शकेम । खनितुं सधस्थे आ । समानस्थानेषु वर्तमानं पृथिव्याः । आकारोऽनर्थकः । जागतेन छन्दसा अङ्गिरस्वत् ॥ १० ॥

**म०** त्वमभ्रिरसि उखां निर्मातुं मृत्खननहेतुभूतकाष्ठविशेषोऽसि । नारी असि स्त्रीरूपा चासि । यद्वा न विद्यते अरिः शत्रुर्यस्याः सा नारी । इप् छान्दसः । खननकाले अश्मादिना तव कुण्ठीभावो नास्तीत्यर्थः । किंच त्वया युक्ता वयं सधस्थे पृथिव्या उत्सङ्गे वर्तमानमग्निं जागतेन छन्दसा खनितुं शकेम शक्ता भवेम । शक्नोतेर्व्यत्ययेन शप् । अङ्गिरस्वदिति दृष्टान्तः पूर्ववत् ॥ १० ॥

## एकादशी ।

हस्त॑ आ॒धाय॑ सवि॒ता बिभ्र॒दभ्रिँ॑ हिर॒ण्ययी॑म् । अ॒ग्नेर्ज्योति॑र्नि॒चाय्य॑ पृथि॒व्या अध्याभ॑र॒दानु॑ष्टुभेन॒ छन्द॑साङ्गिर॒स्वत् ॥ ११ ॥

**उ०** अभ्रिमभिमन्त्रयते । हस्त आधाय । अनुष्टुप् यजुरन्ता । आनुष्टुभेनेत्यादि यजुः । हस्ते अभ्रिमादाय सविता ततस्तामेवाभ्रिं बिभ्रत् धारयन् । हिरण्ययीममृतमयीं छन्दोमयीं वा । अग्नेर्ज्योतिर्निचाय्य निभाल्य दृष्ट्वा ततः पृथिव्या अपि सकाशात् आभरत् आहृतवान् आनुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ११ ॥

**म०** अनुष्टुब्यजुरन्ता । आनुष्टुभेनेत्यादि यजुस्तस्य यजुषस्त्रिष्टुपछन्दः । तृतीयतुर्यपादयोर्व्यूहेन पूर्तिः । अग्निर्देवत्या । सविता प्रेरकः प्रजापतिर्हस्ते हिरण्ययीं स्वर्णरूपामभ्रिमाधाय स्थापयित्वा बिभ्रत् तामेव धारयन्सन् अग्नेः संबन्धि ज्योतिर्निचाय्य निश्चित्य दृष्ट्वा पृथिव्याअधि भूमेः सकाशात् आनुष्टुभेन छन्दसा आभरत् आहृतवान् । अङ्गिरस्वदिति पूर्ववत् ॥ ११ ॥

## द्वादशी ।

प्रतू॑र्तं वाजि॒न्नाद्र॑व॒ वरि॑ष्ठा॒मनु॑ सं॒वत॑म् । दि॒वि ते॒ जन्म॑ प॒रम॒न्तरि॑क्षे॒ तव॒ नाभि॑ः पृथि॒व्यामधि॒ योनि॒रित् ॥ १२ ॥

**उ०** अश्वगर्दभाजानभिमन्त्रयते यथासंख्यम् । प्रतूर्तं वाजिन्निति तिसृभिर्ऋग्भिः तिस्र एत एवाश्वादयो देवताः । आद्या आस्तारपङ्क्तिः । हे वाजिन्, प्रतूर्तम् त्वरतेरेवैतद्रूपम् । प्रकर्षेण तूर्तं तूर्णम् आद्रव आगच्छ । वरिष्ठामनुसंवतम् । वरिष्ठामुत्तमां संवतमनु । संपूर्वस्य वनोतेः क्विपि एतद्रूपम् । संभजनमुच्यते । क्षिप्रतमं वाजिन्नागच्छ उत्कृष्टं संभजनमन्वित्यभिप्रायः । तदुत्कृष्टं समजनमधुना दर्शयितुमाह । दिवि द्युलोके ते तव आदित्यरूपेण जन्म भविष्यति । आगतस्य सतः परमुत्कृष्टम् । किंच अन्तरिक्षे तव नाभिः उदरम् । पृथिव्याम् अधि उपरि योनिः स्थानं पादावित्यर्थः । उदिति पादपूरणे । विराड्रूपेणाश्वः स्तूयते । तदुक्तम् 'उषा वा अश्वस्य मेध्यस्य शिरः' इति ॥ १२ ॥

**म०** 'अश्वप्रभृतींश्च प्रत्यृचं प्रतूर्तं युञ्जाथां योगे योग इति' ( का० १६ । २ । १० ) । ऋक्त्रयेण प्रत्यृचमश्वगर्दभाजानभिमन्त्रयतेऽभ्रिहस्त उपविष्ट एव । अश्वदेवत्या आस्तारपङ्क्तिः नाभानेदिष्ठदृष्टा । यस्या अन्त्यौ द्वादशकावाद्यावष्टकौ सास्तारपङ्क्तिः । 'वन संभक्तौ' संवन्यते सम्यग्भज्यते मृद्ग्रहणार्थं सेव्यत इति संवत् । संपूर्वस्य वनतेः क्विप्येतद्रूपम् । मृत्खननयोग्या भूमिः संवत् सा । च पाषाणाद्यभावेनातिप्रशस्तत्वाद्वरिष्ठेत्युच्यते । हे वाजिन् शीघ्रगामिन्नश्व, वरिष्ठामुत्कृष्टां संवतं भूमिमनुलक्ष्य प्रतूर्तं शीघ्रमाद्रव आगच्छ । 'नसत्तनिषत्त–' ( पा० ८ । २ । ६१ ) इत्यादिना क्तान्तो निपातस्त्वरतेः । ते तवाश्वस्य दिवि द्युलोके परममुत्कृष्टं जन्मादित्यरूपेण भविष्यति आगतस्य सतः । यद्वा ते जन्म दिवि रोहितादिदेवाश्वरूपेण प्रसिद्धम् । अन्तरिक्षे तव नाभिः उदरम् । यद्वा नियुन्नामकवाय्वश्वा अन्तरिक्षे संचरन्ति तद्रूपेणास्यान्तरिक्षवर्तित्वम् । नाभिशब्देन प्रकृष्टं शरीरमुपलक्ष्यते । पृथिव्या अधि उपरि तव योनिः स्थानमित् एव पादावेवेत्यर्थः । भूमौ ते निवासस्थानं प्रत्यक्षं दृश्यते । विराड्रूपेणाश्वः स्तूयते । एवंमहिमा त्वं शीघ्रमागच्छेत्यर्थः ॥ १२ ॥

## त्रयोदशी ।

युञ्जाथाᳬंरासभं युवमस्मिन्यामे वृषण्वसू । अग्निं भरन्तमस्मयुम् ॥ १३ ॥

**उ०** रासभमभिमन्त्रयते । युञ्जाथाम् गायत्री । अध्वर्युयजमानावुच्येते । युञ्जाथां रासभं गर्धभम् युवम् युवाम् अस्मिन्यामे अस्मिन्कर्मणि । वृषा सेक्ता गर्दभः स ययोर्वसु धनं तौ वृषण्वसू तयोः संबोधनं हे वृषण्वसू । कथंभूतं रासभम् । अग्निं भरन्तम् अग्निं संहरन्तम् । अस्मयुम् अस्मान्कामयमानम् । अस्मत्प्रेषितमिति श्रुतिः । युंजाथामिति संबन्धः ॥ १३ ॥

**म०** गर्दभदेवत्या गायत्री कुश्रिदृष्टा । गर्दभं मन्त्रयते । अध्वर्युयजमानावुच्येते । वृषा सेक्ता, गर्दभो वसु धनं ययोस्तौ वृषण्वसू । वर्षतीति वृषा 'कनिन्यु–' ( उण० १।१५५ ) इत्यादिना वर्षतेरौणादिकः कनिन्प्रत्ययः । यद्वा यागनिष्पादनद्वारा वृषं फलाभिवर्षकं वसु धनं ययोस्तौ । नलोपाभाव आर्षः । तयोः संबोधनं हे वृषण्वसू अध्वर्युयजमानौ यजमानदम्पती वा । युवं युवां रासभं गर्दभं युञ्जाथां बध्नीतम् । युजेर्लोटि आत्मनेपदे मध्यमद्विवचनं युञ्जाथामिति । क्व । अस्मिन् यामे अस्मिन्नग्निकर्मणि । यद्वा यामो मृद्वहनरूपो नियमविशेषस्तस्मिन्निमित्तभूते सति । कीदृशं रासभम् । अग्निं भरन्तं वोढुं समर्थमित्यर्थः । तथा अस्मयुमस्मान्कामयमानमस्मद्धितैषिणमित्यर्थः । 'इदंयुरिदंकामयमानः' ( निरु० ६ । ३१ ) इति यास्कः । अस्मानिच्छतीत्यस्मयुः । 'सुप आत्मनः क्यच्' (पा० ३ । १ । ८ ) इति क्यच्प्रत्ययः । अस्मदष्टेरत्वं छान्दसम् 'क्याच्छन्दसि' ( पा० ३ । २ । १७० ) इति उप्रत्ययः ॥ १३ ॥

## चतुर्दशी ।

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥ १४ ॥

**उ०** अजमभिमन्त्रयते । योगेयोगे । गायत्री । योगे योगे तवस्तरम् । तव इति बलनाम कर्मणिकर्मणि बलिनमुत्साहवन्तमेतमजम् । वाजेवाजे हवामहे । अन्ने अन्ने दातव्ये देवानां मनुष्याणां चाह्वयामः । हे सखायः ऋत्विग्यजमानाः । इन्द्रम् इन्द्रियवन्तं वीर्यवन्तम् । ऊतये अवनाय । आह्वयाम इति संबन्धः ॥ १४ ॥

**म०** अजदेवत्या गायत्री शुनःशेपदृष्टा । अजं मन्त्रयते । सखायः परस्परसख्यं प्राप्ता ऋत्विग्यजमानाः, वयमिन्द्रमिन्द्रियवन्तं वीर्यवन्तमिन्द्रियप्रदं वा अजमूतये अवनाय रक्षणाय हवामहे आह्वयामः । ह्वः शपि संप्रसारणम् । क्व सति । वाजेवाजे तत्तदन्ने मनुष्याणां देवानां च दातव्ये सति तत्तदन्नप्राप्तिनिमित्तं वा । किंभूतमजम् । योगेयोगे तवस्तरं युज्यतेऽनुष्ठीयत इति योगः कर्म तस्मिन् । तत्तत्कर्मणि तवस्तरं बलवत्तरमुत्साहवन्तम् । तव इति बलनाम । तवो बलमस्यास्तीति तवस्वी 'अस्माया–' ( पा० ५ । २ । १२१ ) इत्यादिना विन् । अत्यन्तं तवस्वी तवस्तरस्तम् । अतिशये तरप् 'विन्मतोर्लुक्' ( पा० ५ । ३ । ६५ ) इति तरपि विनो लुक् ॥ १४ ॥

## पञ्चदशी ।

प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यं मयोभूरेहि । उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सह ॥ १५ ॥

**उ०** अश्वरासभावुक्रामयति । प्रतूर्वन्नेहि । विराड्रूपा यजुर्गर्भा । उर्वन्तरिक्षं वीहीति यजुः । अर्धर्चेनाश्वः स्तूयते । प्रतूर्वन् प्रत्वरमाण एहि आगच्छ । अवक्रामन् अशस्तीः पादैः

रवष्टभ्य अशस्तीः। पाप्मनो दुष्टान् अगमने को गुण इति चेत्। रुद्रस्य भगवतो गाणपत्यम् गणपतित्वं लप्स्यस इति शेषः। अतो मयोभूः सुखस्य भावयिता भूत्वा एहि। रासभमुत्क्रामयति। उर्वन्तरिक्षं वीहि। उरु विस्तीर्णमन्तरिक्षं रक्षोभिरनाकुलितं वि इहि विविधमागच्छ। स्वस्तिगव्यूतिः स्वस्तीत्यविनाशनाम। गव्यूतिर्मार्गः भयवर्जितः। प्रभूतयवसोदकमार्गः सन् त्वम् अभयानि कृण्वन् कुर्वन् ऋत्विग्यजमानानाम्। पूष्णा पृथिव्या सयुजा समानयोगिन्या सह। सहेति 'नैकोऽध्वानं प्रपद्येत' इत्येतद्दर्शयति॥ १५॥

**म०** 'अनुपस्पृशन्नुत्क्रामयत्येनान् प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति' (का० १६।२।११)। स्पर्शमकुर्वन्नश्वादीन्भयं दर्शयन्प्राचो गमयति। विराड्रूपा त्रिष्टुप् यजुर्मध्या। उर्वन्तरिक्षं वीहीत्येतावद्यजुः। त्रय एकादशाक्षराश्चतुर्थोऽष्टाक्षरः पादो यस्याः सा विराड्रूपा। अत्र द्वितीयो द्वादशार्णस्तेनैकाधिका। ऋचो मध्ये यजुः। अस्याः पूर्वार्धस्याश्वो देवता। हे अश्व, त्वमेहि आगच्छ। किं कुर्वन्। प्रतूर्वन् तूर्वतिर्वधकर्मा। शत्रून् हिंसन्। अशस्तीः भ्रातृव्यैः क्रियमाणा अपकीर्तीरवक्रामन् पादैरवष्टम्भयन्निवारयन्नित्यर्थः। आगमने को गुण इति चेत्। मयोभूः मयः सुखं भावयतीति मयोभूः अस्माकं सुखं भावयन् सन् रुद्रस्य क्रूरदेवस्य गणवतो गाणपत्यं गणपतित्वमेहि आ समन्तात् प्राप्नुहि। अत्रागमने गणपतित्वं लप्स्यस इति भावः। उर्वन्तरिक्षम् यजुःसहितोत्तरार्धस्य रासभोत्क्रमणे विनियोगः। हे गर्दभ, अभयानि कृण्वन् ऋत्विग्यजमानानां व्याघ्रादिभ्यो भयपरिहारं कुर्वन् सयुजा समानयोगिन्या पूष्णा पृथिव्या सह उरु विस्तीर्णमन्तरिक्षं वीहि विशेषेण प्राप्नुहि। 'इयं वै पृथिवी पूषा' (६।३।२।८) इति श्रुतेः। सह युङ्क्ते सा सयुक् तया। किंभूतस्त्वम्। स्वस्तिगव्यूतिः। स्वस्तीत्यविनाशनाम। स्वस्ति विनाशरहितो गव्यूतिर्मार्गो यस्य। भयवर्जितप्रभूतयवसोदकमार्गः सन्नागच्छेत्यर्थः। 'नैकोऽध्वानं प्रपद्येत' इति न्यायात्पूष्णा सहेत्युक्तिः॥१५॥

## षोडशी।

पृ॒थि॒व्याः स॒धस्था॑द॒ग्निं पु॑री॒ष्य॑मङ्गिर॒स्वदाभ॑रा॒ग्निं पु॑री॒ष्य॑मङ्गिर॒स्वदच्छे॑मा॒ग्निं पु॑री॒ष्य॑मङ्गिर॒स्वद्भ॑रिष्यामः॥ १६॥

**उ०** अजमुत्क्रामयति। पृथिव्याः सधस्थात् पृथिव्याः सहस्थानात्। अग्निम् व्याख्यातम्। ब्रह्माध्वर्युयजमाना गच्छन्ति। अग्निं पुरीष्यम् 'अच्छाभेराप्तुमिति शाकपूणिः'। अग्निं पशव्यम् अङ्गिरा इव अभिगच्छामः। यद्वा आप्तुं गच्छामः अनद्धा पुरुषमीक्षते। अग्निं पशव्यम् अङ्गिरा इव संभरिष्यामः॥ १६॥

**म०** अजोत्क्रमणे विनियोगः। यजुः। आसुरी गायत्री आग्नेयी। हे अग्ने, पृथिव्याः भूमेः सधस्थात्सहस्थानात् पुरीष्यं पशव्यमग्निमङ्गिरस्वदङ्गिरस इवाभर आहर। 'अग्निषु प्रज्वलत्सु पिण्डं गच्छन्त्यग्निं पुरीष्यमिति' (का० १६।३।१२)। त्रिषु अग्निषु दीप्यमानेषु ब्रह्मयजमानाध्वर्यवश्चतुष्कोणश्वभ्रस्थं मृत्तिकापिण्डं प्रति गच्छन्त्यश्वगर्दभाजा अपीति सूत्रार्थः। सामगायत्री छन्दः। पुरीष्यं पशव्यमग्निमङ्गिरस इव वयमच्छेम अच्छ अभिमुखमिमः गच्छामः। 'अच्छाभेराप्तुमिति शाकपूणिः' (निरु० ५।२८) इति यास्कः। 'अनद्धा पुरुषमीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति' (का० १६।२.।१४) देवपितृमनुष्याणां निष्प्रयोजनोऽनद्धा पुरुषस्तं पश्यतीति सूत्रार्थः। आग्नेयं यजुः। आसुर्यनुष्टुप्। पशव्यमग्निमङ्गिरस इव वयं भरिष्यामः संपादयिष्यामः॥१६॥

## सप्तदशी।

अन्व॒ग्निरु॒षसा॒मग्र॑मख्य॒दन्वहा॑नि प्रथ॒मो जा॒तवे॑दाः। अनु॒ सूर्य॑स्य पुरु॒त्रा च॑ र॒श्मीननु॒ द्यावा॑पृथि॒वी आत॑तन्थ॥ १७॥

**उ०** वल्मीकवपामादाय छिद्रेण पिण्डमीक्षते। अन्वग्निः आग्नेयी त्रिष्टुप्। प्रजापतिरूपेणात्राग्निः स्तूयते। उषसामग्रम् अनु योऽग्निः अख्यत्। 'ख्या प्रकथने'। प्रकथितः। उषसामग्रमादित्यं योऽग्निर्दीप्यत इत्यर्थः। यश्च अहान्यनुदीप्यते। प्रथमः आद्यः जातवेदाः जातप्रज्ञानः। अनुसूर्यस्य पुरुत्रा च रश्मीन्। यश्च सूर्यस्य रश्मीन् अनु पुरुत्रा बहुधा दीप्यते। अनुद्यावापृथिवी आततन्थ। यश्च द्यावापृथिव्यावनु स्वकीयं रश्मिजालम् आततन्थ आतनोति। 'बभूथाततन्थ–' इति छन्दसि निपात्यते। तमग्निं पश्याम इति शेषः॥ १७॥

**म०** 'वल्मीकवपामादाय छिद्रेण पिण्डमीक्षतेऽन्वग्निरिति' (का० १६।२।१५)। वल्मीकस्य योऽवयव उन्नतत्वेनाभिवृद्धः सा वल्मीकवपा पिण्डाहवनीयान्तराले स्थापितास्ति तां गृहीत्वा तत्स्थाने स्थित्वा तच्छिद्रेण पिण्डं पश्यतीति सूत्रार्थः। अग्निदेवत्या त्रिष्टुप्पुरोधोदृष्टा प्रथमस्य व्यूहनम्। अग्निरुषामुषःकालानामग्रमुपक्रममन्वख्यत् अनुक्रमेण प्रकाशितवान्। जातं जातं वेत्ति वेदयति वा जातवेदाः अयमग्निः प्रथमः मुख्यः सन् अहानि दिनानि अन्वख्यत्। किंच सूर्यस्य रश्मीन् किरणान् पुरुत्रा बहुधा अन्वख्यत्। किंच द्यावापृथिवी उभे अपि अनुक्रमेण आततन्थ आतेनिथ आततान सर्वतो व्याप्तवान्। 'व्यत्ययो बहुलम्' (पा० ३।१।८५) इति पुरुषव्यत्ययः 'बभूथाततन्थ–' (पा० ७।२।६४) इत्यादिना निपातः। सर्वप्रकाशको लोकस्रष्टा योऽग्निस्तं पश्याम इति शेषः॥ १७॥

## अष्टादशी।

आ॒गत्य॑ वा॒ज्यध्वा॑नꣳ॒ सर्वा॒ मृधो॒ विधू॑नुते। अ॒ग्निꣳ स॒धस्थे॑ मह॒ति चक्षु॑षा॒ निचि॑कीषते॥१८॥

उ० अश्वमभिमन्त्रयते । आगत्य वाजी । अनुष्टुप् । आगत्य आगम्य वाजी वेजनवानश्वः अध्वानम् पन्थानं सर्वा मृधः सर्वान्संग्रामान् पाप्मनः श्रमान् विधूनुते अपनयति । 'तस्मादु-हैतदश्वस्य त्वा विधूनुते' इति श्रुतिः । ततो गतश्रमः सन् अग्निं सधस्थे सहस्थाने पृथिव्या वर्तमानम् । महति उत्कृष्ट-प्रदेशे प्रवर्तमानम् चक्षुषा निचिकीषते पश्यति । छान्दसोयं धातुः पश्यत्यर्थः ॥ १८ ॥

म० 'आगत्येत्यभिमन्त्रयतेऽश्वमिति' (का० १६।२।१७)। मृत्पिण्डान्ते तिष्ठन्नश्वमभिमन्त्रयते । अश्वदेवत्यानुष्टुब्यमयोभू-दृष्टा । वाजी वेगवानयमश्वः अध्वानं मार्गमागत्य प्राप्य सर्वा मृधः सर्वान् संग्रामान् पाप्मनः श्रमान् विधूनुते विविधं कम्प-यति । अपनयतीत्यर्थः । ततो विगतश्रमः सन् महति उत्कृष्टे सधस्थे सहस्थाने पृथिव्यां वर्तमानमग्निमग्निहेतुं मृदं चक्षुषा निचिकीषते पश्यति । पश्यत्यर्थश्छान्दसोऽयं धातुः ॥ १८ ॥

## एकोनविंशी ।

आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं व-यम् ॥ १९ ॥

उ० अश्वेन पिण्डमधिष्ठापयति । आक्रम्य वाजिन् । अनु-ष्टुप् । आक्रम्य अवष्टभ्य । हे वाजिन्नश्व, पृथिवीम् अग्निमिच्छ अग्नेरन्वेषणं कुरु । 'रुचिर् दीप्तौ' क्विप् । दीप्त्या सह । यद्वा नि-मित्तभूतयान्वेषय त्वम् । किंच भूम्या वृत्वाय । 'वृतु वर्तने' । क्त्वा क्त्वो यमे स्पर्शनार्थे वृत्तिः । भूमेः तत्प्रदेशं स्पर्शयित्वा नः अस्माकं ब्रूहि कथय । यतः यस्मात् प्रदेशात् खनेम तमग्निं वयम् ॥ १९ ॥

म० 'आक्रम्येत्येतेन मृत्पिण्डमधिष्ठापयतीति' ( का० १६।२।१८ )। एतेनाश्वेन गर्तस्थं मृत्पिण्डमधिष्ठापयति क्रमयति मृत्पिण्डोपर्यश्वस्य सव्यं पदं स्थापयतीत्यर्थः सूत्रस्य । अश्वदेवत्यानुष्टुप् हे वाजिन् अश्व, पृथिवीं भूमिमाक्रम्याधि-ष्ठाय पादस्पर्शेन परीक्ष्य रुचा दीप्त्या कृत्वा त्वमग्निमिच्छ अग्ने-रन्वेषणं कुरु । अग्निहेतुं मृदं निश्चिन्वित्यर्थः । किंच भूम्या वृत्वाय 'वृतु वर्तने' क्त्वाप्रत्ययः । क्त्वो यक् अत्र स्पर्शनार्थः धातूनामनेकार्थत्वात् । भूमेः प्रदेशं स्पृष्ट्वा नोऽस्माकं त्वं ब्रूहि अयं प्रदेशो अग्निहेतुमृद्योग्य इति कथय । यतो यस्मात् प्रदे-शाद्वयं तमग्निं खनेन खननेन संपादयाम । यद्वा यतः प्रदेशा-त्तादृशी मृत्प्राप्यते तं प्रदेशं वयं खनेम विदारयाम ॥ १९ ॥

## विंशी ।

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः । विख्याय चक्षुषा त्वमभि तिष्ठ पृतन्यतः ॥ २० ॥

उ० अश्वं स्तौति पृष्ठस्योपरि पाणिं धारयन् । द्यौस्ते पृष्ठम् । बृहती । यस्य तव द्यौः पृष्ठं । पृथिवी च सधस्थं सहस्थानं पादौ । आत्मान्तरिक्षम् । समुद्र उदकं योनिरुत्पत्ति-स्थानम् । तं त्वामेवंप्रभावं ब्रूमः । विख्याय चक्षुषा निरीक्ष्य चक्षुषा । त्वम् अभितिष्ठ पादैः । पृतन्यतः पृतनां संग्रामं ये कर्तुमिच्छन्ति ते पृतन्यन्तः तान् पृतन्यतः पुरुषान् ॥ २० ॥

म० 'द्यौस्त इति पृष्ठस्योपरि पाणिं धारयन्ननुपस्पृशन्निति' ( का० १६।२।१९ )। पिण्डोपरि पदं दधतमश्वमस्पृशंस्ति-ष्ठन्नध्वर्युर्दक्षिणकरमश्वपृष्ठे धारयन् मन्त्रं पठतीति सूत्रार्थः । आर्षी बृहती अश्वदेवत्या । हे अश्व, द्यौः द्युलोकस्ते तव पृष्ठं । पृथिवी भूलोकस्तव सधस्थं सहस्थानं । पादौ अन्तरिक्षमन्तरिक्ष-लोकस्तवात्मा शरीरान्तवर्ती जीवात्मा । समुद्र उदकं तव योनिः उत्पत्तिस्थानम् । 'अप्सु योनिर्वा अश्वः' इति श्रुतेः । एवं स्तूय-मानस्त्वं चक्षुषा विख्याय उखायोग्यां मृदं विलोक्य पृतन्यतः संग्रामं कर्तुमिच्छतः शत्रून् राक्षसादींस्तस्यां मृदि गूढं स्थितान-भितिष्ठ पादैराक्रम्य विनाशय । पृतनामिच्छन्ति 'सुप आत्मनः क्यच्' (पा० ३।१।८) 'कव्यध्वरपृतनस्यर्चि लोपः' ( पा० ७।४।३९ ) इति क्यचि परे पृतनाशब्दस्यान्तलोपः ततः शतृप्रत्ययः ॥ २० ॥

## एकविंशी ।

उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन् । वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥ २१ ॥

उ० अश्वमुत्क्रमयति । उत्क्राम । त्रिष्टुप् विराड् वा । उत्क्राम उद्गच्छ । महते सौभगाय ऐश्वर्याय । भगशब्द ऐश्वर्यवचनः । अस्मादास्थानात् अस्मादधिष्ठानात् यत्र त्वं ति-ष्ठसि । द्रविणं धनं ददातीति द्रविणोदाः यस्त्वं द्रविणोदाः हे वाजिन् । किंच उत्क्रान्ते त्वयि वयं स्याम भवेम । सुमतौ । पृथिव्याः शोभनायां मतौ पृथिव्याः । अग्निं खनन्तः अग्न्यर्थं पिण्डं खनन्तः । उपस्थे उत्सङ्गे अस्याः पृथिव्याः ॥ २१ ॥

म० 'उत्क्रामेत्युत्क्रमयतीति' ( का० १६।२।१९ )। मृत्पिण्डादश्वमुत्तारयतीत्यर्थः । विराडश्वदेवत्या दशार्णचतुष्पादा विराट् पङ्क्तिः । द्वितीय एकादशस्तेनैकाधिका । हे वाजिन्, महते सौभगाय महाभाग्याभिवृद्धयेऽस्मात् आस्थानात् खनन-प्रदेशाद् यत्र त्वं तिष्ठसि तस्मादुत्क्राम । भगशब्द ऐश्वर्यवाची । शोभनं भगमैश्वर्यं यस्य स सुभगस्तस्य भावः सौभगं तस्मै । कीदृशस्त्वम् । द्रविणोदाः द्रविणो धनं ददातीति द्रविणसुशब्दः सान्तः । त्वयि उत्क्रान्ते वयं पृथिव्याः भूमेः सुमतौ शोभन-मतौ सानुग्रहे चित्ते स्याम भवेम । कीदृशा वयम् । अस्याः पृथिव्या उपस्थे उत्सङ्गे उपरिभागे अग्निमन्त्यर्थं मृत्पिण्डं खनन्तः खनितुमुद्योगं कुर्वन्तः ॥ २१ ॥

## द्वाविंशी।

उदक्रमीद्द्रविणोदा वाज्यर्वाकः सुलोकꣳसुकृतं पृथिव्याम्। ततः खनेम सुप्रतीकमग्निꣳस्वोरुहाणा अधि नाकमुत्तमम्॥ २२॥

उ० अथैनमश्वमुत्क्रान्तमभिमन्त्रयते। उदक्रमीत् त्रिष्टुप्। यतः प्रदेशादुदक्रमीत् उत्क्रान्तवान्। द्रविणोदा द्रविणस्य धनस्य दाता। वाजी वेजनवानश्वः। अर्वा अरणशीलः चञ्चल इत्यर्थः। अकः कृतवान्। सुलोकं शोभनं लोकं स्थानम्। सुकृतं पृथिव्याम्। ततः तस्मात्प्रदेशात् खनेम। सुप्रतीकम् सुखं प्रतीकम्। सुसुखमग्निम् स्वोरुहाणाः स्वर्गं लोकमारोहन्तः। अधि। अधीत्युपरिभावमैश्वर्यं वा। नाकम्। कमिति सुखनाम। न अकमसुखं यत्र गतानां भवति स नाको लोकः। उत्तममुत्कृष्टम्। इत्थंभूतस्य लोकस्य प्राप्तये एतत्कर्म कुर्म इत्यभिप्रायः॥ २२॥

म० 'उदक्रमीदित्यभिमन्त्रयते' ( का० १६। २। २० )। पिण्डादुत्तारिताश्वं मन्त्रयते। आश्वी त्रिष्टुप्। अर्वा अरणशीलः चञ्चलो द्रविणोदाः धनदाता वाजी अश्वः यत्प्रदेशादुदक्रमीत् उत्क्रान्तवान् पृथिव्यां तं सुलोकं शोभनं लोकं प्रदेशं सुकृतं पुण्यवन्तमकः कृतवान् करोतेर्लङि 'बहुलं छन्दसि' ( पा० २। ४। ७३ ) इति शपो लुकि गुणे तिलोपे रूपम्। ततः प्रदेशाद्वयमग्निमग्निहेतुं मृदं खनेम। कीदृशमग्निम्। सुप्रतीकं शोभनं प्रतीकं मुखं यस्य तम्। कीदृशा वयम्। स्वः स्वर्गमधिरुहाणा अधिरोहन्तः अधिरोहणकामा एतत्कर्म कुर्म इति भावः। अधीत्युपरिभावे ऐश्वर्ये वा। किंभूतम् स्वः। नाकं नास्त्यकं यत्र तं कं सुखमकं दुःखं तद्रहितं तथा उत्तममुत्कृष्टम्॥ २२॥

## त्रयोविंशी।

का त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा। पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम्॥ २३॥

उ० मृदमभिजुहोति। आत्वा जिघर्मि। त्रिष्टुभावाग्नेय्यौ। 'घृ क्षरणदीप्त्योः। आजिघर्मि आसिञ्चामि त्वां घृतेन। मनसा श्रद्धाप्रोत्कण्ठितेन। प्रतिक्षियन्तं भुवनानिविश्वा प्रत्येकशो निवसन्तं भूतानि सर्वाणि। पृथुं तिरश्चा महान्तं तिर्यगञ्चनेन ज्योतिषा। वयसा बृहन्तम् वयसा धूमेन बृहन्तम्। 'इतो वा अयमूर्ध्वं रेतः सिञ्चति धूमं सामुत्र वृष्टिर्भवति'इत्येतदभिप्रायम्। व्यचिष्ठं व्यञ्चनवन्तम्। अवकाशवन्तं अन्नै रभसम्। 'रभ राभस्ये। अन्नैर्घृतादिभिः क्षिप्तैरुत्साहवन्तम्। बहुभिरप्यन्नैः क्षिप्तैर्नास्य शक्तिपरिहाणं भवतीत्येतदभिप्रायः। दृशानं दर्शनीयं दृश्यमानं वा। अदृष्टा अन्या देवता अयं तु दृश्य इति॥ २३॥

म० 'उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति व्यतिषक्ताभ्यामृग्भ्यामाहुती स्रुवेणाश्वपदे' (का० १६। २। २२)। अस्यार्थः। आज्यं संस्कृत्य पिण्डसमीपे उपविश्य मृदमभि अश्वपदे मृत्पिण्डोपरिस्थिताश्वपदमुद्रायामा त्वा आ विश्वत इति ऋग्भ्यां व्यतिषक्ताभ्यां स्रुवेणाहुती द्वे जुहोति व्यतिषङ्गश्चैवम्। आत्वा जिघर्मीति पूर्वस्याः पूर्वार्धे मर्यश्रीरित्युत्तरस्या उत्तरार्धं पठित्वैकाहुतिः। आ विश्वत इत्युत्तरस्याः पूर्वार्धे पृथुं तिरश्चेति पूर्वस्या उत्तरार्धं च पठित्वा द्वितीयाहुतिरिति। गृत्समदृष्टे अग्नेय्यौ द्वे त्रिष्टुभौ। हे अग्ने, मनसा श्रद्धायुक्तेन चित्तेन घृतेनाज्येन कृत्वा त्वामाजिघर्मि आसिञ्चामि दीपयामि वा। 'घृ क्षरणदीप्त्योः' ह्वादिः। कीदृशं त्वाम्। विश्वानि भुवनानि प्रतिक्षियन्तं सर्वाणि भूतानि प्रत्येकं निवसन्तं। 'क्षि निवासगत्योः' तुदादिकादस्माच्छतृप्रत्ययः। तिरश्चा पृथुं तिरोऽञ्चतीति तिर्यक् तेन तिर्यगञ्चनेन ज्योतिषा पृथुं विस्तीर्णं वयसा धूमेन बृहन्तं महान्तम्। 'इतो वा अयमूर्ध्वं रेतः सिञ्चति धूमꣳ सामुत्र वृष्टिर्भवति' इति श्रुतेः। यद्वा तिरश्चा तिर्यक्प्रमाणेन पृथुं विस्तृतमिति बहुदेशव्याप्तिः। वयसा वयउपलक्षितेन कालेन। बृहन्तमिति बहुकालव्याप्तिः। देशकालानवच्छिन्नमित्यर्थः। तथा व्यचिष्ठं व्यचनं व्यचोऽवकाशः सोऽस्यास्तीति व्यचवान् अतिशयेन व्यचवान् व्यचिष्ठः। 'अतिशायने तमबिष्ठनौ' ( पा० ५। ३। ५५ ) इतीष्ठन् 'विन्मतोर्लुक्' ( पा० ५। ३। ६५ ) इतीष्ठनि परे मतुपो लुक्। अन्नैः रभसं 'रभ राभस्ये' घृताद्यन्नैः सोत्साहम् अनेकान्नैर्हुतैरप्यस्य शक्तिक्षयो नास्तीति भावः। तथा दृशानं दर्शनीयं दृश्यमानं वा। अन्ये देवा अदृश्या अयं तु दृश्यत इति भावः। दृशेः शानन्प्रत्ययः॥ २३॥

## चतुर्विंशी।

आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत। मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः॥ २४॥

उ० आ विश्वतः आजिघर्मि आसिञ्चामि त्वां विश्वतः प्रत्यञ्चं सर्वतः प्रतिगतं महाभागेन। यतः अरक्षसा मनसा तज्जुषेत अक्रुध्यमानेन प्रसन्नेन मनसा तद्धविर्जुषेत भक्षयतां। यस्त्वं मर्यश्रीः मर्यैर्मनुष्यैराश्रयणीयः। स्पृहयद्वर्णः स्पृहणीयवर्णश्च। अग्निरिति साभिप्रायम् 'अग्निर्वै देवानां मृदुहृदयतमः' इत्यादि गुणख्यापनार्थम्। नाभिमृशे तन्वा जर्भुराणः। नचाभिमर्शनाय भवति तन्वा शरीरेण ज्वालालक्षणेन जर्भुराणः। 'जभजृभी गात्रविनामे' इतश्चेतश्च गच्छन्॥ २४॥

म० अहमग्निमाजिघर्मि समन्तात्सिञ्चामि दीपयामि च। किंभूतम्। विश्वतः प्रत्यञ्चं सर्वतः प्रत्यगात्मतया प्रतीयमानम्। सोऽग्निररक्षसा क्रौर्यरहितेन अक्रुध्यमानेन प्रसन्नेन मनसा

चित्तेन तत् घृतं जुषेत जुषतां सेवताम् । प्रार्थनायां लिङ् । कीदृशोऽग्निः । मर्यश्रीः मर्यैर्मनुष्यैः श्रीयते आश्रीयते सेव्यते इति मर्यश्रीः मनुष्यैराश्रयणीयः । स्पृहयद्वर्णः स्पृहयन् स्पृहणीयो वर्णो रूपं यस्य । यजमानैः स्पृहणीयरूप इत्यर्थः । अभिमृश्यत इत्यभिमृट् न अभिमृश्यते नाभिमृट् तस्मै नाभिमृशे । चतुर्थी तृतीयार्थे । तनोर्विशेषणं नाभिमृशा अभिमर्शनं कर्तुमयोग्यया दाहकत्वात् ईदृश्या तन्वा शरीरेण ज्वालालक्षणेन जर्भुराणः जृम्भत इति जर्भुराणः 'जभिजृभी गात्रविनामे' इतस्ततश्च गच्छन् जृम्भेरौणादिक उराणप्रत्ययः । ईदृशमग्निमाजिघर्मीति योज्यम् ॥ २४ ॥

## पञ्चविंशी ।

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ २५ ॥

उ० परिलिखति । तिसृभिराग्नेयीभिर्गायत्र्यनुष्टुब्जगतीभिः परि । वाजपतिः अग्निः । नानादेवत्यान्यपि हव्यानि हवींषि परि अक्रमीत् । परिक्रमणं भक्षणार्थम् । वाजपतिः अन्नस्य पतिः । कविः क्रान्तदर्शनः । किं कुर्वन्हवींष्यक्रमीत् । दधत् ददत् । रत्नानि रमणीयानि धनानि । दाशुषे हवींषि दत्तवते यजमानाय ॥ २५ ॥

म० 'अभ्र्या पिण्डं त्रिः परिलिखति परिवाजपतिरिति बहिर्वहिरुत्तरयोत्तरयेति' ( का० १६ । २ । २३ ) । अस्यार्थः । अभ्र्या वारत्रयं मृत्पिण्डं परिलिखति परया परया बहिर्बहिःप्रदेशे यथा तथा । परि वाजपतिरिति प्रथमं लिखति परिलेति तद्बहिर्द्वितीयं त्वमग्न इति तद्बहिस्तृतीयमित्यर्थः । आग्नेयी गायत्री सोमकदृष्टा । अयमग्निर्हव्यानि नानादेवत्यानि हवींषि पर्यक्रमीत् परिक्रान्तवान् । परिक्रमणं भक्षणार्थं स्वीकरणमित्यर्थः । कीदृशोऽग्निः । वाजपतिः वाजस्यान्नस्य पतिः पालयिता । कविः क्रान्तदर्शनः । किं कुर्वन् हव्यानि पर्यक्रमीत् । दाशुषे हवींषि दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन् । 'दाश्य दाने' अस्य धातोः 'दाश्वान्साह्वान्–' ( पा० ६ । १ । १२ ) इत्यादिना क्वसुप्रत्ययान्तो निपातः । दाशति दत्ते स्म इति दाश्वान् तस्मै दाशुषे । दधाति दत्त इति दधत् धाधातुर्दानेऽपि । 'डुधाञ् विधारणे पुष्टौ दान' इति कल्पद्रुमोक्तेः ॥ २५ ॥

## षड्विंशी ।

परि त्वाग्ने पुरं वयं विप्रꣳसहस्य धीमहि । धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ २६ ॥

उ० परि त्वाग्ने । परीत्यस्योपसर्गस्य धीमहीत्यनेन संबन्धः ध्यायतिरयम् संप्रसारणं तु छान्दसम् । परि सर्वतो ध्यायामः त्वा त्वाम् हे अग्ने, पुरं पुररूपेणावस्थितम् । अग्निः सहस्यो हि पुरोरक्षको भवति । वयं विप्रं मेधाविनं ब्राह्मणजातिं वा हे सहस्य । सहसि बले भवः सहस्योऽग्निः । स हि बलेन मथ्यमानो जायते तस्य संबोधनं हे सहस्य, धृषद्वर्णं प्रसहनरूपम् दिवेदिवे अहन्यहनि । हन्तारं बाधितारम् । भङ्गुरावताम् भङ्गुरमनवस्थितं मनो येषां ते भङ्गुरावन्तः तेषां भङ्गुरावताम् । अनवस्थितचित्तवृत्तीनामित्यर्थः ॥ २६ ॥

म० आग्नेय्यनुष्टुप्यायुदृष्टा परीत्युपसर्गस्य धीमहीत्यनेन संबन्धः । सहस्य सहसि बले भवः सहस्यः बलेन मथ्यमानस्य जायमानत्वात्तत्संबोधनं हे सहस्य हे अग्ने, वयं त्वा त्वां परिधीमहि सर्वतो ध्यायामः । ध्यायतेः संप्रसारणं छान्दसमित्युक्तम् । कीदृशं त्वाम् । पुरं पुरीरूपेण स्थितम् आग्नेय्यादिपुराणां रक्षकत्वात्, यद्वा पिपर्ति पालयतीति पूस्तम् । 'पृ पालनपूरणयोः' क्विप् 'उदोष्ठ्यपूर्वस्य' ( पा० ७ । १ । १०२ ) इति उदादेशे पूरिति रूपम् । तथा विप्रं मेधाविनं ब्राह्मणजातिं वा । धृषद्वर्णं 'ञिधृषा प्रागल्भ्ये' अतो व्यत्ययेन तौदादिकाच्छतृप्रत्ययः । धृष्णोतीति धृषन् प्रगल्भो वर्णो यस्य तम् । असह्यरूपमित्यर्थः । दिवेदिवे प्रतिदिनं भङ्गुरावतां हन्तारं भङ्गुरं भञ्जनीयं पापं तद्येषामस्ति ते भङ्गुरवन्तो विघातका राक्षसादयः । यद्वा भङ्गुरमनवस्थितं मनो येषां ते भङ्गुरावन्तोऽनवस्थितचित्तवृत्तयस्तेषां विनाशयितारम् । भङ्गुरावतामिति संहितायां दीर्घः॥२६॥

## सप्तविंशी ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ २७ ॥

उ० त्वमग्ने हे भगवन्नग्ने, त्वं द्युभिरहोभिर्निमित्तभूतैर्मथ्यमानो जायसे । त्वमेव आशुशुक्षणिः आशु शीघ्रं शुचा दीप्त्या क्षिणोति हिनस्ति सनोति संभजते वा आशुशुक्षणिरुच्यते । त्वं अद्भ्यश्च विद्युदात्मना जायसे । त्वमश्मनः पाषाणात्परिजायसे । त्वं वनेभ्यः अरणिकाष्ठेभ्यो जायसे । त्वमोषधीभ्यो वंशादिभ्यो जायसे । त्वं नृणां मनुष्याणामग्निहोत्रिणां जायसे । तदुक्तम् 'पुत्रो ह्येष सन्स पुनः पिता भवति' इति । हे नृपते नृणां पालयितः । शुचिर्निर्षिक्तपाप्मा । अथापरो व्याख्यामार्गः । आशुशुक्षणिशब्दस्य पञ्चम्यर्थे प्रथमा । तथाच वाक्यस्य संयोगः । आ उपसर्गपूर्वः शोचतिः सन्नन्तः । आशुशुक्षणेः आदिदीपयिषोर्जायसे । योपि ग्रहं खलं वा निर्मथ्य दीपयति तस्यापि त्वं जायसे । सर्वेषामनुग्रहे प्रवृत्तो हि त्वमित्यभिप्रायः । त्वमग्ने द्युभिर्जायसे त्वमादिदीपयिषोर्जायसे । एवं त्वमद्भ्यः अश्मनः वनेभ्यः ओषधीभ्यः नृणां पुत्रत्वेन नृपते जायसे । शुचिर्दीप्त इति योजना ॥ २७ ॥

म० आग्नेयी त्रिष्टुब् गृत्समददृष्टा प्रथमान्त्यावेकादशार्णौ

द्वितीयतृतीयौ दशार्णौ पादौ यदा तदा पङ्क्तिरेव । तृतीयचतुर्थौ दशार्णौ यदा तदा विराट्स्थाना त्रिष्टुप् द्वौ वा वैराजौ नवकत्रैष्टुभश्च विराट्स्थानेत्युक्तेः । अथ मन्त्रार्थः । हे नृपते नृणां पालक हे अग्ने, त्वं द्युभिरहोभिर्निमित्तभूतैर्मथ्यमानो जायसे । प्रतिदिनं मथ्यस इत्यर्थः । यद्वा द्युभिः स्वर्गैः निमित्तभूतैस्तत्र तत्र यागशालासु जायसे । त्वमाशुशुक्षणिः आर्द्रां भूमिं शीघ्रमेव शोषयित्वा, यद्वा आशु क्षिप्रं शुचा दीप्त्या क्षणोति हन्ति तमः सनोति संभजते वा आशुशुक्षणिः । त्वमद्भ्यो वर्षधाराभ्यो विद्युदात्मना जायसे त्वमश्मनः परि पाषाणस्योपरि पाषाणान्तरसङ्घट्टनेन जायसे त्वं वनस्पतिभ्योऽरणिकाष्ठेभ्यो जायसे । त्वमोषधिभ्यो वंशादिभ्यो जायसे वंशद्वयसङ्घर्षणेन । त्वं नृणां मनुष्याणामग्निहोत्रिणां गृहे जायसे । 'पुत्रो ह्येष सन् स पुनः पिता भवति'इति श्रुतेः । किंभूतस्त्वम् । शुचिः शुद्धिहेतुः । 'पुनः पाकान्महीमयम्'इति स्मृतेः ॥ २७ ॥

## अष्टाविंशी ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामि । ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम् । शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामः २८

**उ०** खनति । देवस्य त्वा । व्याख्यातम् । पृथिव्याः सहस्थानात् अग्निं पशव्यम् अङ्गिरसा तुल्यं खनामि । ज्योतिष्मन्तं ज्योतिषा संयुक्तं त्वां हि अग्ने, सुप्रतीकं सुमुखम् अजस्रेण अनुपक्षीणेन भानुना दीप्त्या दीद्यतं दीप्यमानम् शिवं प्रजाभ्यः शान्तं प्रजाभ्यः अहिंसन्तं प्राणिनः पृथिव्याः सहस्थानादपि । अग्निं पशव्यम् अङ्गिरसा तुल्यं खनामः २८

**म०** अभ्र्या पिण्डं खनति देवस्य त्वेति' ( का० १६ । २ । २३ ) अभ्र्या कृत्वा पिण्डं परितः खनति कण्डिकया । देवस्य त्वा व्याख्यातम् । पृथिव्याः आग्नेयं यजुः अत्यष्टिच्छन्दः । अहं पृथिव्याः सधस्थादुपरिप्रदेशात् पुरीष्यं पशव्यमग्निमङ्गिरस इव खनामि । कीदृशमग्निम् । ज्योतिष्मन्तं ज्वालायुक्तम् । हे अग्ने, ईदृशं त्वां पृथिव्याः सहस्थानात् अङ्गिरस इव वयं खनामः । कीदृशम् । सुप्रतीकं सुमुखम् । अजस्रेणानुपक्षीणेन निरन्तरं वर्तमानेन भानुना रश्मिना दीद्यतं दीप्यमानम् । छान्दसो धातुः । प्रजाभ्यः प्रजोपकारार्थं शिवं शान्तमत एवाहिंसन्तं हिंसामकुर्वन्तम् । पुनरुक्तिरादरार्था ॥ २८ ॥

## एकोनत्रिंशी ।

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् । वर्धमानो महाँ२ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥ २९ ॥

**उ०** पुष्करपर्णं कृष्णाजिनोपरिष्टात्स्थापयति । अपां पृष्ठम् । स्वराट् पङ्क्तिः । यतः अपांपृष्ठमसि उपर्यवस्थानात् । योनिः स्थानं च अग्नेः अभ्र्यर्थस्य पिण्डस्य । अतस्त्वां ब्रवीमि । समुद्रमभितः पिन्वमानम् । उपपदविभक्तिर्द्वितीया । समुद्रस्योदकस्य इतश्चेतश्च सिञ्चतः । त्वं वर्धमानो महान् भव । आ च पुष्करे आसीद च पुष्करे उदके । स हि तस्य योनिः । आकारः आकृष्य व्याख्यातः । चकारो भिन्नक्रमः । विमार्ष्टि एनं चतुर्थेन पादेन । दिवो मात्रया द्युलोकस्य परिमाणेन । वरिम्णा उरुत्वेन च प्रथस्व वर्धस्व ॥ २९ ॥

**म०** 'कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णमपां पृष्ठमिति' ( का० ६ । २ । २४ ) । अस्यार्थः । मृत्पिण्डोत्तरभागे प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्रापां पृष्ठमिति पादत्रयात्मकमन्त्रेण कमलिनीपत्रमास्तृणाति । पुष्करपर्णदेवत्या स्वराट्पङ्क्तिः । आद्यौ दशकावन्त्यावेकादशकाविति द्व्यक्षराधिका पङ्क्तिः स्वराट्पङ्क्तिः । द्वाभ्यां विराडित्युक्तेः । अथ मन्त्रार्थः । हे पुष्करपर्ण, त्वमपां जलानां पृष्ठमसि उपर्यवस्थानात् । अग्नेः अभ्र्यर्थस्य पिण्डस्य योनिः कारणमसि । समुद्रमभितः उदकस्य परितः पिन्वमानं प्रीतिकरम् । यद्वा पिन्वमानमिति समुद्रविशेषणम् । पिन्वमानं सिञ्चन्तं समुद्रमुदकमभितः वर्धमानं सत् महत् प्रभूतं भवेति शेषः । वर्धमानो महानिति लिङ्गव्यत्ययश्छान्दसः । पुष्करे जले आसीद च । यद्वा पुष्करे आ समन्तात् महत् प्रभूतं सत् वर्धमानं वृद्धियुक्तं त्वमसि । 'विमार्ष्ट्येनद्दिव इति' ( का०१६ । २ । २५ ) । एनत्पुष्करपर्णं विपुलं करोति । हे पुष्करपर्ण, दिवो मात्रया द्युलोकस्य परिमाणेन वरिम्णा उरुत्वेन त्वं प्रथस्व विस्तृतं भव । उरोर्भावो वरिमा तेन 'प्रस्थस्फ–' ( पा० ६ । ४।१५७) इत्यादिना उरोर्वरादेश इमनि ॥ २९ ॥

## त्रिंशी ।

शर्म च स्थो वर्म च स्थोऽच्छिद्रे बहुले उभे । व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम् ॥ ३० ॥

**उ०** उभे कृष्णाजिनपुष्करपर्णे अभिमृशति अनुष्टुभ्याम् । शर्म च स्थः यौ युवां शरणं च भवथः संहननं च । अच्छिद्रे सकले बहुले महाप्राणे च । उभे अपि ते युवां ब्रवीमि । व्यचस्वती अवकाशवती भूत्वा संवसाथाम् आच्छादयतम् । आच्छाद्य च भृतं बिभृतम् । अग्निं पुरीष्यं पशव्यम् ॥ ३० ॥

**म०** 'आलभत उभे शर्म च स्थ इति' ( का० १६ । २ । २६) । ऋग्द्वयेन कृष्णाजिनपुष्करपर्णे सहैव स्पृशेदिति सूत्रार्थः । कृष्णाजिनपुष्करपर्णदेवत्ये द्वे अनुष्टुभौ । हे कृष्णाजिनपुष्करपर्णे, उभे युवां शं च स्थः अग्नेः सुखकारिणी अपि भवथः । वर्म च स्थः कवचवद्रक्षके अपि भवथः । चौ समुच्चये । कीदृशे युवाम् । अच्छिद्रे छिद्ररहिते सकले बहुले विस्तीर्णे व्यचस्वती व्यचनं व्यचः असुन्प्रत्ययः । तद्वती अवकाशवती । तथाविधे

युवां पुरीष्यं पशव्यमग्निं संवसाथां सम्यगाच्छादयतम् । 'वस आच्छादने' अदादिः । आच्छाद्य चाग्निं भृतं विभृतं धारयतम् । विभर्तेः 'बहुलं छन्दसि' (पा० २।४।७३) शपो लुक् ॥ ३० ॥

## एकत्रिंशी ।

संवसाथाᳬस्वर्विदासमीची उरसात्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥३१॥

**उ०** संवसाथाम् आच्छादयतमेनमग्निं पिण्डरूपम् । स्वर्विदा । यज्ञसूर्यदेवाह्वर्वचनः स्वःशब्दः । स्वर्वेत्तीति स्वर्वित् स्वर्विदा रूपेण । यद्वा द्विवचनस्य स्थाने आकारः स्वर्विदीभूत्वा । यद्वा स्वर्गविदो भूत्वा । समीची समाने संगते एकचित्ते भूत्वा । उरसात्मना च किंच अग्निपिण्डमन्तर्मध्यतः भरिष्यन्ती धारयमाणे ज्योतिष्मन्तम् अजस्रम् अनुपक्षीणम् । कुरुतमिति शेषः । इदिति पादपूरणः ॥ ३१ ॥

**म०** हे कृष्णाजिनपुष्करपर्णे, ज्योतिष्मन्तं तेजस्विनमजस्रमित् निरन्तरमेवाग्निमन्तरुदरे भरिष्यन्ती धारयिष्यन्ती युवामुरसात्मना उरोरूपेण भवदीयशरीरेणाग्निं संवसाथां सम्यगाच्छादयतम् । कीदृशे युवाम् । स्वर्विदा विभक्तेराकारः । स्वर्वित्त इति स्वर्विदो यज्ञसूर्यदेवाह्वर्वाचौ । स्वःशब्दः स्वर्गलाभसाधन इत्यर्थः । तथा समीची सम्यगञ्चने सङ्गते एकचित्ते इत्यर्थः ॥ ३१ ॥

## द्वात्रिंशी ।

पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने । त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ ३२ ॥

**उ०** पिण्डमभिमृशति । पुरीष्योऽसि पशव्यस्त्वमसि । विश्वभराः सर्वस्य धारकः पोषको वा अथर्वा त्वा च प्राणः । त्वां प्रथमो निरमन्थत् मथितवान् हे अग्ने, पिण्डं हरति षड्भिराग्नेयीभिः । तत्र तिस्रो गायत्र्यः द्वे त्रिष्टुभौ एका बृहती । त्वामग्ने त्वां हे अग्ने, पुष्करादुदकात् अधि सकाशात् अथर्वा अतनवान् प्राणो निरमन्थत निर्जनितवान् । 'आपो वै पुष्करं प्राणोऽथर्वा' इति श्रुतिः । मूर्ध्नो विश्वस्य वाघतः । वाघत इति ऋत्विङ्नामसु पठितम् । वाघतस्तु मूर्ध्नः शिरस्तः अरण्योर्जनयति सर्वस्य कर्मणोऽङ्गभूतम् ॥ ३२ ॥

**म०** 'पिण्डं पुरोष्योऽसीति' (का० १६।२।२७) । प्रतिष्ठा गायत्री अष्टौ सप्त षट् चेति प्रतिष्ठेति पिङ्गलोक्तेः । अग्निदेवत्या । हे अग्ने, त्वं पुरीष्यः पशव्योऽसि विश्वभरा असि विश्वं सर्वं जगद् बिभर्ति धारयति पुष्णाति वा विश्वभराः असुन्प्रत्ययः । हे अग्ने, प्रथमः इतरेभ्यः पूर्वभावी अथर्वाख्य ऋषिः प्राणो वा त्वा त्वां निरमन्थन्निःशेषेण मथितवान् । 'पाणिभ्यां परिगृह्णात्येनं दक्षिणोत्तराभ्यां दक्षिणः साविस्त्वामग्न इति षड्भिः सर्वेᳬ सकृद्धृत्वा पुष्करपर्णे निदधातीति' । (का० १६।२।२८) दक्षिणेनाग्निं धृत्वोभाभ्यां कराभ्यां सर्वं पिण्डं त्वामग्न इति षड्टचेन सकृद्गृहीत्वा पुष्करपर्णे स्थापयतीति सूत्रार्थः । अग्निदेवत्यास्तिस्रो गायत्र्यो भरद्वाजदृष्टाः । हे अग्ने, अथर्वा प्राणः पुष्करादधि उदकात्सकाशात्त्वां निरमन्थत निःशेषेण मथितवान् । 'आपो वै पुष्करं प्राणोऽथर्वा' (६।४।२।२) इति श्रुतेः । वाघत इति ऋत्विङ्नामसु पठितम् । विश्वस्य सर्वस्य जगतः संबन्धिनो वाघतः ऋत्विजस्त्वां मूर्ध्नोऽर्थादरणेः शिरसो निरमन्थन्तेति व्यत्ययः । यद्वा विश्वस्येति षष्ठ्येकवचनं प्रथमाबहुवचनार्थे । विश्वे सर्वे वाघत इत्यर्थः । यद्वा ऋचोऽयमर्थः हे अग्ने, अथर्वाख्य ऋषिः पुष्करादधि पद्मपत्रस्योपरि त्वां निरमन्थत । कीदृशात्पुष्करात् । मूर्ध्नः उत्तमाङ्गवत्प्रशस्तात् विश्वस्य वाघतः सर्वजगतो वाहकात्पुष्करपर्णमग्निमन्थनयज्ञनिष्पादनद्वारेण सर्वं जगन्निर्वहति ॥ ३२ ॥

## त्रयस्त्रिंशी ।

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् ॥ ३३ ॥

**उ०** तमु त्वा । अत्राप्युकार एतस्मिन्नर्थे उत्तरेणेत्युकारः । तमेव त्वां दध्यङ् नामा ऋषिर्मन्त्राणां द्रष्टा । पुत्र ईधे अथर्वणः व्यवहितोत्र संबन्धः । अथर्वणः पुत्र ईधे । 'इन्धी दीप्तौ' आदीपयति । कथंभूतं त्वामादीपयति । वृत्रहणम् पाप्मनो हन्तारम् । पुरन्दरम् असुरपुरां च दारयितारं वा । 'दध्यङ् आथर्वणः' इति श्रुतिः ॥ ३३ ॥

**म०** हे अग्ने, अथर्वणः ऋषेः पुत्रः दध्यङ्नामक ऋषिः तमु त्वा । उ एवार्थे । तमेव त्वाम् ईधे प्रज्वालितवान् । कीदृशं त्वाम् । वृत्रहणं वृत्रस्य पाप्मनो हन्तारं । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति (पा० ३।२।८७) क्विप् । पुरन्दरं रुद्ररूपेणासुरसंबन्धिनां त्रयाणां पुराणां विदारयितारम् । 'वाचंयमपुरन्दरौ च' (पा० ६।३।६९) इति खशि निपातः ॥ ३३ ॥

## चतुस्त्रिंशी ।

तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयᳬरणेरणे ॥ ३४ ॥

**उ०** तमु त्वां तमेव त्वां पाथ्यो वृषा । 'मनो वै पाथ्यो वृषा' इति श्रुतिः । मनसा हि मुक्तेः पन्था उपलभ्यते । तदुक्तम् 'मनसैवानुद्रष्टव्यम्' इति । 'मनसाभिलष्य स्त्रियां रेतः सिञ्चति' इति वृषा मनः समीधे संदीपयति । दस्युहन्तमम् शत्रुहंतृतमम् धनस्य जेतारम् । रणेरणे संग्रामेसंग्रामे ॥ ३४ ॥

**म०** पथि वर्तमानः पाथ्यः सन्मार्गवर्ती, यद्वा पाथसि अन्तरिक्षे हृदयाकाशे भवः पाथ्यः 'पाथोनदीभ्यां ड्यण्' (पा० ४।४।१११) इति पाथःशब्दात् ड्यण्प्रत्ययः । टिलोपः ।

वृषा सेक्ता मनः हे अग्ने, त्वा त्वां समीपे संदीपयति । मनसा हि ब्रह्मपन्था उपलभ्यते अतः पाथ्यः । 'मनसैवानुद्रष्टव्यम्' इति श्रुतेः । 'मनसैवाभिलष्य स्त्रियाꣳ रेतः सिञ्चति' इति वृषा हि मनः । 'मनो वै पाथ्यो वृषा' ( ६ । ४ । २ । ४ ) इति श्रुतेः । कीदृशं त्वाम् । दस्युहन्तमम् दस्यून् हन्तीति दस्युहा अतिशयेन दस्युहा दस्युहन्तमस्तम् । 'नलोपः प्रातिपदिकान्तस्य' ( पा० ८ । २ । ७ ) इति नलोपे दस्युहतम इति प्राप्ते 'नाद्धस्य' ( पा० ८ । २ । १७ ) इति तमपो नुडागमः । अतिशयेन शत्रूणां हन्तारम् । रणेरणे धनञ्जयं तेषु तेषु संग्रामेषु धनस्य जेतारम् ॥ ३४ ॥

## पञ्चत्रिंशी ।

सीदं होतः स्व उं लोके चिकित्वान्त्सादया युज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥ ३५ ॥

**उ०** सीद होतः । सीद उपविश हे होतः अग्ने, स्व उ लोके । उकारो विनिश्चयार्थीयः । स्वकीय एव लोके कृष्णाजिने । चिकित्वान् चेतनवान् परिदृष्टाधिकारः स्वमधिकारं जानानः । किंच सादया यज्ञम् स्थापय च यज्ञं त्वं सुकृतस्य साधुकृतस्य कर्मणः योनौ स्थाने कृष्णाजिने । 'कृष्णाजिनं वै सुकृतयोनिः' इति श्रुतिः । यज्ञे हि तन्यमाने अववातः पेषणं सोमनिधानं च कृष्णाजिने एव भवतीत्येतदभिप्रायमेवमुच्यते । यश्च त्वं देवावीः देवानामवनशीलः तर्पणशीलः देवान्हविषा यजासि यजसि तं त्वां पुनः प्रार्थयामि । हे अग्ने, बृहत् महत् यजमाने वयः आयुरन्नं वा धाः धेहि ॥ ३५ ॥

**म०** आग्नेयी त्रिष्टुप् देवश्रवोदेववाताभ्यां दृष्टा । हे होतः देवानामाह्वातः हे अग्ने, स्वे उ लोके । उ एवार्थे । स्वकीये एव स्थाने कृष्णाजिनाख्ये त्वं सीद उपविश । कीदृशस्त्वम् । चिकित्वान् चेतनवान् स्वाधिकारं जानन् । किंच सुकृतस्य साधुकृतस्य कर्मणो यज्ञस्य योनौ स्थाने कृष्णाजिने यज्ञं सादय स्थापय । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति संहितायां क्रियापदस्य दीर्घः । यज्ञे क्रियमाणेऽवघातपेषणसोमनिधानादीनि कृष्णाजिन एव भवन्तीति कृष्णाजिनं सुकृतस्य योनिः 'कृष्णाजिनं वै सुकृतस्य योनिः' ( ६ । ४ । २।६ ) इति श्रुतेः । हे अग्ने, यतो देवावीः देवानवति प्रीणातीति देवावीः त्वं हविषा हव्येन कृत्वा देवान् यजासि यजसि । 'लेटोऽडाटौ' (पा० ३ । ४ । ९४ ) इत्याडागमः । पूजयसि अतो यजमाने बृहन्महद्वय आयुरन्नं वा धाः धेहि । दधातेर्लुङि मध्यमैकवचने अधा इति प्राप्ते 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६ । ४।७५ ) इत्यडभावः ॥ ३५ ॥

## षट्त्रिंशी ।

नि होता होतृषदने विदानस्त्वेषो दीदिवाँ२ऽअसदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥ ३६ ॥

**उ०** निहोता नीत्ययमुपसर्गोऽसददित्यनेनाख्यातेन संबध्यते । न्यसदत् निषण्ण उपविष्टः होता अग्निः । होतृषदने होता यस्मिन्सीदति तद्धोतृषदनं तस्मिन् । विदानः जानानः स्वमधिकारम् त्वेषो दीप्तियुक्तः । दीदिवान् देदीप्यमानः । असदत् सुदक्षः साधु क्षिप्रकारी । अदब्धव्रतप्रमतिः । अदब्धमनुपहिंसितं कर्म यश्च प्रकृष्टा मतिः स एवमुच्यते । वसिष्ठः वस्तृतमः । यश्च सहस्रंभरः सहस्रं बिभर्तीति सहस्रंभरः सर्वहितः । शुचिजिह्वः शुचिर्जिह्वा यस्य स शुचिजिह्वः योयं नानादेवत्यानि हवींषि अभ्यवहरति नचोच्छोपयति स शुचिजिह्व इति शक्यते वदितुम् । अग्निरिति विस्मित इवाचष्टे ॥ ३६ ॥

**म०** आग्नेयी त्रिष्टुप् गृत्समददृष्टा । नीत्युपसर्गोऽसददित्यनेन संबध्यते । अग्निः होतृषदने न्यसीदत् । होता यस्मिन् सीदति तद्धोतृषदनम् । होमनिष्पादकयोग्यस्थाने उत्तरवेदिरूपे सम्यगुपविष्टवान् । कीदृशोऽग्निः । होता देवानामाह्वाता । विदानः स्वाधिकारं जानन् । त्वेष 'त्विष दीप्तौ' पचाद्यच् त्वेषतीति त्वेषः दीप्तिमान् । दीदिवान् दीव्यतीति दीदिवान् 'दिवु 'क्रीडादौ' अस्मात् क्वसुः । 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६ । १ । ७ ) इत्यभ्यासदीर्घः । 'लोपो व्योर्वलि' ( पा० ६ । १ । ६६ ) इति वलोपः । होतृधिष्ण्यादौ गमनवान् । सुदक्षः साधुकुशलः क्षिप्रकारी । अदब्धव्रतप्रमतिः 'दम्भु वधे' अदब्धमनुपहतं व्रतं कर्म यस्य सोऽदब्धव्रतः प्रकृष्टा मतिर्बुद्धिर्यस्य स प्रमतिः अदब्धश्चासावप्रमतिश्चेति सः । तथा वसिष्ठः वसति स्वस्थान इति वस्ता अत्यन्तं वस्ता वसिष्ठः वस्तृतमः । 'तुरिष्ठेमेयस्सु' ( पा० ६ । ४ । १५४ ) इतीष्ठनि परे तृचो लोपः । सहस्रंभरः सहस्रं सर्वजनं बिभर्ति पुष्णाति सहस्रंभरः । शुचिजिह्वः शचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्य सः । नानादेवत्यानि हवींष्यभ्यवहरन्नप्युच्छिष्टं न करोतीति भावः ॥ ३६ ॥

## सप्तत्रिंशी ।

सꣳसीदस्व महाँ२ऽअसि शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥३७॥

**उ०** संसीदस्व । हे अग्ने, संगत्य सीदस्व । यतः त्वं महानसि । शोचस्व दीप्यस्व । यतस्त्वं देववीतमः अतिशयेन देवानामाप्यायिता । विसृज च विमुञ्च च विधूमम् अरुषम् अरोचनम् मियेध्य । यमेध्य इति प्राप्ते छान्दसोपकर्षः । हे प्रशस्तलक्षण । दर्शतम् दर्शनीयमाहुतिपरिणामभूतम् । 'इतो वा अयमूर्ध्वं रेतः सिंचति धूमं सामुत्र वृष्टिर्भवति' इति श्रुतिः ॥ ३७ ॥

म० आग्नेयी बृहती प्रस्कण्वदृष्टा । तृतीयो द्वादशार्णोऽन्येऽष्टार्णाः । मेध्यशब्दस्य छान्दसो विप्रकर्षः । हे मियेध्य हे मेध्य । यज्ञिय यज्ञार्ह हे प्रशस्त उत्कृष्ट अग्ने, त्वं संसीदस्व पुष्करपर्णे सम्यगुपविश । यस्त्वं महानसि अनेकक्रतुहेतुत्वात् । स त्वं शोचस्व 'शुच दीप्तौ' दीप्यस्व । कीदृशस्त्वम् । देववीतमः देवान् वेति तर्पयति देववीः 'वी कान्त्यादौ' क्विप् । अतिशयेन देववीः देववीतमः । किंच दर्शतं दर्शनीयमरुषमरोचनं धूमं विसृज विमुञ्च । वीत्युपसर्गः सृजेत्यनेन संबध्यते । 'इतो वा अयमूर्ध्वᳪं रेतः सिञ्चति धूमᳪं सामुत्र वृष्टिर्भवति' इति श्रुतिः ॥ ३७ ॥

## अष्टत्रिंशी ।

अपो॑ दे॒वीरुप॑सृज॒ मधु॑मतीरय॒क्ष्माय॑ प्र॒जाभ्यः॑ । तासा॑मा॒स्थाना॒दुज्जि॑हता॒मोष॑धयः सुपिप्प॒लाः ॥३८॥

उ० अवटे अप आसिञ्चति । अपो देवीः अब्देवत्या बृहती । विधूममग्ने अरुषं मियेध्येत्यानन्तर्यादग्निरुच्यते । द्यौर्वा अपो देवीरुपसृज निक्षिप वृष्टिरूपाः मधुमती रसवतीः आरोग्यदातृकाः अयक्ष्माय प्रजाभ्यः । यक्ष्मा व्याधिः भावप्रत्ययलोपः । अयक्ष्मत्वार्थं प्रजानामिति विभक्तिव्यत्ययः । तासां भूमिगतानाम् अस्थानात् अधिष्ठानात् । उज्जिहताम् उद्गच्छन्तु । ओषधयः सुपिप्पलाः साधुफलाः । पिप्पलं फलमुच्यते ॥ ३८ ॥

म० 'अपः श्वभ्रेऽवनयत्यपो देवीरिति' ( का० १६ । ३ । २ ) । मृत्पिण्डगर्ते जलं सिञ्चति । अब्देवत्या न्यङ्कुसारिणी सिन्धुद्वीपदृष्टा । द्वितीयो द्वादशार्णोऽन्ये त्रयोऽष्टार्णा यस्याः सा न्यङ्कुसारिणी । पूर्वर्चोऽग्ने इति संबोधनमध्याह्रियते । द्यौरध्वर्युर्वा संबोध्यते । हे अग्ने, यद्वा हे द्यौः, यद्वा हे अध्वर्यो, देवीः देवनशीला अपः उपसृज अस्मिन् खननप्रदेशे आसिञ्च । कीदृशीरपः । मधुमतीः रसवतीः आरोग्यदात्रीः । किमर्थं । प्रजाभ्यः अयक्ष्माय । पञ्चमी षष्ठ्यर्थे । यक्ष्मणोऽभावोऽयक्ष्मं तस्मै प्रजानामारोग्याय । तासां सिक्तानामपां स्थानात् सुक्षेत्ररूपादस्मात् खननप्रदेशात् । ओषधयः आ समन्तादुज्जिहतामुद्गच्छन्तु । कीदृश्य ओषधयः । सुपिप्पलाः शोभनं पिप्पलं फलं यासां ताः ॥ ३८ ॥

## एकोनचत्वारिंशी ।

सं ते॑ वा॒युर्मा॑त॒रिश्वा॑ दधातूत्ता॒नाया॒ हृद॑यं॒ यद्वि॑कस्तम् । यो दे॒वानां॒ चर॑सि प्रा॒णथे॑न॒ कस्मै॑ देव॒ वष॑डस्तु॒ तुभ्य॑म् ॥ ३९ ॥

उ० वायुना संदधाति । सं ते वायुः । त्रिष्टुप् । अर्धर्चः पार्थिवोऽर्धर्चो वायुदेवत्यः । संदधातु तव मातरिश्वा वायुः पृथिवी । उत्तानायाः सत्या यदेतत् हृदयमवटरूपेण । विकस्तं विकसितम् । वायुरुच्यते । यो देवानाम् यस्त्वं देवानां चरसि प्राणथेन प्राणत्वेन । थकारो भावप्रत्ययार्थकः । हे देव, तस्मै कस्मै प्रजापतये तुभ्यम् इयं पृथिवी वषडस्तु वषट्कृता भवतु । 'नोहैतावत्यन्याहुतिरस्ति यथैषा' इति श्रुतिः ॥ ३९ ॥

म० 'सं त इति वातमपक्षिपति' (का० १६ । ३ । ३) । पिण्डगर्ते वायुं प्रेरयति । त्रिष्टुप् अर्धं पृथिवीदेवत्यमर्धं वायुदेवत्यम् । हे पृथिवि, उत्तानायाः ऊर्ध्वाभिमुखेनावस्थितायास्ते तव यद्धृदयं हृदयसदृशं खननस्थानं विकस्तं पिण्डावटरूपेण विकसितम् । इडभाव आर्षः ( पा० ७ । २ । ३४ ) तत्स्थानं वायुः संदधातु पूर्वोक्तेन जलप्रक्षेपेण तृणादिपूरणेन च वायुर्यथा पूर्वं तथा सम्यक्करोतु । कीदृशो वायुः । मातरिश्वा मातर्यन्तरिक्षे सर्वप्राणिनामवच्छेदकारिणि श्वयति गच्छति मातरिश्वा । एवं पृथिवीमुक्त्वा वायुमाह, हे देव, द्योतनादिगुणयुक्त वायो यस्त्वं देवानामग्न्यादीनां प्राणथेन प्राणभावेन चरसि प्राणानां भावः प्राणथं भावे छान्दसस्थत्प्रत्ययः । कस्मै प्रजापतिरूपाय तुभ्यमियं पृथिवी वषडस्तु वषट्कृता भवतु । 'नो हैतावत्यन्याहुतिरस्ति यथैषा' ( ६ । ४ । ३ । ४ ) इति श्रुतेः ॥ ३९ ॥

## चत्वारिंशी ।

सुजा॑तो॒ ज्योति॑षा स॒ह शर्म॒ वरू॑थ॒मास॑द॒त्स्वः॑ । वासो॑ अग्ने वि॒श्वरू॑पᳪं॒ संव्य॑यस्व विभावसो ॥४०॥

उ० आस्तीर्णयोरन्तरानुद्गृह्णाति । सुजातो ज्योतिषा । अनुष्टुबाग्नेयी । अयमग्निः सुजातः सुजन्मा ज्योतिषा सह संयुक्तः । शर्म शरणम् वरूथं वरणीयम् गृहम् आ असदत् आसीदतु । स्वः स्वर्गाख्यम् । योक्त्रेणोपनह्यति । वासो अग्ने । हे अग्ने विभावसो विभूतधन, वासो विभूतयः । विश्वरूपं विचित्रम् । संव्ययस्व । 'व्येञ् संवरणे' परिधत्स्व ॥ ४० ॥

म० 'आस्तीर्णयोरन्तानुद्गृह्णाति सुजात इति' (का० १६ । ३ । ५ ) अस्यार्थः । आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः प्रान्तानूर्ध्वमादत्त इति । अग्निदेवत्यानुष्टुप् द्वितीयो नवार्णः । सुजातः सष्टूत्पन्नोऽयमग्निः ज्योतिषा स्वकीयेन तेजसा सह शर्म सुखं यथा भवति तथा स्वः स्वर्गसदृशं वरूथं वरणीयं गृहं कृष्णाजिननिर्मितमासदत् आसीदतु प्राप्नोतु । 'त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासो अग्न इति' ( का० १६ । ३ । ६ ) । उद्गृहीतात्कृष्णाजिनपुष्करपर्णयोरन्तान्मुञ्जयोक्त्रेण बध्नात्युत्तरार्धेनेति सूत्रार्थः । हे विभावसो, विभा दीप्तिरेव वसु धनं यस्य स विभावसुः तत्संबोधनं हे विभावसो हे अग्ने, विश्वरूपं बहुप्रकाररूपं विचित्रं वासः वस्त्रं कृष्णाजिनरूपं संव्ययस्व सम्यक् परिधत्स्व । 'व्येञ् संवरणे' अस्य रूपम् ॥ ४० ॥

## एकचत्वारिंशी ।

उदु॑ तिष्ठ स्वध्व॒राव॑ नो दे॒व्या धि॒या । दृ॒शे च॒ भासा॑ बृह॒ता सु॑शु॒क्वनि॒राग्ने॑ याहि सुश॒स्तिभिः॑ ४१

**उ०** अथैनमादायोत्तिष्ठति । उदु तिष्ठ आग्नेयी बृहती । उत्तिष्ठ । उकारः पादपूरणः । हे स्वध्वर सुयज्ञिय, तत उत्थाय अव पालय नोऽस्मान् । देव्या धिया दैव्या बुद्ध्या । किंच । दृशे च दर्शनाय अस्माकम् भासा बृहता सुशुक्वनिः साधु सुशुचा संदीप्तः । आयाहि आगच्छ । हे अग्ने सुशस्तिभिः साधुशिष्टैरश्वैः ॥ ४१ ॥

**म०** 'उत्तिष्ठति पिण्डमादायोदु तिष्ठेति' (का० १६ । ३ । ७) । तं पिण्डं गृहीत्वोत्तिष्ठेदिति सूत्रार्थः । अग्निदेवत्या पथ्या बृहती विश्वमनोदृष्टा । तृतीयो द्वादशार्णः अन्ये अष्टार्णाः । हे स्वध्वर, शोभनोऽध्वरो यज्ञो येन सुष्ठु यागनिर्वाहक, हे अग्ने, उत्तिष्ठ । उ उत्तिष्ठैव उत्थाय च देव्या देवनस्वभावया धिया क्रीडापरया बुद्ध्या नोऽस्मानव पालय । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति संहितायां दीर्घः । किंच हे अग्ने, सुशस्तिभिः शोभनकीर्तिभिः सह । यद्वा साधुशिष्टैरश्वैः कृत्वा आयाहि आगच्छ । किं कर्तुम् । बृहता भासा प्रौढेन तेजसा दृशे सर्वान्प्राणिनो द्रष्टुम् । 'दृशे विख्ये च' ( पा० ३ । ४ । ११ ) इति पश्यतेस्तुमर्थो निपातः । कीदृशस्त्वम् । सुशुक्वनिः साधु शुचो रश्मीन्वनति संभजति सुशुक्वनिः रश्मिप्रसारक इत्यर्थः । आ अग्ने याहीति पदच्छेदः ॥ ४१ ॥

## द्विचत्वारिंशी ।

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ४२ ॥

**उ०** अथैनमित ऊर्ध्वं प्राञ्चं गृह्णाति । ऊर्ध्व ऊषुण बृहती आग्नेयी । ऊर्ध्वस्तिष्ठ । ऊसू पादपूरणे । नः ऊतये अस्माकमवनाय । कथमूर्ध्वस्तिष्ठ । देवो न सविता । नकार उपमार्थीयः । देव इव सविता ऊर्ध्वः स्थितः वाजस्यान्नस्य सविता संभक्ता । भविष्यसीति शेषः । यदञ्जिभिः यस्मादञ्जिभिर्व्यञ्जकैर्द्रव्याणां रश्मिभिः । वाघद्भिः हविषां वोढृभिः सहितम् विह्वयामहे विविधमाह्वयामः । तदूर्ध्वस्तिष्ठेति संबन्धः ॥ ४२ ॥

**म०** 'ऊर्ध्वबाहुः प्राञ्चं प्रगृह्णातयूर्ध्व ऊ षु ण इति' ( का० १६ ।३।८) । प्रसारितबाहुः प्राञ्चं पिण्डं गृह्णाति । अग्निदेवत्योपरिष्टाद्बृहती कण्वदृष्टा । चतुर्थः पादो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः सोपरिष्टाद्बृहती । हे अग्ने, नोऽस्माकमूतये रक्षणाय ऊर्ध्व ऊ सु तिष्ठ ऊर्ध्व एव सुतरामवस्थितो भव । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति दीर्घस्तिष्ठा इत्यत्र 'नश्च धातुस्थोरुषुभ्यः' ( पा० ८ । ४ । २७ ) इति न इत्यत्र णत्वम् । क इव देवो न सविता । न इवार्थे । सविता देव इव । यथा सविता देव ऊर्ध्वः सन्नस्मानवति तद्वत् स त्वमूर्ध्वः सन् वाजस्य सनिता देव अन्नस्य दाता भवेति शेषः । 'षणु दाने' ययस्मात्कारणात् अञ्जिभिर्मन्त्राभिव्यञ्जकैर्वाघद्भिः हव्यवाहकैर्ऋत्विग्भिः सह त्वा विह्वयामहे विविधमाह्वयामः तस्मादूर्ध्व एव तिष्ठेति पूर्वेणान्वयः । अञ्जन्ति व्यक्तीकुर्वन्तीत्यञ्जिनस्तैः । यद्वा अञ्जिभिः द्रव्याणां व्यञ्जकैः रश्मिभिः सहितं त्वां विह्वयामहे । कीदृशैरञ्जिभिः । वाघद्भिः हविषां वोढृभिः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि तमांस्यक्तून्प्र मातृभ्यो अधि कनिक्रदद्गाः ॥ ४३ ॥

**उ०** अश्वमभिमन्त्रयते । स जातो गर्भः । त्रिष्टुप् अङ्गीकृत्याश्वं स्तौति । अध्याहारव्यवहितपदप्रायो मन्त्रः । यस्त्वं रोदस्योः द्यावापृथिव्योर्गर्भो जातोसि । यश्च त्वं हे अग्ने, चारुः शोभनः विभृतः । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । ओषधीषु पुरोडाशादिलक्षणासु दातव्यविषयासु भवसि । यश्च त्वं चित्रो नानारूपः शिशुः शंसनीयः । परितमांसि अक्तून् रात्रीः अतिरोचसे स त्वं मातृभ्यः अधि । ओषधिवनस्पतिभ्यः सकाशात् । कनिक्रदत् अत्यर्थं शब्दं कुर्वन् गाः प्रयाहि ॥ ४३ ॥

**म०** 'अवहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते स जातः स्थिरो भव शिवो भवेति' ( का० १६ । ३ । ९ ) । पिण्डं नीचैरवतार्य नाभ्युपरि हस्ताभ्यां धारयन्नश्वगर्दभाजान्स जात इत्यादिक्रमेण प्रतिमन्त्रं मन्त्रयते एकैकं पश्यन्नेकैकं मन्त्रं जपतीति सूत्रार्थः । अश्वदेवत्या त्रिष्टुप् त्रितदृष्टा । अश्वमग्नीकृत्य स्तौति हे अग्ने, स त्वं रोदस्योः द्यावापृथिव्योर्गर्भः सन्निदानीं जातोऽसि । कीदृशस्त्वम् । चारुः शोभनः पूज्यः । ओषधीषु पुरोडाशादिलक्षणासु दातव्यासु विभृतः विहृतः । चित्रः नानावर्णाभिर्ज्वालाभिर्विचित्ररूपः । इदानीमुत्पन्नत्वात् शिशुः शंसनीयो वा । अक्तूनिति लिङ्गव्यत्ययः । अक्तूनि तमांसि रात्र्युपलक्षितानि अन्धकाराणि परि परिहरन् मातृभ्यो अधि ओषधिवनस्पतिभ्यः सकाशात् कनिक्रदत् अत्यन्तं शब्दं कुर्वन् प्रगाः प्रकर्षेण गच्छ । 'इणो गा लुङि' ( पा० २ । ४ । ४५ ) इति गादेशः अडभावश्छान्दसः 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति सर्वकाले लुङ् । प्रेत्युपसर्गो गा इत्यनेन संबध्यते । 'दाधर्तिदर्धर्ति–' ( पा० ७ । ४ । ६५ ) इत्यादिना कनिक्रददिति यङ्लुगन्तो निपातः ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥ ४४ ॥

**उ०** रासभमभिमन्त्रयते । स्थिरो भव । उष्णिक् अनुष्टुब्वा स्थिरो भव निश्चलो भव । वीड्वङ्गश्च दृढाङ्गश्च भव । आशुः शीघ्रश्च भव । वाजी वेजनवांश्च भव । हे अर्वन्, पदार्थं

प्रति इयर्तीति अर्वा। पृथुः पृथुश्च भव। सुषदः स्वस्थेयश्च भव। यतस्त्वमग्नेः पुरीषवाहणः पुरीषं पशव्यं यवसं वहतीति पुरीषवाहणो रासभः॥ ४४॥

**म०** रासभदेवत्यानुष्टुबुष्णिग्वा। इयर्ति प्रतिपदार्थं गच्छतीत्यर्वा रासभः हे अर्वन् गमनकुशल, स्थिरः चलनरहितः सन् त्वं वीड्वङ्गः दृढकायो भव। वीडुशब्दो दृढार्थः। वीड्न्यङ्गानि यस्य सः। आशुः वेगवान्सन् वाजी अन्नहेतुर्भव। पृथुः विस्तीर्णः सन् अग्नेः सुषदः सुखासनः स्वास्थेयो भव। सुखेन सद्यते स्थीयते यस्मिन्स सुषदः। कीदृशस्त्वम्। पुरीषवाहणः पुरीषशब्देन पांसुरूपा मृदुच्यते तां वहतीति पुरीषं पशव्यं यवसं वहतीति वा पुरीषवाहणः। 'कव्यपुरीषपुरीष्येषु ञ्युट्' (पा० ३।२।६५) इति ञ्युट्प्रत्ययः॥ ४४॥

## पञ्चचत्वारिंशी।

शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवी अभि शोचीर्मान्तरिक्षं मा वनस्पतीन्॥ ४५॥

**उ०** अजमभिमन्त्रयते। शिवो भव। अनुष्टुप् बृहती वा। हे अज, शिवः शान्तो भव। प्रजाभ्यो मानुषीभ्योर्थाय त्वम् हे अङ्गिरः। अङ्गिरा वा अग्निराग्नेयोऽजः' इति श्रुतिः। मा च त्वं द्यावापृथिवी अभिशोचीः अभिसंतापयेः। मा चान्तरिक्षं मा च वनस्पतीन्॥ ४५॥

**म०** अजदेवत्या पथ्याबृहती। अङ्गिरोभिर्ऋषिभिः पूर्वं संपादितत्वात् अङ्गसौष्ठवाद्वा अङ्गिरा अग्निः तत्संबोधनं हे अङ्गिर अग्निरूप अज, मानुषीभ्यः मनोः संबन्धिभ्यः प्रजाभ्योऽर्थे त्वं शिवः शान्तो भव। 'अङ्गिरा वा अग्निराग्नेयोऽजः' (६।४।४।४) इति श्रुतेः। किंच द्यावापृथिवी मा अभिशोचीः मा संतापय। तथान्तरिक्षं माभिशोचीः। तथा वनस्पतीन्माभिशोचीः॥ ४५॥

## षट्चत्वारिंशी।

प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा। वृषाग्निं वृषणं भरन्नपां गर्भꣳसमुद्रियम्। अग्न आयाहि वीतये॥ ४६॥

**उ०** एतेषां पशूनामुपरिष्टात्प्रगृह्णाति। प्रैतु वाजी। त्र्यवसाना महापङ्क्तिः। अर्धर्चावश्वदेवत्यौ। प्रकर्षेण एतु आगच्छतु वाजी अश्वः। कनिक्रदन् अत्यर्थं हेषितशब्दं कुर्वन् अयं च रासभोऽश्वयवसवाहनार्थं प्रकर्षेण एत्वागच्छतु नानदत्। सोपहासमुच्यते। गर्दभरटितेन सर्वा दिशो नादयन् रासभः पत्वा पतनशीलः। 'यदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधाति' इति श्रुतिः। भरन्नग्निं पुरीष्यम्। अयं चाश्वो भरन्धारयन् अग्निं पुरीष्यं पशव्यम् मा पादि मा विनश्यतु। आयुषः पुरा। आयुश्शब्देन शक्त्यात्र कर्माभिहितम्। यज्ञसंयोगेन हि अश्वादीनां स्तुतिः। आयुषः पुरा आसमाप्तेः कर्मणः रासभ उच्यते। वृषा सेक्ता। अग्निं वृषणं सेक्तारम्। आहुतिपरिणाममभिप्रेत्योक्तम्। भरन्धारयन्। अपां गर्भम् अपां मध्येऽवस्थानाद्गर्भ उच्यते। समुद्रियम् 'त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतं साम्नां महदुक्थमृचाम्' इत्येतदभिप्रायम्। तत्र भवः समुद्रियः। खरादाहरति। अग्ने आयाहि एकपदाग्नेयी गायत्री। हे अग्ने, आगच्छ वीतये हविरुपभोगाय॥ ४६॥

**म०** 'धारयत्येषामुपरि पिण्डमनुपस्पृशन् प्रैतु वाजी वृषाग्निमित्यश्वखरयोरिति' (का० १६।३।१०)। अश्वादीनामुपरि पिण्डं धारयति तानस्पृशन्प्रैतु वाजीत्यश्वोपरि वृषाग्निमिति खरोपरीति सूत्रार्थः। महापङ्क्तिस्त्र्यवसाना अष्टार्णषट्पादा महापङ्क्तिः। आद्यावर्धर्चावश्वदेवत्यौ तृतीयोऽर्धर्चो रासभदेवत्यः तृतीयतुर्यौ पादौ व्यूह्यौ। वाजी अश्वः प्रैतु प्रकर्षेण गच्छतु। किं कुर्वन्। कनिक्रदत् अत्यर्थं हेषितशब्दं कुर्वन् यङ्लुगन्तम्। रासभश्च प्रैतु यवसवाहनार्थम्। किं कुर्वन्। नानदत् सोपहासमुच्यते गर्दभरटितेन सर्वा दिशो नादयन्। यङ्लुगन्तम्। कीदृशो रासभः। पत्वा पतनशीलः। 'पत्ल गतौ' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३।२।७५) इति क्वनिप्। अश्वमन्त्रे रासभोपादानं रासभोपहासार्थम्। तथा च श्रुतिः 'यदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधातीति' (६।४।४।७)। किंच अयमश्वः पुरीष्यं पशव्यमग्निं भरन्धारयन्। आयुषः पुरा कर्मणः पूर्वं। मा पादि मा विनश्यतु। कर्मसमाप्तिपर्यन्तं जीवत्वित्यर्थः। आयुःशब्देन श्रुत्या कर्मोक्तम्। यज्ञसंबन्धेनैवाश्वादीनां स्तुतिः क्रियते। अथ रासभमन्त्रः। वृषा सेक्ता रासभः अग्निं भरन्धारयन्सन् प्रैतु इति शेषः। कीदृशमग्निम्। वृषणं सेक्तारं फलाभिवर्षणसमर्थम्। आहुतिपरिणामेनेति भावः। अपां गर्भम् जलमध्येऽवस्थानादेवमुच्यते। मेघस्थानां जलानां मध्ये विद्युद्रूपं वा। समुद्रियं समुद्रे वडवाग्निरूपेणोत्पन्नम्। यद्वा समुद्रे अग्निचयने भवः समुद्रियः तम्। 'त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतꣳ साम्नां महदुक्थमृचाम्' इति श्रुतेः। 'अग्न आयाहीत्याहृत्य खराच्छागस्यर्तꣳ सत्यमित्या निधानात्' (का० १६।३।११)। अग्न इति मन्त्रेण रासभातिपिण्डमाहृत्य ऋतं सत्यमिति मन्त्रेणाजस्योपरि पिण्डं धारयेत् परिव्रते निधानपर्यन्तमिति सूत्रार्थः। एकपदा गायत्री अग्निदेवत्या। हे अग्ने, वीतये हविर्भक्षणाय आयाहि आगच्छ॥ ४६॥

## सप्तचत्वारिंशी।

ऋतꣳसत्यमृतꣳसत्यमग्निं पुरीष्यमङ्गिरस्वद्भरामः। ओषधयः प्रतिमोदध्वमग्निमेतꣳशिवमाय-

न्तम॒भ्यत्र॑ यु॒ष्माः । व्य॒स्यन्विश्वा॒ अनि॑रा॒ अमी॑वा नि॒षीद॑न्नो॒ अप॑ दुर्म॒तिं ज॑हि ॥ ४७ ॥

**उ०** छागस्योपरि धारयन् जपति । ऋतं सत्यम् ऋतमग्निः सत्यमादित्यः। यदि वा आदित्य ऋतम् अग्निः सत्यम् उभयरूपमभ्याहरामीति शेषः । अनड्वापुरुषमीक्षते अग्निं पुरीष्यं व्याख्यातम् । उपावहरति । ओषधयः प्रति । द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यामोषधिदेवताभ्याम् । द्वितीयोऽर्धर्चे आग्नेयः । हे ओषधयः, प्रतिमोदध्वं प्रतिहर्षयत प्रत्युत्थानादिभिः अग्निम् । एतं शिवं शान्तम् आयन्तमभ्यत्र युष्माः युष्मानभ्यागच्छन्तम् अत्रैव स्थितानाम्। एवमर्धर्चेनोषधीरुक्त्वा अथेदानीमग्निमाह । त्वमपि व्यस्यन् विक्षिपन् । विश्वाः सर्वाः । अनिराः । इरेत्यन्ननाम न भवति अन्नं याभिः सतीभिरतिवृष्टिनिदाघाशनिभिरितिगृह्यते विक्षिपन् अमीवा व्याधीन् निषीदन् निविशमानश्च। नो अप दुर्मतिं जहि नोऽस्माकं अपजहि अपनय दुर्मतिं दुर्बुद्धिं नास्ति दत्तं नास्ति हुतमित्येवमादिकाम् ॥४७॥

**म०** अग्निदेवत्यं यजुः प्राजापत्या गायत्री । ऋतसत्यशब्दाभ्यामादित्याग्नी विवक्षितौ । ऋतमादित्यः सत्यमग्निः तादृगुभयरूपमग्निमभ्याहरामीति शेषः । ऋतं सत्यमिति पुनर्वचनमादरार्थम् । 'अनड्वापुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति' (का० १६ । ३ । १३ । ) । देवपितृकार्यविमुखोऽनड्वापुरुषस्तमध्वर्युरीक्षते अग्निषु ज्वलत्स्वाहवनीयान्ते स्थित इति पूर्ववत् पदेन लभ्यत इति सूत्रार्थः । आग्नेयं यजुः सामगायत्री । पशव्यमग्निमङ्गिरसो मुनय इव भरामः हरामः । 'उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे पिण्डं निदधात्योषधय इति' ( का० १६ । ३ । १४ ) । उखासंभरणार्थमुद्धृतस्याहवनीयस्योत्तरे पूर्वमेव कृते परिवृते आच्छादितप्रदेशे ओषधय इति मन्त्राभ्यां पिण्डं स्थापयति । कीदृशे परिवृते । उद्धृते कृतोल्लेखने अवोक्षिते सिक्ते प्राग्दिशि द्वारं यस्य तादृशे सिकताव्याप्ते एतादृशे इति सूत्रार्थः । त्रिष्टुबनुष्टुभावोषधिदेवत्ये । व्यस्यन्नित्यर्धर्चोऽग्निदैवतः । हे ओषधयः, यूयमेतमग्निं प्रतिमोदध्वमभ्युत्थानादिभिः प्रतिहर्षयत । कीदृशमग्निं शिवं शान्तम् । अत्रास्मिन् प्रदेशे स्थिताः युष्माः युष्मानभिमुखीकृत्य आयन्तमागच्छन्तम् । एवमर्धर्चेनौषधीरुक्त्वाथाग्निमाह हे अग्ने, त्वमत्र निषीदन्निविशमानः सन्नोऽस्माकं दुर्मतिं दुर्बुद्धिं नास्ति दत्तं नास्ति हुतमित्येवमादिकामपजहि अपनय । किं कुर्वन् । विश्वाः सर्वा अनिराः ईतीः अमीवा व्याधींश्च व्यस्यन्निरस्यन् नास्ति इरा अन्नं याभिस्ता अनिराः । इरेत्यन्ननाम । अतिवृष्ट्याद्याः ॥ ४७ ॥

## अष्टचत्वारिंशी ।

ओष॑धयः॒ प्रति॑गृभ्णीत॒ पुष्प॑वतीः सुपिप्प॒लाः । अ॒यं वो॒ गर्भ॑ ऋ॒त्वियः॑ प्र॒त्नꣳ स॒धस्थ॒मास॑दत् ४८

**उ०** ओषधयः । हे ओषधयः, एतमग्निं गृह्णीत आदरवत्यः सत्यः । पुष्पवतीः सुपिप्पलाः । पुष्पवत्यः शोभनफलाश्च भूत्वा । अयं हि वो युष्माकम् गर्भ ऋत्वियः ऋतव्यः प्राप्तकालः प्रत्नं पुराणं शाश्वतिकम् सधस्थं सहस्थानमासीदति ॥४८

**म०** हे ओषधयः, एतमग्निं प्रतिगृभ्णीत गृह्णीत स्वीकुरुत। यूयं कीदृश्यः पुष्पवतीः 'वा छन्दसि' (पा० ६ । १ । १०६ ) इति पूर्वसवर्णदीर्घः । पुष्पवत्यः प्रशस्तपुष्पोपेताः । सुपिप्पलाः शोभनं पिप्पलं फलं यासां ताः । किंच ऋत्वियः ऋतव्यः ऋतुः प्राप्तोऽस्य 'छन्दसि घस्' ( पा० १ । १०६ ) इति कालप्राप्तौ घस्प्रत्ययः । ऋतुकालीनः प्राप्तकालः वो युष्माकं गर्भो भूत्वाऽयमग्निः प्रत्नं पुरातनं सधस्थं सहस्थानं गर्भयोग्यस्थानमासदत् आसीदति ॥ ४८ ॥

## एकोनपञ्चाशी ।

वि पाज॑सा पृ॒थुना॒ शोशु॑चानो॒ बाध॑स्व द्वि॒षो र॒क्षसो॒ अमी॑वाः । सु॒शर्म॑णो बृह॒तः शर्म॑णि स्याम॒ग्ने॒रह॒ꣳसु॒हव॑स्य॒ प्रणी॑तौ ॥ ४९ ॥

**उ०** अथैनमुत्सृजति । विपाजसा । वीत्यग्रमुपसर्गो बाधस्वेत्यनेन संबध्यते । विबाधस्व । पाजसा । पाज इति बलनाम । बलेन । पृथुना विस्तीर्णेन । शोशुचानो दीप्यमानः । द्विषः द्वेष्यात् रक्षसः । अमीवाः व्याधीन् । एवं प्रत्यक्षं याचित्वा अथेदानीं परोक्षीकृत्याशिषमाशास्ते । सुशर्मणः साधुशरणस्य बृहतो महतः । शर्मणि शरणे । स्याम् भवेयम् । अग्नेः अहं सुहवस्य स्वाह्वानस्य । प्रणीतौ प्रणयने अभ्यनुज्ञायाम् ॥ ४९ ॥

**म०** 'वि पाजसेति प्रमुच्यैनमजलोमान्यादाय प्रागुदीचः पशुनुत्सृजति' ( का० १६ । ३ । १५ ) । वि पाजसेतीति मन्त्रेणैनं पिण्डं कृष्णाजिनबद्धं विस्रंस्य छागरोमाणि गृहीत्वाश्वादीनैशानीं दिशं प्रत्युत्सृजतीति सूत्रार्थः । अग्निदेवत्या त्रिष्टुबुत्कीलदृष्टा । वीत्युपसर्गो बाधस्वेत्यनेन संबध्यते । हे अग्ने, द्विषः शत्रून् रक्षसः राक्षसान् अमीवाः व्याधींश्च त्वं विबाधस्व विशेषेण निवर्तय । कीदृशस्त्वम् । पृथुना विस्तीर्णेन पाजसा बलेन शोशुचानः अत्यन्तं दीप्यमानः । पाज इति बलनाम । शोचतेर्यङन्ताच्छानच्प्रत्ययः । एवं प्रत्यक्षमुक्त्वा परोक्षमाह। अग्ने प्रणीतौ प्रणयने अभ्यनुज्ञायां परिचर्यायां सत्यामहं शर्मणि शरणे सुखे वा स्यां भवेयं । सुखं प्राप्नुयामित्यर्थः । कीदृशस्याग्नेः । सुशर्मणः साधुशरणस्य शोभनं शर्म सुखं यस्मात्स सुशर्मा तस्य । बृहतः प्रौढस्य । सुहवस्य सुखेनाह्वातुं शक्यस्य । अस्तेर्लिङि उत्तमैकवचने स्यामिति रूपम् ॥ ४९ ॥

## पञ्चाशी ।

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन । म॒हे रणा॑य॒ चक्ष॑से ॥ ५० ॥

**उ०** अप उपसृजति । आपो हि । अब्देवत्यास्तिस्रो गायत्र्यः । आपो हि ष्ठा मयोभुवः । द्वितीये पादे तच्छब्दश्रवणाद्यदोऽध्याहारः कर्तव्यः । हे आपः, या यूयं मयोभुवः । मय इति सुखनाम । सुखेन भावयित्र्यः स्थ भवथ सर्वप्राणिनाम् । छन्दःपरिपूर्तिकरो हिशब्दः । ता नः अस्मान् ऊर्जे अन्नाय दधातन स्थापयत । यथा वयं सर्वस्य भोग्यस्य भोक्तारो भवेम तथा कुरुतेत्यभिप्रायः । महते च रणाय रमणीयाय । चक्षसे दर्शनाय । अस्मान्दधातनेत्यनुवर्तते । एतदुक्तं भवति । महच्च यद्दर्शनं परब्रह्मलक्षणं रमणीयं तदस्माकं कुरुतेति । अथवा हिशब्दो यस्मादर्थे कृत्वा व्याख्यायते । नहि वेदे मन्त्रमात्रस्याख्यानर्थक्यमिष्यते संभवे सति । आपो हि । हे आपः, हि यस्मान्मयोभुवः । ता न ऊर्जे । ताः शब्दस्य पञ्चम्यां संनतिः । तस्माद्धेतोरस्मान् अन्नाय स्थापयत । महते च रमणीयाय चक्षसे दर्शनीयाय ॥ ५० ॥

**म०** 'आपो हि ष्ठेति पर्णकषायपक्वमुदकमासिञ्चति पिण्डे' ( का० १६ । ३ । १७ ) । पलाशवल्कक्वथितं जलं पिण्डे ऋक्त्रयेण क्षिपेदिति सूत्रार्थः । अब्देवतास्तिस्रो गायत्र्यः सिन्धुद्वीपदृष्टाः । हिशब्दः एवार्थः प्रसिद्ध्यर्थो यस्मादर्थो वा । हे आपः, यूयमेव मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ । मयः सुखं भावयन्ति प्रापयन्ति ता मयोभुवः यस्मात्कारणान्मयोभुवः स्थेति वा स्नानपानादिहेतुत्वेन सुखोत्पादकत्वमपां प्रसिद्धम् तास्तादृश्यो यूयं नोऽस्मानूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्थापयत । 'तप्तनप्तनथनाश्च' ( पा० ७ । १ । ४५ ) इति लोण्मध्यमबहुवचनस्य तनबादेशे दधातनेति रूपम् । यथा वयं सर्वस्य भोग्यस्य रसस्य भोक्तारो भवेम तथास्मान्कुरुतेति भावः । किंच महे महते रणाय रमणीयाय चक्षसे दर्शनाय चास्मान्दधातनेत्यनुवर्तते । महद्रमणीयं दर्शनं ब्रह्मसाक्षात्कारलक्षणं तदस्माकं कुरुत । अस्मान् ब्रह्मसाक्षात्कारयोग्यान्कुरुतेति भावः । ऐहिकपारलौकिकसुखं दद्तेत्यृचो भावः । 'मह पूजायाम्' मह्यते पूज्यत इति मट् क्विप्प्रत्ययः तस्मै महे । 'रण शब्दे' रण्यते स्तूयते सर्वैरिति रणम् तस्मै रणाय । चष्टे पश्यति सर्वं येन इति चक्षः चक्षतेरसुन्प्रत्ययः । तस्मै चक्षसे । 'यस्मिन्ज्ञाते सर्वं विज्ञातं स्यात्' इति छान्दोग्यश्रुतेः ॥ ५० ॥

## एकपञ्चाशी ।

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ ५१ ॥

**उ०** यो वः यश्च वः युष्माकं शिवतमः शान्ततमः रसः । तस्य भाजयत भागिनः कुरुत । इहैव स्थितान्नः अस्मान् उशतीरिव । 'वश कान्तौ' । कृतसंप्रसारणस्यैतद्रूपम् । कामयमाना इव मातरः । मातृशब्दः संबन्धवचनः । यथा कामयमाना मातरः पुत्रस्य कल्याणं तैस्तैरर्थैर्भाजयेयुः एवं भाजयत ॥ ५१ ॥

**म०** हे आपः, वो युष्माकं यः शिवतमः शान्ततमः सुखैकहेतू रसोऽस्ति इहास्मिन्कर्मणि इह लोके वा स्थितानोऽस्मान् तस्य रसस्य भाजयत भागिनः कुरुत । तं रसं प्रापयतेति भावः । कर्मणि षष्ठी । तत्र दृष्टान्तः । उशतीर्मातर इव उशन्ति ता उशत्यः 'वा छन्दसि' ( पा० ६ । १ । १०६ ) इति दीर्घः । 'वश कान्तौ' इत्यस्माच्छतृप्रत्ययान्तात् 'उगितश्च' ( पा० ४ । १ । ६ ) इति ङीप् । उशत्यः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं बालं पाययन्ति तद्वत् ॥ ५१ ॥

## द्विपञ्चाशी ।

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ ५२ ॥

**उ०** तस्मा अरम् । अलमिति प्राप्ते लकारस्य रेफश्छान्दसः । हे आपः, तस्य च रसस्य अधस्तनमन्त्रयाचितस्य वो युष्मत्संबन्धिनः अलं पर्याप्तं गमाम गच्छाम वयम् । पर्याप्तं नाम रसविषये वैतृष्ण्यं सदातृप्त्यं वा । यस्य क्षयाय जिन्वथ । 'क्षयो निवासे' इत्याद्युदात्तः । पष्ठ्यर्थे चतुर्थी । यस्येति सामानाधिकरण्यात् । यस्य आहुतिपरिणामभूतस्य क्षयस्य निवासस्यैकदेशेन जिन्वथ । जिन्वतिः प्रीतिकर्मा । तर्पयथ । पञ्चाहुतिपरिणामक्रमेणेदं ब्रह्मादिस्तम्बपर्यंतं जगत् । तत्र हे आपः, जनयथ नः अस्मान् भोक्तृत्वेन । आजानदेवत्वमाशास्ते ॥ ५२ ॥

**म०** अलमिति प्राप्ते लकारस्य रेफश्छान्दसः । हे आपः, वो युष्मत्संबन्धिनस्तस्य पर्याप्तिं वयं गमाम गच्छेम । पर्याप्तिर्नाम रसविषये वैतृष्ण्यं सदातृप्तिर्वा । तस्मै इति चतुर्थी षष्ठ्यर्थे । यस्य क्षयाय जिन्वथ 'क्षयो निवासे' ( पा० ६ । १ । २०१ ) इत्याद्युदात्तत्वात् क्षयशब्देन निवासः । क्षयायेति चतुर्थी षष्ठ्यर्थे । यस्येत्यनेन सामानाधिकरण्यात् । क्षयस्य निवासस्य जगतामाधारभूतस्य यस्याहुतिपरिणामभूतस्य रसस्यैकदेशेन यूयं ब्रह्मादिस्तम्बपर्यन्तं जगत् जिन्वथ तर्पयथ । जिन्वतिः प्रीतिकर्मा । पञ्चाहुतिपरिणामक्रमेणेति भावः । किंच हे आपः, नोऽस्मान् तत्र भोक्तृत्वेन जनयथ उत्पादयत । आशिषि लोट् तद्रसभोक्तॄनस्मान् कुरुतेत्याजानदेवत्वमाशास्ते इति भावः । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति संहितायां दीर्घः । यद्वास्या ऋचोऽयमर्थः । यस्य क्षयाय क्षयेण निवासेन यूयं जिन्वथ प्रीता भवथ तस्मै रसाय तद्रसाप्तये वो युष्मानरमत्यर्थं वयं गमाम प्राप्नुमः । किंच हे आपः, यूयं नोऽस्मान् जनयथ प्रजोत्पादनसमर्थान् कुरुथ । गच्छतेर्लुङि उत्तमबहुवचनेऽगमामेति रूपम् । अडभाव आर्षः 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुकि लोटि वा रूपम् ॥ ५२ ॥

## त्रिपञ्चाशी।

मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह। सुजातं जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः॥ ५३॥

उ० अजलोमैः संसृजति मित्रः संसृज्य। मैत्री उपरिष्टाद्बृहती। अध्वर्युराह। मित्रः आदित्यः संसृज्य एकीकृत्य पृथिवीम् द्युलोकान्तरिक्षम्। भूमिवचनः पृथिवीशब्दः। इह तु द्युलोकवचनो गृह्यते। पृथिवीं द्युलोकम् भूमिं च मां ज्योतिषा अजलोमैः सह संसृज्य मह्यं प्रयच्छत्विति शेषः। अजस्याग्नेयत्वात् लोमानि ज्योतिःशब्देन भणितुं शक्यन्ते। अहमपि च गृहीत्वा सुजातं कल्याणजातं त्वां जातवेदसं जातप्रज्ञानमग्निमजलोमाख्यं संसृजामि अयक्ष्माय अव्याधितायै। प्रजाभ्यः प्रजानामिति संनतिः॥ ५३॥

म० 'अजलोमभिः सꣳसृजति मित्रः सꣳसृज्येति'। (का० १६। ३। १८)। अजाद्यानि पूर्वं लोमानि गृहीतानि तैः पिण्डं मिश्रयतीति सूत्रार्थः। मित्रदेवत्योपरिष्टाद्बृहती त्रयोऽष्टार्णाश्चतुर्थो द्वादशार्णः। मित्रः आदित्यो देवः पृथिवीं द्युलोकं भूमिं चेमां मृत्पिण्डरूपां ज्योतिषाजलोमभिः सह संसृज्य एकीकृत्य मह्यमध्वर्यवे प्रयच्छत्विति शेषः। पृथिवीशब्दो द्युलोकान्तरिक्षवाची इह द्युलोकवाची गृह्यते। अजस्याग्नेयत्वाज्ज्योतिःशब्देनाजलोमान्युच्यन्ते। अहमपि सुजातं शोभनोत्पन्नं जातवेदसं जातप्रज्ञानमजलोमाख्यमग्निं त्वा त्वां संसृजामि पिण्डेन योजयामि। किमर्थं प्रजाभ्यः। चतुर्थी षष्ठ्यर्थे। प्रजानामयक्ष्माय यक्ष्मणो रोगस्याभावोऽयक्ष्मं तस्मै रोगाभावाय॥ ५३॥

## चतुःपञ्चाशी।

रुद्राः सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे। तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते॥ ५४॥

उ० शर्करायोरसाश्मचूर्णैः संसृजति। रुद्राः संसृज्य। अनुष्टुब्रौद्री। रुद्राः संसृज्य एकीकृत्य शर्करायोरसाश्मचूर्णैः पृथिवीं पार्थिवं पिण्डम्। बृहन्महत् ज्योतिरग्निलक्षणम्। उखायां समीधिरे संदीपितवन्तः। उखास्थमग्निं संवत्सरं धारितवन्तः। तेषामिदानीं फलमाह। तेषां रुद्राणां भानुर्दीप्तिः। अजस्रइत्। 'जसु उपक्षये' इच्छब्द एवार्थे। अनुपक्षीण एव। शुक्रः देवेषु। निर्धारणे सप्तमी। रोचते देदीप्यते॥ ५४॥

म० 'शर्करायोरसाश्मचूर्णैश्च रुद्राः सꣳसृज्येति' (का० १६। ३। १९)। सूक्ष्मसिकतालोहकिट्टपाषाणचूर्णैः पिण्डं मिश्रयतीति सूत्रार्थः। रुद्रदेवत्यानुष्टुप्। ये रुद्राः, पृथिवीं पार्थिवं पिण्डं संसृज्य शर्करायोरसाश्मचूर्णैः संयोज्य बृहज्ज्योतिः प्रौढमग्निं समीधिरे सम्यक् दीपितवन्तः उखास्थमग्निं सम्यक् पालितवन्तः। तेषां फलमाह। तेषां रुद्राणां शुक्रः शुद्धो देदीप्यमानोऽजस्रः अनुपक्षीण एव देवेषु मध्ये भानुः दीप्तिः रोचते प्रकाशते। इत् एवार्थः॥ ५४॥

## पञ्चपञ्चाशी।

सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम्। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम्॥ ५५॥

उ० तिसृभिरनुष्टुब्भिः सिनीवाल्यदितिदेवताभिर्मृदं संयौति। संसृष्टां संसेविताम्। वसुभिः रुद्रैश्च धीरैः बुद्धिमद्भिः। धीशब्दो बुद्धिवचनः रो मत्वर्थीयः। कर्मण्याम् कर्मणा या संपद्यते सा कर्मण्या तां कर्मण्याम्। मृदं मृत्तिकाम्। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु करोतु॥ ५५॥

म० 'सꣳसृष्टामिति संयौति ऋक्त्रयेण मृत्पिण्डे सम्यक् मिश्रयति' (का० १६। ३। २०) द्वे सिनीवालिदेवत्ये तृतीयादितिदेवत्या तिस्रोऽनुष्टुभः। सिनीवाली चन्द्रकलायुक्तामावास्याभिमानिनी देवता मृदं हस्ताभ्यां मृद्वीं कोमलां कृत्वा पुनस्तां मृदं कर्मण्यामुखाकर्मयोग्यां कृणोतु। कर्म संपद्यते यया सा कर्मण्या ताम्। कीदृशीं मृदम्। धीरैः बुद्धिमद्भिर्वसुभिः रुद्रैश्च संसृष्टां सेवितां शर्करादिभिः संयोजितां वा। धीरस्ति येषां ते धीराः। मत्वर्थे रः॥ ५५॥

## षट्पञ्चाशी।

सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा। सा तुभ्यमदिते मह्योखां दधातु हस्तयोः॥ ५६॥

उ० या सिनीवाली सुकपर्दा। कपर्दः केशसंयमनप्रकारः। साधु केशसंयमना वेणिर्वा कपर्दः। सुकुरीरा कुरीरो मुकुटः शोभनमुकुटा। स्वौपशा शोभनमुपशेते या सा स्वौपशा विदग्धः शयने करकण्ठकूजितादिभिर्विलासैर्यस्याः सा तुभ्यं हे अदिते, महि महति, उखां दधातु स्थापयतु हस्तयोः॥५६॥

म० 'अदितिरदीना देवमाता' (निरु० ४। २३) इति यास्कः। हे अदिते देवमातः, हे महि महति, सा पूर्वमन्त्रोक्ता सिनीवाली तुभ्यं तव हस्तयोः उखामादधातु स्थापयतु। कीदृशी सा। सुकपर्दा कपर्दोऽत्र स्त्रीणामुचितः केशबन्धविशेषः। शोभनः कपर्दो यस्याः सा सुकपर्दा। सुकुरीरा स्त्रीभिः शृङ्गारार्थं शिरसि धार्यमाणं कनकाभरणं कुरीरः शोभनः कुरीरो यस्याः सा सुकुरीरा सुमुकुटा। स्वौपशा सम्यक् उपशेते शयनं कुरुते यैरवयवविशेषैस्ते सर्वेऽप्युपशाः तेषां समूह औपशः शोभनः शयनविदग्धो विलासचतुर औपशोऽवयवसमूहो यस्याः सा॥ ५६॥

## सप्तपञ्चाशी।

उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया।

मा॒ता पु॒त्रं यथो॒पस्थे॒ साग्निं॒ बिभर्तु॒ गर्भ॒ आ ॥ म॒खस्य॒ शिरो॑ऽसि ॥ ५७ ॥

उ० उखां कृणोतु करोतु । शक्त्या सामर्थ्येन । बाहुभ्याम् अदितिः धिया बुद्ध्या च कृता सती । माता पुत्रं यथा उपस्थे उत्सङ्गे । अग्निं बिभर्तु धारयतु । गर्भे आ । आकार आत्मनो योग्यां क्रियामाक्षिपति । आधारय । गर्भशब्द उखाभ्यन्तरवचनः । मृत्पिण्डमादत्ते । मखस्य यज्ञस्य शिरोसि । आहवनीयो यज्ञस्य शिरस्तदुद्धारणादिहापि लक्षणया शिरःशब्दः प्रवर्तते ॥ ५७ ॥

म० अदितिः शक्त्या सामर्थ्येन धिया बुद्ध्या च बाहुभ्यां हस्ताभ्यामुखां कृणोतु करोतु । सा उखा कृता सती गर्भे मध्यभागे आसमन्तात् अग्निं बिभर्तु धारयतु । तत्र दृष्टान्तः । यथा माता जननी उपस्थे उत्सङ्गे पुत्रं बिभर्ति तद्वत् । 'यजमान उखां करोति मृदमादाय मखस्य शिर इति' (का० १६ । ३ । २२ ) । यजमानपत्न्या तत्पिण्डान्मृदमादाय द्वादशाङ्गुलित्रिस्थानलिखिताषाढसंज्ञकेष्टकायां कृतायां यजमानः पिण्डान्मृदमादाय स्वयमेवोखां करोति । एकपशुपक्षे प्रादेशायामविस्तारोर्ध्वा चतुरस्रां पञ्चपशुपक्षे त्रिभागोनत्रयोविंशत्यङ्गुलायामविस्तारामूर्ध्वां प्रादेशेन वेति सूत्रार्थः । मृत्पिण्डदेवत्यं यजुः यजुर्गायत्रीच्छन्दः । हे मृत्पिण्ड, त्वं यज्ञस्य शिरोऽसि आहवनीयो यज्ञस्य शिरस्थयुद्धकरणादिहापि लक्षणया शिरःशब्दः ॥ ५७ ॥

## अष्टपञ्चाशी ।

वस॑वस्त्वा कृण्वन्तु गाय॒त्रेण॒ छन्द॑साङ्गिर॒स्वद्ध्रु॒वासि॑ पृथि॒व्यसि॒ धार॒या मयि॑ प्र॒जाꣳ रा॒यस्पोषं॒ गौपत्यꣳ सु॒वीर्य॑ꣳ सजा॒तान्यज॑मानाय रु॒द्रास्त्वा॑ कृण्वन्तु॒ त्रैष्टु॑भेन॒ छन्द॑साङ्गिर॒स्वद्ध्रु॒वास्यन्तरि॑क्षमसि धार॒या मयि॑ प्र॒जाꣳ रा॒यस्पोषं॒ गौपत्यꣳ सु॒वीर्य॑ꣳ सजा॒तान्यज॑मानायादि॒त्यास्त्वा॑ कृण्वन्तु॒ जाग॑तेन॒ छन्द॑साङ्गिर॒स्वद्ध्रु॒वासि॒ द्यौर॑सि धार॒या मयि॑ प्र॒जाꣳ रा॒यस्पोषं॒ गौपत्यꣳ सु॒वीर्य॑ꣳ सजा॒तान्यज॑माना॒य विश्वे॑ त्वा दे॒वा वैश्वान॒राः कृण्वन्त्वानु॑ष्टुभेन॒ छन्द॑साङ्गिर॒स्वद्ध्रु॒वासि॒ दिशो॑ऽसि धार॒या मयि॑ प्र॒जाꣳ रा॒यस्पोषं॒ गौपत्यꣳ सु॒वीर्य॑ꣳ सजा॒तान्यज॑मानाय ५८

उ० तं प्रथयति । वसवस्त्वा वसवस्त्वा कुण्वन्तु हे उखे, गायत्रेण छन्दसाङ्गिरस्वत् यथाङ्गिरसा कृता । यतश्च त्वं कृता सती ध्रुवा स्थिरासि पृथिवी चासि अतस्त्वां ब्रवीमि धारय स्थापय मयि । यजमानायेति चतुर्थ्यन्तं पदमुपरिष्टाच्छ्रूयते तदिह सप्तम्यन्तं कृत्वा योज्यते सामानाधिकरण्यात् । प्रजां धनस्य च पुष्टिं गोपतित्वं च । शोभनं च वीर्यं वीरकर्म । सजातान् समानजातान् भ्रातॄन् धारयेति सर्वत्राभिसंबध्यते । उत्तरेषु मन्त्रेषु विशेषः । रुद्रास्त्वा अन्तरिक्षमसि । अदित्यास्त्वा द्यौरसि । विश्वेत्वा देवा वैश्वानराः । विश्वान्नारयन्ति तारयन्ति वैश्वानराः दिशोसीति ॥ ५८ ॥

म० 'वसवस्त्वेति प्रथयति' ( का० १६ । ३ । २३ ) । यजमान आत्तां मृदमुखातलाय प्रादेशमात्रविपुलां करोतीति सूत्रार्थः । उखादेवत्या ब्राह्मी अनुष्टुप् । हे उखे, वसवः देवविशेषाः गायत्रेण छन्दसा कृत्वा अङ्गिरस्वत् अङ्गिरस इव त्वा त्वां कृण्वन्तु कुर्वन्तु । यथाङ्गिरोभिर्मुनिभिः कृता तद्वत् । यतस्त्वं कृता सती स्थिरासि पृथिवी चासि अतस्त्वां वच्मि । यजमानायेति चतुर्थी सप्तम्यर्थे । मयीति सामानाधिकरण्यात् हे उखे, मयि यजमाने प्रजां पुत्रादिकां धारय स्थापय । रायस्पोषं धनस्य पुष्टिं च धारय । गौपत्यं गोपतित्वं धनस्वामित्वं मयि धारय । सुवीर्यं शोभनं वीर्यं वीरकर्म मयि स्थापय । सजातान्समानोदरोत्पन्नान्भ्रातॄन्मयि धारय । 'अन्तानुनीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति' ( का० १६ । ३ । २७ ) । प्रथनानन्तरं प्रथिततलस्य प्रान्तान्सर्वानूर्ध्वं नीत्वा प्रथमां पिण्डिकामन्तैः संयोजयतीति सूत्रार्थः । उखादेवत्यम् आर्ष्यनुष्टुप् । हे उखे, रुद्राः त्रैष्टुभेन छन्दसा त्वां कुर्वन्तु । त्वमन्तरिक्षरूपासीति विशेषः । शेषं पूर्ववत् । 'संलिप्य श्लक्ष्णं कृत्वोत्तरमादित्यास्त्वेति' ( का० १६ । ३ । २८ ) । तामुखां शिथिलमृदा लिप्त्वा वारिणा मृदुं कृत्वोत्तरं धातुं द्वितीयपिण्डिकां पूर्वोपरि योजयतीति सूत्रार्थः । उखादेवत्यम् ब्राह्मी अनुष्टुप् । आदित्या देवाः जागतेन छन्दसा त्वां कुर्वन्तु त्वं द्योरूपासीति विशेषः । शेषा व्याख्या प्राची । 'विश्वे त्वेति समीकरोति' ( का० १६ । ३ । २९ ) । पूर्वोक्तमानां करोतीति सूत्रार्थः । औखम् ब्राह्मी बृहती । विश्वैर्नरैर्नीयन्ते विश्वान्नरान्नयन्ति वा विश्वेषां नराणां संबन्धिनो वा विश्वेभ्यो नरेभ्यो हिता वा वैश्वानराः एवंभूता विश्वेदेवाः हे उखे, त्वां कुर्वन्तु । आनुष्टुभेन छन्दसा कृत्वा त्वं च दिशो दिग्रूपासि । शेषं पूर्वतुल्यम् ॥ ५८ ॥

## एकोनषष्टी ।

अदि॑त्यै॒ रास्ना॒स्यदि॑तिष्टे॒ बिलं॑ गृभ्णातु । कृ॒त्वाय॒ सा म॒हीमु॒खां मृ॒ण्मयीं॒ योनि॑म॒ग्नये॑ । पु॒त्रेभ्यः॒ प्राय॑च्छ॒ददि॑तिः श्र॒पया॒निति॑ ॥ ५९ ॥

उ० वितृतीय उत्तरेवर्ति सर्वतः करोति । अदित्यै रास्नासि । व्याख्यातम् । बिलं गृह्णाति अदितिरदीना देवमाता ते तव बिलस्य मध्यं गृभ्णातु निदधातु कृत्वाय । उष्णिगनुष्टुब्वा आदित्याया उक्तगुणा अदितिः सा कृत्वाय क्त्वो यक् छान्दस उपजनः । कृत्वा । महीं महतीम् उखाम् । योनिं स्थानम् । अग्नये अग्न्यर्थम् पुत्रेभ्यः प्रायच्छत् प्रादात् श्रपयान् श्रपयन्तु । इतिकरणः प्रयोजनख्यापनार्थः ॥ ५९ ॥

**म०** 'वितृतीय उत्तरे वर्तिᳪं सर्वतः करोत्यदित्यै रास्नेति' ( का० १६।३।३० )। उखोर्ध्वमानं त्रेधा विभज्योपरि तृतीयभागे सर्वत्र मृन्मयीं मेखलां करोति तलान्मेखलान्तमपि प्रतिदिशं चतुर्वर्तीरग्रे स्तनयुक्ताः कुर्यादिति सूत्रार्थः। रास्नादेवत्यम् यजुर्गायत्री। हे रेखे, त्वमदित्यै अदितिरूपाया उखाया रास्ना काञ्चीगुणस्थानीयासि। 'विलं गृह्णात्वदितिष्ट इति' ( का० १६।४।३ )। उखाया मुखमालभते। उखादेवत्यम् यजुर्बृहती। हे उखे, अदितिः देवमाता ते तव विलं मध्यं गृभ्णातु गृह्णातु। 'कृत्वायेति निदधाति' ( का० १६। ४।४ )। एवमुखां निष्पाद्य भूमौ स्थापयतीति सूत्रार्थः। अदितिदेवत्या उष्णिगनुष्टुब् वा। उष्णिक्पक्षे तृतीयपादश्चतुर्दशार्णस्तेन द्व्यधिका अनुष्टुप्पक्षे तृतीयः षडर्णो व्यूह्यः। सा पूर्वोक्ता अदितिः उखां। कृत्वाय क्त्वो यक्। कृत्वा निष्पाद्य पुत्रेभ्यो देवेभ्यः इति वदन्ती प्रायच्छत्। इति किम्। श्रपयान् श्रपयन्तु। 'श्रा पाके' णिजन्तः। हे पुत्राः, इमामुखां भवन्तः श्रपयन्तु पचन्तु। 'इतश्च लोपः परस्मैपदेषु' ( पा० ३।४।९७ ) इति अन्तीत्यस्येकारलोपे संयोगान्तलोपे च 'लेटोऽडाटौ' ( पा० ३।४।९४ ) इत्यडागमे श्रपयानिति रूपम्। कीदृशीमुखाम्। महीं महतीं विशालां मृण्मयीं मृत्कार्यभूताम् अग्नये अग्न्यर्थमग्नेर्वा योनिं स्थानभूताम् ॥५९॥

## षष्टी।

वस॑वस्त्वा धूपयन्तु गाय॒त्रेण॒ छन्द॑साङ्गिर॒स्वद्रु॒द्रास्त्वा॑ धूपयन्तु॒ त्रैष्टु॑भेन॒ छन्द॑साङ्गिर॒स्वदा॑दि॒त्यास्त्वा॑ धूपयन्तु॒ जाग॑तेन॒ छन्द॑साङ्गिर॒स्वद्विश्वे॑ त्वा दे॒वा वै॑श्वान॒रा धू॑पयन्त्वानु॑ष्टुभेन॒ छन्द॑साङ्गिर॒स्वदिन्द्र॑स्त्वा धूपयतु॒ वरु॑णस्त्वा धूपयतु॒ विष्णु॑स्त्वा धूपयतु ॥ ६० ॥

**उ०** सप्तभिरश्वशकृद्भिरुखां धूपयति सप्तभिर्यजुर्भिः प्रतिमन्त्रम्। वसवस्त्वा। ऋज्वर्थानि यजूंषि ॥ ६० ॥

**म०** 'सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति प्रतिमन्त्रम्' ( का० १६।४।८ )। दक्षिणाग्नौ प्रदीप्तैः सप्तभिरश्वलण्डैरुखां प्रतिमन्त्रं धूपयत्यध्वर्युः। धूमायमानमेकैकमश्वलण्डमादायैकैकेन मन्त्रेणोखायां मध्ये बहिश्च भ्रामयेदिति सूत्रार्थः। सप्त यजूंष्युखादेवत्यानि त्रीणि ऋग्गायत्र्यः तुर्यं सामजगती पञ्चमसप्तमे यजुरुष्णिहौ षष्ठं यजुरनुष्टुप्। हे उखे, अष्टौ वसवः गायत्रेण छन्दसा अङ्गिरस इव त्वां धूपयन्तु अश्वशकृज्जन्येन धूपेन संस्कुर्वन्तु। रुद्राः एकादश त्रैष्टुभेन छन्दसा अङ्गिरस इव त्वां धू०। आदित्या जागतेन छन्दसा। वैश्वानराः सर्वहिता विश्वेदेवाः आनुष्टुभेन छन्दसा। इन्द्रस्त्वां धूपयतु वरुणो विष्णुश्च। शेषं पूर्ववत् सुगमम् ॥ ६० ॥

## एकषष्टी।

अदि॑तिष्ट्वा दे॒वी वि॒श्वदे॑व्यावती पृथि॒व्याः स॒धस्थे॑ अङ्गिर॒स्वत्ख॑नत्ववट दे॒वानां॑ त्वा पत्नी॒र्देवीर्वि॒श्वदे॑व्यावतीः पृथि॒व्याः स॒धस्थे॑ अङ्गिर॒स्वद्द॑धतूखे धि॒षणा॑स्त्वा दे॒वीर्वि॒श्वदे॑व्यावतीः पृथि॒व्याः स॒धस्थे॑ अङ्गिर॒स्वद॒भीन्धतामुखे॒ वरू॑त्रीष्ट्वा दे॒वीर्वि॒श्वदे॑व्यावतीः पृथि॒व्याः स॒धस्थे॑ अङ्गिर॒स्वच्छ्र॑पयन्तूखे॒ ग्नास्त्वा॑ दे॒वीर्वि॒श्वदे॑व्यावतीः पृथि॒व्याः स॒धस्थे॑ अङ्गिर॒स्वत्प॑चन्तूखे॒ जन॑यस्त्वाच्छि॑न्नपत्रा दे॒वीर्वि॒श्वदे॑व्यावतीः पृथि॒व्याः स॒धस्थे॑ अङ्गिर॒स्वत्प॑चन्तूखे ॥ ६१ ॥

**उ०** अभ्र्या श्वभ्रं खनति अदितिष्ट्वा अदितिस्त्वां देवी विश्वदेव्यावती। विश्वैर्देवैः सहितपृथिव्याः सहस्थाने अङ्गिरा इव खनतु। हे अवट कूप। उखामवदधातु। देवानां त्वा। इतउत्तरं पञ्चसु यजुःषु श्रुत्युक्तान्यभिधेयानि व्याख्यायन्ते इति 'ओषधयो वै देवानां पत्न्यः' इति। दधतु स्थापयतु उखे। अग्निना दीपयति। धिषणास्त्वाम् धिषणा वाचः। अभीन्धताम्। 'इन्धी दीप्तौ' श्रपयति। वरूत्रीष्ट्वा 'अहोरात्राणि वै वरूत्रयः'। तानि हि वृण्वन्ति। पचति द्वाभ्याम्। ग्नास्त्वा ग्नाश्छन्दांसि 'छन्दांसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति'। जनयस्त्वा। 'नक्षत्राणि वै जनयः'। अच्छिन्नपत्राः अनवच्छिन्नपत्राः ॥ ६१ ॥

**म०** 'अभ्र्या श्वभ्रं चतुरस्रं खनत्वदितिष्ट्वेति' ( का० १६।४।९ )। अषाढोखाविश्वज्योतिषां पाकाय चतुरस्रं गर्तमभ्र्या खनतीति सूत्रार्थः। अवटदेवत्यम् प्राजापत्या त्रिष्टुप्। हे अवट गर्त, अदितिर्देवी पृथिव्याः सधस्थे सहस्थाने उपरिभागे त्वा त्वां खनतु। अङ्गिरस इव यथाङ्गिरोभिस्त्वं खातस्तद्वत्। कीदृश्यदितिः। विश्वदेव्यावती विश्वेषां देवानां समूहो विश्वदेव्यम् तद्विद्यते यस्याः सा विश्वदेव्यवती। मन्त्रे 'सोमाश्व–' ( पा० ६।३।१३१ ) इत्यादिना दीर्घः। सर्वैर्देवैः सहिता। विश्वेषु देवेषु साधवो विश्वदेव्याः तेऽस्यां सन्तीति वा। 'देवानां त्वेत्युखां न्युब्जाम्' ( का०१६।४।११ ) इति। अधोमुखामुखामषाढोत्तरतो गर्ते स्थापयतीति सूत्रार्थः। पञ्च यजूंष्युखादेवत्यानि द्वे प्राजापत्ये त्रिष्टुभौ। विश्वदेव्यवतीः विश्वैः देवैः सहिताः देवानां पत्नीः देवीः देवपत्न्यो देव्यो दीप्यमाना ओषधयः पृथिव्याः सधस्थे उपरि अङ्गिरस इव हे उखे, त्वा त्वां दधतु स्थापयन्तु। देवपत्नीशब्देनौषधयः श्रुत्योक्ताः। तथाच श्रुतिः 'ओषधयो वै देवानां पत्न्यः' (६।५।४।४) इति। 'श्रपणेनावच्छाद्य दक्षिणाग्न्यग्निना दीपयति धिषणास्त्वेति' ( का० १६।४।१२ )। उखास्थापनानन्तरं 'विश्वज्योति-

पस्तूष्णीं श्वभ्रेऽवधाय श्रपणैः सर्वमाच्छाद्य दक्षिणाग्नेरानीतेन वह्निनोखां दीपयतीति सूत्रार्थः । विश्वदेवयुक्ता धिषणाः वागभिमानिन्यो देव्यः पृथिव्याः उपरि अङ्गिरस इव हे उखे, त्वामभीन्धतां समन्ताद्दीपयन्तु । 'वरूत्रीष्ट्वेतीक्षमाणो जपति' ( का० १६ । ४ । १४ ) । सामर्थ्यादुखोपरिस्थश्रपणे छिद्रं कृत्वा तेनोखां पश्यन् त्रीणि यजूंषि जपतीति सूत्रार्थः । ऋग्बृहती । विश्वदेवयुता वरूत्रयो देव्योऽहोरात्राभिमानिन्यो देवताः पृथिव्या उपरि अङ्गिरस इव हे उखे, त्वां श्रपयन्तु पच्यमानतां संपादयन्तु । 'अहोरात्राणि वै वरूत्रयोऽहोरात्रैर्हीदꣳ सर्वं वृतम्' ( ६ । ५ । ४ । ६ ) इति श्रुतेर्वरूत्रिशब्देनाहोरात्राणि । ग्नास्त्वा । साम जगती । 'छन्दाꣳसि ह वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति' ( ६ । ५ । ४ । ७ ) इति श्रुतेर्ग्नाशब्देन छन्दांसि । विश्वदेवयुता ग्नादेव्यश्छन्दोऽभिमानिन्यो देवताः पृथिव्या उपरि हे उखे, अङ्गिरस इव त्वां पचन्तु । जनयस्त्वा । ऋक्पङ्क्तिः । 'नक्षत्राणि वै जनयः' ( ६ । ५ । ४ । ८ ) इति श्रुतेर्जनयो नक्षत्राभिमानिन्यो देवताः हे उखे, त्वां पचन्तु । कीदृश्यो जनयः । अच्छिन्नपत्राः अच्छिन्नं पत्रं पतनं यासां ताः सन्ततयायिन्यः । शिष्टं स्पष्टम् ॥ ६१ ॥

## द्विषष्टी ।

मि॒त्रस्य॑ चर्षणी॒धृतोऽवो॑ दे॒वस्य॑ सान॒सि । द्यु॒म्नं चि॒त्रश्र॑वस्तमम् ॥ ६२ ॥

**उ०** आचरति । मित्रस्य चर्षणीधृतः । मैत्री गायत्री । मित्रस्यादित्यस्य चर्षणीधृतः । चर्षणयो मनुष्याः तेषां धारणे अधिकृतस्य अवः देवस्य अवः रक्षणं । सानसि पुरातनं पुराणं द्युम्नं च यशः अन्नं वा । चित्रश्रवस्तमम् अतिशयेन चाकर्णनीयं श्रवणीयं च वयं स्तुम इति वाक्यशेषः । याचेमहीति वा । यद्वा यस्य मित्रस्य चर्षणीधृतः पालने पुराणमस्ति द्युम्नं चित्रश्रवस्तमम् स यजमानस्याभिप्रेतमर्थं साधयतु ॥ ६२ ॥

**म०** 'आचरति मित्रस्येति' ( का० १६ । ४ । १५ ) । पाकान्तं श्रपणं क्षिपतीति सूत्रार्थः । मित्रदेवत्या गायत्री विश्वामित्रदृष्टा । मित्रस्यादित्यस्य अवो रक्षणं द्युम्नं यशोऽन्नं वा वयं स्तुम इति शेषः । याचेमहीति वा । कीदृशस्य मित्रस्य । चर्षणीधृतः चर्षणयो मनुष्यास्तान्धरतीति चर्षणिधृत् तस्य । संहितायां दीर्घः । मनुष्याणां धारयितुः । देवस्य दीप्यमानस्य । कीदृशमवः । सानसि सनातनम् । सानसीति पुराणनाम ( निघ० ३ । २७ । ४ ) फलदानशीलं वा 'षणु दाने' इत्यस्य प्रयोगः । कीदृशम् द्युम्नं चित्रश्रवस्तमं चित्रं विचित्रमनेकैः श्रूयते तच्चित्रश्रवः 'श्रु श्रवणे' अस्मात्कर्मण्यसुन् । अतिशयेन चित्रश्रव इति चित्रश्रवस्तममत्यन्तं श्रवणीयं यशः प्रार्थयामेति भावः ॥ ६२ ॥

## त्रिषष्टी ।

दे॒वस्त्वा॑ सवि॒तोद्व॑पतु सुपा॒णिः स्व॑ङ्गु॒रिः सु॑बा॒हुरु॒त शक्त्या॑ । अव्य॑थमाना पृथि॒व्यामाशा॒ दिश॒ आपृ॑ण ॥ ६३ ॥

**उ०** उद्वपति । देवस्त्वा । बृहती उख्या । देवः त्वा त्वां भवतीम् उद्वपतु प्रकाशीकरोतु । सुहस्तः स्वङ्गुरिः शोभनाङ्गुलिः । लकारस्य रेफश्छान्दसः । सुबाहुः सुभुजः । उत शक्त्या शक्त्या अपि बुध्यति । उतशब्दः समुच्चयार्थः । उद्वपतीत्यनुवर्तते । त्वं च सवित्रा उद्वप्ता सती अव्यथमाना अचलन्ती । पृथिव्याम् आस्थिता आशा दिशो विदिशश्च आ पृण आपूरय आहुतिरसेन ॥ ६३ ॥

**म०** 'उद्वपति श्रपणं देवस्त्वेति' ( का० १६ । ४ । १८–१९ ) । भस्मीभूतं श्रपणमुखायाः पराकरोतीति सूत्रार्थः । सवितृदेवत्या बृहती । हे उखे, सविता देवः शक्त्या स्वसामर्थ्येन उत अपि बुद्ध्या च त्वा त्वामुद्वपतु श्रपणाच्छादनात्प्रकाशीकरोतु । उतशब्दाद् बुद्धिरध्याहार्या । कीदृशः सविता । सुपाणिः शोभनौ पाणी हस्तौ यस्य स सुपाणिः । स्वङ्गुरिः शोभना अङ्गुलयः करस्था यस्य स स्वङ्गुलिः । लकारस्य रेफश्छान्दसः । सुबाहुः शोभनौ बाहू भुजौ यस्य स सुबाहुः । मणिबन्धादुपरिभागो बाहुः अधोभागः पाणिः । 'उखामुत्तानां करोत्यव्यथमानेति' ( का० १६ । ४ । १९—२० ) । श्रपणमपाकृत्याषाढां बहिर्निष्काश्योखामुत्तानामूर्ध्वमुखीं करोतीति सूत्रार्थः । हे उखे, सवित्रा उदुप्ता सती अव्यथमाना अचलन्ती व्यथामनाप्नुवन्ती पृथिव्यां स्थिता सती त्वमाशाः प्राच्यादिदिशः दिशः अग्नेय्यादिविदिशश्च आपृण आपूरय । आहुतिरसेनेति शेषः ॥ ६३ ॥

## चतुःषष्टी ।

उ॒त्थाय॑ बृह॒ती भ॒वोदु॑ तिष्ठ ध्रु॒वा त्वम् । मि॒त्रैतां त॑ उ॒खां परि॑ददा॒म्यभि॑त्त्या ए॒षा मा भे॑दि ॥ ६४ ॥

**उ०** उद्यच्छति । उत्थाय बृहती पूर्वार्धं उख्य उत्तरो मैत्रः । एतस्मादयजनस्थानादुत्थाय बृहती महती भव । तत उदुत्तिष्ठ प्रवर्तस्व स्वकीये कर्मणि । यतस्त्वं ध्रुवा स्थिरासि स्वभावतः परिगृह्य पात्रे करोति । मित्रैतां त इति । हे मित्र, एतां ते तव उखां परिददामि प्रयच्छामि । किमर्थम् । अभित्त्यै अभेदनाय । एषा च उखा त्वया गृहीता सती मा भेदि मा भिद्यताम् ॥ ६४ ॥

**म०** 'उद्यच्छत्युत्थायेति परिगृह्य' (का० १६।४।२१–२२)। हस्ताभ्यामुखामादाय पाकादूर्ध्वं निष्काशयतीति सूत्रार्थः । बृहती पूर्वोऽर्धर्च उखादेवत्यः उत्तरार्धो मित्रदेवत्यः । हे उखे, त्वमुत्थायैतस्मादवटाद्बहिरागत्य बृहती महती भव । तत

उत्तिष्ठ स्वकर्मणि प्रवर्तस्व । यतः त्वं ध्रुवा स्थिरासि स्वभावतः । उकारः पादपूरणः । 'पात्रे करोति मित्रैतां त इति' ( का० १६ । ४ । २२ ) । हस्तगृहीतामुखामुत्तरतः पूर्वस्थापिते कस्मिंश्चित्पात्रे स्थापयतीति सूत्रार्थः । ततो विश्वज्योतिषां तूष्णीमुद्वपनम् । हे मित्र सर्वप्राणिहितकारिन् देव, एतामुखां ते तव परिददामि परित्राणाय प्रयच्छामि । किमर्थम् । अभित्त्यै भेदनं भित्तिः न भित्तिरभित्तिस्तस्यै अभेदनाय । एषा चोखा त्वया गृहीता सती मा भेदि मा भिद्यतां विदीर्णा मास्तु ॥ ६४ ॥

## पञ्चषष्टी ।

वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ६५ ॥

उ० आच्छृणत्ति वसवस्त्वा । निगदव्याख्यातम् ॥ ६५ ॥

म० 'अजापयसावसिञ्चति वसवस्त्वेति प्रतिमन्त्रमिति' ( का० १६ । ४ । २३ ) । चतुर्मन्त्रैश्चतुर्वारमजादुग्धमुखायामवनयतीति सूत्रार्थः । उखादेवत्यानि चत्वारि आद्या ऋग्गायत्री । हे उखे, वसवः गायत्रेण छन्दसाङ्गिरस इव त्वा त्वामाच्छृन्दन्तु समन्तात्सिञ्चन्तु । 'उच्छृदिर् दीप्तिदेवनयोः' रुधादिः अत्र सेचनार्थः । रुद्राः । प्राजापत्यानुष्टुप् । रुद्रास्त्वा त्रैष्टुभेन छन्दसा आच्छृन्दन्तु । आदित्याः । ऋग्गायत्री । आदित्याः जगतीच्छन्दसा त्वां छृन्दन्तु । विश्वे । सामजगती । वैश्वानराः सर्वहिता विश्वेदेवा अनुष्टुप्छन्दसा त्वां छृन्दन्तु शेषं सष्टम् ॥ ६५ ॥

## षट्षष्टी ।

✓ आकूतिमग्निं प्रयुजꣳस्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निं प्रयुजꣳस्वाहा वाचो विधृतिमग्निं प्रयुजꣳस्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहा ॥ ६६ ॥

उ० औद्ग्रभणानि जुहोति । आकूतिमग्निम् । आकवनमाकूतिः । बलं वा आत्मनो धर्मो मनसः प्रेरणहेतुः । स एवाग्निः । प्रयुङ्क्ते कर्मणीति प्रयुक् । स्वाहा सुहुतं करोमीति व्याख्यातम् । 'नमःस्वस्तिस्वाहास्वधा–'इत्यादिना उपपदविभक्तिश्चतुर्थी । आकूत्यै अग्नये प्रयुजे स्वाहा । एवमुपरितना अपि मन्त्रा व्याख्येयाः । मनो मेधाम् । मनो मनसः प्रवृत्तिर्मेधायाश्च । चित्तं विज्ञातम् । ततश्चित्तस्य चिन्तनस्य संस्कारस्य वा विज्ञातस्य प्रवृत्तिः । वाचो विधृतिः । ततो वाचो विधारयिताग्निः प्रकाशको भवति । प्रजापतये मनवे मन्वन्तरकारिणे अग्नये वैश्वानराय विश्वानरपुत्राय ॥ ६६ ॥

म० 'प्राकृतान्यौद्ग्रभणानि हुत्वा सप्ताग्निकान्याकूतिमिति प्रतिमन्त्रम्' ( का० १६ । ४ । ३० ) । एवमुखासंभरणं समाप्यान्या अपीष्टकाः कृत्वा फाल्गुनामावास्यायां दीक्षां कृत्वौद्ग्रभणहोमकाले प्राकृतानि सोमयागे कर्तव्यानि 'आकूत्यै प्रयुजेऽग्नये स्वाहा' ( अध्या० ४ । क० ७ ) इत्यादीनि पञ्चौद्ग्रभणानि हुत्वाग्निचयनसंबन्धीनि सप्तौद्ग्रभणानि प्रतिमन्त्रं जुहोतीति सूत्रार्थः । सप्तौद्ग्रभणसंज्ञानि लिङ्गोक्तदेवत्यानि । आकूत्यै यजुः पङ्क्तिः । आकूतिरस्मदीयः संकल्पोऽग्निचयनानुष्ठानविषयः तां प्रति प्रयुङ्क्ते प्रेरयतीति प्रयुक् तं संकल्पप्रेरकमग्निमुद्दिश्य स्वाहा सुहुतमस्तु । आकूतिरेवाग्निरिति सामानाधिकरण्यं वा । मनः । यजुस्त्रिष्टुप् । अनुष्ठेयस्मरणसाधनं मनः श्रुतयोर्मन्त्रतन्त्रयोर्धारणशक्तिर्मेधा तदुभयं प्रति प्रयुजं प्रेरकमग्निमुद्दिश्य स्वाहा । चित्तम् । यजुर्जगती । अविज्ञातस्यानुष्ठानस्य ज्ञानसाधनं चित्तं तेन चित्तेनावगतमनुष्ठानं विज्ञातम् तदुभयं प्रति प्रेरकमग्निमुद्दिश्य सुहुतमस्तु । वाचः । यजुर्जगती । वाचो मन्त्रपाठरूपाया विधृतिं विधारणं प्रति प्रयुजं प्रेरकमग्निमुद्दिश्य स्वाहा सुहुतमिदमस्तु । प्रजापतये । यजुःपङ्क्तिः । मनवे मन्वन्तरकारिणे प्रजापतये प्रजानां पालकाय स्वाहा । विश्वेषां नराणामनुग्राहकाय विश्वानरपुत्राय वाग्नये स्वाहा सुहुतमस्तु ६६

## सप्तषष्टी ।

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥ ६७ ॥

उ० विश्वो देवस्येति व्याख्यातम् ॥ ६७ ॥

म० ऋष्याद्युक्तं व्याख्याता च ( अध्या० ४ । क० ८ ) । विश्वो मर्तो सर्वो मनुष्यो नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सवितुः सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । विश्वः सर्वो जनः राये धनाय इषुध्यति देवं प्रार्थयते । याञ्चाकर्मसु पठितः । किंच पुष्यसे पोष्टुं पोषणाय द्युम्नं यशोऽन्नं वा वृणीत सर्वो जनः प्रार्थयते स्वाहा तस्मै प्रेरकाय सुहुतमस्तु ॥ ६७ ॥

## अष्टषष्टी ।

मा सु भित्था मा सु रिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथः ॥ ६८ ॥

उ० उखामाहवनीयेऽधिश्रयति । मा सु भित्थाः इति गायत्री त्रिष्टुब्भ्यामुखादेवत्याभ्याम् । अग्निश्चेदमिति पाद आग्नेयश्च । हे उखे, मा त्वं भित्थाः । 'भिदिर् विदारणे' । भिद्यस्व । सुकारोऽनर्थकः । मा च रिषः । रिषतिर्हिंसाकर्मा । मा विनश्यस्व । हे अम्ब, अम्बेति योषाया आमन्त्रणम् । धृष्णु धृष्टं प्रागल्भ्यं वीरयस्व वीरकर्म कुरुष्व अग्निधारणलक्षणम् । किंच । इतउत्तरम् अग्निश्च त्वं च इदं कर्म आसमासैः करिष्यथः पचनम् ॥ ६८ ॥

म० 'दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलायशणकुलायावस्तीर्णामन्तरेशणां मा सु भित्था इति तिष्ठन्नुदङ् प्राङ्' (का० १६ । ४ । ३१)। औद्ग्रभणहोमानन्तरं दीक्षणीयाशेषं समाप्य कृष्णाजिनदीक्षादि दण्डोच्छ्रयणान्तं प्राकृतं कर्म कृत्वाध्वर्युर्यजमानो वेशानाभिमुखः प्राग्वा तिष्ठन्नृग्द्वयेन समिद्धे आहवनीये उखामारोपयति । कीदृशीमुखम् । मुञ्जतृणनिर्मितं पक्षिनीडं मुञ्जकुलायः शणनिर्मितं तच्छणकुलायस्ताभ्यां मध्ये छादितामादौ शणकुलायेन ततोऽन्येनेति सूत्रार्थः । उखादेवत्ये द्वे गायत्रीत्रिष्टुभौ । प्रथमायास्तृतीयपादोऽग्निदैवतः । हे अम्ब मातः उखे, त्वं सुतरां मा भित्थाः भिन्ना विदीर्णा मा भव । इदमभिन्नत्वं सुष्ठु विधेयम् । तथा मा सुतरां रिषः । रिषतिर्हिंसाकर्मा । मा हिंसिता भव मा विनश्यस्व । इदमस्फुटनं सुष्ठु विधेयम् । सर्वात्मना द्वैधीभावो भेदः, लेशस्य पृथग्भावः स्फुटनं तदुभयं तव मा भूदित्यर्थः । किंच हे उखे, धृष्णु प्रगल्भं यथा सुतरां वीरयस्व अग्निधारणलक्षणं वीरकर्म कुरु । किंच अग्निश्चकारात्त्वं चेदमस्मदीयं कर्म आसमाप्तेः करिष्यथः ॥ ६८ ॥

## एकोनसप्ततितमी ।

दृꣳह॑स्व देवि पृथिवि स्व॒स्तय॑ आसु॒री मा॒या स्व॒धया॑ कृ॒तासि॑ । जुष्टं॑ दे॒वेभ्य॑ इ॒दम॑स्तु ह॒व्यमरि॑ष्टा॒ त्वमुदि॑हि य॒ज्ञे अ॒स्मिन् ॥ ६९ ॥

उ० दृंहस्व देवि । हे उखे, दृंहस्व दृढीकुरु आत्मानम् । हे देवि पृथिवि । कार्ये कारणोपचारो वर्णनार्थः । स्वस्तये अविनाशाय । कस्मात्त्वमिदमुच्यसे । यत आसुरीमाया । असुः प्राणः । रेफ उपजनः । प्राणसंबन्धिनी माया प्रज्ञा । स्वधया अन्नेन निमित्तभूतेन कृतासि । किंच । जुष्टं प्रियं देवेभ्यो हुतम् इदं हव्यं हविः अस्तु । त्वत्प्रसादात् या उखग्नावाहुतयो हूयन्ते ता उच्यन्ते । त्वमपि अरिष्टा अनवखण्डिता उदिहि उद्गच्छ । यज्ञे अस्मिन्वर्तमाने ॥ ६९ ॥

म० कार्ये कारणोपचारो वर्णनार्थः । हे पृथिवि देवि, मृत्कार्यत्वात्पृथिवीत्वं मन्त्रैर्निष्पादितत्वाद्देवतात्वम् । तथाविधे हे उखे, स्वस्तये यजमानस्य क्षेमाय दृंहस्व दृढा भव । कस्मात्त्वमिदमुच्यसे स्वधयान्नेन निमित्तेन त्वमासुरी माया प्राणसंबन्धिनी प्रज्ञा कृतासि । असूनां प्राणानामियमासुरी । यद्वा असुरसंबन्धिनी माया अचिन्त्यरचनारूपं चित्रं वस्तु भूत्वा यद्वत्प्रतिभाति तद्वत् त्वमपि स्तनरचनायुक्ता निष्पन्नासीत्यर्थः । किंच हे उखे, इदं हव्यमुख्येऽग्नौ होष्यमाणं देवेभ्यो जुष्टं प्रियमस्तु । त्वत्प्रसादाद्देवेभ्यो रोचतामित्यर्थः । त्वमपि अरिष्टा अनवखण्डिता सती अस्मिन्यज्ञे वर्तमाने उदिहि उद्गच्छ उद्गता भव ॥ ६९ ॥

## सप्ततितमी ।

द्रु॒न्नः स॒र्पिरा॑सुतिः प्र॒त्नो होता॒ वरे॑ण्यः । सह॑सस्पु॒त्रो अद्भु॑तः ॥ ७० ॥

उ० उख्येऽग्नौ त्रयोदश समिधः प्रादेशमात्रा आदधाति त्रयोदशभिराग्नेयीभिर्ऋग्भिः । द्वे गायत्र्यौ । द्रुन्नः सर्पिरासुतिः । द्रुर्वृक्षोऽन्नमदनीयं यस्य स द्रुन्नः । द्रुशब्दो द्रुमपर्यायः । सर्पिरासुतिः सर्पिर्घृतमासवनस्थानीयं यस्य स सर्पिरासुतिः । प्रत्नः पुराणः । होता देवानामाह्वाता । वरेण्यो वरणीयः । सहसस्पुत्रः बलस्य पुत्रः । यतो मथ्यमानो जायते तस्मादेवमुच्यते । अद्भुतः अनन्यसमः । य इत्थंभूतोऽग्निः स कार्मुकिं समिधं भक्षयत्विति शेषः । नह्यत्राख्यातं विद्यते नचाख्यातेन विना वाक्यपरिसमाप्तिः ॥ ७० ॥

म० 'अग्नावारूढे त्रयोदशास्यां प्रादेशमात्राः समिध आदधाति घृतक्तिन्नां कार्मुकीं द्रुन्न इति' (का० १६ । ४ । ३३-३५)। अभितापादुखायां वह्नौ जाते प्रादेशमितास्त्रयोदशसंख्याकाः समिधो जुहोति ताः क्रमेणाह । घृतक्तिन्नां क्रमुकसमिधमादौ क्रमुको धमनः इति सूत्रार्थः । अग्निदेवत्या गायत्री सोमाहुतिदृष्टा । ईदृशोऽग्निः । कार्मुकीं समिधं भक्षयत्विति शेषः । कीदृशः । द्रुन्नः 'पलाशीद्रुद्रुमागमाः' इति कोशोक्तेर्द्रवो वृक्षा एवान्नमदनीयं यस्य स द्रुन्नः, सर्पिरासुतिः सर्पिर्घृतमासुतिरासवस्थानीयं मादकं यस्य सः । यद्वा सर्पिराहारत्वेन सूयते प्रक्षिप्यते यस्मिन्सर्पिरासुतिः । प्रत्नः पुरातनः । होता देवानामाह्वाता । वरेण्यः वरणीयः । सहसो बलस्य पुत्रः मन्थनहेतुना बलेनोत्पद्यमानत्वात् । अद्भुतः आश्चर्यरूपः अनन्यसदृश इत्यर्थः ॥ ७० ॥

## एकसप्ततितमी ।

पर॑स्या॒ अधि॑ सं॒वतोऽव॑राँ२ऽअ॒भ्या॑तर । यत्रा॒हमस्मि॒ ताँ२ऽअ॑व ॥ ७१ ॥

उ० शतम् ५०० । वैकङ्कतीमादधाति । परस्या अधि । संवत इति संग्रामनामसु पठितम् । संपूर्वस्य वनतेर्गत्यर्थस्य संगच्छन्ते ह्येव योधाः परस्याः संबन्धिन्याः संवतः अधि सकाशात् । अवरान् अस्मदीयान् । अभ्यातर अभ्यागच्छ । ततो यत्र जनपदे अहमस्मि तान् अव पालय तर्पय वा ७१

म० 'वैकङ्कतीं परस्या इति' ( का० १६ । ४ । ३६ )। विकङ्कततरुसमिधं जुहोतीति सूत्रार्थः । आग्नेयी गायत्री विरूपदृष्टा । इत अध्यायान्तमाग्नेय्यः । संवत् इति संग्रामनामसु पठितम् । संपूर्वस्य वनतेर्गत्यर्थस्य क्विप् । संवन्वते संगच्छन्ते योधा यत्र सा संवत् । परस्याः शत्रुसंबन्धिन्याः संवतः संग्रामात् अवरानस्मदीयान् जनानभ्यातर अभिमुखमागच्छ दुःखात्तारयेत्यर्थः । किंच यत्र जनपदे अहमस्मि भवामि तानव पालय तर्पय वा ॥ ७१ ॥

## द्विसप्ततितमी ।

प॒र॒मस्याः॑ परा॒वतो॑ रो॒हिद॑श्व इ॒हाग॑हि । पु॒री॒ष्यः॒ पुरुप्रि॒योऽग्ने॒ त्वं त॑रा मृधः॑ ॥ ७२ ॥

**उ०** औदुम्बरीमादधाति । परमस्याः । तिस्रोऽनुष्टुभः । परावत इति दूरनामसु पठितम् । परमस्याः परावतः । परं दूरम् तस्मात् । हे रोहिदश्व, 'रोहितोऽग्नेः । हरित आदित्यस्य' इति निघण्टुः । हे अग्नेरश्व, इह आगहि आगच्छ । यतः त्वं पुरीष्यः पशव्योऽसि पुरुप्रियश्च बहुजनप्रियश्च । औदुम्बरे बहून्येवाशनानि 'तयोत(?)दूर्जा सर्वान्वनस्पतीन् प्रति पच्यते' इति श्रुतिः । आगत्य च हे अग्ने, त्वं तर विनाशय मृधः संग्रामान् ॥ ७२ ॥

**म०** 'औदुम्बरीं परमस्या इति' (का० १६ । ४ । ३७) । उदुम्बरतरुसमिधं तृतीयामादधातीति सूत्रार्थः । अनुष्टुप्त्वारुणीदृष्टा । हे अग्ने, परमस्याः परावतोऽत्यन्तदूरदेशादिहास्मिन्कर्मणि त्वमागहि आगच्छ । गच्छतेः शपि लुप्ते अनुदात्तोपदेशे मलोपे आगहीति रूपम् । परावत इति दूरनामसु पठितम् । परमाशब्दस्य सर्वनामत्वमार्षम् । परमा उत्कृष्टातिशयिता या परावत् । अतिदूरमित्यर्थः । आगत्य च मृधः संग्रामान् तर अतिलङ्घय । शत्रून्विनाशयेत्यर्थः । 'द्व्यचोऽतस्तिङः' (पा० ६ । ३ । १३५) इति दीर्घः । कीदृशस्त्वम् । रोहिदश्वः 'रोहितोऽग्नेऽर्हरित आदित्यस्य' इति निघण्टूक्तेः रोहितोऽग्नेरश्वाः रोहितः तत्संज्ञा अश्वा यस्य स रोहिदश्वः । पुरीष्यः पशव्यः पुरुप्रियः पुरूणां बहूनां प्रियो वल्लभः ॥ ७२ ॥

## त्रिसप्ततितमी ।

यद॑ग्ने॒ कानि॒ कानि॑ चि॒दा ते॒ दारू॑णि द॒ध्मसि॑ । सर्वं॒ तद॑स्तु ते घृ॒तं तज्जु॑षस्व यविष्ठ्य ॥ ७३ ॥

**उ०** अपरशुवृक्णामादधाति । यदग्ने । यच्छब्दो दध्मसीत्यनेन संबध्यते । यदा दध्मसि यदा दध्मः । हे अग्ने, तव दारूणि कानिचित् । चिच्छब्दोऽनवक्लृप्तौ । यानि कानिचिदेवेत्यभिप्रायः । सर्वं तदस्तु ते तव घृतं । तज्जुषस्व सेवस्व । हे यविष्ठ्य युवतम, स्वार्थे यप्रत्ययः ॥ ७३ ॥

**म०** 'अपरशुवृक्णां यदग्न इति' ( का० १६ । ४ । ३८ ) कुठारं विना छिन्नां वातादिना भग्नां यज्ञियतरुसमिधं चतुर्थीमादधातीति सूत्रार्थः । द्वे अनुष्टुभौ जमदग्निदृष्टे, अतिशयेन युवा यविष्ठः यविष्ठ एव यविष्ठ्यः । स्वार्थे यत्प्रत्ययः । हे यविष्ठ्य हे युवतम हे अग्ने, कानि कानिचित् यानि कानि दारूणि काष्ठानि ते तव । सप्तम्यर्थे षष्ठी । त्वयि यत् आदध्मसि आदध्मः आरोपयामः । इदन्तो मसि । तत्सर्वं काष्ठजातं ते त्वदर्थं घृतं घृतवत्प्रियमस्तु । तद्दारुजातं त्वं जुषस्व सेवस्व ॥ ७३ ॥

## चतुःसप्ततितमी ।

यदत्त्यु॑पजि॒ह्वि॑का॒ यद्व॒म्रो अ॑ति॒सर्प॑ति । सर्वं॒ तद॑स्तु ते घृ॒तं तज्जु॑षस्व यविष्ठ्य ॥ ७४ ॥

**उ०** अधःशयामादधाति । यदत्ति यद्भक्षयति काष्ठम् । उपजिह्विका उपदीपिका । यच्च वम्रः वल्मीकः अतीत्यनुवर्तते सर्वं तदिति व्याख्यातम् ॥ ७४ ॥

**म०** 'अधःशयां यदत्तीति' ( का० १६ । ४ । ३९ ) । अधो नीचे देशे शेते तां भूलग्नां समिधं पञ्चमीमादधाति । उपजिह्विका उपदीपिका पिपीलिकासदृशः क्षुद्रजीवः यद्दारु अत्ति भक्षयति अधःशयत्वादेव । वम्रो वल्मीकश्च यद्दारु अतिसर्पति अतिव्याप्नोति अतीत्यनुवर्तते तत्सर्वं ते घृतमस्तु इति पूर्ववत् ॥ ७४ ॥

## पञ्चसप्ततितमी ।

अह॑रह॒रप्र॑याव॒ं भर॒न्तोऽश्वा॑येव॒ तिष्ठ॑ते घा॒सम॑स्मै । रा॒यस्पोषे॑ण॒ समि॒षा मद॒न्तोऽग्ने॒ मा ते॒ प्रति॑वेशा रिषाम ॥ ७५ ॥

**उ०** पालाश्य उखा भवन्ति, अहरहः । त्रिष्टुभौ अस्मिन्मन्त्रे द्वितीयचतुर्थपादयोर्विरोधः । अश्वायेव तिष्ठते घासमस्मै । अत्र तिष्ठते अस्मै द्वे पदे परोक्षमग्निं ब्रूतः । तथाग्ने मा ते प्रति वेशा रिषामेति अग्ने ते इति प्रत्यक्षमग्निं ब्रूतः । नच वाक्यभेदेनार्थः संभवति । अतो द्वयोः पादयोर्लाक्षणिकया वृत्त्या व्याख्यायते । अहरहः सततम् अप्रयावमप्रमत्तं भरन्तः आहरन्तः अशनानि । कथमिव । तदुपमेयो दर्शयति अश्वायेति । अश्वस्येव स्थापयन्तो वयं घासं यवसम् अस्मै तव । किंच । रायस्पोषेण दक्षिणालक्षणेन धनस्य पोषेण । समदन्तः उत्साहयन्तः इषा अन्नेन समदन्तः त्वां हे अग्ने, मा रिषाम मा विनश्येम । ते तव प्रतिवेशाः प्रातिवेशिकाः । त्वदाश्रया इत्यर्थः । अध्याहारेण वा व्याख्यायते । अहरहः अप्रमत्ता आहरन्तोऽशनानि । पञ्च अश्वा येऽवदत्तं घासं भक्षितम् अदितं च अवतिष्ठते भस्म अस्मै अग्नये तदुद्वपन्तः । भस्मोद्वपनमपि पठितम् अत एवमपि व्याख्यायते । रायस्पोषेण समिषा मदन्त इत्यादि समानम् ॥ ७५ ॥

**म०** 'पालाशीः प्रत्यृचमहरहरिति' ( का० १६ । ४ । ४० ) । अष्टभिः प्रत्यृचं [illegible] पालाशीः प्रादेशमिताः समिध उख्येऽग्नावादधातीति सूत्रार्थः । द्वे त्रिष्टुभौ नाभानेदिष्ठदृष्टे । हे अग्ने, तव प्रतिवेशाः प्रातिवेशिकाः प्रत्यासन्नाः त्वदाश्रयाः सन्तो वयं मा रिषाम मा हिंसनं प्राप्नुमः मा विनश्येमेत्यर्थः । किं कुर्वन्तः । अहरहः प्रत्यहं संततमप्रयावमप्रमत्तं यथा तथा अस्मै अग्ने घासं समिद्रूपं भक्ष्यं भरन्तः संपादयन्तः प्रयवणं प्रयावः 'यु मिश्रणे' घञ्प्रत्ययः । नास्ति प्रयावः प्रमादो यस्यां क्रियायाम् । तत्र दृष्टान्तः । अश्वायेव तिष्ठते

वाजिशालायामवस्थितायाश्वाय यथा प्रत्यहमप्रमादेन घासं यच्छन्ति तद्वत् । पुनः किं कुर्वंतः । रायः पोषेण धनस्य पुष्ट्या दक्षिणालक्षणेन इषा अन्नेन च संमदन्तः हर्षं कुर्वन्तः । त्वामुत्साहयन्त इत्यर्थः ॥ ७५ ॥

## षट्सप्ततितमी ।

नाभा॑ पृथि॒व्याः स॑मिधा॒ने अ॒ग्नौ रा॒यस्पोषा॑य बृह॒ते ह॑वामहे । इ॒रं॒मदं॑ बृ॒हदु॑क्थं॒ यज॑त्रं॒ जेता॑रम॒ग्निं पृत॑नासु सास॒हिम् ॥ ७६ ॥

उ० नाभापृथिव्या इति । नाभौ पृथिव्याः । एषा ह नाभिः पृथिव्यै यत्रैतत्समिध्यन्ते । समिधाने संदीप्यमाने आहवनीयाख्ये अग्नौ । रायस्पोषाय धनस्य पोषाय । बृहते महते । हवामहे आह्वयामः । आग्नेयी अधिष्ठात्री देवता तदभिप्रायमेतत् । कथंभूतमग्निमित्यत आह । इरंमदम् इरयान्नेन माद्यति तृप्यति । बृहदुक्थं महच्छस्त्रम् । यजत्रं यजनीयम् जेतारं पृतनासु संग्रामेषु । सासहिं सोढारम् अभिभवितारम् । समिधाने अग्नाविति आहवनीयविषयोऽग्निशब्दः । जेतारमग्निमधिष्ठात्रग्निविषयः ॥ ७६ ॥

म० 'एषा ह नाभिः पृथिव्यै यत्रैष एतत्समिध्यते' ( ६ । ६ । ३ । ९ ) इति श्रुतेः । पृथिव्या नाभा नाभौ । विभक्तेराकारः । पृथिवीरूपाया उखाया मध्ये समिधाने दीप्यमाने अग्नौ आहवनीयाख्ये अग्निं तदभिमानिनं देवं वयं हवामहे आह्वयामः । किमर्थम् । बृहते रायः पोषाय प्रौढाय धनपोषणाय । कीदृशमग्निम् । इरंमदम् इरया अन्नेन माद्यति तृप्यति तुष्यतीति इरंमदस्तम् 'उग्रम्पश्य–' ( पा० ३ । ३ । ३७ ) इत्यादिना खशि निपातः । बृहदुक्थं बृहन्ति महान्ति उक्थानि शस्त्राणि यस्य तम् । यजत्रं यजनीयम् । पृतनासु संग्रामेषु जेतारं जयशीलम् । सासहिं सहतेऽभिभवतीति सासहिस्तं सोढारमस्मच्छत्रूणामभिभवितारम् । अग्नावित्याहवनीयविषयोऽग्निशब्दः जेतारमग्निमित्यधिष्ठात्रग्निविषयः ॥ ७६ ॥

## सप्तसप्ततितमी ।

याः सेना॑ अ॒भीत्व॑रीरा॒व्याधि॑नी॒रुग॑णा उ॒त । ये स्ते॒ना ये च॒ तस्क॑रा॒स्ताँस्ते॑ अ॒ग्नेऽपि॑दधा॒म्या॒स्ये॑ ॥ ७७ ॥

उ० याः सेनाः अनुष्टुभः प्रागग्नपतीयायाः । सा तूपरिष्टाद्बृहती । याः सेनाः अभित्वरीः । 'इण् गतौ' इत्यस्माद्धातोः 'इण्नशजिसर्तिभ्यः' इति क्वरप्प्रत्ययः । 'ह्रस्वस्य पिति कृति' इति तुगागमे कृते 'टिड्ढाणञ्' इति ङीपि कृते इणः इत्वरी इति सिद्धं भवति । अभियायिन्यः । आव्याधिनीः आविध्यन्ति याः उगणा उत । उतशब्दोऽप्यर्थे । अपिच । उद्गूर्णगणाः । पृषोदरादिपाठान्मध्यमपदलोपः । ये च स्तेनाश्चौरा ये च तस्कराः 'तस्करस्तत्करोति यत्पापकं' इति निरुक्ताः । तान्सर्वान् ते तव हे अग्ने, अपिदधामि प्रक्षिपामि आस्ये मुखे भक्षणाय ॥ ७७ ॥

म० षडनुष्टुभः । याः काश्चित्परकीयाः सेनाः अभीत्वरीरभीत्वर्यः अभियायिन्यः अस्मदाभिमुख्येनागमनशीलाः अभियन्ति ता अभित्वर्यः । 'इण्नशजिसर्तिभ्यः क्वरप्' ( पा० ३ । २ । १६३ ) इति क्वरप् 'ह्रस्वस्य पिति–' ( पा० ६ । १ । ७१ ) इति तुक् 'टिड्ढाणञ्द्वयसज्–' ( पा० ४ । १ । १५ ) इत्यादिना ङीप् । उतशब्दोऽप्यर्थे । उतापि च याः सेनाः आव्याधिनीः आ समन्ताद्विध्यन्ति ताः सर्वतोऽस्मांस्ताडयन्त्यः । उगणाः उद्गूर्णगणाः । पृषोदरादिपाठान्मध्यमपदलोपः । उद्यतायुधगणोपेता बहुस्तोमा इत्यर्थः । ये च स्तेनाः गुप्तचराः ये च तस्कराः प्रकटचोराः 'तस्करस्तत्करोति यत्पापकम्' ( नि० ३ । १४ ) इति नैरुक्ताः । हे अग्ने, तान् पूर्वोक्तान्सेनादीन् ते तव आस्ये मुखे अपिदधामि प्रक्षिपामि भक्षणाय । दुष्टान्सर्वान्भक्षयेत्यर्थः ॥ ७७ ॥

## अष्टसप्ततितमी ।

दꣳष्ट्रा॑भ्यां म॒लिम्लू॒ञ्जम्भ्यै॒स्तस्क॑राँ २ऽउ॒त । हनु॑भ्या॒ꣳस्ते॒नान्भ॑गव॒स्ताँस्त्वं खा॑द॒ सुखा॑दितान् ॥ ७८ ॥

उ० दंष्ट्राभ्यां दशनशीलाभ्यां दंष्ट्राभ्याम् राक्षसिके इति ये उच्येते ताभ्याम् मलिम्लून् मलिम्लुचः उक्ताः (?) गूढाःस्तेनतया म्लोचन्ति अदृश्या भवन्ति जने कक्षे च ये जम्भ्यैस्तस्करान् जम्भावृत्तिसमाश्रिता जम्भ्याः ताभिः तस्करान् । उत अपि हनुभ्यां च हननशीलाभ्यां स्तेनान् हे भगवः हे भगवन् महदैश्वर्ययुक्त । तान् त्वं खाद यथा सुखादिता भवन्ति ॥ ७८ ॥

म० गुप्ताः प्रकटाश्चेति द्विविधाश्चोराः । प्रकटा अपि पुनर्द्विविधाः । अरण्ये मार्गे च प्रहृत्य प्रत्यहमेव पलायमानाः प्रकटाः । ततोऽप्यतिप्रकटा निर्भया ग्रामेष्वेवागत्य वन्दीकाराः ते अत्र मलिम्लुच उच्यन्ते । मलं पापाधिक्यमेषामस्तीति मलिनाः तथाविधा भूत्वा म्लोचन्ति जने वने वा अदृश्या भवन्तीति मलिम्लुचः । दन्तपङ्क्तिमध्ये याभ्यां तीक्ष्णदन्ताभ्यां क्रमुकादिकं भक्ष्यते ते दंष्ट्रे राक्षसीसंज्ञे । ततः पुरोवर्तिनो बहिर्दृश्यमाना दन्ता जम्भ्याः जम्भावृत्तिमाश्रिता जम्भ्याः । दन्तलीने तु हनू । दंष्ट्राभ्यां मलिम्लून्पीडयित्वा जम्भ्यैस्तस्करानपि पीडयित्वा हनुभ्यां स्तेनान् पीडयित्वा हे भगवः भगवन्महदैश्वर्ययुक्त पूजनीय, तान्सर्वान्पूर्वोक्तान्सुखादितान् सुष्ठु खादितान्भक्षितान्पुनर्जीवनरहिता यथा भवन्ति तथा खाद भक्षय । सुखादितानपेतान्कृत्वेति वा ॥ ७८ ॥

## एकोनाशीतितमी ।

ये जने॑षु म॒लिम्ल॑वः स्ते॒नास॒स्तस्क॑रा॒ वने॑ । ये कक्षे॑ष्वघा॒यव॒स्ताँस्ते॑ दधामि॒ जम्भ॑योः ॥ ७९ ॥

**उ०** जनेषु मलिम्लुचः जनेषु स्तेनासः 'आज्जसेरसुक्' तस्कराः । वने वनाश्रिताः येच कक्षेषु नदीपर्वतकक्षेषु अघायवः । 'छन्दसि परेच्छायामिति वक्तव्यम्' इत्यघशब्दात्क्यच् 'क्याच्छन्दसि' इति उप्रत्ययः। अघं परस्मै इच्छन्तीत्यघायवः तान् तव दधामि स्थापयामि जम्भयोः भक्षणाय ॥ ७९ ॥

**म०** जनेषु ग्रामवर्तिषु ये मलिम्लुचः पूर्वोक्ता वन्दीकाराः ये च वने स्तेनासः स्तेनाः 'आज्जसेरसुक्' ( पा० ७ । १ । ५० ) इत्यसुक् । गुप्तचोराः तस्कराः प्रकटचोराः। ये च कक्षेषु नदीपर्वतगहनेषु अघायवः परेषां पापाभिलाषुकाः हे अग्ने, तान् चतुर्विधान् ते तव जम्भयोः दंष्ट्रयोर्दधामि स्थापयामि भक्षणायेत्यर्थः । अघं परस्येच्छन्ति ते अघायवः 'छन्दसि परेच्छायामिति वक्तव्यम्' इति अघशब्दात्क्यच् । 'क्याच्छन्दसि' (पा० ३ । २ । १७०) इति उप्रत्ययः ॥ ७९ ॥

## अशीतितमी ।

यो अ॒स्मभ्य॑मराती॒याद्यश्च॑ नो॒ द्वेष॑ते॒ जनः॑ । निन्दा॒द्यो अ॒स्मान्धिप्सा॑च्च॒ सर्वं॒ तं म॑स्म॒सा कु॑रु ॥ ८० ॥

**उ०** यो अस्मभ्यम् यो मनुष्यः अस्मभ्यम् अस्मदर्थम् अरातीयात् अरातिरिवाचरेत् अरातिः शत्रुः। यश्च नः अस्मान् द्वेषते द्वेष्टि जनः । निन्दाच्च निन्दयति योऽस्मान् दिप्साच्च । दम्नोतेः सन्यभ्यासलोपः । दभितुमिच्छति यः । तान् तव दधामि । सर्वमेतच्छत्रुजातं मस्मसा कुरु । मस्मसेति शब्दोऽनुकरणे डाजन्तः । यथा भक्षमाणा मस्मसा शब्दं कुर्वन्ति तथा कुर्वित्यर्थः ॥ ८० ॥

**म०** पूर्वं चोरभेदा दर्शिताः इदानीं शत्रुभेदा उच्यन्ते । ते चतुर्विधाः अरातयो द्वेषिणो निन्दका जिघांसवश्चेति । तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽरातिः । कार्यविघातं यः करोति स द्वेषी । वाग्दौर्जन्यमात्रं यः करोति स निन्दकः। हन्तुकामश्चतुर्थः । तान् अग्नये समर्पयति । यो नरः अस्मभ्यमस्मदर्थं अरातीयात् अरातिरिवाचरति अरातीयति अरातित्वमिच्छति । आचारे इच्छायां वा क्यच्प्रत्ययः । यश्च जनो नोऽस्मान्द्वेषते कार्यनाशेनाप्रीतिमुत्पादयति 'द्विष अप्रीतौ' 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुगभावः । योऽन्यन्योऽस्मान्निन्दात् निन्दति वाचा दुःखं ददाति । यश्चापरोऽस्मान् धिप्सात् धिप्सति । दम्भितुमिच्छति जिघांसति दम्भेः सन्नन्तस्य 'दम्भ इच्च' ( पा० ७ । ४ । ५६ ) इत्यभ्यासलोप इकारश्च । 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इतीकारलोपः 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्याडागमोऽरातीयादित्यादिषु त्रिष्वपि । हे अग्ने, तं सर्वं जनं चतुर्विधं मस्मसा कुरु चूर्णीकुरु चर्वित्वा भक्षयेत्यर्थः । मस्मसाशब्दो डाजन्तो निपातः चर्वणजन्यशब्दानुकरणवाची ॥ ८० ॥

## एकाशीतितमी ।

सꣳशि॑तं मे॒ ब्रह्म॒ सꣳशि॑तं वी॒र्यं॒ बल॑म् । सꣳशि॑तं क्ष॒त्रं जि॒ष्णु यस्या॒हमस्मि॑ पु॒रोहि॑तः ॥ ८१ ॥

**उ०** पुरोहितस्यादधाति । संशितं मे ब्रह्म । 'शो तनूकरणे' उपसर्गव्यत्ययः । निशितं तीक्ष्णीकृतं मे मम ब्रह्म । निशितं च वीर्यं वीरकर्म बलम् । निशितं च क्षत्रं जिष्णु जयनशीलम् यस्य । अहम् अस्मि भवामि पुरोहितः ॥ ८१ ॥

**म०** 'उपोत्तमां क्षत्रियस्येच्छन्नुत्तमां पुरोहितस्य' ( का० १६ । ४ । ४१-४२ ) । क्षत्रियजमानस्य द्वादशीं संशितमित्येतामिच्छया दधाति पुरोहितयजमानस्यान्त्यामुदेषामित्येतामिच्छया दधाति एकादश निलाः सर्वासामृचामन्ते स्वाहाकारश्चेति सूत्रार्थः । मे मदीयं ब्रह्म ब्राह्मण्यं संशितं सम्यक् तीक्ष्णीकृतम् शास्त्रीयमार्गवर्ति कृतमित्यर्थः । 'शो तनूकरणे' क्तान्तः । वीर्यमिन्द्रियशक्तिः, बलं शरीरशक्तिः, तदुभयं संशितं स्वकार्यक्षमं कृतम् । तथा यस्य क्षत्रस्याहं पुरोहितोस्मि भवामि तन्मदीयं क्षत्रं क्षत्रजातं जिष्णु जयनशीलं यथा भवति तथा संशितं तीव्रं कृतम् ॥ ८१ ॥

## द्व्यशीतितमी ।

उदे॑षां बा॒हू अ॑तिर॒मुद्वर्चो॒ अथो॒ बल॑म् । क्षि॒णोमि॒ ब्रह्म॒णाऽमि॒त्रानुन्न॑यामि॒ स्वाँ२ ऽअ॒हम् ॥ ८२ ॥

**उ०** उदेषाम् क्षत्रियस्य उदतिरम् उद्धरितवान् अस्मि । एषां योद्धॄणां बाहू उद्वर्चः उद्धरितवान्वर्चः । अथो अपिच बलम् । क्षिणोमि च विनाशयामि ब्रह्मणा पुरोहितसंज्ञेन अमित्रान् । उन्नयामि उद्गमयामि च स्वान् पुत्रपौत्रान् अहम् ॥ ८२ ॥

**म०** एषां स्वकीयानां राजब्राह्मणादीनां मध्ये एकैकस्य बाहू भुजौ उदतिरमुत्कर्षेण वर्धितवानस्मि । तिरतिर्वृद्ध्यर्थः । लौकिकोक्तिरियम् । लोके हि योऽन्यस्मादुत्कृष्टो भवति जना एवं वदन्ति अयं स्वहस्तमुपरि कृतवानिति । वर्चः कान्तिः तामप्युदतिरम् । अथो अपि च बलं शरीरशक्तिमुदतिरम् । ब्रह्मणा मन्त्रसामर्थ्येन अमित्राञ्शत्रून् क्षिणोमि क्षीणान्करोमि । स्वान्स्वकीयान्पुरुषान्पुत्रपौत्रादीनहमुन्नयामि उत्कर्षं प्रापयामि । एवं त्रयोदश समिन्मन्त्रा उक्ताः ॥ ८२ ॥

## त्र्यशीतितमी ।

अन्न॑प॒तेऽन्न॑स्य नो देह्यनमी॒वस्य॑ शु॒ष्मिणः॑ । प्रप्र॑ दा॒तारं॑ तारिष॒ ऊर्जं॑ नो धेहि द्वि॒पदे॒ चतु॑ष्पदे ॥ ८३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
एकादशोऽध्यायः ॥ ११ ॥

उ० समिधमादधाति अन्नपते अग्ने, अन्नस्य स्वमंशं नः अस्मभ्यं देहि । अनमीवस्य अमीवा व्याधिः तद्रहितस्य । शुष्मिणः । शुष्ममिति बलनाम । बलवतः । किंच । प्रप्रदातारं तारिषः अतिशयार्थ उपसर्गाभ्यासः । महता प्रकर्षेणान्नस्य दातारं प्रदातारं प्रतारिषः प्रवर्धय । किंच । ऊर्जमन्नं नः अस्मभ्यं धेहे देहि । द्विपदे चतुष्पदे द्विपाच्चश्चतुष्पाच्चश्च ॥ ८३ ॥

इति उवटकृतौ मन्त्रभाष्य एकादशोऽध्यायः ॥ ११ ॥

म० 'न्यज्य समिधं व्रते प्रत्ते प्रत्तेऽन्नपत इत्याधानम्' ( क १६ । ६ । ८ ) । अध्वर्युणा व्रतपयसि दत्ते तत्र समिधमभ्यज्य दीक्षित उक्थ्येऽन्नावादध्यात् । प्रत्ते इति वीप्सा प्रतिव्रतं समिदाधानप्राप्त्यर्था इति सूत्रार्थः आग्नेयी उपरिष्टाद्बृहती अष्टार्णत्रिपादा चतुर्थो द्वादशार्णः । हे अन्नपते अन्नस्य पालक अग्ने, नोऽस्मभ्यमन्नस्य देहि । कर्मणि षष्ठी । अन्नं प्रयच्छ । यद्वान्नस्य स्वमंशं देहि । कीदृशस्यान्नस्य । अनमीवस्य नास्ति अमीवा व्याधिर्येन तदनमीवं तस्य । शुष्मिणः शुष्ममिति बलनाम । शुष्मं बलं विद्यते यस्मात्तत् शुष्मि तस्य । रोगनाशकं बलहेत्वन्नं प्रयच्छेत्यर्थः । किंच दातारं प्रतारिषः अन्नस्य दातारं प्रकर्षेण वर्धय 'प्रसमुपोदः पादपूरणे' ( पा० ८ । १ । ६ ) इति पादपूर्त्यै प्रोपसर्गस्य द्वित्वम् अतिशयार्थे वोपसर्गाभ्यासः 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( नि० १० । ४२ ) इति यास्कोक्तेः 'तॄ प्लवनतरणयोः' लेटो मध्यमैकवचनं 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) इति सिप्प्रत्ययः । 'आर्धधातुकस्य' ( पा० ७ । २ । ३५ ) इतीट् छान्दसि धातोर्वृद्धिः 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इति अडागमः 'इतश्च लोपः' ( पा० ३ । ४ । ९७ ) इति लेट इकारलोपे रुत्वविसर्गौ । तारिष इति रूपम् । किंच नोऽस्माकं द्विपदे मनुष्ये पुत्रादौ चतुष्पदे गवादौ च ऊर्जमन्नं धेहि धारय । यद्वा द्वौ पादौ यस्य स द्विपात्तस्मै द्विपदे । चत्वारः पादा यस्य स चतुष्पात् तस्मै 'पादः पत्' ( पा० ६ । ४ । १३० ) 'पादस्य लोपोऽहस्त्यादिभ्यः' ( पा ५ । ४ । १३८ ) इति अन्तलोपे पदादेशः । द्विपदे मनुष्याय चतुष्पदे गवादये अन्नं धेहि देहि जातावेकवचनम् । सर्वेभ्यो नरपशुभ्योऽन्नं देहीत्यर्थः ॥ ८३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
उखादिसमिदाध्यन्तोऽध्याय एकादशोऽगमत् ॥ ११ ॥

## द्वादशोऽध्यायः ।

### तत्र प्रथमा ।

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥ १ ॥



उ० यजमानः कण्ठे रुक्मं प्रतिमुञ्चति । दृशानो रुक्मः त्रिष्टुप् । आदित्याध्यासेन रुक्मस्तुतिः । यो दृशानः दृश्यमानः प्रत्यक्षत उपलभ्यमानः । रुक्मः रोचनः । उर्व्या महत्या दीप्त्या व्यद्योत् विद्योतते यस्य च दुर्मर्षमायुः दुर्मर्षमनवखण्डितम् आयुर्जीवनम् । श्रिये रुचानः यश्च जनेभ्यः श्रियं दातुं रोचते सोयमग्निः अमृतः अमरणधर्मा चाभवत् । वयोभिरन्नैः पशुपुरोडाशप्रभृतिभिः यदेनं द्यौरजनयत् । यच्च एनमग्निं द्यौः अजनयत् जनितवती । सुरेताः शोभनरेताः । रेतः पुत्रः । 'सुरेता ह्येषा यस्यायमग्निः' इति द्वितीयममृतत्वकारणमग्नेः ॥ १ ॥

म० एकादशाध्याये उखासंभरणादिमन्त्रा उक्ताः द्वादशेऽध्याये उखाधारणादिमन्त्रा उच्यन्ते । तत्र 'यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविꣳशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्प्रोतमुपरिनाभि बहिष्पिण्डं दृशानो रुक्म इति' ( १६ । ५ । १ ) । समिदाधानान्ते ऐशान्यां तिष्ठन्यजमानो ग्रीवायां रुक्मं स्वर्णनिर्मितं फलकाकारमाभरणविशेषं बध्नाति । कीदृशम् वर्तुलम् एकविंशतिः पिण्डा यत्र । शणकदलतुल्याः स्वरूपाद्बहिर्भूता उन्नतबिन्दवः पिण्डा उच्यन्ते । कृष्णाजिनखण्डे श्वेतकृष्णरोमस्थाने स्यूतम् त्रिगुणशणसूत्रे प्रोतं नाभेरूर्ध्वं वर्तमानं पिण्डा बहिर्भवन्ति तथा धार्यमिति सूत्रार्थः । रुक्मदेवत्या त्रिष्टुप् वत्सप्रीदृष्टा । आदित्याध्यासेन रुक्मः स्तूयते । रुक्म आभरणविशेषः उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतते । 'द्युत द्योतने' व्यत्ययेन शपि लुप्ते वृद्धौ लङि रूपम् । कीदृशो रुक्मः । दृशानो दृश्यमानः । शानचि शपो लुक् । प्रत्यक्षमुपलभ्यमानः । श्रिये जनेभ्यः श्रियं दातुम् । दुर्मर्षं दुर्मर्षमनवखण्डितं केनाप्यतिरस्कार्यं वा आयुः जीवनं रुचानः रोचत इति रुचानो वाञ्छन् । रोचतेः शानचि 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुक् सोऽयमग्निर्वयोभिरन्नैः पशुपुरोडाशप्रभृतिभिरमृतोऽमरणधर्मा अभवत् । यद्यस्मात्कारणात् द्यौर्द्युलोकवासी देवगण एनमग्निमजनयत् जनितवती । कीदृशी । द्यौः सुरेताः शोभनं रेतोऽग्निरूपं यस्याः सा तस्मादमृतत्वं युक्तम् ॥ १ ॥

### द्वितीया ।

नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः ॥ २ ॥

उ० द्वाभ्यां परिगृह्णाति । नक्तोषासा । आग्नेयी त्रिष्टुप् नक्ता रात्रिः उषाशब्देनाहरुच्यते रात्र्यहनी । समनसा एकमनस्के । विरूपे नानारूपे । कृष्णा रात्रिः शुक्लमहः । धापयेते पाययेते सायंप्रातरग्निहोत्रादिभिः कर्मभिः। शिशुं बालमिव मातापितरौ एकं अग्निलक्षणम् । समीची सम्यगञ्चिते संश्लिष्टे वा । ये इत्थंभूते ताभ्यां गृह्णामीति शेषः । हरन् जपति

द्यावाक्षामा । द्यावापृथिव्यौ यो रुक्मः रोचनः अन्तर्विभाति अन्तरादीप्यते तं हरामीति शेषः । निदधाति । देवा अग्निं धारयन्द्रविणोदाः यमग्निं देवा द्रविणोदाः धनदातारो धारितवन्तः तमहं धारयामीति शेषः ॥ २ ॥

**म०** 'परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति' ( का० १६ । ५ । ३ )। वर्तुलाभ्यामुखाधारणसाधनरूपाभ्यामिण्ड्वाभ्यामुखां गृह्णातीति सूत्रार्थः । अग्निदेवत्या त्रिष्टुप् कुत्सदृष्टा । अर्धमुखाग्रहणे विनियुक्तम् । नक्तोषासा नक्तं च उषाश्च नक्तोषसौ । विभक्तेराकारः संहितायां दीर्घः । नक्तं रात्रिः उषा अहः नक्तोषसौ रात्रिदिवसौ एकमग्निं धापयेते पाययेते सायंप्रातरग्निहोत्रादिकर्मभिः तर्पयेते इत्यर्थः । तत्र लुप्तोपमानम् । शिशुं बालं मातापितराविव । 'धेट् पाने' 'हेतुमति च' ( पा० ३ । १ । २६ ) इति णिच् 'आदेच उपदेशेऽशिति' ( पा० ६ । १ । ४५ ) इति आकारे 'अर्तिह्री' ( पा० ७ । ३ । ३६ ) इत्यादिना पुक् । कीदृश्यौ नक्तोषसौ । समनसा समनसौ समानं मनो ययोस्ते एकमनस्के परमैकमत्ययुक्ते इत्यर्थः । विरूपे विलक्षणं रूपं ययोस्ते विरूपे । कृष्णा रात्रिः शुक्लमहः । समीची सम्यगञ्चतस्ते समीच्यः सम्यगञ्चने समन्विते संश्लिष्टे वा । पूर्वसवर्णो विभक्तेः । ये इत्थंभूते रात्र्यहनी ताभ्यामिण्ड्वारूपाभ्यामुखां गृह्णामीति शेषः । 'हरति द्यावाक्षामेति' ( का० १६ । ५ । ४ )। आहवनीयोपरिस्थामुखामेवमिण्ड्वाभ्यामादाय द्यावेति पादेनासन्दीं प्रति तां हरतीति सूत्रार्थः । द्यावाक्षामा द्यौश्च क्षामा पृथिवी च द्यावाक्षामा । दिवो द्यावादेशः विभक्तेर्लोपः । द्यावापृथिव्योरन्तर्मध्ये अन्तरिक्षे च यो रुक्मः रोचमानोऽग्निर्विभाति प्रकाशते तं हरामीति शेषः । 'आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदासन्द्यां चतुरस्राङ्क्यां शिक्यवत्यामादधाति देवा अग्निमिति' ( का० १६ । ५ । ५ )। आहवनीयात्पूर्वदिशि भूमौ स्थापितायामासन्द्यामुखां निदधाति देवा इति पादेन । उद्गात्रासन्दीवदिति प्रादेशमात्रपाद्यामौदुम्बर्यामरत्निमात्राङ्क्यां मुञ्जरज्ज्वा व्युतायामिति लभ्यते । तथा चतुरस्राङ्क्यां चतुरस्राणि चतुष्कोणानि अङ्कानीषोपलपादरूपाणि यस्यास्तस्यां सशिक्यायां चेति सूत्रार्थः । देवाः दीव्यन्ति व्यवहरन्तीति देवाः प्राणा यजमानस्य एतमग्निं धारयन् अधारयन् । अडभाव आर्षः । कीदृशा देवाः । द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं ददति प्रयच्छन्ति ते । तमहं धारयामीति शेषः । 'अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदाः' इति तैत्तिरीयश्रुतेर्देवशब्देन प्राणा उच्यन्ते ॥ २ ॥

## तृतीया ।

विश्वा॑ रू॒पाणि॒ प्रति॑मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे । विनाक॑मख्यत्सवि॒ता वरे॑ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ विरा॑जति ॥ ३ ॥

**उ०** शिक्यपाशं प्रतिमुञ्चति । विश्वा रूपाणि जगती सावित्री । यः विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते प्रतिबध्नाति । द्रव्येष्वपहत्य शार्वरं तमः प्रकाशयतीत्यर्थः । कविः क्रान्तदर्शनः । यश्च प्रासावीत्प्रसौति । भद्रं भन्दनीयम् । द्विपदे चतुष्पदे द्विपाच्चश्चतुष्पाच्चश्च । विनाकमख्यत्सविता वरेण्यः । यश्च व्यख्यत् विख्यापयति प्रकाशयति । नाकं द्युलोकम् । सविता सर्वस्य प्रसविता । वरेण्यः वरणीयः । अनु प्रयाणमुषसो विराजति । स सविता उषसः प्रयाणं प्रगमनम् अनु पश्चात् विराजति दीप्यते । 'उषाः सवितुः पुरोगामिनी' इति सवितुः स्तुतिः । य इत्थंभूतः सविता स शिक्यं प्रतिमुञ्चत्विलर्थः ॥ ३ ॥

**म०** 'शिक्यपाशं प्रतिमुञ्चते षड्द्यामं विश्वा रूपाणीति' ( का० १६ । ५ । ६ )। उत् ऊर्ध्वं यम्यते नियम्यते यैस्ते उद्यामा रज्जवः षड्द्यामा रज्जव ऊर्ध्वाकर्षणहेतवो यस्येदृशमासन्दीस्थं शिक्यपाशं यजमानः कण्ठे बध्नातीति सूत्रार्थः । सवितृदेवत्या जगती श्यावाश्वदृष्टा । कविः विद्वान् कान्तदर्शनः । वरेण्यः श्रेष्ठः सविता सर्वस्य प्रसविता सूर्यः विश्वा विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते द्रव्येषु प्रतिबध्नाति रात्रितमोऽपहत्य रूपाणि प्रकाशयतीत्यर्थः । यश्च द्विपदे चतुष्पदे द्विपाद्भ्यश्चतुष्पाद्भ्यो मनुष्यपश्वादिभ्यो भद्रं कल्याणं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रासावीत् प्रसौति प्रेरयति । यश्च नाकं स्वर्गं व्यख्यत् विख्याति प्रकाशयति । 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( पा० ३ । १ । ५२ ) इति च्लेरङ् । यश्च उषसः उषःकालस्य प्रयाणं गमनमनु पश्चात् उषःकाले व्यतीते सति विराजति विशेषेण दीप्यते । 'उषाः सवितुः पुरोगामिनी' इति सवितुः स्तुतिः । ईदृशः सविता शिक्यं प्रतिमुञ्चत्विति शेषः ॥ ३ ॥

## चतुर्थी ।

सु॒प॒र्णो॑ऽसि ग॒रुत्मा॑ꣳस्त्रि॒वृत्ते॒ शिरो॑ गाय॒त्रं चक्षु॑र्बृहद्रथन्त॒रे प॒क्षौ॑ । स्तोम॑ आ॒त्मा छन्दा॒ꣳस्यङ्गा॑नि॒ यजू॑ꣳषि॒ नाम॑ । साम॑ ते त॒नूर्वा॑मदे॒व्यं य॑ज्ञाय॒ज्ञियं॒ पुच्छं॒ धिष्ण्याः॑ श॒फाः॑ । सु॒प॒र्णो॑सि ग॒रुत्मा॒न्दिवं॑ गच्छ॒ स्वः॑ पत ॥ ४ ॥

**उ०** विकृत्याऽभिमन्त्रयते । विकृतिश्चतुरवसाना गारुत्मती विपञ्ची । सुपर्णोऽसि सुपतनस्त्वमसि । गरुत्मान् गणवान् अशनवान् । त्रिवृत्स्तोमः ते तव शिरः । गायत्रं चक्षुः । बृहद्रथन्तरे सामनी पक्षौ । पञ्चविंशः स्तोमः आत्मा । छन्दांस्येकविंशतिरङ्गानि यजूंषि नाम । साम ते तनूः । वामदेव्यं यज्ञायज्ञियं पुच्छम् । धिष्ण्याः अग्नयः शफाः खुराः । यतश्च त्वं सुपर्णोसि गरुत्मान् अतो ब्रवीमि त्वाम् । दिवं गच्छ स्वः स्वर्लोकं पत ॥ ४ ॥

म० 'सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवत्' (का० १६।५।७)। शिक्यसहितमुख्याग्निं प्राच्यामूर्ध्वं धारयति पिण्डवदित्यूर्ध्वबाहुः । अनेनोख्याग्नेरभिमन्त्रणमप्युक्तं केश्चिदिति सूत्रार्थः । गरुत्मद्देवत्या विषहन्त्री चतुरवसानाकृतिः । हे अग्ने, त्वं सुपर्णः शोभनं पर्णं पतनं यस्य स पक्षिरूपोऽसि पक्ष्याकारेण चितत्वात् । तत्र दृष्टान्तः । गरुत्मान् गरुडो यथा पक्षिराजस्तद्वत् । तस्यावयवाः कथ्यन्ते । त्रिवृत् ते तव शिरः त्रिवृत्स्तोमस्तव शिरःस्थानीयः । गायत्रं चक्षुः यद्गायत्राख्यं साम तत्तव चक्षुः नेत्रस्थानीयम् । बृहद्रथन्तरे पक्षौ बृहद्रथन्तराख्ये सामनी तव पक्षस्थानीये । स्तोम आत्मा पञ्चदशस्तोमस्तवात्मा अन्तःकरणस्थानीयः । छन्दांसि अङ्गानि गायत्र्यादीनि एकविंशतिच्छन्दांसि तव हृदयाद्यङ्गस्थानीयानि । यजूंषि नाम इषे त्वेत्यादीनि यजूंषि तव नामस्थानीयानि । वामदेव्यं साम ते तव तनूः शरीरस्थानीयम् । यज्ञायज्ञियाख्यं साम तव पुच्छं पुच्छस्थानीयम् । धिष्ण्याः शफाः होत्रादिधिष्ण्यस्थिता अग्नयस्तव शफाः खुरस्थानीयाः । हे अग्ने, एवंभूतस्त्वं यतो गरुत्मान् गरुड इव सुपर्णः पक्षिरूपोऽसि अतो दिवमाकाशं प्रति गच्छ । तत्रापि स्वः पत स्वः स्वर्गलोकं प्राप्नुहि ॥ ४ ॥

## पञ्चमी ।

विष्णोः॒ क्रमो॑ऽसि सपत्न॒हा गा॑य॒त्रं छन्द॒ आ रो॑ह पृथि॒वीमनु॒ वि क्र॑मस्व॒ विष्णोः॒ क्रमो॑ऽस्यभिमाति॒हा त्रै॑ष्टु॒भं छन्द॒ आ रो॑हा॒न्तरि॑क्ष॒मनु॒ वि क्र॑मस्व॒ विष्णोः॒ क्रमो॑ऽस्यरातीय॒तो ह॒न्ता जाग॑तं॒ छन्द॒ आ रो॑ह॒ दिव॒मनु॒ वि क्र॑मस्व॒ विष्णोः॒ क्रमो॑ऽसि शत्रूय॒तो ह॒न्तानु॑ष्टुभं॒ छन्द॒ आ रो॑ह॒ दिशोऽनु॒ वि क्र॑मस्व ॥५॥

उ० विष्णुक्रमान्क्रमते । विष्णोः क्रमोसि । विष्णोः यज्ञस्याग्ने, यतः क्रमोसि सपत्नहा च शत्रुघातकश्च अतः गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व । अभिमातिहा अभिमातिरपि केनचिद्गुणविशेषेण शत्रुरेवोच्यते । ऋज्वन्यत् । अरातीयतो हन्ता अरातिरिवाचरति अरातीयति अरातिः शत्रुः तस्य अरातीयतः शत्रूयतो हन्ता । अधस्तनेन व्याख्यातम् ५

म० 'विष्णुक्रमान्क्रमते विष्णोरिति प्रतिमन्त्रमप्युद्ग्रहणं च तस्मिंस्तस्मिन्' (का० १६।५।११)। विष्णुक्रमसंज्ञान्पादन्यासान्करोति तस्मिंस्तस्मिन्क्रमणे उख्यस्याग्नेरूर्ध्वं ग्रहणं कार्यमिति सूत्रार्थः । चत्वारि यजूंष्युख्याग्निदेवत्यानि ऋग्बृहतीच्छन्दस्कानि त्रीणि । चतुर्थं प्राजापत्या बृहती । विष्णुशब्देनाग्निरुच्यते । 'स यः स विष्णुर्यज्ञः स यः स यज्ञोऽयमेव स योऽयमग्निरुखायाम्' (६।७।२।११) इति श्रुतेः । हे प्रथमपादविन्यास, त्वं विष्णोः यज्ञस्याग्नेः क्रमोऽसि । सपत्नहा सपत्नाञ्शत्रून्हन्तीति शत्रुघातकश्च । अतो गायत्रं छन्दः आरोह अनुग्राहकत्वेन स्वीकुरु । ततः पृथिवीमनु विक्रमस्व भूदेवतारूपमिमं प्रदेशं विशेषेण प्राप्नुहि । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । हे द्वितीय पादन्यास, त्वं विष्णोः क्रमोऽसि अभिमातिहा अभिमातिघातकः पाप्मा वा तं हन्तीति । त्रैष्टुभं छन्दः । स्वीकुरु अन्तरिक्षप्रदेशं व्याप्नुहि । हे तृतीय पादन्यास, विष्णोः क्रमोऽसि अरातीयतो हन्ता रातिर्दानं न रातिररातिर्दानाभावस्तमात्मन इच्छतीत्यरातीयन् तस्य हन्ता विनाशकः । जागतं छन्दः । आरोह दिवं द्युलोकमनु विक्रमस्व द्युलोकं व्याप्नुहि । हे चतुर्थ पादन्यास, त्वं विष्णोः क्रमोऽसि शत्रूयतो हन्ता शत्रुत्वं हन्तृत्वमिच्छति शत्रूयति शत्रूयतीति शत्रूयन् क्यजन्ताच्छतृप्रत्यय उभयत्र । तस्य हन्ता आनुष्टुभं छन्द आरोह । अत्र चतुर्ष्वपि पादन्यासेषु यजमान आत्मानं विष्णुत्वेन भावयेत् चतुर्णां प्रक्रमाणां प्रदेशान्पृथिव्यादिलोकरूपत्वेन भावयेत् । 'दिशो वीक्षते दिशोऽनु विक्रमस्वेति' (का० १६।५।१३)। सर्वा दिशः पश्यतीत्यर्थः । यजुरुष्णिक् । हे अग्ने, त्वं दिशोऽनु विक्रमस्व प्राच्यादिदिशो व्याप्नुहि ॥ ५ ॥

## षष्ठी ।

अक्र॑न्दद॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑हद्वी॒रुधः॑ सम॒ञ्जन् । स॒द्यो ज॑ज्ञा॒नो वि हीमि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥ ६ ॥

उ० ऊर्ध्वबाहुः प्रदक्षिणं गृह्णात्यग्निम् । अक्रन्ददग्निः त्रिष्टुप् । अस्यामृच्यग्निपर्जन्यौ कथ्येते । अक्रन्दत् क्रन्दते विस्फूर्जति अग्निः । स्तनयन्निव द्यौः । द्यौःशब्देनात्र पर्जन्य उक्तः । यथा स्तनयन्पर्जन्यः शब्दं करोति एवमग्निः पर्जन्यवत् शब्दं करोति अथान्यान्यपि पार्जन्यानि रूपाण्यग्नेः प्रदर्श्यन्ते । क्षामा रेरिहद्वीरुधः समञ्जन् । क्षामाशब्देन पृथिव्युच्यते । द्वितीयार्थे च प्रथमा । 'लिह आस्वादने' यथा पर्जन्य उदकभावमुपगच्छन्नत्यर्थं पृथिवीं लेढि आस्वादयति वीरुधः समञ्जन् व्याप्नुवन् एवमयमग्निः पृथिवीमत्यर्थमास्वादयति स्वकीयज्वालासमूहेनौषधीः समञ्जन्व्याप्नुवन् । अन्यदप्युच्यते । सद्यो जज्ञानो वि हीमिद्धो अख्यत् । यथा पर्जन्यः सद्य एवाभ्ररूपेण जायमानो व्यख्यत् । विरुपसर्गः ख्यातिना संबध्यते । तेन विख्यापयति हि ईं इद्धो धाराशतसहस्रैः । हि ईं इमौ निपातौ पादपूरणौ । एवमयमग्निः सद्य एव जायमानः इद्धः सन् इदं सर्वं विख्यापयति । अन्यच्च । आरोदसी भानुना भात्यन्तः । यथा पर्जन्य आभाति भानुना विद्युद्रूपेण । रोदसी द्यावापृथिव्योरन्तर्व्यवस्थितः । एवमयमग्निराभाति भानुना दीप्त्या द्यावापृथिव्योरन्तर्व्यवस्थितः । एवमग्निः पर्जन्यवत्स्तूयते ऋषिणा ॥ ६ ॥

म० 'पिण्डवत् प्रागुदञ्चं प्रगृह्णात्यक्रन्ददग्निरिति' (का० १६।५।१४)। ऊर्ध्वबाहुः प्रागूर्ध्वमग्निं गृह्णातीति सूत्रार्थः ।

द्यावाक्षामा । द्यावापृथिव्यौ यो रुक्मः रोचनः अन्तर्विभाति अन्तरादीप्यते तं हरामीति शेषः । निदधाति । देवा अग्निं धारयन्द्रविणोदाः यमग्निं देवा द्रविणोदाः धनदातारो धारितवन्तः तमहं धारयामीति शेषः ॥ २ ॥

**म०** 'परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति' ( का० १६ । ५ । ३ ) । वर्तुलाभ्यामुखाधारणसाधनरूपाभ्यामिण्ड्वाभ्यामुखां गृह्णातीति सूत्रार्थः । अग्निदेवत्या त्रिष्टुप् कुत्सदृष्टा । अर्धमुखाग्रहणे विनियुक्तम् । नक्तोषासा नक्तं च उषाश्च नक्तोषसौ । विभक्तेराकारः संहितायां दीर्घः । नक्तं रात्रिः उषा अहः नक्तोषसौ रात्रिदिवसौ एकमग्निं धापयेते पाययेते सायंप्रातरग्निहोत्रादिकर्मभिः तर्पयेते इत्यर्थः । तत्र लुप्तोपमानम् । शिशुं बालं मातापितराविव । 'धेट् पाने' 'हेतुमति च' ( पा० ३ । १ । २६ ) इति णिच् 'आदेच उपदेशेऽशिति' ( पा० ६ । १ । ४५ ) इति आकारे 'अर्तिह्री' ( पा० ७ । ३ । ३६ ) इत्यादिना पुक् । कीदृश्यौ नक्तोषसौ । समनसा समनसौ समानं मनो ययोस्ते एकमनस्के परमैकमत्ययुक्ते इत्यर्थः । विरूपे विलक्षणं रूपं ययोस्ते विरूपे । कृष्णा रात्रिः शुक्लमहः । समीची सम्यगञ्चतस्ते समीच्यः सम्यगञ्चने समन्विते संश्लिष्टे वा । पूर्वसवर्णो विभक्तेः । ये इत्थंभूते रात्र्यहनी ताभ्यामिण्ड्वारूपाभ्यामुखां गृह्णामीति शेषः । 'हरति द्यावाक्षामेति' ( का० १६ । ५ । ४ ) । आहवनीयोपरिस्थामुखामेवमिण्ड्वाभ्यामादाय द्यावेति पादेनासन्दीं प्रति तां हरतीति सूत्रार्थः । द्यावाक्षामा द्यौश्च क्षामा पृथिवी च द्यावाक्षामा । दिवो द्यावादेशः विभक्तेर्लोपः । द्यावापृथिव्योरन्तर्मध्ये अन्तरिक्षे च यो रुक्मः रोचमानोऽग्निर्विभाति प्रकाशते तं हरामीति शेषः । 'आहवनीयस्य पुरस्तादुद्वात्रासन्दीवदासन्द्यां चतुरस्राङ्ग्यां शिक्यवत्यामादधाति देवा अग्निमिति' ( का० १६ । ५ । ५ ) । आहवनीयात्पूर्वदिशि भूमौ स्थापितायामासन्द्यामुखां निदधाति देवा इति पादेन । उद्वात्रासन्दीवदिति प्रादेशमात्रपाद्यामौदुम्बर्यामरत्निमात्राङ्ग्यां मुञ्जरज्ज्वा व्युतायामिति लभ्यते । तथा चतुरस्राङ्ग्यां चतुरस्राणि चतुष्कोणानि अङ्गानीषोपलपादरूपाणि यस्यास्तस्यां सशिक्यायां चेति सूत्रार्थः । देवाः दीव्यन्ति व्यवहरन्तीति देवाः प्राणा यजमानस्य एतमग्निं धारयन् अधारयन् । अडभाव आर्षः । कीदृशा देवाः । द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं ददति प्रयच्छन्ति ते । तमहं धारयामीति शेषः । 'अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदाः' इति तैत्तिरीयश्रुतेर्देवशब्देन प्राणा उच्यन्ते ॥ २ ॥

## तृतीया ।

विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । विनाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥ ३ ॥

**उ०** शिक्यपाशं प्रतिमुञ्चति । विश्वा रूपाणि जगती सावित्री । यः विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते प्रतिबध्नाति । द्रव्येष्वपहत्य शार्वरं तमः प्रकाशयतीत्यर्थः । कविः क्रान्तदर्शनः । यश्च प्रासावीत्प्रसौति । भद्रं भन्दनीयम् । द्विपदे चतुष्पदे द्विपाच्चश्चतुष्पाच्च । विनाकमख्यत्सविता वरेण्यः । यश्च व्यख्यत् विख्यापयति प्रकाशयति । नाकं द्युलोकम् । सविता सर्वस्य प्रसविता । वरेण्यः वरणीयः । अनु प्रयाणमुपसो विराजति । स सविता उषसः प्रयाणं प्रगमनम् अनु पश्चात् विराजति दीप्यते । 'उषाः सवितुः पुरोगामिनी' इति सवितुः स्तुतिः । य इत्थंभूतः सविता स शिक्यं प्रतिमुञ्चत्वित्यर्थः ॥ ३ ॥

**म०** 'शिक्यपाशं प्रतिमुञ्चते षड्उद्यामं विश्वा रूपाणीति' ( का० १६ । ५ । ६ ) । उत् ऊर्ध्वं यम्यते नियम्यते यैस्ते उद्यामा रज्जवः षडुद्यामा रज्जव ऊर्ध्वाकर्षणहेतवो यस्येदृशमासन्दीस्थं शिक्यपाशं यजमानः कण्ठे बध्नातीति सूत्रार्थः । सवितृदेवत्या जगती श्यावाश्वदृष्टा । कविः विद्वान् क्रान्तदर्शनः । वरेण्यः श्रेष्ठः सविता सर्वस्य प्रसविता सूर्यः विश्वा विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते द्रव्येषु प्रतिबध्नाति रात्रितमोऽपहत्य रूपाणि प्रकाशयतीत्यर्थः । यश्च द्विपदे चतुष्पदे द्विपाच्चश्चतुष्पाच्चो मनुष्यपश्वादिभ्यो भद्रं कल्याणं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रासावीत् प्रसौति प्रेरयति । यश्च नाकं स्वर्गं व्यख्यत् विख्याति प्रकाशयति । 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( पा० ३ । १ । ५२ ) इति च्लेरङ् । यश्च उषसः उषःकालस्य प्रयाणं गमनमनु पश्चात् उषःकाले व्यतीते सति विराजति विशेषेण दीप्यते । 'उषाः सवितुः पुरोगामिनी' इति सवितुः स्तुतिः । ईदृशः सविता शिक्यं प्रतिमुञ्चत्विति शेषः ॥ ३ ॥

## चतुर्थी ।

सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोम आत्मा छन्दांᳪस्यङ्गानि यजूᳪंषि नाम । साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः । सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पत ॥ ४ ॥

**उ०** विकृत्याऽभिमन्त्रयते । विकृतिश्चतुरवसाना गारुत्मती विपक्षी । सुपर्णोऽसि सुपतनस्त्वमसि । गरुत्मान् गणवान् अशनवान् । त्रिवृत्स्तोमः ते तव शिरः । गायत्रं चक्षुः । बृहद्रथन्तरे सामनी पक्षौ । पञ्चविंशः स्तोमः आत्मा । छन्दांस्येकविंशतिरङ्गानि यजूंषि नाम । साम ते तनूः । वामदेव्यं यज्ञायज्ञियं पुच्छम् । धिष्ण्याः अग्नयः शफाः खुराः । यतश्च त्वं सुपर्णोऽसि गरुत्मान् अतो ब्रवीमि त्वाम् । दिवं गच्छ स्वः स्वर्लोकं पत ॥ ४ ॥

म० 'सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवत्' ( का० १६ । ५ । ७ ) । शिक्यसहितमुख्याग्निं प्राच्यामूर्ध्वं धारयति पिण्डवदित्यूर्ध्वबाहुः । अनेनोख्याग्नेरभिमन्त्रणमप्युक्तं केश्चिदिति सूत्रार्थः । गरुत्मद्देवत्या विषहन्त्री चतुरवसाना कृतिः । हे अग्ने, त्वं सुपर्णः शोभनं पर्णं पतनं यस्य स पक्षिरूपोऽसि पक्ष्याकारेण चितत्वात् । तत्र दृष्टान्तः । गरुत्मान् गरुडो यथा पक्षिराजस्तद्वत् । तस्यावयवाः कथ्यन्ते । त्रिवृत् ते तव शिरः त्रिवृत्स्तोमस्तव शिरःस्थानीयः । गायत्रं चक्षुः यद्गायत्राख्यं साम तत्तव चक्षुः नेत्रस्थानीयम् । बृहद्रथन्तरे पक्षौ बृहद्रथन्तराख्ये सामनी तव पक्षस्थानीये । स्तोम आत्मा पञ्चदशस्तोमस्तवात्मा अन्तःकरणस्थानीयः । छन्दांसि अङ्गानि गायत्र्यादीनि एकविंशतिच्छन्दांसि तव हृदयाद्यङ्गस्थानीयानि । यजूंषि नाम इषे त्वेत्यादीनि यजूंषि तव नामस्थानीयानि । वामदेव्यं साम ते तव तनूः शरीरस्थानीयम् । यज्ञायज्ञियाख्यं साम तव पुच्छं पुच्छस्थानीयम् । धिष्ण्याः शफाः होत्रादिधिष्ण्यस्थिता अग्नयस्तव शफाः खुरस्थानीयाः । हे अग्ने, एवंभूतस्त्वं यतो गरुत्मान् गरुड इव सुपर्णः पक्षिरूपोऽसि अतो दिवमाकाशं प्रति गच्छ । तत्रापि स्वः पत स्वः स्वर्गलोकं प्राप्नुहि ॥ ४ ॥

## पञ्चमी ।

विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु विक्रमस्व विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु विक्रमस्व विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु विक्रमस्व ॥५॥

उ० विष्णुक्रमान्क्रमते । विष्णोः क्रमोसि । विष्णोः यज्ञस्याग्ने, यतः क्रमोसि सपत्नहा च शत्रुघातकश्च अतः गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व । अभिमातिहा अभिमातिरपि केनचिद्गुणविशेषेण शत्रुरेवोच्यते । ऋज्वन्यत् । अरातीयतो हन्ता अरातिरिवाचरति अरातीयति अरातिः शत्रुः तस्य अरातीयतः शत्रूयतो हन्ता । अधस्तनेन व्याख्यातम् ५

म० 'विष्णुक्रमान्क्रमते विष्णोरिति प्रतिमन्त्रमग्न्युद्ग्रहणं च तस्मिंस्तस्मिन्' ( का० १६ । ५ । ११ ) । विष्णुक्रमसंज्ञान्पादन्यासान्करोति तस्मिंस्तस्मिन्क्रमणे उख्यस्याग्नेरूर्ध्वं ग्रहणं कार्यमिति सूत्रार्थः । चत्वारि यजूंष्युख्याग्निदेवत्यानि ऋग्बृहतीच्छन्दस्कानि त्रीणि । चतुर्थं प्राजापत्या बृहती । विष्णुशब्देनाग्निरुच्यते । 'स यः स विष्णुर्यज्ञः स यः स यज्ञोऽयमेव स योऽयमग्निरुखायाम्' ( ६ । ७ । २ । ११ ) इति श्रुतेः । हे प्रथमपादविन्यास, त्वं विष्णोः यज्ञस्याग्नेः क्रमोऽसि । सपत्नहा सपत्नाञ्शत्रून्हन्तीति शत्रुघातकश्च । अतो गायत्रं छन्दः आरोह अनुग्राहकत्वेन स्वीकुरु । ततः पृथिवीमनु विक्रमस्व भूदेवतारूपमिमं प्रदेशं विशेषेण प्राप्नुहि । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । हे द्वितीय पादन्यास, त्वं विष्णोः क्रमोऽसि अभिमातिहा अभिमातिघातकः पाप्मा वा तं हन्तीति । त्रैष्टुभं छन्दः । स्वीकुरु अन्तरिक्षप्रदेशं व्याप्नुहि । हे तृतीय पादन्यास, विष्णोः क्रमोऽसि अरातीयतो हन्ता रातिर्दानं न रातिररातिर्दानाभावस्तमात्मन इच्छतीत्यरातीयन् तस्य हन्ता विनाशकः । जागतं छन्दः । आरोह दिवं द्युलोकमनु विक्रमस्व द्युलोकं व्याप्नुहि । हे चतुर्थ पादन्यास, त्वं विष्णोः क्रमोऽसि शत्रूयतो हन्ता शत्रुत्वं हन्तृत्वमिच्छति शत्रूयति शत्रूयतीति शत्रूयन् क्यजन्ताच्छतृप्रत्यय उभयत्र । तस्य हन्ता आनुष्टुभं छन्द आरोह । अत्र चतुर्ष्वपि पादन्यासेषु यजमान आत्मानं विष्णुत्वेन भावयेत् चतुर्णां प्रक्रमाणां प्रदेशान्पृथिव्यादिलोकरूपत्वेन भावयेत् । 'दिशो वीक्षते दिशोऽनु विक्रमस्वेति' ( का० १६ । ५ । १३ ) । सर्वा दिशः पश्यतीत्यर्थः । यजुरुष्णिक् । हे अग्ने, त्वं दिशोऽनु विक्रमस्व प्राच्यादिदिशो व्याप्नुहि ॥ ५ ॥

## षष्ठी ।

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ६ ॥

उ० ऊर्ध्वबाहुः प्रदक्षिणं गृह्णात्यग्निम् । अक्रन्ददग्निः त्रिष्टुप् । अस्यामृच्यग्निपर्जन्यौ कथ्येते । अक्रन्दत् क्रन्दते विस्फूर्जति अग्निः । स्तनयन्निव द्यौः । द्यौःशब्देनात्र पर्जन्य उक्तः । यथा स्तनयन्पर्जन्यः शब्दं करोति एवमग्निः पर्जन्यवत् शब्दं करोति अथान्यान्यपि पार्जन्यानि रूपाण्यग्नेः प्रदर्श्यन्ते । क्षामा रेरिहद्वीरुधः समञ्जन् । क्षामाशब्देन पृथिव्युच्यते । द्वितीयार्थे च प्रथमा । 'लिह आस्वादने' यथा पर्जन्य उदकभावमुपगच्छन्नत्यर्थं पृथिवीं लेढि आस्वादयति वीरुधः समञ्जन् व्याप्नुवन् एवमयमग्निः पृथिवीमत्यर्थमास्वादयति स्वकीयज्वालासमूहेनौषधीः समञ्जन्व्याप्नुवन् । अन्यदप्युच्यते । सद्यो जज्ञानो वि हीमिद्धो अख्यत् । यथा पर्जन्यः सद्य एवाभ्ररूपेण जायमानो व्यख्यत् । विरुपसर्गः ख्यातिना संबध्यते । तेन विख्यापयति हि ईं इद्धो धाराशतसहस्रैः । हि ईं इमौ निपातौ पादपूरणौ । एवमयमग्निः सद्य एव जायमानः इद्धः सन् इदं सर्वं विख्यापयति । अन्यच्च । आरोदसी भानुना भात्यन्तः । यथा पर्जन्य आभाति भानुना विद्युद्रूपेण । रोदसी द्यावापृथिव्योरन्तर्व्यवस्थितः । एवमयमग्निराभाति भानुना दीप्त्या द्यावापृथिव्योरन्तर्व्यवस्थितः । एवमग्निः पर्जन्यवत्स्तूयते ऋषिणा ॥ ६ ॥

म० 'पिण्डवत् प्रागुदञ्चं प्रगृह्णात्यक्रन्ददग्निरिति' ( का० १६ । ५ । १४ ) । ऊर्ध्वबाहुः प्रागूर्ध्वमग्निं गृह्णातीति सूत्रार्थः ।

अग्निर्देवता त्रिष्टुप् वत्सप्रीदृष्टा । अग्निरक्रन्दत् 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) क्रन्दति विस्फूर्जति । कीदृशः । द्यौरिव स्तनयन् । द्यौशब्देनात्र पर्जन्य उक्तः । द्यौर्मेघ इव स्तनयन् गर्जन् शब्दं कुर्वाणः 'स्तन गदी देवशब्दे' चुरादिरदन्तः । मेघसाधर्म्यमाह । क्षामा रेरिहत् 'सुपां सुलुग्' ( पा० ७ । १ । ३९ ) इति विभक्तिलोपः । क्षामेति पृथिवीनामसु पठितम् । क्षामां पृथिवीं रेरिहत् 'लिह आस्वादने' यङ्लुगन्ताच्छतृप्रत्ययः रेफश्छान्दसः । अत्यन्तं लेढीति लेलिहत् 'नाभ्यस्ताच्छतुः' ( पा० ७ । १ । ७८ ) इति नुमभावः । भूमिमति आस्वादयन्व्याप्नुवन् यथा मेघो जलभावं गच्छन्नत्यर्थं भूमिं लेढि । वीरुधः समञ्जन् स्वकीयज्वालासमूहेन ओषधीर्व्याप्नुवन् । अन्यदप्युच्यते । हि यस्मात् जज्ञानः उत्पद्यमानः सन् सद्यः तदानीमेव इद्धः दीप्तश्च सन् व्यख्यत् विख्याति । अन्तर्भूतणिजन्तो ज्ञेयः । श्रुत्या तथा व्याख्यातत्वात् । विख्यापयति इदं सर्वं विविधं प्रकाशयति । अन्यच्च योऽग्निः रोदसी द्यावापृथिव्योः अन्तर्मध्ये भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते । यथा पर्जन्यो भानुना विद्युद्रूपेण द्यावापृथिव्योरन्तर्भाति एवमग्निः पर्जन्यवत् स्तूयते । ईम् निपातः पादपूरणे ॥ ६ ॥

## सप्तमी ।

अग्ने॑ऽभ्यावर्तिन्न॒भि मा॒ नि व॑र्तस्वा॒युषा॒ वर्च॑सा प्र॒जया॒ धने॑न स॒न्या मे॒धया॑ र॒य्या पोषे॑ण ॥७॥

**उ०** अवहरति अग्ने अभ्यावर्तिन्निति । इतःप्रभृति पञ्चाग्नेय्यः । अग्ने अभ्यावर्तिन् ऊर्ध्वबृहती । हे अग्ने अभ्यावर्तनशील, अभिनिवर्तस्व मांप्रति । आयुषा । वर्चसा । अन्नेन । प्रजया । धनेन । सन्या लाभेन । मेधया । रय्या सुवर्णोत्कर्षेण । पोषेण धनपुष्ट्या ॥ ७ ॥

**म०** 'अवहरत्यग्नेऽभ्यावर्तिन्निति' ( १६ । ५ । १५ ) । ऋक्चतुष्टयेन चतुर्वारमुख्याग्निमात्मसमीपमानयतीति सूत्रार्थः । अग्निदेवत्योर्ध्वबृहती द्वादशार्णत्रिपादा । अभि आभिमुख्येनावर्तितुं शीलमस्यास्तीत्यभ्यावर्ती तत्संबोधनम् अस्मदभिमुखागमनशील । आयुरादिभिः सह मा मामभि मांप्रति निवर्तस्व शीघ्रमागच्छ । आयुषा जीवनेन । वर्चसा ब्रह्मवर्चसेन । प्रजया पुत्रादिकया । धनेन वसुना । सन्या इष्टलाभेन । मेधया धारणावत्या बुद्ध्या । रय्या सुवर्णालंकारैः । पोषेण आयुरादीनां पुष्ट्या ॥ ७ ॥

## अष्टमी ।

अग्ने॑ अङ्गिरः श॒तं ते॑ सन्त्वा॒वृतः॑ स॒हस्रं॑ त उपा॒वृतः॑ । अधा॒ पोष॑स्य॒ पोषे॑ण॒ पुन॑र्नो न॒ष्टमाकृ॑धि॒ पुन॑र्नो र॒यिमाकृ॑धि ॥ ८ ॥

**उ०** अग्ने अङ्गिरः । महाबृहती । हे अग्ने, अङ्गिरः अङ्गानां रसभूत, शतं तव सन्तु आवृतः आवर्तनानि । शतशब्दोऽसंख्यातविषयः । सहस्रं बहूनि च उपावर्तनानि सन्तु । अथ अध समानार्थौ । अथैवं भूयोभूयः करणेनावर्तमानः । पोषस्य पोषेण अनवच्छिन्नधनागमेन सह पुनः नोऽस्माकं नष्टम् न आकृधि आगमय । रयिं धनं पुनरागमय । करोतिर्गतिकर्मा ॥ ८ ॥

**म०** आग्नेयी महाबृहती एकः पादो द्वादशार्णश्चत्वारोऽष्टार्णाः । हे अङ्गिरः अङ्गिनां रसभूत अङ्गसौष्ठवयुक्त हे अग्ने, ते तव शतमावृतः सन्तु शतसंख्याका आवृत्तिशक्तयः सन्तु । तथा ते तव सहस्रमुपावृतः सन्तु सहस्रसंख्याका उपावृत्तिशक्तयः सन्तु स्वस्यैवावर्तनमावृत् । त्वत्समीपवर्तिनां पुरुषाणां द्रव्यविशेषाणां चावर्तनमुपावृत्तिः । अस्मासु स्नेहातिशयेन त्वमपि पुनःपुनरावर्तस्व । त्वदीयाः पुरुषास्त्वदीयानि च द्रव्याणि पुनःपुनरावर्तन्तामित्यर्थः । अधेत्यव्ययमथार्थम् । 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति संहितायां दीर्घः । अथापि शतसहस्रसंख्यानामावृत्त्युपावृत्तिशक्तीनां यः पोषः समृद्धिस्तस्यापि पोषस्यान्यः पोषोऽयुतलक्षादिसंख्याकाभिवृद्धिस्तादृशेन पोषेण नोऽस्मदीयं नष्टं धनं पुनर्भूयोऽपि आकृधि आवृत्तं कुरु आगमय । पुनः भूयोऽपि नोऽस्मदीयं पूर्वमसंपादितं धनमाकृधि सर्वतः संपादितं कुरु । करोतिर्गतिकर्मा 'श्रुशृणुपृकृवृभ्यश्छन्दसि' ( पा० ६ । ४ । १०२ ) हेर्धिः व्यत्यये शपो लुक् ॥ ८ ॥

## नवमी ।

पुन॑रू॒र्जा नि व॑र्तस्व॒ पुन॑रग्न इ॒षायु॑षा । पुन॑र्नः पा॒ह्यꣳह॑सः ॥ ९ ॥

**उ०** पुनरूर्जा गायत्र्यौ । पुनःपुनरभ्यासोऽनवच्छेदार्थः । पुनरपि ऊर्जा दध्याद्युपसेचनेन निवर्तस्व । पुनश्च हे अग्ने, इषा अन्नेन सह आयुषा च सह । किंच पुनरेव नोस्मान् पाहि अंहसः पापात्सकाशात् यथा पूर्वं रक्षिताः ॥ ९ ॥

**म०** आग्नेय्यौ द्वे गायत्र्यौ । हे अग्ने, त्वमूर्जा क्षीरादिरसेन सह निवर्तस्व पुनरत्रागच्छ । इषा अन्नेन आयुषा जीवेन च सह पुनरागच्छ । आगतस्त्वं नोऽस्मान्पुनः कृतादंहसः पापात्पाहि रक्ष ॥ ९ ॥

## दशमी ।

स॒ह र॒य्या नि व॑र्तस्वाग्ने॒ पिन्व॑स्व॒ धार॑या । वि॒श्वप्स्न्या॑ वि॒श्वत॒स्परि॑ ॥ १० ॥

**उ०** सह रय्या सह धनेन निवर्तस्व । किंच । हे अग्ने, पिन्वस्व । पिन्वतिः सेचनार्थः । तां च रयिं सिञ्च । वसोर्धारया अनवच्छिन्नधनदानेन निवर्तस्व । पुनःपुनराप्यायस्वेत्यभिप्रायः । कथंभूतया रय्या । विश्वप्स्न्या विश्वत-

स्परि । 'प्सा भक्षणे' सर्वजनोपभोग्यया । विश्वतस्परि सर्वतोऽधिगतैरर्थैः पूर्यमाणया रय्या ॥ १० ॥

**म०** हे अग्ने, रय्या धनेन सह निवर्तस्व । किंच धारया जलधारया वृष्टिरूपया विश्वतः परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च । पिन्वतिः सेचनार्थः । कीदृश्या धारया । विश्वप्स्न्या 'प्सा भक्षणे' विश्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी तया । यद्वा विश्वप्स्न्या सर्वजनोपभोग्यया धारया धनधारया सर्वतः परि सर्वतोऽधिगतैरर्थैः पूर्यमाणया पिन्वस्व सिञ्च । अनवच्छिन्नधनदानेन पुनःपुनराप्यायस्वेत्यर्थः ॥ १० ॥

## एकादशी ।

आ त्वा॑हार्षम॒न्तर॑भूर्ध्रु॒वस्ति॒ष्ठावि॑चाचलिः । वि॒शस्त्वा॒ सर्वा॒ वाञ्छन्तु॒ मा त्वद्रा॒ष्ट्रमधि॑ भ्रशत् ॥ ११ ॥

**उ०** उपरितनानि धारयन्नभिमन्त्रयते । आ त्वाहार्षम् । अनुष्टुब् आहार्षं त्वां यतः द्युलोकात् । 'हृञ् हरणे' । हृतवान् । त्वं च अन्तरभूः अन्तः नाभ्या उपरि शरीरमध्ये अभूः । अतो ब्रवीमि । ध्रुवः स्थिरः तिष्ठ । अविचाचलिः अविचलनशीलः । किंच विशः त्वां सर्वाः वाञ्छन्तु अन्नं तवोपतिष्ठतु सर्वम् । 'अन्नं वै विड्' इति श्रुतिः । मा त्वत् त्वत्तो राष्ट्रं जनपदसमूहः अधिभ्रशत् अधिभ्रश्यतु ॥ ११ ॥

**म०** 'उपरिनाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते' (का० १६ । ५ । १६) । नाभेरुपर्युख्याग्निं धारयंस्तमभिमन्त्रयत इति सूत्रार्थः । आग्नेय्यनुष्टुब् ध्रुवदृष्टा । हे अग्ने, अहं त्वामाहार्षमाहृतवानस्मि । आङ्पूर्वस्य हरतेर्लुङि उत्तमैकवचनम् । त्वं च अन्तरभूतः उखामध्येऽवस्थितोऽसि । अविचाचलिरत्यन्तं चलनरहितो ध्रुवः स्थिरः सन् तिष्ठ विचलतीति विचाचलिः यङन्तादिन् । किंच सर्वा विशः प्रजाः त्वा त्वां वाञ्छन्तु । यद्वा सर्वा विशः सर्वाण्यन्नानि त्वां वाञ्छन्तु अन्नानि तवोपतिष्ठन्तु । 'अन्नं वै विशः' ( १६ । ७ । ३ । ७ ) इति श्रुतेः । इदं राष्ट्रं त्वत् त्वत्तः सकाशान्मा अधि भ्रशत् अयं जनपदस्त्वत्तो मापभ्रश्यतु शून्यो मा भूत् । अस्मिन् राज्ये स्थिता सर्वाः प्रजाः पाहीत्यर्थः । यद्वा श्रीर्वै राष्ट्रम् 'मा त्वद्राष्ट्रमधिभ्रशत्' ( ६ । ७ । ३ । ७ ) इति श्रुतेः । श्रीः त्वत्तो मा भ्रश्यतु 'भ्रंशु अधःपतने' पुषादित्वाच्लेरङ् 'न माङ्योगे' ( पा० ६ । ४ । ७४ ) इति अडभावः ॥ ११ ॥

## द्वादशी ।

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय । अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम ॥ १२ ॥

**उ०** पाशान्विमुञ्चति । उदुत्तमम् वारुणी त्रिष्टुप् । उदित्ययमुपसर्गः श्रथायेत्यनेन संबध्यते । हे वरुण, उत्तमं पाशम् उच्छ्रथय । 'श्रथ शैथिल्ये' । श्लथीकृत्योर्ध्वं नय । अस्मत् अस्मत्तः अवाधमम् अधमं च पाशम् अवाचीनं श्लथय । विमध्यमं स्थानस्थितमेव विश्लथय मध्यमम् । अथैवं कृते सति वयं हे आदित्य अदितेः पुत्र, व्रते तव कर्मणि वर्तमानाः अनागसः अनपराधाः अदितये अदीनतायै स्याम भवेम ॥ १२ ॥

**म०** 'पाश उन्मुच्योदुत्तममिति' (का० १६ । ५ । १७) । रुक्मपाशशिक्यपाशौ गलादूर्ध्वमार्गेण निष्कासयतीति सूत्रार्थः । वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा । उदित्युपसर्गोऽव वि एतावपि श्रथयेत्यनेन संबध्यन्ते । हे वरुण, उत्तममुत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशमस्मत् अस्मत्तः सकाशात् उत् श्रथय उत्कृष्य विनाशय । अधममधमाङ्गे पादप्रदेशे स्थापितं त्वत्पाशमवश्रथय अवकृष्यास्मत्तो विनाशय । मध्यमं मध्यमप्रदेशे स्थितं पाशं विश्रथय विच्छेदय । 'श्रथ बन्धे' मित्वाण्णिचि ह्रस्वः लोटि मध्यमैकवचने रूपम् । श्रथायेति संहितायां दीर्घश्छान्दसः । यद्वा श्रथ क्र्यादिः लोटि मध्यमैकवचने 'छन्दसि शायजपि' ( पा० ३ । १ । ८४ ) इति श्नाप्रत्ययस्य शायजादेशे श्रथायेति रूपम् । अथ पाशत्रयविनाशानन्तरं हे आदित्य अदितिपुत्र, वरुण अनागसः अनपराधा निष्पापास्तव व्रते कर्मणि वर्तमानाः सन्तो वयमदितये अदीनतायै स्याम अखण्डितत्वाय योग्या भवेम । अथा इत्यत्र 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति दीर्घः ॥ १२ ॥

## त्रयोदशी ।

अग्ने॑ बृ॒हन्नु॒षसा॑मू॒र्ध्वो अ॑स्थान्निर्जग॒न्वान्तम॑सो॒ ज्योति॒षागा॑त् । अ॒ग्निर्भा॒नुना॒ रुश॑ता॒ स्वङ्ग॒ आ जा॒तो विश्वा॒ सद्मा॑न्यप्राः ॥ १३ ॥

**उ०** प्रदक्षिणान् गृह्णाति । अग्ने बृहन् । त्रिष्टुप् । आदित्यात्मनोऽग्नेः स्तुतिः । यः अग्ने उषसां बृहन् महान् प्रभावतः ऊर्ध्वः अस्थात् स्थितः । यश्च निर्जगन्वान् तमसः निर्गतो रात्रिलक्षणात्तमसः अहर्लक्षणेन ज्योतिषा सह अगात् आगतः सोऽग्निः । भानुना रुशता रोचिष्णुना । स्वङ्गः शोभनाङ्गः । आ जातो विश्वा सद्मान्यप्राः । 'प्रा पूरणे' । आ अप्राः आपूरितवान् जातः संजातरश्मिः विश्वा सद्मानि । 'इमे वै लोका विश्वासद्मानि' इति श्रुतिः । सर्वाणि सदनानि प्रत्यक्षवृत्तिता ॥ १३ ॥

**म०** 'पिण्डवत्प्राग्दक्षिणा प्रगृह्यात्यग्ने बृहन्निति' (का० १६ । ५ । १७) । पूर्वमन्त्रेण पाशावुन्मुच्योर्ध्वबाहुराग्नेय्यौ 'दिशं प्रत्यख्याग्निमूर्ध्वं धारयतीति सूत्रार्थः । अग्निदेवत्या त्रिष्टुप् त्रितदृष्टा । आदित्यात्मनाग्नेः स्तुतिः क्रियते । बृहन् प्रभावान्महानयमग्निरुषसामग्रे प्रातःकालानां मुखे ऊर्ध्वो अस्थात् ऊर्ध्वः स्थितः । यद्वाग्निहोत्रादौ बोध्यमान उत्तिष्ठति । ऊर्ध्वो अस्थादित्यत्र 'प्रकृत्यान्तःपादमव्यपरे' (पा० ६ । १ । ११५)

इति 'एङः पदान्तादति' ( ६।१।१०९ ) इति सूत्रप्राप्तसन्ध्यभावः। यश्च तमसो रात्रिलक्षणान्निर्जगन्वान्निर्गतः सन् ज्योतिषाऽहर्लक्षणेन सह आ अगात् इहागतः सोऽग्निर्जात उत्पन्नमात्र एव विश्वा विश्वानि सर्वाणि सद्मानि स्थानानि सर्वान् लोकान् आ अप्राः स्वतेजसा सर्वत्र पूरितवान् 'प्रा पूरणे' लङ् पुरुषव्यत्ययः। 'इमे वै लोका विश्वा सद्मानि' ( ६।७।३।१७ ) इति श्रुतिः। कीदृशः। रुशता 'रुश हिंसायाम्' रुशतीति रुशन् तेन रुशता तमो हिंसता भानुना रश्मिना स्वङ्गः शोभनान्यङ्गानि यस्य शोभनशरीरः ॥ १३ ॥

## चतुर्दशी।

हुꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ १४ ॥

उ० अवहरति हुꣳसः शुचिषदिति। जगती यजुरन्ता बृहदिति यजुः। जगत्या 'जगती हेमाल्लोकान्' इति श्रुतिः। तथा बृहदिति निदधातीति राजसूये अतिच्छन्दसमित्युक्तम्। व्याख्यातो मन्त्रार्थः ॥ १४ ॥

म० 'अवहरति हुꣳसः शुचिषदिति' ( का० १६।५।१८ )। उख्याग्निमवतारयति। जगती अग्निप्रोक्षणे इयमुक्ता यजुरन्ता। राजसूयप्रकरणे इयमतिजगत्युक्ता इह तु जगती अन्ते बृहदिति यजुः। तद्विनियोगमाह 'आसन्द्यां करोति बृहदिति' ( का० १६।५।१९ )। बृहदिति यजुषा उख्याग्निमासन्द्यां स्थापयतीति सूत्रार्थः। हंस इति मन्त्रस्तु व्याख्यातः (अ० १०। क० २४ ) ॥ १४ ॥

## पञ्चदशी।

सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैनां तपसा मार्चिषाभिशोचीरन्तरस्याꣳ शुक्रज्योतिर्विभाहि ॥ १५ ॥

उ० उपतिष्ठते सीद त्वमिति तिसृभिराग्नेयीभिः। एका त्रिष्टुप् द्वे अनुष्टुभौ। सीद त्वम् अवस्थानं कुरु त्वम्। अस्या उखाया मातुः उपस्थे उत्सङ्गे। विश्वानि सर्वाणि हे अग्ने, वयुनानि प्रज्ञानानि विद्वान् प्रजानन् पदार्थसातत्यवेदीसन्। किंच उखायामवस्थानं कुर्वन्। मैनां तपसा मार्चिषाभिशोचीः मा अभिशोचीः मा अभितापयेः एनामुखां तपसा तापेन मा चार्चिषा ज्वालया। किंच। अन्तः अस्यां मध्ये अस्यामुखायामवस्थितं शुक्रज्योतिः शुक्रकर्मसाधनं ज्योतिः विभाहि विविधं दीप्यस्व ॥ १५ ॥

म० 'उपतिष्ठते सीद त्वमिति' ( का० १६।५।२० )। आसन्दीनिधानानन्तरमुख्याग्निमुपतिष्ठते ऋचां त्रयेणेति सूत्रार्थः। अग्निदेवत्या त्रिष्टुप्। हे अग्ने, त्वं मातुः मातृसमाया अस्या उखाया उपस्थे उत्सङ्गे सीद उपविश। कीदृशस्त्वम्। विश्वानि वयुनानि सर्वाञ्ज्ञानोपायान् विद्वाञ्जानन्। सर्वपदार्थतत्त्ववेदी सन्नित्यर्थः। किंच एनामुखां तपसा संतापेन माभिशोचीः मा संतापय। अर्चिषा ज्वालया च माभिशोचीर्मा दीपय। तपः कार्यमर्चिः कारणं कार्येण भूयांस्तापो भवति कारणेन त्वीषत् तदुभयं मा कुर्वित्यर्थः। अस्यामुखायामन्तर्मध्ये शुक्रज्योतिः निर्मलप्रकाशः सन् विभाहि विशेषेण दीप्यस्व ॥ १५ ॥

## षोडशी।

अन्तरग्ने रुचा त्वमुखायाः सदने स्वे। तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव ॥ १६ ॥

उ० अन्तरग्ने। व्यवहितपदसंबन्धप्रायोऽयं मन्त्रः। हे अग्ने, यस्या उखायास्त्वमन्तर्मध्यतः। रुचा दीप्त्या सहितः सदने स्वे स्वकीये स्थाने वर्तसे। तस्या एव उखायाः त्वं हरसा ज्योतिषा तपन्। 'तप संतापे'। हे अग्ने, जातवेदाः जातं जातं वेत्तीति जातवेदास्तत्संबोधने हे जातवेदः जातप्रज्ञान, शिवो भव शान्तो भव ॥ १६ ॥

म० अग्निदेवत्ये द्वे अनुष्टुभौ। हे अग्ने, त्वमुखाया अन्तः मध्ये स्वे सदने स्वकीये स्थाने रुचा दीप्त्या युक्तः सन् सीदेति शेषः। किंच जातं जातं विन्दतीति जातवेदाः तस्य संबोधनम्। हे जातवेदः सर्वज्ञ, जातं वेदो ज्ञानं यस्येति वा जातविज्ञानः तस्या उखायाः शिवः कल्याणकारी शान्तो भव। किं कुर्वन्। हरसा ज्योतिषा तपन्प्रतपन्सन् ॥ १६ ॥

## सप्तदशी।

शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम्। शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः १७

उ० शिवो भूत्वा शान्तो भूत्वा मह्यं हे अग्ने, अथो अपि च। सीद उपविश उखायाम्। शिवस्त्वं शिवाः कृत्वा दिशः सर्वाः स्वं योनिं स्थानम् इहासदः इह आ असदः आसीद ॥ १७ ॥

म० हे अग्ने, मह्यं मदर्थं शिवः शान्तो भूत्वा अथो अनन्तरं शिवः सीद सर्वात्मना शान्तः सन्नुपविश। सर्वा दिशः शिवाः शान्ताः कृत्वा इहास्यामुखायां स्वं योनिं स्वकीयं स्थानमासदः आसीद आगत्योपविश। 'छन्दसि लुङ्लङ्लिटः' ( पा० ३।४।६ ) इति लोडर्थे लुङ् ॥ १७ ॥

## अष्टादशी।

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परिजातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १८ ॥

उ० वात्सप्रेणोपतिष्ठते। दिवस्परि। द्वादशाग्नेय्यः त्रिष्टुभः। दिवस्परि दिवः सकाशात् प्रथमं यज्ञे जातः अग्निः।

'प्राणो वै दिवः प्राणाद् वा एष प्रथममजायत' इति श्रुतिः। तं जातमभिप्राणिति 'प्राणो वा अग्निर्जातमेवैनमेतत्सन्तं जनयति'इत्येतदभिप्रायम्। अस्मद्द्वितीयं परि जातवेदाः अस्मत् अस्मत्तः पुरुषविधात् द्वितीयं जातवेदः 'जातः यदेनमदो द्वितीयं पुरुषविधोऽजनयत्' इति श्रुतिः। स्वमुखाच्च योनेर्हस्ताभ्यां वाग्निमसृजतेत्ययं पुरुषविधिः । तृतीयमप्सु । तृतीयं तम् अप्सु व्यवस्थितं जनयति । 'यदेनमदस्तृतीयमद्भ्योऽधिजनयत्' इति श्रुतिः। अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यतेत्येतच्छ्रुत्यभिप्रायम् । नृमणा अजस्रम् । नृषु मनो यस्येति नृमणाः प्रजापतिः अजस्रमनुपक्षीणम् । 'प्रजापतिर्वै नृमणा अग्निरजस्रः' इति श्रुतिः । तृतीयमप्स्वन्तर्व्यवस्थितं जनयति नृमणा अजस्रमग्निमिति वाक्यार्थः। य एवं बहुजन्माग्निः तं इन्धानः आदीपयन् यजमानः एनमग्निं जरते जनयतीति धातोरर्थान्तरे वृत्तिः । स्वाधीः शोभना आहिता धीर्बुद्धिर्यस्य स स्वाधीः ॥ १८ ॥

**म०** 'वात्सप्रेण च दिवस्परीत्येकादशभिरनुवाकेनैके' (का० १६।५।३१–३२)। दिवस्परीत्येकादशर्चेन वात्सप्रेणोख्यमग्निमुपतिष्ठते। एके आचार्या अनुवाकेन द्वाशर्चेन वदन्तीति सूत्रार्थः। अग्निदेवत्या द्वादश त्रिष्टुभो भलन्दनपुत्रवत्सप्रीदृष्टाः। अग्निः प्रथमं दिवः परि दिवः सकाशात् जज्ञे जातः 'प्राणो वै दिवः प्राणाद् वा एष प्रथममजायत' (६।७।४।३) इति श्रुतिः। जातवेदाः अग्निः द्वितीयं द्वितीयवारमस्मत्परि अस्मत्तः सकाशात् ब्रह्मणो जज्ञे जातः। 'यदेनमदो द्वितीयं पुरुषविधोऽजनयत्' (६।७।४।३) इति श्रुतेः 'स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत' इति च श्रुतेः स पुरुषविध इत्यर्थः। नृषु मनो यस्य स नृमणाः 'पूर्वपदाच्च' (पा० ८।१।३) इति णत्वम् । नृमणाः प्रजापतिः अजस्रमनुपक्षीणमग्निमप्सु जलेष्वन्तर्व्यवस्थितं तृतीयं तृतीयवारमजनयत् यदेनमदस्तृतीयमद्भ्योऽजनयत्। अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यत। 'प्रजापतिर्वै नृमणा अजस्रोऽग्निः' (६।७।४।३) इत्यादिश्रुतयः । एवं बहुजन्माग्निः स्वाधीः शोभना आहिता धीर्बुद्धिर्यस्य स यजमान एनं बहुजन्मानमग्निमिन्धानो दीपयन् जरते जनयति। धातोरर्थान्तरे वृत्तिः। यद्वायमर्थः। अग्निः प्रथमं दिवःपरि द्युलोकस्योपरि जज्ञे सूर्यरूपेणोत्पन्नः । अस्मत्परि अस्मदीयमनुष्यलोकस्योपरि जातवेदाः द्वितीयंजज्ञे प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवान्। अप्सु समुद्रे तृतीयं जज्ञे वडवानलरूपेण तृतीयवारमुत्पन्नः । अजस्रं त्रिष्वपि जन्मसु नृमणा नृषु मनो यस्य यजमानेष्वनुग्रहबुद्धियुक्तः एनमीदृशमग्निमिन्धानः पुरोडाशादिना दीपयन्स्वाधीः स्वायत्तचित्तो यजमानो जरते जीर्यते जरापर्यन्तं परिचरतीत्यर्थः॥१८॥

## एकोनविंशी ।

विद्मा ते॑ अग्ने त्रेधा त्र॒याणि॑ वि॒द्मा ते॒ धाम॒ विभृ॑ता पुरु॒त्रा । वि॒द्मा ते॒ नाम॑ पर॒मं गुहा॒ यद्वि॒द्मा तमु॒त्सं॒ यत॑ आज॒गन्थ॑ ॥ १९ ॥

**उ०** विद्मा ते। विद्मः जानीमः विद्मा 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । ते तव हे अग्ने, त्रेधा त्रयाणि त्रिधा प्रविभक्तानि त्रीणि रूपाणि अग्निवायुसूर्याख्यानि । विद्मा ते धाम । 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति च' । जन्मान्यत्राभिप्रेतानि। धामानि जन्मानि आहवनीयगार्हपत्यदक्षिणाग्न्यतिप्रणीतधिष्ण्यप्रभृतीनि । विभृता विहृता पुरुत्रा बहुरूपाणि । विजानीमश्च तव नाम परममुत्कृष्टम् । गुहायामिव यद्व्यवस्थितम् । यविष्ठ इति वा । अस्य तन्नाम विद्मा तमुत्सं विजानीमश्च तमुत्सन्दनमब्रूपं प्रथममवस्थानं यतस्त्वम् आजगन्थ आगतवानसि हे अग्ने ॥ १९ ॥

**म०** हे अग्ने, यानि पूर्वस्मिन्मन्त्रे दिवस्परीत्यादिना त्रेधा स्वरूपाण्युक्तानि आदित्याग्निवडवानलरूपाणि तानि त्रयाणि त्रिसंख्याकानि ते तव संबन्धीनि रूपाणि वयं विद्म जानीमः। 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति संहितायां दीर्घः । 'विदो लटो वा' (पा० ३।४।८३) इति मसो मादेशः। यद्वा त्रेधा विभक्तानि त्रयाणि त्रीणि ते तव रूपाणि अग्निवायुसूर्याख्यानि वयं विद्म। किंच ते तव संबन्धीनि पुरुत्रा बहुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपचनाग्नित्रीयरूपेषु विभृता विहृतानि धाम धामानि स्थानानि अपि वयं विद्म। विभृतेति विभक्तेराकारः । धामेत्यत्र विभक्तिलोपः । किंच ते तव परममुत्कृष्टं गुहा । सप्तमीलोपः । गुहायां यद्व्यवस्थितं गोप्यं यविष्ठ इत्यादिमन्त्रप्रसिद्धं नाम यदस्ति तदपि विद्म। किंच यत उत्सात् अब्रूपात् स्थानात्त्वमाजगन्थ वैद्युतरूपेणागतोऽसि तमुत्समुत्स्यन्दनं जलरूपं स्थानं वयं विद्म। गमेर्लिट् ॥ १९ ॥

## विंशी ।

स॒मु॒द्रे त्वा॑ नृ॒मणा॑ अ॒प्स्व॒न्तर्नृ॒चक्षा॑ ईधे दि॒वो अ॑ग्न ऊध॑न् । तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒वाᳬसम॒पामु॒पस्थे॑ महि॒षा अ॑वर्धन् ॥ २० ॥

**उ०** समुद्रे त्वा । हे अग्ने, समुद्रे त्वा त्वां पूर्वं वर्तमानं नृमणाः प्रजापतिः ईधे दीपयांचकार । 'सोऽपोऽसृजत' इत्युपक्रम्य 'तस्मादग्निर्ह वै तमग्निरित्याचक्षते' इत्येतदभिप्रायम्। अप्स्वन्तर्नृचक्षा ईधे अप्स्वन्तर्वर्तमानं नृचक्षा प्रजापतिरेव ईधे आदीपितवान् । 'तमग्न्य उपोदास्रूसं पुष्करपर्णे विवेद' इत्यादिश्रुतिरुद्घाटिता। दिवो अग्न ऊधन् द्युलोकस्य ऊधसि महोदके प्रदेशे आदित्यात्मना नृचक्षा एव ईधे । तृतीये त्वा रजसि च त्वां द्युलोके आदित्यात्मना स्थितवन्तम् अपां उपस्थे उत्सङ्गे नाभ्यानामपां मध्ये व्यवस्थि-

तम् महिषाः महान्तः प्राणाः अवर्धन् वर्धयांचक्रुः। 'प्राणो वै महिषाः' इत्यादिश्रुतिः॥ २०॥

**म०** हे अग्ने, नृषु मनो यस्यासौ नृमणाः प्रजापतिः समुद्रे वडवानलरूपेण तस्थिवांसं वर्तमानं त्वा त्वामीधे दीपयांचकार। 'इन्धिभवतिभ्यां च' (पा० १।२।६) इति कित्त्वान्नलोपः। नृचक्षाः नृषु पठत्सु पुरुषेषु चष्टे मन्त्रान् विस्पष्टं वक्तीति नृचक्षाः प्रजापतिः अप्सु वृष्टिरूपासु अन्तर्मध्ये विद्युद्रूपेण स्थितं त्वामीधे दीपितवान्। तथा दिवः द्युलोकस्य ऊधन् ऊधस्थानीये तृतीये समुद्रवृष्ट्यपेक्षया तृतीयस्थाने रजसि रञ्जनात्मके तेजोमण्डले आदित्यात्मना तस्थिवांसं त्वां नृचक्षा एव ईधे। किंच महिषाः महान्तः प्राणा अपामुपस्थे उत्सङ्गे नाव्यानामपां मध्ये स्थितं त्वामवर्धन् 'छन्दस्युभयथा' (पा० ३।४।११७) इति शप् आर्धधातुकत्वाण्णिलोपः। 'प्राणा वै महिषाः' (६।७।४।५) इति श्रुतिः॥ २०॥

## एकविंशी।

अक्र॑न्दद॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑हद्वी॒रुधः॑ सम॒ञ्जन्। स॒द्यो ज॑ज्ञा॒नो वि ही॒मिद्धो अ॒ख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः॥ २१॥

**उ०** अक्रन्ददग्निरिति व्याख्यातम्॥ २१॥

**म०** अक्रन्ददिति व्याख्याता (क० ६)॥ २१॥

## द्वाविंशी।

✓ श्री॒णामु॑दा॒रो ध॒रुणो॑ र॒यीणां म॑नी॒षाणां॒ प्रार्प॑णः॒ सोम॑गोपाः। वसुः॑ सू॒नुः सह॑सो अ॒प्सु राजा॒ वि भा॒त्यग्र॑ उ॒षसा॑मिधा॒नः॥ २२॥

**उ०** श्रीणामुदारः। श्रीणां लक्ष्मीणामुदारोऽत्यर्थं दाता। धरुणो रयीणां च धनानाम्। मनीषाणां प्रार्पणः कश्चिद्धनवानपि भवति नतु दाता। अयं तु मनसा एषितानां कामानां प्रापयिता। सोमगोपाः धिष्ण्या अग्नयः सोमं गोपयन्ति तदभिप्रायमेतत्। सोमिनो वा गोपायति। वसुः वासयिता। यद्वा वसुः धनं एवाग्निः। यथा यानि धनान्युपकारं कुर्वन्ति शयनासनगवादीनि एवमयमप्युपकरोति भूतानां तापपाकप्रकाशैः अतो वसुः सूनुः सहसः पुत्रो बलस्य। मथ्यमानो जायते तस्मादेवमुच्यते। अप्सु राजा अप्स्ववस्थितो वरुणात्मना राजा। तथा चोक्तम्। 'त्वमग्ने वरुणो जायसे यत्' इति। विभात्यग्र उषसाम्। आदित्यात्मना इधानः 'इन्धी दीप्तौ' दीप्यमानः। यद्वा उषःकालेऽग्नीनां प्रादुष्करणं क्रियते तदभिप्रायमेतत्॥२२॥

**म०** एवंविधोऽग्निर्विभाति विशेषेण भासते। कीदृशः। श्रीणां गवाश्वादिसंपदामुदारः अत्यर्थं दाता। 'उदारो दातृमहतोः' इति कोशः। रयीणां धनानां धरुणो धारयिता। मनीषाणां मनसा इषितानामभिलषितानां प्रार्पणः प्रकर्षेणार्पयिता। सोमगोपाः सोमं गोपायतीति यजमानकर्तृकसोमयागस्य रक्षिता। वसुः सर्वस्य निवासहेतुः वासयतीति वसुः। यद्वा वसुः धनरूपः यथान्यानि शयनासनरथादिधनान्युपकुर्वन्ति तथायमपि तापपाकप्रकाशैर्जनानामुपकर्ता अतो वसुः। सहसः सूनुः बलस्य मन्थनवेगरूपस्य पुत्रः। यतो मथ्यमानो जायतेऽत एवमुच्यते। अप्सुराजा जलेऽवस्थितो वरुणात्मना राजा। यद्वा अप्सु वृष्टिरूपासु राजा विद्युद्रूपेण दीप्यमानः। उषसामग्रे प्रातःकाले इधानः आदित्यात्मना दीप्यमानः। उषःकालेऽग्निहोत्रहोमायाग्नयः प्रादुष्क्रियन्ते तदभिप्रायेणोच्यते प्रातर्दीप्यमान इति॥ २२॥

## त्रयोविंशी।

✓ विश्व॑स्य के॒तुर्भुव॑नस्य॒ गर्भ॒ आ रोद॑सी अपृणा॒ज्जाय॑मानः। वी॒डुं चि॒दद्रि॑मभिनत्परा॒यन्जना॒ यद॒ग्निमय॑जन्त॒ पञ्च॑॥ २३॥

**उ०** विश्वस्य केतुः। चतुर्थः पादोऽत्र प्रथमं व्याख्याय यच्छब्दयोगात्। जना यदग्निमयजन्त पञ्च। यदित्यविभक्तिको निर्देशः। यमग्निं पञ्चजनाः। चत्वारो वर्णा निषादपञ्चमाः पञ्चजना उच्यन्ते। अयजन्त इष्टवन्तः स विश्वस्य केतुः सर्वस्य प्राणिजातस्य केतुः प्रजानम् अग्न्यात्मना। भुवनस्य गर्भः भूतजातस्य वाय्वात्मना गर्भः। स हि प्राणभावेन भूतानामन्तः संचरति। आरोदसी अपृणात् जायमानः। स एव आपूरयति द्यावापृथिव्यौ जायमान आदित्यात्मना। स एव मध्यस्थानमारुह्य इन्द्रात्मना वीडुंचित्। दृढमप्यद्रिमदारयितव्यं मेघं वा अभिनत् विदारयति। परायन् परापरतो गच्छन्॥ २३॥

**म०** सोऽग्निर्जायमानः उत्पद्यमानः सूर्यात्मना प्रकटीभवन् रोदसी द्यावापृथिव्यौ आ अपृणात् सर्वतस्तेजसा पूरयति। कीदृशः विश्वस्य केतुः प्राणिजातस्य विज्ञानभूतोऽग्न्यात्मना। भुवनस्य गर्भः भूतजातस्य गर्भवदन्तरवस्थितो वाय्वात्मना। स हि प्राणभावेन भूतानामन्तः संचरति। किंच यः परायन् इन्दुरूपेण परापरतो गच्छन् वीडुं चित्। विड्डुशब्दो दृढार्थः चिदप्यर्थः। दृढमपि अद्रिमदारयितव्यं मेघमभिनत् भिनत्ति विदारयति। यत् विभक्तिलोपः। यमग्निं पञ्च जना अयजन्त यजन्ते विप्राद्याश्चत्वारो निषादश्चेति पञ्च। यद्वा चत्वारो महर्त्विजो यजमानश्च॥ २३॥

## चतुर्विंशी।

उ॒शिक् पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्त्ये॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि। इय॑र्ति धू॒मम॑रु॒षं भरि॑भ्र॒दुच्छु॒क्रेण॑ शो॒चिषा॒ द्यामिन॑क्षन्॥ २४॥

**उ०** उशिक्पावकः । 'वश कान्तौ' अस्य कृतसंप्रसारणस्यैतद्रूपम् । उशिक् कान्तः मेधावी वा । पावकः पावयिता अरतिः अलंमतिः पर्याप्तमतिः । सुमेधाः कल्याणप्रज्ञः साधुयज्ञो वा । मर्तेषु मरणधर्मेषु मनुष्येषु । अग्निः कथंभूतः । अमृतः अमरणधर्मा । निधायि निहितः देवैः त्वं नो अस्य लोकस्याध्यक्ष एधीति । स इयर्ति उदियर्ति उद्गमयति धूमम् अरुषम् अरोचनम् । भरिभ्रत् धारयन्निदं जगत् । 'इतो वा अयमूर्ध्वꣳ रेतः सिञ्चति धूमꣳसामुत्र वृष्टिर्भवति' इत्येतच्छ्रुत्यभिप्रायोऽयं मन्त्रः । शुक्रेण शोचिषा । द्यां द्युलोकम् इनक्षन् व्याप्नुवन् । नक्षत्रग्रहचन्द्रतारकसंबन्धिना तेजसा धूममियर्तीति संबध्यते । 'इतः प्रदानाद्धि देवा उपजीवन्ति' इत्येतच्छ्रुत्यभिप्रायोऽयं मन्त्रः ॥ २४ ॥

**म०** योऽग्निर्मर्त्येषु मरणधर्मेषु मनुष्येषु निधायि निहितः देवैरिति शेषः । 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६ । ४ । ७५ ) इत्यडभावः । स अरुषमरोषं चक्षुराद्युपद्रवरहितमरोचनं वा धूममुदियर्ति उद्गमयति । 'व्यवहिताश्च' (पा०१।४।८२) उपसर्गक्रिययोर्व्यवधानम् 'इतो वा अयमूर्ध्वꣳ रेतः सिञ्चति धूमꣳ सामुत्र वृष्टिर्भवति' इति श्रुतेः । कीदृशोऽग्निः । उशिक उश्यते काम्यते लोकैरित्युशिक् कान्तः । वशेरौणादिक इक् प्रत्ययः । पावकः पावयिता पुनातीति । अरतिः अलंमतिः पर्याप्तमतिः । यद्वा दुष्टेष्वरतिः प्रीतिरहितः । सुमेधाः शोभना सेवकाभिप्रायधारणसमर्था मेधा बुद्धिर्यस्य, शोभनो मेधो यज्ञो यस्येति वा । अमृतोऽमरणधर्मा । भरिभ्रत् बिभ्रत् जगद्धारयन् 'दाधर्ति–' ( पा० ७ । ४ । ६५ ) इत्यादिना निपातः । शुक्रेण शोचिषा निर्मलेन तेजसा प्रभारूपेण द्यामाकाशमिनक्षन्व्याप्नुवन् । नक्षत्रग्रहतारासंबन्धितेजसा द्युलोकं व्याप्नुवन्नित्यर्थः । 'इतः प्रदानाद्धि देवा उपजीवन्ति' इति श्रुतेः ॥ २४ ॥

## पञ्चविंशी ।

दृ॒शा॒नो रु॒क्म उ॒र्व्या व्य॑द्यौद्दु॒र्मर्ष॒मायुः॑ श्रि॒ये रु॑चा॒नः । अ॒ग्निर॒मृतो॑ अभव॒द्वयो॑भि॒र्यदे॑नं॒ द्यौर॒जन॑यत्सु॒रेताः॑ ॥ २५ ॥

**उ०** दृशानो रुक्म इति व्याख्यातम् ॥ २५ ॥

**म०** दृशानो व्याख्याता ( कं० १ ) ॥ २५ ॥

## षड्विंशी ।

यस्ते॑ अ॒द्य कृ॒णव॑द्भद्रशोचेऽपू॒पं दे॑व घृ॒तव॑न्तमग्ने । प्र तं न॑य प्रत॒रं वस्यो॒ अच्छा॒भि सु॒म्नं दे॒वभ॑क्तं यविष्ठ ॥ २६ ॥

**उ०**यस्ते अद्य । यस्तव अद्य प्रतिपदि । कृणवत् करोति । हे भद्रशोचे भन्दनीयदीप्ते, अपूपं पुरोडाशम् । हे देव, घृतवन्तम् । हे अग्ने 'स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्यावघारयति' इत्येतच्छ्रुत्यभिप्रायम् । प्रतं नय । नयसीति प्राप्ते छान्दसो लोट् । प्रणयसि तं यजमानम् । प्रतरम् अतितराम् वस्यो अच्छ । 'अच्छाभेराप्तुमिति शाकपूणिः' । वसीयः स्थानमच्छा वस्तृतमस्थानमभि । 'वस निवासे' तृन् 'तुश्छन्दसि' इति ईयसुन् 'तुरिष्ठेमेयस्सु' इति तृचो लोपे वसीय इति सिध्यति । 'स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः' इति श्रुत्युक्तं तं प्राप्नुयात् अयं वसीयान् लोकः । अभिनयसि च सुम्नं देवभक्तं देवसेवितम् हे यविष्ठ युवतम, अथवा मिश्रयितृतम ॥ २६ ॥

**म०** भद्रा कल्याणकारिणी शोचिर्दीप्तिर्यस्य तत्संबोधने हे भद्रशोचे, हे देव अग्ने, अद्य प्रतिपदि यः पुमान् ते तव अपूपं पुरोडाशं घृतवन्तं घृतयुक्तमुपस्तरणाभिघारणोपेतं कृणवत् कृणोति करोति । 'कृञ् करणे' स्वादिः 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इति तिप इकारलोपे 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्यडागमे ओर्गुणे कृणवदिति रूपम् । 'स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति' ( १ । ७ । २ । १० ) । इत्येतच्छ्रुत्यभिप्रायम् हे यविष्ठ युवतम, यद्वा मिश्रयितृतम, तं यजमानं प्रतरमतिशयेन प्रकृष्टं प्रतरम् 'अमु च छन्दसि' ( पा० ५ । ४ । १२ ) इत्यव्ययात्परात् घादमुप्रत्ययः । प्रकृष्टतरं वस्यः स्थानमुत्तमलोकं प्रनय प्रापय । अच्छाभिमुख्येन सुम्नं सुखं चाभिनय सर्वतः प्रापय । कीदृशं सुम्नम् । देवभक्तं देवैः भक्तं सेवितं देवयोग्यं सुखं प्रापयेत्यर्थः । वसति यत्र तद्वस्तृ तृन्प्रत्ययः । अतिशयेन वस्तृ वसीयः 'तुश्छन्दसि' ( पा० ५ । ३ । ५९ ) इतीयसुन् 'तुरिष्ठेमेयःसु' ( पा० ६ । ४ । १५४ ) इति तृचो लोपः । छान्दसे ईलोपे वस्य इति सिध्यति । 'स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समाः' ( बृह० मा० ४ । १५ ) इति श्रुतेः । 'प्रकृत्यान्तःपादमव्यपरे' ( पा० ६ । १ । ११५ ) इति वस्यो अच्छेत्यत्र सन्ध्यभावः ॥ २६ ॥

## सप्तविंशी ।

आ तं भ॑ज सौश्रव॒सेष्व॑ग्न उ॒क्थ उ॑क्थ॒ आभ॑ज श॒स्यमा॑ने । प्रि॒यः सूर्ये॑ प्रि॒यो अ॒ग्ना भ॑वा॒त्युज्जा॒तेन॑ भि॒नद॒दुज्जनि॑त्वैः ॥ २७ ॥

**उ०** आ तं भज । यदःस्थाने तदो वृत्तिः लटः स्थाने लोटः अर्थसंबन्धात् । हे अग्ने, आभजसि तं यजमानम् । सौश्रवसेषु साधुश्रवणीयेषु यज्ञक्रतुषु । उक्थ उक्थ आभज ततस्तेष्वेव यज्ञक्रतुषु उक्थे उक्थे शस्यमाने आभजसि आसेवसे । यजमानः प्रियः सूर्यस्य भवति प्रियश्चाग्नेर्भवति । किंच उज्जातेन भिनदत् । उद्भिनत्ति धर्मार्थकामान् जातेनौरसपुत्रसंघातेन । उद्भिनत्ति च जनित्वैः जनिष्यमाणैः

पौत्रप्रपौत्रसंघैः वेदार्थान् । प्रजाप्यस्य स्वर्गयायिनी भवतीत्यभिप्रायः ॥ २७ ॥

**म०** शोभनं श्रवः कीर्तिः सुश्रवः सुश्रवसः संबन्धीनि कीर्तिहेतुभूतानि कर्माणि सौश्रवसानि तेषु यज्ञकर्मसु हे अग्ने, त्वं तं यजमानमाभज सेवस्व । निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः । उक्थे उक्थे निष्केवल्यप्रगाथादिरूपे च शस्यमाने तत्तच्छस्त्रे सति तमाभज सर्वतः सेवस्व । कर्मणि शस्त्रे च प्रेरयेत्यर्थः । एवं त्वया सेवितोऽयं यजमानः सूर्ये सूर्यस्य प्रियो भवाति भवतु । लिडर्थे लेट् 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) । अग्ना अग्नेश्च प्रियोऽस्तु । ङसो डादेशः । तथा जातेनोत्पन्नेन पुत्रेण उद्भिनत् उद्भेदमुदयं वृद्धिमाप्नोतु । इलोपेऽडागमे चोद्भिनददिति रूपम् । तथा जनित्वैः जनिष्यमाणैश्च पौत्रादिभिरुद्भिनदत् । जनिष्यन्ते ते जनित्वाः तैः । भविष्यदर्थे औणादिक इत्वप्रत्ययः ॥ २७ ॥

## अष्टाविंशी ।

त्वाम॑ग्ने॒ यज॑माना॒ अनु॒ द्यून्विश्वा॒ वसु॑ दधिरे॒ वार्या॑णि । त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ विव॑व्रुः ॥ २८ ॥

**उ०** त्वामग्ने । हे अग्ने, त्वां यजमानाः । अनुद्यून् अन्वहं अहन्यहनि विश्वानि वसूनि धनानि । दधिरे धारयन्ति भूमिगोहिरण्यादीनि । वार्याणि वरणीयानि । किंच । त्वया च सह द्रविणं यज्ञफलमिच्छमानाः कामयमानाः । व्रजम् व्रजत्यनेन सुकृतिन इति व्रजो देवयानमार्गः । गोमन्तम् गावो रश्मय आदित्यसंबन्धिनः तैः संयुक्तम् । उशिजो मेधाविनः ज्ञानकर्मसमुच्चयकारिणः । विवव्रुः विभिदुः । आदित्यमण्डलस्य मध्येन मार्गं कृतवन्त इत्यर्थः । तदुक्तम् 'ते य एवं विदुः' इत्युपक्रम्य 'देवलोकादादित्यमण्डलम्' इत्यादि ॥ २८ ॥

**म०** हे अग्ने, यजमानास्त्वामनु वर्तमानाः त्वां सेवमानाः सन्तः द्यून् । द्युशब्दो दिनवाची । 'कालाध्वनोः–' ( पा० २ । ३ । ५ ) इति द्वितीया । दिनेषु सर्वदा वार्याणि वरणीयानि प्रार्थ्यानि विश्वा विश्वानि सर्वाणि वसु वसूनि धनानि गोभूहिरण्यादीनि दधिरे धारयन्ति । यथेष्टं धनं प्राप्नुवन्तीत्यर्थः । वसु अत्र सुब्लोपः । किंच त्वया सह स्थिताः त्वां भजन्तस्ते यजमाना द्रविणं यज्ञफलमिच्छमाना इच्छन्तः उशिजः मेधाविनो ज्ञानकर्मसमुच्चयकारिणः सन्तो गोमन्तं गावो रश्मयोऽत्र सन्तीति गोमान् तं रविमण्डलमध्यगं व्रजं व्रजन्त्यनेन सुकृतिन इति व्रजस्तं देवयानमार्गं विवव्रुः विभिदुः । रविमण्डले मार्गं कृतवन्त इत्यर्थः । तदुक्तम् 'ते य एवमेतद्विदुः' इत्युपक्रम्य 'देवलोकादादित्यम्' इति ॥ २८ ॥

## एकोनत्रिंशी ।

अस्ता॑व्य॒ग्निर्न॒रा॒ꣳसु॒शेवो॑ वैश्वान॒र ऋषि॑भिः सोम॑गोपाः । अ॒द्वे॒षे द्यावा॑पृथि॒वी हु॑वेम॒ देवा॑ ध॒त्त र॒यिम॒स्मे सु॒वीर॑म् ॥ २९ ॥

**उ०** अस्ताव्यग्निः स्तुतोऽग्निर्वैश्वानरः नरां सुशेवः मनुष्याणां शोभनं सुखयिता । ऋषिभिः ऋत्विग्यजमानैः । सोमस्य गोपायिता अद्वेषे । पादौ लिङ्गोक्तदेवताकौ । यतोऽग्निः स्तुतः अतः अद्वेषे द्वेषरहिते द्यावापृथिव्यौ हुवेम आह्वयामः तदाश्रयकर्मप्राप्त्यर्थम् । हे देवाः, यूयमपि धत्त दत्त । रयिं धनम् अस्मे अस्मभ्यम् । सुवीरं शोभनपुत्रम् ॥ २९ ॥

**म०** ऋषिभिः यजमानर्त्विग्भिः अग्निरस्तावि स्तुतः । कर्मणि चिण् । कीदृशोऽग्निः । नरां नराणां सुशेवः शोभनं सुखयिता । नुडागमाभावे गुणे च नरामिति रूपम् । शोभनं शेवः सुखं यस्मात् । वैश्वानरः विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितः जठराग्निरूपेण सोमं गोपायतीति सोमगोपाः सोमस्य रक्षिता । अद्वेषे पादौ लिङ्गोक्तदेवौ । यतोऽग्निः स्तुतः अतोऽद्वेषे द्वेषरहिते द्यावापृथिवी रोदसी वयं हुवेम आह्वयामः तदाश्रितकर्मार्थं । हे देवा अग्न्यादयः, अस्मे अस्मासु सुवीरं शोभनपुत्रयुतं रयिं धनं यूयं धत्त स्थापयत ॥ २९ ॥

## त्रिंशी ।

स॒मिधा॒ग्निं दु॑वस्यत घृ॒तैर्बो॑धय॒ताति॑थिम् । आस्मि॑न्ह॒व्या जु॑होतन ॥ ३० ॥

**उ०** वनीवाहनम् । आग्नेय्यः पञ्च कण्डिकाः । समिधाग्निं व्याख्यातम् ॥ ३० ॥

**म०** 'अथ वनीवाहनं प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानꣳ समिधाग्निमिति' ( का० १६ । ६ । १५ ) । उख्याग्नेरुत्तरदिशि प्रागीषं शकटं संस्थाप्य यजमान उख्येऽग्नौ वनीवाहने समिधमाधत्त इति सूत्रार्थः । विरूपाक्षदृष्टाग्नेयी गायत्री व्याख्याताप्युच्यते ( अध्या० ३ क० १ ) । हे ऋत्विग्यजमानाः, समिधा कृत्वाग्निं दुवस्यत परिचरत अतिथिमेनमग्निं बोधयत । अस्मिन्नग्नौ हव्या हवींषि आजुहोतन साकल्येन जुहुत ॥ ३० ॥

## एकत्रिंशी ।

उदु॑ त्वा॒ विश्वे॑ दे॒वा अग्ने॒ भर॑न्तु॒ चित्ति॑भिः । स नो॑ भव शि॒वस्त्वꣳसु॒प्रती॑को वि॒भाव॑सुः ॥ ३१ ॥

**उ०** उद्यच्छति । उदु त्वा अनुष्टुप् । हे अग्ने, उद्धरन्तु त्वां विश्वेदेवाः । चित्तिभिः यैरग्निरुद्ध्रियते । स त्वं विश्वैर्देवैरुध्रियमाणः नः अस्माकं शिवो भव । शिवः शान्तः । सुप्रतीकः शोभनमुखः विभावसुः विभूतधनश्च ॥ ३१ ॥

**म०** 'सासन्दीकमुख्यम्योदुत्वेति दक्षिणतोऽनसि करोति' ( का० १६ । ६ । १६ ) । समिदाधानानन्तरमुदुत्वेति मन्त्रेणासन्दीसहितमुख्याग्निमूर्ध्वं कृत्वा दक्षिणे स्थितो यजमानः शकटे तं स्थापयतीति सूत्रार्थः । तापसदृष्टाग्नेय्यनुष्टुप् हे अग्ने,

विश्वे सर्वे देवाः प्राणरूपाः चित्तिभिः उद्यमनप्रवीणाभिर्धीवृत्तिभिः त्वा त्वामुद्धरन्तु ऊर्ध्वं धारयन्तु । भृञः शप् उ पादपूरणः । हे अग्ने, स उद्धार्यमाणस्त्वं नोऽस्माकं शिवः कल्याणकृद्भव । किंभूतः । सुप्रतीकः शोभनं प्रतीकं मुखं यस्य । विभा दीप्तिरेव वसु धनं यस्य सः ॥ ३१ ॥

## द्वात्रिंशी ।

प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् । बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्रजाः ॥३२॥

उ० प्रयाति । प्रेदग्ने अनुष्टुप् । प्रयाहि हे अग्ने, ज्योतिष्मान्भूत्वा । शिवेभिरर्चिभिः शिवैः शान्तैः सुखकरैः अर्चिभिः गच्छस्व । त्वं बृहद्भिः भानुभिः रश्मिभिः भासन् दीप्यमानः मा हिंसीः तन्वा शरीरेण प्रजाः ॥ ३२ ॥

म० 'अनड्वाहौ युक्त्वा प्रेदग्न इति प्राङ् यात्वा यथार्थम्' ( का० १६ । ६ । १८ ) । शकटे तूष्णीं वृषौ संयोज्य प्रेदिति मन्त्रेण प्राचीं गत्वा यथार्थं प्रयोजनवन्तं देशं गच्छेदित्यर्थः । अग्निदेवत्यानुष्टुप् । हे अग्ने, शिवेभिरर्चिभिः शान्ताभिर्ज्वालाभिर्ज्योतिष्मान्प्रकाशयुक्तस्त्वं प्रयाहि गच्छ । इत्पादपूरणः । किंच बृहद्भिर्भानुभिः प्रौढैः रश्मिभिः भासन्भासयन् जगदवभासयन् तन्वा स्वकीयेन दाहकेन शरीरेण प्रजाः पुत्रादिका मा हिंसीः मा नाशय ॥ ३२ ॥

## त्रयस्त्रिंशी ।

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ३३ ॥

उ० अक्रन्ददग्निरिति व्याख्यातम् ॥ ३३ ॥

म० 'अक्षे खर्जत्यक्रन्ददग्निरिति जपति' ( का० १६ । ६ । २० ) । अक्षे शब्दं कुर्वति जपेत् । व्याख्याता ( क० ६ ) ॥ ३३ ॥

## चतुस्त्रिंशी ।

प्र प्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥ ३४ ॥

उ० समिधमादधाति । प्र प्रायम् त्रिष्टुप् । प्र प्रायम् प्रकर्षेण महता अयमग्निः । भरतस्य प्रजापतेः शृण्वे शृणोति वचनम् । कथमेतदध्यवसीयते यथा प्रजापतेः शृणोति वचनमिति । वि यत्सूर्यो न रोचते बृहद्भाः । यत्समिदाधानसमनन्तरमेव विरोचते । सूर्यो न सूर्यइव बृहद्भाः महादीप्तिः । यश्च अभितस्थौ पूरुम् असुरराक्षसम् पृतनासु संग्रामेषु एतया समिधा आप्यायितः । यस्माच्च दीदाय दीप्यते । दैव्यः देवसंबन्धी । अतिथिः अतिथिधर्मा जनानाम् । शिवः शान्तः नः अस्माकं भवति । तस्मात्प्रजापतेर्वचनं शृणोति ॥ ३४ ॥

म० 'वासेऽवहरत्युद्धृतावोक्षित उत्तरतः समिदाधानं प्रप्रेति' ( का० १६ । ६ । २१ ) । वासे स्थितौ क्रियमाणे उत्तरदिशि उद्धृतावोक्षिते प्रदेशेऽग्निमवहरत्युत्तारयति ततोऽग्नौ समिदाधानम् । वसिष्ठदृष्टाग्नेयी त्रिष्टुप् । 'प्रसमुपोदः पादपूरणे' ( पा० ८ । १ । ६ ) इति प्रोपसर्गस्य द्वित्वम् । अयमग्निः बिभर्ति हवींषि भरतस्तस्य भरतस्य यजमानस्य शृण्वे शृणुते आह्वानमिति शेषः । यजमानकृतमाह्वानं शृणोतीत्यर्थः । पुरुषव्यत्ययः । यत् योऽग्निः सूर्यो न सूर्य इव भाः भासत इति भाः सूर्यवद्भासमानः सन् बृहद्यथा तथा रोचते अत्यन्तं दीप्यते । योऽग्निः पृतनासु संग्रामेषु पूरुं राक्षसमभितस्थौ संमुखं तिष्ठति । दैव्यो देवसंबन्धी अतिथिः नोऽस्माकं शिवः मङ्गलरूपः सोऽग्निर्दीदाय दीप्यते । 'दीङ् क्षये' धातूनामनेकार्थत्वादत्र दीप्त्यर्थः लिटि रूपम् । 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६ । १ । ७ ) इत्यभ्यासदीर्घः 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति वर्तमाने लिट् ॥ ३४ ॥

## पञ्चत्रिंशी ।

आपो देवीः प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वꣳ सुरभा उ लोके । तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत् ॥ ३५ ॥

उ० आपो देवीः । दश कण्डिका भस्माभ्यवहरणम् । आपो देवीः । अब्देवत्या त्रिष्टुप् । हे आपः देव्यः, प्रतिगृभ्णीत प्रतिगृह्णीत भस्मैतत्स्वागतादिभिः । तत्र अयं शिष्टव्यवहारः । ततः खातादिभिः परिगृह्य । स्योने कृणुध्वं सुरभा उ लोके स्योने सुखावहे कृणुध्वं स्थापयत । उकारः समुच्चयार्थः । सुरभौ शोभनगन्धे धूपपुष्पोपकारैः । लोके स्थाने शय्यायाम् तस्मै नमन्ताम् । तदःस्थाने एतदःप्रयोगः प्रकृतत्वात् । तस्मै भस्मरूपायाग्नये नमन्तां जनयः उपतिष्ठन्तु जायाः । सुपत्नीः शोभनपत्न्यः । रूपलावण्ययौवनालंकारवैदग्ध्यसंपन्नाः । यूयं च मातेव पुत्रं बिभृत धारयत । पानभोजनवासोभिः गोपयत । किंच अप्सु स्वात्मनि एनत् भस्म ॥ ३५ ॥

म० 'पलाशपुटेनापो देवीरित्येकया' ( का० १६ । ६ । २६ ) । वनीवाहनानन्तरं तडागादिजलस्थानं गत्वा वटादिपत्रपुटेन सायंप्रातरुखायाः सकाशादुद्धृतं यद्भस्मास्ति तदेकया ऋचा जले क्षिपेदिति सूत्रार्थः । अब्देवत्या त्रिष्टुप् । हे आपो देवीः देव्यः दीप्यमानाः, भस्म यूयं प्रतिगृभ्णीत स्वागतादिभिः प्रतिगृह्णीत । किंच स्योने सुखावहे सुरभौ पुष्पधूपादिभिः शोभनगन्धयुते लोके स्थाने एतद्भस्म कृणुध्वं कुरुध्वम् 'कृञ् कृतौ' स्वादिः उ पादपूरणः । किंच शोभनः पतिर्वरुणो यासां ताः सुपत्न्यः 'आपः वरुणस्य पत्न्य आसन्'

इति श्रुत्यन्तरात्। जनयन्त्यग्निमुत्पादयन्ति वृक्षोत्पत्त्यादिद्वारेति जनयः सुपत्नीर्जनयो भवत्यस्तस्मै भस्मरूपायाग्नये नमन्तां प्रह्वीभवन्तु। किंच हे आपः, एनद्भस्म अप्सु स्वात्मनि यूयं बिभृत धारयत माता पुत्रमिव यथा माता पुत्रं स्वात्मनि धारयति तद्वत्पालयत ॥ ३५ ॥

## षट्त्रिंशी।

अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे। गर्भे सन् जायसे पुनः ॥ ३६ ॥

उ० अप्स्वग्ने। अधस्तनेन मन्त्रेण भस्मातिथित्वेनाप्स्ववस्थाप्य अथेदानीं गायत्र्यनुष्टुब्भ्यामग्नेः सर्वगतत्वं प्रकाशयन् भस्माभ्यवहरणमेवापन्हुते। अप्सु हे अग्ने, सधिस्तव सधिः समानस्थानम्। सौषधीरनुरुध्यसे स त्वं बीजमवस्थाय ओषधीः अनुरुध्यसे। ओषधिपरिणाममनु विपरिणमसे। ततो गर्भे सन् विद्यमानः जायसे पुनरपि ॥ ३६ ॥

म० 'ततो द्वाभ्याम्' (का० १६।६।२७)। ततोऽनन्तरं पठिताभ्यां द्वाभ्यामप्स्वग्ने गर्भोऽसीत्येताभ्यामृग्भ्यां पत्रपुटेन द्वितीयवारमुख्याग्निभस्माप्सु प्रास्यति। विरूपदृष्टाग्नेयी गायत्री। पूर्वमन्त्रेण भस्मातिथित्वेन संस्तुत्य द्वाभ्यामग्नेः सर्वव्यापकत्वं वदन्भस्माभ्यवहरणमपह्नुते। हे अग्ने, अप्सु जलेषु तव सधिः स्थानं स त्वमोषधीः यवाद्या अनुरुध्यसे ओषधिपरिणाममनु विपरिणमसे 'सोऽचि लोपे चेत्पादपूरणम्' (पा० ६।१।१३४) इति स इत्यस्य विसर्गलोपे सन्धिः। यद्वा ओषधीः स्वीकरोषि जठराग्निरूपेण। किंच गर्भे अरण्योर्मध्ये स्थितः सन्पुनःपुनर्जायसे ॥ ३६ ॥

## सप्तत्रिंशी।

गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥ ३७ ॥

उ० किंच। गर्भः असि भवसि ओषधीनां गर्भश्च वनस्पतीनाम् गर्भश्च विश्वस्य भूतस्य भूतग्रामस्य। हे अग्ने, गर्भः अपाम् असि ॥ ३७ ॥

म० तिस्रोऽनुष्टुभोऽग्निदेवत्याः। हे अग्ने, त्वमोषधीनां गर्भोऽसि भेषजरूपैरोषधिविशेषैरुत्पद्यमानत्वात्। हे अग्ने, त्वं वनस्पतीनां तरूणां गर्भोऽसि अरणिभ्यो जायमानत्वात् विश्वस्य भूतस्य सर्वस्य प्राणिजातस्य गर्भोऽसि जठराग्निरूपेण विद्यमानत्वात्, अपां गर्भोऽसि वाडववैद्युतादिरूपत्वात् ॥३७॥

## अष्टत्रिंशी।

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥ ३८ ॥

उ० अप आदत्ते प्रसद्य चतसृभिराग्नेयीभिः। द्वे अनुष्टुभौ द्वे गायत्र्यौ। प्रसद्य अवस्थाप्य भस्मना भस्मरूपेण योनिं स्थानं अपश्च पृथिवीं च हे अग्ने, संसृज्य संगत्य च मातृभिः अद्भिः त्वम् ज्योतिष्मान् भूत्वा पुनरस्यामुखायामासदः आसीद ॥ ३८ ॥

म० 'अनामिकया प्रास्तादादत्ते प्रसद्येति' (का० १६।६।२९)। अप्सु क्षिप्ताद्भस्मनः सकाशादनामिकया भस्म गृह्णाति प्रसद्येति चतुर्ऋग्भिः। हे अग्ने, त्वं भस्मना कृत्वा योनिं कारणभूतां पृथिवीं योनिभूता अपश्च प्रसद्य प्राप्य मातृभिरद्भिः संसृज्यैकीभूय ज्योतिष्मान् तेजस्वी संपन्नः सन् पुनरासदः स्वस्थानमुखमासीद ॥ ३८ ॥

## एकोनचत्वारिंशी।

पुनरासद्य सदनमपश्च पृथिवीमग्ने। शेषे मातुर्यथोपस्थेऽन्तरस्याꣳशिवतमः ॥ ३९ ॥

उ० पुनरासद्य पुनरप्यास्थाय सदनं स्थानम् अपश्च पृथिवीं च हे अग्ने, ततोऽनन्तरं शेषे। 'शीङ् स्वप्ने' इत्यस्यैतद्रूपम्। स्वपिषि। मातुः यथा उपस्थे उत्सङ्गे। अन्तर्मध्ये अस्यामुखायाम्। शिवतमः शान्ततमः ॥ ३९ ॥

म० हे अग्ने, अपश्च पृथिवीं च सदनमासद्य जलभूमिरूपं स्थानं प्राप्य पुनरपि अस्यामुखायामन्तर्मध्ये त्वं शेषे स्वपिषि मातुरुपस्थे उत्सङ्गे यथा शिशुः शेते। किंभूतस्त्वम्। शिवतमः कल्याणतमः ॥ ३९ ॥

## चत्वारिंशी।

पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा। पुनर्नः पाह्यꣳहसः ॥ ४० ॥

उ० पुनरूर्जा। द्वे व्याख्याते ॥ ४० ॥

म० द्वे व्याख्याते (क० ९) ॥४०॥ (क० १०) ॥४१॥

## एकचत्वारिंशी।

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्न्या विश्वतस्परि ॥ ४१ ॥

## द्विचत्वारिंशी।

बोधा मे अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वन्दारुष्टे तन्वं वन्दे अग्ने ॥ ४२ ॥

उ० प्रास्योखायामुपतिष्ठते बोधा म इति द्वाभ्यां त्रिष्टुप्गायत्रीभ्याम्। गायत्री यजुरन्ता। विश्वकर्मणे स्वाहेति यजुः। बोधा म बुध्यस्व मम अस्य वचसः। किमभिप्रायोहम् ब्रवीमि। हे यविष्ठ मिश्रयितृतम, अथवा युवतम। मंहिष्ठस्य भूयिष्ठस्य प्रभृतस्य श्रोत्रपथं प्रापितस्य। हे स्वधावः अन्नवन्। किंच पीयति त्वः पीयतिराक्रोशकर्मा आक्रोशति त्वः। एकः पुरुषः त्वां हे अग्ने, अनु त्वो गृणाति। अनुगृणाति स्तौति। त्वः एकपुरुषः। एष लोकस्य स्वधात्रः

कश्चिदाक्रोशति कश्चित्स्तौतीति । एवंच सति वन्दारुः वन्दनशीलः सन् ते तव तन्वं शरीरं वन्दे ॥ ४२ ॥

**म०** 'प्रास्योखायामुपतिष्ठते बोधाम इति' ( का० १६ । ६ । ३० ) । तडागादागत्यानामिकया गृहीतं भस्म तूष्णीमुखायां प्रास्य बोधा म इति द्व्यृचेनोख्यामग्निमुपतिष्ठते । दीर्घतमोदृष्टाग्नेयी त्रिष्टुप् । स्वधान्नमस्यास्तीति स्वधावान् तत्संबोधने स्वधावः 'मतुवसो रुः संबुद्धौ छन्दसि' ( पा० ८ । ३ । १ ) इति रुत्वम् । हे अन्नवन्, हे यविष्ठ युवतम अग्ने, मे मम वचसो बोध बुध्यस्व अभिप्रायमिति शेषः । यद्वा कर्मणि षष्ठी । मद्वचनं जानीहीत्यर्थः । किंभूतस्य । भूयिष्ठस्य वचसः मंहिष्ठस्य भूयिष्ठस्य अतिशयेन बहु मंहिष्ठं तस्य । तथा प्रभृतस्य प्रहृतस्य श्रोत्रपथं प्रापितस्य आदरोक्तस्येत्यर्थः । किंच त्वशब्द एकशब्दार्थः सर्वादिः । पीयतिराक्रोशतिकर्मा । हे अग्ने, त्वः एकः पुरुषः पीयति आक्रोशति निन्दति त्वः एकः त्वामनुगृणाति त्वां स्तौति । कश्चित्स्तौति कश्चिन्निन्दतीति लोकस्वभावः । एवं सति हे अग्ने, अहं तु ते तव तन्वं तनूं शरीरं वन्दे स्तौमि नमामि च 'वदि अभिवादनस्तुत्योः' । कीदृशोऽहम् । वन्दारुः वन्दनशीलः 'शृवन्द्योरारुः' ( पा० ३ । २ । १७३ ) इति आरुप्रत्ययः शीलार्थः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

स बो॑धि सू॒रिर्म॒घवा॒ वसु॑पते॒ वसु॑दावन् । यु॒यो॒ध्य॒स्मद्द्वेषा॑ᳪसि वि॒श्वक॑र्मणे॒ स्वाहा॑ ॥ ४३ ॥

**उ०** स बोधि । यस्त्वं सूरिः पण्डितः मघवा धनवांश्च सः बोधि बुध्यस्व । हे वसुपते धनस्यपातः, बुध्वाच युयोधि पृथक् कुरु । अस्मत्तः द्वेषांसि दौर्भाग्यानि सुप्रीतः सन् । समिधा उपहत्याज्यं जुहोति । विश्वकर्मणेस्वाहा ॥ ४३

**म०** सोमाहुतिदृष्टाग्नेयी यजुरन्ता गायत्री । विश्वकर्मणे स्वाहेति यजुः । हे वसुपते धनपते, हे वसुदावन्, वसु ददातीति वसुदावा । 'आतो मनिन्' ( पा० ३ । २ । ७४ ) इति क्वनिप् तत्संबुद्धौ हे वसुदावन् धनस्य दातः, स त्वं बोधि अस्मदभिप्रायं बुध्यस्व । बुध्यतेः शपि लुप्ते 'हुझल्भ्यो हेर्धिः' ( पा० ६ । ४ । १०१ ) इति धिः गुणान्त्यलोपौ छान्दसौ । कीदृशस्त्वम् । सूरिः विद्वान् मघवा धनवान् मघं धनमस्यास्तीति । संतुष्टः सन् द्वेषांसि दौर्भाग्यानि अस्मद्युयोधि अस्मत्तः पृथक्कुरु । 'प्रायश्चित्तिᳪ समिधोऽपहत्याज्यं विश्वकर्मण इति जुहोति' ( का० १६ । ७ । १ ) । स्रुवस्थानीयया समिधा घृतमादायोख्येऽग्नौ जुहोति तत्कर्मणः प्रायश्चित्तिरिति संज्ञेति सूत्रार्थः । यजुः । जगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

पुन॑स्त्वादि॒त्या रु॒द्रा वस॑वः॒ समि॑न्धतां॒ पुन॑र्ब्र॒ह्माणो॑ वसुनीथ य॒ज्ञैः । घृ॒तेन॒ त्वं त॒न्वं॑ वर्धयस्व स॒त्याः स॑न्तु॒ यज॑मानस्य॒ कामाः॑ ॥ ४४ ॥

**उ०** आदधाति समिधम् । पुनस्त्वा । आग्नेयी त्रिष्टुप् । निर्वाणं त्वां पुनः समिन्धतां संदीपयन्तु । आदित्या रुद्राः वसवः पुनश्च ब्रह्माणः ब्राह्मणाः ऋत्विग्यजमानाः । वसुनीथ नीथा स्तुतिरुच्यते । वसुलाभनिमित्ता यस्य स्तुतिः स वसुनीथः । यज्ञैः यागैः घृतेन च त्वं तन्वं शरीरं वर्धयस्व । सत्याश्च सन्तु यजमानस्य कामाः । ये भस्माभ्यवहरणव्यवच्छिन्नाः ॥ ४४ ॥

**म०** 'उत्थायादधाति समिधं पुनस्त्वेति' ( का० १६ । ७ । २ ) । घृतहोमानन्तरमुत्थाय तामेव समिधमुख्येऽग्नावादधाति । आग्नेयी त्रिष्टुप् । आद्यपादश्चतुर्दशार्णस्तृतीयो दशकस्तेन द्व्यधिका । हे अग्ने, आदित्याः रुद्राः वसवश्च त्वा त्वां पुनः समिन्धतामुपशान्तं दीपयन्तु । हे वसुनीथ, वसु धनं तन्निमित्ता नीथा स्तुतिर्यस्य । यद्वा वसूनि नयतीति वसुनीथः तत्संबुद्धौ हे धननेतः, ब्रह्माणः ब्राह्मणा ऋत्विग्यजमाना यज्ञैः कृत्वा त्वां पुनः समिन्धतां त्वं च तन्वं स्वशरीरं घृतेनास्मद्दत्तेन वर्धयस्व । त्वयि वृद्धे सति यजमानस्य कामाः सत्याः सन्तु ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

अपे॑त॒ वीत॒ वि च॑ सर्प॒तातो॒ येऽत्र॒ स्थ पु॒रा॒णा ये च॒ नूत॑नाः । अदा॑द्य॒मो॑ऽव॒सानं॑ पृथि॒व्या अक्र॑न्नि॒मं पि॒तरो॑ लोक॒मस्मै॑ ॥ ४५ ॥

**उ०** पलाशशाखया गार्हपत्यं व्यूहति । अपेत त्रिष्टुप् । अर्धर्चेनोदरसर्पिण उच्यन्ते । पादेन यमः पादेन पितरः । अप इत अपगच्छत । वि इत विगच्छत । वि च सर्पतातः । च अतः स्थानात् । येऽत्रस्थ ये यूयमत्रस्थ भवथ । पुराणाश्चिरन्तनाः । ये च नूतनाः इदानीन्तनाः कस्माद्वयमपसर्पाम इतिचेन्मतिः अदात् दत्तवान् यमः अवसानं स्थानम् । अवस्यन्त्यस्मिन्निति अवसानम् । पृथिव्याः असै यजमानाय । अक्रन् अकृतवन्तश्च पितरः इमं लोकं स्थानम् असै यजमानाय । अतोऽपगच्छतेति ॥ ४५ ॥

**म०** 'अथ गार्हपत्यचयनमुच्यते । पलाशशाखया गार्हपत्यं व्युदूह्यापेत वीतेति पुच्छः प्रतिदिशं पुरस्तात् प्रथमम्' ( का० १७ । १ । ३ ) । अत्र भाविन्यावृत्त्या शालाद्वार्यो गार्हपत्यशब्देनोच्यते तदर्था चितिश्चितेः स्थानमपि गार्हपत्य एव । पलाशशाखया गार्हपत्यचितेः स्थानं व्युदूहति । ऊहिरत्र प्रेरणे तत्र पतितं तृणादिकं स्थानाद्बहिः क्षिपतीत्यर्थः । अपेत वीति ऋचः पुच्छः पादैः प्रतिदिशमादौ प्राच्यामपेत वीति येऽत्र स्थेति दक्षिणे अदादिति पश्चादक्रन्नित्युत्तरे इति सूत्रार्थः । लिङ्गोक्तबहुदेवत्या त्रिष्टुप् । अर्धर्चेन तत्स्थानसर्पिण

उच्यन्ते पादेन यमः पादेन पितरः। यमस्य सर्वभूम्यधिपतित्वात्तद्भृत्याः सर्वत्र चरन्ति तान्प्रत्युच्यते। हे यमभृत्याः, ये पुराणाः चिरन्तना ये च नूतनाः इदानीन्तनाः यूयमत्र स्थाने स्थ भवथ ते सर्वे यूयमतः स्थानादपेत अपगच्छत वीत विगच्छत अतिदूरं गच्छत विसर्पत च। अतः स्थानादपेत्य सङ्घातं विहाय विविधं गच्छत। कस्माद्यूयमपसर्पामेत्यत आह। अवस्यति स्थापयत्यस्मिन्निति अवसानं पृथिव्या अवसानं स्थानमिदं यमो देवोऽस्मै यजमानायादाद्दत्तवान्। पितरश्चेमं लोकं स्थानमस्मै यजमानायाकन्कृतवन्तः। करोतेः शपि लुप्ते लङि रूपम्। यमेन पितृभिश्च एतच्चयनस्थानस्य यजमानाय दत्तत्वाद्यूयमपसर्पतेत्यर्थः॥ ४५॥

## षट्चत्वारिंशी।

सं॒ज्ञान॑मसि काम॒धर॑णं॒ मयि॑ ते काम॒धर॑णं भूयात्। अ॒ग्नेर्भस्मा॑स्य॒ग्नेः पुरी॑षमसि॒ चित॑ स्थ परि॒चित॑ ऊर्ध्व॒चित॑ः श्रयध्वम्॥ ४६॥

**उ०** उखां निवपति उल्बसंस्तवः पशुसंस्तवश्च तेषामतस्तथैव व्याख्यायते। संज्ञानमसि। त्रीणि यजूंषि। समिति एकीभावमाचष्टे। यत एकं ज्ञानमसि उल्बसंस्तवात्। 'तस्मादु समानोल्बाः समेव जानीते' इति श्रुतिः। कामधरणं च कामान्धारयति संपादयति कामधरणम्। 'पशवो वा उखाः पशवः कामधरणं' इति श्रुतिः। अतो मयि ते तव कामधरणं भूयात्। 'मयि ते पशवो भूयासुः' इति श्रुतिः। उल्बाभिप्रायमेकवचनम्। सिकता निवपति। अग्नेर्भस्मासि। 'भस भर्त्सनदीप्त्योः'। भसितं भस्म भस्मसादृश्यात्सिकता भस्मेत्युक्ताः। 'न वा अग्निः स्वं भस्मातिदहति' इति श्रुतिः। अग्नेश्च पुरीषं पूरणम् असि। भस्माभिप्रायमेकवचनम्। 'अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकताः' इति श्रुतिः। परिसृत उपदधाति चितस्थ। 'चिञ् चयने' अस्य क्विपि बहुवचनम्। या यूयं चितो भवथ। परि सर्वतश्च चितस्थ ता उच्यन्ते। ऊर्ध्वचितो भूत्वा एनमग्निमाश्रयध्वम्॥ ४६॥

**म०** 'उदीचीᳶ शाखामुदस्योखां निवपति संज्ञानमिति' (का० १७।१।१४)। यया व्युदूहनं कृतं तां शाखामुदक् क्षिप्त्वा गार्हपत्यचितिस्थाने क्षारमृदो निदधाति। ऊषदेवत्यं यजुः। हे ऊषस्वरूप, त्वं संज्ञानमसि पशूनां सम्यक् ज्ञानसाधनमसि। पशवो हि ऊषदेशं प्राप्य लिहन्ति। तथा कामधरणं कामान्मनोरथान्धरति संपादयतीति कामधरणं यज्ञद्वारा कामसंपादकत्वात्। अतस्ते तव कामधरणं कामसंपादनसामर्थ्यं मयि भूयात् अस्तु। यद्वा श्रुत्यनुसारेण व्याख्यानम्। ते तव कामधरणं पशवः मयि भूयात् भूयासुः। यतस्त्वं कामधरणं पशुरूपं संज्ञानं सम्यक् ज्ञापकमसि उल्बसंभवात्। 'पशवो वा ऊषाः पशवः कामधरणं मयि ते पशवो भूयासुः' (७।१।१।८) इति श्रुतेः उल्बाभिप्रायमेकवचनमुल्बस्योषोत्पन्नत्वात्। 'सिकताश्चाग्नेर्भस्मेत्यूषवत्' (का० १७।१।१६)। ऊषवत्सिकता निवपति। सिकतादेवत्यं यजुः। हे सिकतास्वरूप, त्वमग्नेर्भस्म भासकमसि सिकतास्थोऽग्निरत्युग्रो भवति। अग्नेश्च पुरीषं पूरणमसि पूरयतीति पुरीषम्। पिपर्तेरीषक्प्रत्यये औणादिके 'उदोष्ठ्यपूर्वस्य' (पा० ७।१।१०२) इत्युदादेशः। भस्माभिप्रायमेकवचनम्। न वा अग्निः स्वं भस्मातिदहति। 'अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकताः' (७।१।१।९—१०) इति च श्रुतिः। 'परिश्रिद्भिः परिश्रयति पूर्ववदेकविंशत्या चितः स्थेति' (का० १७।१।१७) एकविंशतिपरिश्रिद्भिर्गार्हपत्यस्थानं वेष्टयति पूर्ववदिति प्रदक्षिणमूर्ध्वास्ताः खननीया इति। परिश्रिद्देवत्यं यजुः। हे परिश्रितः शर्कराः यूयं चितः स्थ चीयन्ते भूमौ प्रक्षिप्यन्ते इति चितः भूमौ क्षिप्ता भवथ। परिचितः स्थ परितः सर्वतः स्थापिता भवथ। ऊर्ध्वं चीयन्त इति ऊर्ध्वं चितः ऊर्ध्वं स्थापिताः सत्यो यूयं श्रयध्वमिदं गार्हपत्यायतनं सेवध्वम्॥ ४६॥

## सप्तचत्वारिंशी।

अ॒यᳶ सो अ॒ग्निर्यस्मि॒न्त्सोम॒मिन्द्र॑ः सु॒तं द॒धे ज॒ठरे॑ वावशा॒नः। स॒ह॒स्रियं॒ वाज॒मत्यं॒ न सप्ति॒ᳶ स॒सवान्त्सन्त्स्तूयसे जातवेदः॥ ४७॥

**उ०** गार्हपत्य इष्टकाभिश्चीयते। अयं सो अग्निः षडर्चमाग्नेयं त्रैष्टुभम्। चतुर्थीपञ्चम्यौ अनुष्टुभौ। इष्टकोपधानं कुर्वन्नभिनयेन दर्शयति। अयं सः गार्हपत्योऽग्निश्चीयते। यस्मिंश्चिते सति अभिषुतं सोमम् इन्द्रः दधे धारयति। जठरे उदरे वावशानः कामयमानः। कथंभूतं सोमं दधे। सहस्रियं सहस्रार्हम्। वाजम् अन्नभूतं सर्वस्य जगतः। अत्यं न सप्तिम्। नकारः संप्रत्यर्थे। अनन्तरं भक्षणादेव मुदकरम्। सप्तिं शरणं तृप्तिकरम्। न केवलं यस्मिंश्चिते इन्द्रः सोमं जठरे धारयति। किंतर्हि। त्वमपि ससवान्त्सन्त्स्तूयसे जातवेदः। ससवान्सन् हवींषि संभजमानः सन् स्तूयसे ऋत्विग्यजमानैः। हे जातवेदः, अयं तावदस्य मन्त्रस्य प्रगुणोऽर्थश्रुतिस्तु आहुतिपरिणामाभिप्रायेण व्याचष्टे। अयं वो लोको गार्हपत्य आपः सोमः सुतोऽस्मिँल्लोके य इन्द्रो धत्ते जठरे वावशान इति। मध्यं वै जठरमित्यादि अयं स लोको गार्हपत्याग्निर्यस्मिँल्लोके अभियुजः सोमपरिणामभूता अपः इन्द्रस्य जठरे मध्ये दधे स्थापयति। सहस्रियं वाजमत्यन्नसप्तिमिति। आपो वै सहस्रियो वाजः अपां विशेषणानि। ससवान्त्सन्त्स्तूयसे जातवेद इति व्याचष्टे। चितः संश्रीयसे जातवेद इति गार्हपत्यरूपेण चितः सन् चीयसे। आहवनीयरूपेणेति वा अर्थान्तरनिवृत्तित्वम्॥ ४७॥

**म०** 'मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्ङयᳶसो अग्निरिति प्रत्यृचम्' (का० १७।१।८)। ततोऽध्वर्युर्मण्डलाद्दक्षिणे उदङ्मुख उपविश्य मध्ये

चतस्रोऽर्धबृहतीसंज्ञा इष्टकाः प्राचीः प्राग्लक्षणा दक्षिणोत्तरपंक्त्योत्तरमारभ्योपदधाति अभ्यात्मं चयनमित्युक्तेः । ऋक्चतुष्केणैकैकाम् । ह्रस्वदीर्घास्तदर्धायामाः पद्या लोकद्वयव्यापिन्य इष्टका अर्धबृहत्य उच्यन्त इति सूत्रार्थः । पञ्च ऋचो विश्वामित्रदृष्टा आग्नेय्यस्त्रिष्टुभश्चतुर्थ्यनुष्टुप् । इष्टकोपधानं कुर्वन्नभिनयेन दर्शयति । अयं गार्हपत्यः सः अग्निरिष्टकाभिश्चीयत इति शेषः । यस्मिन्नग्नौ चिते सति इन्द्रः सुतमभिषुतं सोमं जठरे स्वोदरे दधे धारयति । वर्तमाने लिट् । किंभूत इन्द्रः । वावशानः वष्टीति वावशानः 'बहुलं छन्दसि' ( पा० २ । ४ । ७६) इति शपः श्लौ सति द्विवेऽभ्यासदीर्घे शानचि रूपम् । कामयमानः । कीदृशं सोमम् । सहस्रियं सहस्रार्हम् । वाजमन्नं बहूनां तृप्तिकरमित्यर्थः । अत्यं न । नकारः संप्रत्यर्थः । भक्षणादेव मदकरम् । सप्तिं शरणं तृप्तिकरम् । अग्नौ चितेन केवलमिन्द्र एव सोमं जठरे धत्ते किंतु हे जातवेदः, जातं वेदो धनं यस्मात् हे अग्ने, त्वमपि ससवान् हवींषि संभजमानः सन् ऋत्विग्यजमानैः स्तूयसे 'षण संभक्तौ' क्वसुप्रत्ययः । उत्तरार्धस्यायं वार्थः । हे जातवेदः, सप्तिं शरणं गमनकुशलमत्यं न अश्वमिव सहस्रियं सहस्रसंख्याकेन धनेन संमितं वाजमन्नं ससवान्दत्तवान्सन् यजमानैस्त्वं स्तूयसे 'सहस्रेण संमितौ घः' ( पा० ४ । ४ । १३५ ) इति घप्रत्ययः । 'षणु दाने' क्वसुः ससवान् ॥ ४७ ॥

## अष्टचत्वारिंशी ।

अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र । येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥ ४८ ॥

**उ०** अग्ने यत्ते । हे अग्ने, यत्ते तव दिवि द्युलोकआदिलक्षणं वर्चः । यच्च पृथिव्यामग्निलक्षणं वर्चः । यच्च ओषधीषु अन्तर्व्यवस्थितम् । यच्च अप्स्वन्तर्व्यवस्थितम् आयजत्र आयष्टव्यं मर्यादया यष्टव्यम् । एतान्यधस्तादुक्तानि वर्चांसि तव लघीयांसि । येन तु वर्चसा अन्तरिक्षम् उरु विस्तीर्णम् आततन्थ आतनोषि । त्वेषः स भानुः महत्तद्वर्चः । अर्णवः अर्णस्वान् उदकवान् अथवा 'अरणवान्गमनवान् वायुः सः' इति श्रुतिः । नृचक्षाः नृणां शुभाशुभकर्मद्रष्टा । त्रिस्थानोऽत्राग्निः स्तुतः ॥ ४८ ॥

**म०** हे आयजत्र मर्यादया यजनीय हे अग्ने, ते तव यत् दिवि द्युलोके वर्चो दीप्तिरर्करूपं वर्तते यच्च पृथिव्यामग्निरूपं यच्च ओषधीष्वन्तः स्थितं यच्चाप्सु जलेषु अन्तः स्थितं यच्च वर्चसा उरु विस्तीर्णमन्तरिक्षमाततन्थ आतनोषि विस्तारयसि 'बभूथाततन्थ–' ( पा० ७ । २ । ६४ ) इतीडभावः । स भानुः दीप्तिः त्वेषः त्वेषयति प्रकाशयति सकलं विश्वमिति त्वेषः 'त्विष दीप्तौ' पचादित्वादच् । अर्णवः अर्णांसि उदकानि सन्ति यत्रेत्यर्थः । 'अर्णसो वः सलोपश्च' । यद्वा अरणवान् गमनवान् प्रसरणशीलः । नृचक्षाः नॄन् चष्ट इति नृणां शुभाशुभकर्मद्रष्टा । ईदृशो यस्ते भानुस्तमेवेष्टकारूपमुपदधामीति शेषः । अनेन त्रिस्थानोऽग्निः स्तुतः ॥ ४८ ॥

## एकोनपञ्चाशी ।

अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ २ ऊचिषे धिष्ण्या ये । या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥ ४९ ॥

**उ०** अग्ने दिवः । हे अग्ने, दिवः द्युलोकस्य संबन्धि अर्णमुदकम् अच्छा जिगासि । 'अच्छाभेराप्तुमिति शाकपूणिः' । अभिजिगासि । 'आपो वा अस्य दिवोर्णवस्ता एष धूमेनाच्छैति' इति श्रुतिः । अच्छा देवान् अभिजिगासि च देवान् । कतमान्देवानित्यत आह । ऊचिषे धिष्ण्या ये । 'प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्ति' इष्णन्ति उच्यन्त इति लिङ्गवचनयोर्व्यत्ययः । उच्यन्ते ये धिष्ण्या अग्नयः । किंच रोचने लोके स्थितस्य सूर्यस्य परस्तादाप उपतिष्ठन्ते याश्च अधस्तादुपतिष्ठन्ते आपः ताश्च त्वमभिजिगासि । त्वमेवैतै रूपैः परिणमसीत्यभिप्रायः ॥ ४९ ॥

**म०** हे अग्ने, दिवो द्युलोकस्य संबन्धि अर्णमुदकं त्वमच्छाजिगासि आभिमुख्येन गच्छसि 'गा स्तुतिगत्योः' ह्वादिः । अभ्यासेत्वं छान्दसम् । 'अच्छाभेराप्तुमिति शाकपूणिः' (निरु० ५ । ३१ ) 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इत्यच्छेत्यस्य संहितायां दीर्घः । 'आपो वा अस्य दिवोऽर्णस्ता एष धूमेनाच्छैति' ( ७ । १ । १ । २४ ) इति श्रुतिः । किंच ये देवा धिष्ण्या ऊचिषे ऊचिरे उच्यन्ते धियो बुद्धीरिन्द्रियाणि इष्णन्ति प्रेरयन्ति धिष्ण्याः प्राणरूपा देवाः तान् देवांश्च त्वमच्छा जिगासि अभिगच्छसि । ऊचिषे ब्रूञः कर्मणि लिट् पुरुषवचनयोर्व्यत्ययः । 'प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्ति' ( ७ । १ । १ । २४ ) इति श्रुतेः । किंच रोचने दीप्तिरूपे मण्डले वर्तमानस्य सूर्यस्य परस्तादुपरिष्टाया आप उप उपतिष्ठन्ते अवस्तादवरेधस्ताच्च या आप उपतिष्ठन्ते ता आपश्च त्वमभिजिगासीत्यन्वयः । त्वमेवैतै रूपैः परिणमसीति भावः ॥ ४९ ॥

## पञ्चाशी ।

पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥ ५० ॥

**उ०** पुरीष्यासः बहुवचनमिष्टकापेक्षम् । ये पुरीष्याः पशव्याः पशुभ्यो हिताः अग्नय इष्टकाः । प्रावणेभिः । 'प्रुङ् गतौ' । प्रावणैः गमनैः लोकव्याप्तिभिः । सजोषसः समानप्रीतयः समानसेविनो वा । समानं हि ते लोकं सेवन्ते । अर्धबृहत्यो हि ताश्चतस्रः । ते जुषन्तां सेवन्तां यज्ञम् । अद्रुहः अहिंसितारः । अनमीवाश्च अशनायाबुभुक्षानिवृत्तिकरा इत्यर्थः । इषः अन्नभक्तीः महीः महतीः प्रभूताः ॥ ५० ॥

**म०** अनुष्टुप् बहुवचनमिष्टकापेक्षम् । अग्नयः एते इष्टकारूपा यज्ञमस्मदीयमिमं यागं जुषन्तां सेवन्ताम् । अनमीवा नास्ति अमीवा व्याधिरशनायाबुभुक्षारूपो याभिस्ता अनमीवाः क्षुधातृष्णानिवर्तिकाः महीः महतीः बहुला इषः अन्नभक्तीश्चाग्नयो जुषन्ताम् । कीदृशा अग्नयः । पुरीष्यासः पुरीषेभ्यः पशुभ्यो हिताः पुरीष्याः । आज्जसेरसुक् । तथा प्रावणेभिः प्रवणैः प्रकर्षेण वनन्ति संभजन्ति विषयानिति प्रावणानि मनांसि तैः सजोषसः समानप्रीतयः । मनसा प्रीतियुक्ता इत्यर्थः । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति संहितायां प्रावणेति दीर्घः । 'बहुलं छन्दसि' इत्येत्वम् । तथा अद्रुहः न द्रुह्यन्तीत्यद्रुहः अहिंसितारः परस्परं प्रीतियुताः ॥ ५० ॥

## एकपञ्चाशी।

इडा॑मग्ने पुरु॒दꣳस॑ꣳ स॒निं गोः श॑श्वत्त॒मꣳ हव॑मानाय साध। स्यान्नः॑ सू॒नुस्तन॑यो वि॒जावाग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ५१ ॥

**उ०** पश्चिमे उपदधाति इडामग्ने । इडामन्नं हे अग्ने, पुरुदंसं बहुकर्मसाधनभूतम् । यत्तु श्रुत्योक्तम् 'पशवो वा इडा' इति तद्बलीवर्दैरुत्पाद्यत इत्यनेन हेतुना। सनिं गोः गोः संबधिनीं च सनिं दानं पयोदधिघृतादिकम् । शश्वत्तमं शाश्वतिकतमं शाश्वतिककर्म अनपायि हवमानाय यजमानाय । स हि देवानाह्वयति । साध प्रसाधय । एतदुक्तं भवति । अन्नं सोपसेचनं शाश्वतिकतमं यजमानाय देहि। किंच । स्यान्नः सूनुस्तनयः भवेचास्माकं पुत्र औरसः । विजावा प्रज्ञातिमान् । यद्वा विजयशीलः । पितरं वा योजयति वीर्येण यया सुमत्या त्वमेतत्करोषि सा तेभूतु अस्मे अस्मासु ॥ ५१ ॥

**म०** 'इडामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः' (का० १७। १। ११ )इडामग्न इति ऋग्द्वयेन प्रतिमन्त्रं पश्चिमे द्वे पादमात्र्यौ पद्ये तिरश्च्यौ उदग्लक्षणे उपदध्यात् उत्तरतोऽवस्थितो दक्षिणामुखः इडामिति दक्षिणाम् अयं त इत्युत्तरामिति सूत्रार्थः। द्वे आग्नेय्यौ त्रिष्टुबनुष्टुभौ । हे अग्ने, हवमानाय यजमानाय साध साधय संपादय 'छन्दस्युभयथा' (पा० ३ । ४ । ११७) इडामन्नम् । शप आर्धधातुकत्वल्लोपः । ह्वयति आह्वयति देवान् जुहोति वा हवमानः तस्मै । यत्तु श्रुत्योक्तं 'पशवो वा इडा' ( ७ । १ । १ । २७ ) इति तद्बलीवर्दैरन्नस्योत्पाद्यमानत्वात् । किंभूतामिडाम् । पुरुदंसं दंस इति कर्मनामसु पठितम् । पुरूणि बहूनि दंसांसि कर्माणि यया सा पुरुदंसाः तां पुरुदंससमिति प्राप्ते टिलोपश्छान्दसः । बहुकर्मसाधनभूतमन्नं देहीत्यर्थः । तथा शश्वत्तममत्यन्तमविच्छेदेन वर्तमानमनपायिनं गोः सनिं धेनुसंबन्धि दानं पयोदधिघृतादिकं सर्वदा देहीत्यर्थः । किंच नोऽस्माकं यजमानानां सूनुः पुत्रः स्यादस्तु । कीदृशः सूनुः । तनयः औरसः पुत्रस्य सूनुशब्देनोक्तत्वाद्दत्तपुत्रादिव्यावृत्त्यै तनयशब्दः । यद्वा तनोत्यग्निहोत्रादिकर्माणीति तनयः । तथा विजावा विविधं जायते, पुत्रादिद्वारेति विजावा प्रजावान् 'विड्वनोरनुनासिकस्यात्' ( पा० ६ । ४ । ४१ ) इति धातोराकारः । हे अग्ने, ते तव सान्नगोपुत्रदानविषया सुमतिः शोभना बुद्धिरनुग्रहेणास्मे अस्मासु भूतु भवतु । यजमानेभ्यस्त्वयान्नादि देयमिति भावः । व्यत्ययेन शपो लुक् । अस्मे विभक्तेः शेआदेशे त्वदाद्यत्वम् ॥ ५१ ॥

## द्विपञ्चाशी।

अ॒यं ते॒ योनि॑र्ऋ॒त्वियो॒ यतो॑ जा॒तो अरो॑चथाः। तं जा॒नन्न॑ग्न॒ आरो॒हाथा॑ नो वर्धया र॒यिम् ॥ ५२ ॥

**उ०** द्वितीयमुपदधाति अयं ते । व्याख्यातम् ॥ ५२ ॥

**म०** व्याख्याता [ अध्या० ३ क० १४ ] ॥ ५२ ॥

## त्रिपञ्चाशी।

चिद॑सि॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द परि॒चिद॑सि॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द ॥ ५३ ॥

**उ०** पुरस्तादुपदधाति चिदसि । 'चिञ् चयने' । चितासि । सादयति । तया देवतया सादिता सती अङ्गिरस्वप्राणवत् । यथाहि प्राणः सर्वमङ्गं व्याप्य स्थितः एवं त्वमपि । ध्रुवा सीद निविशस्व । तया देवतयेति 'वाग्वै सा देवताङ्गिरस्वदिति प्राणो वा अङ्गिराः' इति श्रुतिः । द्वितीयामुपदधाति । परि चिदसि । परि सर्वतश्चितासि तया देवतयेति व्याख्यातम् ॥ ५३ ॥

**म०** 'चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम्' । (का० १७। १। १२ ) तदुत्तरतोऽपरमार्गेण दक्षिणां मत्वा चिदसीति प्रतिमन्त्रं पूर्वे तिरश्च्यौ उदग्लक्षणे दक्षिणे स्थित उदङ्मुख उपदधाति चिदसीत्युत्तरां परिचिदसीति दक्षिणाम् । इष्टकादैवत्ये द्वे यजुषी । चीयत इति चित् । हे इष्टके, त्वं चिता स्थापितासि । यद्वा चिनोति भोगान्संपादयतीति चित् त्वं भोगसंपादिकासि । तया प्रसिद्धया देवतया वाग्रूपया सादिता सती अङ्गिरस्वत्प्राणवत् प्राणा यथा सर्वाङ्गेषु स्थितास्तथा ध्रुवा स्थिरा सती त्वं सीद निविशस्व । तया देवतयेति 'वाग्वै सा देवताङ्गिरस्वदिति प्राणो वा अङ्गिरा' इति श्रुतेः । द्वितीयामुपदधाति । परिचित्परितः सर्वतः चीयते परितो भोगांश्चिनोतीति वा त्वं परिचिदसि । तया देवतयेति व्याख्यातम् ॥५३॥

## चतुःपञ्चाशी।

लो॒कं पृ॑ण छि॒द्रं पृ॑णाथो॑ सीद ध्रु॒वा त्वम्। इ॒न्द्रा॒ग्नी त्वा॒ बृह॒स्पति॑र॒स्मिन्योना॑वसीषदन् ॥ ५४ ॥

**उ०** लोकंपृणामुपदधाति । लोकं पृण । पद्यादिलोकं(?) स्थानं पृण पूरय । छिद्रं पृण पूरय अग्नेरवयवभूता भव।

अथो अपिच सीद निविशस्व ध्रुवा निश्चला त्वम् । इन्द्राग्नी च त्वां बृहस्पतिश्च अस्मिन्योनौ स्थाने असीषदन् आसादयन्तु । नहि मानुषोऽध्वर्युः त्वां सादयितुं समर्थ इत्यभिप्रायः

**म०** 'तिसृषु लोकंपृणासु मन्त्रो दशसु च द्वयोर्वा दशस्वेकस्यां च' ( का० १७ । १ । १७ )। आदौ तिसृषु लोकंपृणेष्टकासु तूष्णीमुपहितासु लोकंपृणेत्यभिमन्त्रणम् ततो दशसु मन्त्रः यद्वादौ द्वयोर्लोकंपृणयोर्मन्त्रस्ततो दशसु तत एकस्याम् एवमेकविंशतीष्टका गार्हपत्ये स्युरिति सूत्रार्थः । लोकंपृणादेवत्यानुष्टुप् । हे लोकंपृणेष्टके, त्वं लोकं पृण गार्हपत्यचयनदेशे पूर्वेष्टकाभिरनाक्रान्तं स्थानं पूरय । तथा छिद्रं पृण किंचिदपि छिद्रं यथा न दृश्यते तथा संश्लिष्टा भवेत्यर्थः । 'पृण तृप्तौ' तुदादिः । अथो अपिच ध्रुवा दृढा सती त्वं सीद तिष्ठ । किंच इन्द्राग्नी बृहस्पतिश्चैते देवा अस्मिन् योनौ स्थाने त्वा त्वां असीषदन् सादितवन्तः सदेश्चङ् । नहि मानुषोऽध्वर्युस्त्वां सादयितुं शक्य इति भावः ॥ ५४ ॥

## पञ्चपञ्चाशी ।

ता अ॑स्य सूद॑दोहस॒: सोम॑ꣳ श्रीणन्ति॒ पृश्न॑यः ।
जन्म॑न्दे॒वाना॒ं विश॑स्त्रि॒ष्वा रो॑च॒ने दि॒वः ॥ ५५ ॥

**उ०** सूददोहसाधिवदति । ता अस्य अनुष्टुप् । यज्ञाहुतिपरिणामभूता आप उच्यन्ते व्यवहितपदप्रायो मन्त्रः । ता यज्ञपरिणामभूता दिव इत्यन्तं पदमिह संबध्यते । दिवः द्युलोकात् च्युताः सूददोहसः । 'आपो वै सूदोऽन्नं दोहः' इति श्रुतिः । अन्नसहिता आपः । अस्येत्यस्य पदस्य विश इत्यनेन संबन्धः । 'यज्ञो वै विशः' इति श्रुतिः । अस्य विशः अस्य संबन्धिनं सोमं श्रीणन्ति मिश्रयन्ति । पृश्नयः 'अन्नं वै पृश्निः' इति श्रुतिः । एतदुक्तं भवति । अस्मिन् लोके पतित्वा आप ओषधिवनस्पत्यन्नभूताः सोमस्योपकुर्वन्ति कस्मिन्काले श्रीणन्ति । जन्मन्देवानाम् । 'संवत्सरो वै देवानां जन्म' इति श्रुतिः । संवत्सरभृतिनः संवत्सरे सोमयागः तदभिप्रायमेतत् । त्रिष्वारोचने । 'सवनानि वै त्रीणि रोचनानि' इति श्रुतिः । त्रिष्वारोचनेष्विति वचनव्यत्ययः । त्रिषु सवनेषु । एवं श्रुतितोऽयं मन्त्रो व्याख्यातः ५५

**म०** 'नित्ये सादनसूददोहसा उपधानादुत्तरे तया देवतया ता अस्येति' ( का० १६ । ७ । १४ ) । तया देवतयेति सादनम् ता अस्येति सूददोहसाधिवदनम् । एते नित्ये सर्वत्रेति सूत्रार्थः । इन्द्रपुत्रप्रियमेधदृष्टाब्देवत्यानुष्टुप् । दिवो द्युलोकसंबन्धिनो दिवश्च्युता वा सूददोहसः सूदाश्च दोहसश्च ते सूददोहसः सूदेन जलेन सहिता दोहसोऽन्नानि अन्नयुक्ता आपः ताः प्रसिद्धा अस्य विशो यज्ञस्य संबन्धिनं सोममाश्रीणन्ति सम्यग्मिश्रयन्ति पक्वं कुर्वन्ति वा 'श्री पाके' क्र्यादिः । 'आपो वै सूदोऽन्नं दोहः' ( ८ । ७ । ३ । २१ ) 'यज्ञो वै विशः' ( ८ । ७ । ३ । २१ ) इति च श्रुतिः । कीदृशाः । सूददोहसः पृश्नयः नानाविधाः । यद्वा 'अन्नं वै पृश्नी' ( ८ । ७ । ३ । २१ ) इति श्रुतेरन्नरूपाः अत्रागत्य व्रीह्यादिधान्यनिष्पादका इत्यर्थः । कदा श्रीणन्ति देवानां जन्मन् जन्मनि संवत्सरे 'संवत्सरो वै देवानां जन्म' ( ८ । ७ । ३ । २१ ) इति श्रुतेः । संवत्सरे संवत्सरे सोमयागस्तदभिप्रायमेतत् । 'सवनानि वै त्रीणि रोचनानि' ( ८ । ७ । ३ । २१ ) इति श्रुतिः । यज्ञपरिणामभूता अन्नोत्पादिका आपो दिवः सकाशादस्मिँल्लोके पतित्वौषधिवनस्पत्यन्नभूताः सत्यः सोमस्योपस्कुर्वन्तीति भावः ॥ ५५ ॥



## षट्पञ्चाशी ।

इन्द्र॒ं विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिर॑: ।
र॒थीत॑मꣳ र॒थीना॒ं वाजा॑नाꣳ सत्प॑तिं॒ पति॑म् ॥ ५६ ॥

**उ०** पुरीषं निवपति । इन्द्रं विश्वाः । ऐन्द्र्यनुष्टुप् । इन्द्रं विश्वाः सर्वाः गिरः स्तुतयः ऋग्यजुःसामलक्षणाः । अवीवृधन् वर्धयन्ति । समुद्रव्यचसम् समुद्रमिव विविधायनं नानागतिम् अक्षोभ्यबलं वा । रथीतमं रथीनाम् । सर्वेषां रथिनां मध्ये रथं युद्धलब्धातिशयम् । वाजानां सत्पतिं पतिं वाजानामन्नानां पतिं सतां च पतिम् । श्रुतिस्मृतिकर्मानुष्ठातारः सन्त उक्ताः ॥ ५६ ॥

**म०** 'चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति' ( का० १७ । १ । १८ ) । चात्वालस्थानात् मृदमानीय गार्हपत्यचितेरुपरि क्षिपति । इन्द्रदेवत्या मधुच्छन्दसुतजेतृदृष्टानुष्टुप् । विश्वाः सर्वा गिरः स्तुतयः ऋग्यजुःसामरूपा इन्द्रमवीवृधन् वर्धयन्ति । कीदृशमिन्द्रम् । समुद्रव्यचसं समुद्रवद् व्यचो व्याप्तिर्यस्य तं समुद्रवद्व्यापकं विविधाञ्चनं नानागतिमित्यर्थः । अक्षोभ्यगतिं वा । रथीनां रथयुक्तानां सर्वेषां मध्ये रथीतममत्यन्तं रथयुतं रथयुद्धे लब्धातिशयमित्यर्थः । 'ईद्रथिनः' ( पा० ८ । २ । १७ ) इति घे परे रथिन ईदादेशः । तथा वाजानामन्नानां पतिं स्वामिनं सत्पतिं स्वधर्मवर्तिनां च प्रतिपालकम् ॥ ५६ ॥

## सप्तपञ्चाशी ।

समि॑तꣳ संक॑ल्पेथाꣳ संप्रि॑यौ रोचि॒ष्णू सु॑मन॒स्यमा॑नौ । इष॒मूर्ज॑म॒भि सं॒वसा॑नौ ॥ ५७ ॥

**उ०** चित्येनोख्यं निवपति समितमिति चतसृभिरुष्णिगुपरिष्टाद्बृहत्युष्णिक्पङ्क्तिभिर्द्व्यग्निदेवत्याभिः । तृतीया वाग्निदेवत्या । समितम् । द्वितीयपादप्रभृति व्याख्यायते । यौ युवां संप्रियौ संगतिप्रियौ रोचिष्णू रोचनशीलौ च । तौ सुमनस्यमानौ परस्परं शोभनं चिन्तयन्तौ । इषमन्नमूर्जं तदुपसेचनं सर्पिरादि अभिसंवसानौ अभ्यवहरन्तौ । वस्तेरर्थान्तरे वृत्तिः । एतत्कुर्वाणौ समितम् । 'इण् गतौ' । संगतिं कुरुतम् । संकल्पेथां च एकसंकल्पौ च भवतमित्येतदाशास्महे ॥ ५७ ॥

**म०** 'समंबिलां कृत्वोख्यं निवपति समितमिति' ( का० १७ । १ । १९ ) । समं विलं यस्याः सा समंबिला । विभक्त्यलुक् छान्दसः । गार्हपत्यचितिं मृत्पूरणेन परिश्रितसमां कृत्वा तन्मध्ये नीचैरुख्याग्निं स्थापयति चतुर्मन्त्रैः । चतस्रो ह्यग्निदेवत्याः । समितम् उष्णिगेकाधिका अनियताक्षरपादत्वेऽप्यष्टाविंशत्यक्षरत्वात् । हे चित्योख्याग्नी, युवां समितं संगच्छतम् । 'इण् गतौ' संगतौ भवतम् । संकल्पेथां च एकसंकल्पौ भवतम् । यद्वा संकल्पनं यज्ञनिष्पादनं कुरुतम् । कीदृशौ युवाम् । संप्रियौ संप्रीणीतस्तौ 'इगुपध–' ( पा० ३ । १ । १३५ ) इति कः । सम्यक् परस्परं प्रीतियुक्तौ । रोचिष्णू दीप्यमानौ 'अलंकृञ्–' ( पा० ३ । २ । १३६ ) इत्यादिना इष्णुच् । सुमनस्यमानौ शोभनं मनः कुरुतस्तौ वा । सुमनस्येते तौ सुमनस्यमानौ । सुध्धातुः क्यङन्ताच्छानच् । परस्परं शोभनचित्तवन्तौ । इषमन्नमूर्जमुपसेचनं घृतादि चाभिसंवसानौ अभ्यवहरन्तौ भुञ्जानौ अभितः सम्यक् संपादयन्तौ वा । वस्तेरर्थान्तरे वृत्तिः ॥ ५७ ॥

## अष्टपञ्चाशी ।

सं वां मनांꣳसि सं व्रता समु चित्तान्याकरम् । अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥ ५८ ॥

**उ०** सं वाम् आ समाकरम् आभिमुख्येन स्थित्वा संस्कृतवान् वां युवयोर्मनांसि । बुद्ध्यहंकारमनांसीति बहुवचनम् । संव्रता । व्रतमिति कर्मनाम । संस्कृतवांश्च युवयोः कर्माणि समु चितानि । चितशब्देन संस्कारा मनोगता उच्यन्ते । संस्कृतवांश्चास्मि मनोगतान्संस्कारान् । उकारः समुच्चयार्थीयः । एवं मनःकर्मसंस्कारैरेकीभूतं त्वामेकं देवताभिमानिनं प्रार्थये । हे अग्ने, पुरीष्य पशव्य, अधिपतिर्भव । त्वं नः अस्मभ्यम् इषं चोर्जं च यजमानाय धेहि देहि । इषमन्नमूर्जं च तदुपसेचनं दध्यादि ॥ ५८ ॥

**म०** उपरिष्टाद्बृहती अष्टसप्तनवत्रयोदशाक्षरपादत्वादेकाधिका । हे पूर्वोक्तावग्नी, वां युवयोर्मनांसि बहुवचनत्वान्मनोबुद्ध्यहंकारानहं समाकरं सर्वतः सङ्गतान्करोमि । करोतेर्लङ्युत्तमबहुवचने शपि अकरमिति रूपम् । तथा व्रता व्रतानि कर्माणि समाकरम् । व्रतमिति कर्मनाम ( निघ० २ । १ । ७ ) तथा चित्तानि च मनोगतसंस्कारान्समाकरम् । उकारः समुच्चयार्थः । एवं मनःकर्मसंस्कारैरेकीकृतैरेकीभूतमग्निं प्रार्थये हे पुरीष्य, पशव्य हे अग्ने, त्वं नोऽस्माकम् अधिपातीति अधिपाः पालको भव । इषमन्नमूर्जं तदुपसेचनं दध्यादि च यजमानाय धेहि देहि ॥ ५८ ॥

## एकोनषष्टी ।

अग्ने त्वं पुरीष्यो रयिमान्पुष्टिमाँ २ असि । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥ ५९ ॥

**उ०** अग्ने त्वम् । हे अग्ने, त्वं पुरीष्यः रयिवांश्च धनवान् पुष्टिवांश्च असि यतः अतः शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः इति व्याख्यातम् ॥ ५९ ॥

**म०** उख्याग्निदेवत्योष्णिक् आर्ष्येकाधिका अनियताक्षरपादत्वात् । हे अग्ने, त्वं पुरीष्यः पशव्योऽसि । रयिमान् धनवान् पुष्टिमान् पोषयुक्तश्चासि । अतः सर्वा दिशः शिवाः शान्ताः कृत्वा इहास्मिंश्चयने स्वं योनिं स्वकीयं स्थानमासदः प्राप्नुहि ॥ ५९ ॥

## षष्टी ।

भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥ ६० ॥

**उ०** भवतं न इति व्याख्यातम् ॥ ६० ॥

**म०** आर्षी पङ्क्तिः अनियताक्षरपादत्वात् ह्यग्निदेवत्या ( अध्या० ५ क० ३ ) पुनर्व्याख्यायते । हे जातवेदसौ अग्नी, यज्ञमस्मदीयं कर्म युवां मा हिंसिष्टं मा विनाशयतम् । यज्ञपतिं यजमानं च मा हिंसिष्टम् । अद्यास्मिन् कर्मदिने नोऽस्मभ्यं शिवौ शान्तौ युवां भवतम् । किंच युवां नोऽस्मदर्थं समनसौ सचेतसौ अरेपसौ च भवतम् । मनसा सहितौ समानचित्तौ । अन्यविषयं मनो हित्वास्मदनुग्रहाभिमुखत्वं समनस्त्वम् । अस्मदनुग्रहेऽन्योन्यविप्रतिपत्तिराहित्यं सचेतस्त्वम् । अरेपसौ निष्पापौ अस्माकं प्रामादिकापराधसत्त्वे कोपाभावो निष्पापत्वम् ईदृशावस्मभ्यं भवतमित्यर्थः ॥ ६० ॥

## एकषष्टी ।

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥ ६१ ॥

**उ०** उखां शिक्याद्विमुञ्चति मातेव पुत्रम् । अनुष्टुप् । उखास्तुतिः । येयमुखा माता इव पुत्रं पृथिवीरूपमवस्थाय पुरीष्यं पशव्यं अग्निम् स्वे स्वकीये उत्सङ्गे कृत्वा अभाः । प्रथमपुरुषस्यैतद्रूपम् । उखाशब्दसामानाधिकरण्यात् अभारुषा अभार्षीत् धारितवती । तामिदानीं कृतसत्यां सतीं विश्वैर्देवैः ऋतुभिः संविदानः । अहो महत्कर्म कृतमित्येवं संवादं कुर्वन् प्रजापतिर्विश्वकर्मा च विमुञ्चतु शिक्यात् ॥ ६१ ॥

**म०** 'सिकताभिः समंबिलां कृत्वा मातेव पुत्रमिति शिक्याद्विमुच्याश्रिवन्निधायासिञ्चति पयोमध्ये तूष्णीम्' ( का० १७ । १ । ३१ ) । शून्यामुखां सिकताभिः संपूर्य मातेवेति मन्त्रेण शिक्यात्पृथक्कृत्वाश्रिवदिति स्थापिताग्नेरुत्तरेऽरत्निमात्रे गार्हपत्यचितेरुपर्येवोखां निधाय तन्मध्ये तूष्णीं दुग्धं सिञ्चेदिति सूत्रार्थः । उखादेवत्या त्रिष्टुप् । तृतीयो नवकः । चतुर्थो द्वादशकः । पृथिवी भूरूपा मृण्मयी या उखा पुरीष्यं

पशव्यमग्निं स्वे योनौ स्वकीयगर्भस्थाने अभाः अभार्षीत् धृतवती। भृञो लुङि 'बहुलं छन्दसि' ( पा० ७।३।९७ ) इतीडागमाभावे सिचो विसर्गे तिपि लुप्ते रूपम्। माता पुत्रमिव यथा माता पुत्रमुत्सङ्गे बिभर्ति। प्रजापतिः कृतकृत्यां तामुखां विमुञ्चतु शिक्यपाशाद्विमुक्तां करोतु। कीदृशः प्रजापतिः। विश्वैर्देवैर्ऋतुभिश्च संविदानः संवित्त इति ऐकमत्यं गतः अहो महत्कर्मोखया कृतमिति संवादं कुर्वन्। विश्वकर्मा विश्वं सृष्टिरूपं कर्म यस्यासौ विश्वकर्मा॥ ६१॥

## द्विषष्टी।

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ ६२॥

उ० नैर्ऋतीनामिष्टकानामुपधानं तिसृभिरनुष्टुब्भिः। असुन्वन्तम् सोमाभिषवमकुर्वाणम् यजमानं चान्यैः यज्ञक्रतुभिः इच्छ परिगृह्णीष्व। किंच स्तेनस्येत्यामन्विहि। स्तेनस्य चौरस्य इत्यां गतिम् अनुकुर्वन् इहि प्रपलाय्य याहि। तस्करस्य तदेवायं चौरकर्म करोति नान्यत् स तत्करः सन् तस्कर इत्युच्यते। पुनरप्याह। अन्यमस्मदिच्छ अन्यं पुरुषमस्मत्तः इच्छ गृहीतुम् सा ते तव इत्या गतिः। एवं दण्डगर्भमुक्त्वा अथेदानीं साम्नाह। नमो देवि निर्ऋते तुभ्यमस्तु हे देवि निर्ऋते तुभ्यं नमः अस्तु॥ ६२॥

म० 'नैर्ऋतीः कृष्णास्तुषपक्कास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यासन्नहोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन्नसुन्वन्तमिति प्रत्यृचं पराचीः' ( का० १७।१।२३ )। ततोऽध्वर्युः राजसूये हविष्यासन्नहोमे यादृशो देशस्तादृशे स्वयं प्रदीर्णे इरिणे वा असुन्वन्तमिति प्रत्यृचं तिस्रो नैर्ऋतिसंज्ञा इष्टका दक्षिणोत्तराः कृत्वा ततस्ता अस्पृशन्नुपदधाति। कीदृशीः। पाकेन कृष्णवर्णाः तुषैरेव पक्वाः लक्षणहीनाः पद्याः पराचीः अनात्ममुखीः। स्वयं दक्षिणामुखः पूर्वमुत्तरां निधाय ततो दक्षिणे द्वे इति सूत्रार्थः। तिस्रो निर्ऋतिदेवत्यास्त्रिष्टुभः। हे निर्ऋते, असुन्वन्तं सोमयागमकुर्वाणम् अयजमानमन्यैर्हविर्यज्ञैर्यजनमकुर्वाणं च त्वमिच्छ प्रतिगच्छ तं गृहाणेत्यर्थः। किंच स्तेनो गुप्तचोरः तस्करः प्रकटचोरः तयोरित्यां गतिमन्विहि अनुगच्छ। पृष्ठतो गत्वा तावपि गृहाणेत्यर्थः। सर्वथा सोमं सुन्वद्भ्यो हविर्यज्ञैश्च यजद्भ्योऽस्मदन्यमिच्छ न त्वस्मानिच्छ। सा दुष्टशिक्षा ते तवेत्या गतिश्चर्या हे देवि निर्ऋते, एवंभूतायै तुभ्यं नमोऽस्तु॥ ६२॥

## त्रिषष्टी।

नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम्। यमेन त्वं यम्या संविदानोत्तमे नाके अधिरोहयैनम्॥ ६३॥

उ० नमः सु ते नमस्कारः शोभनः ते तव हे निर्ऋते अस्तु। निर्ऋतिः कृच्छ्रापतिः भूमिर्वा। तिग्ममुत्साहतेजो यस्याः सा तिग्मतेजाः तस्याः संबोधनं हे तिग्मतेजः, अयस्मयं विचृत अयोमयं विच्छिन्धि बन्धमेतम्। येनाहं बद्धः अजस्य जीवभावलक्षणेन जनित्वा म्रियते मृत्वा जायत इति। किंच। यमेनाग्निना त्वं यम्या च पृथिव्या संविदाना एकमतीभूय। उत्तमे नाके उत्कृष्टे स्वर्गे अधिरोहय एनं यजमानम्॥ ६३॥

म० 'निर्ऋतिः कृच्छ्रापतिः स्यादलक्ष्मीस्तु निर्ऋतिः' इत्यभिधानात् भूमिर्वा निर्ऋतिदिगभिमानिनी देवता वा। 'अलक्ष्म्यां दिक्पतौ चापि निर्ऋतिर्निरुपद्रवे' इति कोशात्। तिग्मं तीक्ष्णं दुःसहं तेजो यस्याः सा तिग्मतेजाः तस्याः संबोधने हे तिग्मतेजः, हे निर्ऋते, तुभ्यं सु सुतरां नमोऽस्तु। अयस्मयमयोमयम् 'अयस्मयादीनि छन्दसि' (पा० १।४।२०) इति सत्वम्। लोहपाशवद्दृढमेतं बन्धं जीवत्वेन जन्ममृतिरूपमज्ञानं त्वं विचृत विच्छिन्धि नाशय। 'चृती ग्रन्थे' तुदादिः। 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति संहितायां दीर्घः। किंच यमेन अग्निना यम्या पृथिव्या च संविदाना ऐकमत्यं गता सती उत्तमे उत्कृष्टे नाके सर्वसुखोपेते दुःखमात्रहीने स्वर्गे एनं यजमानमधिरोहय स्थापय॥ ६३॥

## चतुःषष्टी।

यस्यास्ते घोर आसञ्जुहोम्येषां बन्धानामवसर्जनाय। यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परि वेद विश्वतः॥ ६४॥

उ० यस्यास्ते यस्याः तव हे घोरे विषमशीले। आसन् आस्ये मुखे जुहोमि हविः एषां बन्धानाम् अवसर्जनाय विमोचनाय। सा त्वमेतान्बन्धानस्मत्तो विसृज। किंच। यां च त्वां जनो लोकः भूमिरिति कृत्वा प्रमन्दते स्तौति तां त्वामहमपि स्तौमि। तथैव प्रतिष्ठा भूतानां जनयित्री मातेव बिभर्तीत्यादिभिर्गुणैः। किंच। निर्ऋतिं त्वाम् अहं परिवेद जानामि विश्वतः सर्वतः। नितरां हि विदित आमन्त्रितो हिनस्तीत्यत एतान् बन्धानवसृज अस्मत्तः॥ ६४॥

म० हे घोरे विषमशीले क्रूररूपे निर्ऋतिदेवि, यस्याः ते तव आसन् आस्ये मुखे अहं जुहोमि आहुतिवदिष्टकामुपदधामि। किमर्थम्। एषां बन्धानां यजमानस्य स्वर्गप्राप्तिप्रतिबन्धकानां पापानामवसर्जनाय। किंच जनो जन्तुमात्रो यां त्वा त्वां भूमिरिति प्रमन्दते स्तौति शास्त्रानभिज्ञत्वात्। 'मदि स्वपने जाड्ये मदे मोदे स्तुतौ गतौ' इति धातुः। त्वं तु निर्ऋतिः। अहं तु शास्त्रज्ञतया तादृशीं त्वा त्वां विश्वतः सर्वथापि निर्ऋतिमेव परिवेद सम्यग्जानामि। निर्ऋतिशब्दस्यायमर्थः सर्वदेवसाधारणाद्देवयजनान्निष्कृष्य स्वतन्त्रदेशे विदीर्णादौ

ऋतिः प्राप्तिर्यस्याः सा निर्ऋतिरिति । इदं प्रकारद्वयं वेदेति विश्वत इत्युक्तम् ॥ ६४ ॥

## पञ्चषष्टी।

यं ते॑ दे॒वी निर्ऋ॑तिराब॒बन्ध॒ पाशं॑ ग्री॒वास्व॑वि॒चृ॒त्यम् । तं ते॒ विष्या॒म्यायु॑षो॒ न मध्या॒दथै॒तं पि॑तु॒म॑द्धि॒ प्रसू॑तः ॥ नमो॒ भूत्यै॒ येदं च॒कार॑ ॥ ६५ ॥

उ० शिक्यरुक्मपाशेण्ड्वासंदीः परेणास्यति । यं ते देवी त्रिष्टुप् । यजमान उच्यते । यं ते देवी निर्ऋतिः आबबन्ध आबद्धवती शिक्यपाशं रुक्मपाशं च । ग्रीवासु कण्ठे । अविचृत्यम् । 'चृती च्छेदने' । अविच्छेद्यम् अनवखण्डनीयम् अनेनैव यजुषा तं पाशं ते तव विष्यामि । स्यतिरुपसृष्टो विमोचने । विमुञ्चामि । आयुषो न मध्यात् । अग्निर्वा आयुस्तस्यैतन्मध्यं यश्चितो गार्हपत्यो भवत्यचित आहवनीयः । नकारः संप्रत्यर्थे । अग्नेर्मध्यात् अथोन्मुक्तपाशः सन् अग्निरूपमवस्थाय यजमान एतं पितुमन्नम् अद्धि भक्षय । प्रसूतोभ्यनुज्ञातो निर्ऋत्या । उदपात्रं निषिच्य अन्तरात्मेष्टकमुपतिष्ठन्ति । नमो भूत्यै । विराडेकपदा भूतिदेवत्या । नमो भूत्यै श्रिये या इदमग्निलक्षणं कर्म चकार कृतवती ॥ ६५ ॥

म० 'शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं त इति' (का० १७।२।४)। शिक्यं रुक्मपाशं इण्ड्वे आसन्दीं च नैर्ऋतीष्टकातः पश्चात्क्षिपति । यजमानदेवत्या त्रिष्टुप् । यजमानं प्रत्युच्यते । हे यजमान, निर्ऋतिर्देवी ते तव ग्रीवासु कण्ठावयवेषु यं पाशं शिक्यरूपमाबबन्ध आसमन्ताद्बद्धवती । कीदृशं पाशम् । अविचृत्यं 'चृती छेदने' अच्छेद्यं दृढं तं ग्रीवास्थं ते तव पाशमनेन मन्त्रेणाहं विष्यामि विमुञ्चामि । स्यतिरुपसृष्टो विमोचनार्थः । कस्मात् स्थानाद्विमुञ्चामि आयुषोऽग्नेर्मध्याद्गार्हपत्यचितिस्थानात् न संप्रति इदानीमेव पाशं दूरीकरोमीत्यर्थः । नकारः संप्रत्यर्थः । 'अग्निर्वा आयुस्तस्यैतन्मध्यं तच्चितो गार्हपत्यो भवत्यचित आहवनीय' (७।२।१।१५) इति श्रुतेरायुःशब्देनात्राग्निरुच्यते । अथ पाशविमोकानन्तरं प्रसूतः निर्ऋत्यानुज्ञातः सन् अग्निरूपमाश्रित्य हे यजमान, एतं पितुमन्नमद्धि भक्षय । 'उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति नमो भूत्या इति' (का० १७।२।४)। शिक्यादिनिरसनानन्तरमात्मनो नैर्ऋतीष्टकानां च मध्ये जलपूर्णं चमसं तूष्णीं निनीय ब्रह्मयजमानाध्वर्यवो नम इति मन्त्रेणोत्तिष्ठन्ति नैर्ऋतीसमीपादिति सूत्रार्थः । भूतिदेवत्यैकपदा विराट् । या देवी इदमग्निलक्षणं कर्म चकार कृतवती तस्यै भूत्यै श्रीरूपिण्यै देव्यै नमो नमस्कारोऽस्तु ॥ ६५ ॥

## षट्षष्टी।

नि॒वेश॑नः स॒ङ्गम॑नो॒ वसू॑नां॒ विश्वा॑ रू॒पाभि च॑ष्टे॒ शची॑भिः । दे॒व इ॑व सवि॒ता स॒त्यध॑र्मेन्द्रो॒ न त॑स्थौ सम॒रे प॑थी॒नाम् ॥ ६६ ॥

उ० शालाद्वार्योपस्थानम् । निवेशनः त्रिष्टुप् । पृथिवीलोकसंस्तुतोऽयमग्निर्योयमग्निर्निवेशनः । निविशन्तेऽस्मिन्निति निवेशनः । संगच्छन्तेऽस्मिन्निति संगमनः । केषाम् । वसूनां धनानाम् । यश्चायं विश्वरूपा । सर्वाणि रूपाणि आहवनीयदक्षिणाग्न्यतिप्रणीताग्नीध्रधिष्ण्यप्रभृतीनि । अभिचष्टे अभिपश्यति । शचीभिः स्वैः स्वैर्युक्तानि । कथं पश्यति । देव इव सविता सत्यधर्मा अवितथकर्मकारी । यश्च इन्द्रो न इन्द्र इव तस्थौ तस्थिवान् । समरे संग्रामे । पथीनां परिपन्थिभिः सह । तं वयं स्तुम इति वाक्यशेषः ॥ ६६ ॥

म० 'अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशन इति' (का० १७।२।६)। ब्रह्मयजमानाध्वर्यवो नैर्ऋत्युपधानदेशात् पश्चादपश्यन्तः शालां गच्छन्ति । अध्वर्युरेत्य शालाद्वारि भवं गार्हपत्याचितिरूपमग्निमुपतिष्ठते । विश्वावसुगन्धर्वदृष्टेन्द्रदेवत्या त्रिष्टुप् । अयमग्निः विश्वा विश्वानि रूपा रूपाणि अभिचष्टे पश्यति आहवनीयातिप्रणीताग्नीध्रधिष्ण्यादीनि सर्वाणि रूपाणि सर्वतः पश्यति । कीदृशानि रूपाणि । शचीभिः स्वैः स्वैः कर्मभिर्युक्तानीति शेषः । कीदृशोऽग्निः । निवेशनः निवेशयति यजमानं स्वगृहे स्थापयतीति निवेशनः । तथा वसूनां धनानां संगमनः संगमयति प्रापयतीति संगमनः प्रजापशुरूपधनप्रापकः । सत्यधर्मा सत्योऽवश्यंभाविफलोपेतो धर्मोऽग्निहोत्रादिलक्षणो यस्यासौ सत्यधर्मा । क इव । सविता देव इव । यथा सविता सूर्यो देवः सर्वाणि रूपाणि अभिचष्टे । यश्चाग्निः पथीनां । विभक्तिव्यत्ययः । पथिभिः परिपन्थिभिः सह समरे संग्रामे इन्द्रो न इन्द्रइव तस्थौ स्थितवान् यथेन्द्रो युद्धे तिष्ठति तद्वत् तं वयं स्तुम इति शेषः । पथिन्शब्दस्य परिपन्थिवाचकत्वाद्दस्य टेरिति (पा० ७।१।८८) टिलोपाभावे छान्दसे दीर्घे पथीनामिति रूपम् ॥ ६६ ॥

## सप्तषष्टी।

सीरा॑ युञ्जन्ति क॒वयो॑ यु॒गा वि त॑न्वते॒ पृथ॑क् । धीरा॑ दे॒वेषु॑ सुम्न॒या ॥ ६७ ॥

उ० सीरं युज्यमानमभिमन्त्रयते गायत्रीत्रिष्टुब्भ्याम् । सीरा युञ्जन्ति सीराणि लाङ्गलानि युञ्जन्ति कवयो मेधाविनः । युगा वितन्वते युगानि च वितन्वन्ति । पृथक् नाना । कथंभूताः । कवयः युञ्जन्ति । धीराः धीमन्तः अग्निक्षेत्रविदः । किमर्थं युञ्जन्ति । देवेषु सुम्नया । सुम्नमिति सुखनाम । द्वितीयार्थे तृतीया । देवेषु सुम्नं सुखं कर्तुमिति शेषः । सीरकविशब्दयोर्बहुवचनं पूजार्थम् । युगानि तु बहून्यपि यज्ञे भवन्ति ॥ ६७ ॥

म० 'दक्षिणामग्निश्रोणिमपरेण तिष्ठन् युज्यमानमभि-

मन्त्रयते सीरा युञ्जन्तीति' ( का० १७।२।११ )। चिते-र्दक्षिणश्रोणेः पश्चिमे तिष्ठन्नध्वर्युः प्रतिप्रस्थात्रोत्तरांसपूर्वे षड्भिर्वा दशभिश्चतुर्विंशत्या वा वृषैर्युज्यमानमौदुम्बरं हलं द्वाभ्यामभिमन्त्रयते । सीरदेवत्ये सोमपुत्रबुधदृष्टे द्वे गायत्रीत्रिष्टुभौ । धीराः धीमन्तोऽग्निक्षेत्रविदः कवयः कृषिकर्माभिज्ञाः सीरा सीराणि हलानि युञ्जन्ति वृषैर्योजयन्ति । युगा युगानि पृथक् नाना वितन्वते विस्तारयन्ति । किं कर्तुम् । देवेषु सुम्नया सुम्नमिति सुखनाम । ततो द्वितीयैकवचनस्य 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति यादेशः । सुम्नं सुखं कर्तुमिति शेषः । देवानां सुम्नं कर्तुं युञ्जन्तीत्यर्थः । चतुर्थ्या यादेशो वा देवानां सुम्नया युञ्जन्ति । सीरकविपदयोर्बहुत्वं पूजार्थम् । तयोरेकत्वाद्युगानि बहूनि सन्ति ॥ ६७ ॥

## अष्टषष्टी ।

युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्कमेयात् ॥ ६८ ॥

**उ०** युनक्त सीरा सीराणि युनक्त । वियुगा तनुध्वं वितनुध्वम् युगानि सम्यग्योक्तृप्रभृतिभिः । ततः कृते योनौ वाहनादिभिः वपत इह क्षेत्रे बीजं व्रीह्यादि । गिरा च वाचा च या ओषधीरित्यादिकया । चशब्दाच्चमसेन च वपत । तथाच वपत यथा श्रुष्टिः अन्नजातिः व्रीह्यादिका सभराः सह भरसा फलव्रातेन वर्तत इति सभराः । सान्तोयं स्त्रीलिङ्गः शब्दः । आनामितफलेत्यर्थः । असत् भवेत् । नोऽस्माकं यथा नेदीयः अन्तिकतमम् । इच्छब्दोऽनर्थकः । सृण्यः दात्रान् पक्कम् औषधम् आ इयात् आगच्छेत् । एतदुक्तं भवति अतिघनत्वादोषधीनां निकटतमं दात्रं भूमेश्च दात्रपूरं पक्कमोषधमागच्छेत् यथा तथा वपतेति ॥ ६८ ॥

**म०** हे कर्षकाः, सीराः सीराणि हलानि युनक्त युङ्क्त योजयत । 'तप्तनप्तनथनाश्च' ( पा० ७।१।४५ ) इति थस्य तबादेशे श्नसोरल्लोपाभावे युनक्तेति रूपम् । युगा युगानि वितनुध्वं शम्यायोक्त्रादिभिर्विस्तारयत । ततः कृते कर्षणेन संस्कृते इह अस्मिन्योनौ स्थाने बीजं व्रीह्यादिकं यूयं वपत । कया । गिरा या ओषधीरित्यादिकया ( क० ७५ ) वेदमन्त्रवाचा चकाराच्चमसेन च । किंच 'वाग्वै गीरन्नꣳ श्रुष्टिः' ( ७।२।२।५ ) इति श्रुतेः श्रुष्टिः अन्नजातिर्व्रीह्यादिका सभरा असत् भरणं भरः पुष्टिः । भृञोऽसुन्प्रत्ययः । भरसा फलपुष्ट्या सह वर्तमाना सभराः पुष्टा अस्तु । 'इतश्च लोपः परस्मैपदेषु' ( पा० ३।४।९७ ) इतीकारलोपेऽडागमेऽसदिति रूपम् । पक्कं धान्यं नेदीय इत् अतिशयेनान्तिकं नेदीयः 'अन्तिकबाढयोर्नेदसाधौ' ( पा० ५।३।६३ ) इत्यन्तिकस्येयसुनि प्रत्यये नेदादेशः । इत् एवार्थे । नेदीय इत् अन्तिकतममेवात्यल्पकालमेव पक्कं धान्यं सृण्यः । सृणिशब्दोऽत्र दात्रार्थः । सृण्या लवनसाधनेन दात्रेण लूनमिति शेषः । दात्रेण छिन्नं सत् नः अस्मान्प्रति आ इयात् आगच्छतु अल्पकालेन पक्कमस्मद्गृहमागच्छत्वित्यर्थः ॥ ६८ ॥

## एकोनसप्ततितमी ।

शुनꣳ सुफाला विकृषन्तु भूमिꣳ शुनं कीनाशा अभियन्तु वाहैः । शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे ॥ ६९ ॥

**उ०** चतस्रः सीताः कृषति चतसृभिर्ऋग्भिः । तत्र द्वे त्रिष्टुभौ तृतीया पङ्क्तिः चतुर्थ्यनुष्टुप् । शुनं सुफालाः । शुनमिति सुखनाम । सुखेन शोभनफालाः लाङ्गलाग्रस्थिताः विकृषन्तु विविधं कृषन्तु विलिखन्तु भूमिम् । सुखेन च कीनाशाः हलिनः अभिगच्छन्तु वाहैः अनडुद्भिः सहिताः । अथैवं कृष्टे सति शुनासीरा । शुनो वायुः । शु इत्यव्यक्तानुकरणम् । 'शु एत्यन्तरिक्षे सीर आदित्यः सरणात्' । वाय्वादित्यौ हविषा उदकेन । तोशतिर्वधकर्मा । निघ्नन्तौ भूमिम् सुपिप्पलाः । पिप्पलमिह फलमुच्यते । ओषधीः कर्तन कुरुतम् । द्वयोर्बहुवचनं छान्दसम् । अस्मे अस्माकम् ॥ ६९ ॥

**म०** 'आत्मनि कृषत्यनुपरिश्रिच्छुनꣳ सु फाला इति प्रत्यृचम्' ( का० १७।२।१२ )। चितिस्थाने परिश्रित्समीपे चतुर्ऋग्भिर्दक्षिणपश्चिमोत्तरपूर्वेषु चतस्रः सीताः कृषति । कुमारहारितदृष्टाः सीतादेवत्याश्चतस्रः । द्वे त्रिष्टुभौ तृतीया पङ्क्तिः चतुर्थ्यनुष्टुप् । सु शोभनाः फालाः सीराग्रस्था लोहविशेषाः शुनं सुखं यथा तथा भूमिं विकृषन्तु विलिखन्तु । शुनमिति सुखनाम । 'फालः सीरोपकरणोत्प्लवयोः फालमंशुके' इति कोशः । कीनाशा हलिनः शुनं सुखेन वाहैः वृषभैः सह अभियन्तु अभिगच्छन्तु । हे शुनासीरा शुनासीरौ हे वाय्वादित्यौ, अस्मे अस्माकमोषधीः व्रीह्यादिकाः सुपिप्पलाः शोभनफलाः युवां कर्तन कुरुत । कुरुतमिति वचनव्यत्ययः । थस्य तनबादेशे शपि लुप्ते गुणे कृते कर्तनेति रूपम् । 'कीनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनोः' इति कोशः । शुनश्च सीरश्च शुनासीरौ 'देवताद्वन्द्वे च' ( पा० ६।३।२६ ) इति पूर्वपददीर्घः । शुनो वायुः सीर आदित्यः । 'शुनो वायुः शु इत्यन्तरिक्षे सीर आदित्यः सरणात्' ( निरु० ९।४० ) इति यास्कोक्तेः । कीदृशौ शुनासीरौ । हविषा जलेन तोशमाना । तोशतिर्वधकर्मा । भूमिं घ्नन्तौ जलेन भूमिं सिञ्चन्तौ सन्तावोषधीः सफलाः कुरुतमिति भावः । पिप्पलं फलम् ॥ ६९ ॥

## सप्ततितमी ।

घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः । ऊर्जस्वती पयसा पिन्वमानास्मान्सीते पयसाभ्याववृत्स्व ॥ ७० ॥

**उ०** घृतेन सीता । सीता समज्यताम् अनुमता इति

परोक्षाभिधायीनि त्रीणि पदानि । सीते अभ्याववृत्स्वेति प्रत्यक्षाभिधायिनी द्वे पदे एकस्मिन्मन्त्रवाक्ये। तत्र 'विरोधिसमवाये तु भूयसां स्याद्धर्मित्वम्' इति न्यायात् । 'प्रथमं वा नियम्येत कारणाव्यतिक्रमः स्यात्' इति च न्यायात् । तस्मादुपक्रमप्रभृति व्याख्यायते । घृतेनोदकेन मधुना मधूदकेन समज्यतां संसिच्यताम् । विश्वैः सर्वैर्देवैः अनुमता अभ्यनुज्ञाता मरुद्भिश्च । मरुतो ह वै वर्षास्वीशते । एवमक्षारोदकेन सिक्ता अभ्यनुज्ञाता च मरुदादिभिः । ऊर्जस्वती अन्नवती । पयसा पयोदधिघृतादिभिः पिन्वमना पूरयन्ती सर्वा दिशः । अस्मान्सीते । सीता इति विभक्तिव्यत्ययः परोक्षत्वात् । अस्मान्प्रति सीता अभ्याववृत्स्व स्वयमभ्यावर्ततामिति पुरुषव्यत्ययः ॥ ७० ॥

**म०** सीता लाङ्गलपद्धतिर्मधुना मधुरेण घृतेनोदकेन समज्यतां संसिच्यतां सिक्ता भवतु । कीदृशी सीता । विश्वैर्देवैर्मरुद्भिश्चानुमता अनुज्ञाता अङ्गीकृता वा । एवं परोक्षमुक्त्वा प्रत्यक्षमाह हे सीते, ऊर्जस्वती अन्नवती सा त्वं पयसा पयोदधिघृतादिभिः पिन्वमाना दिशः पूरयन्ती सती पयसा दुग्धादिभिः सह अभ्याववृत्स्व अस्मदभिमुखमावृत्ता भव । अस्माकमनुकूला भवेत्यर्थः । वृतेः 'बहुलं छन्दसि' ( पा० २ । ४ । ७६ ) इति शपः श्लौ सति लोटि ववृत्स्वेति रूपम् ॥७०॥

## एकसप्ततितमी ।

लाङ्गलं पवीरवत्सुशेवꣳ सोमपित्सरु । तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणं ७१

**उ०** लाङ्गलं पवीरवत् । पविर्धारोच्यते सोऽस्यास्तीति पवीरं फालः रो मत्वर्थे । तदस्य लाङ्गलस्यास्तीति पवीरवल्लाङ्गलं फालसंयुक्तमित्यर्थः । श्रुतिस्तु लक्षणया व्याचष्टे लाङ्गलं रयिमदिति । सुशेवं शेवमिति सुखनाम । शोभनंसुखकरम् । सोमपित्सरु सोमं पिबतीति सोमपाः यजमानः तस्मिन् सोमपि यजमाने त्सरणशीलः त्सरुरुच्यते भूमेः खननशीलम् । यद्वा त्सरुर्वृतं सोमपि यजमाने पापं त्सरयति नाशयतीति सोमपित्सरु । यद्वा । सोमः पीयते येन चमसेन स सोमपिः तस्य सोमपेः त्सरु वृतं लाङ्गलम् । नहि लाङ्गलस्य कर्मान्तरेण सोमचमसाः स्युः । यदित्थंभूतं लाङ्गलं तदुद्वपति उद्गमयति । गाम् अविं प्रफर्व्यं च पीवरीम् । फर्वतिर्गतिकर्मा । प्रकर्षेण फर्व्या गम्या प्रफर्वी प्रथमयुवतिः पीवरी उच्छूनस्तनकपोलानामुद्वपति प्रस्थानाद्रथवाहणम् । प्रस्थानसंयुक्तमुत्कृष्टजवोपेतं च रथवाहनमश्वम् उद्वपतीत्यनुषज्यते ॥ ७१ ॥

**म०** तत् पूर्वोक्तं लाङ्गलं हलं गां धेनुमविं छागविशेषं रथवाहनं रथवाहकमश्वादिकं च उद्वपति उद्गमयति प्रापयति । रथं वाहयति प्रापयतीति रथवाहनम्। कृषिसमृद्धावेव गवादिकं यजमानस्य सुलभमिति भावः । अतएव लाङ्गलं गवादिप्रापकम् । कीदृशं लाङ्गलम् पवीरवत् । पविर्धारास्यास्तीति पवीरं फालः रो मत्वर्थः । पवीरमस्यास्तीति पवीरवत् फालसंयुक्तम् । तथा सुशेवम् । शेवमिति सुखनाम शोभनसुखकरं शोभनं शेवं यस्मात् । तथा सोमपित्सरु सोमं पिबतीति सोमपा यजमानः तस्मिन् सोमपि यजमाननिमित्तं त्सरति भूमिं खनतीति सोमपित्सरु । यद्वा सोमपि यजमाने त्सरति नाशयति पापमिति सोमपित्सरु । 'त्सर छद्मगतौ' इति धातोरुप्रत्ययः शीलार्थः । 'हलदन्तात्सप्तम्या' ( पा० ६ । ३ । ९ ) इति विभक्तेरलुक् 'आतो धातोः' ( पा० ६ । ४ । १४० ) इति आलोपे हलन्तत्वात् । यद्वा सोमः पीयतेऽनेनेति सोमपिश्चमसः तस्य त्सरु निष्पादकम् । नहि लाङ्गलकर्म विना सोमचमसाः स्युः । ईदृशं लाङ्गलं गवादि गमयतीत्यर्थः । कीदृशीं गामविं च । प्रफर्व्यं फर्वतिर्गतिकर्मा । प्रकर्षेण फर्वति गच्छति प्रफर्वी तां प्रफर्व्यं 'वा छन्दसि' ( पा० ६ । १ । १०६ ) इत्यमि पूर्वरूपभावे यणादेशः । युवतित्वादतिवेगवतीमित्यर्थः । तथा पीवरीं स्थूलां पुष्टाङ्गीम् । कीदृशं रथवाहनम् । प्रस्थावत् प्रस्था प्रस्थानं गतिरस्यास्तीति प्रस्थावत्प्रयाणसमर्थमुत्कृष्टजवोपेतमित्यर्थः ॥ ७१ ॥

## द्विसप्ततितमी ।

कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥ ७२ ॥

**उ०** कामं कामदुघे । सीतोच्यते । हे कामदुघे कामानां प्रपूरणि, कामं धुक्ष्व पूरय । केषामित्यत आह । मित्राय वरुणाय च । इन्द्राय अश्विभ्याम् । पूष्णे प्रजाभ्यः ओषधीभ्यः । चकारः समुच्चयार्थः सर्वत्रानुषज्यते ॥ ७२ ॥

**म०** कामान्मनोरथान्दुग्धे पूरयति कामदुघा । 'दुहः कब्घश्च' ( पा० ३ । २ । ७० ) इति कप्प्रत्ययो घान्तादेशश्च तस्याः संबुद्धौ हे कामदुघे लाङ्गलपद्धते, मित्रादिपूषान्तदेवानामर्थे प्रजार्थमोषधिनिष्पत्त्यर्थं च काममपेक्षितं भोगं धुक्ष्व संपादय ॥ ७२ ॥

## त्रिसप्ततितमी ।

विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य ज्योतिरापाम ॥ ७३ ॥

**उ०** अनडुहो विमुञ्चति । विमुच्यध्वम् । गायत्री । एवं जगतः स्थितिनिमित्तभूतां कृषिमभिनिर्वर्त्य कृतकृत्याः सन्तो विमुच्यध्वं युगात् । हे अघ्न्याः अहन्तव्याः । देवयानाः देवकर्मैककारिणः । यद्वा देवयानमार्गनिमित्तभूता अगन्म गतवन्तः अशनायोऽन्वा तमसः पारमस्य । तदुक्तम् 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति । तदेव स्पष्टयति । ज्योतिः आपाम प्राप्तवन्तः । परमात्मलक्षणं यज्ञलक्षणं वा देवलक्षणं वा ॥ ७३ ॥

म० 'अनडुहो विमुच्य विमुच्यध्वमिति पञ्चवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति' ( का० १७।२।२०-२१ ) । वृषान्हलाद्वियोज्य पञ्चवदिलैशानीं दिशं प्रति विसृजत्यध्वर्युः यजमानश्च सुल्यायां ससीरांस्तानध्वर्यवे ददातीति सूत्रार्थः । विमोचने मन्त्रः वृषदेवत्यार्षी गायत्री पादानियमात् । हे देवयानाः, देवतार्थकर्मकारिणः, देवार्थं यानं कृष्याद्युद्यमो येषां ते । यद्वा देवयानमार्गहेतुभूताः कर्मद्वारा तत्प्रापकाः । हे अघ्न्या अहन्तव्या गावो बलीवर्दाः, यूयं विमुच्यध्वम् । मुचेः कर्मकर्तरि यक् लोटि जगत्स्थितिहेतुं कृषिमेवं निष्पाद्य कृतकृत्याः सन्तो युगात्पृथग्भवतेत्यर्थः । अस्य तमसः क्षुत्पिपासाद्युद्भूतस्य दुःखस्य पारं समाप्तिं वयमगन्म प्राप्ताः । गच्छतेर्लङि शपि लुते रूपम् । तदुक्तं 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीति' ( बृह० ३।२।१।१ ) । दुःखपारमेव स्पष्टयति । वयं ज्योतिरापाम परमात्मलक्षणं यज्ञरूपं वा तेजः प्राप्ताः । आप्नोतेर्लुङि 'पुषादि-' ( पा० ३।१।५५ ) इत्यादिना अङ्प्रत्ययः ॥ ७३ ॥

## चतुःसप्ततितमी ।

स॒जूर॒ब्दो अय॑वोभिः स॒जूरु॒षा अरु॑णीभिः स॒जोष॑साव॒श्विना॒ दꣳसो॑भिः स॒जूः सूर॒ एत॑शेन स॒जूर्वै॑श्वान॒र इड॑या घृ॒तेन॒ स्वाहा॑ ॥ ७४ ॥

उ० कुशस्तम्बे जुहोति । सजूरब्दः यजुरेतत् । समानजोषणः । अब्दः संवत्सरः । स हि अपो ददाति । अयवोभिः यवाश्च अयवाश्च अर्धमासा मासाश्चोच्यन्ते । सजूः उषा अरुणीभिः । अरुणवर्णाभिर्गोभिः किरणैः । सजोषसौ अश्विना अश्विनौ । दंसोभिः कर्मभिः सजूः सूरः एतशेन अश्वेन । सजूर्वैश्वानर इडया । आग्नेयी पृथिवी इडा पृथिवीस्थाना या स्त्री तस्या अत्र ग्रहणं युक्तम् । गौर्वागत्वं च इडाशब्देनोच्यते । घृतेन हविषा स्वाहा सुहुतमस्तु ॥ ७४ ॥

म० 'पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति' (का० १७।३।३ ) । तदानीं संस्कृतेन जुह्वा पञ्चगृहीतेनाज्येन कृष्टात्ममध्यस्थापितकुशस्तम्बे स्रुचमूर्ध्वां कुर्वञ्जुहोति लिङ्गोक्तदेवतं यजुर्ब्राह्म्यनुष्टुप्छन्दस्कम् । अब्दः अपो जलानि ददातीत्यब्दः संवत्सरः उषाः प्रातरधिष्ठात्री देवता अश्विना अश्विनौ देवभिषजौ सूरः सूर्यः वैश्वानरः अग्निश्च एभ्योऽब्दादिदेवेभ्यो घृतेन स्वाहा इदं घृतं तेभ्यः सुहुतमस्तु । तेषां प्रत्येकं विशेषणानि । कीदृशोऽब्दः । अयवोभिः सजूः यवाश्चायवाश्चार्धमासा मासाश्चोच्यन्ते जोषणं जुट् प्रीतिः सह जुषा वर्तते समाना जुट् वा यस्य सजूः । जुषतेः संपदादित्वाद्भावे क्विप् । मासार्धमासैः प्रीतियुक्त इत्यर्थः । कीदृग्युषाः । अरुणीभिः अरुणवर्णाभिः गोभिः सजूः प्रीतियुता । कीदृशावश्विनौ । दंसोभिः कर्मभिश्चिकित्सादिभिः सजोषसौ प्रीतौ । कीदृशः सूरः । एतशेनाश्वेन सजूः तुष्टः । कीदृशोऽग्निः । इडया पृथिव्या सजूः प्रीतः तदधिष्ठातृत्वात् । आग्नेयी हि पृथिवी इडाशब्देन गौर्वागत्वं चोच्यते ॥ ७४ ॥

## पञ्चसप्ततितमी ।

या ओष॑धीः॒ पूर्वा॑ जा॒ता दे॒वेभ्य॑स्त्रियु॒गं पु॒रा । मनै॒ नु ब॒भ्रूणा॑म॒हꣳ श॒तं धामा॑नि स॒प्त च॑ ॥ ७५ ॥

उ० क्षेत्रे सर्वौषधं वपति । सप्तविंशतिरनुष्टुभः । ओषधीस्तुतिः पञ्चदश तु वपने नियुक्ताः । या ओषधीः । या ओषधयः । पूर्वा जाताः प्रथमजाताः । अन्याभ्य ओषधीभ्यः भविष्यत्कालसंबन्धिनीभ्यः देवेभ्यः ऋतुभ्यः । 'ऋतवो वै देवाः' इति श्रुतिः । ऋतुभ्योऽर्थाय । ऋतव ओषधिसंबद्धाः कर्तव्या इति । त्रियुगं पुरा त्रीणि युगानि समाहृतानि त्रियुगं त्रिकालमित्यर्थः । वसन्ते प्रावृषि शरदि पुरा पूर्वेषु वसन्तादिषु । पूर्वस्मिन्हि संवत्सरे ओषधयः अग्निक्षेत्रे उप्यन्ते । किंनिमित्तमित्यत आह । मनै नु मन्ये जानामि । तासां बभ्रूणां बभ्रुवर्णानाम् बभ्रू रासभः । अहं शतं धामानि । धामशब्दः स्थानपर्यायः । संवत्सरोपलक्षितमेकैकं स्थानं यदिदं शतायुः शतार्थः शतवीर्यः पुरुषः एतानि शतंधामानि सप्तच 'य एवेमे शीर्षन् प्राणास्तानेतदाह' ॥ ७५ ॥

म० 'या ओषधीरिति तृचैर्वपत्युदपात्रवत्' ( का० १७।३।८ ) । पञ्चभिस्तृचैश्चक्रमसेन सर्वौषधं वपति उदपात्रवदिति चतुश्चतुःसीतासु यथाक्रष्टम् । अथर्वपुत्रभिषग्दृष्टा ओषधिदेवत्या यो अस्मानभिदासतीत्यन्ताः ( १०१ ) सप्तविंशतिरनुष्टुभः मुञ्चन्तु मेत्याद्या ( ९० ) द्वादश बन्धुदृष्टाः कुत्रापि कर्मण्यनियुक्ताः । पादानां न्यूनाधिक्ये व्यूहाधिक्ये कार्ये । युगशब्दः कालवाची । त्रयाणां युगानां समाहारस्त्रियुगं त्रिकालं वसन्ते प्रावृषि शरदि च । पुरा सृष्ट्यादौ या ओषधीः ओषधयः पूर्वाः प्रथमा भाविनीभ्यः ओषधीभ्यः आद्याः जाता उत्पन्नाः । किमर्थं देवेभ्यः ऋतुभ्यः । 'ऋतवो वै देवाः' ( ७।२।४।२६ ) इति श्रुतेः ऋतव ओषधियुताः कर्तव्या एतदर्थम् । बभ्रूणां जगज्जनभरणसमर्थानां पाकेन पिङ्गलवर्णानां वा तासामोषधीनां शतं सप्त च धामानि अहं मनै नु मन्य एव जाने । मन्यतेर्लिटि आत्मनेपदे उत्तमैकवचने शपि 'एत ऐ' ( पा० ३।४।९३ ) इति रूपम् । संवत्सरोपलक्षितमेकैकं स्थानं 'शतायुर्वै पुरुषः' इति श्रुतेः शतं धामानि वर्षात्मकानि शिरःस्थानि मुखद्वङ्नासाख्यानि सप्त च 'य एवेमे सप्त शीर्षन् प्राणास्तानेतदाह' ( ... २६ ) इति श्रुतेः । नराणां शतवर्षपर्यन्तम... भिस्तर्प्यमाणत्वादोषधीनां तत्स्थानत्वम् । ...

स्थानभेदान् जातिभेदानसंख्यान् विशेषꣳ स्थ निष्कृतीः । नारण्यांश्च व्रीह्यादीन्नीवारादींश्चाहं जुषंति निष्कृथ ॥८३॥

## षट्सप्ततितमी ।

शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ ७६ ॥

**उ०** शतं वः हे ओषधयः अश्वमातरः, शतं वः युष्माकं धामानि जन्मानि । सहस्रमुत वो रुहः अपिच सहस्रं युष्माकं विरोहणानि सन्ति । अधा शतक्रत्वः । अथैवं सति हे शतक्रत्वः बहुकर्माणः । यूयं प्रजापतिं इमं वा यजमानं मे मम संबन्धिनम् अगदम् गदो व्याधिः अव्याधिं कृत कुरुत ॥ ७६ ॥

**म०** हे अम्ब, मातृस्थाना ओषधयः वो युष्माकं धामानि जातिभेदाः क्षेत्राणि वा जन्मानि वा शतं सन्ति । उत अपिच वो युष्माकं रुहः रोहन्तीति रुहः प्ररोहा अङ्कुराः सहस्रं सन्ति । शतसहस्रपदाभ्यामपरिमितत्वमुच्यते । अध अथ 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति संहितायां दीर्घः । शतं क्रत्वः कर्माणि याभिस्ताः शतक्रतवः 'जसि च' ( पा० ७ । ३ । १०९ ) प्राप्तगुणस्याभावे छान्दसो यणादेशः । अथैवं सति हे शतक्रत्वो, यूयं मे मम इमं यजमानमगदं क्षुत्पिपासादिषड्डूर्मिरोगरहितं कृत कुरुत । करोतेः शपो लुक् ॥ ७६ ॥

## सप्तसप्ततितमी ।

ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ७७॥

**उ०** ओषधीः प्रति । हे ओषधयः, प्रतिमोदध्वं हृष्यत । पुष्पवतीः प्रसूवरीः पुष्पवत्यः प्रसववत्यश्च सत्यः ततोऽनन्तरं अश्वा इव संग्राम्याः सजित्वरीः सह जयनशीला भूत्वा वीरुधः विविधं व्याधिं रुन्धन्तीति वीरुधः । पारयिष्णवः पारणशीलाश्च भवत अस्माकमिति शेषः ॥ ७७ ॥

**म०** हे ओषधीः हे ओषधयः, यूयं प्रतिमोदध्वं हृष्टा भवत । कीदृश्यो यूयम् । पुष्पवतीः पुष्पैरुपेताः । प्रसूवरीः फलप्रसववत्यः प्रसुवते जनयन्ति फलानीति प्रसूवरीः 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति सूतेर्वनिपि प्रत्यये 'वनो र च' ( पा० ४ । १ । ७ ) इति ङीप् रान्तादेशश्च । अश्वा इव सजित्वरीः सह जयन्ति तच्छीलाः 'इण्नशजि' ( पा० ३ । २ । १६३ ) इति क्वरप् 'टिड्ढाणञ्' ( पा० ४ । १ । १५ ) इति ङीप् । यथाश्वाः संग्रामे जयरथवाहनम् तद्वत्फलपर्यन्तत्वाज्जयशीलाः । 'वा छन्दसि' ( पा० ६ । १ । १०६ ) इति सर्वत्र पूर्वसवर्णदीर्घः । वीरुधः विविधं रुन्धन्ति व्याधिमिति वीरुधः 'नहिवृतिवृषि–' ( पा० ६ । ३ । ११६ ) इत्यादिना उपसर्गदीर्घः । यद्वा विरथं वाहयति प्रापयतीति वीरुधः । विरुहः क्वौ धान्तादेशो उपसर्गदीर्घश्च । पारयिष्णवः 'पार तीर कर्मसमाप्तौ' चुरादिरदन्तो धातुः । पारयन्ति फलपाकान्तत्वं परित्यज्य बहुकालं कर्मपरायणशीलाः पारयिष्णवः 'णेश्छन्दसि' (पा० ३ । २ । १३७) इतीष्णुच्प्रत्ययः ॥७७॥

## अष्टसप्ततितमी ।

ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । सनेयमश्वं गां वास आत्मानं तव पूरुष ॥ ७८ ॥

**उ०** ओषधीरिति । हे ओषधयः, या यूयम् इति इत्थमशनदानव्याध्यपगमादिकुर्वन्त्यो मातरः जगन्निर्मात्र्यः ततो देवीः वः युष्मान् हे देव्यः, उपब्रुवे उपसङ्गम्य ब्रुवे ब्रवीमि प्रार्थयामि । सनेयं संभजेयम् अश्वं गां वासः आत्मानं च सनेयं तव यज्ञपुरुष प्रजापतिरूपिणम् ॥ ७८ ॥

**म०** हे ओषधीः ओषधयः, हे मातरः जगन्निर्मात्र्यः, भोजनदानव्याध्यपगमादिभिरुपकर्त्र्यः हे देवीः देव्यः, वो युष्मान् प्रति इति अमुना वक्ष्यमाणविधिना तत् प्रसिद्धं मदभीष्टमुपब्रुवे वच्मि प्रार्थयामि । इति किम् तदाह । हे पुरुष यज्ञपुरुष, तव प्रसादादश्वं हयं गां धेनुं वासो वस्त्रमात्मानं शरीरमहं सनेयं संभजेयम् । 'वन षण संभक्तौ' लिङ् । यज्ञपुरुषं प्रति मया यदश्वादिकं प्रार्थ्यते तदोषधिभिरनुमन्तव्यमित्योषधिप्रार्थनमिति भावः ॥ ७८ ॥

## एकोनाशीतितमी ।

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ७९ ॥

**उ०** अश्वत्थे वः । चतुर्थः पादोऽत्र प्रथमं व्याख्यायते । यत्सनवथ पूरुषम् । यदा यूयं सनवथ संसेवध्वम् पूरुषं यजमानम् । अथ अश्वत्थे वः युष्माकं निषदनमवस्थानम् । पर्णे वः पलाशपर्णमय्यां जुह्वाम् वः युष्माकं वसतिः स्थितिः होमार्थमध्वर्युणा कृता । अश्वत्थपर्णयोस्तद्धितलोपश्छान्दसः । अथापि तद्धितेन कृत्स्नवन्निगमा भवन्तीति । गोभाजइत्किलासथ । इच्छब्दः पादपूरणः । किलेति विद्याप्रकर्षे । ततोऽग्नौ हुताः सत्यः । गोभाजः गोशब्देनादित्योऽभिधीयते । आदित्यभाजः यूयं किल भवथ । तदुक्तम् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । अदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति । यद्वा अश्वत्थे फलिते सर्वा ओषधयः फलवत्यो भवन्ति । पर्णे फलिते कोद्रवादयः फलिता भवन्ति । गोभाजः पृथिवीभाजश्च उप्ताः सत्यः किल भवथ । तदुक्तम् । यदा पूरुषः संसेवध्वं भाजनादिभिरुपकारैः एवं दुरवधार्यं गतयो यूयमित्यभिप्रायः ॥ ७९ ॥

**म०** हे ओषधयः, वो युष्माकमश्वत्थे आश्वथ्यामुपभृति स्रुचि निषदनं स्थानं भवति हविषां तत्र स्थापनात् । किंच वो युष्माकं पर्णे पलाशे पर्णमय्यां जुह्वां वसतिः स्थितिः कृता । अध्वर्युणा होमार्थं जुह्वां स्थापनात् अश्वत्थपर्णशब्दाभ्यां तद्धि-

तप्रत्ययलोपश्छान्दसः। 'अथापि तद्धितेन कृत्स्नवन्निगमा भवन्ति' (नि० २।५) इति यास्कोक्तेः। हविर्भूता ओषधयः प्रार्थ्यन्ते। किलेति विद्याप्रकर्षे। इत् एवार्थे। हे हविर्भूता ओषधयः, यूयमग्नौ हुताः सत्यो गोभाजः असथ भवथ। गामादित्यं भजन्तीति गोभाजः। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति श्रुतेः। यद्वा अश्वत्थे वो निषदनमश्वत्थे फलिते सर्वौषधीनां फलवत्त्वात् पर्णे वो वसतिः कृता पलाशे च फलिते व्रीह्यादीनां फलितत्वात्। अतएव यूयमुप्ताः सत्यो गोभाजो भूमिभाज एव किलासथ भवथ। 'गौर्नादित्ये बलीवर्दे मखभेदर्षिभेदयोः। स्त्रियां स्यादिशि भारत्यां भूमौ च सुरभावपि' इति कोशात्। किमर्थमिदमित्यत आह। यत् यस्मात्कारणात् पुरुषं यजमानं यूयं सनवथ सेवध्वमन्नदानेन पोषयथ तस्मादश्वत्थादिस्थानमित्यर्थः। अश्वत्थे पलाशे च वः स्थानम्। देवाधिष्ठानादश्वत्थो लोके नतिप्रदक्षिणादिना पूज्यते पलाशश्चेध्मादिरूपेण। एवमश्वत्थादिरूपेण यूयं भूभाजः स्थ शेषं पूर्ववत्। अस्तेः शपि असथेति रूपं लटि। सनवतिः परिचर्यार्थः॥ ७९॥

## अशीतितमी।

यत्रौषधीः समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः॥ ८०॥

**उ०** यत्रौषधीः। यत्र यस्मिन्पुरुषे भैषज्यकर्तरि हे ओषधयः, यूयं समग्मत समागच्छत व्याधिं जेतुम्। कथमिव। राजानः समिताविव यथा राजानः समितौ संग्रामे शत्रुं जेतुं समागच्छन्ति। किं तत्रेत्यत आह। विप्रः ब्राह्मणः स उच्यते भिषक् वैद्यः। रक्षोहा च अमीवचातनश्च। अमीवा व्याधिः। चातयतिर्नाशने। व्याधिनाशनः॥८०

**म०** हे ओषधीः ओषधयः, यत्र विप्रे भैषज्यकर्तरि ब्राह्मणे यूयं समग्मत संगच्छत रोगं जेतुम्। के इव राजान इव। यथा राजानः समितौ युद्धे शत्रून् जेतुं समागच्छन्ति। गमेर्लुङि मध्यमबहुवचने 'पुषादि–' (पा० ३।१।५५) इत्यङि 'गमहन–' (पा० ६।४।९८) इत्युपधालोपे छान्दसेऽग्मतेति रूपम्। स भवदाश्रितो विप्रः भिषग्वैद्य उच्यते कथ्यते। कीदृशो विप्रः। रक्षोहा रक्षांसि हन्तीति रक्षोघ्नं पुरोडाशं कृत्वा रक्षसां हन्ता रक्षःकृतोपद्रवनाशकः। तथा अमीवचातनः अमीवान् रोगान् चातयति नाशयति अमीवचातनः ओषधदानै रोगनाशकः। चातयतिर्नाशनार्थः धातूनामनेकार्थत्वात्॥ ८०॥

## एकाशीतितमी।

अश्वावतीᳫ सोमावतीमूर्जयन्तीमुदोजसम्। आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये॥ ८१॥

**उ०** अश्वावतीम्। सर्वा ओषधीरिति बहुवचनोपदेशाद्दिहापि बहुवचनं भवति। या ओषधयश्च अश्ववत्यः अश्वसंपादिन्यः सोमवत्यः सोमयागसंपादिन्यः ऊर्जयन्त्यः। 'ऊर्ज बलप्राणनयोः' बलसंपादिन्यः। उदोजसः उद्गतमोजो यासां उदोजसः। ताः सर्वा ओषधीः अहम् आअवित्सि जानामि। विदित्वा च अस्मै अरिष्टतातये। रिषतिर्विनाशार्थः। न रिष्टमरिष्टमविनाशः तस्य तननमरिष्टतातिः अस्मै अरिष्टविनाशतननाय भैषज्यं करोमीति शेषः॥ ८१॥

**म०** अस्मै अस्य यजमानस्य अरिष्टतातये रिषतिर्विनाशार्थः रेषणं रिष्टम् भावे क्तः न रिष्टमरिष्टमनाशो मङ्गलमित्यर्थः। तस्य कारणमरिष्टतातिः। 'शिवशमरिष्टस्य करे' (पा० ४।४।१४३।) इति तातिप्रत्ययः। यद्वा तननं तातिर्विस्तारः तस्मै यजमानस्य शुभकरणाय सर्वा ओषधीरहमा अवित्सि समन्ताद्वेद्मि जानामि। वित्तेर्लुङि आत्मनेपदे उत्तमैकवचने इडभावे अवित्सीति रूपम्। अस्मै यजमानार्थं वेद्मीति वा। तद्विशेषणम् अरिष्टं शुभं करोति तनोति वारिष्टतातिस्तस्मै। सर्वाः का इत्यत आह। अश्ववतीमश्वा अस्यां सन्तीत्यश्ववती ताम् अश्वसंपादिनीं कांचित् ओषधिसमृद्धौ सत्यां धनद्वारेणाश्वलाभात्। अन्यां सोमवतीं सोमयागोऽस्यामस्तीति सोमवती तां सोमसंपादिनीं 'मन्त्रे सोमाश्व–' (पा० ६।३।१३१) इत्यादिना श्वसोमयोर्दीर्घः। ऊर्जयन्तीम् 'ऊर्ज बलप्राणनयोः' बलसंपादिनीं जीवयन्तीं वा ऊर्जयतीति। उदोजसमुद्गतमोजो यस्याः सा उदोजास्तां तेजःसंपादिनीम्। एवं नानाकार्यकारिणीः सर्वा ओषधीः जानामीत्यर्थः। यद्वा अश्वावतीमित्यादीनि बहुवचनान्तानि कार्याणि ओषधीरित्यस्य विशेषणत्वात्॥ ८१॥

## द्व्यशीतितमी।

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।
धनᳫ सनिष्यन्तीनामात्मानं तव पूरुष॥ ८२॥

**उ०** उच्छुष्माः। उच्छब्द ईरत इत्यनेन संबध्यते। उदीरते उद्गच्छन्ति प्रकाशीभवन्ति। शुष्माः वीर्याणि ओषधीनां संबन्धीनि। कथमिव। गावः गोष्ठादिव निष्क्रान्ताः। किं कुर्वतीनाम्। धनं सनिष्यन्तीनां संभजमानानां यजमानार्थं आत्मानं च संभजमानानाम् तव यज्ञ पूरुष॥ ८२॥

**म०** हे पुरुष यज्ञपुरुष, तवात्मानं त्वदीयं शरीरं प्रति धनं सनिष्यन्तीनाम् 'षणु दाने' हवीरूपं धनं दातुमिच्छन्तीनामोषधीनां शुष्मा बलानि सामर्थ्यानि उदीरते उद्गच्छन्ति प्रकाशीभवन्ति। गावो गोष्ठादिव यथा गोष्ठात् स्वस्थानाद् गावोऽरण्यदेशं प्रति उद्गच्छन्ति तद्वत्। ईर कम्पे अदादिः॥ ८२॥

## त्र्यशीतितमी।

इष्कृतिर्नाम वो माताथो यूयᳫ स्थ निष्कृतीः।
सीराः पतत्रिणी स्थन यदामयति निष्कृथ॥ ८३॥

**उ०** इष्कृतिर्नाम । उपसर्गैकदेशलोपश्छान्दसः । निष्क्रमणं विनाशनं व्याध्यादेः करोतीति निष्कृतिः । निष्कृतिस्तावद्युष्मदीयाया मातुर्नाम व्युत्पत्त्यभिप्रायम् । अथो अपिच यूयं स्थ भवथ निष्कृतीः व्याधिनिष्क्रमणाः । किंच सीराः सह इरया अन्नेन वर्तन्त इति सीराः पतत्रिणीः पतनशीलाः स्थन भवथ । 'कुरुतनेत्यनर्थका उपजना भवन्ति इति नकार उपजनः । कस्मिन्काले यूयमित्थंभूता भवथेत्यत आह । यदामयति निष्कृथ । 'अम रोगे' यदा आमयाविनि स्थितं तस्य व्याधिं निष्कृथ निर्नाशयत ॥ ८३ ॥

**म०** हे ओषधयः, वो युष्माकमिष्कृतिर्नाम निष्कृतिनाम्नी माता जननी । निष्करोति व्याधिं नाशयति निष्कृतिः । 'निशब्दो बहुलम्' ( ३ । १ । १७ ) इति प्रातिशाख्यसूत्रेणोपसर्गैकदेशनकारलोपः । अथो अपि च यूयमपि निष्कृतीः निष्कृतयः स्थ व्याधिनिष्क्रमणकारिण्यो भवथ निष्कृतिमातृरूपत्वात् । किंच सीराः सह इरया अन्नेन वर्तन्त इति सीराः । सहस्य सादेशे टिलोप इकारदीर्घश्च छान्दसः । यद्वा सीराः क्षुधादीनामपसारयित्र्यः । यद्वा सीरं हलं निष्पादकत्वेन यासु ताः सीराः । पतत्रिणीः पतत्रं पतनं गमनं विद्यते यासां ताः पतत्रिण्यः प्रसरणशीलाश्च स्थन भवथ । 'वा छन्दसि' ( पा० ६ । १ । १०६ ) इति दीर्घः 'तप्तनप्त–' ( पा० ७ । १ । ४५ ) इत्यादिना थस्य थनादेशः । यत् यस्मात् आमयति 'अम रोगे' चुरादिः शत्रन्तः । रुजति आमयाविनि नरे स्थितं रोगं निष्कृथ नाशयथ । यद्वा यत् क्षुधादिकं रोगवद् बाधते तद्यूयं निष्कृथ करोतेः शपि लुप्ते लटि रूपम् ॥ ८३ ॥

## चतुरशीतितमी ।

अति॒ विश्वाः॑ परि॒ष्ठाः स्ते॒न इ॑व व्र॒जम॑क्रमुः ।
ओष॑धीः॒ प्राचु॑च्यवु॒र्यत्किं॑च॒ त॒न्वो॒ रपः॑ ॥ ८४ ॥

**उ०** अति विश्वाः । यदा अत्यक्रमुः आक्रामन्ते तनूः विश्वाः सर्वाः परिष्ठाः परि सर्वतो व्याधीनधिष्ठाय तिष्ठन्तीति परिष्ठा ओषधयः । कथमिव । स्तेन इव व्रजम् । यथा स्तेनः तस्करः व्रजमत्यक्रामत् परिमुमोषिषया एवमत्यक्रमुः । अथानन्तरमेव ओषधयः प्राचुच्यवुः प्रच्यावयन्ति । यत्किंचित्तन्वः शरीरस्य रपः । 'रपो रिप्रमिति पापनामनी भवतः' । पापजनितं व्याधिमित्यर्थः ॥ ८४ ॥

**म०** परि सर्वतो रोगानधिष्ठाय तिष्ठन्तीति परिष्ठाः रोगनाशिका विश्वाः सर्वाः ओषधीः ओषधयो यदा अत्यक्रमुः आक्रमन्ते भक्षिताः सत्यो देहं व्याप्नुवन्ति । क्रमतेर्लङि अन उश् छान्दसः । तत्र दृष्टान्तः स्तेन इव व्रजम् । यथा रात्रौ स्तेनश्चोरो गोष्ठमाक्रमते गोशालायां गामपहर्तुं सर्वत्र गच्छति तद्वत् यदौषधयो रोगमपहर्तुं देहमाक्रमन्ते तदा तन्वः शरीरस्य यत् किंच यत्किमपि रपः पापं शिरोव्यथागुल्मातिसारादिरूपं पापफलं यत् किंचिदस्ति तत्सर्वं प्राचुच्यवुः प्रच्यावयन्ति नाशयन्ति 'च्यु गतौ' लुङि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' ( पा० ३ । १ । ४८ ) इति चङ्प्रत्यये रूपम् । 'रपो रिप्रमिति पापनामनी भवतः' ( नि० ४ । २१ ) इति यास्कः ॥ ८४ ॥

## पञ्चाशीतितमी ।

यदि॒मा वा॒जय॑न्न॒हमोष॑धी॒र्हस्त॑ आद॒धे । आ॒त्मा यक्ष्म॑स्य नश्यति पु॒रा जी॑व॒गृभो॑ यथा ॥ ८५ ॥

**उ०** यदिमाः । यदैव इमा वाजयन् पूजयन् अहम् ओषधीः हस्ते आदधे आस्थापयामि । अथानन्तरमेव । आत्मा यक्ष्मस्य व्याधेः नश्यति । कथमिव । पुरा जीवगृभो यथा । जीवन्नेव हिंसार्थं यो गृह्यते पशुर्वान्यो वा मनुष्यादिः सजीवगृप् तस्य जीवगृभः प्रागेव वध्यासं इति विषादान्मृतोऽहमिति मन्यमानस्य यथात्मा नश्येत् एवं व्याधेरात्मा नश्यति यदाहमोषधीर्हस्त आदध इति संबन्धः ॥ ८५ ॥

**म०** यत् यदा इमा ओषधीः वाजयन्पूजयन्मानयन्सन् अहं हस्ते स्वकरे आदधे स्थापयामि तदैव यक्ष्मस्य व्याधेरात्मा स्वरूपं पुरा भक्षणात्प्रागेव नश्यति किं पुनर्भक्षणेनेति भावः । तत्र दृष्टान्तः । जीवगृभो यथा जीवन्सन्नेव यो हिंसार्थं गृह्यते आघातस्थानं नीयते स जीवगृप् तस्य जीवगृभो वधात्प्रागेवातिविषान्मृतोऽहमिति मन्यमानस्य मनुष्यस्यात्मा यथा नश्यति नष्टप्रायो भवति तथौषधौ हस्ते धृतायां व्याधेरात्मा नश्यतीत्यर्थः ॥ ८५ ॥

## षडशीतितमी ।

यस्यौ॑षधीः प्र॒सर्प॒थाङ्ग॑मङ्गं॒ परु॑ष्परुः । ततो॒ यक्ष्मं॒ वि बा॑धध्व उ॒ग्रो म॑ध्यम॒शीरि॑व ॥ ८६ ॥

यस्यौषधीः । यस्य रोगिणः हे ओषधयः, प्रसर्पथ अङ्गमङ्गं परुष्परुः सर्वाण्यङ्गानि सर्वाणि च पर्वाणीत्युक्तं भवति । परुशब्दः पर्ववचनः । तस्य रोगिणः ततो यक्ष्मं विबाधध्वे । ततस्तस्मादङ्गपर्वसमुदायात् व्याध्यपगमं कुरुध्वे । कथमिव । उग्रो मध्यमशीरिव । उग्रः क्षत्रियो बद्धगोधाङ्गुलित्राणः सएव विशिष्यते मध्यमशीः मध्यमं भागं शृणातीति मध्यमशीः । स यथा शत्रून्बाधते एवं यूयमपि रोगिणो रोगं बाधध्वे इत्युपमार्थः । यद्वा उग्रो रुद्रः स एव त्रिशूलमध्यमेन शृणातीति मध्यमशीः स यथा युगान्ते सर्वं जगद्भस्मसात्करोति एवं यूयमपि व्याधिं कुरुध्वे ॥ ८६ ॥

**म०** हे ओषधीः ओषधयः, यस्य रोगिणः अङ्गमङ्गं प्रत्यङ्गं सर्वाण्यङ्गानि परुष्परुः । परुःशब्दः पर्ववचनः प्रतिपरुः सर्वाणि पर्वाणि ग्रन्थीन् यूयं प्रसर्पथ प्रगच्छथ व्याप्नुथ ततोऽङ्गपर्वसमुदायात् यक्ष्मं रोगं यूयं विबाधध्वे निवर्तयथ व्याधिनाशं कुरुध्वे । तत्र दृष्टान्तः । उग्रो मध्यमशीरिव मध्ये देहमध्ये भवं मध्यमं मर्मभागं शृणाति हिनस्ति मध्यमशीः 'शॄ हिंसा-

याम्' क्विप्। 'ऋत इद्धातोः' (पा० ७।१।१००) इति इदादेशः 'उरण् रपरः' (पा० १।१।५१) इति रेफः मर्मघातकः उग्र उत्कृष्टो बद्धगोधाङ्गुलित्राण उद्गूर्णशस्त्रः क्षत्रियो यथा शत्रुं बाधते। यद्वा उग्रो रुद्रो मध्यमेन त्रिशूलमध्यभागेन शृणातीति मध्यमशीः यथा युगान्ते जगद्बाधते तद्वद् यूयमपि रोगिणो देहं प्रविष्टा व्याधिं विबाधध्व इत्यर्थः ॥ ८६ ॥

## सप्ताशीतितमी ।

साकं यक्ष्म प्रपत चाषेण किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ ८७ ॥

**उ०** साकं यक्ष्म साकं सहेत्यर्थः। हे यक्ष्म, सह प्रपतः प्रणश्य । चाषेण पक्षिणा किकिदीविना । शब्दानुकरणमेतत्। किकि एवं यो दीव्यति तेन सह प्रपत । सहि तव सार्थ उचितः। साकं वातस्य ध्राज्या गत्या प्रपत । साकं नश्य प्रपलाहि । निहाकया निहन्ति कायमिति निहाका निर्ऋतिः कृच्छ्रापत्तिः तया कृच्छ्रापत्त्या सह नश्य हे यक्ष्म, यद्वा शब्दानुकरणमेतत्। हा कष्टं निर्गतोऽहं कया ओषध्या एवंरूपया शब्दानुकरणभक्त्या। सह नश्य हे यक्ष्म, अपुनरागमनाय ॥ ८७ ॥

**म०** हे यक्ष्मरोग, त्वं चाषेण पक्षिणा साकं सह प्रपत प्रकर्षेण गच्छ। किंभूतेन चाषेण। किकिदीविना। किकीति शब्दानुकरणम्। किकीतिशब्देन दीव्यति क्रीडतीति किकिदीविस्तेन । चाषस्तवोचितः सार्थः। वातस्य ध्राज्या गत्या साकं प्रपत वातगतिवत्पलायस्वेत्यर्थः । किंच निहाकया साकं नश्य नष्टो भव। निहन्ति कायमिति निहाका निर्ऋतिः कृच्छ्रापत्तिस्तया सह नश्य। यद्वा शब्दानुकरणमिदं हा कष्टं कया ओषध्या निहतोऽहमिति शब्दं कुर्वन् हे यक्ष्म, त्वं नश्य । अर्थान्तरं वा। कफावरुद्धकण्ठोत्थध्वनेरनुकरणार्थः किकिशब्दः। किकिना कण्ठध्वनिना दीव्यतीति किकिदीविः श्लेष्मरोगः। 'चष वधे' चषति व्याकुलं कृत्वा हन्ति चाषः पित्तरोगः। वातस्य ध्राजिर्वातरोगः हे यक्ष्म रोगराज, त्वं कफपित्तवातरोगैः सह प्रपत गच्छ । यया पीडया कया रुजा निहतोऽस्मि हा कष्टमिति शब्दं करोति सा निहाका सर्वाङ्गवेदना तया साकं हे यक्ष्म, त्वं नश्य ॥ ८७ ॥

## अष्टाशीतितमी ।

✓ अन्या वो अन्यामवत्वन्यान्यस्या उपावत । ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥८८॥

**उ०** शतम् ६०० ॥ अन्या वः। हे ओषधयः, अन्या ओषधिः वः युष्माकम् अन्यामोषधिम् अवतु पालयतु। अन्या च ओषधिः अन्यस्याः ओषध्याः प्रभावम् उपावत पुरुषवचनव्यत्ययः। उपावतु उपगम्य पालयतु। ता यूयमेव सर्वाः संविदानाः संगच्छमानाः इदं मे मम प्रावत प्रपालयत। वचः वचनमार्षम् ॥ ८८ ॥

**म०** हे ओषधयः, वो युष्माकं मध्ये अन्या काचिदोषधिव्यक्तिरन्यामोषधिव्यक्तिमवतु तथा रक्षिता अन्यापि अन्यस्या रक्षिकाया उपावत उपावतु उप समीपमागत्य पालयतु। पुरुषवचनव्यत्ययः । अन्यान्यस्याः प्रभावमवतु वा। ताः सर्वास्तथाविधा ओषधयो यूयं संविदानाः परस्परैकमत्यं गताः सत्यो मे ममेदं वचो वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत ॥ ८८ ॥

## एकोननवतितमी ।

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ८९ ॥

**उ०** याः फलिनीः या ओषधयः फलवत्यः याश्च अफलाः फलरहिताः। या अपुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पवत्यः। बृहस्पतिना अभ्यनुज्ञाताः ताः नः अस्मान् मुञ्चन्तु अंहसः पापात् ॥ ८९ ॥

**म०** या ओषधयः फलिनीः फलिन्यः फलयुक्ताः याश्चाफलाः फलरहिताः याश्चापुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पिण्यः पुष्पयुक्ताः ताः सर्वा ओषधयो बृहस्पतिप्रसूता बृहस्पतिप्रेरिताः सत्यो नोऽस्मानंहसः पापाद्रोगरूपान्मुञ्चन्तु पृथक् कुर्वन्तु ॥ ८९ ॥

## नवतितमी ।

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ ९० ॥

**उ०** इत उत्तरमनारभ्यवादमन्त्राः तेषां लिङ्गतो विनियोगः। मुञ्चन्तु मा शपथ्यात् शपथनिमित्तात्किल्बिषात् । अथो अपिच वरुण्यात् वरुणनिबन्धनात्। उत अथो अपिच । यमस्य संबन्धिनः पड्वीशात् बन्धनात् । पड्वीशशब्दो बन्धनवचनः। संदानमर्वन्तं पड्वीशमिति दृश्यते। किंच । सर्वस्मात् च देवनिमित्तात्किल्बिषात् मुञ्चन्तु । यत्किंचिद्धिनस्ति पापं कर्तुः संबन्धि तत्किल्बिषमित्युच्यते ब्रह्महत्यादि ॥ ९० ॥

**म०** एवमोषधिवापार्थानि पञ्च तृचानि समाप्तानि । अथानारभ्याधीताः शपथनिमित्तात्किल्बिषात्पापादोषधयो मा मां मुञ्चन्तु पृथक्कुर्वन्तु । अथो अपिच वरुण्यात् वरुणे भवं वरुण्यं तस्माद्वारुणापराधनिमित्तात्पापान्मां मुञ्चन्तु उतापि च यमस्य संबन्धिनः पड्वीशात् पड्वीशशब्दो बन्धनवाची यमबन्धननिमित्तात्पापान्मां मुञ्चन्तु। अथो अपिच सर्वस्माद्देवकिल्बिषाद्देवापराधनिमित्तात्पापान्मां मुञ्चन्तु ॥९०॥

## एकनवतितमी।

अवपतन्तीरवदन्दिव ओषधयस्परि। यं जीवमश्नवामहै न स रिष्याति पूरुषः॥ ९१॥

उ० अवपतन्तीः अवाचीनं पतन्त्यः अवदन् उक्तवत्यः। दिवःपरि दिवो द्युलोकात् ओषधयः। किमवदन्नित्यत आह। यं जीवमनुत्क्रान्तप्राणम् अश्नवामहै व्याप्नुमः न स रिष्याति विनश्यति पूरुषः। छान्दसं दीर्घत्वम्॥ ९१॥

म० दिवः परि द्युलोकात्सकाशादवपतन्तीरवपतन्त्योऽधस्ताद्भूमौ गच्छन्त्यः ओषधयः अवदन् परस्परं वचनमुक्तवत्यः। किम् तदाह। जीवतीति जीवस्तं यं जीवमनुत्क्रान्तप्राणं पुरुषं वयमश्नवामहै 'अशूङ् व्याप्तौ' लोट् व्याप्नुमः स पुरुषो न रिष्यति न नश्यति। रिष्यतीत्यत्र 'लेटोऽडाटौ' (पा० ३।४।९४) इत्याडागमः। पूरुष इति छान्दसो दीर्घः सर्वत्र॥ ९१॥

## द्विनवतितमी।

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः। तासामसि त्वमुत्तमारं कामाय शꣳहृदे॥ ९२॥

उ० या ओषधीः या ओषधयः सोमराज्यः सोमो राजा यासामिति सोमराज्यः। बह्व्यः अनन्ताः। शतविचक्षणाः बहुवीर्याः। बहवो वा स्तोतारो विचक्षणा यासां बहुविचक्षणाः। तासामोषधीनां मध्ये त्वं भवसि उत्तमा यतः अतः अलंकामाय भव। शंच सुखं च हृदयाय भव॥ ९२॥

म० सोमो राजा यासां ताः सोमराज्यः बह्व्यः बह्व्योऽनन्ताः शतविचक्षणाः शतमसंख्यं विचक्षणाश्चतुराः बहुवीर्या वा शतं विचक्षणाः स्तोतारो यासामिति वा एवंभूता या ओषधीः ओषधयः सन्ति तासामोषधीनां मध्ये हे ओषधे, त्वमुत्तमा उत्कृष्टा यतोऽसि भवसि अतः कामायेप्सिताय अरमलं पर्याप्ता भव हृदे हृदयाय शं सुखकारिणी भव॥ ९२॥

## त्रिनवतितमी।

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु। बृहस्पतिप्रसूता अस्यै संदत्त वीर्यम्॥ ९३॥

या ओषधीः या यूयं हे ओषधयः सोमराज्यः विष्ठिताः विविधं स्थिताः पृथिवीम् अनु। ताः बृहस्पतिप्रसूता अस्यै ओषध्यै संदत्त वीर्यम्। येनेयं बहुवीर्या भवतीत्यभिप्रायः॥ ९३॥

म० सोमराज्यो या ओषधयः पृथिवीमनु विष्ठिताः विविधं स्थिताः बृहस्पतिप्रसूताः बृहस्पतिना प्रेरिताः ता ओषधयोऽस्यै ओषध्यै मद्गृहीतायै वीर्यं संदत्त सामर्थ्यं प्रयच्छत। इयं बहुवीर्या भवत्विति भावः॥ ९३॥

## चतुर्नवतितमी।

याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः। सर्वाः सङ्गत्य वीरुधोऽस्यै संदत्त वीर्यम्॥ ९४॥

उ० याश्च ओषधयः इदं वच उपशृण्वन्ति समीपस्थिताः। याश्च अतिदूरं परागताः दूरदेशव्यवहिताः ताः सन्निधानीकृत्याहं ब्रवीमि। सर्वाः सङ्गत्य संभूय। हे वीरुधः विरोहणाः अस्यै संदत्त वीर्यं प्रभावम्॥ ९४॥

म० या ओषधय इदं मद्वचनं प्रार्थनारूपमुप समीपस्थाः शृण्वन्ति याश्चान्याः दूरं परागताः दूरे व्यवस्थिता व्यवहिताः सत्यः ईषत् शृण्वन्ति हे वीरुधः, विविधरोहणा ओषधयः, ताः सर्वाः समीपदूरस्थाः सङ्गत्य सङ्गता भूत्वा अस्यै ओषध्यै यूयं वीर्यं संदत्त प्रयच्छत॥ ९४॥

## पञ्चनवतितमी।

मा वो रिषत्खनिता यस्मै चाहं खनामि वः। द्विपाच्चतुष्पादस्माकꣳ सर्वमस्त्वनातुरम्॥ ९५॥

उ० मा वो रिषत् मा रिषतु माविनश्यतु वो युष्माकं खनिता। यस्मै च पुरुषाय अहं खनामि वः युष्मान्। किंच द्विपात् स्त्रीपुंसम् चतुष्पात् गवादि। 'संख्यासुपूर्वस्य' इति पादशब्दान्त्यलोपः। अस्माकं सर्वमस्तु अनातुरमनाकुलम्। युष्मत्प्रसादादिति शेषः॥ ९५॥

म० हे ओषधयः, वो युष्माकं खनिता चिकित्सार्थे युष्मन्मूलं ग्रहीतुं खननकर्ता मा रिषत् मा विनश्यतु। यस्मै च रुग्णाय चिकित्सार्थं वो युष्मानहं खनामि युष्मन्मूलमादातुं खननं करोमि स च मा रिषत्। किंबहुनास्माकं संबन्धि द्विपात् स्त्रीपुंसं चतुष्पाद्गवादि प्राणिजातं सर्वमनातुरं रोगरहितमस्तु। द्वौ पादौ यस्य चत्वारः पादा यस्य 'संख्यासुपूर्वस्य' (पा० ५।४।१४०) इति पादशब्दस्यान्तलोपः॥ ९५॥

## षण्णवतितमी।

ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तꣳराजन्पारयामसि॥ ९६॥

उ० ओषधयः सम्। ओषधयः समवदन्त संवादं कृतवत्यः। सोमेन सह राज्ञा। सोमो हि ओषधीनां राजा। किं समवदन्त। यस्मै पुरुषाय भैषज्यं कृणोति करोति ब्राह्मणः तमातुरं हे सोमराजन्, पारयामसि पारयामः उत्तारयामो व्याधेः। सोमेन सह संवादो व्याध्यपगमदृढीकरणार्थः॥ ९६॥

म० राज्ञा स्वस्वामिना सोमेन सह ओषधयः देवताः समवदन्त संवादं कृतवत्यः। कथं संवादस्तमाह ब्राह्मणो यस्मै रुग्णाय कृणोति अस्मन्मूलादिना चिकित्सां करोति कृ कृतौ स्वादिः हे राजन् स्वामिन् सोम, तं रुग्णं नरं वयं पारयामसि पारयामः। इदन्तो मसि। सोमसंवादो व्याधिनाशदार्ढ्यार्थः॥ ९६॥

## सप्तनवतितमी ।

नाशयित्री बलासस्यार्शस उपचितामसि । अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी ॥ ९७ ॥

उ० नाशयित्री । नाशयित्री बलासस्य बलमस्यति निक्षिपतीति बलासः क्षयः अर्शसः शूलव्याधेः । उपचितां शरीरे ये उपचीयन्ते श्वयथुगदश्लीपदप्रभृतयः तेषां च त्वं नाशनी भवसि । अथो शतस्य यक्ष्माणामपि बहूनां व्याधीनां नाशयित्री त्वमसि । पाकारोः अरुः क्षतमुच्यते । मुखपाकक्षतादेर्नाशिनी त्वमसि । यद्वा 'रुच दीप्तौ' । अन्नपाकस्य अरुः अदीप्तिर्मन्दाग्नित्वं तस्य च त्वं नाशिनी भवसि ॥ ९७ ॥

म० हे ओषधे, त्वं बलासस्य क्षयव्याधेर्नाशयित्री नाशकर्त्री असि भवसि । बलमस्यति क्षिपति बलासः क्षयः । अर्शसो गुदव्याधेश्च नाशिकासि । उपचिताम् उपचिन्वन्ति शरीरं वर्धयन्तीत्युपचितः क्विप् । श्वयथुगडुश्लीपदादयः तेषां च नाशिकासि । अथो अपिच शतस्य यक्ष्माणां बहूनां व्याधीनां पाकारोः मुखपाकक्षतादेश्च नाशनी नाशकर्त्री त्वं भवसि । पाको मुखपाकः अरुः क्षतमुच्यते पाकेनारुः पाकारुस्तस्य । यद्वा पाकोऽन्नपाकस्तस्यारुर्व्यथा मन्दाग्नित्वं तस्य नाशनी त्वमसि ॥ ९७ ॥

## अष्टनवतितमी ।

त्वां गन्धर्वा अखनंस्त्वामिन्द्रस्त्वां बृहस्पतिः । त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥९८॥

उ० त्वां गन्धर्वाः यतश्च त्वमित्थंभूता असि अतः त्वां गन्धर्वाः अखनन् अभिलषितकामप्राप्त्यर्थम् । त्वां च इन्द्रः त्वां च बृहस्पतिः त्वां च हे ओषधे, सोमराजा विद्वान् जानानः उपयोगं यक्ष्मान्महाव्याधेः अमुच्यत मुक्तः ॥ ९८ ॥

म० हे ओषधयः, गन्धर्वाः देवविशेषाः त्वामखनन् स्वेष्टकार्यसिद्ध्यर्थं खननमकुर्वन् । इन्द्रश्च त्वामखनत् बृहस्पतिश्च त्वामखनत् । हे ओषधे, सोमो राजा त्वां च विद्वान् त्वत्सामर्थ्यं जानन्सन् त्वामुपयुज्य यस्मात् महाव्याधेरमुच्यत मुक्तोऽभवत् ॥ ९८ ॥

## एकोनशततमी ।

सहस्व मे अरातीः सहस्व पृतनायतः । सहस्व सर्वं पाप्मानꣳ सहमानास्योषधे ॥ ९९ ॥

उ० सहस्व मे । यतस्त्वमित्थंभूता च अतोऽहं याचे । सहस्व अभिभव मे मम अरातीः अदानशीलाः शत्रुसेनाः । सहस्व च अभिभवस्व च पृतनायतः पृतनाः संग्रामाः संग्रामकामान् शत्रून् सहस्व च अभिभवस्व च सर्वं पाप्मानं सर्वमशुभम् । कस्मादभिभवनकर्मणि त्वमस्माभिर्नियुज्यसे इति चेत् । यतः सहमानासि अभिभवनशीलासि त्वं हे ओषधे ॥ ९९ ॥

म० हे ओषधे, यतः त्वं सहमानासि शत्रूनभिभवन्ती भवसि अतो मे अरातीः अदानशीलाः शत्रुसेनाः सहस्व अभिभव । नास्ति रातिर्दानं यासां ता अरातयस्ताः । पृतनायतः संग्रामकामांश्च सहस्व पृतनां संग्रामं कामयन्ते ते पृतनायन्तस्तान् । 'सुप आत्मनः क्यच्' (पा० ३ । १ । ८) इति क्यजन्ताच्छतृप्रत्ययः । किंच सर्वं पाप्मानमशुभं सहस्व । सहतिरभिभवार्थः ॥ ९९ ॥

## शततमी ।

दीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥ १०० ॥

उ० दीर्घायुस्ते । पुनरपि त्वां प्रार्थयामः । हे ओषधे, खनिता अहं भूयासम् यस्मै च आतुराय त्वां खनामि स च दीर्घायुर्भूयात् । अथो अपिच त्वं दीर्घायुर्भूत्वा अनवखण्डितायुर्भूत्वा शतवल्शा । वल्शशब्दोऽङ्कुरवचनः । बह्वङ्कुरा विरोहतात् विरोह । 'तुह्योस्तातङ्ङाशिषि–' इत्यादिना तातङादेशः । अनवखण्डितमूला त्वमनेकैरङ्कुरैः संतिष्ठस्वेत्याशीः ॥ १०० ॥

म० हे ओषधे, ते तव खनिता खननकर्ता दीर्घायुर्भूयादिति शेषः । यस्मै चातुराय नरायाहं त्वां खनामि सोऽपि दीर्घायुरस्तु । अथो अपिच त्वं दीर्घायुरखण्डितजीवना भूत्वा शतवल्शा बह्वङ्कुरा सती विरोहताद्विरोह बह्वङ्कुरोत्पद्यस्व 'तुह्योस्तातङ्' (पा० ७ । १ । ३५) इति तातङ् । वल्शशब्दोऽङ्कुरवाची । शतं वल्शाः यस्याः सा शतवल्शा ॥ १०० ॥

## एकोत्तरशततमी ।

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः । उपस्तिरस्तु सोऽस्माकं यो अस्माँ २ऽअभिदासति ॥१०१॥

उ० त्वमुत्तमा असि हे ओषधे, तव च वृक्षाः शालतमालादयः उपस्तयः । उपकाराय ओषधीनां तिष्ठन्तीत्युपस्तयः तत्र हिताः प्रसर्पन्ति । नच वृक्षाणां भोग्या भवन्ति अयथातथेमे वृक्षा उपस्तयः यथा त्वत्प्रसादात् उपस्तिः अस्तु स पुरुषः अस्माकम् यः अस्मान् । अभिदासति 'दसु उपक्षये' । अभिहन्ति ॥ १०१ ॥

म० हे ओषधे, त्वमुत्तमा उत्कृष्टासि भवसि वृक्षाः शालतालतमालादयस्तवोपस्तयः सन्तु 'स्त्यै शब्दसङ्घातयोः' उपस्त्यायन्ति उपकारायोपद्रवनिराकरणाय च समीपे संहतास्तिष्ठन्तीत्युपस्तयः वृक्षाः त्वां सेवन्तामित्यर्थः । किंच यो नरोऽस्मानभिदासति अभिहन्ति स नरोऽस्माकमुपस्तिः समीपस्थ उपासकोऽस्तु । दासतिर्हिंसाकर्मा ॥ १०१ ॥

अनारभ्याधीताः समाप्ताः ।

## द्व्युत्तरशततमी ।

मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् । यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ १०२ ॥

**उ०** चतस्रो लोकेष्टकाश्चतसृभिर्ऋग्भिरुपदधाति । मामा कायी त्रिष्टुप् । मामाहिंसीत् पूर्वः प्रतिषेधार्थीयः उत्तरोऽस्मदादेशः । माहिंसीन्माजनिता यः 'जनिता मन्त्रे' इति णिचो लोपः । जनयिता यः पृथिव्याः प्रजापतिः । यो वा दिवं सत्यधर्मा व्यानट् । वाशब्दः समुच्चयार्थीयः । व्यानडिति व्याप्तिकर्मा । श्रुत्या तु सृजतेरर्थे व्याख्यातः । यश्च दिवं सत्यधर्मा सत्यधारणः व्यानट् असृजत् । यश्च आपश्चन्द्राः प्रथमो जनान । 'मनुष्या वा आपश्चन्द्राः' इति श्रुतिः । मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः । यद्वा । यश्चापः चायनीयाः प्रथमः शरीरी जनितवान् । अपां चायनीयानां कारणभूतानां जननेन यो मनुष्यान् जनितवान् इति कारणे कार्योपचारः । कस्मै देवाय हविषा विधेम । य इत्थंभूतः कः प्रजापतिः तस्मै कस्मै काय इति प्राप्ते स्मैआदेशश्छान्दसः । 'सर्वनाम्नः स्मै' इति हि पाणिनिः । नचैतत्सर्वनाम देवतात्वात् प्रजापतये हविषा हविरिति विभक्तिव्यत्ययः । विदधातिर्दानकर्मा । तस्मै प्रजापतये हविर्दद्म इति संबन्धः ॥ १०२ ॥

**म०** 'लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदेरनूत्क्रान्तेषूपदधाति तिष्ठन्मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम्' ( १७ । ३ । ११ ) । ततोऽध्वर्युः स्फ्येन वेदिबहिःप्रदेशाल्लोगेष्टकाश्चतुरो मृत्खण्डान्पद्याप्रमाणानानीयात्मनो दक्षिणोत्तरपूर्वापरमध्यसूत्रप्रान्तेषु पूर्वादि तिष्ठन्मन्त्रचतुष्टयेनोपदध्यादिति सूत्रार्थः । हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् । यः प्रजापतिः पृथिव्याः भूमेर्जनिता जनयिता उत्पादकः । 'जनिता मन्त्रे' ( पा० ६ । ४ । ५३ ) इति णिचो लोपः । वा चार्थे । यो वा यश्च दिवं व्यानट् द्युलोकमसृजत् । व्यानट् इति व्याप्तिकर्मा । श्रुतौ तु सृजतेरर्थे व्याख्यातः । 'यो वा दिवꣳ सत्यधर्मासृजते' ( ७ । ३ । १ । २० ) इति श्रुतेः । यश्च चन्द्राः आह्लादिका जगत्कारणभूता अपो जलानि प्रथमः आदिभूतः सन् जजानोत्पादितवान् तद्वारा मनुष्यानुत्पादितवानित्यर्थः । यतः श्रुतौ आपश्चन्द्रा इति मनुष्या व्याख्याताः मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः 'मनुष्या वा आपश्चन्द्राः' ( ७ । ३ । १ । २० ) इति श्रुतेः कारणे कार्योपचारात् । कीदृशः । प्रथमः शरीरी सत्यधर्मा सत्यं धरतीति सत्यस्य धारयिता स प्रजापतिर्मा मा हिंसीन्मा हन्तु । यतः कस्मै काय प्रजापतये हविषा हविः वयं विधेम दद्मः । हविर्दानान्मा हन्तु । कशब्दस्य सर्वनामत्वाभावात् स्मैआदेशः छान्दसः । हविषा इति विभक्तिव्यत्ययः । विधतिर्धातुर्दानार्थः ॥ १०२ ॥

## त्र्युत्तरशततमी ।

अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितो अरोहत् ॥ १०३ ॥

**उ०** दक्षिणत उपदधाति । अभ्यावर्तस्व अभिमुखीभव । अग्निं प्रत्यादृता भव हे पृथिवि, यज्ञेन यज्ञसाधनभूतेन हविषा । पयसा सह । कस्मात्कारणादित्यत आह । वपान्ते वपां पृष्ठे ते तव अग्निः इषितः प्रजापतिप्रेषितः अरोहत् आरूढवान् ॥ १०३ ॥

**म०** अग्निदेवत्या उष्णिक् । हे पृथिवि, यज्ञेनास्मच्चिकीर्षितेन पयसा तत्फलभूतेन दुग्धादिभोगेन च सह अभ्यावर्तस्व आभिमुख्येनागच्छ । कथमागन्तव्यमत आह । इषितः प्रजापतिप्रेषितोऽग्निः ते तव वपां त्वचं पृष्ठं वपासदृशमिमं प्रदेशमरोहत् आरोहतु । अनचर्या दक्षिणे लोगेष्टकोपधानम् ॥ १०३ ॥

## चतुरुत्तरशततमी ।

अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् । तद्देवेभ्यो भरामसि ॥ १०४ ॥

**उ०** पश्चादुपदधाति । अग्ने यत्ते । आग्नेयी गायत्री । हे अग्ने, यत्ते तव शुक्रं सारं शुक्लं वा । यच्च चन्द्रमाह्लादनीयम् यच्च पूतं पवित्रम् यच्च यज्ञियं यज्ञार्हम् तद्देवेभ्योऽर्थाय । देवेभ्यो वा सकाशात् भरामसि संभरामः ॥ १०४॥

**म०** अग्निदेवत्या गायत्री पश्चाल्लोगेष्टकोपधाने विनियुक्ता। हे अग्ने, यत्ते तवाङ्गं शुक्रं शुक्लं शुद्धं दीप्तिमत् यच्चान्यदङ्गं चन्द्रमाह्लादकरं यदन्यत्पूतं पवित्रं यच्चान्यदङ्गं यज्ञियं यज्ञार्हं तत्सर्वं श्लाघ्यरूपं देवेभ्यो देवानामर्थे भरामसि भरामः संपादयामः ॥ १०४ ॥

## पञ्चोत्तरशततमी।

इषमूर्जमहमित आदमृतस्य योनिं महिषस्य धाराम् । आ मा गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥ १०५ ॥

**उ०** उत्तरत उपदधाति । इषमूर्जम् । त्रिष्टुप् । आशीःप्रायोमन्त्रः । अस्मिन्मन्त्रे विशेषणविशेष्यभावात् यत्तच्छ्यां वाक्यपरिपूर्तिः क्रियते । यत् इषमन्नं यच्च ऊर्जं तदुपसेचनं दधिपयोघृतादिकम् अहम् इतः उदीच्या दिशः । आदम् आददे गृहीतवान् । यच्च ऋतस्य सत्यस्य योनिं स्थानं तिस्रो विद्या अहमाददे । यच्च महिषस्य महतः इच्छावतश्चाग्नेः धाराम् आहुतिमहमाददे । उदीच्या दिशः । एतत्सर्वम् आमा गोषु विशत्वा तनूषु आविशतु मां गोषु तनूषु च

पुत्रपौत्रादिकासु । सिकताः प्रध्वंसयति । जहामि परित्यजामि उदीच्यां दिशि स्थापयामि । सेदिम् अवसादम् अनिरामनन्ताम् अमीवां व्याधिम् ॥ १०५ ॥

**म०** आशीर्देवी त्रिष्टुप् पादत्रयस्योत्तरतो लोगेष्टकोपधाने विनियोगः । इषमन्नमूर्जं तदुपसेचनं दधिपयोघृतादिकमृतस्य सत्यस्य योनिं स्थानं विद्यात्रयं महिषस्य महत इच्छावतोऽग्नेर्धारां धारणामाहुतिं वा इतोऽस्मात्प्रदेशादुदीच्या दिशः सकाशादहमादमद्मि भक्षयामि स्वीकरोमीत्यर्थः । 'अद भक्षणे' लङ् । किंच एतत्सर्वमिडादिकं मामाविशतु आगत्य प्रविशतु । तनूषु मदीयपुत्रादिशरीरेषु गोषु मदीयधेन्वादिपशुषु चाविशतु । 'उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदिमिति–' ( का० १७ । ३ । १३ ) । उत्तरलोगेष्टकातः सिकताः पात–' यति । नास्ति इरान्नं यस्यां तामनिरामन्नरहिताममीवां व्याधियुतां सेदिमवसादमहं जहामि त्यजामि । अन्नाभावरोगदुःखानि मे मा सन्त्वित्यर्थः ॥ १०५ ॥

## षडुत्तरशततमी ।

अग्ने॒ तव॒ श्रवो॒ वयो॒ महि॑ भ्राजन्ते अ॒र्चयो॑ विभावसो । बृह॑द्भानो॒ शव॑सा॒ वाज॑मु॒क्थ्यं॒ दधा॑सि दा॒शुषे॑ कवे ॥ १०६ ॥

**उ०** आग्नेयेन षडृचेन सिकता निवपति । अग्ने तव । प्रथमे विहारपङ्क्ती । तिस्रः सतोबृहत्यः षष्ठी उपरिष्टाज्ज्योतिः हे अग्ने, तव संबन्धी धूमः । श्रवोवयः अमुष्मिन् लोके श्रावयतीति श्रवः वयोऽन्नम् तस्याहुतिपरिणामद्वारेण निमित्तभूतत्वात् धूमो वयरित्युच्यते । धूमो वा अस्य श्रवो वयः सह्येनममुष्मिन् लोके श्रावयतीति श्रुतिः । एवंप्रभावस्तव धूमः। अथ महि महत् भ्राजन्ते अचर्यः अर्चींषीति लिङ्गव्यत्ययः। हे विभावसो विभूतधन। किंच। हे बृहद्भानो महादीप्त, शवसा बलेन सहितं वाजमन्नम् उक्थ्यम् उक्थ्यार्हं यज्ञार्हम्। दधासि ददासि दाशुषे हवींषि दत्तवते यजमानाय । हे कवे क्रान्तदर्शन ॥ १०६ ॥

**म०** 'अग्ने तवेति सिकता न्युप्य छादयत्यात्मानम्' (का० १७ । ३ । १५ ) षडृचेनोत्तरवेदौ सिकताः प्रक्षिप्य ताभिः पुच्छपक्षं विनात्मानं छादयेत् । पावकाग्निदृष्टं षडृचमग्निदेवत्यम् । आद्ये द्वे विष्टारपङ्क्ती । यस्या द्वितीयतृतीयपादौ द्वादशार्णौ आद्यतुर्यावष्टकौ सा विष्टारपङ्क्तिः । हे अग्ने, हे विभावसो, विभा दीप्तिरेव वसु धनं यस्य तत्संबोधनं हे कान्तिधन, तव वयो धूमः अर्चयो दीप्तयश्च भ्राजन्ते दीप्यन्ते। वीयते भक्ष्यते प्राणिभिरिति वयोऽन्नम् । 'वी कान्त्यसनखादनव्याप्तिषु' धूमस्याहुतिपरिणामद्वारेणान्नहेतुत्वादयोऽत्र धूम उच्यते । कीदृशं वयः । श्रवः श्रावयति द्युलोके कृतं कर्मेति श्रवः धूमदर्शनाद्देवानां कर्मज्ञानम् । तथा महि महत् नभोगामित्वात् 'धूमो वा अस्य श्रवो वयः स ह्येनममुष्मिंल्लोके श्रावयति' ( ७ । ३ । १ । २९ ) इति श्रुतेः । किंच बृहन्तो महान्तो भानवो रश्मयो यस्य तत्संबुद्धौ हे बृहद्भानो, हे कवे क्रान्तदर्शिन् विद्वन् यजमानाभिप्रायज्ञ, दाशुषे हविर्दत्तवते यजमानाय शवसा बलेन सह वाजमन्नं त्वं दधासि ददासि । कीदृशं वाजम् । उक्थ्यम् उक्थः शस्त्राद्युपेतो यज्ञस्तद्योग्यं यज्ञपर्याप्तमन्नं ददासीत्यर्थः ॥ १०६ ॥

## सप्तोत्तरशततमी ।

पा॒व॒कव॑र्चाः शु॒क्रव॑र्चा॒ अनू॑नवर्चा॒ उदि॑यर्षि भा॒नुना॑ । पु॒त्रो मा॒तरा॑ वि॒चर॒न्नुपा॑वसि पृ॒णक्षि॒ रोद॑सी उ॒भे ॥ १०७ ॥

**उ०** पावकवर्चाः । हे अग्ने, यस्त्वं पावकवर्चाः । पावकशक्तिः शुक्रवर्चाः शुक्रशक्तिश्च अनूनं वर्चाश्च अपरिहीणशक्तिः सन् अन्यूनशक्तिर्वा सन् । उदियर्षि उद्गच्छसि । भानुना दीप्त्या । यश्च त्वं पुत्रइव मातरा मातापितरौ । उत्तमे वयसि विचरन् उपचरन् । उपावसि उपसङ्गम्य पालयसि । सदेवमनुष्यं जगत् । यश्च त्वं पृणक्षि पूरयसि रोदसी द्यावापृथिव्यौ । उभे अपि 'इमे वै द्यावापृथिवी रोदसी ते एष उभे पृणक्ति धूमेनामूं वृष्ट्येमाम्' इति श्रुतिः तं त्वां स्तुम इति वाक्यशेषः ॥ १०७ ॥

**म०** हे अग्ने, त्वं भानुना दीप्त्या उदियर्षि उद्गच्छसि । उत्कर्षं प्राप्नोषीत्यर्थः । कीदृशस्त्वम् । पावकवर्चाः पावकं शोधकं वर्चो दीप्तिशक्तिर्यस्य सः । शुक्रवर्चाः शुक्रं शुक्रं निर्मलं वर्चो यस्य । अनूनवर्चाः अनूनमहीनं वर्चो यस्य पूर्णशक्तिः । किंच हे अग्ने, त्वं विचरन्सर्वतः प्रचरन्सन् उपावसि उप सङ्गम्य पालयसि सदेवमनुष्यं जगद्रक्षसि । तत्र दृष्टान्तः पुत्रो मातरा यथा पुत्रश्चरमे वयसि मातरा मातापितरौ उपावति तद्वत् 'पितरामातरा च छन्दसि' ( पा० ६ । ३ । ३३ ) इति निपातः । किंच उभे रोदसी द्यावापृथिव्यौ पृणक्षि पूरयसि । हविषा द्यां वृष्ट्या भूमिं पूरयसीत्यर्थः । 'इमे वै द्यावापृथिवी रोदसी ते एष उभे पृणक्ति धूमेनामूं वृष्ट्येमामिति' ( ७ । ३ । १ । ३० ) इति श्रुतेः । तं त्वां स्तुम इति वाक्यशेषः ॥१०७॥

## अष्टोत्तरशततमी ।

ऊर्जो॑ नपाज्जातवेदः सुश॒स्तिभि॒र्मन्द॑स्व धी॒तिभि॑र्हि॒तः । त्वे इषः॒ संद॑धु॒र्भूरि॑वर्पसश्चि॒त्रोत॑यो वा॒मजा॑ताः ॥ १०८ ॥

**उ०** ऊर्जो नपात् । उर्कशब्देनाप उच्यन्ते । नपाच्छब्देन च पौत्रः । हे अपांपौत्र, अद्भ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्योऽग्निर्जायते । एवमपांनपादग्निः । जातवेदः जातप्रज्ञानः । सुशस्तिभिः साधुशंसनैः स्तुत इति शेषः । मन्दस्व दीप्यस्व । धीतिभिः कर्मभिर्निमित्तभूतैः हितः निहितः स्थापितः । कस्मात्त्वां वयमेवंब्रूम इत्यवे-

क्षयाह। त्वे इषः संदधुर्भूरिवर्पसः। त्वयि इषः अन्नानि हविर्लक्षणानि संदधुः जुहुवुः भूरिवर्पसः। वर्प इति रूपनाम। बहुरूपा यजमानाः जगदात्मत्वेनोपगताः। चित्रोतयः चायनीयानि अवनानि तर्पणानि येषां ते चित्रोतयः। वामजाताः वननीयजन्मानः विशिष्टदेशजातिकुलोत्पन्नाः। अतस्त्वं मन्दस्वेति संबन्धः॥ १०८॥

**म०** तिस्रः सतोबृहत्यः। यस्या आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकौ सा सतोबृहती। ऊर्क् जलं नपात्पौत्रः हे ऊर्जोनपादपां पौत्र, अद्भ्य ओषधिवनस्पतयो जायन्ते तेभ्योऽग्निर्जायत इत्यपां पौत्रत्वमग्नेः। यद्वा ऊर्जोऽन्नस्य नपात् न पातयति नाशयति नपात्। पतेर्णिजन्तात् क्विप्। हे अन्नस्याविनाशक, हे जातवेदः जातप्रज्ञान, धीतिभिः कर्मभिर्निमित्तभूतैर्हितः स्थापितः सन् सुशस्तिभिः शोभनाभिः शस्तिभिः स्तुतिभिः कृत्वा त्वं मन्दस्व मोदस्व हृष्टो भव। 'मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गतौ' इति धातुः। किमतिहर्षः कार्यस्तत्राह। यजमानाः त्वे त्वयि इषो हविर्लक्षणान्यन्नानि संदधुः जुहुवुः। हविःप्राप्त्या हर्षः कार्य इत्यर्थः। कीदृशा यजमानाः। भूरिवर्पसः वर्प इति रूपनाम। भूरीणि वर्पांसि येषां ते नानारूपाः। चित्रोतयः चित्रा विचित्रा नानाविधा ऊतयो रक्षा अवनानि अन्नानि तर्पणानि वा त्वत्कृतानि येषां ते। त्वया तर्पिता इत्यर्थः। वामजाताः वामं वननीयं संभजनीयं जातं जन्म येषां ते। विशिष्टदेशजातिकुलोत्पन्ना इत्यर्थः॥ १०८॥

## नवोत्तरशततमी।

इ॒र॒ज्यन्न॑ग्ने प्रथयस्व ज॒न्तुभि॑र॒स्मे रायो॑ अमर्त्य। स द॑र्श॒तस्य॒ वपु॑षो॒ वि रा॑जसि पृ॒णक्षि॑ सान॒सिं क्रतु॑म्॥ १०९॥

**उ०** इरज्यन्। अत्रोपरितनोर्धर्चः प्रथमं व्याख्यायते। स इत्यस्य च पदस्य स्थाने यदोवृत्तिः। सर्वनामसामान्याद्वाक्यवशाच्च विभक्तिव्यत्ययोऽत्र कर्तव्यः। स दर्शतस्य वपुषो विराजसि। यस्त्वं दर्शनीयेन वपुषा शरीरेण ज्वालालक्षणेन विराजसि देदीप्यसे पृणक्षि पूरयसि। सानसिं चिरन्तनम् क्रतुं संकल्पम् तं त्वां ब्रवीमि। इरज्यन्दीप्यमानः हे अग्ने, प्रथयस्व पृथुर्भव। स्वार्थे णिच्। जन्तुभिः मनुष्यैरध्वर्युप्रभृतिभिः चीयमान इति शेषः। अस्मे अस्मासु च रायो धनानि धारयन् स्थापयन् प्रथयस्वेत्यनुपज्यते। हे अमर्त्य अमरणधर्मन्॥ १०९॥

**म०** हे अमरणधर्मन् हे अग्ने, रायो धनानि अस्मे अस्मासु त्वं प्रथयस्व विस्तारय। कीदृशस्त्वम्। जन्तुभिः प्राणिभिर्हविःप्रदैरध्वर्युप्रभृतिभिः इरज्यन् दीप्यमानः। किंच यस्त्वमीदृशो धनप्रथयिता स त्वं दर्शतस्य दर्शनीयस्य वपुषः चित्त्यामिरूपस्य शरीरस्य मध्ये विराजसि विशेषेण दीप्यसे। विभक्तिव्यत्ययो वा। दर्शतेन वपुषा ज्वालालक्षणेन शरीरेण विराजसि। सानसिं चिरन्तनं क्रतुं संकल्पं पृणक्षि पूरयसि सर्वेष्टं ददासीत्यर्थः॥ १०९॥

## दशोत्तरशततमी।

इ॒ष्क॒र्तार॑मध्व॒रस्य॒ प्रचे॑तसं॒ क्षय॑न्त॒ꣳ राध॑सो म॒हः। रा॒तिं वा॒मस्य॑ सु॒भगां॑ म॒हीमिषं॒ दधा॑सि सान॒सिꣳ र॒यिम्॥ ११०॥

**उ०** इष्कर्तारम् यं तमिष्कर्तारम् निरुपसर्गस्यादिलोपः। निश्चयेन कर्तारम् अध्वरस्य यज्ञस्य। प्रचेतसं प्रकृष्टप्रज्ञानम्। क्षयन्तम् 'क्षि निवासगत्योः'। क्षयन्तं निवसन्तम् राधसोमहः। राध इति धननाम। सप्तम्यर्थे षष्ठ्यौ। राधसि महति स्तुमः। स त्वं रातिं दानं दधासि। कस्य संबन्धिनीम् वामस्य वननीयस्य दातुः संबन्धिनीम्। कथंभूताम्। सुभगाम्। भगशब्दो धनवचनः। किंच महीमिषम् महतीं च इषं वृष्टिमन्नं वा दधासि। सानसिं पुराणं रयिं धनम् स्मर्यमाणविषयं निधानलक्षणं दधासि॥ ११०॥

**म०** हे अग्ने, अध्वरस्य यज्ञस्य इष्कर्तारं निस उपसर्गस्य नलोपः पूर्वमुक्तः (८३) निष्कर्तारं निश्चयेन कर्तारं यज्ञनिष्पादकं प्रचेतसं प्रकृष्टचित्तयुक्तं क्षयन्तम् 'क्षि निवासगत्योः' विशिष्टस्थाने निवसन्तमीदृशं यजमानं प्रति वामस्य वननीयस्य महो महतो राधसो धनस्य रातिं दानं त्वं दधासि ददासि। किंच सुभगां सुष्ठु भजनीयां महीं महतीमिषमन्नं च ददासि। सानसिं पुराणं रयिं धनमस्मर्यमाणविषयं निधानलक्षणं च दधासि निधिं दर्शयसीत्यर्थः॥११०॥

## एकादशोत्तरशततमी।

ऋ॒तावा॑नं महि॒षं वि॒श्वद॑र्शतम॒ग्निꣳ सु॒म्नाय॑ दधिरे पु॒रो जना॑ः। श्रुत्क॑र्णꣳ स॒प्रथ॑स्तमं त्वा गि॒रा दैव्यं॒ मानु॑षा यु॒गा॥ १११॥

**उ०** ऋतावानम्। यस्त्वामृतवानं सत्यवन्तं महिं महान्तम्। विश्वदर्शतम् सर्वस्य दर्शनीयम् अग्निम्। अन्यदेवतानिवृत्त्यर्थोऽग्निशब्दः। सुम्नाय यज्ञाय दधिरे स्थापितवन्तः। पुरोऽग्रतः आहवनीयात्मना जनाः यजमानाः तं त्वाम् श्रुत्कर्णम् शृणोत्याह्वानं श्रुत्वा चानुतिष्ठति यः स श्रुत्कर्णः। सप्रथस्तमं सर्वतः पृथुतम् उर्ध्वमधोऽनवच्छिन्नगतिविज्ञानम् गिरा वाचा स्तुत्या। दैव्यं देवम्। स्वार्थे यत्प्रत्ययः। मानुषा मनुष्याः। युगा। युगशब्दः कालवचनः। कालैर्निमित्तभूतैः पूर्णमास्यमावस्यादिभिराह्वयन्ति॥ १११॥

**म०** उपरिष्टाज्ज्योतिः। यस्यास्त्रयः पादा द्वादशाक्षराश्चतुर्थोऽष्टाक्षरः सोपरिष्टाज्ज्योतिः। मानुषा विभक्तेराकारः। मनुष्या जना मनुष्यजातियुक्ता जन्तव ऋत्विग्यजमानाः। युगा

विभक्तेराकारः । युगशब्दः कालवाची । युगैः कालैः पौर्णमासमावास्यादिभिर्निमित्तैः गिरा वेदवाचा कृत्वा सुम्नाय यज्ञाय त्वा त्वामग्निं पुरोऽग्रतः पूर्वभागे आहवनीयरूपेण दधिरे स्थापितवन्तः । किंभूतं त्वामृतवानमृतमस्यास्तीति ऋतवा तं सत्यवन्तम् । 'छान्दसो दीर्घः । छन्दसीवनिपौ वाच्यौ वंश्च मतुप् च' ( पा० ५ । २ । १०९ ) इत्यस्त्यर्थे वन्प्रत्ययः । महिषं महान्तं विश्वदर्शतं सर्वस्य दर्शनीयं श्रुत्कर्णं शृणुत इति श्रुतौ क्विप् । श्रुतौ कर्णौ यस्य तम् । यद्विज्ञाप्यते तत्सत्यमेव कर्णाभ्यां श्रुत्वा संपादयतीत्यर्थः । सप्रथस्तमं प्रथनं प्रथः कीर्तिः । 'प्रथ प्रख्याने' अस्मादसुन्प्रत्ययः । प्रथसा सह वर्तमानः सप्रथाः अतिशयेन सप्रथाः सप्रथस्तमस्तमतिकीर्तिमन्तम् । दैव्यं देव एव दैव्यस्तं स्वार्थे यत् । यद्वा देवेभ्यो हितम् ॥ १११ ॥

## द्वादशोत्तरशततमी ।

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ ११२ ॥

**उ०** सिकता अभिमृशति । आप्यायस्व । तिस्रः सौम्याः गायत्रीत्रिष्टुप्उष्णिहः वा गायत्र्यः द्वाभ्यां विनियोगः । आप्यायस्व आत्मानमभिवर्धय । कथं कृत्वा । समेतु ते । समागच्छतु तव विश्वतः सर्वतः हे सोम, वृष्ण्यं सर्वभूतबीजम् । ततस्त्वं सर्वभूतोत्पत्तिना वृष्ण्येन भव । वाजस्यान्नस्य सङ्गथे सङ्गमने । अन्नभावं प्राप्नुहि अन्नं वा प्राप्नुहि ॥ ११२ ॥

**म०** 'आप्यायस्वेति सिकतालम्भनमृग्भ्याम्' ( का० १७ । ३ । १६ ) । आत्मनि विस्तारिताः सिकताः स्पृशति ऋग्द्वयेन । गोतमदृष्टाः सोमदेवत्यास्तिस्रो गायत्रीत्रिष्टुबुष्णिक्छन्दस्काः 'आप्यायस्व मदिन्तम' ( ११४ ) इति तृतीयस्या विनियोगः सूत्रे नास्ति । हे सोम, विश्वतः सर्वस्मात् वृष्ण्यं वीर्यं सर्वभूतोत्पत्तिकृद्बीजं ते तव समेतु समागच्छतु । तेन च वीर्येण त्वमाप्यायस्व सर्वतो वर्धस्व । किंच वाजस्यान्नस्य संगथे सङ्गमननिमित्तं भव । अन्नमस्मासु सङ्गमयेत्यर्थः ॥ ११२ ॥

## त्रयोदशोत्तरशततमी ।

सं ते पयांꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांꣳस्युत्तमानि धिष्व ॥ ११३ ॥

**उ०** सं ते पयांसि । संयन्तु ते तव पयांसि रसाः सारभूताः संयन्तु च वाजाः अन्नानि । संयन्तु च वृष्ण्यानि रेतांसि । अभिमातिषाहः पाप्मनोऽभिभवतु सोमस्य ततः तैः पयोन्नवृष्ण्यैः आप्यायमानः अमृताय भव । प्रजायै अमरणधर्मिण्यै भव । 'प्रजायां तदमृतं दधाति तस्मात्प्रजातिरमृता' इति श्रुतिः । हे सोम, ततो दिवि द्युलोके श्रवांसि चन्द्ररूपाणि उत्तमानि आहुतिपरिणामजनितानि । धिष्व धारयस्व ॥ ११३ ॥

**म०** हे सोम, पयांसि पातव्या रसाः ते तव संयन्तु सङ्गच्छन्ताम् । उत अपिच वाजा अन्नानि संयन्तु वृष्ण्यानि रेतांसि ते संयन्तु । कीदृशस्य ते । अभिमातिषाहः अभिमातिं पाप्मानं सहतेऽभिभवतीत्यभिमातिषाट् तस्याभिमातिसाहः । षत्वं छान्दसम् । हे सोम, पयोऽन्नवृष्ण्यैराप्यायमानः वर्धमानः सन् अमृताय अमरणधर्मिण्यै प्रजायै पुत्रादिवृद्ध्यै यजमानस्य भवेति शेषः । अमृतशब्देन श्रुत्या प्रजातिर्व्याख्याता । तथाच श्रुतिः 'प्रजायां तदमृतं दधाति तस्मात्प्रजातिरमृतेति' ( ७ । ३ । १ । ४६ ) । किंच दिवि द्युलोके उत्तमानि उत्कृष्टानि श्रवांसि अन्नानि आहुतिपरिणामजनितानि धिष्व धारय संपादय । लोकद्वयभोगं संपादयेत्यर्थः । 'धि धारणे' तुदादिः विकरणव्यत्यय आत्मनेपदं च छान्दसम् 'बहुलं छन्दसि' (पा० २ । ४ । ७३) इत्युक्ते 'सुधितवसुधित' ( पा० ७ । ४ । ४५ ) इति सूत्रेण दधातेर्निपातो वा धत्स्वेत्यर्थे ॥ ११३ ॥

## चतुर्दशोत्तरशततमी ।

आप्यायस्व मदिन्तम सोम विश्वेभिरꣳशुभिः । भवा नः सप्रथस्तमः सखा वृधे ॥ ११४ ॥

**उ०** आप्यायस्व । हे सोम, त्वमात्मानमाप्यायस्व । मदिन्तम मदयितृतम । यद्वा मदोऽस्यास्तीति मदी अतिशयेन मदी मदिन्तमः । 'नाद्घस्य' इति नुट् । विश्वेभिः सर्वैरंशुभिः । ततः समर्थः सन् भव नः अस्माकम् सप्रथस्तमः सखा । सर्वतः प्रथयितृतमः सखा । वृधे वर्धनाय ॥ ११४ ॥

**म०** हे मदिन्तम, मदयति तर्पयतीति मदी । ग्रहादित्वाणिनिप्रत्ययः ( पा० ३ । १ । १३४ ) । यद्वा मदस्तृप्तिरस्यास्तीति मदी 'अत इनिठनौ' (पा० ५ । २ । ११५) इतीन् अतिशयेन मदी मदिन्तमः ( पा० ८ । २ । १७ ) इति नान्तात्परस्य तमपो नुडागमः । ईदृश हे सोम, विश्वेभिर्विश्वैः सर्वैरंशुभिः सूक्ष्मांशैः आप्यायस्व प्रवृद्धो भव । वृद्धः सन्नोऽस्माकं वृधे वर्धनाय सखा सहायो भव । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५) इति संहितायां दीर्घः । कीदृशस्त्वम् । सप्रथस्तमः अत्यन्तं सप्रथाः सकीर्तिः सप्रथस्तमः ॥ ११४ ॥

## पञ्चदशोत्तरशततमी ।

आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वां कामया गिरा ॥ ११५ ॥

**उ०** हौत्रम् । आ ते वत्सः । आग्नेय्यस्तिस्रो गायत्र्यः । हे अग्ने, आयमत् गृहीतवान् ते तव वत्सः पयोजीवन-

सामान्याद्यजमानो वत्स उक्तः । स हि पयोव्रतो भवति । मनः अन्तःकरणम् परमाचित्सधस्थात् । चिच्छब्दोऽप्यर्थे । परमादपि सहस्थानात् आहत्येति शेषः । सहस्थानं देवैः समानं स्थानं द्युलोकोऽग्नेः केन वत्सो मन आयमदित्यत आह । त्वांकामया । त्वां स्तोतुं कामयमानया गिरा वाचा ॥ ११५ ॥

**म०** 'श्वेतेऽश्वे पुरस्तात्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुह्यग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति' ( का० १७ । ३ । २०—२१ ) । श्वेतवर्णेऽश्वेऽन्यवर्णे तदभावे वृषे वा तिष्ठति सति अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति प्रेषितो होता आते वत्स इति तृचमनुवक्तीति सूत्रार्थः । अग्निदेवत्यास्तिस्रो गायत्र्यः आद्यावत्सारदृष्टा द्वितीया विरूपदृष्टा तृतीया प्रजापतिदृष्टैव । हे अग्ने, ते तव वत्सः पयोव्रतत्वाद्वत्ससमत्वप्रियो यजमानः परमाच्चित् । चिदप्यर्थे । उत्कृष्टादपि सधस्थात्सहस्थानात् द्युलोकात् मन आहत्येति शेषः । आयमत् आयच्छति गृह्णाति मनोनिग्रहं करोतीत्यर्थः । 'इतश्च लोपः' (पा० ३ । ४ । ९७ ) इति इकारलोपे यमदिति रूपम् । 'इषुगमियमां छः' (पा० ७ । ३ । ४७ ) इति छत्वाभावश्छान्दसः । कया गिरा वेदवाचा मन आहत्येत्यर्थः । कीदृश्या गिरा । त्वांकामया त्वां कामयते स्तोतुमिच्छतीति त्वांकामा तया अलुक् । देवैः सह तिष्ठति यस्मिन्नग्निः तत्सधस्थं द्युलोकः 'सधमाद–' ( पा०६ । ३ । ९६ ) इति सहस्य सधादेशः ॥ ११५ ॥

## षोडशोत्तरशततमी ।

तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥ ११६ ॥

**उ०** तुभ्यं ताः । तुभ्यं हवींषि दत्वा यजमानैः ततोऽनन्तरम् ताः स्तुतयः हे अङ्गिरस्तम । अन्नं गिरतीत्यङ्गिरस्तमस्तस्य संबोधनं हे अङ्गिरस्तम । विश्वाः सर्वाः सुक्षितयः शोभननिवसनाः । स्थानकरणानुप्रदानवत्यो देवताः याथात्म्यसंतानचिन्तनगर्भाः पृथक् नानाभूताः हे अग्ने, कामय कामपरिपूरणार्थम् त्वय्येव येमिरे । कर्मणि लकारः । नियम्यन्ते स्तुतयः ॥ ११६ ॥

**म०** हे अङ्गिरस्तम, अन्यते जीव्यते येनेत्यन् अन्नम् 'अन् प्राणने' क्विप् । अन् अन्नं गिरति अत्तीत्यङ्गिराः अतिशयेनाङ्गिरा अङ्गिरस्तमः हे अग्ने, पृथक् नानाभूताः विश्वाः सर्वाः ताः प्रसिद्धाः स्तुतयः कामायाभिलाषपूरणाय तुभ्यं त्वयि येमिरे नियम्यन्ते । यजमानैरिति शेषः । कर्मणि लिट् । कीदृश्यः । सुक्षितयः शोभनाः क्षितयो निवासा याभ्यस्ताः । स्वर्गादिशुभस्थानप्रदा इत्यर्थः । यजमाना इह कामपूर्त्यै द्युलोकाप्त्यै च मन्त्रैस्त्वामेव स्तुवन्तीति भावः ॥ ११६ ॥

## सप्तदशोत्तरशततमी ।

अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य । सम्राडेको विराजति ॥ ११७ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां द्वादशोऽध्यायः ॥ १२ ॥

**उ०** अग्निः प्रियेषु । योऽग्निः प्रियेष्वभिरुचितेषु धामसु स्थानेष्ववस्थितानाम् कामः कामपूरकः सः भूतस्योत्पन्नस्य प्राणिजातस्य भव्यस्य भविष्यतश्च । सम्राट् सङ्गतराज्यभावः सन् एकएवासहायः विराजति इष्टे अधिपतिः विविधं दीप्यते ॥ ११७ ॥

इति उवटकृतौ मन्त्रभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

**म०** अग्निः प्रियेषु अभिरुचितेषु धामसु स्थानेषु धिष्ण्येषु एकोऽसहायभूतः सन् विराजति विशेषेण दीप्यते । कीदृशोऽग्निः । भूतस्योत्पन्नस्य भव्यस्य भविष्यतश्च जनस्य कामः कामपूरकः । सम्राट् सम्यक् राजमानः शोभमानः । भूतस्य भव्यस्य सम्राडीश्वर इति वा । काम्यते सर्वैरिष्टमिष्यत इति काम इति वा ॥ ११७ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
रुक्मादिवाचनान्तोऽयं द्वादशोऽध्याय ईरितः ॥ १२ ॥

---

# त्रयोदशोऽध्यायः ।

## तत्र प्रथमा ।

मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मामु देवताः सचन्ताम् ॥ १ ॥

**उ०** मयि गृह्णामीति यजमानो जपति । मयि गृह्णामि आग्नेयी ककुप् । मयि आत्मनि गृह्णामि अग्रे प्रथमम् । अग्निं दर्शनेन । ततोऽग्निं चिनोमीति शेषः । किमर्थम् । रायस्पोषाय । धनपोषाय । सुप्रजास्त्वाय सुवीर्याय । वीर्यं शक्तिः । किंच मामु देवताः सचन्ताम् । मामेव देवताः सेवन्ताम् अग्निमिव ॥ १ ॥

**म०** द्वादशेऽध्याये उखाधारणगार्हपत्यचयनक्षेत्रकर्षणौषधवपनादिमन्त्रा उक्ताः त्रयोदशे पुष्करपर्णाद्युपधानमन्त्रा उच्यन्ते । 'उत्तरवेदिमपरेण तिष्ठन्यजमानो मयि गृह्णामीति जपति' ( का० १७ । ३ । २७ ) उत्तरवेदेः पश्चात्तिष्ठन्यजमानो जुहोति । अग्निदेवत्या ककुप् । यस्या मध्यपादो द्वादशक आद्यतृतीयावष्टकौ सा ककुप् । अत्र मध्यश्चतुर्दशकस्तेन द्व्यधिका । अहं यजमानोऽग्रे प्रथमं मयि आत्मनि अग्निं गृह्णामि धारयामि ततोऽग्निं चिनोमीति शेषः । किमर्थम् । रायो धनस्य पोषाय पुष्ट्यर्थम् । सुप्रजास्त्वाय शोभना प्रजा यस्य स सुप्रजाः सुप्रजसो भावः सुप्रजस्त्वं तस्मै । दीर्घश्छान्दसः । शोभनपुत्रादि-

निष्पत्त्यै । सुवीर्याय शोभनसामर्थ्याय वीर्यं शक्तिः । किंच उकारोऽप्यर्थे । देवता अपि मां सचन्तां सेवन्तां सङ्गच्छन्ताम् । उ एवार्थे वा । देवता मामेव सचन्ताम् ॥ १ ॥

## द्वितीया ।

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् । वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥ २ ॥

उ० पुष्करपर्णमुपदधाति । अपां पृष्ठमसि । व्याख्यातम् ॥ २ ॥

म० 'पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत्' (का० १७। ४। १)। ततोऽध्वर्युः कुशस्तम्बोपरि कमलिनीपत्रमुपदधाति पूर्ववदित्युखासंभरणवत् तेनापां पृष्ठमिति मन्त्रेण पुष्कर इत्यन्तेनोपधानं दिवो मात्रयेति तस्य मार्जनमिति सूत्रार्थः व्याख्यातः (११। २९) ॥ २ ॥

## तृतीया ।

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ३ ॥

उ० रुक्ममुपदधाति । ब्रह्मजज्ञानम् त्रिष्टुप् आदित्यदेवत्या । ब्रह्मलक्षण अदित्यः जज्ञानं यजमानः प्रथमं पुरस्तात् प्राच्यां दिशि जायते । ततोऽनन्तरं वि सीमतः सुरुचो वेन आवः व्यावः व्यावृणोत् विवृतानकरोत् स्वप्रकाशेन । सीमतः मध्यतो मर्यादातः । सुरुचः सुरोचनानिमान् लोकान् । वेनः कान्तो मेधावी वा आदित्यः । सएवच । बुध्न्याः बुध्नमन्तरिक्षं तत्र भवा दिशो बुध्न्याः । उपमाः उपमीयन्ते आसु स्थितानि भूतानीत्युपमा दिशः । अस्य विष्ठाः । अस्य जगतः विविधं स्थानमिति विष्ठा दिशः । सतश्च योनिः विद्यमानस्य च मूर्तस्य स्थानम् असतश्च अमूर्तस्य वाय्वादेः योनिम् । विवः विवृणोति । आदित्य एव लोकान्दिशो भूतानि चाभिव्यनक्ति नान्य इति स्तूयते स्वकीयेन कर्मणा ॥ ३ ॥

म० 'तस्मिन्रुक्ममधःपिण्डं ब्रह्म जज्ञानमिति' (का० १७। ३। २९)। तस्मिन्पुष्करपर्णे पूर्वं कण्ठधृतं रुक्ममधःपिण्डमुपदधाति । आदित्यदेवत्या त्रिष्टुप् । वीत्युपसर्ग आव इति क्रियापदेन संबध्यते 'व्यवहिताश्च' (पा० १। ४। ८२) इति पाणिनिस्मरणात् । ब्रह्म बृहत् रुक्मरूपोऽयमादित्यः सीमतः सीमानं मर्यादां भूगोलमध्यभागमारभ्य सुरुचः सुष्ठु रोचन्ते शोभन्ते तान् सुरोचनानिमान् लोकान् वि आवः विवृतानकरोत्स्वप्रकाशेन । कीदृशं ब्रह्म । प्रथममादौ पुरस्तात्पूर्वस्यां दिशि जज्ञानं जायमानं दृश्यमानम् । जनेः शानचि शपः श्लौ सति जज्ञानमिति रूपम् । किंच वेनः कामनीयो मेधावी वा स आदित्यः बुध्न्या बुध्नमन्तरिक्षं तत्र भवा बुध्न्या दिशः विवः विवृणोति । सतो विद्यमानस्य मूर्तस्य घटपटादेर्योनिं स्थानमसतोऽमूर्तस्य वाय्वादेश्च योनिं प्रभवं विवः प्रकाशयति । वृणोतेः शपि लुप्ते लङि गुणे च व इति रूपम् अडभाव आर्षः । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६। ४। ७५) इति वचनात् । कीदृशीर्बुध्न्याः । उपमाः उप समीपे मान्ति भूतानि यासु ता उपमाः । सावकाशा इत्यर्थः । अतएवास्य जगतो विष्ठाः विविधस्थानभूताः विविधं तिष्ठन्ति यासु ताः । 'अम्बाम्बगोभूमि–' (पा० ८। ३। ९७) इत्यादिना षत्वम् । आदित्य एव लोकान् दिशो भूतानि चाभिव्यनक्तीत्यर्थः ॥ ३ ॥

## चतुर्थी ।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ४ ॥

उ० पुरुषमुपदधाति द्वाभ्यां त्रिष्टुब्भ्याम् । स प्रजापतिः सो अग्निः अधियज्ञं स यजमानः । हिरण्यगर्भः यो हिरण्यगर्भाख्यः पुरुषः । समवर्तताग्रे समभवदग्रे प्रथमम् शरीरी यश्च भूतस्योत्पन्नस्य प्राणिजातस्य जातः जातमात्रः सन् पतिरीश्वर एक एवासीत् अभूत् । स दाधार । तदः स्थाने यदोवृत्तिरर्थसंभवात् । यश्च दाधार धारयति । पृथिवीमन्तरिक्षमप्युच्यते । पृथिवी भूः येयं भूरित्यादेरन्तरिक्षनामसु पठितत्वात् । द्यां द्युलोकं च । उत अपि इमां पृथिवीम् । तस्मै कस्मै काय इति प्राप्ते स्मै आदेशश्छान्दसः । प्रजापतये देवाय । हविषा विधेम हविर्देद्म इति विभक्तिव्यत्ययः ॥ ४ ॥

म० 'उत्तानं प्राञ्चꣳहिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इति (का० १७। ४। ३)। तस्मिन्रुक्मे प्राञ्चमुत्तानं हिरण्यं पुरुषाकारमृग्द्वयेनोपदधाति । हिरण्यगर्भदृष्टा प्रजापतिदेवत्या त्रिष्टुप् । हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः भूतस्य प्राणिजातस्याग्रे समवर्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव । स च जातः उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पतिरीश्वर आसीत् स एव पृथिवीमन्तरिक्षं द्यां द्युलोकमुतापि चेमां भूमिं लोकत्रयं दाधार धारयति 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६। १३। ७) इत्यभ्यासदीर्घः । पृथिवी भूः स्वयंभूरित्यन्तरिक्षनामसु पठितत्वात्पृथिवीशब्देनान्तरिक्षलोकोऽत्रोच्यते । कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः । विभक्तिव्यत्ययः ॥ ४ ॥

## पञ्चमी।

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः। समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः॥ ५॥

उ० द्रप्सश्चस्कन्द। अस्यामृच्यादित्यो यथा सर्वं बिभर्ति पालयति च स तथोच्यते। य आहुतिपरिणामरसनिधानभूतो द्रप्स आदित्यः चस्कन्द पृथिवीम् उदकरूपेण पृथिवीं स्कन्दति मनुष्यादिधारणाय। यश्च द्युलोकमनुस्कन्दति आहुतिपरिणामभूतेन रसेन दिवादिधारणाय। इमं च योनिमनु यश्च पूर्वः यश्च इमं लोकं स्कन्दति आहुतिग्रहणाय। यश्च अनुस्कन्दति पूर्वयोनिममुं लोकं सुकृतिनां तर्पणाय। तमेवं समानं योनिं स्थानम् अनुसंचरन्तं द्रप्समादित्यं जुहोमि स्थापयामि। अनु सप्तहोत्राः सप्तस्वपि दिक्षु। 'असौ वा आदित्यो द्रप्सो दिशः सप्तहोत्रा अमुमादित्यं दिक्षु प्रष्ठापयन्ति' इति श्रुतिः। तिर्यक् चतस्रो दिशः अध एका उपर्येका मध्य एका एताः सप्तदिशः॥ ५॥

म० देवश्रवोदृष्टादित्यदेवत्या त्रिष्टुप्। यः पूर्वः प्रथमो मुख्यो द्रप्स आदित्यः पृथिवीमन्तरिक्षमनुचस्कन्द अनुस्कन्दति गच्छति सिञ्चतीत्यर्थः। मनुष्यादिधारणाय। यां द्युलोकं चानुसिञ्चति आहुतिपरिणामभूतेन रसेन देवादिधारणाय। य इमं योनिं स्थानं भूलोकमनुस्कन्दति आगच्छति आहुतिग्रहणाय। एवं समानं योनिं सर्वेषां तुल्यं स्थानं लोकत्रयमनु संचरन्तं द्रप्समादित्यं सप्त होत्रा अनु जुहोमि। विभक्तिव्यत्ययः। सप्तसु होत्रासु दिक्षु स्थापयामि हिरण्यपुरुषरूपेण सर्वदिक्षु सूर्यमेव स्थापयामीत्यर्थः। 'असौ वा आदित्यो द्रप्सो दिशः सप्तहोत्रा अमुमादित्यं दिक्षु प्रतिष्ठापयति' ( ७। ४। १। २० ) इति श्रुतेः। पूर्वादिचतस्रो दिशः अध एका उपर्येका मध्ये चैकेति सप्त दिशो ज्ञेयाः॥ ५॥

## षष्ठी।

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ ६॥

उ० सर्पान् नामभिरुपतिष्ठते। नमोस्तु। तिस्रोऽनुष्टुभः सर्पदेवत्याः। लोका वा सर्पाः। नमस्कारोस्तु सर्पेभ्यः ये के च पृथिवीमनु व्यवस्थिताः ये चान्तरिक्षे ये च दिवि व्यवस्थिताः तेभ्यः सर्पेभ्यो नमस्कारोस्तु॥ ६॥

म० 'उपतिष्ठते यजमानो नमोऽस्त्विति' ( का० १७। ४। ६ ) यजमानो हिरण्यपुरुषं पश्यन्नृक्त्रयं पठेत्। सर्पदेवत्यास्तिस्रोऽनुष्टुभः। ये के च ये केचित् सर्पन्ति सर्पा लोकाः पृथिवीमनुगताः तेभ्यः सर्पेभ्यो नमोऽस्तु नमस्कारो भवतु। अन्तरिक्षे लोके ये वर्तमानाः सर्पाः ये च दिवि द्युलोके ये वर्तमानाः सर्पास्तेभ्यः सर्पेभ्यो नमोऽस्तु। 'इमे वै लोकाः सर्पाः' ( ७। ४। १। २५ ) इति श्रुतेः सर्पशब्देन लोका उच्यन्ते॥ ६॥

## सप्तमी।

या इषवो यातुधानानां ये वा वनस्पतीꣳरनु। ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः॥ ७॥

उ० या इषवः यानि काण्डानि। यातुधानानां यातनां दुःखं ये दधति ते यातुधाना रक्षःप्रभृतयः। ये च वनस्पतीन् अनु व्यवस्थिताः ये च अवटेषु बिलेषु शेरते आसते तेभ्यः सर्पेभ्यो नमः॥ ७॥

म० यातुं यातनां दुःखं दधति ते यातुधाना रक्षःप्रभृतयस्तेषां याः सर्पजातय इषवो बाणरूपेण वर्तन्ते ये वान्ये वनस्पतीन् चन्दनादिवृक्षाननुवेष्ट्य स्थिताः ये वा ये चान्ये अवटेषु बिलेषु शेरते स्वपन्ति तेभ्यः सर्पेभ्यो नमोऽस्तु॥ ७॥

## अष्टमी।

ये वामी रोचने दिवो ये वा सूर्यस्य रश्मिषु। येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः॥ ८॥

उ० ये वा येच अमी। प्रत्यक्षान्दूरतो निर्दिशति सर्पान्। रोचने दिवः। 'रोचनो ह नामैष लोको यत्रैष एतत्तपति' इति श्रुतिः। येच सूर्यस्य रश्मिषु स्थिताः। येषां च अप्सु सदः कृतं उदके स्थानं कृतम् तेभ्यः सर्पेभ्यः नमः॥ ८॥

म० दिवो द्युलोकस्य रोचने दीप्तस्थाने ये वामी सर्पा अस्माभिरदृश्यमानाः सन्ति 'रोचनो ह नामैष लोको यत्रैष एतत्तपति' इति श्रुतिः। तथा सूर्यस्य रश्मिषु किरणेषु ये च सर्पा वसन्ति येषां सर्पाणामप्सु जलेषु सदः स्थानं कृतं तेभ्यः सर्पेभ्यो नमोऽस्तु॥ ८॥

## नवमी।

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँऽइभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः॥ ९॥

उ० जुहोति। कृणुष्वपाजः। पञ्च त्रिष्टुभ आग्नेय्यो रक्षोघ्न्यः। हे अग्ने, कृणुष्व पाजः। पाज इति बलनामसु पठितम्। कुरुष्व बलम् प्रसितिं न पृथ्वीम् 'प्रसितिः प्रसयनात्तन्तुर्वा जालं वा'। नकार उपमार्थीयः। उपरिष्टादुपचारः। अथ कोर्थः। कुरुष्व बलं वागुरामिव पृथिवीं। यद्वा जलमिव पृथु। ततो याहि राजेव। अमवान् अमात्यवान्भूत्वा अभ्यवनवान् वा। अभ्यमनं शत्रूणां भयादप्रतिपक्षकरणम्। गृहवान्वा भूत्वा। शत्रून्प्रति याहि। इभेन इभभवेन बलेन। यद्वा। इभेन हस्तिना। गत्वा

च । तृष्वीमनु प्रसितिं द्रूणानः । तृष्व्या प्रसित्येति विभक्तिव्यत्ययः । द्रूणान इति हिंसाकर्मा । यतश्च त्वं तृष्व्या क्षिप्रया प्रसित्या तन्तुना जालेन वा द्रूणानो हिंसन् अस्ता असि क्षेप्ता असि विकटः कृतास्त्रोसि अतो ब्रवीमि । विध्य ताडय । हिंद्धि रक्षसः । तपिष्ठैः तप्ततमैः प्रहारैः । यद्वा । अतीव तप्ततमैः अतिशयेन क्लेशकरैः ॥ ९ ॥

**म०** उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति प्रत्यृचं प्रतिदिशं परिसर्पम्' ( का० १७।४।७ )। आज्यं संस्कृत्य पञ्चगृहीतमादायात्मानमारुह्य पुरुषान्तिके उपविश्य प्रतिदिशं परिसृप्य परिसृप्य पुरुषोपरि पञ्चभिर्जुहोतीति सूत्रार्थः । वामदेवदृष्टा राक्षोघ्नाः प्रतिसराः अग्निदेवत्याः पञ्च त्रिष्टुभः । हे अग्ने, पाजः बलं कृणुष्व कुरुष्व । पाज इति बलनामसु पठितम् । तत्र दृष्टान्तः । पृथ्वीं विशालां प्रसितिं न प्रसितिमिव । प्रसितिर्जालम् 'प्रसितिः प्रसयनात्तन्तुर्वा जालं वा' ( निरु० ६।१२ ) इति यास्कोक्तेः । 'षिञ् बन्धने' प्रकर्षेण सीयन्ते बध्यन्ते पक्षिणो यया सा प्रसितिः ताम् । नकार इवार्थः । पक्षिग्रहणाय प्रसारितं जालमिव शत्रुग्रहणाय बलं प्रसारयेत्यर्थः । ततो राजेव नृप इवामवान् सहायवानिभेन गजेन याहि शत्रून्प्रति गच्छ । 'अम् गतौ भजने शब्दे' अमन्ति भजन्ति स्वामिन इत्यमाः सेवकास्तेऽस्य सन्तीत्यमवान् । पचाद्यजन्तादमशब्दान्मतुप्प्रत्ययः । हे अग्ने, अस्ता शत्रूणां क्षेप्तासि अतो रक्षसः राक्षसान् विध्य ताडय । 'व्यध ताडने' दिवादित्वाच्छ्यन् ग्रहादित्वात्संप्रसारणम् । कैः । तपिष्ठैः तापकतमैरायुधैः । तपन्ति संतापयन्तीति तप्तृणि अतितप्तृणि तपिष्ठानि तैः । 'तुरिष्ठेमेयःसु' ( पा० ६।४।१५४ ) इतीष्ठनि परे तृचो लोपः । कीदृशस्त्वम् । तृष्वीं प्रसितिम् विभक्तिव्यत्ययः । तृष्व्या क्षिप्रया प्रसित्या जालेन अनु द्रूणानः शत्रून्मारयन् 'द्रु हिंसायां' क्र्यादिः शानच् प्रत्ययः । द्रूणीतेऽसौ द्रूणानः ॥ ९ ॥

## दशमी ।

तव॑ भ्र॒मास॑ आशु॒या प॑त॒न्त्यनु॑स्पृश धृष॒ता शोशु॑चानः । तपू॑ᳬष्यग्ने जु॒ह्वा॒ पत॒ङ्गानस॑न्दितो॒ विसृ॑ज॒ विष्व॑गु॒ल्काः ॥ १० ॥

**उ०** तव भ्रमासः । हे अग्ने, य एते तव भ्रमासः भ्रमणा वातोद्धूता ज्वालासमूहाः आशुयाः आशवः स्थाने याः पतन्ति इतश्चेतश्च गच्छन्ति । तैः अनुस्पृश अभिमृश । धृषता धृष्टेन ज्वालासमूहेन शोशुचानः देदीप्यमानः । कान्यनुस्पृशेदित्यत आह । तपूंषि तापयितॄणि रक्षांसि । जुह्वा स्रुचा हूयमान इति शेषः । पतङ्गान्पतनूगगनानि रक्षांसि । किंच असंदितः 'दो अवखण्डने । अनवखण्डितश्च सन् विसृज विक्षिप विष्वक् विषु नानावचनः अञ्चतिर्गत्यर्थः । नानागमनाः तिर्यगूर्ध्वमधश्चेत्यर्थः । उल्काः रक्षोविघाताय ॥ १० ॥

हे अग्ने, तव ये भ्रमासः भ्रमा वातोद्धूता ज्वालासमूहाः पतन्ति इतस्ततो गच्छन्ति कीदृशा भ्रमाः । आशुया आशवः शीघ्रगमनाः । आशुशब्दात्परस्य जसः 'सुपां सुलुक्—' इत्यादिना यादेशः । तैर्भ्रमैः तपूंषि तपन्ति संतापयन्ति तानि तपूंषि तापयितॄणि रक्षांसि पतङ्गान् पतन्तः सन्तो गच्छन्तीति पतङ्गाः पिशाचास्तांश्चानुस्पृश । ज्वालाभिस्तान्दहेत्यर्थः । कीदृशस्त्वम् । धृषता धृष्णोतीति धृषन् तेन धृषता प्रगल्भेन धृष्टेन ज्वालौघेन शोशुचानः देदीप्यमानः अत्यन्तं शोचते शोशुच्यत इति शोशुचानः 'शुच दीप्तौ' इत्यस्माद्यङन्ताच्छानच्प्रत्ययः । तथा जुह्वा स्रुचा हूयमान इति शेषः । असन्दितः अखण्डितः । ईदृशः सन् विष्वक् सर्वत्र तिर्यगूर्ध्वमधश्च उल्काः ज्वाला विसृज रक्षोघाताय मुञ्चेत्यर्थः ॥ १० ॥

## एकादशी ।

प्रति॒ स्पशो॒ विसृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शो अ॒स्या अद॑ब्धः । यो नो॑ दू॒रे अ॒घश॑ᳬसो॒ यो अन्त्य॑ग्ने॒ माकि॑ष्टे॒ व्यथि॒राद॑धर्षीत् ॥ ११ ॥

**उ०** प्रतिस्पशः । अत्र तृतीयः पादः प्रथमं व्याख्यायते । यच्छब्दयोगात् । यो नो दूरे अघशंसः योऽस्माकं दूरे वसति अघशंसः पापस्योत्कीर्तको दुर्जनः । यो अन्तिके यश्च अन्तिके वसत्यघशंसः । तंप्रति स्पशः विसृज । 'स्पश बन्धने' स्पाशयतीति स्पशः प्रणिधीन् अध्यक्षान् विसृज प्रेरय । तूर्णितमः अतिशयेन त्वरन् । किंच भवा पायुः पालयिता । विशः जनपदजातेः । अस्या मदीयाया अदब्धः अनुपहिंस्यः । एवंच तवास्मदनुग्रहप्रवृत्तस्य सतः हे अग्ने, माकिः मा कश्चित् ते तव व्यथिः व्यथयिता शत्रुः आदधर्षीत् प्रत्यनीकोऽभूत् ११

**म०** नोऽस्माकं दूरे योऽघशंसः अघं पापं शंसतीच्छति अघशंसः अस्मद्द्रोही यो दूरे वसति यश्चान्ति समीपे अघशंसः हे अग्ने तं प्रति स्पशः 'स्पश बन्धने' स्पशयन्ति बध्नन्तीति स्पशो बन्धनकृतः प्रणिधीन्विसृज प्रेरय । अस्या अस्मदीयायाः विशः प्रजायाः पायुः पातीति पायुः पालको भव । कीदृशस्त्वम् । तूर्णितमः तूर्णं वेगोऽस्यास्तीति तूर्णी अत्यन्तं तूर्णी तूर्णितमः वेगवत्तरः । अदब्धः अनुपहिंसितः । हे अग्ने, एवमनुग्रहं प्रवृत्तस्य ते तव मा किः मा कश्चित् व्यथिः व्यथयतीति व्यथिः व्यथकः शत्रुरादधर्षीत् धार्ष्ट्यं मा करोतु । दूरसमीपस्थानस्थाञ्छत्रून्प्रति त्वरतो बन्धकान्प्रेरय केनाप्यहिंसितोऽस्मत्प्रजापालको भव । राक्षसाश्च त्वां प्रति धृष्टा मा सन्त्वित्यर्थः । धृष धातोर्लुङि द्वित्वमडभावश्च मायोगात् ॥ ११ ॥

## द्वादशी ।

उद॑ग्ने तिष्ठ॒ प्रत्याऽऽत॑नुष्व॒ न्य॑मि॒त्राँ॒ऽओष॑तात्ति-

ग्महेते। यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ १२ ॥

उ० उदग्ने उत्तिष्ठ हे अग्ने, किंच प्रत्यातनुष्व प्रत्यातनुहि विस्तारय ज्वालाप्राग्भारान्। किंच न्यमित्रान् ओषतात् न्योषतात् निर्दह अमित्रान् शत्रून् हे तिग्महेते। हेतिरायुधम् तिग्म तेजतेरुत्साहकर्मणः। उत्साहवदायुधं यस्य स तथोक्तः। किंच। यश्च नः अस्मभ्यम् अरातिमदानं चक्रे न ददाति अश्रद्धालुः। हे समिधान नीचा नीचैःकृत्य तं धक्षि दह। अतसं न। अतसो वृक्षः। नकार उपमार्थीयः। वृक्षमिव शुष्कम् ॥ १२ ॥

हे अग्ने, त्वमुत्तिष्ठ ततः प्रत्यातनुष्व ज्वाला विस्तारय। तिग्मा हेतयो यस्य स तिग्महेतिः। तिग्मं तेजतेरुत्साहकर्मणः। तत्संबोधनं हे तिग्महेते उत्साहवदायुध, अमित्राञ्छत्रून् त्वं न्योषतान्नितरां दह। 'उष दाहे' 'तुह्योस्तातङ्–' ( पा० ७।१।३५ ) इति तातङादेशः। हे समिधान, समिन्द्धे दीप्यतेऽसौ समिधानः तत्संबुद्धौ हे समिधान दीप्यमान, नोऽस्माकं योऽरातिं चक्रे करोति दानं प्रतिषेधति तं नीचा नीचैः कृत्वा धक्षि दह। 'दह भस्मीकरणे' 'बहुलं छन्दसि' ( पा० २।४।७३ ) इति शपि लुप्ते लटि मध्यमैकवचने धक्षीति रूपम्। तत्र दृष्टान्तः। शुष्कमतसं न। न इवार्थः। अतसो वृक्षः शुष्कं वृक्षमिवादातारं निर्दहेत्यर्थः ॥ १२ ॥

## त्रयोदशी।

ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून्। अग्नेष्ट्वा तेजसा सादयामि ॥ १३ ॥

उ० ऊर्ध्वो भव ऊर्ध्वस्तिष्ठ। स्थित्वा च प्रतिविध्य प्रतिताडय। अध्यस्मत् अस्मत्त उपरि व्यवस्थितान्। किंच आविष्कृणुष्व प्रकाशीकुरुष्व दैव्यानि कर्माणि हे अग्ने। किंच अवस्थिरा तनुहि अवतनुहि अवतारय स्थिराणि धनूंषि। यातुजूनां यातुधानानां जवनप्रधानानाम्। किंच यज्ञस्य जामिमजामिम्। जामिशब्दः पुनरुक्तवचनः। पुनरुक्तमपुनरुक्तं कृत्वा। प्रमृणीहि। मृणतिर्मरणार्थः। प्रमारय शत्रून्। प्रथमां स्रुचमुपदधाति। आग्नेयेन यजुषा ऋचा वा अग्नेष्ट्वा। अग्नेः संबन्धिना तेजसा त्वां सादयामि हेस्रुक् ॥ १३ ॥

म० हे अग्ने, ऊर्ध्वो भव उद्युक्तो भव। अस्मदधि अस्माकमुपरि वर्तमानाञ्शत्रून्प्रतिविध्य प्रतिताडय। दैव्यानि देवसंबन्धीनि कर्माणि आविः कृणुष्व प्रकटय। किंच यातुजूनां यातुधानानां स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारय। किंच जाम्यजामिशब्दौ पुनरुक्तापुनरुक्तवचनौ। जामिमजामिं पुनरुक्तमपुनरुक्तं कृत्वा पुनःपुनस्ताडितमताडितं वा शत्रून् प्रमृणीहि। मृणातिर्मारणार्थः। रिपून् मारय। 'घृतपूर्णामग्नेष्ट्वेति' ( का० १७।४।१२ )। कार्ष्मर्यमयीं पादमात्रदीर्घां षडङ्गुलविपुलां घृतपूर्णां प्रागग्रां स्रुचमग्नेष्ट्वेति यजुषाग्निर्मूर्धेति ऋचा चोपदधाति। आग्नेयं यजुः। हे स्रुक् अग्नेः संबन्धिना तेजसा त्वा त्वां सादयामि ॥ १३ ॥

## चतुर्दशी।

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति। इन्द्रस्य त्वौजसा सादयामि ॥ १४ ॥

उ० अग्निर्मूर्धा व्याख्यातम्। द्वितीयामुपदधाति ऐन्द्रेण यजुषा। आग्नेय्या च त्रिष्टुभा। इन्द्रस्य त्वाम् ओजसा बलेन सादयामि ॥ १४ ॥

म० अग्निर्मूर्धेति व्याख्याता ( ३।१२ )। ( का० १७।४।१३ ) एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति। एवंविधमेवोदुम्बरीं दधिपूर्णां स्रुचमुत्तरे उपदधाति। इन्द्रस्य त्वेति यजुषा भुव इति ऋचा च। इन्द्रदेवत्यं यजुः। हे स्रुक् इन्द्रस्यौजसा तेजसा त्वां सादयामि स्थापयामि ॥ १४ ॥

## पञ्चदशी।

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ १५ ॥

उ० भुवो यज्ञस्य। चतुर्थः पादः प्रथमं व्याख्यायते अर्थसंबन्धात्। यदा जिह्वां ज्वालालक्षणां हे अग्ने, चकृषे करोषि। हव्यवाहं हविषो वोढ्रीम् अथानन्तरमेव भुवः भवसि। यज्ञस्य द्रव्यदेवतात्यागात्मनो नेता देवयानपितृयाणमार्गानुसारिणः। रजसश्चोदकस्य च यज्ञपरिणामभूतस्य नेता भवति जगदुत्पत्त्यर्थम्। कुत्र नेता भवसीत्यत आह। यत्र यस्मिन् स्थाने नियुद्भिः नियुद्गुणविशिष्टाभिरश्वाभिः शिवाभिः सहितं वायुं सचसे सेवसे। नियुतो वायोरित्यादिदृष्टोपयोजनानीति नियुद्भिर्वायुर्लक्ष्यते वायुनान्तरिक्षम्। यत्रच दिवि द्युलोके मूर्धानमादित्यं दधिषे धारयसि। स्वर्षा स्वः द्युलोकं सनोतीति स्वर्षा तां स्वर्षाम् तत्र भवसि। यज्ञस्य रजसश्च नेतेति। यस्य तवैतत्कर्म तं त्वां सादयाम इति शेषः ॥ १५ ॥

म० त्रिशिरोदृष्टाग्निदैवत्या त्रिष्टुप्। हे अग्ने, त्वं यदा हव्यवाहं हव्यं वहतीति हव्यवाट् तां हविषो वोढ्रीं जिह्वां ज्वालां चकृषे करोषि लडर्थे लिट्। तदा यज्ञस्य द्रव्यदेवतात्यागात्मनो नेता भुवः भवसि। रजसः यज्ञपरिणामरूपोदकस्य च नेता भवसि जगद्रक्षार्थम्। भवतेर्लेटि मध्यमैकवचने सिपि

'इतश्च लोपः-' ( पा० ३ । ४ । ९७ ) इति इकारलोपे 'लेटो-ऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्यडागमे 'अचि श्नुधातु-' ( पा० ६ । ४ । ७७ ) इत्युवङादेशे च कृते भुव इति रूपम् । कुत्र नेता भवसीत्यत आह । यत्र यस्मिन्स्थाने शिवाभिर्मङ्गलरूपाभिर्नियुद्भिरश्वाभिः त्वं सचसे संबन्धं प्राप्नोषि । नियुतो वायोरित्युक्तेर्नियुतो नाम वायोरश्वाः ताभिर्वायुर्लक्ष्यते वायुना चान्तरिक्षं लक्ष्यते । यत्र च दिवि मूर्धानमादित्यं दधिषे धारयसि । लिङ्लडर्थे । किंभूतं मूर्धानम् स्वर्षा स्वः स्वर्गं सनोति ददाति स्वर्षाः । 'षणु दाने' विट्प्रत्ययः । 'विड्वनोरनुनासिकस्यात्' ( पा० ६ । ४ । ४१ ) इति नकारस्याकारः । यद्वा स्वः स्वर्गे स्यति तिष्ठतीति स्वर्षाः तम् षोऽन्तकर्मणि क्विप् । अन्तरिक्षे द्युलोके च यज्ञस्य रजसश्च नेता भवसीत्यर्थः । यत्रेत्यस्य संहितायां 'निपातस्य च' (पा० ६ । ३ । १३६ ) इति दीर्घः । यस्य तवैतत्कर्म तं त्वां सुग्रूपेण सादयामीति शेषः ॥ १५ ॥

## षोडशी ।

ध्रुवासि धरुणास्तृता विश्वकर्मणा । मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृꣳह ॥ १६ ॥

उ० स्वयमातृण्णां पृथिवीसंस्तुतामिष्टकामुपदधाति । ध्रुवासीति तिसृभिर्ऋग्भिरूर्ध्वं बृहत्यनुष्टुप्प्रस्तारपङ्क्तिभिः विश्वस्मै प्राणायेत्यादिना यजुषा च । ध्रुवासि स्थिरासि । स्वतएव धरुणा च अन्येषां च धारयित्री । आस्तृता विश्वकर्मणा । उपहिता चासि विश्वकर्मणा प्रजापतिना सर्वस्य कर्त्रा । एवंचेदतो ब्रवीमि । मा त्वा समुद्र उद्वधीत् उद्वध्यात् । 'रुक्मो वै समुद्रः पुरुः सुपर्णः' इति श्रुतिः । त्वंच अव्यथमाना अचलन्ती पृथिवीं दृंह दृढीकुरु । आत्मसात्कुर्वित्यभिप्रायः ॥ १६ ॥

म० 'स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति' ( का० १७ । ४ । १५ ) । पुरुषोपरि ध्रुवेत्यादिकण्डिकाचतुष्टयेन स्वयमातृण्णामुपदधाति । कीदृशीम् । शर्करां पाषाणमयीं छिद्रां स्वाभाविकच्छिद्रयुताम् । सच्छिद्राश्ममयीष्टकैव स्वयमातृण्णोच्यत इति सूत्रार्थः । ऊर्ध्वबृहती । द्वादशाक्षरत्रिपादोर्ध्वबृहती । अत्र प्रथमत्रयोदशार्णस्तृतीयो दशार्णः । हे स्वयमातृण्णे' त्वं ध्रुवा स्थिरासि । कीदृशी त्वम् । धरुणा भूमिरूपेण विश्वस्य धारयित्री । विश्वं करोतीति विश्वकर्मा । तेन सर्वस्य कर्त्रा प्रजापतिना आस्तृता उपहिता । समुद्रो रुक्मः त्वा त्वां मा उद्वधीत् मा हन्तु । सुपर्णः पुरुषश्च त्वां मोद्वधीत् । 'रुक्मो वै समुद्रः पुरुषः सुपर्णः' (७ । ४ । २ । ५) इति श्रुतेः । समुद्रसुपर्णशब्दाभ्यां रुक्मपुरुषावुच्येते । त्वं चाव्यथमाना अचलन्ती सती पृथिवीं दृंह भूमिं दृढीकुरु ॥ १६ ॥

## सप्तदशी ।

प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन् । व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि ॥ १७ ॥

उ० प्रजापतिष्ट्वा प्रजापतिः त्वां सादयतु । स हि त्वामासादयितुं समर्थः । अपां पृष्ठे अपामुपरि । समुद्रस्य समुन्दनस्य उदकसंघातस्य एमन् एमनि । इणः मनिन् सप्तम्येकवचनम् अवस्थाने । कथंभूतामासादयतु । व्यचस्वतीं व्यंचनवतीम् प्रथस्वतीं पृथुत्वयुक्ताम् । त्वंचासादिता प्रजापतिना । प्रथस्व पृथ्वीभव । यतश्च पृथिव्यसि अतो ब्रवीमि ॥ १७ ॥

म० अनुष्टुप् । हे स्वयमातृण्णे प्रजापतिः त्वा त्वां सादयतु स्थापयतु । क्व अपां जलानां पृष्ठे उपरि । समुद्रस्य जलसङ्घातस्य एमन् एमनि अवस्थाने सादयतु । इणो धातोर्मनिन्प्रत्यये एमन्निति रूपम् 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति सप्तम्या लुक् । किंभूतां त्वाम् । व्यचस्वतीं व्यचनं व्यचस्तदस्या अस्तीति व्यचस्वती तामभिव्यक्तियुताम् । प्रथस्वतीं प्रथनं प्रथः पृथुत्वं तदस्या अस्तीति प्रथस्वती तां विस्तारयुक्ताम् । त्वमपि प्रजापतिसादिता सती प्रथस्व अस्माश्रितैः प्रथनं कुरु । यतस्त्वं पृथिव्यसि पृथिव्युत्पन्नत्वात् ॥ १७ ॥

## अष्टादशी ।

भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥ १८ ॥

उ० भूरसि भूमिरसि । अदितिरसि विश्वधायाः विश्वस्यां निहितमिति विश्वधायाः । विश्वस्य च भुवनस्य भूतग्रामस्य च धर्त्री धारयित्री । यतश्च त्वमियमेव अत इदमुक्तं भवति । पृथिवीं यच्छ आत्मानं निगृह्णीष्व । पृथिवीं दृंह आत्मानं दृढीकुरु । पृथिवीं माहिंसीः आत्मानं माहिंसीः ॥ १८ ॥

म० प्रस्तारपङ्क्तिः आद्यौ चेत्प्रस्तारपङ्क्तिरित्युक्तेर्यत्राद्यौ द्वादशकावन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः । अत्र त्वाद्य एकादशको द्वितीयस्त्रयोदशकस्तृतीयतुर्यौ पञ्चकौ पञ्चमः षडक्षरः एवं पञ्च पादाः । हे स्वयमातृण्णे, त्वं भूः सुखानां भावयित्र्यसि । भूमिः पृथिव्यसि । भूम्यभिमानिनी देवतासीत्यर्थः । अदितिर्देवमातासि । विश्वधायाः विश्वं दधाति पुष्णातीति विश्वधायाः विश्वं निहितमस्यामिति वा । विश्वस्य भुवनस्य सर्वस्य भूतग्रामस्य धर्त्री धारयित्री तादृशी त्वं पृथिवीं यच्छ नियतां कुरु । पृथिवीं दृंह दृढीकुरु । पृथिवीं मा हिंसीः पृथिव्या हिंसां मा कुरु ॥ १८ ॥

## एकोनविंशी ।

विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । अग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ १९ ॥

**उ०** विश्वस्मै प्राणाय सर्वस्मै प्राणार्थं । अपानाय व्यानाय उदानाय प्रतिष्ठायै चरित्राय चरणाय त्वां सादयामीति शेषः । अग्निः त्वाम् अभिपातु पालयतु मह्या महत्या स्वस्त्या अविनाशेन । छिर्दिषा शन्तमेन । गृहेण सुखतमेन हेतुभूतेन सादयति । तया देवतया । व्याख्यातम् ॥ १९ ॥

**म०** यजुः एकाधिकार्ष्यनुष्टुप् । हे स्वयमातृण्णे, विश्वस्मै सर्वस्मै प्राणायापानाय व्यानायोदानाय प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय प्रतिष्ठायै कीर्त्यै चरित्राय शास्त्रीयाचरणाय च । प्राणिनामेतत्सर्वसिद्ध्यर्थं त्वां सादयामीति शेषः । किंच मह्या महत्या स्वस्त्या योगक्षेमसंपत्त्या शन्तमेनात्यन्तं सुखकारिणा छर्दिषा गृहेण चाग्निस्त्वा त्वामभिपातु सर्वतो रक्षतु । तया देवतयानुगृहीता त्वं ध्रुवा स्थिरा सती सीदोपविश । अङ्गिरस्वदङ्गिरसां चयनानुष्ठाने यथा त्वं स्थिरस्थिता तद्वदिहोपविश ॥ १९ ॥

## विंशी ।

काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ २० ॥

**उ०** अग्निना दृष्टां दूर्वेष्टकामुपदधाति द्वाभ्यामनुष्टुब्भ्याम् । काण्डात्काण्डात् । भूमौ संबद्धं जटाभिः पर्वकाण्डमित्युच्यते । असंबद्धं परुः । काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । पर्वणः पर्वणश्च परि प्ररोहन्ती यथा शताङ्कुरांल्लभसि एवं नः अस्मान् हे दूर्वे, प्रतनु विस्तारय । पुत्रपौत्रनप्तृभिः शतसहस्रसंख्यैः ॥ २० ॥

**म०** 'मूलाग्रवर्ती दूर्वां तस्यां पुरस्ताद्भूमिप्राप्तां काण्डात्काण्डादिति'(का० १७।४।१८) तस्यां स्वयमातृण्णायां काण्डादिति ऋग्द्वयेन पुरस्ताद्भूमिगताग्रं मूलाग्रयुतां दूर्वामुपदधाति । अग्निदृष्टे दूर्वेष्टकादेवत्ये द्वे अनुष्टुभौ । मूलैर्भूसंबद्धं पर्वकाण्डं भूम्यसंबद्धं परुः । हे दूर्वे दूर्वेष्टके, काण्डात्काण्डात्प्रतिकाण्डं परुषः परुषः प्रतिपरुः भूमिसंबद्धासंबद्धेभ्यः सर्वपर्वभ्यः सकाशाद्यथा त्वं परि समन्तात्प्ररोहन्ती अङ्कुरवती वर्तसे । 'नित्यवीप्सयोः' (पा० ८।१।४) इति वीप्सार्थे काण्डपरुषोर्द्वित्वम् । एवेत्यव्ययमेवमित्यर्थे 'निपातस्य च' ( पा० ६।३।१३६ ) इति संहितायां दीर्घः । हे दूर्वे, एवं स्वाङ्कुरविस्तारवत्सहस्रेण शतेन च । सहस्रशतशब्दावसंख्यार्थौ । असंख्यैः पुत्रपौत्रनप्त्रादिभिर्नोऽस्मान् प्रतनु विस्तारय ॥ २० ॥

## एकविंशी ।

या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥ २१ ॥

**उ०** या शतेन । या त्वं शतेन काण्डानां प्रतनोषि पृथिवीं सहस्रेण चाङ्कुराणां विरोहसि । तस्यास्तव हे इष्टके विधेम स्थानं हविषा सह वयम् ॥ २१ ॥

**म०** हे देवि दीप्यमाने हे इष्टके, या त्वं शतेन काण्डानां प्रतनोषि विस्तारयसि, सहस्रेण चाङ्कुराणां विरोहसि विविधं प्ररूढा भवसि । वयं हविषा सह ते स्थानं विधेम परिचरेम ॥ २१ ॥

## द्वात्रिंशी ।

यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः । ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥ २२ ॥

**उ०** द्वियजुषमुपदधाति इन्द्राग्निभ्यां दृष्टाभ्यां द्वाभ्यामनुष्टुब्भ्यामग्निलिङ्गोक्तदेवताभ्याम् । यास्ते अग्ने । यास्ते तव हे अग्ने, सूर्येऽवस्थिता रुचो दीप्तयः दिवं द्युलोकम् आतन्वन्ति प्रकाशयन्ति रश्मिभिः । ताभी रुग्भिः सर्वाभिः नोऽस्मान् अस्मिन्नद्यवि रुचे रोचनाय कृधि कुरु । जनाय नस्कृधि । जनानां च भोक्तॄन् अस्मान् कृधि ॥ २२ ॥

**म०** 'यास्त इति द्वियजुषं द्वितीये' ( का० १७।४।२० ) । दूर्वेष्टकापुरस्ताद्द्वितीये पद्यालोके यास्त इति ऋग्द्वयेन द्वियजुःसंज्ञां पद्येष्टकामुपदधाति इति सूत्रार्थः । इन्द्राग्निदृष्टे अग्निदेवत्ये द्वे अनुष्टुभौ । हे अग्ने, याः ते तव रुचः दीप्तयः सूर्ये सूर्यमण्डले वर्तमानाः सत्यः दिवं द्युलोकमातन्वन्ति प्रकाशयन्ति रश्मिभिः सरूपभूतैः किरणैः । ताभिः सर्वाभिः रुग्भिः नोऽस्मान् रुचे रोचनाय शोभायै अद्यास्मिन्द्यवि कृधि कुरु । जनाय पुत्रपौत्रादिकाय च कुरु । द्युलोकप्रकाशिकाः सर्वाः कान्तीः पुत्रांश्चास्मभ्यं देहीत्यर्थः । यद्वा विभक्तिव्यत्ययः । नोऽस्माकं जनाय जनं पुत्रादिकं ताभिः रुग्भिः रुचे शोभायै कुरु । जगत्प्रसिद्धं पुत्रादिकं देहीत्यर्थः ॥ २२ ॥

## त्रयोविंशी ।

या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ॥ २३ ॥

**उ०** या वो देवाः या वः युष्माकं हे देवा, सूर्ये रुचः दीप्तयः गोषु अश्वेषु या रुचः । हे इन्द्राग्नी, हे बृहस्पते, ताभिः सर्वाभिः रुग्भिः रुचम् नः अस्मभ्यं धत्त ॥ २३ ॥

म० हे देवाः, हे इन्द्राग्नी, हे बृहस्पते, वो युष्माकं संबन्धिन्यो या रुचः दीप्तयः सूर्ये सूर्यमण्डले सन्ति गोषु धेनुषु अश्वेषु तुरगेषु च या युष्माकं रुचः सन्ति ताभिः सर्वाभिः रुग्भिः कृत्वा योऽस्मभ्यं रुचं धत्त दत्त। तत्समप्रभानस्मान्कुरुतेत्यर्थः॥ २३॥

## चतुर्विंशी।

विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत्॥ प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम्। विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ। अग्निष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद॥ २४॥

उ० रेतःसिचावुपदधाति। विराट् ज्योतिरधारयत्। विराडयं लोकः स इममग्निं ज्योतिर्धारयति। द्वितीयामुपदधाति। स्वराट् ज्योतिः अधारयत्। असौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्धारयति। विश्वज्योतिषमुपदधाति। प्रजापतिः प्रजापतिस्त्वां सादयतु। पृष्ठे पृथिव्याः उपरि पृथिव्याः। ज्योतिष्मतीं ज्योतिषा संयुक्ताम्। किमर्थम्। विश्वस्मै सर्वस्मै प्राणाय अपानाय व्यानाय। किंच। विश्वं ज्योतिर्यच्छ निगृह्णीष्व। अग्निश्च तवाधिपतिः। सादयति। तया देवतयाङ्गिरस्वद्ध्रुवासीद। व्याख्यातम्॥ २४॥

म० 'विराट् स्वराडिति रेतःसिचौ प्रतिमन्त्रम्' (का० १७।४।२२)। द्वियजुषः पूर्वे अव्यवहिते रेतःसिचौ द्वे पयेष्टके प्राग्लक्षणे अनूकमभितो विराट् स्वराडिति प्रतिमन्त्रमुपदधाति विराडित्युत्तरां स्वराडिति दक्षिणामिति सूत्रार्थः। द्वे यजुषी इदंलोकादोलोकदेवत्ये क्रमाद्यजुरनुष्टुभौ। विशेषेण राजत इति विराट् अयं लोको ज्योतिरग्निलक्षणमधारयत् धारयति। स्वेनैव राजत इति स्वराट् असौ लोको ज्योतिरादित्यलक्षणमधारयद्धारयति। 'विराडयं लोकः स इममग्निं ज्योतिर्धारयत्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्धारयति' (७।४।२।२३) इति श्रुतेः। (का० १७।४।२३) इति प्रजापतिरिति विश्वज्योतिषम्। रेतःसिग्भ्यां पुरो यजमानकृतां प्रथमां विश्वज्योतिःसंज्ञामिष्टकां पयां प्राग्लक्षणामुदङ्मुखोऽनूके उपदधाति। विश्वज्योतिर्देवतं यजुःशक्करीच्छन्दस्कम्। पृथिव्याः पृष्ठे उपरि ज्योतिष्मतीं ज्योतिषोपेतां त्वा त्वामिष्टकां प्रजापतिः सादयतु स्थापयतु। किमर्थं विश्वस्मै सर्वस्मै प्राणायापानाय व्यानाय प्राणादिसंपत्त्यर्थम्। किंच हे इष्टके, त्वं विश्वं सर्वं ज्योतिर्यच्छ निगृह्णीष्व देहि वा। अग्निश्च ते तवाधिपतिः स्वामी तया देवतयाग्निलक्षणया ध्रुवा स्थिरा सती सीद उपविश। अङ्गिरस्वदङ्गिरसां चयने यथा स्थिरा सीदः तद्वदत्रापीत्यर्थः॥ २४॥



## पञ्चविंशी।

मधुश्च माधवश्च वासन्तिकावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे। वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्॥ २५॥

उ० ऋतव्ये उपदधाति मधुश्च। वसन्तऋतुरुच्यते। यस्त्वं मधुश्च माधवश्च चैत्रश्च वैशाखश्च वसन्तऋतुः। स्वार्थे तद्धितः। ऋतू इति द्विवचनमेकवचनस्य स्थाने अर्थसंबन्धात्। यस्त्वमग्नेः संवत्सराख्यस्य अन्तः श्लेषोसि अन्तर्मध्ये व्यवस्थितः श्लेषकोसि तस्य तव कल्पेतां द्यावापृथिव्यौ। ज्यैष्ठ्याय ज्येष्ठभावायेत्यनुषङ्गः। कल्पन्तां च आपः ओषधयः ज्यैष्ठ्याय। कल्पन्तां च अग्नयः पृथङ् मम ज्यैष्ठ्याय। 'अग्नयो हैते पृथग्ये देवता इष्टकाः' इति श्रुतिः। मम तवेति प्राप्ते ममेति व्यत्ययश्छान्दसः। अथ कोर्थः। कल्पन्ताम् इष्टका याः स्वयमातृण्णादयः नानाभूतास्तव जैष्ठ्याय सव्रताः समानकर्माणः। समानं हि कर्म इष्टकानामग्निचयनं नाम। किंच। ये अग्नयः अन्यैरपि चिताः समनसः समानमनस्काः। अन्तरा मध्ये द्यावापृथिव्यौ इमे वर्तन्ते तेपि वसन्तमृतुमभिकल्पमानाः। वासन्तिकाविति स्वार्थे तद्धितः। ऋतू इति द्विवचनमेकवचनस्यार्थे। अभिकल्पमानाः संविशन्त्विति संबन्धः। कथमिव। इन्द्रमिव देवाः। यथा इन्द्रं देवानां राजानं परिचरणाय देवा अभिविशन्ति एवं वसन्तमृतुमन्या इष्टकाः परिचरणायाभिविशन्तु। सादयति। तया देवतयेति व्याख्यातम्॥ २५॥

म० 'ऋतव्ये मधुश्च माधवश्चेति' (का० १७।४।२४) विश्वज्योतिषः पुरो द्वे पये प्राग्लक्षणे ऋतव्येष्टके अनूकमभित उदङ्मुख उपदधाति। ऋतुदेवतं यजुः अष्टोत्तरशताक्षरत्वाच्छन्दो नास्ति। मधुश्चैत्रो मासः माधवो वैशाखः तावुभौ वासन्तिकौ वसन्तसंबन्धिनौ ऋतू अवयवौ। यद्वा मधुमाधवौ वसन्त एव वासन्तिक ऋतुः। द्विवचनमेकवचनार्थम्। हे तादृश वसन्ताख्य ऋतो, त्वं चीयमानस्याग्नेरन्तः श्लेषोऽसि अन्तर्मध्ये व्यवस्थितः सन् श्लेषकोऽसि यथा कुड्यस्यान्तर्दार्ढ्याय काष्ठपाषाणादयः श्लिष्यन्ते तद्वत्। ममाग्निं चिन्वतो यजमानस्य ज्यैष्ठ्याय ज्येष्ठत्वायोत्कर्षाय इमे द्यावापृथिवी द्यावापृथिव्यौ कल्पन्तां स्वोचितमुपकारं संपादयताम्। यद्वा ममेति तवस्थाने व्यत्ययः। द्यावाभूमी तवोत्कर्षाय कल्पन्ताम्। आपश्चौषधयश्च तव ज्यैष्ठ्याय कल्पन्ताम्। समानं व्रतं कर्म येषां ते

सव्रताः एकस्मिन् चयनाख्यकर्मण्यवस्थिताः पृथक् नानाभूताः अग्नयः स्वयमातृण्णाद्या इष्टकाः तव ज्यैष्ठ्याय कल्पन्ताम्। 'अग्नयो हैते पृथग्यदेता इष्टकाः' इति श्रुतेरग्निशब्देनेष्टका उच्यन्ते। किंच इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये वर्तमानाः समनसः एकमनस्का ये अग्नयः अन्यैरपि चिताः तेऽपि वासन्तिकावृतू वसन्तमृतुमभिकल्पमानाः संपादयन्तः सन्तः अभिसंविशन्तु एतत्कर्माश्रयन्तु। तत्र दृष्टान्तः। इन्द्रमिव देवाः यथा देवा इन्द्रं परिचरणायाभिसंविशन्ति एवमन्येष्टका वसन्तं परिचरणायाभिसंविशन्तु। सादयति तया देवतया सादिते हे ऋतव्येष्टके, युवामङ्गिरसां कर्मणीव ध्रुवे स्थिरे सत्यौ सीदतमुपविशतम् ॥ २५ ॥

## षड्विंशी।

**अषाढासि सहमाना सहस्वारातीः सहस्व पृतनायतः। सहस्रवीर्यासि सा मा जिन्व ॥२६॥**

उ० अषाढामुपदधाति। अषाढासि। सविता अपश्यद्देवा वा अपश्यन् अनुष्टुप्। अषाढासि नाम्ना। यदसहन्त तस्मादषाढेत्येतच्छ्रुत्यभिप्रायं नामकथनम्। सहमाना च अभिभवनशीलासि च स्वभावतो यतः अतस्त्वां ब्रवीमि। सहस्वारातीः अभिभव अदानशीलान्। अभिभव च नः पृतनायतः पृतानां संग्राममिच्छतः। किंच। या च त्वं सहस्रवीर्यासि सा मा जिन्व। जिन्वतिः प्रीतिकर्मा। प्रीणीहि ॥ २६ ॥

म० 'अषाढासीत्यषाढाम्' (का० १७।४।२५) अषाढासंज्ञकामिष्टकां पत्नीकृतां पद्यां प्राग्लक्षणामृतव्याभ्यां पूर्वासलग्नामनूके उपदधाति। सवितृदृष्टेष्टकादेवत्या विराडनुष्टुप्। हे इष्टके, त्वमषाढासि शत्रून् सहते इत्यषाढा। तथाच श्रुतिः 'ते देवा एतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत तामुपधायासुरान्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त तस्मादषाढेति' (७।४।२।३३)। कीदृशी त्वम्। सहमाना सहत इति सहमाना अभिभवनशीला स्वभावतः। अतोऽरातीः अदानशीलाः प्रजाः सहस्वाभिभव। पृतनां संग्राममिच्छन्ति ते पृतनायन्ति पृतनायन्तीति पृतनायन्तः क्यजन्ताच्छतृप्रत्ययः। तान्पृतनायतः संग्रामेच्छून् शत्रून्सहस्व। किंच त्वं सहस्रवीर्या बहुसामर्थ्या यासि सा मा मां जिन्व प्रीणीहि ॥ २६ ॥

## सप्तविंशी।

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः ॥ २७ ॥**

उ० कूर्मं दधिमधुघृतैरभ्यनक्ति। मधुवाताः। गायत्र्यृचो वैश्वदेव्यः। मधुमन्तो वा रसवन्तो वाता वान्त्विति शेषः। कस्मै। ऋतायते यज्ञमिच्छते। मधु क्षरन्ति सिन्धवः मधु उदकं क्षरन्तु सिन्धवः स्यन्दमाना नद्यः। माध्वीर्नः। मधुमत्योऽस्माकं सन्तु भवन्तु ओषधयः ॥ २७ ॥

म० 'कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति' (का० १७।४।२७)। मिश्रितैर्दधिमधुघृतैर्कैकत्वयेण कच्छपमनक्ति गोतमदृष्टा विश्वदेवदेवत्यास्तिस्रो गायत्र्य ऋतं यज्ञमिच्छतीति ऋतयन् तस्मै ऋतयते यजमानाय वाता वायवो मधु मधुमन्तो रसवन्तो वान्त्विति शेषः। ऋतयतीत्यत्र 'क्यचि च' (पा० ७।४।३३) इति प्राप्तस्येत्वस्य 'न छन्दस्यपुत्रस्य' (पा० ७।४।३५) इत्यभावः। 'अश्वाघस्यात्' (पा० ७।४।३७) इत्यश्वाघयोरेव क्यच्यात्वविधानात् 'अकृत्सार्वधातुकयोः' (पा० ७।४।२५) इत्यात्वमपि न। संहितायां तु छान्दसो दीर्घः। मधु मधुमानित्यग्रे [२८] मतुप्प्रत्ययदर्शनात्सर्वत्र मधुशब्दाग्रे मतुञ्ज्ञेयः। सिन्धवः स्यन्दमाना नद्यः समुद्रा वा मधु मधुमत् रसवत् उदकं क्षरन्ति स्रवन्त्वित्यर्थः। 'तिङां तिङः' (पा० ७।१।३९) इति लोटो लडादेशः। ओषधीः ओषधयः नोऽस्माकं माध्वीः मधुररसोपेताः सन्तु ॥ २७ ॥

## अष्टाविंशी।

**मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता ॥ २८ ॥**

उ० मधु नक्तम्। मधुमत् नक्तं रात्रिरस्तु। उत अपि च उषसः मधुमत्यः सन्तु। मधुमद्रसवत्पार्थिवं रजो लोकः अस्तु मातृभूतः। मधुमदित्यत्र मतुप् सर्वेषां मधुशब्दानामनुषङ्गो द्रष्टव्यः साकाङ्क्षत्वात्। मधुद्यौरस्तु नः पिता। मधुमती द्यौरस्तु अस्माकं पितृभूता ॥ २८ ॥

म० नक्तं रात्रिर्नोऽस्माकं मधु मधुमत् मधुररसोपेतमानन्दकरमस्तु। उतापि च उषसो दिवसा अपि मधुमन्तः सन्तु। पार्थिवं रजः पृथिवीलोको मातृभूतो मधुमन्मधुररसोपेतमस्तु। पिता पितृभूतो द्यौः द्युलोको मधु मधुमान्मधुररसोपेतोऽस्तु ॥ २८ ॥

## एकोनत्रिंशी।

**मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः। माध्वीर्गावो भवन्तु नः ॥ २९ ॥**

उ० मधुमान् रसवान् नः अस्माकं वनस्पतिर्यज्ञस्य साधनभूतोऽस्तु। सोमो वा वनस्पतिः। मधुमान् अस्तु सूर्यः यज्ञसाधनभूतः। माध्वीः मधुमत्यो रसवत्यः गावः यज्ञसाधनभूताः पशवो रश्मयो वा भवन्तु नोऽस्माकम्। 'रसो वै मधु' इति श्रुतिः। वाय्वादीनि रसवन्त्यस्माकं भोग्यानि सन्त्विति समस्तार्थः ॥ २९ ॥

म० वनस्पतिरश्वत्थादिर्नोऽस्माकं मधुमान्रसवान्यज्ञसाधनभूतोऽस्तु। सूर्यो मधुमान् संतापराहित्यलक्षणमाधुर्यरसोपेतो-

ऽस्तु । गावः यज्ञसाधनभूता रश्मयः नोऽस्माकं माध्वीः मधुमत्यो रसवत्यो भवन्तु । 'रसो वै मधु' ( ७।५।१।४ ) इति श्रुतेः । वातादीनि रसवन्त्यस्माकं भोग्यानि भवन्तीति सर्वोऽर्थः ॥ २९ ॥

## त्रिंशी ।

अपां गम्भन्त्सीद मा त्वा सूर्योऽभिताप्सीन्माग्निर्वैश्वानरः । अच्छिन्नपत्राः प्रजा अनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम् ॥ ३० ॥

**उ०** उपदधाति । अपां गम्भन् । त्रिभिः पङ्क्तित्रिष्टुब्गायत्रीभिः । द्वे कूर्मदेवत्ये । कूर्मश्च प्रजापतिरादित्यो वा । उत्तरा द्यावापृथिवीया । अपां गम्भन् अपां गम्भीरे प्रदेशे सीद उपविश । 'एष वा अपांगम्भन् यत्रैष एतत्तपति' इति श्रुतिः । तत्र चोपतिष्ठन्तं सन्तं मा त्वां सूर्यः अभिताप्सीत् अभितापयेत् । मा च अग्निर्वैश्वानरः । त्वं च अच्छिन्नपत्राः प्रजाः अनुवीक्षस्व । प्रजा इष्टका उच्यन्ते । अच्छिन्नपत्रा इति व्याख्यातं श्रुत्या । अरिष्टा अनार्ता अस्माकमिति । अनवखण्डिता योगक्षेमा इष्टका दर्शनेन कुर्वित्यर्थः । अनु त्वा दिव्या वृष्टिः सचताम् । अनुसेवतां त्वां दिव्या दिविभवा वृष्टिः । दिव्या वृष्टिरिति प्रियवचनम् ॥ ३० ॥

**म०** 'अरत्निमात्रेऽषाढां दक्षिणेनायकासूपरिष्टाच्च पुरुषमभिमुखमपां गम्भन्निति तिसृभिः । ( का० १७।४।२८।५ ) अषाढादक्षिणदेशे हस्तमात्रे पद्मालोकद्वयमन्तराले मुक्त्वा तृतीये पद्मालोके पूर्वमेव स्थापिताखवकासु शेवालेषु पुरुषसंमुखऋक्त्रयेण कूर्ममुपदधातीति सूत्रार्थः । स्वराट्पङ्क्तिः दशाक्षरचतुष्पादा कूर्मदेवत्या तृतीयो द्वादशाक्षरः । कूर्मः प्रजापतिरादित्यो वा । तृतीया द्यावापृथिवीया । हे कूर्म, अपां जलानां गम्भन् गम्भनि गम्भीरे स्थाने रविमण्डले त्वं सीद उपविश । 'एतद्वापां गम्भिष्ठं यत्रैष एतत्तपति' ( ७।५।१।८ ) इति श्रुतेः । तत्रोपविष्टं त्वा त्वां सूर्यो माभिताप्सीत् अभितो मा संतापयतु । वैश्वानरः सर्वत्रहितोऽग्निश्च मा संतापयतु । त्वं च तत्र स्थितः सन् प्रजा इष्टकारूपा अनुवीक्षस्व निरन्तरं पश्य । कीदृशीः प्रजाः । अच्छिन्नपत्राः अच्छिन्नान्यनवखण्डितानि पत्राणि अवयवा यासां ताः । अखण्डिता इष्टकाः कुर्वित्यर्थः । 'इमा वै सर्वाः प्रजा या इमा इष्टकास्ता अरिष्टा अनार्ता अनुवीक्षस्व' ( ७।५।१।८ ) इति श्रुतेः । किंच दिव्या दिवि भवा वृष्टिः त्वा त्वामनु सचतां सेवतामुदकेन नित्यं सिक्तो भवेत्यर्थः ॥ ३० ॥

## एकत्रिंशी ।

त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपां पतिर्वृषभ इष्टकानाम् । पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ॥ ३१ ॥

**उ०** एजयति । त्रीन्समुद्रान् । यस्त्रीन्समुद्रान् लोकान् समसृपत् । समसृप इति पुरुषव्यत्ययः । संसृप्तोसि । स्वर्गान् स्वर्गहेतून् । यश्च त्वम् अपांपतिः वृषभश्च वर्षिता भर्ता इष्टकानां तं त्वां ब्रवीमि । पुरीषं वसानः पशूनाच्छादयन् । सुकृतस्य शोभनकृतस्याग्नेर्लोके स्थाने स्थित्वा तत्र गच्छ यत्र पूर्वे कूर्मा अन्येष्वग्निषूपहिताः सन्तः परेताः परागताः ॥ ३१ ॥

**म०** 'घट्टयति मध्यमयेति' ( का० १७।५।२ ) तिसृणां मध्यमया त्रीन् समुद्रानिति ऋचा हस्तस्थमेव कूर्मं कम्पयतीति सूत्रार्थः । कूर्मदेवत्या त्रिष्टुप् । हे कूर्म । यो भवान् त्रीन्समुद्रान् लोकान्समसृपत्सम्यक्प्राप्तो भवति । 'सृप्लृ गतौ' 'पुषादि—' ( पा० ३।१।५९ ) इत्यादिना च्लेरङ् । समुद्द्रवन्ति स्वकारणात्समुद्द्रवन्तीति समुद्रा लोकास्तान् । कीदृशान् । स्वर्गान् भोगसाधनभूतान् । कीदृशो भवान् । अपां पतिः जलेशः इष्टकानां वृषभः वर्षिता । किंच यत्र यस्मिन्स्थाने पूर्वे पुरातनाः कूर्माः अन्येष्वग्निषूपहिताः परेताः परागताः सुकृतस्य शोभनकृतस्याग्नेस्तत्र तस्मिन् लोके स्थाने त्वं गच्छ । किं कुर्वन् । पुरीषं हुतान्पशून् वसानः आच्छादयन् ॥ ३१ ॥

## द्वात्रिंशी ।

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ ३२ ॥

**उ०** महीद्यौरिति व्याख्यातम् ॥ ३२ ॥

**म०** महीति व्याख्याता ( ८।३२ ) ॥ ३२ ॥

## त्रयस्त्रिंशी ।

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ३३ ॥

**उ०** उलूखलमुसले उपदधाति । विष्णोः कर्माणि । व्याख्यातम् ॥ ३३ ॥

**म०** 'उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्रे औदुम्बरं प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसंगृहीतमूर्ध्वं वृत्तं दक्षिणमुलूखलाद्विष्णोः कर्माणीति' ( का० १७।५।३ ) चतुष्कोणं संकुचितं खातहीनमुदुम्बरतरुजमूर्ध्वमुलूखलम् वृत्तं मुसलम् ते उभे स्वयमातृण्णोत्तरे देशे तन्मध्याद्धस्तमात्रे तृतीये लोके विष्णोरिति मन्त्रेण सहैवोपदधातीति सूत्रार्थः । व्याख्याता ( ६।४ ) ॥ ३३ ॥

## चतुस्त्रिंशी ।

ध्रुवासि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्यो

अधि जातवेदाः। स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्॥ ३४॥

उ० उखामुपदधाति। ध्रुवासीति द्वाभ्याम् त्रिष्टुब्बृहतीभ्याम्। ध्रुवासि स्थिरासि धरुणा धारिणी च। इदानीमग्न्यपत्यद्वारेण उखा स्तूयते। य इत उखातो जज्ञे जातः प्रथमं ततोऽनन्तरम् एभ्यो लोकेभ्यो अधि एभ्यो लोकेभ्यः सकाशात्। जातवेदाः जातप्रज्ञानः। स इदानीं गायत्र्या त्रिष्टुभानुष्टुभा च सहितः देवेभ्योऽर्थाय हव्यं हविः वहतु प्रापयतु। प्रजानन्स्वमधिकारं जानानः॥ ३४॥

म० 'उलूखल उखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद् ध्रुवासीत्युखाम्' (का० १७।५।१४)। पूर्वमुलूखलोपर्युखां तूष्णीं कृत्वा तत उपशयां मृदं पिष्ट्वोखापुरस्ताद्भूमौ प्रक्षिप्य तत्रोखां मन्त्रद्वयेनोपदध्यादिति सूत्रार्थः। उखादेवत्या त्रिष्टुप्। हे उखे, धरुणा जगतो धारयित्री त्वं ध्रुवा स्थिरासि। अथाग्निजनकत्वेनोखा स्तूयते। योऽग्निरितोऽस्या उखायाः सकाशात् प्रथममादौ जातवेदाः जातप्रज्ञानोऽग्निरधिजज्ञे तत एभ्यो योनिभ्यः स्वकारणेभ्योरण्यादिभ्योऽधिजज्ञे जायते। सोऽग्निः प्रजानन् स्वाधिकारं प्रकर्षेण जानानः सन् गायत्र्या त्रिष्टुभानुष्टुभेति छन्दस्त्रयेण देवेभ्यो देवार्थं हव्यमस्मद्धविर्वहतु॥ ३४॥

## पञ्चत्रिंशी।

इषे राये रमस्व सहसे द्युम्न ऊर्जे अपत्याय। सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावताम्॥ ३५॥

उ० इषे राये। उखोच्यते। इषे अन्नाय राये धनाय रमस्व रतिं बध्नीहि। सहसे बलाय। द्युम्ने 'द्युम्नं द्योततेर्यशो वा अन्नं वा'। ऊर्जे उपसेचनाय पयोदधिघृतादये। अपत्याय पुत्रपौत्रादये। रमस्वेति सर्वत्र संबध्यते। किंच सम्राडसि संगतराज्यभावासि। स्वराडसि स्वराज्ययुक्तासि। सारस्वतौ च सरस्वतीसंबन्धिनौ च त्वामुत्सौ उत्स्यन्दनौ कूपौ। मनश्च वाक् च। मनस्तावत् सर्वशास्त्रपरिज्ञानं कूप इवोत्स्यन्दति। वागपि तत्प्रतिपादनं कुर्वती। 'मनो वै सरस्वान्वाक्सरस्वत्येतौ सारस्वतावुत्सौ' इति श्रुतिः। प्रावताम्। अवतिः पालनार्थः॥ ३५॥

म० उखादेवत्या बृहती। हे उखे, त्वं रमस्व अत्र क्रीडां कुरु। किमर्थम्। इषे अन्नार्थं राये धनार्थं सहसे बलाय द्युम्ने द्युम्नाय यशोऽर्थम्। 'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु० ५।५) इति यास्कः। ऊर्जे उपसेचनाय पयोदधिघृतादिकाय अपत्याय पुत्रपौत्रादिकाय। रमस्वेति सर्वत्र संबन्धः। किंच सम्यग्राजत इति सम्राडसि। स्वेनैव राजत इति स्वराडसि। एवंभूतां त्वां सारस्वतौ सरस्वतीसंबन्धिनौ उत्सौ उत्स्यन्दनौ कूपौ प्रवाहौ वा त्वा त्वां प्रावतां प्रकर्षेण पालयताम्। तौ चौत्सौ मनोवाचौ। सामज्ञानाय कूप इवोत्स्यन्दतीति मनः कूपः तत्प्रतिपादनं कुर्वन्ती वागपि कूपः। 'मनो वै सरस्वान्वाक् सरस्वत्येतौ सारस्वतावुत्सौ' (७।५।१।३१) इति श्रुतेः। यद्वा सारस्वतौ उत्सौ ऋग्वेदसामवेदौ त्वां रक्षताम्। तथाच तित्तिरिश्रुतिः 'ऋक्साम वै सारस्वतावुत्सौ' इति॥ ३५॥

## षट्त्रिंशी।

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः। अरं वहन्ति मन्यवे॥ ३६॥

उ० द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्यां जुहोति। अग्ने युक्ष्व। हिशब्दः पादपूरणः। ये तव स्वभूताः अश्वासः अश्वा एव अश्वासः आज्जसेरसुक्। हे देव दानादिगुणयुक्त, साधवः जातिगुणसमन्विताः प्रशस्ताः। अलं पर्याप्तं वहन्ति। मन्यवे दीप्तये क्रोधाय वा॥ ३६॥

म० 'अग्ने युक्ष्वा हीति प्रत्यृचꣳस्रुवाहुती जुहोत्युखायाम्' (का० १४।५।५) ऋग्द्वयेनोखामध्ये द्वे आहुती जुहोति। अग्निदेवत्ये द्वे गायत्र्यौ आद्या भरद्वाजदृष्टा द्वितीया विरूपदृष्टा। हे देव दीप्यमान, हे अग्ने, ये साधवः दान्तास्ते तवाश्वासः हया अरमलमत्यर्थं मन्यवे यज्ञाय वहन्ति प्रापयन्ति देवानिति शेषः। तानश्वान् युक्ष्व हि योजय। हि पादपूरणः॥ ३६॥

## सप्तत्रिंशी।

युक्ष्वा हि देवहूतमाँ२॥ऽअश्वाँ अग्ने रथीरिव। नि होता पूर्व्यः सदः॥ ३७॥

उ० युक्ष्वा हि देवहूतमान् अतिशयेन देवानाह्वयन्ति तान् युक्ष्व अश्वान् हे अग्ने, रथी इव। इवकारो मत्वर्थीयः। कस्मात्पुनस्त्वमेवमुच्यसे। यतः। निहोता पूर्व्यः सदः। निषदः निषीदसि होतृषदने होतः सन् पूर्व्यः मानुषाद्धोतुः प्रथमः अग्र्यः। तदुक्तम्। अध्याग्यज्ञं जातवेदा अन्तरः पूर्वोऽस्मिन्निषद्येति॥ ३७॥

म० अग्ने, त्वमश्वान्युक्ष्व योजय। हिशब्दः प्रसिद्धौ। कीदृशान् देवहूतमान् देवानाह्वयन्तीति देवहुवः अतिशयेन देवहुवो देवहूतमाः तान् देवानामतिशयेनाह्वातॄन्। 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति संहितायां युक्ष्वेत्यस्य दीर्घः। दृष्टान्तमाह रथीरिव रथीः रथस्वामी यथाश्वान्योजयति तद्वत्। रथोऽस्यास्तीति रथीः ईर् मत्वर्थे। किंच त्वं पूर्व्यः पूर्वभवः पुरातनो होता मानुषाद्धोतुः प्रथमोग्र्यो भूत्वा निसदः अस्मिन् यागे होतृषदने निषीद। 'छन्दसि' (पा० ३।४।६) इति लोडर्थे लुङ्। देवहूतमानश्वानित्यत्र 'आतोऽटि नित्यम्' (पा० ८।३।३) इत्याकारस्यानुनासिकत्वम्। 'दीर्घादटि' (पा० ८।३।९) इति [illegible] रुः॥ ३७॥

## अष्टत्रिंशी ।

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ॥ ३८ ॥

उ० मुखप्रभृति सप्तसु प्राणायतनेषु सप्त हिरण्यशलाकान्प्रत्यस्यति । सम्यक् स्रवन्ति । त्रिष्टुप् । हिरण्मयपुरुषाध्यासेनायं मन्त्रो व्याख्यायते । सम्यक्संगताः स्रवन्ति क्षरन्ति । कथमिव । सरितो न यथा सरितो नद्यः समुद्रमभिस्रवन्ति । काः स्रवन्ति । धेना अन्नानि । 'अन्नं वै धेना' इति श्रुतेः । अन्तर्हृदा मनसा पूयमानाः यजमानसंबन्धिना अन्तर्व्यवस्थितेन हृदा मनसा हृदयप्रतिष्ठितेन मनसा पूयमानाः पवित्रीक्रियमाणाः । अन्तर्वै हृदयेन मनसा सतान्नं पूतं यद्यजुः । यजमानो मनो वाक्कायकर्मभिरेकवृत्तिः । न केवलं धेनाः स्रवन्ति । किंतर्हि । घृतस्य धाराः स्रवत्यः अहम् अभिचाकशीमि पश्यामि । योयं हिरण्मयः वेतसः पुरुषः मध्ये अग्नेः निहितः । तत्र स्रवत्यो घृतधाराः । अभिचाकशीमीति संबन्धः ॥३८॥

म० 'मुखे करोति सम्यक्स्रवन्तीति' ( का० १७ । ५ । ७ ) । सम्यगिति मन्त्रेण पञ्चपशूनां मुखे एकैकं हिरण्यशकलं क्षिपतीति सूत्रार्थः । लिङ्गोक्तदेवता त्रिष्टुप् । हिरण्मयपुरुषोद्देशेनायं मन्त्रः । अग्नेर्मध्ये चितिमध्ये हिरण्मयो वेतसः पुरुषो यो निहितोस्ति तं प्रति धेना अन्नानि सम्यक् स्रवन्ति क्षरन्ति । हूयमानानि हवींषि तं प्रति गच्छन्तीत्यर्थः । 'अन्नं वै धेना' ( ७ । ५ । २ । ११ ) इति श्रुतेः । कीदृश्यो धेनाः । मनसा पूयमानाः पवित्रीक्रियमाणाः । कीदृशेन मनसा । अन्तर्हृदा हृदयान्तर्वर्तमानेन हृत्प्रतिष्ठितेन विषयव्यावृत्तेन अव्याकुलेनेत्यर्थः । श्रद्धायुक्तेन मनसा दत्ता इत्यर्थः । 'अन्तर्वै हृदयेन मनसा सतान्नं पूतं य ऋजुः' ( ७ । ५ । २ । ११ ) इति श्रुतेः । तत्र दृष्टान्तः । सरितो न । नकार इवार्थः । सरित इव यथा नद्यः समुद्रं प्रति स्रवन्ति गच्छन्ति तद्वत् । न केवलं धेनाः स्रवन्ति घृतस्य धारा अपि स्रवन्ति । ताश्च धेना घृतधाराश्च हिरण्मयं पुरुषं प्रति स्रवन्तीरहमभिचाकशीमि पश्यामि । चाकशीतिः पश्यतिकर्मा यङ्लुगन्तः ॥३८॥

## एकोनचत्वारिंशी ।

ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा । अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥ ३९ ॥

उ० ऋचे त्वा बृहती । नासिकयोः प्रास्यति । ऋचे ऋग्वेदाय त्वां प्रास्यामीति शेषः । रुचे दीप्त्यै त्वां प्रास्यामीति शेषः । चक्षुषोः भासे त्वा ज्योतिषे त्वाम् । तुल्यः शेषः । श्रोत्रयोः । अभूत् इदं श्रोत्रं विश्वस्य भुवनस्य भूतजातस्य वाजिनम् वाग्ज्ञं वाचोज्ञातारम् । श्रोत्रेण हि शब्दा ज्ञायन्ते । अग्नेर्वैश्वानरस्य च । चशब्दात् वाजिनं वाग्ज्ञमभूत् । अयमग्निर्वैश्वानर इत्युपक्रम्य 'तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति' इत्येतदभिप्रायम् ॥ ३९ ॥

म० हिरण्यशकलदेवत्यार्षी बृहती पादार्णनियमाभावात् । 'नासिकयोर्ऋचे त्वेति' ( का० १७ । ५ । ९ ) मन्त्राभ्यां पशूनां नसोः शकलप्रासनमित्यर्थः । हे हिरण्यशकल, ऋचे ऋग्वेदाय तदुक्तहौत्रादिसिद्धये त्वा त्वां वा मनसि प्रास्यामि । रुचे दीप्तये शोभाप्राप्त्यै त्वां दक्षिणनसि प्रास्यामि । 'शिराक्ष्णि प्रत्यञ्चीति' ( का० १७ । ५ । १३ ) आदौ वामनसि ततो दक्षिणे । 'अक्ष्योर्भासे त्वेति' ( का० १७ । ५ । १० ) भासे त्वेति मन्त्राभ्यां नेत्रयोस्तद्वद्धिरण्यशकलप्रासनम् । भासे कान्त्यै त्वां वामनेत्रे प्रास्यामि । ज्योतिषे तेजसे तत्प्राप्त्यै त्वां दक्षनेत्रे प्रास्यामि । 'श्रोत्रयोरभूदिदमिति' ( का० १७ । ५ । ११ ) कर्णयोः प्रास्यति अभूदिदमग्निर्ज्योतिषेति मन्त्राभ्याम् । इदं श्रोत्रं विश्वस्य सर्वस्य भुवनस्य भूतजातस्य वैश्वानरस्य विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितस्याग्नेश्च वाजिनं वाचो ज्ञातृ अभूत् सर्वप्राशब्दा वहेश्च शब्दोऽपि श्रोत्रेणैव ज्ञायतेऽतः श्रोत्रे हिरण्यं प्रास्यामीति शेषः । वाचमेति जानाति वाजिनम् । वाचूपूर्वादेतेरौणादिको नक्प्रत्ययः । छान्दसः कुत्वाभावः । 'झलां जशोऽन्ते' ( पा० ८ । २ । ३९ ) इति जश्त्वम् । अयमग्निर्वैश्वानर इत्युपक्रम्य 'तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति' इति श्रुत्यनुवादकोऽयं मन्त्रः । यद्वायमर्थः । इदं श्रोत्रेऽस्यमानं हिरण्यं विश्वस्य भुवनस्य वैश्वानरस्याग्नेश्च वाजिनं वीर्यं तेजोजनकमभूत् भवति अतोऽस्यामीति ॥ ३९ ॥

## चत्वारिंशी ।

अग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वान् । सहस्रदा असि सहस्राय त्वा ॥ ४० ॥

उ० अग्निर्ज्योतिषा उष्णिक् । द्वितीयश्रोत्रप्रासनमन्त्रः । अग्निरिव ज्योतिषा ज्योतिष्मान् अस्तु । रुक्मइव वर्चसा वर्चस्वानस्तु । श्रोत्रं पुरुषशिर उद्गृह्णाति । सहस्रदा असि बहूनां दातासि । एवंचेत् अतः सहस्राय त्वामुद्गृह्णामि ॥ ४० ॥

म० हिरण्यशकलदेवत्योष्णिक् । द्वौ पादावष्टार्णौ तृतीयो द्वादशको व्यूहेन । दक्षिणश्रोत्रे शकलं प्रास्यति । अयमग्निः ज्योतिषा पशुश्रोत्रस्थितहिरण्यतेजसा ज्योतिष्मान् तेजस्वी अस्तु । रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्यकान्त्या वर्चस्वान् कान्तिमानस्तु । बाह्यप्रभा ज्योतिः शरीरगतकान्तिर्वर्च इति

ज्योतिर्वर्चसोर्भेदः । यद्वा श्रोत्रमेव हिरण्यज्योतिषाग्निरिव ज्योतिष्मदस्तु हिरण्यवर्चसा च वर्चस्वदस्तु । रुक्म इव सुवर्णपुरुष इव । उभयत्रैवाध्याहारेण लिङ्गव्यत्ययेन च योजनेत्यर्थः । 'सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये' (का० १७।५।१४) पुरुषशिर आदायोखामध्ये वक्ष्यमाणमन्त्रेणोपदधातीति सूत्रार्थः। हे पुरुष, त्वं सहस्रदाः सहस्रसंख्यस्य दातासि अतः सहस्राय सहस्रधनलाभाय त्वा त्वामुद्गृह्णामीति शेषः । आदौ पुरुषशिरसि शकलप्रासनं ततोऽश्वगोऽव्यजानां क्रमेण । एकपशुपक्षे मुखादिषु प्रत्येकं सप्त-सप्त पञ्चकत्व एकैकमित्यन्ये (का० १७।५।११)॥ ४० ॥

## एकचत्वारिंशी ।

आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्ग्धि हरसा माभिमंस्थाः शतायुषं कृणुहि चीयमानः ॥ ४१ ॥

उ० पुरुषशिरउपदधाति । आदित्यं गर्भम् इतउत्तरं षट्त्रिष्टुभः । आदत्ते पशूनिति आदित्यः । आदित्यइव वा ईष्टे स सर्वेषां पशूनामिति आदित्यः । गृह्णाति पशूनिति गर्भः चित्योऽग्निरुच्यते । आदित्यं गर्भं पयसा दुग्धेन समङ्ग्धि समञ्जयसि । पुरुषमपि दधातीत्येतदभिप्रायम् । सहस्रस्य प्रतिमाम् बहुनः प्रतिमाभूतं विश्वरूपं सर्वरूपम् । सर्वाणि हि रूपाण्यादित्यस्य आदित्यवचार्यं स्तूयते । परिवृङ्ग्धि हरसा परित्यज एनं हरसा । वीर्यापहारकं ज्योतिरग्ने हर इत्युच्यते । माभिमंस्थाः अभिपूर्वो मनिर्हिंसार्थः माहिंसीः । सर्वथा शतायुषं कृणुहि चीयमानः ॥ ४१ ॥

म० 'आदित्यं गर्भमिति प्रतिमन्त्रं क्रमेण' (का० १७।५।१७)। पुरुषादीनां शिरसि पञ्चमन्त्रक्रमेणैकैकमुपदधातीत्यर्थः । पञ्च ऋचोऽग्निदेवत्यास्त्रिष्टुभः आदौ पुरुषशिर उपदधाति मध्ये । हे पुरुषशिरः, त्वमादित्यं चित्याग्निं पयसा समङ्ग्धि संरचय । अङ्क्तेर्लोटि मध्यमैकवचने रूपम् । पयसि स्थाप्य इत्येवमुच्यते । आदत्ते पशूनादित्यवदीष्टे वा सर्वपशूनामित्यादित्यश्चित्योऽग्निः । कीदृशमादित्यं । गर्भं गृह्णाति पशूनिति गर्भः पचाद्यच् 'हृग्रहोर्भश्छन्दसि' तम् । सहस्रस्य प्रतिमां बहुधनस्य प्रतिमाभूतं बहुधनप्रदमित्यर्थः । विश्वरूपं सर्वरूपमादित्यत्वात् सर्वरूपप्रकाशकमित्यर्थः । सर्वाणि रूपाणि यस्मात् । किंच हरसा सर्ववीर्यापहारकमग्नेर्ज्योतिर्हरस्तेनाग्नितेजसा यजमानं परिवृङ्ग्धि परिवर्जय । 'वृजी वर्जने' रुधादिः लोट् । मा अभिमंस्थाः यजमानं मा हिंसीः । मन्यतेर्लुङ् अभिपूर्वो मन्यतिर्हिंसार्थः । किंच चीयमानः उपधीयमानः सन्यजमानं शतायुषं शताब्दजीविनं कृणुहि कुरु ॥ ४१ ॥

## द्विचत्वारिंशी ।

वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये । शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन् ॥ ४२ ॥

उ० अश्वमुपदधाति । वातस्य जूतिम् । जूतिर्गतिः प्रीतिर्वा । वातस्य गतिभूतं प्रीतिजनकं वा । वरुणस्य नाभिम् वरुणस्य नाभिमिवान्तरम् । अश्वं जज्ञानं सरिरस्य मध्ये । अश्वं जज्ञानं यजमानं सरिरस्योदकस्य मध्ये । शिशुं पुत्रम् नदीनां हरितवर्णम् । अद्रिबुध्नम् अद्रिः पर्वतः तस्य बुध्नमादिः तत्र भवा आपः अद्रिबुध्न्याः । इह तु अद्भ्यो जातोऽश्वोऽपत्यप्रत्ययलोपादद्रिबुध्न्यशब्देनोच्यते । प्रकरणात् हे अग्ने चित्य, मा हिंसीः मावधीः । परमेव्योमन् निषीदन्तम् । इमे वै लोकाः परमं व्योमेत्यधिलोकं व्याख्यातम् ॥ ४२ ॥

म० अश्वशिर ईशाने उपदधाति । हे अग्ने चित्याग्ने, त्वमश्वमिमं मा हिंसीः ज्वालया मा दह । कीदृशम् । वातस्य जूतिं जूतिर्गतिः प्रीतिर्वा । वायोर्गतिस्वरूपं वायुवच्छीघ्रगतिमित्यर्थः । वायोः प्रीतिं प्रेमपात्रं वरुणस्य नाभिं जलेशस्य नाभिमिव नाभिः अन्तरं यथा नरेण स्वनाभिर्वस्त्रावरणादिना पाल्यते तद्वद्वरुणेनातिप्रियत्वात्पाल्यम् । यतः सरिरस्य सलिलस्य जलस्य मध्ये समुद्रे जज्ञानं जायमानं । 'जन् जनने' ह्वादिः शानच् 'गमहन–'(पा० ६।४।९८) इत्युपधालोपः । अप्सुयोनिर्वा अश्वः' इति श्रुत्यन्तरात् । अतएव नदीनां शिशुं बालं नदीपतिः समुद्रः पिता अतएव नदीनां मातृत्वात्तच्छिशुम् । हरिं हरितवर्णं यद्वारूढं नरं हरतीति हरिस्तम् । अद्रिबुध्नमद्रिर्गिरिः बुध्नं मूलं कारणं यासां ता अद्रिबुध्ना आपस्तज्जातमद्रिबुध्नम् अपत्यप्रत्ययलोपः । यद्वा बुध्नपदे नकारः उपजनश्छान्दसः अद्रिबुध्नमद्रिभिर्बुद्धं ज्ञातम् पथि तत्खुरैः क्षुण्णानद्रीन्पाषाणान्दृष्ट्वा नरैर्ज्ञातं यदत्राश्वो गत इति उत्कृष्टमित्यर्थः । परमे व्योमन् एषु लोकेषु निषीदन्तमिति शेषः । 'इमे वै लोकाः परमं व्योम', (७।५।२।१८) इति श्रुतेः । यद्वा विविधमोम अवनं रक्षणं परममुत्कृष्टं यद्व्योम नानोपद्रवेभ्यः पालनं तत्र स्थापितमिति शेषः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तिं नमोभिः । स पर्वभिर्ऋतुशः कल्पमानो गां मा हिꣳसीरदितिं विराजम् ॥ ४३ ॥

उ० गामुपदधाति । अजस्रम् । यस्य तव संस्कारार्थम् अजस्रमनुपक्षीणम् इन्दुं सोमं चन्द्रमसम् अरुषम् अरोचनम् भुरण्युम् भेत्तारं वाहदोहादिभिः अग्निम् आग्नेयम् ।

तद्धितलोपः । ईडे याचामि उपधानाय । पूर्वचित्तिं प्राक्चयनम् । प्राञ्चं ह्यग्निमुद्धरन्तीति अश्मयधास्तेनगोस्तुतिः । नमोभिरन्नैरभ्युद्यतैः स त्वमेताभिः पर्वेष्टकाभिः पर्वभिः पश्वष्टकाभिः ऋतावृतौ कल्पमानः गां माहिंसीः । अदितिमदीनां विराजम् 'तस्मै शृतं तस्मै सर' इत्यादि दशवीर्याभिप्रायम् ॥ ४३ ॥

**म०** गोशिर आग्नेय्यामुपदधाति । अहमग्निमीडे स्तौमि 'ईड स्तुतौ' । कीदृशमजस्रमनुपक्षीणम् । इन्दुं 'इदि परमैश्वर्ये' इन्दती तीन्दुः ऐश्वर्योपेतम् । यद्वा 'उन्दी क्लेदे' उनत्ति क्लेदयति जनमनांसीतीन्दुः 'उन्देरिच्चादेः' ( उण० १ । १२ ) इति कुप्रत्ययादीकारौ । अरुषं रोषरहितम् । यद्वा अरुर्मर्म मर्मस्थानीयं रहस्यम् । आराध्यमित्यर्थः । पूर्वचित्तिं पूर्वैर्महर्षिभिः चित्तिं चेतव्यम् । नमोभिरन्नैर्भरण्युं भर्तारं सर्वेषां पोष्टारम् । हे अग्ने, एवं स्तूयमानः स त्वं गामुपधीयमानां मा हिंसीः मा जहि । कीदृशीमदितिमखण्डितामदीनां वा विराजं निविदं राजमानाम् दुग्धदानाद् गौर्विराड् 'तस्मै शृतं तस्मै शरः' ( ३ । ३ । ३ । २ ) इति दशवीर्याभिप्रायं विराट्त्वम् । कीदृशः त्वम् । पर्वभिः पश्विष्टकाभिरमावास्यादिपर्वभिर्वा ऋतुशः ऋतौ ऋतौ कल्पमानः कर्माणि संपादयन् ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

वरूत्रीं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाᳯं रजसः परस्मात् । महीᳯं साहस्रीमसुरस्य मायामग्ने मा हिᳯंसीः परमे व्योमन् ॥ ४४ ॥

**उ०** अविमुपदधाति । वरूत्रीम् । वरान्वृणोतीति वा कम्बलादिना आच्छादयति । त्वष्टुः वरुणस्य च नाभिं नहनम् । 'वारुणी च हि त्वाष्ट्री चाविः' इति श्रुतिः । अविं जज्ञानां यजमानानां रजसः परस्मात् । 'श्रोत्रं वै परं रजो दिशो वै श्रोत्रं दिशः परं रजः' इति श्रुतिः । महीं महतीम् साहस्रीं सहस्रोपकारक्षमाम् । असुरस्य असुवतः प्राणवतः प्रज्ञानवतो वा वरुणस्य मायां प्रज्ञाम् हे अग्ने, मा हिंसीः । परमे व्योमन्निति व्याख्यातम् ॥ ४४ ॥

**म०** वायव्येऽविशिर उपदधाति । हे अग्ने, परमे व्योमन् उत्कृष्ट रक्षणस्थाने स्थापितामविं मा हिंसीः । कीदृशीम् । त्वष्टुः रूपाणां निर्मातुर्देवस्यानुग्रहाद्वरूत्रीं वृणोति कम्बलादिना छादयति लोकानिति वरूत्री ताम् । वरुणस्य नाभिं नाभिस्थानीयां नाभिवद्रक्षणीयाम् वारुणी त्वाष्ट्री चाविः । परस्माद्रजसः दिग्रूपाल्लोकाज्जज्ञानं जायमानम् । 'श्रोत्रं वै परमᳯंरजो दिशो वै श्रोत्रं दिशः परमᳯंरजः' ( ७ । ५ । २ । २० ) इति श्रुतेः । यद्वा परस्माद्रजसः प्रजापते रजोगुणाज्जायमानाम् । महीं महतीम् । साहस्रीं सहस्रमूल्यार्हां सहस्रोपकारक्षमां वा । असुरस्य मायामसवः प्राणा विद्यन्ते यस्य सोऽसुरः मत्वर्थे रः । प्राणवतो मायां प्रज्ञां मीयते ज्ञायतेऽनया माया प्रज्ञा प्राणिनां प्रज्ञाप्रदामित्यर्थः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

यो अग्निरग्नेरध्यजायत शोकात्पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥ ४५ ॥

**उ०** अजमुपदधाति । यो अग्निः । यः अजः अग्निः अग्नेः अधि सकाशात् अजायत उत्पन्नः । शोकात्पृथिव्या अधि अजायत । उतवा दिवस्परि अपिच दिवोधि अजायत । "यद्वै प्रजापतिः शोकादजायत तद्वै दिवश्च पृथिव्यै च शोकादजायत' इति श्रुतिः । येनाजेन प्रजाः विकर्मा प्रजापतिः जजान जनितवान् 'वाग्वा अजो वाचो वै प्रजा विश्वकर्मा जजान' इति श्रुतिः । तमजं हे अग्ने, हेडः क्रोधः परिवृणक्तु परिवर्जयतु ते तव संबन्धी ॥ ४५ ॥

**म०** नैर्ऋत्येऽजमुपदधाति । योऽग्निरग्निरूपोऽजोऽग्नेः प्रजापतेः शोकादध्यजायत अग्निसंतापादुत्पन्नः । अत्राग्निः प्रजापतिः । उत वा अपिच दिवः शोकात् पृथिव्याश्च शोकाद्योऽजः पर्यजायत उत्पन्नः । अग्निपृथिवीदिवां शोकादजोत्पत्तिः श्रुत्योक्ता । 'यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोकादजायत' ( ७ । ५ । २ । २१ ) इति । विश्वकर्मा स एव प्रजापतिः येनाजेन वाग्रूपेण प्रजा जजान उत्पादितवान् । अजस्य वाग्रूपत्वं ततः प्रजोत्पत्तिः श्रुत्युक्ता । 'वाग्वा अजो वाचो वै प्रजा विश्वकर्मा जजानेति' ( ७ । ५ । २ । २१ ) । हे अग्ने चित्य, ते तव हेडः क्रोधः तमजः परिवृणक्तु परित्यजतु । त्वयाजे कोपो न कार्य इत्यर्थः । माधवस्तु पृथिव्या उपरि स्थितादुत वा यद्वा दिवः परि द्युलोकोपरि स्थितात् शोकात् 'शुच दीप्तौ' घञन्तः । दीप्तियुक्तादग्नेः प्रजापतेः सकाशाद्योऽग्निरूपोऽजोऽध्यजायत विश्वकर्मा येनाजेन प्रजाः पशून् जजान । अजस्य पशुसाधनत्वं तैत्तिरीयश्रुत्योक्तम् । 'ततोऽजस्तूपरः समभवत्तᳯंस्वायै देवताया आलभत ततो वै प्रजाः पशूनसृजतेति' । शेषं पूर्ववत् ॥ ४५ ॥

## षट्चत्वारिंशी ।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षᳯंसूर्य आत्मा जगतस्तस्थुषश्च ॥ ४६ ॥

**उ०** चित्रं देवानाम् । होमे व्याख्यातम् ॥ ४६ ॥

**म०** 'चित्रं देवानामित्यर्धर्चशः स्रुवाहुती मध्यमे' ( का० १७ । ५ । १८ ) । अर्धर्चद्वयेन पुरुषशिरस्याहुतिद्वयं जुहोतीत्यर्थः । व्याख्याता ( अ० ७ क० ४२ ) ॥ ४६ ॥

## सप्तचत्वारिंशी ।

इमं मा हिꣳसीर्द्विपादं पशुꣳ सहस्राक्षो मेधाय चीयमानः । मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो निषीद ॥ मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ४७ ॥

**उ०** अथ पञ्चपशूनां शुचोत्सर्गः । इमं मा हिंसीः । पञ्च त्रिष्टुभो द्व्यवसाना उत्तराणि यजूंषि । पुरुषस्योत्सृजति । इमं पुरुषं माहिंसीः शुचा । द्विपादं पशुम् । 'द्विपाद्वा एष पशुर्यत्पुरुषः' । सहस्राक्षः सन् हिरण्यशकलैर्वा एष सहस्राक्षः मेधाय यज्ञाय अन्नाय वा चीयमानः चयनेन संस्क्रियमाणः । मयुं पशुं मेधम् हे अग्ने, जुषस्व । किंपुरुषो वै मयुः । तेन किंपुरुषेण चिन्वानः । तन्वो निषीद आत्मानं संस्कुरुष्व । इत उत्तरं यजुः । मयु ते तव शुक् सन्तापः ऋच्छतु । किंच । यं पुरुषं वयं द्विष्मः तंच तव शुक् ऋच्छतु हिनस्तु ॥ ४७ ॥

**म०** 'बहिर्वेद्युदङ्तिष्ठन्नुपतिष्ठत उत्सर्गैरिमं मा हिꣳसीरिति प्रतिमन्त्रम्' ( का० १७।५।१९ ) । अग्नेरुत्तीर्य वेदेर्बहिर्दक्षिणे उदङ्मुखस्तिष्ठन्निमं मेत्युत्सर्गसंज्ञैः पञ्चमन्त्रैः पुरुषादिशिरांस्युपतिष्ठतेऽध्वर्युः एकपशुपक्षे तमेव पञ्चभिरित्यर्थः । अग्निदेवत्याः पञ्च त्रिष्टुभः आद्ययोरन्ते द्वे यजुषी तिसृणामन्ते त्रीणित्रीणि यजूंषि । हे अग्ने, सहस्राक्षः सहस्रमक्षीणि यस्य सः हिरण्यशकलरूपसहस्रनेत्रो मेधाय यज्ञाय चीयमानः चयनेन संस्क्रियमाणः सन् त्वमिमं द्विपादं पशुं पुरुषरूपं मा हिंसीः मा दह । 'हिरण्यशकलैर्वा एष सहस्राक्षः द्विपाद्वा एष पशुर्यत्पुरुषः' ( ७।५।२।३९ ) इति च श्रुतेः । यदि वादनेच्छा तर्हि मेधं शुद्धं मयुं पशुं तुरङ्गवदनं किंपुरुषं पशुं जुषस्व सेवस्व भक्षयेत्यर्थः । 'किंपुरुषो वै मयुः' ( ७।५।२।३२ ) इति श्रुतेः । मयुं कृष्णमृगं वा जुषस्व 'मयुर्मृगेऽश्ववदने' इति कोशोक्तेः । तेन मयुभक्षणेन तन्वः ज्वालारूपास्तनूः चिन्वानः पोषयन्निह निषीद । द्वितीयार्थे तन्व इति प्रथमा । इतो यजुः ते तव शुक् शोकः संतापो मयुं किन्नरं मृगं वा ऋच्छतु प्राप्नोतु किंच यं पुरुषं प्रति वयं द्विष्मः द्वेषं कुर्मः ते तव शुक् तमृच्छतु ॥ ४७ ॥

## अष्टचत्वारिंशी ।

इमं मा हिꣳसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु । गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ४८ ॥

**उ०** अथाश्वस्य । इमं मा हिंसीः एकशफं पशुम् 'एकशफो वा एष पशुर्यदश्वः' । कनिक्रदम् अत्यर्थं क्रन्दितारम् वाजिनं वेगवन्तम् वेगवत्सु मध्ये व्यवस्थितम् । गौरं गौरमृगम् अनुदिशामि ते तव । तेन चिन्वान इति व्याख्यातम् ॥ ४८ ॥

**म०** अथाश्वस्य । हे अग्ने, इममेकशफमेकखुरं पशुमश्वं मा हिंसीः । 'एकशफो वा एष पशुर्यदश्वः' ( ७।५।२।३३ ) इति श्रुतेः । कीदृशम् । कनिक्रदमत्यन्तं क्रन्दितारं हेषमाणम् । क्रन्देः 'दाधर्ति' ( पा० ७।४।६५ ) इत्यादिना यङ्लुकि निपातः । वाजो वेगो विद्यते येषां ते वाजिनो वेगवन्तः मत्वर्थे इन्प्रत्ययः । तेषु मध्ये वाजिनं वेगवन्तम् । ते तुभ्यमारण्यं वनस्थं गौरवर्णं मृगं दिशामि ददामि तेन तन्वः चिन्वानो निविदेति पूर्ववत् । ते तव शुग्गौरं गच्छतु ॥ ४८ ॥

## एकोनपञ्चाशी ।

इमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन् ॥ गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ४९ ॥

**उ०** अथ गोः । इमं साहस्रम् । इमं गां साहस्रम् सहस्रार्हम् शतधारमुत्सम् । उत्सः कूपः । बहुस्रोतसमिव कूपम् उपकारम् वाहदोहादिभिः व्यच्यमानं सरिरस्य मध्ये विविधमच्यमानमुपजीव्यमानम् सरिरस्य मध्ये । 'इमे वै लोकाः सरिरम्' इत्यादिश्रुतिः । घृतं दुहानाम् अदितिमदीनाम् जनाय मनुष्येभ्योऽर्थाय । पुंलिङ्गस्त्रीलिङ्गाभ्यां मन्त्रे गौः स्तूयते । अग्ने माहिंसीरित्यादि व्याख्यातम् ॥ ४९॥

**म०** अथ गोः । अत्र विशेषणद्वयं स्त्रीलिङ्गं शेषाणि पुंलिङ्गानि व्यत्ययेन उभाभ्यां गौरेव स्तूयते । हे अग्ने, परमे व्योमन् उत्कृष्टे स्थाने स्थितमिमं गोरूपं पशुं त्वं मा हिंसीः । कीदृशम् । साहस्रं सहस्रमूल्यार्हं सहस्रोपकारक्षमं वा । शतधारं शतसंख्याकक्षीरधारायुतमत एवोत्सम् उत्सः कूपः तत्सदृशम् उत्स इवोत्सस्तं । बहुस्रोतसमित्यर्थः । सरिरस्य मध्ये एषु लोकेष्वन्तः व्यच्यमानं जनैर्विविधमच्यमानमुपजीव्यमानम् । 'इमे वै लोकाः सरिरम्' ( ७।५।२।३४ ) इति श्रुतेः । जनाय सर्वलोकाय घृतं दुहानां घृतकारणं क्षीरं क्षरन्तीम् । अदितिमखण्डिताम् । ते तवारण्यं गवयं गोसदृशं पशुविशेषमनुदिशामि । शिष्टमुक्तम् ॥ ४९ ॥

## पञ्चाशी ।

इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिꣳसीः परमे व्योमन् ॥ उष्ट्रमारण्यमनु

ते दिशामि तेन चिन्वानस्तन्वो निषीद । उष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ५० ॥

उ० अथावेः । इममूर्णायुम् । इमम् ऊर्णायुं ऊर्णावन्तम् । वरुणस्य नाभिं वरुणस्य नहनम् अपत्यम् त्वचं पशूनां द्विपदां चतुष्पदां च । उभयरूपाणां पशूनां त्वग्रक्षणं करोति कम्बलादिनेत्याशयः । किंच । त्वष्टुः प्रजानां प्रथमं जनित्रम् । 'एतच्च त्वष्टा प्रथमं रूपं चकार' इति श्रुतिः । जनित्रं जननम् । व्याख्यातमन्यत् ॥ ५० ॥

म० अथावेः । हे अग्ने, परमे व्योमन् स्थाने स्थितमिममविं मा हिंसीः । कीदृशमूर्णायुमूर्णावन्तं । ऊर्णाया युस् । वरुणस्य नाभिं नाभिस्थानीयं प्रियमपत्यमित्यर्थः । द्विपदां नराणां चतुष्पदां गवादीनामुभयरूपाणां पशूनां त्वचम् त्वचमिव त्वचम् त्वग्रक्षकं कम्बलैः छादकत्वात् मनुष्याः शीतनिवृत्त्यै कम्बलं दधते अश्वगोखराद्या अपि मार्दवाय पृष्ठे कम्बलैराच्छाद्यन्ते । तथा त्वष्टुः प्रजापतेः प्रजानां मध्ये प्रथमं जनित्रं प्रथमोत्पन्नम् । 'एतद्ध त्वष्टा प्रथमꣳरूपं विचकार' ( ७।५।२।३५ ) इति श्रुतेः । उष्ट्रं प्रसिद्धं ते ददामि । स्पष्टमन्यत् ॥ ५० ॥

## एकपञ्चाशी ।

अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे । तेन देवा देवतामग्रमायँस्तेन रोहमायन्नुप मेध्यासः ॥ शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ५१ ॥

उ० अथाजस्य । अजो हि । यः अजः अग्नेः अजनिष्ट जातः । शोकात्संतापात् । 'यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत' इति श्रुतिः । हिशब्दः पादपूरणः । सः अपश्यत् जनितारं जनयितारं प्रजापतिम् । अग्रे प्रथमम् । यथासौ द्रष्टव्यः । तेन च देवा इन्द्रादयः । देवतामग्रमायन् । नायं देवात्तलितिस्वार्थिकः किंतर्हि 'तस्य भावस्त्वतलौ' इति भावप्रत्ययः । पञ्चम्यर्थे चेयं द्वितीया । देवत्वस्याग्रमायन्निति शब्दप्रकरणात् । तेनैवाजेन रोहं स्वर्गम् आयन् उपागच्छन्तु । मेध्यासः यज्ञे ये देवाः । लोकप्रसिद्धाः शरभादयो व्याख्येयाः ॥ ५१ ॥

म० अथाजस्य । हि पादपूरणः । योऽजोऽग्नेः प्रजापतेः शोकात्संतापादजनिष्ट उत्पन्नः, शोकाद्दीप्यमानादग्नेः प्रजापतेरजनिष्टेति वा । 'यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत' ( ७।५।२।३६ ) इति श्रुतेः । 'आत्मनो वपामुदखिदत्तामग्नौ प्रगृह्णात्ततोऽजस्तूपरः समभवत्' इति तैत्तिरीयेऽपि । स उत्पन्नोऽजोऽग्रे प्रथममुत्पन्नं नरमेव जनितारं स्रोतपादकं प्रजापतिमपश्यद्दृष्टवान् । किंच एवं प्रशस्तोऽजस्ततो देवा इदानींतना अग्रे पूर्वजन्मनि तेनाजेन कर्म कृत्वेति शेषः । देवतां देवभावमायन् प्राप्ताः । 'तस्य भावस्त्वतलौ' । किंच मेध्यासः मेध्या यज्ञयोग्या यजमाना रोहं रोहणीयं स्वर्गं तेनाजेनोपायन्नुपगच्छन्ति । 'छन्दसि परेऽपि' ( पा० १।४।८१ )। शरभोऽष्टापदो मृगविशेषः सिंहघाती । शेषमुक्तम् ॥ ५१ ॥



## द्विपञ्चाशी ।

त्वं यविष्ठ दाशुषो नॄः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ ५२ ॥

उ० चित्योपस्थानम् । त्वं यविष्ठ । गायत्र्याग्नेयनिरुक्ता । त्वं हे यविष्ठ युवतम । यद्वा 'यु मिश्रणे' । अतिशयेन मिश्रयितृतम । दाशुषः दत्तवतो हवींषि यजमानस्य नॄन्मनुष्यान् पाहि पालय । शृणुधि च गिरः स्तुतिलक्षणा वाचः । किंच रक्षा तोकं अपत्यम् । उत त्मना । अपिच आत्मानं रक्षेति । श्रुत्युक्तो व्यत्ययः ॥ ५२ ॥

म० 'एत्य च त्वं यविष्ठेति चित्योपस्थानम्' ( का० १७। ६।१) बहिर्वेदेरागत्याग्निसमीपेऽर्धचित्यमुपतिष्ठते । उशनोदृष्टा, निरुक्ताग्नेयी गायत्री । हे यविष्ठ युवतम, यद्वा मिश्रयितृतम, गिरोऽस्मदीयाः स्तुतिवाचः शृणुधि शृणु 'श्रुशृणु–' ( पा० ६।४।१०२ ) इत्यादिना हेर्धिः 'अन्येषामपि दृश्यते' ( पा० ६।३।१३७ ) इति संहितायां दीर्घः । गिरः श्रुत्वा दाशुषो हविर्दत्तवतो यजमानान् नॄन्मनुष्यान् पाहि रक्ष । दाशुष इति षष्ठी वा । यजमानस्य नॄन् पाहीति । 'दाश्वान्साह्वान्मीढ्वांश्च' ( पा० ६।१।१२ ) इति निपातः । किंच उतापि च त्मना आत्मना तोकं यजमानापत्यं रक्ष 'द्व्यचोऽतस्तिङः' ( पा० ६।३।१३५ ) इति संहितायां दीर्घः । 'मन्त्रेष्वाङ्यादेरात्मनः' ( पा० ६।४।१४१ ) इति आकारलोपः । तोकमपत्यमुतात्मानं च रक्षेति विभक्तिव्यत्ययो वा ॥ ५२ ॥

## त्रिपञ्चाशी ।

अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वायने सादयाम्यर्णवे त्वा सदने सादयामि, समुद्रे त्वा सदने सादयामि, सरिरे त्वा सदने सादयाम्यपां त्वा क्षये सादयाम्यपां त्वा सधिषि सादयाम्यपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा योनौ सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा पाथसि

सादयामि,। गायत्रेण त्वा छन्दसा सादयामि त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयाम्यानुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामि ॥ ५३ ॥

उ० पञ्चदशच्छन्दस्याः पञ्चदशभिर्यजुर्भिरुपदधाति । अपां त्वेमन्सादयामि । श्रुत्युक्तान्यभिधेयानि । अपां त्वा एमन् । सप्तम्या लुक् । एमनि । 'इण् गतौ' । अस्य मनिन्प्रत्ययान्तस्यैतद्रूपम् । वायुर्वा अपामेमन् । वायौ तां सादयति । अपां त्वा ओद्मन् । 'उन्दी क्लेदने' । ओषधयो वा अपामोद्म । तुल्यव्याख्यानमन्यत् । भस्मन् । 'भष भर्त्सनदीप्त्योः' । अभ्रं वा अपां भस्मन् । ज्योतिषि । विद्युद्वा अपांज्योतिः । अयने । इयं पृथिवी अपामयनम् । अर्णवे । प्राणो वा अपामर्णवः । समुद्रे । मनो वै समुद्रः । सरिरे । वाग्वै सरिरम् । क्षये । चक्षुर्वा अपां क्षयो निवासः । सधिषि । श्रोत्रं वा अपां सधिः । सदने द्यौर्वा अपां सदनम् । सधस्थे । अन्तरिक्षं वा अपांसधस्थम् । योनौ । समुद्रो वा अपां योनिः । पुरीषे । सिकता वा अपां पुरीषम् । पाथसि । अन्नं वा अपां पाथः। अन्ने त्वां सादयति । पञ्चच्छन्दस्याः पञ्चभिर्यजुर्भिरुपदधाति गायत्रेण त्वा च्छन्दसा सादयामीत्यादि ॥ ५३ ॥

म० 'अपरेण स्वयमातृण्णामेत्यापस्याः पञ्चपञ्चानूकान्तेष्वपां त्वेमन्नेति प्रतिमन्त्रम्' ( १७। ६ । २ ) तीर्थेनाग्निमारुह्य स्वयमातृण्णामपरेण पूर्वानूकान्तमेत्य चतुर्ष्वप्यनूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रं पञ्चपञ्चापस्यासंज्ञा इष्टका उपदधातीति सूत्रार्थः । विंशतिरिष्टकादेवत्यानि यजूंषि, पञ्चदशापस्यादेवत्यानि, पञ्च छन्दस्यादेवत्यानि,। हे इष्टके अपस्ये, अपामेमन् एमनि वायौ त्वा त्वां सादयामि स्थापयामि । 'इण् गतौ' मनिन्प्रत्ययः सप्तम्या लुक् त्वा इत्यस्य पररूपम् । अत्रापामेमन्नित्यादीनां श्रुत्योक्तोऽर्थो ग्राह्यः । 'वायुर्वा अपामेम वायौ त्वाꣳसादयामि' ( ७।५।२।४६ ) इति श्रुतेः । अपामोद्मन् ओद्मनि ओषधिषु त्वां सादयामि । 'उन्दी क्लेदे' मन्नलोपश्च गुणः सप्तम्या लुक् । 'ओषधयो वा अपामोद्म' [ ७।५।२।४७-६० ] एवमग्रेऽपि तुल्यम् । भस्मन् भस्मनि । 'भस भर्त्सनदीप्त्योः' मन् । अभ्रे 'अभ्रं वा अपां भस्म' । अपां ज्योतिषि विद्युति । 'विद्युद्वा अपां ज्योतिः' । अपामयने भूमौ । 'इयं पृथिव्यपामयनम्' । अर्णवे सदने स्थाने प्राणरूपे सा० । 'प्राणो वा अर्णवः' । समुद्रे सदने सा० । 'मनो वै समुद्रः' । सरिरे सदने वाचि सा० । 'वाग्वै सरिरम्' । अपां क्षये चक्षुषि त्वां सा० । 'चक्षुर्वा अपां क्षयः' । क्षयो निवासः । अपां सधिषि श्रोत्रे त्वां सा० । 'श्रोत्रं वा अपाꣳसधिः' । अपां सदने दिवि त्वां सा० । द्यौर्वा अपाꣳसदनम् अपां सधस्थे अन्तरिक्षे त्वां सा० । 'अन्तरिक्षं वा अपाꣳसधस्थम्' । अपां योनौ समुद्रे त्वां सा० । 'समुद्रो वा अपां योनिः' । अपां पुरीषे सिकतासु त्वां सा० । 'सिकता वा अपां पुरीषम्' । अपां पाथसि अन्ने त्वां सा० । 'अन्नं वा अपां पाथः' । पञ्च छन्दस्या उपदधाति पञ्च यजुर्भिः । गायत्रेण गायत्र्येव गायत्रं तेन छन्दसा त्वामुपदधामि । त्रैष्टुभेन छन्दसा त्वां सा० । जागतेन छन्दसा त्वां सा० । आनुष्टुभेन छन्दसा त्वां सा० । पाङ्क्तेन छन्दसा त्वां सा० ॥ ५३ ॥

## चतुःपञ्चाशी ।

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रम् गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथन्तरं वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ॥ ५४ ॥

उ० प्राणभृताः पञ्चाशदिष्टका उपदधाति । पञ्चाशद्भिर्यजुर्भिः । अयं पुरो भुवः । अग्निर्वै पुरः तद्यत्तदाह पुर इत्यादिनिर्वचनम् । तस्य प्राणः अपत्यम् भौवायनः वसन्त ऋतुः । प्राणायनः प्राणस्यापत्यम् नडादित्वात्फक् । गायत्री वासन्ती गायत्री च वसन्तस्यापत्यम् । गायत्री गायत्रम् । गायत्र्याः सकाशाद्गायत्रम् साम निरमिमीत । गायत्रादुपांशुः । गायत्रात्साम्न उपांशुं ग्रहं निरमिमीत । उपांशोः त्रिवृत् । उपांशोर्ग्रहात्त्रिवृत्स्तोमं निरमिमीत । त्रिवृतो रथन्तरम् । त्रिवृत्स्तोमाद्रथन्तरं पृष्ठं निरमिमीत । वसिष्ठऋषिः । प्राणो वै वसिष्ठ ऋषिः । प्रजापतिगृहीतया त्वया । गृह्णातिः सृजतिवचनः । प्रजापतिसृष्टया त्वया । प्राणं गृह्णामि प्रजाभ्यः । अयं पुरोभुव इत्यादिभिर्दशभिर्मन्त्रैः प्राणमेवैकमविशेषेण गृह्णामि । प्रजाभ्यो विशेषेणावस्थितम् ॥ ५४ ॥

म० 'व्याघारणवत्प्राणभृतः कर्णसहिता दशदशायं पुर इति प्रतिमन्त्रम्' ( का० १७। ६। ३ ) । प्राणभृत्संज्ञका इष्टका व्याघारणवद्दक्षिणे अंसे उत्तरश्रोण्यां दक्षिणश्रोण्यामुत्तरे अंसे कर्णसहिता अक्ष्णया संलग्नाः स्वयमातृण्णापर्यन्तं दश दशोपदधातीति सूत्रार्थः । पञ्चाशद्यजूंषि प्राणभृदिष्टकादेवत्यानि प्रतिकण्डिकं दश दश । प्रथमं दशकं दक्षिणे अंसे । कदाचिद्विस्रस्तात्प्रजापतेः प्राणा देवा भूत्वोत्क्रान्ताः तदा तान्प्रजापतिरूचे किमित्युत्क्रम्यते मामुपगच्छतेति । ततः प्राणास्तमूचुर्वयमन्नं विना स्थातुं न शक्नुमस्तदन्नं त्वया सृज्यते चेत्तिष्ठामः । ततः प्रजापतिनोक्तं वयमुभयेऽन्नं सृजामेति तथेत्युक्त्वा प्राणाः प्रजापतिश्चैतदन्नमसृजंस्तेन प्राणान्पुष्णन्तीति इष्टकानां प्राणभृत्संज्ञेत्युक्तं श्रुत्या 'प्रजापतेर्विस्रस्तात् प्राणा उदक्रामन्' ( ८।१।१।३ ) इत्यादिकया । अथ मन्त्रव्याख्या । योऽयं पुरो भुवश्चाग्निर्वर्तते हे इष्टके, त्वं तद्रूपासि । प्राण एवाग्नि-

भूत्वा पुरस्तिष्ठति अतोऽग्निरूपां त्वामुपदधामीति शेषः । एवमग्रेऽपि । पुरस्तादुपधीयते प्रागुद्भियते प्राङुपचर्यत इति पुरोऽग्निः । भवति सर्वरूपेणेति भवत्यस्मात्सर्वमिति वा भुवोऽग्निः तद्रूपेष्टका ध्येयेति भावः । तदुक्तं श्रुत्या 'अयं पुरो भुव इत्यग्निर्वै पुरस्तात्तद्यत्तमाह पुर इति प्राञ्चᳫं ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव इत्याहाग्निर्वै भुवोऽग्नेर्हीदᳫं सर्वं भवति प्राणो ह्यग्निर्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधातीति' ( ८ । १ । १ । ४ ) । प्राणस्तस्याग्नेरपत्यमिति शेषः । अतएव भौवायनः भुवस्याग्नेरपत्यं भौवायनः । नडादित्वात्फक् । इष्टके प्राणरूपां त्वां सा० । 'प्राणं तस्माद्रूपादग्नेर्निरमिमीत' ( ८ । १ । १ । ५ ) इति श्रुतेः । प्राणस्यापत्यं प्राणायनः फक् यो वसन्त ऋतुस्तद्रूपां सा० । 'वसन्तमृतुं प्राणान्निरमिमीत' ( ८ । १ । १ । ५ ) इति श्रुतेः । वसन्तस्यापत्यं वासन्ती 'तस्यापत्यम्' ( पा० ४ । १ । ९२ ) इत्यण् 'टिड्ढाणञ्' ( पा० ४ । १ । १५ ) इत्यादिना ङीप् । या गायत्री छन्दस्तद्रूपां सा० । 'गायत्रीं छन्दो वसन्तादृतोर्निरमिमीत' ( ८ । १ । १ । ५ ) इति श्रुतेः । गायत्र्यैव गायत्रं चतुर्थी पञ्चम्यर्थे । गायत्र्याः सकाशाद्गायत्रं सामोत्पन्नं तद्रूपां सा० । 'गायत्र्यै छन्दसो गायत्रᳫंसाम निरमिमीत' ( ८ । १ । १ । ५ ) इति श्रुतेः । गायत्रात्साम्नो य उपांशुग्रहो निर्मितस्तद्रूपां सा० । 'गायत्रात्साम्न उपाᳫंशुं ग्रहं निरमिमीत' ( ८ । १ । १ । ५ ) इति श्रुतेः । उपांशुग्रहान्निर्मितो यस्त्रिवृत्स्तोमस्तद्रूपां सा० । 'उपाᳫंशोर्ग्रहात्त्रिवृतᳫंस्तोमं निरमिमीत' ( ८ । १ । १ । ५ ) इति श्रुतेः । त्रिवृतः स्तोमान्निर्मितं यद्रथन्तरं पृष्ठं तद्रूपां सा० । 'त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीत' ( ८ । १ । १ । ५ ) इति श्रुतेः । वसत्यधितिष्ठति सर्वजन्तूनिति वस्ता अतिशयेन वस्ता वसिष्ठः 'तुरिष्ठेमेयस्सु' ( ६ । ४ । १५४ ) इतीष्ठनि तृचो लोपः । सर्वाधार ऋषिः ज्ञाता प्राणस्तद्रूपां सा० । 'प्राणो वै वसिष्ठ ऋषिर्यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनो एव वसिष्ठः' ( ८ । १ । १ । ६ ) इति श्रुतेः । प्रजापतिगृहीतया । गृह्णातिः सृष्ट्यर्थः । प्रजापतिना सृष्ट्या त्वयेष्टकया स्थापितया प्रजाभ्यः सर्वप्रजार्थं प्राणं गृह्णामि । प्रजानां प्राणसिद्धये त्वामुपदधामीत्यर्थः । अयं पुर इत्यादिदशमन्त्रैः प्राणमेवैकं प्रजाभ्यः गृह्णामि । 'ये नानाकामाः प्राणे तांस्तद्दधाति सकृत्सादयत्येकं तत्प्राणं करोति' ( ८ । १ । १ । ६ ) इति श्रुतेः ॥ ५४ ॥

### पञ्चपञ्चाशी ।

अ॒यं द॑क्षि॒णा वि॒श्वक॑र्मा॒ तस्य॒ मनो॑ वैश्वकर्म॒णं ग्री॒ष्मो मा॑न॒सस्त्रि॒ष्टुब्ग्रै॒ष्मी त्रि॒ष्टुभः॑ स्वा॒रᳫंस्वा॒राद॑न्तर्या॒मो॑न्तर्या॒मात्प॑ञ्चद॒शः प॑ञ्चद॒शाद्बृ॒हद्भ॒रद्वा॑ज॒ ऋषिः॑ प्र॒जाप॑तिगृहीतया॒ त्वया॒ मनो॑ गृह्णामि प्र॒जाभ्यः॑ ॥ ५५ ॥

**उ०** अथ दक्षिणतः । अयं दक्षिणा विश्वकर्मा । अयं वै वायुर्विश्वकर्मा योयं पवते । एष हीदं सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वात्यायीवर्तात् । तस्य मनो वैश्वकर्मण इत्यादि तुल्यव्याख्यानं चतसृष्वपि कण्डिकासु ॥ ५५ ॥

**म०** एभिर्मन्त्रैस्तृतीयं दशकं दक्षिणश्रोणेरारभ्योपधेयम् । विश्वं करोति सर्वं सृजतीति विश्वकर्मा वायुरयं दक्षिणा दक्षिणस्यां दिशि आर्यावर्ताद्भूयो वाति तद्रूपां त्वां सा० । 'अयं वै वायुर्विश्वकर्मा योऽयं पवते एष हीदᳫंसर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति तद्रूपमुपदधाति' । ( ८ । १ । १ । ७ ) इति श्रुतेः । तस्य विश्वकर्मणोऽपत्यं मनोऽत एव वैश्वकर्मणं विश्वकर्मण इदम् । 'तस्येदम्' ( पा० ४ । ३ । १२० ) इत्यण् 'इनण्यनपत्ये' ( पा० ६ । ४ । १६४ ) इति प्रकृत्या । मनोरूपां सा० । 'मनस्तस्माद्रूपाद्वायोर्निरमिमीत' ( ८ । १ । १ । ८ ) इति श्रुतेः । मनसोऽपत्यं ग्रीष्म ऋतुस्तद्रूपां सा० । 'ग्रीष्ममृतुं मनसो निरमिमीत' इति श्रुतेः । ग्रीष्मस्येयं ग्रैष्मी ग्रीष्मोत्पन्ना त्रिष्टुप् छन्दस्तद्रूपां सा० । त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीत' इति श्रुतेः । त्रिष्टुभ उत्पन्नं यत्स्वारं साम तद्रूपां सा० । 'त्रिष्टुभश्छन्दसः स्वारᳫंसाम निरमिमीत' इति श्रुतेः । स्वारात्साम्न उत्पन्नो योऽन्तर्यामो ग्रहस्तद्रूपां सा० । 'स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीत' इति श्रुतेः । अन्तर्यामादुत्पन्नो यः पञ्चदशस्तोमस्तद्रूपां सा० । 'अन्तर्यामाद्ग्रहात्पञ्चदशᳫंस्तोमं निरमिमीत इति' श्रुतेः । पञ्चदशात्स्तोमादुत्पन्नं यद्बृहत्पृष्ठं तद्रूपां सा० । 'पञ्चदशात्स्तोमाद्बृहत्पृष्ठं निर०' । भरद्वाज ऋषिः बिभर्तीति भरन् वाजमन्नं यः स भरद्वाजोऽन्वर्थो मनः मनसि स्वस्थे अन्नादनेच्छोत्पत्तेः ऋषिः सचेतनो मनोरूपस्तद्रूपां सा० । 'मनो वै भरद्वाज ऋषिः अन्नं वाजो यो वै मनो बिभर्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिः' ( ८ । १ । १ । ९ ) इति श्रुतेः । प्रजापतिगृहीतया धातृसृष्ट्या त्वयेष्टकया कृत्वा प्रजाभ्यो मनो गृह्णामि एभिर्दशमन्त्रैर्मन एव गृह्णामीत्यर्थः ॥ ५५ ॥

### षट्पञ्चाशी ।

अ॒यं प॒श्चाद्वि॒श्वव्य॑चा॒स्तस्य॒ चक्षु॑र्वैश्वव्यच॒सं व॒र्षाश्चा॑क्षु॒ष्यो जग॑ती वा॒र्षी जग॑त्या॒ ऋक्स॑म॒मृक्स॑माच्छु॒क्रः शु॒क्रात्स॑प्तद॒शः स॑प्तद॒शाद्वै॑रू॒पं ज॒मद॑ग्नि॒र्ऋषिः॑ प्र॒जाप॑तिगृहीतया॒ त्वया॒ चक्षु॑र्गृह्णामि प्र॒जाभ्यः॑ ॥ ५६ ॥

**उ०** अयं पश्चात् । अयं पश्चाद्विश्वव्यचा । 'असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेति अथेदं सर्वं व्यचा भवति तद्यत्तमाह' । पश्चादिति क्रियानिर्देशः ॥ ५६ ॥

**म०** अयं पश्चादित्यादिमन्त्रैर्द्वितीयं दशकमुत्तरश्रोणेरारभ्योपदधाति । पश्चात्प्रतीचीं दिशमञ्चति गच्छतीति पश्चात् प्रतीचीगमनशीलो विश्वं विचति उदितः सन्प्रकाशयतीति विश्वव्यचा आदित्योऽयं प्रसिद्धस्तद्रूपां सा० 'असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदꣳसर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति' ( ८ । १ । २ । १ ) इति श्रुतेः । तस्मादित्यस्य संबन्धि चक्षुरतएव वैश्वव्यचसं विश्वव्यचसो रवेरुत्पन्नं तद्रूपां सा० । 'चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत' ( ८ । १ । २ । २ ) इति श्रुतेः । चाक्षुष्यः चक्षुष उत्पन्ना वर्षा ऋतुस्तद्रूपां सा० । गर्गादित्वाद्यञ् 'वर्षा ऋतुं चक्षुषो निरमिमीत' ( ८ । १ । २ । २ ) इति श्रुतेः । वर्षाभ्य उत्पन्नं जगतीछन्दस्तद्रूपां सा० । जगतीछन्दो वर्षाभ्य ऋतोर्निरमि० । जगतीच्छन्दस उत्पन्नमृक्समसंज्ञं यत्साम तद्रूपां सा० । जगत्यै छन्दस ऋक्समꣳसाम निरमि० । ऋक्सामादुत्पन्नो यः शुक्रग्रहस्तद्रूपां सा० । ऋक्सामात्साम्नः शुक्रं ग्रहं निरमि० । शुक्रादुत्पन्नो यः सप्तदशस्तोमस्तद्रूपां त्वां सा० । शुक्राद्ग्रहात्सप्तदशꣳस्तोमं निरमि० । सप्तदशात्स्तोमादुत्पन्नं यद्वैरूपं पृष्ठं तद्रूपां सा० । सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमि० । जमदग्निर्ऋषिः जमति जगत्पश्यतीति जमन् । अङ्गति सर्वत्र गच्छतीत्यग्निः । ऋषति जानाति ऋषिः ईदृशं यच्चक्षुस्तद्रूपां सा० । 'चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत् पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः' ( पा० ८ । १ । २ । ३ ) इति श्रुतेः । प्रजापतिसृष्टया त्वयेष्टकया प्रजार्थं चक्षुर्गृह्णामि दशमन्त्रैश्चक्षुरेव गृह्णामि । 'सकृत्सादयत्येतच्चक्षुः करोति' ( ८ । १ । २ । ३ ) इति श्रुतेः ॥ ५६ ॥

## सप्तपञ्चाशी ।

इ॒दमु॑त्त॒रात्स्व॒स्तस्य॒ श्रोत्र॑ꣳसौ॒वꣳश॒रच्छ्रौ॒त्र्य॑नु॒ष्टुप् शा॑र॒द्य॑नु॒ष्टुभ॑ ऐ॒डमै॒डान्म॒न्थी, म॒न्थिन॑ एक॒वि॒ꣳश , ए॑कवि॒ꣳशाद्वै॑रा॒जं, वि॒श्वामि॑त्र॒ ऋषिः॑, प्र॒जाप॑तिगृहीतया॒ त्वया॒ श्रोत्रं॒ गृह्णामि॒ प्र॒जाभ्यः॑ ॥ ५७ ॥

**उ०** अथोत्तरतः । इदमुत्तरात्स्वः । 'दिशो वा उत्तरा तद्यत्तमाहोत्तरादित्युत्तरात्तद्धस्मात्सर्वस्मादिशः । अथ यत्स्वरित्याह स्वर्गो हि लोको दिशः' इति ॥ ५७ ॥

**म०** दशमन्त्रैश्चतुर्थं दशकमुत्तरांसादारभ्योपदधाति । उत्तरस्यामुत्तरात् 'उत्तराधरदक्षिणादातिः' । ( पा० ५ । ३ । ३४) इति आतिप्रत्ययः । सर्वस्मादुत्तरभागस्था दिशः यदिदं स्वः स्वर्गो लोकः तां दिक्स्वर्गरूपां त्वां सा० । क्रियाव्ययविशेषणानां नपुंसकत्वमेकत्वं चेति वचनादिदमुत्तरादित्युक्तम् । दिशो वा उत्तरात्तद्यत्ता आहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्मादिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रꣳह दिशो भूत्वोत्तरं तस्थौ तदेतद्रूपमुपदधाति' ( ८ । १ । २ । ४ ) इति श्रुतेः । तस्य स्वर्गस्य संबन्धि श्रोत्रं कीदृशम् । सौवम् स्वः इदं सौवं 'तस्येदम्' ( पा० ४ । ३ । १२० ) इत्यण् । द्वारादित्वादैजागमः ( पा० ७ । ३ । ४ ) अव्ययानां भमात्रे टिलोपः । श्रोत्ररूपां त्वां सा० । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत' ( ८ । १ । २ । ५ ) इति श्रुतेः । श्रोत्रादुत्पन्ना या शरत्तद्रूपां सा० । 'शरदमृतुꣳश्रोत्रान्निरमिमीत' ( ८ । १ । २ । ५ ) इति श्रुतेः । शरद उत्पन्नं यदनुष्टुप्छन्दस्तद्रूपां सा० । अनुष्टुभं छन्दः शरद ऋतोर्निरमि० । अनुष्टुभ उत्पन्नं यदैडं साम तद्रूपां सा० । अनुष्टुभश्छन्दस ऐडꣳसाम निरमि० । ऐडात्साम्न उत्पन्नो यो मन्थी ग्रहस्तद्रूपां सा० । ऐडात्साम्नो मन्थिनं ग्रहं निरमि० । मन्थिग्रहादुत्पन्नो य एकविंशस्तोमस्तद्रूपां सा० । मन्थिनो ग्रहादेकविंशꣳस्तोमं निरमि० । एकविंशस्तोमादुत्पन्नं यद्वैराजं पृष्ठं तद्रूपां सा० । एकविꣳशात्स्तोमाद्वैराजं पृष्ठं निरमि० । विश्वामित्र ऋषिः विश्वं सर्वं मित्रं येन 'मित्रे चर्षौ' ( पा० ६ । ३ । १३० ) इति दीर्घः । तादृश ऋषिः श्रोत्रं श्रद्धयान्यवाक्यश्रवणात्सर्वमित्रं भवति विश्वामित्रर्षिरूपं यत् श्रोत्रं तद्रूपां सा० । 'श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिः' ( ८ । १ । २ । ६ ) इति श्रुतेः । प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः श्रोत्रं गृह्णामीति दशमन्त्रैः श्रोत्रमेव सादयति 'ये नानाकामाः श्रोत्रे तांस्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोति' ( ८ । १ । २ । ६ ) इति श्रुतेः ॥ ५७ ॥

## अष्टपञ्चाशी ।

इ॒यमु॒परि॑ म॒तिस्तस्यै॒ वाङ्मा॒त्या, हे॑म॒न्तो वा॑च्यः, प॒ङ्क्तिर्है॑म॒न्ती, प॒ङ्क्त्यै॒ नि॒धन॑वन्नि॒धन॑वत आग्रय॒ण,ऽआ॑ग्रय॒णात्त्रि॑णवत्रयस्त्रि॒ꣳशौ, त्रि॒णवत्रय॒स्त्रि॒ꣳशाभ्या॑ꣳशाक्वररैव॒ते, वि॒श्वक॑र्म॒ ऋषिः॑, प्र॒जाप॑तिगृहीतया॒ त्वया॒ वाचं॑ गृह्णामि प्र॒जाभ्यो॑ लो॒कं ता इन्द्र॑म् ॥ ५८ ॥

**उ०** अथ मध्ये । इयमुपरि मतिः । 'चन्द्रमा वा उपरि तद्यत्तमाहोपरीति उपरि हि चन्द्रमा । अथ यन्मतिरित्याह वाग्वै मतिः' । समानं व्याख्यानम् । लोकं तामिन्द्रमिति तिस्रः प्रतीकगृहीताः । लोकं पृण च्छिद्रं पृण । ता अस्य सूददोहसः । इन्द्रं विश्वा अवीवृधत् ॥ ५८ ॥

इति उवटकृतौ मन्त्रभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

**म०** दशमन्त्रैः पञ्चमं दशकं रेतःसिग्भ्यामुत्तरां प्रथमां कृत्वा प्रादक्षिण्येनोपधेयम् । 'उपर्युपरिष्टात्' ( पा० ५ । ३ । ३१ ) इति निपातः । उपरि ऊर्ध्वदेशस्थश्चन्द्र इयं मतिः वाक्

मन्यते ज्ञायते यया सा मतिः वागेव चन्द्रो भूलोपरि यस्तिष्ठति तद्रूपां सा० । चन्द्रमा वा उपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदꣳसर्वं मनुते वागथ चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधाति' ( ८ । १ । ९ । ७ ) इति श्रुतेः । तस्यै चन्द्ररूपायास्तस्या मतेरुत्पन्नात एव मात्या मतेरियं मात्या या वाक् तद्रूपां सा० । 'वाचं तस्माद्रूपाचन्द्रमसो निरमिमीत' ( ८ । १ । २ । ८ ) इति श्रुतेः । वाचोऽपत्यं वाच्यः वाच उत्पन्नो यो हेमन्तस्तद्रूपां सा० । हेमन्तमृतुं वाचो निरमि० । हेमन्तस्येयं हैमन्ती या पङ्क्तिश्छन्दस्तद्रूपां सा० । पङ्क्तिश्छन्दो हेमन्तादृतोर्निरमि० । पङ्क्तेरुत्पन्नं यन्निधनवत्संज्ञं साम तद्रूपां सा० । पङ्क्त्यै चतुर्थी पञ्चम्यर्थे । पङ्क्त्यै छन्दसो निधनवत्साम निरमि० । निधनवतः साम्न उत्पन्नो य आग्रयणो ग्रहस्तद्रूपां सा० । निधनवतः साम्न आग्रयणं ग्रहं निरमि० । आग्रयणादुत्पन्नौ यौ त्रिणवत्रयस्त्रिंशौ द्वौ स्तोमौ तद्रूपां सा० । आग्रयणाद्ग्रहात्त्रिणवत्रयस्त्रिꣳशौ स्तोमौ निरमि० । त्रिणवत्रयस्त्रिंशाभ्यामुत्पन्ने ये द्वे शाक्वररैवते पृष्ठे त्वां तद्रूपां सा० । त्रिणवत्रयस्त्रिꣳशाभ्याꣳस्तोमाभ्याꣳशाक्वररैवते पृष्ठे निरमि० । विश्वकर्मा विश्वं सर्वं करोतीति विश्वकर्मा ऋषिः वागेव वाचा हि सर्वं कुरुते वाग्रूपां त्वां सा० । 'वाग्वै विश्वकर्मर्षिर्वाचा हीदꣳसर्वं कृतं तस्माद्वाग्विश्वकर्मर्षिः' ( ११२१९ ) इति श्रुतेः । प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः वाचं गृह्णामि एभिर्दशभिर्मन्त्रैर्वाचमेव गृह्णाति । 'सकृत्सादयत्येकां तद्वाचं करोति' ( ८ । १ । २ । ९ ) इति श्रुतेः । अथ पञ्चकण्डिकासु प्राणमनश्चक्षुःश्रोत्रवाचां प्रजाभ्यो ग्रहणमित्यस्यार्थद्वयम् । प्रजाभ्य इति चतुर्थीपक्षे प्रजार्थं प्राणादीनां ग्रहणम् पञ्चाशदिष्टकास्थापने प्रजानां यजमानापत्यपश्वादीनां प्राणादयः पुष्टा भवन्त्वित्यर्थः । प्रजाभ्य इति पञ्चमीपक्षे प्रजाभ्यो नानालोकेभ्यः सकाशात्प्राणादीन्गृह्णामि मद्वशगान्करोमीति प्राणभृतामुपधानेन सर्वाः प्रजा मद्वशगा भवन्त्वित्यर्थः । ( का० १७ । ६ । ५ ) लोकंपृणा दक्षिणाꣳसादध्यामध्यात् । आत्मनो दक्षिणकोणादारभ्यामध्यात् अधि स्वयमातृण्णापर्यन्तं लोकंपृणा उपदधाति तासां लोकंपृणेत्यभिमन्त्रणम् । ता अस्येति सूददोहःसंज्ञमन्त्रेणाधिवदनम् स्पृष्ट्वा पठनमिति सूत्रार्थः । 'मध्ये पुरीषं निवपति पूर्ववत्' ( का० १७ । ६ । ९ ) । स्वयमातृण्णोपरीन्द्रं विश्वेति मन्त्रेण मृत्क्षेपः । तिस्र ऋचः प्रतीकोक्ताः पूर्वमुक्तत्वात् ( अ० १२ क० ५४ । ५५ । ५६ ] ॥ ५८ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
पुष्करावादि चित्यन्तो रामेन्द्वध्याय ईरितः ॥ १३ ॥

---

# चतुर्दशोऽध्यायः ।

## तत्र प्रथमा ।

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया । उख्यस्य केतुं प्रथमं जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥ १ ॥

द्वितीयां चितिं देवा अपश्यन् तस्यां चितौ पञ्चाश्विन्यो यजुरन्ताः । अश्विनाध्वर्यू इत्यादियजुः । प्रथमा विराट् । द्वितीयाद्याश्चतस्रस्त्रिष्टुभः । ध्रुवक्षितिः । या त्वं ध्रुवक्षितिः स्थिरनिवासा । ध्रुवयोनिश्च अनश्वरस्थाना च । ध्रुवा चासि स्वत एव तां त्वां ब्रवीमि । ध्रुवं स्थिरं योनिं स्थानम् । आसीद अतितिष्ठ । साधुया साधुम् । द्वितीयैकवचनस्य स्थाने या । उख्यस्याग्नेः केतुं प्रज्ञानं प्रथममाद्यं जुषाणा सेवमाना । उख्यस्याग्नेः प्रथमं प्रज्ञानम् । 'इयमेव प्रथमा चितिस्तस्याश्चोपरिष्टान्निधीयते तस्मादेवमुच्यते' । उत्तरं यजुः । किंच अश्विनौ चाध्वर्यू सादयताम् इह रेतःसिग्वेलायां त्वा त्वाम् । केचिच्चतुर्थमेतं पादं वर्णयन्ति त्रिष्टुभं च ॥ १ ॥

**म०** त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा । 'अयं वै लोकः प्रथमा चितिः' ( ८ । २ । १ । १ ) इति श्रुतेः । चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः । 'एतां द्वितीयां चितिमपश्यन् यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेपामेष लोकः' ( ८ । २ । १ । २ ) इति श्रुतेः । देवैरश्विनौ प्रार्थितौ युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्वा 'तेऽश्विनावब्रुवन्' ( ८ । २ । १ । ३ ) इत्यादिकयोक्तम् । तत्रादौ पञ्चाश्विन्य इष्टकाः । द्वितीयचितिमन्त्रा देवदेवत्याः । 'आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रम्' ( का० १७ । ८ । १५ ) । पञ्चकण्डिकाभिराश्विनीसंज्ञा इष्टका रेतःसिग्वेलायामुपदधाति प्रतीष्टकं नित्ये इति सूत्रार्थः । पञ्चाश्विनी देवत्याः प्रथमा विराट् चतस्रस्त्रिष्टुभो यजुरन्ताः । अश्विनाध्वर्यू इत्यादि यजुः । अदित्यास्त्वार्षी त्रिष्टुबेकाधिका पादानियमात् । हे इष्टके, यतस्त्वं ध्रुवा स्थिरासि अतो ध्रुवं स्थिरं योनिं स्थानं रेतःसिग्वेलालक्षणमासीद अधितिष्ठ । कीदृशं साधुया साधुं श्रेष्ठं 'सुपां सुलुक्' इत्यमो यादेशः । कीदृशी त्वम् । ध्रुवक्षितिः ध्रुवा स्थिरा क्षितिर्निवासो यस्याः सा । ध्रुवा अचला योनिः कारणं यस्याः सा । तथा उख्यस्याग्नेः प्रथममाद्यं केतुं स्थानं प्रथमचितिरूपं जुषाणा सेवमाना । अथवा अग्निरुख्यस्तस्यैष प्रथमः केतुर्यत्प्रथमा चितिस्तां जुषाणा' ( ८ । २ । १ । ४ ) इति श्रुतेः । इतः परं यजुः । किंच अश्विना देवानामध्वर्यू

इह रेतःसिग्वेलायां हे इष्टके, त्वा त्वां सादयतामुपधत्ताम् । केचिदिदं यजुश्चतुर्थपादेन परिकल्प्य त्रिष्टुभं वदन्ति ॥ १ ॥

## द्वितीया ।

कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः । अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वा ॥ २ ॥

**उ०** कुलायिनी । कुलायं गृहं तदाकारा कुलायिनी । सा हि रेतःसिग्वेलायामिष्टकाभिरुपहिताभिर्गृहाकारा भवति घृतवती भविष्यता योगेन । इह हि वसोर्धाराख्या आहुतयो होष्यन्ते । पुरंधिः । बहु हि इष्टकाजातमियं धारयति चितिसंबद्धम् । या त्वमित्थंभूता तां त्वां ब्रूमः । स्योने सीद सदने पृथिव्याः सुखरूपे उपविश स्थाने पृथिव्याः । किंच अभि त्वा अभिगृणन्तु त्वां रुद्रादयः । किंच । इमां इमानि ब्रह्माणि पीपिहि आप्यायस्व । सौभगाय महते ऐश्वर्याय । अश्विनेति व्याख्यातम् ॥ २ ॥

**म०** हे इष्टके, पृथिव्याः सदने प्रथमचितिरूपे स्थाने स्योने सुखरूपे त्वं सीद तिष्ठ । 'पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद सदने' ( ८।२।१।५ ) इति श्रुतेः । त्वम् । कुलायिनी 'कुलायो नीडमस्त्रियाम्' कुलायो नीडं गृहमस्या अस्तीति गृहाकारा । रेतःसिग्वेलायामिष्टकोपचिता सा गृहाकारा भवति । 'कुलायमिव वै द्वितीया चितिः' ( ८।२।१।५ ) इति श्रुतेः । अत्र सादृश्यार्थ इनिः । तथा घृतवती होष्यमाणाज्ययुता वसोर्धारा ह्यत्र होष्यन्ते । पुरन्धिः पुरं बहु इष्टकाजातं दधातीति पुरु बहुधा धीयते स्थाप्यत इति वा । किंच रुद्रा वसवश्चोपलक्षणम् । सर्वे देवाः त्वा त्वामभिगृणन्तु स्तुवन्तु । किंच सौभगाय ऐश्वर्याय इमा इमानि ब्रह्म ब्रह्माणि मन्त्रान् पीपिहि आप्यायस्व मन्त्रान् प्रापुहि । अस्मन्मन्त्रोपहिता सौभाग्याय भवति भावः । इमेति सुप आकारः । ब्रह्मेति सुपो लोपः । 'पि गतौ' तुदादिः । 'बहुलं छन्दसि' ( पा० २।४।७६ ) इति शपः श्लुः 'श्लौ' ( पा० ६।१।१० ) इति द्वित्वं 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६।१।७ ) इति अभ्यासदीर्घः । अश्विनेत्यादि पूर्ववत् ॥ २ ॥

## तृतीया ।

स्वैर्दक्षैर्दक्षपितेह सीद देवानाᳬसुम्ने बृहते रणाय । पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥३॥

**उ०** स्वैर्दक्षैः स्वैर्वीर्यैः । दक्षपिता वीर्यस्य पालयित्री सती इह द्वितीयायां चितौ सीद अवस्थानं कुरु । दक्षशब्द इह वीर्यवचनः । प्रयोजनमाह । देवानां सुम्ने सुखाय । कथं नाम देवाः सुखं प्राप्नुयुरिति । बृहते रणाय महते च रमणीयाय यज्ञक्रतवे । किंच । पितेवैधि सूनवे पिताइव भव पुत्राय । आसुशेवा मर्यादया साधु सुखयित्री । किंच स्वावेशाः स्वावेशेति विभक्तिव्यत्ययः । स्वावेशया तन्वा आत्मना संविशस्व अवस्थानं कुरु । अश्विनावध्वर्यू । उक्तार्थः ॥ ३ ॥

**म०** हे इष्टके, त्वमिह द्वितीयायां चितौ सीद तिष्ठ स्वैर्दक्षैः वीर्यैः सामर्थ्यैः सह । दक्षशब्दोऽत्र वीर्यार्थः । 'स्वेन वीर्येणेह सीद' ( ८।२।१।६ ) इति श्रुतेः । कीदृशी । दक्षपिता दक्षं वीर्यं पातीति वीर्यस्य पालयित्री । किमर्थं स्थातव्यं तत्राह । रणाय रमणीयाय बृहते सुम्ने सुम्नाय सुखाय । सप्तमी चतुर्थ्यर्थे । 'देवानाᳬसुम्नाय महते रणाय' ( ८।२।१।६ ) इति श्रुतेः । देवाः सुखिनो भवन्त्विति तिष्ठेत्यर्थः । किंच आसमन्ताद्भावेन सुशेवा शोभनं शेवं सुखं यस्यास्तादृशी सर्वदा सुखयित्री एधि भव 'घ्वसोरेद्धौ–' ( पा० ६।४।११९ ) इत्येकारः । तत्र दृष्टान्तः । पिता सूनव इव यथा पिता जनकः सूनवे पुत्राय सुशेवः सुखयिता भवति तद्वत् । किंच स्वावेशा सुखेनाविशति स्वावेशा । प्रथमा तृतीयार्थे । स्वावेशया सुखप्रवेशवत्या तन्वा शरीरेण संविशस्व अवस्थानं कुरु । 'स्वावेशेनात्मना संविशस्व' ( ८।२।१।६ ) इति श्रुतेः । अश्विनेत्युक्तम् ॥ ३ ॥

## चतुर्थी ।

पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥ ४ ॥

**उ०** पृथिव्याः पुरीषम् । या त्वं पृथिव्याः प्रथमायाश्चितेः पुरीषमिवासि । 'पृथिवी वै प्रथमा चितिः तस्या एतत्पुरीषमिव यद्द्वितीया' इति श्रुतिः । अप्सोनाम रसोनाम । अप्स इति रसपर्यायं दर्शयति । अपः सनोतीत्यप्सः । अपां हि रसो गुणः । 'तस्य वा एतस्य यजुषो रस एवोपनिषत्' इत्येतच्छ्रुतिर्दर्शयति । तां त्वामुपधीयमानां विश्वेदेवा अभिगृणन्तु अभिष्टुवन्तु । त्वमपि च स्तोमपृष्ठा घृतवती च इह सीद द्वितीयस्यां चितौ । यां स्तोमस्यान्तᳬस्य(?) मानो भवति तैरेषा स्तोमपृष्ठा घृतवती च वसोर्धारादिभिर्हामैः । ततः प्रजावदस्मे द्रविणा यजस्व । प्रजासंयुक्तानि अस्मभ्यं द्रविणानि देहि । यजतिर्दानार्थः । शेषमुदक् ॥ ४ ॥

हे इष्टके, त्वं पृथिव्याः प्रथमचितेः पुरीषं पूरकं वस्त्वसि । 'पृथिवी वै प्रथमा चितिस्तस्या एतत्पुरीषमिव यद्द्वितीया' ( ८।२।१।७ ) इति श्रुतेः । पृणाति पूरयति पुरीषम् । 'शॄपॄभ्यां कित्' ( उणा ४।२७ ) इति पृणातेरीषन्प्रत्ययः । किंच कित्त्वात् 'उदोष्ठ्यपूर्वस्य' (पा० ७।१।१०२) इत्युदादेशो रपरत्वं च । नित्त्वादाद्युदात्तः । अपः सनोति ददातीत्यप्सो नामापां कारणीभूतो रसश्च त्वमसि । तां तादृशीं प्रथमचितिपूरिकां जलदरसभूतां त्वां त्वा विश्वे सर्वे देवा अभिगृणन्तु सर्वतः स्तुवन्तु । किंच स्तोमपृष्ठाः स्तोमास्त्रिवृदादयः पृष्ठानि रथन्तरादीनि पठिष्यमाणानि यस्यां सा तादृशी स्तोमपृष्ठवती । घृतवती होष्यमाणाज्ययुता सतीह द्वितीयश्चितौ सीद तिष्ठ । ततः प्रजावत् पुत्रपौत्रादिप्रजायुक्तं द्रविणा द्रविणं धनमस्मे अस्मभ्यमायजस्व समन्ताद्देहि । यजतिरिह दानार्थः । अस्मे इति सुपां सुलुगिति विभक्तेः शेआदेशः । व्याख्यातमन्यत् ॥ ४ ॥

## पञ्चमी ।

अदि॑त्यास्त्वा पृ॒ष्ठे सा॑दयाम्य॒न्तरि॑क्षस्य ध॒र्त्रीं वि॒ष्टम्भ॑नीं दि॒शामधि॑पत्नीं॒ भुव॑नानाम् । ऊ॒र्मिर्द्र॒प्सो अ॒पाम॑सि वि॒श्वक॑र्मा त॒ ऋषि॑र॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ ॥ ५ ॥

**उ०** अदित्यास्त्वा । या त्वम् ऊर्मिः कल्लोलराशिः द्रप्सः रसः अपामसि । यस्याश्च ते तव विश्वकर्मा प्रजापतिर्ऋषिर्द्रष्टा । तां त्वाम् अदित्याः पृथिव्याः पृष्ठे प्रथमायाश्चितेरुपरि सादयामि । कथंभूतामित्यत आह । अन्तरिक्षलोकस्य धर्त्रीं धारयित्रीम् विष्टम्भनीं संस्तम्भनीम् अन्तरिक्षस्यैव । दिशामधिपत्नीं दिशामीशित्रीं भूतजातानां च । शेषं समानोदर्कम् ॥ ५ ॥

**म०** हे इष्टके, अदित्याः प्रथमचितिरूपायाः पृथिव्याः पृष्ठे उपरि त्वा त्वां सादयामि स्थापयामि । किंभूतां त्वाम् । अन्तरिक्षस्य भुवर्लोकस्य धर्त्रीं धारयित्रीम् । दिशां पूर्वादीनां विष्टम्भनीं संस्तम्भनकर्त्रीं भुवनानां भूतजातानामधिपत्नीं स्वामिनीम् । किंच त्वमपां द्रप्सो रस ऊर्मिरसि रसरूपः कल्लोलस्त्वमसि । विश्वकर्मा प्रजापतिस्ते तव ऋषिः द्रष्टा । तं त्वामश्विनौ सादयतामित्युक्तम् ॥ ५ ॥

## षष्ठी ।

शु॒क्रश्च॒ शुचि॑श्च॒ ग्रैष्मा॑वृ॒तू अ॒ग्नेर॑न्तःश्ले॒षो॒ऽसि॒ कल्पे॑तां॒ द्यावा॑पृथि॒वी कल्प॑न्ता॒माप॒ ओष॑धयः॒ कल्प॑न्ताम॒ग्नयः॒ पृथ॒ङ्मम॒ ज्यैष्ठ्या॑य॒ सव्र॑ताः । ये अ॒ग्नयः॒ सम॑नसोऽन्त॒रा द्यावा॑पृथि॒वी इ॒मे । ग्रैष्मा॑वृ॒तू अ॑भि॒कल्प॑माना॒ इन्द्र॑मिव दे॒वा अ॑भि॒संवि॑शन्तु॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वे सी॑दतम् ॥ ६ ॥

**उ०** ऋतव्य उपदधाति । शुक्रश्च शुचिश्च व्याख्यातम् ॥ ६ ॥

**म०** 'शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि' ( का० १७। ८।१६ ) । प्रथमचित्युपहितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदङ्मुख उपदधाति शुक्रश्च शुचिश्चेति प्रत्येकमुपधाय । ग्रैष्मावृतू इति मन्त्रशेषो द्वे अप्यालम्भ्य पठ्य इति सूत्रार्थः । उत्कृतिच्छन्दः । शुक्रो ज्येष्ठमासः शुचिराषाढः तौ ग्रैष्मावृतू ग्रीष्मसंबन्धिनौ ऋत्ववयवौ । अन्यद्व्याख्यातम् ॥ ६ ॥

## सप्तमी ।

स॒जूर्ऋ॒तुभिः॑ स॒जूर्वि॒धाभिः॑ स॒जूर्दे॒वैः स॒जूर्दे॒वैर्व॑योना॒धैर॒ग्नये॑ त्वा वैश्वान॒राया॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ स॒जूर्ऋ॒तुभिः॑ स॒जूर्वि॒धाभिः॑ स॒जूर्वसु॑भिः स॒जूर्दे॒वैर्व॑योना॒धैर॒ग्नये॑ त्वा वैश्वान॒राया॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ स॒जूर्ऋ॒तुभिः॑ स॒जूर्वि॒धाभिः॑ स॒जू रु॒द्रैः स॒जूर्दे॒वैर्व॑योना॒धैर॒ग्नये॑ त्वा वैश्वान॒राया॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ स॒जूर्ऋ॒तुभिः॑ स॒जूर्वि॒धाभिः॑ स॒जूरा॑दि॒त्यैः स॒जूर्दे॒वैर्व॑योना॒धैर॒ग्नये॑ त्वा वैश्वान॒राया॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ स॒जूर्ऋ॒तुभिः॑ स॒जूर्वि॒धाभिः॑ स॒जूर्विश्वै॑र्दे॒वैः स॒जूर्दे॒वैर्व॑योना॒धैर॒ग्नये॑ त्वा वैश्वान॒राया॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ ॥ ७ ॥

**उ०** वैश्वदेवीरुपदधाति । विश्वेषांदेवानामार्षम् । सजूर्ऋतुभिः । यथा समानजोषणः ऋतुभिः प्रजापतिर्भूत्वा इष्टका उपहितवान् । यथाच समानजोषणः विधाभिः । 'आपो वै विधाः । अद्भिर्हीदं सर्वं विहितम्' । यथाच समानजोषणो देवैः । च समानजोषमाणः देवैर्वयोनाधैः । 'प्राणा वै देवा वयोनाधाः । प्राणैर्हीदं सर्वं वयुनं नद्धं अथो छन्दांसि वै देवा वयोनाधाः । छन्दोभिर्हीदं सर्वं प्रज्ञानं नद्धम्' । एवमहमपि एताभिर्देवताभिः समानप्रीतिर्भूत्वा उपदधामि । अग्नये वैश्वानराय त्वाम् । संवत्सरो वा अग्निर्वैश्वानरः । अश्विनौ च अध्वर्यू सादयतामिह त्वाम् । एवमुत्तरेष्वपि मन्त्रेषु वसुरुद्रादित्यविश्वेदेवा योज्याः ॥ ७ ॥

**म०** 'वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम्' ( का० १७। ८।१७ ) पञ्च मन्त्रैः पञ्च वैश्वदेवीसंज्ञा इष्टकाः पूर्वादिषूपदधातीत्यर्थः । विश्वदेवदृष्टानि विश्वदेवदेवत्यानि पञ्च यजूंषि । हे इष्टके, देवानामध्वर्यू अश्विना अश्विनौ तां त्वा त्वामिह स्थाने

द्वितीयचितौ सादयताम्। किमर्थम् वैश्वानराय विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितायाग्नयेऽग्नितृप्तये । अग्नये त्वेति त्वाशब्दो या इति प्रथमार्थे । प्रातिपदिकसुपोर्व्यत्ययः । तां काम्, या त्वमृतुभिः सजूः जोषणं जुट् प्रीतिः 'जुषी प्रीतिसेवनयोः' संपदादित्वाद्भावे क्विप् । समाना जूः प्रीतिर्यस्याः सा सजूः 'समानस्य छन्दस्यमूर्ध-' ( पा० ६ । ३ । ८४ ) इति समानस्य सादेशः । वसन्तादिभिर्या त्वं प्रीतिमती । तथाविधाभिः या त्वम् सजूः असि विदधति सृजन्ति जगदिति विधा आपस्ताभिः । आपो वै विधा अद्भिर्हीदꣳसर्वं विहितम्' ( ८ । २ । २ । ८ ) इति श्रुतेः । 'अप एव ससर्जादौ' ( मनुः १ । ८ ) इति स्मृतेश्च । तथादेवैरिन्द्रादिभिश्च सजूः तथा वयो बाल्यादि नह्यन्ति बध्नन्ति ते वयोनाधाः प्राणा देवा दीप्यमानास्तैश्च सजूः । 'प्राणा वै वयोनाधाः प्राणैर्हीदꣳसर्वं वयुनं नद्धम्' ( ८ । २ । २ । ८ ) इति श्रुतेः । यद्वा वयोनाधैर्देवैश्छन्दोभिः सजूः । 'अथो छन्दाꣳसि वै देवा वयोनाधाश्छन्दोभिर्हीदꣳसर्वं वयुनं नद्धम् (८ । २ । २ । ८) इति श्रुतेः । एवमुत्तरमन्त्रेष्वपि । यद्वा ऋतुदेवप्राणान् जनयित्वा तैः सजूः सयुग्भूत्वा प्रजापतिर्यथा त्वामुपहितवानेवमहमप्यग्नये त्वामुपदधामीति शेषः । अश्विनौ चेह त्वां सादयताम् 'तदृतून् प्राजनयदृतुभिर्वै सयुग्भूत्वा' ( ८ । २ । २ । ८ ) इति श्रुतेः । उत्तरचतुर्मन्त्रेषु वसुभिः रुद्रैः आदित्यैर्विश्वैर्देवैः सजूरिति विशेषः । शेषं पूर्ववतुल्यम् ॥ ७ ॥

## अष्टमी ।

✓ प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकय । अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरय ॥ ८ ॥

उ० प्राणभृत उपदधाति । प्राणं मे पाहि गोपाय । अपानं मे पाहि । व्यानं मे पाहि । चक्षुर्मे उर्व्या दिशाहि विभावय । श्रोत्रं मे मम श्लोकय । श्लोक इति वाङ्नामसु पठितम् श्लोकं पाहि श्रोत्रं कुरु । अपस्या उपदधाति । अपः पिन्व । पिन्वतिः सेचनार्थः । ओषधीर्जिन्व । जिन्वतिः प्रीतिकर्मा । द्विपादवद्विपादमिति विभक्तिव्यत्ययः । अव गोपाय । चतुष्पात्पाहि चतुष्पादं गोपाय । दिवो वृष्टिमेरय द्युलोकाद्वृष्टिं आईरय आगमय ॥ ८ ॥

म० 'प्राणभृतः प्राणं म इति' ( का० १७ । ८ । २० ) पञ्चयजुर्भिः प्राणभृत्संज्ञका इष्टकाः पूर्वादिषूपदधाति । पञ्च वायुदेवत्यानि यजूंषि । 'प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधाति' ( ८ । २ । ३ । २ ) इति श्रुतेः । हे इष्टके, त्वं मे मम प्राणं प्राणरूपं वायुं पाहि पालय । एवमपानं मम पाहि । व्यानं वायुं च मे मम पाहि । उर्व्या विस्तीर्णया दृष्ट्या मे चक्षुर्विभाहि विशेषेण प्रकाशय । दर्शनसमर्थं कुर्वित्यर्थः । मम श्रोत्रं कर्णेन्द्रियं श्लोकय सङ्घाते शक्तं कुरु । 'श्लोकृ सङ्घाते' बहुशब्दश्रवणसमर्थं कुर्वित्यर्थः । 'अपः पिन्वेत्यपस्याः' ( का० १७ । ८ । २१ ) । पञ्चमन्त्रैरपस्यासंज्ञा इष्टका उपदधाति । अब्देवत्यानि पञ्च यजूंषि । हे इष्टके, त्वमपो जलानि पिन्व सिञ्च । पिन्वतिः सेचनार्थः । ओषधीर्जिन्व प्रीणय । जिन्वतिः प्रीतिकर्मा । द्विपान्मनुष्यशरीरमव रक्ष । चतुष्पात्पशुशरीरं पाहि पालय । दिवो द्युलोकाद्वृष्टिमेरय आ समन्तात्प्रवर्तय ॥ ८ ॥

## नवमी ।

मूर्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विष्टम्भो वयोऽधिपतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दो बस्तो वयो विवलं छन्दो वृष्णिर्वयो विशालं छन्दः पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः सिꣳहो वयश्छदिश्छन्दः पृष्ठवाड्वयो बृहती छन्द उक्षा वयः ककुप्छन्दऽ ऋषभो वयः सतोबृहती छन्दः ॥ ९ ॥

उ० पयस्या उपदधाति । अत्र श्रुत्युक्तं निदानम् । प्रजापतेर्विश्रस्तात्पशव उदक्रामन् छन्दांसि भूत्वा तान् गायत्री भूत्वा वयसाप्नोत्प्रजापतिः । मूर्धावयः प्रजापतिश्छन्दः चतुर्भिर्मन्त्रैर्गायत्रीरूपः प्रजापतिः कल्प्यते । मूर्धा प्रजापतिः प्राधान्यात् । वयः शरीरावस्था । प्रजापतिः स्वयमेव छन्दः । क्षत्रं वयः प्रजापतिर्वै क्षत्रं वयोभवत् । मयन्दछन्दः अनिरुक्तत्वात्प्रजापतिः । मयं सुखं ददातीति मयन्दः । विष्टंभो वयः । प्रजापतिर्विष्टंभः । सहीदं सर्वं विष्टभ्नोति । अधिपतिश्छन्दः । प्रजापतिर्वा अधिपतिः । विश्वकर्मा वयः प्रजापतिर्वै विश्वकर्मा परमेष्ठीछन्दः । आपो वै प्रजापतिः परमेष्ठी । अयमष्टावयवो गायत्रीरूपः प्रजापतिः पञ्चदशवक्ष्यमाणान्पशून्गृह्णाति । वयसा वयोवस्थया जरया । 'अस्माज्जीर्णं पशुं वयसाप्त' इति श्रुतिः । बस्तो वयो विवलं छन्दः । बस्तःपशुः विवलं छन्दोरूपमाश्रित्योदक्रामत् तं प्रजापतिर्गायत्रीरूपो वयसाप्नोत् एकपदा वै विवलं छन्दः तद्विविधं वरमुत्कृष्टं पुरुषसंबन्धि हि तच्छन्दः । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । वृष्णिर्वयो विशालंछन्दः । वृष्णिं मेषं वयसा विवलं विशालं द्विपदाछन्द आप्नोति । पुरुषो वयस्तन्द्रं छन्दः । तन्द्रं छन्दः पङ्क्तिः । व्याघ्रो वयोनाधृष्टंछन्दः विराड्वा अनाधृष्टं छन्दः । सिंहो वयः छदिश् छन्दः । अतिछन्दा वै छदिश्छन्दः । अथातो निरुक्तानिव पशूनिरुक्तानि छन्दांस्यभिदधाति पृष्ठवाड् वय इत्यादिदश निगदव्याख्याताः ॥ ९ ॥

म० 'वयस्याः पञ्च पञ्चानूकान्तेषु मूर्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात्' ( का० १७ । ८ । २२ ) । दक्षिणो-

त्तरपश्चिमेष्वनूकान्तेषु पञ्च-पञ्च पूर्वं तु चतस्रो वयस्यासंज्ञका इष्टका उपदधात्येकोनविंशतिमन्त्रैरित्यर्थः। एकोनविंशतिर्यजूंषि लिङ्गोक्तदेवतानि। वयःशब्दोपेतमन्त्रैरुपधेया इष्टकाः। अत्र श्रुत्युक्तं निदानम्। पुरा सृष्टवतः प्रजापतेर्व्याकुलात्सकाशात् सृष्टाः पशवश्छन्दोरूपमास्थाय निरगच्छन्। ततः प्रजापतिरपि गायत्र्यादिच्छन्दोरूपं स्वीकृत्य पशुसंबन्धिन्या तत्तद्वयोव-स्थया तान्पशूनाप्नोत्तदभिधायका मन्त्राः। 'प्रजापतेर्विस्रस्ता-त्पशव उदक्रामंश्छन्दाᳬंसि भूत्वा तान्गायत्री छन्दो भूत्वा वय-साप्नोत्' ( ८। २। ३। ९ ) इति श्रुतेः। तत्रादौ चतुर्भिर्मन्त्रैः प्रजापतेरष्टावयवात्मकं गायत्रीरूपं परिकल्प्यते। मूर्धाप्रधानः प्रजापतिश्छन्दो गायत्रीरूपो भूत्वा वयः। विभक्तिव्यत्ययः। वयसा कृत्वा पशूनाप्नोदिति शेषः। तद्रूपां त्वामिष्टके उपदधा-मीति सर्वत्र शेषः। अनेन मन्त्रेण प्रजापतेर्द्वाववयवौ कल्पितौ। 'प्रजापतिर्वै मूर्धा स वयोऽभवत्प्रजापतिश्छन्द इति प्रजाप-तिरेव छन्दोऽभवत्' ( ८। २। ३। १० ) इति श्रुतेः। क्षतात्त्रायत इति क्षत्रं तादृशं वयः शरीरावस्था प्रजापतिरभवत्. मयं सुखं ददातीति मयन्दमनिरुक्तं छन्दोऽभवत्। क्षत्रं वय इति प्रजापतिर्वै क्षत्रᳬं स वयोऽभवन्मयन्दं छन्द इति। यद्वा 'अनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवत्' ( ८। २। ३। ११ ) इति श्रुतेः। अधिपतिः अधिकं पालकः विष्टभ्नोति जगत्स्तम्भयतीति विष्टम्भः ईदृशः प्रजापतिः वयस्तत्पशुवयोऽवस्थावान् छन्दश्चाभवत्। 'प्रजा-पतिर्वै विष्टम्भः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वा अधिपतिः प्रजापतिरेव छन्दोऽभवत्' ( ८। २। ३। १२ ) इति श्रुतेः। परमे पदे तिष्ठतीति परमेष्ठी विश्वकर्मा सर्वस्रष्टा प्रजापतिर्वयश्छन्दश्चाभवत्। 'प्रजापतिर्वै विश्वकर्मा स वयो-ऽभवत्परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवत्' ( ८। २। ३। १३ ) इति श्रुतेः। एवं प्रतिमन्त्रं द्वौ द्वाववयवावित्यष्टाव-यवः प्रजापतिर्गायत्रीरूपः परिकल्पितः। तथा चाष्टसंख्यो-पेतत्वात्सर्वच्छन्दःप्रकृतिभूतं गायत्रीछन्दो भूत्वा वयसा। तृतीयाया लुक्। वयोऽवस्थया वक्ष्यमाणान् पञ्चदश पशून् प्रजापतिरगृह्णात्। 'तानि वा एतानि चत्वारि वयाᳬंसि चत्वारि छन्दाᳬंसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान्पशून्वयसाप्नोत्' ( ८। २। ३। १४ ) इति श्रुतेः। वस्तः अजः। द्वितीयैकवचनस्य सुपां सुलुगिति सु-आदेशः। वय इति तृतीयालुक्। विवलं वरमुत्कृष्टं छन्दः एकपदाख्यं छन्दो भूत्वोत्क्रान्तं वस्तं पशुं वयसा तत्त-द्वयोवस्थया जग्राह। एवमुत्तरमन्त्रेष्वपि विभक्तिविपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिस्तत्तद्वयसा तं तं पशुं गृहीतवानिति योज्यम्। विशेषस्तु वक्ष्यते। 'वस्तो वय इति वस्तं वयसाप्नोद्विवलं छन्द इत्येकपदा विवलं छन्द एकपदा ह भूत्वाजा उच्चक्रमुः' ( ८। २। ४। १ ) इति श्रुतेः। विशालं द्विपदागायत्रीरूपं छन्दो भूत्वा वृष्णिं सेचनसमर्थं मेषं वयसा जग्राह। 'वृष्णिं वयसाप्नोद्विशालं छन्दः इति द्विपदा वै विशालं छन्दो द्विपदा ह भूत्वा वय उच्चक्रमुः' ( ८। २। ४। २ ) इति श्रुतेः। तन्द्रं पङ्क्तिश्छन्दो भूत्वोत्क्रान्तं पुरुषं पशुं वयसाप्नोत्। 'पुरुषं वयसाप्नोत्तन्द्रं छन्द इति पङ्क्तिर्वै तन्द्रं छन्दः पङ्क्तिर्ह भूत्वा पुरुषा उच्चक्रमुः' ( ८। २। ४। ३ ) इति श्रुतेः। अनाधृष्टं विराट्छन्दो भूत्वोत्क्रान्तं व्याघ्रं पशुं वय-साऽग्रहीत्. 'व्याघ्रं वयसाप्नोदनाधृष्टं छन्द इति विराड्वा छन्दोऽन्नं वै विराडन्नमनाधृष्टं विराड्भूत्वा व्याघ्रा उच्च०' ( ८। २। ४। ४। ८ )। छादयतीति छदिरतिच्छन्दा-छन्दो भूत्वोत्क्रान्तं सिंहं पशुं वयसाग्रहीत्। 'सिᳬंहं वयसा-प्नोच्छदिश्छन्द इत्यतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दाᳬंसि छादयत्यतिच्छन्दा ह भूत्वा सिᳬंहा उच्च०' इति 'अथातो निरुक्तानेव पशून्निरुक्तानि छन्दाᳬंस्युपदधाति' इति श्रुतेः सप्तानि छन्दांसि दशोच्यन्ते। पष्ठे पृष्ठभागे वहतीति पष्ठवाट् पञ्चवर्षः पशुः बृहती छन्दो भूत्वोत्क्रान्तं पष्ठवाहं पशुं वयसाग्रहीत्। 'पष्ठवाहं वयसाप्नोद्बृहतीच्छन्द इति बृहती ह भूत्वा पष्ठवाह उच्च०' इति। उक्षा सेचनसमर्थः पशुः। आद्यन्ताव-ष्टाक्षरौ पादौ मध्यमो द्वादशाक्षरः सा ककुप् ककुप्छन्दो भूत्वो-त्क्रान्तमुक्षाणं पशुं वयसाग्रहीत्। 'उक्षाणं वयसाप्नोत्ककुप्छन्द इति ककुब्भूत्वोक्षाण उच्च०' इति। वृषभः सेचनसमर्थो-ऽनड्वान्। द्वादशाक्षरत्रिपादा सतोबृहती सा भूत्वोत्क्रान्तमृषभं वयसाग्रहीत्। ऋषभं वयसाप्नोत्सतोबृहतीछन्द इति सतो-बृहती भूत्वर्षभा उच्च०' इति॥ ९॥

## दशमी।

अनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती-छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट् छन्दः पञ्चाविर्वयो गायत्री छन्दस्त्रिवत्सो वय उष्णिक् छन्दस्तुर्यवाड्वयोऽनुष्टुप् छन्दो लोकं ता इन्द्रम्॥ १०॥

**म०** अनः शकटं वहतीत्यनड्वान्बलीवर्दः पङ्क्तिश्छन्दो भूत्वो-त्क्रान्तमनड्वाहं पशुं वयसाग्रहीत्। अनड्वाहं पशुं वयसाग्रहीत्। अनड्वाहं वयसाप्नोत्पङ्क्तिश्छन्द इति पङ्क्तिर्ह भूत्वानड्वाह उच्च०' ( ८। २। ४। ९–१५ ) धेनुः नवप्रसूता सवत्सा गौः जगती छन्दो भूत्वोत्क्रान्ता धेनुं वयसाग्रहीत्। 'धेनुं वयसाप्नो-ज्जगती छन्द इति जगती ह भूत्वा धेनव उच्च०' इति। षण्मा-सात्मकः कालोऽविः तिस्रोऽवयोऽस्य त्र्यविः अष्टादशमासः पशुः त्रिष्टुप्छन्दो भूत्वोत्क्रान्तं त्र्यविं पशुं वयसाग्रहीत् त्र्यविं पशुं वय-साग्रहीत्। 'त्र्यविं वयसाप्नोत्त्रिष्टुप् छन्द इति त्रिष्टुब् ह भूत्वा त्र्यव उच्च०' इति। 'दोऽवखण्डने' क्तिन्प्रत्ययः। दितिं खण्डनमर्हति दित्यं धान्यं वहति दित्यवाट्। यद्वा द्विवर्षः

पशुर्दित्यवाड् विराट्छन्दो भूलोकान्तं दित्यवाहं पशुं वयसाग्रहीत् । 'दित्यवाहं वयसाप्रोद्विराट् छन्द इति विराड् भूत्वा दित्यवाह उच०' इति । पञ्चाविः पञ्चावयो यस्य सः सार्धद्विवर्षः पशुः गायत्री भूत्वोत्कान्तं पञ्चाविं पशुमग्रहीत् । 'पञ्चाविं वयसाप्रोद्गायत्री छन्द इति गायत्री ह भूत्वा पञ्चावय उच०' इति । त्रिवत्सः त्रयो वत्साः वत्सराः यस्य सः त्रिवत्सः पशुः उष्णिक् छन्दो भूलोकान्तं त्रिवत्सं जग्राह । 'त्रिवत्सं वयसाप्रोदुष्णिक् छन्द इत्युष्णिग्घ भूत्वा त्रिवत्सा उच०' इति । तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति चतुर्वर्षः पशुः अनुष्टुप् छन्दो भूलोकान्तं तुर्यवाहं पशुं प्रजापतिर्वयसाग्रहीत् । 'तुर्यवाहं वयसाप्रोदनुष्टुप् छन्द इत्यनुष्टुब् ह भूत्वा तुर्यवाह उच्चक्रमुः' (८।२।४।१५) इति श्रुतेः । एवं श्रुत्यनुसारेण मन्त्रा व्याख्याताः । 'दक्षिणश्रोणेरधि लोकंपृणाः पूर्ववत्' ( का० १७ । ८ । २४) । दक्षिणश्रोणिमारभ्य लोकंपृणा उपदधाति ( १२, ५४ । ५५ । ५६ ) पुरीषनिर्वापः सम्यर्चोपस्थानं चेति सूत्रार्थः ॥ १० ॥

इति द्वितीया चितिः संपूर्णा ।

## एकादशी ।

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे ॥११॥

उ० तृतीयां चितिमिन्द्राग्नी विश्वकर्मा नापश्यत् । तत्र स्वयमातृण्णा प्रथमा । इन्द्राग्नी अव्यथमानाम् । अनुष्टुप् । पूर्वोऽर्धर्च ऐन्द्राग्नः उत्तरः स्वयमातृण्यायाः । तत्रोत्तरोऽर्धर्चः पूर्वं व्याख्यायते । तत्र विबाधत इति पुरुषव्यत्ययः । येयं पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधते अभिभवति तामिन्द्राग्नी अव्यथमानां अचलन्तीमिष्टकां दृंहतं दृढीकुरुतम् युवं युवाम् ॥ ११ ॥

म० अथ तृतीया चितिः । इन्द्राग्नी विश्वकर्मा च तन्मन्त्राणामृषिः । 'तृतीयायाꣳस्वयमातृण्णामिन्द्राग्नी इति मध्ये' ( का० १७ । ८ । २५ ) । तृतीयायां चितावात्मनो मध्ये स्वयमातृण्णामुपदधाति । अनुष्टुप् पूर्वोऽर्धर्च इन्द्राग्निदेवत्यः उत्तरः स्वयमातृण्णादेवतः । हे इन्द्राग्नी, युवं युवामव्यथमानामचलन्तीं भङ्गरहितामिष्टकां स्वयमातृण्णाख्यां दृढीकुरुतम् । एवमिन्द्राग्नी प्रत्युक्त्वा इष्टकामाह । हे स्वयमातृण्णे, पृष्ठेन स्वोपरिभागेन द्यावापृथिवी अन्तरिक्षं च त्वं विबाधसे अभिभवसि लोकत्रयमत्येषि ॥ ११ ॥

## द्वादशी ।

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीः ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ १२ ॥

उ० विश्वकर्मा त्वा प्रजापतिः सादयतु इत्यादि पूर्वं व्याख्येयम् । अन्तरिक्षस्य पृष्ठेनायुष्ठा इति विशेषः ॥१२॥

म० वायुदेवत्यं विकृतिच्छन्दस्कं यजुः स्वयमातृण्णोपधाने एव विनियुक्तम् । हे स्वयमातृण्णे, विश्वकर्मा प्रजापतिरन्तरिक्षस्य पृष्ठे उपरि त्वा त्वां सादयतु स्थापयतु । किंभूतां त्वाम् । व्यचस्वतीमभिव्यक्तियुक्तां प्रथस्वतीं प्रथनं प्रथो विस्तारस्तद्युक्ताम् । हे इष्टके, त्वमन्तरिक्षं यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय । अन्तरिक्षं दृंह परोपद्रवाभावेन दृढीकुरु । तदन्तरिक्षं मा हिंसीः । किमर्थम् । विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय प्रतिष्ठायै स्वगृहस्थित्यै चरित्राय शास्त्रीयाचरणाय । प्राणिनामेतत्सर्वं लोकदार्ढ्ये सति भवतीति नभोनियमनादि प्रार्थ्यते इति भावः । किंच मह्या महत्या स्वस्त्या योगक्षेमसंपत्त्या शन्तमेनातिशुभकारिणा छर्दिषा तेजोविशेषेण च कृत्वा वायुः त्वा त्वामभिपातु सर्वतो रक्षतु । तवाधिष्ठात्री या देवता तया देवतयानुगृहीता ध्रुवा स्थिरा सती सीदोपविश । अङ्गिरस्वत् अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिता तद्वत् ॥ १२ ॥

## त्रयोदशी ।

राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिक् ॥ १३ ॥

उ० शतम् ७०० पञ्च दिश्या उपदधाति । वायुरपश्यत् राज्ञ्यसीति प्रतिमन्त्रम् ॥ १३ ॥

म० 'अनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्ञ्यसीति प्रतिमन्त्रम्' ( का० १७ । ८ । २६ ) । वैश्वदेवीवदिति प्रतिदिशं रेतःसिग्वेलायामनूकेषु पञ्च दिश्यासंज्ञका इष्टका उपदधाति पञ्चमीं दक्षिणामुत्तरेणेति सूत्रार्थः । दिक्शब्दोपेतत्वान्मन्त्राणां दिश्या इष्टकाः । दिग्देवत्यानि पञ्च यजूंषि । हे इष्टके, त्वं राज्ञी राजमाना सती प्राची दिक् पूर्वा दिग्भवसि गायत्रीरूपासि । विराट् विविधं राजमाना दक्षिणा दिक् असि त्रिष्टुब्रूपासि । सम्राट् सम्यग्राजमाना प्रतीची दिक् जगत्यसि । स्वराट् परनिरपेक्षं स्वयमेव राजमाना सती उदीची दिगनुष्टुवसि । अधिकं पातीत्यधिपत्नी बृहती प्रौढोर्ध्वा दिक् पङ्क्तिरसि । दिक्छन्दोरूपां तां त्वां सादयामीति सर्वत्र शेषः । 'छन्दाꣳसि वै दिशो गायत्री वै प्राची दिक् त्रिष्टुब्दक्षिणा जगती प्रतीच्यनुष्टुबुदीची पङ्क्तिरूर्ध्वेति' (८।३।१।१४) श्रुतेः ॥१३॥

## चतुर्दशी ।

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योति-

ष्मतीम् ॥ विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ १४ ॥

उ० विश्वज्योतिषमुपदधाति । विश्वकर्मा त्वा । वायुदेवत्या ॥ १४ ॥

म० 'विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः' ( का० १७ । ९ । ३ ) प्रथमोपहितायाः विश्वज्योतिष उपरि विश्वज्योतिषमिष्टकामुपदधाति । वायुदेवत्यं शक्करीच्छन्दस्कं यजुः । हे इष्टके, ज्योतिष्मतीं वायुरूपां त्वां विश्वकर्मान्तरिक्षस्य पृष्ठे त्वां सादयतु । 'अन्तरिक्षस्य पृष्ठे ह्ययं ज्योतिष्मान् वायुः' ( ८ । ३ । २ । ३ ) इति श्रुतेः । किंच सर्वप्राणादिलाभाय त्वं सर्वं ज्योतिर्यच्छ प्रयच्छ । वायुः तवाधिपतिः तया देवतया ध्रुवा सती सीद अङ्गिरसां चिताविव ॥ १४ ॥

## पञ्चदशी ।

नभश्च नभस्यश्च वार्षिकावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । वार्षिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥१५॥

म० 'ऋतव्ये नभश्च नभस्यश्चेति' ( का० १७ । ९ । ४ ) पूर्वर्तव्ययोरुपरि द्वे ऋतव्ये उपदधाति । ऋतुदैवत्यमुत्कृतिच्छन्दस्कं यजुः । नभः श्रावणः नभस्यो भाद्रपदः । शेषं व्याख्यातम् ( अ० १३ क० २५ ) ॥ १५ ॥

## षोडशी ।

इषश्चोर्जश्च शारदावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । शारदावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ १६ ॥

उ० ऋतव्या नभस्वद्देवत्या ॥ १६ ॥

म० 'इषश्चोर्जश्चेत्यपरे' ( का० १७ । ९ । ५ ) । अपरे ऋतव्ये पूर्वयोरुपरि दधाति । ऋतव्यमुत्कृतियजुः । इषः आश्विनः ऊर्जः कार्तिकः शरदवयवौ । शिष्टं प्रोक्तम् ( अ० १३ क० २५ ) ॥ १६ ॥

## सप्तदशी ।

आयुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे पाहि वाचं मे पिन्व मनो मे जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छ ॥ १७ ॥

उ० दश प्राणभृतः । आयुर्मे पाहि गोपाय । वाचं मे पिन्व त्रयीलक्षणां वाचं मे मम पिन्व सिंच कामैः पूरय । मनो मे जिन्व । जिन्वतिः प्रीतिकर्मा । ज्योतिर्मे यच्छ देहि । सुखबोध्यमन्यत् ॥ १७ ॥

म० 'पूर्वार्धे प्राणभृतो दशायुर्मे इति प्रतिमन्त्रम्' ( का० १७ । ९ । ६ ) आत्मनः पूर्वभागे प्राणभृत्संज्ञा दशेष्टका उपदधातीति सूत्रार्थः । दश यजूंषि लिङ्गोक्तदेवत्यानि । हे इष्टके, मे ममायुः त्वं पाहि रक्ष । एवं प्राणमपानं व्यानं चक्षुः श्रोत्रं मे रक्ष । मे वाचं पिन्व सिञ्च कामैः पूरय । मे मनो जिन्व प्रीणय । ममात्मानं जीवं पाहि मह्यं ज्योतिस्तेजो यच्छ ॥ १७ ॥

## अष्टादशी ।

मा छन्दः प्रमा छन्दः प्रतिमा छन्दो अस्त्रीवयश्छन्दः पङ्क्तिश्छन्द उष्णिक्छन्दो बृहती छन्दोऽनुष्टुप् छन्दो विराट् छन्दो गायत्री छन्दस्त्रिष्टुप् छन्दो जगती छन्दः ॥ १८ ॥

उ० षट्त्रिंशच्छन्दस्या उपदधाति । माछन्दः । अयं लोकोमित इव मा छन्दः छादनात् । प्रमाछन्दः । अन्तरिक्षलोको वै प्रमा । अन्तरिक्षलोकः अस्माल्लोकात्प्रमित इव दृश्यते । प्रतिमाछन्दः द्यौः प्रतिमा सा हि अन्तरिक्षलोके प्रतिमिता । अस्त्रीवयः छन्दः अन्नमस्त्रीवयः । यदेभ्यो लोकेभ्य आहुतिपरिणामभूतमन्नं स्रवति तदस्त्रीवयः । परतो निरुक्तानि छन्दांसि पङ्क्तिप्रभृतीनि ॥ १८ ॥

म० 'छन्दस्या द्वादश द्वादशाप्ययेषु मा छन्द' (का० १७ । ९ । ८ ) इति । अप्ययेषु पक्षपुच्छात्मसन्धिषु त्रिषु द्वादश द्वादश छन्दस्यासंज्ञा इष्टका उपदधातीति सूत्रार्थः । षट्त्रिंशद्यजूंषि लिङ्गोक्तदेवत्यानि । मीयत इति मा मितश्छादनाच्छन्दोऽयं लोकः । हे इष्टके, त्वं तद्रूपासि । 'अयं वै लोको मायं लोको मित इव' ( ८ । ३ । ३ । ५ ) इति श्रुतेः । अस्माल्लोकात्प्रमीयत इति प्रमान्तरिक्षलोकरूपासि । 'अन्तरिक्षलोको वै प्रमान्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इव' ( ८ । ३ । ३ । ५ ) इति श्रुतेः प्रतिमा द्यौः सा ह्यन्तरिक्षे प्रतिमिता । 'असौ वै लोकः प्रतिमैष ह्यन्तरिक्षलोके प्रतिमित इवेति' ( ८ । ३ । ३ । ५ ) श्रुतेः । अस्त्रीवयः अस्यते क्षिप्यत इत्यस्त्रि अस्रि पतनं दृशावयोऽन्नं यस्मात्तदस्त्रिवयः । दीर्घश्छान्दसः । अस्त्रीवयभाति हि त्रयरूपं छादनाच्छन्दस्तद्रूपासि । 'यदेषु लोकेष्वन्नंतद्रूपमुपदधाथो यदेभ्यो लोकेभ्योऽन्नं स्रवति तदस्त्रीवय' (गामुत्तरयोर्व्यामा

इति श्रुतेः । इतः सष्टान्येव छन्दांसि पङ्क्त्यादीन्यष्टौ 'अथो निरुक्तान्येव छन्दाꣳस्युपदधाति' ( ८।३।३।५ ) इति श्रुतेः । इष्टके, त्वं पङ्क्त्युष्णिग्बृहत्यनुष्टुप्विराड्गायत्रीत्रिष्टुब्जगतीच्छन्दोरूपासीत्यर्थः ॥ १८ ॥

## एकोनविंशी ।

पृ॒थि॒वी छन्दो॒ऽन्तरि॑क्षं॒ छन्दो॒ द्यौश्छन्दः॒ समा॒श्छन्दो॒ नक्ष॑त्राणि॒ छन्दो॒ वाक्छन्दो॒ मन॒श्छन्दः॑ कृ॒षिश्छन्दो॒ हिर॑ण्यं॒ छन्दो॒ गौश्छन्दो॒ऽजा छन्दो॒ऽश्व॒श्छन्दः॑ ॥ १९ ॥

**उ०** पृथिवीछन्द इति । यान्येतद्देवत्यानि छन्दांसि तान्युपदधाति । छादयन्तीति छन्दांस्युच्यन्ते ॥ १९ ॥

**म०** पृथिव्यादिदेवत्यानि यानि छन्दांसि पद्रूपासि । समाः संवत्सराः सष्टमन्यत् । 'यान्येतद्देवत्यानि छन्दाꣳसि तान्येवैतदुपदधातीति' ( ८।३।३।६ ) श्रुतेः ॥ १९ ॥

## विंशी ।

अ॒ग्निर्दे॒वता॒ वातो॑ दे॒वता॒ सूर्यो॑ दे॒वता॑ च॒न्द्रमा॑ दे॒वता॒ वस॑वो दे॒वता॑ रु॒द्रा दे॒वता॑दि॒त्या दे॒वता॑ म॒रुतो॑ दे॒वता॒ विश्वे॑दे॒वा दे॒वता॒ बृह॒स्पति॑र्दे॒वतेन्द्रो॑ दे॒वता॒ वरु॑णो दे॒वता॑ ॥ २० ॥

**उ०** अग्निर्देवता वातो देवतेत्येता वै छन्दांसि ता अपि छादयन्ति ॥ २० ॥

**म०** इष्टके, त्वमग्न्यादिदेवतारूपासि तामुपदधामीति सर्वत्र शेषः । अग्न्यादीनां देवतात्वं प्रसिद्धम् । 'अग्निर्देवता वातो देवतेत्येता वै देवताश्छन्दाꣳसि तान्येवैतदुपदधातीति' ( ८।३।३।६ ) श्रुतेः ॥ २० ॥

## एकविंशी ।

[१]मू॒र्धासि॒ राड्ध्रु॒वासि॑ ध॒रुणा॑ ध॒र्त्र्य॑सि॒ धर॑णी । आयु॑षे॒ त्वा॒ वर्च॑से॒ त्वा॒ कृ॒ष्यै त्वा॒ क्षेमा॑य॒ त्वा ॥ २१ ॥

**उ०** चतुर्दश वालखिल्या उपदधाति द्वाभ्यामनुष्टुप्परोष्णिग्भ्याम् । मूर्धासि राट् मूर्धासि शिरोभूतासि राट् । 'राजृ दीप्तौ' दीप्ता चासि । ध्रुवा स्थिरासि । धरुणा च धारयित्री च धर्त्र्यसि धारयित्री असि । धरणी च विधरणी च । मर्यादाभूता च । एवं त्रिलोकसंस्तवः तिसृणामिष्टकानाम् । आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा उपदधामिति शेषः । एतासां चतसृणां खिल्यानां मन्त्रस्तवः ॥ २१ ॥

[१] 'वालखिल्याः सप्त पुरस्तात्प्राणभृद्भ्यो वापरा द्वादश- ... मूर्धासि राडिति प्रतिमन्त्रम्' ( का० १७।९। ) प्रागुक्तदशप्राणभृद्भ्यः पूर्वा अपरा वा सप्त वालखिल्यासंज्ञा इष्टका उपदधाति मूर्धासीत्यादिसप्तमन्त्रैः । तुर्विशेषे । अपराः सप्त वालखिल्यास्तु द्वादशच्छन्दस्याभ्योऽपरा एवोपधेयाः यन्त्रीति सप्तमन्त्रैः । वालमात्रेणापि खिला अभिन्ना इति वालखिल्याः प्राणास्ते च चतुर्दश सप्त पुरो हस्तौ बाहू शिरो ग्रीवा नाभेरूर्ध्वभागश्चेति ऊरू जानुनी पादौ नाभेरधोभागश्चेति सप्त पश्चादधोभागे एतेष्वङ्गेषु प्राणानां विद्यमानत्वात्तानेवोपदधाति । तथाच श्रुतिः 'प्राणा वै वालखिल्याः प्राणानेवैतदुपदधाति ता यद्वालखिल्या नाम' ( ८।३।४।१।४—५ ) यद्वा 'उर्वरयोरसंभिन्नं भवति खिल इति वै तदाचक्षते वालमात्रादुहेमे प्राणा असंभिन्नास्ते यद्वालमात्रादसंभिन्नास्तस्माद्वालखिल्याः ॥ १ ॥ सप्त वा इमे पुरस्तात्प्राणाश्चत्वारि दोर्बाहवाणि शिरो ग्रीवा यदूर्ध्वं नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राणाः ॥ ४ ॥ सप्त वा इमे पश्चात्प्राणाश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राणा एते वै सप्त पश्चात्प्राणास्तानस्मिन्नेतद्दधातीति ॥ ५ ॥' इति सूत्रार्थः । मूर्धासि अनुष्टुप् गायत्री परोष्णिक् । ऋग्द्वये चतुर्दश यजूंषि वालखिल्यादेवत्यानि । हे इष्टके, त्वं मूर्धा मूर्धवदुत्तमा राट् राजमाना चासि । हे इष्टके, त्वं ध्रुवा स्थिरा धरुणा धारणहेतुश्चासि । हे इष्टके, त्वं धर्त्री धारणं कुर्वती धरणी भूमिरूपा चासि । एवमिष्टकात्रयस्य त्रिलोकरूपत्वम् । तदुक्तं श्रुत्या 'मूर्धासि राडितीमं लोकमरोहन् ध्रुवासि धरुणेत्यन्तरिक्षलोकं धर्त्र्यसि धरणीत्यमुं लोकमिति' ( ८।३।४।८ ) । आयुषे त्वा आयुर्वृद्ध्यर्थं त्वामुपदधामि । वर्चसे कान्त्यर्थं त्वामुपदधामि । कृष्यै शस्यनिष्पत्तये त्वामु० । क्षेमाय संपादितधनरक्षणाय त्वामु० । इष्टकाचतुष्टयस्य पशुसंस्तवः 'आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वेति चत्वारश्चतुष्पादाः पशवः' ( ८।३।४।८ ) इति श्रुतेः ॥ २१ ॥

## द्वाविंशी ।

य॒न्त्री रा॒ड्य॒न्त्र्य॑सि॒ यम॑नी ध्रु॒वासि॒ धरि॑त्री । इ॒षे त्वो॒र्जे त्वा॑ र॒य्यै त्वा॒ पोषा॑य॒ त्वा॒ लो॒कं ता इ॒न्द्र॑म् ॥ २२ ॥

**उ०** परतोपि तिसृणां द्युलोकप्रभृतिलोकसंस्तवः । यन्त्रीराट् । यमनी दीप्ता चासि । यन्त्री असि । यमनी ध्रुवा असि धरित्री । पशुसंस्तवः पूर्ववत् । इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा । लोकंता इन्द्रमिति व्याख्यातम् ॥ २२ ॥

**म०** हे इष्टके, त्वं यन्त्री नियमोपेता राट् राजमाना चासि । तथा यन्त्री स्वयमपि सती यमनी सर्वेषां नियमकारिण्यसि । ध्रुवा स्थिरा सती धरित्री भूमिरूपा चासि । तिसृणां त्रिलोकसंस्तवः 'यन्त्री राडित्यमुं लोकमरोहन् यन्त्र्यसि यमनीत्यन्तरिक्षलोकं ध्रुवासि धरित्रीतीमं लोकमिति' ( ८।३।४।

१० ) श्रुतेः । हे इष्टके, इषेऽन्नाय त्वामुपदधामि । ऊर्जे बलाय त्वामु० । रय्यै धनाय त्वामु० । पोषाय धनपुष्ट्यै त्वामु० । 'इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वेति चतस्रश्चतुष्पादाः पशवः' ( ८ । ३ । ४ । १० ) इति श्रुतेश्चतसृणां पशुसंस्तवः । 'उत्तरश्रोणेरधिलोकंपृणाः पूर्ववत्' ( का० १७ । ९ । १५ ) । उत्तरश्रोणेरारभ्य प्रथमचितिवदेव लोकंपृणा उपदधाति । ततः पुरीषनिर्वापोपस्थाने ॥ २२ ॥

इति तृतीया चितिः ।

## त्रयोविंशी ।

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशो धरुण एकविꣳशः प्रतूर्तिरष्टादशस्तपो नवदशोऽभीवर्तः सविꣳशो वर्चो द्वाविꣳशः संभरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशो गर्भाः पञ्चविꣳश ओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपं चतुस्त्रिꣳशो नाकः षट्त्रिꣳशो विवर्तोऽष्टाचत्वारिꣳशो धर्त्रं चतुष्टोमः ॥ २३ ॥

उ० चतुर्थीं चितिमृषयोऽपश्यन् । आशुस्त्रिवृदित्यष्टादशेष्टकाः प्रतिमन्त्रमुपदधाति । स्तोमसंख्योपलक्षितैर्मन्त्रैः स्तोमानुपदधातीति श्रुतिः । प्रकटार्था मन्त्राः श्रुत्या च व्याख्याताः तथापि किंचित्किंचिदुच्यते । आशुः त्रिवृत् यएव त्रिवृत् स्तोमः सोऽनेन मन्त्रेणोक्तः इत्येकं व्याख्यानम् । अथो वायुर्वा आशुः शीघ्रः त्रिवृत् त्रिलोकसंचारी । एवमुपरितनान्यपि व्याख्येयानि । भान्तः पञ्चदशः । चन्द्रमा उच्यते । सहि भाति च पञ्चदशाहान्यापूर्यते च अपक्षीयते च । व्योमा सप्तदशः । संवत्सर उक्तः । स हि विविधमवति प्राणिनः सप्तदशावयवश्च । धरुण एकविंशः । आदित्यः स्तोमो वोच्यते । 'प्रतिष्ठा वै धरुणः प्रतिष्ठैकविंशः स्तोमः । आदित्या वा प्रतिष्ठा । मासादिभिः एकविंशावयवं च । परतः संवत्सररूपाणि व्याख्यातानि । प्रतूर्तिः संवत्सरः । स हि सर्वाणि भूतानि प्रतिरति प्रवर्धयति । तपः । संवत्सरो हि सर्वाणि भूतानि तपति शीतोष्णवर्षैः । अभीवर्तः । संवत्सरो हि सर्वाणि भूतान्यभिवर्तते । तेन हि अभिवृत्तेन ऋतुलिङ्गानि भूतेषु दृश्यन्ते । वर्चः । 'संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमः' इति श्रुतिर्ब्रुवन्ती मतुब्लोपं दर्शयति । वर्चस्वी महाभाग्यवान् । संभरणः । संवत्सरो हि सर्वाणि भूतानि संभरति उत्पादयति संहरति वा विनाशयति । योनिः स्थानम् । गर्भः संवत्सरः त्रयोदशमास इहोच्यते । सच गर्भो भूत्वा ऋतून्प्रविशति । कथं पुनस्त्रयोदशोमासः ऋतून्प्रविशति । उच्यते । एकोनषण्मासाहोरात्रैश्चन्द्रो द्वादशराशीन् विभ्रमति स चान्द्र ऋतुर्भवति । आदित्यस्त्वेकषण्मासदिवसैः राशिद्वयमतिक्रामति स सौरऋतुर्भवति । तैश्च सौरैर्ऋतुभिः संवत्सरो भवति । ततश्चैकस्मिन्नृतौ सौरचान्द्रौ ऋतुर्भवतः तिथिद्वयं च । एवं षड्ऋतुषु द्वादशतिथयः प्रविशन्ति अपरेषु षट्स्वपरा द्वादश अपरेषु षट्तिथयः । स एषोऽर्धतृतीयेषु संवत्सरेषु चान्द्रो मासः प्रविशति । स एवाधिमासः स एव त्रयोदशो मासः सौरानृतून्द्वाभ्यां तिथिभ्यां प्रविशति । ओजः । अत्रापि मतुब्लोपः । ओजस्वी संवत्सर ऋतुः । 'संवत्सरो हि सर्वाणि भूतानि करोति' इति श्रुतिः । प्रतिष्ठाधिष्ठानम् । ब्रध्नस्य विष्टपम् । स्वाराज्यं वै ब्रध्नस्य विष्टपम् । स्वाराज्यं स्वतन्त्रता । नाकः काम्यत इति कं सुखम् तद्विपरीतमकं दुःखम् नास्त्यकमसुखमस्मिन्निति नाकः । विवर्तः । विविधं वर्तन्ते तत्र गतानि भूतानीति विवर्तः पितृयाणः । धर्त्रं धारणम् । चतुष्टोमः चतुरुत्तरः स्तोमः चतुष्टोमः । उत्तरपदलोपी समासः ॥ २३ ॥

म० 'उत्तरां पूर्वयोराशुस्त्रिवृदिति' ( का० १७ । १० । ७ ) । पूर्वानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये उत्तरां जह्वामात्रीमुदङ्मुख उपदधातीति सूत्रार्थः । अस्यां कण्डिकायामष्टादश यजूंषि चतुर्णां मृत्युमोहिन्युपधाने विनियोगः । प्रतूर्तिरित्यादीनां चतुर्दशार्धपद्योपधाने विनियोगः । हे इष्टके, त्वं त्रिवृत् स्तोमरूपासि साम्नामावृत्तिविशेषाः स्तोमाः तेषां विशेषणान्याशुरित्यादीनि । कीदृशस्त्रिवृत् । आशुः । 'अशू व्याप्तौ' अश्नुते व्याप्नोति सर्वान् स्तोमानित्याशुः । तद्रूपां त्वामुपदधामीति सर्वत्र शेषः । 'स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा उ वै ब्रह्म ब्रह्मैवैतदुपदधातीति' ( ८ । ४ । १ । ३ ) श्रुतेः । यद्वा आशुः वायुः त्रिवृत् त्रिषु लोकेषु वर्तत इति त्रिवृत् क्विप् सर्वभूतव्यापकत्वादाशुर्वायुस्तद्रूपासि । एवं श्रुत्यनुसारेण सर्वत्र व्याख्यायते । तथाच श्रुतिः 'स पुरस्तादुपदधात्याशुस्त्रिवृदिति य एव त्रिवृत्स्तोमस्तमुपदधाति तद्यत्तमाहाशुरित्येष हि स्तोमानामाशिष्ठोऽर्थो वायुर्वा आशुस्त्रिवृत् स एषु त्रिषु लोकेषु वर्तते तद्यत्तमाहाशुरित्येष हि सर्वेषां भूतानामाशिष्ठो वायुर्ह भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधातीति' ( ८ । ४ । १ । ९ ) । 'दक्षिणां दक्षिणयोर्भान्तः पञ्चदश' (का० १७ । १० । ९) इति दक्षिणानूकान्तविहितयोर्दक्षिणोत्तरपद्ययोर्मध्ये भान्त इति मन्त्रेण दक्षिणां पद्यां प्रत्यङ्मुख उपदधातीति सूत्रार्थः । भान्तः वज्ररूपो यः पञ्चदशः स्तोमः । यद्वा भान्तश्चन्द्रः पञ्चदशाहानि पूर्यमाणत्वात्पञ्चदशाहं क्षीयमाणत्वात् पञ्चदशः । भा कान्तिरेवान्तः स्वरूपं यस्य तद्रूपासि । 'य एव पञ्चदशः स्तोमस्तं तदुपदधाति तद्यत्तमाह भान्त इति वज्रो वै भान्तो वज्रः पञ्चदशोऽथो चन्द्रमा वै भान्तः पञ्चदशः स पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति भाति हि चन्द्रमाश्चन्द्रमा ह भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधातीति' ( ८ । ४ । १ । १० ) श्रुतेः । 'दक्षिणामुत्तरयोर्व्योमा

सप्तदश इति' (का० १७।१०।१०)। उत्तरानूकान्तविहितयोर्दक्षिणोत्तरपदयोर्मध्ये दक्षिणां पद्यां व्योमेति प्रत्यङ्मुख उपदधातीति सूत्रार्थः। विविधमवतीति व्योमा प्रजापतिः सप्तदशः स्तोमः। संवत्सरो वा व्योमा सप्तदशः द्वादशमासपञ्चर्तुरूपसप्तदशावयवत्वात्तद्रूपासि। य एव सप्तदशः स्तोमस्तं तदुपदधाति तद्यत्तमाह व्योमेति प्रजापतिर्वै व्योमा प्रजापतिः सप्तदशोऽथो संवत्सरो वा व्योमा सप्तदशस्तस्य द्वादश मासाः पञ्चर्तवस्तद्यत्तमाह व्योमेति व्योमा हि संवत्सरः संवत्सरो ह भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधातीति' (८।४।१।११) श्रुतेः 'दक्षिणामपरयोर्धरुण एकविꣳश इति' (का० १७।१०।८)। अपरानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये दक्षिणां जङ्घामात्रीं धरुण इति दक्षिणामुख उपदधातीति सूत्रार्थः। धरुणो धारकः प्रतिष्ठाभूत एकविंशः स्तोमः। यद्वा धरुण आदित्यः स एकविंशावयवत्वादेकविंशः। द्वादश मासाः पञ्चर्तवः त्रयो लोका आदित्य इत्यवयवास्तद्रूपासि। 'य एवैकविꣳशस्तोमस्तं तदुपदधाति तद्यत्तमाह धरुण इति प्रतिष्ठा वै धरुणः प्रतिष्ठैकविꣳशोऽथोऽसौ वा आदित्यो धरुण एकविꣳशस्तस्य द्वादश मासाः पञ्चर्तव इमे लोका असावेवादित्यो धरुण एकविꣳशस्तद्यत्तमाह धरुण इति यदा ह्येवैषोऽस्तमेत्यथेदꣳसर्वं ध्रियत आदित्यो ह भूत्वा पश्चात्तस्थौ तदेव रूपमुपदधातीति' (८।१।१।१२) श्रुतेः। 'चतुर्दश प्रतिमन्त्रं प्रतूर्तिरष्टादश इति' (का० १७।१०।११)। चतस्र उपधाय चतुर्दशार्धपद्या उदङ्मुख उपदधाति चतुर्दशमन्त्रैरिति सूत्रार्थः। अतः परं संवत्सररूपाण्युपदधाति। प्रकृष्टा तूर्तिस्त्वरा यस्य स प्रतूर्तिः अष्टादशः स्तोमः। यद्वा संवत्सरः प्रतूर्तिरष्टादशावयवः द्वादशमासाः पञ्चर्तवः संवत्सरश्चेत्यवयवाः। 'य एवाष्टादशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव प्रतूर्तिरष्टादशस्तस्य द्वादश मासाः पञ्चर्तवः संवत्सर एव प्रतूर्तिरष्टादशस्तद्यत्तमाह प्रतूर्तिरिति संवत्सरो हि सर्वाणि भूतानि प्रतिरति तदेव तद्रूपमुपदधातीति' (८।४।१।१३) श्रुतेः। तपोरूपो नवदशः स्तोमः। यद्वा संवत्सरस्तपः शीतोष्णवर्षैस्तपतीति स नवदशः द्वादशमासाः षड्तवः संवत्सर इति तद्रूपासि। य एव नवदशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव तपो नवदशस्तस्य द्वादश मासाः षड्तवः संवत्सर एव तपो नवदशस्तद्यत्तमाह तप इति संवत्सरो हि सर्वाणि भूतानि तपति तदेव तद्रूपमुपद०' (८।४।१।१४)। अभिवर्त्यते आवर्त्यत इत्यभीवर्तः समावृत्तिरूपः सविंशः स्तोमः। यद्वा अभिवर्तयत्यावर्तयति सर्वाणि भूतानीत्यभीवर्तः संवत्सरः। 'उपसर्गस्य घञ्यमनुष्ये बहुलं' (पा० ६।३।१२२) इति दीर्घः। द्वादशमाससप्तर्तुसंवत्सररूपविंशतिसंख्यया सहितः सविंशः। 'य एव सविꣳशस्तोमस्तं तदुपदधात्यथो संवत्सरो वा अभीवर्तः सविꣳशस्तस्य द्वादशमासाः सप्तर्तवः संवत्सर एवाभीवर्तः सविꣳशस्तद्यत्तमाहाभीवर्त

इति संवत्सरो हि सर्वाणि भूतान्यभिवर्तते तदेतद्रूप०' (८।४।१।१५)। वर्चः बलविशेषप्रदो द्वाविꣳशः स्तोमः। यद्वा वर्चः संवत्सरः वर्चस्वितमः द्वादश मासाः सप्तर्तवः द्वे अहोरात्रे संवत्सरश्चेति द्वाविंशतिसंख्योपेतत्वाद् द्वाविंशः तद्रूपासि। 'य एव द्वाविꣳशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव वर्चो द्वाविꣳशस्तस्य द्वादश मासाः सप्तर्तवो द्वे अहोरात्रे संवत्सर एव वर्चो द्वाविꣳशस्तद्यत्तमाह वर्च इति संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमस्तदेतद्रूप०' (८।४।१।१६)। संबिभर्ति संभरणः सम्यक् पोषकस्त्रयोविंशः स्तोमस्त्वमसि। यद्वा संभरत्युत्पादयति संहरति विनाशयति वा संभरणः संवत्सरः त्रयोदशमासाः सप्तर्तवो द्वे अहोरात्रे एकः संवत्सर इति त्रयोविंशावयवः तद्रूपासि। 'य एव त्रयोविꣳशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव संभरणस्त्रयोविꣳशस्तस्य त्रयोदश मासाः सप्तर्तवो द्वे अहोरात्रे संवत्सर एव संभरणस्त्रयोविꣳशस्तद्यत्तमाह संभरण इति संवत्सरो हि सर्वाणि भूतानि संभृतस्तदेव तद्रूप०' (८।४।१।१७)। योनिः प्रजोत्पादकश्चतुर्विंशः स्तोमोऽसि। यद्वा योनिः सर्वस्थानभूतः संवत्सरश्चतुर्विंशतिपक्षात्मकस्तद्रूपासि। 'य एव चतुर्विꣳशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव योनिश्चतुर्विꣳशस्तस्य चतुर्विꣳशतिरर्धमासास्तद्यत्तमाह योनिरिति संवत्सरो हि सर्वेषां भूतानां योनिस्तदेव तद्रूप०' (८।४।१।१८)। गर्भाः व्यत्ययेन बहुलं सामगर्भः पञ्चविंशस्तोमोऽसि। यद्वा गर्भः संवत्सरो भूतोत्पादकत्वाच्चतुर्विंशतिः पक्षा एकः संवत्सर इति अधिकमासो भूत्वा ऋतुषु गर्भो भवतीति वा गर्भः। 'य एव पञ्चविꣳशस्तोमस्तं तदुपदधात्यथो संवत्सरो वाव गर्भाः पञ्चविꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः संत्सर एव गर्भाः पञ्चविꣳशस्तद्यत्तमाह गर्भा इति संवत्सरो ह त्रयोदशो मासो गर्भो भूत्वर्तून् प्रविशति तदेव तद्रूप०' (८।४।१।१९)। ओजः मतुब्लोपः ओजस्वी तेजस्वी वज्रो वा ओजः तद्रूपस्त्रिणवः स्तोमोसि। यद्वा ओजः संवत्सरश्चतुर्विंशतिपक्षाहोरात्रसंवत्सरात्मकत्वात् त्रिणवः त्रिगुणा नव यत्र। य एव त्रिणवः स्तोमस्तं तदुपदधाति तद्यत्तमाहौज इति वज्रो वा ओजो वज्रस्त्रिणवो संवत्सरो वा ओजस्त्रिणवस्तस्य चतुर्विंशतिरर्धमासा द्वे अहोरात्रे संवत्सर एवौजस्त्रिणवस्तद्यत्तमाहौज इति संवत्सरो हि सर्वेषां भूतानामोजस्वितमस्तदेव तद्रूप०' (८।४।१।२०)। क्रतुर्यज्ञोपयोगी एकत्रिंशः स्तोमोऽसि। यद्वा संवत्सर एव करोतीति क्रतुः पक्षर्तुसंवत्सरात्मकत्वादेकत्रिंशः। 'य एवैकत्रिꣳशस्तोमस्तं तदुपदधात्यथो संवत्सरो वाव क्रतुरेकत्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः षड्तवः संवत्सर एव क्रतुरेकविꣳशस्तद्यत्तमाह क्रतुरिति संवत्सरो हि सर्वाणि भूतानि करोतीति' [८।४।१।२१] श्रुतेः। प्रतिष्ठा स्थितिहेतुस्त्रयस्त्रिꣳशः स्तोमोसि। यद्वा संवत्सरः प्रतिष्ठा संवत्सरे सर्वस्य प्रतिष्ठितत्वात् पक्षर्त्वहोरात्रसंवत्सरात्मकत्वात्त्रयस्त्रिंशः। य एव

त्रयस्त्रिꣳशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव प्रतिष्ठा त्रयस्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः षडृतवो द्वे अहोरात्रे संवत्सर एव प्रतिष्ठा त्रयस्त्रिꣳशस्तद्यत्तमाह प्रतिष्ठेति संवत्सरो हि सर्वेषां भूतानां प्रतिष्ठा तदेतद्रूप०' (८।४।१।२२)। ब्रध्नः सूर्यः। 'असौ वा आदित्यो ब्रध्नः' इति श्रुतेः। विष्टपं निवासस्थानं 'भुवनं विष्टपं लोक' इति कोशात् ब्रध्नस्य विष्टपं स्वाराज्यं स्वतन्त्रत्वं तद्रूपस्तत्प्रदो यश्चतुस्त्रिꣳशः स्तोमस्तद्रूपासि। यद्वा संवत्सरो ब्रध्नस्य विष्टपं रविणैव कालनिर्माणत्वात् चतुर्विंशतिपक्षसप्तर्त्वहोरात्रसंवत्सरात्मकत्वाच्चतुस्त्रिंशः। य एव चतुस्त्रिꣳशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः सप्तर्तवो द्वे अहोरात्रे संवत्सर एव ब्रध्नस्य विष्टपं चतुस्त्रिꣳशस्तद्यत्तमाह ब्रध्नस्य विष्टपमिति स्वाराज्यं वै ब्रध्नस्य विष्टपं तदेतद्रूप०' (८।४।१।२३)। नाकः स्वर्गप्रदः षट्त्रिंशः स्तोमोऽसि संवत्सरो वा नाकः काम्यत इति कं सुखं न कमकं दुःखं तन्नास्ति यत्र स नाकः षट्त्रिंशः पक्षमासात्मकत्वात्। य एव षट्त्रिꣳशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव नाकः षट्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासा द्वादश मासास्तद्यत्तमाह नाक इति। नहि तत्र गताय कस्मै चनाकं भवत्यथो संवत्सरः संवत्सरोवाव नाकः स्वर्गो लोकस्तदेव तद्रूप०' (८।४।१।२४)। विवर्तन्ते आवर्तन्ते सामानि यत्रेति विवर्तः अष्टाचत्वारिंशः स्तोमस्तद्रूपासि। यद्वा विविधं वर्तन्ते भूतानि यत्रेति विवर्तः संवत्सरः अधिमासत्वेन षड्विंशतिः पक्षाः सप्तर्तवः त्रयोदश मासाः द्वे अहोरात्रे इत्यष्टाचत्वारिंशः य एवाष्टाचत्वारिꣳशस्तोमस्तं तदुपदधात्यथो संवत्सरो वाव विवर्तोऽष्टाचत्वारिꣳशस्तस्य षड्विꣳशतिरहोरात्राणि त्रयोदश मासाः सप्तर्तवो द्वे अहोरात्रे तद्यत्तमाह विवर्त इति संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते तदेतद्रूप०' (८।४।१।२५)। धर्त्रं धारकश्चतुरुत्तरस्तोमश्चतुष्टोमः। मध्यमपदलोपी समासः। त्रिवृत्पञ्चदशसप्तदशैकविंशानां समूहस्तद्रूपासि। वायुर्वा धर्त्रं जगदाधारत्वाच्चतुर्दिग्भिः स्तूयमानत्वाच्चतुष्टोमः। य एव चतुष्टोमस्तं तदुपदधाति तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोमोऽथो वायुर्वाव धर्त्रं चतुष्टोमः स आभिश्चतसृभिर्दिग्भिः स्तुते वायुर्वै सर्वेषां भूतानां प्रतिष्ठा तदेतद्रूपमुपदधातीति' (८।४।१।२६) श्रुतेः। आदावन्ते च वायूपधानेन वायुना सर्वभूतानि वशीकरोतीति भावः। तदुक्तं श्रुत्या स वै वायुमेव प्रथममुपदधाति वायुमुत्तमं वायुनैव तदेतानि सर्वाणि भूतान्युभयतः परिगृह्णातीति' (८।४।१।२७) एतैरष्टादशमन्त्रैः स्तोमवादिभिः स्तोमरूपत्वं नीता अष्टादशेष्टका उपधेया इत्यर्थः॥२३॥

## चतुर्विंशी।

अ॒ग्नेर्भा॒गो॒ऽसि दी॒क्षाया॒ आधि॑पत्यं॒ ब्रह्म॑ स्पृ॒तं त्रि॒वृत्स्तोम॒ऽइन्द्र॑स्य भा॒गो॒ऽसि॒ विष्णो॒राधि॑पत्यं क्ष॒त्रꣳ स्पृ॒तं, प॑ञ्चद॒शः स्तोमो॑, नृच॒क्षसां भा॒गो॒ऽसि, धा॒तुराधि॑पत्यं ज॒नित्र॒ꣳस्पृ॒तꣳस॑प्तद॒शः स्तोमो॑, मि॒त्रस्य॑ भा॒गो॒ऽसि॒, वरु॑ण॒स्याधि॑पत्यं, दि॒वो वृ॒ष्टिर्वात॑ स्पृ॒त, एकवि॒ꣳशः स्तोमः॑॥ २४॥

उ० स्पृतं दश इष्टका उपदधाति दशभिर्मन्त्रैः अग्नेर्भागोसीत्यादिभिः। तत्रार्थवादः। प्रजापतिर्गर्भमेकेभ्यो देवेभ्य आधिपत्यमेकेभ्यः कल्पयित्वा ब्रह्मप्रभृतीनि भूतानि पाप्मनो व्यवृधत् त्रिवृदादिभिः स्तोमैः। इष्टकोच्यते। या त्वम् अग्नेः भागोसि। यस्यां च त्वयि दीक्षाया आधिपत्यं जातम्। यया च त्वया ब्रह्म ब्राह्मण्यं स्पृतं पाप्मनो मृत्यैरपनीतम्। त्रिवृत्स्तोमः। त्रिवृत्स्तोमेनेति विभक्तिव्यत्ययः। तां त्वामुपदधामीति शेषः। यद्वा। या त्वमग्नेर्भागोसि यस्याश्च तव त्रिवृत्स्तोमः यस्यां च त्वयि दीक्षाया आधिपत्यम् यया च त्वया ब्रह्म मृत्योर्मोचितम् तां त्वामुपदधामीति शेषः। एवमन्यदपि व्याख्येयम्। जनित्रम् आश्चर्येण जायत इति जनित्रम्॥ २४॥ २५॥

म० 'दक्षिणां पूर्वयोरग्नेर्भाग इति' (का० १७।१०।१२) पूर्वानूकान्ते विहितयोर्जङ्घामात्र्योर्मध्ये दक्षिणामुपदधात्युदङ्मुखः उत्तरा पूर्वमुपहिता। दश यजूंषि चतुर्भिर्मृत्युमोहिन्युपधानं षड्भिः षट्पद्योपधानं दशेष्टकाः स्पृतसंज्ञाश्च। तत्रार्थवादः श्रुत्युक्तः। उत्पन्नेन सृष्ट्यादौ प्रजापतिना सर्वाणि भूतानि स्रष्टुं गर्भे कृतानि गर्भस्थान्येव भूतानि पाप्मा मृत्युरगृह्णात्। ततः प्रजापतिर्देवानुवाच युष्माभिः सहाहमिमानि भूतानि पापरूपान्मृत्योर्मोचयामीति देवैरुक्तं तत्रास्माकं को लाभः। प्रजापतिनोक्तं वृणुत। तैः कैश्चिदुक्तमस्माकं भागोऽस्तु। अन्यैरुक्तमस्माकमाधिपत्यमस्त्विति तथेत्युक्त्वैकेभ्यो भागमपरेभ्य आधिपत्यं दत्त्वा तैः सह भूतानि मृत्योरस्पृणोत्ततः स्पृत इष्टका इति। तथाच श्रुतिः 'अथ स्पृत उपदधात्येतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रतिहिते सर्वाणि भूतानि गर्भ्यभवत्तान्यस्य गर्भएव सन्ति पाप्मा मृत्युरगृह्णात्॥ १॥ स देवानब्रवीद्युष्माभिः सहेमानि सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणवानीति किं नस्ततो भविष्यतीति वृणीध्वमित्यब्रवीत्तं भागो नोऽस्त्वित्येकेऽब्रुवन्नाधिपत्यं नोऽस्त्वित्येके स भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योरस्पृणोद्यदस्पृणोत्तस्मात्स्पृतस्तथैवैतद्यजमानो भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणोतीति'(८।४।२।१।२)। अथ मन्त्रार्थः। हे इष्टके, या त्वमग्नेर्भागो विभागोऽसि यस्यां च त्वयि दीक्षाया वाच आधिपत्यं स्वामित्वं यया च त्वया त्रिवृत्स्तोमः। विभक्तिव्यत्ययः। त्रिवृता स्तोमेन ब्रह्म ब्राह्मण्यं स्पृतं पाप्मनो मृत्योरपनीतं रक्षितं। यस्यां त्वयि त्रिवृत्स्तोम इति वा। तां त्वामुपदधामीति शेषः। एवं सर्वत्र व्याख्येयम्। 'स्पृ प्रीतिरक्षाप्राणनेषु' इत्यादिः। 'वाग्वै दीक्षा'

( ८।४।२।३ ) इति श्रुतेः। 'उत्तरामुत्तरयोरिन्द्रस्य भाग इति' ( का० १७।१०।१५ )। उदगनूकान्तविहितयोर्दक्षिणोत्तरयोः पद्ययोर्मध्ये उत्तरामुपदधाति दक्षिणा तूपहितेति सूत्रार्थः। हे इष्टके, त्वमिन्द्रस्य भागोऽसि यस्यां त्वयि विष्णोराधिपत्यं पञ्चदशेन क्षत्रं क्षत्रजातिः स्पृतं मृत्योर्मोचितम्। 'इन्द्राय भागं कृत्वा विष्णव आधिपत्यमकरोत्' ( ८।४।२।४ ) इति श्रुतेः। 'उत्तरां दक्षिणयोर्नृचक्षसां भाग इति' ( का० १७।१०।१४ )। दक्षिणानूकान्तविहितयोर्दक्षिणोत्तरयोः पद्ययोरुत्तरां निदधाति दक्षिणोपहिता। नॄन् शुभाशुभकर्तॄन् चक्षते जानन्ति ते नृचक्षसो देवास्तेषां भागोऽसि। त्वयि धातुराधिपत्यं त्वया सप्तदशस्तोमेन जनित्रं वैश्यजातिः स्पृतम्। 'देवा वै नृचक्षसो देवेभ्यो भागं कृत्वा धात्र आधिपत्यमकरोद्विड्वै जनित्रम्' ( ८।४।२।५ ) इति श्रुतेः। 'उत्तरामपरयोर्मित्रस्य भाग इति' ( का० १७।१०।१३ ) अपरानूकान्तविहितयोर्दक्षिणोत्तरयोर्जङ्घामात्र्योर्मध्ये उत्तरां जङ्घामात्रीं दक्षिणामुख उपदधाति दक्षिणा तूपहितेति सूत्रार्थः। हे इष्टके, त्वं मित्रस्य प्राणस्य भागोसि त्वयि वरुणस्यापानस्याधिपत्यं यया त्वयैकत्रिंशेन स्तोमेन दिवः संबन्धिनी वृष्टिर्वातश्च स्पृतस्तां सादयामि। 'प्राणो वै मित्रोऽपानो वरुणः प्राणाय भागं कृत्वापानायाधिपत्यमकरोदिति' ( ८।४।२।६ ) श्रुतेः ॥ २४ ॥

## पञ्चविंशी।

वसू॒नां भा॒गो॑ऽसि रु॒द्राणा॒माधि॑पत्यं॒ चतु॑ष्पा॒त्स्पृ॒तं च॑तुर्वि॒ꣳश स्तोम॑ आदि॒त्यानां॑ भा॒गो॑ऽसि म॒रुता॒माधि॑पत्यं॒ गर्भाः॑ स्पृ॒ताः प॑ञ्चवि॒ꣳशः स्तोमो॑ऽदि॑त्यै भा॒गो॑ऽसि पू॒ष्ण आधि॑पत्य॒मोजः॑ स्पृ॒तं त्रि॑ण॒व स्तोमो॑ दे॒वस्य॑ सवि॒तुर्भा॒गो॑ऽसि बृह॒स्पते॒राधि॑पत्य॒ꣳ स॒मीची॒र्दिशः॑ स्पृ॒ताश्च॑तुष्टो॒मः स्तोमः॑ ॥ २५ ॥

**म०** 'षट् प्रतिमन्त्रं वसूनां भाग इति' ( का० १७।१०।१६ )। चतुर्दशभ्योऽपराः षण्मन्त्रैः षट् पद्या उपदध्यादिति सूत्रार्थः। हे इष्टके, त्वं वसूनां भागोऽसि। त्वयि रुद्राणामाधिपत्यं त्वया चतुर्विंशेन स्तोमेन प्रजानां चतुष्पात् गवाश्वादिकं स्पृतं पापान्मोचितम्। 'वसुभ्यो भागं कृत्वा रुद्रेभ्य आधिपत्यमकरोत्' ( ८।४।२।७ ) इति श्रुतेः। आदित्यानां या त्वं भागोऽसि। त्वयि मरुतामाधिपत्यं त्वया पञ्चविंशेन स्तोमेन प्रजानां गर्भाः मृत्योः रक्षिताः। 'आदित्येभ्यो भागं कृत्वा मरुद्भ्य आधिपत्यमकरोत्' ( ८।४।२।८ ) इति श्रुतेः। त्वमदित्यै अदित्या भूमेर्भागोऽसि। पूष्ण आधिपत्यं त्वयि त्वया त्रिणवेन स्तोमेन प्रजानामोजः बलमष्टमो धातुर्वा स्पृतम्। 'इयं वा अदितिरस्यै भागं कृत्वा पूष्ण आधिपत्य०' ( ८।४।२।९ )। त्वं देवस्य सवितुर्भागोऽसि त्वयि बृहस्पतेराधिपत्यं त्वया चतुष्टोमेन स्तोमेन समीचीः समीच्यः सम्यग्गच्छन्ति जना यासु ता दिशः स्पृताः। 'देवाय सवित्रे भागं कृत्वा बृहस्पतय आधिप०' ( ८।४।२।१० ) इति ॥ २५ ॥

## षड्विंशी।

यवा॑नां भा॒गो॑ऽस्यय॑वाना॒माधि॑पत्यं प्र॒जाः स्पृ॒ताश्च॑तुश्चत्वारि॒ꣳशः स्तोम॑ ऋभू॒णां भा॒गो॑ऽसि॒ विश्वे॑षां दे॒वाना॒माधि॑पत्यं भू॒तꣳस्पृ॒तं त्र॑यस्त्रि॒ꣳशः स्तोमः॑ ॥ २६ ॥

**उ०** यवाः पूर्वपक्षाः। अयवा अपरपक्षाः ॥ २६ ॥

**म०** यवानां पूर्वपक्षाणां त्वं भागोऽसि अयवानामपरपक्षाणां त्वय्याधिपत्यं चतुश्चत्वारिंशेन स्तोमेन त्वया प्रजाः स्पृताः रक्षिताः। 'पूर्वपक्षा वै यवा अपरपक्षा अयवास्ते हीदꣳसर्वं युवते चायुवते च पूर्वपक्षेभ्यो भागं कृत्वापरपक्षेभ्य आधिप०' ( ८।४।२।११ )। ऋभूणां देवविशेषाणां त्वं भागोऽसि त्वयि विश्वेषां देवानामाधिपत्यं त्रयस्त्रिंशेन स्तोमेन त्वया भूतं प्राणिमात्रमनुक्तं स्पृतं पाप्मनो मृत्योः रक्षितम्। तथा यजमानोऽपि सर्वभूतानि मृत्योः स्पृणोति। 'ऋभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यमकरोत्' ( ८।४।२।१२ ) इति श्रुतेः ॥ २६ ॥

## सप्तविंशी।

सह॑श्च सह॒स्य॑श्च हैम॑न्तिकावृ॒तू अ॒ग्नेर॑न्तः श्ले॒षो॑ऽसि॒ कल्पे॑तां॒ द्यावा॑पृथि॒वी कल्प॑न्ता॒माप॒ ओष॑धयः॒ कल्प॑न्तामग्नयः॒ पृथ॒ङ्मम॒ ज्यैष्ठ्या॑य॒ सव्र॑ताः ॥ ये अ॒ग्नयः॒ सम॑नसोऽन्त॒रा द्यावा॑पृथि॒वी इ॒मे। हैम॑न्तिकावृ॒तू अ॑भि॒कल्प॑माना॒ इन्द्र॑मिव दे॒वा अ॑भि॒सं॑विश॑न्तु त॒या दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वे सी॑दतम् ॥ २७ ॥

**उ०** ऋतव्ये सहश्च सहस्यश्चेति ॥ २७ ॥

**म०** 'ऋतव्ये सहश्च सहस्यश्चेति' ( का० १७।१०।१८ )। अनूकमभितो द्वे पद्ये उपदधाति। ऋतुदेवत्यं यजुः। सहो मार्गशीर्षः सहस्यः पौषः एतौ हैमन्तिकौ हेमन्तावयवौ। शिष्टं पूर्वतुल्यम् [ अ० १३ क० २५ ] ॥ २७ ॥

## अष्टाविंशी।

एक॑यास्तुवत प्र॒जा अ॑धीयन्त प्र॒जाप॑ति॒रधि॑पतिरासी॒त्तिसृ॒भिर॑स्तुवत॒ ब्रह्मा॑सृज्यत॒ ब्रह्म॑ण॒स्पति॒रधि॑पतिरासी॒त्पञ्च॒भिर॑स्तुवत भू॒तान्य॑सृज्यन्त भू॒ताना॒ं पति॒रधि॑पतिरासी॒त्सप्त॒भिर॑स्तुवत स॒प्त ऋष॑योऽसृज्यन्त धा॒ताधि॑पतिरासीत् ॥ २८ ॥

**म०** 'रेतःसिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेना-

नूकॅंऽस्तीरेकयास्तुवतेति प्रतिमन्त्रम्' ( का० १७। १०। १८ )। सर्वासु दिक्षु रेतस्सिग्वेलायां सृष्टिसंज्ञाः सप्तदशेष्टका उपदधाति तन्मध्ये प्रागनूकं दक्षिणेन नव अर्धादष्टावुत्तरेणेति सूत्रार्थः। सप्तदश यजूंषि सृष्टीष्टकादेवत्यानि। अत्र निदानम् प्रजापतिर्भूतानि मृत्योरेव मुक्त्वा प्रजाः सृजेय प्रजायेयेति विचिन्त्य प्राणाधिष्ठातृदेवान् दिगादीनूचे युष्माभिः सह परमात्मानं स्तुत्वेमाः प्रजा जनयामीति। देवा ऊचुः केन स्तोष्यामः। स ऊचे मया युष्माभिश्चेति। तथेत्युक्त्वा प्राणैः प्रजापतिना चास्तुवतेति। तथाच श्रुतिः 'तद्वै प्रजापतिः सर्वाणि भूतानि पाप्मनो मृत्योर्मुक्त्वाकामयत प्रजाः सृजेय प्रजायेयेति॥ १॥ स प्राणानब्रवीद्युष्माभिः सहेमाः प्रजाः प्रजनयानीति ते वै केन स्तोष्यामह इति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव प्रजापतिना चास्तुवत' ( ८। ४। ३। १। २ ) इति। प्रजापतिरेकया वाचा सहात्मानमस्तुवत स्तुतवान्। वचनव्यत्ययः। 'वाग्वा एका वाचैव तदस्तुवत' ( ८। ४। ३। ३ ) इति श्रुतेः। प्रजा अधीयन्त उदपाद्यन्त, प्रजापत्यर्थमस्थाप्यन्तेति वा। सृष्टानां प्रजानां प्रजापतिरेवाधिपतिरासीत्स्वाम्यभूत्। एवं षोडश मन्त्रा व्याख्येयाः। 'तिसृभिः प्राणोदानव्यानैरस्तौत् ब्रह्म ब्राह्मणजातिः सृष्टा ब्रह्मणस्पतिर्ब्राह्मणजातेः स्वाम्यभूत्। 'त्रयो वै प्राणाः प्राणोदानव्यानास्तैः' ( ८। ४। ३। ४ ) इति श्रुतेः। पञ्चभिः प्राणैरस्तुवत पञ्च भूतानि सृष्टानि भूतानां पतिर्देवस्तेषां स्वाम्यभूत्। 'य एवेमे मनःपञ्चमाः प्राणास्तैरेव तदस्तुवत' ( ८। ४। ३। ५ ) इति श्रुतेः। सप्तभिः श्रोत्रचक्षुर्नासावाग्रूपैः सप्तशीर्षण्यप्राणैरस्तुवत। ततः सप्त ऋषयः सृष्टाः धाता जगत्स्रष्टाद्यो देवः स्वाम्यभूत्। 'य एवेमे सप्त शीर्षन् प्राणास्तैरेव' ( ८। ४। ३। ६ ) इति श्रुतेः॥ २८॥

## एकोनत्रिंशी।

नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवत ऋतवोऽसृज्यन्तार्तवा अधिपतय आसंस्त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीत्॥ २९॥

**म०** नवभिः सप्त शिरःप्राणा द्वावध इति नवप्राणैः प्रजापतिरस्तौत्। ततः पितरः अग्निष्वात्तादयः सृष्टाः। अदितिः अखण्डिता प्रजापतिशक्तिः सृष्टानां पितॄणामधिपत्नी स्वामित्वेनाधिकं पालयित्र्यासीत्। 'नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तैः' ( ८। ४। ३। ७ ) इति श्रुतेः। एकादशभिः दश प्राणा आत्मैकादशस्तैरस्तुवत। ऋतवः वसन्ताद्याः सृष्टाः आर्तवाः ऋतुपालका देवविशेषाः स्वामिनोऽभूवन्। 'दश प्राणा आत्मैकादशः' ( ८। ४। ३। ८ ) इति श्रुतेः। त्रयोदशभिः दश प्राणाः द्वौ पादौ एक आत्मेति तैरस्तौत्। ततो मासाः चैत्रादयः सृष्टाः। मासाभिमान्ययनद्वयात्मकः संवत्सरः तेषामधिपतिरासीत्। 'दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयोदशः' ( ८। ४। ३। ९ ) इति श्रुतेः। पञ्चदशभिः दश हस्ताङ्गुलयः करौ बाहू नाभेरूर्ध्वभागश्च तैरस्तुवत। ततः क्षत्रं क्षत्रियजातिः सृष्टा। इन्द्रः ऐश्वर्यशाली तदभिमानी देवः स्वाम्यभूत्। 'दश हस्त्या अङ्गुलयश्चत्वारि दोर्बाहवाणि यदूर्ध्वं नाभेस्तत्पञ्चदशम्' ( ८। ४। ३। १० ) इति श्रुतेः। सप्तदशभिः दश पादाङ्गुलयः ऊरू जानुनी पादौ नाभेरधोभागश्चेति तैरस्तौत् तदा ग्राम्याः पशवः गवादयः सृष्टाः बृहस्पतिस्तेषां स्वाम्यभूत्। 'दश पाद्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तदशम्' (८।४।३।११) इति श्रुतेः २९



## त्रिंशी।

नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्तामेकविंशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्त्रयोविंशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाधिपतिरासीत्पञ्चविंशत्यास्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्सप्तविंशत्यास्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या अनुव्यायंस्त एवाधिपतय आसन्॥ ३०॥

**म०** नवदशभिः दश हस्ताङ्गुलयः ऊर्ध्वाधःस्थच्छिद्ररूपा नव प्राणास्तैरस्तौत्। ततः शूद्रार्यौ शूद्रवैश्यावसृज्येतां सृष्टौ। अर्यः स्वामिवैश्ययोः। अहोरात्रे तयोः स्वामित्वेनास्ताम्। 'दश हस्त्या अङ्गुलयो नव प्राणाः' ( ८। ४। ३। १२ ) इति श्रुतेः। एकविंशत्या विंशतिः करपादाङ्गुलयः आत्मा चेति एकविंशत्यास्तौत्। ततः एकशफाः पशवोऽश्वादयः सृष्टाः। एकं शफं खुरः प्रतिपादं येषां ते एकशफाः। 'शफं क्लीबे खुरः पुमान्' इत्यमरः। वरुणस्तेषामधिपतिरासीत्। 'दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशः' ( ८। ४। ३। १३ ) इति श्रुतेः। त्रयोविंशत्या विंशतिः करपादाङ्गुलयः पादावात्मा चेति तैस्तु ते क्षुद्राः पशवोऽजादयः सृष्टाः तेषां पूषा स्वाम्यभूत्। दश हस्त्या अङ्गुलयो दश पाद्या द्वे प्रतिष्ठे आत्मा त्रयोविंशः' (८। ४। ३। १४) इति श्रुतेः। पञ्चविंशत्या विंशतिः करपादाङ्गुलयः करौ पादावात्मेति तैरस्तुवत तदारण्या वनस्थाः पशवः कृष्णमृगादयः सृष्टास्तेषां वायुः स्वाम्यभूत्। 'दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गान्यात्मा पञ्चविंशः' ( ८। ४। ३। १५ ) इति श्रुतेः। सप्तविंशत्या करपादाङ्गुलयः द्वौ भुजावूरू चात्मेति तैरस्तुवत ततो द्यावापृथिवी द्युभूलोकौ व्यैतां विशेषेणागच्छतामित्यर्थः।

विपूर्वादिण् गताविति धातोर्लङि प्रथमाद्विवचनम् । वसवोऽष्टौ रुद्रा एकादश आदित्या द्वादशानुव्यायन् अन्वगच्छन् अनुगताः त एव स्वामिनोऽभूवन् । 'दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि द्वे प्रतिष्ठे आत्मा सप्तविꣳशः' ( ८ । ४ । ३ । १६ ) इति श्रुतेः ॥ ३० ॥

## एकत्रिंशी ।

नवविꣳशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकत्रिꣳशतास्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसंस्त्रयस्त्रिꣳशतास्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासील्लोकं ता इन्द्रम् ॥ ३१ ॥

इति श्रीवाजसनेयसंहितायां चतुर्दशोऽध्यायः ।

**उ०** सृष्टीरुपदधाति सप्तदशेष्टकाः सप्तदशभिर्मन्त्रैः । एकया स्तुवतेत्यादिभिः तत्र निदानभूता श्रुतिः । 'एतद्वै प्रजापतिः' इत्युपक्रम्य 'ते वै केन स्तोष्यामह' इति । मयाचैव युष्माभिश्चेति तथेतरे प्राणैश्चैव प्रजापतिना । एकयास्तुवतेति । एकया वाचा अस्तुवत स्तुतवान् । कः सामर्थ्यात्प्रजापतिः । इदानीं फलमाह । प्रजा अधीयन्त । याः गर्भीभूताः प्रजाः प्रजापतेरासन् ताः प्रजापत्यर्थम् अस्थाप्यन्त स्थिताः । प्रजापतिरधिपतिरासीत् अस्यां स्तुतौ । एवं षोडशानामिष्टकानां मन्त्रा एकव्याख्यानाः ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥

इति उवटकृतौ मन्त्रभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

**म०** नवविंशत्या करपादाङ्गुलयो नव छिद्ररूपाः प्राणास्तैरस्तुवत ततो वनस्पतयोऽश्वत्थवटाद्याः सृष्टाः तेषां स्वामी सोमोऽभूत् । 'दश हस्त्या अङ्गुलयो दश पाद्या नव प्राणाः' ( ८ । ४ । ३ । १७ ) इति श्रुतेः । एकत्रिंशता करपादाङ्गुलयः दशेन्द्रियाणि आत्मेति तैरस्तौत् । ततः प्रजाः सृष्टाः यवाः पूर्वपक्षा अयवाः अपरपक्षास्तासां प्रजानां स्वामिनोऽभूवन् 'दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिꣳशः' ( ८ । ४ । ३ । १८ ) इति श्रुतेः । पूर्वपक्षापरपक्षा एवात्राधिपतय आसन् ( १८ ) इति च । त्रयस्त्रिंशता अङ्गुलयः इन्द्रियाणि पादौ आत्मेति तैरस्तुवत स्तौतिस्म प्रजापतिर्देवैः सह । ततो भूतानि अशाम्यन् सर्वे प्राणिनः शान्ताः सुखिनोऽभूवन् । परमे सत्यलोके तिष्ठतीति परमेष्ठी प्रजापतिः प्रजापालकः सर्वेषां भूतानामधिपतिः स्वाम्यासीत् । 'दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयस्त्रिꣳशः' ( ८ । ४ । ३ । १९ ) इति श्रुतेः । अत्र या येष्टका येन मन्त्रेणोपधेया सा सा तत्तन्मन्त्रोक्तदेवतारूपेण ध्यातव्येत्यर्थः । 'उत्तराꣳसाद्धि लोकंपृणाः पूर्ववत्' ( का० १७ । १० । १९ ) उत्तरांसादारभ्य प्रथमचितिवल्लोकंपृणा उपदधातीति सूत्रार्थः । ततः पुरीषनिर्वापः सप्तर्चोपस्थानं च बोध्यम् । तन्मन्त्रप्रतीकानि लोकंपृण ता अस्य इन्द्रं विश्वा इति तास्तिस्रोऽपि व्याख्याताः ( १२ । १४–१६ ) ॥ ३१ ॥

इति चतुर्थी चितिः पूर्णा ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
वेदचन्द्रमितोऽध्यायो वर्ण्यद्विचित्रचतुश्चितिः ॥ १४ ॥

# पञ्चदशोऽध्यायः ।

## तत्र प्रथमा ।

अग्ने जातान्प्रणुदा नः सपत्नान्प्रत्यजातान्नुद जातवेदः । अधि नो ब्रूहि सुमना अहेडँस्तव स्याम शर्मँस्त्रिवरूथ उद्भौ ॥ १ ॥

**उ०** अग्नेर्जातान् पञ्चमीं चितिं परमेष्ठ्यपश्यत् । तत्रादौ पञ्चासपत्ना उपधीयन्ते । तत्रादौ द्वे त्रिष्टुभावाग्नेय्यौ पुरस्तादुपदधाति । हे अग्ने, जातानुत्पन्नान् प्रणुद प्रेरय नाशय अपुनरागमनाय । नः अस्माकं सपत्नान् समानपतित्वात् समानपतित्वदर्शिनः शत्रून् । प्रत्यजातान् नुद । प्रतिज्ञाय प्रतिज्ञाय अजातान् अनुत्पन्नान् जनिष्यमाणान् नुद प्रेरय हे जातवेदः । किंच अधि नो ब्रूहि सुमना अहेडन् । एवं निर्धारितेषु सपत्नगृहीतेषु च तद्वत्तेषु अधिब्रूहि अधिवद उपदिश यज्ञसंबन्धिनीमितिकर्तव्यतां नः अस्माकम् सुमनाः स्नेहानुबन्धमनाः अहेडन् अक्रुध्यन् । तवच स्याम भवेम । शर्मन् शरणे आश्रये त्रिवरूथे । वरूथं गृहम् त्रिगृहे त्रिपुरे । उद्भौ द्विपदचतुष्पदधनधान्योद्भूतशक्तौ । यद्वा त्रिवरूथे यज्ञगृहे स्याम । त्रीणि हि यज्ञगृहाणि सदोहविर्धानाग्नीध्राणि । उद्भौ उद्भेत्तरि । अन्येषां यज्ञक्रतूनाम् ॥ १ ॥

**म०** चतुर्दशेऽध्याये द्वितीयतृतीयचतुर्थचितिमन्त्रानुक्त्वा पञ्चदशे पञ्चमचितिमन्त्रा वाच्याः । 'पञ्चम्यामन्तेष्वाश्विनीवदसपत्ना अग्ने जातानिति प्रतिमन्त्रम्' ( का० १७ । ११ । १–३ ) । पञ्चम्यां चितावाश्विनीवत् असपत्नासंज्ञा इष्टकाः अन्तेषूपदधाति अग्ने जातान् सहसा जातान् षोडशी चतुश्चत्वारिꣳशः अग्नेः पुरीषम् इति पञ्चमन्त्रैः प्रत्येकमिति सूत्रार्थः । पञ्चमचितिमन्त्राणां परमेष्ठी ऋषिः । तत्र द्वे अग्निदेवत्ये त्रिष्टुभौ । हे अग्ने, जातान् पूर्वमुत्पन्नान्नोऽस्माकं सपत्नान् शत्रून् त्वं प्रणुद प्रकर्षेण नाशय । किंच हे जातवेदः जातप्रज्ञान, अजाताननुत्पन्नांश्च शत्रून् प्रतिनुद निवर्तय । उत्पत्तिप्रतिबन्धं कुर्वित्यर्थः । उपसर्गव्यवधानमार्षम् । किंच नोऽस्माकमधिब्रूहि अधिवद उपदिश यज्ञसंबन्धिनीमितिकर्तव्यतामिति शेषः । किं कुर्वन् । अहेडन् अक्रुध्यन् । सुमनाः शोभनमनस्कः सन्नुपदिशेत्यर्थः । किंच अग्ने, तव त्वत्संबन्धिनि त्रिवरूथे वरूथं गृहं त्रयाणां वरूथानां समाहारे यज्ञगृहेत्र

सदोहविर्धानाग्नीध्ररूपे वयं स्याम भवेम । सदा यज्ञान्कुर्म इत्यर्थः । कीदृशे । त्रिवरूथे शर्मन् शर्मणि सुखाश्रये । तथा उद्भौ द्विपदचतुष्पदधनधान्यादिभिरुद्भवति समृध्यत इत्युद्भिः तस्मिन् भवतेर्डिप्रत्ययः । अनेन मन्त्रेण पुरस्तादिष्टकामुपदधाति १

## द्वितीया ।

सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजातान् जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदा नः सपत्नान् ॥ २ ॥

**उ०** सहसा जातान् बलेनोद्भूतशक्तीन् । प्रणाशय अस्माकं सपत्नान् । यद्वा सहसा बलेन स्वशक्त्या उत्पन्नान् प्रेरय अस्मच्छत्रून् । प्रत्यजाताञ्जातवेदो नुदस्व । प्रतिनुदस्व अजाताननुत्पन्नान् हे जातवेदः । किंच । अधि नो ब्रूहि सुमनस्यमानः अधिब्रूहि अधिवद नः अस्माकं सुमनस्यमानः शोभनचित्तः । यथाच वयमेव स्याम भवाम तथा कुरु । भूयोभूयश्च प्रणुद नः अस्माकं सपत्नान् ॥ २ ॥

**म०** अथ पश्चादुपदधाति । सहसा बलेन जातानुत्पन्नान्नोऽस्माकं सपत्नान् प्रणुद नाशय । हे जातवेदः, अजातान् उत्पत्स्यमानानपि प्रतिनुदस्व । आत्मनेपदमार्षम् । किंच सुमनस्यमानोऽस्मासु शुभचित्तः सन्नोऽस्मानधिब्रूहि शत्रुभ्योऽधिकान् वद । वयमपि त्वत्प्रसादादधिकाः स्याम भवेम । नोऽस्माकं सपत्नान् प्रणुद । पुनरुक्तिरादरार्था । शोभनं मनो यस्य सुमनाः असुमनाः सुमना भवति सुमनस्यमानः 'भृशादिभ्यः' (पा० ३ । १ । १२) इति क्यङ् ततः शानच् ॥ २ ॥

## तृतीया ।

षोडशी स्तोम ओजो द्रविणं, चतुश्चत्वारिꣳशः स्तोमो वर्चो द्रविणम् । अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥ ३ ॥

**उ०** दक्षिणतः षोडशीस्तोमः । यस्यास्तव षोडशी आदित्यः पञ्चदशकलस्य पक्षस्य भर्ता स्तोमभूतः ओजो बलं च द्रविणं धनं हे इष्टके, त्वं तदुभयरूपासि तां त्वामुपदधामि । उत्तरतः चतुश्चत्वारिंशः । यस्यास्तव चतुश्चत्वारिंशः त्रिष्टुप्चत्वाक्षरसंमितः स्तोमः वर्चश्च द्रविणं तां त्वामुपदधामि । पञ्चमी । अग्नेः पुरीषम् त्रिष्टुप् । या त्वमग्नेः पञ्चदशकरूपस्य पूरयित्री । व्याख्यातमन्यत् ॥ ३ ॥

**म०** अथ दक्षिणतः । इष्टकादेवत्यं यजुः । पञ्चदशकलस्य पक्षस्य भर्ता य आदित्यरूपः स्तोमः षोडशावृत्त्युपेतो वा यः स्तोमः यच्च ओजो बलरूपं द्रविणं धनम् हे इष्टके, त्वं तदुभयरूपासि तां त्वामुपदधामि । अथोत्तरतः । इष्टकादेवत्यं यजुः । चतुश्चत्वारिंशदावृत्त्या संपन्नो यः स्तोमस्त्रिष्टुब्रूपो वा यच्च बलरूपं धनम् तदुभयरूपां त्वामुपदधामि । अथ मध्ये- पञ्चमी त्रिष्टुप् । 'प्सा भक्षणे' न प्साति भक्षयति विनाशयतीत्यप्सो रक्षको नाम योऽग्निस्तस्याग्नेश्चन्द्ररूपस्य पञ्चदशकलस्य पुरीषमसि पूरयित्री भवसि हे इष्टके, या त्वं तां त्वां विश्वेदेवा अभिगृणन्तु स्तुवन्तु । स्तोमैः पृष्ठैश्च युता होष्यमाणघृतयुता च सती सा त्वमिह चतुर्थ्यां चितौ सीद उपविश । अस्मे अस्मासु प्रजावत्पुत्रयुतं द्रविणं धनं यजस्व देहि ॥ ३ ॥

## चतुर्थी ।

एवश्छन्दो वरिवश्छन्दः शंभूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरं छन्दः ककुप् छन्दस्त्रिककुप् छन्दः काव्यं छन्दो अङ्कुपं छन्दोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दः ॥ ४ ॥

**उ०** चत्वारिंशद्विराजश्चत्वारिंशद्भिर्यजुर्भिरुपदधाति । एवश्छन्दः । अयं वै लोक एवश्छन्दः । वरिवश्छन्दः अन्तरिक्षं वै वरिवश्छन्दः । शंभूश्छन्दः द्यौर्वै शंभूश्छन्दः परिभूश्छन्दः दिशो वै परिभूश्छन्दः। आच्छच्छन्दः । अन्नं वा आच्छच्छन्दः । मनश्छन्दः प्रजापतिर्वै मनश्छन्दः । व्यचश्छन्दः असौ वा आदित्यो व्यचश्छन्दः । सिन्धुश्छन्दः प्राणो वै सिन्धुश्छन्दः । समुद्रश्छन्दः मनो वै समुद्रश्छन्दः । सरिरं छन्दः वाग्वै सरिरं छन्दः। ककुप्छन्दः प्राणो वै ककुप्छन्दः । त्रिककुप्छन्दः उदानो वै त्रिककुप्छन्दः । काव्यं छन्दः त्रयी वै काव्यंछन्दः । अङ्कुपं छन्दः आपो वा अङ्कुपंछन्दः । अक्षरपङ्क्तिश्छन्दः । असौ वै लोकोऽक्षरपङ्क्तिश्छन्दः । पदपङ्क्तिश्छन्दः । अयं वै लोकः पदपङ्क्तिश्छन्दः। विष्टारपङ्क्तिश्छन्दः। दिशो वै विष्टारपङ्क्तिश्छन्दः । क्षुरोभ्रजश्छन्दः । असौ वा आदित्यः क्षुरोभ्रजश्छन्दः ॥ ४ ॥

**म०** 'विराजो दश दश प्रतिदिशं पुरस्तात्प्रथममेवश्छन्द इति प्रतिमन्त्रम्' (का० १७ । ११ । ५) । प्रतिदिशं दश दश विराट्संज्ञा इष्टका उपदधाति ताश्चत्वारिंशत्पया एवेति सूत्रार्थः । चत्वारिंशद्यजूंषि इष्टकादेवत्यानि । एति गच्छति सर्वो जन्तुसमूहो यस्मिन्निति एवः पृथिवीलोकः स एव छन्दोरूपेण स्थितत्वात् छादकत्वाद्वा छन्दः । हे इष्टके, त्वं तद्रूपासि तां त्वामुपदधामि । एवमुत्तरमन्त्रेषु व्याख्या श्रुत्युक्ता ज्ञेया । 'अयं वै लोक एवश्छन्दः' (८ । ५ । २ । ३) इति श्रुतेः । वरिवः प्रभामण्डलेन व्रियत आव्रियत इति वरिवोऽन्तरिक्षं तदेव छन्दः । 'अन्तरिक्षं वै वरिवश्छन्दः' (८ । ५ । २ । ३) इति श्रुतेः । शंभूः शं सुखं भवत्यस्मादिति शंभूः द्युलोकः । 'द्यौर्वै शम्भूच्छन्दः' (३) इति श्रुतेः । परितो भवति व्याप्य वर्तत इति परिभूर्दिग्वाचकः

शब्दः । 'दिशो वै परिभूश्छन्दः' ( ३ ) इति श्रुतेः । आच्छत् आच्छादयति स्वरसेन सर्वं शरीरमित्याच्छत् अन्नम् । 'अन्नं वा आच्छच्छन्दः' ( ३ ) इति श्रुतेः । मनः प्रथमसृष्टं प्रजापत्यात्मकं यन्मनः तदेव छन्दः तद्रूपासि । 'प्रजापतिर्वै मनश्छन्दः' ( ३ ) इति श्रुतेः । व्यचः व्यचतिर्व्याप्तिकर्मा । विचति व्याप्नोति सर्वं जगदिति व्यचः । आदित्यः 'असौ वा आदित्यो व्यचश्छन्दः' ( ३ ) इति श्रुतेः । सिन्धुः स्यन्दति नाडीभिः शरीरं व्याप्नोति सिन्धुः प्राणवायुः । 'प्राणो वै सिन्धुश्छन्दः' ( ८ । ५ । २ । ४ ) इति श्रुतेः । समुद्रम् समुद्रवन्त्यस्माद्विकल्पसमूहा इति समुद्रं मनः । यद्वा समुद्रसाम्याद्गाम्भीर्येण समुद्रं मनः । 'मनो वै समुद्रः' ( ४ ) इति श्रुतेः । सरिरं सलिलं रलयोरैक्यं सरति वदनगह्वरान्निर्गच्छतीति सरिरं वाक् । 'वाग्वै सरिरं छन्दः' ( ४ ) इति श्रुतेः । ककुप् कं सुखं शरीरे स्कुभ्नाति धारयतीति ककुप्, कं सुखं कोपयति दीपयतीति वा 'कुप् दीप्तौ' चुरादिः क्विप् । पूर्वपक्षे सलोपश्छान्दसः । ककुप् प्राणः । 'प्राणो वै ककुप् छन्दः' ( ४ ) इति श्रुतेः । त्रिककुप् त्रेधा कं पीतमुदकं स्कुभ्नातीति त्रिककुप् उदानः । 'उदानो वै त्रिककुप्छन्दः' ( ४ ) इति श्रुतेः । काव्यम् कवेः परमात्मन इदं काव्यं वेदत्रयीरूपः छन्दः । 'त्रयी विद्या काव्यं छन्दः' ( ४ ) इति श्रुतेः । अङ्कुपम् 'अङ्क कुटिलगतौ' अङ्केन कुटिलगत्या आप्नोतीत्यङ्कुपमुदकम् । 'आपो वा अङ्कुपं छन्दः' ( ४ ) इति श्रुतेः । अक्षरपङ्क्तिः न क्षरतीत्यक्षरा नाशरहिता पङ्क्तिरावलिर्यस्याः साक्षरपङ्क्तिर्द्यौः । 'असौ वै लोकोऽक्षरपङ्क्तिश्छन्दः' ( ४ ) इति श्रुतेः । पदपङ्क्तिः पदानां चरणन्यासानां पङ्क्तयो यस्मिन् सा पदपङ्क्तिर्भूलोकः । 'अयं वै लोकः पदपङ्क्तिश्छन्दः' ( ४ ) इति श्रुतेः । विष्टारपङ्क्तिः विस्तारा विस्तर्यत इति विस्तारा विस्तारिता प्रसारिता वस्तूनां पङ्क्तयो यत्रेति विष्टारपङ्क्तिर्दिक् । 'दिशो वै विष्टारपङ्क्तिश्छन्दः' ( ४ ) इति श्रुतेः । क्षुरः 'क्षुर विलेखनखननयोः' क्षुरति विलिखति व्याप्नोति सर्वमिति क्षुरः तीव्रः । भ्राजते दीप्यत इति भ्रजः ह्रस्वश्छान्दसः । क्षुरोभ्रजः आदित्यः । 'असौ वा आदित्यः क्षुरोभ्रजश्छन्दः' ( ८ । ५ । २ । ४ ) इति श्रुतेः ॥ ४ ॥

## पञ्चमी ।

**आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरं छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप्छन्दोऽनुष्टुप् छन्दऽएवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्धाश्छन्दो विशालं छन्दश्छदिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दोऽङ्काङ्कं छन्दः ॥५॥**

**उ०** आच्छच्छन्दः प्रच्छच्छन्दः अन्नं वा आच्छच्छन्दोऽन्नं प्रच्छच्छन्दः । संयच्छन्दः रात्रिर्वा संयच्छन्दः । वियच्छन्दः असौ वै लोको वियच्छन्दः । निकायश्छन्दः वायुर्वै निकायश्छन्दः । विवधश्छन्दः अन्तरिक्षं वै विवधश्छन्दः । गिरश्छन्दः अन्नं वै गिरश्छन्दः । भ्रजश्छन्दः अग्निर्वै भ्रजश्छन्दः । सꣳस्तुप्छन्दोनुष्टुप्छन्द इति । वाग्वै सꣳस्तुप्छन्दो वागनुष्टुप्छन्दः । एवश्छन्दः वरिवश्छन्द इति तस्योक्तो बन्धुः । यथाश्रुति व्याख्यानम् । या त्वम् एवः अवनात्पृथिवीलोकः छन्दः छादनात् तां त्वामुपदधामीति व्याख्याधर्मप्रदर्शनम् ॥ ५ ॥

**म०** आच्छत् आच्छादयति शरीरमित्याच्छदन्नम् । प्रच्छत् प्रच्छादयतीति प्रच्छदन्नम् । 'अन्नं वा आच्छच्छन्दोऽन्नं प्रच्छच्छन्दः' ( ४ ) इति श्रुतेः । संयत् संयच्छति व्यापारान्निवर्तयति जन्तूनिति संयत् रात्रिः । 'रात्रिर्वै संयच्छन्दः'( ८ । ५ । २ । ५ ) इति श्रुतेः । वियत् विशेषेण यच्छन्ति गच्छन्ति व्यापारायेतस्ततो जना यत्रेति वियद्दिनम् । 'अहर्वै वियच्छन्दः' ( ५ ) इति श्रुतेः । बृहत् विस्तीर्णं स्वः । 'असौ वै लोको बृहच्छन्दः' ( ५ ) इति श्रुतेः । रथन्तरम् रथैः तीर्यते गम्यते यत्रेति रथन्तरं भूमण्डलम् । 'अयं वै लोको रथन्तरं छन्दः' ( ५ ) इति श्रुतेः । निकायः नितरां कायति शब्दं करोति वृक्षादीनुन्मूलयन्निति निकायो वायुः 'कै शब्दे' । 'वायुर्वै निकायश्छन्दः' ( ५ ) इति श्रुतेः । विवधः विविधं वध्यन्ते हन्यन्ते पापफलानि भोक्ष्यन्ते भूतप्रेतादिरूपेण प्राणिनो यत्रेति विवधोऽन्तरिक्षम् । 'अन्तरिक्षं वै विवधश्छन्दः' ( ५ ) इति श्रुतेः । गिरः गीर्यते भक्ष्यत इति गिरोऽन्नम् । 'अन्नं वै गिरः' ( ६ ) इति श्रुतेः । भ्रजः भ्राजते दीप्यत इति भ्रजोऽग्निः । 'अग्निर्वै भ्रजश्छन्दः' ( ८ ) इति श्रुतेः । संस्तुप् अनुष्टुप् सम्यक् स्तुभ्यते रुध्यते वशीक्रियते अनु निरन्तरं स्तुभ्यतेऽनया सा संस्तुप् अनुष्टुप् वाक् । 'वागेव सꣳस्तुप् छन्दो वागनुष्टुप् छन्दः' ( ५ ) इति श्रुतेः । एवः वरिवः इति पदद्वयं व्याख्यातम् । वयः बाल्यादिवयोहेतुभूतमन्नम् । 'अन्नं वै वयश्छन्दः' ( ६ ) इति श्रुतेः । वयस्कृत् वयांसि बाल्यादीनि करोतीति वयस्कृत् जठराग्निः । 'अग्निर्वै वयस्कृच्छन्दः' ( ६ ) इति श्रुतेः । विष्पर्धाः विविधं स्पर्धन्ते ऐश्वर्याधिक्यदर्शनेन जना यत्रेति विष्पर्धाः स्वर्गः । 'स्पर्ध संघर्षे' असुन् । 'असौ वै लोको विष्पर्धाश्छन्दः' ( ६ ) इति श्रुतेः । विशालं विविधं शालन्ते शोभन्ते जना यत्रेति विशालं भूतलम् । 'अयं वै लोको विशालं छन्दः' ( ६ ) इति श्रुतेः । छदिः छाद्यतेऽर्करश्मिभिरिति छदिरन्तरिक्षम् । 'अन्तरिक्षं वै छदिश्छन्दः' ( ६ ) इति श्रुतेः । दूरोहणम् दुःखेन रोढुमारोहणं कर्तुं शक्यं निष्कामज्योतिष्टोमादियज्ञप्रयासजातज्ञानसाध्यत्वादिति दूरोहणं रविः । 'असौ

वा आदित्यो दूरोहणं छन्दः' ( ६ ) इति श्रुतेः । तन्द्रम् 'तन्द्रि सादे मोहे' तन्द्रति सीदति स्थानसंकोचेनेति तन्द्रः श्रेणी । 'पङ्क्तिर्वै तन्द्रं छन्दः' ( ६ ) इति श्रुतेः । अङ्काङ्कम् अङ्के स्थले अङ्कानि गर्तपाषाणादिचिह्नानि यत्रेत्यङ्काङ्कं जलम् । 'आपो वा अङ्काङ्कं छन्दः' ( ६ ) इति श्रुतेः । अत्रेष्टकानां भूलोकादिरूपेण स्तुतिरिति भावः ॥ ५ ॥

## षष्ठी ।

र॒श्मिना॑ स॒त्याय॑ स॒त्यं जि॑न्व॒ प्रेति॑ना॒ धर्म॑णा॒ धर्मं॑ जिन्वा॒न्वित्या॑ दि॒वा दिवं॑ जिन्व स॒न्धिना॒न्तरि॑क्षेणा॒न्तरि॑क्षं जिन्व प्रति॒धिना॑ पृथि॒व्या पृ॑थि॒वीं जि॑न्व वि॒ष्टम्भे॑न॒ वृष्ट्या॒ वृष्टिं॑ जिन्व प्र॒वयाह्ना॒ह॑र्जिन्वानु॒या रात्र्या॒ रात्रीं॑ जिन्वो॒शिजा॒ वसु॑भ्यो॒ वसू॑ञ्जिन्व प्र॒केते॑नादि॒त्येभ्य॑ आदि॒त्याञ्जि॑न्व ॥ ६ ॥

**उ०** एकोनत्रिंशत्स्तोमभागानुपदधाति । रश्मिना सत्याय सत्यं जिन्वेति । अत्र श्रुतिकृता व्याख्या । असुनादोजिन्व । अदोऽस्यमुष्मै त्वा अधिपतिनोर्जोर्जं जिन्वेति । त्रिधा विहिता मन्त्राः । तत्र प्रथमस्य मन्त्रगणस्य द्विकण्डिकावधिपरिपठितस्य व्याख्यानम् । अमुना रश्मिना अदः सत्यं जिन्व । जिन्वतिस्तर्पणार्थः । रश्मिना अन्नेन सत्याय उपहितासती सत्यं तर्पय । प्रेतिना अन्नेन । धर्मणा धर्मायेति विभक्तिव्यत्ययः । नदिवादिवेऽर्थायोपहितासती दिवं जिन्व ॥ ६ ॥ ७ ॥

**म०** 'सर्वतोऽषाढावेलायाᳪस्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रं पञ्चदश दक्षिणेनानूकम्' ( का० १७ । ११ । ९—१० ) अषाढावेलायां सर्वदिक्षु स्तोमभागासंज्ञा इष्टका उपदधाति रश्मिनेत्याद्येकोनत्रिंशन्मन्त्रैः । तन्मध्ये पञ्चदश प्रागनूकं दक्षिणेन अर्थाच्चतुर्दश प्रागनूकमुत्तरेणोपधेया इति सूत्रार्थः । एकोनत्रिंशद्यजूंषीष्टकादेवत्यानि । इमे मन्त्राः श्रुत्या त्रिधा व्याख्याताः । कण्डिकाद्वयपर्यन्तममुनोपहिता सत्यदो जिन्वेति प्रथमः । अदोऽस्यमुष्मै त्वामुपदधामीति द्वितीयः । अधिपतिनोर्जोर्जं जिन्वेति तृतीयः प्रकारः । तथाच श्रुतिः 'असुनादो जिन्वादोऽस्यमुष्मै त्वाधिपतिनोर्जोर्जं जिन्वेति त्रेधा विहितास्त्रेधा विहितᳪ ह्यन्नम्' ( ८ । ५ । ३ । ३ ) इति । अथ वाक्यार्थः । हे इष्टके, त्वं रश्मिनान्नेन सत्यायोपहिता सती सत्यं सत्यवचो जिन्व तर्पय तेजोवृद्धिप्रदत्वादन्नं रश्मिः 'रश्मिरन्नं' (८ । ५ । ३ । ३) इति श्रुतेः । प्रकर्षेण देहे इतिर्गतिर्यस्येति प्रेतिरन्नम् तेन । धर्मणा । विभक्तिव्यत्ययः । धर्मणे धर्मायोपहिता सती धर्मं जिन्व प्रीणय 'प्रेतिरन्नम्' ( ६ ) इति श्रुतेः । सर्वमन्त्रेषु द्वितीयं पदं चतुर्थ्यन्तं कार्यम् । अन्वेति देहमनुगच्छतीत्यन्वितिरन्नम् तया दिवा दिवेऽर्थायोपहिता सती दिवं द्युलोकं जिन्व । 'अन्वितिरन्नं' ( ३ ) इति श्रुतेः । सन्धिना सम्यग्बलादिकं धीयतेऽस्मिन्निति सन्धिरन्नं तेन अन्तरिक्षेण अन्तरिक्षार्थमुपहितान्तरिक्षं जिन्व । प्रतिधीयतेऽस्मिन्निति प्रतिधिरन्नं तेन पृथिव्यै उपहिता सती पृथिवीं जिन्व । विष्टम्भेन देहं विष्टम्भयतीति विष्टम्भोऽन्नं तेन वृष्ट्यै उपहिता वृष्टिं जिन्व । प्रवया प्रकर्षेण वाति देहं गच्छतीति प्रवान्नम् तेनाह्नाह्ने उपहिताहर्दिनं जिन्व । अनुया देहान्तर्गतद्वासप्ततिनाडीभिरनुयाति आप्नोति देहमित्यनुयान्नं तया । तृतीयैकवचने 'आतो धातोः' ( पा० ६ । ४ । १४० ) इत्यालोपः । रात्र्यै उपहिता रात्रीं जिन्व । उशिजा 'वश कान्तौ' उश्यते सर्वैः काम्यत इत्युशिगन्नम् तेन वसुभ्योऽर्थायोपहिता वसून् जिन्व । प्रकेतेन प्रकर्षेण कं सुखमीयतेऽनेनेति प्रकेतमन्नं तेनादित्येभ्योऽर्थायोपहितादित्यान् जिन्व ॥ ६ ॥

## सप्तमी ।

तन्तु॑ना रा॒यस्पोषे॑ण रा॒यस्पोषं॑ जिन्व सᳪसर्पे॑ण श्रु॒ताय॑ श्रु॒तं जि॑न्वै॒डेनौष॑धीभि॒रोष॑धीर्जिन्वोत्त॒मेन॑ त॒नूभि॑स्त॒नूर्जि॑न्व वयो॒धसाधी॑ते॒नाधी॑तं जिन्वाभि॒जिता॒ तेज॑सा॒ तेजो॑ जिन्व ॥ ७ ॥

**म०** तन्तुना तन्यते विस्तार्यत इति तन्तुरन्नं तेन । रायस्पोषेण धनपुष्ट्यै उपहिता रायस्पोषं जिन्व । संसर्पेण सम्यक् सर्पति प्रसरति देहे इति संसर्पोऽन्नम् तेन श्रुताय शास्त्रायोपहिता श्रुतं जिन्व । इडान्नम् इडैवैडम् स्वार्थेऽण् तेनौषधीभिः ओषध्यर्थमुपहिता ओषधीर्जिन्व । उत्तमेन उद्गतं तमो यस्मात् यद्वोत्तमेनोत्कृष्टान्नेन तनूभिः शरीरार्थमुपहिता तनूः शरीराणि जिन्व । वयोधसा वयो दधाति पुष्णाति वयोधा अन्नं तेनाधीतेनाध्ययनायोपहिताधीतं जिन्व । अभि सर्वतो जीयते येनेत्यभिजित्सर्वजयहेतुरन्नं तेन तेजसा तेजोऽर्थमुपहिता तेजो जिन्व ॥ ७ ॥

## अष्टमी ।

प्र॒ति॒पद॑सि प्रति॒पदे॑ त्वानु॒पद॑स्यनु॒पदे॑ त्वा स॒म्पद॑सि स॒म्पदे॑ त्वा तेजो॑ऽसि॒ तेज॑से त्वा ॥ ८ ॥

**उ०** द्वितीयस्य मन्त्रवर्गस्य व्याख्यानम् । अदो धर्मायोपहितासती धर्मं जिन्व । एवं द्वितीयान्तं पदं चतुर्थ्यन्तं कर्तव्यं सर्वत्र मन्त्रेषु अन्वित्वा अदोऽस्यमुष्मै त्वा । अदः असि ॥ ८ ॥

**म०** अदोऽस्यमुष्मै त्वेति व्याख्यातमन्त्रानाह । प्रतिपद्यते जीवनमनेनेति प्रतिपदन्नम् । हे इष्टके, त्वं प्रतिपदन्नरूपासि प्रतिपदेऽन्नाय त्वामुपदधामीति शेषः । एवं सर्वत्र । प्रतिदिनमनुपद्यतेऽनुपदन्नमसि अनुपदेऽन्नाय त्वामुपदधामि । हे इष्टके, त्वं संपदन्नमसि संपदेऽर्थाय त्वामुपदधामि । तेजसः कारणत्वात्तेजोन्नम् तेजसे त्वामुपदधामि ॥ ८ ॥

## नवमी ।

त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा विवृदसि विवृते त्वा सवृदसि सवृते त्वाक्रमोऽस्याक्रमाय त्वा संक्रमोऽसि संक्रमायत्वोत्क्रमोऽस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यैत्वाधिपतिनोर्जोर्जं जिन्व ॥ ९ ॥

उ० त्रिवृदसि । अमुष्मै त्वा त्रिवृते त्वा वाक्यधर्मः । यतः त्रिवृदसि त्रिगुणासि । अन्नं हि त्रिगुणम् अन्नं च त्वम् अतः त्रिवृतेर्थाय त्वामुपदधामि प्रवृणोति भूतानीति प्रवृत् अन्नम् यतस्त्वं प्रवृदसि अतः प्रवृतेऽर्थाय त्वामुपदधामीति । तृतीयो व्याख्यायते । अधिपतिना ईश्वरेण । ऊर्जा अन्नरसेन ऊर्जमन्नरसंजिन्व तर्पय । अभिधेयगतां क्रियां पर्यालोच्याभिधान व्युत्पत्तिः कर्तव्या ॥ ९ ॥

म० कृषिवृष्टिबीजरूपेण त्रिगुणत्वात्त्रिधा वर्तत इति त्रिवृदन्नं तद्रूपां त्वां त्रिवृते उपदधामि । प्रवृणोति भूतानीति प्रवृदन्नं यतस्त्वं प्रवृदसि अतः प्रवृतेऽर्थाय त्वामुपदधामि । विशेषेण वर्तते भूतेषु इति विवृदन्नं त्वं विवृदसि विवृतेऽर्थाय त्वामुपदधामि । सह वर्तते सवृदसि सवृतेऽन्नाय त्वामुपद० । आक्रामति पराभवति क्षुधामित्याक्रमोऽन्नं त्वमाक्रमोऽसि आक्रमाय त्वामुप० । देहे संक्रामतीति संक्रमोऽन्नं त्वं संक्रमोऽसि संक्रमाय त्वामुप० । सन्तानोत्पत्त्यै बीजरूपेण परिणम्योत्क्रामतीत्युत्क्रमोऽन्नं त्वं तद्रूपासि उत्क्रमाय त्वामुप० । उत्कृष्टा क्रान्तिर्गमनं यस्येत्युत्क्रान्तिरन्नम् हे इष्टके, त्वमुत्क्रान्तिरसि उत्क्रान्त्यै अर्थाय त्वामुपदधामि । अथ तृतीयो व्याख्याभिदः । अधिकं पातीत्यधिपतिः अधिकपालकेन ऊर्जा अन्नरसेन ऊर्जमन्नरसं जिन्व तर्पय । एवं मन्त्रेष्वभिधेयानुसारेण व्युत्पत्तिः कार्या ॥ ९ ॥

## दशमी ।

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्याᳬं श्रयत्वाज्यमुक्थमव्यथायै स्तभ्नातु रथन्तरᳬं साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ १० ॥

उ० नाकसद उपदधाति । राज्ञ्यसि । या त्वं राज्ञी 'राजृ दीप्तौ' । ईश्वरी असि प्राची च दिक् । यस्याश्च वसवः ते तव देवा अधिपतयः अधिष्ठातारः । यस्याश्च अग्निर्हेतीनामस्त्राणां वधहेतुभूतानां धारयिता विधारयिता तां त्वां ब्रवीमि । त्रिवृत्स्तोमः पृथिव्यां श्रयतु स्थापयतु । राज्यं च उक्थम् । अव्यथायै अचलनाय स्तभ्नातु स्थिरीकरोतु । रथन्तरं च साम प्रतिष्ठित्यै प्रतिष्ठानाय स्तभ्नातु । अन्तरिक्षे लोके । ऋषयश्च त्वां प्रथमजाः । प्राणा वा ऋषयः प्रथमजाः । देवेषु मध्ये । दिवः द्युलोकस्य मात्रया वरिम्णा च उरुत्वेन च प्रथन्तु पृथ्वीं कुर्वन्तु । प्रथयन्त्विति प्राप्ते णिचो लोपः । विधर्ता चायमधिपतिश्च । विधर्ता वाक् । अधिपतिर्मनः । एते च प्रथयताम् । तव एते वस्वादयो यथोक्ताः सर्वे संविदानाः ऐकमत्येनावस्थिताः । नाकस्य पृष्ठे स्वर्गे लोके यजमानं च त्वां च सादयन्तु ॥ १० ॥

म० 'नाकसदोऽनूकेषु पूर्ववर्जमृतव्यावेलायामाश्विनीवद्राज्ञ्यसीति प्रतिमन्त्रम्' ( का० १७ । १२ । १ ) । पूर्वानूके स्थानाभावात् पूर्वानूकवर्जं त्रिदिक्ष्वनूकेषु ऋतव्यावेलायामनूकोपरि राज्ञीत्यादिपञ्चकण्डिकाभिराश्विनीवन्नाकसत्संज्ञेष्टका उपदधातीति सूत्रार्थः । पुरस्तादुपदधाति । राज्ञ्यसि । पञ्च यजूंषि लिङ्गोक्तदेवतानि । हे इष्टके, राज्ञी राजमाना प्राची पूर्वा दिक् त्वमसि । वसवोऽष्टौ देवास्ते तवाधिपतयोऽधिकं पालयितारः । अग्निर्हेतीनामुपद्रवकारिणीनां परायुधानां प्रतिधर्ता निराकर्ता । किंच त्रिवृत्स्तोमः त्वा त्वां पृथिव्यां श्रयतु उत्थापयतु । आज्यमाज्यनामकमुक्थं शस्त्रं 'प्र वो देवायाग्नये' ( ऐ० ब्रा० २ । ४० ) इत्यादिकम् । अव्यथायै न व्यथा अव्यथा तस्यै चलनाभावाय त्वां स्तभ्नातु दृढीकरोतु । रथन्तरं साम अन्तरिक्षे लोके प्रतिष्ठित्यै प्रतिष्ठानाय त्वां स्तभ्नातु । प्रथमजाः प्रथमोत्पन्ना ऋषयः प्राणा देवेषु द्युलोकमध्ये दिवः आकाशस्य मात्रया परिमाणेन वरिम्णा उरुत्वेन त्वां प्रथन्तु प्रथयन्तु । 'छन्दस्युभयथा' (पा० ३ । ४ । ११७) इति शप आर्धधातुकत्वाण्णिलोपः । 'प्राणा वा ऋषयः प्रथमजाः' ( ८ । ६ । १ । ५ ) इति श्रुतेः आकाशस्य यादृशं विशालत्वं तादृग्विशालां त्वां कुर्वन्त्वित्यर्थः । विधर्ता इष्टकानिष्पादयिता च पुनरयमधिपतिरिष्टकापालकश्च त्वां प्रथयताम् । यद्वा विधर्ता विशेषेण धारयिता वागभिमानी देवः अयमधिपतिः प्रधानभूतो देवो मनोऽभिमानी तौ च त्वां प्रथयताम् । 'विधर्ता चायमधिपतिश्चेति वाक् च मनश्च तौ हीदᳬंसर्वं विधारयतः' ( ८ । ६ । १ । ५ ) इति श्रुतेः । किंच ते सर्वे यथोक्ता वस्वादयः संविदानाः ऐकमत्येनावस्थिताः सन्तो नाकस्य पृष्ठे न अकं दुःखं नाकं सुखं तस्य पृष्ठे स्वरूपे सुखरूपे स्वर्गे लोके यजमानम् इष्टके चकारात्त्वां च सादयन्तु । स्तोमाः सामानि च राजसूयप्रकरणे दशमेऽध्याये प्राचीमारोहेत्यादिकण्डिकासु (अ० १० क० १०–१४ ) व्याख्यातानि ॥ १० ॥

## एकादशी ।

विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्याᳬं श्रयतु प्रउगमुक्थमव्यथायै स्तभ्नातु बृहत्साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ ११ ॥

उ० उत्तरासु कण्डिकासु देवाः हेतीनां प्रतिधर्तारः स्तोमाः । उक्थानि सामानि चान्यानि भविष्यन्ति । समानमन्यत् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

म० अथ दक्षिणतः चतसृषु कण्डिकासु देवाः हेतीनां प्रतिधर्तारः स्तोमाः उक्थानि सामानि चान्यानि । समानमन्यत् । 'वायुरग्रेगाः' ( अध्या० २७ क० ३१ ) इति प्रउगं शस्त्रम् ॥ ११ ॥

## द्वादशी ।

सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्याᳬं श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु वैरूपᳬं साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ १२ ॥

म० अथ पश्चात् । सम्यग्राजते सम्राट् । 'आ त्वा रथं यथोतये' ( ऋक्सं० म० ८ । ७ । ९ । १ ) इति मरुत्वतीयं शस्त्रम् ॥ १२ ॥

## त्रयोदशी ।

स्वराडस्युदीची दिङ्मरुतस्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्तैकविᳬंशस्त्वा स्तोमः पृथिव्याᳬं श्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नातु वैराजᳬं साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ १३ ॥

म० अथोत्तरतः । स्वेनैव राजते स्वराट् । 'अभि त्वा शूर नोनुमः' ( ऋक्सं० म० ७ । २ । १५ । २२ ) इत्यादिकं निष्केवल्यं शस्त्रम् ॥ १३ ॥

## चतुर्दशी ।

अधिपत्न्यसि बृहती दिग्विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिᳬंशौ त्वा स्तोमौ पृथिव्याᳬं श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीताᳬं शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ १४ ॥

म० अथ मध्ये । हे इष्टके, अधिकं पालयित्री बृहती प्रौढोर्ध्वा दिगसि । त्रिणवत्रयस्त्रिंशौ स्तोमौ त्वां पृथिव्यां श्रयताम् । वैश्वदेवाग्निमारुते शस्त्रे अचलनाय स्तभ्नीताम् । शाक्वररैवते सामनी चान्तरिक्षे स्थित्यै त्वां स्तभ्नीताम् । द्विवचने विशेषः । 'तत्सवितुर्वृणीमहे' ( ऋक्सं० म० ५ । ६ । १० । १ ) इत्यादि वैश्वदेवं शस्त्रम् । 'वैश्वानराय पृथुपाजसा' ( ऋक्० म० ३ । १ । १३ । १) इत्यादिकमाग्निमारुतं शस्त्रम् । उक्तमन्यत् ॥ १४ ॥

## पञ्चदशी ।

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ॥ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १५ ॥

उ० पञ्चचूडा उपदधाति । अयं पुरः योयमग्निः पुरः पुरस्तादुपधायाचर्यत इति पुर इत्युच्यते । हरिकेशश्च हरितज्वालः सुवर्णवर्णार्चिरिति यावत् । सूर्यरश्मिश्च सूर्यस्येवाग्नेः रश्मयः तस्य रथगृत्सश्च रथेऽवस्थितो गृत्सः मेधावी । गृणतेः स्तुतिकर्मणः रथयुद्धकुशल इत्यर्थः । रथौजाश्च रथे ओजोऽस्यास्ति रथौजाः । चकारौ समुच्चयार्थीयौ । सेनानीग्रामण्यौ । सेनां नयतीति सेनानीः । ग्रामं नयतीति ग्रामणीः । 'वासन्तिकौ तावृतू' इति श्रुतिः । पुञ्जिकस्थल च क्रतुस्थला चाप्सरसौ पुञ्जीकृतरूपलावण्यसौभाग्यगुणस्थला । क्रतूनां संकल्पानां स्थलमिव । स्त्रीद्रव्यस्वरूपादिज्ञानं संकल्पः तन्मूलकस्तु कामः । दिशश्च उपदिशश्चेति माहित्थिः । 'सेना च समितिश्च' इति श्रुतिः । दङ्क्ष्णवः दशनशीलाः पशवो हेतिर्वज्रः आयुधम् । पौरुषजनितः वधः विनाशः । प्रहेतिः प्रकृष्टमायुधम् ।

तेभ्यो नमः अस्तु । तेभ्यो हेतिप्रहेतिभ्यः नमस्कारोस्तु । ते च नोऽस्मानवन्तु गोपायन्तु । ते नो मृडयन्तु ते अस्मान्सुखयन्तु । ते वयं हेतिप्रहेतिभिर्गुप्यमानाः यं पुरुषं द्विष्मः यस्यानिष्टं चिन्तयामः । यश्च पुरुषः नः अस्मान् द्वेष्टि अस्मान्प्रत्यप्रीतिं करोति तं पुरुषम् एषां हेतिप्रहेतीनाम् वयं जम्भे दंष्ट्राकराले मुखे । दध्मः प्रक्षिपामः ॥ १५॥

**म०** 'पुरीषमोप्योपर्ययं पुर इति पञ्चचूडाः प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम्' ( का० १७ । १२ । २-३ ) । नाकसत्सु तूष्णीं चात्वालमृदं प्रक्षिप्य नाकसदामुपरि सर्वदिक्षु यथालिङ्गं लिङ्गानतिक्रमेण यल्लिङ्गको मन्त्रस्तद्दिशि तन्मन्त्रेण पञ्चचूडासंज्ञकाः पञ्चेष्टका उपदधातीति सूत्रार्थः । पञ्च यजूंषि लिङ्गोक्तदेवत्यानि । योऽयं पुरोऽग्निः इष्टकारूपः पुरस्तादुपधीयमानत्वात् पुरोऽग्निः । 'अग्निर्वै पुरस्तद्यत्तमाह पुर इति प्राञ्चꣳह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्ति' ( ८ । ६ । १ । १६ ) इति श्रुतेः । कीदृशः । हरिकेशः हरयो हरितवर्णाः कनकवर्णाः केशाः केशसमा ज्वाला यस्य ।'हरिः पिङ्गे हरिद्वर्णे' इत्यभिधानात् । सूर्यरश्मिः सूर्यस्येव रश्मयः किरणा यस्य 'सूर्यस्येव ह्यग्ने रश्मयः' ( ८ । ६ । १ । १६ ) इति श्रुतेः । तस्याग्ने रथगृत्सः रथौजाः च सेनानीग्रामण्यौ रथे गृत्सो मेधावी कुशलो रथगृत्सः 'गृत्सो मेधावी गृणातेः स्तुतिकर्मणः' ( निरु० ९ । ५ ) इति यास्कोक्तेः । सेनां नयतीति सेनानीः । चौ समुच्चयार्थौ । रथे ओजस्तेजो यस्य स रथौजाः । रथयुद्धकुशल इत्यर्थः । ग्रामं नयतीति ग्रामणीः । एतन्नामकौ सेनानीग्रामण्यौ परिचारकौ तौ च वासन्तिकावृतू इत्यर्थः । 'वासन्तिकौ तावृतू' ( १६ ) इति श्रुतेः । तथा पुञ्जिकस्थला क्रतुस्थला चेत्यप्सरसौ दिगुपदिग्रूपे यस्य परिचारिके। पुञ्जिकस्य पुञ्जीकृतस्य रूपलावण्यसौभाग्यादिगुणसमूहस्य स्थलाधारभूता पुञ्जिकस्थला । क्रतूनां संकल्पानां रूपादिज्ञानानां स्थला स्थानभूता क्रतुस्थला । पुञ्जिकस्य क्रतूनां च स्थलं यस्यामिति बहुव्रीहिर्वा । 'पुञ्जिकस्थला च क्रतुस्थला चाप्सरसाविति दिक् चोपदिशा चेति ह स्माह माहित्थिः' ( १६ ) इति श्रुतेः । दङ्क्ष्णवो दशनशीलाः पशवः व्याघ्रादयो हेतिरायुधं वज्रः । पौरुषेयः पुरुषसंबन्धी वधः हननं वधः प्रहेतिः प्रकृष्टमायुधं यस्मिन्नस्त्रे मुक्ते रावणसेनेव परस्परं रिपवो घ्नन्ति स पौरुषेयो वधः । 'यदन्योन्यं घ्नन्ति स पौरुषेयो वधः प्रहेतिः' ( १६ )इति श्रुतेः । यस्याग्नेरियं सामग्री हे इष्टके, त्वं तदग्निस्वरूपासीत्यर्थः । योऽयमग्नियौं च तस्य सेनानीग्रामण्यौ ये चाप्सरसौ ये च हेतिप्रहेती तेभ्यः सर्वेभ्यः सर्वदा नमो नमस्कारोऽस्तु । ते सर्वे नोऽस्मान् मृडयन्तु सुखयन्तु । ते नोऽस्मानवन्तु रक्षन्तु यं नरं वयं द्विष्मः यस्यानिष्टं चिन्तयामः । यश्च नरो नोऽस्मान् द्वेष्टि अस्मास्वप्रीतिं करोति तं नरमेषां पूर्वोक्तानां जम्भे दंष्ट्राकराले मुखे वयं दध्मः प्रक्षिपामः । 'जभि नाशने' जम्भयति नाशयति जम्भा दंष्ट्रा यस्मिन्नस्तीति जम्भं मुखम् ॥ १५ ॥

## षोडशी ।

अ॒यं द॑क्षि॒णा वि॒श्वक॑र्मा॒ तस्य॑ रथस्व॒नश्च॒ रथे॑चित्रश्च सेनानीग्राम॒ण्यौ॑ ॥ मे॒नका॑ च॑ सहज॒न्या चा॑प्स॒रसौ॑ यातु॒धाना॑ हे॒ती रक्षा॑ꣳसि॒ प्रहे॑ति॒स्तेभ्यो॒ नमो॑ अस्तु॒ ते नो॑ऽवन्तु॒ ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥ १६ ॥

**उ०** उत्तरेषु । अयं दक्षिणा । दक्षिणतो विश्वकर्मा सर्वस्य कर्ता वायुः तस्य वायो रथस्वनः रथेऽवस्थितो महास्वनः । स्वनः शब्दः । रथे चित्रः रथेऽवस्थितो विचित्रयोधी । मेनका च सहजन्या च । सेना मानयन्त्येनां मेनका समानैर्जनैः सहस्थिता जनानां सहजन्या । अप्सरसो हि सर्वसामान्याः । यातुधानाः रक्षांसि ॥ १६ ॥

**म०** अथ दक्षिणतः । दक्षिणस्यां दिशीति दक्षिणा 'दक्षिणादाच्' ( पा० ५ । ३ । ३६ ) इति सप्तम्यन्ताद्दक्षिणशब्दादाच्प्रत्ययः । दक्षिणा दक्षिणतः अयं विश्वकर्मा विश्वं सर्वं कर्म यस्य । विश्वं करोतीति वा विश्वकर्मा वायुः । 'अयं वै वायुर्विश्वकर्मा योऽयं पवत एष हीदꣳ सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति' ( ८ । ६ । १ । १७ ) इति श्रुतेः । तस्य वायोः रथस्वनः सेनानीः रथे स्थितः स्वनति शूरशब्दं करोतीति रथस्वनः । रथे स्थितः चित्र आश्चर्यकारी रथे चित्रो ग्रामणीः 'हलदन्तात्–' ( पा० ६ । ३ । ९ ) इति सप्तम्या अलुक् । तौ ग्रैष्मावृतू 'ग्रैष्मौ तावृतू' ( १७ ) इति श्रुतेः । मानयन्त्येनां मेनका । जनैः सर्वैः सह स्थिता सहजन्या । अप्सरसो हि सर्वसाधारणाः एते अप्सरसौ । यातुधाना रक्षसामवान्तरजातिभेदो बोध्यः । हेतिप्रहेती अप्यायुधविशेषौ । क्रूरा यातुधानास्तीक्ष्णहेतिरूपाः अतिक्रूराणि रक्षांस्यतितीक्ष्णप्रहेतिस्वरूपाणि । हे इष्टके, यस्य वायोरिदं सर्वं त्वं तद्रूपासि । व्याख्यातमन्यत् ॥ १६ ॥

## सप्तदशी ।

अ॒यं प॒श्चाद्वि॒श्वव्य॑चा॒स्तस्य॒ रथ॑प्रोत॒श्चास॑मरथश्च सेनानीग्राम॒ण्यौ॑ ॥ प्र॒म्लोच॑न्ती चानु॒म्लोच॑न्ती चाप्स॒रसौ॑ व्या॒घ्रा हे॒तिः स॒र्पाः प्रहे॑ति॒स्तेभ्यो॒ नमो॑ अस्तु॒ ते नो॑ऽवन्तु॒ ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥ १७ ॥

**उ०** अयं पश्चात् विश्वव्यचाः आदित्यो विश्वव्यचाः । स ह्युदयेन सर्वं व्यञ्जनवत्करोति । तस्य रथप्रोतश्च रथेऽवस्थितः प्रोत इव । असमरथः अन्यैः रथिभिरतुल्य-

रथः । प्रम्लोचन्ती चानुम्लोचन्ती च । तुल्यव्याख्यानम् । व्याघ्राः सर्पाः ॥ १७ ॥

**म०** अथ पश्चात् । अवरस्मिन् प्रदेशे इत्यर्थे 'पश्चात्–' ( पा० ५ । ३ । ३२ ) इति सूत्रेण निपातः । पश्चात् पश्चिमदेशेऽयं विश्वव्यचाः आदित्यः विश्वं सर्वमुदयेन विचति प्रकाशयति व्याप्नोति वा विश्वव्यचाः असुन् पश्चिमायां सष्टे दृश्यत इति पश्चात् । 'असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदꣳ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति' ( ८ । ६ । १ । १८ ) इति श्रुतेः । तस्यादित्यस्य रथे स्थितः प्रोत इव स्थिरो रथे प्रोतः सेनानीः । असमोऽन्यैः रथैरतुल्यो रथो यस्य सोऽसमरथो नाम ग्रामणीः तौ च वार्षिकावृतू । 'वार्षिकौ तावृतू' ( १८ ) इति श्रुतेः । प्रम्लोचति नरं प्रत्यात्मानं दर्शयतीति प्रम्लोचन्ती । अनु वारं वारं म्लोचन्तीत्यनुम्लोचन्तीत्यप्सरसौ व्याघ्राः प्रसिद्धाः यस्य हेतिः, सर्पाः प्रहेतिर्यस्य तद्रूपास्ति । उक्तमन्यत् ॥ १७ ॥

## अष्टादशी ।

अ॒यमु॑त्तरात्सं॒यद्व॑सु॒स्तस्य॒ तार्क्ष्य॑श्चारि॑ष्टनेमिश्च सनानीग्राम॒ण्यौ॑ वि॒श्वाची॑ च घृ॒ताची॑ चाप्स॒र॒सा॒वापो॑ हे॒तिर्वा॒तः प्रहे॑ति॒स्तेभ्यो॒ नमो॑ अस्तु ते नो॑ऽवन्तु ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥ १८ ॥

**उ०** अयमुत्तरात् । अयं यज्ञः उत्तरतः । संयद्वसुः संयन्ति वसुनो धनस्य लिप्सवो यंप्रति स संयद्वसुर्यज्ञः । दीयते हि तत्र प्रसृप्तेभ्यः । तार्क्ष्यः तीक्ष्णेऽन्तरिक्षे क्षिपति पक्षाविति तार्क्ष्यः । अरिष्टनेमिः अनुपहिंसितायुधः । विश्वाची च सर्वप्रति अञ्चनशीला । साधारणा हि सा । घृताची घृताञ्चना । घृतं हि अप्सरसामन्नम् । तथाचोर्वशीवाक्यम् 'घृतस्य स्तोकं सकृदह्न आश्नामि' इति । आपः वातः ॥ १८ ॥

**म०** अथोत्तरतः । उत्तरस्मिन्नित्युत्तरात् 'उत्तराधर–' ( पा० ५ । ३ । ३४ ) इत्यादिना आत्प्रत्ययः । अयमुत्तरतः संयद्वसुः यज्ञः सम्यक् यन्ति गच्छन्ति वसुने धनाय यंप्रति जनाः स संयद्वसुः । यज्ञं गतेभ्यो हि दानमावश्यकम् । यज्ञस्योत्तरोपचारत्वादुत्तरात् । तथाच श्रुतिः 'यज्ञो वा उत्तरात्तद्यत्तमाहोत्तरादित्युत्तरत उपचारो हि यज्ञोऽथ यत्संयद्वसुरित्याह यज्ञꣳहि संयन्तीतीदं वसु' ( ८ । ६ । १ । १९ ) इति तीक्ष्णेऽन्तरिक्षे क्षिपति पक्षाविति तार्क्ष्यः अरिष्टाऽनुपहिंसिता नेमिरायुधं यस्य सोऽरिष्टनेमिः एतन्नामकौ सेनानीग्रामण्यौ तौ शारदावृतू । 'शारदौ तावृतू' ( १९ ) इति श्रुतेः । विश्वाची घृताची चाप्सरसौ ते च दिशोपदिशे । विश्वं सर्वं प्रत्यञ्चतीति विश्वाची सर्वसाधारणत्वात् । घृतमञ्चति भुङ्क्ते घृताची । घृतं ह्यप्सरसामन्नम् । घृतस्य स्तोकं सकृदह्न आश्नामीत्युर्वशीवचनात् । आपोऽपां समूहो हेतिः 'तस्य समूहः' ( पा० ४ । २ । ३७ ) इत्यण् । वातः वायुः प्रहेतिः । तेभ्य इत्याद्युक्तम् ॥ १८ ॥

## एकोनविंशी ।

अ॒यमु॒पर्य॒र्वाग्व॑सु॒स्तस्य॑ सेन॒जिच्च॑ सु॒षेण॑श्च सेनानीग्राम॒ण्या॒वु॒र्वशी॑ च पू॒र्वचि॑त्तिश्चाप्स॒रसा॑वव॒स्फूर्ज॑न् हे॒तिर्वि॒द्युत्प्रहे॑ति॒स्तेभ्यो॒ नमो॑ अस्तु ते नो॑ऽवन्तु॒ ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥ १९ ॥

**उ०** मध्ये । अयमुपरि । अयं पर्जन्य उपरि । अर्वाग्वसुः अर्वागञ्चनं वसु धनमुदकलक्षणं प्रजाभ्यो ददातीत्यर्वाग्वसुः पर्जन्यः । तस्य सेनजिच्च सेनां जयतीति सेनजित् । सुषेणश्च शोभनसेनश्च । उर्वशी च उरुः पृथुः वशः कामो यस्या इति उर्वशी । पूर्वचित्तिश्च पूर्वं प्रथमं पुंसां चेतस्तामभ्युपैति सौभाग्यातिशयात् । अवस्फूर्जन्पर्जन्यः हेतिः । स्फूर्जतिर्वज्रनिर्घोषार्थः विद्युत्प्रहेतिः ॥१९॥

**म०** अथ मध्ये । उपरि ऊर्ध्वदेशेऽयमर्वाग्वसुः पर्जन्यः 'उपर्युपरिष्टात्' ( पा० ५ । ३ । ३१ ) इति निपात ऊर्ध्वप्रदेशे इत्यर्थे । अर्वागधोमुखं यद्वसु धनं जलरूपं यस्मात्सोऽर्वाग्वसुः । अधोजलं प्रजाभ्यो ददातीत्यर्थः । तथाच श्रुतिः 'पर्जन्यो वा उपरि तद्यत्तमाहोपरीत्युपरि हि पर्जन्योऽथ यदर्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयते' ( ८ । ६ । १ । २० ) इति । तस्य पर्जन्यस्य सेनां जयतीति सेनजित् शोभना सेना यस्येति सुषेणः 'पूर्वपदात्' ( पा० ८ । ३ । १०६ ) इति षत्वम् ततो णत्वम् । तौ सेनानीग्रामण्यौ तौ हैमन्तिकावृतू 'हैमन्तिकौ तावृतू' ( २० ) इति श्रुतेः । उरुः पृथुः कामो वशो यस्याः सोर्वशी । रूपातिशयात् पूर्वमेव पुंसां चित्तमुपैतीति पूर्वचित्तिः । एते दिगुपदिग्रूपे अप्सरसौ । 'स्फूर्जा वज्रनिर्घोषे' अवस्फूर्जतीत्यवस्फूर्जन् भयहेतुशब्दं कुर्वन् हेतिः । विद्युच्चपला प्रहेतिः । शिष्टं व्याख्यातम् ॥ १९ ॥

## विंशी ।

अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत्पतिः॑ पृथि॒व्या अ॒यम् । अ॒पाꣳ रेता॑ꣳसि जिन्वति ॥ २० ॥

**उ०** छन्दस्या उपदधाति । अग्निर्मूर्धा । आग्नेयं प्राक् तपश्च तपस्यश्चेत्यतः । प्रथमः त्र्यचो गायत्रः । प्रथमा व्याख्याता ॥ २० ॥

**म०** 'छन्दस्यास्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति प्रत्यृचम्' ( का० १७ । १२ । ५ ) । वक्ष्यमाणा गायत्र्याद्याश्छन्दस्या एकैकस्मिन् स्थाने तिस्र उपदधाति तासां

मध्यमा पद्यानूके तामभितो द्वे अर्धपद्ये। अत्र पूर्वदिश्यनूकान्ते तिस्रो गायत्रीरग्निर्मूर्धेति प्रत्यृचम् । एवं वक्ष्यमाणा अपीति सूत्रार्थः । तिस्र ऋचोऽग्निदेवत्या गायत्र्यः । आद्या व्याख्याता ( अध्या० ३ क० १२ ) ॥ २० ॥

## एकविंशी ।

अयमग्निः स॒ह॒स्रिणो॒ वाज॑स्य श॒तिन॒स्पतिः॑ । मू॒र्धा क॒वी र॑यी॒णाम् ॥ २१ ॥

**उ०** अयमग्निः । ऋषिरभिनयेन दर्शयति । अयमग्निः सहस्रिणः सहस्राणि बहूनि यस्य विद्यन्ते तस्य । वाजस्यान्नस्य शतिनश्च पतिरधिपतिः । मूर्धा च रयीणाम् प्रधानभूतश्च धनानाम् । अग्निर्हि सर्वेषां धनानां प्रधानं दृष्टादृष्टसाधनं हि । कविः क्रान्तदर्शनश्च अतः स्तुमः॥२१॥

**म०** अयमग्निरीदृशस्तं स्तुम इति शेषः । कीदृशः । सहस्रं संख्या अस्यास्तीति सहस्री तस्य । शतिनः शतसंख्यावतो वाजस्यान्नस्य पतिः स्वामी । अनेकान्नप्रद इत्यर्थः । तथा रयीणां धनानां मूर्धा शिरोवदुत्तमः । अग्निर्हि सर्वधनानां प्रधानधनं दृष्टादृष्टसाधनत्वात् । कविः क्रान्तदर्शनः ॥ २१ ॥

## द्वाविंशी ।

त्वाम॑ग्ने॒ पुष्क॑रा॒दध्यथ॑र्वा॒ निर॑मन्थत । मू॒र्ध्नो विश्व॑स्य वा॒घतः॑ ॥ २२ ॥

**उ०** त्वामग्ने पुष्करात् । व्याख्यातम् ॥ २२ ॥

**म०** व्याख्यातैकादशे द्वात्रिंशत्तमकण्डिकायाम् ॥ २२ ॥

## त्रयोविंशी ।

भु॒वो य॒ज्ञस्य॒ रज॑सश्च ने॒ता यत्रा॑ नि॒युद्भिः॒ सच॑से शि॒वाभिः॑ । दि॒वि मू॒र्धानं॑ दधिषे स्व॒र्षां जि॒ह्वाम॑ग्ने चकृषे ह॒व्य॒वाह॑म् ॥ २३ ॥

**उ०** भुवो यज्ञस्य । त्रैष्टुभस्तृचः प्रथमा व्याख्याता ॥ २३ ॥

**म०** 'पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति' (का० १७।१२।७) । पूर्वदिशि रेतःसिग्वेलायां त्रिष्टुप्संज्ञा इष्टका उपदधाति तृचेन तिसृः त्रिष्टुप्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्तिस्रस्त्रिष्टुभः । एवमग्रेऽपि तिस्रस्त्रिष्टुभ आग्नेय्यः । प्रथमा व्याख्याता त्रयोदशेऽध्याये ( अ०१३। क० १५ ) ॥ २३ ॥

## चतुर्विंशी ।

अबो॑ध्य॒ग्निः स॒मिधा॒ जना॑नां॒ प्रति॑ धे॒नुमि॑वाय॒तीमु॒षास॑म् । य॒ह्वा इ॑व॒ प्र व॒यामु॒ज्जिहा॑ना॒: प्र भा॒नव॑: सिस्रते॒ नाक॒मच्छ॑ ॥ २४ ॥

**उ०** अबोध्यग्निः । योयमग्निः अबोधि प्रतिबुध्यते कर्माणि स्वमधिकारम् । समिधा समिन्धनेन । जनानामग्निहोत्रिणां सत्यातिथिज्ञानश्रद्धासंपन्नानाम् । कथमिव प्रतिबुध्यते । धेनुमिवायतीम् यथा धेनुमागच्छन्तीं वत्सः प्रतिबुध्यते । यथाच उपसमागच्छन्तीं मनुष्याः प्रतिबुध्यन्ते । तस्याहुतिभिर्दीप्तस्य । यह्वा इव प्रवयामुज्जिहानाः । यह्व इति महतो नामधेयम् । यथा महान्तो जातपक्षाः पक्षिणः वयां वृक्षशाखामुज्जिहानाः परित्यजन्त ऊर्ध्वं गच्छेयुः । एवम् प्रभानवः सिस्रते प्रसिस्रते प्रसर्पन्ति भानवः अर्चींषि महान्ति । नाकमच्छ । अच्छाभेराप्तुमिति शाकपूणिः । स्वर्गलोकमभि ॥ २४ ॥

**म०** जनानां ज्ञानश्रद्धाद्विजतर्पणसत्यादिसंपन्नानामग्निहोत्रिणां समिधा समिन्धनेनाग्निः प्रत्यबोधि प्रतिबुध्यते । कर्मणि स्वमधिकारं जानातीत्यर्थः । 'दीपजन–' (पा० ३।१।६१) इत्यादिना लुङि कर्तरि चिण् । तत्र दृष्टान्तः । आयतीमागच्छन्तीं धेनुं यथा वत्सः प्रतिबुध्यते यथा चोपसमागच्छन्तीं प्रति मनुष्याः प्रतिबुध्यन्ते । दीप्तस्य तस्याग्नेर्भानवो रश्मयो नाकमच्छ स्वर्गमभितः प्रसिस्रते प्रसरन्ति । 'अच्छाभेराप्तुमिति शाकपूणिः' ( निरु० ५।२८ ) । दृष्टान्तमाह । यह्व इति महन्नाम । यह्वाः महान्तो जातपक्षाः पक्षिणो वयां वृक्षशाखां प्रोज्जिहानाः प्रोद्गच्छन्तो नाकमाकाशं प्रति प्रसरन्ति तद्वत् । ऋचोऽर्थान्तरं वा । जनानामृत्विजां संबन्धिन्या समिधाग्निरबोधि प्रतिबोधितः प्रज्वलितः आयतीमुषसं प्रातःकालंप्रति धेनुं यथा प्रतिबोधयन्ति उत्थापयन्ति । तस्य भानवः प्रोज्जिहाना नाकमभि प्रसिस्रते । दृष्टान्तः । वयां पक्षिणां मध्ये यह्वाः महान्तः पक्षिणो यथा प्रोद्गच्छन्तः प्रसरन्ति । विः पक्षी तस्यामि छान्दसे गुणे वयामिति रूपम् । एकः प्रशब्दः उज्जिहाना इत्यत्र संबध्यते द्वितीयः सिस्रते इत्यत्र । 'सृ गतौ' ह्वादिः लट् । 'ओहाङ् गतौ' शानच् जिहानाः । उषासमिति संहितायां दीर्घः ॥ २४ ॥

## पञ्चविंशी ।

अवो॑चाम क॒वये॒ मेध्या॑य॒ वचो॑ व॒न्दारु॑ वृ॒ष॒भाय॒ वृष्णे॑ । गवि॑ष्ठिरो॒ नम॑सा॒ स्तोम॑म॒ग्नौ दि॒वीव॒ रु॒क्मम॑रु॒व्यञ्च॑मश्रेत् ॥ २५ ॥

**उ०** अवोचाम । उद्गातारो ब्रुवन्ति । अवोचाम उक्तवन्तो वयम् । कवये क्रान्तदर्शनाय । मेध्याय यज्ञियाय । वचः स्तुतिलक्षणं वाक्यम् । वन्दारु वन्दनशीलम् । वृषभाय वर्षित्रे । आहुतिपरिणामाभिप्रायमेतत् । वृष्णे सेक्त्रे । यूने परिणामरहिताय । इदानीम् गविष्ठिरः होता गवि वाचि स्थिरोऽप्रच्याव्यः । तस्य हि अग्निरधिष्ठात्री देवता । नमसान्नेन संयुक्तं स्तोमं स्तुतिः । अग्नौ आहवनीयाख्ये । अश्रेत् आसंजयिष्यति अग्निसंबद्धं करिष्यते । कथमिव दिवीव रुक्मम् यथा द्युलोके

रुक्मं रोचनमादित्यम् । उरुव्यञ्चम् बहुभिः स्तुतिभक्तिभिर्युक्तम् स्वरसौष्ठवादियुक्तम् । स्तोम आदित्येनोपमीयते ॥२५॥

**म०** उद्गातारो वदन्ति । वयं कवये क्रान्तदर्शिनेऽग्नये वचोऽवोचाम स्तुतिरूपं वाक्यमुक्तवन्तः । कीदृशाय कवये । मेध्याय मेधे यज्ञे योग्याय । वृषभाय श्रेष्ठाय कामानां वर्षयित्रे । वृष्णे सेक्त्रे । यूने परिणामरहिताय । कीदृशं वचः । वन्दारु वन्दनशीलं स्तुतितत्परम् । 'शृवन्द्योरारुः' ( पा० ३ । २ । १७३ ) । इदानीं गविष्ठिरः गवि वाचि स्थिरोऽग्रच्याव्यो होता नमसान्नेन युतं स्तोमं स्तुतिमग्नौ आहवनीये अश्रेत् । अन्तर्भूतण्यर्थः श्रयतिः लङ्र्थे । 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति वचनात् 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुक् गुणः । होताग्नौ स्तोममापयिष्यति आसंजयिष्यति याज्यानुवाक्याभिरन्नमग्निसंबद्धं करिष्यतीत्यर्थः । तत्र दृष्टान्तः । दिवीव रुक्ममुत्प्रेक्षते । दिवि द्युलोके रुक्मं रोचमानमादित्यं सन्ध्यावन्दनसूर्योपस्थानादिषु विप्रयुक्ताः उरवो बहवो व्यञ्चाः स्तुतयो गतयो वा यस्येति तमिवेत्युत्प्रेक्षा । स्तोमः सूर्येणोपमीयते । 'गवियुधिभ्यां स्थिरः' ( पा० ८ । ३ । ९५ ) इति षत्वम् ॥ २५ ॥

## षड्विंशी ।

अ॒यमि॒ह प्र॑थ॒मो धा॑यि धा॒तृभि॒र्होता॒ यजि॑ष्ठो अध्व॒रेष्वीड्यः॑ । यमप्न॑वानो॒ भृग॑वो विरुरु॒चुर्वने॑षु चि॒त्रं वि॒भ्वं॑ वि॒शेवि॑शे ॥ २६ ॥

**उ०** अयमिह । जागतस्तृचः । प्रथमा व्याख्याता ॥२६॥

**म०** 'जगतीश्च पश्चादयमिहेति' ( का० १७ । १२ । ८ ) तिसृभिः पश्चाद्रेतःसिग्वेलायां तिस्रो जगतीसंज्ञेष्टका दक्षिणामुख उपदधातीति सूत्रार्थः । तिस्रो जगत्य आग्नेय्यः । आद्या व्याख्याता ( अध्या० ३ क० १५ ) ॥ २६ ॥

## सप्तविंशी ।

जन॑स्य गो॒पा अ॑जनिष्ट॒ जागृ॑वि॒र॒ग्निः सु॒दक्षः॑ सुवि॒ताय॒ नव्य॑से । घृ॒तप्र॑तीको बृह॒ता दि॑वि॒स्पृशा॑ द्यु॒मद्वि भा॑ति भर॒तेभ्यः॒ शुचिः॑ ॥ २७ ॥

**उ०** जनस्य गोपाः । योयं जनस्य यजमानस्य गोपाः गोपायिता अजनिष्ट जातः । जागृविः जागरणशीलः अम्लिष्टज्ञानः अग्निः । सुदक्षः शोभनोत्साहः । सुविताय नव्यसे सुप्रभूताय कर्मणे नवतराय । सः घृतप्रतीकः घृतमुखः । बृहता महता भानुना । दिविस्पृशा दिवं स्पृशतीति दिविस्पृक् तेन दिविस्पृशा । द्युमद्विभाति द्युतिमद्विविधं दीप्यते । भरतेभ्यः ऋत्विग्भ्योऽर्थाय । शुचिः बहून्यपि हवींषि भक्षयन्नुच्छिष्टो न भवति शोधको वा । यद्वा । योऽसौ यजमानस्य गोपायिता अजनिष्ट भरतेभ्यः ऋत्विग्भ्यः सकाशात् । ऋत्विग्यजमानेभ्यो वा । जागृविः अग्निः सुदक्षः । सुप्रभूताय कर्मणे नवतराय । सोयं घृतमुखो महता भानुना दिविस्पृशा । द्युतिमद्विभाति । शुचिः शोचतेर्ज्वलतिकर्मणः । यद्वा मनुष्येभ्यो विजायमानो मनुष्यसंबद्धैर्दोषैर्न लिप्यते ॥ २७ ॥

**म०** योऽग्निर्भरतेभ्यः ऋत्विग्भ्यः सकाशादजनिष्ट जातः तैर्मथितत्वात्तेभ्यो जात इत्युच्यते । भरता इति ऋत्विङ्नामसु पठितम् । किमर्थं जातः । नव्यसे नवीयसे नवतराय । सुविताय सूताय प्रसूताय कर्मणे यागाय । सूतेरिडागम आर्षः । अभिनवं नवीयस्तस्मै । ईलोप आर्षः । सोऽग्निर्दिविस्पृशा द्युलोकस्पर्शिना बृहता ज्वालासमूहेन द्युमत् कान्तिमद्यथा तथा विभाति विविधं दीप्यते । कीदृशोऽग्निः । जनस्य यजमानस्य गोपाः । गोपायति रक्षतीति गोपाः क्विप् 'लोपो व्योर्वलि' ( पा० ६ । १ । ६६ ) इति यलोपः । जागृविः जागरणशीलः कर्मणि सावधानः । सुदक्षः शोभनो दक्ष उत्साहो यस्य अतिकुशलो वा । घृतप्रतीकः घृतं प्रतीके मुखे यस्य । शुचिः शुद्धः बहूनि हवींषि भक्षयन्नपि उच्छिष्टो न स्यात् शोधको वा ॥ २७ ॥

## अष्टाविंशी ।

त्वाम॑ग्ने॒ अङ्गि॑रसो॒ गुहा॑ हि॒तमन्व॑विन्दञ्छिश्रिया॒णं वने॑वने । स जा॑यसे म॒थ्यमा॑नः॒ सहो॑ म॒हत्त्वामा॑हुः॒ सह॑सस्पु॒त्रम॑ङ्गिरः ॥ २८ ॥

**उ०** त्वामग्ने । यं त्वाम् हे अग्ने, अङ्गिरसः ऋषयः । गुहाहितं निगूढे प्रदेशेऽवस्थितम् अप्सु अग्निर्देवेभ्य उदक्रामत्सोमः प्राविशदित्येवमादिनिदानमस्य मन्त्रस्य । अन्वविन्दन् लब्धवन्तः । पुनरपि नष्टं सन्तं शिश्रियाणं वनेवने अवस्थितम् ओषधिवनस्पतिषु । अन्वविन्दन्नङ्गिरस इति वर्तते । स त्वमिदानीमपि जायसे अरणिकाष्ठेभ्यो मथ्यमानः । सहोमहत् सहसा बलेन महता इति विभक्तिव्यत्ययः । अतश्च कारणात् त्वाम् आहुः ऋषयः सहसः पुत्रम् बलस्य पुत्रम् । अङ्गिरः अङ्गिर इत्यग्नेः संबोधनम् हे अङ्गिरः ॥ २८ ॥

**म०** हे अग्ने, अङ्गिरसः अङ्गिरोवंशोद्भवा ऋषयस्त्वामन्वविन्दन् लेभिरे । अन्विष्य प्रापुरित्यर्थः । किंभूतं त्वां गुहा गुहायां निगूढे प्रदेशे हितं स्थितम् । अप्सु प्रविष्टमित्यर्थः । 'अग्निर्देवेभ्य उदक्रामत्सोऽप आविशत्' इत्यादि श्रुतेः । 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति गुहाशब्दात्सप्तमीलोपः । हे अग्ने, पुनर्नष्टं त्वां वने वने शिश्रियाणं नानावनस्पतिषु श्रितमङ्गिरसोऽन्वविन्दन् । 'नित्यवीप्सयोः' ( पा० ८ । १ । ४ ) इति वनेपदस्य द्वित्वम् । श्रयतेः शानचि 'बहुलं छन्दसि' ( पा० २ । ४ । ७६ ) इति शपः श्लुः द्वित्वं च । यं त्वामङ्गिरसोऽलभन्त स त्वं जायसेऽधुनाप्यरणिभ्य उत्पद्यसे । कीदृशः ।

महत्सहः महता बहुना सहसा बलेन मथ्यमानः । महत्सहः-शब्दाभ्यां तृतीयालोपः । मथ्यमानो जायस इत्यर्थः । हे अङ्गिरः अग्ने, अतएव सहसो बलस्य पुत्रं त्वामाहुः वदन्ति मुनयः बलेन मन्थनाज्जायमानत्वाद्बलपुत्रं वदन्तीत्यर्थः ॥ २८ ॥

## एकोनत्रिंशी ।

सखा॑यः॒ सं वः॑ स॒म्यञ्च॒मिष॒ᳫं स्तोमं॑ चा॒ग्नये॑ । वर्षि॑ष्ठाय क्षिती॒नामू॒र्जोन॑प्त्रे॒ सह॑स्वते ॥ २९ ॥

**उ०** सखायः सम् । अनुष्टुभस्तृचः । यजमान ऋत्विजः संबोधयति । हे सखायः, संगत्य शृणुत । वः युष्मान् ब्रवीमि । सम्यञ्चम् संगतम् एकीभूतम् । इषम् हविर्लक्षणमन्नम् । स्तोमं च त्रिवृत्पञ्चदशादि । अग्नये भरत । कथंभूतायाग्नये । वर्षिष्ठाय क्षितीनां पृथुतमाय मनुष्याणाम् । ऊर्जोनप्त्रे अपां पौत्राय । अद्भ्य ओषधिवनस्पतयो जायन्ते ताभ्य अग्निः । सहस्वते बलवते ॥ २९ ॥

**म०** 'अपरास्ताभ्योऽनुष्टुभः सखायः समिति' ( का० १७ । १२ । ९ ) । जगतीभ्योऽपरास्तिस्रोऽनुष्टुप्संज्ञेष्टकाः प्राङ्मुख उपदधाति सखाय इत्यृक्त्रयेणेति सूत्रार्थः । तिस्रोऽनुष्टुभः । ऋत्विजःप्रति यजमानो ब्रूते हे । सखायः ऋत्विजः, सम्यञ्चं समीचीनमिषं हविर्लक्षणमन्नं समीचीनं स्तोमं चाग्नये वः यूयं संपादयत अभ्यर्थं हविः कुरुत । त्रिवृत्पञ्चदशादिस्तोमं च वदतेत्यर्थः । व्यत्ययेन प्रथमास्थाने द्वितीयाबहुवचनं कृत्वा वसादेशे व इति । समित्युपसर्गस्यापेक्षितः क्रियाशेषोऽध्याहर्तव्यः । कीदृशायाग्नये । क्षितीनां मनुष्याणां । वर्षिष्ठाय श्रेष्ठाय वृद्धतमाय । 'प्रियस्थिर–' ( पा० ६ । ४ । १५७ ) इत्यादिना वृद्धस्य वर्षादेश इष्ठनि । क्षियन्ति निवसन्ति भूमाविति क्षितयो नराः कर्तरि क्तिन् । सर्वपूज्यायेत्यर्थः । तथा ऊर्जो जलस्य नप्त्रे पौत्राय । अद्भ्यो वनस्पतयो जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः । तथा सहस्वते बलवते सहो बलमस्यास्तीति ॥ २९ ॥

## त्रिंशी ।

सᳫंस॒मिद्यु॑वसे वृषन्न॒ग्ने विश्वा॑न्य॒र्य आ । इ॒डस्प॒दे समि॑ध्यसे॒ स नो॒ वसू॒न्याभ॑र ॥ ३० ॥

**उ०** सᳫंसमित् । 'प्रसमुपोदः पादपूरणे' इत्युपसर्गाभ्यासः । इदिति पादपूरणः । युवस इति विकरणव्यत्ययः । यस्त्वं संयौषि संगमयसि । हे वृषन् वर्षितः अग्ने । विश्वानि वसूनि । अर्य ईश्वरः सन् आलोच्यालोच्य । यजमानानाम् इडायाश्च पदे कर्मार्थं समिध्यसे । यद्वा इडायाः पृथिव्याः पदे उत्तरवेदौ संदीप्यसे । स नः अस्मभ्यम् वसूनि धनानि आभर आहर देहि ॥ ३० ॥

**म०** हे वृषन् वर्षितः सेक्तः हे अग्ने, अर्यः स्वामी त्वं विश्वानि सर्वाणि फलानि आ समन्तात्संयुवसे संयौषि यजमानेन सङ्गमयसि । यौतेर्विकरणपदव्यत्ययः । 'अर्यः स्वामिवैश्ययोः' ( पा० ३ । १ । १०३ ) इति निपातः । इडः इडायाः गोः पृथिव्या वा पदे स्थाने उत्तरवेद्यां समिध्यसे कर्मार्थं दीप्यसे स ईदृशस्त्वं नोऽस्मभ्यं वसूनि धनानि आभर आहर देहीत्यर्थः । हरतेर्भकारः ॥ ३० ॥

## एकत्रिंशी ।

त्वां चि॒त्रश्र॑वस्तम॒ हव॑न्ते वि॒क्षु ज॒न्तवः॑ । शो॒चिष्के॑शं पुरुप्रिया॒ग्ने॑ ह॒व्याय॒ वोढ॑वे ॥ ३१ ॥

**उ०** त्वां चित्रश्रवस्तम । हे अग्ने चित्रश्रवस्तम चित्रं नानारूपं श्रवो धनमतिशयेन यस्य स चित्रश्रवस्तमः तस्य संबोधनम् हे चित्रश्रवस्तम । त्वां हवन्ते आह्वयन्ति । विक्षु मनुष्येषु मध्ये व्यवस्थितम् जन्तवो मनुष्याः। कथंभूतम् । शोचिष्केशम् शोचन्ति दीप्यन्ते ज्वालाः केशसंस्थानीयाः अस्येति शोचिष्केशः । हे पुरुप्रिय बहवो यजमानाः प्रिया अस्य । बहूनां यजमानानां वा प्रियः । बहु वा हविः प्रियमस्येति समासविशेषाः । तस्य संबोधनं हे पुरुप्रिय । किमर्थमाह्वयन्ति । हव्याय वोढवे । हवींषि वोढुम् परियामः ॥ ३१ ॥

**म०** चित्रं नानाविधं श्रवो धनं कीर्तिर्वा यस्य स चित्रश्रवाः अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमस्तत्संबुद्धिः । हे पुरुप्रिय, पुरूणां बहूनां यजमानानां प्रियः । यद्वा पुरवः प्रिया यस्य, पुरु बहु हविः प्रियं यस्येति वा हे पुरुप्रिय हे अग्ने, विक्षु प्रजासु ऋत्विग्यजमानाः त्वां हवन्ते आह्वयन्ति । 'ह्वेञ् आह्वाने' 'ह्वः संप्रसारणम्' ( पा० ६ । १ । ३२ ) इति शपि संप्रसारणं गुणश्च । किं कर्तुम् । हव्याय वोढवे । विभक्तिव्यत्ययः । हव्यं वोढुं प्राप्तुम् 'तुमर्थे सेसेन्–' ( पा० ३ । ४ । ९ ) इति तुमर्थे तवेप्रत्ययः ॥ ३१ ॥

## द्वात्रिंशी ।

ए॒ना वो॑ अ॒ग्निं नम॑सो॒र्जोनपा॑त॒माहु॑वे । प्रि॒यं चेति॑ष्ठमर॒तिᳫं स्व॑ध्व॒रं विश्व॑स्य दू॒तम॒मृत॑म् ॥ ३२ ॥

**उ०** एना वः । प्रगाथोयम् । तत्र बृहती पूर्वा सतोबृहत्युत्तरा । तत्र प्रगथनधर्मेण तिस्रो बृहत्यः संपादिताः द्वयोस्तु व्याख्यानम् । नहि शास्त्रे व्यूढानां मन्त्राणामर्थान्तरं विद्यत इति । तथाच आत्वा जिघर्मीति श्रुतिव्यतिषिक्ताभ्यां होममुक्त्वा प्रगुणाभ्यामेव व्याख्यानं करोति अतः प्रगुणो व्याख्यायते । एना अनेन नमसा अन्नेन । व इति पादपूरणार्थः संभवात् । अग्निम् ऊर्जोनपातम् अपां पौत्रम् । आहुवे आह्वयामि । सर्वजीवप्रियम् । चेतिष्ठम् अतिशयेन चेतनायुक्तम् । अरतिम् अलंमतिं पर्याप्तमतिम् । स्वध्वरम् शोभना अध्वरा यज्ञा अस्य विद्यन्त इति स्वध्वरः । विश्वस्य सर्वस्य यजमानजनस्य दूतम् । अमृतम् अमरणधर्माणम् ॥ ३२ ॥

**म०** 'अषाढावेलायां पुरस्ताद्बृहतीरेना व इति' ( का० (१८।१२।१०) । अषाढावेलायाः पुरस्तात्तिस्रो बृहतीष्टका एना व इति तिसृभिरुपदधातीत्यर्थः । तिस्रो बृहत्यः प्रगाथः ऋग्द्वयग्रन्थनेन ऋक्त्रयसंपादनं प्रगाथः तत्र बृहतीसतोबृहतीभ्यां तिस्रो बृहत्यः कृताः । यस्यास्तृतीयो द्वादशाक्षरोऽन्ये त्रयोऽष्टार्णाः सा बृहती । 'एना वोऽग्निं नमसोर्जो नपातमाहुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम्' इति । यस्याः प्रथमद्वितीयौ द्वादशार्णौ द्वितीयतुर्यावष्टार्णौ सा सतोबृहती । 'स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम्' इति । तत्र बृहत्यास्तुरीयं पादं द्विरावर्त्य सतोबृहत्याः पूर्वार्धेन सह द्वितीया बृहती कृता । सतोबृहत्या द्वितीयपादं द्विरावर्त्य तस्या एवोत्तरार्धेन सह तृतीया बृहती कृता । एवं तिस्रो बृहत्यः संहितायां पठिताः । तत्रावर्तितपादानामर्थान्तराभावाद् द्वे ऋचौ व्याख्यायेते । एना वः । विभक्तेराकारः । हे ऋत्विग्यजमानाः, वो युष्माकं संबन्धिना एना एनेन नमसान्नेन हविर्लक्षणेनाग्निमहमाहुवे आह्वयामि । वो युष्माकमेनमग्निं नमसाहुव इति वा । कीदृशमग्निम् । ऊर्जो नपातमपां पौत्रं प्रियं यजमानानां प्रीतिहेतुम् चेतिष्ठमतिशयेन चेतयितारम् । 'तुरिष्ठेमेयस्सु' (पा० ६।४।१५४) इतीष्ठनि परे तृचो लोपः । अरतिमलमतिं पर्याप्तमतिम् । यद्वा रतिरुपरमस्तद्रहितम् । सदोद्यमयुतमित्यर्थः । स्वध्वरं शोभना अध्वरा यज्ञा यस्य तम् ॥ ३२ ॥

## त्रयस्त्रिंशी ।

विश्वस्य दूतममृतं विश्वस्य दूतममृतम् । स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः॥३३॥

**उ०** स योजते । सएवाग्निः योजते युनक्ति । अरुषा अक्रोधनावश्वौ रथे । विश्वभोजसा सर्वस्य भोक्तारौ । द्वितीयाद्विवचनस्य स्थाने द्वयोः प्रातिपदिकयोराकारः । सएव च दुद्रवत् द्रवति गच्छति । स्वाहुतः शोभनप्रकारेण हुतः सन् ॥ ३३ ॥

**म०** विश्वस्य दूतं सर्वस्य यजमानजनस्य सर्वस्य जगतो वा दूतवत्कार्यकारिणम् । सर्वस्य हि गृहे दाहपाकादिकार्यकरत्वात् । अमृतं मरणरहितम् । अथ सतोबृहती व्याख्यायते । स योजते । यमग्निमाह्वयामि सोऽग्निः अरुषा अरुषौ रोषरहितौ साधू विश्वभोजसा विश्वं भुञ्जते तौ विश्वभोजसौ सर्वस्य भोक्तारौ । द्वितीयाद्विवचनस्थाने आकारः भुजेरसुन् । एवंविधावश्वौ रथे योजते युनक्ति । विशेषणाभ्यां विशेष्यमश्वपदं रथपदं चाध्याहार्यम् ॥ ३३ ॥

## चतुस्त्रिंशी ।

स दुद्रवत्स्वाहुतः स दुद्रवत्स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम् ॥ ३४॥

**उ०** क गच्छतीत्यत आह । यत्र सुब्रह्मा यज्ञः । सुब्रह्मग्रहणं सर्वर्त्विगुपलक्षणार्थम् । शोभनर्त्विग्यज्ञः । सुशमी च । शमीति कर्मनाम । शोभनानि कर्माणि यस्मिन्यज्ञे स सुशमी । वसूनां देवम् वसूनां रुद्राणामादित्यानां देवानां यस्मिन्यज्ञे क्लृप्तानि सवनानि । एवमध्याहारेण विभक्तिव्यत्ययेन च वाक्यसामञ्जस्यम् । राधो जनानाम् राधो धनं च यत्र जनानामुपक्लृप्तम् तत्र स योजत इति संबन्धः ॥ ३४ ॥

**म०** स एवाग्निः रथारूढः सन् स्वाहुतः शोभनप्रकारेणाहुतः सन् दुद्रवत् द्रवति गच्छति 'द्रु गतौ' 'णिश्रिद्रुस्रुभ्यः–' (पा० ३।१।४८) इति लुङि चङ् द्वित्वम् अडभावगुणाभावावार्षौ । कुत्र गच्छतीत्यत आह सुब्रह्मेति । वसूनामिति । वसुशब्दो रुद्रादित्ययोरुपलक्षकः । वसूनां रुद्राणामादित्यानां सवनत्रयदेवानां यत्र यज्ञः यत्र च जनानां यजमानानां देवं दीप्यमानं राधो धनं हविर्लक्षणं चास्ति तत्राग्निर्गच्छतीत्यर्थः । सुब्रह्मा ब्रह्मपदं सर्वर्त्विगुपलक्षणम् । शोभनो ब्रह्मा ऋत्विग्यत्र शुभर्त्विग्युक्तः । सुशमी । शमीति कर्मनाम । शोभनानि कर्माणि यत्रेति सुशमी शोभनकर्मवान् । अग्निराहुतो रथेऽश्वान्नियुज्य यज्ञे हविर्भोक्तुमाशु आगच्छतीति सर्वार्थः ॥ ३४ ॥

## पञ्चत्रिंशी ।

अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ॥ ३५ ॥

**उ०** अग्ने वाजस्य । औष्णिहस्तृचः । हे अग्ने, यस्त्वं वाजस्यान्नस्य । गोमतः गोभिः संयुक्तस्य । ईशानः ईश्वरः । हे सहसो यहो बलस्य पुत्र । सह इति बलनाम । यहुरिति पुत्रस्य नाम । मथ्यमानो जायते तस्मादेवमाह सहसस्पुत्रमित्यादि । स त्वम् । अस्मे धेहि अस्मभ्यं देहि । हे जातवेदः । महि महत् श्रवोऽन्नलक्षणं धनम् गोभिः संयुक्तम् ॥ ३५ ॥

**म०** 'अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति' ( का० १७।१२।१३ ) । गायत्रीभ्योऽपरास्तिस्र उष्णिक्संज्ञा इष्टका अग्न इति ऋक्त्रयेणोपदधातीति सूत्रार्थः । तिस्र उष्णिहः । हे अग्ने, हे सहसो यहो बलस्य पुत्र, सह इति बलनाम यहुरिति पुत्रनाम । मन्थनाज्जायमानत्वाद्बलस्य पुत्रत्वम् । सहसस्पुत्रमित्युक्तं च । हे जातवेदः उत्पन्नज्ञान, अस्मे अस्मभ्यं महि महत् श्रवः धनं धेहि देहि । कीदृशस्त्वम् । गोमतः धेनुयुक्तस्य वाजस्यान्नस्येशानः ईश्वरः अतएव धनं गाश्च देहीत्यर्थः ॥ ३५ ॥

## षट्त्रिंशी ।

स इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ ३६ ॥

**उ०** स इधानः। स उक्तगुणः इधानो दीप्यमानः। वसुः उपकारभूतः वासयिता वा। कविः मेधावी अग्निः। ईडेन्यः स्तुत्यः। गिरा वाचा त्रयीलक्षणया। तत्रार्थवादः प्रत्यक्षकृतः ततो भिन्नं वाक्यं नेयम्। रेवत् धनवत्। अस्मभ्यम् अस्मदर्थम्। हे पुर्वणीक बहुमुख। अनीकं मुखम्। पुरु बहुनाम। 'यतो ह्येव कुतश्चाग्नावभ्यादधाति ततएव प्रदहति' इति श्रुतिः। दीदिहि दीप्यस्व। एकं वाक्यं कृत्वा व्याख्यायते यत्तदोर्व्यत्ययेन। वसु धनं तापपाकप्रकाशैरुपकारकः। कविः क्रान्तदर्शनः अग्निः। ईडेन्यः स्तुत्यः ऋषिभिः। गिरा वाचा। तं त्वां ब्रवीमि। रेवत् धनवत् अस्मदर्थं पुर्वणीक दीप्यस्व॥ ३६॥

**म०** हे पुर्वणीक, पुरु बहु अनीकं मुखं यस्य तत्संबुद्धिः सर्वदाहकत्वात्। 'यतो ह्येव कुतश्चाग्नावभ्यादधाति ततएव प्रदहति' इति श्रुतेः। हे बहुमुखाग्ने, अस्मभ्यमस्मदर्थे रेवत् रयिमत् धनवद् यथा तथा स त्वं दीदिहि दीप्यस्व। दिवेः शप श्लुः द्वित्वम् 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६। १। ७) इत्यभ्यासदीर्घः 'लोपो व्योर्वलि' (पा० ६। १। ६६) इति वलोपः। रयिर्विद्यते यत्र कर्मणि रेवत् 'रयेर्मतौ' (पा० ६। १। ३७) इति संप्रसारणम्। तथा त्वया हविर्ग्राह्यं यथास्माकं धनाप्तिर्भवतीत्यर्थः। स पूर्वोक्तः कीदृशस्त्वम्। इधानः दीप्यमानः। वसुः निवासहेतुः। कविः क्रान्तदर्शी। अग्निः अग्रे नयतीत्यग्रणीः। प्रथमं यज्ञप्रवर्तक इत्यर्थः। गिरा त्रयीलक्षणया वाचा ईडेन्यः ईडितुं योग्यः स्तुत्यः। औणादिक एन्यः॥ ३६॥

## सप्तत्रिंशी।

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः। स तिग्मजम्भ रक्षसो दह प्रति॥ ३७॥

**उ०** क्षपो राजन्। यस्त्वं क्षपः क्षपयिता। हे राजन्। रक्षसाम् उत त्मना। अप्यात्मनैव स्वभावतएव। हे अग्ने, वस्तोः सहसंबन्धिनां रक्षसाम् उत उषसः अपि उषसः संबन्धिनाम् सः। हे तिग्मजम्भ वज्रदंष्ट्र। तिग्ममिति वज्रनाम। जम्भेति दंष्ट्रानाम। रक्षसो दह प्रति प्रत्येकम्॥ ३७॥

**म०** हे राजन् दीप्यमान, हे तिग्मजम्भ तिग्मा तीक्ष्णा जम्भा दंष्ट्रा यस्य। यद्वा तिग्ममिति वज्रनाम। हे वज्रदंष्ट्र अग्ने, वस्तोः अयःसंबन्धिन उतापि उषसः उषःकालसंबन्धिनो रक्षसो रक्षांसि राक्षसान् स त्वं प्रतिदह प्रत्येकं भस्मीकुरु। लिङ्गव्यत्ययेन रक्षःशब्दस्य पुंस्त्वम् 'छन्दसि परेऽपि' (पा० १। ४। ८१) इति प्रत्युपसर्गस्य क्रियापदात्परत्वम्। कीदृशस्त्वम्। त्मना उप आत्मनापि स्वभावतोऽपि क्षपः क्षपयतीति क्षपः 'क्षप क्षेपे' चुरादिः पचाद्यच् स्वभावतो रक्षसां क्षपयिता। 'मन्त्रेष्वाङ्यादेरात्मनः' (पा० ६। ४। १४१) इति आत्मन आकारलोपस्तृतीयैकवचने॥ ३७॥

## अष्टत्रिंशी।

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः। भद्रा उत प्रशस्तयः॥ ३८॥

**उ०** भद्रो नः। द्वे ऋचौ। पूर्वा ककुप् सतोबृहत्युत्तरा। तिस्रः ककुभः संपादिताः। सुभग इति चित्यमग्निं संबोध्य प्रार्थयति। भद्रः भन्दनीयः नोऽस्माकम् अग्निः आहुतः अभिहुतः। भवत्विति शेषः। भद्रा रातिः। 'रा दाने'। रातिः दानम् भवतु। हे सुभग महदैश्वर्ययुक्त। 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना'। भद्रश्चाध्वरो यज्ञो भवतु। किंच भद्रा उत अपि प्रशस्तयः प्रशंसनानि भवन्तु अस्माकम्॥ ३८॥

**म०** 'भद्रो न इति ककुभस्ताभ्यः' (का० १७। १२। ११)। इति बृहतीभ्यः पुरस्तात्तिस्रः ककुविष्टका भद्रो न इत्यृक्क्रमेणोपदधातीति सूत्रार्थः। प्रगाथः ककुप्सतोबृहतीभ्यां तिस्रः ककुभः पादावृत्त्या कृताः आवृत्तस्य नार्थान्तरम्। भद्रो नोऽग्निराप्रशस्तय इति ककुप्। मध्यः पादो द्वादशक आद्यतृतीयावष्टकाविति तल्लक्षणम्। भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिरिति सतोबृहती। आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकाविति तल्लक्षणम्। तत्र ककुब् व्याख्यायते। यजमानश्चित्यमग्निं संबोध्य प्रार्थयते। हे सुभग शोभनभग शोभनं भगमैश्वर्यं यस्य। 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तेः। हे षड्विधैश्वर्ययुक्त, आहुतः ऋत्विग्भिराहुतोऽग्निर्नोऽस्माकं भद्रः भन्दनीयः कल्याणो भवत्विति शेषः। किंच रातिः त्वदीयं दानं भद्रास्तु कल्याणकार्यस्तु। अध्वरः यज्ञो भद्रः श्रेयस्कार्यस्तु। उतापिच प्रशस्तयः कीर्तयो भद्राः सुखदायिन्यः सन्तु॥ ३८॥

## एकोनचत्वारिंशी।

भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये। येना समत्सु सासहः॥ ३९॥

**उ०** भद्रं मनः। भद्रं स्तुत्यं मनः। कुरुष्व वृत्रतूर्ये शत्रुवधाय। तूर्यतिर्वधकर्मा। येन मनसा समत्सु संग्रामेषु। सासहः। 'षह मर्षणे'। छन्दस्यभिभवे। अभिभवसि॥ ३९॥

**म०** अथ द्वितीया। हे अग्ने, येन मनसा समत्सु संग्रामेषु त्वं ससहः अभिभवसि शत्रून् 'षह मर्षणे' छन्दस्यभिभवे च लङ् द्विलाडभावौ छान्दसौ संहितायामभ्यासदीर्घः। तन्मनः वृत्रतूर्ये पापनाशाय भद्रं कल्याणं कुरुष्व। तूर्यतिर्वधकर्मा। वृत्रः पापम् 'पाप्मा वै वृत्रः' इति श्रुतेः॥ ३९॥

## चत्वारिंशी।

येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धताम्। वनेमा ते अभिष्टिभिः॥ ४०॥

उ० किंच । अव स्थिरा तनुहि अवतारय स्थिराणि कठिनानि धनूंषि । भूरिशर्धताम् बहुप्रकारं बलमात्मनि कुर्वताम् । शर्ध इति बलनाम । अभिबलायमानानाम् । ततो वयं शत्रुभिरप्रतिबध्यमानाः । वनेम संभजेमहि । तानेव शत्रून् ते तव । अभिष्टिभिः अभीष्टयागैः ॥ ४० ॥

म० किंच भूरि बहु शर्धतां बलं कुर्वतां संबन्धीनि स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारयज्याररहितानि कुरु । शर्ध इति बलनाम । शर्धं बलं कुर्वन्ति शर्धन्ति । सुपः क्विप् । ततः शतृप्रत्ययः । शर्धन्तीति शर्धन्तस्तेषाम् । किंच ते तवाभिष्टिभिर्मार्गैर्वयं वनेम संभजेम भोग्यानि वसूनि सेवेमहि । वनेमा येनेति पदयोः संहितायां दीर्घः ॥ ४० ॥

## एकचत्वारिंशी ।

अ॒ग्निं तं म॑न्ये॒ यो वसु॑र॒स्तं यं यन्ति॑ धे॒नवः॑ । अस्त॒मर्व॑न्त आ॒शवोऽस्तं॒ नित्या॑सो वा॒जिन॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥ ४१ ॥

उ० अग्निं तं मन्ये । पङ्क्तिस्तृचः । तमहमग्निं मन्ये जाने । यो वसुः धनम् । तापपाकप्रकाशैरुपकुर्वन् धनमित्युच्यते । यद्वा वसुर्वासयिता । अस्तं यं यन्ति धेनवः । यं चाग्निमुद्धतं ज्ञात्वा प्राप्तोऽस्माकं दोहदकाल इति अस्तं गृहं यन्ति धेनवः । अस्तं गृहम् । अर्वन्तः अश्वाः । आशवः शीघ्राः यन्ति । स्वामी हि पशूनामग्निः । यत्तज्जातः पशूनविन्दतेत्युपक्रम्य 'तस्मात्सर्वानृतून्पशवोऽग्निमभिसंयन्ति' इति श्रुतिः । अस्तं च नित्यासः शाश्वतिकाः । वाजिनः सुहयाः । सैन्धवाभिप्रायमेतत् । य उपास्यमान एतत्सर्वं यजमानस्योत्पादयति तमग्निं मन्ये । अधस्तनाश्चत्वारः पादाः परोक्षकृताः अयं तु प्रत्यक्षकृतः । अध्याहारेण परिपूर्तिः । यदि स त्वमग्निः इषमन्नं स्तोतृभ्य आभर देहि ॥ ४१ ॥

म० 'अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति' (का० १७ । १२ । १४ ) । दक्षिणेऽनूकान्ते तिस्रः पङ्क्तिसंज्ञा इष्टका अग्निंतमिति तिसृभिरुपदधातीति सूत्रार्थः । तिस्रः पङ्क्तयः यस्य द्वौ पादावष्टकौ सा पङ्क्तिः । यो वसुः तापपाकप्रकाशैरुपकुर्वन् धनरूपो वसुरित्युच्यते । वसुर्वासयिता वा यः तमग्निं मन्ये जानामि । धेनवो गावो यमग्निमुद्धृतं ज्ञात्वा अस्तं गृहं यन्ति गच्छन्ति दोहकालोऽस्माकं होमार्थं प्राप्त इति । आशवः शीघ्रगामिनोऽर्वन्तोऽश्वा यं दृष्ट्वास्तं यजमानगृहं यन्ति गच्छन्ति । नित्यासः नित्याः शाश्वताः सर्वकालभाविनो वाजिनो बलवन्तोऽश्वाः । सैन्धवाश्वाभिप्रायेण पुनर्वचनम् । यं दृष्ट्वास्तं यन्ति । यमुपास्य गवाश्वादिकं लभ्यत इत्यर्थः । तादृश हे अग्ने, स्तोतृभ्यः स्तुतिकारिभ्यो यजमानेभ्य इषमन्नमाभर आहर देहि ॥ ४१ ॥

## द्विचत्वारिंशी ।

सो अ॒ग्निर्यो वसु॑र्गृ॒णे सं यमा॒यन्ति॑ धे॒नवः॑ । समर्व॑न्तो रघु॒द्रुवः॒ सꣳ सु॑जा॒तासः॑ सू॒रय॒ इषꣳ॑ स्तो॒तृभ्य॒ आ भ॑र ॥ ४२ ॥

उ० सोऽग्निः स एवाग्निः यो वसुरिति गीयते स्तोतृभिः संयमायन्ति धेनवः समायन्ति च यं धेनवः । समर्वन्तो रघुद्रुवः समायन्ति च अर्वन्तोऽश्वाः । लघुद्रुवः लघुद्रवणाः । समागच्छन्ति च सुजातासः कल्याणजन्मानः । सूरयः पण्डिताः । एतदुक्तं भवति । किं तेनाग्निना य एतत्सर्वमात्मद्वारा यजमानस्य नोपनयति । सचेत्त्वम् । इषं स्तोतृभ्य आभर ॥ ४२ ॥

म० योऽग्निर्वसुर्वासयिता स अग्निः । विभक्तिव्यत्ययः । तमग्निं गृणे स्तौमि 'गृ शब्दे' स्वादिः लटि तङुत्तमैकवचनम् स्वादित्वाद्ध्रस्वः ( पा० ७ । ३ । ८० ) । यद्वा सोऽग्निः गृणे स्तूयतेऽस्माभिः । कर्तृप्रत्ययस्य कर्मत्वं विधेयम् । धेनवो यमग्निं समायन्ति समागच्छन्ति । अर्वन्तोऽश्वा यं समायन्ति । कीदृशा अर्वन्तः । रघुद्रुवः रलयोरैक्यम् । 'लघु क्षिप्रमरं द्रुतम्' लघु शीघ्रं द्रुणन्ति गच्छति लघुद्रुवः 'द्रु वधगत्योः' स्वादिः क्र्यादिश्च क्विप् । सूरयः विद्वांसो योग्या ऋत्विजो यं समायन्ति यदुपासकं सर्वे भजन्ते इत्यर्थः । कीदृशाः सूरयः । सुजातासः शोभनं जातं जन्म येषां ते सुजातासः सुजाताः 'आज्जसेः' ( पा० ७ । १ । ५० ) इत्यसुक् । तादृश हे अग्ने, त्वं स्तोतृभ्य इषमन्नमाभर ॥ ४२ ॥

## त्रिचत्वारिंशी ।

उ॒भे सु॑श्चन्द्र स॒र्पिषो॒ दर्वी॑ श्रीणीष आ॒सनि॑ । उ॒तो न॒ उत्पु॑पूर्या उ॒क्थेषु॑ शवसस्पत॒ इषꣳ॑ स्तो॒तृभ्य॒ आ भ॑र ॥ ४३ ॥

उ० उभे सुश्चन्द्र । हे अग्ने, सुचन्द्र शोभनचन्द्र इव धनानामुत्पादक । शोभने हि चन्द्रमसि धनान्युत्पद्यन्त इति ज्योतिःशास्त्रविदः प्रतिजानन्ति । यद्वा कल्याणाह्लादज । उभे दर्वी उभौ हस्तौ दर्व्याकारौ कृत्वा श्रीणीषे श्रयसि आश्लेषसि । आसनि आस्ये मुखे । सर्पिषः पानाय । उतोन उत्पुपूर्या अपि च त्वं ब्रूषे यदिनाम उत्क्षिप्य सर्पिषो भाण्डमत्यर्थमञ्जलिं पूरयेरस्माकं साधु कृतं स्यात् । उक्थेषु यज्ञेषु हे शवसस्पते बलस्य पते, यद्येवम् इषं स्तोतृभ्य आभर ॥ ४३ ॥

म० चन्द्रे सु शकारेणेति संहितायां चन्द्रे परे सुशब्दस्य शागमः । हे सुचन्द्र, चन्द्रमिति हिरण्यनाम । शोभनं चन्द्रं हिरण्यं यस्मात् । यद्वा शोभनश्चन्द्र इव चन्द्रो धनदाता । शोभने चन्द्रे धनप्राप्तिर्भवतीति ज्योतिःशास्त्रे उक्तम् । यद्वा शोभनं चन्दत्याह्लादयति सुचन्द्रः हे सुचन्द्र, आसनि आस्ये

मुखे सर्पिषः पानायेति शेषः । घृतस्य पानाय उभे दर्वी दर्व्याकारौ हस्तौ श्रीणीषे आश्रयसि सेवसे 'श्री पाके' क्यादिः अत्राश्रयार्थः । उतो अपिच हे शवसः पते, बलस्याधिपते, उक्थेषु शस्त्रवत्सु यज्ञेषु नोऽस्मानुत्पूर्याः उत्कर्षेण पूरय धनैरिति शेषः । स्तोतृभ्य इषमन्नमाहर ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ ४४ ॥

**उ०** अग्ने तमद्य । पदपाङ्क्तिः तृचः । हे अग्ने, तं पावकं यज्ञम् अद्य । ऋध्याम समर्धयेमहि । कथमिव । अश्वं न स्तोमैः । यथा अश्वमाश्वमेधिकं स्तुतिभिः समर्धयेयुः एवं समर्धयेमहि । क्रतुं न भद्रम् क्रतुं संकल्पमिव च भद्रं । हृदिस्पृशम् । हृदि आत्मना स्पृश्यते बहुकालाभिध्यातम् यथा समर्धयेयुः एवं समर्धयेमहि । ते तव संबन्धिभिः ओहैः । वहेरेतद्रूपम् । प्रापणैः । त्वं नामबन्धुकर्मरूपसंयुक्ताभिः स्तुतिभिर्दक्षिणाभिश्च यज्ञं समर्धयेमहीति समस्तार्थः ॥४४॥

**म०** 'उत्तरे पदपङ्क्ती अग्ने तमिति' ( का० १७ । १२ । १५ ) । उत्तरानूक्रान्ते तिस्रः पदपङ्क्तीष्टकाः अग्ने तमिति तिसृभिरुपदधातीति सूत्रार्थः । तिस्रः पदपङ्क्तयः । यस्याः पञ्चाक्षराश्चत्वारः पादा एकः षडर्णः सा पदपङ्क्तिः । यद्वा त्रयः पञ्चार्णाश्चतुर्थश्चतुरर्णः पञ्चमः षडर्ण इति । पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिरित्युक्तेः । तत्राद्यायां चतुर्थश्चतुष्कः । हे अग्ने, ते तव तं क्रतुं तावकं प्रसिद्धं यज्ञमद्यास्मिन् दिने वयमृध्याम समर्धयाम । समृद्धं करवामेत्यर्थः । आशिषि लोट् । संहितायां दीर्घः । कैः । स्तोमैः स्तुतिभिः सामसमूहैः । कीदृशैः स्तोमैः । ओहैः । वहे रूपम् । वहन्ति फलं प्रापयन्तीत्योहाः तैः, वहन्ति प्रतिपादयन्ति त्वत्कर्मरूपनामानीति वा । तत्रैको दृष्टान्तः । अश्वं न स्तोमैः । न इवार्थे । यथा स्तोमैः स्तुतिभिरश्वमाश्वमेधिकं विप्राः समर्धयन्ति । द्वितीयो दृष्टान्तः । क्रतुं न भद्रं हृदिस्पृशम् हृदि स्पृशति हृदिस्पृक् । 'हलदन्तात्–' ( पा० ६ । ३ । ९ ) इत्यलुक् अतिप्रियं चिरं मनसि स्थितं भद्रं कल्याणं क्रतुं संकल्पं यथा समर्धयन्ति । क्रतुर्यज्ञः संकल्पश्चेति दृष्टान्तदार्ष्टान्तिकयोरस्य संबन्धः । चिराभिलषितं यथा सन्तः संपादयन्तीत्यर्थः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ ४५ ॥

**उ०** अधा ह्यग्ने । अधा समनन्तरमेव । हिः पादपूरणः । हे अग्ने, क्रतोः भद्रस्य संकल्पस्य भन्दनीयस्य । दक्षस्य तस्यैव समृद्धस्य । समृद्धः संकल्पो दक्ष उच्यते । साधोरतिशययुक्तस्य । रथीः इव बभूथ भव । ऋतस्य यज्ञस्य च । बृहतो महतः बभूथ भव । अथवा यज्ञ एवोच्यते । अथ अग्नेः क्रतोः यज्ञस्य भन्दनीयस्य । दक्षस्य उत्साहयुक्तस्य दक्षिणाभिः समृद्धस्य । साधोः रथीरिव ऋतस्य यज्ञस्य बृहतो भव ॥ ४५ ॥

**म०** अथेत्यर्थेऽधेत्यव्ययम् । 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति संहितायां दीर्घः । हि पादपूरणः । हे अग्ने, अथ समनन्तरमेव क्रतोः अस्मद्यज्ञस्य रथीः सारथिरिव बभूथ भव । 'बभूथाततन्थ–' (पा० ७ । २ । ६४) इत्यादिनाडभावः । रथोऽस्यास्तीति रथीः सारथी रथादीरन्नीरचाविति स्त्यर्थे ईरच्प्रत्ययः । सारथिर्यथा रथनिर्वाहं करोति तथा यज्ञनिर्वाहको भवेत्यर्थः । कीदृशस्य क्रतोः । भद्रस्य कल्याणरूपस्य । दक्षस्य समृद्धस्य स्वफलदानसमर्थस्येति वा । साधोः साध्यते निष्पाद्यते इति साधुस्तस्यातिशययुक्तस्येत्यर्थः । ऋतस्य अमोघफलस्य । बृहतः महतः प्रौढस्य ॥ ४५ ॥

## षट्चत्वारिंशी ।

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्णज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः ॥ ४६ ॥

**उ०** एभिर्नः एभिः अर्कैः मन्त्रैः नः अस्माकं संबन्धिभिः स्तूयमान इति शेषः । भव नः अस्मान् अर्वाङ् अभिमुखाञ्चनः । कथमिव । स्वर्णज्योतिः यथा स्वराख्यं ज्योतिरुदयादारभ्यार्वागञ्चनम् सर्वप्राणिनोऽनुगृह्णाति । एवं भवार्वागञ्चनोऽनुग्रहपरतया । हे अग्ने, विश्वेभिः अनीकैः सर्वैर्मुखैः । अनीकम् मुखम् । सुमनाः शोभनमनस्कः सन् ॥ ४६ ॥

**म०** हे अग्ने, विश्वेभिः विश्वैः सर्वैरनीकैः मुखैः कृत्वा नोऽस्मान् प्रति अर्वाङ् अभिमुखो भव । अवरं समीपदेशमञ्चतीत्यर्वाङ् । अनुगृहाणेत्यर्थः । कीदृशः । एभिरस्मत्पठितैरर्कैरर्चनीयैर्मन्त्रैः कृत्वा सुमनाः शोभनमनस्कः । प्रसन्नः सन्नस्मत्संमुखो भवेत्यर्थः । तत्र दृष्टान्तः । स्वः न ज्योतिः स्वःशब्देन सूर्यः । न इवार्थे । यथा स्वरादित्यरूपं ज्योतिः अर्कैः स्तुतमुदयादारभ्य सर्वप्राणिसंमुखं भवति । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति भवेत्यस्य दीर्घः ॥ ४६ ॥

## सप्तचत्वारिंशी ।

अग्निꣳ होतारं मन्ये दास्वन्तं वसुꣳ सूनुꣳ सहसो जातवेदसं विप्रं न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य विभ्राष्टिमनुवष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ ४७ ॥

**उ०** अग्निं होतारम् । अतिच्छन्दाः अष्टिरत्यष्टिर्वा । तमहमग्निं होतारं मन्ये जानामि । दास्वन्तं दानवन्तम् वसुं वासयितारम् सूनुं सहसः बलस्य पुत्रम् । जातवेदसं जा-

तप्रज्ञानम् । विप्रं न जातवेदसं विप्रमिव जातप्रज्ञानम् । यः देवो दानादिगुणयुक्तः । ऊर्ध्वया ज्वालया स्वध्वरः साधुयज्ञः । देवाच्याकृपा देवान् प्रत्यञ्चत्या देवान्प्रति गतया । कृपा कल्पितया । घृतस्य विभ्राष्टिमनुवष्टि शोचिषा । घृतस्य विभ्राष्टिं विभ्रंशपातम् अनुकामयते दीप्त्या । आजुह्वानस्य आहूयमानस्य । सर्पिषो घृतस्य । तमहमग्निं होतारं मन्य इति संबन्धः ॥ ४७ ॥

**म०** 'पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषसहिते भद्रा रात्रिर्वृत्रतूर्येऽवस्थिराग्निꣳ होतारमिति' ( का० १७ । १२ । १६ ) । अग्नेः पुरीषमसीति पुरीषशब्दवता मन्त्रेणोपहिता पञ्चम्यसपत्ना पुरीषवती तस्याः पूर्वामतिच्छन्दसमिष्टकामुपदधाति । भद्रा रात्रिः वृत्रतूर्ये अवस्थिरेति ककुभां चतुश्चतुरक्षरसहितयाग्निꣳ होतारमित्यृचा । पुरीषवत्यतिच्छन्द इष्टके प्राग्लक्षणे पुरीषयुक्ते च भवतः । अनयोरन्तः पुरीपावापः कार्य इति सूत्रार्थः । अतिच्छन्दाः अवसानत्रिकोपेताः । छन्दांसि गायत्र्यादीनि सप्तातिक्रान्तातिच्छन्दाः । चतुःपष्ट्यक्षरत्वादष्टिः । ककुभामक्षरैः सहातिधृतिः । यो देवः दानादिगुणयुक्तोऽग्निरूर्ध्वयोन्नतया देवाच्या देवान्प्रत्यञ्चति गच्छति देवाची तया देवान् प्रति गतया कृपा कृप्यत इति कृप् तया कल्पया समर्थया शोचिषा ज्वालया घृतस्य विभ्राष्टिं विभ्रंशपातमनुवष्टि अन्विच्छति । शोचिःशब्दस्य स्त्रीत्वमार्षम् । किंभूतस्य घृतस्य । आजुह्वानस्य समन्ताद्धूयमानस्य सर्पिषः सर्पतीति सर्पिस्तस्य अग्न्यङ्गेषु प्रसरणशीलस्य । य एतादृशः तमग्निं मन्ये जानामि । कीदृशम् । होतारं देवानामाह्वातारम् दाखन्तं 'दाशृ दाने' दातारम् । वसुं वासयितारम् सहसो बलस्य सूनुं पुत्रं बलेन मथ्यमानत्वात् जातवेदसमुत्पन्नप्रज्ञम् । न इवार्थे । जातवेदसं जातसर्वशास्त्रज्ञानं विप्रं ब्राह्मणमिव स्थितम् ॥ ४७ ॥

## अष्टाचत्वारिंशी ।

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ४८ ॥

**उ०** अग्ने त्वम् । द्विपदः तृचो व्याख्यातः ॥ ४८ ॥

**म०** 'अग्ने त्वमित्यनूकान्तेऽपरे द्विपदाः' ( का० १७ । १२ । १७ ) । अग्ने, त्वम् वसुरग्निः तं त्वा इति तिसृभिरपरेऽनूकान्ते द्विपदेष्टका उपदधातीत्यर्थः । तिस्रो द्विपदा आग्नेय्यः व्याख्याताः ( ३ । २५—२६ ) ॥ ४८ ॥

## एकोनपञ्चाशी ।

येन ऋषयस्तपसा सत्रमायन्निन्धाना अग्निꣳ स्वराभरन्तः । तस्मिन्नहं नि दधे नाके अग्निं यमाहुर्मनवस्तीर्णबर्हिषम् ॥ ४९ ॥

**उ०** येन ऋषयः । अष्टाभिर्ऋग्भिः पुनश्चितिश्चीयते । तत्र षट् त्रिष्टुभः द्वे अनुष्टुभौ । येन तपसा ऋषयो वसिष्ठप्रभृतयः सत्रम् आयन् आगतवन्तः । इन्धानाः अग्निम् आदीपयन्तः अग्निम् उख्यम् । स्वराभरन्तः स्वर्लोकमाभरन्तः स्वीकुर्वाणाः । तेनैवाहं तपसा सत्रमागत्याग्निं संदीप्य स्वर्लोकं च स्वीकृत्य । तस्मिन्नहं निदधे स्थापयामि । नाके अग्निम् न विद्यते अकं यत्र गतानां स नाकः स्वर्गो लोकः । यमाहुर्मनवः मननप्रधानाः । तीर्णबर्हिषम् सर्वैर्यज्ञसाधनैः संपादितसुखमित्यर्थः ॥ ४९ ॥

**म०** 'पुनश्चितिं चोपरि तद्वयेन ऋषय इति प्रत्यृचम्' ( का० १७ । १२ । १९ ) मध्योपहितस्याशेष्टकस्य गार्हपत्यस्योपरि गार्हपत्यवदेव पुनश्चितिमुपदधाति येनेत्यष्टर्चेन प्रत्यृचमित्यर्थः । आग्नेय्योऽष्टौ षट् त्रिष्टुभः द्वे अनुष्टुभौ । ऋषयः मुनयो येन तपसा चित्तैकाग्र्येण सत्रं यज्ञमायन्नागताः यज्ञं कर्तुमुद्यता इत्यर्थः । कीदृशाः । अग्निमिन्धानाः दीपयन्तः । तथा स्वः स्वर्गलोकमाभरन्तः आहरन्तः स्वीकुर्वाणाः । 'मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः' इत्युक्तेः । तस्मिन् तपसि सति नाके स्वर्गलोकनिमित्तमग्निमहं निदधे स्थापयामि । मनवः मननप्रधाना विद्वांसो यमग्निं स्तीर्णबर्हिषमाहुर्वदन्ति स्तीर्णमाच्छादितं बर्हिर्यत्र तम् बर्हिर्यज्ञसाधनोपलक्षकम् । यज्ञसाधनसहितमित्यर्थः । 'ये विद्वाꣳसस्ते मनवः' ( ८ । ६ । ३ । १८ ) इति श्रुतेः ॥ ४९ ॥

## पञ्चाशी ।

तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः । नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥ ५० ॥

**उ०** तं पत्नीभिः । तदः श्रवणाद्यदोऽध्याहारः । द्वितीयादर्धर्चाद्व्याख्यायते । नाकं गृह्णानाः स्वीकुर्वन्तः ऋषयः । सुकृतस्य लोके साधुकृतस्य स्थाने । तृतीये पृष्ठे अधिरोचनेऽवस्थितादिव एकदेशीभूते यत्रादित्यस्तपतीति तं पत्नीभिः सह अनुगच्छेम । हे देवाः, पुत्रैः भ्रातृभिः अपि च हिरण्यैः ॥ ५० ॥

**म०** हे देवाः दीप्यमाना ऋत्विजः, पत्नीभिः कलत्रैः सह पुत्रैरुत पुत्रैरपि सह भ्रातृभिर्वा भ्रातृभिश्च हिरण्यैः सुवर्णादिद्रव्यैश्च सह तमग्निमनुगच्छेम वयमनुसरेम । सेवेमेत्यर्थः । वयम् कीदृशे । तृतीये भूमिमारभ्य त्रिसंख्यापूरके दिवः पृष्ठे रविमण्डले नाकं दुःखहीनं स्थानमतिगृभ्णानाः अधिकं सुखस्थानं स्वीकुर्वन्तः । कीदृशे दिवः पृष्ठे । सुकृतस्य लोके शुभकर्मणः फलभूते रोचने दीप्यमाने । 'एतद्वै

तृतीयं पृष्ठꣳ रोचनं दिवो यत्रैष एतत्तपति' ( ८।६।३।१९ ) इति श्रुतेः ॥ ५० ॥

## एकपञ्चाशी।

आ वा॒चो मध्य॒मरु॑हद्भुर॒ण्युर॒यम॒ग्निः सत्प॑ति॒श्चेकि॑तानः। पृ॒ष्ठे पृ॑थि॒व्या निहि॑तो॒ दवि॑द्युतदधस्प॒दं कृ॑णुतां॒ ये पृ॑त॒न्यवः॑ ॥ ५१ ॥

**उ०** आ वाचो मध्यमरुहत्। अरुहत् वाचोमध्यम्। 'एतद्ध वाचोमध्यं यत्रैष एतच्चीयते'। भुरण्युः भर्ता। अयमग्निः सत्पतिः शोभनानां पतिः। चेकितानः चेतयमानः। किंच पृष्ठे पृथिव्याः निहितः स्थापितः। दविद्युतम् देदीप्यमानः। अधस्पदम् पादयोरधः कृणुतां करोतु। ये पृतन्यवः पाप्मानस्तान्सर्वान् ॥ ५१ ॥

**म०** अयमग्निः वाचो मध्यं चयनस्थानमारुहत् चयनोपर्यारूढः। 'एतद्ध वाचो मध्यं यत्रैष एतच्चीयते' ( ८।६।३।२० ) इति श्रुतेः। सोऽयमग्निः ये पृतन्यवः युद्धेप्सवः पाप्मानस्तानधस्पदं कृणुतां पादयोरधः करोतु। पादयोरधोऽधस्पदम् कस्कादित्वात्सः ( पा० ८।३।४८ ) पृतनां सेनां युद्धं वा इच्छन्ति पृतन्यन्ति 'सुप आत्मनः क्यच्' ( पा० ३।१।८ ) 'कव्यध्वर–' ( पा० ७।४।३९ ) इत्यादिना पृतनायाष्टिलोपः ततः 'क्याच्छन्दसि' ( पा० ३।२।१७० ) इत्युप्रत्ययः। 'अधस्पदं कुरुताꣳ सर्वान् पाप्मनः' इति श्रुतेः। कीदृशोऽग्निः। भुरण्युः जगद्भर्ता। 'भुरण्युरिति भर्तेत्येतत्' इति श्रुतेः। सत्पतिः सतां पालकः। चेकितानः चेतयमानः। पृथिव्याः पृष्ठे भूम्युपरि निहितः स्थापितः। दविद्युतदत्यन्तं द्योतमानः 'दाधर्ति–' ( पा० ७।४।६५ ) इत्यादिना यङ्लुकि शत्रन्तो निपातः ॥ ५१ ॥

## द्विपञ्चाशी।

अ॒यम॒ग्निर्वी॒रत॑मो वयो॒धाः स॑ह॒स्रियो॑ द्योतता॒मप्र॑युच्छन्। वि॒भ्राज॑मानः सरि॒रस्य॒ मध्य॒ उप॒ प्रया॑हि दि॒व्यानि॒ धाम॑ ॥ ५२ ॥

**उ०** अयमग्निः वीरतमः अतिशयेन वीरः। वयोधाः वयोन्नं हविर्लक्षणमस्मिन्धीयते। सहस्रियः सहस्रार्हः। द्योततां दीप्यताम्। अप्रयुच्छन् अप्रमत्तः। विभ्राजमानः सरिरस्य मध्ये। 'इमे वै लोकाः सरिरम्'। दीप्यमान एषु लोकेषु। उप प्रयाहि। यातु इति पुरुषव्यत्ययः परोक्षकृतत्वान्मन्त्रस्य। दिव्यानि धामानीति बहुवचनेन सन्नतिः। स्थानानीति पर्यायः ॥ ५२ ॥

**म०** अयमग्निर्द्योततां दीप्यतां दिव्यानि धाम धामानि स्थानानि उप प्रयाहि 'उपप्रयातु च स्वर्गं लोकं गच्छतु। पुरुषव्यत्ययः। 'उपप्रयाहि दिव्यानि धामेत्युपप्रयाहि स्वर्गं लोकमित्येतत्' ( ८।६।३।२१ ) इति श्रुतेः। कीदृशोऽग्निः। वीरतमः अतिशयेन वीरः शूरः वयोधाः वयोऽन्नं हविर्लक्षणं दधातीति वयोधाः। सहस्रियः इष्टकानां सहस्रेण संमितः 'सहस्रेण संमितौ घः' ( पा० ४।४।१३५ ) इति घप्रत्ययः। अप्रयुच्छन् कर्मण्यप्रमाद्यन् सरिरस्य मध्ये लोकत्रयान्तर्विभ्राजमानः दीप्यमानः। 'इमे वै लोकाः सरिरम्' ( २१ ) इति श्रुतेः ॥ ५२ ॥

## त्रिपञ्चाशी।

✓सं॒प्रच्य॑वध्व॒मुप॑ सं॒प्रया॒ताग्ने॑ प॒थो दे॑व॒याना॑न् कृणुध्वम्। पुनः॑ कृण्वा॒नाः पि॒तरा॒ युवा॑ना॒ऽन्वाता॑ꣳसी॒त्त्वयि॒ तन्तु॑मे॒तम् ॥ ५३ ॥

**उ०** संप्रच्यवध्वम्। ऋषीनाह मन्त्रदृक् संप्रच्यवध्वमेनमग्निम् उपसंप्रयात च। त्वम् हे अग्ने, पथः देवयानानृषीणां कुरु इति वचनव्यत्ययः। किंच पुनरपि कृण्वानाः कुर्वाणा ऋषयः। पितरा युवाना। 'वाक् च मनश्च पितरा युवाना' इति श्रुतिः। वाङ्मनसे युवाना तरुणे अयातयामे अन्योन्यं संगते वा। संगते हि वाक् च मनश्च यज्ञं साधयतः। अन्वाताꣳसीत् त्वयि तन्तुमेतम् अन्वातनोतु त्वयि तन्तुं यज्ञम् एतम् हे अग्ने ॥ ५३ ॥

**म०** मन्त्रदृगृषीनाह। हे ऋषयः, एतमग्निं यूयं संप्रच्यवध्वमग्निं प्रत्यागच्छत। उप संप्रयात च आगत्य सम्यक् प्राप्नुत। संप्रच्यवध्वमुप संप्रयातेत्यमूनेतदृषीनाह। 'समेनं प्रच्यवध्वमुप चैनꣳ संप्रयात' ( ८।६।३।२२ ) इति श्रुतेः। एवमृषीनुक्त्वाग्निमाह हे अग्ने, देवयानान् पथः कृणुध्वं कुरु वचनव्यत्ययः। देवा यायन्ते प्राप्यन्ते यैस्ते देवयानास्तान् 'करणाधिकरणयोश्च' ( पा० ३।३।११७ ) इति ल्युट्। देवलोकप्राप्तिहेतून्मार्गान्कुर्वित्यर्थः। हे अग्ने, यत ऋषय एतं तन्तुं यज्ञं त्वयि अन्वातांसीत् अतानिषुः अनुक्रमेण विस्तारितवन्तः। वचनव्यत्ययः। कीदृशा ऋषयः। पुनः भूयः पितरा वाङ्मनसे युवाना तरुणौ अयातयामावन्योन्यसङ्गतौ कृण्वानाः कुर्वाणाः। स्वादेः कृञः शानच्। विभक्तेराकारः। संयताभ्यां वाङ्मनसाभ्यामेव यज्ञसाधनात् ते संयते कुर्वाणाः जितेन्द्रिया इत्यर्थः। पुनः कुर्वाणाः पितरा युवानेति नेति 'वाक् चैव मनश्च पितरा वायुना' ( २२ ) इति श्रुतेः ॥ ५३ ॥

## चतुःपञ्चाशी।

उद्बु॑ध्यस्वाग्ने॒ प्रति॑जागृहि॒ त्वमि॑ष्टापू॒र्ते सꣳसृ॑जेथाम॒यं च॑। अ॒स्मिन्त्स॒धस्थे॒ अध्युत्त॑रस्मि॒न्विश्वे॑ देवा॒ यज॑मानश्च सीदत ॥ ५४ ॥

**उ०** उद्बुध्यस्व प्रतिबुद्धो भव। हे अग्ने, प्रतिजागृहि च त्वम्। ततः इष्टापूर्ते च संसृजेथाम् त्वत्प्रसादाद्यजमानेन सह। अयं च यजमानः इष्टापूर्ताभ्यां संसृष्टो

भवतु । ततः संसृष्टेष्टापूर्तो व्यपगतकल्मषः सन् । अस्मिन्सधस्थे सहस्थाने देवैः । पुनरपि विशिनष्टि । अध्युत्तरस्मिन् सर्वोत्कृष्टे आदित्यलोके । विश्वेदेवा यजमानश्च सीदतु । दिश्वैर्देवैर्यजमानस्य समानलोकता प्रार्थ्यते ॥ ५४ ॥

म० हे अग्ने, त्वमुद्बुध्यस्व उद्बुद्धो भव सावधानो भव । एनं यजमानं प्रतिजागृहि प्रतिदिनं यजमानं जागरूकं सावधानं कुरु । तत इष्टापूर्ते श्रौतस्मार्ते कर्मणी संसृजेथां यजमानेन सह संसृष्टे भवताम् । त्वत्प्रसादात् अयं च यजमान इष्टापूर्ताभ्यां संसृज्यताम् । पुरुषव्यत्ययः । किंच हे विश्वेदेवाः, यूयं कृतेष्टपूर्तो निष्पापो यजमानश्च सधस्थे देवैः सह स्थितियोग्ये अस्मिन्नुत्तरस्मिन् सर्वोत्कृष्टे रविलोके द्युलोके सीदत तिष्ठत अधि अधिकम् । चिरं तिष्ठतेत्यर्थः । 'द्यौर्वा उत्तरꣳसधस्थम्' ( ८ । ६ । ३ । २३ ) इति श्रुतेः । विश्वैर्देवैः सालोक्यं यजमानस्य प्रार्थ्यत इति भावः ॥ ५४ ॥

## पञ्चपञ्चाशी ।

येन॒ वह॑सि स॒हस्रं॒ येना॑ग्ने सर्ववेद॒सम् । तेने॒मं य॒ज्ञं नो॑ नय॒ स्व॑र्दे॒वेषु॒ गन्त॑वे ॥ ५५ ॥

उ० येन वहसि । येन हेतुना सामर्थ्येन वा वहसि प्रापयसि सहस्रम् । येन हे अग्ने, सर्ववेदसं सर्वधनम् । तेन इमं यज्ञम् नः अस्मत्संबन्धिनम् नय प्रापय । स्वर्देवेषु गन्तवे स्वर्लोकं देवेषु देवान्प्रति । गन्तवे गमनाय । यज्ञे हि स्वर्लोकं गते अस्माकमपि गमनं भवति । तदुक्तम् । 'सोऽस्य यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणायां ददाति सेति दक्षिणामन्वारभ्य यजमानः' इति ॥५५॥

म० हे अग्ने, येन सामर्थ्येन सहस्रं सहस्रदक्षिणाकं यज्ञं त्वं वहसि प्रापयसि । येन च सर्ववेदसं सर्वं वेदो धनं दक्षिणा यत्र तं सर्वस्वदक्षिणाकं यज्ञं वहसि तेन सामर्थ्येन नोऽस्माकमिमं यज्ञं देवेषु गन्तवे देवान् प्रति गन्तुं स्वः स्वर्गं नय प्रापय । तुमर्थे गमेः तवेप्रत्ययः । यज्ञे स्वर्गं गतेऽस्माकमपि तत्र गमनं स्यात् । 'सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति प्रैति दक्षिणामन्वारभ्य यजमानः' ( १२ ) इति श्रुतेः । अतो यज्ञस्य स्वर्गगमनं प्रार्थ्यते ॥५५॥

## षट्पञ्चाशी ।

अ॒यं ते॒ योनि॑र्ऋ॒त्वियो॒ यतो॑ जा॒तो अरो॑चथाः । तं जा॒नन्न॑ग्न॒ आरो॒हाथा॑ नो वर्धया र॒यिम् ॥ ५६ ॥

उ० अयं त इति व्याख्यातम् ॥ ५६ ॥

म० इयं व्याख्याता ( ३ । १४ । १२ । ५२ ) ॥ ५६ ॥

## सप्तपञ्चाशी ।

तप॑श्च तप॒स्य॑श्च शैशि॒रावृ॒तू अ॒ग्नेर॑न्तःश्ले॒षोऽसि॒ कल्पे॑तां द्यावा॑पृथि॒वी कल्प॑न्ता॒माप॒ ओष॑धयः क॒ल्प॑न्ताम॒ग्नयः॒ पृथ॒ङ्मम॒ ज्यैष्ठ्या॑य॒ सव्र॑ताः । ये अ॒ग्नयः॒ सम॑नसोऽन्त॒रा द्यावा॑पृथि॒वी इ॒मे । शैशि॒रावृ॒तू अ॑भि॒कल्प॑माना॒ इन्द्र॑मिव दे॒वा अ॑भि॒संवि॑शन्तु॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वे सी॑दतम् ॥ ५७ ॥

उ० ऋतव्ये । तपश्च तपस्यश्चेति व्याख्यातम् ॥ ५७ ॥

म० एवं पुनश्चित्युपस्थानमुक्त्वा पञ्चमचितिशेषभूतेष्टकोपधाने मन्त्रा उच्यन्ते । 'ऋतव्ये तपश्च तपस्यश्चेति' ( का० १७ । १२ । २२ ) । ऋतव्ये द्वे पयेष्टके उपदधाति । ऋतुदेवत्यं यजुः उत्कृतिश्छन्दः । तपो माघः तपस्यः फाल्गुनः शैशिरौ ऋतू शिशिरर्तोरवयवौ । शिष्टं व्याख्यातम् (१३ । २५) ॥५७॥

## अष्टपञ्चाशी ।

प॒र॒मे॒ष्ठी त्वा॑ सादयतु दि॒वस्पृ॒ष्ठे ज्योति॑ष्मतीम् । विश्व॑स्मै प्रा॒णाया॑पा॒नाय॑ व्या॒नाय॒ विश्वं॒ ज्योति॑र्यच्छ ॥ सूर्य॒स्तेऽधि॑पति॒स्तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द ॥ ५८ ॥

उ० विश्वज्योतिषम् । परमेष्ठीत्वा इति व्याख्यातम् ॥५८॥

म० 'विश्वज्योतिषं परमेष्ठी त्वेति'( का० १७ । १२ । २३) यजमानकृतां पद्यां विश्वज्योतिषं तृतीयोपहितायां विश्वज्योतिष उपर्युपदधातीति सूत्रार्थः । सूर्यदेवत्यं यजुः शक्करीच्छन्दः । परमेष्ठी त्वां दिवः पृष्ठे उपरि सादयतु । सूर्यस्ते तवाधिपतिः पालक इति विशेषः । अन्यद्व्याख्यातम् ( अध्या० १४ ( क० १४ ) ॥ ५८ ॥

## एकोनषष्टी ।

लो॒कं॑ पृ॒ण छि॒द्रं पृ॑णा॒थो॑ सीद ध्रु॒वा त्वम् । इ॒न्द्रा॒ग्नी त्वा॒ बृह॒स्पति॑र॒स्मिन्योना॑वसीषदन् ॥५९॥

उ० लोकंपृण ॥ ५९ ॥

म० 'दक्षिणाꣳसात्प्रत्यगरत्निमात्रादधि लोकंपृणाः पूर्ववत्' ( का० १७ । १२ । २४ ) । आत्मनो दक्षिणादाग्नेयकोणादपरस्यां दिश्यरत्निमात्रादधि पद्यालोकद्वयं परित्यज्य तृतीयलोकादारभ्य प्रथमचितिवल्लोकंपृणा उपदधातीति सूत्रार्थः । 'तिस्रोऽपि द्वादशे' ( १२ । ५४–५६ ) व्याख्याताः ॥ ॥ ५९–६१ ॥

## षष्टी ।

ता अ॑स्य॒ सूद॑दोहसः॒ सोम॑ꣳ श्रीणन्ति॒ पृश्न॑यः । जन्म॑न् दे॒वानां॒ विश॑स्त्रि॒ष्वा रो॑च॒ने दि॒वः ॥ ६० ॥

उ० ता अस्य ॥ ६० ॥

## एकषष्टी ।

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ । र॒थीत॑मꣳ र॒थीनां॒ वाजा॑ना॒ꣳ सत्प॑तिं॒ पति॑म् ॥ ६१ ॥

उ० इन्द्रं विश्वाः ॥ ६१ ॥

## द्विषष्टी ।

प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ ६२ ॥

उ० व्याख्याताः । विकर्णीमुपदधाति । प्रोथदश्वः । आग्नेयीत्रिष्टुप् । मध्यमानोऽग्निरत्रोच्यते । प्रोथतिः शब्दार्थः । शब्दायते अग्निः । अश्वोन यवसेऽविष्यन् अश्वइव यवसे घासे विषयभूते अविष्यन् ग्रसिष्यन् । यदा यस्मिन्काले । महतः संवरणात् । संव्रियते अस्मिन्नग्निरिति संवरणमरणिकाष्ठमुच्यते । अरणिकाष्ठात् । व्यस्थात् व्युत्तिष्ठते प्रकाशीभवति । आत् अथानन्तरमेव । अस्याग्नेः वातः अनुवाति । शोचिः संदीपनः । अध अथ समानार्थौ छन्दसि । स्मनिपातोऽनर्थकः । ते । अथैतस्येत्यर्थः । नह्यत्र युष्मदः प्रयोगः परोक्षकृतत्वान्मन्त्रस्य । श्रुतिरप्यमुमर्थं दर्शयति । अथैतस्य व्रजनं कृष्णं भवतीति । व्रजति गच्छत्यनेनेति व्रजनं कृष्णं भवति ॥ ६२ ॥

म० 'प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे सꣳस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीम्' ( का० १७ । १२ । २५ ) । पञ्चमीं चितिं पुरीषेण पूर्ववत्प्रच्छाद्य शर्करामय्यौ परस्परसंलग्ने सच्छिद्रे विकर्णी स्वयमातृण्णासंज्ञे द्वे इष्टके उपधेये । तयोर्मध्ये उत्तरदिग्यनूकरेखामध्ये प्रोथदश्व इति विकर्णीष्टकामुपदधातीति सूत्रार्थः । वसिष्ठदृष्टाग्नेयी त्रिष्टुप् । मथ्यमानोऽग्निः कथ्यते । यदा यस्मिन् काले महः महतः संवरणात्संव्रियतेऽस्मिन्नग्निरिति संवरणमरणिकाष्ठं तस्मात् व्यस्थात् वितिष्ठते प्रकाशो भवति तदा प्रोथत् प्रोथयति शब्दायते । प्रोथतिः शब्दार्थः 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इति तिप इकारलोपः । तत्र दृष्टान्तः अश्वो न । न इवार्थे । अश्व इव यथा यवसे अविष्यन् यवसं घासं भक्षयिष्यन्नश्वः प्रोथति । आत् अस्य अनन्तरं वह्निज्वलनशब्दानन्तरं वातो वायुरस्याग्नेरनुवाति अग्निमनुलक्ष्य प्रसरति वाय्वग्न्योः सख्यादिति भावः । कीदृशो वायुः । शोचिः शोचयति ज्वलयति शोचिः अग्नेः संदीपनः । शोचिरिति ज्वलन्नामसु पठितम् । यद्वास्य शोचिर्ज्वालामनुलक्ष्य वातो वाति । अधेति निपातोऽथार्थः । अथ वातेनाग्नौ ज्वलिते सति ते एतस्याग्नेः व्रजनं व्रजत्यत्रेति व्रजनं गमनस्थानं कृष्णमस्ति श्यामं भवति 'कृष्णवर्त्मा हुताशनः' इत्युक्तेः । स्मेति निपातः पादपूरणः । श्रुत्या ते इति पदमेतस्येति व्याख्यातं परोक्षत्वान्मन्त्रस्य । 'अथैतस्य व्रजनं कृष्णं भवति' ( ८ । ७ । ३ । १२ ) इति श्रुतेः । अविष्यन्नित्यत्तिकर्मसु पठितम् ॥ ६२ ॥

## त्रिषष्टी ।

आयोष्ट्वा सदने सादयाम्यवतश्छायायाꣳसमुद्रस्य हृदये । रश्मीवतीं भास्वतीमा या द्यां भास्या पृथिवी मोर्वन्तरिक्षम् ॥ ६३ ॥

उ० स्वयमातृण्णामुपदधाति । आयोष्ट्वा । आयाद्यां भासीत्याद्यारम्भः यच्छब्दयोगात् । आयाद्यांभासि । द्युलोकसंस्तवोऽस्याः स्वयमातृण्णायाः । आभासि प्रकाशयसि या त्वं द्यां द्युलोकम् । आपृथिवीम् आभासि च पृथिवीम् । आभासि च उरु विस्तीर्णमन्तरिक्षम् । तां त्वां रश्मीवतीं रश्मिसंयुक्ताम् । आयोः अयनस्य आदित्यस्य । त्वां सदने अवस्थाने सादयामि । अवतः अवनस्य पालयितुः दीप्यतो वा । छायायाम् आश्रये । समुद्रस्य समुन्दनस्यादित्यस्य । हृदये प्रधानप्रदेशे । आदित्यो हि सर्वमुन्दतीति समुद्र उच्यते ॥ ६३ ॥

म० 'आयोष्ट्वेति स्वयमातृण्णाम्' ( का० १७ । १२ । २५ ) । आयोरिति कण्डिकाद्वयेन विकर्णीदक्षिणां स्वयमातृण्णामुपदधातीत्यर्थः । आयोः परमेष्ठीति द्वे यजुषी स्वयमातृण्णादेवत्ये आद्यं ब्राह्म्युष्णिक् द्वितीयमाकृतिच्छन्दः । हे स्वयमातृण्णे, आयोः आदित्यस्य सदने स्थाने तां त्वा त्वां सादयामि स्थापयति । एति निरन्तरं गच्छतीत्यायुरादित्यः । कीदृशस्यायोः । अवतः जगत्पालयितुः दीप्यमानस्य वा । तथा समुद्रस्य समुनत्तीति समुद्रस्तस्य । आदित्यो वृष्ट्या जगदार्द्रीकुर्वन् समुद्र उच्यते । किंभूते सदने । छायायामाश्रयभूते हृदये प्रधानभूते । कीदृशीं त्वाम् । रश्मिवतीं किरणयुतामतएव भास्वतीं शोभमानाम् । तां काम् । या त्वं द्यां द्युलोकमाभासि प्रकाशयसि पृथिवीमाभासि उरु विस्तीर्णमन्तरिक्षं चाभासि । रश्मिपदस्य संहितायां दीर्घः ॥ ६३ ॥

## चतुःषष्टी ।

परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीः । विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवे सीद ॥ ६४ ॥

उ० परमेष्ठी त्वासादयत्विति व्याख्यातम् ॥ ६४ ॥

म० व्याख्यातम् ( १४ । १२ । १५ । ५८ ) ॥ ६४ ॥

## पञ्चषष्टी ।

सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रोऽसि सहस्राय त्वा ॥ ६५ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
पञ्चदशोऽध्यायः ॥ १५ ॥

उ० अग्निं प्रोक्षति । हिरण्यशकलसहस्रेण शते द्वे द्वे प्रक्षि-

रति सहस्रस्येति प्रतिमन्त्रम्। सहस्रस्य प्रमा प्रमाणं भवसि । सहस्रस्य प्रतिमा प्रतिमानं भवसि । सहस्रस्योन्मा उन्मानं तुलामानं भवसि । साहस्रोसि सहस्राहोसि यतः अतः सहस्राय त्वां प्रोक्षामि ॥ ६५ ॥

इति उवटकृतौ मन्त्रभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

**म०** 'तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम्' (का० १७।१२।२७)। इष्टकाचितं सपक्षपुच्छमग्निं पश्चादुत्तरपूर्वदक्षिणपश्चिमेषु शतद्वयं द्वयं सोदकस्तिष्ठन्प्रकिरतीत्यर्थः। पञ्चाग्नेयानि यजूंषि। हे अग्ने, सहस्रस्येष्टकानां प्रमा प्रमाणं त्वमसि। सहस्रस्य प्रतिमा प्रतिनिधिरसि। सहस्रस्योन्मोन्मानं तुलासि। साहस्रः सहस्राहोऽसि। सहस्रायानन्तफलाप्त्यै त्वा त्वां प्रोक्षामि ॥ ६५ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे ।
अस्मिन्पञ्चदशाध्याये कथिता पञ्चमी चितिः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

### तत्र प्रथमा ।

नम॑स्ते रुद्र म॒न्यव॑ उ॒तो त॒ इष॑वे॒ नमः॑ । बा॒हुभ्या॑मु॒त ते॒ नमः॑ ॥ १ ॥

**उ०** शतरुद्रियहोमः। 'अथातो यः शतरुद्रियं जुहोति' इत्युपक्रम्य 'स एषोऽत्राग्निश्चितो बुभुक्षमाणो रुद्ररूपेणावतिष्ठते। तस्य तर्पणं देवैः कृतम् । द्वितीयं दर्शनम् । यद्वै शतरुद्रियं जुहोतीत्युपक्रम्य प्रजापतेर्विस्रस्तादित्यभिधाय मन्त्रार्थानुगुण्येन श्रुतिर्भवति । स एव शतशीर्षो रुद्रः समभवदिति। नमस्ते रुद्रमन्यवे रौद्रोऽध्यायः परमेष्ठिन आर्षं देवानां वा प्रजापतेर्वा। आद्योऽनुवाकः षोडशभिर्ऋग्भिः। तत्र एको रुद्रो देवता एका गायत्री तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभौ द्वे जगत्यौ । नमोस्तु ते । हे रुद्र, तव संबन्धिने मन्यवे क्रोधाय । उत अपि च । ते तव संबन्धिने इषवे काण्डाय नमोस्तु । बाहुभ्याम् उत अपि ते तव संबन्धिभ्यां बाहुभ्यां नमोस्तु ॥ १ ॥

**म०** पञ्चदशे अध्याये चयनमन्त्रान् समाप्य षोडशे शतरुद्रियाख्यहोममन्त्रा उच्यन्ते । 'शतरुद्रियहोम उत्तरपक्षस्यापरस्याᳬ स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन्संततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ्नमस्त इत्यध्यायेन त्र्यनुवाकान्ते स्वाहाकारो जानुमात्रे पञ्चान्ते च नाभिमात्रे प्राक् च प्रत्यवरोहेभ्यो मुखमात्रे प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम्' (का० १८। १।१–५)। अस्यार्थः। हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसंज्ञो होमः तस्याहवनीये प्राप्तावपवादमाह । उत्तरपक्षपश्चिमकोणे याः परिश्रितो जह्वामाज्यादयः पूर्वं निखातास्तासु होमः । तत्र विधिः । जर्तिलैरारण्यतिलैर्मिश्रान् गवेधुकासक्तूनर्कपत्रेण जुहोति । किं कुर्वन् । अर्ककाष्ठेन संततं क्षारयन् परिश्रित्सु पातयन् अर्कपत्रं दक्षकरेणादायार्ककाष्ठं वामेनादाय तेन पातनीयम् सक्तुस्थाने अजादुग्धमिति केचित् । उदङ्मुखो नमस्त इत्यध्यायेन। तत्रानुवाकत्रयान्ते 'अर्भकेभ्यश्च वो नमः' (क० २६) इत्यत्र जानुमात्रे परिश्रिति स्वाहाकारो विधेयः। पञ्चानुवाकान्ते 'सुधन्वने च' (क० ३६) इत्यत्र नाभिमात्रे परिश्रिति स्वाहाकारः। 'नमोऽस्तु रुद्रेभ्यः' (क० ६३) इति प्रत्यवरोहमन्त्राः तेभ्यः प्राक् मुखमात्रपरिश्रिति स्वाहाकारः। नमोऽस्त्विति कण्डिकात्रयेण प्रतिलोमं होमः 'ये दिवि' (क० ६४) इति मुखमात्रे। 'येऽन्तरिक्षे' (क० ६५) इति नाभिमात्रे । 'ये पृथिव्याम्' (क० ६६) इति जानुमात्रे । इति सूत्रार्थः। नमस्ते । षोडशर्चोऽनुवाकः एकरुद्रदैवत्यः आद्या गायत्री तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्तानुष्टुभः द्वे जगत्यौ । अध्यायस्य परमेष्ठिदेवप्रजापतय ऋषयः। मा नः (क० १५–१६) इति द्वयोः कुत्सोऽपि ऋषिः। हे रुद्र, रुत् दुःखं द्रावयति रुद्रः। यद्वा 'रु गतौ' ये गत्यर्थास्ते ज्ञानार्थाः। रवणं रुत् ज्ञानं राति ददाति रुद्रः ज्ञानम् भावे क्विप् तुगागमः। रुत् ज्ञानप्रदः । यद्वा पापिनो नरान् दुःखभोगेन रोदयति रुद्रः। हे रुद्र, ते तव मन्यवे क्रोधाय नमः नमस्कारोस्तु । उतो अपिच ते तवेषवे बाणाय नमः। उतापि च ते तव बाहुभ्यां नमः । तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः ॥ १ ॥

### द्वितीया ।

या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी । तया॑ नस्त॒न्वा॒ शन्त॑मया॒ गिरि॑शन्ता॒भिचा॑कशीहि ॥ २ ॥

**उ०** या ते तव हे रुद्र, शिवा शान्ता तनूः शरीरम्। अघोरा अविषमा। अपापकाशिनी न पापकाशिनी अपापकाशिनी। पापमसुखं या प्रकाशयति सा पापकाशिनी पापप्रकाशिनी। तया नः अस्मान् तन्वा शन्तमया सुखतमया सुखयितृतमया अतिशयेन सुखयित्र्या । गिरिशन्त गिरौ पर्वते कैलासाख्ये अवस्थितः शं सुखं तनोतीति गिरिशन्तः। यद्वा गिरि वाच्यवस्थितः सुखं तनोतीति । यद्वा गिरौ मेघेऽवस्थितो वृष्टिद्वारेण सुखं तनोतीति । तस्य संबोधनं हे गिरिशन्त। अभिचाकशीहि अभिपश्य । सुखयितुमिति शेषः। चाकशीतिः पश्यतिकर्मा ॥ २ ॥

**म०** हे रुद्र, या ते तवेदृशी तनूः शरीरं हे गिरिशन्त, तया तन्वा नोऽस्मानभिचाकशीहि अभिपश्य । चाकशीतिः पश्यतिकर्मा (नि० ३।११।८)। कीदृशी तनूः। शिवा शान्ता मङ्गलरूपा । यतोऽघोरा अविषमा सौम्या अतएवापापकाशिनी पापमसुखं काशयति प्रकाशयति पापकाशिनी

न पापकाशिनी अपापकाशिनी। या पुण्यफलमेव ददाति न पापफलमित्यर्थः। गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयतीति गिरिशन्तः, गिरि वाचि स्थितः शं तनोतीति वा, गिरौ मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा, गिरौ शेते गिरिशः। अमति गच्छति जानातीत्यन्तः सर्वज्ञः। 'अम गतौ भजने शब्दे' कर्तरि क्तः। गिरिशश्चासावन्तश्च गिरिशन्तस्तत्संबुद्धिः। शकन्ध्वादित्वात्पररूपम् (पा० ६।१।९४) कीदृश्या तन्वा। शन्तमया सुखतमया॥ २॥

## तृतीया।

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्॥ ३॥

**उ०** यामिषुम्। याम् इषुं काण्डम् हे गिरिशन्त गिरौ पर्वतेऽवस्थितः कैलासाख्ये सुखं तनोतीति गिरिशन्तः तस्य संबोधनं हे गिरिशन्त। हस्ते बिभर्षि धारयसि। अस्तवे असितुं क्षेप्तुमित्यर्थः। शिवां गिरित्र गिरौ कैलासेऽवस्थितः त्रायते भक्तानिति गिरित्रः तस्य संबोधनं हे गिरित्र। तां कुरु। किंच। माहिंसीः मावधीः पुरुषम् जगत् जङ्गमं च गवादि॥ ३॥

**म०** हे गिरिशन्त, त्वं यामिषुं बाणं हस्ते बिभर्षि धारयसि। किं कर्तुम्। अस्तवे 'असु क्षेपणे' तुमर्थे तवेप्रत्ययः। असितुं शत्रून् क्षेप्तुमित्यर्थः। गिरित्र, गिरौ कैलासे स्थितो भूतानि त्रायत इति गिरित्रः तामिषुं शिवां कल्याणकारिणीं कुरु। किंच पुरुषं पुत्रपौत्रादिकं जगत् जङ्गममन्यदपि गवाश्वादिकं मा हिंसी मा वधीः॥ ३॥

## चतुर्थी।

शिवेन वचसा त्वा गिरिशाऽच्छावदामसि। यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्॥ ४॥

**उ०** शिवेन वचसा। शिवेन वचनेन त्वा त्वां। गिरिश गिरौ पर्वते कैलासाख्ये शेते इति गिरिशः तस्य संबोधनम् हे गिरिश। अच्छावदामसि। 'अच्छाभेराप्तुमिति शाकपूणिः'। 'इदन्तो मसि'। तथा अभिवदाम। यथा येन प्रकारेण नः अस्माकं सर्वम् इत्। इच्छब्द एवार्थे। सर्वमेव जगत् जङ्गमादि। अयक्ष्मम्। यक्ष्मा व्याधिः। व्याधिरहितम् सुमनाश्च शोभनमनस्कं च असत् भूयात्॥ ४॥

**म०** गिरौ कैलासे शेते गिरिशः हे गिरिश, शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे। 'अच्छाभेराप्तुमिति शाकपूणिः' (नि० ५।२८) संहितायां 'निपातस्य च' (पा० ६।३।१३६) इति दीर्घः। 'इदन्तो मसि' (पा० ७।१।४६)। किं वदाम इत्यत आह। नोऽस्माकं सर्वमित् सर्वमेव जगत् जङ्गमं नराः पश्वादि यथा येन प्रकारेण अयक्ष्मं नीरोगं सुमनाः शोभनमनस्कं च असत् भवति तथा कुर्विति शेषः। सुमनःशब्दे पुंस्त्वमार्षं जगद्विशेषणत्वात्। असदित्यत्र 'लेटोऽडाटौ' (पा० ३।४।९४) इत्यट् इलोपः॥ ४॥

## पञ्चमी।

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहींꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव॥ ५॥

**उ०** अध्यवोचत्। अधीत्युपरिभावमैश्वर्यं वा। अधिवदतु ब्रवीतु कंचित्स्वकीयं पुरुषम् भगवान् रुद्रः। अधिवक्ता ऐश्वर्येणैव यो वदितुं जानाति। प्रथमो दैव्यो भिषक् मुख्यो देवसंबन्धी भिषक् वैद्यः। किमधिवदत्वित्यत आह। अहींश्च सर्वान् जम्भयन्। 'जभिजृभी गात्रविनामे'। सर्वान् सर्वप्रकारान् नाशयन्। सर्वाश्च यातुधान्यः यातनाः दुःखं कष्टं तत्प्राणिषु धारयन्तीति यातुधान्यः राक्षसीः जम्भयन्। अधराचीः अधोञ्चनाः कृत्वा। परासुव पराक्षिप। यद्वा रुद्र एवोच्यते। अध्यवोचदधिवक्ता अधिवदतु ईश्वरो वक्ता। प्रथमो देवसंबन्धी भिषक् वैद्यः। अहींश्च सर्वान्। जम्भयन् सर्वांश्च यातुधान्यः अधराचीः कृत्वा परासुव क्षिपतु॥ ५॥

**म०** रुद्रो मामध्यवोचत् अधिवक्तु मां सर्वाधिकं वदतु, तेनोक्ते मम सर्वाधिक्यं भवत्वित्येवेत्यर्थः। कीदृशः। अधिवक्ता अधिकवदनशीलः। प्रथमः सर्वेषां मुख्यः पूज्यत्वात्। दैव्यः देवेभ्यो हितः। भिषक् रोगनाशकः स्मरणेनैव रोगनाशाद्भिषक्त्वम्। एवं परोक्षमुक्त्वा प्रत्यक्षमाह। हे रुद्र, सर्वा यातुधान्यः यातुधानीः राक्षसीः त्वं परासुव पराक्षिप अस्मभ्यो दूरीकुरु। किं कुर्वन्। सर्वानहीन् सर्पव्याघ्रादीन् जम्भयन् विनाशयन्। कीदृशीर्यातुधान्यः। अधराचीः अधरेऽधोदेशेऽञ्चन्ति ता अधराच्यः ताः अधोऽधोगमनशीलाः। चौ समुच्चये। सर्पनाशराक्षसीक्षेपौ सदैव कुर्वित्यर्थः॥ ५॥

## षष्ठी।

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ईमहे॥ ६॥

**उ०** असौ यः। आदित्यरूपेणात्र रुद्रः स्तूयते। अभिनयेन दर्शयन्नाह। असौ यस्ताम्रः ताम्रवर्णः। उदयकाले अस्तमनकाले च। अरुणः अरुणवर्णः रक्तवर्णः। उत बभ्रुः अपिच बभ्रुवर्णः कपिलवर्णः। सुमङ्गलः शोभनानि मङ्गलान्यस्येति सुमङ्गलः। अवास्य हेड ईमह इत्यनुषङ्गः। ये च एनं भगवन्तमादित्यं रुद्राः रश्मयः। अभितः इत-

श्वेतश्च । दिक्षु सर्वासु च । श्रिताः स्थिताः सहस्रशः असंख्याताः । अव एषां हेड ईमहे । अव ईमहे अवनयामः । एषां संबन्धी हेडः क्रोधः । हेड इति क्रोधनामसु पठितम् । यद्वा रुद्र एवोच्यते । असौ यस्ताम्रवर्णः अरुणवर्णः अपिच बभ्रुवर्णः सुमङ्गलः । अनेकानि हि रूपाणि रुद्रः करोति कार्यवशात् । समञ्जसमन्यत् ॥ ६ ॥

**म०** आदित्यरूपेणात्र रुद्रः स्तूयते । योऽसौ प्रत्यक्षो रुद्रो रविरूपः । च पुनरर्थे । रुद्रा एनमभितोदिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसंख्याः एषां हेडः क्रोधमस्मदपराधजं वयमेव ईमहे निवारयामः भक्त्या निराकुर्मः । हेड इति क्रोधनाम । 'अभिसर्वतसोः' ( पा० २ । ३ । २ ) द्वितीया । कीदृशोऽसौ ताम्रः उदयेऽत्यन्तं रक्तः । अरुणः रक्तोऽस्तकाले । उतापि च बभ्रुः पिङ्गलवर्णोऽन्यदा । सुमङ्गलः शोभनानि मङ्गलानि यस्य मङ्गलरूपः रव्युदये सर्वमङ्गलप्रवर्तनात् ॥ ६ ॥

## सप्तमी ।

असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः ॥ ७ ॥

**उ०** असौ यः आदित्यः अवसर्पति अवाचीनं सर्पति गच्छति अस्तमयकाले । नीलग्रीवः नीलग्रीव इवास्तं गच्छन् लक्ष्यते । विलोहितः धारणाधनु(?)मात्रेणाप्राप्तविलोहितमण्डलाभिप्रायम् । उतैनं गोपा अदृश्रन् अथैनं गोपालाः अभिपश्यन्ति गवां प्रवेशनकालं मन्यमानाः । अदृश्रन्नुदहार्यः । दृशेरुडागमश्छान्दसः । पश्यन्ति च उदकहार्यः कुम्भदास्यः । आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः । स दृष्टो दृष्टमात्रो मृडयाति । 'मृड सुखने' सुखयति । नः अस्मान् । अत्यन्तं मृदुहृदयतम इत्यभिप्रायः । यद्वा रुद्र एवोच्यते । ऋषिराह । असौ यः अवाचीनं सर्पति अभिमुखं गच्छति । नीलग्रीवो नीलकण्ठः विलोहितः विगतकलुषभावः । उतैनं गोपा अदृश्रन्नुदहार्य इति गोपालाङ्गनादिप्रसिद्धिं दर्शयति । समञ्जसमन्यत् ॥ ७ ॥

**म०** योऽसावादित्यरूपोऽवसर्पति उदयास्तमयौ कुर्वन्निरन्तरं गच्छति । एनं गोपा उत गोपाला अपि वेदोक्तसंस्कारहीनाः अदृश्रन् पश्यन्ति । उदहार्यः उदकं हरन्ति ता उदहार्यः 'मन्थौदन–' ( पा० ६ । ३ । ६० ) इत्यादिना उदकस्योदादेशः । जलहारिण्यो योषितोऽप्येनमदृश्रन् पश्यन्ति । आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः । दृशेर्लुङि 'इरितो वा' ( पा० ३ । १ । ५७ ) इति च्लेरङ् रुगागमश्छान्दसः कीदृशः । नीलग्रीवः विषधारणेन नीला ग्रीवा कण्ठो यस्य अस्तमये नीलकण्ठ इव लक्ष्यः । विलोहितः विशेषेण रक्तः । स रुद्रो दृष्टः सन्नोऽस्मान्मृडयाति सुखयतु । असौ मण्डलवर्ती रुद्र एव तपतीति ज्ञातः सुखं करोतीत्यर्थः ॥ ७ ॥

## अष्टमी ।

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ ८ ॥

**उ०** नमोस्तु नमस्कारोस्तु । नीलग्रीवाय नीलकण्ठाय सहस्राक्षाय बह्वक्षाय । मीढुषे 'मिह सेचने' । सेक्रे तरुणाय । अविपरिणामीति स्तूयते । अथो अपिच ये अस्य सत्वानः सत्वभूता रुद्राः अहं तेभ्यः अकरम् अकरवम् करोमि । नमस्कारम् ॥ ८ ॥

**म०** नीलग्रीवाय नीलकण्ठाय रुद्राय नमोऽस्तु नमस्कारो भवतु । कीदृशाय । सहस्राक्षाय सहस्रमक्षीणि यस्य इन्द्ररूपिणे । मीढुषे मिमेहेति मीढ्वन् तस्मै 'मिह सेचने' 'दाश्वान्साह्वन्मीढ्वांश्च' ( पा० ६ । १ । १२ ) इति क्वसन्तो निपातः । सेक्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः । तरुणाय वा । अथो अपिच अस्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमो नमस्कारमकरं करोमि 'कृञ् कृतौ' शप् लङि उत्तमैकवचनम् ॥ ८ ॥

## नवमी ।

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥ ९ ॥

**उ०** प्रमुञ्च धन्वनः धनुषः त्वमुभयोः आर्त्न्योर्धनुरन्तयोः ज्यां गुणम् । याश्च ते तव हस्ते इषवः । परा ता भगवो वप परावप पराक्षिप ताः हे भगवन् महदैश्वर्ययुक्त ॥ ९ ॥

**म०** हे भगवः भगं षड्विधमैश्वर्यमस्यास्तीति भगवान् । 'मतुवसो रुः संबुद्धौ छन्दसि' ( पा० ८ । ३ । १ ) इति रुत्वम् । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तेः । हे भगवन् धन्वनः धनुष उभयोरार्त्न्योः द्वयोः कोट्योः स्थितां ज्यां मौर्वी त्वं प्रमुञ्च दूरीकुरु । याश्च ते तव हस्ते इषवः बाणाः ता इषूः परावप पराक्षिप ॥ ९ ॥

## दशमी ।

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२॥ उत । अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥ १० ॥

**उ०** विज्यं धनुः विगतगुणं धनुः । कपर्दोऽस्यास्तीति कपर्दी । कपर्दोऽस्य जटाबन्धः । विशल्यः शल्यरहितः । बाणवान् इषुधिः । उत अपिच । अनेशन् 'णश अदर्शने' । नष्टा । अस्य या इषवः आभुः रिक्तः अस्य निषङ्गधिः खड्गनिक्षेपः । निषज्यत इति निषङ्गः खड्ग उच्यते तद्यस्मिन्धीयते स निषङ्गधिः । न्यस्तसर्वशस्त्र इत्यभिप्रायः ॥ १० ॥

**म०** कपर्दो जटाजूटोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुः विज्यं मौर्वीरहितमस्तु। विगता ज्या यस्य तत्। उतापि बाणवान् बाणा अस्मिन् सन्तीति बाणवान् इषुधिः विशल्यो विफलोऽस्तु। बाणाग्रगतो लोहभागः शल्यम् इषुधिर्निरप्रबाणोऽस्तु। अस्य रुद्रस्य या इषवः ता अनेशन् नश्यन्तु 'णश अदर्शने' नशेरत एत्वम् अङि वेत्येत्वम् पुषादित्वात् च्लेरङ्। अस्य रुद्रस्य निषङ्गधिः निषज्यत इति निषङ्गः खड्गः स धीयतेऽस्मिन्निति निषङ्गधिः कोशः स आभुः रिक्तः खड्गरहितोऽस्तु। रुद्र अस्मान् प्रति न्यस्तसर्वशस्त्रोऽस्त्वित्यर्थः॥१०॥

## एकादशी।

या ते॑ हे॒तिर्मी॑ढुष्टम॒ हस्ते॑ ब॒भूव॑ ते॒ धनुः॑। त॒यास्मान्वि॒श्वत॒स्त्वम॑य॒क्ष्मया॒ परि॑भुज॥ ११॥

**उ०** या ते या ते तव हेतिरायुधम् हे मीढुष्टम 'मिह सेचने'। सेक्तृतम युवतम। परिणामनिषेधद्वारेण स्तुतिः। अस्मात्सर्वं भवति। हस्ते बभूव भूता। ते इति निरर्थकः। धनुरिति हेतिविशेषणम्। तया हेत्या अस्मान्विश्वतः सर्वतः त्वम् अयक्ष्मया। यक्ष्मा व्याधिः। व्याधिरहितया परिभुज परिपालय॥ ११॥

**म०** अतिशयेन मीढ्वान्मीढुष्टमः 'तसौ मत्वर्थे' (पा० १।४।१९) इति भसंज्ञायां 'वसोः संप्रसारणम्' (पा० ६।४।१३१) इति संप्रसारणम्। षत्वष्टुत्वे। हे मीढुष्टम सेक्तृतम वर्षुक, ते तव हस्ते या धनुः हेतिः धनूरूपमायुधं बभूव अस्ति। एकं तेपदं पादपूरणाय। तया धनूरूपया हेत्या विश्वतः सर्वतोऽस्मान् परिभुज परिपालय। भुजेर्विकरणव्यत्ययें शप्रत्ययः। कीदृश्या तया। अयक्ष्मया नास्ति यक्ष्मा रोगो यस्यास्तया निरुपद्रवया दृढया अनुपद्रवकारिण्या वा॥ ११॥

## द्वादशी।

परि॑ ते॒ धन्व॑नो हे॒तिर॒स्मान्वृ॑णक्तु वि॒श्वतः॑। अथो॒ य इ॑षु॒धिस्तवा॒रे अ॒स्मन्नि धे॑हि॒ तम्॥ १२॥

**उ०** परि ते। परिवृणक्तु परिवर्जयतु। ते तव धन्वनः धनुषः संबन्धिना हेतिः आयुधं काण्डलक्षणम् अस्मान् विश्वतः सर्वतः। अथो अपिच। य इषुधिर्बाणवान् तव आरे दूरे अस्मत् अस्मत्तः निधेहि स्थापय तम् इषुधिम्॥ १२॥

**म०** हे रुद्र, ते तव धन्वनो हेतिः धनुःसंबन्धि आयुधं विश्वतः सर्वतोऽस्मान् परिवृणक्तु त्यजतु। मा हन्त्वित्यर्थः। 'वृजी वर्जने' रुधादित्वात् श्नम्। अथो अपिच यस्तव इषुधिस्तमस्मत्सकाशात् आरे दूरे निधेहि अस्मत्तो दूरे स्थापय॥१२॥

## त्रयोदशी।

अ॒व॒तत्य॒ धनु॒ष्ट्वꣳ सह॑स्राक्ष॒ शते॑षुधे। नि॒शीर्य॑ श॒ल्याना॒ं मुखा॑ शि॒वो नः॑ सु॒मना॑ भव॥ १३॥

**उ०** अवतत्य अवतार्य धनुः त्वम् हे सहस्राक्ष शतेषुधे शतशब्दो बहुपर्यायः। निशीर्य शल्यानां मुखा शातयित्वा फलानां मुखानि। शिवः शान्तः नः अस्माकं सुमनाः शोभनमनस्कश्च भव॥ १३॥

**म०** सहस्रमक्षीणि यस्य शतमिषुधयो यस्य हे सहस्राक्ष, हे शतेषुधे, त्वं नोऽस्मान् प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव। अनुगृहाणेत्यर्थः। किं कृत्वा। धनुरवतत्य अपज्याकं कृत्वा शल्यानां मुखा मुखानि बाणफलाग्राणि निशीर्य शीर्णानि कृत्वा 'शॄ हिंसायाम्' 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' 'ऋत इद्धातोः' (पा० ७।१।१००) इति॥ १३॥

## चतुर्दशी।

नम॑स्त॒ आयु॑धा॒याना॑तताय धृ॒ष्णवे॑। उ॒भाभ्या॑मु॒त ते॒ नमो॑ बा॒हुभ्या॒ं तव॒ धन्व॑ने॥ १४॥

**उ०** नमस्ते नमोऽस्तु ते तव आयुधाय अनातताय अवतारिताय। धृष्णवे धर्षणशीलाय प्रगल्भाय। उभाभ्याम् उत अपिच। ते तव नमोऽस्तु। बाहुभ्यां तव धन्वने। धनुषे नम इत्यनुवर्तते॥ १४॥

**म०** हे रुद्र, ते तवायुधाय नमोऽस्तु बाणाय नतिरस्तु। कीदृशाय। अनातताय धनुष्यनारोपिताय। धृष्णवे धर्षणशीलाय। धृषेः क्नुप्रत्ययः। रिपून् हन्तुं प्रगल्भाय। उतापि च ते तवोभाभ्यां बाहुभ्यां नमः तव धन्वने धनुषेऽपि नमोऽस्तु। तस्यापि विशेषणम् अनातताय अवतारितमौर्वीकाय॥ १४॥

## पञ्चदशी।

✓ मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम्। मा नो॑ वधीः पि॒तर॒ं मोत मा॒तर॒ं मा नः॑ प्रि॒यास्त॒न्वो॒ रुद्र रीरिषः॥१५॥

**उ०** मा नः मावधीः नः अस्माकं महान्तं वृद्धं वयःप्रभृतिभिः। उत मा नो अर्भकम् अपि च मावधीः नः अस्माकमर्भकमल्पम्। मा न उक्षन्तम् मावधीः नः अस्माकमुक्षन्तम्। 'उक्ष सेचने'। सिञ्चन्तं तरुणमिति यावत्। उत मा न उक्षितम्। अपिच मावधीः नः अस्माकमुक्षितं सिक्तं गर्भस्थमित्यर्थः। मा नो वधीः पितरम् मावधीः नः अस्माकं पितरम्। आदरार्थं पुनर्वचनम्। महान्तमिति सिद्धत्वात्। मोत मातरम् मावधीः अपि च मातरम्। मा नः प्रियास्तन्वः रुद्र रीरिषः। रिषतिर्हिंसार्थः। मारी-

रिषः माहिंसीः नः अस्माकं प्रियास्तन्वः प्रियाणि शरीराणि पुत्रपौत्रलक्षणानि । हे रुद्र ॥ १५ ॥

म० हे रुद्र, नोऽस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं मा वधीः मा हिंसीः। उतापि नोऽस्माकमर्भकं बालं मा वधीः। नोऽस्माकमुक्षन्तं सिञ्चन्तं तरुणं मा वधीः । उतापि नोऽस्माकमुक्षितं सिक्तं गर्भस्थं च मा वधीः । नः पितरं जनकं मा वधीः । उतापि नो मातरं जननीं मा वधीः । महान्तमित्यनेन सिद्धयोर्मातापित्रोः पुनरादानमादरार्थम् । नोऽस्माकं प्रियाः वल्लभाः तन्वः तनूः शरीराणि पुत्रपौत्ररूपाणि मा रीरिषः मा हिंसीः । रिषतिर्हिंसाकर्मा ॥ १५ ॥

## षोडशी ।

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥

उ० मा नः । मा रीरिषः । रिषतिर्हिंसाकर्मा । मा हिंसीः नः अस्माकम् । तोके पुत्रविषये । माहिंसीः तनये पौत्रविषये । मा हिंसीः नः अस्माकम् आयुषि विषयभूते । मा नो गोषु मा हिंसीः नः अस्माकं गोषु विषयभूतासु । मा नो अश्वेषु माहिंसीः नः अस्माकमश्वेषु विषयभूतेषु । यद्वा विभक्तिव्यत्ययेन व्याख्यानम् । मारीरिषः अस्माकं तोकं तनयमायुर्गा अश्वानिति । मा नो वीरान् रुद्रभामिनोवधीः मावधीः नः अस्माकं वीरान् हे रुद्र, भामिनः । 'भाम क्रोधे' । क्रोधसंयुक्तान् । कः प्रत्युपकार इति चेत् । हविष्मन्तः हविषा संयुक्ताः सदं सदाकालम् । इच्छब्द एवार्थे । त्वामेवाह्वयामहे आह्वयामो यागार्थम् । अनन्यशरणा वयमित्यभिप्रायः ॥ १६ ॥

म० हे रुद्र, नोऽस्माकं तोके पुत्रे तनये पौत्रे मा रीरिषः मा हिंसीः । नः आयुषि जीवने मा हिंसीः । नो गोषु धेनुषु मा रीरिषः । नोऽश्वेषु तुरगेषु । मा रीरिषः । विभक्तिव्यत्ययो वा । तोकं तनयमायुर्गा अश्वान्मा हिंसीः । 'भाम क्रोधे' । भामिनः क्रोधयुतानपि नोऽस्माकं वीरान् भृत्यान्मा वधीः । क उपकार इति चेत् । हविष्मन्तः हविर्युक्ताः सदमित् सदैव त्वां वयं हवामहे यागायाह्वयामः । त्वदेकशरणा वयमिति भावः ॥ १६ ॥

## सप्तदशी ।

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥ १७ ॥

उ० नमो हिरण्यबाहवे । इतउत्तरं यजूंषि द्रापे अन्धसस्पते इति यावत् । द्वयोर्द्वयो रुद्रयोश्च स्तुतिः । तिस्रोशीतयो रुद्राणां कण्डिकायां कण्डिकायामष्टावष्टौ रुद्राः। तेषां चोभयतोनमस्काराः अन्ये अन्यतरतोनमस्कारा अन्ये रुद्रास्ते घोरतरा अशान्ततराः यत उभयतोनमस्कारा इति । नमोस्तु हिरण्यालंकारभूषितबाहवे । सेनान्ये च सेनां नयतीति सेनानीः । दिशां च पतये नमः । नमो वृक्षेभ्यो हरिकेशेभ्यः वृक्षरूपेभ्यो रुद्रेभ्यो नमस्कार इति । हरितानि पर्णानि केशा इव येषां लक्ष्यन्ते । पशूनां पतये नमः । नमः शष्पिञ्जराय नवप्ररूढानि तृणानि शष्पम् तद्वर्णाय । त्विषीमते । त्विषिर्दीप्तिः । पथीनां पतये नमः । पथामिति प्राप्ते छान्दसम् । नमो हरिकेशाय लोहितकेशाय । उपवीतिने यज्ञोपवीतिने पुष्टानां समृद्धानां पतये नमः ॥ १७ ॥

म० 'नमो हिरण्यबाहव इत्युत्तरं द्रापे इति' ( क० ४७ ) ऋक्पर्यन्तं सर्वाणि यजूंषि । तत्र नमो हिरण्यबाहव इत्यादीनां धनुष्कृद्भ्यश्च वो नम इत्यन्तानां ( क० ४६ ) चत्वारिंशदधिकद्विशतसंख्याकानां यजुषां तावन्तो रुद्रा देवताः नमो वः किरिकेभ्य इत्यादिचतुर्णां ( क० ४६ ) अग्निवायुसूर्या देवताः रुद्राणां प्रधानभूताः । छन्दांसि तु चतुरक्षरं दैवी बृहती पञ्चाक्षरं दैवी पङ्क्तिः षडक्षरं यजुर्गायत्री सप्ताक्षरं यजुरुष्णिक् अष्टाक्षरं यजुरनुष्टुप् नवाक्षरं यजुर्बृहती दशाक्षरं यजुःपङ्क्तिः एकादशाक्षरं यजुस्त्रिष्टुप् द्वादशाक्षरं यजुर्जगती चतुर्दशाक्षरं सामोष्णिगेकमेव किरिकेभ्य इति । एतान्येवात्र छन्दांसि । तद्रुद्रमध्ये केचनोभयतोनमस्काराः । पदद्वयात्पूर्वमेव पदोच्चारणात्पश्चाच्च नमःपदं येषां ते उभयतोनमस्काराः हिरण्यबाहवे इत्यादि श्वपतिभ्यश्च नम इत्यन्ताः । ( क० २८ ) ततोऽन्यतरतोनमस्काराः अन्यतरत आदावेव यजुर्द्वयस्य नमस्कारो येषां ते नमो भवायेत्यादि ( क० २८ ) प्रखिदते चेत्यन्ताः ( क० ४६ ) । इषुमद्भ्य इत्यादि ( क० २२ ) श्वपतिभ्यश्च इत्यन्ताः ( क० २८) प्रत्यक्षाः व इति युष्मच्छब्दयोगात् । इषुकृद्भ्य इति । ( क० ४६ ) उभयतोनमस्काराः सभाभ्य इति ( क० २४ ) जातसंज्ञा रुद्राः । उभयतोनमस्काराः शान्ततमाः अन्यतरतोनमस्कारा घोरतराः । तेषां मन्त्राणामर्थ उच्यते । एकैकस्यां कण्डिकायामष्टावष्टौ रुद्राः । हिरण्यमाभरणरूपं बाह्वोर्यस्य स हिरण्यबाहुः । स च सेनां नयतीति सेनानीः तस्मै रुद्राय नमः । दिशां पतये पालकाय रुद्राय नमः । हरयो हरितवर्णाः केशाः पर्णरूपा येषां ते हरिकेशास्तेभ्यो वृक्षेभ्यो वृक्षरूपरुद्रेभ्यो नमः । पशूनां जीवानां पतये पालकाय रुद्राय नमः । शष्पिञ्जराय शष्पं बालतृणं तद्वत्पिञ्जराय पीतरक्तवर्णाय टिलोपश्छान्दसः । त्विषिर्दीप्तिरस्यास्ति त्विषिमान् । संहितायां त्विषिशब्दस्य दीर्घः । ईदृशाय रुद्राय नमः । पथीनां मा-

र्गाणां पालकाय नमः । पथिशब्दो मार्गवाची । उत्तरदक्षिणतृतीयामार्गाः श्रुताद्युक्ताः । हरिकेशाय नीलवर्णकेशाय जराराहितायोपवीतिने मङ्गलार्थयज्ञोपवीतधारिणे रुद्राय नमः । पुष्टानां गुणपूर्णानां नराणां पतये स्वामिने नमः ॥ १७ ॥

## अष्टादशी ।

नमो बभ्लुशाय व्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमः सूतायाहन्त्यै वनानां पतये नमः ॥ १८ ॥

उ० नमो बभ्लुशाय बभ्रुवर्णाय । बभ्रुः कपिलः । व्याधिने विध्यतीति व्याधी । अन्नानां पतये नमः । नमो भवस्य हेत्यै । भवः संसारः । हेतिरायुधम् । संसारस्य छेत्रे । जगतां पतये नमः जगतां जङ्गमानाम् । नमो रुद्राय आततायिने । आततेन धनुषा एतीत्याततायी उद्यतायुधाय । क्षेत्राणां पतये नमः । नमः सूताय सूतोऽश्वसारथिः । अहन्त्यै अहन्त्रे । नहि सूतः कंचिदपि हन्ति । वनानां पतये नमः ॥ १८ ॥

म० बभ्लुशः कपिलवर्णः । यद्वा बिभर्ति रुद्रमिति बभ्लुर्वृषभस्तस्मिन् शेते स बभ्लुशः । विध्यति शत्रूनिति व्याधी तस्मै रुद्राय नमः । अन्नानां पालकाय नमः । भवस्य संसारस्य हेत्यै आयुधाय संसारनिवर्तकाय रुद्राय नमः । जगतां पालकाय रुद्राय नमः । आततेन विस्तृतेन धनुषा सह एति गच्छति आततायी उद्यतायुधस्तस्मै रुद्राय नमः । क्षेत्राणां देहानां पालकाय नमः । न हन्तीत्यहन्तिस्तस्मै अहन्त्रे सूताय सारथये तद्रूपाय रुद्राय नमः । सारथिर्न हन्ति वनानां पालकाय नमः ॥ १८ ॥

## एकोनविंशी ।

नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः ॥ १९ ॥

उ० नमो रोहिताय । वर्णतो निर्देशः । स्थपतये स्थपतिर्गृहादीनां चेता । चयनं करोति विश्वकर्मरूपेण । वृक्षाणां पतये नमः । नमो भुवन्तये भुवं पृथिवीं तनोति विस्तारयतीति भुवन्तिः । वारिवस्कृताय वरिवो धनम् तत्कृतं येन स वारिवस्कृतः । दीर्घत्वं छान्दसम् । ओषधीनां पतये नमः । नमो मन्त्रिणे । प्रसिद्ध एव मन्त्री । वाणिजः वणिगेव वाणिजः । कक्षाणां पतये नमः । नदीकक्षः पर्वतकक्षो वा । नम उच्चैर्घोषाय महाशब्दाय । आक्रन्दयते आक्रन्दः प्रसिद्धः । पत्तीनां पतये नमः । हस्त्यश्वरथपदातिसंख्या पत्तिः ॥ १९ ॥

म० रोहितो लोहितवर्णः स्थपतिर्गृहादिकर्ता विश्वकर्मरूपेण तस्मै नमः । वृक्षाणां पालकाय नमः । भुवं तनोतीति भुवन्तिर्भूमण्डलविस्तारकः । वरिवो धनं करोतीति वरिवस्कृत् स एव वारिवस्कृतः स्वार्थेऽण् । स्थानभोग्यकराय नमः । ओषधीनां । ग्राम्यारण्यानां पालकाय नमः । आलोचनकुशलो मन्त्री । वणिगेव वाणिजः व्यापारकर्ता तद्रूपाय नमः । वनगता गुल्मवीरुधादयः कक्षास्तेषां पालकाय नमः । उच्चैर्घोषो ध्वनिर्यस्य स उच्चैर्घोषः । आक्रन्दयति रोदयतीत्याक्रन्दयन् युद्धे महाशब्दाय रिपुरोदकाय नमः । पत्तीनां सेनाविशेषाणां पदातीनां वा पालकाय नमः । 'एको रथो गजश्चाश्वास्त्रयः पञ्च पदातयः । एष सेनाविशेषोऽयं पत्तिरित्यभिधीयते ' इति व्यासोक्तेः ( भार० १ । २८९ ) ॥ १९ ॥

## विंशी ।

नमः कृत्स्नायतया धावते सत्वनां पतये नमो नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमः ॥ २० ॥

उ० नमः कृत्स्नायतया । कृत्स्नायततायेति प्राप्ते तकारलोपश्छान्दसः । कृत्स्नं चासावायतं च कृत्स्नायतः पूरितधनुः तस्य भावः कृत्स्नायतया तया हेतुभूतया धावते । आकर्णपूरितधनुषेत्यर्थः । सत्वनां सत्वानां पतये नमः । नमः सहमानाय अभिभवनशीलाय निव्याधिने नितरां विध्यतीति निव्याधी । आव्याधिनीनां पतये नमः आविध्यन्ति याः सेनास्ता आव्याधिन्यः । नमो निषङ्गिणे निषङ्गः खड्गम् । ककुभाय ककुभ इति महन्नामसु पठितम् । स्तेनानां पतये नमः स्तेनश्चौरः । नमो निचेरवे नितरां चरतीति निचेरुः । परिचराय सर्वतोगन्त्रे । अरण्यानां पतये नमः ॥ २० ॥

म० कृत्स्नं समग्रमायतं विस्तृतम् अर्थाद्धनुः यस्य स कृत्स्नायतस्तस्य भावः कृत्स्नायतता तया आकर्णपूर्णधनुष्ट्वेन धावते युद्धे शीघ्रं गच्छते रुद्राय नमः । शीघ्रगतौ सरतेर्धावादेशः तलोपश्छान्दसः । यद्वा कृत्स्नः सर्वे आयो लाभो यस्य स कृत्स्नायस्तस्य भावः कृत्स्नायतता तया धावते सर्वलाभप्रापकत्वेन धावते । यत्र गच्छति तत्र सर्वेष्टं लाभं प्राप्नोतीत्यर्थः । सत्वन्शब्दः प्राणिवाची । सत्वानः सात्त्विकाः शरणागताः प्राणिनस्तेषां पालकाय नमः । सहतेऽरीनभिभवतीति सहमानः । नितरां विध्यति हन्ति शत्रूनिति निव्याधी तस्मै नमः । आ समन्ताद्विध्यन्तीत्याव्याधिन्यः शूरसेनास्तासां पालकाय नमः । निषङ्गः खड्गः सोऽस्यास्तीति निषङ्गी ककुभो महान् तस्मै रुद्राय नमः । ककुभ इति मह-

नामसु पठितम्। स्तेना गुप्तचोरास्तेषां पालकाय नमः। अपहारबुद्ध्या निरन्तरं चरतीति निचेरुः। परित आपणवाटिकादौ हरणेच्छया चरतीति परिचरः तस्मै नमः। अरण्यानां वनानां पतये नमः। रुद्रो लीलया चोरादिरूपं धत्ते। यद्वा रुद्रस्य जगदात्मकत्वाच्चोरादयो रुद्रा एव ध्येयाः। यद्वा स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति तत्र जीवरूपं स्तेनादिशब्दवाच्यं तदीश्वररुद्ररूपं लक्षयति यथा शाखाग्रं चन्द्रस्य लक्षकम्। किं बहुना लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुक्ताः॥ २०॥

## एकविंशी।

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निषङ्गिणे इषुधिमते तस्कराणां पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तंचरद्भ्यो विकृन्तानां पतये नमः॥ २१॥

उ० नमो वञ्चते। वञ्चतिर्गत्यर्थः गत्रे। परिवञ्चते सर्वतोगत्रे स्तायूनां पतये नमः। स्तायुश्चौर एव। नमो निषङ्गिणे खङ्गिणे इषुधिमते इषुधिरस्यास्तीति इषुधिमान्। तस्कराणां पतये नमः। तस्करश्चौर एव। नमः सृकायिभ्यः। सृक इति वज्रनामसु पठितम्। सृकेण गृहीतेन एतुं शीलमेषामिति सृकायिणः। जिघांसद्भ्यः हन्तुमिच्छद्भ्यः मुष्णतां पतये नमः। 'मुष स्तेये' नमोऽसिमद्भ्यः। असिः खड्गं तत्संयुक्तेभ्यः नक्तंचरद्भ्यः रात्रौ गच्छद्भ्यः विकृन्तानां पतये नमः। विकर्तनशीला विकृन्ताः॥ २१॥

म० वञ्चति प्रतारयतीति वञ्चन् परि सर्वतो वञ्चति परिवञ्चन् तस्मै नमः। स्वामिन आप्तो भूत्वा व्यवहारे कुत्रचित्तदीयं धनमपह्नुते तद्वञ्चनम् सर्वव्यवहारे धनापह्नवः परिवञ्चनम्। गुप्तचोरा द्विविधाः। रात्रौ गृहे खातादिना द्रव्यहर्तारः स्वीया एवाहर्निशमज्ञाता हर्तारश्च। पूर्वे स्तेनाः उत्तरे स्तायवः तेषां पतये नमः। निषङ्गः खड्गो बाणो वा सोऽस्यास्तीति इषुधिर्बाणाधारोऽस्यास्तीतीषुधिमान् तदुभयरूपाय नमः। तस्कराः प्रकटचोरास्तेषां पतये नमः। सृक इति वज्रनाम। सृकेन वज्रेण सह यन्ति गच्छन्तीत्येवंशीलाः सृकायिणः अतएव शत्रून् हन्तुमिच्छन्ति जिघांसन्तीति जिघांसन्तः। हन्तेः शत्रन्ताच्छतृप्रत्ययः तेभ्यो रुद्रेभ्यो नमः। क्षेत्रादिषु धान्यापहर्तारो मुष्णन्तस्तेषां पालकाय नमः। असयः खड्गाः सन्ति येषां तेऽसिमन्तः नक्तं रात्रौ चरन्ति ते नक्तंचरन्तः खड्गं धृत्वा रात्रौ वीथिनिर्गतप्राणिघातकास्तेभ्यो रुद्रेभ्यो नमः। विकृन्तन्ति छिन्दन्ति ते विकृन्ताः छित्त्वापहरन्तस्तेषां पतये नमः॥ २१॥

## द्वाविंशी।

नमं उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नमं इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नमं आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमं आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः॥ २२॥

उ० नमः उष्णीषिणे उष्णीषोऽस्यास्तीत्युष्णीषी। उष्णीषः शिरोवेष्टनम्। गिरिचराय गिरौ पर्वते चरतीति गिरिचरः। कुलुञ्चानां पतये नमः। कुत्सितं लुञ्चति कुलानि वा लुञ्चतीति कुलुञ्चः। नम इषुमद्भ्यः धन्वायिभ्यश्चवो नमः। व्याख्याबहुवचनधर्मैः प्रदश्यते। नमोस्तु ये यूयमिषुमन्तस्तेभ्य इषुमद्भ्यः। धनुषा गृहीतेन एतुं शीलमेषामिति धन्वायिनः। 'वा संज्ञायाम्' इति धनुषो धन्वन् धन्वायिभ्यः। चकारः समुच्चयार्थीयः। वः युष्मभ्यं नमः। आतन्वानेभ्यः उत्क्षिप्तज्याकानि धनूंषि कुर्वाणेभ्यः। प्रतिदधानेभ्यश्च वो नमः। प्रतिदधानाः संधानं कुर्वाणाः। नम आयच्छद्भ्यः आकर्षद्भ्यो धनूंषि। अस्यद्भ्यश्च वो नमः। 'असु क्षेपणे' काण्डानि क्षिपद्भ्यः॥ २२॥

म० उष्णीषं शिरोवेष्टनमस्यास्तीत्युष्णीषी उष्णीषेण शिरःप्रावृत्य ग्रामेऽपहर्तुं प्रवृत्तः गिरौ चरति गिरिचरः अध्वन्यानां वस्त्राद्यपहर्तुं पर्वतादिविषमस्थानचारी तदुभयरूपाय रुद्राय नमः। कुं भूमिं क्षेत्रगृहादिरूपां लुञ्चन्ति हरन्ति कुलुञ्चाः कुत्सितं लुञ्चन्ति वा तेषां पालकाय नमः। इषवो विद्यन्ते येषां ते इषुमन्तः जनान्भीषयितुं बाणधारिणस्तेभ्यो नमः। धन्वना धनुषा सह यन्ति गच्छन्ति धन्वायिनः हे रुद्राः, धनुर्धारिभ्यो वो युष्मभ्यं नमः। चकारो मन्त्रभेदज्ञापनार्थः। एवमग्रेऽपि। आतन्वन्त्यारोपयन्ति ज्यां धनुषीत्यातन्वानास्तद्रूपेभ्यो नमः। प्रतिदधते संदधते बाणं धनुषीति संदधानास्तेभ्यो वो युष्मभ्यं नमः। आयच्छन्त्याकर्षन्ति धनूंषि ते आयच्छन्तः तेभ्यो नमः। अस्यन्ति क्षिपन्ति बाणानित्यस्यन्तस्तेभ्यो नमः। 'असु क्षेपणे' दिवादिः॥ २२॥

## त्रयोविंशी।

नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः॥ २३॥

उ० नमो विसृजद्भ्यः काण्डानि क्षिपद्भ्यः योद्धारंप्रति। विध्यद्भ्यश्च वो नमः। विध्यन्ति ताडयन्ति ये शरैस्तेभ्यो विध्यद्भ्यः। नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः। नमः शयानेभ्य आसीनेभ्यश्च वो नमः। नमः तिष्ठद्भ्यो

धावद्भ्यश्च वो नमो नमः । शतृशानजन्तान्येतानि पदानि ऋजून्येव ॥ २३ ॥

म० विसृजन्ति विमुञ्चन्ति बाणानरिष्विति विसृजन्तः तेभ्यो नमः । विध्यन्ति ताडयन्ति शत्रूनिति विध्यन्तस्तेभ्यो वो नमः । मुक्तस्य बाणस्य लक्ष्ये प्रवेशो वेधः । स्वपन्ति ते स्वपन्तः स्वप्नावस्थामनुभवन्तस्तेभ्यो नमः । जाग्रति ते जाग्रतः जाग्रदवस्थावन्तस्तेभ्यो वो नमः । शेरते ते शयानाः सुषुप्त्यवस्थावन्तस्तेभ्यो नमः । आसते आसीना उपविशन्तस्तेभ्यश्च वो नमः । तिष्ठन्ति ते तिष्ठन्तो गतिनिवृत्तास्तेभ्यो नमः । धावन्ति ते धावन्तो वेगवद्गतयस्तेभ्यो वो नमः ॥ २३ ॥

## चतुर्विंशी ।

नमः॑ सुभाभ्यः॑ सुभाप॑तिभ्यश्च वो॒ नमो॒ नमो॑ऽश्वेभ्योऽश्व॑पतिभ्यश्च॒ वो॒ नमो॒ नम॑ आव्या॒धिनी॑भ्यो वि॒विध्य॑न्तीभ्यश्च वो॒ नमो॒ नम॒ उग॑णाभ्यस्तृꣳहती॒भ्य॑श्च वो॒ नमः॑ ॥ २४ ॥

उ० इतउत्तरं जातेभ्यो जुहोति । जाता जातिविशेषाः त इहोच्यन्ते रुद्राद्वैतप्रतिपादनाय । रुद्रलोके किलेत्थंभूता रुद्राः सन्ति । तदुक्तम् । 'अथो एवꣳ हैतानि रुद्राणां जातानि' इति । नमः सभाभ्यः । सभादिभ्यो रुद्रदृष्टिः कर्तव्येति तात्पर्यार्थः । सभापतिभ्यश्च वो नमः । नम अश्वेभ्यः अश्वपतिभ्यश्च वो नमः । नमः आव्याधिनीभ्यः आविध्यन्तीत्याव्याधिन्यः सेनाः विविध्यन्तीभ्यश्च वो नमः । विविधं विध्यन्तीति विग्रहे सेना एवाभिधेया । नम उगणाभ्यः उदुपसर्गस्यान्त्यलोपः । उद्गूर्णगणाः समूहा यासु सेनासु ता एवमुच्यन्ते । तृꣳहतीभ्यश्च वो नमः । तृंहतिर्हिंसाकर्मा । हिंसन्तीभ्यः ॥ २४ ॥

म० अथ जातसंज्ञा रुद्रा रुद्रलोके सन्ति ते कथ्यन्ते रुद्राद्वैतप्रतिपादनाय । 'अथो एवꣳ हैतानि रुद्राणां जातानि' ( ९।१।१९ ) इति श्रुतेः । सभारूपेभ्यो रुद्रेभ्यो नमः । सभादिषु रुद्रदृष्टिः कर्तव्येति तात्पर्यम् । सभायाः पतिभ्यो नमः । अश्वास्तुरगास्तेभ्यो वो नमः । अश्वानां पतिभ्यो वो नमः । आ समन्ताद्विध्यन्तीत्याव्याधिन्यो देव्यः सेना वा ताभ्यो नमः । विशेषेण विध्यन्ति विविध्यन्त्यस्ताभ्यो वो नमः । उत्कृष्टा गणा भृत्यसमूहा यासां ता उगणाः । उपसर्गान्त्यलोपः पृषोदरादित्वात् । ब्राह्मयाद्या मातरस्ताभ्यो नमः । तृंहन्ति घ्नन्ति तृंहत्यः 'तृहि हिंसायां' हन्तुं समर्था दुर्गादयस्ताभ्यो वो नमः ॥ २४ ॥

## पञ्चविंशी ।

नमो॑ ग॒णेभ्यो॑ ग॒णप॑तिभ्यश्च वो॒ नमो॒ नमो॒ व्राते॑भ्यो॒ व्रात॑पतिभ्यश्च वो॒ नमो॒ नमो॒ गृत्से॑भ्यो गृत्स॑पतिभ्यश्च वो॒ नमो॒ नमो॒ विरू॑पेभ्यो वि॒श्वरू॑पेभ्यश्च वो॒ नमः॑ ॥ २५ ॥

उ० नमो गणेभ्यः । गणः समूहः । गणपतिभ्यश्च वो नमः । नमो व्रातेभ्यः । व्रातमर्हन्ति ते व्राता गणविशेषाः । व्रातपतिभ्यश्च वो नमः । नमो गृत्सेभ्यः गृत्सो मेधावी । गृत्सपतिभ्यश्च वो नमः । नमो विरूपेभ्यः निकृष्टरूपेभ्यः नानारूपेभ्यो वा । विश्वरूपेभ्यश्च वो नमः । विश्वरूपाः सर्वरूपाः ॥ २५ ॥

म० देवानुचरा भूतविशेषा गणास्तेभ्यो नमः । गणानां पालका गणपतयस्तेभ्यो वो नमः । व्राता नानाजातीयानां सङ्घास्तेभ्यो नमः । व्रातपालका व्रातपतयस्तेभ्यो वो नमः । गृध्यन्ति वाञ्छन्ति गृत्सा विषयलम्पटाः गृत्सा मेधाविनो वा तेभ्यो नमः । गृत्सपतयस्तत्पालकास्तेभ्यो वो नमः । विकृतं रूपं येषां ते विरूपा नग्नमुण्डजटिलादयस्तेभ्यो वो नमः । विश्वं सर्वं नानाविधं रूपं येषां ते विश्वरूपास्तुरङ्गवदनहयग्रीवादयस्तेभ्यो वो नमः ॥ २५ ॥

## षड्विंशी ।

नमः॒ सेना॑भ्यः सेना॒निभ्य॑श्च वो॒ नमो॒ नमो॑ र॒थिभ्यो॑ अर॒थेभ्य॑श्च वो॒ नमो॒ नमः॑ क्ष॒त्तृभ्यः॑ संग्रही॒तृभ्य॑श्च वो॒ नमो॒ नमो॑ म॒हद्भ्यो॑ अर्भ॒केभ्य॑श्च वो॒ नमः॑ ॥२६॥

उ० नमः सेनाभ्यः । सेना चमूः । सेनानिभ्यश्च वो नमः । सेनां नयतीति सेनानीः । नमो रथिभ्यः रथा येषां सन्ति ते रथिनः । अरथेभ्यश्च वो नमः अरथा रथवर्जिता योद्धारः । नमः क्षत्तृभ्यः रथानामधिष्ठातारः क्षत्तारः संग्रहीतृभ्यश्च वो नमः । संग्रहीतारः सारथयः । नमो महद्भ्यः महान्तो जातिविद्यादिभिरुत्कृष्टाः । अर्भकेभ्यश्च वो नमः । अर्भका अल्पकाः प्रमाणादिभिः ॥ २६ ॥

म० सेनारूपेभ्यो नमः । सेनां नयन्ति ते सेनान्यः सेनापतयस्तद्रूपेभ्यो वो नमः । ह्रस्वश्छान्दसः । रथाः सन्ति येषां ते रथिनः तेभ्यो नमः । नास्ति रथो येषां ते अरथास्तेभ्यो वो नमः । 'क्षि निवासगत्योः' तुदादिः । क्षियन्ति निवसन्ति रथेष्विति क्षत्तारः । यद्वा 'क्षिप प्रेरणे' क्षिपन्ति प्रेरयन्ति सारथीनिति क्षत्तारः रथाधिष्ठातारः 'नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृभ्रातृजामातृपितृदुहितृ' इत्यौणादिकसूत्रेण तृच्प्रत्ययान्तो निपातः। तेभ्यो नमः । संगृह्णन्त्यश्वानिति संग्रहीतारः सारथयः 'ण्वुल्तृचौ' ( पा० ३।१।१३३ ) इति तृच् । तेभ्यो नमः । महान्तो जातिविद्यादिभिरुत्कृष्टास्तेभ्यो नमः । अर्भकाः प्रमाणादिभिरल्पाः तेभ्यो नमः ॥ २६ ॥

## सप्तविंशी ।

नम॒स्तक्ष॑भ्यो रथका॒रेभ्य॑श्च वो॒ नमो॒ नमः॒ कुला॒लेभ्यः॑ क॒र्मारे॑भ्यश्च वो॒ नमो॒ नमो॑ नि॒षादे॑भ्यः

पुञ्जिष्टेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥ २७ ॥

उ० नमः तक्षभ्यो रथकारेभ्यश्च वो नमः । रथकारो रथं करोतीति तक्ष्णो विशेषएव । नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः । कुलालाः कुम्भकाराः । कर्मारा लोहकाराः । नमो निषादेभ्यः पुञ्जिष्टेभ्यश्च वो नमः । निषादा मात्सिकाः । पुञ्जिष्टा जात्यन्तरसंबद्धाः पुल्कसादयः । नमः श्वनिभ्यः । शुनो नयन्तीति श्वन्यः तेभ्यः श्वनिभ्यः । नयतेर्ह्रस्वत्वं छान्दसम् । श्वगणिका उच्यन्ते । मृगयुभ्यश्च वो नमः । 'इदंयुरिदंकामयमानः' इति यास्कः । मृगान् कामयन्तीति मृगयवः पापर्द्धिकाः तेभ्यो मृगयुभ्यः ॥ २७ ॥

म० तक्षाणः शिल्पजातयस्तेभ्यो नमः । रथं कुर्वन्तीति रथकाराः सूत्रधारविशेषास्तेभ्यो वो नमः । कुलालाः कुम्भकारास्तेभ्यो नमः । कर्मारा लोहकारास्तेभ्यो वो नमोऽस्तु । निषादा गिरिचरा मांसाशिनो भिल्लास्तेभ्यो नमः । पुञ्जिष्टाः पक्षिपुञ्जघातकाः पुल्कसादयस्तेभ्यो वो नमः । शुनो नयन्ति ते श्वन्यः श्वकण्ठबद्धरज्जुधारकाः श्वगणिनः । नयतेर्ह्रस्व आर्षः तेभ्यो नमः । मृगान् कामयन्ते ते मृगयवः । 'इदंयुरिदंकामयमानः' ( निरु० ६ । ३१ ) इति यास्कोक्तेः । 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) इति क्यच् 'क्यचि च' ( पा० ७ । ४ । ३३ ) इति प्राप्तस्येत्वस्य 'न छन्दस्यपुत्रस्य' ( पा० ७ । ४ । ३५ ) इति निषेधः । मृगयवो लुब्धकास्तेभ्यो वो नमः ॥ २७ ॥

## अष्टाविंशी ।

नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥ २८ ॥

उ० नमः श्वभ्यः श्वपतिभ्यश्च वो नमः इत्युभयतोनमस्काराः समाप्ताः । नम इषुमद्भ्यो धन्वायिभ्यश्च वो नम इत्यारभ्य ये वःशब्दा अतिक्रान्ताः ते पूजावचना वा न युष्मदादेशाः । इतउत्तरं रुद्रनामानि । नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च । नमो नीलग्रीवाय च शितिकण्ठाय च । नीलग्रीवः कृष्णग्रीवः । शितिकण्ठः श्वेतकण्ठः ॥ २८ ॥

म० श्वानः कुकुरास्तद्रूपेभ्यो नमः । शुनां पतयः श्वपतयः श्वपालकास्तेभ्यो वो युष्मभ्यं नमः । श्वपतयः किरातवेषस्य रुद्रस्यानुचराः । नम इषुमद्भ्यो धन्वायिभ्य इत्यारभ्य ( क० २२ ) ये वः शब्दास्ते पूजावाचका वा न युष्मदादेशाः । इत्युभयतोनमस्कारमन्त्राः समाप्ताः ॥ ॥ अथ नमस्कारोपक्रमानाम मन्त्रा उच्यन्ते । भवन्त्युत्पद्यन्ते जन्तवोऽस्मादिति भवस्तस्मै नमः । रुत् दुःखं द्रावयति नाशयति रुद्रस्तस्मै नमः । शृणाति हिनस्ति पापमिति शर्वस्तस्मै नमः । पशून् अज्ञान् पाति रक्षतीति पशुपतिस्तस्मै नमः । विषभक्षणेन नीला नीलवर्णा ग्रीवा कण्ठैकदेशो यस्य स नीलग्रीवस्तस्मै नमः । शितिः श्वेतः कण्ठो नीलातिरिक्तभागो यस्य शितिकण्ठस्तस्मै नमः । 'शिती धवलमेचकौ' ॥ २८ ॥

## एकोनत्रिंशी ।

नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥

उ० नमः कपर्दिने च व्युप्तकेशाय च । कपर्दी जटामुकुटधारी । व्युप्ता मुण्डिताः केशा यस्य व्युप्तकेशः । नमः सहस्राक्षाय च शतधन्वने च बह्वक्षाय बहुधनुष्काय च । नमो गिरिशयाय च शिपिविष्टाय च गिरौ शेत इति गिरिशयः । शिपिविष्टः शिप इव निर्वेष्टितः खलतिरित्यभिधेयः प्रजननवत् वेष्टनरहितः । यद्वा उदितमात्र आदित्य उच्यते । शिपिशब्देन च बालरश्मय उच्यन्ते । नमो मीढुष्टमाय चेषुमते च । मीढुष्टमः सेक्तृतमः युवा परिणामरहित इत्यर्थः । इषुमान् इषुसंयुक्तः ॥ २९ ॥

म० कपर्दो जटाजूटोऽस्यास्तीति कपर्दी तस्मै नमः । पाशुपतादिवेषेण । चकाराः सर्वे समुच्चयार्था ज्ञेयाः । व्युप्ता मुण्डिताः केशा यस्य स व्युप्तकेशस्तस्मै नमः । इत्यादिरूपेण मुण्डितत्वम् । सहस्रमक्षीणि यस्य सहस्राक्षस्तस्मै इन्द्ररूपाय । नमः । शतं धनूंषि यस्य शतधन्वा 'धनुषश्च' ( पा० ५ । ४ । १३२ ) इत्यानङ् तस्मै बहुधनुर्धारिणे नमः । गिरौ कैलासे शेतेऽसौ गिरिशयस्तस्मै नमः । शिपिविष्टाय विष्णुरूपाय 'विष्णुः शिपिविष्टः' इति श्रुतेः । यद्वा शिपिषु पशुषु विष्टः प्रविष्टः 'पशवो वै शिपिः' इति श्रुतेः । सर्वप्राणिष्वन्तर्यामितया स्थित इत्यर्थः । यद्वा 'यज्ञो वै शिपिः' यज्ञेऽधिदेवतात्वेन प्रविष्टः शिपिरादित्यो वा मण्डलाधिष्ठातेत्यर्थः । तस्मै नमः । शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवतीति यास्कोक्तेः अतिशयेन मीढ्वान् मेघरूपेण सेक्ता मीढुष्टमः तस्मै नमः । इषवो बाणाः सन्त्यस्येतीषुमान् तस्मै नमः ॥ २९ ॥

## त्रिंशी ।

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च ॥ ३० ॥

उ० नमो ह्रस्वाय च वामनाय च । रूपतोनमस्काराः । ह्रस्वो लघुप्रमाणः । वामनः संकुचितावयवः । नमो बृहते च वर्षीयसे च । बृहते महते वर्षीयसे वृद्धतराय च सवृधे च । वृद्धः प्रसिद्धः सवृधः तेन समानवयाः । नमोऽग्र्याय च प्रथमाय च । अग्रेभवोऽग्र्यः प्रथमो मुख्यः ॥३०॥

**म०** रूपतो नमस्काराः । ह्रस्वोऽल्पशरीरस्तस्मै नमः । वामनः सङ्कुचितावयवस्तस्मै नमः । बृहन् प्रौढाङ्गस्तस्मै नमः । वर्षीयानतिशयेन वृद्धः 'प्रस्थस्फ–' ( पा० ६ । ४ । १५७ ) इत्यादिना वर्षादेशः तस्मै नमः । वृद्धो वयसाधिकः तस्मै नमः । वर्धन्ते विद्याविनयादिगुणैस्ते वृद्धाः पण्डिताः क्विप् तैः सह वर्तेत इति सवृत् तस्मै नमः । जगतामग्रे भवोऽग्र्यस्तस्मै नमः । 'अग्राद्यत्' । सर्वत्र मुख्यः प्रथमस्तस्मै नमः ॥ ३० ॥

## एकत्रिंशी ।

नम॑ आ॒शवे॑ चाजि॒राय॑ च॒ नमः॒ शीघ्र्या॑य च॒ शीभ्या॑य च॒ नम॑ ऊ॒र्म्या॑य चावस्व॒न्या॑य च॒ नमो॑ नादे॒याय॑ च॒ द्वीप्या॑य च ॥ ३१ ॥

**उ०** नम आशवे चाजिराय च शीघ्रनामनी । आशुरध्वनो व्यापारः । अजिरः 'अज गतिक्षेपणयोः' । अजतीत्यजिरः । नमः शीघ्र्याय च शीभ्याय च । शीघ्रशीभशब्दौ क्षिप्रनामनी । एवं तत्र भव इति छान्दसो यत्प्रत्ययः अधिष्ठातृदेवतावचनः । उपरितनेष्वेवमेव योज्यम् । नम ऊर्म्याय चावस्वन्याय च । ऊर्मिर्जलकल्लोलः । अवाचीनमुदकस्य गच्छतः स्वनो ध्वनिः अवस्वनः । नमो नादेयाय च द्वीप्याय च । नद्यां भवः द्वीपे भवः । द्वीपो नद्या मध्ये उदकरहितः प्रदेशः ॥ ३१ ॥

**म०** अश्नुते जगद्व्याप्नोतीत्याशुस्तस्मै नमः । अजति गच्छतीत्यजिरो गतिशीलस्तस्मै नमः । शीघ्रे वेगवद्वस्तुनि भवः शीघ्र्यः । 'तत्र भवः' ( पा० ४ । ३ । ५३ ) इति यत्सर्वत्र । 'शीभृ कत्थने' शीभते कथ्यते इति शीभः आत्मश्लाघी पचाद्यच् तत्र भवः शीभ्यः । शीभो जलप्रवाहो वा शीभः क्षिप्रो वा तत्र भवाय नमः । ऊर्मिषु कल्लोलेषु भव ऊर्म्यः तस्मै नमः । अवगतः स्वनो यस्मात्तदवस्वनं स्थिरजलम् । यद्वा अव नीचैर्गर्तादौ स्वनोऽवस्वनस्तत्र भवाय । नद्यां भवो नादेयस्तस्मै नमः । 'स्त्रीभ्यो ढक्' ( पा० ४ । १ । १२० ) । द्वीपे जलान्तर्वर्तिनिर्जलभूमौ भवो द्वीप्यस्तस्मै नमः ॥ ३१ ॥

## द्वात्रिंशी ।

✓ नमो॑ ज्ये॒ष्ठाय॑ च कनि॒ष्ठाय॑ च॒ नमः॑ पूर्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मध्य॒माय॑ चापगल्भाय॑ च॒ नमो॑ जघ॒न्या॑य च बुध्न्या॑य च ॥ ३२ ॥

**उ०** नमो ज्येष्ठाय च कनिष्ठाय च । वयोवस्थाभिप्रायाः षट्नमस्काराः । नमः पूर्वजाय चापरजाय च । पूर्वो जातः पूर्वजः अपरो जातः अपरजः । नमो मध्यमाय चापगल्भाय च । मध्ये भवो मध्यमः अपगतगर्भः अपगल्भः । एकगर्भान्तरितः । नमो जघन्याय च बुध्न्याय च । जघनः पश्चाद्भागः बुध्नमादिः तत्र भवः । इति द्वादश यत्प्रत्ययान्ता रुद्राः ॥ ३२ ॥

**म०** वयोवस्थाविशेषाभिधायकाः षट् नमस्काराः । अत्यन्तं प्रशस्यो ज्येष्ठस्तस्मै नमः । 'ज्य च' ( पा० ५ । ३ । ६१ ) इति प्रशस्यशब्दस्येष्ठनि ज्यादेशः । अत्यन्तं युवाल्पो वा कनिष्ठस्तस्मै नमः । 'युवाल्पयोः कनन्यतरस्याम्' ( पा० ५ । ३ । ६४ ) इति कनादेशः । पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजस्तस्मै नमः । अपरस्मिन् काले प्रलये कालाग्निरूपेण जातोऽपरजस्तस्मै नमः । मध्ये सृष्टिसंहारान्तर्देवतिर्यगादिरूपेण भवो मध्यमस्तस्मै नमः 'मध्यान्मः' । 'गल्भ धार्ष्ट्ये' गल्भनं गल्भो धार्ष्ट्यम् । अपगतो गल्भो यस्मात्सोऽपगल्भोऽप्रगल्भोऽव्युत्पन्नेन्द्रियस्तद्रूपाय नमः । एकगर्भान्तरितोऽपगल्भो वा जघनं गवादीनां पश्चाद्भागस्तत्र भवो जघन्यस्तस्मै नमः । बुध्ने वृक्षादिमूले भवो बुध्न्यस्तस्मै नमः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

नमः॒ सोभ्या॑य च प्रतिस॒र्या॑य च॒ नमो॒ याम्या॑य च॒ क्षेम्या॑य च॒ नमः॒ श्लोक्या॑य चावसा॒न्या॑य च॒ नम॑ उर्व॒र्या॑य च॒ खल्या॑य च ॥ ३३ ॥

**उ०** नमः सोभ्याय च प्रतिसर्याय च । सोभ इति गन्धर्वनगरं सुभमिति वा । अभिचारकर्मसरः प्रतिसरः प्रत्यभिचारः । नमो याम्याय च क्षेम्याय च । नमः श्लोक्याय चावसान्याय च । श्लोकः शब्दः । अवसानं समाप्तिः । नम उर्वर्याय च खल्याय च । उर्वरः सीतयोः सर्वसस्याढ्ययोः सीतयोर्लाङ्गलमार्गद्वयोरन्तरम् । खलो धान्यखलः ॥ ३३ ॥

**म०** सोभं गन्धर्वनगरं तत्र भवः सोभ्यः । यद्वा उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकः । 'पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकं' ( प्रश्नो० १ ) इत्याथर्वणश्रुतेः । तत्र भवः सोभ्यस्तस्मै नमः । प्रतिसरो विवाहोचितं हस्तसूत्रमभिचारो वा तत्र भवः प्रतिसर्यः तस्मै नमः । 'आहुः प्रतिसरं हस्तसूत्रे माल्यस्य मण्डने । व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षके तथा । कर्णे च मन्त्रभेदेऽपि' इति विश्वः । यमे भवो याम्यः पापिनां नरकार्तिदाता तस्मै नमः । क्षेमे कुशले भवः क्षेम्यस्तस्मै नमः । श्लोका वैदिकमन्त्रा यशो वा तत्र भवः श्लोक्यस्तस्मै नमः । अवसानं समाप्तिर्वेदान्तो वा तत्र भवोऽवसान्यस्तस्मै नमः । उर्वरा सर्वसस्याढ्या भूः तत्र धान्यरूपेण भव उर्वर्यस्तस्मै नमः । खलो धान्यविवेचनदेशः तत्र भवः खल्यस्तस्मै नमः । 'खलः कल्के भुवि धान्ये पूरे कर्णे जयेऽधमे' इत्युक्तेः ॥ ३३ ॥

## चतुस्त्रिंशी ।

नमो॒ वन्या॑य च॒ कक्ष्या॑य च॒ नमः॑ श्र॒वाय॑ च प्रतिश्र॒वाय॑ च॒ नम॑ आ॒शुषे॑णाय चा॒शुर॑थाय च॒ नमः॒ शूरा॑य चावभे॒दिने॑ च ॥ ३४ ॥

उ० नमो वन्याय च कक्ष्याय च । वनं वृक्षसमूह उदकं वा । कक्षो नदीकक्षः पर्वतकक्षो वा । नमः श्रवाय च प्रतिश्रवाय च श्रवः शब्दः प्रतिश्रवः प्रतिशब्दः । नम आशुषेणाय चाशुरथाय च । आशुसेनः शीघ्रसेनः । आशुरथः शीघ्ररथः । नमः शूराय चावभेदिने च । शूरः शवतेः । अवाचीनं भेत्तुं शीलमस्येत्यवभेदी ॥ ३४ ॥

म० वने वृक्षादिरूपेण भवो वन्यस्तस्मै नमः । वनं वृक्षौघो जलं वा । 'वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने' । कक्षं तृणं वल्ली वा तत्र भवः कक्ष्यस्तस्मै नमः । 'कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे' । श्रूयत इति श्रवः शब्दस्तद्रूपाय नमः । प्रतिश्रवः प्रतिशब्दस्तद्रूपाय नमः । आशुः शीघ्रा सेना यस्य स आशुषेणः तस्मै नमः । आशु शीघ्रो रथो यस्यासावाशुरथस्तस्मै नमः । शूराय युद्धधीराय नमः । अवभिनत्ति रिपून्नीचैर्विदारयतीत्यवभेदी तस्मै नमः ॥ ३४ ॥

## पञ्चत्रिंशी ।

नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च॒ नमो॑ व॒र्मिणे॑ च वरू॒थिने॑ च॒ नम॑: श्रु॒ताय॑ च श्रुत॒सेनाय॑ च॒ नमो॑ दुन्दु॒भ्या॒य चाहन॒न्या॒य च ॥ ३५ ॥

उ० नमो बिल्मिने च कवचिने च । बिल्ममस्यास्तीति बिल्मी । बिल्मं भासनम् उत्तराङ्गमुच्यते । कवचं पट्टस्यूतं कर्पासगर्भम् । नमो वर्मिणे च वरूथिने च । वर्म लौहं वरूथं हस्तिन उपरि गृहाकारः कोष्टकः । नमः श्रुताय च श्रुतसेनाय च । श्रुताय सर्वलोकविदिताय । श्रुतसेना प्रसिद्धा च सूर्यस्य । नमो दुन्दुभ्याय च आहनन्याय च । दुन्दुभौ भवः दुन्दुभ्यः आहनने भव आहनन्यः ॥ ३५ ॥

म० बिल्मं शिरस्त्राणमस्यास्तीति बिल्मी तस्मै नमः । पटस्यूतं कर्पासगर्भं देहरक्षकं कवचं तदस्यास्तीति कवची तस्मै नमः । लोहमयं शरीररक्षकं वर्म तदस्यास्तीति वर्मी तस्मै नमः । गजोपरिस्थो गजाकारः कोष्ठो वरूथः रथगुप्तिर्वा सोऽस्यास्ति वरूथी तस्मै नमः । वरूथं तु तनुत्राणे रथगोपनवेश्मनोः । श्रुताय प्रसिद्धाय नमः । श्रुता प्रसिद्धा सेना यस्य स श्रुतसेनः तस्मै । दुन्दुभौ भेर्यां भवो दुन्दुभ्यः तस्मै । दुन्दुभिस्तु भेर्यां दितिसुते विषे । आहन्यते ताड्यतेऽनेनेत्याहननं वाद्यसाधनं दण्डादि तत्र भव आहनन्यः तस्मै ॥ ३५ ॥

## षट्त्रिंशी ।

नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑ चेषुधि॒मते॑ च॒ नम॑स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒ नम॑: स्वायु॒धाय॑ च सु॒धन्व॑ने च ॥ ३६ ॥

उ० नमो धृष्णवे च प्रमृशाय च धृष्णुः प्रगल्भः । प्रमृशः सर्वं परिमृशति । पण्डित इत्यर्थः । नमो निषङ्गिणे चेषुधिमते च । निषङ्गं खड्गं तदस्यास्तीति निषङ्गी इषुधिमान् । इषवः धीयन्ते अस्मिन्निति इषुधिः । नमः तीक्ष्णेषवे चायुधिने च । तीक्ष्णा इषवोऽस्य विद्यन्त इति तीक्ष्णेषुः । आयुधमस्यास्तीत्यायुधी । नमः स्वायुधाय च सुधन्वने च । शोभनायुधः स्वायुधः । शोभनधनुः सुधन्वा ॥ ३६ ॥

म० धृष्णोतीत्येवंशीलो धृष्णुः प्रगल्भः तस्मै । प्रमृशति विचारयति प्रमृशः पण्डितः तस्मै । 'इगुपध–' ( पा० ३ । १ । १३५ ) इति कः । निषङ्गिणे खड्गयुताय नमः । इषुधिमते तूणयुताय नमः । तीक्ष्णा असह्या इषवो बाणा यस्य सः तीक्ष्णेषुः तस्मै । आयुधान्यन्यान्यपि सन्तीति आयुधी तस्मै । शोभनमायुधं त्रिशूलं यस्य स स्वायुधः तस्मै । शोभनं धनुः पिनाकं यस्य स सुधन्वा तस्मै ॥ ३६ ॥

## सप्तत्रिंशी ।

नम॑: स्रु॒त्या॑य च॒ पथ्या॑य च॒ नम॑: का॒ट्या॑य च॒ नीप्या॑य च॒ नम॑: कु॒ल्या॑य च स॒रस्या॑य च॒ नमो॑ नादे॒याय॑ च वैश॒न्ताय॑ च ॥ ३७ ॥

उ० नमः स्रुत्या च पथ्याय च । नद्या एकदिशोदकवाहिनी स्रुतिस्तत्रभवः स्रुत्यः । पथि भवः पथ्यः । नमः काट्याय च नीप्याय च । काटे भवः काट्यः । काटः कूपः । नीचैर्यन्ति यत्रापः स नीपः तत्र भवो नीप्यः । नमः कुल्याय च सरस्याय च । कुल्यायां भवः कुल्यः । सरसि भवः सरस्यः । नमो नादेयाय च वैशन्ताय च । नद्यां भवो नादेयः । 'स्त्रीभ्यो ढक्' । वेशन्तः तडागः तत्र भवो वैशन्तः ॥ ३७ ॥

म० स्रुतिः क्षुद्रः क्षुद्रमार्गो वा तत्र भवः स्रुत्यः तस्मै । पन्था रथाश्वादियोग्यो मार्गस्तत्र भवः पथ्यः तस्मै । कुत्सितमटति जनो यत्रेति काटो विषममार्गः तत्र भवः काट्यः तस्मै । काटः कुल्याप्रदेशो वा । नीचैः पतन्त्यापो यत्रेति नीपो गिर्यधोभागः । 'ऋक्पूरब्धूःपथाम्–' ( पा० ५ । ४ । ७४ ) इत्यप्रत्ययः 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' ( पा० ६ । ३ । ९७ ) इत्यप्शब्दस्येकारः तत्र भवो नीप्यः तस्मै । कुल्या कृत्रिमा सरित्तत्र भवः कुल्यः, कुलेषु देहेषु वान्तर्यामिरूपेण भवः कुल्यः तस्मै । 'कुलं देहेऽन्वये गणे' । सरसि भवः सरस्यः तस्मै । नद्यां भवो नादेयः तस्मै नदीजलरूपाय नमः । वेशन्तोऽल्पसरः तत्र भवो वैशन्तः तस्मै ॥ ३७ ॥

## अष्टत्रिंशी ।

नम॑: कू॒प्या॑य चाव॒ट्या॑य च॒ नमो॒ वीध्र्या॑य चात॒प्या॑य च॒ नमो॒ मेघ्या॑य च विद्यु॒त्या॑य च॒ नमो॒ वर्ष्या॑य चाव॒र्ष्याय॑ च ॥ ३८ ॥

उ० नमः कूप्याय चावट्याय च । कूपे भवः कूप्यः । अवटे भवः अवट्यः । अवटो गर्तः । नमो वीध्र्याय चातप्याय

च । 'इन्धी दीप्तौ' विगतदीप्तिर्वीध्रः घनागमः तत्र भवो वीध्र्यः । आतपे भव आतप्यः । नमो मेघ्याय च विद्युत्याय च । निगदव्याख्यानम् । नमो वर्ष्याय चावर्ष्याय च । वर्षे भवः वर्ष्यः । अवर्षे भवः अवर्ष्यः ॥ ३८ ॥

**म०** कूपे भवः कूप्यः तस्मै । अवटो गर्तस्तत्र भवोऽवट्यः तस्मै । 'इन्धी दीप्तौ' विशेषेण इध्रं वीध्रं निर्मलं शरदभ्रं तत्र भवो वीध्र्यः । यद्वा विगत इध्रो दीप्तिर्यस्मात्स वीध्रो घनागमः तत्र भवाय नमः । आतपे भव आतप्यः तस्मै । मेघे भवो मेघ्यः तस्मै । विद्युति भवो विद्युत्यः तस्मै । वर्षे वृष्ट्यां भवो वर्ष्यः तस्मै । अवर्षे वृष्टिप्रतिबन्धे भवोऽवर्ष्यः तस्मै ॥ ३८ ॥

## एकोनचत्वारिंशी ।

नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥ ३९ ॥

**उ०** नमो वात्याय च रेष्म्याय च । वाते भवो वात्यः । रिषतिर्हिंसार्थः । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । रेष्म । तत्र भवो रेष्म्यः । नमो वास्तव्याय च वास्तुपाय च वास्तु गृहं तत्र भवो वास्तव्यः वास्तुपतिर्वास्तुपः । नमः सोमाय च रुद्राय च नामतो नमस्काराः । नमस्ताम्राय च वर्णतो नमस्काराः ॥ ३९ ॥

**म०** वाते भवो वात्यः तस्मै । रिष्यन्ते नश्यन्ति भूतान्यत्रेति रेष्मा प्रलयकालः । 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति मनिन् । तत्र भवो रेष्म्यः । प्रलयेऽपि विद्यमानायेत्यर्थः । वास्तुनि गृहभुवि भवो वास्तव्यः तस्मै । 'वेश्मभूर्वास्तुरस्त्रियाम्' । वास्तुं गृहभुवं पाति वास्तुपः तस्मै । उमया सहितः सोमः तस्मै । रुत् दुःखं द्रावयति रुद्रो दुःखनाशकः तस्मै । ताम्रो रक्तवर्णः उदयद्रविरूपेण तस्मै । अरुण ईषद्रक्त उदयोत्तरकालीनार्करूपेण ॥ ३९ ॥

## चत्वारिंशी ।

नमः शंगवे च पशुपतये च नम उग्राय च भीमाय च नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥ ४० ॥

**उ०** नमः शंगवे च पशुपतये च । शं सुखं गवां करोतीति शंगुः । पशूनां पतिः । नम उग्राय च भीमाय च । उग्र उद्गूर्णः । भीमो भीषणः । नमोऽग्रेवधाय च दूरेवधाय च । अग्रेस्थितो हन्ति अग्रेवधः । दूरेस्थितो हन्ति दूरेवधः । नमो हन्त्रे च हनीयसे च । हन्तीति हन्ता हनीयान्हन्तृतमः । नमो वृक्षेभ्यो हरिकेशेभ्यः । हरितवर्णानि येषां वृक्षाणां पत्राणि त एवमुच्यन्ते । नमस्ताराय तारयति उत्तारयति संसारात् तारः ॥ ४० ॥

**म०** शं सुखं गमयति प्रापयति शङ्गुः, शं सुखरूपा गावो वाचो वेदरूपा यस्येति वा तस्मै । पशूनां प्राणिनां पतिः पालकः तस्मै । उग्र उद्गूर्णायुधः शत्रून् हन्तुं तस्मै । भीमः शत्रुभयोत्पादकः । अग्रे पुरो वर्तमानो हन्तीत्यग्रेवधः तस्मै । दूरे वर्तमानो हन्तीति दूरेवधः तस्मै । हन्तीति हन्ता तस्मै । लोके यो हन्ति तद्रूपेण रुद्र एव हन्तीत्यर्थः । अतिशयेन हन्ता हनीयान् तस्मै । 'तुरिष्ठेमेयःसु' ( पा० ६ । ५ । १५४ ) इति तृचो लोपः । प्रलये सर्वहन्तेत्यर्थः । हरयो हरिताः केशाः पत्ररूपा येषां तेभ्यो वृक्षेभ्यः कल्पतरुरूपेभ्यो नमः । तारयति संसारमिति तारः तस्मै ॥ ४० ॥

## एकचत्वारिंशी ।

नमः शंभवाय च मयोभवाय च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ४१ ॥

**उ०** नमः शंभवाय च मयोभवाय च । 'शम उपशमे' । अस्य । शं सुखनाम । शंभावयतीति शंभवः । यद्वा । शमा सुखेन वा भावयतीति शंभवः । शं च आनन्दरूपश्च । कालदेशानवच्छिन्नं भवनं तच्छक्तिश्च । आनन्दविज्ञान इत्यर्थः । इयमेव व्याख्या मयोभुवशब्दस्य । नमः शंकराय च मयस्कराय च । शं करोतीति शंकरः । मयः करोतीति मयस्करः । नमःशिवाय च शिवतराय च शिवः शान्तो निर्विकारः । शिवतरस्ततोऽप्यधिको निरतिशयसर्वज्ञबीजः ॥ ४१ ॥

**म०** शं सुखं भवत्यस्मादिति शंभवः । यद्वा शं सुखरूपश्चासौ भवः संसाररूपश्च मुक्तिरूपो भवरूपश्च तस्मै । मयः सुखं भवत्यस्मान्मयोभवः संसारसुखप्रदः तस्मै । शं लौकिकसुखं करोति शंकरः तस्मै । मयो मोक्षसुखं करोति मयस्करः तस्मै । स्रक्चन्दनादिरूपेण लौकिकसुखकारित्वं शास्त्रादिरूपेण ज्ञानप्रदत्वान्मोक्षसुखकारित्वमित्यर्थः । एताभ्यां पदाभ्यां साक्षात्सुखकारित्वं पूर्वपदाभ्यां तद्द्वारा कारयितृत्वमिति विवेकः । शिवः कल्याणरूपो निष्पापः तस्मै । शिवतरोऽत्यन्तं शिवो भक्तानपि निष्पापान्करोति तस्मै । अस्यां कण्डिकायां षड् यजूंषि पूर्वस्यां दशोक्तेः ॥ ४१ ॥

## द्विचत्वारिंशी ।

नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥ ४२ ॥

**उ०** नमः पार्याय चावार्याय च । पारे भवः पार्यः ।

अवारे भवः अवार्यः । नमः प्रतरणाय चोत्तरणाय च । प्रतरन्ति येन तत्प्रतरणम् उदकमुच्यते । उत्तरन्ति येन तदुत्तरणम् नौरुच्यते । नमस्तीर्थ्याय च कूल्याय च । तीर्थे भवस्तीर्थ्यः । कूले भवः कूल्यः । नमः शष्प्याय च फेन्याय च । प्ररूढानि तृणानि शष्पमुच्यन्ते तत्र भवः शष्प्यः । फेने भवः फेन्यः ॥ ४२ ॥

म० पारे संसाराब्धेः परतीरे जीवन्मुक्तरूपेण भवः पार्यः तस्मै । अवारे अर्वाक्तीरे संसारमध्ये संसारित्वेन भवोऽवार्यः तस्मै । 'पारावारे परार्वाची तीरे पात्रं यदन्तरम्' इति कोषः । प्रकर्षेण मन्त्रजपादिना पापतरणहेतुः प्रतरणः तस्मै । उत्कृष्टेन तत्त्वज्ञानेन संसारोत्तरणहेतुरुत्तरणः तस्मै । तीर्थे प्रयागादौ भवः तीर्थ्यः तस्मै । कूले तटे भवः कूल्यः तस्मै । शष्पं बालतृणं गङ्गातीरोत्पन्नं कुशाङ्कुरादि तत्र भवः शष्प्यः तस्मै । फेने डिण्डीरे भवः फेन्यः तस्मै ॥ ४२ ॥

## त्रिचत्वारिंशी ।

नमः सिकत्याय च प्रवाह्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च ॥ ४३ ॥

उ० नमः सिकत्याय च प्रवाह्याय च । सिकतासु भवः सिकत्यः । प्रवाहे भवः प्रवाह्यः । किꣳशिलाय च क्षयणाय च किमेतदुदकं हिमीभूतमुत शिलेति यत्र वितर्कः स किंशिलः । यद्वा किंशिलो उत कर्करः । क्षयन्त्यस्मिन्नाप इति क्षयणः । नमः कपर्दिने च पुलस्तये च । कपर्दी जटामुकुटधारी । पुरस्तिष्ठतीति पुलस्तिः शुभाशुभदिदृक्षया । नम इरिण्याय च प्रपथ्याय च । इरिणे भव इरिण्यः । निरुदकप्रदेश इरिणम् । प्रपथे भवः प्रपथ्यः ॥ ४३ ॥

म० सिकतासु भवः सिकत्यः तस्मै । प्रवाहे स्रोतसि भवः प्रवाह्यः तस्मै । कुत्सिताः क्षुद्राः शिलाः शर्करारूपाः पाषाणा यत्र प्रदेशे स किंशिलः तद्रूपाय नमः । क्षियन्ति निवसन्त्यापो यत्र स क्षयणः स्थिरजलप्रदेशः तस्मै । कपर्दो जटाजूटोऽस्यास्तीति कपर्दी तस्मै । पुरोऽग्रे तिष्ठति पुलस्तिः । थस्य तत्वं रस्य लत्वं च छान्दसम् । यद्वा पूर्षु शरीरेषु अस्तिः सत्ता यस्य स पुलस्तिः सर्वान्तर्यामी तस्मै । इरिणमूषरं वितृणदेशस्तत्र भव इरिण्यः तस्मै । प्रकृष्टः पन्थाः प्रपथो बहुसेवितो मार्गस्तत्र भवः प्रपथ्यः तस्मै ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥ ४४ ॥

उ० नमो व्रज्याय च गोष्ठ्याय च व्रजे भवो व्रज्यः । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः तत्र भवो गोष्ठ्यः । नमस्तल्प्याय च गेह्याय च । तल्पः शयनम् । गेहं गर्भगृहम् 'तत्र भवः' इति तद्धितः । नमो हृदय्याय च निवेष्प्याय च । हृदयेभवोहृदय्यः निवेष्पे भवो निवेष्प्यः । निवेष्प आवर्तः भ्रमः । नमः काट्याय च गह्वरेष्ठाय च । काटे भवः काट्यः । काटः कूपः । गह्वरे तिष्ठति गह्वरेष्ठः । गह्वरं महदुदकम् ॥ ४४ ॥

म० व्रजे गोसमूहे भवो व्रज्यः तस्मै । 'गोष्ठाध्वनिवहा व्रजाः' । गावस्तिष्ठन्ति यत्रेति तद्गोष्ठं तत्र भवो गोष्ठ्यस्तस्मै । तल्पं शय्या तत्र भवस्तल्प्यस्तस्मै । गेहे गृहे भवो गेह्यस्तस्मै । हृदये भवो हृदय्यो जीवस्तस्मै । निवेष्पे आवर्तो नीहारजलं वा तत्र भवो निवेष्प्यः तस्मै । कुत्सितमटन्ति गच्छन्ति जना यत्र स काटो दुर्गारण्यदेशः काटः कूपो वा तत्र भवः काट्यः तस्मै । गह्वरे विषमे गिरिगुहादौ गम्भीरे जले वा तिष्ठति गह्वरेष्ठः तस्मै । 'गह्वरं बिलदम्भयोः' ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

नमः शुष्क्याय च हरित्याय च नमः पाꣳसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥ ४५ ॥

उ० नमः शुष्क्याय च हरित्याय च । शुष्के भवः शुष्क्यः । हरिते भवो हरित्यः हरितमार्द्रम् । नमः पाꣳसव्याय च रजस्याय च । पांसुषु भवः पांसव्यः । रजसि भवो रजस्यः । नमो लोप्याय चोलप्याय च । लोपे भवो लोप्यः । लुप्यत इति लोपः । उलपे भव उलप्यः । ऊर्ध्वं लप्यते उच्चार्यते नतु लोप इवाश्रवणमुपैति उलप्यः । नम ऊर्व्याय च । ऊर्वे भव ऊर्व्यः । ऊर्वो वडवाग्निः । स एव शोभनः सूर्वः तत्र भवः सूर्व्यः ॥ ४५ ॥

म० शुष्के काष्ठादौ भवः शुष्क्यः तस्मै । हरिते आर्द्रे काष्ठादौ भवः हरित्यः तस्मै । पांसुषु धूलिषु भवः पांसव्यः तस्मै । ओर्गुणः । रजसि गुणे परागे वा भवो रजस्यः तस्मै । 'रजो रेणुपरागयोः । स्त्रीपुष्पे गुणभेदे च' । लुप्यते नश्यति गमनादि यत्रेति लोपोऽगम्यप्रदेशस्तत्र भवो लोप्यः तस्मै । लोपः संहारो वा । उलपा बल्वजादितृणविशेषास्तत्र भव उलप्यः तस्मै । 'उलपस्तु गुल्मिनीतृणभेदयोः' । उर्व्यां भूमौ भव उर्व्यः तस्मै । दीर्घ आर्षः । ऊर्वो वडवानलो वा । शोभन ऊर्वः कल्पानलस्तत्र भवः सूर्व्यः तस्मै ॥ ४५ ॥

## षट्चत्वारिंशी ।

नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नमः इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥ ४६ ॥

उ० नमः पर्णाय च पर्णशदाय च । पर्णं प्रसिद्धम् ।

पर्णशब्दः पतितपर्णावस्थानवान् । नम उद्गुरमाणाय चाभिघ्नते च । उद्गुरमाण उद्यमनशीलः । अभिघ्नते अभिहननं कुर्वते । नम आखिदते च 'खिद दैन्ये' दैन्यभावं कुरुते । अभक्तानां प्रकर्षेण दैन्यभावं कुरुते निषिद्धसेविनाम् । नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः । इषून्ये कुर्वन्ति ते इषुकृतः तेभ्यो नमः । ये यूयं धनुष्कृतः तेभ्यो युष्मभ्यो नमः । युष्मदादेशयोगात्प्रत्यक्षा एते रुद्राः । समाप्तास्तिस्रोऽशीतयः । इदानीं रुद्राणां हृदयभूतानामग्निवायुसूर्याणां संबन्धीनि यजूंषि उच्यन्ते । नमो वः किरिकेभ्यः । नमो वः युष्मभ्यं ये यूयं किरिकाः कुर्वन्तीदं जगत् वृष्ट्याद्युपकारेण किरिकाः अग्निवायुसूर्याः देवानाᳬं हृदयेभ्यः रुद्राणां हृदयभूताः । नमो विचिन्वत्केभ्यः । विचिन्वन्ति पृथक्कुर्वन्ति धर्मकारिणं पापकारिणं च ते विचिन्वत्काः । नमो विक्षिणत्केभ्यः । विविधं क्षिण्वन्ति हिंसन्ति ये ते विक्षिणत्काः । नम आनिर्हतेभ्यः हन्तिर्गत्यर्थः । एते ह्यग्निवायुसूर्याः सर्गादावाभिमुख्येनैतेभ्यो लोकेभ्यो निर्गताः ॥ ४६ ॥

**म०** तरूणां पत्ररूपाय नमः । 'शद्लृ शातने' शदनं शदः शातनम् । यद्वा पर्णानि शीर्यन्ते शात्यन्ते पक्वानि पतन्ति यत्र स पर्णशदः पतितपर्णस्थितिदेशस्तद्रूपाय नमः । 'गुरी उद्यमे' 'तुदादिभ्यः शः' । उद्गुरते उद्यमं करोति उद्गुरमाण उद्यमी तस्मै । अभिहन्ति शत्रूनित्यभिघ्नन् तस्मै । आ समन्तात् खिद्यते दैन्यं करोत्यभक्तानामित्याखिदन् तस्मै । प्रकर्षेण खेदयति पापिन इति प्रखिदन् तस्मै । इषून् बाणान् कुर्वन्ति ते इषुकृतस्तेभ्यो रुद्रेभ्यो नमः । धनूंषि चापानि कुर्वन्ति ते धनुष्कृतः तेभ्यो वो युष्मभ्यं नमः । युष्मदादेशयोगात्प्रत्यक्षा एते रुद्राः । तिस्रोऽशीतयो रुद्राणां समाप्ताः । एवं चत्वारिंशदधिकशतद्वयमन्त्रैः रुद्रस्य सर्वात्मत्वमुक्तम् । अथ रुद्रेषु प्रधानभूतानामग्निवायुसूर्याणां संबन्धीनि चत्वारि यजूंष्युच्यन्ते । चतुर्णामादौ नमःशब्दाच्चत्वार्येव यजूंषि आद्यं चतुर्दशाक्षरं त्रीणि सप्ताक्षराणि तानि व्याहृतिसंज्ञानि । नमो व इति । देवानां हृदयेभ्यो रुद्राणां हृदयवत्प्रधानभूतेभ्योऽग्निवायुसूर्येभ्यो वो युष्मभ्यं नमः । 'देवानां हृदयेभ्य इत्यग्निर्वायुरादित्य एतानि ह तानि देवानाᳬं हृदयानि' ( ९ । १ । १ । २३ ) इति श्रुतेः । हृदयानीव हृदयानि यथाङ्गानां हृदयं प्रधानमेवमेते रुद्राणां प्रधाना इत्यर्थः । कीदृशेभ्यस्तेभ्यः । किरिकेभ्यः । वृष्ट्यादिद्वारा जगत् कुर्वन्ति किरिकास्तेभ्यः । 'एते हीदᳬं सर्वं कुर्वन्ति' ( ९ । १ । १ । २३ ) इति श्रुतेः । विचिन्वन्ति पृथक् कुर्वन्ति धार्मिष्ठं पापिष्ठं चेति विचिन्वत्कास्तेभ्योऽग्न्यादिभ्यो नमः । विविधं क्षिण्वन्ति हिंसन्ति पापमिति विक्षिणत्कास्तेभ्योऽग्न्यादिभ्यो नमः । आ समन्तान्निर्हता निर्गताः सर्गादौ लोकेभ्य इत्यानिर्हतास्तेभ्यो रुद्रावतारेभ्योऽग्निवायुसूर्येभ्यो नमः । हन्तिर्गत्यर्थः । तेभ्यस्तेभ्यस्त्रीणि ज्योतीᳬंष्यजायन्ताग्निर्योऽयं पवते सूर्यः' इति श्रुतेः ॥ ४६ ॥

## सप्तचत्वारिंशी ।

द्रापे॒ अन्ध॑सस्पते॒ दरि॑द्र॒ नील॑लोहित । आ॒सां प्र॒जाना॑मे॒षां प॑शू॒नां मा भेर्मा रोङ्मो च॑ नः॒ किंच॒नाम॑मत् ॥ ४७ ॥

**उ०** द्रापे अन्धसस्पते । सप्तकण्डिका एकरुद्रस्तुतिः । उपरिष्टाद्बृहती । हे द्रापे । 'द्रा कुत्सायां गतौ' । द्रापयतीति द्रापिः । अयथोक्तकारिणं कुत्सितां गतिं नयति । हे अन्धसस्पते सोमस्य पते । हे दरिद्र हे निष्परिग्रह । हे नीललोहित । 'नीलानि चास्यैतानि रूपाणि च' इति श्रुतिः । एवं संबोध्य रुद्रं अथेदानीमभयं याचते । आसां प्रजानाम् अस्मदीयानाम् एषां पशूनां मा त्वं भैषीः । मारोक् अविभ्यश्च मा त्वं रुजः मा भाङ्क्षीः । मो च नः किंचनाममत् । मा च नः अस्माकं किंचन अपत्यादिकम् । आममत् 'अम रोगे' । मा चास्माकमपत्यादिकं रोगसंयुक्तं कृथा इत्यर्थः ॥ ४७ ॥

**म०** सप्त ऋच एकरुद्रदेवत्याः आद्योपरिष्टाद्बृहती सप्ताष्टदशद्वादशार्णपादा । हे द्रापे, 'द्रा कुत्सायां गतौ' द्रापयति कुत्सितां गतिं पापिनः प्रापयतीति द्रापिः । हे अन्धसः सोमस्य पते पालक, 'अन्धसस्पत इति सोमस्य पत इत्येतत्' ( ९ । १ । १ । २४ ) इति श्रुतेः । हे दरिद्र निष्परिग्रह, अद्वितीयत्वादिति भावः । हे नीललोहित, कण्ठे नीलोऽन्यत्र लोहितः हे शिव, नोऽस्माकमासां प्रजानां पुत्रादीनामेषां पशूनां गवादीनां त्वं मा भेः भयं मा कुरु । 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुक् । मा रोक् 'रुजो भङ्गे' प्रजापशूनां भङ्गं मा कार्षीः । कर्मणि षष्ठ्यौ । च पुनर्नोऽस्माकं किंचन किमपि द्विपदचतुष्पदादिकं मो मा आममत् रुग्णं मा कार्षीत् । यद्वा रुग्णं मास्तु । 'अम् रोगे' लङि धातोरमागम आर्षः ॥ ४७ ॥

## अष्टचत्वारिंशी ।

इ॒मा रु॒द्राय॑ त॒वसे॑ कप॒र्दिने॑ क्ष॒यद्वी॑राय॒ प्रभ॑रामहे म॒तीः । यथा॒ शमस॑द्द्वि॒पदे॒ चतु॑ष्पदे॒ विश्वं॑ पु॒ष्टं ग्रामे॑ अ॒स्मिन्न॑नातु॒रम् ॥ ४८ ॥

**उ०** इमा रुद्राय । जगती । इमाः मतीः याभिः स्तूयते ता रुद्राय । तवसे महते बलवते वा । उभयत्र हि तवःशब्दः पठ्यते । कपर्दिने जटामुकुटधारिणे । क्षयद्वीराय क्षयन्ति वसन्त्यस्मिन्वीरा इति क्षयद्वीरस्तस्मै क्षयद्वीराय । प्रभरामहे प्रेरयामः । तथा वयं प्रेरयामः । यथा येन प्रकारेण । शमसत् द्विपदे चतुष्पदे । शं सुखम् असत् भवति द्विपदां चतुष्पदां च । यया विश्वं सर्वं पुष्टं समृद्धं ग्रामे अस्मिन् अनातुरम् आपद्रहितं स्वस्थं भवति ॥ ४८ ॥

**म०** कुत्सदृष्टा जगती । वयमिमा अस्मदीया मतीः बुद्धीः रुद्राय शंकराय प्रभरामहे प्रहरामहे समर्पयामः । रुद्रं स्मराम

इत्यर्थः । ह्रस्वहोर्भः । कीदृशाय । तवसे महते बलवते वा । उभयत्र तवःशब्दः पठितः । कपर्दिने जटिलाय । क्षयद्वीराय क्षयन्तो निवसन्तो वीराः शूरा यत्र स क्षयद्वीरः तस्मै । शूरायेत्यर्थः । क्षयन्तो नश्यन्तो वीरा रिपवो यस्मादिति वा । द्विपदे पुत्रादये चतुष्पदे गवादिपशवे । सप्तमी वा द्विपदचतुष्पदविषये । यथा येन प्रकारेण शं सुखमसत् भवति अस्मिन् ग्रामे अस्मिन् वासस्थाने विश्वं सर्वं प्राणिजातं पुष्टं समृद्धमनातुरं निरुपद्रवं स्वस्थं च यथा असत् तथा मतिं हरे समर्पयाम इत्यर्थः ॥४८॥

## एकोनपञ्चाशी ।

या ते॑ रुद्र शि॒वा त॒नूः शि॒वा वि॒श्वाहा॑ भेष॒जी । शि॒वा रु॒तस्य॑ भेष॒जी तया॑ नो मृड जी॒वसे॑ ॥४९॥

उ० या ते रुद्र । अनुष्टुप् । हे रुद्र, या तव शिवा शान्ता तनूः शरीरम् । शिवा । अतिशयार्थं पुनर्वचनम् । विश्वाहा भेषजी सर्वदा भिषक्त्वेन वर्तते । शिवा रुतस्य व्याधेः भेषजी । रुतशब्दो व्याधिवचनः । यद्वा शिवारुतस्य शिवाफेत्कृतस्य शब्दस्य भेषजी । अपशकुनहन्त्रीत्यर्थः । तया तन्वा नः अस्मान् मृड सुखय । जीवसे जीवनाय ॥ ४९ ॥

म० अनुष्टुप् । हे रुद्र, या ते तव ईदृशी तनूः शरीरं तया तन्वा नोऽस्मान् जीवसे जीवितुं मृड सुखय । कीदृशी । शिवा शान्ता अघोरा । विश्वाहा विश्वानि च तान्यहानि च विश्वाहा 'कालाध्वनोरत्यन्तसंयोगे' ( पा० २ । ३ । ५ ) इति द्वितीया । तस्या आकारः । सर्वेष्वहःसु सर्वदा शिवा कल्याणकारिणी भेषजी औषधरूपा संसारव्याधिनिवर्तिका । रुतस्य शारीरव्याधेः शिवा समीचीना भेषजी निवर्तकौषधिः ॥ ४९ ॥

## पञ्चाशी ।

परि॑ नो रु॒द्रस्य॑ हे॒तिर्वृ॑णक्तु॒ परि॑ त्वे॒षस्य॑ दुर्म॒तिर॑घा॒योः । अव॑ स्थि॒रा म॒घव॑द्भ्यस्तनुष्व॒ मीढ्व॑स्तो॒काय॒ तन॑याय मृड ॥ ५० ॥

उ० परि नः अनुष्टुप् । परिवृणक्तु परिवर्जयतु नः अस्मान् रुद्रस्य हेतिः आयुधं परित्वेषस्य दुर्मतिरघायोः परिवृणक्तु त्वेषस्य क्रोधिनो ज्वलितस्य दुर्मतिः दुष्टा मतिः । अघायोः अघं पापं यः कामयते परस्मै कर्तुं स अघायुः तस्य अघायोः । उत्तरोऽर्धर्चः प्रत्यक्षकृतो द्वितीयं वाक्यम् । अवस्थिरा मघवद्भ्यस्तनुष्व अवतनुष्व अवतारय शिथिलीकुरु । स्थिरा स्थिराणि धनूंषि । केभ्योऽर्थाय अवतनुष्व । मघवद्भ्यः मघं धनं हविर्लक्षणं येषामस्ति ते मघवन्तः तेभ्यो मघवद्भ्यो यजमानेभ्योऽर्थाय । ननु अयागशीलेभ्यः प्रतिषिद्धसेविभ्यः । किंच । हे मीढ्वः 'मिह सेचने' सेक्तः । मध्यस्थानो वा वृष्टिकर्मणा स्तूयते । युवा वा कृत्वा अपरिणामित्वेन स्तूयते । तोकाय तनयाय मृड । तोकाय पुत्राय तनयाय पौत्राय । मृड सुखय ॥ ५० ॥

म० त्रिष्टुप् । रुद्रस्य शिवस्य हेतिरायुधं नोऽस्मान् परिवृणक्तु परितो वर्जयतु । अस्मान्मा हन्त्वित्यर्थः । त्वेषस्य क्रुद्धस्य अघायोः द्रोग्धुर्दुर्मतिर्दुष्टमतिर्द्रोहबुद्धिश्चास्मान्परिवृणक्तु । त्वेषति क्रोधेन ज्वलति त्वेषस्तस्य पचाद्यच् । अघं पापं परस्येच्छति अघायुः 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) इत्यत्र परेच्छायामपि वाच्यमिति क्यच् । 'क्यचि च' ( पा० ७ । ४ । ३३ ) इतीत्वे प्राप्ते 'अश्वाघस्यात्' ( पा० ७ । ४ । ३७ ) इत्याकारः 'क्याच्छन्दसि' ( पा० ३ । २ । १७० ) इत्युप्रत्ययः । मेहति सिञ्चतीति मीढ्वान् हे मीढ्वः कामाभिवर्षुक, स्थिरा स्थिराणि दृढानि धनूंषि त्वमवतनुष्व अवतारय ज्यारहितानि कुरु । किमर्थं । मघवद्भ्यः । मघमिति धननाम । मघं हविर्लक्षणं धनं विद्यते येषां ते मघवन्तो यजमानास्तदर्थं । यजमानानां भयनिवृत्तये इत्यर्थः । किंच तोकाय पुत्राय तनयाय पौत्राय च मृड पुत्रं पौत्रं च सुखय । कर्मणि चतुर्थ्यौ ॥ ५० ॥

## एकपञ्चाशी ।

मीढु॑ष्टम॒ शिव॑तम शि॒वो नः॑ सु॒मना॑ भव । प॒र॒मे वृ॒क्ष आयु॑धं नि॒धाय॒ कृत्तिं॒ वसा॑न॒ आ च॑र॒ पिना॑कं॒ बिभ्र॒दा ग॑हि ॥ ५१ ॥

उ० मीढुष्टम । यवमध्या त्रिष्टुप् । हे मीढुष्टम सेक्तृतम । हे शिवतम, शिवो नः अस्माकं सुमनाः शोभनमनस्कश्च भव । किंच । परमे वृक्षे दूरदेशावस्थायिनि आयुधं निधाय स्थापयित्वा । कृत्तिं चर्म वसानः । आचर आचरणमनुष्ठानम् । पिनाकं बिभ्रत् पिनाकं कोदण्डः तं धारयन् आगहि आगच्छ ॥ ५१ ॥

म० इयमेकोना यवमध्या त्रिष्टुप् तृतीय एकादशार्णः चत्वारोऽन्येऽष्टार्णाः पञ्चपादा । अतिशयेन मीढ्वान् मीढुष्टमः । अत्यन्तं शिवः शिवतमः । हे मीढुष्टम अतिशयेन कामसेक्तः, हे शिवतम अत्यन्तं कल्याणकर्तः, नोऽस्मान् प्रति शिवः शान्तः सुमनाः हृष्टचित्तश्च भव । किंच परमे दूरस्थे उन्नते वा वृक्षे वटादौ आयुधं त्रिशूलादिकं निधाय संस्थाप्य कृत्तिं चर्म वसानः परिदधानः सन् आचर आगच्छ तपश्चरेति वा । आगच्छन्नपि पिनाकं धनुर्बिभ्रत् धारयन्सन् आगहि आगच्छ । ज्याशरहीनं धनुर्मात्रं शोभार्थं धारयन्नागच्छेत्यर्थः ॥ ५१ ॥

## द्विपञ्चाशी ।

विकि॑रिद्र॒ विलो॑हित॒ नम॑स्ते अस्तु भगवः । यास्ते॑ स॒हस्र॑ꣳ हे॒तयो॒ऽन्यम॒स्मन्नि व॑पन्तु॒ ताः ॥५२॥

विकिरिद्र । द्वे अनुष्टुभौ । हे विकिरिद्र विकिरन्निपून्द्रावयतीति विकिरिद्रः । विलोहित विगतकल्मषभाव । नमस्ते अस्तु हे भगवन् । एवमभिष्टुत्य अथ याचते । यास्तव सहस्रं

हेतयः। हेतिरायुधम्। सहस्रशब्दोऽनन्तवचनः। अन्यस्मिन्निवपन्तु ताः अस्मत्तोऽन्यं पुरुषं निवपन्तु ताः ॥ ५२ ॥

**म०** द्वे अनुष्टुभौ। विविधं किरिं घाताद्युपद्रवं द्रावयति नाशयति विकिरिद्रः हे विकिरिद्र, हे विलोहित, विगतं लोहितं कल्मषं यस्मात् स विलोहितः हे शुद्धस्वरूप, भगवः भगवन्, ते तुभ्यं नमोऽस्तु। हे रुद्र, ते तव याः सहस्रं हेतयोऽसंख्यान्यायुधानि ता हेतयोऽस्मदन्यमस्मद्व्यतिरिक्तं निवपन्तु घ्नन्तु ॥ ५२ ॥

## त्रिपञ्चाशी।

सहस्राणि सहस्रशो बाह्वोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि ॥ ५३ ॥

**उ०** सहस्राणि बहूनि सहस्रशः। 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्। असंख्यातानि सहस्राणि। अनन्तत्वप्रतिपादनार्थम्। बाह्वोस्तव हेतयः आयुधानि तासां हेतीनाम् ईशानः सन् हे भगवः, 'मतुवसोरुः संबुद्धौ छन्दसि' इति विसर्जनीयः। भगवन्। पराचीनानि पराञ्चितानि पराङ्मुखानि मुखा मुखानि कृधि कुरु ॥ ५३ ॥

**म०** हे भगवः भगवन्, षड्गुणैश्वर्यसंपन्न, तव बाह्वोर्हस्तयोः याः सहस्राणि सहस्रशः हेतयः सन्ति तासां हेतीनां मुखा मुखानि शल्यानि पराचीना अस्मत्तः पराङ्मुखानि त्वं कृधि कुरु। करोतेः शपि लुप्ते 'श्रुशृणुपृकृवृभ्यश्छन्दसि' ( पा० ६।४।१०२ ) इति हेर्धिः। कीदृशस्त्वम्। ईशानः ईष्ट इतीशानः जगन्नाथः। सहस्राणि सहस्रसंख्यानि धनुः खड्गः शूलं वर्मेत्यादिभेदेन सहस्रसंख्यत्वम्। सहस्रं सहस्रमिति सहस्रशः 'संख्यैकवचनाच्च वीप्सायाम्' ( पा० ५।४।४३ ) इति शस्प्रत्ययः। धनुरादीनां प्रत्येकं सहस्रसंख्यत्वमित्यर्थः ॥ ५३ ॥

## चतुःपञ्चाशी।

असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५४ ॥

**उ०** असंख्याता। बहुरुद्रदेवत्या दशानुष्टुभः। पृथिवीस्थानां नमस्कारः। असंख्यातानि सहस्राणि ये रुद्रा अधिभूम्याम् भूम्यामुपरि स्थिताः। तेषां सहस्रयोजने अध्वनि अवस्थितानामनेन हविषा अवधन्वानि तन्मसि अवतन्मसि अवतनुमः अवतारयामः। धन्वानि धनूंषि ॥ ५४ ॥

**म०** बहुरुद्रदेवत्या दशानुष्टुभोऽवतानसंज्ञाः। भूमिस्था रुद्रा उच्यन्ते। असंख्याता असंख्यातानि सहस्राणि अमिता ये रुद्रा भूम्यामधि भूमेरुपरि स्थिताः। तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रं योजनानि यस्मिंस्तादृशे पथि सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः अवतारयामः। अपज्यानि कुर्मस्तत्तो दूरं क्षिपाम इत्यर्थः ॥ ५४ ॥

## पञ्चपञ्चाशी।

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५५ ॥

**उ०** अस्मिन्महति मध्यस्थानाः। अस्मिन्महति अर्णवे। अर्णः उदकनामसु पठितम् वो मत्वर्थीयः। अर्णवति अन्तरिक्षे भवा रुद्राः। अधि उपरि स्थिताः ये तेषामिति कृतव्याख्यानम् ॥ ५५ ॥

**म०** अन्तरिक्षस्था रुद्रा उच्यन्ते। अस्मिन्नन्तरिक्षे अधिश्रित्य ये भवा रुद्राः स्थिताः तेषां धन्वान्यवतन्मसीति पूर्ववत्। कीदृशेऽन्तरिक्षे। महति विशाले। अर्णवे अर्णांसि जलानि विद्यन्ते यत्र तदर्णवम् मेघाधारत्वात्। 'अर्णसो लोपश्च' ( पा० ५।२।१०९-२ ) इति वप्रत्ययोऽन्तलोपश्च ॥ ५५ ॥

## षट्पञ्चाशी।

नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५६ ॥

**उ०** नीलग्रीवाः। द्युस्थाना उच्यन्ते। नीलग्रीवाः। कृष्णवचनो नीलशब्दः। शितिकण्ठाः शितिशब्दः श्वेतवचनः। दिवं द्युलोकं रुद्रा उपश्रिताः अधिष्ठिताः अध्याश्रिताः ये तेषामित्युक्तम् ॥ ५६ ॥

**म०** द्युस्था रुद्रा उच्यन्ते। ये रुद्रा दिवं द्युलोकमुपश्रिताः स्वर्गस्थास्तेषामिति पूर्ववत्। कीदृशाः। नीलग्रीवाः नीला श्यामा ग्रीवा येषां ते। शितिः श्वेतः कण्ठो येषां ते। विषग्रासात्कियान्कण्ठभागः कृष्णः कियाञ्श्वेत इत्यर्थः ॥ ५६ ॥

## सप्तपञ्चाशी।

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५७ ॥

**उ०** नीलग्रीवाः। पृथिव्या अधो ये रुद्रास्त उच्यन्ते। नीलग्रीवाः शितिकण्ठाः शर्वाः रुद्रा अधः क्षमाचराः अधः पृथिव्यां संचरन्ति ये तेषामिति कृतव्याख्यानम् ॥ ५७ ॥

**म०** पातालस्था रुद्रा उच्यन्ते। अधोभागे ये शर्वा रुद्राः क्षमाचराः क्षमाया भुवोऽधोभागे चरन्ति गच्छन्ति ते क्षमाचराः पाताले वर्तमानाः तेषामित्युक्तम्। नीलग्रीवाः शितिकण्ठा इति पूर्ववद्विशेषणे ॥ ५७ ॥

## अष्टपञ्चाशी।

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५८ ॥

**उ०** ये वृक्षेषु आसते शष्पिञ्जराः शष्पिञ्जरवर्णाः। नवप्ररूढानि तृणानि शष्पशब्देनोच्यन्ते। नीलग्रीवाः विलोहिताः विगतकलुषभावाः। विविधं वा लोहिताः। लोहित-

शब्देन वा धातवो लक्ष्यन्ते। त्वग्लोहितमज्जादिविमुक्तेत्यर्थः। तेषामित्युक्तम् ॥ ५८ ॥

म० ये रुद्रा वृक्षेषु अश्वत्थादिषु स्थिताः । कीदृशाः । शष्पिञ्जराः शष्पं बालतृणं तद्वत्पिञ्जरा हरितवर्णाः । नीलग्रीवाः नीला ग्रीवा येषां ते कण्ठे नीलवर्णाः । तथा केचन विलोहिताः विशेषेण रक्तवर्णाः । यद्वा विगतं लोहितं रुधिरं येषां ते । लोहितपदं मांसादीनामुपलक्षणम् । विगतलोहितादिधातवस्तेजोमयशरीरा इत्यर्थः । तेषामित्याद्युक्तम् ॥ ५८ ॥

## एकोनषष्टी ।

ये भू॒ताना॒मधि॑पतयो॒ विशि॑खासः कप॒र्दिनः॑ । तेषा॑ᳪ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥ ५९ ॥

उ० ये भूतानां प्राणिनामधिपतय ईश्वराः । विशिखासः विशिखा एव विशिखासः । सर्वमुण्डा इत्यर्थः । कपर्दिनः जटिलाः तेषामित्युक्तम् ॥ ५९ ॥

म० ये ईदृशा रुद्रास्तेषां धन्वानीति पूर्ववत् । कीदृशाः । भूतानां देवविशेषाणामधिपतयः अन्तर्हितशरीराः सन्तो मनुष्योपद्रवकरा भूतास्तेषां पालकाः । तत्र केचिद्विशिखासः विगता शिखा येषां ते । शिखाशब्दः केशोपलक्षकः । मुण्डितमुण्डा इत्यर्थः । अन्ये कपर्दिनः जटाजूटयुताः ॥ ५९ ॥

## षष्टी ।

ये प॒थां प॑थि॒रक्ष॑य ऐलबृ॒दा आ॑यु॒र्युधः॑ । तेषा॑ᳪ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥ ६० ॥

उ० ये पथाम् ये रुद्राः पथां मार्गाणाम् अधिपतय इति शेषः । ये च पथिरक्षयः पन्थानं ये रक्षन्ति । ऐलबृदाः इलानामन्नानां समूह ऐलम् तत् ये बिभ्रति ते ऐलभृतः सन्तोपि परोक्षवृत्तिना शब्देन ऐलबृदा इत्युच्यन्ते । आयुर्युधः आयुर्जीवनं पाणीकृत्य ये युध्यन्ति ते आयुर्युधः चौरादयो वा रुद्रा वा तेषामित्युक्तम् ॥ ६० ॥

म० ये चेदृशा रुद्रास्तेषामित्युक्तम् । कीदृशाः । पथां लौकिकवैदिकमार्गाणामधिपतय इति पूर्वेणानुषङ्गः । तथा पथिरक्षसः पथो मार्गास्तानेवान्यानपि रक्षन्ति पालयन्ति ते पथिरक्षसः । ऐलबृदाः इलानामन्नानां समूह ऐलमन्नसमूहः । यद्वा इला पृथ्वी तस्या इदमैलमन्नं तद्बिभ्रति ते ऐलभृतः त एव परोक्षवृत्त्या ऐलबृदा उच्यन्ते । अन्नैर्जन्तूनां पोषका इत्यर्थः । आयुर्युधः आयुषा जीवनेन युध्यन्ते ते यावज्जीवयुद्धकराः । यद्वा आयुर्जीवनं पणीकृत्य युध्यन्ते ते आयुर्युधः ॥ ६० ॥

## एकषष्टी ।

ये ती॒र्थानि॑ प्र॒चर॑न्ति सृ॒काह॑स्ता निष॒ङ्गिणः॑ । तेषा॑ᳪ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥ ६१ ॥

उ० ये तीर्थानि । ये रुद्राः तीर्थानि प्रयागप्रभृतीनि । प्रचरन्ति सृकाहस्ताः सृका इत्यायुधनाम । आयुधहस्ताः निषङ्गिणः खड्गिनः । तेषामित्युक्तम् ॥ ६१ ॥

म० ये रुद्रास्तीर्थानि प्रयागकाश्यादीनि प्रचरन्ति गच्छन्ति । कीदृशाः । सृकाहस्ताः सृकेत्यायुधनाम । सृका आयुधानि हस्ते येषां ते । निषङ्गिणः निषङ्गाः खड्गा विद्यन्ते येषां ते । सृकाहस्तत्वेऽपि निषङ्गिलोक्तिः खड्गप्राधान्याय ॥ ६१ ॥

## द्विषष्टी ।

येऽन्नेषु विवि॒ध्य॑न्ति॒ पात्रे॑षु॒ पिब॑तो॒ जना॑न् । तेषा॑ᳪ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥ ६२ ॥

उ० येऽन्नेषु ये अन्नेषु व्यवस्थिताः विविध्यन्ति अतिशयेन विध्यन्ति ताडयन्ति । येषामयमधिकारः अन्नस्य भक्षयितारो व्याधिभिर्गृहीतव्या इति । पात्रेषु व्यवस्थिताः पिबतो जनान् ये विविध्यन्ति तेषामित्युक्तम् ॥ ६२ ॥

म० ये रुद्रा अन्नेषु भुज्यमानेषु स्थिताः सन्तो जनान् विविध्यन्ति विशेषेण ताडयन्ति । धातुवैषम्यं कृत्वा रोगानुत्पादयन्तीत्यर्थः । तथा पात्रेषु पात्रस्थक्षीरोदकादिषु स्थिताः सन्तः पिबतः क्षीरादिपानं कुर्वतो जनान् विविध्यन्ति । अन्नोदकभोक्तारो व्याधिभिः पीडनीया इति तेषामधिकार इति भावः । तेषामिति पूर्ववत् ॥ ६२ ॥

## त्रिषष्टी ।

य ए॒ताव॑न्तश्च॒ भूया॑ᳪसश्च॒ दिशो॑ रु॒द्रा वि॑तस्थि॒रे । तेषा॑ᳪसहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥ ६३ ॥

उ० य एतावन्तश्च ये रुद्रा एतावन्तश्च भूयांसश्च बहुतराश्चोक्तेभ्यः । दिशः रुद्राः वितस्थिरे विष्टभ्य स्थिताः तेषामित्युक्तम् ॥ ६३ ॥

म० ये रुद्रा एतावन्तः एतत्प्रमाणं येषां ते अतिशयेन बहवो भूयांसः उक्तेभ्योऽतिबहवश्च ये रुद्राः दिशो दश वितस्थिरे आश्रिताः दश दिशो व्याप्य स्थिताः तेषां धनूंषि अवतन्मसीति पूर्ववत् ॥ ६३ ॥

## चतुःषष्टी ।

नमो॑ऽस्तु रु॒द्रेभ्यो॒ ये दि॒वि येषां॑ व॒र्षमिष॑वस्तेभ्यो॒ दश॒ प्राची॒र्दश॑ दक्षि॒णा दश॑ प्र॒तीची॒र्दशोदी॑ची॒र्दशो॒र्ध्वास्तेभ्यो॒ नमो॑ अस्तु॒ ते नो॑ऽवन्तु॒ ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥६४॥

उ० इत उत्तरं त्रीणि यजूंषि त्रिस्थानाश्च रुद्राः स्तूयन्ते। नमोस्तु । नमः अस्तु रुद्रेभ्यः ये दिवि द्युलोके स्थिताः येषां रुद्राणां वर्षं वृष्टिः इषवः आयुधस्थानीयम् तेभ्यो रुद्रेभ्यः दश प्राचीः अङ्गुलीः करोमि नमस्कारार्थम्

इति सर्वत्र संबध्यते। दश दक्षिणा दश प्रतीचीः दश उदीचीः दश ऊर्ध्वाः तेभ्यः नमः अस्तु ते नः अस्मान् अवन्तु रक्षन्तु ते नः अस्मान् मृडयन्तु सुखयन्तु। ते च संतर्पिताः सन्तः। यं पुरुषं द्विष्मः यश्च नः अस्मान् द्वेष्टि। तं तेषां रुद्राणां जम्भे मुखे दध्मः। यद्वा ते रुद्रा वयं च यं द्विष्मः यश्च नः द्वेष्टि। तमेषां रुद्राणां जम्भे दध्मः। समञ्जसमेव सर्वम्॥ ६४॥

**म०** कण्डिकात्रयात्मिकानि त्रीणि यजूंषि प्रत्यवरोहसंज्ञानि धृतिच्छन्दस्कानि बहुरुद्रदेवत्यानि। त्रिलोकस्था रुद्रा उच्यन्ते। दिवि द्युलोके ये रुद्राः वर्तन्ते येषां च रुद्राणां वर्षं वृष्टिरेव इषवः बाणाः। आयुधस्थानीया वृष्टिः। अतिवृष्ट्यादीतिभिः प्राणिनो घ्नन्ति तेभ्यो रुद्रेभ्यो नमो नमस्कारोऽस्तु। तेभ्यो रुद्रेभ्यो दशसंख्याकाः प्राचीः प्रागभिमुखा अङ्गुलीः कुर्वे इति शेषः। प्राङ्मुखाञ्जलिकरणे प्राच्यो दशाङ्गुलयो भवन्ति। दक्षिणाः दक्षिणाभिमुखाः दशाङ्गुलीः कुर्वे। प्रतीचीः प्रत्यङ्मुखाः दशाङ्गुलीः कुर्वे। उदीचीरुदङ्मुखाः दशाङ्गुलीः कुर्वे। ऊर्ध्वाः उपरि दशाङ्गुलीः कुर्वे। अञ्जलिं बद्ध्वा सर्वदिक्षु नमस्करोमीत्यर्थः। तेभ्यो रुद्रेभ्यो नमोऽस्तु अञ्जलिपूर्वं नतिरस्तु। 'दश वा अञ्जलेरङ्गुलयो दिशि दिश्येवैभ्य एतदञ्जलिं करोति' ( ९।१।१।३९ ) इति श्रुतेः। ते रुद्रा नोऽस्मानवन्तु रक्षन्तु। ते रुद्रा नोऽस्मान् मृडयन्तु सुखयन्तु। किंच ते रुद्रा यं पुरुषं द्विषन्तीति शेषः। वयंच यं द्विष्मो यस्य द्वेषं कुर्मः च। पुनर्यो नरो नोऽस्मान् द्वेष्टि तं पुरुषमेषां पूर्वोक्तानां रुद्राणां जम्भे दंष्ट्राकराले मुखे दध्मः स्थापयामः। अस्मद्विषमस्मद्द्वेष्यं च नरं रुद्राः पूर्वोक्ता भक्षयन्त्वित्यर्थः। अस्मांश्चावन्तु च॥ ६४॥

## पञ्चषष्टी।

नमो॑ऽस्तु रु॒द्रेभ्यो॒ ये॑ऽन्तरि॑क्षे॒ येषां॒ वात॒ इष॑वः॒स्तेभ्यो॒ दश॒ प्राची॒र्दश॑ दक्षि॒णा दश॑ प्र॒तीची॒र्दशोदी॑ची॒र्दशो॒र्ध्वास्तेभ्यो॒ नमो॑ अस्तु॒ ते नो॑ऽवन्तु॒ ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः॥ ६५॥

**म०** ये अन्तरिक्षे रुद्रा वर्तन्ते तेभ्यो रुद्रेभ्यो नमोऽस्तु। येषां रुद्राणां वात इषवः वायुरायुधस्थानीयः कुवातेनान्नं विनाश्य वातरोगं वोत्पाद्य जनान्घ्नन्ति। तेभ्योऽन्तरिक्षस्थेभ्यो वातेभ्यो रुद्रेभ्यो नमोऽस्तु। शिष्टं व्याख्यातम्॥ ६५॥

## षट्षष्टी।

नमो॑ऽस्तु रु॒द्रेभ्यो॒ ये पृ॑थि॒व्यां येषा॒मन्न॒मिष॑वः॒स्तेभ्यो॒ दश॒ प्राची॒र्दश॑ दक्षि॒णा दश॑ प्र॒तीची॒र्दशोदी॑ची॒र्दशो॒र्ध्वास्तेभ्यो॒ नमो॑ अस्तु॒ ते नो॑ऽवन्तु॒ ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः॥ ६६॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
षोडशोऽध्यायः॥ १६॥

**उ०** द्वे कण्डिके उक्तार्थे॥ ६५॥ ६६॥
इति उवटकृतौ मन्त्रभाष्ये षोडशोऽध्यायः॥ १६॥

**म०** ये पृथिव्यां रुद्रा वर्तन्ते येषामन्नमिषवः। अन्नमदनीयं वस्तु आयुधम् अयथान्नभक्षणे कदन्नभक्षणे चौर्ये वा प्रवर्त्य रोगमुत्पाद्य जनान् घ्नन्ति तेभ्यः पृथिवीस्थेभ्योऽन्नायुधेभ्यो रुद्रेभ्यो नमोऽस्तु। तेऽस्मानवन्त्वित्यादि पूर्ववत्। एते प्रत्यवरोहमन्त्राः। 'अथ प्रत्यवरोहान् जुहोति' ( ९।१।१।३२ ) इति व्यवहाराय संज्ञाकरणम्॥ ६६॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
शतरुद्रियहोमोऽयं षोडशोऽध्याय ईरितः॥ १६॥

---

# सप्तदशोऽध्यायः।

## तत्र प्रथमा।

अश्म॒न्नूर्जं॒ पर्व॑ते शिश्रिया॒णाम॒द्भ्य ओष॑धीभ्यो॒ वन॒स्पति॑भ्यो॒ऽअधि॒ संभृ॑तं॒ पयः॑। तां न॒ इष॒मूर्जं॑ धत्त मरुतः सꣳररा॒णा अश्मँ॑स्ते॒ क्षुन्मयि॑ त॒ ऊर्ग्यं द्वि॒ष्मस्तं ते॒ शुगृ॑च्छतु॥ १॥

**उ०** अग्निं परिषिञ्चति। अश्मन्नूर्जम्। यजुर्मारुतम्। तान्न इषमूर्जं धत्तेति तदःश्रवणाद्यदोऽध्याहारः कर्तव्यः। या अश्मन् अशनवति मेघे ऊर्जम् उदकलक्षणम् शिश्रियाणाम् आश्रिताम्। या च पर्वते पर्वतवति मेघे। शिश्रियाणामाश्रिताम् उदकलक्षणो वा। या च अद्भ्यः अधि सकाशात् ओषधीभ्यः अधि सकाशात् वनस्पतिभ्यः अधि सकाशात्। संभृतं पयः संभृता पयोलक्षणा गोद्वारेण। गौर्हि अपः पिबति ओषधिवनस्पत्यादीन्खादति अथ पयो जायते। ता न इषमूर्जं धत्त तामेतामुभयरूपां मेघसंभवामुदकलक्षणां गोप्रभवां च पयोलक्षणां नः अस्मभ्यम् इषम् ऊर्जम् धत्त दत्त हे मरुतः, 'मरुतो ह वै वर्षस्येशते'। संरराणाः संरममाणाः। अश्मनि कुम्भं स्थापयति अश्मंस्ते क्षुत् अश्मन् ते तव क्षुत् अशनाया अस्तु। आदत्ते कुम्भम् मयि त ऊर्क् तव संबन्धिनी ऊर्क् मयि अस्त्विति शेषः। कुम्भं प्रक्षिपति। यं द्विष्मस्तं ते शुगृच्छतु यं पुरुषं द्विष्मः तं तव संबन्धिनी शुक् शोकः ऋच्छतु गच्छतु॥ १॥

**म०** षोडशेऽध्याये शतरुद्रियहोम उक्तः। सप्तदशे चित्यपरिषेकादिमन्त्रा उच्यन्ते 'चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्जमित्यद्रेरधि' ( का० १८।२।१ )।

पक्षस्यापरसन्धिः कक्षस्तस्य समीपं निकक्षं दक्षिणपक्षापरसन्धिसमीप आत्मभागेऽश्मानं निधायोदकुम्भमादायाद्रिरारभ्य सपक्षपुच्छमग्निं । प्रदक्षिणं जलधारया समन्तादग्नीत्सिञ्चतीत्यर्थः । यजुर्मरुद्देवत्यम् आर्षी त्रिष्टुप् । हे मरुतः, तां प्रसिद्धामिषमन्नमूर्जं रसं च नोऽस्मभ्यं धत्त दत्त यूयम् । किंभूता यूयम् । संरराणाः सम्यक् रान्ति ददति ते संरराणाः सम्यग्दातारः । 'रा दाने' 'बहुलं छन्दसि' ( पा० २ । ४ । ७६ ) इति जुहोत्यादिभ्यः श्लुः द्वित्वं च शानचि परे । कीदृशीमिषमूर्जम् । अश्मन् अश्मनि पाषाणे पर्वते विन्ध्यहिमवदादौ शिश्रियाणां श्रयतीति शिश्रियाणा ताम् । श्रयतेः शानचि जुहोत्यादित्वाद्वित्वम् । तथा ऊर्जं सारभूतां बलहेतुम् । यद्वा पर्वाणि विद्यन्ते यस्मिन् स पर्वतः पर्वमरुद्भ्यां तप्प्रत्ययः । अश्नातीत्यश्मा 'अन्येभ्योऽपि दृश्यते' ( पा० ३ । २ । ७५ ) इति अश्नातेर्मनिन् अशनवति पर्ववति मेघे ऊर्जं जलं शिश्रियाणामाश्रितां वृष्टिसंप्राप्यामित्यर्थः । तथा अद्भ्यः जलेभ्य ओषधिभ्यो यवादिभ्यो वनस्पतिभ्योऽश्वत्थादिभ्यः सकाशादधिसंभृतमधिकं संपादितं गोद्वारेण पयो दुग्धं च शिश्रियाणाम् गौरपः पीत्वौषधिवनस्पतीन् भक्षयित्वा पयो दोग्धि । तां द्विरूपां मेघोत्थजलरूपां गोसमुत्थां पयोरूपां चेषमूर्जं दत्तेत्यर्थः । 'मरुतो वै वर्षस्येशते' ( ९ । १ । २ । ५ ) इति श्रुतेः । 'अश्मंस्ते क्षुदित्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादायैवं द्विरपरम्' ( का० १८ । २ । २ ) । सेकान्तेऽश्मनि कुम्भमश्मंस्ते क्षुदिति निधाय मयि त इति पुनरादाय पुनर्द्विवारं परिषिञ्चेदित्यर्थः । अश्मा देवता दैवी बृहती । अश्नातीत्यश्मा । हे अश्मन् सर्वभक्षक अग्ने, ते तव क्षुत् क्षुधा अस्तु बहुहविषां भोज्यत्वात् ( का० १८ । २ । ३ ) । कुम्भमादत्ते । आशीर्देवता दैवी बृहती । हे अश्मन्, ते तव ऊर्क् सारभागो मयि अस्त्विति शेषः । 'कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणस्यां निरस्यति यं द्विष्म इति' ( का० १८ । २ । ४ ) । तं पाषाणं कुम्भे कृत्वा दक्षिणवेदिश्रोणौ पूर्वामुखस्तिष्ठन् दक्षिणस्यां दिशि साश्मानं घटं निरस्यतीत्यर्थः । यजुर्बृहती शुक् देवता । हे अग्ने, ते तव शुक् शोकस्तं नरमृच्छतु गच्छतु । तं कं वयं यं नरं द्विष्मः अस्मद्द्वेषविषयं तव शोको गच्छतु ॥ १ ॥

## द्वितीया ।

**इमा मे॑ऽअग्न॒ इष्ट॑का धे॒नव॑: स॒न्त्वेका॑ च॒ दश॑ च॒ दश॑ च श॒तं च॑ श॒तं च॑ स॒हस्रं॑ च स॒हस्रं॑ चा॒युतं॑ चा॒युतं॑ च नि॒युतं॑ च नि॒युतं॑ च प्र॒युतं॒ चार्बु॑दं च॒ न्यर्बु॑दं च समु॒द्रश्च॒ मध्यं॑ चान्त॑श्च पर॒र्धश्चै॒ता मे॑ऽअग्न॒ इष्ट॑का धे॒नव॑: स॒न्त्वमु॒त्राऽमु॒ष्मिँल्लो॒के ॥ २ ॥**

उ० इमा मे । द्वाभ्यां कण्डिकाभ्यामग्निमभिमृश्येष्टकाः धेनूः कुरुते । तत्र प्रथमं यजुः । द्वितीया बृहती वा पङ्क्तिर्वा अग्निस्वात्मां धेनुकरणेऽस्य इत्यग्निरुच्यते । इमाः मे मम हे अग्ने, इष्टका धेनवः धेनुरिवोपजीवनीयाः सन्तु । अस्मिंल्लोक इति शेषः । किंसंख्याकाः । एका च दश च दश च शतं च शतं च सहस्रं च सहस्रं चायुतं च अयुतं च नियुतं च नियुतं च प्रयुतं च अर्बुदं च न्यर्बुदं च । समुद्रश्च मध्यं च अन्तश्च परार्धश्च । एवमेकाग्रभृति दशसंख्यागुणितं परार्धपर्यन्तं पूर्वोत्तरसंख्याविशेषसमुच्चितं वर्धमानसंख्येयनिष्ठं संख्याजातमभिधाय अग्निमाह । एता मे मम हे अग्ने, इष्टकाः धेनवः सन्तु । अमुत्र अमुष्मिन् लोके । अमुत्रेति जन्मान्तरनिर्देशः । अमुष्मिन् लोक इतीष्टलोकनिर्देशः ॥ २ ॥

म० 'अनपेक्षमेत्योदङ् प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा म इति' ( का० १८ । २ । ९ ) । कुम्भनिरसनानन्तरमपश्यन्नेत्य दक्षिणवेदिश्रोणिसमीपे ईशानाभिमुखस्तिष्ठन्नात्मन उपरि हस्तौ प्रसार्य यावत्स्प्रष्टुं शक्नोति तावत् स्पृष्ट्वेमा म इति कण्डिकाद्वयं स्वरेण जपतीत्यर्थः । विकृतिरग्निर्देवत्या । हे अग्ने, या इष्टकाः पञ्चसु चितिषूपहिताः इमा इष्टकाः मे मह्यं मदर्थं धेनवोऽभिमतफलदोग्ध्र्यः सन्तु त्वत्प्रसादात् । अस्मिन् लोके इति शेषः । तासां संख्यामाह—एकेत्यादि । अत्रैकादिपरार्धपर्यन्तैः शब्दैरुत्तरोत्तरं दशदशगुणिता संख्योच्यते । एका एकत्वसंख्याविशिष्टा सा दशगुणिता दशसंख्यामापद्यते । सा दशगुणिता शतं भवति । पूर्वसंख्यासहितोत्तरसंख्याग्रहणमाधिक्याय । शतं दशगुणितं सहस्रं भवति सहस्रं दशगुणितमयुतं भवति अयुतं दशगुणितं नियुतं भवति नियुतं लक्षम् नियुतं दशगुणितं प्रयुतं भवति प्रयुतं लक्षदशकं । प्रयुतग्रहणं कोटेरुपलक्षकम् । प्रयुतं दशगुणं कोटिः । कोटिर्दशगुण अर्बुदम् । अर्बुदं दशगुणं न्यर्बुदम् । न्यर्बुदशब्देनाब्जसंख्या ज्ञेया । एतेषां ग्रहणमब्जसमुद्रान्तवर्तिनीनां खर्वनिखर्वमहापद्मशङ्कुसंज्ञानां संख्यानामुपलक्षकम् । तेनाब्जं दशगुणं खर्वं । खर्वं दशगुणं निखर्वं । निखर्वं दशगुणं महापद्मं । महापद्मं दशगुणं शङ्कुः । शङ्कुर्दशगुणः समुद्रः । समुद्रो दशगुणो मध्यं मध्यं दशगुणमन्तः अन्तः दशगुणः परार्धः । चकारा इतरेतरसमुच्चयार्थाः । एवमेकाद्यष्टादशसंख्यासंज्ञासंमिता इष्टका एता हे अग्ने, मे धेनवः सन्त्विति पूर्वोक्तस्य निगमनम् । एतद्धेनुभवनं कुत्राभ्यर्थ्यते तदाह । अमुत्र अन्यजन्मनि तथान्यस्मिन् लोके स्वर्गे सर्वत्र इष्टदाः सन्त्वित्यर्थः । यद्यपि नियतसंख्ययेष्टकाश्चीयन्ते तथापि मन्त्रसामर्थ्याद्वर्धमाना एकादिपरार्धान्तसंख्या भवन्तीति भावः ॥ २ ॥

## तृतीया ।

**ऋ॒तव॑: स्थ ऋता॒वृध॑ ऋतु॒ष्ठाः स्थ॑ ऋता॒वृध॑: । घृ॒त॒श्चुतो॑ मधु॒श्चुतो॑ वि॒राजो॒ नाम॑ काम॒दुघा॒ अक्षी॑यमाणाः ॥ ३ ॥**

**उ०** ऋतवः स्थ। या यूयम् ऋतवः स्थ ऋतावृधः। ऋतवो भवथ सत्यस्य वर्धयित्र्यश्च। ऋतुष्ठाः स्थ च। ऋतुषु तिष्ठन्तीति ऋतुष्ठाः स्थ भवथ। ऋतावृधः अतिशयार्थे पुनर्वचनम्। ता घृतश्चुतः मधुश्चुतः सत्यः। घृतं याश्च्योतन्ति ता घृतश्चुतः मधुश्चुतश्च सत्यः। विराजो नाम नाम्ना च विराज इति ख्याताः सत्यः दश लोकंपृणा उपधीयन्ते तदभिप्रायमेतन्नामकरणम्। कामदुघाः कामानां दोग्ध्र्यो भवथ। अक्षीयमाणाः परिपूर्यमाणाः॥ ३॥

**म०** बृहती पङ्क्तिर्वा अष्टत्रिंशदक्षरत्वाद्विकल्पः। अग्निदेवत्या इष्टकादेवत्या वा। हे इष्टकाः, या यूयमेवंविधाः स्थ भवथ ता मे धेनवः सन्त्विति पूर्वेण संबन्धः। कीदृश्यः। ऋतवः वसन्तादिरूपाः। ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ऋतावृधः। संहितायां पूर्वपददीर्घः। ऋतुष्ठाः ऋतुषु वसन्तादिषु तिष्ठन्ति तान्। स्थशब्दस्य पुनरुक्तिः पादपूरणाय। ऋतावृध इति पुनर्वचनमादरार्थम्। घृतश्चुतः 'श्चुतिर् क्षरणे' घृतं श्च्योतन्ति ता घृतश्चुतः घृतस्राविण्यः। मधुश्चुतः मधु श्च्योतन्ति ता मधुस्राविण्यः। नामेति प्रसिद्धौ। विराजः विशेषेण राजन्ते दीप्यन्ते ता विराजः। दशलोकंपृणाभिप्रायमेतत्। कामदुघाः यत्काम्यं तस्य दोग्ध्र्यः पूरयित्र्यः 'दुहः कब्घश्च' (पा० ३।२।७०) इति कप्। अक्षीयमाणाः न क्षीयन्ते ताः क्षयरहिताः॥ ३॥

## चतुर्थी।

स॒मु॒द्रस्य॑ त्वाव॑कया॒ग्ने॒ परि॑व्ययामसि। पा॒व॒को अ॒स्मभ्य॑ᳪ शि॒वो भ॑व॥ ४॥

**उ०** अग्निक्षेत्रं सप्तभिर्ऋग्भिर्विकर्षति आग्नेयीभिः। तत्राद्ये गायत्र्यौ। समुद्रस्य त्वा। हे अग्ने, यं त्वां समुद्रस्य समुन्दनस्य उदकस्य अवकया परिव्ययामसि अवकया अवकाशेन परिव्ययामः। स त्वं परिवीतः सन् पावकः पावयिता अस्मभ्यं शिवः शान्तः भव॥ ४॥

**म०** 'मण्डूकावकावेतसशाखा वेणौ बद्धावकर्षति मन्त्रकृष्टवत्समुद्रस्य त्वेति प्रत्यृचम्' (का० १८।२।१०)। मण्डूकिशैवलवेतसतरुशाखा वंशे बद्धा तं हस्तेनादायाग्निक्षेत्रं प्रत्यृचं कर्षति तेनेत्यर्थः। आद्याया दक्षिणश्रोणेरारभ्य दक्षिणांसं यावत्कर्षति। द्वे गायत्र्यावग्निदेवत्ये अन्त्यो दशकः। हे अग्ने, समुद्रस्य समुन्दति क्लिन्नं करोति समुद्रो जलं तस्यावकया शैवालेन। त्वा त्वां परिव्ययामसि परितो वेष्टयामः। इदन्तो मसि। उपरिभागे सर्वत्र विकर्षाम इत्यर्थः। त्वं चास्मभ्यं पावकः शोधकः शिवः शान्तश्च भव॥ ४॥

## पञ्चमी।

हि॒मस्य॑ त्वा ज॒रायु॑णा॒ग्ने॒ परि॑व्ययामसि। पा॒व॒को अ॒स्मभ्य॑ᳪ शि॒वो भ॑व॥ ५॥

**उ०** हिमस्य त्वा। त्वां हिमस्य जरायुणा। शीतस्य प्रशीतेन हे अग्ने, परिव्ययामसि परिवेष्टयामः। स त्वं परिवीतः सन् पावकः अस्मभ्यं शिवो भव॥ ५॥

**म०** दक्षिणश्रोण्यायुत्तरश्रोण्यन्तं कर्षति। हिमस्य शैत्यस्य जरायुवदुत्पत्तिस्थानीयेन शेवालेन हे अग्ने, त्वा त्वां परिव्ययामसि संवरणं कुर्मः। त्वमस्मभ्यं पावकः शिवश्चेत्युक्तम्॥ ५॥

## षष्ठी।

उप॒ ज्मन्नुप॑ वेत॒सेऽव॑तर न॒दीष्वा। अग्ने॑ पि॒त्तम॒पाम॑सि॒ मण्डू॑कि॒ ताभि॒राग॑हि॒ सेमं नो॑ य॒ज्ञं पा॑व॒कव॑र्णᳪ शि॒वं कृ॑धि॥ ६॥

**उ०** उप ज्मन्। जगती वा त्रिष्टुब्वा। उपज्मन् उपावतर ज्मन् जगते ज्मा पृथिवी पृथिव्याम् उपवेतसे। उपावतर च वेतसे वेतसशाखायाम्। मण्डूका च वेतसशाखास्तत्र बद्धा भवन्ति वंशे तदयं मन्त्रोभिवदति। नदीष्वा। आ उपसर्गोऽध्यर्थे। अवतर च नदीषु। अधिशब्देनात्र लक्षणया अवका उच्यन्ते तत्प्रभवत्वात्। कस्मात्त्वमेवमस्माभिः प्रार्थ्यसे इत्यत आह। हे अग्ने, पित्तं अपाम् असि। यो यस्यावयवभूतो भवति। न स तद्धिनस्ति तद्धर्मा च भवति। एवमग्निं संबोध्य अथेदानीं मण्डूकीमाह हे मण्डूकि, ताभिरद्भिः सहिता आयाहि। यासामग्निः पित्तम्। याभिर्वा सह त्वमुत्पन्ना। या च त्वमग्निः शान्त्यर्थमितश्चेतश्च नीयसे। सा इमं नः अस्माकम् यज्ञं चयनलक्षणम्। पावकवर्णम् अग्निवर्णम्। शिवं शान्तम्। कृधि कुरु॥ ६॥

**म०** उत्तरश्रोणेरुत्तरांसपर्यन्तं कर्षति। जगती त्रिष्टुप् वा चतुश्चत्वारिंशदक्षरत्वात्त्रिष्टुबेव। नदीषु आ सा इममिति व्यूहद्वयेन द्यूना जगती भवति। हे अग्ने, ज्मन् ज्मा पृथिवी सप्तम्या लुक् ज्मनि पृथिव्यामुपावतर आगच्छ। तथा वेतसे वञ्जुलशाखायामुपावतर नदीषु आ। आ उपसर्गोऽध्यर्थे। नदीष्वधि अवकासु उपावतर। नदीशब्देन लक्षणयावका उच्यन्ते। तत्प्रभवत्वात्। मण्डूक्यवकावेतसशाखाः कर्षणार्थं वेणौ बद्धाः सन्ति तदयं मन्त्रो वदति। कस्मात्त्वमेवमस्माभिः प्रार्थ्यसे इत्यत आह। हे अग्ने, त्वमपां पित्तं तेजोऽसि। यो यस्यावयवः स तं न हिनस्ति तद्धर्मा च भवति। एवमग्निं संबोध्य मण्डूकीमाह। हे मण्डूकि, मण्डूको भेकस्तस्य स्त्री मण्डूकी तत्संबुद्धौ हे मण्डूकि, ताभिः पूर्वोक्ताभिरद्भिः सह आगहि आगच्छ। शपि लोपे मलोपः। यासामग्निः पित्तं यत्र त्वमुत्पन्ना या त्वमग्नेः शान्त्यै इतस्ततो नीयसे सा त्वमिमं यज्ञमस्माभिः क्रियमाणं चयनलक्षणं पावकवर्णमग्निसमानतेजसं शिवं फलप्रदत्वेन शान्तं च कृधि कुरु॥ ६॥

## सप्तमी ।

अपामिदं न्ययनᳪ समुद्रस्य निवेशनम् । अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यᳪ शिवो भव ॥ ७ ॥

उ० अपामिदम् । बृहती । अपाम् इदम् । न्ययनम् नितरामयनम् । यदेतन्मण्डूकयवकावेतसशाखालक्षणम् समुद्रस्य उदकनिधेः निवेशनम् निविशन्ते अस्मिन्निति निवेशनम् । यतएवम् अतो ब्रवीमि अन्यान्पुरुषान् ते तव अस्मत्तः । तपन्तु दहन्तु । हेतयः अस्त्राणि अर्चींषि । त्वं च पावकः पावयिता स नः अस्मभ्यं शिवो भव ॥ ७ ॥

म० उत्तरांसाद्दक्षिणांसं कृषति । आग्नेयी बृहती । इदं चित्याग्निस्थानं मण्डूकयवकावेतसलक्षणं वा अपां न्ययनम् । नितरामीयते प्राप्यते येन तन्न्ययनम् उदकप्राप्तिसाधनम् । यागद्वारा ह्यापः प्राप्यन्ते । अपां बाहुल्यात्समुद्रस्य निवेशनम् निविशन्त्यस्मिन्निति निवेशनं गृहस्थानीयम् तद्रूप हे अग्ने, ते तव हेतयो ज्वाला अस्मत्सकाशादन्यान् अस्मद्विरोधिनः पुरुषान् तपन्तु क्लेशयन्तु । अस्मभ्यमस्मदर्थं पावकः शोधकः शिवः शान्तश्च भव ॥ ७ ॥

## अष्टमी ।

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च ॥ ८ ॥

उ० अग्ने पावक द्वे गायत्र्यौ । हे अग्ने, पावक पावयितः, रोचिषा रोचनेन ज्वालासमूहेन । आहवनीयात्मना स्थिता इति शेषः। मन्द्रया च मदनीयया च देवजिह्वया होतृत्वेनावस्थित इति शेषः । आदेवान्वक्षि यक्षि च देवान् वक्षि च आवह देवान् यजचेति । द्वौ ह्यग्नेराकारौ हौत्रं च आहवनीयरूपेण हविर्वहणं च अतएवं स्तूयते ॥ ८ ॥

म० 'पक्षपुच्छानि चाभ्यात्ममग्ने पावक रोचिषेति' ( का० १८।२।११ )। पक्षपुच्छानि प्रान्तादारभ्याभ्यात्ममात्मसंमुखं सन्धिपर्यन्तं कर्षति प्रत्यृचमग्ने इति दक्षिणं पक्षं स न इति पुच्छं पावकयेत्युत्तरं पक्षमित्यर्थः । आग्नेयी गायत्री वसूयुदृष्टा । हे अग्ने, हे पावक शोधक, हे देव, रोचिषा रोचनेन ज्वालासमूहेनाहवनीयात्मना स्थित इति शेषः। मन्द्रया मदनीयया जिह्वया होतृवाग्रूपेणावस्थित इति शेषः । देवानावक्षि आवह यक्षि यज च । द्वावग्नेरधिकारौ हौत्रमाहवनीयरूपेण हविर्ग्रहणं चात एव स्तूयते । वहतेर्यजेश्च लोण्मध्यमैकवचने शपि लुप्ते ढलगलादिके कृते वक्षि यक्षीति रूपम् ॥८॥

## नवमी ।

स नः पावक दीदिवोऽग्ने देवाँ २ ॥ इहावह । उप यज्ञᳪ हविश्च नः ॥ ९ ॥

उ० स नः पावक । यस्त्वमुक्ताधिकारः स नः अस्माकं हे पावक पावयितः, दीदिवः दीप्तिमन् हे अग्ने, देवान् इह आवह । उप यज्ञम् यज्ञस्य समीपम् । ततोऽनन्तरं हविश्च नः संबन्धि । देवान्प्रापयेति शेषः ॥ ९ ॥

म० गायत्र्याग्नेयी मेधातिथिदृष्टा । हे पावक पावयितः, हे दीदिवः, दिदेवेति दीदिवान् तत्संबुद्धौ हे दीदिवः दीप्तिमन्, 'दिवु क्रीडादिषु' क्वसुप्रत्ययः द्वित्वम् 'तुजादीनाम्' (पा० ६।१।७) इत्यभ्यासदीर्घः 'लोपो व्योर्वलि' (पा० ६।१।६६) इति वलोपः । हे अग्ने, देवानिह नोऽस्माकं यज्ञे आवह आनय । यज्ञमुप यज्ञसमीपे नोऽस्माकं हविश्च देवानावह प्रापय ॥ ९ ॥

## दशमी ।

पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना । तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥ १० ॥

उ० पावकया । जगती । पावकया पावयित्र्या योऽग्निः चितयन्त्या परिदृढकारिण्या कृपा समर्थया । 'कृपू सामर्थ्ये' अस्य क्विपि तृतीया । क्षामन् पृथिव्याम् । क्षामेति पृथिवीनाम । रुरुचे दीप्यते । उषसो न भानुना उषस इव ज्योतिषा । यश्च । तूर्वन्न यामन् त्वरमाण इव आधानकर्मणि । यामशब्दः कर्मवचनः । एतशस्य आज्यस्य । नू अनर्थकः । रणे रमणीये पदे । आधीयते । अध्वर्युणा आहितश्च यः घृणेन । घृणिरिति दीप्तिनाम । न इत्यनर्थकः । ततृषाणः तृष्यम् पिपासुः पूर्णाहुतिम् पूर्णाहुत्यादि तं तत्र शमयन्ति । पीत्वा च अजरः संपाद्यते । तमवकादिभिः शमयाम इति शेषः ॥ १० ॥

म० जगती भरद्वाजदृष्टा । योऽग्निः क्षामन् क्षाम्णि पृथिव्यां रुरुचे रोचते शोभते । कया कृपा 'कृपू सामर्थ्ये' कल्पनं कृप् क्विप् । तया कल्पनया सामर्थ्येन दीप्त्या वा । क्षामेति पृथिवीनाम । किंभूतया कृपा । पावकया पावयतीति पावका तया पावयित्र्या । चितयन्त्या चेतयन्त्या । यद्वा चितं करोति चितयन्ती तया दृढचयकारिण्या । रोचने दृष्टान्तः । उषसो न भानुना । न इवार्थे । यथा उषसः कालाः भानुना स्वप्रकाशेन रोचन्ते तद्वत् । किंच यश्चाग्निः घृणिः । घृणिरिति दीप्तिनाम । 'सुपां सुलुक्' (पा० ८।१।३९) इति विभक्तेः शे आदेशः । घृणिना दीप्त्या आ समन्तात् नु निश्चितं रुरुचे इत्यनुषङ्गो नकारश्चार्थः । किं कुर्वन् । एतशस्य एतीत्येतशः गमनकुशलस्याश्वस्य यामन् यामनि नियामके रणे युद्धे तूर्वन् 'तूर्व हिंसायां' परबलानि हिंसन् । न इवार्थे । शत्रून् हिंसन्निव रोचते । यद्वा यामन्शब्दः कर्मवाचकः नु अनर्थकम् । यामनि कर्मणि तूर्वन्न त्वरमाण इव एतशस्याश्वस्य रणे रमणीये पदे आहितोऽध्वर्युणा । तथा ततृषाणः

तृष्यतीति ततृषाणः 'ञितृषा पिपासायाम्' 'बहुलं छन्दसि' (पा० २।४।७६) इति ह्रादिलाच्छानचि श्लुद्वित्वे पूर्णाहुतिं पिपासुः । अजरः जरारहितः । य ईदृशोऽग्निस्तं कृषाम इत्यर्थः ॥ १० ॥

## एकादशी ।

नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳशिवो भव ॥ ११ ॥

उ० नमस्ते । चित्यारोहिणी बृहत्याग्नेयी । नमः तव हरसे च शोचिषे च । नमः ते अस्तु अर्चिषे च । हरतेर्हरः । शोचते शोचिः । अन्यांस्त इति व्याख्यातम् ॥ ११ ॥

म० 'उभयमादाय चित्यारोहणं नमस्त इति' (का० १८।३।५)। हिरण्यशकलसहितं स्रुक्स्थमाज्यं दधिमधुघृतकुशमुष्टियुता पात्री एतद्द्वयमादायाध्वर्युश्चित्याग्निमारोहति ब्रह्मयजमानौ तु अग्नेर्दक्षिणत उपविशत इत्यर्थः । आग्नेयी बृहती लोपामुद्रादृष्टा । हे अग्ने, ते तव शोचिषे शोचनहेतवे तेजसे नमोऽस्तु । कीदृशाय शोचिषे । हरसे हरति सर्वरसानिति हरः तस्मै । हरतेरसुन्प्रत्ययः । ते तव अर्चिषे पदार्थप्रकाशकाय तेजसे नमोस्तु । अन्यदुक्तम् ॥ ११ ॥

## द्वादशी ।

नृषदे वेडप्सुषदे वेड्बर्हिषदे वेड्वनसदे वेट् स्वर्विदे वेट् ॥ १२ ॥

उ० स्वयमातृण्णाया जुहोति पञ्चभिर्यजुर्भिराग्नेयैः । नृषदे वेट् । नृषु मनुष्येषु सीदतीति नृषत् तस्मै नृषदे । वेडिति परोक्षं वषट्कारः । अप्सु उदके सीदतीत्यप्सुषत् तस्मै अप्सुषदे । बर्हिषदे। 'ओषधयो वै बर्हिः' । वनसदे वनं वृक्षसमूहः । स्वर्विदे । स्वःशब्दोऽव्ययमिहादित्यवचनः । विद्यतेरत्र ग्रहणं सीदतिनार्थसंनिकर्षात् । स्वरादित्ये विद्यते योऽग्निः तस्मै स्वर्विदे ॥ १२ ॥

म० 'स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्यादर्शनं च नृषदेवेडिति प्रतिमन्त्रम्' (का० १८।३।६)। आरुह्य स्वयमातृण्णायां पञ्चगृहीतं जुहोति पञ्चमन्त्रैः नाभिवदिति दक्षिणांसश्रोणिद्वयोत्तरांसमध्येषु तत्र हिरण्यं पश्यन्नित्यस्ति तदत्र नेत्यर्थः । पञ्चाग्नेयानि यजूंषि दैवी बृहती दैव्यः पङ्क्तयः अन्त्या दैवी बृहती । नृषु मनुष्येषु जठराग्निरूपेण तिष्ठतीति नृषत् प्राणस्तस्मै वेट् हविर्दत्तम् । वेट्शब्दः स्वाहाकारार्थः । 'प्रत्यक्षं वै तद्यत् स्वाहाकारः प्रत्यक्षꣳ सोत्तरवेदिवैट्कारेणेमां परोक्षं वै तद्यद्वैट्कारः' (९।२।१।१७) इति श्रुतेः । तथा नृषदे वेडिति । 'प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतत्प्रीणाति' (९।२।१।१८) इति । अप्सु उदकेषु और्वरूपेण सीदतीत्यप्सुषत् । 'योऽप्स्वग्निस्तमेतत्प्रीणाति' (८) इति श्रुतेः । बर्हिषि यज्ञे आहवनीयादिरूपेण सीदतीति बर्हिषत्, बर्हिःषु ओषधीषु तिष्ठतीति वा तस्मै वेडस्तु । 'बर्हिषदे वेडिति य ओषधीष्वग्निस्तमेतत् प्रीणाति' (८) इति श्रुतेः । वनं वृक्षसमूहस्तत्र दावाग्निरूपेण सीदतीति वनसत्तस्मै वेट् । 'वनसदे वेडिति यो वनस्पतिष्वग्निस्तमे०' (८) स्वः स्वर्गे आदित्यरूपेण विद्यते स्वर्वित् विद्यतिः सीदत्यर्थः । यद्वा स्वरादित्यं विन्दते स्वर्वित्तस्मै वषडस्तु ॥ १२ ॥

## त्रयोदशी ।

ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरीणमुप भागमासते । अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥ १३ ॥

उ० दधिमधुघृतेनाग्निं प्रोक्षति । द्वाभ्यां दैवीभ्यां जगतीभ्याम् । ये देवाः प्राणाः देवानामुत्कृष्टाः । यज्ञिया यज्ञियानाम् यज्ञार्हाः यज्ञियानाम् । अतिशयार्थं पुनर्वचनम् । संवत्सरीणम् संवत्सरेण प्राप्यत इति संवत्सरीणो भागः । संवत्सरं हि भूत्वाग्निश्चीयते । उप भागमासते उपासते भागम् । अहुतादः अन्ये देवा अग्निप्राप्तामाहुतिमदन्ति प्राणास्तु साक्षादन्नमदन्ति । हविषः स्वमंशम् यज्ञे अस्मिन्स्वयं पिबन्तु । मधुनो घृतस्य दध्नश्चेति शेषः ॥ १३ ॥

म० 'समासिक्तान् कुशैः प्रोक्षति सपरिश्रित्कं बाह्येन च ये देवा इति' (का० १८।३।७)। पात्र्यां सिक्तान् दधिमधुघृतान् कुशैः परिश्रित्सहितं सपक्षपुच्छमग्निं मध्ये बहिश्च प्रोक्षति ऋग्द्वयेनेत्यर्थः । जगत्यौ प्राणदेवत्ये । ते प्राणरूपा देवाः, अस्मिन् यज्ञे चयनलक्षणे मधुनो घृतस्य अर्थाद्दध्नश्च हविषो मधुघृतदधिरूपस्य हविषो भागं स्वयं पिबन्तु । स्वाहाकारसमर्पणेन विना स्वयमेव स्वीकुर्वन्त्वित्यर्थः । कीदृशास्ते । अहुतादः अहुतमदन्ति ते अहुतादः । अन्ये देवा अग्निहुतामाहुतिमदन्ति प्राणास्तु साक्षादन्नमदन्ति अत एवाहुतादः । ते के । संवत्सरीणं भागमुपासते संवत्सरेण निर्वृत्तः संवत्सरीणः 'संपरिपूर्वात् ख च' (पा० ५।१।९२) इति संपूर्वाद्वत्सरान्निर्वृत्तार्थे खप्रत्ययः । संवत्सरं हि भूत्वाग्निश्चीयते इत्यभिप्रायः । कीदृशाः । यज्ञियानां यज्ञार्हाणां देवानां मध्ये यज्ञियाः यज्ञयोग्याः देवाः दीप्यमानाः । द्विविधा देवाः हविर्भुज इन्द्रवरुणादयः, शरीरनिर्वाहकाः प्राणापानादयश्च । दीव्यन्तीति व्युत्पत्त्या उभयेऽप्येते यज्ञियाः तत्रेन्द्रादयो यज्ञे पूज्यत्वाद् यज्ञियाः प्राणादयस्तु यज्ञेन पूजकत्वाद्यज्ञियाः ॥१३॥

## चतुर्दशी ।

ये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुरएतारो अस्य । येभ्यो नऋते पवते धाम किंचन न ते दिवो न पृथिव्या अधि स्नुषु ॥ १४ ॥

उ० ये देवा देवेषु अधि उपरि अधिष्ठातृत्वेन। देवत्वं देवभावम् उपायन् उपगताः। ये ब्रह्मणः पुरएतारो अस्य ये च ब्रह्मणः 'अयमग्निर्ब्रह्म तस्यैते पुरएतारः' इति श्रुतिः। प्राणा हि प्राणिनः पुरएतार एव। येभ्यश्च प्राणेभ्यः नऋते वियोगे। पवते वर्तते। धाम स्थानं जन्म वा। किंचन न किंचिदपीत्यभिप्रायः। य इत्थंभूताः प्राणा देवाः क्व पुनस्त आसते। न ते दिवः द्युलोकस्याश्रयणीयेषु प्रदेशेषु। नच पृथिव्या आश्रयणीयेषु प्रदेशेषूपलभ्यन्ते। अधिस्नुषु 'स्नु प्रक्षरणे'। प्रस्नावीणि स्रोतांसि चक्षुरादीनि प्राणायतनानि तेषूपलभ्यन्ते। स हि तेषां विशिष्टः प्रदेशः॥ १४॥

म० ये देवाः प्राणा देवेष्विन्द्रादिषु अधिष्ठातृत्वेन देवत्वमायन् प्राप्ताः इन्द्रादीनामपि प्राणा देवाः। ये अस्य ब्रह्मणः जीवस्य पुरएतारः पुरोऽग्रे यन्तीति पुरएतारः 'इण् गतौ' इत्यस्मात् 'ण्वुल्तृचौ' (पा० ३।१।१३३) इति तृच् प्रत्ययः। 'प्राणा हि प्राणिनां पुरःसराः अयमग्निर्ब्रह्म तस्मै ते पुरएतारः' (९।२।१।१५) इति श्रुतेः। प्राणैर्विना चीयमानोऽग्निर्निर्वोढुं न शक्यते। किंच येभ्य ऋते यान् प्राणान् विना किंचन धाम किमपि शरीरं न पवते 'पवङ् गतौ' न चेष्टते। इत्थंभूता ये प्राणा देवास्ते पुनः क्वासते तत्राह। न त इति। ते प्राणरूपा देवाः न दिवः। षष्ठ्यौ सप्तम्यर्थे। दिवि स्वर्गे न सन्ति। पृथिव्याः पृथिव्यां भूमावपि न नैव। 'ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिंस्ते' (९।२।१।१५) इति श्रुतेः। यद्वा दिवः प्रदेशेषु न पृथिव्याः प्रदेशेषु न किं तर्हि स्नुषु अधि 'स्नु प्रक्षरणे' स्नुवन्ति क्षरन्ति स्नूनि स्रोतांसि चक्षुरादीनि प्राणायतनानि तेषु अधिश्रित्य वर्तन्ते तेषूपलभ्यन्ते तेषां स विशिष्टः प्रदेशः॥ १४॥

## पञ्चदशी।

प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः। अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव॥ १५॥

उ० अवरोहति। प्राणदाः आग्नेयी बृहती पङ्क्तिर्वा। यस्त्वं प्राणदाः अपानदाः व्यानदा वर्चोदाः अन्नस्य दातासि। वरिवोदाः वरिवो धनं तस्य दातासि तं त्वां ब्रवीमि। अन्यांस्ते अस्मदिति व्याख्यातम्॥ १५॥

म० 'प्राणदा इत्यवरोहति' (का० १८।३।८)। प्रोक्षणानन्तरमग्नेरवतरतीत्यर्थः। अग्निदेवत्या बृहती पङ्क्तिर्वा अष्टत्रिंशदक्षरत्वाद्विकल्पः। हे अग्ने, ते तव हेतयो ज्वाला अस्मदन्यान् तपन्तु। त्वं चास्माकं पावकः शिवश्च भव। कीदृशस्त्वं। प्राणदाः प्राणान् यजमानाय ददातीति प्राणदाः। अपानं ददातीत्यपानदाः। व्यानं सर्वशरीरसंचारिवायुं ददातीति व्यानदाः। वर्चो बलं ददातीति वर्चोदाः। वरिवो धनं ददातीति वरिवोदाः॥ १५॥

## षोडशी।

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणम्। अग्निर्नो वनते रयिम्॥ १६॥

उ० पञ्चगृहीतं जुहोति। अग्निस्तिग्मेन। आग्नेयी गायत्री। अग्निः तिग्मेन। तिग्मं तेजतेरुत्साहकर्मणः। उत्साहवता शोचिषा दीप्त्या यासत्। 'यस उपक्षये' उपक्षयति। विश्वं सर्वं न्यत्रिणम् नितरामत्रिणमत्तारं खादकम् उपद्रवकारिणम्। अग्निश्च नः अस्मभ्यं वनते। वनतिर्दानार्थः। ददाति रयिं धनम्॥ १६॥

म० 'पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा' (का० १८।३।१२)। शालायामागत्य पञ्चगृहीतमाज्यं शालाद्वार्येऽग्नौ जुहोति। आग्नेयी गायत्री भरद्वाजदृष्टा। अग्निः विश्वं सर्वमत्रिणं राक्षसं नियासत् नितरां क्षीणं करोतु 'यास उपक्षये' लेट् 'इतश्च लोपः परस्मैपदेषु' (पा० ३।४।९७) इतीकारलोपः। अत्र अदनं भक्षणमस्यास्तीत्यत्री भक्षकस्तम्। केन तिग्मेन शोचिषा तीक्ष्णेन तेजसा 'तिग्मं तेजतेरुत्साहकर्मणः' (निरु० १०।६) इति यास्कः। किंच अग्निर्नोऽस्मभ्यं रयिं धनं वनते ददातु। वनतिर्दानार्थः॥ १६॥

## सप्तदशी।

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः। स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ २॥ आविवेश॥ १७॥

उ० षोडशगृहीतं जुहोति। य इमा विश्वा। पञ्चदशभिर्वैश्वकर्मणीभिस्त्रिष्टुब्भिः। कल्पान्तरीणं यजमानं ज्ञानकर्मसमुच्चयकारिणं विश्वकर्मभावमात्मत्वेनोपासकं तदुपासकत्वेनैवापक्षपितकल्मषं कल्पादावभिव्यज्यमानं धर्मज्ञानवैराग्यैश्वर्ययुक्तं सुप्तप्रतिबुद्धन्यायेनापरोक्षज्ञानमात्मत्वेनापगतः प्रजासृजमाणमृषिः पश्यन्नाचष्टे य इमा विश्वा भुवनानि जुह्वदिति। यः इमानि विश्वानि भुवनानि भूतजातानि। आत्मनि जुह्वत् आत्मत्वेन पश्यन्। ऋषिः साक्षात्कृतधर्मा। होता आह्वाता देवानां कल्पादौ न्यसीदत् निषण्णः। पिता पाता नः अस्मत्प्रभृतीनाम्। स एव ऋषिर्मनुष्यादिभावमुपगतः सन्। यज्ञसंबन्धिन्या आशिषा द्रविणं यज्ञफलम् इच्छमानः। प्रथमच्छत् प्रथमच्छादकः। प्रथमो मूर्तशरीरग्राही अवरान् द्विपदचतुष्पदस्थावरादीन्। आविवेश आविष्टो विपरिणामतः॥ १७॥

म० 'षोडशगृहीतार्धमनुवाकशेषेण' (का० १८।३।१२)। पञ्चगृहीतहोमानन्तरं षोडशगृहीतमाज्यं जुह्वां कृत्वा तस्यार्धमनुवाकशेषेण शालाद्वार्ये एव जुहोति। अनुवाकशेषश्च य इमा विश्वेत्यारभ्य विहव्यो यथासदित्यन्तोऽष्टर्चं इत्यर्थः। भुवनपुत्रविश्वकर्मदृष्टा विश्वकर्मदेवत्याः षोडश त्रिष्टुभः।

प्रजाः संहरन्तं सृजन्तं विश्वकर्माणं पश्यन्नृषिः कथयति । यो विश्वकर्मा इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि जुह्वत् संहरन्सन् न्यसीदत् निषण्णः स्वयं स्थितवान् । कीदृशः । ऋषिः अतीन्द्रियद्रष्टा सर्वज्ञः । होता संहाररूपस्य होमस्य कर्ता । नोऽस्माकं प्राणिनां पिता जनकः । प्रलयकाले सर्वलोकान् संहृत्य यः परमेश्वरः स्वयमेक एवासीदित्यर्थः । तथा चोपनिषदः 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्याद्याः । स तादृशः परमेश्वरः आशिषाभिलाषेण 'बहुः स्यां प्रजायेय' इत्येवंरूपेण पुनःसिसृक्षारूपेण द्रविणमिच्छमानः जगद्रूपं धनमपेक्षमाणः अवरानभिव्यक्तोपाधीनाविवेश जीवरूपेण प्रविष्टः । कीदृशः । प्रथमच्छत् प्रथममेकमद्वितीयं स्वरूपं छादयतीति प्रथमच्छत् । छादयतेः क्विपि ह्रस्वः । उत्कृष्टं रूपमावृण्वन्सन् प्रविष्टः । इच्छमान इतीषेरात्मनेपदमार्षम् । 'सोऽकामयत बहुःस्यां प्रजायेय स तपोऽतप्यत स तपस्तप्त्वा इदꣳ सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिश्रुतेः ॥ १७ ॥

## अष्टादशी ।

किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् । यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ १८ ॥

**उ० एवं विश्वकर्माद्वैतमुक्त्वा अथेदानीं यथा जगत्सृजति तत्प्रश्नप्रतिप्रश्नाभ्यामाह । किꣳस्वित् । स्वित् वितर्के । किं पुनरासीत् अधिष्ठानम् । अधितिष्ठन्त्यस्मिन्नित्यधिष्ठानमधिकरणं विश्वकर्मणा द्यावापृथिव्यौ सृष्टे । अधिष्ठानरहिता इदानीं जनाः कर्तारो न किंचिदपि कुर्वाणा दृश्यन्ते । आरम्भणं कतमत्स्वित् आरभ्यते अस्मात् इत्यारम्भणं प्रकृतिद्रव्यम् मृद्द्रव्यमिव घटादीनां कथमासीत् । कथासीत् कथंभूता च तत्र क्रिया आसीत् । चक्रसूत्रसलिलादिभिर्हि घटादयो निष्पाद्यन्ते । यतो भूमिं जनयन्विश्वकर्मा यतो यदेत्यर्थः । यथा भूमिं द्यां च जनयन् विश्वकर्मा विद्यामौर्णोत् । 'ऊर्णुञ् आच्छादने' आच्छादितवान् । द्यां पृथिवीं चेत्यध्याहारः । महिना महाभाग्येन ऐश्वर्येण । विश्वचक्षाः सर्वतोदर्शनः अतीतानागतवर्तमानकालानां युगपत् ज्ञाता ॥१८॥**

**म०** अथेश्वरो यथा जगत्सृजति तत्प्रश्नोत्तराभ्यामाह । लोके हि घटादिचिकीर्षुः कुलालो गृहादिकं स्थानमधिष्ठाय मृद्रूपेणारम्भकद्रव्येण च चक्राद्युपकरणैर्घटादि निष्पादयति ईश्वरस्य तदाक्षिप्यते । स्विदिति वितर्के । द्यावाभूमी सृजतो विश्वकर्मणोऽधिष्ठानं किमासीत् । अधितिष्ठत्यस्मिन्नित्यधिष्ठानं निवासस्थानम् । अद्यतना निरधिष्ठानाः किमपि न कुर्वन्ति । स्विदिति वितर्के । आरम्भणं कतमत् किमासीत् । आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणं मृदिव घटानाम् । कथा क्रिया च किंप्रकारासीत् निमित्तकारणमपि किमासीदित्यर्थः । 'था हेतौ च छन्दसि' (पा० ५ । ३ । २६) इति किमः थाप्रत्ययः । दण्डचक्रसलिलसूत्रादिभिर्घटादयो निष्पाद्यन्ते तत्स्थानीयं किमासीत् । यतो यस्मिन् काले विश्वकर्मा भूमिं द्यां स्वर्गं च जनयन् सन् महिना महिम्ना स्वसामर्थ्येन वि और्णोत् सृष्टे द्यावापृथिवी आच्छादितवान् । 'ऊर्णुञ् आच्छादने' लङ् उपसर्गव्यवधानमार्षम् 'व्यवहिताश्च' (पा० १ । ४ । ८२) इति वचनात् । कीदृशः । विश्वचक्षाः विश्वं चष्टे स विश्वचक्षाः सर्वद्रष्टा अतीतानागतवर्तमानकालानां युगपद्द्रष्टा अनन्यशक्तिरित्यर्थः ॥ १८ ॥

## एकोनविंशी ।

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ १९ ॥

**उ०** अत्रोत्तरं ददाति । विश्वतश्चक्षुः सर्वतश्चक्षुः । उत विश्वतोमुखः अपिच सर्वतोमुखः । विश्वतोबाहुः उत विश्वतस्पात् अपिच सर्वतः पादः । संधमति बाहुभ्याम् । धमतिर्गत्यर्थः । संगमयति बाहुभ्यां संगच्छते वा । संपतत्रैः संगच्छते पतत्रैः पद्भिः । ऐश्वर्ययोगाद्बहवोऽपि पादाः संभवन्ति । द्यावाभूमी जनयन्देव एक अद्वितीयः ॥ १९ ॥

**म०** उत्तरमाह । एकोऽसहायो देवः विश्वकर्मा द्यावाभूमी जनयन्सन् बाहुभ्यां बाहुस्थानीयाभ्यां धर्माधर्माभ्यां संधमति । धमतिर्गत्यर्थः । संगच्छते संयोगं प्राप्नोति पतत्रैः पतनशीलैः अनित्यैः पञ्चभूतैश्च संगच्छते धर्माधर्मरूपैर्निमित्तैः पञ्चभूतरूपैरुपादानैश्च । साधनान्तरं विनैव सर्वं सृजतीत्यर्थः । यद्वा धर्माधर्माभ्यां भूतैश्च संधमति संगमयति जीवान् णिजन्तत्वं ज्ञेयम् । कीदृशः । विश्वतश्चक्षुः विश्वतः सर्वतश्चक्षूंषि यस्य सः । विश्वतोमुखः विश्वतो मुखानि यस्य । विश्वतोबाहुः विश्वतो बाहवो भुजा यस्य । उतापि च विश्वतः पादा यस्य सः । 'पादस्य लोपोऽहस्त्यादिभ्यः' (पा० ५ । ४ । १३८) इति पादस्यान्त्यलोपः । परमेश्वरस्य सर्वप्राण्यात्मकत्वाद्यस्य यस्य प्राणिनो ये चक्षुरादयस्ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्र चक्षुरादयः संपद्यन्त इत्यर्थः ॥ १९ ॥

## विंशी ।

किꣳस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥ २० ॥

**उ० किꣳस्वित् । अयमपि मन्त्रः प्रश्नरूपेण । किं पुनस्तद्वनं कश्च स वृक्षः आस अभूत् । यतः द्यावापृथिवी निः ततक्षुः ।**

तक्षतिः करोतिकर्मा । बहुवचनं पूजार्थम् । यस्मात् वृक्षात् द्यां च पृथिवीं च निष्कृष्य चकार । यदि हि वनं वृक्षो वा भवेत् तदा एवमप्याशङ्केत । तक्षाणो हि वृक्षाचमसादीन्निष्कर्षयन्ति अयं त्वात्मारम्भण ऊर्णनाभिवदित्यभिप्रायः । विस्मित ऋषिर्द्वितीयं प्रश्नं करोति । हे मनीषिणो मेधाविनः, मनसा पर्यालोच्य पृच्छत । इत् उ तत् एतदपीति पदत्रयस्यार्थः । यदत्र यद्यर्थः । यदि अध्यतिष्ठत् यत् भुवनानि भूतजातानि सह द्यावापृथिवीभ्यां धारयन् उपरिष्टादास्ते २०

**म०** पुनरपि प्रश्नः । स्विदिति वितर्के । तद्वनं किमास बभूव । उ अपिच स वृक्षः कः आस । यतो वनाद्वृक्षाच्च विश्वकर्मा द्यावापृथिवी निष्टतक्षुः निस्ततक्ष निस्तक्ष्यालंकृतवान् । वचनव्यत्ययः । नहि तादृशं वनं वृक्षो वा संभवति । लोके हि गृहादिनिर्माणमिच्छन् कस्मिंश्चिद्वने कंचिद्वृक्षं छित्त्वा तक्षणादिना स्तम्भादिकं करोति इह तन्नास्तीत्यर्थः । किंच हे मनीषिणः विद्वांसः, मनसा पर्यालोच्य तत् इत् उ तदपि यूयं पृच्छत । तत्किम् । भुवनानि धारयन् सन् विश्वकर्मा यदध्यतिष्ठत् यत् स्थानमधिष्ठितवान् तदपि पृच्छत । कुम्भकारादिर्गृहादिकमधिष्ठाय घटादि करोति तदधिष्ठानमपि पृच्छत ऊर्णनाभिवदयमात्मारम्भण इति भावः ॥ २० ॥

## एकविंशी ।

या ते॒ धामा॑नि पर॒माणि॒ याव॒मा या म॑ध्य॒मा वि॑श्वकर्मन्नु॒तेमा । शिक्षा॒ सखि॑भ्यो ह॒विषि॑ स्वधावः स्व॒यं य॑जस्व त॒न्व॑ं वृधा॒नः ॥ २१ ॥

**उ०** या ते यानि ते तव धामानि स्थानानि परमाणि उत्कृष्टानि । यावमा यानि चावमानि कनीयांसि । या मध्यमा यानि च मध्यमानि । हे विश्वकर्मन्, उतेमा अपिच इमानि यानि प्रत्यक्षत उपलभ्यन्ते तेभ्यो द्रव्यमुपादाय शिक्षा सखिभ्यो देहि । समानख्यानेभ्यो यजमानेभ्यः हविषि अभ्युद्यति हे स्वधावः अन्नवन्, क उपकार इतिचेत् । नोत्सहे वक्तुमहं त्वां यज इति । को हि नाम मनुष्यस्त्वां यष्टुं समर्थोऽत एवं ब्रवीमि । स्वयं यजस्व तन्वं शरीरं वावृधानः वर्धयमानः ॥ २१ ॥

**म०** हे विश्वकर्मन्, हे स्वधावः, स्वधान्नमस्यास्तीति स्वधावान् तत्संबुद्धौ हे स्वधावः, 'मतुवसो रुः संबुद्धौ छन्दसि' ( ८ । ३ । १ ) इति रुः । हे हविर्लक्षणान्नवन्, ते तव यानि परमाणि उत्कृष्टानि धामानि, या यानि अवमा अवमानि कनीयांसि धामानि, उतापिच या यानि मध्यमा धामानि इमा इमानि पूर्वोक्तानि त्रिविधानि धामानि सखिभ्यो यजमानेभ्यः शिक्ष देहि । 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति संहितायां शिक्षपदस्य दीर्घः । क उपकार इति चेत् हविषि यजमानसंबन्धिन्युपस्थिते सति तन्वं स्वशरीरं वृधानः वर्धयन् सन् स्वयं यजस्व । वयं यजाम इति कथं वक्तुं शक्यम् । मनुष्यः कस्त्वां यष्टुं समर्थोऽत एवं ब्रवीमि स्वयं यजस्व । वर्धतेः शानचि व्यत्ययेन शपो लुक् । वृधानः तन्वमित्यत्र 'वा छन्दसि' ( पा० ६ । १ । १०६ ) इति पूर्वरूपाभावे यणादेशः ॥ २१ ॥

## द्वाविंशी ।

विश्व॑कर्मन्ह॒विषा॑ वावृधा॒नः स्व॒यं य॑जस्व पृथि॒वीमु॒त द्याम् । मुह्य॑न्त्व॒न्ये अ॒भितः॑ स॒पत्ना॑ इ॒हास्माकं॑ म॒घवा॑ सू॒रिर॑स्तु ॥ २२ ॥

**उ०** विश्वकर्मन् हे विश्वकर्मन्, मदीयेन हविषा वावृधानः वर्धयमानः उपसंजातहर्षः सन् मदीये यज्ञे । स्वयमेव यजस्व मदनुग्रहाय पृथिवीम् । पृथिव्याश्रयाणि भूतानि । उत द्याम् अपिच द्युलोकाश्रयाणि भूतानि । किंच त्वत्प्रसादादिनास्माकं मुह्यन्तु मोहमुपगच्छन्तु । अन्ये अभितः अवस्थिताः सन्तः सपत्नाः परिपन्थिनः । किंच त्वत्प्रसादादेव इह अस्माकं मघवा धनवानिन्द्रः । सूरिः पण्डितः अस्तु । आत्मज्ञानोपदेशकः ॥ २२ ॥

**म०** हे विश्वकर्मन्, हविषा मद्दत्तेन वावृधानः वर्धमानो जातहर्षः सन् मम यज्ञे पृथिवीं पृथिव्याश्रितानि भूतानि उतापि च द्यां द्युलोकाश्रितानि भूतानि स्वयं यजस्व मदनुग्रहाय । किंच त्वत्प्रसादादन्येऽभितः स्थिताः सपत्नाः शत्रवो मुह्यन्तु मोहं प्राप्नुवन्तु । किंच इह यज्ञे मघवा इन्द्रोऽस्माकं सूरिः पण्डित आत्मज्ञानोपदेशकोऽस्तु ॥ २२ ॥

## त्रयोविंशी ।

वा॒चस्पतिं॑ वि॒श्वक॑र्माणमू॒तये॑ मनो॒जुवं॒ वाजे॑ अ॒द्या हु॑वेम । स नो॒ विश्वा॑नि॒ हव॑नानि जोषद्वि॒श्वश॑म्भू॒रव॑से सा॒धुक॑र्मा ॥ २३ ॥

**उ०** वाचस्पतिम् व्याख्यातम् ॥ २३ ॥

**म०** द्वे ऋचौ व्याख्याते ( अध्या० ८ क० ४५ । ४६ ) ॥ २३ ॥ २४ ॥

## चतुर्विंशी ।

विश्व॑कर्मन्ह॒विषा॒ वर्ध॑नेन त्रा॒तार॒मिन्द्र॑मकृणोरव॒ध्यम् । तस्मै॒ विशः॒ सम॑नमन्त पू॒र्वीर॒यमु॒ग्रो वि॒हव्यो॒ यथास॑त् ॥ २४ ॥

**उ०** विश्वकर्मन्हविषेत्यपि व्याख्यातम् ॥ २४ ॥

## पञ्चविंशी ।

चक्षु॑षः पि॒ता मन॑सा॒ हि धीरो॑ घृ॒तमे॑ने अजन॒न्नम्न॑माने । य॒देदन्ता॒ अद॑दृहन्त॒ पूर्व॒ आदिद्द्या॒वा॑पृथि॒वी अ॑प्रथेताम् ॥ २५ ॥

**उ०** चक्षुषः पिता। अत्र द्वितीयोर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । यदा इत् । इच्छब्द एवार्थे । यदैव अन्ता । अन्तानिति द्वितीया । द्यावापृथिव्योः । अदद्दहन्त । दंहते-रेतद्रूपम् । दृढीकृतवन्तः । के । ये पूर्वे ऋषयः वसिष्ठप्र-भृतयः । आत् । अथेत्यर्थः । अथानन्तरम् द्यावापृथिव्यौ अप्रथेताम् पृथिव्यौ अभूताम् । ततोऽनन्तरम् । चक्षुषः पिता । चक्षुर्नामऋषिः तस्य पिता प्राणः प्रजया स्तूयते । मनसा हि धीरः मनसा च धीमान् । घृतमेने अजनत् घृतमुदकम् एने द्यावापृथिव्यौ प्रति । अजनत् जगदनुग्रहाय । नम्नमाने नममाने च । विष्कम्भयन्निति शेषः ॥ २५ ॥

**म०** 'चक्षुषः पितेत्यपरमनुवाकेन' (का० १८ । ३ । १३ ) । अष्टर्चेन षोडशगृहीतस्यापरमर्धं जुहोतीत्यर्थः । यदा इत् यदैव पूर्वे वसिष्ठादयो मुनयः अन्ताः । विभक्तिव्यत्ययः अन्तान् द्यावाभूम्योरन्तप्रदेशानदद्दहन्त दृढीकृतवन्तः । दंहते रूपम् । आत् इत् आत् अनन्तरवाची इदेवार्थे । अनन्तर-मेव द्यावाभूमिदर्ढ्यानन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्र-थेतां पृथू अभूताम् । तदा द्यावापृथिवीप्रथनानन्तरं चक्षुषः पिता चक्षुरादीन्द्रियाणां पालको विश्वकर्मा मनसा धीरः सन् हि निश्चितमेने एते द्यावापृथिव्यौ प्रति घृतमुदकमजनदज-नयत् । 'छन्दस्युभयथा' (पा० ३ । ४ । ११७ ) इत्यार्धधातु-कत्वाच्छपि णिचो लोपः । रोदस्योर्दार्ढ्ये वृष्टिं कुरुत इत्यर्थः । किं कुर्वन् । नम्नमाने नममाने द्यावापृथिव्यौ स्तम्भयन्निति शेषः । जगदनुग्रहाय रोदसी स्तम्भयन्नित्यर्थः । नमतेः शा-नचि नुगागमश्छान्दसः ॥ २५ ॥

## षड्विंशी ।

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् । तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् पर एकमाहुः ॥ २६ ॥

**उ०** विश्वकर्मा विमनाः । विश्वभूतमनाः आत् विहाय । अपिच महान् व्यापकः । धाता धारयिता । विधाता विद-धाति कर्माणि । परमोत संदृक् परमश्च संद्रष्टा भूतानाम् । तेषामिष्टानि हविषा मदन्ति येषां भूतानां विश्वकर्मा द्रष्टा तेषां भूतानां मध्ये यानि दृष्टानि अभिमतानि दमदानदया-दिभिर्युक्तानि । तानि इषा अन्नेन आहुतिरसभूतेन संमो-दन्ते । सर्वद्वन्द्ववियुक्तानि भूतानि संमोदन्ते । यत्र यस्मि-न्प्रदेशे सप्तऋषीन् विश्वकर्मणः प्राणभूतान् वसिष्ठप्रभृतीन् । परः परेण विश्वकर्मणा एकमाहुः एकं भवति । स हि सा-ध्यानां लोकः तेऽपि विश्वकर्मत्वं प्रार्थयन्ति ॥ २६ ॥

**म०** यत्र यस्मिन् लोके सप्तऋषीन् सप्त च ते ऋषयश्च सप्तऋषयः 'ऋत्यकः' (पा० ६ । १ । १२८ ) इति सन्ध्य-भावः । तान् परः विभक्तेः सुः । परेण विश्वकर्मणा सह एकमाहुः एकीभूतान् बुधा वदन्ति । यत्र लोके सप्तर्षयो विश्वकर्मणा सहैकत्वं प्राप्ताः तत्र लोके तेषां पुंसामिष्टानि अभिलषितानि वस्तूनि इषा अन्नेन आहुतिरसभूतेन सह संम-दन्ति संमोदन्ते सम्यक् मोदयुक्तानि पुष्टानि भवन्ति । ते विश्वकर्मलोके इष्टभोगान् प्राप्नुवन्तीत्यर्थः । तेषां केषाम् । विश्वकर्मा येषां संदृक् सम्यक् पश्यतीति संदृक् सम्यग्द्रष्टा । विश्वकर्मदृष्टाः सुखिनो भवन्तीत्यर्थः । कीदृशो विश्वकर्मा । विमनाः विशिष्टं मनो यस्य स तथा विभूतमनाः । सर्वकर्मज्ञ इत्यर्थः । आत् अपिच विहायाः नभोवद्व्यापकः । यद्वा विशेषेण जहाति त्यजति विहायाः संहर्ता । धाता धारयिता पोष्टा स्थितिकर्ता । विधाता उत्पादकः । उत अपि परमः सर्वेभ्य उत्कृष्टः । विभक्तेराकारः । एवंविधो विश्वकर्मा येषां द्रष्टा ते मुच्यन्ते भक्तानेव पश्यति तस्माद्भक्तिः कार्ये-त्यर्थः ॥ २६ ॥

## सप्तविंशी ।

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या ॥ २७ ॥

**उ०** यो नः योऽस्माकम् पिता पाता जनिता जनयिता यश्च विधाता विधारणहेतुः । यश्च धामानि स्थानानि वेद जातानि भुवनानि भूतजातानि विश्वा विश्वानि । यश्च देवानां नामधा नामानि दधाति करोति । नामच पितैव करोति । यश्च एकएव अद्वितीयः । तं विश्वकर्माणं संप्रश्नयितुम् भुवना भूतजातानि । आयन्ति आगच्छन्ति । अन्या अन्यानि च स एव स्वाधि-कारेषु नियुङ्क्ते इत्यभिप्रायः ॥ २७ ॥

**म०** यो विश्वकर्मा नोऽस्माकं पिता पालकः जनिता जनयिता उत्पादकः 'जनिता मन्त्रे' (पा० ६ । ४ । ५३ ) इति निपातः । यो विधाता विशेषेण धारकः सेतुः यश्च विश्वा विश्वानि सर्वाणि धामानि स्थानानि भुवनानि भूतजातानि च वेद जानाति । यश्च एकोऽद्वितीय एव सन् देवानां बहूनां नामधाः नामानि दधाति करोतीति नामधाः । नाम च पितैव करोति । तस्मादन्या अन्यानि भुवना भुवनानि भूतजातानि संप्रश्नं सम्यक् प्रश्नो यस्यां क्रियायां यथा तथा तं विश्व-कर्माणं यन्ति गच्छन्ति प्रलयकाले एकत्वं प्राप्नुवन्ति । यद्वा संप्रश्नं सम्यक् प्रष्टुं स्वाधिकारप्रश्नं कर्तुं भुवनानि यं यन्ति स एव स्वाधिकारेषु नियुङ्क्त इति भावः ॥ २७ ॥

## अष्टाविंशी ।

त आयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे ज-रितारो न भूना । असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ २८ ॥

**उ०** त आयजन्त । अत्र द्वितीयोर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । असूर्ते असुसमीरिते । असुः प्राणः सम-

दशकलिङ्गयुक्तावात्मानः सूर्ते सुष्ठुसमीरिते रजस्यन्तरिक्षलोके। निषत्ते निर्गतसत्ताके निरालम्बने। 'निषत्तानुत्तप्रतूर्तसूर्त–' इत्यादिना निपातनम्। यत्र स्थिताः सन्तः ये भूतानि समकृण्वन् कृतवन्तः। इमानि ते आयजन्त। यजतिर्दानार्थः। आभिमुख्येन दत्तवन्तो द्रविणं धनमुदकलक्षणं जीवनाय। सम् असै संगत्य असै भूतग्रामाय। ऋषयः पूर्वे वसिष्ठप्रभृतयः। जरितारः स्तोतारः। नभूना नात्यन्तं बहुयुक्त्या कामवर्षित्वेनेत्यर्थः। ये वसिष्ठादयो भूतानि सृजन्ति त एवोदकदानेन जीवन्तीति समस्तार्थः॥ २८॥

**म०** ते पूर्वे ऋषयो विश्वकर्मसृष्टा वसिष्ठाद्या असै भूतग्रामाय द्रविणं धनं जललक्षणं समायजन्त सम्यक् आभिमुख्येन ददुः द्रविणं भोगजातं वा। यजतिर्दानार्थः। कथं ददुः। न भूना न भूम्ना न बाहुल्येन। मलोपश्छान्दसः। किंतु युक्त्या कामवर्षित्वेनेत्यर्थः। कीदृशाः। जरितारः स्तोतारः। ते के। ये ऋषय इमानि भूतानि समकृण्वन्। स्वादेः करोतेर्लङ्। ये वसिष्ठादयस्तानि सृजन्ति त एव उदकदानेन जीवयन्तीत्यर्थः। कीदृशाः। असूर्ते असुभिः सप्तदशावयवैर्लिङ्गशरीरैरीरिता असूर्ताः। असुपूर्वस्य 'ईर गतौ' इत्यस्य छान्दस इडभावो निष्ठायाम् ईकारस्य पूर्वसवर्णदीर्घः जस एकारः। तथा रजसि अन्तरिक्षलोके निषत्ते निषत्ताः निषण्णाः स्थिताः जस एकारः। 'लोका रजांस्युच्यन्ते' (निरु० ४।१९) इति यास्कः। कीदृशे रजसि। सूर्ते सुष्ठु ईरिते प्रेरिते विस्तीर्णे। सुपूर्वस्य ईरधातोर्निष्ठायां पूर्ववत्। 'नसत्तनिषत्त–' (पा० ८।२।६१) त्यादिना निपातः॥ २८॥

## एकोनत्रिंशी।

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति। किꣳ स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त पूर्वे॥ २९॥

**उ०** परो दिवा। प्रश्नप्रतिप्रश्नरूपा मन्त्राः। परब्रह्मविषयोऽत्र प्रश्नः विभक्तिव्यत्ययबहुलो मन्त्रः। परः सूक्ष्मः दिवा दिवः। परश्च एना अस्याः पृथिव्याः। परश्च देवेभ्यः परश्च असुरेभ्यः यदस्ति। यच्च सदाकालमस्ति तत्परं ब्रह्मेति शेषः। किꣳस्वित् स्विच्छब्दो वितर्के। कं पुनर्गर्भं दध्रे धारितवत्य आपः। यत्र गर्भे देवाः संगताः प्रजापतिना अपश्यन्त दृष्टवन्तो जगदिदम् पूर्वे प्रथमजाः। तदुक्तम् 'आपो हवा इदमग्रे सलिलमेवास' इत्यादिना॥ २९॥

**म०** प्रश्नोत्तररूपा मन्त्राः। ब्रह्मविषयप्रश्नः। विभक्तिव्यत्ययबाहुल्यमत्र मन्त्रे। यत् अस्ति हृदीति शेषः। यदीश्वरतत्त्वं हृत्पुण्डरीके अस्ति तत् दिवा परः द्युलोकादपि दूरे तिष्ठति दिवो दुर्ज्ञेयत्वात्। परस्शब्दः सान्तो दूरवाची। एना पृथिव्या अस्याः पृथिव्याः परः पृथिव्या अपि दूरे। देवेभिरसुरैः देवेभ्योऽसुरेभ्यश्च परो दूरे। दूरत्वं विलक्षणत्वम्। सर्वजगद्विलक्षणत्वाद्गुरुशास्त्रविमुखैर्न ज्ञायत इत्यर्थः। किंच स्विदिति वितर्के। आपः प्रथमं कं गर्भं दध्रे दधिरे अधारयन्। धाञो लिटि तङि प्रथमबहुवचनस्य 'लिटस्तझयोरेशिरेच्' इति (पा० ३।४।८१) इतीरेचि कृते तस्य 'इरयो रे' (पा० ६।४।७६) इति रे आदेशे तस्य स्थानिवत्त्वात् 'आतो लोप इटि च' (पा० ६।४।६४) इत्यालोपे दध्रे इति रूपम्। पूर्वे देवाः प्रथमोत्पन्ना देवाः वसिष्ठादयो यत्र गर्भे समपश्यन्त ददृशुः जगदिति शेषः। यदा स्थूलोऽप्ययं जगदाधारो गर्भरूपो न ज्ञायते तदात्यन्तसूक्ष्मं तत्त्वं न ज्ञायत इति किमु वक्तव्यमिति भावः॥ २९॥

## त्रिंशी।

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः॥ ३०॥

**उ०** तमित् प्रतिप्रश्नः तमिद्गर्भम्। इच्छब्दो निपात आश्चर्यवचनः। तमाश्चर्यभूतं प्रथमं गर्भं दध्रे आपः। यत्र देवाः समगच्छन्त संगताः विश्वे सर्वे। नन्वस्याण्डस्याद्भिः सहितस्य क आधार इत्याशङ्क्याह। अजस्य न जायत इत्यजः। नाभौ मध्ये अधि उपरि। एकमविभक्तमनन्यभूतम् अर्पितं समर्पितम्। यस्मिन्नजे ब्रह्मणि। विश्वानि भुवनानि सर्वाणि भूतजातानि। तस्थुः स्थितवन्ति ब्रह्माण्डाश्रितानि। ननु तस्याप्यन्य आधार इति। स्वप्रतिष्ठं हि परब्रह्म॥ ३०॥

**म०** प्रत्युत्तरमाह। आपः प्रथमं तमित् तमेव गर्भं दध्रे दधिरे। यत्र कारणभूते गर्भे विश्वे सर्वे देवाः समगच्छन्त सङ्गताः संभूय वर्तन्ते। ननु तस्य गर्भस्य को वाधारस्तत्राह। अजस्य जन्मरहितस्य परमेश्वरस्य नाभावधि नाभिस्थानीयस्य स्वरूपमध्ये एकमविभक्तमनन्यभूतं किंचिद्बीजं गर्भरूपमर्पितं स्थापितं। यस्मिन् बीजे विश्वानि सर्वाणि भुवनानि भूतजातानि तस्थुः स्थितानि तद्बीजमर्पितम्। तथाच स्मृतिः 'अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सूर्यकोटिसमप्रभम्' (मनु० १।८।९) इति। स एव सर्वाश्रयो न तु तस्याप्यन्य आश्रया इति भावः॥ ३०॥

## एकत्रिंशी।

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति॥ ३१॥

**उ०** इदानीं विश्वकर्मा मनुष्याणामुपदेशं ददाति। न तं विदाथ न विदाथ न जानीथ तं परं पुरुषम्। य इमानि भूतजातानि जजान जनयति उपसंहरति च। अतः कार-

णात् युष्माकं च तस्य च पुरुषस्य । अन्यत् महत् अन्तरं बभूव । पुरुषो जनको यूयं जन्याः । पुरुषो श्रामको यूयं श्राम्याः । यदि तु ज्ञात्वात्मत्वेनोपास्यध्वं न संसृतिः स्यादित्यभिप्रायः । एवं प्रत्यक्षानुक्त्वा अथेदानीं परोक्षानभिनयेन दर्शयन्नाह । ये चैते । नीहारेण अविद्यया प्रावृता अवगुण्ठिताः । ये जल्प्या प्रावृताः । पक्षहेतुदृष्टान्तैरात्मज्ञानं जल्पिः । कुतार्किकाभिप्रायमेतत् । ये च असुतृपः असून्प्राणान्तर्पयन्ति असुतृपः अलंकरिष्णवः । तैरपि सह महदेवान्तरं बभूव । ये उक्थशासः उक्थानां शंसितारः । उक्थानि च यज्ञे शस्यन्ते अतो यज्वानो गृह्यन्ते । ये यज्ञशीलास्ते पुरुषं प्रति विचरन्ति । ये तु पुरुषविदः ते पुरुष एव भवन्ति । नीहारप्रावृतास्तु नरकयायिनः ॥ ३१ ॥

**म०** इदानीमुपदिशति । यो विश्वकर्मा इमा इमानि भूतजातानि जजान उत्पादितवान् तं विश्वकर्माणं हे जीवाः, यूयं न विदाथ न जानीथ। 'लेटोऽडाटौ' ( पा० ३ । ४ ।९४ ) इत्याडागमः । ननु देवदत्तोहं यज्ञदत्तोऽहमिति वयमात्मानं जानीम इति चेत् न । न ह्यहंप्रत्ययगम्यं जैवं रूपं परमेश्वरतत्त्वं किंतु युष्माकमहंप्रत्ययगम्यानां जीवानामन्तरमभ्यन्तरं वास्तवस्वरूपमन्यत् अहंप्रत्ययादतिरिक्तं सर्वावदानं वेद्यमीश्वरतत्त्वं बभूव भवति विद्यते । जीवरूपवत्तदपि कुतो न विद्म इति चेत् भवन्त ईदृशाः चरन्ति प्रवर्तन्तेऽतो न जानीथ । कीदृशाः । नीहारेण प्रावृताः नीहारसदृशेनाज्ञानेनावृतत्वान्न जानीथ यथा नीहारो नात्यन्तमसत् दृष्टेरावरकत्वात् नाप्यत्यन्तं सत् काष्ठाश्मादिवद्रोधयितुमयोग्यत्वात् एवमज्ञानमपि नात्यन्तमसत् ईश्वरतत्त्वावरकत्वात् नापि सत् बोधमात्रनिवर्त्यत्वात् ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः । न केवलं नीहारेण जल्प्या च प्रावृताः जल्पनं जल्पिस्तया देवोऽहं नरोऽहं ममेदं गृहं क्षेत्रमित्याद्यनृतजल्पनेन व्याप्ताश्च । किंच असुतृपः असुषु असून् वा तृप्यन्ति असुतृपः केनापि प्रकारेण प्राणान् भृत्वा तावतैव तृप्यन्ति नतु परमेश्वरतत्त्वं विचारयितुं प्रवर्तन्ते । न केवलमैहिकभोगेन तृप्तिः किंतु उक्थशासः परलोकभोगान् संपादयितुं यज्ञेषु उक्थानि शंसन्ति उक्थशासः शस्त्रस्तोतारः । शसेः क्विपि 'अनिदिताम्' ( पा० ६ । ४ । २४ ) इति नलोपः । संहितायां दीर्घः । ऐहिकामुष्मिकभोगप्रवृत्तानामज्ञानमिथ्याज्ञानपराधीनानां भवतां नास्ति तत्त्वज्ञानमित्यर्थः ॥ ३१ ॥

## द्वात्रिंशी ।

विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥ ३२ ॥

**उ०** विश्वकर्मा हि विश्वकर्मा आदित्यान्तरः पुरुषः अजनिष्ट जातः । देवः दानादिगुणयुक्तः । आत् इत् निपातौ । अथानन्तरम् । गन्धर्वः गौर्वाचो धारयिता पृथिव्या वा धारयिता गन्धर्वोऽग्निः गानाद्वा गन्धर्वोऽग्निः । 'अथो आहुः गन्धर्वो अग्निरेवास्यै पृष्ठे सर्वकृत्स्नो मन्यमानोऽगायत् ।' इत्यादिश्रुतिः । अभवत् द्वितीयः सहायाय । तृतीयः पिता पालयिता जनयिता च ओषधीनाम् । पर्जन्यः अभवत् । सचोत्पन्नः सन् अपामाहुतिपरिणामभूतानाम् गर्भं विअदधात् धारयति पुरुत्रा बहूनां त्राता । यद्वा अपां गर्भं विदधाति पृथिव्यां बहुप्रकारम् ॥ ३२ ॥

**म०** ब्रह्माण्डमध्यगतानामुत्पत्तिरुच्यते । ब्रह्माण्डमध्ये प्रथमं विश्वकर्मा देवतिर्यगादिजगद्भेदकर्ता सत्यलोकवासी चतुर्मुखो देवः अजनिष्ट आदित्यान्तरपुरुषरूपेण जातः । आत् इत् अनन्तरमेव तदपेक्षया द्वितीयो गन्धर्वः अभवत् उत्पन्नः । गां वाचं पृथिवीं वा धरति गन्धर्वोऽग्निः । गानाद्वा गन्धर्वः 'अथो एवाहुरग्निरेवास्यै पृथिव्यै पृष्ठे सर्वः कृत्स्नो मन्यमानोऽगायत्' इत्यादिश्रुतेः । पिता पालयिता ओषधीनां जनिता उत्पादकः पर्जन्यः । पूर्वोक्तद्वयापेक्षया तृतीयोऽभवत् । स पर्जन्य उत्पन्नः सन्नपामाहुतिपरिणामभूतानां गर्भं । व्यदधात् धारयति करोति वा । कीदृशं गर्भं । पुरुत्रा पुरून् बहून् त्रायते रक्षति पुरुत्राः बहूना रक्षकम् । विभक्तेराकारः बहुप्रकारं वा । वैश्वकर्मणहोमः समाप्तः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः ॥ ३३ ॥

**उ०** आशुः शिशानः अनुवाकः । अप्रतिरथऋषिः । ऐन्द्रोऽप्रतिरथोऽपश्यत् । मर्माणि त इत्यन्तः । आदितो द्वादशैन्द्र्यस्त्रिष्टुभो ब्रह्मा दक्षिणतो जपति । आशुः शीघ्रः । शिशानः । 'शो तनूकरणे' । शिशानो वज्रम् । वृषभो न भीमः वृषभ इव भीमः भीमो बिभ्यत्यस्मादिति । घनाघनः हनहनेत्येववक्ता । यद्वा घनशरीरः । क्षोभणश्चर्षणीनाम् संचालकः चर्षणीनां मनुष्याणाम् । संक्रन्दनः समाह्वाता संग्रामकारिणाम् । आहूय चानिमिषः अप्रमादी । यद्वा अनिमिषो देवः । एकवीरः एकएवासहायो विक्रान्तः । य ईदृग्गुणविशिष्टः सः स तं बह्वयः सेनाः अजयत् जयति । साकं सहैव । इन्द्रः ॥ ३३ ॥

**म०** 'आहवनीये प्रणीयमानेऽप्रतिरथस्य द्वादश ब्रुवन्नग्नौ सर्वत्रैके' ( का० ११ । १ । ९–१० ) । अग्नौ चयने इध्ममादीप्याहवनीये चित्यां प्रति नीयमाने ब्रह्माप्रतिरथसूक्तस्य द्वादश ऋचो जपन् दक्षिणतोऽनुगच्छतीति सूत्रार्थः । अप्रतिरथदृष्टा इन्द्रदेवत्या द्वादश त्रिष्टुभः । इन्द्रः शतं सेनाः शतसंख्याकाः शत्रुसेनाः साकं सहैव एकप्रयत्नेनैवाजयत् जयति ।

कीदृश इन्द्रः । आशुः अश्नुते व्याप्नोति आशुः शीघ्रगामी उणप्रत्ययः । शिशानः 'शो तनूकरणे' 'बहुलं छन्दसि' ( पा० २ । ४ । ७६ ) इति जुहोत्यादित्वाच्छानचि द्वित्वम् । श्यति वज्रं तीक्ष्णीकरोति शिशानः । वृषभो न वृषभ इव भीमः भयंकरः । घनाघनः शत्रूणामतिशयेन घातकः हन हननेति वक्ता वा वृष्टिकर्तृमेघरूपो वा । 'वर्षुकाब्दो घनाघनः' इत्यभिधानात् । चर्षणीनां मनुष्याणां क्षोभणः क्षोभयतीति क्षोभणः क्षोभहेतुः चालकः । संक्रन्दनः सम्यक् क्रन्दनं परभयहेतुर्ध्वनिर्यस्य । यद्वा समाह्वाता शत्रूणाम् । अनिमिषः नास्ति निमेषो यस्य सः देवत्वात् । यद्वा कदाचिदपि निमेषं न करोति । अत्यन्तसावधान इत्यर्थः । एकवीरः एकश्चासौ वीरश्च अन्यनिरपेक्षं शत्रूनेक एव जेतुं समर्थः ॥ ३३ ॥

## चतुस्त्रिंशी ।

संक्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ ३४ ॥

**उ०** संक्रन्दनेन शब्दकारिणा अनिमिषेण एकचित्तेन अप्रमाद्यता वा । जिष्णुना जयनशीलेन । युत्कारेण 'युध संप्रहारे' अस्य क्विपि युत् । संप्रहारकारिणा दुश्च्यवनेन अप्रच्याव्येन अप्रच्युतस्वभावेन वा । धृष्णुना प्रसहनशीलेन । तदिन्द्रेण जयत । ईदृग्गुणविशिष्टेनेन्द्रेण तज्जयत । दुर्जयमिति शेषः । तच्च सहध्वम् तच्चाभिभवत । हे युधः, 'युध संप्रहारे' इत्यस्यैतत्क्विपि बहुवचनम् । हे योद्धारः । 'पादादावभिमन्त्रितस्य च' इत्यादिरुदात्तः । हे नरः मनुष्याः, इषुहस्तेनेन्द्रेण । वृष्णा सेक्त्रा वर्षणशीलेन वा ॥ ३४ ॥

**म०** युध्यन्ते ते युधः क्विप् पादादावामन्त्रितस्येति आद्युदात्तः । हे युधो नरो योद्धारो मनुष्याः, इन्द्रेण कृत्वा यूयं तत् परबलं जयत वशीकुरुत । वशीकृत्य च तत् सहध्वम् अभिभवत । विनाशयतेत्यर्थः । कीदृशेनेन्द्रेण । संक्रन्दनेन शब्दकारिणा । अनिमिषेण एकचित्तेन । जिष्णुना जयनशीलेन । युत्कारेण युधं करोतीति युत्कारस्तेन कर्मण्यण् युद्धकारिणा । दुश्च्यवनेन दुःखेन च्यावयितुं शक्यः दुश्च्यवनस्तेन अजय्येन धृष्णुना प्रगल्भेन भीतिरहितेन इषुहस्तेन इषवो हस्ते यस्य तेन वाणाद्यायुधोपेतेन । वृष्णा वर्षतीति वृषा तेन कामानां वर्षुकेण ॥ ३४ ॥

## पञ्चत्रिंशी ।

स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन । सꣳसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३५ ॥

**उ०** स इषुहस्तैः स इन्द्रः इषुहस्तैः योद्धृभिः संसृजति स इषुहस्तानेव योद्धॄन् । स निषङ्गिभिः । स एवेन्द्रो निषङ्गिभिः खड्गिभिः संसृजति निषङ्गिण एव योद्धॄन् स्वान् । किंच । वशी कान्तः सर्वजनप्रियो वा स्वतन्त्रो वा निगृहीतादिषड्वर्गो वा ईश्वरो वा । स एवेन्द्रो युधः योद्धॄन्स्वान् शत्रुगणेन संसृष्टा । किंच संसृष्टजित् संसृष्टाञ्जयति शत्रून् । सोमपाश्च बाहुशर्धी च बाहुबलः संयोगिबलनिरपेक्षः । शर्ध इति बलनाम । उग्रधन्वा उद्यतधनुः । प्रतिहिताभिरस्ता । शत्रुशरीरेषु प्रतिनिहिताभिरिषुभिः इन्द्रः अस्ता क्षेप्तेत्यनुमीयते । लघुसंप्रधानो लक्ष्यपाती चेत्यभिप्रायः ॥ ३५ ॥

**म०** स इन्द्रोऽस्मानवत्विति शेषः । संस्रष्टा 'ण्वुल्तृचौ–' ( पा० ३ । १ । १३३ ) इति तृच्प्रत्ययः । युद्धाय संसर्गकर्ता । वशी वशयति रिपूनिति वशी । यद्वा कान्तः जनप्रियः स्वतन्त्रो वा निगृहीतारिषड्वर्गो वा ईश्वरो वा । गणेन रिपुसमूहेनापि सह युधः युध्यतेऽसौ युधः युद्धकर्ता 'इगुपधज्ञा' ( पा० ३ । १ । १३५ ) इति कप्रत्ययः । संसृष्टजित् संसृष्टान् युद्धाय सङ्गतान् रिपून् जयति संसृष्टजित् । सोमपाः सोमं पिबतीति यजमानानां यागेषु सोमपानकर्ता । बाहुशर्धी बाह्वोः शर्धो बलमस्यास्तीति बाहुशर्धी बाहुबलोपेतः । संयोगिनिरपेक्ष इत्यर्थः । शर्ध इति बलनाम । उग्रधन्वा उग्रमुत्कृष्टं धनुर्यस्य सः 'धनुषश्च' ( पा० ५ । ४ । १३१ ) इत्यनङादेश । प्रतिहिताभिरस्ता स्वेन धनुषा प्रेरिताभिरिषुभिरस्ता क्षेप्ता 'असु क्षेपणे' तृन् आद्युदात्तत्वात् अस्यतीत्येवंशीलः रिपुनाशयितेत्यर्थः । सशब्दावृत्तिः पादपूरणार्था ॥ ३५ ॥

## षट्त्रिंशी ।

बृहस्पते परिदीया रथेन रक्षोहामित्राँ२ अपबाधमानः । प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ३६ ॥

**उ०** बृहस्पते । हे बृहस्पते, परिदीया । दीयतिर्गतिकर्मा । परियाहि रथेन । रक्षोहा रक्षसां हन्ता । अमित्रान् शत्रून् । अपबाधमानः । किंच प्रभञ्जन्प्रमर्दयन् सेनाः । प्रमृणो युधा जयन् । मृणातिर्हिंसार्थः । तस्य क्विपि द्वितीयाबहुवचनम् । प्रमृणः हिंसकान् युधा युद्धेन जयन् अस्माकम् एधि भव । अविता गोप्ता रथानाम् । बृहस्पतिरपीन्द्रस्य पुरोहित इतीन्द्रसंबन्धेनैव स्तूयते ॥ ३६ ॥

**म०** बृहस्पतिरिन्द्रः वाग्वै बृहती तस्या एष पतिः व्याकरणकर्तृत्वादिन्द्रस्य वाक्पतित्वमिन्द्रस्य पुरोहितत्वेन वा बृहस्पतिरेव स्तूयते । हे बृहस्पते, त्वं रथेन परिदीय सर्वतो गच्छ । दीयतिर्गत्यर्थः । गत्वा चास्माकं रथानामस्मदीयस्यन्दनानामविता रक्षक एधि भव । कीदृशस्त्वम् । रक्षोहा रक्षांसि हन्तीति रक्षोहा क्विप् रक्षसां हन्ता । अमित्रान् शत्रू[illegible] तमसा गाढा[illegible] पीडयन् । सेनाः परकीयाः प्रभञ्जन् प्रकर्षेण [illegible] लोट । द्वादशैन्द्र्यः युधा युद्धेन प्रमृणो जयन् । मृणतिर्हिंसा[illegible] द्वितीयाबहुवचनम् । प्रमृणो हिंसकान् ज[illegible]

## सप्तत्रिंशी ।

बलविज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ३७ ॥

**उ०** बलविज्ञायः । यस्त्वं बलमाविष्कुर्वन्विज्ञायसे अयमिन्द्र इति । स्थविरश्च सर्वानुशासकः सर्वमान्यो वा चिरन्तनो वा । प्रवीरश्च अभिवीरः वीरं वीरमभि अभिवीरः । अभि सत्त्वा च सत्त्वं सत्त्वमभि अभिसत्त्वा । सहोजाश्च । सह इति बलनाम । बलात् जातः । नह्यन्यस्माज्जात इत्थंबलः स्यात् । स त्वं जैत्रं जेतारं हे इन्द्र, रथम् आतिष्ठ । गोवित् सन् स्तुतिवित्सन् । गोशब्दो वाग्वचनः ॥ ३७ ॥

**म०** हे इन्द्र, त्वं जैत्रं जयनशीलं रथमातिष्ठ आरोह । कीदृशस्त्वम् । बलविज्ञायः बलं परकीयं विशेषेण जानाति बलविज्ञायः कर्मण्यण् 'आतो युक् चिण्कृतोः' ( पा० ७ । ३ । ३३ ) यद्वा बलेन कृत्वा विज्ञायते करणे घञ् । स्थविरः पुरातनः सर्वानुशासकः । प्रवीरः प्रकृष्टो वीरः शूरः । सहस्वान् सहो बलमस्यास्तीति सहस्वान् । वाजोऽस्यास्तीति वाजी अन्नवान् । सहमानः शत्रूनभिभवन् । उग्रः युद्धेषु क्रूरः अभिवीरः अभितो वीराः शूराः यस्य सः । अभिसत्वा । अभितः सत्वानः परिचारकाः प्राणिनो यस्य सोऽभिसत्वा । सहसो बलाज्जातः सहोजाः । न ह्यन्यस्माज्जात ईदृग्बलः स्यात् । गां स्तुतिगिरं वेत्ति गोवित् ॥ ३७ ॥

## अष्टत्रिंशी ।

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायो अनु सꣳरभध्वम् ॥ ३८ ॥

**उ०** गोत्रभिदम् । असुरगोत्रं भिनत्तीति गोत्रभित् । यद्वा गोत्र इति मेघनामसु पठितम् । स हि गाः अपः त्रायते । तस्य गोत्रस्य मेघस्य भेत्तारं वृष्ट्यर्थम् । गोविदम् उपलब्धारम् । यद्वा वाग्विदं स्तुतिविदम् पण्डितं वा वज्रपाणिम् जयन्तम् । जयतेर्गत्यर्थस्य अज्म । अज्मेति संग्रामनाम । संग्रामं गच्छन्तम् । प्रमृणन्तम् ओजसा । मृणतिर्हिंसाकर्मा । प्रमर्दयन्तं बलेन । इममिन्द्रम् हे सजाताः समानजन्मानो देवाः । अनुवीरयध्वम् वीरकर्मकुर्वाणमनुगम्य वीरकर्मणैव प्रोत्साहयत । हे सखायः समानख्याना देवाः, अनुसंरभध्वम् अनुसंगम्य रभसं कुरुत ॥ ३८ ॥

**म०** हे सजाताः समानं जातं जन्म येषां ते समानज- द्वितीयः । गयो देवाः, इममिन्द्रमनु वीरयध्वम् 'शूर वीर व्युदधात्पुरुत्रा तश्चुरादिः लोट् । वीरकर्म कुर्वाणमनुगम्य वीर- उ० विश्वकर्मा न अनु संरभध्वम् संरम्भं वेगं कुर्वाणमनु अजनिष्ट जातः । देवामिन्द्रम् । गोत्रभिदं गोत्रमसुरकुलं भिनत्ति गोत्रभित्तम् । यद्वा गा अपः त्रायते गोत्रो मेघः तस्य भेत्तारम् । गोविदम् गां वाचं वेत्तीति गोवित् तम् पण्डितम् । वज्रबाहुं वज्रं बाहौ यस्य तम् । अज्म संग्रामं जयन्तम् । अज्मेति युद्धनाम । अजतेर्गत्यर्थस्य । ओजसा बलेन प्रमृणन्तं शत्रून्हिंसन्तम् । मृणतिर्हिंसाकर्मा ॥ ३८ ॥

## एकोनचत्वारिंशी ।

अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु ॥ ३९ ॥

**उ०** अभिगोत्राणि अभिगाहमानो गोत्राणि असुरकुलानि मेघवृन्दानि वा । सहसा बलेन । अदयो निस्त्रिंशः । वीरः विक्रान्तः । शतमन्युः बहुक्रोधः इन्द्रः । दुश्च्यवनः अप्रच्याव्यः । पृतनाषाट् पृतनां संग्रामं सहते अभिभवति । अयुध्यः अविद्यमानप्रतियोधः । य इत्थंभूत इन्द्रः सोऽस्माकं सेनाम् अवतु पालयतु । प्रयुत्सु युद्धेषु ॥ ३९ ॥

**म०** इन्द्रः युत्सु युद्धेषु अस्माकं सेनाः प्रावतु प्रकर्षेण रक्षतु 'छन्दसि परेऽपि' ( पा० १ । ४ । ८१ ) इत्युपसर्गस्य क्रियापदात् परप्रयोगः । कीदृश इन्द्रः । गोत्राणि असुरकुलानि मेघवृन्दानि वा अभिगाहमानः सर्वतो विलोडयन् । अदयः दयारहितः । वीरः विक्रान्तः । शतमन्युः शतमसंख्यो मन्युः क्रोधो यस्य शतयज्ञो वा । दुश्च्यवनः अप्रच्याव्यः । पृतनां संग्रामं सहते अभिभवतीति पृतनाषाट् । अयुध्यः योद्धुमशक्यः । नास्ति युध्यः प्रतियोधास्येति वा ॥ ३९ ॥

## चत्वारिंशी ।

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ४० ॥

**उ०** इन्द्र आसाम् । देवसेनानां व्यूहरचनात् इन्द्र आसां नेता भवतु । बृहस्पतिश्च । मन्त्री प्रधानानि हि कार्याणि करोति । दक्षिणायज्ञः दक्षिणतो यज्ञः एतु । पुर एतु सोमः पुरस्तादागच्छतु सोमः । यद्वा । दक्षिणापुरस्तात् एतु यज्ञश्च सोमश्च । केषामित्यत आह । देवसेनानाम् अभिभञ्जतीनाम् । 'भञ्जो आमर्दने' जयन्तीनाम् । मरुतः गणभूताः यन्तु अग्रम् निरुध्य ॥ ४० ॥

**म०** इन्द्रः बृहस्पतिश्च आसां देवसेनानां नेता प्रणेता भवत्विति शेषः । यज्ञः यज्ञपुरुषो विष्णुर्दक्षिणा दक्षिणत एतु गच्छतु । दक्षिणादाच्प्रत्ययः । सोमः परोऽग्रे एतु । मरुतो गणदेवा अग्रं सेनाग्रभागं यन्तु गच्छन्तु । कीदृशीनां देवसेनानाम् । अभिभञ्जतीनां 'भञ्जो आमर्दने' शत्रून्मर्दयन्तीनाम् । तथा जयन्तीनां विजयमानानाम् ॥ ४० ॥

## एकचत्वारिंशी ।

इन्द्र॑स्य॒ वृष्णो॒ वरु॑णस्य॒ राज्ञ॑ आदि॒त्याना॑म्म॒रु॒ता॒ᳪ᳭ शर्ध॑ उ॒ग्रम् । म॒हाम॑नसां भुवनच्य॒वाना॒ङ्घोषो॑ दे॒वाना॒ञ्जय॑तामु॒दस्था॑त् ॥ ४१ ॥

उ० इन्द्रस्य वृष्णः इन्द्रस्य वर्षितुः । वरुणस्य च राज्ञः । आदित्यानां मरुतां च शर्धः बलं हस्त्यश्वरथपदातिलक्षणम् । उग्रम् उद्गूर्णायुधम् । उदस्थादित्यनुषङ्गः । यदा चैतदुदस्थात् अथानन्तरमेव । महामनसाम् अक्लिष्टमनसाम् । भुवनच्यवानां भुवनच्यावनसमर्थानाम् घोषः शब्दः । देवानां जयताम् उदस्थात् उत्थितः जितं जितमिति ॥ ४१ ॥

म० वृष्णः कामवर्षितुरिन्द्रस्य राज्ञो वरुणस्यादित्यानां द्वादशानां मरुतां चैषां देवानामुग्रमुत्कृष्टं शर्धो बलं गजतुरगरथपत्त्यात्मकसैन्यं घोषो जितं जितमिति शब्दश्च उदस्थात् उत्थितः । जितं जितमिति वददिन्द्रादिसैन्यमुत्थितमित्यर्थः । कीदृशानां देवानाम् । महामनसां महन्मनो येषां ते महामनसस्तेषां युद्धे स्थिरचित्तानाम् । तथा भुवनच्यवानां भुवनं लोकं च्यावयन्ति ते भुवनच्यवास्तेषां भुवनच्यावनसमर्थानाम् । जयतां विजयमानानाम् ॥ ४१ ॥

## द्विचत्वारिंशी ।

उद्ध॑र्षय मघव॒न्नायु॑धा॒न्युत्सत्व॑नां माम॒काना॒म्मना॑ᳪ᳭सि । उद्वृ॑त्रहन्वा॒जिना॒ं वाजि॑ना॒न्युद्रथा॑नां॒ जय॑तां यन्तु॒ घोषा॑: ॥ ४२ ॥

उ० उद्धर्षय उद्गतहर्षान् कुरु । हे मघवन् आयुधानि । उत्सत्वनाम् उद्धर्षय च सत्वनाम् सत्वानां मनुष्याणाम् । मामकानां मदीयानां । मनांसि उद्धर्षय । हे वृत्रहन्, वाजिनामश्वानाम् । वाजिनानि वेजनवत्त्वानि । चञ्चलत्वं ह्यश्वस्य गुणः । उद्रथानां च जयतां यन्तु घोषाः । उद्यन्तु च त्वत्प्रसादात् रथानां च जयतां मे घोषाः शब्दाः ॥ ४२ ॥

म० हे मघवन् धनवन्निन्द्र, आयुधानि उद्धर्षय उद्भूतहर्षाणि कुरु । मामकानां मदीयानां सत्वनां प्राणिनां मनांसि च उद्धर्षय हर्षयुक्तान् कुरु । हे वृत्रहन् वैरिघातिन्, वाजिनामश्वानां वाजिनानि शीघ्रगमनानि उद्धर्षय उत्कृष्टानि कुरु । किंच जयतां विजयमानानां रथानां घोषाः शब्दा उद्यन्तु उद्गच्छन्तु रथाः सशब्दाः प्रसरन्तु ॥ ४२ ॥

## त्रिचत्वारिंशी ।

अ॒स्माक॒मिन्द्र॒: समृ॑तेषु ध्व॒जेष्व॒स्माकं॒ या इष॑व॒स्ता ज॑यन्तु । अ॒स्माकं॑ वी॒रा उत्त॑रे भवन्त्व॒स्माँ२॥ उ॑ देवा अवता॒ हवे॑षु ॥ ४३ ॥

उ० अस्माकमिन्द्रः । अस्माकं तावत् समृतेषु संगतेषु ध्वजेषु शत्रुबलध्वजलोलीभूतेषु । इन्द्रो रक्षिता भवतु । इन्द्रप्रसादादेव अस्माकं या इषवः ताः जयन्तु । अस्माकं च वीरा उत्तरे विजयिनो भवन्तु । अस्मान् उ । विनिग्रहार्थीय उकारः । अस्मानेव हे देवाः, अवत रक्षत । हवेषु आह्वानेषु ॥ ४३ ॥

म० ध्वजेषु समृतेषु 'ऋ गतौ' सङ्गतेषु शत्रुध्वजैः संयुक्तेषु सत्सु इन्द्रः अस्माकं रक्षिता भवत्विति शेषः । तदा नोऽस्माकं या इषवोऽस्मदीयैः प्रयुक्तास्ता जयन्तु परसैन्यानि घ्नन्तु । अस्माकं ये वीराः शूरास्ते उत्तरे परकीयभटेभ्य उत्कृष्टा भवन्तु । उ अपिच हे देवाः, हवेषु अस्मान् यूयमवत रक्षत 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति दीर्घः ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

अ॒मीषां॑ चि॒त्तं प्र॑तिलो॒भय॑न्ती गृहा॒णाङ्गा॑न्यप्वे॒ परे॑हि । अ॒भि प्रेहि॒ निर्द॑ह हृ॒त्सु शोकै॑र॒न्धेना॒मित्रा॒स्तम॑सा सचन्ताम् ॥ ४४ ॥

उ० अमीषां चित्तम् अप्वा देवता । साच पुनर्व्याधिर्वा भयं वा । यस्मादेतया विद्धो व्याप्तः अपचीयतेऽनया भक्ष्यमाणः तस्मादप्वा अपशब्दान्त्याकारलोपस्ततष्टाप् 'ऐन्द्र्योऽभिरूपा द्वादश भवन्ति' इति श्रुतिः । इयमपीन्द्रसेनासंबन्धिनी । अमीषाम् संबन्धिनां मनुष्याणाम् चित्तम् चित्तावीति वचनव्यत्ययः । प्रतिलोभयन्ती । 'लुभ विमोहने' । विमोहयमाना । गृहाणामङ्गानि हे अप्वे, ततः परेहि परागच्छ पुनरन्यान् शत्रून्गृहीतुम् अतो भूयोभूयः करणेनैतानेव शत्रूनभिप्रेहि । निर्दह चैषां हृदयानि शोकैः । हृत्स्विति सप्तमीबहुवचनं द्वितीयाबहुवचनस्थाने हृदयानि निर्दह शोकैः । यथा अन्धेन ध्वान्तलक्षणेन अमित्राः तमसा सचन्ताम् तमसा संसेव्यन्ताम् संश्लिष्यन्ताम् । द्वादशैन्द्र्यः समाप्ताः ॥ ४४ ॥

म० अप्वा देवता सा व्याधिर्भयं वा तस्मादेतया विद्धोऽपचीयते तस्मादप्वा । अपपूर्वाद्वातेरन्तर्भूतण्यर्थात् 'अन्येभ्योऽपि दृश्यते' ( पा० ३ । २ । १०१ ) इति ड्प्रत्ययः । अपशब्दान्त्याकारलोपश्छान्दसः ततष्टाप् । अपवति अपगमयति सुखं प्राणांश्चेत्यप्वा । 'ऐन्द्र्योऽभिरूपा द्वादश भवन्ति' ( ९ । २ । ३ । ६ ) इति श्रुतेरियमपीन्द्रसेनासंबन्धिनी । हे अप्वे, अमीषां शत्रूणां चित्तं चित्तानि प्रतिलोभयन्ती मोहयन्ती अङ्गानि शत्रुगात्राणि गृह्णाना ततः परेहि अङ्गान्यादाय परागच्छ । पुनरन्यान् रिपून् गृहीतुमभि शत्रुसङ्घं प्रेहि प्रगच्छ । तेषां हृत्सु हृदयानि शोकैर्धनपुत्रनाशादिनिमित्तैर्निर्दह विभक्तिव्यत्ययः । किंच अमित्राः शत्रवोऽन्धेन तमसा गाढान्धकारेण सचन्तां सङ्गच्छन्तां 'षच संबन्धे' लोट । द्वादशैन्द्र्यः समाप्ताः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

अवसृष्टा परापत शरव्ये ब्रह्मसꣳशिते । गच्छामित्रान्प्रपद्यस्व मामीषां कंचनोच्छिषः ॥ ४५ ॥

उ० पृथग्विनियोगमन्त्राः । अवसृष्टा इषुदेवत्यानुष्टुप् । परावसृष्टा निक्षिप्ता परापत परागच्छ । हे शरव्ये शरमयी इषुः शरव्या । हे ब्रह्मसंशिते ब्रह्मणाभिमन्त्रिते अभिमन्त्र्य अतितरां तीक्ष्णीकृते, गच्छ परापत । गच्छेत्यतिशयार्थं एकार्थयोराख्यातयोर्द्विवचनम् । अमित्रान्प्रपद्यस्व । माच अमीषाममित्राणां कंचन उच्छिषः उच्छेषय । उद्धृतमूलान्कुर्वित्यभिप्रायः ॥ ४५ ॥

म० इत ऋक्चतुष्टयस्य विनियोगः कात्यायनेनोक्तः । इयमिषुदेवत्यानुष्टुप् । हिंसिका शरमयी हेतिः शरव्या ब्रह्मणा मन्त्रेण संशिता तीक्ष्णीकृता ब्रह्मसंशिता तादृशि हे शरव्ये, त्वमवसृष्टास्माभिर्मुक्ता सती परापत सहसा परसैन्ये पतिता भव । पतित्वा चामित्रान् शत्रून् गच्छ प्राप्नुहि । प्राप्य च प्रपद्यस्व शत्रुशरीरेषु प्रविश । प्रविश्य चामीषां शत्रूणां मध्ये कंचन पुरुषं मा उच्छिषः अवशिष्टं मा कुरु । सर्वानपि जहीत्यर्थः । 'शिष्लृ विशेषणे' 'पुषादि–' ( पा० ३ । १ । ५५ ) इत्यादिना च्लेरङ् ॥ ४५ ॥

## षट्चत्वारिंशी ।

प्रेता जयता नर इन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ ४६ ॥

उ० प्रेत अनुष्टुप् । योद्धॄन्स्तौति । हे नरः मनुष्याः, प्रेत गच्छत जयत च । इन्द्रश्च वः शर्म शरणं परित्राणम् यच्छतु ददातु । उग्रा उद्गूर्णायुधाः वः युष्माकम् सन्तु बाहवः । अनाधृष्याः अप्रधृष्याः यथा यूयम् असथ भवथ तथा उग्रा वः सन्तु बाहव इत्यनुषङ्गः ॥ ४६ ॥

म० योद्धृदेवत्यानुष्टुप् योद्धॄन् स्तौति । हे नरोऽस्मदीया योद्धारः, यूयं प्रेत परसैन्यं प्रति प्रकर्षेण गच्छत । ततो जयत विजयं प्राप्नुत । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति प्रेतेत्यत्र दीर्घः । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति जयतेत्यत्र दीर्घः । इन्द्रो वा युष्मभ्यं शर्म जयोत्थं सुखं यच्छतु ददातु 'दाण् दाने' 'पाघ्रा–' (पा० ७ । ३ । ७८) इत्यादिना यच्छादेशः । किंच यथा यूयमनाधृष्या असथ केनाप्यतिरस्कार्या भवथ । तथा वो युष्माकं बाहवो भुजदण्डा उग्रा उद्गूर्णायुधाः सन्तु । असथेत्यत्र 'लेटोऽडाटौ' ( पा० ३ । ३ । ९४ ) इत्यडागमः ॥ ४६ ॥

## सप्तचत्वारिंशी ।

असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना । तां गूहत तमसापव्रतेन यथामी अन्यो अन्यं न जानन् ॥ ४७ ॥

उ० असौ या । मारुती त्रिष्टुप् । असौ या सेना हे मरुतः, परेषां शत्रूणाम् अभि ऐति अभ्यागच्छति नः अस्मान्प्रति ओजसा बलेन स्पर्धमाना । तां सेनां गूहत व्यामुत । तमसा अपव्रतेन । व्रतमिति कर्मनाम । अपगतकर्मणा । येन तमसाभिव्याप्तानां नश्यन्ति कर्माणि तदपव्रतंतमः तेनापव्रतेन तमसा वा गूहत । यथामी अन्यो अन्यं न जानन् यथा अमी सैनिकाः अन्योन्यं परस्परं न जानीयुः ॥ ४७ ॥

म० मरुद्देवत्या त्रिष्टुप् । हे मरुतः, या प्रसिद्धा असौ परेषां शत्रूणां सेना नोऽस्मानभि आ एति अभ्यागच्छति । कीदृशी । ओजसा बलेन स्पर्धमाना स्पर्धां कुर्वाणा तां सेनां तमसा अन्धकारेण यूयं गूहत संवृतां कुरुत । तथा गूहत यथा अमी सैनिका अन्योन्यं न जानन् परस्परं न जानीयुस्तथा गूहत । कीदृशेन तमसा । अपव्रतेन अपगतं व्रतं कर्म यस्मात् तेन । येन व्याप्तानां कर्म नश्यति तादृशेन तमसा गूहतेत्यर्थः ॥ ४७ ॥

## अष्टचत्वारिंशी ।

यत्र बाणाः संपतन्ति कुमारा विशिखा इव । तत्र इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ ४८ ॥

उ० यत्र बाणाः । लिङ्गोक्तदेवता पङ्क्तिः । यत्र बाणा इषवः संपतन्ति अनिर्मर्यादम् । कथमिव । कुमारा विशिखा इव । यथा कुमारा अदृष्टपरिकारिणः विगतशिखाः सर्वमुण्डाः तं तमर्थं संनिपतेयुरेवं संपतन्ति तत्रेत्यर्थः । नः अस्माकम् इन्द्रः शर्म शरणम् यच्छतु ददातु । बृहस्पतिः शर्म यच्छतु । अदितिः शर्म यच्छतु । विश्वाहा सदाकालं च शर्म यच्छतु । इन्द्रः बृहस्पतिः अदितिः ॥ ४८ ॥

म० इन्द्रबृहस्पत्यदितिदेवत्या पङ्क्तिरष्टाक्षरपञ्चपादा । यत्र यस्मिन् युद्धे बाणाः शत्रुप्रयुक्ताः संपतन्ति इतश्चेतश्च संभूय पतन्ति । तत्र दृष्टान्तः । कुमारा विशिखा इव विगता शिखा येषां ते विशिखाः शिखारहिता मुण्डितमुण्डा विकीर्णकवचा वा अतिबालाश्चपलाः सन्तो यथा इतस्ततो गच्छन्ति तद्वत् । तत् तत्र युद्धे इन्द्रः नोऽस्मभ्यं शर्म विजयोत्थं सुखं यच्छतु ददातु । कीदृश इन्द्रः । बृहसतिः बृहतां मन्त्राणां पतिः पालकः विजयोचितमन्त्रज्ञः । अदितिः नास्ति दितिः खण्डनं यस्य अखण्डितशक्तिः । विश्वाहा विश्वान्सर्वान् शत्रून् आ समन्ताद्धन्तीति विश्वाहा । स शर्म यच्छतु इति पुनरुक्तिरादरार्था । यद्वा तत्र इन्द्रः बृहसतिरिन्द्रगुरुः अदितिरिन्द्रमाता च विश्वाहा सर्वाण्यहानि सर्वदा शर्म यच्छतु । विश्वानि च तान्यहानि च विश्वाहा विभक्तेराकारः । अत्यन्तसंयोगे द्वितीया ॥ ४८ ॥

### एकोनपञ्चाशी ।

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजाऽमृतेनानुवस्ताम् । उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥ ४९ ॥

उ० मर्माणि ते । लिङ्गोक्तदेवता त्रिष्टुप् । कवचं प्रयच्छति मर्माणि ते तव । वर्मणा कवचेन च्छादयामि । सोमश्च राजा त्वाम् अमृतेन अनुवस्ताम् आच्छादयतु । किंच उरोर्वरीयो वरुणस्ते कृणोतु पृथोरपि प्रथीयः वरुणः तव कवचं करोतु । किंच जयन्तं त्वाम् अनुमदन्तु उत्साहयन्तु देवाः ॥ ४९ ॥

म० 'मर्माणि त इति कवचं प्रयच्छति' ( का० १३ । ३ । १० ) । महाव्रते यागेऽध्वर्युः क्षत्रियाय सन्नाहं परिधानाय प्रयच्छतीत्यर्थः । सोमवरुणदेवत्या त्रिष्टुप् । हे यजमान, ते तव मर्माणि जीवस्थानानि वर्मणा कवचेनाहं छादयामि आवृणोमि । राजा विप्रादीनामधिपः सोमोऽमृतेन नास्ति मृतं मरणं येन तेन मरणनिवारकेणानेन वर्मणा त्वा त्वामनुवस्तामन्वाच्छादयतु । 'वस आच्छादने' अदादिः लोट् । तथा वरुणः ते तव वर्म उरोः पृथोरपि वरीयः उरुतरं प्रथीयः कृणोतु । अत्यन्तमुरु वरीयः । ईयसुनि 'प्रस्थस्फ–' (पा० ६ । ४ । १५७ ) इत्यादिना उरोर्वरादेशः । किंच देवाः जयन्तं विजयं प्राप्नुवन्तं त्वा त्वामनुमदन्तु अनुकूला भूत्वा हृष्यन्तु उत्साहयन्तु वा ॥ ४९ ॥

### पञ्चाशी ।

उदेनमुत्तरां नयाग्ने घृतेनाहुत । रायस्पोषेण सꣳसृज प्रजया च बहुं कृधि ॥ ५० ॥

उ० उदेनम् । समिधमादधाति तिसृभिरनुष्टुब्भिः तत्र प्रथमाग्नेयी द्वितीयैन्द्री तृतीया लिङ्गोक्तदेवता । उदेनमुत्तरां नय । एनं यजमानम् उद्गततराम् हे अग्ने, घृतेन आहुतिसंबन्धेन आहुत अभिहुत । जुहोतेरेतद्रूपं नतु ह्वयतेः । रायस्पोषेण च धनस्य पुष्ट्या संसृज । प्रजया च बहुं पुत्रपौत्रसंकुलं कृधि कुरु ॥ ५० ॥

म० 'आर्द्रौदुम्बरीर्घृतोषितास्तिस्र उदेनमित्यादधाति प्रत्यृचम्' ( का० १८ । ३ । १४ ) । अशुष्का उदुम्बरतरूत्था रात्रौ घृते स्थिताः प्रादेशमात्रास्तिस्रः समिध ऋक्त्रयेण शालाद्वार्ये जुहोति ततोऽग्निप्रणयनमित्यर्थः । तिस्रोऽनुष्टुभः प्रथमाग्निदेवत्या द्वितीयेन्द्रदेवत्या तृतीया लिङ्गोक्तदेवता । हे घृतेनाहुत आज्येन सर्वतो हूयमान हे अग्ने, एनं यजमानमुत्तरां नय अतिशयेन उत् उत्तराम् तरबन्तादाम्प्रत्ययः । उत्कृष्टत्वमैश्वर्यं प्रापय । ऐश्वर्यमेवाह । रायस्पोषेण धनसमृद्ध्या संसृज संयोजय । प्रजया संतत्या पुत्रपौत्रादिकया च बहुं कृधि भूयांसं कुरु । बहुकुटुम्बं कुर्वित्यर्थः ॥ ५० ॥

### एकपञ्चाशी ।

इन्द्रेमं प्रतरां नय सजातानामसद्वशी । समेनं वर्चसा सृज देवानां भागदा असत् ॥ ५१ ॥

उ० इन्द्रेमम् हे इन्द्र, एनं यजमानम् प्रतरां नय । सजातानां च समानजन्मनां च । असत् भवतु । वशी कान्तः ईश्वरो वा । किंच समेनं वर्चसा सृज संसृज च एनं यजमानं । वर्चसा स्वेन स्वेन कर्मणा । वर्णानामुत्कर्षो वर्चः । देवानां च भागदाः असत् भवतु । यज्ञसमाप्तिं त्वत्प्रसादात्प्राप्नोत्वित्यर्थः ॥ ५१ ॥

म० हे इन्द्र परमैश्वर्ययुक्त, इमं यजमानं प्रतरां नय अतिप्रकर्षः प्रतराम् प्रकृष्टमैश्वर्यं प्रापय । तदेव दर्शयति । सजातानां समानजातीयानां वशी वशयतीति वशी नियमनसमर्थो असत् भवतु । किंच एनं यजमानं वर्चसा संसृज तेजस्विनं कुरु । अयं यजमानो देवानां भागदा असत् भागं ददाति भागदाः यज्ञेषु देवानां भागप्रदाता भवतु ॥ ५१ ॥

### द्विपञ्चाशी ।

यस्य कुर्मो गृहे हविस्तमग्ने वर्धया त्वम् । तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ॥ ५२ ॥

उ० यस्य कुर्मः । यस्य यजमानस्य कुर्मः गृहे हविः तं हे अग्ने, वर्धय त्वं प्रजया पशुभिश्च । तस्मै देवा अधिब्रुवन् । उपरिभावेन यत्प्रशस्तं कल्याणं तत् ब्रुवन्तु । अयं ब्रह्मणस्पतिरग्निः ॥ ५२ ॥

म० वयमृत्विजो यस्य यजमानस्य गृहे हविः कुर्मः पुरोडाशप्रधानं कर्म कुर्मः । हे अग्ने, तं यजमानं त्वं वर्धय । देवास्तस्मै तं यजमानमधिब्रुवन् अधिकं ब्रुवन्तु सर्वेभ्योऽधिकोऽयमिति । अयं यजमानश्च ब्रह्मणो वैदिककर्मणः पतिः पालको भवतु । यद्वा देवा अयं ब्रह्मणस्पतिरग्निश्च इममधिब्रुवन् । तस्मै द्वितीयार्थे चतुर्थी ॥ ५२ ॥

### त्रिपञ्चाशी ।

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः ॥ ५३ ॥

उ० अग्निमुद्यच्छति । उदुत्वेति व्याख्यातम् ॥ ५३ ॥

म० 'त्रिरुक्तायामुद्यम्योदुत्वेति' ( का० १८ । ३ । १८ ) । होत्रा प्रथमायामृचि त्रिःपठितायां सत्यां प्रतिप्रस्थाता उदु त्वेति मन्त्रेण प्रदीप्तमिध्मं शालाद्वार्यादूर्ध्वमुत्पादयतीत्यर्थः । व्याख्याता ( अ० १२ । क० ३१ ) ॥ ५३ ॥

### चतुःपञ्चाशी ।

पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः । रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ॥ ५४ ॥

उ० चित्यं गच्छन्ति । पञ्चभिर्ऋग्भिर्यज्ञाङ्गसाधनवादिनीभिः । पञ्च दिशः । द्वे त्रिष्टुभौ । पञ्च दिशः दैवीः देवानां संबन्धिन्यः यज्ञम् अवन्तु पालयन्तु । स्वयं च देव्यः । किं कुर्वाणा यज्ञमवन्तु । अपामतिं दुर्मतिं बाधमानाः । अमतिम् अमननम् अज्ञानम् । अमतिः दुर्मतिं च । किंच रायस्पोषे धनस्य पुष्टौ । यज्ञपतिं यजमानम् आभजन्ती भागिनं कुर्वत्यः । रायस्पोषे च अधि उपरि । यज्ञः अस्थात्तिष्ठतु । दिग्भिरेव स्थापितः अभिहुतः ॥ ५४ ॥

म० 'चित्यं प्रतिगच्छन्ति पञ्च दिशं' ( का० १८ । ३ । १८ ) इति । ततो ब्रह्महोत्रध्वर्युप्रतिप्रस्थातृयजमानाः पञ्च दिश इत्याद्यृक्पञ्चकेन चित्यं प्रति गच्छन्ति । सर्वेषां मन्त्रपाठ इति कर्कः अध्वर्युरेवेति हरिस्वामिन इत्यर्थः । यज्ञाग्निसाधनवादिन्यः पञ्च ऋचः । आद्ये द्वे त्रिष्टुभौ प्रथमा दिग्देवत्या । पञ्च दिशः प्राचीदक्षिणाप्रतीच्युदीचीमध्यारूपा देवीः देव्यो यज्ञमस्मदीयमवन्तु । कीदृश्यो दिशः । दैवीः दैव्यः देवानामिन्द्रयमवरुणसोमब्रह्मणां संबन्धिन्यो दैव्यः । तथा अमतिमस्मदीयप्रज्ञामाद्यं दुर्मतिं दुष्टां मतिं पापविषयां बुद्धिमपबाधमानाः विनाशयन्त्यः । रायस्पोषे धनपुष्टौ यज्ञपतिं यजमानमाभजन्तीः आभजन्त्यः भागिनं कुर्वन्त्यः । किंच यज्ञोऽस्मदीयो रायो धनस्य पोषे पुष्टौ अधि अस्थात् अधिकं तिष्ठतु समृद्धोऽस्तु ॥ ५४ ॥

## पञ्चपञ्चाशी ।

समि॑द्धे अ॒ग्नावधि॑ मामहा॒न उ॒क्थप॑त्र॒ ईड्यो॑ गृभी॒तः । त॒प्तं घ॒र्मं प॑रि॒गृह्या॑यजन्तो॒र्जा यद्य॒ज्ञमय॑जन्त दे॒वाः ॥ ५५ ॥

उ० समिद्धे अग्नौ । असंबद्धानि वाक्यानि यद्योगात्तद्योगाच्च संबद्धानि भवन्ति । यः समिद्धे सम्यग्दीप्ते अग्नौ प्रणीयमाने अधिमामहानः 'यजमानो वै मामहानः' इति श्रुतिः । 'मह पूजायाम्' । उपरिभावेन देवानामत्यर्थं पूजकः । आत्मानं वा कृतकृत्यं मन्यमानोऽग्निमनुगच्छति । यस्य च उक्थपत्रोऽग्निः प्रणीयमानः अग्निष्टोमे उक्थानि भवन्ति तदङ्गभूत एवायमग्निः । ईड्यः यज्ञियः । गृभीतः गृहीतो धारितोऽध्वर्युणा । यस्य च मामहानस्य तप्तं रुचितं घर्मं परिगृह्य परीशासाभ्याम् अयजन्त ऋत्विजः । यस्य च ऊर्जेन अन्नेन हविर्लक्षणेन । यज्ञमयजन्त संगतं वा कृतवन्तः देवा ऋत्विजः । सोयं कृतकृत्य इति शेषः ॥ ५५ ॥

म० आग्नेयी । दीव्यन्ति व्यवहरन्ति ब्रह्महौत्राध्वर्यवादिकर्मभिः प्रचरन्तीति देवा ऋत्विजो यत् तदा तप्तं घर्मं ज्वलितं प्रवर्ग्यं परिगृह्य परितः परीशासाभ्यामादायायजन्त यजन्ते । यदा च ऊर्जा हविर्लक्षणेनान्नेनायजन्त यजन्ते । यदोग्रहणात्तच्छब्दाध्याहारः । तदा अग्नौ समिद्धे सति दीप्यमाने सति उक्थपत्रः यज्ञो गृभीतः गृहीतः धारितः । 'गृभीत इति धारित इत्येतत्' ( ९ । २ । ३ । ९ ) इति श्रुतेः । उक्थानि शस्त्राणि पत्रं वाहनं यस्य स उक्थपत्रः । शस्त्रैरेव यज्ञो वाह्यते । कीदृश उक्थपत्रः । ईड्यः । ईडितुं योग्यः स्तुत्यः । अधिमामहानः महयति पूजयति देवानिति मामहानः । महतेर्विकरणव्यत्ययेन 'जुहोत्यादिभ्यः श्लुः' 'श्लौ' ( पा० ६ । १ । १० ) इति द्वित्वम् 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६ । १ । ७ ) इत्यभ्यासदीर्घः । यद्वा अधिको मामहानो यजमानो यत्र यज्ञे । 'यजमानो वै मामहानः' ( ९ । २ । ३ । ९ ) इति श्रुतेः ॥ ५५ ॥

## षट्पञ्चाशी ।

दैव्या॑य ध॒र्त्रे जोष्ट्रे॑ दे॒वश्रीः॒ श्रीम॑नाः श॒तप॑याः । प॒रि॒गृह्य॑ दे॒वा य॒ज्ञमा॑य॒न्देवा दे॒वेभ्यो॑ अध्व॒र्यन्तो॑ अस्थुः ॥ ५६ ॥

उ० दैव्याय धर्त्रे । बृहती वा पङ्क्तिर्वा । यस्मै अग्नये दैव्याय देवानां संबन्धिने । धर्त्रे धारयित्रे जगतः । जोष्ट्रे योषयितृतमाय । पयोदानार्थं नीयत इति वाक्यशेषः । यश्च देवश्रीः देवा अस्य शेषः । श्रीमनाः भक्तेभ्यः श्रियं दातुकामाः । श्रीर्वा यस्य मनसि वसति । शतपयाः बहूनि पयांस्यन्नानि यस्यासौ बहुपयाः । पञ्च परिगृह्य गृहीत्वा । देवाः ऋत्विग्यजमानाः यज्ञं कर्तुमागच्छन्ति । तं देवा ऋत्विग्यजमानाः देवेभ्यः यज्ञं कर्तुकामाः । देवेभ्यो अध्वर्यन्तः अध्वरं कामयमानाः अस्थुः परिवार्य स्थिताः ॥ ५६ ॥

म० बृहती पङ्क्तिर्वाष्टत्रिंशदक्षरत्वात् । अग्निदेवत्या । एवंविधाय अग्नये यज्ञो भवतीति शेषः । कीदृशाय । दैव्याय देवानां हितो दैव्यस्तस्मै । धरतीति धर्ता तस्मै यागद्वारा जगतो धारयित्रे । जोषते जोष्टा सेविता तस्मै अस्मद्दत्तहविषः सेवित्रे । कीदृशो यज्ञः । देवश्रीः देवान् श्रयति हविर्दानेन सेवते देवश्रीः । श्रीमनाः श्रयते सेवते इन्द्रादीन् श्रीर्यजमानस्तस्मिन्मनोऽनुग्रहरूपं यस्य स श्रीमनाः । यद्वा श्रीर्मनसि यस्य । यद्वा भक्तेभ्यः श्रियं दातुं मनो यस्य । शतपयाः शतसंख्याकानि पयःप्रभृतीनि हवींषि यस्य सः । देवा ऋत्विज ईदृशं यज्ञाग्निं परिगृह्य यज्ञं प्रति आयन् प्राप्नुवन्ति । किंच देवा दीप्यमाना ऋत्विजो देवेभ्योऽर्थाय अध्वर्यन्तः सन्तः अस्थुः अध्वरं कर्तुमिच्छन्तस्तिष्ठन्ति अध्वरमिच्छति अध्वर्यति 'सुप आत्मनः क्यच्' 'कव्यध्वरपृतनस्यर्चि लोपः' ( पा० ७ । ४ । ३९ ) इति अध्वरान्तलोपः ॥ ५६ ॥

## सप्तपञ्चाशी ।

वी॒तꣳ ह॒विः श॑मि॒तꣳ श॑मि॒ता य॒जध्यै॑ तु॒रीयो॑ य॒ज्ञो यत्र॑ ह॒व्यमेति॑ । ततो॑ वा॒का आ॒शिषो॑ नो जुषन्ताम् ॥ ५७ ॥

उ० वीतꣳ हविः बृहती । वीतम् कामितमिष्टमभिप्रे-

तम् । शमितम् सुसंस्कृतं मन्त्रैः । शमिता शमितेति व्यत्ययो वाक्यशेषात् । यजध्यै यागाय । तुरीयश्चात्र यज्ञो भवति । यत्र इत्थंभूतं हव्यं हविरेति । अध्वर्युः पुरस्ताद्यजूंषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयश्चतुर्थो यज्ञः । ततः तस्मात्तत्त्वज्ञादुत्थिताः वाकाः वचनानि ऋग्यजुःसामलक्षणानि । आशिषश्च नोऽस्मान् जुषन्तां सेवन्ताम् । यज्ञफलमस्मानालिङ्गयत्वित्यर्थः ॥ ५७ ॥

**म०** हविर्यज्ञदेवत्या बृहती । यज्ञो यत्र यस्मिन् काले हव्यं होतुं योग्यं हविः एति प्राप्नोति ततो यज्ञादुत्थिता वाका वाक्यानि ऋग्यजुःसामलक्षणानि आशिषोऽभीष्टार्थशंसनानि च नोऽस्मान् जुषन्ताम् सेवन्ताम् । यज्ञफलान्यस्मानालिङ्गन्त्वित्यर्थः । कीदृशं हविः । वीतं देवानामिष्टम् । 'इष्टꣳ स्विष्टमित्येतत्' ( ९ । २ । ३ । ११ ) इति श्रुतेः । तथा शमिता 'सुपां सु–' ( पा० ७ । १ । ३९ ) इति तृतीयैकवचनस्य सु आदेशः । शमित्रा यजध्यै यष्टुं शमितं संस्कृतम् 'तुमर्थे से–' ( पा० ३ । ४ । ९ ) इत्यादिना यजेस्तुमर्थे शध्यैप्रत्ययः । कीदृशो यज्ञः । तुरीयः चतुर्थः आदौ यजुर्जपः ततो होत्रा ऋचां पठनम् ततो ब्रह्मणोऽप्रतिरथजपः एवंच तुरीयो होमः । तथाच श्रुतिः 'अध्वर्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयो यज्ञः' ( ९ । २ । ३ । ११ ) इति । यद्वा आदावध्वर्युणा श्रावणम् तत् आग्नीध्रेण प्रत्याश्रावणम् यजेति ततोऽध्वर्योः प्रैषः ततो होतुर्वषट्कारः इति यज्ञश्चतुर्था कल्प्यते ॥ ५७ ॥

## अष्टपञ्चाशी ।

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ २॥ अजस्रम् । तस्य पूषा प्रसवे याति विद्वान् संपश्यन्विश्वा भुवनानि गोपाः ॥ ५८ ॥

**उ०** सूर्यरश्मिर्हरिकेशः । त्रिष्टुप् 'असौ वा आदित्य एषोऽग्निः' इति श्रुतिः । यः सूर्यरश्मिः सूर्यसदृशरश्मिः हरिकेशः । हरितवर्णकेशः सः पुरस्तात् सवितृरूपेण ज्योतिः । उदयान् उद्गच्छति । अजस्रमनुपक्षीणम् । तस्य चाग्नेः पूषा प्रसवे याति विद्वान् । स्वमधिकारं जानानः । 'पशवो वै पूषा' इति श्रुतिः । लक्षणया सचाग्निर्याति । प्रणीयमानः । संपश्यन् विश्वा विश्वानि भुवनानि भूतजातानि । गोपाः गोपायिता सर्वस्य जगतः ॥ ५८ ॥

**म०** अग्निदेवत्या त्रिष्टुप् । ज्योतिर्ज्योतीरूपोऽग्निः अजस्रं निरन्तरं प्रत्यहं पुरस्तात् पूर्वस्यां दिशि आहवनीयरूपेण होमार्थमुदयान् उद्गच्छति । उत्पूर्वस्य यातेर्लङि प्रथमाबहुवचनेनोरु आदेशाभावे रूपम् वचनव्यत्ययः 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति लङ् । कीदृशोऽग्निः । सूर्यरश्मिः सूर्यस्येव रश्मयः किरणा यस्य सः । यद्वा सूर्यश्चासौ रश्मिश्च । सूर्यरूपस्तद्रश्मिरूपश्चेत्यर्थः । हरिकेशः हरति दारिद्र्यमिति हरि हिरण्यम् । हिरण्यवर्णाः केशाः केशस्थानीया ज्वाला यस्य सः । सविता सौति सविता प्राणिनां तत्तद्व्यापारेषु प्रेरकः । तस्येदृशस्याग्नेः प्रसवे आज्ञायां पूषा पोषकः सूर्यः याति उदयास्तमयनद्वारेणाटति । कीदृशः पूषा । विद्वान् स्वाधिकारमहोरात्रिवर्तनात्मकं जानन् । विश्वा विश्वानि भुवनानि भूतजातानि संपश्यन् सर्वान् लोकान् सम्यगवलोकयन् । गोपाः गोपायतीति गोपाः रक्षकः धर्मस्य ॥ ५८ ॥

## एकोनषष्टी ।

विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम् । स विश्वाचीरभिचष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥ ५९ ॥

**उ०** आग्नीध्रे अश्मानं पृश्निमुपदधाति विमान एष इति द्वाभ्यां त्रिष्टुब्भ्यामादित्यदेवत्याभ्याम् । य एष आदित्यो विमानो निर्माता भूतग्रामस्य दिवो मध्ये आस्ते द्युलोकस्य मध्ये आस्ते । आपप्रिवान् । 'प्रा पूरणे' । आपूरयन् रोदसी द्यावापृथिव्यौ अन्तरिक्षं च । स्वकीयेन प्रकाशेनापहत्य शार्वरं तमः । स विश्वाचीरभिचष्टे घृताचीरभिचष्टे । विश्वं हविरञ्चितमस्यामिति विश्वाची वेदिः । घृतमस्यामञ्चनमिति घृताची स्रुक् वेदीश्च स्रुचश्चाभिचष्टेऽभिपश्यति । यज्ञं कर्तुं नेतुं गृहीतुं पश्यतीत्यर्थः । अन्तरा पूर्वमपरं च केतुम् । अन्तरा अन्तरेण । पूर्वमिमं लोकम् अपरं चामुं लोकम् । किंच । केतुम् चितं जनानाम् तच्च सर्वमभिचष्टेऽभिपश्यति । अथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमपि चीयते ॥ ५९ ॥

**म०** 'आग्नीध्रदेशाद्दक्षिणं पृष्ठ्यासहितं पृश्न्यश्मानमुपदधाति विमान इति' ( का० १८ । ३ । १९ ) । अध्वर्युराग्नीध्रगृहाद्दक्षिणदिशि पृष्ठ्यासंलग्नं पृश्नि तनुं वृत्तं चित्रवर्णं वा पाषाणं विमान इति ऋग्द्वयेनोपदध्यादित्यर्थः । विश्वावसुदृष्टा आदित्यदेवत्या त्रिष्टुप् । आदित्याध्यासेनाश्मा स्तूयते । एषोऽश्मादित्यरूपेण दिवोऽन्तरिक्षस्य मध्ये आस्ते तिष्ठति 'असौ वा आदित्योऽश्मा पृश्निरसुमेवैतदादित्यमुपदधाति' ( ९ । २ । ३ । ३४ ) इति श्रुतेः । आहवनीयो द्युलोकः गार्हपत्यो भूलोकः तयोर्मध्ये आग्नीध्रमन्तरिक्षस्थानीयं तत्र स्थितत्वाद्दिवो मध्ये आस्ते । तथाच श्रुतिः 'अन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय एतं तदिमौ लोकावन्तरेण दधाति तस्मादेष इमौ लोकावन्तरेण तपति' ( ९ । २ । ३ । १४ । १५ ) इति ॥ १४ ॥ आग्नीध्रवेलायामन्तरिक्षं वा आग्नीध्रमेतं तदन्तरिक्षे दधातीति । कीदृश एषः । विमानः विविधं मिमीत इति विमानः जगन्निर्माणसमर्थः । तथा रोदसी द्यावापृथिव्यौ अन्तरिक्षमापप्रिवान् तेजसा सर्वतः पूरितवान् 'प्रा पूरणे' क्वसुप्रत्ययः । स तथा स्तूयमान आदित्यरूपोऽश्मा विश्वाचीः वेदीः घृताचीः स्रुचश्चाभिचष्टे पश्यति यज्ञकर्तॄननुग्रहीतुं कर्म

पश्यतीत्यर्थः। विश्वं हविरञ्चितं स्थापितं यस्यामिति विश्वाची वेदिः। घृतमञ्चितं यस्यामिति घृताची स्रुक्। तथाच श्रुतिः 'स विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चाहेति' (९।२।३।१७)। तथा पूर्वमिमं लोकमपरमसुं लोकं च अन्तरा मध्ये स्थितानां जनानां केतुं चित्तं चाभिचष्टे सर्वजनाभिप्रायज्ञ इत्यर्थः। यद्वा विश्वाचीर्विश्वव्यापिनीर्दिशोऽभिचष्टे सर्वतः प्रकाशयति। तथा घृताचीर्घृतप्राप्तिहेतुभूता धेनूश्चाभिचष्टे। तथान्तरा ब्रह्माण्डमध्ये पूर्वमपरं च केतुमुदयास्तमयमध्यवर्तिनं बोधमभिचष्टे ॥ ५९ ॥

## षष्टी।

उक्षा स॑मुद्रो अ॑रुणः सु॑प॒र्णः पूर्व॑स्य॒ योनिं॑ पि॒तुरा वि॑वेश। मध्ये॑ दि॒वो निहि॑तः॒ पृश्नि॒रश्मा॒ वि च॑क्रमे॒ रज॑सस्पा॒त्यन्तौ॑ ॥ ६० ॥

**उ०** उक्षा समुद्रः। य उदयकाले उक्षा सेचनः समुद्रः समुन्दनो भवति तस्मिन्काले अवश्याया अतितरां पतन्ति तदभिप्रायमेतत्। अरुणः वर्णतो निर्देशः। सुपर्णः सुपतनः। यश्च पूर्वस्य द्युलोकस्य। योनिं स्थानम् पितुः पितृभूतस्य। ततो हि जायमान उपलभ्यत आदित्य इति पिता द्युलोकः आविवेश आविशति। उदितमात्रः यश्च मध्ये द्युलोकस्य निहितः अवस्थितः। पृश्निः समस्तरश्मिसंकुलो विचित्रः। अश्मा अशनो व्यापकः स्यात् स विचक्रमे चंक्रममाणः। रजसः रञ्जनस्य लोकत्रयस्य पाति गोपायति। अन्तो अन्तान् यो ह्यन्तान्पाति स मध्यं पात्येव ॥ ६० ॥

**म०** अप्रतिरथदृष्टादित्यदेवत्या त्रिष्टुप्। य आदित्यः पूर्वस्य पूर्वदिशि स्थितस्य पितुर्द्युलोकस्य योनिं स्थानमाविवेश आविशति द्यौः पितेत्युक्तेः पितुःशब्देन द्युलोकः उदयसमये द्युलोकाज्जायमान उपलभ्यते सूर्य इति द्युलोकपूर्वभागः सूर्यस्य पितृभूत उच्यते। किंभूतः यः उक्षा वृष्टिद्वारा सेक्ता। समुद्रः समुनत्ति क्लेदयति समुद्रः उदयकालेऽवश्यायपतनेन क्लेदनकर्ता। अरुणः उदयकाले अरुणवर्णः। सुपर्णः शोभनं पर्णं पतनं गमनं यस्य स सुपर्णः। यश्च दिवो मध्ये निहितोऽवस्थितः। पृश्निर्विचित्रवर्णः नानारश्मिसंकुलः। अश्मा अश्नुते व्याप्नोति नभ इत्यश्मा व्यापकः। एवंविधः सन् विचक्रमे विक्रमते नभः। यश्च विक्रममाणो रजसः रञ्जनस्य लोकत्रयस्य अन्तौ वचनव्यत्ययः। अन्तान् पर्यन्तान् पाति रक्षति। यो ह्यन्तान् पाति स मध्यं पात्येवेत्यर्थः। अथाश्मपक्षे व्याख्यानम्। अयं पृश्निर्विचित्रवर्णोऽश्मा पाषाणः पितुः कर्मपालकस्य पूर्वस्य पूर्वदिग्वर्तिन आहवनीयस्य योनिं कारणभूतमाग्नीध्रमाविवेश प्रविष्टवान् यदाहवनीयमुद्धरेदाग्नीध्रादुद्धरेदित्याहवनीययोनित्वमाग्नीध्रस्याम्नातमन्यत्र। अयमश्मा दिवो मध्ये आग्नीध्रस्थानीयस्यान्तरिक्षस्य मध्ये निहितः स्थापितः सन् रजसो रञ्जनीयस्य जगतः अन्तौ उत्पत्तिप्रलयरूपकोटिद्वयं विचक्रमे पाति रक्षति च परमेश्वररूपेण। कीदृशोऽश्मा उक्षा सेक्ता। यागद्वारेण फलाभिवर्षक इत्यर्थः। समुद्रः बहुफलप्रदत्वात्समुद्रसदृश इत्यर्थः। अरुणः पूर्वमन्त्रे सूर्यसाम्यात् सूर्यसदृशः। सुपर्णः स्वर्गे प्रत्युद्गमनहेतुत्वात् पक्षिसदृशः ॥ ६० ॥

## एकषष्टी।

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑। र॒थीत॑मꣳ र॒थीनां॒ वाजा॑नाꣳ सत्प॑तिं॒ पति॑म् ॥ ६१ ॥

**उ०** निधायैनमतिक्रामन्ति चतसृभिः। इन्द्रं विश्वा इति व्याख्यातम् ॥ ६१ ॥

**म०** 'निधायैनमतिक्रामन्तीन्द्रं विश्वा इति' (का० १८।३।२१)। एनं पृश्म्यश्मानं क्वचिद् गुप्ते देशे स्थापयित्वा सर्वे चयनं प्रति गच्छन्ति इन्द्रं विश्वा इत्यादृक्चतुष्टयेनेत्यर्थः। व्याख्याता (अ० १२। क० ५६) ॥ ६१ ॥

## द्विषष्टी।

दे॒व॒हूर्य॒ज्ञ आ च॑ वक्षत्सु॒म्न॒हूर्य॒ज्ञ आ च॑ वक्षत्। यक्ष॑द॒ग्निर्दे॒वो दे॒वाँ२॥ आ च॑ वक्षत् ॥ ६२ ॥

**उ०** देवहूर्यज्ञः। तिस्रोऽनुष्टुभः। आद्ये द्वे उष्णिहौ वा। यो देवहूः देवान् आह्वयति यज्ञः। सच अवक्षत् आवहतु च देवान्। यजतु चेति चकारः समुच्चयार्थीयः। यश्च सुम्नहूः। सुम्नमिति सुखनाम। सुखमाह्वयति यज्ञः स आवहतु च देवान् यजतु। किंच यक्षन् यजतु च अग्निः देवः देवान् आचवक्षत् आवहतु च ॥ ६२ ॥

**म०** विधृतिदृष्टा यज्ञदेवत्यानुष्टुप्। देवानाह्वयतीति देवहूः देवानामाह्वाता यज्ञो देवानावक्षत् आवहतु। चकारः समुच्चये यजतु च। सुम्नं सुखं धनपुत्रकलत्राद्युत्थमाह्वयति सुम्नहूः सुखकरो यज्ञो देवानावक्षत् आवहतु। अग्निर्देवश्च देवानावक्षत् आवहतु यक्षत् यजतु च। वक्षत् यक्षत् वहतेर्यजेश्च 'सिब्बहुलं लेटि' (पा० ३।१।३४) सिप्प्रत्ययः 'लेटोऽडाटौ' (पा० ३।४।९४) इत्यडागमः 'इतश्चलोपः' (पा० ३।४।९७) इति तिप इकारलोपः ॥ ६२ ॥

## त्रिषष्टी।

वाज॑स्य मा प्रस॒व उ॑द्ग्रा॒भेणोद॑ग्रभीत्। अधा॑ स॒पत्ना॒निन्द्रो॑ मे निग्रा॒भेणाध॑राँ२॥ अकः ॥ ६३ ॥

**उ०** वाजस्य मा वाजस्यान्नस्य। मा माम्। प्रसवः प्रसूतिरुत्पत्तिः अभ्यनुज्ञा वा। उद्ग्राभेण उद्ग्रहणेन। ऊर्ध्वं हि गृह्य दीयत इति उद्ग्रहणं दानं तेनेत्यर्थः। उदग्रहीत् उद्गृह्णीयात्। 'हृग्रहोर्भश्छन्दसि' हस्येति हकारस्य भकारः। अध अथ समनन्तरमेव सपत्नान् इन्द्रः मे मम निग्राभेण नीचैर्ग्रहणेन। नीचैर्हि हस्तं कृत्वा भिक्षादिर्गृह्यते याचिष्णुतया अनन्नतया च। अधरान् अधोगमनान् अकः करोतु ॥ ६३ ॥

म० इन्द्रदेवत्यानुष्टुप् । वाजस्यान्नस्य प्रसवः प्रसूतिः उत्पत्तिः अनुज्ञा वा उद्ग्राभेण 'हृग्रहोर्भश्छन्दसि' उद्ग्राभेण उद्ग्रहणेन ऊर्ध्वं विगृह्य दीयत इत्युद्ग्रहणं दानं तेन मामुदग्रभीत् उदग्रहीत् उद्गृह्णातु । अथ अथ निग्राभेण निग्राहेण नीचैर्ग्रहणेन नीचैर्हस्तं कृत्वा भिक्षादिः प्रार्थ्यते याचिष्णुतया अन्नाभावेन वा इन्द्रो मे मम सपत्नान् शत्रूनधरानधमान् तिरस्कृतान् अकः करोतु मां दातारं करोतु । शत्रून् भिक्षून् करोत्वित्यर्थः । करोतेर्लङि 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) शपि लुप्ते गुणे तिपि लुप्ते अक इति रूपम् ॥ ६३ ॥

## चतुःषष्टी ।

उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ।
अधा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ॥ ६४ ॥

उ० उद्ग्राभं च । उद्ग्राभं च अस्मद्विषयं निग्राभं च शत्रुविषयम् । ब्रह्म च त्रयीलक्षणं यज्ञविषयम् । देवाः अवीवृधन् वर्धयन्तु । अध अथ सपत्नान् इन्द्राग्नी मे मम । विषूचीनान् विष्वगञ्चनान् नानागतीन्कृत्वा । व्यस्यतां विक्षिपन्ताम् अपुनरागमनाय ॥ ६४ ॥

म० इन्द्राग्निदेवत्यानुष्टुप् । देवा उद्ग्राभमुद्ग्राहमस्मद्विषयमुत्कर्षं निग्राभं निग्राहं शत्रुविषयमपकर्षं ब्रह्म त्रयीलक्षणं यज्ञविषयमवीवृधन्वर्धयन्तु । अध अथानन्तरं मे मम सपत्नान् शत्रून् विषूचीनान् विष्वगञ्चनान्नानागतीन्कृत्वा इन्द्राग्नी द्वौ व्यस्यतां विनाशयेतामपुनरागमनाय क्षिपतामित्यर्थः ॥ ६४ ॥

## पञ्चषष्टी ।

क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः ।
दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्वम् ॥ ६५ ॥

उ० चित्यमारोहन्ति पञ्चभिः । क्रमध्वमग्निना । अनुष्टुप् । हे ऋत्विग्यजमानाः । क्रमध्वम् आक्रमध्वम् । अग्निना चित्येन लोककालाग्न्यादिवपुषा । नाकं दिवम् । उख्यम् उखायां धृतम् अग्निम् उख्यम् । हस्तेषु बिभ्रतः धारयमाणाः । ततो दिवः पृष्ठमारुह्य स्वर्गलोकं गत्वा मिश्राः समानलोकस्थानायुषः सन्तः देवेभिः देवैः सह आध्वम् आसनं कुरुत देवीभूताः । आसेरेतद्रूपम् । ध्वसमित्यत्र सकारलोपेन ॥ ६५ ॥

म० 'क्रमध्वमग्निनेति चित्यमारोहन्ति' ( का० १८ । ४ । १ ) । ते ऋत्विजः क्रमध्वमिति पञ्चर्भिस्तीर्थेन चित्याग्निमारोहन्तीत्यर्थः । आग्नेय्यनुष्टुप् । हे ऋत्विग्यजमानाः, यूयमग्निना चित्येन कृत्वा नाकं स्वर्गलोकं क्रमध्वमाक्रमत 'स्वर्गो वै लोको नाकः' ( ९ । २ । ३ । २४ ) इति श्रुतेः । किंभूता यूयम् । उखायां संस्कृतमुख्यमग्निं हस्तेषु बिभ्रतः धारयन्तः । यद्वा उख्यमग्निं हस्तेषु बिभ्रतः सन्तोऽग्निनानेकचित्याग्निना सह क्रमध्वम् चित्युपरि पादान् कुरुत आरोहध्वमित्यर्थः । ततो दिवोऽन्तरिक्षस्य पृष्ठं स्वः स्वर्गं गत्वा देवेभिर्देवैः मिश्राः संयुताः सन्तः आध्वं तिष्ठत आस उपवेशने लोट् मध्यमबहुवचनं शपो लोपः 'धि च' ( पा० ८ । २ । २५ ) इति सलोपः ॥ ६५ ॥

## षट्षष्टी ।

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ ६६ ॥

उ० प्राचीमनु त्रिष्टुप् । प्राचीं दिशम् अनु प्रेहि प्रगच्छ । विद्वान् स्वमधिकारं जानानः । अग्नेः इष्टकास्थलरूपस्य । हे अग्ने उख्यरूप प्रणीयमान, पुरो अग्निः पुरोगामी अग्निर्भव इह यज्ञे । ततो विश्वाः सर्वाः आशाः दिशः दीद्यानः आभासयन् विभाहि विविधं दीप्यस्व । ऊर्जं च नः धेहि । द्विपदे चतुष्पदे द्विपाद्भ्यः चतुष्पाद्भ्यश्च ॥ ६६ ॥

म० आग्नेयी त्रिष्टुप् । हे अग्ने इदानीमानीत उख्य वह्ने, प्राचीं प्रदिशं प्रागाख्यां प्रकृष्टां दिशमनु लक्षीकृत्य त्वं प्रेहि प्रकर्षेण गच्छ । कीदृशस्त्वम् । विद्वान् स्वाधिकारं जानानः । गत्वा च हे अग्ने, इहास्मिन् प्रदेशे अग्नेः इष्टकानिष्पादितस्य चितिरूपस्याग्नेः पुरोऽग्निर्भव पुरः अग्रे अञ्चति गच्छतीति पुरोऽग्निः पुरोगन्ता मुख्यो भव 'प्रकृत्यान्तःपादमव्यपरे' ( पा० ६ । १ । ११५ ) इति सन्ध्यभावः । किंच विश्वाः सर्वाः आशा दिशो दीद्यानः दीपयन् प्रकाशयन् सन् त्वं विभाहि विशेषेण दीप्यस्व । ततो नोऽस्माकं द्विपदे पुत्रादिकाय चतुष्पदे गवादिकाय ऊर्जमन्नं धेहि संपादय ॥ ६६ ॥

## सप्तषष्टी ।

पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् । दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ॥ ६७ ॥

उ० पृथिव्या अहम् । पिपीलिकमध्या बृहती । यजमान आह । पृथिव्याः सकाशात् अहम् उदन्तरिक्षमारुहम् ऊर्ध्वक्रमेण अन्तरिक्षमारूढः । अन्तरिक्षाच्च दिवमारुहम् द्युलोकमारूढः। दिवः नाकस्य पृष्ठमारूढः । नाकस्य पृष्ठाच्च स्वरादित्याख्यं ज्योतिः अगाम् आगतः प्राप्तोहं क्षिमीभूतः(?) । 'गार्हपत्यादाग्नीध्रीयमागच्छन्त्यादाग्नीध्रीयादाहवनीयम्' इत्यादिश्रुतिः अग्नीनां लोकसंस्तवं दर्शयति ॥ ६७ ॥

म० आग्नेयी पिपीलिकमध्या बृहती आद्यतृतीयौ त्रयोदशार्णौ द्वितीयोऽष्टकः सा पिपीलिकमध्या बृहती 'त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या' इति वचनात् अत्राद्यस्त्रयोदशः द्वितीयो नवकः तृतीयश्चतुर्दशक इति षट्त्रिंशदक्षरत्वाद्

पश्यतीत्यर्थः । विश्वं हविरञ्चितं स्थापितं यस्यामिति विश्वाची वेदिः । घृतमञ्चितं यस्यामिति घृताची स्रुक् । तथाच श्रुतिः 'स विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चाहेति' ( ९ । २ । ३ । १७ ) । तथा पूर्वमिमं लोकमपरममुं लोकं च अन्तरा मध्ये स्थितानां जनानां केतुं चित्तं चाभिचष्टे सर्वजनाभिप्रायज्ञ इत्यर्थः । यद्वा विश्वाचीर्विश्वव्यापिनीर्दिशोऽभिचष्टे सर्वतः प्रकाशयति । तथा घृताचीर्घृतप्राप्तिहेतुभूता धेनूश्चाभिचष्टे । तथान्तरा ब्रह्माण्डमध्ये पूर्वमपरं च केतुमुदयास्तमयमध्यवर्तिनं बोधमभिचष्टे ॥ ५९ ॥

## षष्टी ।

उ॒क्षा स॑मु॒द्रो अ॑रु॒णः सु॑प॒र्णः पूर्व॑स्य॒ योनिं॑ पि॒तुरावि॑वेश । मध्ये॑ दि॒वो निहि॑तः पृश्नि॒रश्मा॒ विच॑क्रमे॒ रज॑सस्पा॒त्यन्तौ॑ ॥ ६० ॥

उ० उक्षा समुद्रः । य उदयकाले उक्षा सेचनः समुद्रः समुन्दनो भवति तस्मिन्काले अवश्याया अतितरां पतन्ति तदभिप्रायमेतत् । अरुणः वर्णतो निर्देशः । सुपर्णः सुपतनः । यश्च पूर्वस्य द्युलोकस्य । योनिं स्थानम् पितुः पितृभूतस्य । ततो हि जायमान उपलभ्यत आदित्य इति पिता द्युलोकः आविवेश आविशति । उदितमात्रः यश्च मध्ये द्युलोकस्य निहितः अवस्थितः । पृश्निः समस्तरश्मिसंकुलो विचित्रः । अश्मा अशनो व्यापकः स्यात् स विचक्रमे चंक्रमभाणः । रजसः रञ्जनस्य लोकत्रयस्य पाति गोपायति । अन्तौ अन्तान् यो ह्यन्तान्पाति स मध्यं पात्येव ॥ ६० ॥

म० अप्रतिरथदृष्टादित्यदेवत्या त्रिष्टुप् । य आदित्यः पूर्वस्य पूर्वदिशि स्थितस्य पितुर्द्युलोकस्य योनिं स्थानमाविवेश आविशति द्यौः पितेत्युक्तेः पितुःशब्देन द्युलोकः उदयसमये द्युलोकाज्जायमान उपलभ्यते सूर्य इति द्युलोकपूर्वभागः सूर्यस्य पितृभूत उच्यते । किंभूतः यः उक्षा वृष्टिद्वारा सेक्ता । समुद्रः समुनत्ति क्लेदयति समुद्रः उदयकालेऽवश्यायपतनेन क्लेदनकर्ता । अरुणः उदयकाले अरुणवर्णः । सुपर्णः शोभनं पर्णं पतनं गमनं यस्य स सुपर्णः । यश्च दिवो मध्ये निहितोऽवस्थितः । पृश्निर्विचित्रवर्णः नानारश्मिसंकुलः । अश्मा अश्नुते व्याप्नोति नभ इत्यश्मा व्यापकः । एवंविधः सन् विचक्रमे विक्रमते नभः । यश्च विक्रममाणो रजसः रञ्जनस्य लोकत्रयस्य अन्तौ वचनव्यत्ययः । अन्तान् पर्यन्तान् पाति रक्षति । यो ह्यन्तान् पाति स मध्यं पात्येवेत्यर्थः । अथाश्मपक्षे व्याख्यानम् । अयं पृश्निर्विचित्रवर्णोऽश्मा पाषाणः पितुः कर्मपालकस्य पूर्वस्य पूर्वदिग्वर्तिन आहवनीयस्य योनिं कारणभूतमाग्नीध्रमाविवेश प्रविष्टवान् यदाहवनीयमुद्धपेदाग्नीध्रादुद्धरेदित्याहवनीययोनित्वमाग्नीध्रस्याम्नातमन्यत्र । अयमश्मा दिवो मध्ये आग्नीध्रस्थानीयस्यान्तरिक्षस्य मध्ये निहितः स्थापितः सन् रजसो रञ्जनीयस्य जगतः अन्तौ उत्पत्तिप्रलयरूपकोटिद्वयं विचक्रमे पाति रक्षति च परमेश्वररूपेण । कीदृशोऽश्मा उक्षा सेक्ता । यागद्वारेण फलाभिवर्षक इत्यर्थः । समुद्रः बहुफलप्रदत्वात्समुद्रसदृश इत्यर्थः । अरुणः पूर्वमन्त्रे सूर्यसाम्यात् सूर्यसदृशः । सुपर्णः स्वर्गं प्रत्युद्गमनहेतुत्वात् पक्षिसदृशः ॥ ६० ॥

## एकषष्टी ।

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ । र॒थीत॑मꣳ र॒थीनां॒ वाजा॑नाꣳ सत्प॑तिं॒ पति॑म् ॥ ६१ ॥

उ० निधायैनमतिक्रामन्ति चतसृभिः । इन्द्रं विश्वा इति व्याख्यातम् ॥ ६१ ॥

म० 'निधायैनमतिकामन्तीन्द्रं विश्वा इति' ( का० १८ । ३ । २१ ) । एनं पृश्न्यश्मानं क्वचिद् गुप्ते देशे स्थापयित्वा सर्वे चयनं प्रति गच्छन्ति इन्द्रं विश्वा इत्याद्यृक्चतुष्टयेनेत्यर्थः । व्याख्याता ( अ० १२ । क० ५६ ) ॥ ६१ ॥

## द्विषष्टी ।

दे॒व॒हूर्य॒ज्ञ आ च॑ वक्षत् सुम्न॒हूर्य॒ज्ञ आ च॑ वक्षत् । यक्ष॑द॒ग्निर्दे॒वो दे॒वाँ२॥आ च॑ वक्षत् ॥६२॥

उ० देवहूर्यज्ञः । तिस्रोऽनुष्टुभः । आद्ये द्वे उष्णिहौ वा । यो देवहूः देवान् आह्वयति यज्ञः । सच अवक्षत् आवहतु च देवान् । यजतु चेति चकारः समुच्चयार्थीयः । यश्च सुम्नहूः। सुम्नमिति सुखनाम । सुखमाह्वयति यज्ञः स आवहतु च देवान् यजतु । किंच यक्षन् यजतु च अग्निः देवः देवान् आचवक्षत् आवहतु च ॥ ६२ ॥

म० विधृतिदृष्टा यज्ञदेवत्यानुष्टुप् । देवानाह्वयतीति देवहूः देवानामाह्वाता यज्ञो देवानावक्षत् आवहतु । चकारः समुच्चये यजतु च । सुम्नं सुखं धनपुत्रकलत्राद्युत्थमाह्वयति सुम्नहूः सुखकरो यज्ञो देवानावक्षत् आवहतु । अग्निर्देवश्च देवानावक्षत् आवहतु यक्षत् यजतु च । वक्षत् यक्षत् वहतेर्यजेश्च 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) सिप्प्रत्ययः 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्यडागमः 'इतश्चलोपः' ( पा० ३ । ४ । ९७ ) इति तिप इकारलोपः ॥ ६२ ॥

## त्रिषष्टी ।

वाज॑स्य मा प्रस॒व उ॑द्ग्रा॒भेणोद॑ग्रभीत् । अधा॑ स॒पत्ना॒निन्द्रो॑ मे निग्रा॒भेणाध॑राँ२॥ अकः ॥ ६३ ॥

उ० वाजस्य मा वाजस्यान्नस्य । मा माम् । प्रसवः प्रसूतिरुत्पत्तिः अभ्यनुज्ञा वा । उद्ग्राभेण उद्ग्रहणेन । ऊर्ध्वं हि गृह्य दीयत इति उद्ग्रहणं दानं तेनेत्यर्थः । उदग्रहीत् उद्गृह्णीयात् । 'हृग्रहोर्भश्छन्दसि' हस्येति हकारस्य भकारः । अध अथ समनन्तरमेव सपत्नान् इन्द्रः मे मम निग्राभेण नीचैर्ग्रहणेन । नीचैर्हि हस्तं कृत्वा भिक्षादिर्गृह्यते याचिष्णुतया अनन्नतया च । अधरान् अधोगमनान् अकः करोतु ॥ ६३ ॥

**म०** इन्द्रदेवत्यानुष्टुप् । वाजस्यान्नस्य प्रसवः प्रसूतिः उत्पत्तिः अनुज्ञा वा उद्ग्राभेण 'हृग्रहोर्भश्छन्दसि' उद्ग्राभेण उद्ग्रहणेन ऊर्ध्वं विगृह्य दीयत इत्युद्ग्रहणं दानं तेन मामुदग्रभीत् उदग्रहीत् उद्गृह्णातु । अध अथ निग्राभेण निग्राहेण नीचैर्ग्रहणेन नीचैर्हस्तं कृत्वा भिक्षादिः प्रार्थ्यते याचिष्णुतया अन्नाभावेन वा इन्द्रो मे मम सपत्नान् शत्रून् अधरानधमान् तिरस्कृतान् अकः करोतु मां दातारं करोतु । शत्रून् भिक्षून् करोत्वित्यर्थः । करोतेर्लङि 'बहुलं छन्दसि' (पा० २।४।७३) शपि लुप्ते गुणे तिपि लुप्ते अक इति रूपम् ॥ ६३ ॥

## चतुःषष्टी ।

उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अधा सपत्नानिन्द्राग्नी मे विषूचीना न्व्यस्यताम् ॥ ६४ ॥

**उ०** उद्ग्राभं च । उद्ग्राभं च अस्मद्विषयं निग्राभं च शत्रुविषयम् । ब्रह्म च त्रयीलक्षणं यज्ञविषयम् । देवाः अवीवृधन् वर्धयन्तु । अध अथ सपत्नान् इन्द्राग्नी मे मम । विषूचीनान् विष्वगञ्चनान् नानागतीन्कृत्वा । व्यस्यतां विक्षिपन्ताम् अपुनरागमनाय ॥ ६४ ॥

**म०** इन्द्राग्निदेवत्यानुष्टुप् । देवा उद्ग्राभमुद्ग्राहमस्मद्विषयमुत्कर्षं निग्राभं निग्राहं शत्रुविषयमपकर्षं ब्रह्म त्रयीलक्षणं यज्ञविषयमवीवृधन्वर्धयन्तु । अध अथानन्तरं मे मम सपत्नान् शत्रून् विषूचीनान् विष्वगञ्चनान्नानागतीन्कृत्वा इन्द्राग्नी द्वौ व्यस्यतां विनाशयेतामपुनरागमनाय क्षिपतामित्यर्थः ॥ ६४ ॥

## पञ्चषष्टी ।

क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः । दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्वम् ॥ ६५ ॥

**उ०** चित्यमारोहन्ति पञ्चभिः । क्रमध्वमग्निना । अनुष्टुप् । हे ऋत्विग्यजमानाः । क्रमध्वम् आक्रमध्वम् । अग्निना चित्येन लोककालाग्न्यादिवपुषा । नाकं दिवम् । उख्यम् उखायां धृतम् अग्निम् उख्यम् । हस्तेषु बिभ्रतः धारयमाणाः । ततो दिवः पृष्ठमारुह्य स्वर्गलोकं गत्वा मिश्राः समानलोकस्थानायुषः सन्तः देवेभिः देवैः सह आध्वम् आसनं कुरुत देवीभूताः । आसेरेतद्रूपम् । ध्वसमित्यत्र सकारलोपेन ॥ ६५ ॥

**म०** 'क्रमध्वमग्निनेति चित्यमारोहन्ति' (का० १८।४।१)। ते ऋत्विजः क्रमध्वमिति पञ्चभिस्तीर्थेन चित्याग्निमारोहन्तीत्यर्थः । आग्नेय्यनुष्टुप् । हे ऋत्विग्यजमानाः, यूयमग्निना चित्येन कृत्वा नाकं स्वर्गलोकं क्रमध्वमाक्रमत 'स्वर्गो वै लोको नाकः' (९।२।३।२४) इति श्रुतेः । किंभूता यूयम् । उखायां संस्कृतमुख्यमग्निं हस्तेषु बिभ्रतः धारयन्तः । यद्वा उख्यमग्निं हस्तेषु बिभ्रतः सन्तोऽग्निनानेकचित्याग्निना सह क्रमध्वम् चित्युपरि पादान् कुरुत आरोहध्वमित्यर्थः । ततो दिवोऽन्तरिक्षस्य पृष्ठं स्वः स्वर्गं गत्वा देवेभिर्देवैः मिश्राः संयुताः सन्तः आध्वं तिष्ठत आस उपवेशने लोट् मध्यमबहुवचनं शपो लोपः 'धि च' (पा० ८।२।२५) इति सलोपः ॥ ६५ ॥

## षट्षष्टी ।

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ ६६ ॥

**उ०** प्राचीमनु त्रिष्टुप् । प्राचीं दिशम् अनु प्रेहि प्रगच्छ । विद्वान् स्वमधिकारं जानानः । अग्नेः इष्टकास्थलरूपस्य । हे अग्ने उख्यरूप प्रणीयमान, पुरो अग्निः पुरोगामी अग्निर्भव इह यज्ञे । ततो विश्वाः सर्वाः आशाः दिशः दीद्यानः आभासयन् विभाहि विविधं दीप्यस्व । ऊर्जं च नः धेहि । द्विपदे चतुष्पदे द्विपाद्भ्यः चतुष्पाद्भ्यश्च ॥ ६६ ॥

**म०** आग्नेयी त्रिष्टुप् । हे अग्ने इदानीमानीत उख्य वह्ने, प्राचीं प्रदिशं प्रागाख्यां प्रकृष्टां दिशमनु लक्षीकृत्य त्वं प्रेहि प्रकर्षेण गच्छ । कीदृशस्त्वम् । विद्वान् स्वाधिकारं जानानः । गत्वा च हे अग्ने, इहास्मिन् प्रदेशे अग्नेः इष्टकानिष्पादितस्य चितिरूपस्याग्नेः पुरोऽग्निर्भव पुरः अग्रे अञ्चति गच्छतीति पुरोऽग्निः पुरोगन्ता मुख्यो भव 'प्रकृत्यान्तःपादमव्यपरे' (पा० ६।१।११५) इति सन्ध्यभावः । किंच विश्वाः सर्वाः आशा दिशो दीद्यानः दीपयन् प्रकाशयन् सन् त्वं विभाहि विशेषेण दीप्यस्व । ततो नोऽस्माकं द्विपदे पुत्रादिकाय चतुष्पदे गवादिकाय ऊर्जमन्नं धेहि संपादय ॥ ६६ ॥

## सप्तषष्टी ।

पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् । दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ॥ ६७ ॥

**उ०** पृथिव्या अहम् । पिपीलिकमध्या बृहती । यजमान आह । पृथिव्याः सकाशात् अहम् उदन्तरिक्षमारुहम् ऊर्ध्वक्रमेण अन्तरिक्षमारूढः । अन्तरिक्षाच्च दिवमारुहम् द्युलोकमारूढः । दिवः नाकस्य पृष्ठमारूढः । नाकस्य पृष्ठाच्च स्वरादित्याख्यं ज्योतिः अगाम् आगतः प्राप्तोहं क्षिमीभूतः(?) । 'गार्हपत्यादाग्नीध्रीयमागच्छन्त्यादाग्नीध्रीयादाहवनीयम्' इत्यादिश्रुतिः अग्नीनां लोकसंस्तवं दर्शयति ॥ ६७ ॥

**म०** आग्नेयी पिपीलिकमध्या बृहती आद्यतृतीयौ त्रयोदशार्णौ द्वितीयोऽष्टकः सा पिपीलिकमध्या बृहती 'त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या' इति वचनात् अत्राद्यस्त्रयोदशः द्वितीयो नवकः तृतीयश्चतुर्दशक इति षट्त्रिंशदक्षरत्वाद्

बृहती 'त्रिपादणिष्ठमध्या पिपीलिकमध्या' इति वचनात्पिपीलिकमध्या च । यजमान आह अहं पृथिव्या उत् उद्गतः सन् अन्तरिक्षमारुहमारूढोऽस्मि । तस्मादन्तरिक्षादुद्गतो दिवमारुहं द्युलोकमारूढोऽस्मि । दिवो द्युलोकस्य यो नाको दुःखरहितः प्रदेशः तस्य पृष्ठादुपरिभागात् स्वः ज्योतिः स्वर्गलोकस्थं ज्योतिरादित्यमण्डलमहमगां गतोऽस्मि प्राप्स्यामीत्यर्थः । 'इणो गा लुङि' ( पा० २ । ४ । ४५ ) इति गादेशः ॥ ६७ ॥

## अष्टषष्टी ।

स्वर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी । यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे ॥ ६८ ॥

उ० स्वर्यन्तः अनुष्टुप् । अत्र द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । यज्ञं ये यजमानाः । विश्वतोधारं सर्वतोधारम् । आहुतिदक्षिणान्नानि यज्ञस्य धाराः । ताभिर्ह्येष वर्षति । यद्वा विश्वस्य जगतो धारयितारम् । वैश्वानरमारुतवसोर्धारा वाजस्य प्रसवीयानि धारा वा यज्ञस्य । सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः वितेनिरे वितन्वन्ति । स्वर्यन्तः स्वर्लोकं गच्छन्तः नापेक्षन्ते पुत्रपश्वादिकृतकृत्यत्वात् । आरोहन्ति हि द्यां रोदसी । दिव एतद्विशेषणम् नतु द्यावापृथिव्योरभिधानम् दिव इति । स्वःशब्दोपादानसामर्थ्यात् । कथंभूतां द्यामारोहन्ति । रोदसी रोध्री जरामृत्युशोकादीनाम् ॥ ६८ ॥

म० आग्नेयी अनुष्टुप् । सुष्ठु विदन्ति जानन्ति ते सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः ये सुविद्वांसो यज्ञं वितेनिरे वितन्वन्ति अनुतिष्ठन्ति । कीदृशं यज्ञम् । विश्वतोधारं विश्वतो धारा यस्य तम् । आहुतिदक्षिणान्नानि यज्ञस्य धाराः वैश्वानरमारुतपूर्णाहुतिवसोर्धारावाजप्रसवीयानि वा यज्ञस्य धाराः । यद्वा विश्वस्य जगतो धारयितारम् । ते यज्ञकर्तारः स्वः स्वर्गं यन्तो गच्छन्तो नापेक्षन्ते पुत्रपश्वाद्यपेक्षां न कुर्वते कृतकृत्यत्वात् । द्यां स्वर्गं चारोहन्ति । कीदृशीं द्याम् । रोदसी रुणद्धि जरामृत्युशोकादीन् सा रोदसी ताम् । धस्य दादेशश्छान्दसः । पूर्वसवर्णदीर्घः दिवो विशेषणं न तु द्यावापृथिव्योरभिधानं दिव इत्युपादानात् । यद्वा ये यजमानाः सुविद्वांसः सुष्ठु कर्मप्रकारं जानन्तः विश्वतोधारं जगद्धरणहेतुं यज्ञं वितन्वन्ति विशेषेण कुर्वन्ति ते यजमाना द्यामन्तरिक्षमारोहन्ति तथा रोदसी द्यावाभूमी आरोहन्ति । ततः स्वर्यन्तः स्वर्गस्थमादित्यमण्डलं प्राप्नुवन्तोऽन्यत्किमपि स्थानं नापेक्षन्ते ॥ ६८ ॥

## एकोनसप्ततितमी ।

अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् । इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥ ६९ ॥

उ० अग्ने प्रेहि प्रयाहि । प्रथमः देवयताम् देवान्यष्टुमिच्छताम् । यस्त्वं चक्षुः देवानामुतापि च मर्त्यानां मनुष्याणाम् । ततस्त्वयि प्रथमं प्राप्ते सति । इयक्षमाणाः भृगुभिः यागं कुर्वाणाः । भृगुग्रहणमार्षेयानूचानब्राह्मणोपलक्षणार्थम् । सजोषाः समानजोषणाश्च देवैः सन्तः । स्वर्लोकम् यन्तु यजमानाः । स्वस्ति अविनाशेन ॥ ६९ ॥

म० आग्नेयी त्रिष्टुप् । हे अग्ने, त्वं देवयतां देवानिच्छतां यजमानानां प्रथमः प्रेहि पुरतः प्रकर्षेण गच्छ । देवानिच्छन्ति देवयन्ति देवयन्तीति देवयन्तः तेषाम् 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) इति क्यजन्ताच्छतृप्रत्ययः 'क्यचि च' ( पा० ७ । ४ । ३३ ) इतीत्वे प्राप्ते 'न छन्दस्यपुत्रस्य' ( पा० ७ । ४ । ३५ ) इति तदभावः । कथं मयाग्रतो गन्तव्यं तत्राह । यतस्त्वं देवानामुतापि च मर्त्यानां मनुष्याणां चक्षुःस्थानीयः । लोकेऽपि गच्छतः पुरुषस्य दृष्टिः पुरतो याति । किंच यष्टुमिच्छन्ति इयक्षमाणाः । अभ्यासे यलोपश्छान्दसः । इयक्षमाणा यष्टुमिच्छन्तो यजमानाः स्वस्ति यथा तथा अविनाशेन स्वः स्वर्गं यन्तु प्राप्नुवन्तु । कीदृशाः । भृगुभिः भृगुगोत्रविप्रैः सजोषाः समानो जोषः प्रीतिर्येषां ते । भृगुग्रहणमनूचानब्राह्मणोपलक्षणम् । उत्तमविप्रैः प्रीतिमन्तः ॥ ६९ ॥

## सप्ततितमी ।

नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः ॥ ७० ॥

उ० पयसाभिजुहोति । नक्तोषासा व्याख्यातम् ॥ ७० ॥

म० 'स्वयमातृण्णामध्यग्निं धारयंच्छुक्लवत्सापयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति' ( का० १८ । ४ । २ ) । अध्वर्युः स्वयमातृण्णेष्टकोपरि समीपे प्रतिप्रस्थात्रा तमग्निं धारयन् कृष्णवर्णायाः श्वेतवत्साया गोर्दुग्धेन दोहनेन मृण्मयदोहनपात्रेण जुहूस्थानीयेन स्वयमातृण्णां सिञ्चन्निमस्थेऽग्नौ जुहोति नक्तोषासेत्यृगद्वयेनेत्यर्थः । व्याख्याता द्वादशे ( अ० १२ । क० २ ) ॥ ७० ॥

## एकसप्ततितमी ।

अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रं व्यानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा ॥ ७१ ॥

उ० अग्ने सहस्राक्ष । आग्नेयीविराट् । हे अग्ने सहस्राक्ष, हिरण्यशकलैर्वा एष सहस्राक्षः । शतमूर्धन् । यददः शतशीर्षा रुद्रोऽसृजत । यस्य च तव शतं प्राणाः सहस्रं व्यानाः । यश्च त्वं साहस्रस्य रायो धनस्य हविर्लक्षणस्य ईशिषे । तस्मै ते तुभ्यम् विधेम । विधतिर्दानकर्मा । दद्मः । वाजाय वाजमिति विभक्तिव्यत्ययः । वाजमन्नं हविर्लक्षणम् । स्वाहा सुहुतमस्तु ॥ ७१ ॥

म० आग्नेयी विराट्पङ्क्तिः दशाक्षरचतुःपादा । हे अग्ने । सहस्राक्ष, सहस्रमक्षीणि यस्य तत्संबुद्धिः हिरण्यशकलान्येव नेत्राणि । तथाच श्रुतिः 'हिरण्यशकलैर्वा एष सहस्राक्षः' ( ९ । २ । ३ । ३२ ) इति । हे शतमूर्धन्, शतं मूर्धानो यस्य । 'यददः शतशीर्षा रुद्रोऽसृज्यत' ( ९ । २ । ३ । ३२ ) इति श्रुतेः । यस्य तव शतं प्राणाः सहस्रं व्यानाः । शतसहस्रशब्दावपरिमितवचनौ । यश्च त्वं साहस्रस्य सहस्रपरिमितस्य रायः धनस्य ईशिषे प्रभुर्भवसि । सहस्रादण्प्रत्ययः । तस्मै तादृशाय । ते तुभ्यं वयं वाजाय विधेम वाजमन्नं हवीरूपं दद्मः । वाजमिति विभक्तिव्यत्ययः । विधतिर्दानकर्मा । स्वाहा एतद्धविः सुहुतमस्तु ॥ ७१ ॥

## द्विसप्ततितमी ।

सु॒प॒र्णो॑ऽसि ग॒रुत्मा॑न् पृ॒ष्ठे पृ॑थि॒व्याः सी॑द । भा॒सान्तरि॑क्ष॒मापृ॑ण॒ ज्योति॑षा॒ दिव॒मुत्त॑भान॒ तेज॑सा॒ दिश॒ उद्दृ॑ꣳह ॥ ७२ ॥

उ० स्वयमातृण्णायामग्निं निदधाति । सुपर्णोऽसीति द्वाभ्यामाग्नेयीभ्यां पङ्क्तित्रिष्टुब्भ्याम् । यस्त्वं सुपर्णवदसि । गरुत्मान् गरणवान् अशनायावानित्यर्थः। स पृष्ठे पृथिव्याः सीद आस्थानं कुरु । भासा च दीप्त्यान्तरिक्षम् आपृण आपूरय । ज्योतिषा च दिवम् उत्तभान उत्स्तभान उत्तम्भय । तेजसा दिशः उद्दृꣳह तेजसा च दिशः दृढीकुरु । आदीपनार्थो वा दृंहतिः ॥ ७२ ॥

म० 'तस्यामग्निं निदधाति सुपर्णोऽसीति वषट्कारेण' ( का० १८ । ४ । ४ ) । स्वयमातृण्णायां सुपर्णोऽसीति ऋग्द्वयेन वषट्कारेण चाग्निं स्थापयतीत्यर्थः । अग्निदेवत्या पङ्क्तिः । हे अग्ने, त्वं सुपर्णोऽसि सुपर्णपक्ष्याकारो गरुडसमानोऽसि । गरुत्मान् गरुत् गरणं गलनं भक्षणमस्यास्तीति गरुत्मान् अशनायावानित्यर्थः । अतः पृथिव्याः पृष्ठे उपरि सीद उपविश । भासा स्वप्रकाशेन अन्तरिक्षमापृण सर्वतः पूरय । ज्योतिषा स्वसामर्थ्येन दिवं द्युलोकमुत्तभान ऊर्ध्वं स्तम्भितं कुरु स्तम्भेः 'हलः श्नः शानज्झौ' ( पा० ३ । १ । ८३ ) इति श्नाप्रत्ययस्य शानजादेशः । तथा तेजसा स्वेन दिश उद्दृंह उत्कर्षेण दृढीकुरु दीपय वा ॥ ७२ ॥

## त्रिसप्ततितमी ।

आ॒जुह्वा॑नः सु॒प्रती॑कः पु॒रस्ता॑दग्ने॒ स्वं योनि॒मा सी॑द साधु॒या । अ॒स्मिन्त्स॒धस्थे॒ अध्युत्त॑रस्मि॒न्विश्वे॑ देवा॒ यज॑मानश्च सीदत ॥ ७३ ॥

उ० आजुह्वानः अभिहूयमानः । सुप्रतीकः सुमुखः सन् । पुरस्तात् पूर्वस्यां दिशि । हे अग्ने, स्वं योनिं स्थानम् आसीद अधितिष्ठ साधुया साधुक्रियाविशेषणत्वेन श्रुत्या व्याख्यातम् । यूयमपि च हे विश्वेदेवाः, यजमानश्च सीदत अवस्थानं कुरुत । अस्मिन् सधस्थे सहस्थाने । अग्नियज्ञे स्वर्गाख्ये । 'स्वर्गो वै लोकः सधस्थः' इति श्रुतिः । अध्युत्तरस्मिन् सर्वोत्कृष्टे । अत्र तृतीयः पादः पश्चाद्व्याख्यायते अर्थसंबन्धात् ॥ ७३ ॥

म० आग्नेयी त्रिष्टुप् । हे अग्ने, त्वमाजुह्वानः आहूयमानः सन् सुप्रतीकः शोभनं प्रतीकं मुखं यस्य सुमुखः सन् पुरस्तात्पूर्वस्यां दिशि साधुया साधुं समीचीनं । विभक्तेर्यादेशः । स्वं योनिं स्थानमासीद अधितिष्ठ । हे विश्वेदेवाः, यूयं यजमानश्च अस्मिन् पुरोवर्तिनि अध्युत्तरस्मिन् अधिकमुत्कृष्टे सधस्थे अग्निना सह स्थातुं योग्यस्थाने सीदत यज्ञाख्ये स्वर्गे उपविशत । 'द्यौर्वा उत्तरं सधस्थं' ( ९ । २ । ३ । ३५ ) इति श्रुतेः ॥ ७३ ॥

## चतुःसप्ततितमी ।

ताꣳ स॑वि॒तुर्वरे॑ण्यस्य चि॒त्रामाहं वृ॑णे सुम॒तिं वि॒श्वज॑न्याम् । याम॑स्य॒ कण्वो॒ अदु॑ह॒त्प्रपी॑नाꣳ स॒हस्र॑धारां॒ पय॑सा म॒हीं गाम् ॥ ७४ ॥

उ० तिस्रः समिध आदधाति तिसृभिर्ऋग्भिः । अत्र कण्वः सावित्र्या त्रिष्टुभा पुरस्ताज्ज्योतिषा धेनुं कामदोहनीं पयो ययाचे । ताꣳसवितुः तां सवितुः संबन्धिनीम् । वरेण्यस्य वरणीयस्य चित्रां चायनीयाम् । आवृणे आवृणोमि स्वीकरोमि । सुमतिम् कल्याणमतिम् । विश्वजन्याम् सर्वजनेभ्यो हिताम् । यां सुमतिं प्राप्य अस्य सवितुः संबन्धिनीम् कण्वः अदुहत् दुग्धवान् । प्रपीनां पूरितां पयसा । सहस्रधारां बहुधारां बहुनो वा कुटुम्बस्य धारयित्रीम् । महीं महतीं गाम् ॥ ७४ ॥

म० 'समिदाधानꣳ शामिलीवैकङ्कत्यौदुम्बर्यस्ताꣳ सवितुरिति प्रत्यृचम्' ( का० १८ । ४ । ६ ) । अग्निनिधानानन्तरमध्वर्युस्तत्राग्नौ समित्त्रयमादधाति तां सवितुरिति शमीमयीं विधेमेति वैकङ्कतीं प्रेद्धो अग्न इत्यौदुम्बरीमित्यर्थः । कण्वदृष्टा सावित्री त्रिष्टुप् । वरेण्यस्य वरणीयस्य सवितुः संबन्धिनीं तां सुमतिं शोभनबुद्धिमहमावृणे आभिमुख्येन वृणोमि स्वीकरोमि । कीदृशीं सुमतिम् । चित्रां चायनीयां स्वापेक्षितबहुविधफलदानसमर्थाम् । विश्वजन्यां सर्वजनेभ्यो हिताम् । यद्वा विश्वं जन्यमुत्पाद्यं यस्याः सा विश्वजन्या ताम् जगदुत्पादनसमर्थाम् । तां कां । कण्वो मुनिरस्य सवितुर्यां सुमतिमेव गां धेनुमदुहत् अनुग्रहकारिणीं बुद्धिं दुग्धवान् । कीदृशीम् । प्रपीनां प्रकर्षेण पीनां पयसा पूरिताम् सहस्रधारां सहस्रं धारा यस्यास्ताम् सहस्रक्षीरधारायुक्ताम् । यद्वा बहुनः कुटुम्बस्य धारयित्रीम् । पयसा दुग्धेन महीं महतीम् बहुदुग्धामित्यर्थः । सर्वसिद्धिदात्रीम् । रवेर्मतिर्या कण्वेन दुग्धा तामहं वृणे इति सर्वार्थः ॥ ७४ ॥

## पञ्चसप्ततितमी ।

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे । यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ॥ ७५ ॥

उ० विधेम ते । त्रिस्थानोऽग्निर्देवता त्रिष्टुप् । विधेम । विदधातिर्दानकर्मा । दद्मः ते तुभ्यम् । परमे जन्मन् हे अग्ने, परमे जन्मनि जाताय आदित्यात्मना स्थिताय । 'द्यौर्वा अस्य परमं जन्म' । विधेम स्तोमैः स्तुतिभिः । अवरे सधस्थे स्थिताय विद्युदात्मना । 'अन्तरिक्षं वा अवरं सधस्थम्' । यस्मात् योनेः उत् आरिथा 'ऋ गतौ' । अस्यैतद्रूपम् । यस्माच्च स्थानादुद्गतोऽसि यजे तत्स्थानमहम् । 'एष वा अस्य स्वो योनिः' एष इति चित्योऽग्निरुच्यते । किंच प्रत्वे हवीꣳषि जहुरे समिद्धे जुहोमि त्वयि हवींषि समिद्धे सम्यग्दीप्ते ॥ ७५ ॥

म० गृत्समददृष्टा त्रिस्थानाग्निदेवत्या त्रिष्टुप् । हे अग्ने, परमे जन्मन् परमे जन्मनि दिवि आदित्यात्मना स्थिताय ते तुभ्यं वयं विधेम हविर्दद्मः । 'द्यौर्वा अस्य परमं जन्म' ( ९ । २ । ३ । ३९ ) इति श्रुतेः । अवरे सधस्थे दिवोऽवाचीने सहस्थानेऽन्तरिक्षे स्थिताय विद्युद्रूपाय ते स्तोमैः स्तोत्रैर्वयं विधेम परिचरेम । 'अन्तरिक्षं वा अवरꣳ सधस्थम्' ( ९ । २ । ३ । ३९ ) इति श्रुतेः । हे अग्ने, यस्माद्योनेः इष्टकाचितिरूपात् स्थानात् त्वमुदारिथ उद्गतोऽसि 'ऋ गतौ' लिट् संहितायां दीर्घः । तं योनिमहं यजे पूजयामि । ततः समिद्धे सम्यक् प्रज्वलिते त्वे त्वयि हवींषि प्रजुहुरे प्रजुहुविरे प्रजुह्वति ऋत्विजः 'इरयो रे' ( पा० ६ । ४ । ७६ ) इति इरेप्रत्ययस्य रे आदेशः । 'एष वा अस्य स्वो योनिः' ( ९ । २ । ३ । ३९ ) इति श्रुतेः । एष चित्योऽग्निः ॥ ७५ ॥

## षट्सप्ततितमी ।

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाꣳ शश्वन्त उपयन्ति वाजाः ॥ ७६ ॥

उ० प्रेद्धो अग्ने । आग्नेयीविराट् । प्रकर्षेण इद्धः दीप्तः सन् हे अग्ने, भूयोपि दीदिहि दीप्यस्व । पुरः अग्रतः नोऽस्माकं व्यवस्थितः । एतया अजस्रया अनुपक्षीणया । सूर्म्या समित्काष्ठिकया । सूर्मीशब्दः काष्ठवचनः । 'सूर्मी ज्वलन्तीं वाश्लिष्यात्' इति च स्मृतिः । हे यविष्ठ युवतम । यतश्च त्वामेव शश्वन्तः शाश्वतिकाः । उपयन्ति उपगच्छन्ति । वाजाः अन्नानि अतो दीदिहीति संबन्धः ॥ ७६ ॥

म० वसिष्ठदृष्टाग्निदेवत्या विराडनुष्टुप् दशकास्त्रयो विराडित्युक्तेः । हे यविष्ठ, अतिशयेन युवा यविष्ठः 'अतिशायने तमविष्ठनौ' 'स्थूलदूरयुव–' (पा० ६ । ४ । १५६) इत्यादिना वलोपे पूर्वगुणः । हे युवतम, हे अग्ने, त्वं नोऽस्माकं पुरोऽग्रे दीदिहि दीप्यस्व । दीव्यतेर्विकरणव्यत्ययेन जुहोत्यादित्वाच्छपः श्लौ द्विलम् 'तुजादीनाम्–' ( पा० ६ । १ । ७ ) इति पूर्वदीर्घः । किंभूतस्त्वम् । अजस्रयानुपक्षीणया सूर्म्या समित्काष्ठेन प्रेद्धः प्रकर्षेण दीप्तः । सूर्मीशब्दः काष्ठवाचकः । यद्वा लोहमयी ज्वलन्ती स्थूणा सूर्मी । अजस्रया सूर्म्या सूर्मीसमानया ज्वालया दीदिहि । सूर्मीशब्दो ज्वालोपलक्षकः । हे अग्ने, यतः शश्वन्तो निरन्तरभाविनो वाजाः अन्नानि हवींषि त्वामुपयन्ति प्राप्नुवन्ति अतो दीप्यस्वेत्यर्थः ॥ ७६ ॥

## सप्ततितमी ।

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ ७७ ॥

उ० तिस्र आहुतीर्जुहोति । अग्ने तमद्येति व्याख्यातम् ॥ ७७ ॥

म० 'स्रुवाहुती जुहोत्यग्ने तमद्येति प्रत्यृचम्' ( का० १८ । ४ । ८ ) । समिध आधायाग्नै तमिति ऋग्द्वयेन स्रुवेण द्वे घृताहुती तत्राग्नौ जुहोतीत्यर्थः । व्याख्याता (अ० १५। क० ४४) ॥ ७७ ॥

## अष्टसप्ततितमी ।

चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहोत्रा ऋतावृधः । पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे विश्वाहादाभ्यꣳहविः ॥ ७८ ॥

उ० चित्तिं जुहोमि । वैश्वकर्मणी जगत्यतिजगती वा । चित्तिमचित्तमेषामृत्विग्यजमानानाम् जुहोमि अग्निसंबन्धं करोमि । अग्नितत्त्वपरिज्ञानचिन्तनसन्तानं करोमीत्यर्थः । मनसा च घृतेन च सह । तथा जुहोमि । यथा देवा इहागमन् इह आगच्छेयुः । कथंभूताः । वीतिहोत्राः कामितयज्ञाः । होत्रा इति यज्ञनामसु पठितम् । ऋतावृधः सत्यवृधः । किंच । पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे । अधिपतिभूताय विश्वस्य भूतग्रामस्य । जुहोमि विश्वकर्मणे विश्वाहा सर्वदा । अदाभ्यम् अनुपक्षीणम् हविः ॥ ७८ ॥

म० विश्वकर्मदेवत्यातिजगती । मनसा घृतेन च सह चित्तिमृत्विग्यजमानानां चित्तिं जुहोमि अग्निसंबद्धं करोमि । अग्नितत्त्वपरिज्ञानार्थं चिन्तनं सन्तानं करोमीत्यर्थः । संकल्पविकल्पात्मकं मनः । निश्चयात्मकं चित्तम् । तथा जुहोमि यथा इह यज्ञे देवा आगमन् आगच्छेयुः । 'पुषादि–' ( पा० ३ । १ । ५५ ) इत्यादिना गमेर्लुङि च्लेरङ् । कीदृशा देवाः । वीतिहोत्राः । होत्रा इति यज्ञनाम । वीतिरभिलाषो होत्रा येषां ते वीतिहोत्राः कामितयज्ञाः । ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ते ऋतवृधः । संहितायां दीर्घः । किंच विश्वाहा विश्वानि च तान्यहानि च विश्वाहा सर्वेष्वहःसु आदब्धमनुपहतं स्वादु हविः विश्वकर्मणे प्रजापतये जुहोमि । कीदृशाय विश्व-

कर्मणे । भूमनो भूम्नो महतो विश्वस्य जगतः पत्ये स्वामिने । भूमन इत्यत्रोपधालोपाभाव आर्षः ॥ ७८ ॥

## एकोनाशीतितमी ।

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा ॥ ७९ ॥

उ० सप्तवाग्नेयी । सप्त ते तव हे अग्ने, समिधः समिन्धनाः प्राणाः यतः सन्ति । यतश्च सप्त जिह्वाः तव सन्ति । सप्तपुरुषान्संहृत्यैकीकृतोऽयमग्निस्तदभिप्रायमेतत् । यतश्च सप्त ऋषयः तव यष्टारः सन्ति । यतश्च सप्त धामानि प्रियाणि । सप्त छन्दांसि प्रियाणि तव सन्ति । यतश्च सप्त होत्राः आग्नीध्रपर्यन्ताः । सप्तधा त्वा त्वां यजन्ति । अतो ब्रवीमि सप्त योनीः सप्त चितीः आपृणस्व आपूरयस्व घृतेन । स्वाहा सुहुतं चैतद्धविर्भवतु ॥ ७९ ॥

म० 'पूर्णाहुतिं च सप्त त इति' ( का० १८ । ४ । ९ ) । स्रुचा पूर्णाहुतिं जुहोति घृतपूर्णया स्रुचा आहुतिः पूर्णाहुतिरित्यर्थः । सप्तर्षिदृष्टा अग्नेयी द्व्यधिका त्रिष्टुप् । हे अग्ने, ते तव सप्त समिधः समिन्धनाः प्राणाः शीर्षण्याः सन्ति । 'प्राणा वै समिधः प्राणा ह्येतꣳ समिन्धते' ( ९ । २ । ३ । ४४ ) इति श्रुतेः । किंच तव सप्त जिह्वाः सन्ति ज्वालारूपाः सप्त जिह्वाः हिरण्याङ्गणाद्याः(?) आगमोक्ताः । यद्वा आथर्वणिकोक्ताः 'काली कराली च मनोजवा च विलोहिता चापि सधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः' (मुण्ड० १ । २) इति । तथा सप्त ऋषयः मरीच्यादयस्तव द्रष्टारः सन्ति । तथा सप्त प्रियाणि धाम धामानि छन्दांसि गायत्र्यादीनि तव सन्ति । 'छन्दाꣳसि वा अस्य सप्त धाम प्रियाणि' ( ९ । २।३। ४४ ) इति श्रुतेः । यद्वा धामानि स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजाहिताग्नीध्रीयाणि सोमयागे वह्निधारकाणि सन्ति । किंच हे अग्ने, सप्त होत्राः होत्रादय ऋत्विजः सप्तधा सप्तप्रकारैरग्निष्टोमादिसप्तसंस्थाभिः त्वा त्वां यजन्ति । होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्रोऽच्छावाकश्चेति सप्त होत्राः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्र आप्तोर्यामो वाजपेयश्चेति सप्तसंस्थाः प्रकाराः । हे अग्ने, स त्वं सप्त योनीः चितीः घृतेनापृणस्व 'सप्त योनीरिति चितीरेतदाह सप्तचितिकोऽग्निः' ( ९ । २ । ३ । ४४ ) इति च श्रुतेः । स्वाहा सुहुतमस्तु । यद्वा 'यज्ञो वै स्वाहाकारः' ( ९ । २ । ३ । ४४ ) इति श्रुतेः । स्वाहा यज्ञरूपः त्वं सप्त योनीर्घृतेनापृणस्व 'पृण तृप्तौ' तुदादिः ॥ ७९ ॥

## अशीतितमी ।

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च । शुक्रश्च ऋतपाश्चात्यꣳहाः ॥ ८० ॥

उ० मारुतान् जुहोति शुक्रज्योतिरिति षड्भिर्ऋग्भिर्मारुतीभिः । तत्र चैकैकस्यामृचि सप्त मरुतः । प्रथमा उष्णिक् चतुर्थी च । द्वितीयातृतीये गायत्र्यौ । पञ्चमी जगती षष्ठी गायत्र्युष्णिग्वा । शुक्रज्योतिः पुरोडाशं च स्वमंशं भक्षयतु । चित्रज्योतिः सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्च ऋतपाश्च अत्यंहाश्च । अथैकपदनिरुक्तम् । शुक्रं ज्योतिर्यस्य शुक्रस्येव वा ज्योतिर्यस्य स शुक्रज्योतिः । चित्रं ज्योतिः सत्यं ज्योतिः । ज्योतिष्मान् ज्योतिषा तद्वान् । शुक्रः शुक्रः ऋतपाः सत्यं यज्ञं वा पाति । अत्यंहाः अतीत्य अंहः पापं वर्तत इत्यत्यंहाः ॥ ८० ॥

म० 'वैश्वानरेण प्रचर्य सर्वहुतेन हस्तेन मारुतान् जुहोतीत्युपविश्य वैश्वानरे वा वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरिति प्रतिमन्त्रम् विमुखेनारण्येऽनूच्यम्' ( का० १८ । ४ । २३ । २४ ) । वैश्वानरपुरोडाशेन यागं कृत्वोपविश्याहवनीये हस्तेन मारुतान्पुरोडाशान्सर्वहुतान् जुहोति शुक्रज्योतिरित्येकैकमन्त्रेणैकैकम् । यद्वा वैश्वानरपुरोडाशस्योपर्येव मारुतान् जुहोति । किं कृत्वा । प्रथनकाले वैश्वानरं पुरोडाशं विस्तीर्णं कृत्वा । आरण्येऽनूच्यं सप्तमं पुरोडाशं विमुखेनोग्रश्च भीमश्चेति वक्ष्यमाणमन्त्रेण जुहोतीत्यर्थः । षट् मरुद्देवत्याः । आद्या उष्णिक् । एकैकस्यामृचि सप्त सप्त मरुतः । शुक्रज्योतिरित्याद्या एकोनपञ्चाशन्मरुतो यूयमद्यास्मिन्नोऽस्माकं यज्ञे एतन एत आगच्छत इति पञ्चमार्चे अन्वयः । 'तप्तनप्–' ( पा० ७ । १ । ४५ ) इत्यादिना तस्य तनादेशः । तन्नामानि व्याख्यायन्ते । शुक्रं शुद्धं शुक्रस्येव वा ज्योतिस्तेजो यस्य स शुक्रज्योतिः । चित्रं दर्शनीयं ज्योतिर्यस्य स चित्रज्योतिः । सत्यं ब्रह्मलक्षणं ज्योतिर्यस्य स सत्यज्योतिः । ज्योतिस्तेजोऽस्यास्तीति ज्योतिष्मान् । शोचते दीप्यत इति शुक्रः । ऋतं सत्यं यज्ञं वा पातीति ऋतपाः । अंहः पापमतीत्य वर्तत इत्यत्यंहाः । चकाराः समुच्चयार्थाः ॥ ८० ॥

## एकाशीतितमी ।

ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् । मितश्च संमितश्च सभराः ॥ ८१ ॥

उ० ईदृङ् च । अनेनानेन च समानदर्शनः ईदृङ् ईदृङ् च । पुरोडाशस्य स्वमंशं प्रतिगृह्णातु । अन्यादृङ् च अन्येनान्येन च समानदर्शनः अन्यादृङ् । सदृङ् च प्रतिसदृङ् च तेन तेन समानदर्शनः सदृङ् । तंतं प्रति सदृशः प्रतिसदृङ् । मितश्च उत्तमाधममध्यमैस्तुल्यः मितः । संमितश्च एकीभावेन मितः संमितः । सभराश्च सह बिभर्ति सभराः ॥ ८१ ॥

म० द्वे गायत्र्यौ । इमं पुरोडाशं गृहीत्वा पश्यतीति ईदृङ् । अन्यमपि पुरोडाशं पश्यतीति अन्यादृङ् । समानं पश्यतीति सदृङ् । तं तं प्रति समानं पश्यतीति प्रतिसदृङ् । मितो मानं प्राप्तः । यद्वा उत्तमाधममध्यमैस्तुल्यो मितः । सम्यक्

एकीभावेन मितो मानं प्राप्तः संमितः । सह बिभर्तीति सभराः ॥ ८१ ॥

## द्व्यशीतितमी ।

ऋतश्च॑ सत्यश्च॑ ध्रुवश्च॑ धरुणश्च॒ । धर्ता च॑ विधर्ता च॑ विधारयः ॥ ८२ ॥

**उ०** ऋतश्च । ऋतश्च स्वमंशं पुरोडाशस्य प्राश्नातु । सत्यश्च । ध्रुवश्च धरुणश्च । धर्ता च विधर्ता च । विधारयः विविधं धारयतीति विधारयः ऋजुः ॥ ८२ ॥

**म०** ऋतः सत्यरूपः । सति वस्तुनि भवः सत्यः । ध्रुवः स्थिरः । धरुणः धारकः । धारयतीति धर्ता । विशेषेण धारयतीति विधर्ता । विविधं धारयतीति विधारयः ॥ ८२ ॥

## त्र्यशीतितमी ।

ऋतजिच्च॑ सत्यजिच्च॑ सेनजिच्च॑ सुषेणश्च । अन्तिमित्रश्च दूरेअमित्रश्च गणः ॥ ८३ ॥

**उ०** ऋतजिच्च । सत्यजिच्च । सेनजिच्च । सुषेणश्च शोभनसेनश्च । अन्तिमित्र आसन्नमित्रः । दूरेअमित्रश्च गणः ऋजुः ॥ ८३ ॥

**म०** उष्णिक् । ऋतं यज्ञं जयतीति ऋतजित् । सत्यं याथातथ्यं जयतीति सत्यजित् । सेनां शत्रुसैन्यं जयतीति सेनजित् । ह्रस्व आर्षः । शोभना सेना यस्य सुषेणः । अन्ति समीपे मित्राणि यस्य स अन्तिमित्रः । दूरे अमित्राः शत्रवो यस्य स दूरे अमित्रः 'प्रकृत्यान्तःपादम्–' ( पा० ६।१।११५ ) इति सन्ध्यभावः 'हलदन्तात्सप्तम्या–' ( पा० ६।३।९ ) इति विभक्त्यलोपः । गणयति सर्वमिति गणः ॥ ८३ ॥

## चतुरशीतितमी ।

ईदृक्षास एतादृक्षासऊ षुणः सदृक्षासः प्रतिसदृक्षास एतन । मितासश्च संमितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ॥ ८४ ॥

**उ०** ईदृक्षासः । व्यवहितपदप्रायोयं मन्त्रः । सादृश्येनात्र मरुतः स्तूयन्ते । ये यूयम् ईदृक्षासः इदंदर्शनाः सर्व एव । ये च एतादृक्षासः एतद्दर्शनाः सर्व एव । ऊषुणः त्रीणि पदानि छन्दःपरिपूर्तिं कुर्वन्ति । ये च यूयं सदृक्षासः समानदर्शनाः सर्व एव । ये च यूयं प्रतिसदृक्षासः प्रतिसमानदर्शनाः सर्व एव। ये च यूयं मितासः मितः प्रमाणतः सर्वएव । ये च यूयं संमितासः सङ्गत्य मिताः सर्व एव । ये च यूयं सभरसः समानमलंकारादि बिभ्रतः । तान् ब्रवीमि । एतेन नो अद्य मरुतो यज्ञे अस्मिन् एतन आगच्छन्ति नः अस्माकम् अद्य अस्मिन्यज्ञे । हे मरुतः, यज्ञे अस्मिन् । एवं व्यवहितानि पदानि पश्चात्सर्वैरेव संबन्धनीयानि ॥ ८४ ॥

**म०** हे मरुतः, यूयमेते कीदृशाः । ईदृक्षासः इदंदर्शनाः । एतादृक्षासः एतद्दर्शनाः । उ सु नः एतत्पदत्रयं पादपूर्तये । सदृक्षासः समानदर्शनाः । प्रतिसदृक्षासः प्रत्येकं समानदर्शनाः । मितासः मिताः प्रमाणतः । संमितासः सङ्गत्य मिताः । सभरसः समानमलंकारादिकं बिभ्रति ते सभरसः । भरसा आदरेण सह वर्तमाना इति वा । बहुवचनमादरार्थम् ॥ ८४ ॥

## पञ्चाशीतितमी ।

स्वतवाँश्च प्रघासी च॑ सांतपनश्च॑ गृहमेधी च॑ । क्रीडी च॑ शाकी चो॑ज्जेषी ॥ ८५ ॥

**उ०** स्वतवांश्च स्वकीयं तवो बलं यस्य स स्वतवान् स्वतवांश्च स्वमंशं पुरोडाशमस्य भक्षयतु । प्रघासी च । 'घस्लृ अदने' । प्रकर्षेण अदनशीलः । सान्तपनश्च गृहमेधी च क्रीडी च। पञ्च चातुर्मास्यदेवताः । शाकी च शक्तः । उज्जेषी च उज्जयनशीलः ॥ ८५ ॥

**म०** गायत्री उष्णिग्वा षड्विंशत्यक्षरत्वाद्विकल्पः । आद्याः पञ्च चातुर्मास्यदेवताः । स्वं स्वकीयं तवो बलं यस्य स स्वतवान् स्वाधीनबलयुक्तः । प्रकर्षेण घसति अत्ति प्रघासी पुरोडाशभक्षणशीलः । संतपनः सूर्यस्तत्संबन्धी सांतपनः । गृहमेधोऽस्यास्तीति गृहमेधी गृहधर्मवान् । क्रीडतीत्येवंशीलः क्रीडः सदा क्रीडाशीलः । शक्नोतीति शाकी शक्तः । उज्जयतीति उज्जेषी उत्कृष्टजयनशीलः । एते मरुतो यूयमत्र यज्ञे एतनेति पूर्वेणान्वयः ॥ ८५ ॥

## षडशीतितमी ।

[ उग्रश्च॑ भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चा॑भियुग्वा च॑ विक्षिपः स्वाहा॑ ॥ ]

✓ इन्द्रं॒ दैवी॒र्विशो॑ मरुतोऽनु॑वर्त्मानोऽभवन्यथेन्द्रं॒ दैवी॒र्विशो॑ मरुतोऽनु॑वर्त्मानोऽभवन् । एवमिमं यजमानं॒ दैवी॑श्च विशो॑ मानुषीश्चानु॑वर्त्मानो भवन्तु ॥ ८६ ॥

**उ०** इन्द्रं दैवीरिति मारुतं यजुर्जपति । इन्द्रं राजानं दैवीः विशः मरुतो मरुल्लक्षणाः अनुवर्त्मानः अनु पश्चात् वर्त्म वर्तनं यासां ता अनुवर्त्मानः । अनुगामिन्य इत्यर्थः । अभवन् । स्वरूपाख्यानमेतत् । यथा इन्द्रं दैवीः विशः अनुवर्त्मानः अभवन् उपमानम् । एवम् इमं यजमानम् दैवीश्च विशः मरुतः मानुषीश्च विशः मनुष्याः अनुवर्त्मानः अनुगामिन्यः भवन्त्विति प्रार्थना ॥ ८६ ॥

**म०** विमुखमन्त्रोऽपि प्रसङ्गाद्व्याख्यायते । उग्र उत्कृष्टः । बिभेत्यस्मादसौ भीमः 'भीमादयोऽपादाने' ( पा० ३।४।७४ ) इति निपातः । ध्वान्तयति शत्रूनन्धीकरोति ध्वान्तः । ध्वान्तशब्दात् 'तत्करोति–' इति णिजन्तात्पचाद्यच् । धूनयति

कम्पयति शत्रूनिति श्रुतिः । सहतेऽभिभवते शत्रूनिति सासहान् । सहेः क्सुः अभ्यासदीर्घः । अभियुनक्ति अभियुग्वा 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति अभिपूर्वाद्युजेः क्वनिप् । भक्तानां सुखयोक्ता । विक्षिपति प्रेरयति शत्रूनिति विक्षिपः शत्रुक्षेप्ता । चकाराः समुच्चयार्थाः । स्वाहा एतेभ्यो मरुद्भ्यः सुहुताः पुरोडाशाः सन्तु । 'इन्द्रं दैवीरिति जपति' ( का० १८ । ४ । २५ ) । कर्मापवर्गान्ते यजुर्जपतीत्यर्थः । मरुद्देवत्यं यजुः शक्करी षट्पञ्चाशदक्षरत्वात् । दैवीः दैव्यः देवानामिमा देवसंबन्धिन्यो विशः प्रजाः मरुतो मरुद्रूपा इन्द्रमनुवर्त्मानोऽभवन् । अनु पश्चाद्वर्त्म वर्तनं यासां ताः इन्द्रमनुगामिन्योऽभवन्निति स्वरूपाख्यानम् । दैवीर्विशो मरुतः यथा इन्द्रमनुवर्त्मानः इन्द्रमनुसृत्य वर्तमाना अभवन् । उपमानमेतत् । दैवीर्मानुषीश्च देवसंबन्धिन्यो मनुष्यसंबन्धिन्यश्च विशः एवमिन्द्रवत् इमं यजमानमनुवर्त्मानः अनुसृत्य वर्तमाना भवन्त्विति प्रार्थना ॥ ८६ ॥

## सप्ताशीतितमी ।

इ॒मꣳ स्तन॒मूर्ज॑स्वन्तं धया॒पां प्रपी॑नमग्ने सरि॒रस्य॒ मध्ये॑ । उत्सं॑ जुषस्व॒ मधु॑मन्तमर्वन्त्समु॒द्रिय॒ꣳ सद॑न॒मावि॑शस्व ॥ ८७ ॥

**उ०** इमꣳस्तनम् । त्रयोदशाग्नेयीस्त्रिष्टुभो यजमानं वाचयति । घृतस्तुतिश्च दृश्यते वसोर्धारानन्तरं भविष्यति तदभिवादिन्यो वा । वसोर्धारा स्रुचा हूयते सात्र रूपकल्पनया स्तन उक्तः । इमं स्रुग्लक्षणं स्तनम् ऊर्जस्वन्तं बलवन्तम् धय । 'धेट् पाने' पिब । अपां प्रपीनम् । अप्शब्देनात्र घृतमुक्तं सादृश्यात् । यद्वा 'अथापि तद्धितेन कृत्स्नवन्निगमा भवन्ति' इतिवन्निगमः । घृतप्रपूरितम् हे अग्ने, सरिरस्य मध्ये वर्तमान । 'इमे वै लोकाः सरिरम्' इति श्रुतिः । एषु लोकेषु मध्ये वर्तमानः । किंच उत्सं जुषस्व उत्स्यन्दनं स्रुग्लक्षणं कूपं जुषस्व सेवस्व । मधुमन्तं मधुस्वादेन रसेन युक्तम् । हे अर्वन् । 'ऋ गतौ' अस्यैतद्रूपम् । हे अरण सर्वतोगत । किंच । समुद्रियम् समुद्रसंबन्धिनम् । सदनं गृहम् । आविशस्व सेवस्व । 'त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतं साम्नां महदुक्थमृचाम्' इत्येतदभिप्रायम् । अन्तरिक्षं वा समुद्रः ॥ ८७ ॥

**म०** 'इमꣳस्तनमिति वाचयति वा' ( का० १८ । ४ । २६ ) । इमं स्तनमिति मन्त्रगणमध्यायसमाप्तिपर्यन्तं यजमानेनाध्वर्युर्वाचयति स्वयं जपति वेत्यर्थः । त्रयोदशर्चं आग्नेयस्त्रिष्टुप्छन्दस्कोऽनुवाको यज्ञस्तुतिर्वसोर्धाराभिवादिनी घृतस्तुतिर्वा । हे अग्ने, सरिरस्य लोकस्य मध्ये वर्तमानः त्वमिमं स्रुग्लक्षणं स्तनं स्रुचः पतन्तीं घृतधारां वा त्वं धय पिब । 'धेट् पाने' लोट् । 'इमे वै लोकाः सरिरम्' ( २ । ५ । २ । ३४ ) इति श्रुतेः । सरिरशब्देन लोका उच्यन्ते । वसोर्धारा स्रुचा हूयते सा स्रुगत्र रूपककल्पनया स्तन उच्यते । कीदृशं स्तनम् । ऊर्जस्वन्तमूर्जो रसोऽस्यास्तीति ऊर्जस्वान् तं विशिष्टरसवन्तम् । तथा अपां प्रपीनम् । अप्शब्देन लक्षणया घृतमुच्यते । अद्भिः घृतैः प्रपीनं पूर्णं अपामिति 'तृप्त्यर्थानां करणे षष्ठी' इति तृतीयार्थे षष्ठी । प्राप्याय्यते पूर्यते प्रपीनम् 'ओप्यायी वृद्धौ' 'प्यायः पी' ( पा० ६ । १ । २८ ) इति च । हे अर्वन् इयर्तीति अर्वा सर्वतो गन्तः, उत्समुत्स्यन्दनं स्रुग्लक्षणं कूपं जुषस्व सेवस्व । कीदृशमुत्सम् । मधुमन्तं मधुस्वादेन घृतेन युक्तम् । किंच समुद्रियं समुद्रसंबन्धि चयनयागसंबन्धि सदनं गृहमाविशस्व तृप्तः सन् यज्ञगृहं सेवस्व । 'त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतꣳ साम्नां महदुक्थमृचाम्' इत्यभिप्रायः समुद्रशब्दः 'समुद्राभ्राद्घः' ( पा० ४ । ४ । ११८ ) इति घप्रत्ययः तस्येयादेशः ॥ ८७ ॥

## अष्टाशीतितमी ।

घृ॒तं मि॑मिक्षे घृ॒तम॑स्य॒ योनि॑र्घृ॒ते श्रि॒तो घृ॒तम्व॑स्य॒ धाम॑ । अ॒नु॒ष्व॒धमाव॑ह मा॒दय॑स्व॒ स्वाहा॑कृतं वृषभ वक्षि ह॒व्यम् ॥ ८८ ॥

**उ०** घृतं मिमिक्षे । योयमग्निर्घृतं मिमिक्षे । घृतमुदकमाहुतिपरिणामभूतम् । मिमिक्षे सिञ्चामि । अथवा यस्याग्नेर्मुखे घृतं मिमिक्षे सिञ्चामि । घृतं चास्य योनिरुत्पत्तिस्थानम् 'अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीत्' इत्येतदभिप्रायम् । यश्चायं घृते श्रितः अवस्थितः । यस्य चास्य तमेव धाम तेजः दीप्तिर्नाम वा । तमग्निम् अनुष्वधमावह । हे अध्वर्यो, अनुष्वधम् अन्वन्नम् पूर्वमन्नमुपकल्प्य पश्चादाह्वय । आहूय च मादयस्व तर्पय । तर्पयित्वा चैवं ब्रूहि । स्वाहाकृतम् स्वाहाकारेणाभिहुतम् । हे वृषभ वर्षितः । वक्षि हव्यम् हविः देवानां वहनं च हविषामावाहनं च देवतानामित्यग्नेः कर्मणी ॥ ८८ ॥

**म०** गृत्समददृष्टा । अहं घृतं मिमिक्षे सेक्तुमिच्छामि । अग्निमुखे मेढुमिच्छति मिमिक्षते 'मिह सेचने' सन्नन्ताल्लट् उत्तमैकवचनम् । यतोऽस्याग्नेर्घृतं योनिरुत्पत्तिस्थानम् । 'अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीत्' इति श्रुतेः । गर्भाधारोदकमुल्बम् । योऽग्निर्घृते श्रितः घृतमाश्रितः । अस्याग्नेर्घृतमेव धाम स्थानं तेजस्करम् । वा उ अवधारणे । अतो हे अध्वर्यो, अनुष्वधं स्वधामन्नमुपलक्ष्य तमग्निमावह पूर्वमन्नमुपकल्प्य पश्चादाह्वय । आहूय च मादयस्व तर्पय । तर्पयित्वा चैव ब्रूहि हे वृषभ कामानामभिवर्षुक, स्वाहाकृतं स्वाहाकारेण हुतं हव्यं त्वं वक्षि वह देवान् प्रापय । वहतेः शपि लुप्ते ढत्वकत्वादौ कृते वक्षीति रूपम् । यद्वा यं प्रत्यहं मिमिक्षे यस्य घृतं योनिर्यो घृते श्रितः यस्य च घृतं धाम स त्वमनुष्वधं देवानावह मादय हव्यं च वक्षि इत्यग्निं प्रत्येवोक्तिः । यतो वह्नेः कर्मद्वयं देवानामावाहनं हविर्वहनं च ॥ ८८ ॥

## एकोननवतितमी ।

समुद्राद्रूर्मिर्मधुमाँ२॥ उदारदुपांᳬशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ ८९ ॥

उ० समुद्राद्रूर्मिः अन्नाध्यासेन घृतमन्नमत्र स्तूयते प्राणाध्यासेन वाग्निः । तस्मात्समुद्रात् घृतमयात् अक्षीणत्वात् घृतस्य समुद्रेणोपमानम् अन्नदेवताभिप्रायं वा। साह्यनुपक्षीणैव । ऊर्मिः महाराशिः घृतकल्लोलः । मधुमान् रसवान् । उदारत् उदगच्छत् । उद्गत्य च उपांशुना सममृतत्वमानट् उपसंव्याप्नोत् । अंशुना प्राणेन जगत्प्राणभूतेनाग्निना एकीभूय अमृतत्वममरणधर्मित्वम् । प्राणश्चान्नं चैकीभूयामृतत्वं प्राप्नुत इत्यर्थः । तस्य घृतस्य नाम गुह्यमविज्ञातमविद्वद्भिः श्रुतिमन्त्रपरिपठितं यदस्ति तत् अहं वेद्मि । जिह्वा देवानाम् अत्यभिलाषाज्जिह्वास्थाननिमित्तं देवानाम् । अग्नेर्जिह्वासीति 'यदा वा एतदग्नौ जुह्वत्यथाग्नेर्जिह्वाइवोत्तिष्ठन्तीति'। यच्च सर्वप्रकाशं तदप्यहं वेद्मि । अमृतस्य नाभिः अमरणधर्मित्वस्य नहनं बन्धनम् । यो हि घृतमश्नाति स दीर्घायुर्भवति । यद्वा अर्धेन सत्रं स्तूयते अर्धेन घृतं मन्त्रस्य । समुद्रात् आग्निकात् यजुःसमुद्रात् यः ऊर्मिः शब्दसंघातः । नामाख्यातोपसर्गनिपातलक्षणः उपमोत्प्रेक्षारूपकाद्यलंकारोपेतः । मधुमान् रसवान् वाक्यगुणैर्युक्तः । उदारत् उदगान्मुखतः । स एव उपांशुना सवनेन क्रियमाणः । 'तदेतत् यजुरुपांᳬश्वनिरुक्तम्' इति वचनात्। संप्राप्नोदमृतत्वम् अतोऽग्निचिद्भिः प्रकाशनीयः । घृतस्य नाम गुह्यं यदस्ति तदपि जिह्वास्थाननिमित्तं देवानां किमुत साक्षाद्धोमः । अथास्य घृतकीर्तावेवाग्निर्वैश्वानरो जज्वालेत्येतदभिप्रायं वचनम् । अमृतत्वस्य च नाभिः नहनं यजमानानाम् । अतोग्निचिद्भिर्हूयते स्तूयते च ॥ ८९ ॥

म० वामदेवदृष्टा । अत्रान्नाध्यासेन घृतं स्तूयते प्राणाध्यासेन चाग्निः । समुद्रात् घृतमयात् मधुमान् रसवानूर्मिः कल्लोल उदारत्। उदगच्छत् 'ऋ गतौ' लुङ् 'ऋदृशोऽङि गुणः' ( पा० ७।५।१६ ) अक्षीणत्वाद् घृतस्य समुद्रेणोपमानम् अन्नदेवताभिप्रायं वा । सा ह्यक्षीणैव । उद्गत्य च स ऊर्मिः अंशुना प्राणेन जगत्प्राणभूतेनाग्निना सं सङ्गत्यैकीभूय अमृतत्वममरणधर्मित्वमुपानट् उपव्याप्नोतु ।'णश अदर्शने' लुङि 'मन्त्रे घस–' (पा० २।४।८०) इत्यादिना च्लेर्लुक् 'हल्ङ्याप्' ( पा० ६।१।६८ ) इति तिपो लोपः विआङुपसर्गाभ्यां व्याप्त्यर्थः । प्राणश्चान्नं च एकीभूयामृतत्वं प्राप्नुत इत्यर्थः । तस्य घृतस्य गुह्यमविज्ञातं नामाविद्वद्भिरज्ञेयं श्रुतिमन्त्रपठितं यदस्ति तत्कथ्यत इति शेषः । किं तदाह देवानां जिह्वा अत्यभिलाषाद्देवानां जिह्वोत्थाननिमित्तम् अग्नेर्जिह्वासीत्युक्तेः । 'यदा वा एतदग्नौ जुह्वत्यथाग्नेर्जिह्वा इवोत्तिष्ठन्ति' इति श्रुतेः । यच्च सर्वप्रकाशं नाम तदप्युच्यते । अमृतस्य नाभिः अमरणधर्मस्य नहनं बन्धनम् । यो हि घृतमश्नाति स दीर्घायुर्भवति । यद्वा ऋगर्धेन मन्त्रः स्तूयते अर्धेन घृतम् । समुद्रात् आग्निकायजुःसमुद्रादस्माद्यज्ञात् य ऊर्मिः शब्दसङ्घातो नामाख्यातोपसर्गनिपातरूप उपमोत्प्रेक्षारूपकाद्यलंकाररूपो मधुमान् रसवान् वाक्यार्थगुणैर्युक्त उदारत् मुखादुदगात् स एव उपांशुना सवनेन क्रियमाणः सन्नमृतत्वमाप्नोत् 'तदेतद्यजुरुपांᳬश्वनिरुक्तम्' इति श्रुतेः । अतोऽग्निचिद्भिः स ऊर्मिः प्रकाशनीयः । घृतस्य गुह्यं नाम यदस्ति तदपि देवानां जिह्वोत्थाननिमित्तं किं पुनर्होमः । 'अथास्य घृतकीर्तावेवाग्निर्वैश्वानरो मुखादुज्जज्वाल' ( १।४।१।१३ ) इति श्रुतेः । अमृतस्य नाभिः नहनं यजमानानाममृतत्वप्रापकं घृतं यजनेनेत्यर्थः । अतोऽग्निचिद्भिर्हूयते स्तूयते च घृतमिति भावः ॥ ८९ ॥

## नवतितमी ।

वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ ९० ॥

उ० वयं नाम । यतो नामोच्चारणमपि प्रियं देवानामतो वयं नाम प्रब्रवाम घृतस्य अस्मिन्यज्ञे । धारयाम च यज्ञं नमोभिः हविर्भिः । किंच उपशृणोत्वेतत् स्तोत्रं ब्रह्मा ऋत्विक् शस्यमानम् । यथा चतुःशृङ्गः यज्ञः । ऋत्विजोऽस्य शृङ्गाणि । अवमीत् उद्गिरति । यज्ञपरिणामाभिप्रायम् । गौरः गौरवर्णः एतत् घृतम् ॥ ९० ॥

म० यतो घृतनामोच्चारणमपि देवानां प्रियमतो वयं घृतस्य नाम प्रब्रवाम अस्मिन् यज्ञे घृतनाम स्तुमः । नमोभिरन्नैः धारयाम यज्ञमिति शेषः । किंच ब्रह्मा ऋत्विक् शस्यमानं स्तूयमानमेतद् घृतनाम उपशृणवत् उपशृणोतु । 'लेटोऽडाटौ' ( पा० ३।४।९४ ) इत्यडागमः । यथा गौरः गौरवर्णः शुद्धो यज्ञः एतत् घृतयज्ञफलरूपमवमीदुद्गिरति यज्ञपरिणामाभिप्रायम् । कीदृशो गौरः । चतुःशृङ्गः चत्वार ऋत्विजः शृङ्गभूता यस्य सः ॥ ९० ॥

## एकनवतितमी ।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२॥ आविवेश ॥ ९१ ॥

उ० चत्वारि शृङ्गाः ।चतुःशृङ्गो वमीदित्युक्त्वा अधुना चतुःशृङ्गं यज्ञं वृषशब्दं वृषभं प्रतिपादयितुमाह । यस्यास्य चत्वारि शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्य्वाख्यानि यस्य चास्य त्रयः पादाः ऋग्यजुःसामलक्षणाः । यस्य चास्य द्वे शीर्षे हविर्धानप्रवर्ग्याख्ये यस्य चास्य सप्तहस्तासः सप्तहोतारो हस्ता

इव व्याप्रियन्ते । यद्वा सप्तच्छन्दांसि हस्ता इव । यश्च त्रिधा त्रिप्रकारं संबद्धः प्रातःसवनमाध्यन्दिनतृतीयसवनैः । वृषभो वर्षिता । रोरवीति 'रु शब्दे' । अत्यर्थं शब्दं करोति । सोयं महो देवः महो देवो महान्देवः हिरण्यगर्भस्तम्बपर्यन्तानां प्राणिनामुपजीव्यः । ज्ञानकर्मसमुच्चयकारिणां शरीरभूतः । मर्त्यान्मनुष्यान् आविशति । शब्दग्रामो वाभिधेयः । चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपाताः त्रयोऽस्य पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः । द्वे शीर्षे नामाख्याते । सप्तहस्ताः सप्तविभक्तयः । त्रिधा बद्धः एकवचनद्विवचनबहुवचनैः । वृषभ इवामर्षादन्यानि शास्त्राण्यधःपदीकृत्य रोरवीति । य उक्तगुणः सोऽयं महान्देवो मर्त्यान् आविशति प्रतिपादयति ॥ ९१ ॥

म० यज्ञपुरुषदेवत्य ऋषभो मन्त्रः । चतुःशृङ्गोऽवमीदित्युक्त्वा चतुःशृङ्गं यज्ञं वृषभरूपेण प्रतिपादयितुमाह । यो वृषभः कामानां वर्षिता । रोरवीति 'रु शब्दे' यङ्लुगन्तम् । अत्यर्थं शब्दं करोति सोऽयं महो देवः महति पूजयति मह्यते वा जनैरिति महो महान् देवः ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनामुपजीव्यो ज्ञानकर्मसमुच्चयकारिणां विदुषां शरीरभूतो मर्त्यान् मनुष्यानाविवेश आविशति मनुष्यान् व्याप्य तिष्ठति । यस्य वृषभस्य यज्ञस्य चत्वारि शृङ्गा शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्युलक्षणानि । त्रयः पादाः ऋग्यजुःसामरूपाः । द्वे शीर्षे शिरसी हविर्धानप्रवर्ग्याख्ये । 'शिर एवास्य हविर्धानं ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यः' इति श्रुतेः । अस्य वृषभस्य सप्त हस्तासः सप्त होतारो हस्ताः हस्ता इव व्याप्रियन्ते । सप्त छन्दांसि वा हस्ताः । यश्च त्रिधा त्रिप्रकारैर्बद्धः प्रातःसवनमाध्यन्दिनसवनतृतीयसवनैर्बद्धः । यद्वा चत्वारो वेदाः शृङ्गाणि । त्रयः पादाः सवनानि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासः छन्दांसि । त्रिधा बद्धः मन्त्रब्राह्मणकल्पैर्बद्धः । शब्दग्रामो वा व्याख्येयः । चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपाताः त्रयः पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः त्रयः काला वा । द्वे शीर्षे कार्यताव्यङ्ग्यते । सप्त हस्ताः विभक्तिरूपाः । त्रिधा बद्धः एकवचनद्विवचनबहुवचनैर्बद्धः । वृषभ इवायमन्यशास्त्राणि अधः कृत्वा रोरवीति सोऽयं महान् देवो मर्त्यानाविवेश आविशति प्रतिपादयति । मनुष्येष्विति मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायात् ॥ ९१ ॥

## द्विनवतितमी ।

त्रिधा॑ हि॒तं प॒णिभि॑र्गु॒ह्यमा॑नं॒ गवि॑ दे॒वासो॑ घृ॒तमन्व॑विन्दन् । इन्द्र॒ एक॑ᳪं॒ सूर्य॒ एकं॑ जजान वे॒नादेक॑ᳪं स्व॒धया॒ निष्ट॑तक्षुः ॥ ९२ ॥

उ० त्रिधा हितम् यज्ञपरिणामभूतं यथा घृतं तथा त्रिधा निहितं स्थापितमेषु लोकेषु । पणिभिः सुरैः । गुह्यमानं गुप्यमानम् । गवि देवाः घृतम् अन्वविन्दन् आनुपूर्व्याल्लब्धवन्तः । यत् तस्य घृतस्य इन्द्रः एकं भागं जजान जनयति । 'ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतः' इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति । सूर्य एकं भागं जनयति । 'ते तत उत्क्रामतः ते दिवमाविशतः' इत्यादिश्रुतिः सूर्यस्य जनकत्वं दर्शयति । वेनात् अग्नेर्यज्ञसाधनभूतात् एकं भागं स्वधयान्नेनाहुतिलक्षणेन निष्टतक्षुः निष्कर्षितवन्तः द्विजातयः । यस्ततः पुत्रो जायते स लोकः प्रत्युत्थायीत्येतदुक्तं भवति ॥ ९२ ॥

म० त्रिधा त्रिप्रकारैरेषु लोकेषु हितं स्थापितं हुतं यज्ञपरिणामभूतं पणिभिरसुरैर्गुह्यमानं गुप्यमानंसत् देवासो गवि अन्वविन्दन् धेनौ आनुपूर्व्याल्लब्धवन्तः । तस्य एकं भागमिन्द्रो जजान जनयति 'ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशत' इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति । सूर्य एकं भागं जजान । 'जनी प्रादुर्भावे' लिट् परस्मैपदमार्षम् । 'ते तत उत्क्रामतस्ते दिवमाविशतः' इत्यादिश्रुतिः सूर्यस्य घृतभागजनकत्वं दर्शयति । वेनाद् यज्ञसाधनभूतादग्नेः एकं स्वधया अन्नेन त्रेताहुतिलक्षणेन निष्टतक्षुः निष्कर्षितवन्तो द्विजातयः । यस्ततः पुत्रो जायते स लोकप्रत्युत्थायीत्येतदुक्तं भवति ॥ ९२ ॥

## त्रिनवतितमी ।

ए॒ता अ॑र्षन्ति॒ हृद्या॑त्समु॒द्राच्छ॒तव्र॑जा रि॒पुणा॒ नाव॒चक्षे॑ । घृ॒तस्य॒ धारा॑ अ॒भिचा॑कशीमि हि॒रण्ययो॑ वेत॒सो मध्य॑ आसाम् ॥ ९३ ॥

उ० एता अर्षन्ति । ऊर्मयः या एता वाचः अर्षन्ति उद्गच्छन्ति । हृद्यात् समुद्रात् श्रद्धोदकप्लुतादेव । ता याथात्म्यचिन्तनसन्तानगर्भान्निगमनिरुक्तनिघण्टुव्याकरणशिक्षाच्छन्दोभिः परिपूरिताः शब्दव्रजाः । बहुगतयो बह्वर्थाः । याश्चैता अर्षन्त्यो रिपुणा कुतार्किकवृन्दशत्रुसंघातेन । नावचक्षे नापवदितुंशक्याः । ताः घृतस्येव धारा देवानां तृप्तिकराः अभिचाकशीमि अहमभिगच्छामि । हिरण्मयश्च वेतसोऽग्निः मध्ये आसां वाग्व्यक्तीनां विद्यमानं चाकशीमि अहमभियास्यामि । हिरण्मयो वेतसोऽग्निराहवनीयाख्यः । मध्ये आसां वाग्व्यक्तीनां विद्यमानं चाकशीमि । अग्निर्हि वाचामधिष्ठात्री देवता । यद्वा घृतस्य धारा एवोच्यन्ते । या एता अर्षन्ति गच्छन्ति हृद्यात्समुद्रात् । हृदयेन हि संकल्प्य पश्चात् यजन्ते ता एवमुच्यन्ते । शतव्रजा बहुगतयः । याश्चैता रिपुणा शत्रुणा यज्ञपरिपन्थिना नावचक्षे नावद्रष्टुं शक्यन्ते ताः घृतस्य धारा अहमभिचाकशीमि पश्यामि । यश्चायं हिरण्मयो वेतसोऽग्निराहवनीयाख्यो मध्ये आसां व्यवतिष्ठति तमप्यहं पश्यामि । याथात्म्यतोऽहं द्रव्यं देवतां च पश्यामीत्युक्तं भवति ॥ ९३ ॥

**म०** एता वाच अर्षन्ति उद्गच्छन्ति । कस्मात् हृद्यात् समुद्रात् श्रद्धोदकप्लुतात् देवतायाथात्म्यचिन्तनसन्तानरूपात्समुद्रान्निगमनिरुक्तनिघण्टुव्याकरणशिक्षाच्छन्दोभिः पावनैः पूतात् । कीदृश्यो वाचः । शतव्रजाः शतं व्रजं व्रजा गतयो यासां ताः बहुगतयः । बह्वर्था इत्यर्थः । याश्च अर्षन्त्यो रिपुणा कुतार्किकवृन्दशत्रुणा न अवचक्षे न अवचक्ष्यन्ते पुरुषवचनव्यत्ययः। नापवदितुं खण्डयितुं शक्यन्ते ता घृतस्य धारा इवाभिचाकशीमि । लुप्तोपमानम् अहं पश्यामि । आसां वाचां मध्ये यो हिरण्ययो हिरण्मयो दीप्यमानो वेतसोऽग्निः तं चाभिचाकशीमि । अग्निर्हि वाचामधिष्ठात्री देवता । यद्वा घृतधारा एवोच्यन्ते या एता हृद्यात्समुद्रात् घृतधारा अर्षन्ति गच्छन्ति । हृदयेन संकल्प्य यजनाद्धृदयादुद्गतिरुच्यते । शतव्रजा नानागतयः याश्च रिपुणा नावचक्षे यज्ञपरिपन्थिना द्रष्टुं न शक्यन्ते ता घृतधाराः पश्यामि । यश्चायं हिरण्ययो वेतसोऽग्निराहवनीय आसां धाराणां मध्ये स्थितस्तं च पश्यामि द्रव्यदेवतांश्च याथात्म्येनाहं पश्यामीत्यर्थः ॥ ९३ ॥

## चतुर्नवतितमी ।

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥ ९४ ॥

**उ०** सम्यक् । या एताः साधु स्रवन्ति सरितो न धेनाः नद्यइवानवच्छिन्नोदकसंतानप्रबद्धाः । धेना वाचः । धेना इति वाङ्नामसु पठितम् । अन्तर्हृदा मनसा पूयमानाः अन्तर्व्यवस्थितेन हृदयेन परिपथस्थानीयेन मनसा च पूयमानाः विविच्यमानाः शब्ददोषेभ्यः । ता अग्निमेव स्तुवन्तीति शेषः । ये चैते अर्षन्ति गच्छन्ति ऊर्मयः संघाताः घृतस्य स्रुक्परिभ्रष्टा मृगाइव क्षिपणोः व्याधात् ईषमाणाः पलायमानाः । तेप्यग्निं तर्पयन्तीति शेषः । एतदुक्तं भवति । श्रुतिश्च द्रव्यं चाग्न्यर्थमेव ॥ ९४ ॥

**म०** या धेनाः वाचः सरितो न सरित इव नद्य इवानवच्छिन्नप्रवाहाः सम्यक् स्रवन्ति प्रसरन्ति । धेना इति वाङ्नामसु पठितम् । कीदृश्यो धेनाः । अन्तः हृदा मनसा च मनसा पूयमानाः शरीरान्तर्व्यवस्थितेन हृदा पावनस्थानीयेन मनसा च पूयमानाः शब्ददोषेभ्यो विविच्यमानाः । ता अग्निमेव स्तुवन्तीति शेषः । ये च एते घृतस्य ऊर्मयः कल्लोलाः अर्षन्ति स्रुक्परिभ्रष्टाः गच्छन्ति । 'ऋष गतौ' तेऽप्यग्निं तर्पयन्तीति शेषः । तत्र दृष्टान्तः । क्षिपणोः क्षिपति हिनस्ति क्षिपणुर्व्याधः क्षिपणोरीषमाणाः पलायमाना मृगा इव व्याधाद्भीता मृगा इव ये घृतोर्मयो गच्छन्ति तेऽग्निं तर्पयन्तीत्यर्थः । श्रुतिर्द्रव्यं चाग्न्यर्थमेवेति भावः ॥ ९४ ॥

## पञ्चनवतितमी ।

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ९५ ॥

**उ०** सिन्धोरिव । या एताः सिन्धोरिव नद्याः प्राध्वने प्रगतोऽध्वनः प्राध्वा महोदकप्रपातः तस्मिन्महोदकप्रपाते । शूघनासः शू इति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घनः । क्षिप्रगमनाः वातप्रमियः तरङ्गाः पतयन्ति । स्वार्थेणच । प्रपतन्ति । यह्वाः महत्यः । स्रुङ्मुखात्परिभ्रष्टाः घृतस्य धाराः तांश्च पतन्तीरश्नात्यग्निः । क इवेत्यत आह । अरुषोन वाजी । नकार उपमार्थीयः । यथा अरोचनो जात्यादिभिरुत्कृष्टो वाजी वेजनवान् अश्वः । पुनरप्यश्वं विशिनष्टि । काष्ठाभिन्दन् । आज्यंतान् विदारयन् । ऊर्मिभिः पिन्वमानः आज्यन्तविभेदनश्रमयोगाच्च स्वेदोदकोर्मिभिः पिन्वमानः प्रसिञ्चनभूमिम् । यथैतद्गुणविशिष्टोऽश्वोऽश्नाति एवमग्निरप्यश्नातीति वाक्यार्थः । ननु हीनोपमानमग्नेरश्वः ज्यायांस्तत्र गुणोऽभिप्रेत इति परिहृतं यास्केन ॥ ९५ ॥

**म०** घृतस्य धाराः पतयन्ति स्रुङ्मुखात्पतन्ति 'पत ऐश्वर्ये गतौ च' चुरादिरदन्तः । कीदृश्यो धाराः । यह्वाः महत्यः । यह्व इति महन्नामसु पठितम् । तत्र दृष्टान्तद्वयम् प्राध्वने सिन्धोर्वातप्रमिय इव । प्रगतोऽध्वनः प्राध्वनः विषमप्रदेशः । वातेन प्रमीयन्ते नश्यन्ति ते वातप्रमियस्तरङ्गाः 'मीङ् हिंसायां' दिवादिः अस्मात् क्विप् । यथा सिन्धोर्नद्याः वातप्रमियः तरङ्गाः प्राध्वने विषमप्रदेशे पतन्ति तद्वत् । कीदृशा वातप्रमियः । शूघनासः । शु इति क्षिप्रनाम हन्तेर्गत्यर्थस्य घनमिति रूपम् । शु क्षिप्रं घनं गमनं येषां ते शुघनाः शीघ्रगमनाः 'आज्जसेरसुक्' । अन्यो दृष्टान्तः वाजी न न इवार्थे । वाजीव यथा वाजी अश्वः पतति । कीदृशो वाजी । अरुषः 'रुष क्रोधे' रोषति क्रुध्यतीति रुषः 'इगुपध–' ( पा० ३ । १ । १३५ ) इति कप्रत्ययः । न रुषः अरोषणः जात्यादिभिरुत्कृष्ट इत्यर्थः । तथा काष्ठाः आज्यन्तान् संग्रामप्रदेशान् भिन्दन् विदारयन् ऊर्मिभिः काष्ठाभेदनोत्थश्रमस्वेदोदकैः पिन्वमानः भूमिं सिञ्चन् । 'पिवि सेचने' शानच् इदित्त्वान्नुम् । स वाजी यथा पतिलानान्यश्नाति एवं पतन्ती घृतधारा अग्निरश्नातीत्यर्थः ॥ ९५ ॥

## षण्णवतितमी ।

अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् । घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ ९६ ॥

**उ०** अभिप्रवन्त अभिनमन्तो यन्ति प्रह्वीभवन्ति । काः पुनस्ताः घृतस्य धाराः । कमभिप्रह्वीभवन्ति । अग्निम् । कथमिव । समानमनस्का इव योषाः एकभर्तारं प्रति संगतमनसः । कल्याण्यः रूपयौवनसंपन्नाः । स्मयमानाः । 'स्मिङ् ईषद्धसने' । ईषद्धसमानाः । समिधः समिन्धनाः ।

इत्थंभूता धारा अग्निमभि प्रह्वीभूय । ततस्तमेवाग्निं नसन्त । नसतिराप्नोतिकर्मा वा नमति कर्मा वा । व्याप्नुवन्ति । ताश्च धाराः जुषाणः हर्यति जातवेदाः । हर्यतिः प्रेप्साकर्मा । प्रेप्सति प्रतिकामयते । नास्य ग्रहणशक्तिपरिहरणमस्तीत्यभिप्रायः । जातप्रज्ञानोऽग्निः ॥ ९६ ॥

**म०** घृतस्य धाराः अग्निमभिप्रवन्त 'प्रुङ् गतौ । अग्निं प्रतिगच्छन्ति । लङ्अडभाव आर्षः । तत्र दृष्टान्तः । योषा इव यथा योषाः स्त्रियः पतिं प्रतिप्रवन्ते । कीदृश्यो योषाः । समनाः समानं मनो यासां ताः समनसः । विभक्तेर्डादेशः । कल्याण्यः रूपयौवनसंपन्नाः स्ययमानाः ईषद्धसन्त्यः 'स्मिङ् ईषद्धसने' । ता धारा अग्निं नसन्त हरन्ति 'नस हरणे' लङ् अडभाव आर्षः । नसतिराप्नोतिकर्मा वा । अग्निं व्याप्नुवन्ति । कीदृश्यो धाराः । समिधः समिन्धते दीपयन्त्यग्निमिति समिधः । किंच जातवेदाः जातप्रज्ञानोऽग्निर्जुषाणः प्रीतियुक्तः सन् ता घृतधारा हर्यति प्राप्नोति 'हर्य क्लमे गतौ' हर्यतिः प्रेप्साकर्मा वा । ता धाराः प्रेप्सति कामयते । नास्य ग्रहणशक्तिपरिहरणमस्तीति भावः ॥ ९६ ॥

## सप्तनवतितमी ।

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभिचाकशीमि । यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥ ९७ ॥

**उ०** कन्या इव । या एताः कन्याइव नवपरिणीता इव । वहतुम् वोढारं भर्तारम् । एतवै एतुं गमनाय । अञ्जि प्रजननम् । अञ्जाना व्यक्तं कुर्वाणाः । अभिचाकशीमि अभिपश्यामि । ताः घृतस्य धाराः यत्र सोमोभिषूयते यत्रच सौत्रामण्याख्यो यज्ञस्तायते । अभि तत्पवन्ते । तत् तत्रेत्यर्थः । अभिपवन्ते अभिगच्छन्ति यज्ञसहचरिता घृतस्य धारा इत्यभिप्रायः ॥ ९७ ॥

**म०** घृतस्य धाराः तत्तत्र अभिपवन्ते अभिगच्छन्ति 'पव गतौ' । तत्र कुत्र यत्र स्थाने सोमः लताविशेषः सूयते अभिषूयते । यत्र च यज्ञः सौत्रामण्याख्यः क्रियते तत्र गच्छन्तीर्घृतस्य धारा अभिचाकशीमि पश्यामि । तत्र गमने दृष्टान्तः । कन्या वहतुमिव वहति परिणयति वहतुर्भर्ता यथा वहतुं पतिमेतवै प्राप्तुं कन्या अभिप्रेवन्ते 'इण् गतौ' तुमर्थे तवेप्रत्ययः । कीदृश्यः कन्याः । अञ्जि भगमञ्जाना व्यक्तं योग्यं कुर्वाणाः अज्यते व्यक्तीक्रियते स्त्रीपुंव्यक्तिर्येन तत् तदञ्जानाः कन्या यथा पतिं गच्छन्ति तथा यज्ञं घृतधारा गच्छन्ति ता यज्ञसहिता घृतधाराः पश्यामीत्यर्थः ॥ ९७ ॥

## अष्टनवतितमी ।

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त । इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ ९८ ॥

**उ०** अभ्यर्षत । हे देवाः, अभ्यर्षत अभ्यागच्छत । एतां सुष्टुतिम् शोभनां स्तुतिम् । एतं च गव्यमाजिम् गोविकारैर्घृतैर्जनितं गव्यम् आजिमानमनमभ्यागच्छत । अभ्यागत्य च अस्मासु भद्रा भद्राणि द्रविणानि धनानि । धत्त स्थापयत दत्त वा । किंच इमं यज्ञं नयत तत्र देवा देवत्वं नः अस्माकम् अस्माभिर्यो देवलोको जित इत्यर्थः । याश्चैता घृतस्य धारा मधुमत्पवन्ते मधुसंयुक्तं पवन्ते ताश्चास्मज्जितं लोकं नयतेत्यनुवर्तते ॥ ९८ ॥

**म०** हे देवाः, यूयं सुष्टुतिं शोभनां स्तुतिमाजिं यज्ञंच अभ्यर्षत अभ्यागच्छत । अज्यते प्राप्यते स्वर्गो येन स आजिर्यज्ञः । कीदृशमाजिं गव्यम् । गव्यं घृतं विद्यते यस्मिन् स गव्यस्तम् घृतयुतम् । अर्शआदित्वादच्प्रत्ययः । आगत्य चास्मासु भद्रा भद्राणि कल्याणानि द्रविणानि धनानि धत्त स्थापयत दत्त वा'डुधाञ् धारणपोषणयोः' दाने चेति वचनात् । किंच नोऽस्माकमिमं यज्ञं सौत्रामणीं देवता देवतासु देवलोके नयत प्रापयत । देवताशब्दात् 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति विभक्तिलोपः । किंच याश्चैना घृतस्य धारा मधुमत् रसवत् यथा तथा पवन्ते प्रसरन्ति ता अपि देवतासु नयत यज्ञे यज्ञद्रव्ये स्वर्गं गते यजमानो गच्छत्येवेत्यर्थः ॥ ९८ ॥

## एकोनशततमी ।

धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥ ९९ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तदशोऽध्यायः ॥ १७ ॥

**उ०** धामं ते तव आहुतिपरिणामभूतमिदं जगत् ब्रह्मादिस्तम्बपर्यन्तम् मन्यमान आह । धामं धामानि विभूत्यां ते तव विश्वं भुवनं भूतजातमधिश्रितम् अध्याश्रितम् । यच्चान्तःसमुद्रे समुद्रस्य मध्ये किंचित् यच्च आयुषि किंचिदपि धामानि तव अधिश्रितमित्यनुवर्तते । यत एवम् अतस्त्वां ब्रवीमि । अपामनीके मुखे वर्तमानो य ऊर्मिराहृतः । समिथे संग्रामे च पणिभिः सहवर्तमानो य ऊर्मिराहृतः । तदुक्तं पणिभिर्गुह्यमानमिति । तम् अश्यामः भक्षयामः व्याप्नुयाम वा । मधुमन्तं रसवन्तम् ते तव संबन्धिनम् हे घृत, हविःपरिणामिनो रसस्य वयं भोक्तारो भवेम । देवत्वं प्राप्नुयामेति वक्रोक्त्या प्रार्थ्यते ॥ ९९ ॥

इति उवटकृतौ मन्त्रभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

**म०** ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगदाहुतिपरिणामभूतं मन्यमानो मुनिराह । हे अग्ने, विश्वं भुवनं सर्वं भूतजातं ते

तव धामन् धाम्नि विभूत्यामधिश्रितं आश्रितं स्थितम् । त्वन्महिमोत्थमित्यर्थः । यच्चान्तःसमुद्रे समुद्रमध्ये तथा हृदि हृन्मध्ये तथा अन्तरायुषि आयुर्मध्ये ब्रह्मणो जीवनपर्यन्तं यद्भूतजातं तदपि ते धामनि श्रितम् । धामन्निति विभक्तिलोपः । अतोऽहं प्रार्थये मधुमन्तं रसवन्तं तमूर्मिं घृतकल्लोलं ते त्वदीयं वयमश्याम भक्षयामो व्याप्नुयामो वा । तं कम् । अपामनीके मुखे वर्तमानो य ऊर्मिः समिथे पणिभिः सह युद्धे आभृतः आहृत आनीतः । 'त्रिधा हितं पणिभिर्गुह्यमानम्' ( क० ९२) इत्युक्तत्वात् । अश्यामेति अश्नातेरश्नोतेर्वा विकरणव्यत्ययेन श्यनि प्रत्यये लोटि रूपम् । हविःपरिणामिनो रसस्य वयं भोक्तारो भवेमेति भावः । देवत्वं प्राप्नुयामेति वक्रोक्त्या प्रार्थ्यते । यद्वास्या ऋचोऽर्थान्तरमुच्यते । हे अग्ने, इदं विश्वं भुवनं तव धाम्नि अधिश्रितं तत्ते धाम कुत्र कुत्रेति तदुच्यते । अन्तःसमुद्रे अन्तरिक्षमध्ये सूर्यरूपेण । समुद्र इत्यन्तरिक्षनाम । हृदि अन्तः सर्वप्राणिनां हृदये जठराग्निरूपेण आयुषि अन्ने सर्वप्राण्याहारत्वेन अपामनीके उदकानां सङ्घाते वैद्युताग्निरूपेण समिथे सङ्ग्रामे शौर्याग्निरूपेण एवं सर्वेषु स्थानेषु आभृतः स्थापितो यस्तव धामरूप ऊर्मिः घृतरूप उदकरूपो वा तं तव रसं मधुमन्तं माधुर्योपेतं वयमश्याम प्राप्नुयाम । सर्वरसभोक्तारः स्यामेति भावः ॥ ९९ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सेकादिजपपर्यन्तोऽध्यायः सप्तदशोऽगमत् ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

### तत्र प्रथमा ।

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥ १ ॥

उ० इतउत्तरं वसोर्धारिकाणि यजूंषि सप्तविंशतिकण्डिकाः । वाजश्च मे वाजः अन्नं च मे । प्रसवः अन्नदानविषयाभ्यनुज्ञा दीयतां भुज्यतामिति । प्रयतिश्च मे प्रसितिश्च मे प्रयतनं प्रयतिः आज्ञा प्रसयनं प्रसितिः । तन्तुर्वा जालं वा तेन चात्र बन्धनं स्नेह उपलक्ष्यते । धीतिश्च मे क्रतुश्च मे । 'ध्यै चिन्तायाम्' । तस्य धीतिः संप्रसारणं छान्दसम् । क्रतुः संकल्पः संस्कारो वा । स्वरश्च मे श्लोकश्च मे । साधुशब्दः स्वरः श्लोकः गद्यपद्यबन्धः । श्रवश्च मे श्रुतिश्च मे श्रवो वेदमन्त्राः । श्रुतिर्ब्राह्मणम् । ज्योतिश्च मे स्वश्च मे । ज्योतिरादित्यादिः स्वर्द्युलोकादि । द्वौ द्वौ कामौ संयुनक्ति अव्यवच्छेदाय । 'यथा व्योकसौ संयुज्यादेवम्' इति श्रुतिः । द्वौ द्वौ कामावभिरूपौ संयुनक्ति । चकारेण समुच्चिनोति अव्यवच्छेदाय अनुपक्षयाय । यथा कश्चिद्द्विजीतिर्व्योकसौ संयुज्यात् । ओक इति निवासनाम । विगत ओको गृहं ययोः कुमारीकुमारयोः तौ व्योकसौ नानागृहनिवासिनौ संयुज्यात् तयोर्विवाहं कुर्यात् । एवं चकारेण समुच्चिनोति । यज्ञेन कल्पन्ताम् वाजप्रभृतीनि चकारसमुच्चितानि मम यज्ञेन कल्पन्तां समर्था भवन्तु । यज्ञेऽग्निं तर्पयन्तु अभिषिञ्चन्तु वा । अनेन च त्वा प्रीणाम्यनेन च अनेन च त्वा अभिषिञ्चाम्यनेन चेत्यस्याः श्रुतेरभिप्रायेण व्याख्यातम् । अथो इदं च मे देहीदं च म इत्यस्याः श्रुतेरभिप्रायेण व्याख्यास्यामः । वाजप्रभृतीनि चशब्दसमुच्चितानि मम यज्ञेनानेन क्लृप्तानि भवन्तु । यज्ञोऽस्मभ्यमेतेषां दाता भवत्वित्यर्थः । एवमस्माभिर्दिङ्मात्रप्रदर्शनं कृतं मन्त्रव्याख्यायाः ॥ १ ॥ २ ॥ ३ ॥

म० सप्तदशेऽध्याये चित्यारोहणादिमन्त्रा उक्ताः । इदानीमष्टादशेऽध्याये वसोर्धारादिमन्त्रा उच्यन्ते । 'वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतꣳसन्ततं यजमानोऽरण्येऽनूच्येऽग्निप्राप्ते वाजश्च म इत्यष्टानुवाकेन' (का० १८।५।१)। अस्यार्थः । ततो यजमान आज्यं संस्कृत्यार्थपरिमाणया महत्यौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमरण्येऽनूच्ये पुरोडाशेऽधिकरणे तदुपरि संततमविच्छिन्नधारं यथा तथा वसोर्धारासंज्ञामाहुतिं जुहोति । घृतेऽग्निप्राप्ते सति वाजश्चेत्यादिहोममन्त्रारम्भः कार्योऽष्टाभिरनुवाकैर्वाजश्चेत्यादिवेट्स्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकैः । वाजश्च मे । चकाराः समुच्चयार्थाः । यज्ञेनानेन मया कृतेन वाजादयः पदार्थाः कल्पन्तां क्लृप्ताः संपन्ना भवन्तु । स यज्ञो वाजादीनां दातास्मभ्यं भवत्वित्यर्थः । 'अथो इदं च मे देहीदं च मे' ( ९।३।२।५ ) इति श्रुतेः । यद्वा वाजादयः पदार्था मे मम यज्ञेन कल्पन्ताम् । विभक्तिव्यत्ययः । यज्ञेऽग्निं तर्पयन्तु अभिषिञ्चन्तु वा । 'अनेन च त्वा प्रीणाम्यनेन च त्वाभिषिञ्चामि' ( ९।३।३।५ ) इत्यादिश्रुतिः । द्वौ द्वौ कामावनुपक्षयाय संयुञ्ज्याच्चकारेण कन्याकुमाराविव । तथाच श्रुतिः 'द्वौ द्वौ कामावभिरूपौ संयुनक्त्यव्यवच्छेदाय यथा व्योकसौ संयुञ्ज्यात्' ( ९।३।२।६ ) इति । अथ पदार्था व्याख्यायन्ते । वाजश्चेत्यादियजुषां देवा ऋषयः । अग्निर्देवता । छन्दांसि पिङ्गलोक्तान्यक्षरसंख्यया ज्ञेयानि । एतैर्य[...]भिर्यजमानोऽग्नेः कामान् याचते वाजो मेऽस्त्वित्यादि । तत्रै[...]ऽधिकानि चतुःशतं यजूंषि कामास्तु पञ्चदशोत्तरं शतम् । [...] समि[...] । वाजश्चेत्याद्यासु ज्यैष्ठ्यं च मे, वसु च मे ( १४ । १[...] ९६ [...]तिकण्डिकाद्वयवर्जितासु एकोनविंशतिकण्डिकासु त्रयो[...]योदश यजूंषि सन्ति ज्यैष्ठ्यं च म इत्यस्यां (४) पञ्च[...]यन्ति [...] च म इत्यस्यां ( १५ ) नव । अग्निश्च मे घर्मश्च म इ[...]हीभर्वा[...]२२ ) द्वादश कामास्तु त्रयोदश अङ्गुलयः शक्वरयो[...]षाः ए[...]म इत्येकं यजुः कामास्तत्र त्रयः । व्रतं च म इत[...]संपन्नाः ।[...]३ ) षट् कामास्तु दश । समिध.

अहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च म इत्येकं यजुः षट् कामाः । एका च म इत्यत्रां (२४) त्रयस्त्रिंशत् । चतस्रश्च मे (२५) अत्र त्रयोविंशतिः । त्र्यविश्च मे (२६) अत्रैकादश । पष्ठवाट् च मे (२७) इत्यत्र नव । वाजाय स्वाहेति (२८) अत्र चतुर्दश । आयुर्यज्ञेनेति (२९) अत्रैकविंशतिः कल्पन्तामन्तानि १२ स्तोमश्चेति षट् १८ स्वर्देवाः १९ प्रजापतेः २० वेट्स्वाहा २१ । एवमेकाधिका चतुःशती । अथ यजुषामर्थाः । वाजोऽन्नम् । चशब्दाः समुच्चयार्थाः । प्रसवोऽन्नदानाभ्यनुज्ञा दीयतां भुज्यतामिति । प्रयतिः शुद्धिः । प्रसितिः बन्धनमन्नविषयौत्सुक्यम् । धीतिः ध्यानम् 'ध्यै चिन्तायाम्' छान्दसं संप्रसारणम् । क्रतुः संकल्पो यज्ञो वा । स्वरः साधुशब्दः । श्लोकः पद्यबन्धः स्तुतिर्वा । श्रवः वेदमन्त्राः श्रवणसामर्थ्यं वा । श्रुतिः ब्राह्मणं श्रवणसामर्थ्यं वा । ज्योतिः प्रकाशः । स्वः स्वर्गः एते मे मम यज्ञेन कल्पन्ताम् । कल्पन्तामिति कण्डिकान्तस्य समुदायापेक्षया बहुलत्वम् । मेपदानामावृत्तिः प्रत्येकं प्राप्त्यर्था । एवं सर्वत्र ॥ १ ॥

## द्वितीया ।

प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥ २ ॥

म० प्राणः ऊर्ध्वसंचारी शरीरवायुः । अपानः अधोवृत्तिर्वायुः । व्यानः सर्वशरीरचरः । असुः प्रवृत्तिमान् वायुः । चित्तं मानसः संकल्पः । आधीतं बाह्यविषयज्ञानम् । वाक् वागिन्द्रियम् । मनः प्रसिद्धम् । चक्षुरिन्द्रियम् । श्रोत्रं श्रवणेन्द्रियम् । दक्षः ज्ञानेन्द्रियकौशलम् । बलं कर्मेन्द्रियकौशलम् । एतानि यज्ञेन मे कल्पन्ताम् ॥ २ ॥

## तृतीया ।

ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे परूᳪषि च मे शरीराणि च म आयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥ ३ ॥

म० ओजो बल[illegible] ष्टमो धातुः । सहः शारीरं बलं सपत्नाभिभवितृत्वं वा । [illegible]देहा परमात्मा । तनू रम्यं वपुः । शर्म सुखम् । वर्म कवच[illegible] । अङ्गानि हस्ताद्यवयवाः । अस्थीनि शरीरगतानि । परूंषि [illegible] ध्यादिपर्वाणि । शरीराणि पूर्वोक्ताः शरीरावयवाः । आयुज[illegible]म् । जरा वार्धकान्तमायुः । एते यज्ञेन संपद्यन्ताम् ॥ ३

## चतुर्थी ।

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥ ४ ॥

उ० सुगमं व्याख्यानम् ॥ ४ ॥ ५ ॥

म० ज्येष्ठस्य भावो ज्यैष्ठ्यं प्रशस्तत्वम् । अधिपतेर्भाव आधिपत्यं स्वामित्वम् । मन्युः मानसः कोपः । भामोऽधिक्षेपादिलिङ्गको बाह्यः कोपः । न मीयत इत्यमः अपरिमेयत्वमन्यैरियत्तया परिच्छेत्तुमशक्यत्वम् । अम्भः शीतमधुरं जलम् । जेमा जयस्य भावो जयसामर्थ्यम् । महतो भावो महिमा महत्त्वं संपत्त्यादिना । उरोर्भावो वरिमा प्रजादिविशालता । पृथोर्भावः प्रथिमा गृहक्षेत्रादिविस्तारः । वृद्धस्य भावो वर्षिमा दीर्घजीवित्वम् । दीर्घस्य भावो द्राघिमा अविच्छिन्नवंशत्वम् । वृद्धं प्रभूतमन्नधनादि । वृद्धिः विद्यादिगुणैरुत्कर्षः । एते मे कल्पन्ताम् ॥ ४ ॥

## पञ्चमी ।

सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् ॥ ५ ॥

म० सत्यं यथार्थभाषित्वम् । श्रद्धा परलोकविश्वासः । जगत् जङ्गमं गवादि । धनं कनकादि । विश्वं स्थावरम् । महो दीप्तिः । क्रीडा अक्षद्यूतादिः । मोदः क्रीडादर्शनजो हर्षः । जातं पुत्रोत्पन्नमपत्यम् । जनिष्यमाणं भविष्यदपत्यम् । सूक्तमृक्समूहः । सुकृतमृक्पाठजन्यं शुभादृष्टम् । एते मे कल्पन्ताम् ॥ ५ ॥

## षष्ठी ।

ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुखं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥ ६ ॥

उ० सुगमं व्याख्यानम् ॥ ६ ॥ ७ ॥

म० ऋतं यज्ञादिकर्म । अमृतं तत्फलभूतं स्वर्गादि । यक्ष्मणोऽभावोऽयक्ष्मं धातुक्षयादिरोगाभावः । अनामयत् आमयति पीडयतीत्यामयत् न आमयत् अनामयत् सामान्यव्याध्यादिराहित्यम् । जीवयतीति जीवातुः व्याधिनाशकमौषधम् । दीर्घायुषो भावो दीर्घायुत्वं बहुकालमायुः । पृषोदरादित्वात्सलोपः आयुरुदन्तो वा । [illegible]मित्राणामभावोऽनमित्रं

शत्रुराहित्यम् । भयाभावोऽभयं भीतिराहित्यम् । सुखमानन्दः । शयनं संस्कृता शय्या । सूषाः शोभन उषाः स्नानसन्ध्यादियुक्तः प्रातःकालः । सुदिनं यज्ञदानाध्ययनादियुक्तं सर्वं दिनम् । एते मे यज्ञेन सिध्यन्तु ॥ ६ ॥

## सप्तमी ।

यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च मे यज्ञेन कल्पन्ताम्॥७॥

म० यन्ताश्वादेर्नियन्ता । धर्ता पोषकः पित्रादिः । क्षेमः विद्यमानधनस्य रक्षणशक्तिः । धृतिः धैर्यमापत्स्वपि स्थिरचित्तत्वम् । विश्वं सर्वानुकूल्यम् । महः पूजा । संविद् वेदशास्त्रादिज्ञानम् । ज्ञातुर्भावो ज्ञात्रम् विज्ञानसामर्थ्यम् । सूः पुत्रादिप्रेरणसामर्थ्यम् । प्रसूः पुत्रोत्पत्त्यादिसामर्थ्यम् । सीरं हलादिकृषिकृतधान्यनिष्पत्तिः । लयः कृषिप्रतिबन्धनिवृत्तिः॥७॥

## अष्टमी ।

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥ ८ ॥

उ० सुगमं व्याख्यानम् ॥ ८ ॥ ९ ॥

म० शमैहिकं सुखम् । मयः आमुष्मिकं सुखम् । प्रियं प्रीत्युत्पादकं वस्तु । अनुकाम्यत इत्यनुकामः अनुकूलयत्नसाध्यः पदार्थः । कामः विषयभोगजनितं सुखम् । सुमनसो भावः सौमनसः मनःस्वास्थ्यकरो बन्धुवर्गः । भगः सौभाग्यम् । द्रविणं धनम् । भद्रमैहिकं कल्याणम् । श्रेयः पारलौकिकम् । वसतीति वस्तृ अतिशयेन वस्तृ वसीयः 'तुरिष्ठेमेयस्सु' ( पा० ६ । ४ । १५४ ) इति तृचो लोपः । निवासयोग्यो वसुमान् गृहादिः । यशः कीर्तिः । एते कल्पन्ताम् ॥ ८ ॥

## नवमी ।

ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम् ॥ ९ ॥

म० ऊर्क् अन्नम् । सूनृता प्रिया सत्या वाक् । पयः दुग्धम् । रसः तत्रत्यः सारः । घृतमाज्यम् । मधु क्षौद्रम् । समाना ग्धिर्भोजनं सग्धिः । अदेः क्तिनि घस्लादेशः 'घसिभसोर्हलि' ( पा० ६ । ४ । १०० ) इति घस उपधालोपे कृते झलो झलि' ( पा० ८ । २ । २६ ) इति सलोपे कृते 'झषस्तथोर्धोऽधः' ( पा० ८ । २ । ४० ) जश्त्वं । सग्धिः बन्धुभिः सह भोजनमित्यर्थः । सपीतिः बन्धुभिः सह पानम् । कृषिः तत्कृतधान्यसिद्धिः । वृष्टिः धान्यनिष्पादिकानुकूला । जेतुर्भावो जैत्रम् जयसामर्थ्यम् । उद्भिदो भाव औद्भिद्यम् चूतादितरोरुत्पत्तिः । एते यज्ञेन कल्पन्ताम् ॥ ९ ॥

## दशमी ।

रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे कुयवं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् १०

उ० सुगमं व्याख्यानम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

म० रयिः सुवर्णम् । रायो मुक्तादिमणयः । पुष्टं धनपोषः । पुष्टिः शरीरपोषकः । विभु व्याप्तिसामर्थ्यम् । प्रभु ऐश्वर्यम् । पूर्णं धनपुत्रादिबाहुल्यम् । अत्यन्तं पूर्णं पूर्णतरं गजतुरगादिबाहुल्यम् । कुयवं कुत्सितधान्यमपि । अक्षितं क्षयहीनं धान्यादि । अन्नमोदनादि । क्षुत् भुक्तान्नपरिपाकः । एते कल्पन्ताम् ॥ १० ॥

## एकादशी ।

वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथ्यं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥ ११ ॥

म० 'विद्लृ लाभे' पूर्वलब्धं वित्तम् । वेद्यं लब्धव्यम् । भूतं पूर्वसिद्धं क्षेत्रादि । भविष्यत् संपत्स्यमानं क्षेत्रादि । सुखेन गम्यते यत्र तत् सुगम् 'सुदुरोरधिकरणे' ( पा० ३ । २ । ४८ ) इति गमेर्डः । सुखगम्यो देशः । सुपथ्यं शोभनं हितम् । ऋद्धं समृद्धं यज्ञफलम् । ऋद्धिः यज्ञादिसमृद्धिः । क्लृप्तं कार्यक्षेमं द्रव्यादि । क्लृप्तिः स्वकार्यसामर्थ्यम् । मतिः पदार्थमात्रनिश्चयः । सुमतिः दुर्घटकार्यादिषु निश्चयः । एते यज्ञेन कल्पन्ताम् ॥ ११ ॥

## द्वादशी ।

व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥ १२ ॥ इति

म० व्रीहियवमाषतिलमुद्गगोधूमम[सूरा]ः लोक प्रसिद्धाः । खल्वाः चणकाः लङ्काश्च । प्रियङ्गवः कङ्गवः प्र[सिद्धाश्]च । अणवश्चीनकाः । श्यामाकास्तृणधान्यानि ग्राम्याणि प्र[सिद्ध]त्वेन प्रसिद्धानि । नीवारास्तृणधान्यान्यारण्यानि । एते धा[न्य]विशेषा मे यज्ञेन कल्पन्ताम् ॥ १२ ॥

## त्रयोदशी ।

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥ १३ ॥

म० अश्मा पाषाणः । मृत्तिका प्रशस्ता मृत् 'मृदस्तिकन्' । गिरयः क्षुद्रपर्वताः गोवर्धनार्बुदरैवतिकादयः । पर्वताः महान्तो मन्दरहिमाचलादयः । सिकताः शर्कराः । वनस्पतयः पुष्पं विना फलवन्तः पनसोदुम्बरादयः । हिरण्यं सुवर्णं रजतं वा 'द्रविणाकुप्ययोश्च' इत्यभिधानात् । अयो लोहम् । श्यामं ताम्रलोहं कांस्यं रजतं कनकं वा । 'लोहं कालायसे सर्वतैजसे जोङ्गकेऽपि च' इत्यभिधानात् । सीसं प्रसिद्धम् । त्रपु रङ्गम् । एते कार्यविशेषेषु मे कल्पन्ताम् ॥ १३ ॥

## चतुर्दशी ।

अग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च मे वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥ १४ ॥

उ० सुगमं व्याख्यानम् ॥ १४ ॥ १५ ॥

म० अग्निः पृथिवीस्थो वह्निः । आपोऽन्तरिक्षस्थानि जलानि । वीरुधः गुल्माः । ओषधयः फलपाकान्ताः । कृष्टपच्याः कृष्टे पच्यन्त इति कृष्टपच्याः 'राजसूयसूर्य–' ( पा० ३ । १ । ११४ ) इत्यादिना क्यबन्तो निपातः । भूमिकर्षणबीजवापादिकर्मनिष्पाद्या ओषधयः । तद्विपरीता अकृष्टपच्याः स्वयमेवोत्पद्यमाना नीवारगवेधुकादयः । ग्राम्या ग्रामे भवाः पशवः गोऽश्वमहिषाजाविगर्दभोष्ट्रादयः । आरण्याः अरण्ये भवाः पशवः हस्तिसिंहशरभमृगगवयमर्कटादयः । वित्तं पूर्वलब्धम् । वित्तिः भाविलाभः । भूतं जातपुत्रादिकम् । भूतिरैश्वर्यं स्वार्जितम् । एतानि यज्ञेन मम संपद्यन्ताम् ॥ १४ ॥

## पञ्चदशी ।

वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् ॥ १५ ॥

म० वसु धनं गवादिकम् । वसतिर्वासस्थानं गृहम् । कर्माग्निहोत्रादि । शक्तिस्तदनुष्ठानसामर्थ्यम् । अर्थोऽभिलषितः पदार्थः । एमः ईयत इत्येमः एतेर्मप्रत्ययः प्राप्त्योऽर्थः । इत्या भावे क्यप् । अयनमिष्टप्राप्त्युपायः । गतिरिष्टप्राप्तिः । एते कल्पन्ताम् ॥ १५ ॥

## षोडशी ।

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १६ ॥

उ० अथार्धेन्द्राणि जुहोति । अर्धे इन्द्रः अर्धे अन्ये देवाः । अग्निश्च म इन्द्रश्च म इति ॥ १६ ॥ १७ ॥

म० 'अथार्धेन्द्राणि जुहोति' ( ९ । ३ । २ । ९ ) अर्धस्येन्द्रदेवत्वत्वादर्धस्य नानादेवत्वत्वात् । अग्निसोमसवितृसरस्वतीपूषबृहस्पतयः प्रसिद्धाः । तैः समानभागत्वादिन्द्र एकैकया सह पठ्यते । यास्कोक्ता इन्द्रशब्दस्य नानार्थाः कार्याः । एवमग्रेऽपि कण्डिकाद्वये । एते कल्पन्ताम् ॥ १६ ॥

## सप्तदशी ।

मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १७ ॥

म० मित्रवरुणधातृत्वष्टृमरुद्विश्वेदेवाः प्रसिद्धाः । प्रत्येकमिन्द्रः । एते कल्पन्ताम् ॥ १७ ॥

## अष्टादशी ।

पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे नक्षत्राणि च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १८ ॥

उ० अथ ग्रहान् जुहोति । अंशुश्च म इति ॥ १८ ॥ १९ ॥

म० पृथिव्यन्तरिक्षदिवस्त्रैलोक्यम् । समा वर्षाधिष्ठात्र्यो देवताः । नक्षत्राणि अश्विन्यादीनि । दिशः प्रागाद्याः । एते कल्पन्ताम् ॥ १८ ॥

## एकोनविंशी ।

अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपांशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥ १९ ॥

म० 'अथ ग्रहान् जुहोति' ( ९ । ३ । २ । १० ) कण्डिकात्रये ग्रहहोममन्त्राः । अंश्वादयः सोमग्रहविशेषाः सोमप्रकरणे प्रसिद्धाः । अदाभ्यस्यैव गृह्यमाणत्वदशायां पृथक्कृत्य ग्रहणे रश्मिशब्देन निर्देशः । रश्मीनां तद्ग्रहणे साधनत्वात् 'अद्यो रूपे सूर्यस्य रश्मिषु' ( ८ । ४८ ) इति मन्त्रलिङ्गात् ।

अधिपतिशब्देन निग्राह्यो विवक्षितः तस्य ज्येष्ठत्वादाधिपत्यम् 'ज्येष्ठो वा एष ग्रहाणाम्' इति श्रुतेः । प्रतिप्रस्थानशब्देन निग्राह्यो विवक्षितः द्विदेवत्यैः सह पाठात् । अन्ये प्रसिद्धाः ॥ १९ ॥

## विंशी ।

आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥ २० ॥

**उ०** सुगमं व्याख्यानम् ॥ २० ॥ २१ ॥

**म०** आद्यो वैश्वदेवः प्रातःसवनगतः । महावैश्वदेवस्तु तृतीयसवनगतः । ध्रुवाख्यस्यैव ग्रहस्य श्रवणदशायां वैश्वानरसूक्तपाठात्तद्दशापन्नो ध्रुवो वैश्वानरशब्देनोच्यते । मरुत्वतीया इति बहुवचनं त्रित्वात् मरुत्वतीयो महामरुत्वतीयः कुण्ठमरुत्वतीयश्चेति । अभिषेचनीये सारस्वतीनामपां ग्रहणमेव सारस्वतो ग्रहः सारस्वतं ग्रहं गृह्णातीति तत्राम्नानात् ॥ २० ॥

## एकविंशी ।

स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च म आधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥ २१ ॥

**म०** स्रुचो जुह्वादयः । चमसानि ग्रहपात्राणि । वायव्यानि पात्रविशेषाः । अधिषवणे काष्ठफलके । पूतभृदाधवनीयौ सोमपात्रविशेषौ । स्वगाकारः शम्युवाकः तेन यथास्वं देवतानां हविरङ्गीकारात् । प्रसिद्धमन्यत् । एते मम यज्ञेन निमित्तेन कल्पन्ताम् ॥ २१ ॥

## द्वाविंशी ।

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥ २२ ॥

**म०** कण्डिकाद्वयेन यज्ञक्रतुहोमः । 'अथैतान् यज्ञक्रतून् जुहोत्यग्निश्च म इति' ( ९ । ३ । ३ । १ ) इति श्रुतेः । अग्निः चीयमानो वह्निरग्निष्टोमो वा । घर्मः प्रवर्ग्यः । 'इन्द्रायार्कवते पुरोडाशम्' इति विहितो यागोऽर्कः । 'सौर्यं चरुम्' इति विहितः सूर्यः । प्राणो गवामयनम् । अश्वमेधः प्रसिद्धः । पृथिव्यदितिदिवो देवताविशेषाः । अङ्गुलयः विराट्पुरुषावयवाः शक्वरयः शक्तयः दिशः प्राच्याद्याः । एते यज्ञेन कल्पन्ताम् ॥ २२ ॥

## त्रयोविंशी ।

व्रतं च म ऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥ २३ ॥

**म०** व्रतं नियमः । ऋतवो वसन्तादयः । तपः कृच्छ्रचान्द्रायणादि । संवत्सरः प्रभवादि । अहश्च रात्रिश्चाहोरात्रे दिननिशे । ऊरू चाष्ठीवन्तौ जानुनी च ऊर्वष्ठीवे अवयवविशेषौ 'अचतुर–' ( पा० ५ । ४ । ७७ ) इति निपातः । बृहद्रथन्तरे एतन्नामके सामनी । एतानि कल्पन्ताम् ॥ २३ ॥

## चतुर्विंशी ।

एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च म एकादश च म एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च म एकविꣳशतिश्च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥ २४ ॥

**उ०** अथैतान् यज्ञक्रतून् जुहोति । एका च मे तिस्रश्च म इति ॥ २४ ॥

**म०** अयुग्मस्तोमहोमार्था मन्त्राः । 'अथायुजस्तोमान् जुहोति' ( ९ । ३ । ३ । २ ) इति श्रुतेः । एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं विहाय परित्यक्तसमसंख्याकेनात्तविषमसंख्याकेन मन्त्रेणायुग्मान्स्तोमाञ्जुहुयादित्यर्थः । आदरातिशयद्योतनार्था सर्वत्र पुनरुक्तिः । अयुग्मस्तोमहोमैः सर्वकामावाप्तिः । तथाच श्रुतिः 'एतद्वै देवाः सर्वान् कामानाप्त्वायुग्भिः स्तोमैः स्वर्गं लोकमायंस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वायुग्भिः स्तोमैः स्वर्गं लोकमेति' ( ९ । ३ । ३ । २ ) इत्यादि ॥ २४ ॥

## पञ्चविंशी ।

चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विꣳशतिश्च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे

द्वात्रिंꣳशच्च मे द्वात्रिंꣳशच्च मे षट्त्रिंꣳशच्च मे षट्त्रिंꣳशच्च मे चत्वारिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे, यज्ञेन कल्पन्ताम् ॥ २५ ॥

**उ०** युग्मतो जुहोति। चतस्रश्च मेऽष्टौ च म इति। पूर्वं पूर्वमुत्तरेण संबध्नाति यथा वृक्षं रोहन्नुत्तरां शाखां समालम्भं रोहेत्तादृक्। द्विरुक्तयाः प्रयोजनमाह श्रुतिः ॥२५॥

**म०** एककण्डिकया युग्मस्तोमाञ्जुहोति। 'अथ युग्मतो जुहोति चतस्रश्च म' (९।३।३।४) इति। प्रथमं चतस्र इत्येतां संख्यामादाय चतुरुत्तरत्वेन स्थितान्युग्मान्स्तोमानष्टाचत्वारिंशत्पर्यन्ताञ्जुहुयादित्यर्थः। तत्फलं स्वर्गप्राप्तिः 'एतद्वै छन्दाꣳस्यब्रुवन्यातयामा वा अयुजः स्तोमा युग्मभिर्वयꣳ स्तोमैः स्वर्गं लोकमयामेति तथैतद्यजमानो युग्मभिः स्तोमैः स्वर्गं लोकमेति' (९।३।३।५) इति श्रुतेः। पूर्वं पूर्वमुत्तरेण संबध्नाति वृक्षारोहणवत्। तथाच श्रुतिः 'पूर्वंपूर्वमुत्तरेणोत्तरेण संयुनक्ति यथा वृक्षं रोहन्नुत्तरामुत्तराꣳ शाखाꣳ समालम्भयꣳ रोहेत्तादृक्तात्' (९।३।३।६) इति। अत्रोक्ता संख्या संख्येयनिष्ठा। एते यज्ञेन कल्पन्ताम् ॥२५॥

## षड्विंशी।

त्र्यविश्च मे त्र्यवी च मे, दित्यवाट् च मे दित्यौही च मे, पञ्चाविश्च मे पञ्चावी च मे, त्रिवत्सश्च मे त्रिवत्सा च मे, तुर्यवाट् च मे तुर्यौही च मे, यज्ञेन कल्पन्ताम् ॥ २६ ॥

**उ०** अथ वयांसि जुहोति। त्र्यविश्च म इति ॥२६॥२७॥

**म०** कण्डिकाद्वयं वयोहोमे विनियुक्तम्। तथाच श्रुतिः 'अथ वयाꣳसि जुहोति त्र्यविश्च म इति पशवो वै वयाꣳसि पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चति' (९।३।३।७)। इति अविः षण्मासात्मकः कालः त्रयोऽवयो यस्य स त्र्यविः सार्धसंवत्सरो वृषः तादृशी गौस्त्र्यवी। द्विसंवत्सरो वृषा दित्यवाट् तादृशी गौर्दित्यौही। पञ्चावयो यस्य स पञ्चाविः सार्धद्विसंवत्सरो वृषः तादृशी गौः पञ्चावी। वत्सो वत्सरः त्रयो वत्सा यस्य स त्रिवत्सः त्रिवर्षो वृषः तादृशी गौस्त्रिवत्सा। तुर्यं वर्षं वहतीति तुर्यवाट् सार्धत्रिवर्षो वृषः तादृशी गौस्तुर्यौही। एते यज्ञेन कल्पन्ताम् ॥ २६ ॥

## सप्तविंशी।

पष्ठवाट् च मे पष्ठौही च म, उक्षा च मे वशा च म, ऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्च मे, यज्ञेन कल्पन्ताम् ॥ २७ ॥

**म०** पष्ठं वर्षचतुष्कं वहतीति पष्ठवाट् चतुर्वर्षो वृषः तादृशी गौः पष्ठौही। उक्षा सेचनक्षमो वृषः। वशा वन्ध्या गौः। अतियुवा वृष ऋषभः। वेहद्गर्भघातिनी गौः। अनः शकटं वहतीत्यनड्वान् शकटवहनक्षमो वृषः। वहेः क्विपि संप्रसारणमनसो डकारः 'चतुरनडुहोरामुदात्तः' (पा० ७।१।९८) इति आमागमः। धेनुर्नवप्रसूता गौः। एते मम यज्ञेन निमित्तेन कल्पन्तां स्वस्वव्यापारसमर्था भवन्तु। यद्वा एते यज्ञेन मम कल्पन्तां मह्यमुपभोगक्षमा भवन्त्वित्यर्थः। एवं पूर्वत्र ॥ २७ ॥

## अष्टाविंशी।

वाजाय स्वाहा, प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा, वसवे स्वाहाहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा, विनꣳशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा, भुवनस्य पतये स्वाहाधिपतये स्वाहा, प्रजापतये स्वाहा। इयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याय ॥ २८ ॥

**उ०** अथ नामग्रहं जुहोति। वाजाय स्वाहा इति ॥२८॥

**म०** अथ नामग्राहहोमः। तथाच श्रुतिः 'अथ नामग्राहं जुहोति वाजाय स्वाहेत्येतद्वै देवाः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षमप्रीणंस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षं प्रीणाति' (९।३।३।८) इति। वाजोऽन्नं तस्मै स्वाहेति होममन्त्रः। वाजादीनि चैत्रादिमासानां नामानि तन्नाम गृहीत्वा होतव्यमित्यर्थः। अन्नप्राचुर्याच्चैत्रोऽन्नरूपः। प्रसवायानुज्ञारूपाय जलक्रीडादौ अभ्यनुज्ञादानात्प्रसवो वैशाखः। अपिजाय अप्सु जायत इत्यपिजः सप्तम्या अलुक्। जलक्रीडारतत्वादपिजो ज्यैष्ठः। क्रतवे यागरूपाय चातुर्मास्यादियागप्राचुर्यात्क्रतुराषाढः। वसवे वासयति वसुः चातुर्मास्ये यात्रानिषेधाद्वसुः श्रावणः। अहर्पतये दिनस्वामिने सूर्यरूपाय तापकरत्वाद्भाद्रपदस्याहर्पतित्वम्। मुग्धायाह्वे तुषारादिना मोहरूपाय दिवसाय तुषारबाहुल्यान्मुग्धमह आश्विनः। अमुग्धाय वैनशिनाय विनश्यतीति विनंशी 'मस्जिनशोर्झलि' (पा० ७।१।६०) इति बाहुलकादझल्यपि नशेर्नुमागमः। विनंश्येव वैनंशिनः स्वार्थे अण्। अल्पघटिकावत्त्वेन विनाशशीलाय कार्तिकाय स्नाननियमादिना पापनाशकत्वादमुग्धाय मोहनिवर्तकाय कार्तिकाय। अविंशिने आन्त्यायनाय न विनश्यतीत्यविनंशी तस्मै विनाशरहिताय। अन्ते सर्वेषां नाशे भवमन्त्यं तदयनं चेत्यन्त्यायनं तत्र भव आन्त्यायनस्तस्मै सर्वनाशेऽप्यवशिष्टाय। अतएवाविनंशिने विष्णुरूपाय मार्गशीर्षाय। 'मासानां मार्गशीर्षोऽहं' (गीता० १०।३५) इति स्मृतेः आन्त्याय भौवनाय। भुवनानामयं भौवनः अन्ते स्वरूपे

भव आन्त्यस्तस्मै। लोकस्वरूपपुष्टिकरत्वात्तत्रभवत्वम्। जाठराग्नेर्दीप्तिकरत्वेन पुष्टिकरत्वं पौषस्य। भुवनस्य भूतजातस्य पतये पालकाय माघाय। स्नानादिना पुण्यजनकत्वेन पालकत्वं माघस्य। अधिपतये अधिकपालकाय फाल्गुनाय वर्षान्तत्वात् प्रजापतये। एवं द्वादशमासाधिष्ठात्रे प्रजापतिनामकाय देवाय। स्वाहेति होमार्थं सर्वत्र। हे अग्ने, इयं ते तव राट् इदं राज्यं यत्र यत्र यागाः क्रियन्ते तत्तवैव राज्यम्। किंच हे अग्ने, त्वं मित्रस्य सख्युर्यजमानस्य यन्ता नियामकोऽसि। षष्ठ्यर्थे चतुर्थी मित्रायेति। कीदृशस्त्वम्। यमनो यमयतीति यमनः अग्निष्टोमादिकर्मसु सर्वान्नियमयन्। अत ऊर्जे विशिष्टान्नरसाय त्वा त्वामभिषिञ्चामीति शेषः। तथा वृष्ट्यै वर्षणाय त्वामभिषिञ्चामि। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः। ततः प्रजानामाधिपत्याय प्रजास्वामित्वाप्त्यै त्वामभिषिञ्चामि वसोर्धारया। तथा च श्रुतिः 'प्रजानामाधिपत्यायेत्यन्नं वा ऊर्गन्नं वृष्टिरन्नेनैवैनमेतत्प्रीणाति यद्वेवाहेयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायेतीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्तासि' ( ९।३।३।१०—११ ) इति ॥ २८ ॥

## एकोनत्रिंशी।

आयु॑र्य॒ज्ञेन॑ कल्पतां प्रा॒णो य॒ज्ञेन॑ कल्पतां॒ चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ᳫं श्रोत्रं॑ य॒ज्ञेन॑ कल्पतां॒ वाग्य॒ज्ञेन॑ कल्पतां॒ मनो॑ य॒ज्ञेन॑ कल्पतामा॒त्मा य॒ज्ञेन॑ कल्पतां ब्र॒ह्मा य॒ज्ञेन॑ कल्पतां॒ ज्योति॑र्य॒ज्ञेन॑ कल्पतां॒ स्व॑र्य॒ज्ञेन॑ कल्पतां पृ॒ष्ठं य॒ज्ञेन॑ कल्पतां य॒ज्ञो य॒ज्ञेन॑ कल्पताम्। स्तोम॑श्च॒ यजु॑श्च॒ ऋक् च॒ साम॑ च बृ॒हच्च॑ रथन्त॒रं च॑। स्व॑र्दे॒वा अग॑न्मा॒मृता॑ अभूम प्र॒जाप॑तेः प्र॒जा अ॑भूम॒ वेट् स्वाहा॑ ॥ २९ ॥

उ० अथ कल्पाञ्जुहोति। आयुर्यज्ञेन कल्पतामिति। आयुरादीनि मम यज्ञक्लृप्तानि भवन्तु। यज्ञश्च मम यज्ञेनैव क्लृप्तो भवतु। नाहं यज्ञक्लृप्तौ समर्थः। स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरं च यज्ञेन क्लृप्तानि भवन्त्वित्यनुषङ्गः। स्वर्देवा अगन्म हे देवाः, स्वर्गलोकं वयमगन्म। अमृताश्च भूताः प्रजापतेश्च प्रजा अभूमेति फलवचनम्। वेट् स्वाहेति होममन्त्रः ॥ २९ ॥

म० कल्पहोमः कल्पतामिति लिङ्गात्। 'अथ कल्पाञ्जुहोति' ( ९।३।३।१२ ) इति श्रुतेः। यज्ञेन निमित्तेनायुर्जीवनकालः कल्पतां साध्यतां प्राप्यताम्। प्राणचक्षुःश्रोत्रवाङ्मनांसि मम यज्ञेन क्लृप्तानि भवन्तु। आत्मा देहः 'आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः' इति स्मृतेः। ब्रह्मा वेदो यज्ञेन कल्पताम्। ज्योतिः स्वयंप्रकाशः परमात्मा यज्ञेन साध्यताम्। पुण्यकर्मानुष्ठानं परमात्मज्ञाने करणम्। 'ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' ( १४।७।२।२४ ) इति श्रुतेः। 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' ( गीता ३।२० ) इति स्मृतेश्च। स्वः स्वर्गः। पृष्ठं स्तोत्रं स्वर्गस्थानं वा कल्पताम्। यज्ञो यज्ञेनैव क्लृप्तो भवतु नाहं यज्ञक्लृप्तौ समर्थः। 'यज्ञेन यज्ञमयजन्त' देवाः ( अ० १३ क० १६ ) इति श्रुतेः। किंच स्तोमयजुरृक्सामबृहद्रथन्तराणि च यज्ञेन क्लृप्तानि भवन्त्वित्यनुषङ्गः। स्तोमस्त्रिवृत्पञ्चदशादिः यजुरनियतपादो मन्त्रः ऋक् नियतपादा साम गीतिप्रधानम् बृहद्रथन्तरे तद्विशेषौ। वसोर्धारयैवमग्निमभिषिच्यात्मानं यजमानः प्रशंसति। वयं यजमाना देवा भूत्वा स्वः स्वर्गमगन्म गतवन्तः। गमेर्लङि शब्लोपे मस्य नत्वे रूपम्। गत्वा चामृता अमरणधर्मिणोऽभूम भूताः। भवतेर्लुङि रूपम्। ततः प्रजापतेर्हिरण्यगर्भस्य प्रजा अभूमेति फलवचनम्। अनेन वसोर्धारायाः सर्वकामप्राप्तिहेतुत्वमुक्तम्। वेट्स्वाहेति वसोर्धाराहोमार्थो मन्त्रः। वेडिति वषट्कारः। 'वषट्कारो हैष परोऽक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' ( ९।३।३।१४ ) इति श्रुतेः ॥ २९ ॥

इति वसोर्धाराहोममन्त्राः समाप्ताः ॥

## त्रिंशी।

वाज॑स्य॒ नु प्र॑स॒वे मा॒तरं॑ म॒हीमदि॑तिं॒ नाम॒ वच॑सा करामहे। यस्या॑मि॒दं विश्वं॒ भुव॑नमावि॒वेश॒ तस्यां॑ नो दे॒वः स॑वि॒ता धर्म॑ साविषत् ॥ ३० ॥

उ० वाजप्रसवीयं जुहोति सप्तभिर्ऋग्भिः वाजस्य नु व्याख्यातम् ॥ ३० ॥

म० 'वपावत्संभृत्य चमसवत्स्रुवेण वाजपेयिकानि वाजस्येममिति आग्निकानि च वाजस्य न्विति' ( का० १८।५।४।५ )। क्षेत्रवपनवत्सर्वौषधमौदुम्बरे चमसे संभृत्य तस्मात्सर्वौषधाच्चमसवत्स्रुवेणेत्यौदुम्बरेण चतुष्कोणपुष्करेण स्रुवेण वाजस्येमं प्रसव इति सप्तमन्त्रैः ( ९।२३—३० ) सप्त वाजपेयसंबन्धीनि वाजप्रसवीयानि हुत्वा वाजस्य नु प्रसवे इत्यादिसप्तमन्त्रैः प्रतिमन्त्रमाग्निकानि सप्त वाजप्रसवीयानि तस्मादेव सर्वौषधात्तेनैव स्रुवेण जुहोतीति सूत्रार्थः। व्याख्याता ( अ० ९। क० ५ ) ॥ ३० ॥

## एकत्रिंशी।

विश्वे॑ अ॒द्य म॒रुतो॒ विश्व॑ ऊ॒ती विश्वे॑ भवन्त्व॒ग्नयः॒ समि॑द्धाः। विश्वे॑ नो दे॒वा अव॒साग॑मन्तु॒ विश्व॑मस्तु॒ द्रवि॑णं॒ वाजो॑ अ॒स्मे ॥ ३१ ॥

उ० विश्वे अद्य वैश्वदेवी त्रिष्टुप् व्यवहितपदप्रायः। विश्वे अद्य

मरुतः अद्य अस्मिन्यवि आगमन्त्वित्यनुषङ्गः । विश्वऊती । विश्व इति सर्वनाम सामान्यदेवतागणप्रतिपत्तिजनकमतस्तन्निराकाङ्क्षीकरणाय विशिष्टो देवतागण इहाध्याह्रियते । विश्वे च देवगणा वसवो रुद्रा आदित्या अद्य ऊती ऊत्या अवनेन तर्पणेन निमित्तभूतेन आगमन्तु । तदागमनेन च विश्वे भवन्तु अग्नयः गार्हपत्यप्रभृतयः समिद्धाः सम्यग्दीप्ताः । विश्वेदेवाश्च नोऽस्माकम् अवसान्नेन हविर्लक्षणेन निमित्तभूतेन आगमन्तु आगच्छन्तु । तेषां च तुष्टया विश्वं सर्वं वसु द्रविणं भूमिहिरण्यादिधनं वाजश्चान्नं च अस्मे अस्माकमस्तु ॥ यद्वान्यथा संबन्धः । विश्वे मरुतः अद्य आगच्छन्तु । विश्वे च देवगणाः ऊत्या निमित्तभूतया आगमन्तु । विश्वे च देवा अवसा निमित्तभूतेन आगमन्तु । तदागमनेन च विश्वे भवन्तु अग्नयः समिद्धाः । होमार्थं हि अग्नयः प्रज्वाल्यन्ते । ततो यागोत्तरकालम् । विश्वमस्तु द्रविणं वाजो अस्मे ॥ ३१ ॥

**म०** लुशोधानाकदृष्टा वैश्वदेवी त्रिष्टुप् । अद्यास्मिन् दिने विश्वे सर्वे मरुतः सप्तकगणा आगमन्तु आगच्छन्तु । छलाभावे रूपम् । विश्वे अन्ये च सर्वे गणदेवता वसवो रुद्रा आदित्याश्च ऊती ऊत्या पूर्वसवर्णः । अनेन तर्पणेन निमित्तेनागमन्तु तृप्त्यर्थमागच्छन्त्वित्यर्थः । विश्वेदेवाः च गणदेवता नोऽस्माकमवसान्नेन हविषा निमित्तेन हविर्ग्रहणायागमन्तु । तदागमनेन च विश्वे सर्वेऽग्नयः गार्हपत्यादयः समिद्धाः सम्यग्दीप्ता भवन्तु तदर्थं होमेनेत्यर्थः । तेषां देवानां तुष्ट्या विश्वं सर्वं द्रविणं धनं गोभूहिरण्यादि वाजोऽन्नं चास्मेऽस्माकमस्तु । विभक्तेः शेआदेशः ॥ ३१ ॥

## द्वात्रिंशी ।

वाजो॑ नः स॒प्त प्र॒दिश॒श्चत॑स्रो वा प॒राव॑तः । वाजो॑ नो॒ विश्वै॑र्दे॒वैर्धन॑साताविहाव॑तु ॥ ३२ ॥

**उ०** वाजो नः । अनुष्टुप् वाजो देवता । वाजोऽन्नं नोऽस्माकं सप्त प्रदिशः चतस्रो दिशः प्रकृष्टाश्च त्रयो लोकाः सप्तप्रदिशः उक्ताः । चतस्रो वा परावतः । वाशब्दः समुच्चयार्थीयः । चतस्रश्च परावतः । परावच्छब्दो दूरवचनः । महः जनः तपः सत्यमित्येते लोका उच्यन्ते । ते हि तान् लोकानतीत्य वर्तन्ते । आपूरयन्त्विति शेषः । किंच वाजः नः अस्मान् विश्वैर्देवैः सह धनसातौ धनसंभजनकाले प्राप्ते इह यज्ञे इह वा लोके अवतु पालयतु ॥ ३२ ॥

**म०** तिस्रोऽन्नदेवत्याः तत्राद्यानुष्टुप् द्वे त्रिष्टुभौ । नोऽस्माकं वाजोऽन्नं सप्त प्रदिशः भूरादिलोकत्रयं प्राच्यादिदिक्चतुष्कम् परावतः दूरस्थाश्चतस्रश्च महर्जनतपःसत्याख्याश्चापूरयत्विति शेषः । वाशब्दश्चार्थः । यद्वा अस्माकं वाजोऽन्नं सप्त प्रदिशश्चतस्रो महरादाश्चावतु प्रीणातु । प्रशब्देन प्रकृष्टं लोकत्रयम् । दिशः प्राच्याद्याः । परावच्छब्दो दूरार्थः । महरादयो हि लोकत्रयमतीत्य वर्तन्ते । अस्मद्दत्तान्नेन सप्त लोका दिक्चतुष्कं च तृप्यत्वित्यर्थः । किंच धनसातौ 'षणु संभक्तौ' क्तिनन्तो निपातः । धनस्य सातौ संभजनकाले प्राप्ते वाजोऽन्नं नोऽस्मान् विश्वैर्देवैः सहावतु पालयतु । इहास्मिन् लोके यज्ञे वा यदास्माकं धनेच्छा जायते तदा देवतर्पणक्षमं बह्वन्नमस्त्विति वाक्यार्थः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

वाजो॑ नो अ॒द्य प्र सु॑वाति॒ दान॒ं वाजो॑ दे॒वाँ२॥ ऋ॒तुभिः॑ कल्पयाति । वाजो॒ हि मा॒ सर्व॑वीरं ज॒जान॒ विश्वा॒ आशा॒ वाज॑पतिर्जयेयम् ॥ ३३ ॥

**उ०** वाजो नः । द्वे अनुष्टुभौ वाजदेवत्ये । वाजः नः अस्माकम् अद्य प्रसुवाति अभ्यनुजानातु दानम् वाजश्च देवान् ऋतुभिः कालैः सह कल्पयतु यथास्थानम् । वाजो हि मा सर्ववीरं जजान । हिशब्दः समुच्चयार्थीयः । वाजश्च मां सर्ववीरं जनयतु । ततो विश्वा आशाः वाजपतिः सन् जयेयमित्याशीः ॥ ३३ ॥

**म०** अद्यास्मिन्दिने वाजोऽन्नमन्नाधिष्ठात्री देवता नोऽस्मान् प्रसुवाति प्रेरयतु अनुजानातु । दानार्थमिति शेषः । अन्नदानेच्छास्माकं भवत्वित्यर्थः । वाजः ऋतुभिः कालैः सह देवान् कल्पयाति यथास्थानं कल्पयतु । 'लेटोऽडाटौ' यस्मिन् काले यो देवो यष्टव्यस्तं तत्र यजत्वित्यर्थः । हि चकारार्थः । वाजश्च मा मां सर्ववीरं सर्वे वीराः पुत्रपौत्रादयो यस्य स सर्ववीरस्तादृशं जजान जनयतु । 'छन्दसि लुङ्लङ्लिटः' पुत्रादियुतं मां करोत्वित्यर्थः । ततो वाजपतिः समृद्धान्नः सन्नहं विश्वा आशाः सर्वा दिशो जयेयम् । अन्नदानेन सर्वा दिशो वशीकुर्यामित्यर्थः ॥ ३३ ॥

## चतुस्त्रिंशी ।

वाजः॑ पु॒रस्ता॑दु॒त म॑ध्य॒तो नो॒ वाजो॑ दे॒वान्ह॒विषा॑ वर्धयाति । वाजो॒ हि मा॒ सर्व॑वीरं च॒कार॒ सर्वा॒ आशा॒ वाज॑पतिर्भवेयम् ॥ ३४ ॥

**उ०** वाजः पुरस्तात् । वाजः अन्नं पुरस्तात् अस्त्विति वाक्यशेषः । उत मध्यतो नः अस्माकमस्तु वाजः । वाजश्च देवान्हविषा वर्धयाति वर्धयतु । अस्माकम् वाजश्च मां सर्ववीरं च करोतु । ततः सर्वा आशा दिशः वाजपतिः सन् भवेयम् । दिग्रूपतया व्यापकता प्रार्थ्यते ॥ ३४ ॥

**म०** वाजोऽन्नं नोऽस्माकं पुरस्तादस्तु । उतापि च नोऽस्माकं मध्यतो गृहमध्ये च वाजोऽस्तु । नोऽस्माकं वाजो हविषां कृत्वा देवान्वर्धयाति वर्धयतु पुष्णातु । हि चार्थे । वाजो मा सर्ववीरं पुत्रादियुतं चकार करोतु । वाजपतिरन्नपालकः सन्नहं विश्वा आशाः सर्वा दिशो भवेयम् । दिग्रूपतया व्यापकता प्रार्थ्यते । यद्वा विश्वा आशा भवेयं प्राप्नुयाम् । वशीकुर्यामित्यर्थः । भू प्राप्तौ ॥ ३४ ॥

## पञ्चत्रिंशी ।

सं मा॑ सृजामि॒ पय॑सा पृथि॒व्याः सं मा॑ सृजा॒म्य॒द्भिरोष॑धीभिः । सो॒ऽहं वाज॑ᳪं सनेयमग्ने ॥३५॥

उ० सं मा । विराजौ आग्नेयौ वा । सोहं वाजमिति तच्छब्दयोगाद्यदोऽध्याहारः । सं मा सृजामि मा माम् आत्मानं पयसा रसेन पृथिव्याः संबन्धिना संसृजामि । संसृजामि च मा माम् । आत्मानं अद्भिः ओषधीभिश्च । सोहं संसृष्टपयःप्रभृतिशरीरः । वाजं सनेयं संभजेयम् । हे अग्ने, त्वत्प्रसादात् । यद्वा अग्निरेवोच्यते । अस्मदादेशस्य माशब्दस्य त्वाशब्दं कृत्वा युक्ततरमेतद्व्याख्यानम् । योहं हे अग्ने, संसृजामि त्वां पयसा पृथिव्याः संसृजामि च त्वामद्भिरोषधीभिश्च । होमाभिप्रायः संसर्गः । सोहं वाजं सनेयमिति ॥ ३५ ॥

म० द्वे विराजौ । दशकास्त्रयो विराडेकादशका वेत्युक्तेरेकादशाक्षरत्रिपादा विराट् । तृतीयो व्यूहेन दशकस्तेनैकोना । सोऽहमिति तच्छब्दश्रवणाद्यदोऽध्याहारः । हे अग्ने, योऽहं पृथिव्याः पयसा पृथिवीसंबन्धिरसेन मामात्मानं संसृजामि संयोजयामि । अद्भिरोषधीभिश्च मां संसृजामि । सोऽहं संसृष्टपयोऽबोषधिशरीरः सन् वाजमन्नं सनेयं संभजेयम् । यद्वा व्यत्ययेनास्मच्छब्दस्य युष्मदादेशः । हे अग्ने, योऽहं त्वं पृथिव्याः पयसाद्भिरोषधीभिश्च त्वां संसृजामि होमेन सोऽहं वाजं सनेयम् ॥ ३५ ॥

## षट्त्रिंशी ।

पयः॑ पृथि॒व्यां पय॒ ओष॑धीषु॒ पयो॑ दि॒व्य॒न्तरि॑क्षे॒ पयो॑ धाः । पय॑स्वतीः प्र॒दिश॑ सन्तु॒ मह्य॑म् ३६

उ० पयः पृथिव्याम् । विराट् अग्निरुच्यते हविर्वा । पयः पृथिव्यां धाः निधेहि । पयश्च ओषधीषु धाः । पयो दिवि धाः । अन्तरिक्षे पयो धाः । आहुतिपरिणामाभिप्रायमेतत् । किंच पयस्वतीः पयःसंयुक्ताः प्रदिशः दिशो विदिशश्च सन्तु भवन्तु मह्यम् ॥ ३६ ॥

म० हे अग्ने, त्वं पृथिव्यां पयो रसं धाः धेहि स्थापय । दधातेर्लुङि मध्यमैकवचने रूपम् । 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६ । ४ । ७५ ) इत्यडभावः । ओषधीषु च पयो धाः । दिवि स्वर्गे च पयो धाः । अन्तरिक्षे च पयो धाः । किंच मह्यं मदर्थे प्रदिशः दिशो विदिशश्च पयस्वतीः पयस्वत्यो रसयुताः सन्तु । आहुतिपरिणामेन पृथिव्यादयो ममाभीष्टदा भवन्त्वित्यर्थः ॥ ३६ ॥

## सप्तत्रिंशी ।

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । सर॑स्वत्यै वा॒चो य॒न्तुर्य॒न्त्रेणा॒ग्नेः साम्रा॑ज्येना॒भिषि॑ञ्चामि ॥ ३७ ॥

उ० अभिषिञ्चति यजमानम् । देवस्य त्वेति व्याख्यातम् । सरस्वत्यै वाचो यन्तुर्यन्त्रेण यमनेन अग्नेश्च साम्राज्येन अभिषिञ्चामि ॥ ३७ ॥

म० 'स्रुवं प्रास्य परिश्रित्स्पृक् कृष्णाजिनमास्तीर्य पुच्छादुत्तरᳪं शेषेऽपः कृत्वाभिषेकसामर्थ्यात् क्षीरोदके वा वाजपेयिकानीति श्रुतेस्तत्राभिषिच्यते ब्रह्मवर्चसकामश्चित्यन्वारब्धो देवस्य त्वेति' ( का० १८ । ५ । ६–९ ) । अस्यार्थः । कर्मापवर्गे औदुम्बरं चतुष्कोणं स्रुवमाहवनीये प्रक्षिप्याग्निपुच्छादुत्तरदिशि परिश्रित्संलग्नं प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्र स्थितो ब्रह्मवर्चसकामो यजमानश्चयनकृतान्वारम्भोऽध्वर्युणा सर्वौषधशेषेणाभिषिच्यते । किं कृत्वा । सर्वौषधशेषेऽपो जलानि कृत्वा । अभिषेकस्यैव द्रव्यसाध्यत्वात् अयं पूर्वपक्षः । सिद्धान्तमाह क्षीरोदके वेति । वा पूर्वपक्षनिरासे । 'शेषे जलसेको न यतस्तत्र क्षीरोदके विद्यते वाजपेयिकानि' ( ९ । ३ । ४ । ७ ) इति श्रुतेः । अत्र वाजपेयसंबन्धीनि वाजप्रसवीयानि श्रूयन्ते तत्रोदकक्षीरे स्त एव । औदुम्बरे पात्रेऽप आसिच्य पयश्चेत्युक्तेः ( कात्या० १४ । ५ । १६ ) । अतस्तस्मिन्मिश्रेणैवाभिषेको न जलसेक इत्यर्थः । देवस्य त्वा । व्याख्यातम् । सरस्वत्यै लिङ्गोक्तदेवतं यजुः । सरस्वत्यै षष्ठ्यर्थे चतुर्थी । सरस्वतीसंबन्धिन्या वाचो वाण्या यन्तुर्नियन्तुः प्रजापतेः यन्त्रेण नियमेन अग्नेश्च साम्राज्येन चक्रवर्तित्वेन हे यजमान, त्वामभिषिञ्चामि । मत्कृताभिषेकेण वाक्सिद्धिरैश्वर्यं साम्राज्यं च तव संपद्यन्तामित्यर्थः ॥ ३७ ॥

## अष्टत्रिंशी ।

ऋ॒ता॒षाडृ॒तधा॑मा॒ग्निर्ग॑न्ध॒र्वस्तस्यौष॑धयोऽप्स॒रसो॒ मुदो॒ नाम॑ । स न॑ इ॒दं ब्रह्म॑ क्ष॒त्रं पा॑तु॒ तस्मै॒ स्वाहा॒ वाट् ताभ्यः॒ स्वाहा॑ ॥ ३८ ॥

उ० राष्ट्रभृतो जुहोति । द्वादश यजूंषि सनो भुवनस्य पत इत्येतस्याः प्राक् ऋताषाडित्यादीनि । अग्निरुच्यते ऋताषाट् । ऋतं सत्यं सहतीति ऋताषाट् । ऋतं सत्यं धाम स्थानं यस्य स तथोक्तः । अग्निर्गन्धर्वः तस्य चाग्नेर्गन्धर्वस्य ओषधयोऽप्सरसः । तासां च मुदः नाम । ओषधीभिर्हीदं सर्वं मोदत इति मुदः । सोऽग्निर्गन्धर्वः नः अस्माकम् इदं ब्रह्म इदं च क्षत्रं पातु । तस्मै स्वाहावाट् । ताभ्यश्च ओषधीभ्यः स्वाहा ॥ ३८ ॥

म० 'द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति' ( का० १८ । ५ । १६ ) प्रतिस्वाहाकारᳪं राष्ट्रभृतो वाट्कारान्तः पूर्वः पूर्वो मन्त्रः । आज्याद्द्वादशगृहीतं गृहीत्वा विभज्य द्वादशांशं कृत्वा ऋतेत्यादिद्वादशमन्त्रैः प्रतिस्वाहाकारं राष्ट्रभृत्संज्ञा आहुतीर्जुहोति । व्यतिषक्तेषु द्वादशमन्त्रेषु पूर्वो मन्त्रः स्वाहावाडित्यन्तः उत्तरस्ताभ्यः । स्वाहेत्यन्तः । ततो मन्त्रे यानि पुंलिङ्गानि स न इदं ब्रह्मेत्यादीनि तानि व्यवहितपठितान्यप्य-

पङ्क्त्य पठित्वा पूर्वो मन्त्रः संपाद्यः । यानि च स्त्रीलिङ्गानि तस्यौषधयोऽप्सरस इत्यादीनि तान्युत्कृष्योत्तरो मन्त्रः संपाद्य इत्यर्थः । द्वादश यजूंषि गन्धर्वाप्सरोदेवत्यानि । तत्रायं विभागः । ऋताषाड्तधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाडिति वाडन्तः पूर्वः पूर्वो मन्त्रः । तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहेति स्वाहान्त उत्तर उत्तरो मन्त्रः । पूर्वो गन्धर्वदेवत्यः उत्तरोऽप्सरोदेवत्यः । एवं पञ्चकण्डिकास्वप्यग्रे मन्त्रविभागो ज्ञेयः । तथाच श्रुतिः 'पुꣳसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यः पुमाꣳसं वद्वीर्येणादधात्येकस्मा इव पुꣳसे जुहोति वह्वीभ्य इव स्त्रीभ्यस्तस्मादप्येकस्य पुꣳसो वह्वयो जाया भवन्त्युभाभ्यां वाट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाꣳसमेव तद्वीर्येणादधाति' ( ९ । ४ । १ । ६ ) इति । तथा चैवमृताषाट् संहितः सुषुम्णः इषिरः भुज्युः प्रजापतिरिति षण्णां पूर्वमन्त्राणामृताषाडित्यादिनामका गन्धर्वा देवताः । तस्यौषधयः तस्य मरीचयः तस्य नक्षत्राणि तस्यापः तस्य दक्षिणाः तस्य ऋक्सामानीति षण्णामुत्तरमन्त्राणामोषध्यादिनामका अप्सरसो देवताः । अथ मन्त्रार्थः । योऽग्निर्गन्धर्वः स नोऽस्माकमिदं ब्रह्म ब्राह्मणजातिमिदं क्षत्रं क्षत्रजातिं च पातु रक्षतु । कीदृशो गन्धर्वः । ऋताषाट् ऋतं सत्यं सहत इति ऋतषाट् सत्यं सहते असत्ये कुपितो भवतीत्यर्थः । 'सहेः साडः सः' ( पा० ८ । ३ । ५६ ) इति षत्वम् । पूर्वपदस्य छान्दसो दीर्घः । तथा ऋतधामा ऋतं सत्यमविनश्वरं धाम स्थानं यस्य ऋतधामा । य ईदृशोऽग्निः तस्मै अग्नये गन्धर्वाय स्वाहा वाट् वषट्कारेण सुहुतमस्त्वित्येको मन्त्रः । तस्याग्नेर्गन्धर्वस्यौषधयो व्रीह्याद्या नाम नाम्ना अप्सरसः स्त्रीत्वेन भोग्याः । कीदृश्य ओषधयः । मुदः मोदन्ते जना याभिस्ता मुदः 'ओषधयो वै मुद ओषधीभिर्हीदꣳ सर्वं मोदते' ( ९ । ४ । १ । ७ ) इति श्रुतेः ओषधयोऽग्नेर्भोग्याः । तथाच श्रुतिः 'अग्निर्ह गन्धर्व ओषधीभिरप्सरोभिर्मिथुनेन सहोच्चक्राम' ( ९ । ४ । १ । ७ ) इति । ताभ्य ओषधीभ्यः स्वाहा सुहुतमस्तु ॥ ३८ ॥

## एकोनचत्वारिंशी ।

सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ३९ ॥

**उ०** सꣳहितो विश्वसामा यः सूर्यः संहितः एष ह्यहोरात्रे संदधातीति संहितः सूर्यः । विश्वसामा एष ह्येव सर्वं साम । तस्य मरीचयोऽप्सरसः मरीचयस्त्रसरेणवः । आयुवो नाम आयुव इव हि मरीचयः प्लवन्त इत्यायुवः मिश्रयन्त इत्यर्थः । तुल्यव्याख्यानमन्यत् ॥ ३९ ॥

**म०** यः सूर्यो गन्धर्वः स नोऽस्माकमिदं ब्रह्म क्षत्रं च पातु । कीदृशः । संहितः संदधात्यहोरात्रे इति संहितः 'असौ वा आदित्यः सꣳहितः एष ह्यहोरात्रे संदधाति' ( ९ । ४ । १ । ८ ) इति श्रुतेः । विश्वसामा विश्वानि सर्वाणि सामानि प्रतिपादकत्वेन यस्य स विश्वसामा सर्वसामरूपो वा । 'विश्वसामेत्येष ह्येव सर्वꣳसाम' ( ९ । ४ । १ । ८ ) इति श्रुतेः । 'यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानी'ति च । तस्मै सूर्याय स्वाहा वाट् । तस्य सूर्यस्य मरीचयो नामाप्सरसः तेजस्त्रसरेणवः 'सूर्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम' ( ९ । ४ । १ । ८ ) इति श्रुतेः । कीदृश्यो मरीचयः । आयुवः आ समन्ताद्युवन्ति मिश्रीभवन्त्यायुवः । 'आयुवाना इव हि मरीचयः प्लवन्ते' ( ९ । ४ । १ । ८ ) इति श्रुतेः । ताभ्यो मरीचिभ्यः स्वाहा ॥ ३९ ॥

## चत्वारिंशी ।

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४० ॥

**उ०** सुषुम्णः सूर्यरश्मिः । यः सुषुम्णः सुयज्ञियः । सूर्यस्येव हि चन्द्रमसो रश्मयः । चन्द्रमा गन्धर्वः तस्य नक्षत्राणि अप्सरसः । भेकुरयो नाम भाः हि नक्षत्राणि कुर्वन्तीति भेकुरयो नक्षत्राणि । तुल्यमन्यत् ॥ ४० ॥

**म०** यश्चन्द्रमा गन्धर्वः स नोऽस्माकमिदं ब्रह्म क्षत्रं च पातु । कीदृशः । सुषुम्णः शोभनं सुम्नं सुखं यस्मात् सुयज्ञियः यज्ञद्वारा सुखप्रदः । याज्ञिकानां चन्द्रलोकाप्तेरुक्तत्वात् । तथाच सूर्यरश्मिः सूर्यस्येव रश्मयः किरणा यस्य । 'सुषुम्ण इति सुयज्ञिय इत्येतत् सूर्यरश्मिरिति सूर्यस्येव हि चन्द्रमसो रश्मयः' ( ९ । ४ । १ । ९ ) इति श्रुतेः । तस्मै चन्द्रमसे स्वाहा वाट् । तस्य चन्द्रमसः नक्षत्राणि नाम अप्सरसः । कीदृश्यः । भेकुरयः भां कान्तिं कुर्वन्तीति भेकुरयः । पृषोदरादित्वात् साधुः । 'चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भाकुरयो ह नामैते भाꣳ हि नक्षत्राणि कुर्वन्ति' ( ९ । ४ । १ । ९ ) इति श्रुतेः । ताभ्यो नक्षत्राप्सरोभ्यः स्वाहा ॥ ४० ॥

## एकचत्वारिंशी ।

इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो अप्सरस ऊर्जो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४१ ॥

**उ०** इषिरो विश्वव्यचाः । य इषिरः क्षिप्रः । 'इषु गतौ' तस्य इषिरः । विश्वव्यचाः सर्वतोगमनः । वातो गन्धर्वः तस्यापो अप्सरस ऊर्जोनाम । आपो वा ऊर्जः अद्भ्यो ह्यग्निर्जायते । तुल्यव्याख्यानमन्यत् ॥ ४१ ॥

**म०** यो वातो वायुर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् सुहुतमस्तु । कीदृशो वातः । इषिरः 'इष गतौ' दिवादिः । इष्यति गच्छतीति इषिरः । औणादिक इरप्रत्ययः । शीघ्रगमनः । विश्वव्यचाः विश्वस्मिन् व्यचो गमनं यस्य स विश्वव्यचाः सर्वतोगमनः । 'इषिर इति क्षिप्र इत्येतद्विश्वव्यचाः इत्येष हीदᳪं सर्वं व्यचः करोति' ( ९ । ४ । १ । १० ) इति श्रुतेः । तस्यापो नामाप्सरसः वातो ह गन्धर्वोऽद्भिरप्सरोभिर्मिथुनेन सहोच्चक्राम' ( ९ । ४ । १ । १० ) इति श्रुतेः । कीदृश्यः ऊर्जः ऊर्जयन्ति जीवयन्ति धान्योत्पादनेनेत्यूर्जः । 'आपो वा ऊर्जोऽद्भ्यो ह्यूर्ग् जायते' ( ९ । ४ । १ । १० ) इति श्रुतेः । ताभ्योऽद्भ्योऽप्सरोभ्यः स्वाहा ॥ ४१ ॥

## द्विचत्वारिंशी ।

भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावा नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४२ ॥

**उ०** भुज्युः सुपर्णः । यज्ञो वै भुज्यः यज्ञो हि सर्वाणि भूतानि भुनक्ति पालयति । सुपर्णः शोभनपतनः । यज्ञो गन्धर्वस्तस्य दक्षिणाप्सरसस्तावा नाम । दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञः स्तूयते । यथा यो वै कश्चन दक्षिणां ददाति स्तूयत एव सः । तुल्यमन्यत् ॥ ४२ ॥

**म०** यो यज्ञो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । कीदृशो यज्ञः । भुज्युः भुनक्ति पालयति भूतानीति भुज्युः । 'यज्ञो हि सर्वाणि भूतानि भुनक्ति' ( ९ । ४ । १ । ११ ) इति श्रुतेः । सुपर्णः शोभनं पर्णं पतनं स्वर्गगमनं यस्य सः । यज्ञे स्वर्गे गते यजमानो गच्छति । तस्य यज्ञस्य दक्षिणा नाम अप्सरसः । 'यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्राम' ( ९ । ४ । १ । ११ ) इति श्रुतेः । कीदृश्यः । स्तावाः स्तूयते यज्ञो यजमानश्च याभिस्ताः स्तावाः 'दक्षिणाभिर्हि यज्ञः स्तूयतेऽथो यो वै कश्चन दक्षिणां ददाति स्तूयत एव सः' ( ९ । ४ । १ । ११ ) इति श्रुतेः । ताभ्यो दक्षिणाभ्यः स्वाहा ॥ ४२ ॥

## त्रिचत्वारिंशी ।

प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४३ ॥

**उ०** प्रजापतिर्विश्वकर्मा । प्रजापतिर्विश्वकर्मा सहीदं सर्वमकरोत् स नो गन्धर्वस्तस्य ऋक्सामानि अप्सरसः एष्टयोनाम । ऋक्सामानि वा एष्टयः । ऋक्सामैर्ह्याशासते इति नः अस्तु इत्थं नः अस्त्विति । तुल्यमन्यत् ॥ ४३ ॥

**म०** यो मनोरूपो गन्धर्वः स न इदं ब्रह्म क्षत्रं च पातु तस्मै मनसे गन्धर्वाय स्वाहा वाट् हविर्दत्तम् । कीदृशो गन्धर्वः । प्रजापतिः प्रजायाः पालकः । विश्वकर्मा विश्वं सर्वं करोतीति 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति करोतेर्मनिन् । 'स हीदᳪं सर्वमकरोत्' ( ९ । ४ । १ । १२ ) इति श्रुतेः । तस्य मनसो गन्धर्वस्य ऋक्सामान्यप्सरसः । नाम प्रसिद्धम् । कीदृश्यः । एष्टयः इष्यते काङ्क्ष्यतेऽभीष्टं याभिस्ता एष्टयः । 'मनो ह गन्धर्व ऋक्सामैरप्सरोभिर्मिथुनेन सहोच्चक्रामेष्टयो नामेत्यृक्सामानि वा एष्टय ऋक्सामैर्ह्याशासत इति नोऽस्त्वित्थं नोऽस्तु' ( ९ । ४ । १ । १२ ) इति श्रुतेः । ताभ्योऽप्सरोभ्यः स्वाहा सुहुतमस्तु ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

स नो भुवनस्य पते प्रजापते यस्य त उपरि गृहा यस्य वेह । अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ॥ ४४ ॥

**उ०** रथशिरसि जुहोति । स नो भुवनस्य प्राजापत्या प्रस्तारपङ्क्तिः । हे भुवनस्य पते प्रजापते, यस्य ते तव उपरि अमुष्मिँल्लोके गृहा यस्य वा इह अस्मिन् लोके । स त्वं नः अस्माकम् । व्यवहितोयं संबन्धः । अस्मै ब्रह्मणे अस्मै क्षत्राय महि महत् । शर्म शरणम् यच्छ देहि स्वाहा ॥ ४४ ॥

**म०** 'पञ्चगृहीतं च रथशिरस्याध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्येति' ( का० १८ । ५ । १७ ) । राष्ट्रभृद्धोमानन्तरं पूर्वसंस्कृतादेवाज्यात्पञ्च गृहीत्वाहवनीयोपरि प्रतिप्रस्थात्रादिना धार्यमाणे रथशिरसि तदाज्यं पञ्चधा विभज्य पञ्चकृत्वो जुहोति पञ्चवारं मन्त्र इति सूत्रार्थः । प्रजापतिदेवत्या प्रस्तारपङ्क्तिः । आद्यौ द्वादशकावन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः तृतीयोऽत्र नवकः । हे भुवनस्य पालक, हे प्रजापते, यस्य ते तवोपरि स्वर्गे गृहाः सन्ति । वाथवा यस्य त इह भूलोके गृहाः सन्ति स त्वं नोऽस्माकमस्मै ब्रह्मणे ब्राह्मणायास्मै क्षत्राय क्षत्रियाय च महि महत् शर्म सुखं यच्छ देहि । स्वाहा सुहुतमस्तु ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

समुद्रोऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा । मारुतोऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहा । अवस्यूरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहा ॥ ४५ ॥

**उ०** वातहोमाञ्जुहोति । समुद्रोसीति त्रीणि यजूंषि त्रिलोकस्थानं वायुं लोकद्वारेण स्तुवन्ति । यस्त्वं हे वायो, समुद्रोसि समुन्दनोसि । नभस्वांश्च नभस् इति नक्षत्राण्युच्यन्ते । तानि हि नितरां भान्ति तैः संयुक्तो नभस्वान् । आर्द्रदानुश्च एष ह्यार्द्रं ददाति वृष्ट्यवश्यायादि । तं त्वां प्रार्थये

शंभूः मयोभूश्च शं भावयतीति शंभूः । मयः सुखं भावयतीति मयोभूः । अभि मा वाहि अभि मां वाहि स्वाहा । मारुतोसि यस्त्वं मारुतोसि मरुतां पुरोवातप्रभृतीनां वातानां प्रकृतिभूतोऽसि । मरुतां शुक्रज्योतिःप्रभृतीनां गणोऽसि तं त्वां ब्रवीमि । शंभूश्च मयोभूश्च भूत्वा अभि मां वाहि स्वाहा । अवस्यूरसि यस्त्वमवस्यूरसि । अवनं तर्पणं रक्षणं वा तत्सीव्यतीत्यवस्यूः । 'षिवु तन्तुसंताने' इत्यस्य । 'च्छ्वोः शूडनुनासिके च' इति क्विपि कृते संप्रसारणे च अवस्यूः । दुवस्वांश्च दुवश्च हविर्लक्षणमन्नमुच्यते । हविर्लक्षणेनान्नेन युक्तश्च आर्द्रदानुश्च । तं त्वां याचे । शंभूर्मयोभूरित्यादि ॥ ४५ ॥

**म०** 'वातहोमाञ्जुहोत्यञ्जलिनाहृत्य वहिर्वेदेरथो दक्षिणतो धुर्युत्तरत उत्तरस्यां दक्षिणतो दक्षिणाप्रष्टे समुद्रोऽसीति प्रतिमन्त्रम्' ( का० १८ । ६ । १ ) । रथहोमानन्तरं तं रथमग्नेरुत्तरतो वेदौ प्राङ्मुखमवस्थाप्य तस्य स्थानत्रये त्रीन् वायुहोमान् जुहोति प्रतिमन्त्रं मन्त्रत्रयेण । रथयुगदक्षिणधुरोऽधो प्रथमम् उत्तरधुरोऽधो द्वितीयम् युगमध्याधस्तृतीयम् । किं कृत्वा वहिर्वेदेरञ्जलिना वा तमानीयेति सूत्रार्थः । वायव्यानि त्रीणि यजूंषि । त्रिलोकस्थो वायुः स्तूयते । हे वयो, यस्त्वमीदृशोऽसि स त्वं मा मामभिवाहि मदभिमुखमागच्छ स्वाहा सुहुतं तेऽस्तु । 'वा गतिगन्धनयोः' लोट् मध्यमैकवचनम् । कीदृशः । समुद्रः सम्यक् उन्दति जलैः क्लिन्नो भवतीति समुद्रः । 'उन्दी क्लेदे' रक्प्रत्ययः । नभस्वान् नभांसि नक्षत्राणि विद्यन्ते यत्र सः । आर्द्रदानुः आर्द्रं वृष्ट्यवश्यायादिकं ददातीत्यार्द्रदानुः । शंभूः शमैहिकं सुखं भावयति प्रापयतीति शंभूः । मयोभूः मयः पारलौकिकं सुखं भावयतीति मयोभूः स्वर्लोकरूपोऽसि । 'असौ वै लोकः समुद्रः' ( ९ । ४ । २ । ५ ) इति श्रुतेः । स मामभिवाहि । मरुतां वातानामयं मारुतः । मरुतां शुक्रज्योतिःप्रभृतीनां गणः तन्निवासत्वात् । 'अन्तरिक्षलोको वै मारुतः' ( ९ । ४ । २ । ६ ) इति श्रुतेः । शंभूः मयोभूः त्वं मामभिवाहि पूर्ववत् । अव अवनं रक्षणं सीव्यतीत्यवस्यूः 'षिवु तन्तुसन्ताने' क्विप् 'छ्वोः शूडनुनासिके च' ( पा० ६ । ४ । १९ ) ऊठि कृते यणादेशः । 'अयं वै लोकोऽवस्यूः' ( ९ । ४ । २ । ७ ) इति श्रुतेः भूलोकरूपोऽसि । दुवस्वान्दुवोऽन्नं हविर्लक्षणं विद्यते यस्य सः शंभूरित्यादि पूर्ववत् ॥ ४५ ॥

## षट्चत्वारिंशी ।

यास्ते॑ अग्ने॒ सूर्ये॒ रुचो॒ दिव॑मात॒न्वन्ति॑ र॒श्मिभिः॑ । ताभि॑र्नो अ॒द्य सर्वा॑भी रु॒चे जना॑य नस्कृधि ॥४६॥

**उ०** रुक्मवतीर्जुहोति । यास्ते द्वे व्याख्याते ॥४६॥ ४७॥

**म०** 'नव जुहोति यास्त इति प्रतिमन्त्रम्' ( का० १८ । ६ । ६ ) । अस्यार्थः । पूर्वसंस्कृताज्यात्सकृत्सकृदादाय नवाहुतीर्जुहोति यास्ते अग्ने, या वो देवाः रुचं नः तत्त्वा यामि एताश्चतस्रः स्वर्णेति कण्डिकायां पञ्चयजुर्भिः पञ्चेति नव । द्वे व्याख्याते ( १३ । २२–२३ ) ॥ ४६ ॥ ४७ ॥

## सप्तचत्वारिंशी ।

या वो॑ दे॒वाः सूर्ये॒ रुचो॒ गोष्वश्वे॑षु॒ या रुचः॑ । इन्द्रा॑ग्नी॒ ताभिः॒ सर्वा॑भी॒ रुचं॑ नो धत्त बृहस्पते ४७

## अष्टचत्वारिंशी ।

रुचं॑ नो धेहि ब्राह्म॒णेषु॒ रुच॒ꣳ राज॑सु नस्कृधि । रुचं॒ विश्ये॑षु शू॒द्रेषु॒ मयि॑ धेहि रु॒चा रुच॑म् ॥४८॥

**उ०** रुचं नः अनुष्टुबाग्नेयी । रुचं दीप्तिम् नः अस्माकं ये ब्राह्मणाः तेषु धेहि । रुचं च राजसु नः संबन्धिषु कृधि कुरु । रुचं विश्येषु शूद्रेषु च नः संबन्धिषु कृधि कुरु । मयि च धेहि रुचा दीप्त्या सह रुचं दीप्तिम् । अनुत्सन्नधर्माणो यथा वयं दीप्त्या भवेम तथा कुर्वित्याशयः । यद्वा ब्रह्मप्रभृतिषु या रुक् तामस्माकं धेहि सर्वथा । किं बहुनोक्तेन मय्येव धेहि रुचा सङ्गता रुचम् ॥ ४८ ॥

**म०** अग्निदेवत्यानुष्टुप् प्रथमो नवकः । हे अग्ने, नोऽस्माकं ब्राह्मणेषु अस्मत्संबन्धिषु विप्रेषु रुचं दीप्तिं धेहि आरोपय । नोऽस्माकं राजसु क्षत्रियेषु रुचं कृधि कुरु 'श्रुशृणु–' ( पा० ६ । ४ । १०२ ) इत्यादिना हेर्धित्वम् शपो लुक् । विश्येषु वैश्येषु शूद्रेषु चास्माकीनेषु रुचं कुरु । किंच मयि विषये रुचा सह रुचं धेहि । अविच्छिन्नां रुचं धेहीत्यर्थः । यद्वा ब्राह्मणराजविट्शूद्रेषु या रुक् तां नोऽस्माकं धेहि देहि । शिष्टं पूर्ववत् ॥ ४८ ॥

## एकोनपञ्चाशी ।

तत्त्वा॑ यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒विर्भिः॑ । अहे॑डमानो वरुणे॒ह बो॒ध्युरु॑शꣳस॒ मा न॒ आयुः॒ प्रमो॑षीः ॥ ४९ ॥

**उ०** वारुण्या त्रिष्टुभा जुहोति । तत्त्वा । तदाशास्त इति तदः श्रवणादिह यदः प्रयोगः । यत्प्रयोजनं त्वां यामि याचामि ब्रह्मणा त्रयीलक्षणेन वन्दमानः स्तुवन् । तदीयं यजमान आशास्ते हविर्भिरभ्युद्यतैः । अतः अहेडमानः अक्रुध्यन् हे वरुण, इह कर्मणि वर्तमान । अस्माकं कं प्रयोजनं यज्ञसमाप्तिलक्षणम् । बोधि बुध्यस्व । बुद्ध्वा च हे उरुशंस बहुसंस्तव्यमान । आयुः मा प्रमोषीः मा अस्माकमायुः खण्डय ॥ ४९ ॥

**म०** वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा । अत्र द्वौ तच्छब्दौ वर्तेते तत्रैकस्य यच्छब्दपरिणामः कार्यः । हे वरुण, यजमानः हविर्भिः दत्तैः यद्धनपुत्रादिकमाशास्ते इच्छति यत्कामस्तुभ्यं हविर्दत्ते तत् यजमानेष्टं त्वा त्वामहं यामि याचामि । तत् त्वया यजमानाय दीयतामित्यर्थः । यामीति याच्ञाकर्मसु पठितः ।

अथापि वर्णलोपो भवति तत्त्वा यामीति यास्कोक्तेराकारलोपः। कीदृशोऽहम् । ब्रह्मणा त्रयीलक्षणेन वेदेन वन्दमानः त्वां स्तुवानः । किंच हे उरुशंस, शंसनं शंसः स्तुतिः 'शंसु स्तुतौ' उरुर्महान् शंसः स्तुतिर्यस्य स उरुशंसः तत्संबुद्धौ हे बहुस्तुते, इहास्मिन् स्थाने अहेडमानः हेडते क्रुध्यति हेडमानः न हेडमानोऽहेडमानः अक्रुध्यन् सन् त्वं बोधि बुध्यस्व त्वम्। मत्प्रार्थनां जानीहीत्यर्थः । 'हुझल्भ्यो हेर्धिः' 'वा छन्दसि' ( पा० ३।४।८८ ) इति हेरपित्त्वाद्गुणः धलोपश्छान्दसः । किंच नोऽस्माकमायुर्जीवनं मा प्रमोषीः मा चोरय 'मुष स्तेये' लुङ् 'न माङ्योगे' ( पा० ६।४।७४ ) इत्यडभावः । पूर्णमायुश्च देहीत्यर्थः ॥ ४९ ॥

## पञ्चाशी ।

स्व॒र्ण घ॒र्मः स्वाहा॑ स्व॒र्णार्कः स्वाहा॑ स्व॒र्ण शु॒क्रः स्वाहा॑ स्व॒र्ण ज्योतिः स्वाहा॑ स्व॒र्ण सूर्यः स्वाहा॑ ॥ ५० ॥

**उ०** अथार्काश्वमेधयोः सन्तती जुहोति पञ्चभिर्यजुर्भिः। स्वर्ण यजुः । सूर्याहर्देववचनः स्वःशब्दः । स्वरिव यो घर्म आदित्यस्तदग्नौ जुहोमि स्थापयामि स्वाहाकारेण स्वरिव योऽर्कस्तमादित्ये स्थापयामि । स्वर्ण स्वरिव यः शुक्रस्तमादित्य एवं जुहोमि । स्वरिव ज्योतिरग्निस्तमग्नावेव जुहोमि । स्वर्ण स्वरिव यः सूर्यस्तमुत्तमं करोमि ॥ ५० ॥

**म०** पञ्च यजूंष्यग्निदेवत्यानि । सूर्याहर्देववाची स्वःशब्दः । न इवार्थे । अर्काश्वमेघसंततिसंज्ञाः पञ्चाहुतयः । तथाच श्रुतिः 'अथार्काश्वमेधयोः सन्ततीर्जुहोति' ( ९।४।३।१८ ) इति। अस्यार्थः । अर्कोऽग्निः अश्वमेधो रविस्तयोः सन्ततयः सन्तन्वन्ति संयोजयन्तीति संततयस्ताः अग्न्यादित्यैक्यकारिका आहुतय इत्यर्थः । तथाच श्रुतिः 'अग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा एताभिराहुतिभिः समतन्वन्समदधुः' ( ९।४।३।१८ ) इति । तदनुसारेण व्याख्या यथा । न इवार्थे । स्वः न स्वरिव अहरिव दिनकरत्वात्सूर्यस्याहरुपमानम् । स्वरिव दिनमिव यो घर्मः आदित्यः तं स्वाहा अग्नौ जुहोमि तमग्नाविति शेषः पूरणीयः । आदित्यमग्नौ स्थापयामि। 'असौ वा आदित्यो घर्मोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति' ( ९।४।३।१९ ) इति श्रुतेः। स्वरिव सूर्य इव योऽर्कोऽग्निस्तमादित्ये जुहोमि स्थापयामि। 'अयमग्निरर्क इमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयति' ( ९।४।३।२० ) इति श्रुतेः । स्वरिव स्वर्देवः नकारो निश्चितार्थः । स्वर्न देव इव यः शुक्र आदित्यस्तमादित्ये एव जुहोमि स्थापयामि । 'असौ वा आदित्यः शुक्रस्तं पुनरमुत्र दधाति' ( ९।४।३।२१ ) इति श्रुतेः । स्वः स्वर्गः स इव ज्योतिरग्निः स्वर्गप्रदत्वादग्नेः स्वर्गोपमानम् । तमग्निमग्नावेव जुहोमि स्थापयामि । 'अयमग्निर्ज्योतिस्तं पुनरिह ददाति' ( ९।४।३।२२ ) इति श्रुतेः । एवमग्निं सूर्ये सूर्यमग्नौ सूर्ये च सूर्यमग्नावग्निं च संधाय । किं बहुना तयोः संयोगं कृत्वा सूर्यमुत्तमं करोति स्वर्न सूर्यः स्वाहेति । स्वः न सर्वदेवरूप इव यः सूर्यस्तं स्वाहा उत्तमं करोमि । अव्ययानामनेकार्थत्वात् स्वाहाशब्द उत्तमार्थः । सर्वे देवाभिन्ना भ्रान्त्या भासन्ते वस्तुतः सूर्य एव नानारूपोऽस्तीतीवशब्दार्थः । 'असौ वा आदित्यः सूर्योऽमुं तदादित्यमस्य सर्वस्योत्तमं दधाति तस्मादेषोऽस्य सर्वस्योत्तमः' ( ९।४।३।२३ ) इति श्रुतेः । एवं पञ्चाहुतिभिरग्न्यर्कयोरैक्यं विधाय सर्वदेवेष्वर्कस्योत्तमत्वं कृतमिति भावः ॥ ५० ॥

## एकपञ्चाशी ।

अ॒ग्निं यु॑नज्मि॒ शव॑सा घृ॒तेन॑ दि॒व्यꣳ सु॑प॒र्णं व॒यसा॑ बृ॒हन्त॑म् । तेन॑ व॒यं ग॑मेम ब्र॒ध्नस्य॑ वि॒ष्टप॒ꣳ स्वो॒ रुहा॑णा॒ अधि॒ नाक॑मुत्त॒मम् ॥ ५१ ॥

**उ०** अग्निं युनज्मि तिसृभिराग्नेयीभिः द्वाभ्यां त्रिष्टुब्भ्यां तृतीयया पङ्क्त्या । यमग्निं युनज्मि शवसा बलेन घृतेन च । दिव्यं दिवि भवम् सुपर्णं सुपतनम् वयसा बृहन्तम् वयसा धूमेन बृहन्तं महान्तम् । धूमेन हि महानग्निर्भवति । 'अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिः' इति श्रुतिः । तेनाग्निना युक्तेन वयं गमेम गच्छेम । ब्रध्नस्यादित्यस्य विष्टपं विगतसंतापम् । सर्वद्वन्द्वोपलक्षणस्तापः । ततोऽप्यधि स्वर्गलोकं रुहाणाः आरोहन्तः नाकमुत्तमं च गमेमेत्यनुवर्तते । यत्र गता न अकमसुखं प्राप्नुवन्ति स नाको लोकः ॥ ५१ ॥

**म०** 'अग्नियोजनं प्रातरनुवाकमुपाकरिष्यन् परिधीनालभ्य यथापूर्वमग्निं युनज्मीति प्रत्यृचम्' ( का० १८।६।१६ ) । अस्यार्थः । प्रातरनुवाकोपाकरणात्प्राक् यथापूर्वमित्युपधानक्रमेण ऋक्त्रयेण प्रत्येकं परिधीन् स्पृष्ट्वाग्नियोजनं करोतीति । अग्निदेवत्यास्तिस्रः द्वे त्रिष्टुभौ तृतीया पङ्क्तिः । शवसा बलेन घृतेनाज्येन चाहमग्निं युनज्मि संयोजयामि 'युजियोगे' 'रुधादिभ्यः श्नम्' । कीदृशमग्निम्। दिव्यं दिवि भवो दिव्यस्तम् । सुपर्णं शोभनं पर्णं पतनं यस्य तं सुगमनम् । वयसा धूमेन बृहन्तं वह्निर्धूमेन महान् भवति । 'अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिः' ( ५।३।५।१७ ) इति श्रुतेः । किंच तेन युक्तेनाग्निना ब्रध्नस्यादित्यस्य विष्टपं लोकं वयं गमेम गच्छेम । गमेराशीर्लिङि लिङ्याशिष्यङ्' ( पा० ३।१।८६ ) इत्यङ्प्रत्यये उत्तमबहुवचने रूपम् । विगतस्तापो दुःखं यस्य स विष्टपो लोकः । ततोऽधि उपरि ब्रध्नविष्टपोपरिष्टात् स्वो रुहाणाः स्वर्गं लोकमारोहन्तः सन्त उत्तमं नाकं दुःखरहितं श्रेष्ठं लोकं गमेमेत्यनुवर्तते । रोहतेः 'बहुलं छन्दसि' इति शपि लुप्ते शानचि रूपम् रुहाणा इति । नास्त्यकं दुःखं यत्र स नाकः ॥ ५१ ॥

## द्विपञ्चाशी ।

इमौ ते पक्षावजरौ पतत्रिणौ याभ्याᳬं रक्षाᳬं-स्यपहᳬंस्यग्ने । ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः ॥ ५२ ॥

**उ०** इमौ ते । याविमौ ते तव पक्षौ अजरौ जरारहितौ । पतत्रिणावुत्पतनशीलौ । ताभ्यां च रक्षांसि अपहंसि । हे अग्ने, ताभ्यां पक्षाभ्यां पतेम उत्पतेम । सुकृतां लोके सुकृतिनामेव स्थानम् । यत्रान्येऽपि ऋषयः जग्मुः गताः । प्रथमजाः पुराणाः ॥ ५२ ॥

**म०** हे अग्ने, यौ ते तवेमौ पक्षौ उत्तरदक्षिणौ । कीदृशौ । अजरौ नास्ति जरा ययोस्तौ सदा नवौ । पतत्रिणौ पतत्रं पतनं ययोरस्ति तौ उत्पतनशीलौ । याभ्यां पक्षाभ्यां रक्षांसि राक्षसान् त्वमपहंसि । उ एवेत्यर्थे । ताभ्यां पक्षाभ्यां वयं सुकृतां पुण्यकृतामेव लोकं पतेम उत्पतेम । यत्र सुकृल्लोके प्रथमजाः प्रथमोत्पन्नाः पुराणाः पुरातना ऋषयो मुनयो जग्मुः ॥ ५२ ॥

## त्रिपञ्चाशी ।

इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः । महान् सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिᳬंसीः ॥ ५३ ॥

**उ०** इन्दुर्दक्षः । यस्त्वमिन्दुः । 'इदि परमैश्वर्ये' । परमेश्वरः इन्दनो वा । दक्षः उत्साहवान् श्येनः शंसनीयगतिः । ऋतावा यज्ञवान् उदकवान्वा । हिरण्यपक्षः शकुनः । आकृत्या भुरण्युः भर्ता । महान् प्रभावतः । सधस्थे ब्रह्मणा सह अविभक्तस्थाने ध्रुव आनिषत्तः स्थिर आनिषण्णः । तस्मै नमः ते तुभ्यमस्तु मां मा हिंसीः ॥ ५३ ॥

**म०** हे अग्ने, यस्त्वमेतादृशस्तस्मै ते तुभ्यं नमोऽस्तु । त्वं मां मा हिंसीः हिंसां मां कुरु । कीदृशस्त्वम् । इन्दुः इन्दति ईष्टे इन्दुः ईश्वरः 'इदि परमैश्वर्ये' चन्द्रवदाह्लादको वा । दक्षः उत्साहवान् श्येनः श्येनपक्षिवदाकाशचारित्वाच्छ्येनः । यद्वा शंसनीयगतिः । ऋतावा ऋतं सत्यं यज्ञ उदकं वास्यास्ति ऋतवा । संहितायां दीर्घः । हिरण्यपक्षः सुवर्णशकलैर्हिरण्यरूपौ पक्षौ यस्य । शकुनः पक्ष्याकारः । भुरण्युः बिभर्तीति भुरण्युः । भृञ औणादिकः कन्युप्रत्ययः । पोषकः । महान् प्रभावेण । ध्रुवः स्थिरः । सधस्थे ब्रह्मणा सह स्थाने आनिषत्तः आसमन्तान्निषण्णः । सह तिष्ठन्ति यत्रेति सधस्थं 'सधमादस्थयोश्छन्दसि' ( पा० ६ । ३ । ९६ ) इति सधादेशः । 'नसत्त-' ( पा० ८ । २ । ६१ ) इत्यादिना निष्ठायां निपातः ॥ ५३ ॥

## चतुःपञ्चाशी ।

दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म सप्रथा नमस्पथे ॥ ५४ ॥

**उ०** अश्वनामादियुञ्जानं विमुञ्चति द्वाभ्यामाग्नेयीभ्यां पुरोष्णिग्जगतीभ्याम् । दिवो मूर्धासि । द्युलोकोत्तमाङ्गमसि । पृथिव्याः नाभिर्नहनम् । ऊर्क् रसः सारः अपाम् ओषधीनां च । विश्वायुश्च सर्वप्राणिनामायुर्जीवनम् । सप्रथाश्च सर्वतः पृथुः तिर्यगूर्ध्वमधश्चानवच्छिन्नविभवः । तस्मै ते नमः पथे । अग्निप्रमुखो हि देवयानः पन्थाः ॥ ५४ ॥

**म०** 'आग्निमारुतस्तोत्रस्य पुरस्ताद्विमोचनं परिधिसन्ध्योर्दिवो मूर्धेति प्रत्यृचम्' ( का० १८ । ६ । १७ ) । यज्ञायज्ञियस्तोत्रप्रकरणात्प्राक् दिवो मूर्धेति ऋग्द्वयेन दक्षिणोत्तरयोः परिधिसन्ध्योरुपस्पृश्याग्निविमोचनं करोतीति सूत्रार्थः । आग्नेयी परोष्णिक् आद्यावष्टकौ तृतीयो द्वादशकः सा त्रिपादा परोष्णिक् । अत्राद्यो दशकः द्वितीयः सप्तकः तृतीयो द्वादशकस्तेनैकाधिका । हे अग्ने, यस्त्वमीदृशोऽसि तस्मै पथे मार्गाय स्वर्गमार्गरूपाय नमो नमस्कारोऽस्तु । अग्निमुखो हि देवयानपन्थाः श्रुतावुक्तः । कीदृशस्त्वम् । दिवो मूर्धा स्वर्लोकस्योत्तमाङ्गस्थानीयः । पृथिव्या नाभिः मध्यस्थानीयः । नह्यतेऽनया सा नाभिः । नहति बध्नाति जीवनेनेति नाभिः 'नहो भश्च-' ( उणा० ४ । १२७ ) इतीन्प्रत्ययो णिश्च भान्तादेशः नित्त्वादाद्युदात्तः 'ञित्यादिर्नित्यम्' ( पा० ६ । १ । १९७ ) इत्युक्तेः । पृथ्वी लोकानां जीवनमग्निनिबन्धनमिति भावः । अपां जलानामोषधीनां व्रीह्यादीनां च ऊर्क् रसः सारः । विश्वायुः विश्वं सर्वमायुर्यस्य सः बहुजीवनः । यद्वा विश्वेषां सर्वेषां प्राणिनामायुर्जीवनम् तदधिजीवनत्वात्तेषामिति भावः । शर्म शरणभूतः सर्वेषाम् । सप्रथाः प्रथनं प्रथो विस्तारः प्रथसा सह वर्तमानः सप्रथाः तिर्यगूर्ध्वमधश्चानवच्छिन्नप्रभावः । ईदृशायाग्नये नमः ॥ ५४ ॥

## पञ्चपञ्चाशी ।

विश्वस्य मूर्धन्नधितिष्ठसि श्रितः समुद्रे ते हृदयमप्स्वायुरपो दत्तोदधिं भिन्त । दिवस्पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याव ॥ ५५ ॥

**उ०** विश्वस्य मूर्धन् । यस्त्वं विश्वस्य सर्वप्राणिजातस्य मूर्धन् मूर्ध्नः अधि उपरि तिष्ठसि । श्रितः आश्रितः बुद्धीन्द्रियाणि सुषुम्णां वा नाडीम् । यस्य च समुद्रे समुन्दने अन्तरिक्षे ते तव हृदयम् । अप्सु च आयुर्जीवनम् । तं त्वां याचे । अपो दत्त अपो देहीति वचनव्यत्ययः । एकोऽग्निरिह देवता । कथमिति चेत् । उदधिं भिन्त । उदकं धत्त इत्युदधिः । उदकस्य उदादेशः । मेघ उच्यते । अत्रापि भिन्धीति प्राप्ते भिन्दतेर्विदरणार्थस्य बहुवचनं छान्दसम् ।

एवं दिवस्पर्जन्यात् अन्तरिक्षात् पृथिव्याः अन्यत्रापि यतो-यतो वृष्टिरुपलभ्यते ततस्तत उपादाय नोऽस्मान् वृष्ट्या अव पालय हे अग्ने ॥ ५५ ॥

**म०** आग्नेयी महापङ्क्तिर्जगती। आद्यो व्यूहेन षडक्षरः द्वितीयः सप्तकः तृतीयो दशकः चतुर्थोऽष्टकः पञ्चमो नवकः षष्ठो नवकः एवमष्टचत्वारिंशदर्णा महापङ्क्तिः। हे अग्ने, स त्वं नोऽस्मान् वृष्ट्या कृत्वा अव रक्ष। वृष्टिं कृत्वा पालयेत्यर्थः। किं कृत्वा। दिवो द्युलोकात् पर्जन्यात् मेघात् अन्तरिक्षादाकाशात् पृथिव्याः भूमेः सकाशाद्वान्यत्र वा यत्र जलं ततः प्रदेशाज्जलमादायेति शेषः। यस्त्वं श्रितः इन्द्रियाणि सुषुम्णां नाडीमाश्रितः सन् विश्वस्य मूर्धन् मूर्धनि शिरसि अधितिष्ठसि मूर्धन्शब्दात् 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति सप्तम्या लुक्। सर्वेषां मूर्ध्नि उपरि रविरूपेण दीप्यस इत्यर्थः। यस्य ते तव समुद्रे समुनत्त्यार्द्रीभवतीति समुद्रोऽन्तरिक्षं तत्र हृदयं मध्यभागः भुवि पादौ स्वर्लोके शिरोऽन्तरिक्षे मध्यभागः त्रिलोकव्यापीत्यर्थः। यस्य ते अप्सु जलेषु आयुः जीवनं जलाधीनं जीवनं तव जलाद्वृक्षा जायन्ते ततोऽग्निरित्यग्नेर्जलाधीनजीवनत्वम्। किं बहुना। हे अग्ने, अपो जलानि दत्त देहि। उदधिं भिन्त भिन्धि। उदकानि दधाति धीयन्ते वात्रेत्युदधिर्मेघः तं विदारय। मेघं भिन्धि जलं देहीत्यर्थः। 'पेषंवासवाहनधिषु च' ( पा० ६।३।५८ ) इत्युदकस्योदादेशः। दत्त भिन्तेत्युभयत्र 'व्यत्ययो बहुलम्' ( पा० ३।१।८५ ) इति वचनव्यत्ययः ॥ ५५ ॥

## षट्पञ्चाशी।

इ॒ष्टो य॒ज्ञो भृगु॑भिराशी॒र्दा वसु॑भिः। तस्य॑ न इ॒ष्टस्य॑ प्री॒तस्य॒ द्रवि॑णे॒ हाग॑मेः ॥ ५६ ॥

**उ०** इष्टो यज्ञः द्वे समिष्टयजुषी यज्ञाग्निदेवत्ये उष्णिग्गायत्र्यौ। अध्वर्युर्यजमानविषयामाशिषं करोति। यस्यास्य सुवर्णदानस्य यजमानस्य इष्टः संपादितयज्ञः। भृगुभिः भृगुगोत्रैर्ब्राह्मणैः आशीर्दा आशिषां च दाता। वसुप्रभृतिभिर्देवताविशेषैः कृतः। तस्यास्य यजमानस्य। नः इष्टस्य अस्माकमभिप्रेतस्य। प्रीतस्य च अस्मान्प्रति। प्रीतः स्निग्ध उच्यते। याज्ययाजकयोः स्नेहख्यापनपरं वाक्यमिदमुक्त्वा अथेदानीं द्रविणमाह। त्वमपि हे द्रविण, इह यजमाने आगमेः आगमनं कुर्याः। स्थानमिदं धनानामित्यभिप्रायः। यद्वा। इष्टो यज्ञो भृगुभिः आर्षेयैर्ब्राह्मणैः। आशीर्दा वसुभिश्च। विभक्तिव्यत्ययप्रायः परोऽर्धर्चः। सोऽस्माकमिष्टः प्रीतश्च द्रविणमिह आगमयत्विति ॥ ५६ ॥

**म०** 'अध्वरसमिष्टयजुरन्त इष्टो यज्ञ इति प्रत्यृचमपरे' ( का० १८।६।१९ )। समिन्द्रेण इत्यादिनवानामध्वरसमिष्टयजुषा (८।१५) होमान्त इष्टो यज्ञः इष्टो अग्निरिति द्वाभ्यामपरे आग्निके द्वे समिष्टयजुषी जुहोतीति सूत्रार्थः। यज्ञदेवत्या उष्णिग्गालवदृष्टा अष्टाविंशत्यक्षरत्वात्। अध्वर्युर्द्रव्यं प्रत्याह। हे द्रविण द्रव्य, तस्य यजमानस्य इह सदने त्वमागमेः आगच्छ। आङ्पूर्वाद्गमेश्छलाभावे लिङि मध्यमैकवचने रूपम्। कीदृशस्य यजमानस्य। नोऽस्माकमिष्टस्य वल्लभस्य प्रीतस्य अस्मासु स्निग्धस्य। तस्य कस्य। यस्य यजमानस्य यज्ञो भृगुभिः भृगुगोत्रैर्ब्राह्मणैः वसुभिर्वस्वादिदेवैश्च इष्टः संपादितः। कीदृक्षो यज्ञः। आशीर्दाः आशिषोऽभिलषितपदार्थान् ददातीत्याशीर्दाः क्विप्। विप्रैर्देवैर्यस्य यज्ञः कृतस्तस्य गृहे त्वं गमेः सर्वदा तिष्ठेत्यर्थः ॥ ५६ ॥

## सप्तपञ्चाशी।

इ॒ष्टो अ॒ग्निराहु॑तः पिपर्तु न इ॒ष्टꣳ ह॒विः। स्व॒गेदं दे॒वेभ्यो॒ नमः॑ ॥ ५७ ॥

**उ०** इष्टो अग्निः। इष्टः कृतयागः अग्निः आहुतः अभिहुतः। पिपर्तु पूरयतु नः अस्मान्। इष्टं हविः कृतयागं च हविः अस्मान्पूरयतु। स्वगेदं देवेभ्यो नमः। स्वयं गामि च इदं समिष्टयजुर्लक्षणं देवेभ्यो नमः हविर्भवतु ॥ ५७ ॥

**म०** अग्निदेवत्या गायत्री गालवदृष्टा। अग्निर्नोऽस्माकमिष्टमभिलषितं पिपर्तु पूरयतु। ददात्वित्यर्थः। नोऽस्मान् पालयत्विति वा। 'पृ पालनपूरणयोः' लोट् ह्वादित्वाद्द्वित्वम्। 'अर्तिपिपर्त्योश्च' ( पा० ७।४।७७ ) इत्यभ्यासस्येत्वम्। कीदृशोऽग्निः। इष्टः कृतयागः। हविः विभक्तिव्यत्ययः। हविषा आहुतः समन्तात्तर्पितः। किंच इदं नमः हविः समिष्टयजुर्लक्षणं देवेभ्योऽर्थायास्तु। कीदृशम्। स्वगा स्वयं गमनशीलम्। विभक्तेराकारः ॥ ५७ ॥

## अष्टपञ्चाशी।

यदाकू॑तात्स॒मसु॑स्रोद्धृ॒दो वा॒ मन॑सो वा॒ संभृ॑तं॒ चक्षु॑षो वा। तद॒नु प्रेत॑ सुकृ॒ताम॒ लो॒कं यत्र॒ ऋष॑यो ज॒ग्मुः प्र॑थम॒जाः पु॑रा॒णाः ॥ ५८ ॥

**उ०** यदाकूतात्। अष्टौ वैश्वकर्मणानि जुहोति। विश्वकर्माग्निदेवता तृतीया दैवी वा। आद्या जगती तिस्रस्त्रिष्टुभश्चतस्रोऽनुष्टुभः। यदाकूतात्। यत्कर्म आकूतात् आकूतो नाम प्राज्ञ्मनसः प्रवृत्तेरात्मनो धर्मो मनःप्रवृत्तिहेतुः। समसुस्रोत् समस्रवत्। हृदो वा बुद्धेश्च मनसो वा मनसश्च। समसुस्रोदित्यनुवर्तते। संभृतं चक्षुषो वा संभारैः संभृतं सत् यच्चक्षुरादिभ्य इन्द्रियेभ्यः समसुस्रोत्प्रजायते तदनुप्रेत तत्प्रजापतिना कृतं कर्म अनुगच्छत। सुकृतामु लोकं सुकृतामेव लोकं स्थानम् यत्र ऋषयो जग्मुः यत्रान्येऽपि ऋषयो गताः प्रथमजाः पुराणाः ॥ ५८ ॥

**म०** 'हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ' ( का० १८।६।२२ )। साग्निचित्ये मैत्रावरुण्यनू-

वन्ध्यावश्यमेका भवति तेन तस्या हृदयशूलसंबन्धिसमिधानान्ते कृते यदाकूतादिति प्रत्यृचमष्टौ स्रुवाहुतीर्जुहोतीति सूत्रार्थः । अष्टावृच अग्निदेवत्या विश्वकर्मदृष्टाः । आद्या जगती त्रयः पादा एकादशार्णाः चतुर्थश्चतुर्दशार्णः । हे ऋत्विजः, यूयं तदनु प्रेत प्रजापतिकृतं कर्मानुगच्छतानुसरत । प्रजापतिशरीरादुत्पन्नं यत्कर्म वैदिकं तत्कुरुतेत्यर्थः । तत्र कर्मणि कृते सति सुकृतां पुण्यवतां लोके उ एवार्थे । स्वर्गमेव प्रेतेत्यनुषङ्गः । स्वर्गं गच्छत । प्रथमजाः पूर्वोत्पन्नाः पुराणाः पुरापि नवा अजरामरा ऋषयो यत्र लोके जग्मुः । तत्किं कर्म । यत्प्रजापतेराकूतादभिप्रायात् हृदो वा हृदश्च बुद्धेः मनसः संकल्पात्मकात् चक्षुषः । चक्षुरुपलक्षणम् । चक्षुरादीन्द्रियेभ्यश्च समसुस्रोत् संस्रुतं प्रसृतम् । ब्रह्मणा यत् सर्वात्मना सृष्टं कर्म तत् कृत्वा स्वर्लोकं गच्छतेत्यर्थः । कीदृशं कर्म । संभृतं संभारैः पुष्टं पूर्णसामग्रीकम् । मनःप्रवर्तक आत्मनो धर्म आकूतम् । समसुस्रोदिति 'स्रु गतौ' इत्यस्माल्लङ् 'बहुलं छन्दसि' (पा० २ । ४ । ७६ ) इति जुहोत्यादित्वाच्छ्लौ द्वित्वम् ॥ ५८ ॥

## एकोनषष्टी ।

एतᳪ सधस्थं परि ते ददामि यमावहाच्छेवधिं जातवेदाः । अन्वागन्ता यज्ञपतिर्वो अत्र तᳪ स्म जानीत परमे व्योमन् ॥ ५९ ॥

उ० एतᳪ सधस्थं एतं यजमानं सधस्थं समास्थानं । देवानां स्वर्गं परि ते ददामि परिददामि तव । दानं च रक्षणार्थम् । यं च आवहात् आनयेत् शेवधिं सुखनिधिमाहुतिपरिणामभूतम् । शेव इति सुखनाम । जातवेदा अग्निः तं च परिददामि । एवंच स्वर्गाख्यं स्थानमुक्त्वा अथेदानीं स्थानिनो देवानाह । अन्वागन्ता कर्मसमाप्त्यनुपदमेव आगन्ता । यज्ञपतिः वः युष्माकमत्र स्थितानां तं स्म जानीत । परमे व्योम्नि स्थाने अवस्थितं सन्तम् ॥ ५९ ॥

म० तिस्रस्त्रिष्टुभः । सह तिष्ठन्ति देवा यत्रेति सधस्थः स्वर्गः तं प्रार्थयते । हे सधस्थ, एतं यजमानं ते तव परिददामि । जातवेदा अग्निर्यं शेवधिं सुखनिधिमाहुतिपरिणामभूतमावहात् आवहति प्रापयति तं यज्ञफलभूतं च सुखनिधिं तव परिददामि । उभयं रक्षणार्थं तुभ्यं ददामीत्यर्थः । एवं यजमानं यज्ञं च स्वर्गे समर्प्य तत्स्थान् देवानर्थयते अन्विति । हे देवाः, यज्ञपतिर्यजमानो वो युष्मानन्वागन्ता कर्मसमाप्तौ भवतः प्रत्यागमिष्यति लुट् । अत्रास्मिन् परमे व्योमन् उत्कृष्टे व्योम्नि आकाशे स्वर्गाख्ये आगतं तं यजमानं यूयं जानीत । स्मेति पादपूरणः । स्वर्गगतः स भवद्भिः संभावनीय इत्यर्थः । आवहात् वहतेर्लेट् 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इति तिप इलोपः 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्यडागमः । शेव इति सुखनाम । शेवं धीयतेऽस्मिन्निति शेवधिः ॥ ५९ ॥

## षष्टी ।

एतं जानीथ परमे व्योमन्देवाः सधस्था विद रूपमस्य । यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविरस्मै ॥ ६० ॥

उ० एतं जानीथ । देवदेवत्या एतं यजमानं जानीथ । परमे व्योमन् परमे स्थानेऽवस्थितं सन्तम् । हे देवाः, सधस्थाः समानस्थानाः । किंच । विद जानीत रूपमस्य यजमानस्य प्रत्यभिज्ञानाय । ततो विदितरूपः । यदागच्छात् आगच्छेत्पथिभिः देवयानैः । पूजार्थं बहुवचनमुपभोगस्थानभेदाद्वा । अथ इष्टापूर्ते कृणवाथ कुरुथ आविःप्रकाशफले अस्मै ॥ ६० ॥

म० सह तिष्ठन्ति सधस्थाः । परमे व्योमन् उत्कृष्टे स्वर्गभूते व्योम्नि सह स्थिता हे देवाः, एतं यजमानं जानीथ जानीत । लेटो मध्यमबहुवचने आडागमे रूपम् । किंच अस्य यजमानस्य रूपं विद वित्त जानीत प्रत्यभिज्ञानाय । वेत्तेर्विकरणव्यत्यये शः वचनव्यत्ययश्च । विदितरूपोऽयं यद्यदा देवयानैः पथिभिः स्वर्गमार्गैः आगच्छात् आगच्छति । इलोपाडागमौ । तदा इष्टापूर्ते श्रौतस्मार्तकर्मफले अस्मै यजमानायाविःकृणवाथ प्रकटीकुरुत दत्तेत्यर्थः । देवा यान्ति येषु ते देवयानाः 'करणाधिकरणयोश्च' ( पा० ३ । ३ । ११७ ) इति ल्युट् । उपभोगस्थानभेदाद्बहुत्वं पूजार्थं वा । इष्टं च पूर्तं च इष्टापूर्ते देवसंबन्धिकर्मत्वात् 'देवताद्वन्द्वे च' ( पा० ६ । ३ । २६ ) इति पूर्वपदस्यानङ् । आपूर्तं चेति वा । कृणवाथ 'कृञ् कृतौ' स्वादिः आडागमश्च ॥ ६० ॥

## एकषष्टी ।

उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सᳪ सृजेथामयं च । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥ ६१ ॥

उ० उद्बुध्यस्वाग्ने येन वहसीति व्याख्याते ॥ ६१ ॥ ६२ ॥

म० उद्बुध्यस्व । त्रिष्टुप् । येन वहसि । अनुष्टुप् । एते द्वे व्याख्याते ( अ० १५ । क० ५४–५५ ) ॥ ६१ ॥ ६२ ॥

## द्विषष्टी ।

येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ६२ ॥

## त्रिषष्टी ।

प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ६३ ॥

उ० प्रस्तरेण परिधिना च स्रुचा च वेद्या च बर्हिषा च ऋचा च ऋगादिभिर्मन्त्रैश्च । इमं यज्ञं नः अस्माकं संबन्धिनं

नय । हे अग्ने, स्वर्गं लोकम् देवेषु गन्तवे देवान्प्रति गमनाय। यज्ञे हि गते यजमानो गत एव । स हि तस्य शरीरमित्यभिप्रायः ॥ ६३ ॥

**म०** तिस्रोऽनुष्टुभः । हे अग्ने, नोऽस्माकमिमं यज्ञं स्वः स्वर्गं नय । किं कर्तुम् । देवेषु गन्तवे देवान् प्रति गन्तुं प्राप्तुम् । तुमर्थे तवेन्प्रत्ययः नित्त्वादाद्युदात्तः । कीदृशम् । प्रस्तरेण स्रुगाधारभूतेन दर्भमुष्टिना परिधिना परिधिभिस्त्रिभिर्बाहुमात्रैः काष्ठैः स्रुचा जुह्वादिकया वेद्या मितया वेदेर्भूम्या वा बर्हिषा दर्भपूलकेन ऋचा ऋगादिभिर्मन्त्रैश्चोपलक्षितमिति शेषः ॥ ६३ ॥

## चतुःषष्टी ।

यद्दत्तं यत्परादानं यत्पूर्तं याश्च दक्षिणाः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥ ६४ ॥

**उ०** यद्दत्तम् । भार्याजामातृपुत्रप्रभृतिभ्यः । यच्च परादानम् दीनान्धकृपणेभ्यो दयया । यच्च पूर्तम् स्मृतिविहितं ब्राह्मणभोजनादि । याश्च दक्षिणाः यज्ञान्तर्गताः तत्सर्वम् अग्निः वैश्वकर्मणः विश्वकर्मैव वैश्वकर्मणः स्वार्थे तद्धितः । स्वर्गे लोके देवेषु मध्ये नः अस्मदर्थमस्माकं वा । दधत् दधातु फलोपभोगार्थम् ॥ ६४ ॥

**म०** वैश्वकर्मणः विश्वकर्मा प्रजापतिस्तदीयः विश्वकर्मैव वैश्वकर्मणः स्वार्थे तद्धितो वा । विश्वकर्मा अग्निः नोऽस्माकं तद्दानं स्वः स्वर्लोके देवेषु मध्ये दधत् दधातु स्थापयतु । फलभोगायेत्यर्थः । तत्किम् । यद्दत्तं भार्यापुत्रजामातृभगिनीतत्पत्यादिभ्यो दत्तम् । यच्च परादानं परोपकाराय दयादिनान्धकृपणेभ्यो दत्तम् । यच्च पूर्तं स्मृतिविहितं विप्रभोजनकूपारामादि । याश्च दक्षिणाः यज्ञसंबन्धिन्यः । यज्ञे गते यज्ञाङ्गत्वाद्यजमानः स्वर्गत एव ॥ ६४ ॥

## पञ्चषष्टी ।

यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥ ६५ ॥

**उ०** यत्र धाराः । यत्र यस्मिन्देशे धाराः अनपेता अनुपक्षीणाः उपभुज्यमाना अपि क्षयं नयन्ति मधोः मधुनः घृतस्य च । याश्चान्याः सोमादीनाम् । तत् तव अग्निः वैश्वकर्मणः देवेषु स्वः स्वर्गे लोके मध्ये नः अस्मान्दधातु ॥ ६५ ॥

**म०** वैश्वकर्मणः विश्वकर्माग्निस्तत् तत्र स्वः स्वर्गे देवेषु मध्ये नोऽस्मान् दधत् दधातु स्थापयतु । तत्र यत्र देशे मधोर्मधुनो घृतस्य च याश्चान्याः पयोदध्यादीनां धाराः प्रवाहा अनपेता न अपेता उपभुज्यमाना अप्यक्षीणा वर्तन्ते ॥ ६५ ॥

## षट्षष्टी ।

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ ६६ ॥

**उ०** अविनियुक्तत्वादग्निप्रकरणाच्च यजमानदर्शनमेतत् । अग्निरस्मि त्रिष्टुबाग्नेयी । अग्निरहमस्मि जन्मना उत्पत्त्यैव जातवेदाः । 'अथ ह वै रेतः सिक्तं प्राणोऽन्ववरोहति । तद्विन्दते तद्यज्जातं जातं विन्दते तस्माज्जातवेदाः' इत्येतदभिप्रायम् । यतश्चाहमग्निरस्मि अतो घृतं मे मम चक्षुः 'घृतहोमिनमहं पश्यामी'त्येतदभिप्रायम् । अमृतं च मम आसन् आस्ये मुखे । यो हि मम मुखे हविर्जुहोति तमहममृतं करोमीति । किंच अर्कः अर्चनीयः यज्ञः अस्मि नाम्ना त्रिधातुः ऋग्यजुःसामभिः । रजसो विमानः उदकस्य निर्माता । किंच अजस्रः अनुपक्षीणः । घर्मः दीप्तः उदकरक्षणो वा आदित्यः अहमस्मि । किंच हविरप्यहमस्मि नाम नाम्ना । नामशब्दस्य कृतविभक्तिव्यत्ययस्य अस्मिशब्दस्य च सर्वत्र संबन्धः । एवमग्न्यद्वैतं मन्त्रार्थः ॥ ६६ ॥

**म०** अग्न्यद्वैतवादिनी त्रिष्टुप् देवश्रवोदेववातदृष्टा यज्ञेऽविनियुक्ता । अग्निप्रकरणत्वाद् यजमान आत्मानमग्नित्वेन ध्यायति । जन्मना उत्पत्त्यैवाहमग्निरस्मि अग्निरूपोऽस्मि । नाम विभक्तिलोपः । नाम्ना हविः पुरोडाशादिकमप्यहमस्मि । कीदृशोऽहम् । जातं जातं विन्दत इति जातवेदाः । उत्पन्नस्य सर्वस्य स्वामीत्यर्थः । अर्कः अर्चनीयो यज्ञोऽप्यहमेव । त्रिधातुः त्रयो धातव ऋग्यजुःसामलक्षणा यस्य । रजसो विमानः रज उदकं तस्य निर्माता । विमिमीत इति विमानः । नन्द्यादित्वात्कर्तरि ल्युट् । अजस्रः न जसति क्षीयत इत्यजस्रः अनुपक्षीणः 'जसु उपक्षये' 'नमिकंपि–' (पा० ३ । २ । १६७) इत्यादिना रप्रत्ययः । घर्मः 'घृ क्षरणदीप्त्योः' जिघर्ति घर्मः औणादिको मप्रत्ययः । दीप्तः आदित्यरूपः क्षरणो मेघरूपो वा । एतादृशोऽग्निरहं यतस्ततो घृतं मे मम चक्षुर्नेत्रं । घृतहोमिनं पश्यामीति भावः । अमृतं हविर्मम आसन् आस्ये मुखे 'पद्दन्न–' ( पा० ६ । १ । ६३ ) इत्यादिना आस्यशब्दस्यासन्नादेशः सप्तम्या लुक् । मन्मुखे हविर्जुह्वन्तममृतं करोमीति भावः । एवमात्मन्यग्न्यद्वैतं संपाद्यम् ॥ ६६ ॥

## सप्तषष्टी ।

ऋचो नामास्मि यजूꣳषि नामास्मि सामानि नामास्मि । ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥ ६७ ॥

**उ०** ऋचो नामास्मि । अनेनात्मनि वेदत्रयात्मकत्वं संपादयति । ऋग्वेदनामास्मि यजुर्वेदनामास्मि सामवेदनामास्मि । चित्यमग्निमुपतिष्ठते । ये अग्नयः । आग्नेय्यनुष्टुप् । 'ये अग्नयः पाञ्चजन्याः पञ्चचितिकाः' इति श्रुतिः । अस्यां पृथिव्याम् अधि उपरि स्थाः । तेषामग्नीनामुद्गततमोसि

यतः अतः प्रार्थ्यसेऽस्माभिस्त्वम् । प्र नो जीवातवे सुव । प्रसुव अस्माकं जीवातवे चिरंजीवनाय ॥ ६७ ॥

**म०** ऋचः । आत्मदेवत्यं यजुः सप्तदशाक्षरम् । यज्ञेऽस्य विनियोगो नास्ति यजमानोऽनेनात्मनि वेदत्रयात्मकत्वं संपादयति । नाम नाम्नाहमृचोस्मि ऋग्वेदरूपोऽस्मि । यजूंषि नामास्मि यजुर्वेदरूपोस्मि । सामानि नामास्मि सामवेदो नाम्नास्मि 'चित्रोऽसीति चित्यनाम कृत्वोपतिष्ठते ये अग्नय इति' ( का० १८ । २ । २३ ) । चित्यस्याग्नेः चित्रोऽसीति नाम विधाय तमुपतिष्ठते । कर्मशेषं समाप्यैदमुपस्थानं कार्यमुपस्थानानन्तरं समारोपविधानादिति सूत्रार्थः । अग्निदेवत्यानुष्टुप् । अस्यां पृथिव्यामधि अस्याः पृथिव्याः उपरि ये अग्नयो वर्तन्ते । कीदृशाः । पाञ्चजन्याः पञ्चजना मनुष्यास्तेभ्यो हिताः पाञ्चजन्याः । यद्वा पञ्च जनाः समूहाः चितिरूपा येषां ते पञ्चजनास्त एव पाञ्चजन्याः । स्वार्थे तद्धितः । हे चित्याग्ने, तेषां पृथिवीस्थानाममीषां त्वमुत्तमोऽसि श्रेष्ठोऽसि । अतो नोऽस्मान् जीवातवे चिरंजीवनाय प्रसुव प्रेरय । चिरंजीवयेत्यर्थः । 'जीवेरातुः' ( उणा० १ । ७९ ) इत्यातुप्रत्ययः 'व्यवहिताश्च ( पा० १ । ४ । ८२ ) इति प्रेत्यस्य सुवेत्यनेन व्यवधानम् ॥ ६७ ॥

## अष्टषष्टी ।

वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वावर्तयामसि ॥ ६८ ॥

**उ०** चित्यमग्निमुपतिष्ठते । वार्त्रहत्याय 'इन्द्र एतत्सप्तर्चमपश्य'दिति श्रुतिः । प्रथमे गायत्रीत्रिष्टुभौ । इन्द्रो वृत्रहा देवता । वार्त्रहत्याय वृत्रो येन शवसा बलेन हन्यते तत् वार्त्रहत्यं शवस्तस्मै वार्त्रहत्याय शवसे । पृतनाषाह्याय च पृतनाः संग्रामाः येन शवसा अभिभूयन्ते तत्पृतनासहं बलं तस्मै पृतनासहाय । सहतिरभिभवार्थः । इन्द्र, त्वाम् आवर्तयामसि आवर्तयामः ॥ ६८ ॥

**म०** 'चितिं परीषवतीमुपतिष्ठते वार्त्रहत्यायेति सप्तभिरष्टाभिरेके दशभिर्वा' ( का० १७ । ७ । १—२ ) । मृत्पूरणानन्तरमेतां चितिमुपतिष्ठते सप्तभिरष्टाभिरेकेषां मते दशर्ग्भिर्वेति सूत्रार्थः । आग्नेय्यः सप्त ऋच इन्द्रदृष्टाः । आद्ये द्वे वृत्रहेन्द्रदेवत्ये गायत्रीत्रिष्टुभौ विश्वामित्रेणापि दृष्टे । हे इन्द्र, वयं त्वा त्वामावर्तयामसि आवर्तयामः 'इदन्तो मसि' उपतिष्ठामहे । किमर्थं शवसे बलाय । त्वद्बलवृद्धय इत्यर्थः । कीदृशाय शवसे । वार्त्रहत्याय वृत्रस्य दैत्यस्य हत्यायां हनने कुशलं वार्त्रहत्यं वृत्रघातसमर्थमित्यर्थः । च पुनः पृतनाषाह्याय पृतना शत्रुसेना सह्यतेऽभिभूयते येन तत्पृतनासाह्यं तस्मै शत्रुसेनापराभवसमर्थायेत्यर्थः ॥ ६८ ॥

## एकोनसप्ततितमी ।

सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र संपिणक्कुणारुम् । अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥ ६९ ॥

**उ०** सहदानुम् । सहेति बलनाम । बलस्य दातारम् युध्यस्वानेन सह त्वं संपूर्णबलः अयं च तुच्छबल इत्येवं यः शत्रुमुपस्तोभयते स सहदानुः तं सहदानुम् । यद्वा सह एकीभूय यो दुर्मन्त्रान्ददाति स सहदानुः तं सहदानं शत्रुम् । हे पुरुहूत बहुभिराहुत, क्षियन्तं निवसन्तम् इहैव अहस्तं कृत्वा युद्धेन निर्जित्य संपिणक् संपिण्डीकुरु । तं कुणारुम् क्वणन्तम् दुर्वचोभिधायिनम् । एवं तावदेनं कुरु । अथ पुनर्योऽयमपरो वृत्रस्तम् अभिभूय वृत्रं वर्धमानम् । पियारुम् पियतिर्हिंसाकर्मा । देवानां हिंसितारम् । अपादं कृत्वा गमनासमर्थं कृत्वा तवसा बलेन जघन्थ । जहि ॥ ६९ ॥

**म०** हे पुरुहूत, पुरुभिर्बहुभिर्हूतोऽभिहूतः पुरुहूतः हे बहुभिराहूत, हे इन्द्र, त्वं सहदानुं शत्रुमहस्तं हस्तहीनं कृत्वा संपिणक् संपिण्ढि चूर्णय । सह इति बलनाम । सहो बलं ददाति सहदानुः पृषोदरादित्वात्सहःशब्दान्त्यलोपः नुप्रत्ययो ददातेः । अयमसमर्थोऽस्ति त्वं तु समर्थ इति यः शत्रुं प्रेर्य बलं ददाति स सहदानुः । यद्वा सह एकीभूय योद्धुमन्त्रं ददाति स सहदानुः शत्रुः । कीदृशम् क्षियन्तं क्षियति वसतीति क्षियन् तम् 'क्षि निवासगत्योः तुदादिः शतृप्रत्ययः । निकटे वसन्तम् । कुणारुं क्वणति दुर्वचो वदति कुणारुः तम् । 'क्वण शब्दे' औणादिक आरुप्रत्ययः धातोः संप्रसारणं च । 'पिष्लृ संचूर्णने' लङि मध्यमैकवचनं रुधादित्वात् श्नम् संपूर्वः अडभावस्त्वार्षः पस्य कुत्वमार्षम् । हे इन्द्र, वृत्रं दैत्यमपादं पादहीनं कृत्वा तवसा बलेन त्वमभिजघन्थ जहि सम्यक् मारय 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति लोडर्थे लिट् । कीदृशं वृत्रम् । वर्धमानं जगद् व्याप्नुवन्तम् । पियारुं सुराणां हन्तारं । पियतिर्हिंसाकर्मा ॥ ६९ ॥

## सप्ततितमी ।

वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ २ ॥ अभिदासत्यधरं गमया तमः ॥ ७० ॥

**उ०** विन इन्द्र । मृगो न भीम इति वै मृध्यौ द्वे अनुष्टुप्त्रिष्टुभौ । पूर्वा व्याख्याता ॥ ७० ॥

**म०** शासदृष्टानुष्टुप् । व्याख्याता (अ० ८ । क० ४४) ॥ ७० ॥

## एकसप्ततितमी ।

मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः । सृकꣳसꣳशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व ॥ ७१ ॥

**उ०** मृगोन मृगइव । मृगो व्याघ्रो वा सिंहो वा ।

भीमो भीषणः कुचरः कुत्सितचारी हिंस्रः प्राणिवधजीवनः। गिरिष्ठाः पर्वताश्रयः स यथा कांश्चिद्दैत्यप्राणिविशेषान्हन्ति तैरनभिभूयमानः एवं त्वं परावतः दूरप्रदेशादाहूयमानान् आजगन्थ आगच्छ। आगत्य च शृणु यत्प्रार्थ्यसेऽस्माभिः। सृकं शरणं वज्रं संशाय। 'शो तनूकरणे' तीक्ष्णीकृत्य। पविम् शत्रुकायेषु गन्तारम् हे इन्द्र, तिग्मम् तेजनम् उत्साहवन्तम्। ततो विशत्रून्ताढि वि ताढि। ताडयतेर्हिंसाकर्मण एतद्रूपम्। विमृधो नुदस्व प्रेरयस्व मृधः संग्रामादपुनरागमनाय ॥ ७१ ॥

म० जयदृष्टा त्रिष्टुप् हे इन्द्र, परस्याः परावतो दूरतरादेशादाजगन्थ आगच्छ। परावच्छब्दो दूरवचनः। परस्या दूरदिशोऽपि परावतः दूरदेशादित्यर्थः। लोडर्थे लिट्। आगत्य च शत्रून् विताढि विशेषेण ताडय। मृधः संग्रामांश्च विनुदस्व विशेषेण प्रेरय दूरीकुरु। किं कृत्वा। पविं वज्रं संशाय तीक्ष्णीकृत्य 'शो तनूकरणे' ल्यप्। कीदृशं पविम्। सृकम् सरति शत्रुशरीरे गच्छतीति सृकः तम्। तिग्ममुत्साहवन्तम् 'तिग्मं तेजतेरुत्साहकर्मणः' ( निरु० १०।६ ) इति यास्कः। क इव मृगो न मृग इव। यथा मृगः सिंहो दूरादेत्य प्राणिनं हन्ति। कीदृशः भीमः भयंकरः। कुचरः कुत्सितं चरति गच्छति कुचरः। गिरिष्ठाः गिरौ तिष्ठति गिरिष्ठाः पर्वताश्रयः। ताडयतिर्हिंसाकर्मा तस्य हौ परे 'छन्दस्युभयथा–' ( पा० ३।४।११७ ) इत्यार्धधातुकत्वे णिचो लोपः हुझल्भ्यो हेर्धिः ष्टुत्वम् ताढि ॥ ७१ ॥

## द्विसप्ततितमी।

वैश्वानरो न ऊतय आ प्रयातु परावतः। अग्निर्नः सुष्टुतीरुप ॥ ७२ ॥

उ० वैश्वानरो नः। वैश्वानरदेवत्ये गायत्रीत्रिष्टुभौ। वैश्वानरोऽग्निः नः अस्माकम्। ऊतये अवनाय तर्पणाय आ प्रयातु आगच्छतु परावतः। किंच सुष्टुतीरुप अस्माकं च शोभनाः स्तुतीः उप श्रोतुम् आप्रयातु आगच्छतु ॥ ७२ ॥

म० वैश्वानरदेवत्या गायत्री। वैश्वानरः अग्निर्नोऽस्माकं सुष्टुतीः शोभनाः स्तुतीरुप उपश्रोतुं परावतो दूरदेशादा प्रयातु आगच्छतु। किमर्थम्। नोऽस्माकमूतये रक्षणाय। अस्मान् रक्षितुमित्यर्थः ॥ ७२ ॥

## त्रिसप्ततितमी।

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषस्पातु नक्तम् ॥ ७३ ॥

उ० पृष्टो दिवि। योऽग्निर्वैश्वानरः पृष्टः कोयमिति। दिवि आदित्यात्मना व्यवस्थितो मुमुक्षुभिः। तत्र ह्येवं श्रूयते। 'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिः स ब्रह्म' इति। यश्च वैश्वानरोऽग्निर्विद्युदात्मना प्रावृषि स्थितः पृथिव्याम् अन्तरिक्षे लोके। पृथिवीत्यन्तरिक्षनामसु पठितम्। उदकार्थिभिः कोयं नाम द्विपदचतुष्पदजीवनहेतुः। यश्चाग्निर्वैश्वानरोऽस्मिन् लोके व्यवस्थितः पृष्टोऽग्निहोतृभिर्होतृपर्यन्तैः कोयं तापपाकप्रकाशैरुपकृत्य विश्वा ओषधीराविवेश आविष्टः। यश्च वैश्वानरोऽग्निः सहसा बलेन मथ्यमनोऽध्वर्युणा कोऽयं निर्मैमन्थ इति पृष्टो दिदृक्षुभिः। स नः सोऽस्मान् दिवा अहनि पातु रक्षतु। सच नक्तं रात्रौ पातु रिपः विनाशात्। रिषतिर्हिंसाकर्मा। दिवानक्तमिति सन्तत्यर्थे वचनम् ॥ ७३॥

म० वैश्वानरदेवत्या त्रिष्टुप् कुत्सदृष्टा। वैश्वानरः सर्वनरेभ्यो हितोऽग्निर्दिवा दिवसे नोऽस्मान् पातु रक्षतु। स च नक्तं रात्रौ नः पातु सर्वदास्मान् रक्षत्वित्यर्थः। स कः। योऽग्निर्दिवि द्युलोके पृष्टः कोऽयमादित्यात्मना तपतीति मुमुक्षुभिः पृष्टः अन्तरिक्षे 'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्म' इति श्रुतेः। यश्चाग्निः पृथिव्यामन्तरिक्षलोके पृष्टः कोऽयं विद्युदात्मना स्थित इति जलार्थिभिः पृष्टः। अन्तरिक्षनामसु पृथिवीति पठितम्। यश्च विश्वा ओषधीः सर्वा व्रीह्याद्योषधीः आविवेश प्रविष्टः सन् पृष्टः कोऽयं प्रजानां जीवनहेतुस्तापपाकप्रकाशैरुपकरोति यश्च सहसा बलेनाध्वर्युणा मथ्यमानः सन् पृष्टः जनैः कोऽयं मथ्यत इति। सोऽयमग्निर्दिवा नक्तं रिषो वधात् पातु। रिषतिर्हिंसाकर्मा। मास्मान्नाशयत्वित्यर्थः ॥ ७३ ॥

## चतुःसप्ततितमी।

अश्याम तं काममग्ने तवोती अश्याम रयिꣳ रयिवः सुवीरम्। अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥ ७४ ॥

उ० अश्याम तम्। द्वे आग्नेय्यौ त्रिष्टुभौ कामवत्यौ। अश्याम प्राप्नुयाम तं कामं यत्कामा एतत्कुर्मः। हे अग्ने, तव ऊती ऊत्या अवनेन तर्पणेन च। अश्याम च रयिं धनम्। हे रयिवः धनवन्। सुवीरं कल्याणपुत्रम्। अश्याम वाजमन्नम् अभिवाजयन्तः। वाजतिरर्चतिकर्मा। अभिपूजयन्तोऽग्निम् अन्यानपि पूजयितव्यान्। अश्याम द्युम्नं यशः हे अजर जरारहिताग्ने। अजरं द्युम्नविशेषणमेतत्। अक्षीणं द्युम्नं ते तव प्रसादात् ॥ ७४ ॥

म० भरद्वाजदृष्टाग्नेयी कामवती त्रिष्टुप्। हे अग्ने, तव ऊती ऊत्या अवनेन पालनेन वयं तं काममभिलाषमश्याम प्राप्नुयाम यमिच्छाम इत्यर्थः। 'अशूङ् व्याप्तौ' विकरणव्यत्ययेन लोटि श्यन्प्रत्ययः। रयिर्धनमस्यास्तीति रयिवान् तत्संबुद्धौ हे रयिवः धनवन्, सुवीरं रायिं वयमश्याम शोभना वीराः पुत्रा यत्र तं रयिं पुत्रसहितं धनं वयं प्राप्नुयाम। वाजयतिरर्चतिकर्मा। वाजयन्तो वह्निमर्चयन्तः सन्तो

वयं वाजमन्नमभि अश्याम समन्तात् प्राप्नुयाम । हे अजर, नास्ति जरा यस्य सोऽजरः हे जरारहित, अजरमक्षीणं ते तव द्युम्नं यशो वयमश्याम । सर्वदा यशस्विनो भवामेत्यर्थः ॥ ७४ ॥

## पञ्चसप्ततितमी ।

व॒यं ते॑ अ॒द्य र॑रि॒मा हि काम॑मुत्ता॒नह॑स्ता॒ नम॑सोप॒सद्य॑ । यजि॑ष्ठेन॒ मन॑सा यक्षि दे॒वानस्रे॑धता॒ मन्म॑ना॒ विप्रो॑ अग्ने ॥ ७५ ॥

उ० वयं ते । हिशब्दो यस्मादर्थे । हि यस्माद्वयं ते तुभ्यम् अद्य ररिम । 'रा दाने' । ददिम कामं पुरस्कृत्य हविः कामप्राप्त्यर्थं वा हविः कामशब्देनोच्यते । उत्तानहस्ताः त्यक्तकृपणभावाः । अबद्धमुष्टिकाः असंवृताङ्गुलय इति यावत् नमसा नमस्कारेण प्रणिपातेन । उपनिपद्य उपसंगम्य निषदनं कृत्वा । अतः यजिष्ठेन यष्टृतमेन मनसा यक्षि यज देवान् । अस्रेधता अनन्यगतेन देवताया याथात्म्यचिन्तनसंतानैकरसेन । मन्मनाः मननेन विप्रः सन् मेधावी सन् । हे अग्ने ॥ ७५ ॥

म० उत्कीलदृष्टाग्नेयी त्रिष्टुप् । हे अग्ने, हि यस्मात्कारणात् वयं ते तुभ्यमद्यास्मिन् दिने कामं हविः ररिम दद्मः काम्यत इष्यत इति कामं हविः 'रा दाने' लिट् 'अन्येषामपि दृश्यते' इति ( पा० ६ । ३ । १३७ ) ररिमेत्यस्य संहितायां दीर्घः । किं कृत्वा । नमसा उपसद्य नमस्कारेणोपसङ्गम्य । नमस्कृत्य निकटमागत्य हविर्दद्म इत्यर्थः । कीदृशा वयम् । उत्तानहस्ताः उत्ताना हस्ता येषां ते अबद्धमुष्टिकाः त्यक्तकार्पण्या इत्यर्थः । तथा मनसा उपलक्षिताः सावधाना इत्यर्थः । कीदृशेन मनसा । यजिष्ठेन यजतीति यष्टृ अतिशयेन यष्टृ यजिष्ठं तेन । तुरिष्ठेमेयः सु' ( पा० ६ । ४ । १५४ ) इति तृचो लोपः । यागतत्परेणेत्यर्थः । तथा अस्रेधता 'स्रिध गतौ' स्रेधति अन्यत्र गच्छति स्रेधत् न स्रेधदस्रेधत् तेन अनन्यगतेनेत्यर्थः । मन्मना मन्यते देवमहिमानं जानातीति मन्म तेन मन्यतेर्मन् प्रत्ययः । देवतायाथात्म्यज्ञेनेत्यर्थः । यत एतादृशेन मनसा वयं हविः ररिम अतो हे अग्ने, विप्रो मेधावी त्वं देवान् यक्षि यज । मद्दत्तेन हविषा देवांस्तर्पयेत्यर्थः । यजतेः 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपि लुप्ते मध्यमैकवचने षत्वे ष्टुत्वे यक्षीति रूपम् । विप्रो अग्ने इत्यत्र 'प्रकृत्यान्तःपादमव्यपर' ( पा० ६ । १ । १०५ ) इति प्रकृतिभावः ॥ ७५ ॥

## षट्सप्ततितमी ।

धा॒म॒च्छद॒ग्निरिन्द्रो॑ ब्र॒ह्मा दे॒वो बृह॒स्पतिः॑ । सचे॑तसो॒ विश्वे॑दे॒वा य॒ज्ञं प्राव॑न्तु नः शु॒भे ॥ ७६ ॥

उ० धामच्छत् । वैश्वदेव्यनुष्टुप् । धामच्छत् । धामशब्दः स्थानवचनः । स्थानानि न्यूनानि पूरयति अतिरिक्तानि समीकरोति यः स धामच्छत् एवं धामच्छब्दः देवशब्दश्च सर्वत्र संबध्यते । योऽग्निर्देवो धामच्छत् यश्चेन्द्रः । यश्च ब्रह्मा यश्च बृहस्पतिः । एते सर्वे सचेतसः समानचेतसः । चेतःशब्दः प्रकारवचनः । यज्ञं प्रावन्तु अन्यूनातिरिक्तं कुर्वन्तु । नः अस्माकम् शुभे स्विष्टे च ॥ ७६ ॥

म० विश्वदेवदेवत्यानुष्टुप् । एते देवा नोऽस्माकं यज्ञं प्रावन्तु प्रकर्षेण रक्षन्तु । अन्यूनातिरिक्तं कुर्वन्त्वित्यर्थः । अन्यूनातिरेक एव कर्मणो रक्षणम् । शुभे इष्टे स्थाने स्वर्गे च यज्ञं स्थापयन्त्विति शेषः । यद्वा शुभे स्थाने यज्ञं प्रावन्तु । एते के । अग्निः देव इति सर्वत्र संबन्धनीयम् । इन्द्रः । ब्रह्मा चतुर्मुखः । बृहस्पतिर्जीवः । विश्वे देवाश्च । धामानि स्थानानि छादयति आच्छादयति धामच्छत् । छादयतेः क्विपि णिलोपे धातोर्ह्रस्वः । धाम्नां छदनं न्यूनानां पूरणमतिरिक्तानां समीकरणम् । इदं सर्वेषां विशेषणम् । तथा सचेतसः चेतसा प्रज्ञया सहिताः सचेतसः । समानं चेतो येषामिति वा समानज्ञाना अग्न्यादयो मद्यज्ञं रक्षन्त्वित्यर्थः ॥ ७६ ॥

## सप्तसप्ततितमी ।

त्वं य॑विष्ठ दा॒शुषो॒ नॄः पा॑हि शृणु॒धी गिरः॑ । रक्षा॑ तो॒कमु॒त त्मना॑ ॥ ७७ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
अष्टादशोऽध्यायः ॥ १८ ॥

उ० त्वं यविष्ठ । इति व्याख्यातम् । नह्येषु प्रत्यक्षकृतमस्ति अनृषेरतपसो वेत्युपक्रम्य भूयोविद्यः प्रशस्यो भवतीति चाविधायाह तस्माद्यदेव किंचानूचानो भवत्यार्षं तद्भवतीति अतोऽयमार्षेयो ग्रन्थ इति विद्वद्भिरादरणीयः ॥७७॥

इति उवटकृतौ मन्त्रभाष्येऽष्टादशोऽध्यायः ॥ १८ ॥

म० ऋष्यादि प्रागुक्तम् । व्याख्याता च ( अ० १३ । क० ५२ ) ॥ ७७ ॥

श्रीमहीधरकृते वेददीपेऽष्टादश ईरितः ।
वसोर्धारादिकोऽध्यायश्चित्युपस्थावसानकः ॥ १८ ॥

---

# ऊनविंशोऽध्यायः ।

## तत्र प्रथमा ।

स्वा॒द्वीं त्वा॑ स्वा॒दुना॑ ती॒व्रां ती॒व्रेणा॒मृता॑म॒मृते॑न मधु॑मतीं॒ मधु॑मता सृ॒जामि॒ सᳫँ सोमे॑न ॥ सोमो॑ऽस्य॒श्विभ्यां॑ पच्यस्व॒ सर॑स्वत्यै पच्य॒स्वेन्द्रा॑य सु॒त्राम्णे॑ पच्यस्व ॥ १ ॥

उ० अथ सौत्रामणी त्रिभिरध्यायैः प्रक्रियते अग्न्यङ्गत्वात् सौत्रामण्या अनन्तरमुपक्रमः । तत्र 'प्रजापतिर्यज्ञमस-

जते'त्युपक्रम्य 'स एतं यज्ञक्रतुमपश्यत्सौत्रामणी'मिति सौत्रामण्याः प्रजापतिर्ऋषिः । अथापरम् इन्द्रभैषज्यार्थमश्विनौ सरस्वती च सौत्रामणी ददृशुः।सुरा संधीयते । स्वाद्वीं त्वा । सुरादेवत्यानुष्टुप् । स्वाद्वीं त्वा । स्वादुशब्दो मिष्टवचनः । स्वादुरसां त्वाम् । स्वादुना मृष्टेन तीव्राम् । तीव्रशब्दः पटुवचनः । पट्वीम् शीघ्रमदजनकाम् । तीव्रेण पटुरसेन अमृताम् । अमृतेन मधुमतीम् मधुरस्वादोपेताम् मधुना । चतुर्णां वाक्यानां शेष उच्यते । सृजामि सऀ सोमेन । 'ते प्राग्धातोः' 'छन्दसि परेऽपि' इति उपसर्गसंसर्गात् संसृजामि स्वादुना सोमेनेति । एवमुत्तरत्रापि योज्यम् । यजूंष्युत्तराणि । सोमोसि । यस्त्वं मन्त्रेणोक्तः सोमसंसर्गात् तं त्वां ब्रवीमि । अश्विभ्यामर्थाय पच्यस्व । पाको विपरिणामः । सरस्वत्यै पच्यस्व इन्द्राय सुत्राम्णे पच्यस्व ॥ १ ॥

कृपानाथं रमाकान्तं नत्वा नृहरिमीश्वरम् ।
एकोनविंशे ह्यध्याये मन्त्रदीपमथो ब्रुवे ॥

**म०** अथ सौत्रामणीमन्त्रास्त्रिभिरध्यायैः । ऋद्धिकामस्याग्निचितो मुखेतरच्छिद्रसोमवामिनो मुखेन सोमवामिनो राज्यच्युतनृपस्य पशुकामस्य च सौत्रामणीयागः । अन्तःपात्यस्थाने गोचर्मणि एतानि स्थापयेत् सोमसुराविक्रयिणः क्लीबाद्वा क्रीत्वा सीसेन शष्पं क्रीत्वा ऊर्णाभिस्तोक्मान् सूत्रेण लाजान् केनचिद्द्रव्येण नग्नहुम् । विरूढा व्रीहयः शष्पम् । विरूढा यवास्तोक्माः । भृष्टव्रीहयो लाजाः । सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावकावृहच्छत्राचित्रकेन्द्रवारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयविरूढयवव्रीहयएकीकृता नग्नहुः । शष्पतोक्मलाजनग्नहून्दक्षिणद्वारेणाग्निगृहं नीत्वा संचूर्ण्य दर्शपौर्णमासधर्मेण व्रीहिश्यामाकयोश्चरू बहुजले पक्त्वा श्वतालम्भनानन्तरं तयोश्चर्वोर्निःस्रावमुष्णं पृथक् पात्रयोरादाय शष्पादिचतुर्णां चूर्णैः संसृज्य स्थापयेत् । द्वयं चूर्णाचामरूपं मासराख्यम् । 'ओदनौ चूर्णमासरैः सऀसृज्य स्वाद्वीं त्वाऀशुनेति त्रिरात्रं निदधाति' ( का० १९ । १ । २२ ) । एवमाचामयोश्चूर्णसंसर्गे मासरत्वनिष्पादनानन्तरमोदनौ व्रीहिश्यामाकचरू चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वेति मन्त्रेण अंशुनेति विंशाध्यायसप्तविंशया ऋचा चैकस्मिन्पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्रं शालानैर्ऋतकोणे गर्तं कृत्वा तत्र स्थापयेत् । अयमर्थः । चरू उद्वास्य द्वयोः पृथगाचामग्रहणम् । ततः शष्पतोक्मलाजचूर्णानां पृथक् त्रिधा कृतानां तृतीयांशं द्वेधा कृत्वाचामयोः क्षिपेत् । ततो नग्नहुचूर्णं द्वेधा कृत्वैकमर्धं द्विधा विभज्याचामयोः क्षिपेत् । एवं चूर्णसंसृष्टाचामयोर्मासरसंज्ञा । ततः शष्पतोक्मलाजचूर्णानां द्वितीयं तृतीयांशं द्विधा कृत्वैकैकं भागमोदनयोः क्षिपेत् । नग्नहुचूर्णद्वितीयार्धं द्वेधा कृत्वौदनयोः क्षिपेत् । तत ओदनावेकपात्रे कृत्वा तत्राचामौ क्षिपेत् । ततः स्वाद्वीं त्वा अंशुनेति मन्त्राभ्यां चूर्णमासरैः सहौदनयोराद्वालनेन(?) संसर्गः कार्यः । ततस्त्रिरात्रनिधानम् । शष्पतोक्मलाजचूर्णतृतीयांशानां प्रतिदिनं सुरायां निवापार्थं रक्षणमिति सूत्रार्थः । स्वाद्वीं त्वा । सुरासोमदेवत्यानुष्टुप् । सुरारूपः सोमो देवता । सौत्रामणीमन्त्राणां प्रजापत्यश्विसरस्वत्य ऋषयः । अथ मन्त्रार्थः । हे सुरे, त्वा त्वां सोमेन संसृजामि संयोजयामि । 'छन्दसि परेऽपि' ( पा० १ । ४ । ८१ ) इति समुपसर्गस्य क्रियापदात्परप्रयोगः । कीदृशीं त्वाम् । स्वाद्वीम् मिष्टां मिष्टरसाम् । तीव्रां तीव्रशब्दः कटुवचनः । कट्वीं शीघ्रमदजनिकामित्यर्थः । अमृताममृततुल्याम् । मधुमतीं मधुरस्वादोपेताम् । कीदृशेन सोमेन । स्वादुना मृष्टेन तीव्रेण कटुरसेन अमृतेन सुधातुल्येन । मधुमता मधुरस्वादेन । सोमोऽसि । चत्वारि यजूंषि सुरादेवत्यानि । पूर्व एव विनियोगः । सोमोऽसि दैव्युष्णिक् अश्विभ्यां यजुर्गायत्री सरस्वत्यै यजुरुष्णिक् इन्द्राय यजुर्बृहती । हे सुरे, त्वं सोमसंसर्गात्सोमः असि अतस्त्वां वदामि अश्विभ्यामर्थाय पच्यस्व विपरिणम । पाको विपरिणामः । सरस्वत्यै सरस्वत्यर्थं पच्यस्व इन्द्राय च पच्यस्व । कीदृशायेन्द्राय । सुत्राम्णे सुष्ठु त्रायते रक्षतीति सुत्रामा तस्मै । त्रायतेः 'आतो मनिन्–' ( पा० ३ । २ । ७४ ) इति मनिन् ॥ १ ॥

## द्वितीया ।

परी॒तो षि॑ञ्चता सु॒तऀ॒ सोमो॒ य उ॑त्त॒मं ह॒विः । द॒ध॒न्वा यो नर्यो॒ अ॒प्स्व॒न्तरा सु॒षाव॒ सोम॒मद्रि॑भिः ॥ २ ॥

**उ०** एकस्याः पयसा कृतेनाश्विनेन परिषिंचति । परीतः । सौमी बृहती । द्वितीयपादप्रभृतिव्याख्यायते यच्छब्दयोगात् । यः सोमः उत्तमं हविः सर्वेषां हविषाम् । यश्च दधन्वान् धारितवान् यजमानम् । यश्च नर्यो नृभ्यो हितः । यश्च अध्वर्युः अप्सु अन्तर्व्यवस्थितं सन्तम् आसुषाव अभिषुतवान् सोमम् । अद्रिभिः ग्रावभिः तं परिषिञ्चत अभिषुत सोमम् इतः गोरूधस उपादाय परिस्रुतम्॥२॥

**म०** 'एकस्याः पयस्यायाः कृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चतेति शष्पचूर्णानि चावपति सारस्वतेन द्वयोः प्रातस्तोक्मचूर्णानि चैन्द्रेणोत्तमे तिसृणां लाजचूर्णानि च' ( का० १९ । १ । २३–२८ ) । सायंहोमान्तेऽश्विभ्यामपाकरोमीति करेण गां स्पृष्ट्वा एकां तां दुग्ध्वा तत्पयसाध्वर्युः सुरां सिञ्चति परीत इति मन्त्रेण । रक्षितं शष्पचूर्णानां तृतीयांशं सुराभाण्डे क्षिपेत् । द्वितीयेऽह्नि निशान्ते सरस्वत्या अपाकरोमीति गावौ स्पृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरां सिञ्चति तोक्मचूर्णतृतीयांशक्षेपश्च । तृतीयेऽह्नि रात्रौ इन्द्राय सुत्राम्णेऽपाकरोमीति तिस्रो गाः स्पृष्ट्वा ता दुग्ध्वैकीकृततत्पयसा सुरां सिञ्चति तेनैव मन्त्रेण तत्र लाजचूर्णतृतियांशक्षेपश्चेति सूत्रार्थः । भरद्वाजदृष्टा सोमदेवत्या बृहती । हे ऋत्विजः, इतो गोः सकाशाद्गृहीतेन दुग्धेनेति शेषः । सुतमि-

भिषुतं सोमं परिस्रुद्रूपं परिषिञ्चत यूयम्। परि इतः सिञ्चतेति पदेषु सत्सु 'ओकारमितः सिञ्चतौ सोपध' (प्रातिशा० ३। ३। ९) इति सूत्रेण सविसर्गस्य तकारस्थाकारस्य ओकारः 'अन्येषामपि दृश्यते' (पा० ६। ३। १३७) इति सिञ्चत-पदस्य संहितायां दीर्घः। तं कम्। यः सोम उत्तमं हविः सर्वेषां श्रेष्ठम्। यश्च नर्यः नरेभ्यो हितः सन् दधन्वान् यजमानं धारितवान्। 'धन शब्दे' क्वसुप्रत्ययः। अप्सु जलेषु अन्तर्मध्ये वर्तमानं यं सोममद्रिभिः ग्रावभिरध्वर्युः आसुषाव अभिषुतवान्। तं सोमं सुरारूपमापन्नं पयसा सिञ्चतेति संबन्धः॥ २॥

## तृतीया।

वायोः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिद्रुतः। इन्द्रस्य युज्यः सखा। वायोः पूतः पवित्रेण प्राङ्क्सोमो अतिद्रुतः। इन्द्रस्य युज्यः सखा॥ ३॥

उ० तिसृभिर्गायत्रीभिः परिस्रुतं पुनाति। वायोः पूतः। योऽयं वायोः पवित्रेण उदरान्तरवर्तिना पूतः सन् प्रत्यङ् अधोमुखः सोमः अतिद्रुतः सः इन्द्रस्य युज्यः। इन्द्रेण सह योगमर्हति। सखा सहायः। सुक्रीडनकः अगर्ह्यः। सोमवामिनः पुनाति वायोः पवित्रेण हृदयान्तर्वर्तिना पूतः प्राङ् प्रागञ्चनः मुखतः सोमः अतिद्रुतः यः स इन्द्रस्य युज्यः योगार्हः सखा॥ ३॥

म० 'सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति वायोः पूत इति सोमातिपूतस्य प्राङिति तद्वामिनः' (का० १९। २। ७-९)। वायोः पूत इति कण्डिकायां द्वे ऋचौ पुनाति त इति तृतीया तासां व्युत्क्रमेण विनियोगमाह। पूतां सुरामादाय गोऽश्वकेशनिर्मितेन वालेन पवित्रेण सते पलाशपात्रे पुनाति पुनाति त इति मन्त्रेण सतं वारणमिति केचित्। मुखेतरच्छिद्रसोमवामिनो यजमानस्य सौत्रामण्यां वायोः पूतः पवित्रेण प्रत्यङिति मन्त्रेण सत्ते सुरां पुनाति मुखेन सोमवामिनस्तु वायोः पूतः पवित्रेण प्राङिति मन्त्रेण स ते सुरां पुनातीत्यर्थः। ऋक्त्रयमाभूतिदृष्टं सोमदेवत्यं गायत्रम्। प्रत्यञ्चति अधो गच्छति प्रत्यङ् अधोमुखोऽतिद्रुतो गुदद्वारा गतः सोमः वायोः पवित्रेण उदरान्तर्वर्तिना पूतः शुद्धः। कीदृशः। इन्द्रस्य युज्यः सखा योगार्होऽगर्ह्यः सहायः। प्राञ्चत्यूर्ध्वं गच्छति प्राङ् मुखतोऽतिद्रुतो निर्गतः सोमो वायोः पवित्रेण हृदयान्तर्वर्तिना पूतः य इन्द्रस्य युज्यः योग्यः सखा॥ ३॥

## चतुर्थी।

पुनाति ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता। वारेण शश्वता तना॥ ४॥



उ० समृद्धिकामस्य पुनाति ते। यजमानस्याचष्टेऽध्वर्युः। पुनाति तव परिस्रुतं सुरां सोमं च सूर्यस्य दुहिता। यद्वा लुप्तोपमानमेतत् पुनाति ते परिस्रुतं सोममेवेति। यद्वा पुनाति तव परिस्रुतं सोमरूपापन्ना सूर्यस्य दुहिता। 'श्रद्धा वै सूर्यस्य दुहिता वारेण गोऽश्ववालवालेन। शश्वता शाश्वतिकेन। तना। तनेति धननाम। धनोत्पत्तिनिमित्तभूतेन॥४॥

म० अध्वर्युर्यजमानं प्रत्याचष्टे हे यजमान, सूर्यस्य दुहिता पुत्री श्रद्धा ते तव परिस्रुतं सुरां सोमं च पुनाति शोधयति। 'श्रद्धा वै सूर्यस्य दुहिता' इति श्रुतिः। यद्वा लुप्तोपमानम्। ते तव परिस्रुतं सोममिव पुनाति सोमवत् पवित्रं करोति। यद्वा सोमं सोमरूपापन्नां परिस्रुतं श्रद्धा पुनाति। केन। वारेण वालेन रलयोरैक्यम्। गोऽश्ववालवालेन। कीदृशेन वारेण। शश्वता शाश्वतिकेन अनादिना। तथा तना। तनेति धननाम। तनेन धनेन धनरूपेण धनोत्पत्तिनिमित्तभूतेनेत्यर्थः॥ ४॥

## पञ्चमी।

ब्रह्म क्षत्रं पवते तेज इन्द्रियꣳसुरया सोमः सुत आसुतो मदाय। शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि॥ ५॥

उ० अजाविलोमपवित्रेण पयः पुनाति ब्रह्म क्षत्रम्। व्यवहितपदप्रायः प्रथमोऽर्धर्चः। यस्मात्कारणात् सोमः सुतः अभिषुतः ब्रह्म क्षत्रं पवते। तेज इन्द्रियं च। पवतिर्जननार्थः। ब्रह्म जनयति क्षत्रं च तेजश्च इन्द्रियं च। यस्मात्त्वं सुरया सुतः सुरया तीव्रः कृतः मदाय भवसि मदजनको भवसि। अतः कारणात् शुक्रेण शोचिष्मता दीप्तिमता रूपेण मन्त्रजनितेन। हे देवदेवताः, पिपृग्धि प्रीणीहि। रसेन चान्नं यजमानाय धेहि देहि॥ ५॥

म० 'उत्तरस्यां पयो वैतसेऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति' (का० १९। २। १०)। अजमेषलोमकृतपवित्रेण वेतसपात्रे उत्तरदिशि पयः पुनाति ब्रह्म क्षत्रमिति मन्त्रेणेत्यर्थः। सुरासोमदेवत्या त्रिष्टुप्। आद्यो द्वादशकः द्वितीयस्त्रयोदशार्णः अन्यावेकादशार्णौ तेन त्र्यधिका। हे देव सोम, शुक्रेण शुद्धेन वीर्येण त्वं देवताः अस्मदाद्याः पिपृग्धि प्रणीहि। पुनः रसेन घृतादिना सहितमन्नं यजमानाय धेहि देहि। यतः सोमो भवान् सुतोऽभिषुतः सन् ब्रह्म ब्राह्मणं क्षत्रं क्षत्रियं तेजः कान्तिमिन्द्रियसामर्थ्यं पवते जनयति। पवतिर्जननार्थः यज्ञादेव सर्वोत्पत्तेः सोमे उपचर्यते। आसुतः सुरया तीव्रीकृतः सन् भवान् मदाय च भवति। ईदृशसामर्थ्ययुक्तस्त्वं देवान् यजमानं चाभीष्टेन प्रीणीहीत्यर्थः॥ ५॥

## षष्ठी।

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं

वियूर्य । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे । एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥ ६ ॥

**उ० पयोग्रहान् गृह्णाति । कुविदङ्गेति व्याख्यातम् । उपयामगृहीतोसि अश्विभ्यां त्वा सरस्वत्यै त्वा इन्द्राय त्वा सुत्राम्णे । शोभनं त्राणमस्याश्विभ्यां सरस्वत्यै च कृतमिति । सुत्रामा सादयति । एष ते योनिः तेजसे त्वां सादयामि वीर्याय त्वा बलाय त्वा ॥ ६ ॥**

**म०** 'पयोग्रहान् गृह्णाति कुविदङ्गेति पृथगुपयामयोनी' ( का० १९ । २ । १२–१३ ) । एवं सुरापयसोः पावनं कृत्वा कुविदङ्गेति मन्त्रेणैव त्रीन् पयोग्रहान् गृह्णाति । मन्त्रपाठे उपयामगृहीतोऽसि एष ते योनिरिति द्वे यजुषी सकृत्पठिते त्रिषु ग्रहेषु पृथग्भवतः । ततश्चैते मन्त्राः । कुविदङ्गेत्यृचं पठित्वा उपयामगृहीतोऽस्यश्विभ्यां त्वा । ऋग्व्याख्याता (१० । ३२) । हे पयोग्रह, त्वमुपयामेन पात्रेण गृहीतोऽसि । अश्विभ्यामर्थे त्वा त्वां गृह्णामि । सादयति एष ते योनिस्तेजसे त्वा एष ते तव योनिः स्थानम् । योनिर्द्वयोरिति योनिशब्द उभयलिङ्गः । तेजसे तेजोर्थं त्वां सादयामि । द्वितीये पयोग्रहे कुविदिति पठित्वा उपयामगृहीतोऽसि सरस्वत्यै त्वा सरस्वत्यर्थं त्वां गृह्णामि । सादयति एष ते योनिर्वीर्याय त्वा वीर्यार्थं त्वां सादयामि । तृतीयपयोग्रहे कुविदित्यन्ते उपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे सुष्ठु त्रायते रक्षतीति सुत्रामा तस्मै रक्षकायेन्द्राय त्वां गृह्णामि । सादयति एष ते योनिर्बलाय त्वा बलाय बलार्थं त्वां सादयामि । एतेषां क्रमादश्वत्थोदुम्बरन्यग्रोधपात्रैर्ग्रहणम् ॥ ६ ॥

## सप्तमी ।

नाना हि वां देवहितꣳ सदस्कृतं मासꣳसृक्षाथां परमे व्योमन् । सुरा त्वमसि शुष्मिणी सोम एष मा मा हिꣳसीः स्वां योनिमाविशन्ती ७

**उ० सुराग्रहान् गृह्णाति । नाना हि । हिशब्दो यस्मादर्थे । यस्मान्नाना पृथक् पृथक् वा युवयोः सुरासोमयोः । देवहितं देवनां पथ्यं देवैर्वा हितं धारितं स्थापितम् सदःस्थानं कृतम् । द्वे हि वेदी भवतः सुरापयसोर्नानाभूते । अतो ब्रवीमि । मा संसृक्षाथाम् मा संसर्गं कुरुतम् । परमे व्योमन् स्थाने आहवनीयाख्ये । दक्षिणे ह्यग्नौ सुरा हूयते । किंच यतश्च सुरा त्वमसि । शुष्मिणी बलावती अशान्ता । तस्मात्सुरां पीत्वा रौद्रमना भवति सोमश्च एष प्रख्यातगुणः शान्तः । अतो ब्रवीमि । सर्वथा मां माहिंसीः सोमं स्वयोनिस्थानमाविशती सती । माशब्दोऽनुदात्तोऽनर्थकः ॥ ७ ॥**

**म०** 'स्थालीभिः सौरान्नाना हि वामिति व्यत्यासम्' ( का० १९ । २ । २० ) । नाना हीति मन्त्रेण मृण्मयस्थालीभिस्त्रीन्सुराग्रहान्गृह्णाति । व्यत्यासमित्ययमर्थः । आदावाश्विनं पयोग्रहं गृहीत्वासाद्याश्विनसुराग्रहस्य ग्रहणासादने । ततः सारस्वतौ पयोग्रहसुराग्रहौ । तत ऐन्द्रौ पयःसुराग्रहौ । क्रमेण वा उपयामयोनी । अत्रापि पृथक् प्रथमे नाना हीति पठित्वोपयामगृहीतोऽस्याश्विनं तेज इति ग्रहणमेष ते योनिर्मोदाय त्वेति सादनम् । द्वितीये नाना हीत्यन्ते उपयामगृहीतोऽसि सारस्वतं वीर्यमिति ग्रहणमेष ते योनिरानन्दाय त्वेति सादनम् तृतीये नायेत्यन्ते उपयामगृहीतोऽस्यैन्द्रं बलमिति ग्रहणमेष ते योनिर्महसे त्वेति सादनमिति सूत्रार्थः । सुरासोमदेवत्या जगती । हे सुरासोमौ, हि यस्मात्कारणाद्वां युवयोः नाना पृथक् सदः स्थानं कृतम् । सुरापयसोर्द्वे वेदी भवतः । कीदृशं सदः । देवहितं देवानां हितं पथ्यम् । यद्वा देवैः हितं स्थापितम् । अतः कारणात् परमे उत्कृष्टे व्योमन् व्योम्नि व्योमवद्विशाले हवनस्थाने युवं मा संसृक्षाथां संसर्गं मा कुरुतम् । आहवनीये पयो हूयते दक्षिणाग्नौ सुरा हूयते अतो न संसर्गः । 'सृज विसर्गे' लुङ् । एवं द्वौ प्रत्युक्त्वा सुरामाह । हे सुरे, त्वं सुरा असि । कीदृशी । शुष्मिणी शुष्मं बलमस्या अस्तीति बलवती । अतस्त्वां पीत्वा मत्तो भवति । एष सोमः शान्तः अतः स्वां योनिमाविशन्ती प्रविशन्ती सती सोमं मा हिंसीः अनुदात्तो माशब्दः पादपूरणः ॥ ७ ॥

## अष्टमी ।

उपयामगृहीतोऽस्याश्विनं तेजः सारस्वतं वीर्यमैन्द्रं बलम् । एष ते योनिर्मोदाय त्वानन्दाय त्वा महसे त्वा ॥ ८ ॥

**उ०** उपयाम गृहीतोसि । आश्विनं तेजः साक्षात्त्वमिति शेषः । एवं सर्वत्र । सारस्वतं वीर्यम् ऐन्द्रं बलम् । सादयति । एष ते योनिः मोदाय त्वा त्वां सादयामि । आनन्दाय त्वा । महसे त्वा महत्त्वाय 'मह पूजायाम्' ॥ ८ ॥

**म०** आश्विनं तेजः साक्षात्त्वमेव । सारस्वतं सरस्वतीसंबन्धि वीर्यं सामर्थ्यं च त्वम् । ऐन्द्रमिन्द्रसंबन्धि बलं च त्वमिति शेषः । सादयति । एष ते तव योनिः स्थानम् । मोदाय प्रमोदाय त्वा त्वां सादयामि । आनन्दाय हर्षाय त्वां सादयामि । महसे महत्त्वाय च सादयामि । प्रत्येकं मन्त्राः ॥ ८ ॥

## नवमी ।

तेजोऽसि तेजो मयि धेहि वीर्यमसि वीर्यं मयि धेहि बलमसि बलं मयि धेह्योजोऽस्योजो मयि धेहि मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि ॥ ९ ॥

**उ० पयोग्रहान् श्रीणाति । तेजोसि । तेजोसि यतः**

अतस्त्वां ब्रवीमि । तेजो मयि धेहि । यो हि मदात्मकः स तत्र नियोगमर्हति । वीर्यमसि वीर्यं मयि धेहि । बलमसि बलं मयि धेहि । तुल्यव्याख्यानानि । सुराग्रहान् श्रीणाति । ओजोसि ओजो मयि धेहि । मन्युरसि मन्युं मयि धेहि । सहोसि सहो मयि धेहि । तेजः प्रज्वलनमात्मनः । मन्युः कोपः । सहो बलम् ॥ ९ ॥

म० 'गोधूमकुवलचूर्णानि चावपति तेजोऽसीति' ( का० १९ । २ । १६ ) । आश्विनग्रहणानन्तरं सादनात्प्राक् द्वे दर्भतृणे प्रागग्रे पात्रोपरि कृत्वा गोधूमकुवलयोश्चूर्णानि सहैव पयसि क्षिपति । कुवलं स्थूलं बदरीफलमित्यर्थः । त्रीणि यजूंषि पयोदेवत्यानि । आद्यं यजुर्बृहती । हे पयः, त्वं तेजोऽसि अतो मयि तेजो धेहि स्थापय । यो यदात्मकः स तत्र नियुज्यत इति न्यायात् । 'उपवाकबदरचूर्णानि च वीर्यमसीति' ( का० १९ । २ । १७ ) । उपवाका इन्द्रयवाः बदरं सूक्ष्मबदरीफलम् । तयोश्चूर्णानि सारस्वते पयोग्रहे निर्वपेदित्यर्थः । यजुः पङ्क्तिः । हे ग्रह, त्वं वीर्यमसि अतो मयि वीर्यं सामर्थ्यं धेहि । 'यवकर्कन्धुचूर्णानि च बलमसीति' ( का० १९ । २ । १९ ) । यवाः प्रसिद्धाः कर्कन्धुः अतिस्थूलं बदरम् तयोश्चूर्णान्यैन्द्रे पयोग्रहे क्षिपेदित्यर्थः । यजुः पङ्क्तिः । हे ग्रह, त्वं बलमसि अतो मयि विषये बलं धेहि । 'सुराग्रहाञ्छ्रीणात्योजोऽसीति वृकव्याघ्रसिꣳहलोमभिः प्रतिमन्त्रं मिश्रैरेके यथासंख्यम्' ( का० १९ । २ । २२-२३ ) । वृकादीनां मिश्रैः केशैरोजोऽसीति प्रतिमन्त्रं सुराग्रहान्मिश्रयेत् ओजोऽसीत्याश्विनं मन्युरसीति सारस्वतं सहोऽसीत्यैन्द्रम् । एके वृकादिकेशैर्यथासंख्यं ग्रहं मिश्रयन्ति वृककेशैराश्विनं वैयाघ्रैः सारस्वतं सैंहैरैन्द्रमिति सूत्रार्थः । त्रीणि यजूंषि सुरादेवत्यानि । हे सुरे, त्वमोजः असि अतो मयि विषये ओजः कान्तिं धेहि स्थापय । त्वं मन्युर्मानसं प्रज्वलनं कोपोऽसि मयि मन्युं धेहि । सहोऽसि मयि सहो बलं धेहि ॥ ९ ॥

## दशमी ।

या व्या॒घ्रं विषू॑चि॒कोभौ वृकं॑ च॒ रक्ष॑ति । श्ये॒नं प॑त॒त्रिण॑ꣳ सि॒ꣳहꣳ सेमं॑ पा॒त्वꣳह॑सः ॥ १० ॥

उ० श्येनपत्राभ्यां पावयतो यजमानम् । या व्याघ्रम् । अनुष्टुप् । विषूचिकास्तुतिः । विषु निःगतो नानावचनः । अञ्चतिर्गत्यर्थः । अन्तर्व्याप्तिर्नानाञ्चना विषूचिकेत्युच्यते । विषूचिका व्याधिविशेषः । या विषूचिका व्याघ्रं वृकं चोभावपि रक्षति । नहि तयोरपरिणामजनिता व्यापत्तिः । किमेतावेव यो रक्षति नेत्याह । श्येनं पतत्रिणं पतनशीलम् । स हि वधजीवनः प्राणिनो गृहीतुमवश्यं पतति । सिंहं च सा इमं यजमानं पातु अंहसः पापात् पापसमूहव्याप्तेः व्याधीनामधिष्ठात्र्यो देवताः सन्ति ताः प्रार्थ्यन्ते ॥ १० ॥

म० 'दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां या व्याघ्रमिति' ( का० १९ । २ । २६ ) । अध्वर्युप्रतिप्रस्थातारौ सहैवान्तःपात्येऽवस्थितं प्राङ्मुखं यजमानं श्येनपिच्छाभ्यां पावयतः दीक्षावदित्येकेन नाभेरूर्ध्वं प्रदक्षिणं द्वितीयेन सकृदवाङ् यद्वोभाभ्यां नाभेरूर्ध्वमधश्च द्विरिति सूत्रार्थः । हैमवर्चिदृष्टा विषूचिकादेवत्यानुष्टुप् । व्याध्यधिष्ठात्री देवतास्ति सा प्रार्थ्यते । विषु सर्वत्र अञ्चति गच्छति विषूची सैव विषूचिका रोगविशेषः । 'केऽणः' (पा० ७ । ४ । १३) इति ङीपो ह्रस्वः । या विषूचिका व्याघ्रं वृकमेनावुभौ द्वौ परिरक्षति पाति तथा श्येनं पतत्रिणं पक्षिणं सिंहं चोभौ रक्षति । नहि तेषामन्नपरिणामजनितो दोषः । सा विषूचिका इमं यजमानमंहसः व्याधिहेतुभूतात्पापात्पातु रक्षतु ॥ १० ॥

## एकादशी ।

यदा॑पि॒पेष॑ मा॒तरं॑ पु॒त्रः प्रमु॑दितो॒ धय॑न् । ए॒तत्तद॑ग्ने अनृ॒णो भ॑वा॒म्यह॑तौ पि॒तरौ॑ मया॑ । संपृच॑ स्थ॒ सं मा॑ भ॒द्रेण॑ पृङ्क्त । वि॒पृच॑ स्थ॒ वि मा॑ पा॒प्मना॑ पृङ्क्त ॥ ११ ॥

उ० अग्निं प्रेक्षयति । यदा पिपेष । आग्नेयी बृहती । पिपेषेति लिट उत्तमपुरुषैकवचनम् । यदहम् आपिपेष आपिष्टवान् पद्याम् । मातरं पुत्रः प्रमुदितः प्रहृष्टः सन् । धारयन्पिबन्स्तनम् । तदेतत् तव समक्षम् हे अग्ने, अनृणः ऋणत्रयरहितः । कृतकृत्यो भवामि । यत एवमतो ब्रवीमि उत्क्षिप्य भुजम् । अहतौ अहिंसितौ पितरौ । 'पितामात्रा' इत्येकशेषः । मया यो हि प्रत्युपकर्तुमसमर्थः तेनैव मातापितरौ हिंसितौ भवत इत्यभिप्रायः । पयोग्रहान्संस्पृशति । संपृचस्थ 'पृची संपर्के' । संपृचन्तीति संपृचः स्थ स्वया क्रियया व्यपदिश्यन्ते । ये दास्यन्ते । संपृचस्थ तानहं ब्रवीमि संमा भद्रेण पृङ्क्त संसृजत मां भद्रेण भन्दनीयेन कल्याणेन । सुराग्रहान् संस्पृशति । विपृचस्थ ये यूयं विपृचः वियोगकारिणः स्थ तानहं ब्रवीमि । पाप्मना विपृङ्क्त विगतसंसर्गं पाप्मना मां कुरुत ॥ ११ ॥

म० 'अग्निं प्रेक्षयति यदाऽऽपिपेषेति' ( का० १९ । २ । २७ ) । अग्निं प्रेक्षस्वेति प्रैषेणाध्वर्युर्यजमानमग्निं दर्शयति स प्रेषित औत्तरवेदिकमग्निमीक्षत इत्यर्थः । अग्निदेवत्या बृहती । पुत्रोऽहं प्रमुदितः प्रहृष्टो धयन् स्तनपानं कुर्वन्सन् यत् मातरं जननीमापिपेष पिष्टवान् पद्भ्यां पीडितवान् । पिपेषेति लिट् उत्तमैकवचनम् । हे अग्ने, तत् एतत् त्वत्समक्षमहमनृणो भवामि ऋणत्रयरहितोऽस्मि । अतएव ब्रवीमि मया पितरौ मातापितरौ अहतौ न पीडितौ । यः पुत्रः प्रत्युपकर्तुमशक्तः स एव पित्रोर्हन्तेति भावः । 'पयोग्रहसंमर्शनꣳ संपृच स्थेति' ( का० १९ । २ । २८ ) यजमानः सहैव पयोग्रहाणां स्पर्शं करोतीत्यर्थः । पयोग्रहदेवत्यं यजुस्त्रिष्टुप् । हे पयोग्रहाः, यूयं संपृचः स्थ संपृञ्चन्ति संयोजयन्तीति संपृचः स्वत एव संयोजका

भवत। अतो मा मां भद्रेण कल्याणेन संपृङ्क्त संसृजत। कल्याणयुक्तं मां कुरुतेत्यर्थः। संपूर्वात्पृचेः क्विप्। पृचे रौधादिकाल्लोट् संपृङ्क्तः। 'विपृच स्थेति सौराणाम्' (का० १९। २। २९)। यजमानं सौरग्रहान्संमृशतीत्यर्थः। हे सुराग्रहाः, यूयं विपृचः स्थ विपृञ्चन्तीति विपृचः वियोजका भवत। अतो मा मां पाप्मना कल्मषेण विपृङ्क्त निष्पापं कुरुतेत्यर्थः॥ ११॥

## द्वादशी।

दे॒वा य॒ज्ञम॑तन्वत भेष॒जं भि॒षजा॒श्विना॑। वा॒चा सर॑स्वती भि॒षगिन्द्रा॑येन्द्रि॒याणि॒ दध॑तः॥१२॥

उ० देवा यज्ञम्। विंशतिरनुष्टुभः सौत्रामण्यां सोमसंपद्दर्शनार्थाः। निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यमर्थस्य सुखबोधाय। इन्द्रस्य किलानुपहितसोमपानाद्द्विषतस्तस्य नमुचिरसुरोऽपिबत्। समस्तं वीर्यं तत्र देवेन्द्रस्य भेषजं कृतम्। तत्राश्विनौ भिषजौ सरस्वती च ओषधं सौत्रामणी। यद्देवा यज्ञमतन्वत विस्तारितवन्तः। भेषजं भेषजस्य कर्तारं सौत्रामण्याख्यं अथ तदा भेषजा भिषजौ वैद्यौ अश्विना अश्विनौ। इह चतुर्थः पादः संबध्यते द्विवचनत्वात्। इन्द्राय इन्द्रियाणि वीर्याणि दधतः। वाचा च त्रयीलक्षणया सरस्वती तदा भिषक् स्यात्॥ १२॥

म० देवा यज्ञमित्यादिकण्डिका विंशतिर्ब्राह्मणरूपातो विनियोगाभावः। ब्राह्मणानुवाको विंशतिरनुष्टुभः सौत्रामण्याः सोमसाम्यप्रतिपादिकाः। अत्रेतिहासः। अनुपहूतसोमपानाद्भ्रष्टस्येन्द्रस्य वीर्यं नमुचिरसुरोऽपिबत् तत्र देवैरिन्द्रस्य भैषज्यं कृतम् तत्राश्विनौ सरस्वती च भिषजः सौत्रामणी चौषधम्। तथाच श्रुतिः 'त्वष्टा हतपुत्रोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसं कृत्वा प्रसह्य सोममपिबत्स विष्वङ् व्यार्च्छत्तस्य मुखात्प्राणेभ्यः श्रीयशसान्यूर्ध्वान्युदक्रामंस्तानि पशून्प्राविशंस्तस्मात्पशवो यशो यशो ह भवति य एवं विद्वान्सौत्रामण्याभिषिच्यते ततोऽस्मा एतमश्विनौ च सरस्वती च यज्ञꣳ समभरन्सौत्रामणी भैषज्याय तयैनमभ्यषिञ्चंस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानां भवति य एतयाभिषिच्यते' (१२। ८। ३। १) इति। देवा यज्ञं सौत्रामण्याख्यं भेषजमिन्द्रस्यौषधरूपमतन्वत विस्तारयामासुः। तदा अश्विना अश्विनौ भिषजा भिषजौ वैद्यौ आस्तामिति शेषः। सरस्वती च वाचा त्रयीलक्षणया भिषगासीत्। कीदृशाः सरस्वत्यश्विनाः। इन्द्राय इन्द्रियाणि वीर्याणि दधतः। इन्द्राय सामर्थ्यं ददत इत्यर्थः॥ १२॥

## त्रयोदशी।

दी॒क्षायै॑ रू॒पꣳ शष्पा॑णि प्राय॒णीय॑स्य॒ तोक्मा॑नि। क्र॒यस्य॑ रू॒पꣳ सोम॑स्य ला॒जाः सो॑मा॒ꣳशवो॒ मधु॑॥ १३॥

उ० दीक्षायै रूपम्। शष्पाणि नवप्ररूढानि व्रीहयः। प्रायणीयस्य तोक्मानि। नवप्ररूढा यवास्तोक्मानि क्रयस्य रूपं सोमस्य। सोमक्रयस्येति समासप्राप्ते पदयोर्व्यत्ययो रूपशब्देन व्यवधानं च छान्दसम्। सोमक्रयरूपं लाजाः सोमांशवश्च लाजा एव मधुरस्वादाः॥ १३॥

म० इदानीं सौत्रामण्याः सोमसंपत्तिं निरूपयति। शष्पाणि नवप्ररूढव्रीहिरूपाणि पूर्वोक्तानि दीक्षायै। षष्ठ्यर्थे चतुर्थी। दीक्षाया दीक्षणीयेष्टे रूपम्। शष्पाणि दीक्षणीयात्वेन ध्येयानि। एवमग्रेऽपि। तोक्मानि नवप्ररूढयवाः प्रायणीयस्य प्रायणीयेष्टे रूपं ध्येयम्। सोमस्य क्रयस्य रूपं लाजाः सोमक्रयोऽस्ति सोमे अत्र लाजास्तस्य रूपम्। लाजाः सोमक्रयरूपेण ध्येया इत्यर्थः। सोमक्रयस्येति समासे युक्ते तदभावः सोमक्रयपदयोर्व्यत्ययो रूपपदेन व्यवधानं च छान्दसम्। मधु सोमांशवः सोमखण्डास्तद्रूपेण ध्येयम्। यद्वा मधु मधुरस्वादा लाजा एव सोमांशवो ध्येयाः॥ १३॥

## चतुर्दशी।

आ॒ति॒थ्य॒रू॒पं मास॑रं म॒हा॒वी॒रस्य॑ न॒ग्नहुः॑। रू॒पमु॑प॒सदा॑मे॒तत्ति॒स्रो रात्रीः॒ सुरा॑सु॒ता॥ १४॥

उ० आतिथ्यरूपं मासरम्। व्रीहिश्यामाकौदनाचामचूर्णसंसर्गो मासरम्। महावीरस्य नग्नहुः। किण्वो नग्नहुः सौरिकाणां प्रसिद्धः। रूपमुपसदामेतत्क्रियते यस्मिंस्तिस्रो रात्रीः सुरा अभिषुता तिष्ठति॥ १४॥

म० किंच मासरमातिथ्यरूपमातिथ्येष्टेः स्वरूपं ध्येयम्। व्रीहिश्यामाकौदनाचामयोः शष्पतोक्मलाजनग्नहुचूर्णैः संसर्गो मासरं पूर्वमुक्तम्। सर्जत्वगादिषड्विंशतिवस्तून्येकीकृतानि नग्नहुः पूर्वोक्तः। स महावीरस्य घर्मस्य रूपं ध्येयम्। याः तिस्रो रात्रीः 'कालाध्वनोः-' (पा० २। ३। ५) इति द्वितीया। त्रिरात्रपर्यन्तं सुरा आसुता अभिषुता पूर्वोक्तं सर्वमेकपात्रे कृत्वा स्वाद्वीं त्वेति मन्त्रेण यद्वर्ते त्रिरात्रं स्थापनम् एतदुपसदामुपसत्संज्ञानामिष्टीनां रूपम्॥ १४॥

## पञ्चदशी।

सोम॑स्य रू॒पं क्री॒तस्य॑ परि॒स्रुत्परि॑षिच्यते। अ॒श्विभ्यां॑ दु॒ग्धं भे॑ष॒जमिन्द्रा॑यै॒न्द्रꣳ सर॑स्वत्या॥१५॥

उ० सोमस्य रूपम्। सोमस्य क्रीतस्यैतद्रूपं यत्परिस्रुत् परिषिच्यते पयसा। केन पयसा यत् अश्विभ्यां दुग्धं भेषजं च इन्द्राय यच्च अश्विभ्यां दुग्धमिन्द्रायैव भेषजम्। यच्च सरस्वत्या दुग्धं पयः इन्द्राय भेषजम्॥ १५॥

म० यत् अश्विभ्यां सरस्वत्या च ऐन्द्रमिन्द्रदेवत्यमिन्द्राय भेषजमिन्द्रार्थं औषधं दुग्धं पयः अश्विभ्यामपाकरोमीति दुग्धेनैकगोः पयसा सरस्वत्या अपाकरोमीति दुग्धेन गोद्वयपयसा इन्द्रायापाकरोमीति दुग्धेन गोत्रयपयसा दिनत्रये परिस्रुत् सुरा

यत् परिषिच्यते तत् क्रीतस्य सोमस्य रूपं ज्ञातव्यम् । 'एकस्याः पयसापाकृतेनाश्विनेन परिषिञ्चति सारस्वतेन द्वयोः प्रातः ऐन्द्रेणोत्तमे तिसृणामिति' ( १९।१।२३।२५।२७ ) कात्यायनेन निर्दिष्टत्वादश्विभ्यां सरस्वत्या च दुग्धमिति निर्देशः ॥ १५ ॥

## षोडशी ।

आसन्दी रूपꣳ राजासन्द्यै वेद्यै कुम्भी सुराधानी । अन्तर उत्तरवेद्या रूपं कारोतरो भिषक् ॥ १६ ॥

**उ०** आसन्दी रूपम् । यजमानाभिषेकासन्दीरूपम् । राजासन्द्यै सोमासन्द्याः । वेद्यै कुम्भी सुराधानी । सौमिक्या वेदेः रूपम् । वेद्योः अन्तरः मध्यम् उत्तरवेद्यारूपम् । कारोतरः सुरापावनम् भिषगिन्द्रस्य यजमानस्य च ॥ १६ ॥

**म०** राज्ञः सोमस्यासन्दी राजासन्दी तस्यै । चतुर्थी षष्ठ्यर्थे । आसन्दी यजमानाभिषेकायासन्दी मञ्चिका राजासन्द्याः सोमासन्द्या रूपं तत्त्वेन ध्येया । सुराधानी सुरा धीयते स्थाप्यते यस्यां सा सुराधानी कुम्भी वेद्यै वेद्याः सौमिक्या वेदेः रूपम् । अन्तरः वेदिद्वयमध्यभाग उत्तरवेद्याः रूपम् । कारोतरः सुरापावनचालनी इन्द्रस्य यजमानस्य च भिषक् ज्ञेयः ॥ १६ ॥

## सप्तदशी ।

वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् । यूपेन यूप आप्यते प्रणीतो अग्निरग्निना ॥ १७ ॥

**उ०** अनया वेद्या वेदिः सौमिकी समाप्यते । बर्हिषा च बर्हिः समाप्यते । इन्द्रियं वीर्यम् । यूपेन दृश्येन च यूप आप्यते । प्रणीतश्चाग्निः अग्निनाप्यते ॥ १७ ॥

**म०** वेद्यात्र वर्तमानया वेदिः सौमिकी समाप्यते सम्यक् प्राप्यते तद्रूपा ध्येयेत्यर्थः । बर्हिषात्रत्येन बर्हिः सौमिकं समाप्यते । इन्द्रियं वीर्यं चेन्द्रियेणेति शेषः । समाप्यते । फलदाने सामर्थ्यं उभयोरप्यस्तीत्यर्थः । यूपेनात्रत्येन यूप आप्यते । अग्निनात्रत्येन प्रणीतोऽग्निः सौमिक आप्यते प्राप्यते ॥ १७ ॥

## अष्टादशी ।

हविर्धानं यदश्विनाग्नीध्रं यत्सरस्वती । इन्द्रायैन्द्रꣳ सदस्कृतं पत्नीशालं गार्हपत्यः ॥ १८ ॥

**उ०** हविर्धानं यदश्विना । यदाश्विनदैवतं तेन हविर्धानमाप्यते । यत्सरस्वतीदैवतं तेनाग्नीध्रमाप्यते । यदिन्द्राय हविः तेन इन्द्रसदः कृतमाप्यते । पत्नीशालं च गार्हपत्यस्य आप्यते ॥ १८ ॥

**म०** अत्र सौत्रामण्यां यत् अश्विना अश्विनौ देवते वर्तेते तेनाश्विसद्भावेन हविर्धानं सौमिकमाप्यत इत्यनुषङ्गः । अत्र यत्सरस्वती देवतास्ति तेन सरस्वतीसद्भावेन आग्नीध्रं सौमिकमाप्यते । सोमे ऐन्द्रमिन्द्रदेवत्यं सदः कृतमस्ति । ऐन्द्रं सदः । पत्न्याः शाला पत्नीशालम् 'विभाषा सेनासुरा–' ( पा० २।४।२५ ) इत्यादिना क्लीबत्वम् । गार्हपत्यश्चेति त्रयमिन्द्राय यद्धविः क्रियते तेनाप्यते । सौत्रामण्यामिन्द्राय यद्धविस्तत्सौमिकसदःपत्नीशालगार्हपत्यरूपेण ध्येयमित्यर्थः ॥ १८ ॥

## एकोनविंशी ।

प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य । प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः ॥ १९ ॥

**उ०** प्रैषेभिः प्रैषान् । प्रैषैः प्रैषानाप्नोति आप्रीभिः आप्रीः यज्ञस्य सोमयज्ञस्य प्रियाः प्रयाजयाज्याः । प्रयाजेऽभिरनुयाजान् प्रयाजैः प्रयाजानाप्नोति । अनुयाजैरनुयाजानाप्नोति । वषट्कारेभिराहुतीः । वषट्कारैर्वषट्कारानाप्नोति । प्रयाजेभिरित्यादिचतुर्णां वाक्यानामर्धलोपः ॥ १९ ॥

**म०** प्रैषेभिः प्रैषैः प्रैषानाप्नोति । आप्रीभिः प्रयाजयाज्याभिर्यज्ञस्याप्रीराप्नोति । प्रयाजेभिरित्यादिवाक्यचतुष्टयस्योत्तरपदलोपश्छान्दसः । प्रयाजेभिः प्रयाजैः प्रयाजानाप्नोति अनुयाजैरनुयाजानाप्नोति । वषट्कारेभिर्वषट्कारानाप्नोति । आहुतिभिराहुतीराप्नोति । प्रैषादीनामुभयत्र सद्भावात् ॥१९॥

## विंशी ।

पशुभिः पशूनाप्नोति पुरोडाशैर्हवीꣳष्या । छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥ २० ॥

**उ०** पशुभिः पशून् । पशुभिः पशूनाप्नोति । पुरोडाशैः हवींषि आप्नोति । छन्दोभिः छन्दांसि सामिधेनीभिः सामिधेनीः याज्याभिर्याज्यान् । वषट्कारैर्वषट्कारानाप्नोति ॥ २० ॥

**म०** पशुभिः कृत्वा पशूनाप्नोति । पुराडाशैः पुरोडाशानाप्नोति । हविर्भिरन्यैर्हवींषि आप्नोति । छन्दोभिश्छन्दांसि आप्नोति । सामिधेनीभिः सामिधेनीराप्नोति । याज्याभिर्याज्या आप्नोति । वषट्कारैर्वषट्कारानाप्नोति । पश्वादीनामुभयत्र सद्भावात् अत्राप्युत्तरार्धलोपः पूर्ववत् ॥ २० ॥

## एकविंशी ।

धानाः करम्भः सक्तवः परीवापः पयो दधि । सोमस्य रूपꣳ हविष आमिक्षा वाजिनं मधु ॥२१॥

**उ०** धानाः करम्भः । उदकमन्थः करम्भः । सक्तवः परीवापः हविष्पङ्क्तिर्दधिपयः । दधि सोमस्य रूपम् हविषश्चात्र रूपम् । आमिक्षा पयस्या । वाजिनं मधु । मधुशब्दो वाजिनस्य विशेषणम् आनन्तर्यात् सोमसंस्तवश्च ॥ २१ ॥

**म०** धानादयः सोमस्य रूपं ध्येयाः । धानाः भृष्टधान्यम् । करम्भः उदमन्थः । सक्तवः प्रसिद्धाः । परीवापः हविष्पङ्क्तिः

'परिवापो जलस्थाने पर्युप्तपरिवारयोः' इति कोशः । पयोदधनी प्रसिद्धे । एतानि सोमरूपम् । आमिक्षा पयस्या । मधु मधुरम् । वाजिनं च हविषो रूपम् । उष्णे दुग्धे दध्नि क्षिप्ते घनभाग आमिक्षा । शिष्टं वाजिनम् ॥ २१ ॥

## द्वाविंशी ।

धानानाᳫं रूपं कुवलं परीवापस्य गोधूमाः । सक्तूनाᳫं रूपं बदरमुपवाकाः करम्भस्य ॥ २२ ॥

**उ०** धानानां रूपम् । अधस्तनमन्त्रोक्तानां सामहविषां सोमस्य च संपत्तिं सौत्रामणीद्रव्येष्वाह । धानानां रूपं कुवलं कोमलबदरम् । परीवापस्य गोधूमाः । सक्तूनां रूपं बदरम् । उपवाकाः करम्भस्य रूपम् । उपवाका यवकाः ॥२२॥

**म०** नन्वधस्तनमन्त्रे धानादीनां सोमरूपत्वमुक्तम् तेऽत्र कुत्र सन्तीति धानादिसोमहविषां सोमस्य संपत्तिं सौत्रामणीद्रव्यैराह । कुवलं कोमलं बदरीफलं धानानां पूर्वोक्तानां रूपं ध्येयम् । 'कुवलं बदरीफले । मुक्ताफलोत्पलयोश्च' इति कोशः । गोधूमाः परीवापस्य रूपम् । बदरं सर्वं बदरीफलं सक्तूनां रूपम् । उपवाका यवाः करम्भस्य रूपं ज्ञेयम् ॥ २२ ॥

## त्रयोविंशी ।

पयसो रूपं यद्यवा दध्नो रूपं कर्कन्धूनि । सोमस्य रूपं वाजिनᳫं सौम्यस्य रूपमामिक्षा ॥२३॥

**उ०** पयसो रूपम् । पयसो रूपं यत् यवाः । दध्नः रूपं कर्कन्धूनि । कर्कन्धुर्बदरविशेषः सोमस्य रूपम् । वाजिनं सोमस्य च रूपमामिक्षा पयस्या ॥ २३ ॥

**म०** यत् ये यवाः ते पयसो रूपम् । कर्कन्धूनि स्थूलबदराणि दध्नो रूपम् । वाजिनं सोमस्य रूपम् । आमिक्षा पयस्या सौम्यस्य चरोः रूपं ज्ञेयम् ॥ २३ ॥

## चतुर्विंशी ।

आश्रावयेति स्तोत्रियाः प्रत्याश्रावो अनुरूपः । यजेति धाय्यारूपं प्रगाथा येयजामहाः ॥ २४ ॥

**उ०** आश्रावय । इदानीं शस्त्रसंपत्तिः क्रियते । आश्रा ३ वय । इतिशब्दःप्रदर्शनार्थः । स्तोत्रियारूपः प्रत्याश्रावः अस्तु श्रौषट् । अनुरूपः यज इति । धाय्यारूपम् निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरम् धाय्या शस्यन्ते । प्रगाथा येयजामहाः येयजामहे इति प्रगाथाः ॥ २४ ॥

**म०** शस्त्रसंपत्तिमाह । आश्रावयेति शब्दः स्तोत्रियारूपो ज्ञेयः । स्तोत्रे प्रथमस्तृचोऽनुवाकः स्तोत्रियः । प्रत्याश्रावः अस्तु औषडिति शब्दः । अनुरूपः उत्तरस्तृचः तद्रूपः । यजेति शब्दो धाय्याया रूपम् । निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरं धाय्या शस्यते सा यजेति शब्दो ज्ञेयः । येयजामहाः येयजामह इति शब्दः प्रगाथाः प्रगाथरूपत्वेन ध्येयः ॥ २४ ॥

## पञ्चविंशी ।

अर्धऋचैरुक्थानाᳫं रूपं पदैराप्नोति निविदः । प्रणवैः शस्त्राणाᳫं रूपं पयसा सोम आप्यते ॥२५॥

**उ०** अर्धऋचैः उक्थानां रूपमाप्नोति । पदैः आप्नोति निविदः । निविदो न्यूङ्खा उच्यन्ते । प्रणवैः ओंकारैः शस्त्राणां रूपं । पयसा सोम आप्यते ॥ २५ ॥

**म०** ऋचामर्धानि अर्धऋचास्तैः 'अर्धर्चादयः पुंसि च' (पा० ७।४। ३१) इति पुंस्त्वम् 'ऋत्यकः' (पा० ६ । १ । १२८) इति ऋकारस्य सन्ध्यभावः । अत्रत्यैरर्धर्चैरुक्थानां शस्त्रविशेषाणां रूपमाप्यते प्राप्यते । पदैर्निविदो न्यूङ्खानाप्नोति । प्रणवैः ओङ्कारैः शस्त्राणां रूपमाप्यते । पयसा दुग्धेन सोम आप्यते । अर्धर्चादय उक्थादयो ध्येयाः ॥ २५ ॥

## षड्विंशी ।

अश्विभ्यां प्रातःसवनमिन्द्रेणैन्द्रं माध्यन्दिनम् । वैश्वदेवᳫं सरस्वत्या तृतीयमाप्तᳫं सवनम् ॥ २६ ॥

**उ०** अश्विभ्यां प्रातःसवनमाप्तम् । इन्द्रेण ऐन्द्रं माध्यन्दिनं सवनमाप्तम् । वैश्वदेवं तृतीयं सवनं सरस्वत्या आप्तम् ॥२६

**म०** सवनसंपत्तिमाह । अश्विभ्यां देवाभ्यां प्रातःसवनमाप्तं प्राप्तम् । इन्द्रेण देवेन ऐन्द्रमिन्द्रदेवत्यं माध्यन्दिनं सवनं प्राप्तम् । सरस्वत्या देवतया कृत्वा वैश्वदेवं विश्वदेवदेवत्यं तृतीयं सवनं प्राप्तम् ॥ २६ ॥

## सप्तविंशी ।

वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् । कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति ॥ २७ ॥

**उ०** वायव्यैः । सर्वेषां सोमपात्राणां वायव्यानीति संज्ञा । वायव्यैः वायव्यानि पात्राण्याप्नोति । सतेन द्रोणकलशम् । वैतसं पात्रं सत इत्युच्यते । कुम्भीभ्यां सुराधानीभ्यां शतच्छिद्राभ्याम् अम्भृणौ । अम्भृणौ पूतभृदाधवनीयावुच्येते । सुते अभिषुते सोमे यौ भवतः तौ आप्नोति । स्थालीभिः स्थालीः आप्नोति । उभयत्र हि स्थाल्यो भवन्ति ॥ २७ ॥

**म०** वायव्यानि सोमपात्राणि वायव्यैर्वायव्यानि पात्राणि आप्नोति । वैतसं पात्रं सतः तेन द्रोणकलशमाप्नोति । कुम्भी सुराधानी तद्द्वयमस्ति कुम्भीभ्यां शतच्छिद्राभ्यां सुराधानीभ्यामम्भृणौ पूतभृदाधवनीयौ सुतेऽभिषुते सोमे यौ स्तस्तावाप्नोति । स्थालीभिः कृत्वा स्थालीराप्नोति उभयत्र स्थालीसद्भावात् ॥ २७ ॥

## अष्टाविंशी ।

यजुर्भिराप्यन्ते ग्रहा ग्रहैः स्तोमाश्च विष्टुतीः ।

छन्दोभिरुक्थाशस्त्राणि साम्नावभृथ आप्यते ॥२८॥

उ० यजुर्भिराप्यन्ते । यजुर्भिः यजूंषि आप्यन्ते । ग्रहा ग्रहैराप्यन्ते । स्तोमाश्च विष्टुतीश्च छन्दोभिः उक्थशस्त्राणि साम्नावभृथ आप्यते । साम्ना साम आप्यते अवभृथेनावभृथः ॥ २८ ॥

म० यजुर्भिः यजूंषि आप्यन्ते । ग्रहा ग्रहैराप्यन्ते स्तोमैः स्तोमा आप्यन्ते । विष्टुतिभिर्विविधस्तुतिभिर्विष्टुतीर्विष्टुतय आप्यन्ते । छन्दोभिरुक्थाशस्त्राणि उक्थानि शस्त्राणि चाप्यन्ते । साम्ना सामाप्यते । अवभृथेनावभृथ आप्यते ॥ २८ ॥

## एकोनत्रिंशी ।

इडाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः । शंयुना पत्नीसंयाजान्त्समिष्टयजुषा सꣳस्थाम् ॥ २९ ॥

उ० इडाभिर्भक्षान् । इडाभिः इडामाप्नोति । भक्षैर्भक्षानाप्नोति । सूक्तवाकेन सूक्तवाकम् । आशीर्भिराशिषः । शंयुना शंयुमाप्नोति । पत्नीसंयाजैः पत्नीसंयाजानाप्नोति । समिष्टयजुषा समिष्टयजुराप्नोति । संस्थया संस्थामाप्नोति ॥२९॥

म० इडाभिरिडामाप्नोति । भक्षैर्भक्षानाप्नोति । सूक्तवाकेन सूक्तवाकमाप्नोति । आशीर्भिराशिष आप्नोति। शंयुना होमविशेषेण शंयुमाप्नोति । पत्नीसंयाजैः पत्नीसंयाजानाप्नोति । समिष्टयजुषा समिष्टयजुराप्नोति । संस्थया संस्थामाप्नोति । इडादीनामुभयत्र सद्भावात् ॥ २९ ॥

## त्रिंशी ।

व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ ३० ॥

उ० व्रतेन । हुतोच्छिष्टभक्षश्चतूरात्रिमग्निहोत्रं जुहोति । अनेन व्रतेन दीक्षामाप्नोति । दीक्षया दक्षिणामाप्नोति । दक्षिणा दक्षिणयेति विभक्तिव्यत्ययः । श्रद्धामाप्नोति । श्रदिति सत्यनामसु पठितम् । तदस्यां धीयते आस्तिक्येनैवमेतदिति सा श्रद्धा पुण्यकृतां मनोविशेषः । श्रद्धया सौत्रामण्या सत्यमाप्यते । सत्यम् ज्ञानमनन्तं ब्रह्म । त्रयीलक्षणं वा ॥ ३० ॥

म० हुतोच्छिष्टभक्षश्चतूरात्रिमग्निहोत्रं जुहोतीति । व्रतेन दीक्षामाप्नोति । दीक्षया दक्षिणामाप्नोति । दक्षिणा विभक्तिलोपः । दक्षिणया श्रद्धामाप्नोति । श्रदिति सत्यनाम । श्रत् सत्यं धीयते यस्यां सा श्रद्धा आस्तिक्यबुद्धिः पुण्यवतां मनोविशेषः । श्रद्धया सत्यं ज्ञानमनन्तं ब्रह्माप्यते प्राप्यते । श्रद्धां विना ज्ञानाभावात् ॥ ३० ॥

## एकत्रिंशी ।

एतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् । तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणीसुते ॥ ३१ ॥

उ० एतावत् । यत्परिमाणं रूपं सोमयज्ञस्य । यद्देवैश्च ब्रह्मणा च प्रजापतिना कृतं दृष्टम् । दर्शनकरणयोः को विशेष इतिचेत् । स्वप्नप्रतिबुद्धन्यायेन दर्शनम् । करणं तु बुद्धिपूर्वकम् । यदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी । पूर्वसवर्णदीर्घ आदेशश्छान्दसः । सौत्रामण्याख्ये सुते सुरासोमाभिषुते ॥ ३१ ॥

म० यज्ञस्य सोमयज्ञस्य एतावत् एतत्परिमाणं रूपम् देवैर्ब्रह्मणा प्रजापतिना च यद्रूपं कृतं दृष्टम् । दर्शनकरणयोः को भेदः । सुप्तप्रतिबुद्धन्यायो दर्शनं । बुद्धिपूर्वं तु करणम् । सौत्रामणी । सप्तम्येकवचनस्य पूर्वसवर्णदीर्घः । सौत्रामणी सौत्रामण्यां यज्ञे सुते सुरासोमेऽभिषुते सति तदेतत्सोमयागरूपं सर्वमाप्नोति ॥ ३१ ॥

## द्वात्रिंशी ।

सुरावन्तं बर्हिषदꣳ सुवीरं यज्ञꣳ हिन्वन्ति महिषा नमोभिः । दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ॥ ३२ ॥

उ० पयोग्रहाञ्जुहोति । सुरावन्तम् । त्रिष्टुबश्विसरस्वतीदेवत्या । यत् सुरावन्तं बर्हिषम् 'सुरावान्वा एष बर्हिषद्यज्ञो यः सौत्रामणी' । सुवीरं कल्याणवीरम् यज्ञं हिन्वन्ति वर्धयन्ति प्रापयन्ति वा । महिषा ऋत्विजः । नमोभिः नमस्कारैः अन्नैर्वा । दधानाः धारयन्तः । सोमं दिवि देवतासु । तत्र मदेम वयम् इन्द्रं यजमानाः । स्वर्काः शोभनार्चनाः कल्याणं मन्त्रा वा ॥ ३२ ॥

म० 'सुरावन्तमिति जुहोति' ( का० १९ । ३ । ८ ) । अध्वर्युस्त्रीनपि पयोग्रहान्सहैव जुहोतीत्यर्थः । एवं सौत्रामण्याः सोमसंपत्तिमापाद्य प्रकृतमनुसरति । चतस्रस्त्रिष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः । महिषा महान्तः ऋत्विजो यज्ञं सौत्रामणीसंज्ञं हिन्वन्ति वर्धयन्ति प्रापयन्ति वा । किंभूतं यज्ञम् । बर्हिषदं बर्हिषि सीदन्ति देवा यत्र स बर्हिषत्तम् । तथा सुरावन्तं सुरा विद्यते यत्र स सुरावान् तम् । 'सुरावान्वा एष बर्हिषद्यज्ञो यत्सौत्रामणी' ( १२ । ८ । १ । २ ) इति श्रुतेः । सुवीरं शोभना वीरा यत्र शोभनर्त्विजम् । कीदृशाः । महिषाः नमोभिरन्नैर्नमस्कारैर्वा सह दिवि स्वर्गे वर्तमानासु देवतासु सोमं दधानाः धारयन्तः । तत्र यज्ञे इन्द्रं यजमानाः यजन्तः सन्तो वयं मदेम हृष्येम। किंभूता वयम् । स्वर्काः शोभनोऽर्कोऽर्चनं मन्त्रा वा येषां ते स्वर्काः । यद्वा शोभनोऽर्कोऽन्नं येषां ते स्वर्का इति 'अर्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्धयन्ति' ( १२ । ८ । १ । २ ) इति श्रुतेः । 'अर्को देवो भवति यदेनमर्चन्ति अर्को मन्त्रो भवति यदेनेनार्चन्ति अर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्न' ( निरु० ५ । ४ ) इति यास्कः । महिषशब्दो यद्यपि महन्नामसु

पठितस्तथाप्यत्र ऋत्विग्वाचकः । 'महिषा नमोभिरित्यृत्विजो वै महिषाः' ( १२।८।१।२ ) इति श्रुतेः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

यस्ते॒ रसः॒ संभृ॑त॒ ओष॑धीषु॒ सोम॑स्य॒ शुष्मः॒ सुर॑या सु॒तस्य॑ । तेन॑ जिन्व॒ यज॑मानं॒ मदे॑न॒ सर॑स्वतीम॒श्विना॒विन्द्र॑म॒ग्निम् ॥ ३३ ॥

**उ०** सुराग्रहाञ्जुहोति । यस्ते रसः उक्ता देवता छन्दश्चाधस्तनया । हे सुरे, यस्तव रसः संभृतः एकीकृतः ओषधीषु वर्तमानः । सोमस्य च यः शुष्मः यद्बलम् । सुरया सह अभिषुतस्य तेनोभयेन रसेन बलेन च जिन्वन् प्रीणीहि यजमानम् मदेन सुरोत्थेन सरस्वतीं च । अश्विनौ च इन्द्रं च अग्निं च ॥ ३३ ॥

**म०** 'पालाशैः सौरान्नमृण्मयमाहुतिमानशे' ( का० १९।३।९ ) इति श्रुतेर्यस्त इति प्रतिप्रस्थाता पालाशोलूखलैः सुराग्रहान्दक्षिणेऽग्नौ यजति । मृण्मयपात्रमाहुतिं न व्याप्नोतीत्यर्थः । हे सुरे, ओषधीषु वर्तमानो यस्ते तव रसः संभृत एकीकृतः 'अपां वा एष ओषधीनांच रसो यत्सुरा' ( १२।८।१।४ ) इति श्रुतेः । सुरया सह सुतस्य सोमस्य च यः शुष्मः यद्बलम् । मदयतीति मदस्तेन मदेन मदजनकेन तेन सुरारसेन सोमशुष्मेण च यजमानं सरस्वतीमश्विनौ इन्द्रमग्निं च जिन्व प्रीणीहि ॥ ३३ ॥

## चतुस्त्रिंशी ।

यम॒श्विना॒ नमु॑चेरासु॒रादधि॒ सर॑स्वत्यसु॑नोदिन्द्रि॒याय॑ । इ॒मं तꣳ शु॒क्रं मधु॑मन्त॒मिन्दु॒ꣳ सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि ॥ ३४ ॥

**उ०** पयोग्रहान् भक्षयन्ति द्वाभ्यां त्रिष्टुब्भ्यामृत्विग्यजमानाः । यमश्विना नमुचिरसुर इन्द्रस्य इन्द्रियं वीर्यमपिबत् तस्य शिरसि छिन्ने लोहितमिश्रः सोम उदतिष्ठत् तदुत्पूयापिबन्त तदभिवादिनी एषा ऋक् । यत् अश्विना अश्विनौ । नमुचेरासुरात् असुरपुत्रात् अधि सकाशादाहृत्य । सरस्वती च असुनोत् अभ्यषुणोत् । इन्द्रियाय वीर्याय इन्द्रभैषज्याय वा । इमं तं शुक्रम् शुक्लम् असंसृष्टलोहितम् । मधुमन्तं रसवन्तम् । इन्दुम् । 'इदि परमैश्वर्ये' परमेश्वरम् । सोमं राजानम् इह भक्षयामि ॥ ३४ ॥

**म०** 'अध्वर्युः प्रतिप्रस्थाताग्नीध्रमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्तꣳ होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवदैन्द्रं यजमानः' ( का० १९।३।१०–१३ ) । त्रय आद्यत्वाश्विनं पयोग्रहं क्रमेण द्विर्द्विर्भक्षयन्ति सकृन्मन्त्रः । होत्रादयः सारस्वतं पयोग्रहमदन्ति यजमान ऐन्द्रं पयोग्रहमत्तीति सूत्रार्थः । नमुचिनेन्द्रस्य वीर्यं पीतम् तस्मिन् हते रुधिरमिश्रः सोमो जातस्तं देवाः पपुस्तदभिवादिन्येषा ऋक् । असुरस्यापत्यमासुरस्तस्मादसुरपुत्रान्नमुचेरधि सकाशाद् यं सोममाहरतामिति शेषः । 'अश्विनौ ह्येनं नमुचेरध्याहरताम्' ( १२।८।१।३ ) इति श्रुतेः । सरस्वती च यं सोममश्विभ्यामानीतमसुनोदभ्यषुणोत् । किमर्थम् । इन्द्रियाय इन्द्रस्य वीर्याय भैषज्याय वा । तमश्व्याहृतं सरस्वतीसुतमिमं राजानमिह यज्ञेऽहं भक्षयामि । कीदृशं सोमम् शुक्रं शुद्धं लोहितासंसृष्टमतएव मधुमन्तं रसवन्तमिन्दुम् । 'इदि परमैश्वर्ये' परमैश्वर्यप्रदम् ॥ ३४ ॥

## पञ्चत्रिंशी ।

यदत्र॑ रि॒प्तꣳ र॒सिनः॑ सु॒तस्य॒ यदिन्द्रो॒ अपि॑बच्छची॑भिः । अ॒हं तद॑स्य॒ मन॑सा शि॒वेन॒ सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि ॥ ३५ ॥

**उ०** यदत्र । यत् अत्र अस्यां सुरायाम् रिप्तं लिप्तं लग्नम् । रसिनः रसवतः सुतस्य अभिषुतस्य सोमस्य । यच्च इन्द्रः अपिबत्पीतवान् । इन्द्रदेवत्यो हि सोमः । शचीभिः कर्मभिः । अहं तत् । यत्तदिति सुविज्ञाते नपुंसकलिङ्गता । अस्य मनसा शिवेन सोमं राजानमिति षष्ठ्या विपरिणामः । सोमस्य राज्ञः इह भक्षयामि ॥ ३५ ॥

**म०** 'यदत्रेति सौरान्भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः' ( का० १९।३।१४ ) । अध्वर्य्वादय आश्विनं होत्रादयः सारस्वतं यजमान ऐन्द्रं सुराग्रहं यदत्रेति मन्त्रेण विहारदक्षिणे स्थिताः प्राचीनावीतिनो भक्षयन्ति आघ्राणमन्येन मूल्येन भक्षणमित्यर्थः । रसोऽस्त्यस्मिन्निति रसी तस्य रसिनो रसवतः सुतस्याभिषुतस्य सोमस्य यत् । सामान्ये नपुंसकत्वम् । यो भागः अत्र सुरायां रिप्तं लिप्तं सोमसंबन्धि यत् सुरायां लग्नम् । यच्च सुरालग्नं सोमांशं शचीभिः कर्मभिः शुद्धं कृत्वा इन्द्रः अपिबत् । सोमं राजानमिति द्वितीये षष्ठ्यर्थे अस्य विशेषणत्वात् । अस्य सोमस्य राज्ञः तत् तं सुरानिर्गतं सोमं शिवेन शुद्धेन मनसा इह यज्ञेऽहं भक्षयामि सुरासकाशाच्छुद्धं कृत्वा भक्षयामि । तथाच श्रुतिः 'अहं तदस्य मनसा शिवेनेत्यशिव इव वा एष भक्षो यत्सुरा ब्राह्मणस्य शिवमेवैनमेतत्कृत्वात्मन्धत्ते' ( १२।८।१।५ ) इति ॥ ३५ ॥

## षट्त्रिंशी ।

पि॒तृभ्यः॑ स्वधा॒यिभ्यः॑ स्व॒धा नमः॑ पिताम॒हेभ्यः॑ स्वधा॒यिभ्यः॑ स्व॒धा नमः॑ प्रपि॑ताम॒हेभ्यः॑ स्वधा॒यिभ्यः॑ स्व॒धा नमः॑ । अक्ष॒न्पित॑रो॒ऽमी॑मदन्त पि॒त॑रो॒ऽती॑तृपन्त पि॒त॑रः॒ पित॑रः॒ शुन्ध॑ध्वम् ॥ ३६ ॥

**उ०** अङ्गारेषु बर्हिष्परिधिषु सुरां जुहोति । पितृभ्यः पैत्राणि यजूंष्यस्यां कण्डिकायाम् । पितृभ्यः स्वधायिभ्यः

स्वधांप्रति गमनशीलाः स्वधायिनः 'सुप्यजातौ णिनिस्ताच्छील्ये'। स्वधानमः अन्नमस्तु । बहुवचनं पितृव्यसव्यपेक्षं पूजार्थं वा । पितामहेभ्यः उक्तोदर्कम् । प्रक्षालनेनोपसिञ्चति । अक्षन् अत्तवन्तः भक्षितवन्तः पितरः । अमीमदन्त मादिताः पितरः । अतीतृपन्त तर्पिताः पितरः । जपति पितरः पितरः शुंधध्वम् पाणिप्रक्षालनं कुरुध्वम् ॥ ३६ ॥

**म०** 'अङ्गारेषु वा बहिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रं' ( का० १९ । ३ । १७ ) सुराग्रहाणां भक्षणम् घ्राणम् अन्येन मूल्येन भूपालपानमिति पक्षत्रयमुक्तम् । चतुर्थमाह यद्वाहवनीयस्याङ्गारेषु परिधेर्बहिर्दक्षिणदिक्स्थेषु होमशेषान्सुराग्रहान्पितृभ्य इति प्रतिमन्त्रं जुहोति तदेवाह । उत्तरेऽङ्गारे आश्विनम् मध्यमे सारस्वतम् दक्षिणे ऐन्द्रं सुराग्रहं जुहोतीति सूत्रार्थः । अपसव्येन कर्म । सप्त यजूंषि पितृदेवत्यानि । पितृभ्यः स्वधासंज्ञकं नमोऽन्नमस्तु 'स्वधा वै पितृणामन्नम्' इति श्रुतेः । यद्वा पितृभ्यः स्वधान्नमस्तु तेभ्यो नमो नमस्कारश्चास्तु । कीदृशेभ्यः । स्वधायिभ्यः स्वधामन्नं प्रति यन्ति गच्छन्तीत्येवंशीलाः स्वधायिनस्तेभ्यः । 'इण् गतौ' इति धातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' ( पा० ३ । २ । ७८ ) इति णिनिप्रत्ययः । पितृभ्य इति बहुवचनं पितृव्याद्यपेक्षं पूजार्थं वा । एवं पितामहेभ्यः प्रपितामहेभ्य इति मन्त्रौ व्याख्येयौ । 'अक्षन्पितर इति प्रक्षालनेनोपसिञ्चति' ( का० १९ । ३ । १८ ) । सौरग्रहहोमपात्रक्षालनजलेन यथास्वमङ्गारान्सिञ्चति प्रतिमन्त्रम् । पितरः अक्षन्भक्षितवन्तः । 'घस्लृ अदने' लङि रूपम् । पितरोऽमीमदन्त 'मद तृप्तौ' तृप्ताः । अतीतृपन्त तर्पिता अस्माभिः पितरः । यद्वास्मानतीतृपन्त तर्पयन्ति तृप्ताः सन्तोऽभीष्टदानेन । 'पितरः शुन्धध्वमिति जपति' ( का० १९ । ३ । १९ ) हे पितरः, शुन्धध्वं शुद्धाः पाणिप्रक्षालनेन शुद्धा यूयं भवत ॥ ३६ ॥

## सप्तत्रिंशी ।

पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा । पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ ३७ ॥

**उ०** नवर्चं वाचयति पावमानं पुनन्तु मा । द्वे पित्र्यावनुष्टुभौ । पुनन्तु मां पितरः सोम्यासः सोमसंपादिनः । पुनन्तु मां पितामहाः । पुनन्तु प्रपितामहाः । पावनं च पापापनोदः । शुद्धिः फलग्रहणयोग्यता । केन पुनन्तु । पवित्रेण । कथंभूतेन । शतायुषा । येन पूतः शतायुर्भवति तत्पवित्रं तत्साधनत्वाच्छतायुरेव । पुनन्तु मां पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा । आदरार्थोऽभ्यासः विशेषार्थो वा । तथा मां पितृपितामहाः प्रपितामहाः पुनन्तु यथा विश्वं सर्वमायुः अहं व्यश्नवै व्यश्नुयां प्राप्नुयाम् ॥ ३७ ॥

**म०** 'कुम्भीमासज्य कुम्भवच्छतवितृण्णां वालपवित्रहिरण्यानन्तर्धाय नवर्चं वाचयति पुनन्तु मेति' ( का० १९ । ३ । २० ) । दक्षिणाहवनीयपार्श्वयोः स्तम्भद्वयोपरि दक्षिणाग्रं वंशं निधाय तत्रस्थे शिक्ये शतच्छिद्रां कुम्भीं निधाय कुम्भीतले वालादीनि निधाय तत्र सुराशेषं सिक्त्वाग्नेरुपरि स्रवन्त्यां सुरायां नवर्चं यजमानं वाचयेत् । वालो गोऽश्ववालकृतं सुरागलनम् । पवित्रमजाविलोमकृतं पयोगलनम् । हिरण्यं शतमानमितम् । प्रत्यृचं वाचनमिति सूत्रार्थः । द्वे पितृदेवत्येऽनुष्टुभौ । पितरो मा मां पुनन्तु शोधयन्तु । केन । पवित्रेण गोऽश्ववालकृतेन । कीदृशेन पवित्रेण । शतायुषा शतं शतवर्षमितमायुर्यस्मात्तच्छतायुस्तेन । येन पूतः शतायुर्भवतीत्यर्थः । पितामहाश्च मां पुनन्तु प्रपितामहाश्च मां पुनन्तु । कीदृशाः पित्रादयः । सोम्यासः सोम्याः सोमं संपादयन्ति सोम्याः । आदरार्थं पुनर्वचनम् । पितामहाः प्रपितामहाश्च मां पुनन्तु शतायुषा पवित्रेण । एवं पित्रादिभिः पूतोऽहं विश्वं सर्वमायुः व्यश्नवै व्याप्नवै प्राप्नुयाम् 'अशूङ् व्याप्तौ' लोट् ॥ ३७ ॥

## अष्टत्रिंशी ।

अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ ३८ ॥

**उ०** अग्न आयूंषि । आग्नेयी गायत्री । हे अग्ने, यतस्त्वम् आयूंषि पवसे आयुःप्रापकाणि कर्माणि चेष्टयसे स्वभावतएव अतस्त्वां प्रार्थये । आसुव अभ्यनुजानीहि । ऊर्जं दधि उपसेचनम् । इषं च व्रीह्यादि नः अस्माकम् । एतद्धि जीवनहेत्वित्यभिप्रायः । किंच आरे दूरे एवावस्थितं सन्तं बाधस्व तैस्तैरुपायैः । दुच्छुनां दुष्टं श्वानम् । शुना चात्र दुर्जनप्रभृतयो लक्ष्यन्ते । तैः रहितो हि पुरुषः परमायुः प्राप्नोति ॥ ३८ ॥

**म०** प्रजापतिदृष्टाग्निदेवत्या गायत्री । हे अग्ने, त्वमायूंषि पवसे स्वत एवायुःप्रापकाणि कर्माणि पावयसे चेष्टयसे । अन्तर्भूतण्यन्तः । अतएव नोऽस्मदर्थमिषं व्रीह्यादिधान्यमूर्जं दध्यादि च आसुव ज्ञापय देहीत्यर्थः । जीवनहेतुत्वात् । किंच आरे दूरेऽपि स्थितानां दुच्छुनां दुष्टाश्च ते श्वानश्च दुच्छ्वानः तेषाम् । कर्मणि षष्ठी । दुष्टान् शुनः सारमेयप्रायान्दुर्जनान्बाधस्व नाशयसि दुर्जने जीवनाशक्तेः ॥ ३८ ॥

## एकोनचत्वारिंशी ।

पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ ३९ ॥

**उ०** पुनन्तु मा । लिङ्गोक्तदेवतानुष्टुप् । पुनन्तु मा देवजनाः देवानुगामिनः । पुनन्तु मनसा संयुक्ताः । धियः

बुद्धयः कर्माणि वा । पुनन्तु विश्वानि भूतानि । त्वमपि हे जातवेदः पुनीहि माम् ॥ ३९ ॥

**म०** अनुष्टुप् देवजनधीविश्वभूतजातवेदोदेवत्या । देवजनाः देवानुगामिनो जना मां पुनन्तु । मनसा सह धियः बुद्धयः कर्माणि वा मां पुनन्तु । विश्वा विश्वानि सर्वाणि भूतानि मां पुनन्तु । हे जातवेदः, त्वमपि मां पुनीहि ॥ ३९ ॥

## चत्वारिंशी ।

पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँ२॥ रनु ॥ ४० ॥

**उ०** पवित्रेण । आग्नेयी गायत्री । पवित्रेण पुनीहि माम् शुक्रेण शोचिष्मता शुक्रेन अशबलेन । हे देव, दीद्यत् दीप्यमान हे अग्ने, क्रत्वा कर्माणि च क्रियया च क्रतून् तान् तान् च क्रतून् अनु ॥ ४० ॥

**म०** अग्निदेवत्या गायत्री । हे अग्ने हे देव, शुक्रेण शुक्लेन शुद्धेन पवित्रेण मा मां पुनीहि । किंभूतस्त्वम् । दीद्यत् अतिदीव्यतीति दीद्यत् दीप्यमानः । दिवेर्यङ्लुगन्तं रूपम् । किंच हे अग्ने, क्रतूननु अस्माकं यज्ञाननुलक्ष्य क्रत्वा क्रतुना कर्मणा त्वं पुनीहि यज्ञे मां पुनीहि । यद्वा यज्ञान्पुनीहि सम्यक् कारयेत्यर्थः ॥ ४० ॥

## एकचत्वारिंशी ।

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥ ४१ ॥

**उ०** यत्ते । आग्नेयी गायत्री । ब्राह्मस्तृतीयः पादः । यत्ते तव पवित्रम् अर्चिषि हे अग्ने, विततं प्रसारितम् । अन्तरा मध्येन ब्रह्म सत्यं ज्ञानमनन्तम् त्रयीलक्षणपरं वा । तेन पवित्रेण अभ्यनुज्ञातेन पुनातु मा माम् ॥ ४१ ॥

**म०** आग्नेयी गायत्री । तृतीयः पादो ब्रह्मदेवत्यः । हे अग्ने, ते तव अर्चिषि ज्वालायामन्तरा मध्ये यत् ब्रह्म त्रयीरूपं परब्रह्मरूपं वा पवित्रं विततं विस्तृतं प्रसारितं तेन पवित्रेण मा मां भवान् पुनातु ॥ ४१ ॥

## द्विचत्वारिंशी ।

पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ ४२ ॥

**उ०** पवमानः । सामदेवत्या गायत्री तृतीयः पादो वायव्यः । सः पवमानः सोमः । अद्य अस्मिन् द्यवि नः अस्मान् पवित्रेण विचर्षणिः । द्रष्टा कृताकृतावेक्षकः पुनातु । यश्च स्वभावतः पोता स पुनातु मां वायुः ॥ ४२ ॥

**म०** सोमदेवत्या गायत्री । तृतीयः पादो वायुदेवत्यः । स पवमानः पवतेऽसौ पवमानः शोधकः सोमः अद्यास्मिन् दिने पवित्रेण नोऽस्मान् पुनातु । कीदृशः सोमः । विचर्षणिः विविधं चष्टे विचर्षणिः द्रष्टा कृताकृतज्ञः । यद्वा विशिष्टाः चर्षणयो मनुष्याः ऋत्विजो यस्य सः । किंच यः पोता पुनाति पवते वा पोता वायुः स मा मां पुनातु ॥ ४२ ॥

## त्रिचत्वारिंशी ।

उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ ४३ ॥

**उ०** उभाभ्याम् । सावित्री गायत्री । हे देवसवितः, उभाभ्याम् पवित्रेण च । सवेनाभ्यनुज्ञया च । मां पुनीहि विश्वतः सर्वतः ॥ ४३ ॥

**म०** सवितृदेवत्या गायत्री । हे देव सवितः, उभाभ्यां कृत्वा विश्वतः सर्वतो मां पुनीहि । उभाभ्यां काभ्याम् । पवित्रेण अजाविलोमनिर्मितेन सवेनाभ्यनुज्ञया च त्वदाज्ञया यज्ञसिद्धिरित्यर्थः ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः । तया मदन्तः सधमादेषु वयꣳ स्याम पतयो रयीणाम् ॥ ४४ ॥

**उ०** वैश्वदेवी त्रिष्टुप् अनिर्ज्ञाताभिधेया प्रवह्लिकेव तत्र कांचिद्देवतामङ्गीकृत्य व्याचक्ष्महे । शतातृण्णाकुम्भी दक्षिणस्याग्नेरुपरिष्टात्क्षरति । सा चाभिधेया सौत्रामणीवा वाग्वा उखा वेत्यादि । विश्वेभ्यो देवेभ्यः आगता हिता वा वैश्वदेवी सुराकुम्भी । पुनती पावनं कुर्वाणा आगात् आगता । यस्याम् इमाः बह्व्यः धाराः तन्वः पुरः वीतपृष्ठाः कामितशरीराः । काम्यन्ते हि सुराधाराः । तया मदन्तः तया सह मोदमानाः । सधमादेषु 'सधमादस्थयोश्छन्दसि' इति सहस्य सधादेशः । सह मदनेषु वयं स्याम पतयः रयीणां धनानाम् ॥ ४४ ॥

**म०** विश्वदेवदेवत्या त्रिष्टुप् । इयं प्रवह्लिका अज्ञाताभिधेया । ततः कांचिद्देवतामुद्दिश्य व्याख्यास्यामः । दक्षिणाग्नेरुपरि शतातृण्णा कुम्भी क्षरति तां सौत्रामणीं वा वाचं वा उखां वा । देवी द्योतमाना सुराकुम्भी आगता । कीदृशी । वैश्वदेवी विश्वेभ्यः सर्वेभ्यो हिता वैश्वदेवी विश्वेभ्यो देवेभ्य आगता वा । पुनती पावनं कुर्वती । यस्यां कुम्भ्यामिमाः प्रत्यक्षतो दृश्यमानाः बह्व्यो बहुसंख्याकाः तन्वः शरीरप्राया धाराः वर्तन्ते । कीदृश्यस्तन्वः । वीतपृष्ठाः वीतमिष्टं पृष्ठं स्वरूपं यासां ताः कामितशरीराः सुराधाराः सुरैः काम्यन्ते । तया कुम्भ्या सधमादेषु यज्ञस्थानेषु मदन्तो मोदमानाः सन्तो वयं रयीणां धनानां पतयः स्याम भवेम । सह माद्यन्ति देवा येषु ते सधमादाः 'सध मादस्थयोश्छन्दसि' (पा० ६ । ३।९६) इति सहस्य सधादेशः ॥ ४४ ॥

## पञ्चचत्वारिंशी।

ये स॒मा॒नाः सम॑नसः पि॒तरो॑ यम॒राज्ये॑ । तेषा॑ लो॒कः स्व॒धा नमो॑ य॒ज्ञो दे॒वेषु॑ कल्पताम् ॥ ४५ ॥

उ० दक्षिणाग्नौ जुहोति। ये समानाः अनुष्टुप् पैत्री। ये समानाः जात्यादिभिः। समनसः समानमनस्काः पितरः यमराज्ये। लोकेत्यस्य हि स्वे लोके राज्यम्। तेषां पितृणां लोकः आयतनम् स्वधाशब्दोपलक्षितमन्नमस्तु। यद्वा तेषां पितृणां लोक आयतनं स्वधाकारोपलक्षितमन्नमस्तु। नमस्कारोपलक्षिता च स्तुतिर्भवतु। यज्ञस्तु देवेषु कल्पतां समर्थो भवतु॥ ४५॥

म० 'ये समाना इति यजमानो जुहोति' (का० १९। ३। २३)। सकृद्गृहीतमाज्यं दक्षिणेऽग्नौ प्राचीनावीती दक्षिणामुखो यजमानो जुह्वा जुहोतीत्यर्थः। द्वे अनुष्टुभौ। आद्या पितृदेवत्या। यमराज्ये यमस्य राज्यं यस्मिन् तत्र यमलोके ये पितरो वर्तन्ते 'धर्मराजः पितृपतिः' इत्यभिधानात्। कीदृशाः पितरः। समानाः जातिरूपादिभिस्तुल्याः। समनसः समानं मनो येषां ते तुल्यमनस्काः 'समानस्य छन्दसि' (पा० ६। ३। ८४) इति समानस्य सादेशः। तेषां पितृणां लोकः। विभक्तिव्यत्ययः। लोके स्वधा नमः स्वधाशब्दोपलक्षितं नमोऽन्नमस्तु। यद्वान्नं नमस्कारश्चास्तु। यज्ञस्तु देवेषु कल्पतां देवांस्तर्पयितुं समर्थो भवत्वित्यर्थः॥ ४५॥

## षट्चत्वारिंशी।

ये स॒मा॒नाः सम॑नसो जी॒वा जी॒वेषु॑ माम॒काः। तेषा॑ श्रीर्मयि॑ कल्पताम॒स्मिँल्लो॒के श॒तं समाः॑ ॥४६॥

उ० उत्तरेग्नावाज्याहुतिं जुहोति। ये समानाः अनुष्टुप्। यजमानाः ये समानाः समनसः जीवाः जीवनवन्तः। जीवेषु जीवनवत्सु मध्ये मामकाः मदीयाः। तेषां संबन्धिनी श्रीः मयि कल्पतां क्लृप्ता भवतु। तान् परित्यज्य मामाश्रयत्वित्यर्थः। पापात्मानो हि गोत्रिणो भवन्ति। कुत्र कियन्तं च कालमित्यत आह। अस्मिन् लोके शतं समाः। समाशब्दः संवत्सरवचनः॥ ४६॥

म० 'उत्तरे यज्ञोपवीत्युत्तरया' (का० १९। ३। २४)। उत्तरे उत्तरवेद्याहवनीये कृतसव्यो यजमान उत्तरयाग्निमया ऋचाज्यं जुहोतीत्यर्थः। यजमानाशीः श्रीदेवत्या। जीवन्तीति जीवास्तेषु जीवेषु प्राणिषु मध्ये ये समानाः समनसः समनस्काः मामका मदीया जीवाः प्राणिनः। सपिण्डाः ये मे ते मामकाः 'तवकममकावेकवचने' (पा० ४। ३। ३) इति अस्मदो ममकादेशः। अस्मिन् लोके भूलोके शतं समाः शतवर्षपर्यन्तं तेषां मामकानां जीवानां श्रीर्मयि कल्पतां तांस्त्यक्त्वा मयि क्लृप्ता भवतु। मामाश्रयतामित्यर्थः। गोत्रिणो हि पापात्मानः सहजाः शत्रवोऽत एवं प्रार्थ्यते॥ ४६॥

## सप्तचत्वारिंशी।

द्वे सृ॒ती अ॑शृणवं पितृ॒णाम॒हं दे॒वाना॑मु॒त मर्त्या॑नाम्। ता॒भ्या॑मि॒दं विश्व॒मेज॒त्सम॑ति॒ यद॑न्त॒रा पि॒तरं॑ मा॒तरं॑ च ॥ ४७ ॥

उ० पयः समन्वारब्धे जुहोति। द्वे सृती त्रिष्टुप्। पन्थानो ब्रवीति। ये एते शुक्लकृष्णे सृती यावेतौ देवयानपितृयाणौ पन्थानौ। अहमश्रृणवं पितृणां श्रुतिवाक्येभ्यः। 'स एष देवयानो वा पितृयाणो वा पन्था' इति। देवानां देवयानगामिनाम् उत अपिच मर्त्यानां मरणधर्मिणां पितृयाणगामिनाम्। ताभ्यामिदं विश्वमेजत्समेति। तदः स्थाने यदो वृत्तिः। याभ्यां पथिभ्याम् इदं सर्वम् एजत् क्रियावत् समेति संगच्छति। यत् अन्तरा पितरं मातरं च। द्यौः पिता पृथिवी माता। सुहुतं ताभ्यां सृतीभ्यामस्तु॥ ४७॥

म० 'अन्वारब्धेषु पयो जुहोति द्वे सृती इति' (का० १९। ३। २५)। ऋत्विग्यजमानेषु कृतान्वारम्भेषु अध्वर्युः पयोजुहोतीत्यर्थः। देवयानपितृयाणमार्गदेवत्या त्रिष्टुप्। मर्त्यानां मरणधर्मिणां प्राणिनां द्वे सृती द्वौ मार्गौ अहमश्रृणवं श्रुतवानस्मि श्रुतितः। 'स एष देवयानो वा पितृयाणो वा पन्था' इति श्रुतेः। के द्वे सृती अत आह। देवानां मार्ग एकः उतापि च पितृणाम् देवमार्गः पितृमार्गश्चेति। पितरं मातरम् द्यौः पिता पृथिवी माता। 'असौ वै पितेयं माता' (१२। ८। १। २१) इति श्रुतेः। पितरं मातरं च अन्तरा भूलोकद्युलोकयोर्मध्ये तत् एजत् कम्पमानं क्रियावत् विश्वं सर्वमिदं ताभ्यां सृतिभ्यां देवयानपितृयाणाभ्यां समेति संगच्छते ताभ्यां सृतिभ्यां सुहुतमस्तु॥ ४७॥

## अष्टचत्वारिंशी।

इ॒दं ह॒विः प्र॒जन॑नं मे अस्तु॒ दश॑वीरꣳ सर्व॑गणꣳ स्व॒स्तये॑। आ॒त्म॒सनि॑ प्र॒जा॒सनि॑ पशु॒सनि॑ लोक॒सन्य॑भय॒सनि॑। अ॒ग्निः प्र॒जां ब॑हु॒लां मे॑ करो॒त्वन्नं॒ पयो॒ रेतो॑ अ॒स्मासु॑ धत्त ॥ ४८ ॥

उ० शेषं यजमानो भक्षयति। इदं हविः व्यवसाना अष्टिर्यजमानाशीः। इदं पयोलक्षणं हविः प्रजननं उत्पादकम् मे मम अस्तु। दशवीरम्। 'प्राणा वै दशवीराः'। सर्वगणम्। 'अङ्गा वै सर्वगणाः'। स्वस्तये अविनाशाय। पुनरपि हविर्विशेष्यते। आत्मासनि आत्मानं यद्धविः सनोति संभजते तदात्मसनि। एवं प्रजासनि पशुसनि लोकसनि अभयसनि। अभयमपुनरावृत्तिः। अग्निः प्रजां बहुलाम् अतिवृद्धां मम करोतु। यूयं च हे ऋत्विजः, अन्नं च पयश्च रेतश्च अस्मासु धत्त॥ ४८॥

**म०** 'शेषं यजमानो भक्षयतीदꣳ हविरिति' ( का० १९। ३। २६ )। उखास्थितं शेषं पयो यजमानो भक्षयतीत्यर्थः। यजमानाशीर्देवत्या त्र्यवसाना अष्टिः एको व्यूहः। इदं पयोरूपं हविर्मे मम स्वस्तये अविनाशायास्तु। कीदृशं हविः। प्रजननं प्रजनयतीति प्रजननं प्रजोत्पादकम्। दशवीरं दश वीराः प्राणा यत्र तत्। यत्र पीते दशानां प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयसंज्ञानां प्राणानां स्वास्थ्यं भवतीत्यर्थः। 'प्राणा वै दशवीराः प्राणानेवात्मन्धत्ते' ( १२। ८। १। २२ ) इति श्रुतेः। तथा सर्वगणं सर्वे गणा अङ्गानि यस्मिंस्तत्। यत्र पीतेऽङ्गानि स्वस्थानि स्युरित्यर्थः। 'अङ्गानि वै सर्वे गणा अङ्गान्येवात्मन्धत्ते' (१२। ८। १। २२) इति श्रुतेः। आत्मसनि आत्मानं सनोति ददाति सनति संभजते वा 'षणु दाने' तुदादिः 'षण संभक्तौ' भ्वादिः। एवमग्रेऽपि। प्रजासनि पशुसनि 'आत्मानमेव सनोति पशून्सनोति' ( १२। ८। १। २२ ) इत्यादि श्रुतेः। लोकसनि लोकमैहिकं सनोति ऐहिकं सुखं ददातीत्यर्थः। 'लोकाय वै यजते तमेव जयति' ( २२ ) इति श्रुतेः। अभयसनि अभयं स्वर्गं सनोति 'स्वर्गो वै लोकोऽभयꣳ स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति' ( २२ ) इति श्रुतेः। एवं हविः प्रार्थ्याग्निं प्रार्थयते। अग्निर्मे मम प्रजां बहुलां प्रवृद्धां करोतु। एवमग्निमुक्त्वा ऋत्विज आह। हे ऋत्विजः, अस्मासु अन्नं व्रीह्यादि पयो दुग्धं रेतो वीर्यवत्तां यूयं धत्त स्थापयत। 'तद्य एव मेतेन याजयन्ति तानेतदाहैतन्मयि सर्वं धत्ते' ( २२ ) इति श्रुतेः॥ ४८॥

## एकोनपञ्चाशी।

उदी॑रता॒मव॑र॒ उत्परा॑स॒ उन्म॑ध्य॒माः पि॒तरः॑ सो॒म्यासः॑। असुं॒ य ई॒युर॑वृ॒का ऋ॑त॒ज्ञास्ते नो॑ऽवन्तु पि॒तरो॒ हवे॑षु॥ ४९॥

**उ०** उदीरताम्। त्रयोदश पैत्र्यस्त्रिष्टुभः जगत्येकादशी। यजमानवाचनम्। उदीरताम् 'ईर गतौ' उद् उपसर्गात्परः। ऊर्ध्वं क्रमतां ऊर्ध्वं गच्छन्तु। अवरे येऽस्मिन् लोके अवस्थिताः पितरः। उत्परासः पर एव परासः ये च परस्मिन् लोकेऽवस्थितास्तेऽपि उदीरताम् तस्मादपि स्थानाद्विशिष्टतरं स्थानं गच्छन्तु। उन्मध्यमाः। मध्ये भवा मध्यमाः। येऽपि मध्यमास्ते ततो विशिष्टतरस्थानमुद्गच्छन्तु। पितरः सोम्यासः सोमसंपादिनः। असुं ये ईयुः येऽपि असुं प्राणं ईयुः समन्वियुः वातात्मानः अवृका अनमित्राः मध्यस्थत्वमास्थिताः। ऋतज्ञाः सत्यज्ञा वा यज्ञज्ञा वा स्वाध्यायनिष्ठा वा। तेपि ततो विशिष्टतरं स्थानमृच्छन्तु। एवं च स्वकीयेन कर्मणा अस्मदीयेन च ये उन्नतिं प्राप्ताः ते नः अस्मान् अवन्तु पालयन्तु पितरः हवेषु आह्वानेषु॥ ४९॥

**म०** 'सोमवतां बर्हिषदामग्निष्वात्तानां च' ( का० १९। ३। २१ )। उदीरतामित्यादित्रयोदशर्चोऽनुवाकः तत्र। उदीरताम् ( ४९ ) अङ्गिरसः ( ५० ) ये नः ( ५१ ) इति ऋक्त्रयस्याग्निष्वात्त ( ६१ ) नित्यन्त्यायाश्च विनियोगः कल्पकृतोक्तः। त्वं सोम ( ५२ ) इति तृचं सोमवताम् बर्हिषद ( ५५ ) इति तृचं बर्हिषदाम् आयन्तु न ( ५८ ) इति तृचमग्निष्वात्तानाम् पुनन्तु ( ३९ ) इति नवर्चवाचनानन्तरं त्वं सोमेत्यादि ( ६२ ) तन्वं कल्पयातीत्यन्तं नवर्चं प्रत्यृचमध्वर्युर्यजमानेन वाचयतीत्यर्थः। त्रयोदश शङ्खदृष्टाः पितृदेवत्याः। एकादशी अग्निष्वात्ताः पितरः ( ५९ ) इयं जगती अन्या द्वादश त्रिष्टुभः। अवरे अस्मिन् लोकेऽवस्थिताः पितरः उदीरताम् ऊर्ध्वं क्रमन्ताम् ऊर्ध्वलोकं गच्छन्तु 'ईर कम्पने' अदादिः लोट्। परासः पराः परस्मिन् लोके स्थिताः पितर उदीरतां. तस्मादपि स्थानात् परं स्थानं गच्छतु। उन्मध्यमाः मध्ये भवा मध्यमाः पितरः उदीरताम्। कीदृशाः पितरः। सोम्यासः सोमं संपादयन्ति ते सोम्याः। ये च असुं प्राणमीयुः वातात्मानो वातरूपं प्राप्तास्ते पितरो हवेषु आह्वानेषु नोऽस्मानवन्तु रक्षन्तु। कीदृशाः। अवृकाः नास्ति वृकः शत्रुर्येषां ते उदासीनाः ऋतज्ञाः सत्यज्ञा यज्ञज्ञा वा स्वाध्यायनिष्ठा वा॥ ४९॥

## पञ्चाशी।

अङ्गि॑रसो नः पि॒तरो॒ नव॑ग्वा॒ अथ॑र्वाणो॒ भृग॑वः सो॒म्यासः॑। तेषां॑ व॒यꣳ सु॑म॒तौ य॒ज्ञिया॑ना॒मपि॑ भ॒द्रे सौ॑मन॒से स्या॑म॥ ५०॥

**उ०** अङ्गिरसो नः। अङ्गिरा ऋषिस्तस्यापत्यानि बहूनि अङ्गिरसः नः अस्माकं पितरः नवग्वाः नवगतयः पुनःपुनरपुनरुक्त्या गच्छन्ति। नवनीया स्तोतव्या वा गतिर्येषां ते तथोक्ताः। ये च अथर्वाणः बहून्यपत्यानि अथर्वाणः। थर्वतिश्चरति कर्मा तत्प्रतिषेधः। ये च भृगवः भृगोर्बहून्यपत्यानि। सोम्यासः सोमसंपादिनः। तेषां पितॄणां वयं सुमतौ स्याम। यज्ञियानां यज्ञसंपादिनाम्। अपिच भद्रे भन्दनीये सौमनसे कल्याणमनसे स्याम भवेम॥५०॥

**म०** ये नोऽस्माकं पितरः तेषां सुमतौ शोभनबुद्धौ वयं स्याम भवेम। अस्तेर्लिङ् तेऽस्मासु सुमतिं कुर्वन्त्वित्यर्थः। तेषां भद्रे कल्याणकारिणि सौमनसे शोभनमनस्त्वेऽपि वयं स्याम। सुमनसो भावः सौमनसम्। अस्मासु कल्याणं मनः कुर्वन्त्वित्यर्थः। कीदृशानां तेषाम्। यज्ञियानां यज्ञे हिता यज्ञियाः यज्ञसंपादिनः। कीदृशाः पितरः। अङ्गिरसः अङ्गिरसो बहून्यपत्यानि अङ्गिरसः बहुत्वे तद्धितलोपः। नवा नूतना ग्वा गतिर्येषां ते नवा नवनीया स्तोतव्या ग्वा येषामिति वा। अथर्वाणः अथर्वणो मुनेर्बहून्यपत्यानि। भृगवः भृगोरपत्यानि। सोम्यासः 'सोममर्हति यः' ( पा ४। ४। १३७ ) इति यः सोमसंपादिनः॥ ५०॥

## एकपञ्चाशी ।

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः । तेभिर्यमः सꣳरराणो हवीꣳष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ५१ ॥

उ० ये नः पूर्वे । ये नः अस्माकं पूर्वे पितरः सोम्यासः सोमसंपादिनः तेषां पितॄणाम् अनु ऊहिरे । 'वह प्रापणे' । देवाननु प्रापितवन्तः सोमपीथं सोमपानम् । वसिष्ठाः वसिष्ठस्य बहून्यपत्यानि । वसिष्ठः पुनर्वस्तृतमः कृतास्पदो वसति । तेभिः तैर्वसिष्ठैः यमः संरराणः संप्रियमाणः हवींषि । कथंभूतो यमः । उशन् 'वश कान्तौ' अस्य कृतसंप्रसारणस्यैतद्रूपम् । कामयमानः । कथंभूतैर्वसिष्ठैः । उशद्भिः । कथमत्तु । प्रतिकामम् यथाकामं भक्षयतु ॥ ५१ ॥

म० नोऽस्माकं ये पूर्वे पितरः सोमपीथं सोमपानमनूहिरे अनुवहन्ति स्म देवान् प्रापितवन्तः । कीदृशाः । सोम्यासः सोमसंपादिनः । वसिष्ठाः वसिष्ठस्य गोत्रापत्यानि । यमः तेभिः तैः पितृभिः संरराणः प्रीयमाणः सन् प्रतिकामं हवींषि अत्तु भक्षयतु । 'रा दाने' शानच्प्रत्ययः । कीदृशो यमः । उशन् वष्टि कामयत इत्युशन् कामयमानः । कीदृशैः तैः । उशद्भिः उशन्ति ते उशन्तः तैः कामयमानैः 'वश कान्तौ' शतृप्रत्ययः ॥ ५१ ॥

## द्विपञ्चाशी ।

त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ ५२ ॥

उ० त्वं सोम । हे सोम, प्रचिकितः चिकित्वान् चेतनावान् प्रकर्षेण चेतनावान् विशिष्टचैतन्ययुक्तः त्वं मनीषा । मनस इच्छाविशिष्टतरा भवति यज्वनाम् । यद्वा हे सोम, त्वं प्रचिकितः । 'कित ज्ञाने' प्रकर्षेण ज्ञातासि । यावत् ज्ञातव्यम् मनीषा मनीषया स्वया प्रज्ञया । त्वं च रजिष्ठम् ऋजुतरं देवयानाख्यम् अनुनेषि अनुनयसि । पन्थां पन्थानम् । किंच । तव प्रणीती प्रणयनेन तवाभ्यनुज्ञानेन पितरः नः अस्माकम् हे इन्दो, देवेषु मध्ये रत्नं रमणीयं यज्ञफलम् अभजन्त धीराः धीमन्तः ॥ ५२ ॥

म० त्वं मनीषा मनीषया स्वप्रज्ञया रजिष्ठमृजुतमं देवयानं पन्थां पन्थानमनुनेषि अनुनयसि प्रापयसि । मनीषा तृतीयैकवचने पूर्वसवर्णदीर्घः । अत्यन्तमृजुः रजिष्ठः 'अतिशायने तमबिष्ठनौ' ( पा० ५ । ३ । ५५ ) 'विभाषर्जोश्छन्दसि' ( पा० ६ । ४ । १६२ ) इत्यृकारस्य र इष्ठादिषु । पन्थाम् 'अयस्मयादीनि छन्दसि' ( पा० १ । ४ । २० ) इति सर्वनामस्थानेऽपि पदसंज्ञायां 'नलोपः प्रातिपदिकान्तस्य' ( पा० ८ । २ । ७ ) नलोपे सवर्णदीर्घे पन्थानमिति रूपम् । अनुनेषि नयतेः शपि लुप्ते गुणे लटि रूपम् । कीदृशस्त्वम् । प्रचिकितः 'कित ज्ञाने' प्रकर्षेण चिकितः चेतनावान् विशिष्टचैतन्ययुतः । किंच हे इन्दो सोम, नोऽस्माकं पितरः तव प्रणीती प्रणीत्या प्रणयनेनाभ्यनुज्ञानेन देवेषु विषये रत्नं रमणीयं यज्ञफलमभजन्त सिषेविरे सोमयागेनैव स्वर्गाप्तेः । कीदृशाः पितरः । धीराः धीमन्तः यज्ञज्ञानवन्तः ॥ ५२ ॥

## त्रिपञ्चाशी ।

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीꣳ२ ॥ रपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ ५३ ॥

उ० त्वया हि नः यस्मात्त्वया आश्रयभूतेन नः अस्माकं पितरः हे सोम, पूर्वे पूर्वजाः कर्माणि चक्रुः । कृतवन्तः हे पवमान, धीराः धीमन्तः । अव अतः प्रार्थये च त्वाम् वन्वन् संभजमानः तानि तानि कर्माण्यस्मदीयानि । अवातः वाताद्युपद्रवरहितः एकचित्तः । परिधीन् सर्वतो निहितान् यज्ञोपद्रवकारिणः अपोर्णु । 'ऊर्णुञ् आच्छादने' अपगमय । वीरेभिः वीरैश्चाश्वैश्च सहितः । मघवा धनवान् भव नः अस्माकम् । यो यस्य ददाति स तस्य धनवानिति मतिः ॥ ५३ ॥

म० हे सोम, हे पवमान शोधक, नोऽस्माकं धीरा धीमन्तः पूर्वे पूर्वजाः पितरः हि यस्मात्कारणात् त्वया कृत्वा कर्माणि यज्ञादीनि चक्रुः अतः प्रार्थये त्वं परिधीनुपद्रवकारिणः अपोर्णुहि अपगमय । 'ऊर्णुञ् आच्छादने' लोट् । परिदधति सर्वत उपद्रवाय तिष्ठन्ति ते परिधयो यज्ञोपद्रावकाः । कीदृशस्त्वम् । वन्वन् वनुत इति वन्वन् अस्मत्कर्माणि संभजमानः । तथाऽवातः नास्ति वातो यस्य । वात उपलक्षणं । वाताद्युपद्रवरहितः । किंच वीरेभिर्वीरैः अश्वैश्च सहितः सन्नोऽस्माकं मघवा धनवान् भव । मघं धनमस्यास्तीति मघवा । यो यस्य दाता स तदीयधनवानिति लोकप्रसिद्धिः । भवेत्यस्य संहितायां दीर्घः । परिधीन् अपेत्यत्र 'दीर्घादटि समानपादे' ( पा० ८ । ३ । ९ ) इति नकारस्य रुः ॥ ५३ ॥

## चतुःपञ्चाशी ।

त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आततन्थ । तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥ ५४ ॥

उ० त्वं सोम । यस्त्वं हे सोम, पितृभिः संविदानः संवादं कुर्वाणः । अनु द्यावापृथिवी आततन्थ । 'तनु विस्तारे' अन्वाततनोषि दृढीकरोषि द्यावापृथिव्यौ । तस्मै तव हे इन्दो, हविषा विधेम हविर्दद्म इति वाक्यार्थः । वयं च हविःप्रदानानन्तरं भवेम पतयो धनानां सोमवताम् । पितॄणां षड्चः समाप्तः ॥ ५४ ॥

**म०** हे सोम, त्वं द्यावापृथिवी अन्वाततन्थ विस्तारितवान् 'तनु विस्तारे' लिट् 'बभूथाततन्थ–' (पा० ७।२।६४) इत्यादिना निपातः। किंभूतस्त्वम्। पितृभिः संविदानः संवित्त इति संविदानः संवादं कुर्वाणः 'समो गमि–' (पा० १।३।२९) इत्यादिना आत्मनेपदित्वाच्छानच्। हे इन्दो, तस्मै ते तुभ्यं वयं हविषा विधेम हविर्दद्मः। विभक्तिव्यत्ययः विधतिर्दानार्थः। हविर्दानेन च वयं रयीणां धनानां पतयः स्याम भवेम॥ ५४॥ सोमवतां पितॄणां षड्चः समाप्तः।

### पञ्चपञ्चाशी।

बर्हिषदः पितर ऊत्युर्वागिमा वो हव्या चकृमा जुषध्वम्। त आगतावसा शंतमेनाथा नः शं योररपो दधात॥ ५५॥

**उ०** बर्हिषदः तिस्र ऋचो बर्हिषदाम्। हविर्यज्ञयाजिनो बर्हिषदः बर्हिषि सीदन्तीति बर्हिषदः पितरः। ऊती ऊत्या अर्वाक् अर्वाञ्च आगच्छत। को हेतुरागमन इति चेत्। इमा इमानि वः युष्माकं हव्या हवींषि चकृम। तानि जुषध्वं सेवध्वम्। यैश्च युष्माभिरधस्तनानि हवींष्यासेवितानि। ते यूयं पुनरप्याहूयमानाः आगताः। अवसा अन्नेन हविर्लक्षणेन। शंतमेन। शमिति सुखनाम। सुखयितृतमेन हेतुभूतेन अथ परितुष्टाः यज्ञसमाप्त्युत्तरकालम् नोऽस्माकं शंयोः पदद्वयमेतत्। शमनं च रोगाणां दधात। यावनं च भयानां दधात। अन्यदपि यत्किंचित् अरपः अपापं तदस्माकं दधात॥ ५५॥

**म०** अतो बर्हिषदां पितॄणां तृचः। बर्हिषदः बर्हिषि दर्भे सीदन्तीति बर्हिषदः। पृषोदरादित्वादन्त्यलोपः। हे बर्हिषदः पितरः, ते यूयमूत्या अवनेन निमित्तेन अर्वागागत आगच्छत। किमर्थमिति चेत्। वो युष्माकमिमा इमानि हव्या हव्यानि वयं चकृम। करोतेर्लिट्। कृतवन्तः तानि यूयं जुषध्वं सेवध्वम्। अथानन्तरं शंतमेन सुखयितृतमेनावसान्नेन तर्पिताः सन्तो नोऽस्माकं शं सुखं रोगशमनं यो भयपृथक्करणमरपः पापाभावं च दधात धत्त स्थापयत 'तप्तनप्–' (पा० ७।१।४५) इति तबादेशात् 'श्नाभ्यस्तयोरातः' (पा० ६।४।११२) इति आलोपाभावः। शं योः 'शमनं च रोगाणां यावनं च भयानाम्' इति यास्कः। 'रपो रिप्रमिति पापनामनी भवतः'॥ ५५॥

### षट्पञ्चाशी।

आहं पितॄन्त्सुविदत्राँ २॥ अवित्सि नपातं च विक्रमणं च विष्णोः। बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः॥ ५६॥

**उ०** आहम्। आ अवित्सि आभिमुख्येन वेद्मि विदितवान्। अहं पितॄन् सुविदत्रान्। सुविदत्रः कल्याणदानः। कल्याणदानान्। नपातं च विक्रमणं च विष्णोः व्याप्तुर्यज्ञस्य। न विद्यते यत्रोपगतानां पातः स नपातः देवयानः पन्थाः। विविधं क्रमणं यत्र गतानां स विक्रमणः पितृयाणः पन्थाः। तत्र हि अरघट्टघटीवत् उत्तराधरं प्राणिनो गच्छन्ति। देवयानपितृयाणौ पन्थानौ यज्ञसंबन्धिनावहं वेद्मि। तद्गतांश्च पितॄन्। यत एवमतो ब्रवीमि। बर्हिषदो ये पितरः स्वधया अन्नेन सह सवनीयलक्षणेन। सुतस्य अभिषुतस्य सोमस्य भजन्ते सेवन्ते। पित्वः पानं सोमपानं ते इह अस्मिन्कर्मणि आगमिष्ठाः आगच्छन्त्वित्याख्यातसन्नतिः॥ ५६॥

**म०** अहं पितॄन् आ अवित्सि आभिमुख्येन वेद्मि विदितवान्। विदेर्लुङि आत्मनेपदे उत्तमैकवचनरूपम्। कीदृशान् पितॄन्। सुविदत्रान् सुष्ठु विशेषेण ददतीति सुविदत्राः तान् कल्याणदानान्। किंच वेवेष्टि विष्णुः तस्य विष्णोः व्यापनशीलस्य यज्ञस्य 'यज्ञो वै विष्णुः' (१।१।३।१) इति श्रुतेः। तस्य नपातं विक्रमणं च वेद्मि। नास्ति पातो यत्र स नपातो देवयानपथः। यत्र गतानां पातो नास्ति विविधं क्रमणं गमनागमनं यत्र स विक्रमणः पितृयाणपथः। यत्र गतानां पुनर्भोगान्ते पतनम् यज्ञसंबन्धिनौ देवयानपितृयाणौ पन्थानौ वेद्मीत्यर्थः। उद्गामिनः पितॄंश्च। अतो ब्रवीमि ये बर्हिषदः पितरः स्वधया सवनीयलक्षणेनान्नेन सह सुतस्याभिषुतस्य सोमस्य पित्वः पानं भजन्त भजन्ते सेवन्ते। लङ् अडभाव आर्षः। ते इह यज्ञे आगमिष्ठाः आगच्छन्तु। लोडर्थे लुङ् पुरुषवचनव्यत्ययः॥ ५६॥

### सप्तपञ्चाशी।

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु। त आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तु तेऽवन्त्वस्मान्॥ ५७॥

**उ०** उपहूताः पितरः सोम्यासः सोमसंपादिनः। बर्हिष्येषु निधिषु प्रियेषु। हविर्विशेषणान्येतानि। बर्हिषि भवेषु बर्हिष्येषु बर्हिषि सादितेषु हविःष्वित्यर्थः। निधिभूतेषु पितॄणां प्रियेषु अभिरुचितेषु ते पितर एतज्ज्ञात्वा आगमन्तु आगच्छन्तु। आगत्य च ते इह श्रुवन्तु शृण्वन्तु अस्मदीयानि वचांसि। श्रुत्वा च अधिब्रुवन्तु यद्वक्तव्यं पितृभिः पुत्राणाम्। ते च अवन्तु रक्षन्तु सर्वतः अस्मान्॥ ५७॥

**म०** हे पितरः, इह यज्ञे आगमन्तु आगच्छन्तु। व्यत्ययेन शपो लुक्। ते श्रुवन्तु अस्मद्वचः शृण्वन्तु। श्रुत्वा च अधिब्रुवन्तु पितृभिः पुत्राणां यद्वक्तव्यं तद्वदन्तु। ते अस्मानवन्तु। कीदृशाः पितरः। प्रियेषु अभिरुचितेषु हविःषु उपहूताः सोम्यासः सोम्याः। कीदृशेषु प्रियेषु। बर्हिष्येषु बर्हिषि भवानि बर्हिष्याणि तेषु बर्हिषि सादितेषु तथा निधिषु निधिभूतेषु निधिवत्स्थापनीयेषु॥ ५७॥

## अष्टपञ्चाशी ।

आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५८ ॥

**उ०** आयन्तु नः । चतस्रोऽग्निष्वात्तेभ्यः । आयन्तु आगच्छन्तु नः अस्माकं पितरः । सोम्यासः सोमसंपादिनः । अग्निष्वात्ताः पुनः यान् अग्निरेव स्वदयति । नहि ते श्रौतस्मार्तकर्मकारिणः । पथिभिर्देवयानैः देवसहगमनैः । देवसहयायिनस्ते पितरो येषामेतत्कर्म क्रियते पुत्रपौत्रप्रपौत्रैः । उक्तं च 'पुत्रेण लोकं जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्' इति । आगत्य च । अस्मिन्यज्ञे स्वधया अन्नेन । मदन्तः तृप्यन्तः । परितुष्टा अधिब्रुवन्तु । तेऽवन्त्वस्मानिति व्याख्यातम् ॥ ५८ ॥

**म०** चतस्र ऋचोऽग्निष्वात्तानां पितृणाम् । नोऽस्माकं पितरः देवयानैः पथिभिर्मार्गैः आयन्तु आगच्छन्तु । देवैः सह यान्ति पितरो येषु ते देवयाना मार्गाः तैः । कीदृशाः पितरः । सोम्यासः सोम्याः सोमपानार्हाः । अग्निष्वात्ताः अग्निना स्वात्ताः स्वादिताः अग्निर्यान् दहन् स्वादयति । श्रौतस्मार्तकर्मानुष्ठायिनः । येषां पुत्रादिभिरेतत्कर्मानुष्ठीयते । तदुक्तम् 'पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्' इति । किंच पितर आगत्यास्मिन् यज्ञे स्वधयान्नेन मदन्तः तृप्यन्तस्तुष्टाः सन्तो नोऽस्मानधिब्रुवन्तु अधिकान् वदन्तु । तद्वाक्यात्तथैव वयमधिकाः स्यामेत्यर्थः । ते पितरोऽस्मानवन्तु पालयन्तु ॥ ५८ ॥

## एकोनषष्टी ।

अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः । अत्ता हवींᳫंषि प्रयतानि बर्हिष्यथा रयिᳫं सर्ववीरं दधातन ॥ ५९ ॥

**उ०** अग्निष्वात्ताः पितरः आ इह गच्छत । आगच्छत इह । एत्य च । सदःसदः गृहं गृहं प्रति सदत उपविशत । हे सुप्रणीतयः साधुप्रणयनाः । ततः सुखोपविष्टाः अत्त भक्षयत । हवींषि प्रयतानि व्यपगतरागद्वेषमोहैरभिसंस्कृतानि शुचीनि । बर्हिषि अन्नानि । अथ तृप्ताः सन्तः रयिं धनं सर्ववीरं दधातन । नकार उपजनः ॥ ५९ ॥

**म०** हे अग्निष्वात्ताः पितरः, इह यज्ञे यूयमागच्छत । आगत्य च सदःसदः प्रतिगृहं सदत उपविशत 'नित्यवीप्सयोः' ( पा० ८ । १ । ४ ) इति द्वित्वम् । कीदृशा यूयम् । सुप्रणीतयः शोभना प्रणीतिः प्रणयनं येषां ते । ततः सदस्युपविष्टाः सन्तः हवींषि अत्त भक्षयत । अत्तेर्लोट् संहितायां दीर्घः । कीदृशानि हवींषि । बर्हिषि दर्भे प्रयतानि नियमपूर्वकं स्थापितानि प्रकर्षेण यम्यन्ते नियम्यन्ते तानि प्रयतानि । अथानन्तरं तृप्ताः सन्तः सर्ववीरं रयिं दधातन स्थापत सर्वे वीरा वा यत्र तम् । 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति दीर्घोऽथशब्दस्य 'तप्तनप्' ( पा० ७ । १ । ४५ ) इति तनवादेशः ॥ ५९ ॥

## षष्टी ।

ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते । तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति ॥ ६० ॥

**उ०** ये अग्निष्वात्ताः ये पितरः अग्निष्वात्ता अग्निना आस्वादिताः ये च अनग्निष्वात्ताः श्मशानकर्माप्राप्ताः । मध्ये दिवः द्युलोकस्य स्वधया स्वकर्मफलोपभोगेन मादयन्ते सुखं संसेवन्ते । तेभ्यः । तेषामिति विभक्तिव्यत्ययः । स्वराट् स्वयमेव राजत इति स्वराट् । अकृतकैश्वर्यो यः स स्वराडुच्यते । असुनीतिम् एताम् आत्मनो द्वितीयं सहायं कृत्वा । असून् प्राणान्नयतीत्यसुनीतिः । एताम् एतमिति लिङ्गव्यत्ययः । यथाकामं यथारुचि तन्वं शरीरं कल्पयाति कल्पयतु ॥ ६० ॥

**म०** ये पितरः अग्निष्वात्ताः अग्निना दग्धाः विधिवदौर्ध्वदेहिकं प्राप्ताः । ये चानग्निष्वात्ता न अग्निना स्वादिता अदग्धाः श्मशानकर्म न प्राप्ताः सन्तः दिवः स्वर्गस्य मध्ये स्वधयान्नेन स्वकर्मोपार्जितेन मादयन्ते तृप्यन्ति सुखं सेवन्ते । स्वराट् स्वेनैव राजते स्वराट् यमः तेभ्यः पितृभ्योऽर्थे यथावशं वशोऽभिलाषः यथाकाममेतां मनुष्यसंबन्धिनीं तन्वं शरीरं कल्पयाति कल्पयतु । लेट् 'लेटोऽडाटौ' तेभ्यो नरशरीरं यमो ददात्वित्यर्थः । कीदृशीं तन्वम् । असुनीतिम् असून् प्राणान् नयति प्राप्नोत्यसुनीतिः प्राणयुक्ता चिरकालजीविनीत्यर्थः । ते यथा पुनः स्तम्भनं कुर्वन्ति ॥ ६० ॥

## एकषष्टी ।

अग्निष्वात्तानृतुमतो हवामहे नाराशᳫंसे सोमपीथं य आशुः । ते नो विप्रासः सुहवा भवन्तु वयᳫं स्याम पतयो रयीणाम् ॥ ६१ ॥

**उ०** अग्निष्वात्तान् । अग्निष्वात्तान् पितॄन् ऋतुमतः ऋतुसंयुक्तान् हवामहे आह्वयामः । नाराशंसे सोमपीथं सोमपानम् ये आशुः प्राप्नुयुः । नाराशंसे चमसे पितॄणां भक्षः श्रूयते । 'अथ यदि नाराशंसेषु सन्न' इत्युपक्रम्य । 'पितृभ्यो नाराशᳫंसेभ्यः' इति । ते चाहूयमानाः विप्रासः मेधाविनः सुहवाः स्वाह्वाना भवन्तु । एवं कृते वयं स्याम पतयो रयीणाम् ॥ ६१ ॥

**म०** अग्निष्वात्तान् पितॄन् वयं हवामहे आह्वयामः । कीदृशान् । ऋतुमतः ऋतवो विद्यन्ते येषु ते ऋतुमन्तः तानृतुयुक्तानाह्वयामः । ये पितरो नाराशंसे चमसे सोमपीथं सोमपानमाशुः अश्नन्ति स्म 'अश भोजने' लिट् । 'अथ यदि नाराशᳫं-

षेषु सन्न' इत्युपक्रम्य 'पितृभ्यो नाराशꣳसेभ्यः स्वाहेति जुहुयात्' ( १२।६।१।३३ ) इति श्रुत्या नाराशंसे चमसे पितॄणां भक्षः प्रतिपादितः । ते पितरो नोऽस्माकं सुहवाः स्वाह्वाना भवन्तु । अस्मदाहूताः शीघ्रमायान्त्वित्यर्थः । एवं पितृष्वाहूतेषु वयं रयीणां धनानां पतयः स्वामिनः स्याम भवेम ॥ ६१ ॥

## द्विषष्टी ।

आच्या जानु॑ दक्षिण॒तो नि॒षद्ये॒मं य॒ज्ञम॒भिगृ॑णीत॒ विश्वे॑ । मा हि॑ꣳसिष्ट पितरः॒ केन॑चिन्नो॒ यद्व॒ आग॑ः पुरु॒षता॒ करा॑म ॥ ६२ ॥

**उ०** आच्या जानु । दशर्चोऽनुवाकः । तत्र नव पित्र्या दशम्यैन्द्री गायत्री । द्वितीयातृतीये नवमी चानुष्टुभः । त्रिष्टुभ इतराः । पितर उच्यन्ते । आच्याजानु सव्यं जानु पातयित्वा । दक्षिणतो निषद्य दक्षिणतोऽवस्थानं कृत्वा । रूपतोयं निर्देशः । एवंस्वभावा ह्येते । 'अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीत' इति श्रुतिः । इममस्मदीयं यज्ञम् अभिगृणीत अभिष्टुवत दक्षिणामन्त्रकालकर्तृहविर्यजमानोत्कर्षैः साध्वयं यज्ञ इति । विश्वे सर्वे सोमवन्तः बर्हिषदः अग्निष्वात्ताश्च । मा च हिंसिष्ट । माच हिंसां कुरुत । हे पितरः केनचिदपि नः अस्मान् यत् यद्यपि वः युष्माकम् आगः अपराधः । आगःशब्दः सान्तो नपुंसकलिङ्गोऽपराधवचनः । पुरुषता । विभक्तिलोपः पुरुषत्वेन चलचित्ततया । कराम कुर्मः ॥ ६२ ॥

**म०** कात्यायनेन आच्या जान्वित्यनुवाकस्य विनियोगो नोक्तः । उदीरतामित्यनुवाकद्वयस्य श्राद्धेऽश्नत्सु द्विजेषु जपे विनियोगः । दशर्चोऽनुवाकः । आद्या नव पितृदेवत्याः । द्वे त्रिष्टुभौ । हे पितरः, विश्वे सर्वे सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्च यूयमिमं यज्ञं सौत्रामणीमभिगृणीत अभिष्टुत । दक्षिणामन्त्रकालकर्तृहविर्यजमानोत्कर्षैः साध्वयं यज्ञ इति स्तुतिं कुरुतेत्यर्थः । किं कृत्वा । जान्वाच्य वामजानु पातयित्वा । तथा दक्षिणतो निषद्य दक्षिणाभिमुखा उपविश्य । स हि तेषां स्वभावः । 'अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्' इति श्रुतेः । किंच हे पितरः, केनचित् केनाप्यपराधेन नोऽस्मान् मा हिंसिष्ट हिंसां मा कुरुत । हिनस्तेर्लुङ् । यत् यस्मात् पुरुषता पुरुषस्य भावः पुरुषता विभक्तिलोपः । पुरुषभावेन चलचित्तत्वेन वो युष्माकमागोऽपराधं वयं कराम कुर्मः । करोतेः शपि लङि रूपम् अडभावः । यद्यप्यपराधिनो वयं तथापि मास्मान् वधिष्टेत्यर्थः ॥ ६२ ॥

## त्रिषष्टी ।

आसी॑नासो अरु॒णीना॑मु॒पस्थे॑ र॒यिं ध॑त्त दा॒शुषे॒ मर्त्या॑य । पु॒त्रेभ्य॑ः पितर॒स्तस्य॒ वस्व॒ः प्रय॑च्छत॒ त इ॒होर्जं॑ दधात ॥ ६३ ॥

**उ०** आसीनासः ये यूयमासीनाः । अरुणीनाम् अरुणवर्णानां अरुणवर्णाहि ता ऊर्णा भवन्ति याभिः कुतपाः क्रियन्ते कुतपप्रियाश्च पितरः 'कुतपंचासने दद्यात्' इति स्मृतिः । यद्वा अरुणवर्णानां रश्मीनाम् उपस्थे उत्सङ्गे आसीना आदित्यलोकजितःपितर उच्यन्ते । रयिं धनम् धत्त दत्त । दाशुषे हवींषि दत्तवते यजमानाय मर्त्याय मनुष्याय । पुत्रेभ्यश्च हे पितरः, यजमानार्थं पुत्रवचनम् । सर्वे हि पितॄणां पुत्रा यजमानाः । तस्य यजमानस्य वस्वः प्रयच्छत दत्त । यदभिप्रेतं वसुनो धनस्य च इह अस्मदीये ऊर्जं दधात स्थापयत ॥ ६३ ॥

**म०** हे पितरः, दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय यूयं रयिं धनं धत्त दत्त । कीदृशा यूयम् । अरुणीनामरुणवर्णानामूर्णानामुपस्थे उपरिभागे आसीनासः आसीनाः उपविष्टाः । याभिः कुतपाः क्रियन्ते ता ऊर्णा अरुणा भवन्ति 'कुतपं चासने दद्यात्' इति स्मृतेः कुतपप्रियाः पितरः । यद्वा अरुणीनामरुणवर्णानां रश्मीनामुपस्थे उत्सङ्गे आसीनाः । आदित्यलोकस्था इत्यर्थः । किंच हे पितरः, पुत्रेभ्यो यजमानेभ्यः तस्य वस्वः वसुनो धनस्य प्रयच्छत दत्त । कर्मणि षष्ठी । यदभीष्टं धनं तद्दत्त । पितॄणां पुत्रा एव यजमानाः । ते यूयमिहास्मदीये यज्ञे ऊर्जं रसं दधात स्थापयत ॥ ६३ ॥

## चतुःषष्टी ।

यम॑ग्ने कव्यवाहन॒ त्वं चि॒न्मन्य॑से र॒यिम् । तं नो॑ गी॒र्भिः श्र॒वाय्यं॑ देव॒त्रा प॑नया यु॒जम् ॥ ६४ ॥

**उ०** यमग्ने कव्यवाहन । स्विष्टकृदग्निरुच्यते चतसृभिर्ऋग्भिः । हे अग्ने कव्यवाहन, कव्यं वोढव्यमेत्ययमधिकारो यस्य स एवं संबोध्यते । यं रयिं हविर्लक्षणं धनम् त्वं चित् त्वमपि मन्यसे अवगच्छसि । साधु शक्यते तेन श्रेयः प्राप्तुमिति । तं हविर्लक्षणं रयिं धनम् नः अस्माकं स्वभूतम् गीर्भिः वाग्भिः पुरोनुवाक्यायाज्यावषट्कारलक्षणाभिः । श्रवाय्यम् हविर्विशेषणमेतत् । श्रवणीयम् देवत्रा देवेभ्यः पनय देहि । पनतिर्दानकर्मा । युजं यथायोगम् ॥ ६४ ॥

**म०** द्वे अनुष्टुभौ । कव्यं पितृभ्यो देयमन्नं वहतीति कव्यवाहनः 'कव्यपुरीषपुरीष्येषु ञ्युट्' ( पा० ३।२।६५ ) इति ञ्युट्प्रत्ययः । हे कव्यवाहन हे अग्ने, त्वं चित् त्वमपि यं रयिं हविर्लक्षणं धनं मन्यसे उत्तमं जानासि नोऽस्माकं तं रयिं देवत्रा देवेषु पनय देहि । पनतिर्दानकर्मा । 'देवमनुष्यपुरुष' ( पा० ५।४।५६ ) इत्यादिना सप्तम्यर्थे देवात् त्राप्रत्ययः । कीदृशं रयिम् । गीर्भिः वाग्भिः पुरोनुवाक्यायाज्यावषट्कारलक्षणाभिः श्रवाय्यं श्रोतुं योग्यम् 'श्रुदक्षिस्पृहिगृहिदयिभ्य

आग्यः' ( उणा० ३ । ९५ ) इति श्रणोतेराग्यप्रत्ययः । तथा युजं युज्यत इति युक् तम् 'क्विप् च' ( पा० ३ । २ । ७६ ) इति क्विप्प्रत्ययः योग्यम् ॥ ६४ ॥

## पञ्चषष्टी ।

यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः । प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥६५॥

**उ०** यो अग्निः कव्यवाहनः कव्यं पितॄणां हविरुच्यते । यच्च हविः पितॄन् यक्षत् इष्टवान् ऋतावृधः सत्यवृधो वा यज्ञवृधो वा । द्वितीयाबहुवचनमेतत् । स इदानीम् प्रेदु हव्यानि वोचति । प्रवोचति प्रब्रवीतु हव्यानि हवींषि । देवेभ्यश्च पितृभ्य आ । समुच्चयार्थीय आकारः । देवेभ्यश्च पितृभ्यश्च । इमानि देवेभ्य इमानि पितृभ्य इति ॥ ६५ ॥

**म०** यः कव्यवाहनोऽग्निः पितॄन्यक्षदिष्टवान् 'लेटोऽडाटौ' 'सिब्बहुलं लेटि' इतो लोपः । कीदृशान् पितॄन् । ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ते ऋतावृधः । संहितायां दीर्घः । तान् । सोऽग्निरिदानीं देवेभ्यः पितृभ्यश्च हव्यानि हवींषि प्रवोचति प्रब्रवीतु । इमानि देवेभ्य इमानि पितृभ्य इति वदत्वित्यर्थः । इत् उ निपातौ पादपूरणौ । आकारः समुच्चयार्थः । व्यत्ययेन वचेः शपि 'वच उम्' ( पा० ७ । ४ । २० ) इति छान्दस उमागमः ॥ ६५ ॥

## षट्षष्टी ।

त्वमग्न ईडितः कव्यवाहनावाड्ढव्यानि सुरभीणि कृत्वी । प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि ॥ ६६ ॥

**उ०** त्वमग्ने । यस्त्वं हे अग्ने, ईडितः अध्येषितः सन् कव्यवाहन अवाट् 'वह प्रापणे' इत्यस्यैतद्रूपम् । ऊढवानसि । हव्यानि हवींषि । सुरभीणि सुगन्धीनि । कृत्वी कृत्वा । कृत्वा हवींषि । प्रादाः प्रदत्तवानसि पितृभ्यः स्वधया पितृमन्त्रेण । ते च पितरः । अक्षन् अत्तवन्तो भक्षितवन्तः । अद्धि भक्षय त्वं हे देव । प्रयता प्रयतानि शुचीनि हवींषि ॥ ६६ ॥

**म०** चतस्रस्त्रिष्टुभः । हे कव्यवाहन, हे अग्ने, त्वं हव्यानि हवींषि सुरभीणि कृत्वी सुगन्धानि कृत्वा अवाट् वहसि स्म । वहेर्लुङि इडागमाभावे सिचो लोपे रूपमवाट् । 'स्नात्व्यादयश्च' ( पा० ७ । १ । ४९ ) इति कृत्वीति निपातः । कीदृशस्त्वम् । ईडितः स्तुतः देवैर्ऋत्विग्भिश्च । किंच हव्यानि ऊढ्वा स्वधया पितृमन्त्रेण पितृभ्यः त्वं प्रादाः दत्तवानसि । ददातेर्लुङि रूपम् । ते च पितरः अक्षन् भक्षयन्ति स्म । 'घस्लृ अदने' इत्यस्य रूपम् । हे देव, त्वमपि अद्धि हवींषि भक्षय । 'अद भक्षणे' लोट् । कीदृशानि हवींषि । प्रयता प्रयतानि शुद्धानि ॥ ६६ ॥

४८ य० उ०

## सप्तषष्टी ।

ये चेह पितरो ये च नेह यांश्च विद्म याँ२॥ उ च न प्रविद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व ॥ ६७ ॥

**उ०** ये चेह । ये पितरः इहास्मिन्समीपे इह वा लोके आसते । ये च नेह । यान् च पितॄन् विद्मः अवगच्छामः । यान् । उ इति निपातः पादपूरणः । च न प्रविद्मः न प्रजानीमः । त्वं वेत्थ यति ते जातवेदः । तेशब्दः आदौ क्रियते द्वितीयान्तो वाक्यस्य बलीयस्त्वात् । तान् त्वं वेत्थ वेत्सि जानासि । यति । अविभक्तिको निर्देशः । यतीन् शुचीन् नित्यनैमित्तिककर्मकरणानिर्दग्धकल्मषान् । हे जातवेदः । अतएवमुच्यसे । स्वधाभिः पितृसंबद्धैर्हविर्भिः । यज्ञं पितृयज्ञम् । सुकृतं साधुकृतम् । जुषस्व सेवस्व ॥६७॥

**म०** ये पितर इह लोके वर्तन्ते ये च इह लोके न सन्ति यांश्च पितॄन् वयं विद्म जानीमः । उ पादपूरणः । यांश्च पितॄन् वयं न प्रविद्म न प्रकर्षेण जानीमः । हे जातवेदः, ते पितरो यति यावन्तो वर्तन्ते तान् त्वं वेत्थ जानासि । या संख्या येषां ते यति 'किमः संख्यापरिमाणे' ( पा० ५ । २ । ४१ ) इत्यादिना सूत्रेण यत्तस्मामपि डतिरिति वार्तिकेन यच्छब्दात् डतिप्रत्ययः 'डति च' ( पा० १ । १ । २५ ) इति तस्य षट्संज्ञत्वात् 'षड्भ्यो लुक्' ( पा० ७ । १ । २२ ) इति जसो लुक् । यद्वा यतीन् शुचीन् नित्यनैमित्तिकानुष्ठानैर्निष्पापान् ते तान् त्वं वेत्थ । यति विभक्तिलोपः ते इत्यत्र व्यत्ययेन जस् । किंच स्वधाभिः पितॄणामन्नैः सुकृतं शोभनं कृतं यज्ञं त्वं जुषस्व सेवस्व ॥ ६७ ॥

## अष्टषष्टी ।

इदं पितृभ्यो नमोऽस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥ ६८ ॥

**उ०** इदं पितृभ्यः । इदमिति प्रत्यक्षतो निर्देशः । पितृभ्यो नमः अन्नं हविर्लक्षणं अस्तु । अद्य अद्यतनम् ये पितरः पूर्वासः पूर्वमीयुः स्वर्गम् । ये च उपरासः उपरतव्यापाराः कृतकृत्याः परं ब्रह्म ईयुर्याताः । ये च पार्थिवे रजसि । पृथिव्यां भवं पार्थिवं रजः ज्योतिरग्निः तत्र आनिषत्ताः आभिमुख्येन निषण्णाः । अग्निलोकं प्राप्ता इत्यर्थः । ये वा ये च नूनं निश्चयेन । सुवृजनासु साधुवृत्तासु । विक्षु यजमानेषु निषण्णाः । तेभ्य इदं पितृभ्यो नमो अस्त्वद्येति संबन्धः ॥ ६८ ॥

**म०** ये पितरः पूर्वासः पूर्वे ईयुः स्वर्गं जग्मुः । ये च उपरासः उपराः उपरमन्ते विरमन्ति ते उपरा उपरतव्यापाराः कृतकृत्याः सन्त ईयुः परं ब्रह्म प्रापुः । ये च पार्थिवे रजसि

पृथिव्यां भवं पार्थिवं रजो ज्योतिरग्निः तस्मिन्ना निषत्ताः आभिमुख्ये निषण्णाः 'नसत्तनिषत्त-' ( पा० ८।२।६१ ) इत्यादिना निष्ठायां निपातः । ये वा । वा समुच्चयार्थः । ये च नूनं निश्चितं विक्षु प्रजासु यजमानलक्षणासु निषण्णाः । कीदृशीषु विक्षु । सुवृजनासु शोभनं वृजनं बलं यासां ताः सुवृजनास्तासु धर्मरूपबलयुक्तासु । अद्यास्मिन् दिने तेभ्यश्चतुर्विधेभ्यः स्वर्गब्रह्माग्नियजमानस्थेभ्यः इदं नमोऽन्नमस्तु ॥ ६८ ॥

## एकोनसप्ततितमी ।

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः । शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरपव्रन् ॥ ६९ ॥

**उ०** अधा यथा । अथैवं सति यथा येन प्रकारेण नः अस्माकं पितरः परासः पराएव परासः उत्कृष्टाः । प्रत्नासः । प्रत्नशब्दः पुराणवचनः । पुराणाः हे अग्ने, ऋतं यज्ञम् आशुषाणाः अश्नवानाः व्याप्नुवन्तः । शुचि अविभक्तिको निर्देशः । शुचिं दीप्तं भास्वरम् । इच्छब्द एवार्थे । अयन् आगताः प्राप्ताः दीधितिम् आदित्यरश्मिम् तत आदित्यमण्डलम् । एष हि देवयानः पन्थाः । उक्थशासः उक्थानि ये शंसन्ति यज्ञेषु ते उक्थशासः । पितॄणां विशेषणमेतत् । एवं वयमपि हे अग्ने, त्वत्प्रसादात् क्षामा भिन्दन्तः । क्षामा अविभक्तिको निर्देशः । क्षामां पृथिवीं भिन्दन्तः वेदिचात्वालयूपावटादिखननैः । यद्वा पृथिव्याश्रयाणि यज्ञे व्रीहिपशुयूपादीनि भिन्दन्तः यज्ञं सर्वोपकारकमनुतिष्ठन्त इत्यर्थः । अरुणीः आरोचनाः । रश्मीन् अपव्रन् अपवृणुमः । अपवृत्य च रश्मीन् देवपन्थानमनुतिष्ठाम इत्यर्थः ॥ ६९ ॥

**म०** हे अग्ने, नोऽस्माकं पितरः अध अथानन्तरं देहयात्रोत्तरकालं यथा येन प्रकारेण शुचि । सुपो लोपः इदेवार्थे । शुचिं निर्मलं दीधितिं रविमण्डलमेव अयन् प्राप्ताः । 'अय गतौ' लङ् अडभाव आर्षः । कीदृशाः पितरः । परासः परा उत्कृष्टाः प्रत्नासः प्रत्नाः पुराणाः ऋतं यज्ञमाशुषाणाः अश्नुवाना व्याप्नुवन्तः। एवंभूताः पितरः यथा देवयानं पन्थानं प्राप्ताः तथा वयमपि अरुणीः अरुणवर्णाः सूर्यदीधितिमपव्रन् अपवृणुमः । सूर्यरश्मीनपवृत्य देवयानमार्गं प्राप्नुम इत्यर्थः । 'वृञ् वरणे' विकरणव्यत्ययेन शपि लुप्ते लङि रूपम् । अडभावः पुरुषव्यत्ययश्छान्दसः । कीदृशा वयम् । उक्थशासः यज्ञेषु उक्थानि शस्त्राणि शंसन्ति वदन्ति ते उक्थशसः । क्विप् संहितायां दीर्घः । तथा क्षामा क्षामां भूमिं भिन्दन्तः वेदिचात्वालयूपावटोपरवादिखननैर्विदारयन्तः । सर्वोपकरणैर्यज्ञं कुर्वन्त इत्यर्थः ॥ ६९ ॥

## सप्ततितमी ।

उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन्हविषे अत्तवे ॥ ७० ॥

**उ०** उशन्तस्त्वा । 'वश कान्तौ' अस्य कृतसंप्रसारणस्यैतद्रूपम् । हे अग्ने, यतो वयमुशन्तः कामयमानाः त्वां निधीमहि स्थापयामहे । यतश्च उशन्तः कामयमाना एव समिधीमहि संदीपयामः। यतस्त्वमपि उशन्कामयमान एव। उशतः कामयमानानेव आवह पितॄन् । किमर्थमिति चेत् । हविषे अत्तवे हविषः अदनाय ॥ ७० ॥

**म०** अनुष्टुप् । हे अग्ने, उशन्तः कामयमाना वयं तं त्वा निधीमहि स्थापयामः । कामयमाना एव वयं त्वां समिधीमहि संदीपयामः । त्वं च उशन् कामयमानः सन् उशतः कामयमानान् पितॄनावह आनय । किं कर्तुं । हविषे अत्तवे हविः अत्तुं भक्षयितुम् । तुमर्थे तवेप्रत्ययः विभक्तिव्यत्ययः ॥ ७० ॥

## एकसप्ततितमी ।

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजयः स्पृधः ॥ ७१ ॥

**उ०** अथेन्द्रो मन्त्रः सोमो राजेत्यस्य निदानभूतः पठ्यते। अपां फेनेन । तृतीयपादप्रभृतिव्याख्यानं यच्छब्दयोगात् । विश्वाः सर्वाः । यत् यदा अजयः स्पृधः संग्रामान् । अथ तदा अपां फेनेन फेनपुञ्जेन नमुचेः असुरस्य शिरः हे इन्द्र, त्वमुदवर्तयः उद्वर्तितवानसि । उत्पूर्वो वृतिः छेदने वर्तते ॥ ७१ ॥

**म०** इन्द्रो गायत्री अग्रिमानुवाकनिदानभूता । हे इन्द्र, यत् यदा त्वं विश्वाः स्पृधः सर्वान् संग्रामानजयो जितवानसि तदा अपां फेनेन जलडिण्डीरेण नमुचेरसुरस्य शिरः उदवर्तयः छिन्नवानसि । उत्पूर्वो वृतिः छेदार्थः ॥ ७१ ॥

## द्विसप्ततितमी ।

सोमो राजामृतꣳ सुत ऋजीषेणाजहान्मृत्युम् । ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७२ ॥

**उ०** इदानीमेतं च मन्त्रं वक्ष्यमाणं चानुवाकं श्रुत्यासंबध्नाति । 'तस्य शीर्षे छिन्ने लोहितमश्रः सोमोऽतिष्ठत्तस्मात्तदबीभत्सत एतदन्धसो विपानमपश्यत्सोमो राजामृतं सुत इति तेनैनं स्वदयित्वात्मन्नदधत' इति । सोमो राजा । अष्टौ ग्रहोपस्थानमश्विसरस्वतीन्द्रा अपश्यन् । आद्यास्तिस्रो महाबृहत्यः पङ्क्तिश्चतुर्थी अन्ते अतिजगत्यौ शेषे अतिशक्वर्यौ । यथा एककारणानि वसूनि विविच्यमानानि दृश्यन्ते । यथा पृथग्भूतानि संसृज्यानि पुनर्विवेच्यमानानि दृश्यन्ते । एवमय-

मपि लोहितमिश्रः सोमः सोम एवेत्यनुवाकार्थः । सोमो राजा सोमः राजा सुतः अभिषुतः अमृतं संपद्यते रसीभावात् । स्थूलस्यहि सूक्ष्मतामृतीभावः । ऋजीषरूपेणचाजहात् त्यजति मृत्युं मूर्तत्वादजीषभावस्य सत्यमेतत् । अनेन च ऋतेन सत्येन सत्यमेतत् ज्ञातम् इन्द्रियं वीर्यं विपानं विविक्तं लोहितात्सोमपानं पानयोग्यं वा विपानम् शुक्रं रजो हितम् अन्धसः अन्नात्संभूतं भूयात् । अथ इन्द्रस्य इदमिन्द्रियं पयः अमृतं मधु भवतु ॥ ७२ ॥

**म०** 'सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते युगपत्' (का० १९ । २ । २४) अष्टर्चेनानुवाकेन समानकालमेव पयोग्रहान्सुराग्रहांश्चाध्वर्युरुपतिष्ठते । यद्वा चतुर्भिः पयोग्रहांश्चतुर्भिः सुराग्रहान् ग्रहणानन्तरमेवोपस्थानम् मन्त्रपाठक्रमादत्रालेखीत्यर्थः । अश्विसरस्वतीन्द्रदृष्टा अष्टौ ऋचः । आद्यास्तिस्रो महाबृहत्यः । यस्याश्चत्वारः पादा अष्टकाः पञ्चमो द्वादशकः सा महाबृहती । सोमो राजा सुतोऽभिषुतः सन् अमृतममृतरूपो रसरूपो भवति स्थूलस्य सूक्ष्मतापादनममृतीभावः । यत ऋजीषेण ऋजीषं नीरसं सोमलताचूर्णम् तद्रूपेण मृत्युं स्थूलभावमजहाज्जहाति । ऋतेन अनेन सत्येन एतत् सत्यम् ज्ञातम् यत् अन्धसोऽन्नस्य सोमस्य विपानं विविच्य पानं शुक्रं शुक्लं शुद्धमतएव इन्द्रियं वीर्यप्रदं भूयात् पयश्चेन्द्रस्येदशं भवतु । कीदृशं इन्द्रियम् । वीर्यवत् अमृतमजरामरत्वप्रदं मधु मधुरंच । अपां फेनेनेत्यस्य मन्त्रस्यास्याष्टर्चानुवाकस्य च श्रुत्या संबन्ध उक्तः । 'तस्य शीर्ष्णि छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् तस्मादबीभत्सन्त त एतदन्धसो विपानमपश्यन् सोमो राजामृतꣳ सुत इति तेनैनꣳ स्वदयित्वात्मन्नदधत' इति । यथा एककारणानि वस्तूनि विविच्यमानानि दृश्यन्ते यथाच पृथग्भूतानि संसृष्टानि पुनर्विविच्यन्ते एवमयमपि लोहितमिश्रः सोमो विविक्तः सोम एवेति सर्वानुवाकार्थः ॥ ७२ ॥

## त्रिसप्ततितमी ।

अद्भ्यः क्षीरं व्यपिबत्कुङ्ङाङ्गिरसो धिया । ऋतेन सत्यमिन्द्रियम्० ॥ ७३ ॥

**उ०** अद्भ्यः क्षीरम् । क्षीरोदकयोः संसृष्टयोः अद्भ्यः सकाशात् क्षीरं वियुत्य अपिबत् पीतवान् । कुङ् हंसः हंसजातिमास्थाय आङ्गिरसः प्राणः । सद्यङ्गानां रसः धिया प्रज्ञया । इत्थंभूता हि तस्य प्रज्ञा तस्यां जात्यामेव स्थितस्य भवति । सत्यमेतत् । अनेन ऋतेन सत्यमिन्द्रियं विपानं शुक्रं अन्धसः संभूतं भूयात् । अथ इन्द्रस्य इन्द्रियं विपानममृतं मधु भूयात् ॥ ७३ ॥

**म०** अङ्गिरसः अङ्गानां रसः प्राणो यथा कुङ् हंसो भूत्वा धिया प्रज्ञया अद्भ्यः सकाशात् क्षीरं दुग्धमपिबत् पिबति । संसृष्टाभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबतीति जातिस्वभावः । अनेन सत्येनेदं सत्यं यदन्धसो विपानं शुक्रं भवतु । अथेन्द्रस्य पयो वीर्यममृतं भवतु ॥ ७३ ॥

## चतुःसप्ततितमी ।

सोममद्भ्यो व्यपिबच्छन्दसा हꣳसः शुचिषत् । ऋतेन सत्यमिन्द्रियम्० ॥ ७४ ॥

**उ०** सोममद्भ्यः । सोमोदकयोः संसृष्टयोः सोमं वियुत्यापिबत् अद्भ्यः सकाशात् । छन्दसा छन्दोनिबद्धेन वेदेन । हंस आदित्यः शुचिषत् । एतत्सत्यम् । ऋतेनेत्यादि समानम् ॥ ७४ ॥

**म०** हंसः आदित्यः अद्भ्यः सकाशात् छन्दसा वेदेन वेदरूपैः किरणैर्यथा सोमं व्यपिबत् पिबति सोमोदकाभ्यां रविः सोममेव पिबति । ऋतेनेत्युक्तम् । कीदृशो रविः । शुचिषत् शुचि निर्मले गगने सीदतीति शुचिषत् ॥ ७४ ॥

## पञ्चसप्ततितमी ।

अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम्० ॥ ७५ ॥

**उ०** अन्नात्परिस्रुतः । अन्नाद्वविलक्षणात् संपरिस्रुतश्च रसं ब्रह्मणा त्रयीलक्षणेन व्यपिबत् । क्षत्रं च व्यपिबत् । क्षत्रस्य पानं वशीकरणम् पयः सोमम् प्रजापतिः प्रथमशरीरी । सत्यमेतत् ऋतेन सत्यमिति समानम् ॥ ७५ ॥

**म०** अतिजगती द्वापञ्चाशदक्षरा । प्रजापतिः प्रथमशरीरी परिस्रुतोऽन्नात्सुरारूपादन्नात् रसं ब्रह्मणा गायत्रीलक्षणेन व्यपिबत् विविच्य पीतवान् । क्षत्रं च व्यपिबत् वशीचकार । क्षत्रियस्य पानं वशीकरणम् । पयः सोमं च व्यपिबत् अनेन सत्येनेदं सत्यम् ॥ ७५ ॥

## षट्सप्ततितमी ।

रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रियम् । गर्भो जरायुणावृत उल्वं जहाति जन्मना । ऋतेन सत्यमिन्द्रियम्० ॥ ७६ ॥

**उ०** रेतो मूत्रम् व्यवहितपदप्रायः । रेतः विजहाति त्यज्यति । योनिं स्त्रीप्रजननम् प्रविशत् इन्द्रियं शिश्नम् । योनिप्रवेशादन्यत्र मूत्रं विजहाति । तुल्यद्वारयोरपि मूत्ररेतसोर्मूत्रस्थानं हित्वान्यत्रावतिष्ठते रेतः । सत्यमेतत् ततः गर्भो जरायुणा आवृतः वेष्टितः । जरायुं च उल्वं च विजहाति त्यजति । जन्मना प्रसवेन । सत्यमेतत् । नानास्थानानामेकद्वाराणां प्रथममुदाहरणम् । एकस्थानानामनेकद्वाराणां द्वितीयम् । ऋतेनेति व्याख्यातम् ॥ ७६ ॥

**म०** अतिशक्कर्यौ द्वे षष्ठ्यक्षरातिशक्करी । इन्द्रियं पुंप्रजननं शिश्नं योनिं स्त्रीप्रजननं प्रविशत् सत् रेतो वीर्यं विजहाति त्यजति । योनिप्रवेशादन्यत्र मूत्रं विजहाति । समानद्वारयोरपि रेतोमूत्रयोर्मूत्रस्थानादन्यत्र रेतोऽवतिष्ठते । जरायुणा गर्भवेष्टनेनावृतो गर्भः जन्मना कृत्वा उल्वं जरायुं जहाति । भिन्नस्था-

नानामेकद्वाराणामाद्यमुदाहरणम् । एकस्थानानामनेकद्वाराणां द्वितीयम् । ऋतेनेति व्याख्यातम् ॥ ७६ ॥

## सप्तसप्ततितमी ।

दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः । अश्रद्धामनृतेऽदधाच्छ्रद्धाꣳ सत्ये प्रजापतिः । ऋतेन सत्यमिन्द्रियम्० ॥ ७७ ॥

उ० दृष्ट्वा रूपे । दृष्ट्वा उपलभ्य रूपे सत्यानृतयोः । इदं सत्यमेवंरूपमिदमनृतमेवंरूपमिति व्याकरोत् । व्याकरणं पृथक्कार्यावस्थानम् । कथं व्याकरोत् । अश्रद्धाम् अनृते अदधात् अनृतनिमित्तत्वात् अश्रद्धायाः । श्रद्धामास्तिक्यम् सत्ये । कः अदधात् । प्रजापतिः सत्यमेतत् ऋतेनेति व्याख्यातम् ॥ ७७ ॥

म० प्रजापतिः रूपे रूपवती मूर्तिमती सत्यानृते दृष्ट्वा व्याकरोत् । व्याकरणं पृथक्त्वं कृतवान् इदं सत्यमिदमनृतमिति पृथगवास्थापयत् । तदेवाह । अनृते अश्रद्धां नास्तिक्यमदधात् अस्थापयत् अनृतस्याश्रद्धानिमित्तत्वात् । सत्ये श्रद्धामदधात् सत्यस्य श्रद्धानिमित्तत्वात् । श्रद्धास्तिक्यबुद्धिः । अनेन ऋतेनेत्युक्तम् ॥ ७७ ॥

## अष्टसप्ततितमी ।

वेदेन रूपे व्यपिबत्सुतासुतौ प्रजापतिः । ऋतेन सत्यमिन्द्रियम्० ॥ ७८ ॥

उ० वेदेन रूपे । वेदेन परिज्ञानेन त्रय्या वा विद्यया । रूपे सुतासुतयोः व्यपिबत् । सुतः सोम उच्यते पयश्चासुतः परिस्रुत्प्रजापतिः सत्यमेतत् अनेन ऋतेनेति व्याख्यातम् ७८

म० महाबृहती । प्रजापतिः सुतासुतौ सुतासुतयोः रूपे वेदेन ज्ञानेन त्रय्या विद्यया वा व्यपिबत् विविच्य पीतवान् । सुतः सोमः असुतः पयः परिस्रुच्च । ऋतेनेत्युक्तम् ॥ ७८ ॥

## एकोनाशीतितमी ।

दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रं व्यपिबत्पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम्० ॥७९॥

उ० दृष्ट्वा परिस्रुतः रसं शुक्रेण अमलेन शुक्रममलम् । वियुत्य अपिबत् पयश्च सोमं च द्वे प्रजापतिः । सत्यमेतत् । ऋतेनेति व्याख्यातम् ॥ ७९ ॥

म० अतिजगती । प्रजापतिः परिस्रुतः सुराया रसं दृष्ट्वा शुक्रेण शुद्धेन मन्त्रेण पयः सोमं च शुक्रं शुक्रं शुद्धं कृत्वा व्यपिबत् वियुज्य पीतवान् । ऋतेनेत्युक्तार्थम् ॥ ७९ ॥

## अशीतितमी ।

सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति । अश्विना यज्ञꣳ सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ॥ ८० ॥

उ० खुरैर्वसाग्रहान्द्वात्रिंशतं जुहोति । सीसेनेति प्रत्यृचम् षोडश जगत्यः । यथेन्द्रस्य भैषज्यं क्रियते तथा आभिरुच्यते । यज्ञः पटेन रूप्यते प्रथमायामृचि । सीसेन ऊर्णासूत्रेण च तन्त्रमिव पूर्वापरैः सूत्रैर्दक्षिणोत्तरैश्च वयन्ति यज्ञम् । के वयन्ति । मनीषिणः मेधाविनः । कवयः क्रान्तदर्शनाः । मनसा पर्यालोच्य गुणत उक्त्वा अथेदानीं नामत आह । अश्विनौ सविता सरस्वती वरुणश्च । किमर्थं पुरस्कृत्य यज्ञं वयति इन्द्रस्य रूपं भिषज्यन् ॥ ८० ॥

म० 'खुरैर्वसाग्रहान्द्वात्रिꣳशतं जुहोति सीसेनेति प्रत्यृचम्' ( का० १९ । ४ । १२ ) । पञ्चपलो ग्रह इति परिशिष्टोक्तेः ऋषभखुराणां महत्त्वाचार्षभैः खुरैः पशूनां वसां गृहीत्वा सीसेनेति प्रतिमन्त्रं द्वात्रिंशत्संख्यान्सुराग्रहान् जुहोति । एकेन मन्त्रेण द्वयोर्होम इत्यर्थः । अश्विसरस्वतीन्द्रदेवत्याः षोडश जगत्यः । 'जगतीभिर्जुहोति' ( १२ । ८ । ३ । १३ ) इति श्रुतिबलाद्द्व्यक्षरन्यूनानामपि कासांचिज्जगतीत्वमेव । दस्रादिभिर्यथा इन्द्रस्य भैषज्यं कृतं तदनेनानुवाकेन प्रतिपाद्यते । अश्विना अश्विनौ दस्रौ सविता सरस्वती वरुणश्च मनसा विचार्य यज्ञं सौत्रामणीं वयन्ति निष्पादयन्ति । केन । सीसेन ऊर्णासूत्रेण च सीसेन शष्पक्रयणादूर्णया तोक्मक्रयणात् ताभ्यां यज्ञनिष्पादनमित्यर्थः । तत्र दृष्टान्तः । सीसेन ऊर्णासूत्रेण च तन्त्रमिव यथा कश्चित्सीसेन धातुविशेषेण तन्त्रमङ्गदविशेषं वयति ऊर्णासूत्रेण च तन्त्रं पटं वयति तद्वत् 'तन्त्रं राष्ट्रे च सिद्धान्ते परच्छन्दाप्रधानयोः । अङ्गदे कुटुम्बकृते तन्तुवाने परिच्छदे' इति कोशात् । कीदृशा अश्व्यादयः । मनीषिणः मेधाविनः । कवयः कान्तदर्शनाः । इन्द्रस्य रूपं भिषज्यन् भिषज्यन्तः 'भिषज् रुजये' कण्ड्वादित्वायक् ततः शतृप्रत्ययः । वचनव्यत्ययः । इन्द्रभैषज्याय यज्ञं वयन्तीत्यर्थः ॥ ८० ॥

## एकाशीतितमी ।

तदस्य रूपममृतꣳ शचीभिस्तिस्रो दधुर्देवताः सꣳरराणाः । लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य माꣳसमभवन्न लाजाः ॥ ८१ ॥

उ० तदस्य । तत् अस्येन्द्रस्य रूपम् अमृतममरणधर्मि । शचीभिः कर्मभिः । तिस्रो देवताः संदधुः संरराणाः । अश्विनौ सरस्वती च । कथं संदधुः । लोमानि तावत् शष्पैः संदधुः । बहुधा न तोक्मभिस्त्वगस्य । नकारः समुच्चये । आअध्यायसमाप्तेः । त्वचमिति विभक्तिव्यत्ययः । बहुधा न तोक्मभिस्त्वचमस्येन्द्रस्य संदधुः । मांसम् अभवच्च लाजाः ॥८१॥

म० तिस्रो देवताः अश्विसरस्वत्यः संरराणाः सम्यक् रममाणाः सत्यः अस्येन्द्रस्य तदमृतममरणधर्मि रूपं शचीभिः कर्मभिः संदधुः कर्माङ्गैः संधानं चक्रुः । तदेवाह । लोमानि इन्द्ररोमाणि शष्पैर्विरूढव्रीहिभिः संदधुः अस्येन्द्रस्य त्वक् त्वचं

च तोक्मभिः विरूढयवैर्बहुधा संदधुर्लाजा न लाजाश्चास्य मांसं समभवत् । अध्यायसमाप्तिपर्यन्तं नकाराः सर्वे चकारार्थाः ॥ ८१ ॥

## द्व्यशीतितमी ।

तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् । अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि ॥ ८२ ॥

**उ०** तदश्विना तत् पेशः रूपम् इन्द्रस्य । अश्विनौ भिषजौ । रुद्रवर्तनी । रुद्रस्येव वर्तनिर्मार्गो ययोस्तौ रुद्रवर्तनी रुग्णवर्तनी वा । रोरूयमाणौ वर्तेते इति वा । सरस्वती च । वयति वयन्ति । बहुवचनमेकवचनस्य । संबध्नन्ति अन्तरमभ्यन्तरम् । किं वयन्ति । अस्थि च मज्जानं च तावत् मासरैश्च कारोतरेण च यथाक्रमं वयन्ति । किं कुर्वाणाः । दधतः स्थापयन्तः । गवां त्वचि चर्मणि सुराम् ॥ ८२ ॥

**म०** रुद्रवत् वर्तनिर्मार्गो ययोस्तौ रुद्रवर्तनी रुग्णवर्तनी वा । भिषजा भिषजौ वैद्यौ अश्विना अश्विनौ सरस्वती च तदन्तरं शरीरान्तर्वर्ति पेश इन्द्रस्य रूपम् वयति वयन्ति संबध्नन्ति वचनव्यत्ययः । तदेवाह । मासरैः शष्पादिचूर्णचरुनिःस्रावैः अस्थि संबध्नन्ति । कारोतरेण गलनवाससा मज्जानं वयन्ति । कीदृशास्ते । गवां त्वचि चर्मणि दधतः सुरां स्थापयन्तः ॥ ८२ ॥

## त्र्यशीतितमी ।

सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः । रसं परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम ॥ ८३ ॥

**उ०** सरस्वती मनसा । सरस्वती मनसा पर्यालोच्य । पेशलम् । पेश इति हिरण्यनाम रूपनाम च । हिरण्यवद्वा रूपवद्वा । वसु नासत्याभ्यां च सहिता वयति पटमिव सृजति । दर्शतं वपुः दर्शनीयं वपुः शरीरम् इन्द्रस्य । रसं परिस्रुता न रोहितम् । सरं च परिस्रुता सरस्वती नासत्याभ्यामश्विभ्यां सहिता वयति । वपुषो रञ्जनार्थम् । अतो रोहित इन्द्रो वेदेषु पठ्यते । अथ तदा नग्नहुः किण्वः धीरः धीमान् । तसरं न वेम तसरं च वेम च संपद्यते । नग्नहोः कर्तृत्वमात्रं विवक्षितम् । विवक्षातः कारकाणि भवन्ति । तसरं वेम च कुविन्दानां प्रसिद्धम् । तसरं वयनसाधनम् ॥ ८३ ॥

**म०** नासत्याभ्यामश्विभ्यां सहिता सरस्वती वसु धनं दर्शतं दर्शनीयं वपुश्च वयति पटमिव सृजति । इन्द्रस्येति शेषः । कीदृशं वसु । पेशलं पेश इति हिरण्यरूपयोर्नाम । पेशं लाति गृह्णाति पेशलं हिरण्यवद्रूपवद्वा । मनसा विचार्येति शेषः । परिस्रुता परिस्रुतः सुरायाः रोहितं लोहितं रसं न रसं च वयति इन्द्रवपुषो रञ्जनाय । अतएव वेदेषु रोहित इन्द्रः पठ्यते । अथ तदा नग्नहुः किण्वः सुराकन्दः पूर्वोक्तः तसरं वयनसाधनं वेम न वेमा च भवति । तसरवेमानौ कुविन्दानां प्रसिद्धौ । कीदृशो नग्नहुः । धीरः धियमीरयति प्रेरयतीति धीरः । मादक इत्यर्थः । विवक्षातः कारकाणि भवन्तीति वचनान्नग्नहोः कर्तृत्वं विवक्षितम् ॥ ८३ ॥

## चतुरशीतितमी ।

पयसा शुक्रममृतं जनित्रꣳ सुरया मूत्राज्जनयन्त रेतः । अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातꣳसब्वं तदारात् ॥ ८४ ॥

**उ०** पयसा शुक्रम् । पयसा दुग्धेन कारणभूतेन शुक्रं च अमृतं च जनित्रम् आजन्म जनयन्तः अश्विनौ सरस्वती च प्रकृतत्वात् इन्द्रस्तु भैषज्यः । सुरया च मूत्रात् मूत्रमिति साधु । मूत्रं च रेतश्च जनयन्त । किंच । अपामतिं दुर्मतिम् बाधमानाः । अपबाधमानाः अमतिममननं वध्यभावं दुर्मतिंच । ऊवध्यम् आमाशयगतमन्नं वा तम् तत्सहचरितं सर्वं पक्वाशयगतमशुचिः । तदारात् तदेतत् सुरया जनयन्त । आरात् सुरासंनिकर्षात् । संनिकर्षो हि गन्धादिभिः ॥ ८४ ॥

**म०** प्रकृतत्वादश्विनौ सरस्वती च पयसा दुग्धेन रेतो वीर्यं जनयन्त उदपादयन् । अडभाव आर्षः । इन्द्रस्येति शेषः । कीदृशं रेतः । शुक्रं शुक्रम् अमृतमनश्यत् । जनित्रं जनयतीति जनित्रं जननशीलम् । आरात् समीपे स्थित्वा तत्प्रसिद्धमूवध्यं वातं नाडीगतं सब्वं च सुरया कृत्वा मूत्रात् मूत्रं चाजनयन्त । आमाशयगतमन्नमूवध्यम् पक्वाशयगतमन्नं सब्वम् । कीदृशास्ते । अमतिं वध्यभावं दुर्मतिं दुर्बुद्धिं च बाधमाना निवर्तयन्तः सद्बुद्धिं ददत इत्यर्थः ॥ ८४ ॥

## पञ्चाशीतितमी ।

इन्द्रः सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान । यकृत् क्लोमानं वरुणो भिषज्यन्मतस्ने वायव्यैर्न मिनाति पित्तम् ॥ ८५ ॥

**उ०** इन्द्रः सुत्रामा । पुरोडाशदेवता इन्द्रं भिषज्यन्ति । इन्द्रः सुत्रामा हृदयेन । हृदयमिति विभक्तिव्यत्ययः । इन्द्रस्य जजान जनयति । सत्यम् इन्द्रस्य पुरोडाशेन सविता जनयति । यकृच्च क्लोमानं च जनयति । वरुणः इन्द्रस्य भिषज्यन्मतस्ने च पित्तं च वायव्यैः ऊर्ध्वपात्रैः ऊर्ध्वपात्राणां सौमिकानां वायव्यानीति उक्तम् । मिनाति निर्मिमीते सृजति ॥ ८५ ॥

**म०** सुष्ठु त्रायते रक्षति सुत्रामा इन्द्रः पुरोडाशदेवता । इन्द्रस्य हृदयेन हृदयं जजान जनयति । सविता च पुरोडाशेनेन्द्रस्य सत्यं जजान । वरुणो भिषज्यन् इन्द्रस्य चिकित्सां

कुर्वन् सन् यकृत् कालखण्डं क्लोमानं गलनाडिकां च जजान । वायव्यैः सौमिकोर्ध्वपात्रैः मतस्ने हृदयोभयपार्श्वस्थे अस्थिनी पित्तं न पित्तं च मिनाति निर्मिमीते सृजतीत्यर्थः । सोमिकान्यौर्ध्वपात्राणि वायव्यसंज्ञानि ॥ ८५ ॥

## षडशीतितमी ।

आ॒न्त्राणि॑ स्था॒लीर्मधु॒ पिन्व॑माना गु॒दाः पात्रा॑णि सु॒दुघा॒ न धे॒नुः । श्ये॒नस्य॒ पत्रं॒ न प्ली॒हा शची॑भिरास॒न्दी ना॒भिरु॒दरं॒ न मा॒ता ॥ ८६ ॥

**उ०** आन्त्राणि स्थालीः । स्थाल्यः आन्त्राणि अभवन् । किं कुर्वाणाः। मधु पिन्वमानाः। पिन्वतिः सेचनार्थः।गुदाः पात्राणि अभवन् । सुदुघा च धेनुः दक्षिणा च आदित्यस्येष्टेः । गुदा एव अभवन् । श्येनस्य च पत्रं प्लीहा अभवत् । शचीभिः कर्मभिः । आसन्दी नाभिः इन्द्रस्य उदरं च माता च । आसन्दीस्थोऽभिषिच्यते अतस्ततो जायते ॥ ८६ ॥

**म०** स्थालीः स्थाल्यः आन्त्राणि अभवन् । कीदृश्यः स्थाल्यः । मधु पिन्वमानाः सिञ्चन्त्यः । पात्राणि गुदा गुदस्थानान्यभवन् । सुदुघा न धेनुः शोभनं दुग्धे सा सुदुघा दोग्ध्री च धेनुः आदित्येष्टेर्दक्षिणारूपा गुदा एवाभवत् । श्येनस्य पत्रं च प्लीहा हृदयवामभागस्थः शिथिलमांसपिण्डः गुल्मसंज्ञोऽभवत् । आसन्दी शचीभिर्नाभिरुदरं चाभवत् । कीदृश्यासन्दी । माता जननीस्थानीया आसंद्यामभिषिच्यतेतऽस्ततो जायत एव । नाश्वार्थाः ॥ ८६ ॥

## सप्ताशीतितमी ।

कु॒म्भो व॑नि॒ष्ठुर्ज॑नि॒ता शची॑भि॒र्यस्मि॒न्नग्रे॒ योन्यां॒ गर्भो॑ अ॒न्तः । प्ला॒शिर्व्य॑क्तः श॒तधा॑र॒ उत्सो॑ दु॒हे न कु॒म्भी स्व॒धां पि॒तृभ्यः॑ ॥ ८७ ॥

**उ०** कुम्भो वनिष्ठुः । सुरासंधानकुम्भो वनिष्ठुः जनिता च जनकश्च । शचीभिः स्वकीयैरेव कर्मभिः । यस्मिन्कुम्भे अग्रे प्रथमं योन्यां गर्भः । अन्तर्मध्ये सुरालक्षण उषितः । किंच । प्लाशिर्व्यक्तः । स्पष्टः शतधार उत्सः कूपः बहुस्रोतस्त्वात् कूप उक्तः । दुहे न कुम्भी स्वधां पितृभ्यः ॥ ८७ ॥

**म०** कुम्भः सुराधानकुम्भः शचीभिः कर्मभिः कृत्वा वनिष्ठुः स्थूलान्त्रं जनिता जनयति । यस्मिन् कुम्भे योन्यां कुम्भरूपे योनौ स्थाने अग्रे प्रथममन्तर्मध्ये गर्भः सुरारूप उषितः । शतधार उत्सः कूपतुल्यः कुम्भः व्यक्तः स्पष्टः प्लाशिः शिश्नोऽभवत् । कुम्भी सुराधानी च पितृभ्यः स्वधां दुहे दुग्धे अन्नं पूरयति 'लोपस्त आत्मनेपदेषु' ( पा० ७।१।४१ ) इति तलोपः ॥ ८७ ॥

## अष्टाशीतितमी ।

मुख॑ᳪ स॒दस्य॒ शिर॒ इत्स॒तेन॑ जि॒ह्वा प॒वित्र॑म॒श्विना॒सन्त्सर॑स्वती । च॒प्यं॒ न पा॒युर्भि॒षग॑स्य॒ वालो॑ व॒स्तिर्न॒ शेपो॒ हर॑सा तर॒स्वी ॥ ८८ ॥

**उ०** मुखं सत् । अस्येन्द्रस्य मुखं सत् । एकदेशलोपः सन्तमिति प्राप्ते । तथाच श्रुतिः 'मुखं सन्तमस्य जिह्वा पवित्रं चप्यं न पायुर्वस्तिर्वालः' इति । शिर इत् सतेन जिह्वा पवित्रम् आसन् आस्येति च । चप्यं च पायुः भिषगस्य वालः वस्तिश्च शेपो हरसा तरस्वी । वालस्य त्रिधा परिणामः वैद्यः वस्तिः शेपश्च । कीदृशः शेपः हरसा वीर्येण तरस्वी वेगवान् ॥ ८८ ॥

**म०** अस्येन्द्रस्य सत् सतः पात्रविशेषो मुखमभूत् । सतशब्दस्यान्तलोपश्छान्दसः । सतेन इत् सतेनैवास्य शिरोऽभूत् । पवित्रं जिह्वाभवत् । अश्विना अश्विनौ सरस्वती च आसन् आस्येऽभवन् । चप्यंच पायुरिन्द्रियमभूत् । वालो सुरागलनवस्त्रमस्येन्द्रस्य भिषग्वैद्यो वस्तिर्गुदं शेपो लिङ्गं चाभूत् । वालेन त्रयं जातम् । कीदृशः शेपः । हरसा वीर्येण तरस्वी वेगवान् ॥ ८८ ॥

## एकोननवतितमी ।

अ॒श्विभ्यां॒ चक्षु॑र॒मृतं॒ ग्रहा॑भ्यां॒ छागे॑न॒ तेजो॑ ह॒विषा॑ शृ॒तेन॑ । पक्ष्मा॑णि गो॒धूमैः॒ कुव॑लैरु॒तानि॒ पेशो॒ न शु॒क्रमसि॑तं वसाते ॥ ८९ ॥

**उ०** अश्विभ्यां चक्षुः । अश्विभ्यामिन्द्रस्य चक्षुः संस्क्रियते । तदेवामृतम् । ग्रहाभ्यामश्विदेवत्याभ्याम् छागेन तेजः चक्षुषः क्रियते । कथंभूतेन छागेन । हविषा शृतेन हविर्भूतेन पक्केन अपरम् पक्ष्माणि चक्षुषः लोमानि गोधूमैः संस्क्रियते । कुवलैर्बदरविशेषैः उतानि निविष्टानि पक्ष्मसु रोमाणि संस्क्रियते । पेशो न शुक्रमसितं वसाते । पेशो न रूपं च चक्षुषः शुक्रं शुक्रम् असितं कृष्णं च वसाते आच्छादयेते प्रकृतत्वादश्विनौ ॥ ८९ ॥

**म०** अश्विभ्यामिन्द्रस्य चक्षुः क्रियते ग्रहाभ्यामश्विदेवत्याभ्यां चक्षुरेवामृतमनश्वरं क्रियते । शृतेन पक्केन हविषा छागेन छागरूपेण पक्कहविषा तेजश्चक्षुःसंबन्धि क्रियते । गोधूमैः पक्ष्माणि नेत्रलोमानि क्रियन्ते । कुवलैर्बदरैः उतानि चक्षुर्निविष्टानि लोमानि क्रियन्ते । शुक्रं शुक्रमसितं कृष्णं च पेशः रूपं शुक्लकृष्णे नेत्रगते रूपे वसाते आच्छादयेते । कुर्वात इत्यर्थः । प्रकृतत्वादश्विनौ कर्तारौ ॥ ८९ ॥

## नवतितमी ।

अवि॑र्न मे॒षो न॒सि वी॒र्या॑य प्रा॒णस्य॒ पन्था॑ अ॒मृतो॒ ग्रहा॑भ्याम् । सर॑स्वत्युप॒वाकै॑र्व्या॒नं नस्या॑नि ब॒र्हिर्बद॑रैर्जजान ॥ ९० ॥

**उ०** अविर्न । अविश्च मेषः सारस्वतः । नसि नासिकायाम् वीर्याय अवस्थितः । प्राणस्य च पन्था मार्गः अमृतः

ग्रहाभ्यां सारस्वताभ्यां क्रियते । सरस्वती च उपवाकैः व्यानं जजान जनयति । नस्यानि नासिकाप्रभवानि च बर्हिः बदरैः जनयति ॥ ९० ॥

म० अविः सारस्वतो मेषश्च नसि इन्द्रस्य नासिकायां वीर्यायावस्थितः ग्रहाभ्यां सारस्वताभ्यां प्राणस्य प्राणवायोः पन्था मार्गोऽमृतः अनश्वरः क्रियते । सरस्वती उपवाकैर्यवाङ्कुरैः कृत्वा व्यानमिन्द्रस्य व्यानवायुं जजान जनयति । बर्हिर्बदरैः सह नस्यानि नासिकाभवानि लोमानि जजान ॥ ९० ॥

## एकनवतितमी ।

इन्द्र॑स्य रू॒पमृ॑ष॒भो बला॑य॒ कर्णा॑भ्या॒ᳯ श्रोत्र॑म॒मृतं॒ ग्रहा॑भ्याम् । यवा॒ न ब॒र्हिर्भ्रु॒वि केस॑राणि क॒र्कन्धु॑ जज्ञे॒ मधु॑ सार॒घं मुखा॑त् ॥ ९१ ॥

उ० इन्द्रस्य रूपम् । इन्द्रस्य रूपं संस्करोति ऋषभः बलायावतिष्ठते । कर्णाभ्यां श्रोत्रम् अतीतानागतवर्तमानशब्दग्राहि । अमृतम् ग्रहाभ्यामैन्द्राभ्यां स्थापितम् । यवाश्च बर्हिश्च । भ्रुवि केसराणि । भ्रुवोः लोमानि अभवन् । कर्कन्धु च यज्ञे मधु सारघम् मुखात् कर्कन्धु बदरम् यज्ञे स्वयमेव यज्ञे इन्द्रस्य मुखात् । मधु लालाश्लेष्मादि मधुशब्देनोच्यते सादृश्यात् । सारघम् । सरघाः भ्रमराः । यथा सारघम् मधु इतश्चेतश्चाहृतं भवति । एवं लालादि सर्वस्मादङ्गाद्भवति ॥ ९१ ॥

म० ऋषभः बलाय सामर्थ्यायेन्द्रस्य रूपं चक्रे । ग्रहाभ्यामैन्द्राभ्याममृतं भूतभविष्यद्वर्तमानशब्दग्राहि श्रोत्रं श्रोत्रेन्द्रियं कर्णाभ्यामिन्द्रस्य कर्णयोश्चक्रे । कर्णशष्कुल्योः श्रोत्रेन्द्रियं स्थापितमित्यर्थः । यवा बर्हिश्च भ्रुवि भ्रुवोः केसराणि लोमान्यभवन् कर्कन्धु बदरं मुखात् सारघं मधु तत्तुल्यं लालाश्लेष्मादि जज्ञे । सरघा मधुमक्षिका तत्संबन्धि सारघम् । यथा मधु नानातरुभ्य आनीयते एवं लालादि सर्वाङ्गेभ्यो भवति इति लालादीनां मधुसाम्यम् ॥ ९१ ॥

## द्विनवतितमी ।

आ॒त्मन्नु॒पस्थे॒ न वृक॑स्य॒ लोम॒ मुखे॒ श्मश्रू॑णि॒ न व्या॒घ्रलो॑म । केशा॒ न शी॒र्षन्यश॑से॒ श्रि॒यै शिखा॑ सि॒ᳯहस्य॒ लोम॒ त्विषि॑रिन्द्रि॒याणि॑ ॥ ९२ ॥

उ० आत्मन्नुपस्थे । आत्मनि उपस्थे च यानि लोमानि तानि वृकस्य लोमानि । लोमेति जातावेकवचनम् । मुखे श्मश्रूणि च यानि तानि व्याघ्रस्य लोमानि । केशा न शीर्षन् ये च केशाः शिरसि यशसे निहिताः या च श्रियै शिखा निहिता या च त्विषिः दीप्तिः यानि चेन्द्रियाणि तदेतत्सिंहस्य लोम ॥ ९२ ॥

म० आत्मन् आत्मनि शरीरे उपस्थे गुह्ये च यानि लोमानि तानि वृकस्य लोमानि । लोमेति जातावेकवचनम् । मुखे यानि श्मश्रूणि तानि च व्याघ्रलोम । शीर्षन् शीर्ष्णि शिरसि च यशसे यशोऽर्थं ये केशाः या च श्रियै शोभायै शिखा या च त्विषिः कान्तिः यानि चेन्द्रियाणि तत्सर्वं सिंहस्य लोम ॥ ९२ ॥

## त्रिनवतितमी ।

अङ्गा॑न्या॒त्मन्भि॒षजा॒ तद॒श्विना॒त्मान॒मङ्गैः॒ सम॑धा॒त्सर॑स्वती । इन्द्र॑स्य रू॒पᳯ श॒तमा॑न॒मायु॑श्च॒न्द्रेण॒ ज्योति॑र॒मृतं॒ दधा॑नाः ॥ ९३ ॥

उ० अङ्गान्यात्मन् । अङ्गानि यस्मिन्नात्मनि भिषजौ वैद्यौ अश्विनौ समधाताम् तदात्मानम् । अङ्गैः समधात्सरस्वती । एवमिन्द्रस्य रूपं शतमानं बहुप्रतिमानम् । अश्विनौ सरस्वती च । चक्षुः चन्द्रेण हिरण्मयेन ज्योतिः अमृतं च दधानाः ॥ ९३ ॥

म० भिषजा भिषजौ अश्विना अश्विनौ आत्मन् आत्मनि अङ्गान्यवयवान् समधातां समयोजयताम् । सरस्वती तत्रमात्मानमङ्गैः समधात्संदधे । कीदृशा अश्व्यादयः । इन्द्रस्य रूपमायुश्च चन्द्रेणाह्लादकेन ज्योतिर्ज्योतिषा सहामृतमनश्वरं दधानाः संपादयन्तः । कीदृशं रूपम् । शतमानं शतानामनेकेषां प्राणिनां मानं पूजा यस्मिन् तज्जगत्पूज्यमित्यर्थः ॥ ९३ ॥

## चतुर्नवतितमी ।

सर॑स्वती॒ योन्यां॒ गर्भ॑म॒न्तर॒श्विभ्यां॒ पत्नी॒ सुकृ॑तं बिभर्ति । अ॒पाᳯ रसे॑न॒ वरु॑णो॒ न साम्नेन्द्रᳯ॑ श्रि॒यै ज॒नय॑न्न॒प्सु राजा॑ ॥ ९४ ॥

उ० सरस्वती योन्याम् । व्यवहितपदप्रायः । सरस्वतीयं योन्याम् इन्द्रलक्षणं गर्भम् अन्तर्मध्ये अश्विभ्यां पत्नीभूत्वा सुकृतं शोभनीकृतं बिभर्ति धारयति । तमेवेन्द्रं जनयन् श्रियै विभूत्यै वरुणश्च अप्सु राजा अपां रसेन साम्ना च बिभर्ति ॥ ९४ ॥

म० सरस्वती अश्विभ्यां पत्नी अश्विनोः पत्नी भूत्वा योन्यामन्तर्योनिमध्ये गर्भमिन्द्रलक्षणं सुकृतं यथा तथा शोभनं कृतं बिभर्ति । अप्सु राजा अपामीश्वरो वरुणः अपां रसेन साम्ना उदकरसभूतेन साम्ना इन्द्रं श्रियै जनयन्सन् बिभर्तीत्यनुषङ्गः । नश्चार्थः ॥ ९४ ॥

## पञ्चनवतितमी ।

तेज॑ः प॒शूनाᳯ ह॒विरि॑न्द्रि॒याव॑त्परि॒स्रुता॒ पय॑सा

सारघं मधु । अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम इन्दुः ॥ ९५ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां ऊनविंशोऽध्यायः ॥ १९ ॥

**उ०** तेजः पशूनाम् । तेजः पशूनामुपादाय हविश्च इन्द्रियवत् वीर्यवत् उपादाय । परिस्रुता हविर्भूतया । पयसा हविर्भूतेन सारघमिव मधु । अश्विभ्यां दुग्धम् । सरघाः भ्रमराः ते यथा अन्य ओषधीभ्यश्च रसमादाय दुहन्ति एवमेतेभ्यो द्रव्येभ्यः अश्विभ्यां दुग्धं सौत्रामणीलक्षणम् । कथंभूताभ्याम् । भिषजा भिषग्भ्याम् सरस्वत्या च । किंच सुता सुताभ्यां परिस्रुत्पयोभ्यां सकाशात् अमृतः सोमः इन्दुः दुग्धे । एवं यैः सौत्रामणी दृष्टा तेभ्यः ऋषिभ्यो नमोऽश्विभ्यां च सरस्वत्यै च । एवमियमृषिश्रुतिः ॥ ९५ ॥

इति उवटकृतौ मन्त्रभाष्ये एकोनविंशतितमोऽध्यायः ॥ १९ ॥

**म०** भिषजा भिषग्भ्यामश्विभ्यां सरस्वत्या च इन्द्रियावत् इन्द्रियवत् वीर्यवत् पशूनां संबन्धि हविरादाय परिस्रुता पयसा च सह सारघं मधु चादाय इन्द्रार्थे तेजो दुग्धं स्रावितम् । सुतासुताभ्यां परिस्रुत्पयोभ्यां सकाशात् अमृतोऽमृतरूपः इन्दुरैश्वर्यप्रदः सोमश्च दुग्धः । एवं यैः सरस्वत्यश्विभिरिन्द्राय नानाद्रव्येभ्यो नानारसानादायोपकारः कृतः तेभ्यः सौत्रामणीद्रष्टृभ्यो नमः ॥ ९५ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सुगदीन्द्राभिषेकान्तोऽध्यायो नवदशोऽगमत् ॥ १९ ॥

---

# विंशोऽध्यायः ।

## तत्र प्रथमा ।

क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि । मा त्वा हिꣳसीन्मा मा हिꣳसीः ॥ १ ॥

**उ०** क्षत्रस्य योनिरसि । गायत्री । आसन्दीवेद्योरुपदधाति अर्धर्चेन । क्षत्रस्य त्वं योनिरुत्पत्तिस्थानमसि । आसन्द्यामभिषिक्तो हि गुणधर्मानर्हति राजेत्येतदभिप्रायं योनित्वम् । क्षत्रस्य नाभिश्च नहनं त्वमसि । कृष्णाजिनमस्यामास्तृणाति । मा त्वा हिंसीत् । कृष्णाजिनमुच्यते । मात्वामियमासन्दी हिंसीत् । माच त्वं मां हिंसीः । यज्ञाध्यासोत्र कृष्णाजिनस्य । 'यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्च हिंसायाः' इति श्रुतिः ॥ १ ॥

**म०** 'सोमासन्दीवदासन्दीं जानुमात्रपदीं वेद्योर्निदधाति क्षत्रस्य योनिरिति' ( का० १९ । ४ । ८ ) । जानुप्रमाणपादामासन्दीं वेद्योर्मध्ये निदधाति सोमासन्दीवदिति मुञ्जरज्ज्वुताम्। आसन्द्या द्वौ पादौ दक्षिणवेदौ द्वावुत्तरवेदौ यथा तथेति सूत्रार्थः । आसन्दीदेवताका द्विपदा गायत्री । हे आसन्दि, त्वं क्षत्रस्य योनिरुत्पत्तिस्थानमसि । आसन्द्यामभिषिक्तो गुणधर्मानर्हति राजेति भावः । क्षत्रस्य नाभिर्नहनं बन्धनं चासि 'कृष्णाजिनमस्यामास्तृणाति मा त्वेति' ( का० १९ । ४ । ८ )। अस्यामासन्द्यां कृष्णाजिनं छादयेदित्यर्थः । यजुः कृष्णाजिनदेवत्यम् । प्राजापत्या गायत्री । यज्ञाध्यासेन कृष्णाजिनं प्रार्थ्यते । हे कृष्णाजिन, आसन्दी त्वा त्वां मा हिंसीः । त्वं च मा मां मा हिंसीः मा जहि । 'यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्च हिंसायै' ( १२ । ८ । ३ । ९ ) इति श्रुतेः ॥ १ ॥

## द्वितीया ।

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः । मृत्योः पाहि विद्योत्पाहि ॥ २ ॥

**उ०** आसन्द्यामुपविशति । निषसादेति व्याख्यातम् । पादयो रुक्ममुपन्यस्यति । मृत्योः पाहि गोपाय । मृत्युशब्देनात्राश निरुच्यते । विद्योत्पाहि विद्युतः पाहि ॥ २ ॥

**म०** 'तस्मिन्नास्ते यजमानो निषसादेति' ( का० १९ । ४ । ९ ) । यजमानः कृष्णाजिने उपविशेत् । व्याख्याता (अ० १० । क० २७) । 'पादयो रुक्ममुपन्यस्यति राजतꣳ सव्ये मृत्योरिति सौवर्णꣳ शिरस्येके विद्योदिति' ( का० १९ । ४ । १०–११ ) । आसन्द्युपविष्टयजमानस्य पादयोरधो रुक्मौ मण्डलाकारौ भूषणविशेषौ न्यस्यति राजतं सव्ये मृत्योरिति मन्त्रेण सौवर्णं दधे विद्योदिति सौवर्णं रुक्मं शिरसीत्येके ऊचुरिति सूत्रार्थः । रुक्मदेवत्ये यजुषी दैव्यौ बृहत्यौ । हे रुक्म, मृत्योः अकालमरणान्मां पाहि रक्ष । हे सौवर्ण रुक्म विद्योत् विद्योतत इति विद्योत् । विच्प्रत्यये गुणः। विद्युत्पाताद्रक्षेत्यर्थः ॥२॥

## तृतीया ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥ ३ ॥

**उ०** अभिषिञ्चति । देवस्यत्वेति व्याख्यातम् । अश्विनोर्भैषज्येन । भिषजः कर्म भैषज्यम् । भिषग्वैद्यः । तेन भैषज्येनाभिषिञ्चामीति संबन्धः । किमर्थमित्यत आह । तेजसे ब्रह्मवर्चसाय च । सरस्वत्यै भैषज्येन वीर्याय अन्नाद्याय अभिषिञ्चामि । सरस्वत्यै इति षष्ठ्यर्थे चतुर्थी । इन्द्रस्य इन्द्रियेण वीर्येण । बलाय श्रियै यशसे च सर्वार्थायाभिषिञ्चामि ॥ ३ ॥

**म०** 'सर्वसुरभ्युन्मृदितꣳ शेषैरभिषिञ्चत्या मुखादवस्रावयन् प्रतिदिशꣳ सर्वत्र सावित्रमश्विनोः सरस्वत्या इन्द्रस्येति

प्रतिमन्त्रम्' ( का० १९ । ४ । १४ ) । वेतसमात्रस्थापितैर्वैसाग्रहशेषैः प्रतिदिशं स्थितोऽध्वर्युरा मुखादवस्रावयन्नासन्दीस्थं यजमानमभिषिञ्चति मन्त्रत्रयेण । कीदृशम् । सर्वैः सुरभिभिश्चन्दनकर्पूरकस्तूरीकेसरादिभिरुद्वर्तितम् । सावित्रं यजुर्देवस्य त्वेति सर्वत्र त्रिष्वपि मन्त्रेष्वन्वेति । चतुर्थोऽभिषेक उत्तरे स्थितस्त्रिभिर्मन्त्रैर्महाव्याहृतिभिरिन्द्रस्येति तृतीयमन्त्रेण वा कुर्यादिति सूत्रार्थः । देवस्य त्वा । व्याख्यातम् । अश्विनोः । त्रीणि लिङ्गोक्तदेवतानि । आद्यं प्राजापत्या बृहती द्वे ऋग्गायत्र्यौ । हे यजमान, अश्विनोः भैषज्येन वैद्यकर्मणा त्वामभिषिञ्चामि । भिषजः कर्म भैषज्यम् । किमर्थं तेजसे कान्त्यै ब्रह्मवर्चसाय । सर्वत्रास्खलितवेदवेदाङ्गजनिता कीर्तिर्ब्रह्मवर्चसम् । सरस्वत्यै भैषज्येन । षष्ठ्यर्थे चतुर्थी । सरस्वत्या भिषक्कर्मणा च भवन्तं देवमभिषिञ्चामि । किमर्थं वीर्यायान्नाद्याय । वीर्यं सामर्थ्यं अन्नाद्यमन्नभक्षणसामर्थ्यं तस्मै । इन्द्रस्येन्द्रियेण इन्द्रियपाटवेन सामर्थ्येन च त्वामभिषिञ्चामि । किमर्थं बलाय सामर्थ्याय श्रियै सर्वसमृद्ध्यै यशसे कीर्त्यै ॥ ३ ॥

## चतुर्थी ।

कोऽसि कतमोऽसि कस्मै त्वा काय त्वा । सुश्लोक सुमङ्गल सत्यराजन् ॥ ४ ॥

**उ०** यजमानमालभते । कोसि । गायत्री । कः प्रजापतिरसि । कतमः प्रजापतितमः असि । अतिशयार्थं तमउपादानम् । बहवो हि प्रजापतयः । कस्मै । प्रजापतिपदप्राप्तये त्वामभिषिक्तवानहं यतः काय त्वा प्रजापतिभवाय त्वामहमभिषिक्तवानस्मि यतः । 'सुश्लोकेत्यलब्धो ह्वयति' । हे कल्याणमङ्गल हे सत्यराजन् सत्यः अनश्वरः राजा यस्य॥४॥

**म०** 'यजमानमालभते कोऽसीति । अध्वर्युर्यजमानं स्पृशति' ( का० १९ । ४ । १९ ) । प्राजापत्या गायत्री उष्णिग्गर्भा षट्सप्तैकादशोष्णिग्गर्भेति वचनात् । हे यजमान, त्वं कः प्रजापतिः असि । अत्यन्तं कः कतमः श्रेष्ठः प्रजापतिरसि । प्रजापतयो बहवः तत्रोत्तमोऽसि । कस्मै प्रजापतिपदप्राप्तये त्वामहमभिषिक्तवानिति शेषः । काय प्रजापतिभावाय चाभिषिक्तवान् । 'सुश्लोकेत्यालब्धो ह्वयति' ( का १९ । ४ । २० ) । अध्वर्युणा स्पृष्टो यजमानः सुश्लोकादिसंज्ञानराना ह्वयति । हे सुश्लोक, एहीति शेषः । शोभनः श्लोकः कीर्तिर्यस्य । शोभनं मङ्गलमुदयो यस्य स सुमङ्गलः । हे सुमङ्गल, त्वमेहि । हे सत्यराजन्, एहि सत्योऽविनाशी राजा प्रभुर्यस्य सः ॥ ४ ॥

## पञ्चमी ।

शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणो अमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥ ५ ॥

**उ०** अङ्गानि चालभ ते यथालिङ्गम् । शिरो मे पञ्चभिः । तृतीया गायत्री अन्त्या महापङ्क्तिस्त्र्यवसाना अनुष्टुभोऽन्याः । इन्द्रोऽभिषक्त आत्मानं राष्ट्रीभूतं पश्यन्नाह । शिरो मे श्रीर्वर्तते । यशो मुखं वर्तते । त्विषिर्दीप्तिः केशाश्च श्मश्रूणि च वर्तन्ते । राजा प्राणः मे अमृतं वर्तते । संगतं राज्यं यत्र स सम्राट् चक्षुर्वर्तते । विराट् श्रोत्रं वर्तते । विराट् प्रथमशरीरी ॥ ५ ॥

**म०** 'अङ्गानि चालभते यथालिङ्गꣳ शिरो म इति प्रतिमन्त्रम्' ( का० १९ । ४ । २१ ) । यजमानो यथालिङ्गमङ्गान्यालभते । इन्द्रशरीरावयवदेवताकं पञ्चर्चम् । तत्र तृतीया गायत्री अन्त्या त्र्यवसाना महापङ्क्तिः तिस्रोऽनुष्टुभः । अभिषिक्तो यजमान इन्द्ररूप आत्मानं सर्वात्मकं पश्यन्नाह । हे मम शिरः, श्रीः शोभास्तु वर्तते वा । मे मुखं यशोऽस्तु । केशाः श्मश्रूणि मुखलोमानि च त्विषिर्दीप्तिरस्तु । राजा दीप्यमानो मे मम प्राणो मुखवायुरमृतमस्तु । चक्षुरिन्द्रियं सम्राट् अस्तु । सम्यक् राजते सम्राट् । श्रोत्रमिन्द्रियं विराट् विविधं राजमानमस्तु ॥ ५ ॥

## षष्ठी ।

जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड् भामः । मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥ ६ ॥

**उ०** जिह्वा मे । जिह्वा मे भद्रं वर्तते । वाक् महः वर्तते पूजाकारिणी वर्तते । मनः मन्युर्वर्तते मनः क्रोधफलदायि वर्तते । भामः क्रोधः स्वराज्यक्षमो वर्तते । उक्तं च 'शक्तिरहितोपि कुप्यति मानं चोद्वहति सेवकजनोपि । अर्थरहितोपि कामी जानाति विधिं विडम्बयितुम्' इति । मोदाः प्रमोदा अङ्गुलयः अङ्गानि च मम वर्तन्ते । मित्रं मे सहः मित्रबलं मे सहः शत्रूणामभिभवितृ वर्तते ॥ ६ ॥

**म०** मे जिह्वा रसनेन्द्रियं भद्रं कल्याणरूपमस्तु । वाक् वागिन्द्रियं महः मह्यते पूज्यते महः पूज्यमानास्तु । महतेरसुन् प्रत्ययः । मनो मन्युः क्रोधरूपमस्तु क्रोधफलं ददातु । भामः क्रोधः स्वराट् स्वेनैव राजमानोऽस्तु नतु कुतश्चित्प्रतिहन्यतामित्यर्थः । तदुक्तम् 'शक्तिरहितोऽपि कुप्यति मानं चोद्वहति सेवकजनोऽपि । अर्थरहितोऽपि कामी जानाति विधिं विडम्बयितुम्' इति । अङ्गुलयो मोदाः आनन्दरूपाः सन्तु । मोदन्ते ते मोदाः पचाद्यच् । अङ्गानि प्रमोदाः प्रकृष्टहर्षाः सन्तु । मे मम मित्रं सहः अस्तु । सहते अभिभवति शत्रुमिति सहः रिपुनाशकमस्तु ॥ ६ ॥

## सप्तमी ।

बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म वीर्यम् । आत्मा क्षत्रमुरो मम ॥ ७ ॥

उ० बाहू मे । बाहू मे बलमिन्द्रियं च वर्तते । हस्तौ मे कर्म च वीर्यं वर्तते । आत्मा अन्तरात्मा क्षत्रं वर्तते उरश्च मम ॥ ७ ॥

म० मे बाहू बलमस्तु बलवन्तौ स्तामित्यर्थः । इन्द्रियं च बलं स्वकार्यक्षममस्तु । मे हस्तौ कर्म चास्तु सत्कर्मकुशलौ सामर्थ्यवन्तौ च स्तामित्यर्थः । मम आत्मा अन्तरात्मा उरो हृदयं च क्षत्रं क्षतात्त्राणकरमस्तु ॥ ७ ॥

## अष्टमी ।

पृ॒ष्टीर्मे॑ रा॒ष्ट्रमु॒दर॒मꣳसौ॑ ग्री॒वाश्च॒ श्रोणी॑ । ऊ॒रू अ॑र॒त्नी जानु॑नी॒ विशो॑ मेऽङ्गा॑नि स॒र्वतः॑ ॥ ८ ॥

उ० पृष्टीर्मे पृष्ठदेशो मे राष्ट्रं वर्तते । उदरं च अंसौ ग्रीवा च श्रोणी च ऊरू च अरत्नी च जानुनी च विशो मे वर्तते । अन्यान्यप्यङ्गानि यानि सर्वतः ॥ ८ ॥

म० मे मम पृष्टीः पृष्ठप्रदेशो राष्ट्रं देशो देशवत्सर्वाधारमस्तु । मे मम उदरमंसौ स्कन्धौ ग्रीवाः कण्ठदेशाः श्रोणी कटिदेशौ ऊरू सक्थिनी अरत्नी हस्तदेशौ जानुनी च सर्वतोऽन्यान्यङ्गानि च विशः प्रजाः सन्तु प्रजावत् पोष्याः सन्तु ॥ ८ ॥

## नवमी ।

नाभि॑र्मे चि॒त्तं वि॒ज्ञानं॑ पा॒युर्मेऽप॑चिति॒र्भ॒सत् । आ॒न॒न्द॒न॒न्दावा॒ण्डौ मे॒ भगः॒ सौभा॑ग्यं॒ पसः॑ । ज॒ङ्घाभ्यां॑ प॒द्भ्यां धर्मो॑ऽस्मि वि॒शि राजा॒ प्रति॑ष्ठितः ॥ ९ ॥

उ० नाभिर्मे । नाभिर्मे चित्तं विज्ञानं च वर्तते । चित्त[illegible]ज्ञानयोः को विशेष इति चेत् । वि[illegible]विज्ञानं तज्जः संस्कारश्चित्तम् । [illegible] अपचितिर्भसच्च वर्तते । पायुर्गुदप्रदेशः । अपचितिः पूजा । भसत्शब्देन स्त्रीप्रजननं गौडा आहुः । नच यजमानस्यैतद्भवति । अतः पत्नीविषयमेतत् । आनन्दनन्दौ आण्डौ मे वर्तेते । भगः सौभाग्यं पसो मे वर्तते । भगः महदैश्वर्यम् । 'पसः पसतेः स्पृशतिकर्मणः' इति शिश्नमुच्यते । जङ्घाभ्यां पद्भ्यां च धर्मोस्मि । धर्मप्रति हि राजा भवति । दिशि प्रतिष्ठितोऽस्मि ॥ ९ ॥

म० मे नाभिः चित्तं ज्ञानरूपमस्तु । पायुर्मे गुदेन्द्रियं विज्ञानं ज्ञानजनितसंस्काराधारमस्तु । भसत् स्त्रीप्रजननमपचितिः प्रजारूपमस्तु सुभगमस्तु । यजमानपत्नीविषयमेतत् । मे आण्डौ वृषणौ आनन्दनन्दौ स्तामानन्देन संभोगजनितसुखेन नन्दतस्तौ । तत्सुखभोक्तारौ भवतामित्यर्थः । 'पसः पसतेः स्पृशतिकर्मणः' इति यास्कोक्तेः पसो लिङ्गं भगः सौभाग्यं चास्तु । भग ऐश्वर्यं सौभाग्यं संपत्तिः । सर्वदा भोगासक्तमस्त्वित्यर्थः । जङ्घाभ्यां पद्भ्यां चाहं धर्मोऽस्मि । उपलक्षणमेतत् सर्वाङ्गैर्धर्मरूपोऽस्मि । धर्मरूपत्वादेव विशि प्रजायां राजा प्रतिष्ठितोऽस्मि । धर्मप्रतिष्ठितो हि राजा भवति ॥ ९ ॥

## दशमी ।

प्रति॑ क्ष॒त्रे प्रति॑तिष्ठामि रा॒ष्ट्रे प्रत्यश्वे॑षु॒ प्रति॑तिष्ठामि॒ गोषु॑ । प्रत्यङ्गे॑षु॒ प्रति॑तिष्ठाम्या॒त्मन्प्रति॑ प्रा॒णेषु॒ प्रति॑तिष्ठामि पु॒ष्टे प्रति॒ द्यावा॑पृथि॒व्योः प्रति॑तिष्ठामि य॒ज्ञे ॥ १० ॥

उ० कृष्णाजिनेऽवरोहति प्रतिक्षत्रमिति यजुषा । प्रतितिष्ठामि क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रतितिष्ठामि च अश्वेषु प्रतितिष्ठामि गोषु प्रतितिष्ठामि च । अङ्गेषु प्रतितिष्ठामि च आत्मनि प्रतितिष्ठामि च प्राणेषु प्रतितिष्ठामि च पृष्टे प्रतितिष्ठामि च द्यावापृथिव्योः प्रतितिष्ठामि च यज्ञे ॥ १० ॥

म० 'कृष्णाजिनेऽवरोहति प्रति क्षत्र इति' ( का० १९ । ४ । २३ ) । आसन्दीतो यजमानः कृष्णाजिनेऽवतरति । विश्वदेवदेवत्यं यजुः अतिशक्करी । अहं क्षत्रे प्रतितिष्ठामि क्षत्रियजातौ प्रतिष्ठायुक्तो भवामि । राष्ट्रे देशे अश्वेषु गोषु अङ्गेषु करपादाद्यवयवेषु आत्मन् आत्मनि चित्ते प्राणेषु पञ्चसु पुष्टे पुष्टौ समृद्धौ द्यावापृथिव्योः स्वर्गेहलोकयोः यज्ञे ज्योतिष्टोमादौ च प्रतितिष्ठामि । क्रियापदावृत्तिः फलातिशययोतनार्था । क्षत्रियदेशयोः प्रतिष्ठा वशीकरणम् गोऽश्वप्रति[illegible] तत्प्राप्तिः प्राणाङ्गप्रतिष्ठा नीरोगत्वम् आत्मप्रतिष्ठा निराधित्वम् पुष्टप्रतिष्ठा धनसमृद्धिः द्यावापृथिव्योः प्रतिष्ठोभयलोककीर्तिः यज्ञे प्रतिष्ठा यज्ञकरणम् । वश्यविश्वः पशुमान्निराधिव्याधिः श्रीमान् यज्ञकर्ता च भवेयमिति भावः ॥ १० ॥

## एकादशी ।

त्र॒या दे॒वा एका॑दश त्रयस्त्रि॒ꣳशाः सु॒राध॑सः । बृह॒स्पति॑पुरोहिता दे॒वस्य॑ सवि॒तुः स॒वे । दे॒वा दे॒वैर॑वन्तु मा ॥ ११ ॥

उ० त्रया देवा इति अस्रान्ते जुहोति । पङ्क्त्या त्र्यवसानया दैव्या । परेण यजुषा स्वाहाकारान्तेन च । व्यवहितपदप्रायः । ये एकदेश देवाः त्रयः त्रिप्रकाराः येच एकीकृताः त्रयस्त्रिंशाः त्रयस्त्रिंशत्संपद्यन्ते । सुराधसः शोभनधनाः । राधइति धननाम । राध्नुवन्त्यनेन । येच बृहस्पतिपुरोहिताः ते देवस्य सवितुः सवे प्रसवे वर्तमानाः । देवा देवैर्वक्ष्यमाणैः सह अवन्तु पालयन्तु माम् ॥ ११ ॥

म० 'त्रया देवा इति शस्त्रान्ते जुहोति' ( का० १९ । ५ । ८ ) । शस्त्रसमाप्तौ वषट्कृते त्रया इति कण्डिकाद्वयात्मकेन मन्त्रेण त्रयस्त्रिंशं वसाग्रहं जुहोति । त्र्यवसाना विश्वदेवदेवत्या पङ्क्तिः । एकादश देवा देवैः वक्ष्यमाणैः सह मा मामवन्तु रक्षन्तु । कीदृशाः । त्रयाः त्रयोऽवयवा येषां ते 'संख्याया अवयवे तयप्' ( पा० ५ । २ । ४२ ) 'द्वित्रिभ्यां तयस्यायज्वा' ( पा० ५ । २ । ४३ ) इत्ययजादेशः । एकादश

त्रिगुणा इत्यर्थः । ते च कतीति स्वयमेवाह त्रयस्त्रिंशाः तिसृभिरधिका त्रिंशत्संख्या येषां ते । त्रयस्त्रिंशत्संख्या इत्यर्थः । सुराधसः शोभनं राधो येषां ते । राध इति धननाम । 'राध्नुवन्त्यनेन' ( नि० ४ । ४ ) इति यास्कोक्तेः । तथा बृहस्पतिपुरोहिताः बृहस्पतिः पुरोहितो येषां ते । तथा सवितुः देवस्य सवे आज्ञायां वर्तमानाः । देवाः दीप्यमानाः ॥ ११ ॥

## द्वादशी ।

प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूᳬषि सामभिः सामान्यृग्भिरृचः पुरोऽनुवाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या वषट्कारैर्वषट्कारा आहुतिभिराहुतयो मे कामान्समर्धयन्तु भूः स्वाहा ॥ १२ ॥

**उ०** कथमवन्तु । प्रथमा देवाः द्वितीयैः सहिताः अवन्तु । द्वितीयाः तृतीयैः । तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिः यजूंषि सामभिः सामानि ऋग्भिः ऋचः पुरोनुवाक्याभिः पुरोनुवाक्या याज्याभिः याज्या वषट्कारैः वषट्कारा आहुतिभिः । एवमेकादशसंख्यैः त्रिप्रकारैर्देवैरुत्तरोत्तरपालिता आहुतयः मे कामान्समर्धयन्तु संवर्धयन्तु । भूयः सुहुतमस्तु ॥ १२ ॥

**म०** कथमवन्तु तत्राह । विश्वदेवदेवत्यमाशीर्लिङ्गं यजुः प्रकृतिश्छन्दः । प्रथमा देवा द्वितीयैः सहिता मामवन्तु द्वितीयास्तृतीयैः सहावन्तु तृतीयाः सत्येन सह सत्यं यज्ञेन सह यज्ञो यजुर्भिः सह यजूंषि सामभिः सह सामान्यृग्भिः सह ऋचः पुरोऽनुवाक्याभिः सह पुरोऽनुवाक्या याज्याभिः सह याज्या वषट्कारैः सह वषट्कारा आहुतिभिः सह एवं त्रिप्रकारैरेकादशसंख्यैर्देवैरुत्तरोत्तरं पालिता आहुतयो मे मम कामानभिलाषान् समर्धयन्तु पूरयन्तु । भूः भुवनं भूः हुतमिदं स्वाहा सुहुतमस्तु ॥ १२ ॥

## त्रयोदशी ।

लोमानि प्रयतिर्मम त्वङ्म आनतिरागतिः । माᳬसं म उपनतिर्वस्वस्थि मज्जा म आनतिः॥१३॥

**उ०** यजमानो ग्रहान् भक्षयति । लोमानि प्रयतिः । अनुष्टुप् । मम यानि लोमानि तानि प्रयतिर्वर्तते । प्रयतिः प्रयत्नः । त्वक् मे आनतिर्वर्तते आनयनमानतिः । त्वगेव सर्वाणि भूतानि मम आनतानीत्यभिप्रायः । आगतिश्च द्रव्यादिर्मांसं मे उपनतिर्वर्तते । उपनमन्ते हि मम भूतानि । वसु धनानि अस्थि मम वर्तते । मज्जा मे आनतिः ॥ १३ ॥

**म०** 'प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति' ( का० १९ । ५ । १० ) । यजमानो ग्रहशेषं प्रत्यक्षमुपहवपूर्वकं भक्षयति । लोमत्वगादिदेवतानुष्टुप् । मम लोमानि प्रयतिः प्रयतनं प्रयतिः प्रयत्नो वर्तते तथोद्यामी (?) यथा लोमस्वपि प्रयत्नः । मे मम त्वङ् आनतिः आगतिश्च आनमन्ति भूतानि यस्यां सा आनतिः आगच्छन्ति भूतानि यां प्रति सा आगतिः । मदीयां त्वचं दृष्ट्वा भूतान्यागच्छन्ति नमन्ति चेत्यर्थः । मे मम मांसमुपनतिः उपनमन्ति भूतानि यत्र । ममास्थि वसु धनं धनरूपमेव । मे मज्जा आनतिः आनमन्ति भूतानि यत्र उपलक्षणमेतत् । मम सप्त धातवो जगद्वशीकरणसमर्था इत्यर्थः ॥ १३ ॥

## चतुर्दशी ।

यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वᳬहसः ॥ १४ ॥

**उ०** इत उत्तरमवभृथः मासरकुम्भं प्लावयति । यद्देवाः तिस्रोऽनुष्टुभोऽग्निदेवत्याः । देवाः देवासः द्वे आमन्त्रिते त्रिस्थानानपि देवान् बोधयति । यत्किंचित् हे देवाः हे देवासः, देवहेडनं चकृम कृतवन्तो वयम् । अग्निर्माम् तस्मात् एनसः पापात् विश्वात्सर्वस्मात् मुञ्चतु । अंहसश्च पापात् ॥ १४ ॥

**म०** इत उत्तरमवभृथः । 'मासरकुम्भं प्लावयति यद्देवा इति' ( १९ । ५ । १३ ) । अवभृथेष्टिं कृत्वा यद्देवा इत्यादिना वरुण नो मुञ्चेत्यन्तेन ( १८ ) सार्धकण्डिकाचतुष्कात्मकेन मन्त्रेण मासरकुम्भं जले तारयति । अग्निवायुसूर्यदेवत्यास्तिस्रोऽनुष्टुभः कूष्माण्डीसंज्ञाः । दीव्यन्तीति देवाः दीप्यमाना हे देवासो देवाः, वयं यद्देवहेडनं देवानां हेडनमपराधं चकृम कृतवन्तः । करोतेर्लिट् संहितायां छान्दसो दीर्घः । अग्निस्तस्मादेनसः पापात् मा मां मुञ्चतु पृथक्करोतु । विश्वात् विश्वस्मात्सर्वस्मात् अंहसः विघ्नाच्च मुञ्चतु । ङसेः स्मादभाव आर्षः ॥ १४ ॥

## पञ्चदशी ।

यदि दिवा यदि नक्तमेनाᳬसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वᳬहसः ॥ १५ ॥

**उ०** यदि दिवा । यदि दिवा अहनि च रात्रौ एनांसि पापानि चकृम कृतवन्तो वयम् । वायुः मां तस्मात् एनसः विश्वात् मुञ्चतु अंहसः ॥ १५ ॥

**म०** यदि चेत् दिवा अहनि यदि नक्तं रात्रौ वयमेनांसि पापानि चकृम । वायुः तस्मादेनसः विश्वस्मादंहसश्च मां मुञ्चतु ॥ १५ ॥

## षोडशी ।

यदि जाग्रद्यदि स्वप्न एनाᳬसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वᳬहसः ॥१६॥

**उ०** यदि जाग्रत् । यदि जाग्रदवस्थायाम् यदि स्वप्नावस्थायाम् एनांसीति समानव्याख्यानम् । सूर्य इति विशेषः । श्रुतिस्तु लक्षणया व्याचष्टे । 'मनुष्या वै जागरितं

पितरः सुप्तं मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्च मुञ्चतु' इति ॥ १६ ॥

**म०** यदि जाग्रत् । सप्तम्या लुक् । यदि जाग्रति जाग्रदवस्थायाम् यदि स्वप्ने स्वप्नावस्थायामेनांसि वयं चकृम सूर्यस्तस्मादेनसः विश्वादंहसश्च मां मुञ्चतु । श्रुत्या त्वन्यथा व्याख्यातम् । जाग्रति मनुष्ये यत्पापं कृतं स्वप्ने पितृषु यत्पापं कृतम् तस्मान्मा मुञ्चतु । 'मनुष्या वै जागरितं पितरः सुप्तं मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्च मुञ्चन्ति' ( १२।९।२।२ ) इति श्रुतेः ॥ १६ ॥

## सप्तदशी ।

यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधि धर्मणि तस्यावयजनमसि ॥ १७ ॥

**उ०** यद्ग्रामे यदरण्ये यत्सभायां यत् इन्द्रिये इन्द्रियविषये । 'देवविषये' इति श्रुतिः । यत् शूद्रे यत् अर्ये । 'अर्यः स्वामिवैश्ययोः' । यच्च एतद्व्यतिरिक्तमेनः चकृम वयम् । यच्च एकस्य आवयोः पत्नीयजमानयोः अधिधर्मणि एनः तस्य एनसः अवयजनमसि । अवपूर्वो यजतिर्नाशने वर्तते । नाशनमसि ॥ १७ ॥

**म०** लिङ्गोक्तदेवतं यजुः । ग्रामे अरण्ये वने सभायां पक्षपातादि यदेनः इन्द्रिये इन्द्रियविषये परापवादपरनारीदर्शनादि यत् देवविषये वा शूद्रे अर्ये वैश्ये 'अर्यः स्वामिवैश्ययोः' ( पा० ३।१।१०३ ) इति निपातः । यत् पापं वयं चकृम । आवयोः पत्नीयजमानयोरेकस्य अधिधर्मणि कर्मणि अधिकर्मविषये यदेनो धर्मलोपलक्षणम् । तस्यैनसः पापस्यावयजनं नाशनं त्वमसि । नाशकोऽसीत्यर्थः । कुम्भं प्रति वचनम् । अवपूर्वो यजिर्नाशनार्थः ॥ १७ ॥

## अष्टादशी ।

यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च । अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ॥ १८ ॥

**उ०** यदापः व्याख्यातः । अवभृथनिचुम्पुण व्याख्यातः । इयांस्तु विशेषः । अयक्षीति यजतेरिह रूपम् । पूर्ववच्च क्रतुयागे अयाजिषमिति ॥ १८ ॥

**म०** यदापः । व्याख्यातम् ( अ० ६ । क० २२ ) 'पूर्ववन्मज्जनम्' ( का० १९।५।१४ ) । पूर्वत्रदिति अवभृथेत्यादि ओषधीरुताप इत्यन्तेन ( १९ ) सुराकुम्भस्य जले मज्जनम् । अवभृथ । व्याख्यातम् ( अ० ३ । क० ४८ । अ० ८ । क० २५ ) इयान्विशेषः । अयक्षि अवायक्षि नाशितवानस्मि [illegible] तङि उत्तमैकवचने रूपम् । पूर्वत्र अयासिषमिति । सुमित्रिया न इत्यपोऽञ्जलिदानाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चति द्वौ विक्रमा उदञ्ज्ला' ( का० १९।५।१५ ) । यजमानोऽवभृथप्रदेशात् द्वौ विक्रमौ उदीच्यां गत्वा सुमित्रिया इति जलाञ्जलिमादाय यस्यां दिशि रिपुस्तां प्रति सिञ्चतीति सूत्रार्थः । सुमित्रिया नः । व्याख्यातम् ( अ० ६ । क० २२ ) ॥ १८ ॥ १९ ॥

## एकोनविंशी ।

समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ १९ ॥

**उ०** समुद्रे ते । द्विपदा विराट् । सुमित्रिया न इत्यपोऽञ्जलिना आदाय दुर्मित्रिया इति द्वेष्यंप्रति सिञ्चति ॥ १९ ॥

## विंशी ।

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ २० ॥

**उ०** द्रुपदादिव । अनुष्टुप् अब्देवत्या वा सोपप्लवनीया । द्रुममयः पदः द्रुपदः पादुका उच्यन्ते । तथाच यास्कः 'कनीनकेव विद्रधे नवे द्रुपदे' इति । मुमुचानः यथा द्रुममयात्पादात् मुच्यमानः पुरुषः तज्जैर्दोषैः असंबध्यमानः पृथग्भवेत् । यथाच स्विन्नः प्रस्विन्नः पुरुषः स्नातः मलात्पृथग्भवेत् । प्रस्विन्नस्य हि कृत्स्नो मल उपैति । यथाच पूतं पवित्रेण कम्बलमयेन आज्यं घृतं पृथग्भवेत् कीटिकातः एवमापः शुन्धन्तु पृथक्कुर्वन्तु मामेनसः पापात्सकाशात्॥२०॥

**म०** 'अवभृथवत्स्नात्वा वासोपासनं द्रुपदादिवेति' ( का० १९।५।१६ ) । जलस्थावेव जायापती सौमिकावभृथवत् स्नात्वा कर्मकाले धृतं वासोऽप्सु क्षिपतः अब्देवत्यानुष्टुप् । आपो जलानि एनसः पापात् मा मां शुन्धन्तु पुनन्तु पापात् पृथक् कुर्वन्तु । तत्र दृष्टान्तत्रयमाह द्रुपदादिवेति 'पलाशीद्रुद्रुमागमाः' इत्यभिधानोक्तेः ( अम० २।४।५ ) द्रुस्तरुः तन्मयं पदं द्रुपदं पादुका तस्मान्मुमुचानः पृथग्भवन् यथा पादुकादोषैरसंबद्धो भवति । मुचेर्विकरणव्यत्ययेन शानचि जुहोत्यादित्वाद्द्वित्वे मुमुचान इति रूपम् । यथाच स्विन्नः स्वेदयुक्तः स्नातः सन् मलात् पृथग्भवति । आज्यमिव यथा पवित्रेण कम्बलमयेन पूतं गालितमाज्यं घृतं कीटेभ्यः पृथग्भवति । तथापो मां शुन्धन्तु ॥ २० ॥

## एकविंशी ।

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ २१ ॥

उ० उत्तरति । उद्वयम् अनुष्टुप्सौरी । उदः अगन्म । आख्यातेन संबन्धः । उदगन्म उद्गताः स्म वयं तमसस्परि । तमसोधि तमोबहुलादस्माल्लोकात् । स्वः स्वर्गं लोकं पश्यन्तः । उत्तरम् उद्गततरमस्माल्लोकात् । ततोऽपि देवं सूर्यं देवत्रा देवेषु उदगन्म ज्योतिः । उत्तमं सर्वेभ्यो ज्योतिर्भ्यः ॥ २१ ॥

म० 'सोमवदुत्क्रमणमागमनं च' ( का० १९ । ५ । १७ )। सोमवदिति उद्वयमिति मन्त्रेण जलान्निष्क्रमणम् । 'अपाम सोममममृता अभूम'इति जपतां सर्वेषां त्रिपशुदेशमागमनमिति सूत्रार्थः । सूर्यदेवत्यानुष्टुप् प्रस्कण्वदृष्टा । वयं तमसः परि तमसः सकाशात् तमोबहुलादस्माल्लोकात् उदगन्म उद्गता निर्गताः । गमेर्लङि शपि लुप्ते मस्य नः । कीदृशा वयम् । उत्तरमुत्कृष्टतरं स्वः स्वर्गं पश्यन्तः ईक्षमाणाः । किंच देवत्रा देवलोके सूर्यं देवं पश्यन्तः सन्त उत्तमं ज्योतिर्ब्रह्मरूपमुदगन्म प्राप्ताः ॥ २१ ॥

## द्वाविंशी ।

आपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वानग्न आगमं तं मा सꣳसृज वर्चसा प्रजया च धनेन च ॥ २२ ॥

उ० आहवनीयमुपतिष्ठते । आपो अद्य पङ्क्तिराग्नेयी । योहम् आपः अद्यास्मिन्नहनि अनुचारिषम् । अनुचरितवानस्मि अनेनावभृथकर्मणा । यश्चाहम् अब्जेन रसेन समसृक्ष्महि संसृष्टवानस्मि । यश्चाहं पयस्वान् उदकवान्सन् । हे अग्ने, आगमम् आगतवानस्मि । तं मामागतवन्तं सन्तम् संसृज वर्चसा प्रजया च धनेन च ॥ २२ ॥

म० 'आहवनीयमुपतिष्ठत आपो अद्येति' (का० १९ । ५ । १८ ) । यजमान आहवनीयमुपतिष्ठते । अग्निदेवत्या पङ्क्तिः । हे अग्ने, तं मां वर्चसा ब्रह्मवर्चसेन प्रजया पुत्रादिकया धनेन सुवर्णादिकेन च त्वं संसृज संयोजय । योऽहमद्य अपः अन्वचारिषम् अवभृथकर्मणा जलमनुचरितवानस्मि प्राप्तोस्मि । चरतेर्लुङ् । यश्चाहं रसेन जलेन समसृक्ष्महि संसृष्टोऽस्मि । सृजेर्लङ् वचनव्यत्ययः । यश्चाहं पयस्वानुदकवान्सन् आगमम् आगतवानस्मि । गमेर्लुङि 'पुषादि–' ( पा० ३ । १ । ५५ ) इति च्लेरङ् । तं मां वर्चआदिभिर्योजय ॥ २२ ॥

## त्रयोविंशी ।

एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि । समाववर्ति पृथिवी समुषाः समु सूर्यः । समु विश्वमिदं जगत् ॥ वैश्वानरज्योतिर्भूयासं विभून्कामान्व्यश्नवै भूः स्वाहा ॥ २३ ॥

उ० समिधमादत्ते । एधोसि एधः समिन्धनमस्यग्नेः । एवं चेत् अतस्त्वां समिन्धनमुपादाय एधिषीमहि । आदधाति समिदसि । यतश्च समिन्धनमस्यग्नेः तेजश्चासि अग्नेः । दाह्यसंयोगेनाग्निर्ज्वलतीत्येतदभिप्रायम् । अतस्त्वां ब्रवीमि । तेजो मयि धेहि । जुहोति । समाववर्ति गायत्री । यस्मात्समावर्तते नश्वरत्वादियं पृथिवी । यस्माच्च समावर्तते उषाः। यस्माच्च समावर्तते एवं सूर्यः । यस्माच्च समावर्तते एवं विश्वम् । इदं जगत् जङ्गमादि । अतो वैश्वानरस्य ज्योतिः भूयासम् । 'वैश्वानरः परं ब्रह्म' इत्याहुरौपनिषदिकाः । विभून् कामान् व्यश्नवै प्राप्नुयाम् । भूः भुवनमात्राभिसंबन्धेन सुहुतमस्तु ॥ २३ ॥

म० 'एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति' ( का० १९ । ५ । १९ ) । यजमानः एधोऽसीति मन्त्रेण समिधं गृहीत्वा समिदसीति मन्त्रेणाग्नौ दधाति । समिद्देवत्ये यजुषी । हे समित्त्वमेधः, एधयति दीपयतीति एधः दीपिकासि । वयं त्वत्प्रसादादेधिषीमहि धनादिभिर्वृद्धिं व्याप्नुयाम । एधतेराशीर्लिङ् । हे समित्, त्वं समिदसि समिन्धयति दीपयतीति समित् तेजश्चासि तत्संयोगेनाग्नेर्ज्वलनात् । अतो मयि विषये तेजो धेहि धारय । 'जुहोति समाववर्तीति' ( का० १९ । ५ । २० ) । यजमानः सकृद्गृहीतमाज्यं कण्डिकाशेषेण जुहोति । समाववर्ति आग्नेयी गायत्री । वैश्वानरज्योतिरिति यजुः आग्नेयम् । पृथिवी समाववर्ति सम्यगावर्तते। विकरणव्यत्ययेन वृतेः शपः श्लुः । नश्यतीत्यर्थः । उषाः दिवसोऽपि समाववर्ति सूर्यः समाववर्ति । उ एवार्थे (विश्वमिदं जगत् समाववर्ति । अतोऽहं वैश्वानरज्योतिः भूयासम् । विश्वेभ्यो नरेभ्यो हितो वैश्वानरः परमात्मा तद्रूपं ज्योतिर्ब्रह्मैव भूयासम् । विभून्महतोऽपि कामान्मनोरथान् व्यश्नवै प्राप्नुयाम् । भूः स्वाहा भुवनं भूः सत्तामात्रं ब्रह्म तस्मै स्वाहा सुहुतमस्तु भूरित्यव्ययम् ॥ २३ ॥

## चतुर्विंशी ।

अभ्यादधामि समिधमग्ने व्रतपते त्वयि । व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितो अहम् ॥ २४ ॥

उ० सौत्रामण्यारम्भे यजमान आहवनीये तिस्रः समिधोऽभ्यादधाति तिसृभिरनुष्टुब्भिराग्नेयीभिः । प्रथमा व्रतग्रहणीया । यामेताम् अभ्यादधामि समिधम् हे अग्ने व्रतपते, त्वयि अनया व्रतं च श्रद्धां च उपगच्छामि । ततः इन्धे त्वाम् अहं दीक्षितः सन् ॥ २४ ॥

म० 'अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति' ( का० १९ । १ । १२ ) । सौत्रामण्यादावादित्येष्टिं समाप्य त्रिपश्वर्थमाहवनीयदक्षिणाग्नी विहृत्याम्यन्वाधानं ब्रह्मवरणं च कृत्वाहवनीये यजमानस्तिस्रः समिधः प्रत्यृचमादधाति । अग्निदेवत्यास्तिस्रोऽनुष्टुभः आश्वतराश्विदृष्टाः । हे अग्ने, व्रतपते व्रतस्य कर्मणः पालक, अहं समिधं त्वयि अभ्या-

दधामि जुहोमि तेन समिदाधानेन दीक्षितः सन्नहं व्रतं कर्म श्रद्धां विश्वासं चोपैमि उपगच्छामि । त्वा त्वामिन्धे दीपयामि ॥ २४ ॥

## पञ्चविंशी ।

यत्र॒ ब्रह्म॑ च क्ष॒त्रं च॑ स॒म्यञ्चौ॒ चर॑तः स॒ह । तं लो॒कं पु॒ण्यं प्रज्ञे॑षं॒ यत्र॑ दे॒वाः स॒हाग्निना॑ ॥२५॥

**उ०** यत्र ब्रह्म । यत्र ब्रह्म च मूर्तिमत् क्षत्रं च । सम्यञ्चौ समीची इति प्राप्ते लिङ्गव्यत्ययः । चरतः सह अवियोगेन । तं लोकं पुण्यं प्रज्ञेषं प्रज्ञानं वा प्राप्ता भवन्तीत्यतः तल्लोकगमनं प्रार्थ्यते । यत्र देवाः सहाग्निना चरन्ति ॥ २५ ॥

**म०** पुण्यं पवित्रं लोकं प्रज्ञेषं जानीयाम् । लोकमप्राप्तानां तल्लोकज्ञानं न भवतीति स्वर्लोकगमनं प्रार्थ्यते । तं कम् । यत्र लोके ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिश्च सहावियोगेन चरतः तिष्ठत इत्यर्थः । कीदृशे ब्रह्मक्षत्रे । सम्यञ्चौ लिङ्गव्यत्ययः । समीची सम्यक् अञ्चतस्ते । तत्र चाग्निना सह देवाः संचरन्ति । सदा च विप्राः क्षत्रियाश्च यं गच्छन्ति तं देवलोकं प्राप्नुयामित्यर्थः ॥ २५ ॥

## षड्विंशी ।

यत्रेन्द्र॑श्च वा॒युश्च॑ स॒म्यञ्चौ॒ चर॑तः स॒ह । तं लो॒कं पु॒ण्यं प्रज्ञे॑षं॒ यत्र॑ से॒दिर्न वि॒द्यते॑ ॥ २६ ॥

**उ०** यत्रेन्द्रः । यत्र इन्द्रश्च वायुश्च सम्यञ्चौ संगतौ चरतः सह अवियुक्तौ । तं लोकं पुण्यं प्राप्नुयाम् । यत्र सेदिर्न विद्यते । अन्नलाभनिमित्तं सदनं कातर्यात्सेदिः॥२६॥

**म०** यत्र लोके इन्द्रश्च वायुश्च सम्यञ्चौ सह चरतः । यत्र च सेदिः सदनं सेदिः 'आदृगम–' ( पा० ३ । २ । १७१ ) इति वार्तिकप्रत्ययः लिड्वत्त्वादेत्वाभ्यासलोपौ । अन्नाप्राप्तिजनितं दुःखं सेदिः स यत्र न विद्यते तं लोकं पुण्यं पवित्रं प्रज्ञेषं प्रजानीयाम् । जानातेः 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) इति सिपीटि च रूपम् ॥ २६ ॥

## सप्तविंशी ।

अ॒ꣳशुना॑ ते अ॒ꣳशुः पृ॑च्यतां॒ परु॑षा॒ प॑रुः । ग॒न्धस्ते॒ सोम॑मवतु॒ मदा॑य॒ रसो॒ अच्यु॑तः ॥ २७ ॥

**उ०** अꣳशुना ते । द्वितीया सुरासन्धानेऽनुष्टुप् । सोमस्यांशुना ते तव हे सुरे, अंशुः पृच्यतां संपृच्यतां संसृज्यताम् । परुषा च परुः पर्वणा च पर्व संपृच्यताम् । एवं च कृत्वा गन्धस्तव सोममवतु संपृणक्तु समालिङ्गताम् । मदाय च रसः अच्युतः अनश्वरः आलिङ्गताम् ॥ २७ ॥

**म०** सुरादेवत्यानुष्टुप् सुरासंसर्जने विनियुक्ता । तत्सूत्रं सौत्रामण्यारम्भे ( का० १९ । १ ) लिखितम् । हे सुरे, ते तव अंशुः भागः सोमस्यांशुना भागेन सह पृच्यतां संयुज्यताम् । तव परुः पर्व सोमस्य परुषा पर्वणा सह पृच्यताम् । तव गन्धः अच्युतः अनश्वरो रसश्च सोममवतु आलिङ्गतु । किमर्थं मदाय मत्ततायै । सुरायुक्तः सोमः पीतो मदजनको भवति अत उभयोर्योगोऽस्तु ॥ २७ ॥

## अष्टाविंशी ।

सि॒ञ्चन्ति॒ परि॑षिञ्च॒न्त्युत्सि॑ञ्चन्ति पु॒नन्ति॑ च । सु॒रायै॑ ब॒भ्र्वै मदे॒ कि॒न्त्वो व॑दति॒ कि॒न्त्वः ॥ २८ ॥

**उ०** पूतामादत्ते । सिञ्चन्ति परि । अनुष्टुप् सौमी ऐन्द्री वा । सिञ्चन्ति याम् आचामभावमुपगताम् । आचामो भक्तमण्डः । परिषिञ्चन्ति पयःप्रभृतिभिः । उत्सिञ्चन्ति च ग्रहैः । पुनन्ति च यां गोवालपवित्रहिरण्यादिभिः । तस्यै सुरायै बभ्र्वै बभ्रुवर्णायै । षष्ठ्यर्थे चतुर्थ्यौ । मदेऽवस्थितः इन्द्रः । किन्त्वो वदति किंत्वः किंत्वः इति वदति किं त्वं कस्य त्वं ब्रूहीति वदति ॥ २८ ॥

**म०** सुरादेवत्येन्द्रदेवत्यावानुष्टुप् । पूतसुरादाने विनियोग उक्तः ( का० १९ । २ । ६ ) । बभ्र्वै बभ्रुवर्णायै तस्यै सुरायै । षष्ठ्यर्थे चतुर्थी । सुराया मदे स्थितः सुरया मत्तः इन्द्रः किंत्वः किंत्व इति वदति त्वं किम् कस्य त्वमित्याद्यन्यतिरस्कारकरं वचो वदति । यां सुरां सिञ्चन्ति पात्रे ऋत्विजः परिषिञ्चन्ति पयआदिभिः उत्सिञ्चन्ति । ग्रहैः गोवालपवित्रहिरण्यादिभिः पुनन्ति च ॥ २८ ॥

## एकोनत्रिंशी ।

धा॒नाव॑न्तं कर॒म्भिण॑मपू॒पव॑न्तमु॒क्थिन॑म् । इन्द्र॑ प्रा॒तर्जु॑षस्व नः ॥ २९ ॥

**उ०** धानावन्तं करम्भिणम् । ऐन्द्री गायत्री प्रातःसवने पुरोडाशानां पुरोनुवाक्या । धानावन्तं धानाभिः संयुक्तं । करम्भिणं करम्भेण संयुक्तम् । अपूपवन्तं अपूपेन संयुक्तम् । उक्थिनं वचनवन्तं स्तुतिमन्तं भागम् हे इन्द्र, प्रातःसवने जुषस्व सेवस्व नः अस्माकम् ॥२९॥

**म०** इन्द्रदेवत्या गायत्री विश्वामित्रदृष्टा स्मार्ते श्रवणाकर्मणि धानाहोमे विनियुक्ता प्रातःसवने पुरोडाशपुरोऽनुवाक्यापि । हे इन्द्र, त्वं प्रातःकाले नोऽस्माकं पुरोडाशं जुषस्व । कीदृशम् । धानावन्तं धाना विद्यन्ते यत्र तम् । करम्भिणं करम्भोऽस्यास्ति । अपूपवन्तमपूपाः सन्ति यत्र । उक्थिनमुक्थं शस्त्रं यत्र स्तुतियुक्तम् ॥ २९ ॥

## त्रिंशी ।

बृ॒हदिन्द्रा॑य गायत॒ मरु॑तो वृत्र॒हन्त॑मम् । येन॒ ज्योति॒रज॑नयन्नृता॒वृधो॑ दे॒वं दे॒वाय॒ जागृ॑वि ॥ ३० ॥

**उ०** बृहदिन्द्राय । ऐन्द्राबृहत्या गायत्रीति । साम्न इयं योनिः । बृहत्साम इन्द्राय गायत उपशब्दयत । हे मरुतः । ऋत्विजो वा मरुतः । वृत्रहन्तमम् वृत्रंप्रति अति-

शयेन हन्ति गच्छतीति वृत्रहन्तमः। एवमेव व्याख्येयम्। येनैवं पदकारः पदं चक्रे। वृत्रहन्तममिति मकारान्तावग्रहणम्। अथ कोर्थः। पाप्मानं प्रति अतिशयेन हन्तारं साम गायतीति। येन साम्ना ज्योतिः अजनयन्। ऋतावृधः सत्यवृधो वा यज्ञवृधो वा। इन्द्रस्य। यद्वा। ऋतावृधो देवाः। कथंभूतं ज्योतिरजनयन्। देवं दातृ। देवाय इन्द्राय दातुः। जागृवि जागरणशीलं स्वाधिकारावहितचित्तम्॥ ३०॥

**म०** 'ऐन्द्र्यां बृहत्यां गायति' (का० १९। ५। २)। अध्वर्युप्रेषितो ब्रह्मा इन्द्रदेवतायां बृहत्यां साम गायति। इन्द्रदेवत्या बृहती नृमेधपुरुषमेधदृष्टा। हे मरुतः ऋत्विजः, इन्द्राय इन्द्रार्थं यूयं बृहत्साम गायत सामगानं कुरुत। कीदृशम्। बृहत् वृत्रहन्तमम् वृत्रं पापं प्रति अतिशयेन हन्ति गच्छति वृत्रासुरं नाशयति वा। 'नाद्धस्य' (पा० ८। २। १७) इति नुम्। ऋतं यज्ञं वर्धयन्ति ऋतवृधः देवा ऋत्विजो वा। येन सामगानेन देवाय इन्द्राय ज्योतिः तेजः अजनयन्नुदपादयन्। कीदृशं ज्योतिः। देवं दीप्यमानम् जागृवि जागर्तीति जागृवि जागरणशीलम्। अविनश्वरमित्यर्थः। सामगानेनेन्द्रस्तेजस्वी जात इत्यर्थः॥ ३०॥

## एकत्रिंशी।

अध्व॑र्यो अद्रि॑भिः सु॒तᳯ सोमं॑ प॒वित्र॒ आन॑य। पु॒ना॒हीन्द्रा॑य॒ पात॑वे॥ ३१॥

**उ०** ब्रह्मानुमन्त्रणम्। अध्वर्यो अद्रिभिः। ऐन्द्री गायत्री। हे अध्वर्यो, अद्रिभिः ग्रावभिः सुतमभिषुतं सोमम् पवित्रे आनय आसिञ्च। ततः पुनाहि पुनीहि। इन्द्राय इन्द्रस्य। पातवे पानार्थम्॥ ३१॥

**म०** 'ब्रह्मानुमन्त्रमध्वर्यो अद्रिभिरिति' (का० १९। २। ११)। ब्रह्मा पयोऽनुमन्त्रयते। ऐन्द्री गायत्री। हे अध्वर्यो, त्वं सोमं पवित्रे कम्बलमये आनय सिञ्च। कीदृशम्। अद्रिभिर्ग्रावभिः सुतमभिषुतम्। ततः पुनाहि पुनीहि गालय। इत्वाभाव आर्षः। किमर्थम्। इन्द्राय पातवे इन्द्रस्य पानार्थम्। तुमर्थे तवेप्रत्ययः॥ ३१॥

## द्वात्रिंशी।

यो भू॒ताना॒मधि॑पति॒र्यस्मि॑ल्लो॒का अधि॑श्रि॒ताः। य ईशे॑ मह॒तो म॒हाँस्तेन॑ गृह्णामि॒ त्वाम॒हं मयि॑ गृह्णामि॒ त्वाम॒हम्॥ ३२॥

**उ०** त्रयस्त्रिंशं वसाग्रहं गृह्णाति। यो भूतानां पङ्क्तिः। सोमप्रवादः। यो भूतानां चतुःप्रकाराणाम् अधिपतिः। यस्मिंश्च लोका अधि उपरि श्रिताः स्थिताः। यश्च ईशे महतः विकारजातस्य। स्वयं च महान्। तेन गृह्णामि त्वाम् अहम्॥ ३२॥

**म०** 'त्रयस्त्रिंशं वसाग्रहं गृह्णाति यो भूतानामिति' (का० १९। ४। २४)। 'प्रागभिषेकात्सीसेन तन्त्रमिति' (१९। ८०) षोडशर्गिभर्द्वात्रिंशद्वसाग्रहाः तेषां संस्त्रवैर्यजमानाभिषेकः कृतः। ततोऽध्वर्युर्यो भूतानामिति सार्धकण्डिकात्मकेन मन्त्रेण त्रयस्त्रिंशं वसाग्रहमार्षभखुरेण गृह्णाति। आत्मवादिनी ग्रहदेवत्या कौण्डिन्यदृष्टा पङ्क्तिः। यः परमात्मा भूतानां जराय्वादिभूतानां चतुर्विधानामधिपतिः अधिकं पालकः। यस्मिन् आत्मनि लोका भूरादयोऽधिश्रिताः आश्रिताः। लोका यदाधारा इत्यर्थः। महान् सर्वोत्कृष्टो यः महतः महत्त्वप्रमुखस्य तत्त्वगणस्य ईशे ईष्टे नियन्ता वर्तते 'लोपस्त आत्मनेपदेषु' (पा० ७। १। ४१) इति तलोपे लटि तङि प्रथमैकवचने ईशे इति रूपम्। 'अधीगर्थदयेशाम्' (पा० २। ३। ५२) इति कर्मणि षष्ठी। हे ग्रह, अहं तेन परमात्मना कृत्वा त्वा त्वां गृह्णामि मयि परमात्मभावमापन्ने मयि विषये अहं त्वां गृह्णामि॥ ३२॥

## त्रयस्त्रिंशी।

उ॒प॒या॒मगृ॑हीतोऽस्य॒श्विभ्यां॑ त्वा॒ सर॑स्वत्यै त्वेन्द्रा॑य त्वा सु॒त्राम्णे॑। ए॒ष ते॒ योनि॑र॒श्विभ्यां॑ त्वा॒ सर॑स्वत्यै त्वेन्द्रा॑य त्वा सु॒त्राम्णे॑॥ ३३॥

**उ०** उपयाम गृहीतोसीति व्याख्यातम्॥ ३३॥

**म०** उपयाम० यजुः सामत्रिष्टुप्। व्याख्यातम् (अ० १०। क० २३)। एष ते यजुः प्राजापत्या बृहती। सादने विनियोगः। ग्रहदेवते द्वे यजुषी॥ ३३॥

## चतुस्त्रिंशी।

प्रा॒ण॒पा मे॑ अपान॒पाश्च॑क्षु॒ष्पाः श्रो॑त्र॒पाश्च॑ मे। वा॒चो मे॑ वि॒श्वभे॑षजो॒ मन॑सोऽसि वि॒लाय॑कः॥ ३४॥

**उ०** ऋत्विजः प्राणभक्षं भक्षयन्ति। प्राणपा इति द्वाभ्यामनुष्टुबुपरिष्टाद्बृहतीभ्यां प्राणादिपरिचयाय। यस्त्वं प्राणपाः मम असि अपानपाश्चक्षुष्पाश्च श्रोत्रपाश्च मे। वाचश्च मे विश्वभेषजः सर्वभेषजकारी। मनसश्चासि विलायकः। 'लीङ् श्लेषणे' सर्वकरणेषु संश्लेषकः॥ ३४॥

**म०** 'शेषमृत्विजः प्राणभक्षं भक्षयन्ति' (का० १९। ५। ९)। सहश(?)ग्रहहोमानन्तरं शेषमृत्विजः सर्वेऽवजिघ्रन्ति कण्डिकाद्वयेन। ग्रहदेवत्ये द्वे अनुष्टुबुपरिष्टाद्बृहत्यौ। हे ग्रह, त्वं मे प्राणपा असि। प्राणान् पाति रक्षति प्राणपाः। अपानपाः अपानस्य रक्षकोऽसि। चक्षुषी पातीति चक्षुष्पाः। मे मम श्रोत्रपाश्चासि श्रोत्रेन्द्रियं पासि। मे वाचो वागिन्द्रियस्य विश्वभेषजः विश्वं सर्वं भेषजमौषधं यस्मात्स वाचः औषधमुन्मार्गनिवृत्तिजपादौ प्रवृत्तिश्च तत्कर्ता। मनसो विलायकश्चासि विलाययति विषयेभ्यो निवर्त्यात्मनि स्थापयतीति विलायकः आत्मज्ञानप्रदोऽसीत्यर्थः। यद्वा 'ली श्लेषणे' विलाययति

चक्षुरादिभिः सह श्लेषयति विलायकः। सर्वेन्द्रियैः सह मनः संयोजयसीत्यर्थः॥ ३४॥

## पञ्चत्रिंशी।

अश्विनकृतस्य ते सरस्वतिकृतस्येन्द्रेण सुत्राम्णा कृतस्य। उपहूत उपहूतस्य भक्षयामि॥ ३५॥

**उ०** किंच अश्विनकृतस्य ते। नकार उपजनः। करोतिर्दर्शनार्थः। अदृष्टस्य सरस्वतिदृष्टस्य ते इन्द्रेण सुत्राम्णा दृष्टस्य ते। उपहूतश्चाभ्यनुज्ञात एताभिर्देवताभिः उपहूतस्य च सोमस्य ऋत्विग्भिः भक्षयामि॥ ३५॥

**म०** हे ग्रह उपहूत, आज्ञप्तोऽहं ते तव त्वां भक्षयामि। कर्मणि षष्ठी। कीदृशस्य ते। अश्विनकृतस्य करोतिर्दर्शनार्थः। अश्विनावेवाश्विनौ स्वार्थेऽण् वृद्ध्यभाव आर्षः। आश्विनाभ्यां कृतो दृष्टस्तस्य। सरस्वत्या कृतः सरस्वतिकृतः सरस्वत्या दृष्टस्य 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' (पा० ६।३।६३) इति सरस्वतीशब्दस्य ह्रस्वः। सुष्ठु त्रायते रक्षति सुत्रामा तेनेन्द्रेण कृतस्य दृष्टस्य। उपहूतस्य ऋत्विग्भिः कृतोपहवस्य॥ ३५॥

## षट्त्रिंशी।

समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः। त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार॥ ३६॥

**उ०** समिद्ध इन्द्रः। इतउत्तरं होत्रमैत्रावरुणं च सौत्रामण्याः आअश्वमेधात्। तत्रैन्द्रस्य पशोरेकादशयाजाः तत्रैता आयोज्या ऐन्द्र्यस्त्रिष्टुभः। यास्तु आप्रीदेवता 'इध्मः तनूनपात् नराशंसः इडः बर्हिः द्वारः उषासानक्ता दैव्यौ होतारौ तिस्रोदेव्यः त्वष्टा वनस्पतिः स्वाहाकृतयः' इति। ता यथायोगं विशेषणत्वेन व्याख्यायन्ते। द्विस्थान इन्द्रोऽत्र स्तूयते। यः समिद्धः संदीप्तः आदित्यानां त्वमिन्द्र, उषसामनीके मुखे। उषसां हि यत्र मुखं तत्र भगवानादित्योऽवतिष्ठते। पुरोरुचा अग्रतोगामिन्या दीप्त्या वावृधान इति संबन्धः। पूर्वकृच्च पूर्वां दिशं करोति। तदुदयोपलक्षिता हि पूर्वा दिक् संभवति। स एव मध्यस्थानः सन् त्रिभिर्देवैः सहितः वज्रबाहुः वज्रपाणिः जघान वृत्रं मेघम् विदुरो ववार। हत्वा च वृत्रं विविधान् विवृतान् अकरोत्। विदुरः द्वाराणि स्रोतांसि तस्यैव मेघस्य। द्वारशब्दस्य दुर इति छान्दसं संप्रसारणम्॥ ३६॥

**म०** आध्वर्यवं समाप्तम्। इतः सौत्रामणिकं हौत्रमुच्यते। 'समिद्ध इन्द्र इत्याप्रियः प्रथमस्य' (का० १९।६।१२)। समिद्ध इत्याद्या एकादश ऋचः प्रथमस्यैन्द्रस्य पशोराप्रियः प्रयाजयाज्याः। आङ्गिरसदृष्टा एकादशाप्रियः त्रिष्टुभः तासां क्रमादेता देवता इध्मः तनूनपान्नराशंसो वा इडः बर्हिः द्वारः उषासानक्ता दैव्यौ होतारौ तिस्रो देव्यः त्वष्टा वनस्पतिः स्वाहाकृतयः एता देवताः यथायोगमिन्द्रविशेषणत्वेन व्याख्येयाः। अनुवाकेनानेनेन्द्रः स्तूयते। इन्द्रो वृत्रं मेघं दैत्यं वा जघान हतवान् दुरः द्वाराणि च विववार मेघस्य द्वाराणि स्रोतांसि विवृतान्यकरोत्। दैत्यपक्षे तत्पुरद्वाराणि शून्यान्यकरोत्। द्वारशब्दस्य संप्रसारणे दुर इति रूपम्। कीदृश इन्द्रः। समिद्धः संदीप्तः उषसामनीके मुखे प्रातःकाले पुरोरुचा अग्रे प्रसरन्त्या दीप्त्या पूर्वकृत्पूर्वां दिशं करोतीति आदित्यात्मना पूर्वस्याः कर्ता। नाम्नो वृत्तिमात्रे पुंवद्भावः। त्रिभिर्देवैः त्रिंशता च त्रयस्त्रिंशद्देवैः सह वावृधानः वर्धमानः। वृधेर्विकरणव्यत्ययेन शपः 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६।१।७) इत्यभ्यासदीर्घः संहितायाम्। वज्रबाहुः वज्रं बाहौ यस्य वज्रपाणिः॥ ३६॥

## सप्तत्रिंशी।

नराशꣳसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम। गोभिर्वपावान्मधुना समञ्जन्हिरण्यैश्चन्द्री यजति प्रचेताः॥ ३७॥

**उ०** नराशंसः। एकस्यामेव ऋचि नराशंसः तनूनपान्नाप्रीणामनुवाके। व्यवहितपदप्रायोयं मन्त्रः। यः शूरः इन्द्रः सन् नराशंसः। यश्च यज्ञो भवति नरा अस्मिन्नासीनाः शंसन्तीति। प्रतिप्रति मिमानो मिमीते मिमानः प्रतिगणयन् यज्ञस्य धाम स्थानम् गोप्रभृतिपशुसंबन्धिनीभिः वपाभिः वपावान् हिरण्यैर्वपापूर्वैः यश्चाधानभूतैः चन्द्री। चन्द्रमिति हिरण्यनाम। यश्च शूर इन्द्रः ननूनपात् घृतं भवति मधुना। मधुस्वादेन घृतेन समञ्जन् हवींषि। गौरत्र तनूरुच्यते। ततोऽस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायत इति। तं शूरमिन्द्रं यजमानो यजति प्रचेताः प्रकृष्टज्ञानः॥ ३७॥

**म०** एकस्यामृचि नराशंसतनूनपातौ। प्रचेताः प्रकृष्टं चेतो ज्ञानमस्य स प्रचेताः कर्मज्ञाता यजमानस्तमिन्द्रं प्रतियजति प्रत्यहं यजति। तं कम्। य ईदृशः नराशंसः नरैर्ऋत्विग्भिरा समन्तात् शस्यते शस्त्रैः स्तूयते स नराशंसः। यद्वा 'नरा अस्मिन्नासीनाः शंसन्ति' (निरु० ८।६) इति यास्कोक्तेर्नराशंसो यज्ञः तद्रूपस्तद्वान्वा। यज्ञस्य धाम स्थानं प्रतिमिमानः मिमीते मिमानः प्रतिगणयन्। यज्ञस्थानानि जानन्नित्यर्थः। एकः प्रतिर्मिमान इत्यनेन संबध्यतेऽपरो यजतीत्यनेन। तथा शूरः शौर्यवान्। तनूनपात् तनोति विस्तारयति सृष्टिं तनूः प्रजापतिर्मरीचिस्तस्य नपात् पौत्रः। कश्यपात्मज इत्यर्थः। यद्वा तनूं शरीरं न पातयति रक्षति जाठराग्निरूपेणेति तनूनपात् अग्निस्तद्रूपः। यद्वा तनोति भोगानिति तनूः गौस्तस्या नपात् पौत्रं घृतम्। गोः पयो जायते पयस आज्यमिति घृतरूपस्तद्वान् वा। गोभिर्वपावान् पशुसंब-

न्धिनीभिर्वपावान् वपायुक्तः मधुना मधुस्वादोपेतेन घृतेन समञ्जन् हवींषि भक्षयन् हिरण्यैः पश्ववदानभूतैः । चन्द्री चन्द्रं सुवर्णमस्यास्तीति चन्द्री ॥ ३७ ॥

## अष्टत्रिंशी ।

ई॒डि॒तो दे॒वैर्हरि॑वाँ २॥ अभि॒ष्टिरा॒जुह्वा॑नो ह॒विषा॒ शर्ध॑मानः । पु॒र॒न्द॒रो गो॑त्र॒भिद्वज्र॑बाहु॒राया॑तु य॒ज्ञमुप॑ नो जु॒षा॒णः ॥ ३८ ॥

उ० ईडितो देवैः । ईडितः पूजितो देवैः । हरिवान् हरी इन्द्रस्याश्वौ तदभिप्रायो मन्त्रः वर्णाभिप्रायो वा । अभिष्टिः अभिगमनवान् अन्वेषणवान्वा । आजुह्वानः आहूयमानः हविषा निमित्तभूतेन । शर्धमानः अतिबलायमानः शर्ध इति बलनाम । पुरन्दर इति पुरां दारयिता । गोत्रभित् मेघान्भिनत्ति वृष्ट्यर्थम् । वज्रबाहुः यः स आयातु यज्ञमुप नो जुषाणः । यज्ञं नः संबन्धिनमुपसेवमानः ॥३८॥

म० एवंविध इन्द्र आयातु आगच्छतु । कीदृशः । देवैरीडितः पूजितः स्तुतः । हरिवान् हरी इन्द्राश्वौ अस्य स्त इति हरिवान् । अभिष्टिः अभि समन्तादिष्टिर्यागो यस्य । इलोपश्छान्दसः । यद्वा अभिस्तूयत इत्यभिष्टिः स्तौतेरौणादिको डिप्रत्ययः । आजुह्वानः आहूयमान ऋत्विग्भिः हविषा निमित्तेन हविर्निमित्तं द्विजैराहूयमानः । शर्धमानः शर्ध इति बलनाम । अतिबलायमानः । पुरं रिपुनगरं दारयति पुरन्दरः । गोत्रभित् गां भूमिं वृष्ट्या त्रायन्ते गोत्रा मेघाः तान् वृष्ट्यर्थं भिनत्ति गोत्रभित्, गोत्रान् गिरीन् वा भिनत्ति । वज्रबाहुः वज्रधरः । नोऽस्माकं यज्ञमुपजुषाणः उपसेवमानः ॥ ३८ ॥

## एकोनचत्वारिंशी ।

जु॒षा॒णो ब॒र्हिर्हरि॑वान्न इन्द्रः प्रा॒चीन॑ᳪं सीदत्प्र॒दिशा॑ पृथि॒व्याः । उ॒रु॒प्रथाः॒ प्रथ॑मानᳪं स्यो॒नमा॑दि॒त्यैर॒क्तं वसु॑भिः स॒जोषा॑ः ॥ ३९ ॥

उ० जुषाणो बर्हिः । जुषाणः सेवमानः बर्हिः । हरिवान् हरी अश्वौ ताभ्यां संयुक्तः नः अस्माकम् इन्द्रः प्राचीनं प्रागञ्चनम् सीदत् सीदतु आस्ताम् प्रदिशा उपदिशन् । पृथिव्याः देवयजनत्वेन । उरुप्रथाः उरु विस्तीर्णं प्रथनमस्येत्युरुप्रथाः । इन्द्रविशेषणमेतत् । बर्हिर्विशेषणान्युत्तराणि । प्रथमानं स्योनं सुखरूपम् । आदित्यैः अक्तं वसुभिश्च । बर्हिषाञ्जनमन्त्रे आदित्या वसवश्च सन्ति तदभिप्रायमेतत् । 'संबर्हिरङ्क्तां हविषा घृतेन समादित्यैर्वसुभि'रित्ययं मन्त्रः । सजोषाः सह प्रीयमाणः । इन्द्रविशेषणमेतत् ॥ ३९ ॥

म० इन्द्रो नोऽस्माकं प्राचीनं प्रागभवं प्रदेशं सीदत् सीदतु आस्ताम् । 'इतश्च लोपः-' ( पा० ३ । ४ । ९७ ) इति इलोपः । कीदृश इन्द्रः । हरिवान् हरी अश्वौ तद्युक्तः । पृथिव्याः प्रदिशा । द्वितीयार्थे षष्ठी । पृथिवीं देवयजनभूमिं प्रदिशन् उपदिशन् प्रदिशतीति प्रदिशन् 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्यादिना विभक्तेर्डादेशः । उरुप्रथाः । प्रथनं प्रथः ख्यातिः उरु विस्तीर्णं प्रथो यस्य स उरुप्रथाः । सजोषाः जोषणं जोषः असुन्प्रत्ययः । जोषसा प्रीत्या सहितः सजोषाः संतुष्टः । बर्हिर्जुषाणः सेवमानः । शानचि शपो लुक् । कीदृशं बर्हिः । प्रथमानं प्रथते तत् प्रथमानं विस्तीर्णम् स्योनं सुखरूपम् । आदित्यैः वसुभिः मरुद्भिश्च अक्तं म्रक्षितम् बर्हिरञ्जने मन्त्रे आदित्यादीनामुक्तत्वात्तैरक्तम् 'सं बर्हिरङ्क्ताᳪं हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः' इत्युक्तेः ॥ ३९ ॥

## चत्वारिंशी ।

इन्द्रं॒ दुरः॑ कव॒ष्यो धाव॑माना॒ वृषा॑णं यन्तु॒ जन॑यः सु॒पत्नीः॑ । द्वारो॑ दे॒वीर॒भितो॒ विश्र॑यन्ताᳪं सु॒वीरा॑ वी॒रं प्रथ॑माना॒ महो॑भिः ॥ ४० ॥

उ० इन्द्रं दुरः । संप्रसारणं छान्दसम् । यज्ञगृहद्वारः कवष्यः । 'कुष निष्कर्षे' कुषिताः ससुषिराः । धावमानाः आदरवत्यः । वृषाणं वर्षितारम् यन्तु । जनयः सुपत्नीः । लुप्तोपमानमेतत् । जायाइव शोभनपत्न्यः । अथेन्द्रसंगतिं प्राप्य यज्ञगृहद्वारः देवीः । अभितः इतश्चेतश्च । विश्रयन्तां विश्रियन्ताम् । सुवीरा ऋत्विग्भिः वीरमिन्द्रंप्रति प्रथमानाः पृथ्व्यो भवन्त्यः महोत्सवैः ॥ ४० ॥

म० दुरो यज्ञगृहद्वार इन्द्रं यन्तु प्राप्नुवन्तु । कीदृशमिन्द्रम् । वृषाणं वर्षति वृषा तं वर्षितारम् । 'इन्द्रः पृथिव्यै वर्षीयान्' इत्युक्तेः । वीरं शूरम् । कीदृश्यो दुरः । कवष्यः 'कु शब्दे' कूयन्ते कुवन्ति शब्दयन्ति वा जना यासु ताः कवष्यः ससुषिराः सच्छिद्रे एव शब्दप्रसरात् । कौतेरौणादिकोऽषट् प्रत्ययः । तथा धावमानाः धावन्ते धावमानाः । आदरयुक्ता इत्यर्थः । तथोपमानं जनयः सुपत्नीः शोभनाः साध्व्यः पत्न्यो यज्ञैः सहाधिकारिण्यो जायाः स्त्रिय इव । लुप्तोपमानम् । ता यथा धावमानाः यन्ति यान्ति तथा द्वार इन्द्रं यान्तु । किंच इन्द्रं प्राप्य द्वारो देवीः देव्यः अभितः सर्वत्र विश्रयन्तां निवृत्ता भवन्तु । कीदृश्यो द्वारः । सुवीराः शोभना वीरा ऋत्विजो यासु ताः सुवीराः ऋत्विग्युक्ताः । महोभिस्तेजोभिरुत्सवैर्वा प्रथमानाः विस्तृता भवन्त्यः ॥ ४० ॥

## एकचत्वारिंशी ।

उ॒षासा॒नक्ता॑ बृह॒ती बृ॒हन्तं॒ पय॑स्वती सु॒दुघे॒ शूर॒मिन्द्र॑म् । तन्तुं॑ त॒तं पेश॑सा सं॒वय॑न्ती दे॒वाना॑ं दे॒वं यज॑तः सुरु॒क्मे ॥ ४१ ॥

उ० उषासानक्ता । उषा आदित्यप्रभा नक्ता रात्रिः उषाश्च रात्रिश्च बृहती महत्यौ । बृहन्तं महान्तम् पयस्वती उदकवत्यौ अवश्यायवत्यौ । सुदुघे साधुदोहने शूरमिन्द्रम् । तन्तुं ततम् लुप्तोपमानमेतत् । तन्तुमेव ततं पटार्थं सूत्रं

प्रसारितमिव पेशसा विचित्ररूपेण सूत्रेण संवयन्ती संग्रथयन्त्यौ । देवानां देवमिन्द्रं यजतः संगतं कुरुतः । पुनर्धद्वयत इत्यर्थः । सुरुक्मे सुरोचने ॥ ४१ ॥

**म०** उषासानक्ता इन्द्रं यजतः सङ्गतं कुरुतः । इन्द्रेण सङ्गमं कुरुतः । यजिरत्र सङ्गतिकरणार्थः । उषा आदित्यप्रभा नक्ता रात्रिः उषाश्च नक्ता च उषासानक्ता । समासे उषःशब्दस्योषासादेशः । किंभूतमिन्द्रम् । बृहन्तं महान्तं शूरं विक्रान्तं देवानां देवं सर्वदेवपूज्यम् । कीदृश्यौ उषासानक्ता । बृहती बृहत्यौ पयस्वती उदकवत्यौ अवश्यायवत्यौ । सुदुघे शोभनं दुग्धः ते 'दुहः कब्घश्च' ( पा० ३ । २ । ७० ) इति कप् घादेशश्च । पेशसा विचित्ररूपेण संवयन्ती संग्रथयन्त्यौ इन्द्रं रूपेण योजयन्त्यौ । तत्र दृष्टान्तः । तन्तुमिव यथा पटार्थं ततं विस्तीर्णं तन्तुं सूत्ररूपेण कश्चित् संवयति । तथा सुरुक्मौ शोभनं रुक्मं रोचनं कान्तिर्ययोस्ते सुरुक्मौ ॥ ४१ ॥

## द्विचत्वारिंशी ।

दैव्या मिमाना मनुषः पुरुत्रा होताराविन्द्रं प्रथमा सुवाचा । मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥ ४२ ॥

**उ०** दैव्या मिमाना । व्यवहितपदप्रायो मन्त्रः । दैव्यौ होतारौ अयं चाग्निः असौ च वायुर्मध्यमः । दैव्यौ होतारौ मिमानौ निर्मिमाणौ यज्ञे । मनुष इति तद्धितलोपः । वीप्सायाश्च मनुष्यस्य यजमानस्य पुरुत्रा बहुप्रकारम् । प्रथमौ मानुषाद्धोतुः । सुवाचा साधुवाचौ । मूर्धनि प्रधानाङ्गे यज्ञस्य । इन्द्रं मधुना अन्नसहितं दधाना स्थापयन्तौ । प्राचीनम् आहवनीयाख्यं ज्योतिः हविषा वृधातः वर्धयतः ॥ ४२ ॥

**म०** अयं चाग्निरसौ च वायुर्मध्यमस्तौ देवानामिमौ दैव्यौ होतारौ वाय्वग्नी प्राचीनं प्राच्यां दिशि वर्तमानं ज्योतिराहवनीयाख्यं मधुना मधुरेण हविषा कृत्वा वृधातः वर्धयतः । वृधेः 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्याट् । कीदृशौ । होतारौ पुरुत्रा बहुधा मिमाना मिमानौ यज्ञं निर्मिमाणौ । मनुषः मानुषाद्धोतुः प्रथमा आद्यौ । मनुषः इति प्रथमा पञ्चम्यर्थे । सुवाचा सुवाचौ शोभना वाक् ययोस्तौ । यज्ञस्य मूर्धन् मूर्धनि प्रधानेऽङ्गे इन्द्रं दधाना स्थापयन्तौ । सर्वत्र प्रथमाद्विवचनस्याकारः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा जनयो न पत्नीः । अच्छिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः ॥ ४३ ॥

**उ०** तिस्रो देवीः । यास्तिस्रो देव्यो हविषा आज्येन वर्धमानाः इन्द्रं जुषाणाः सेवमानाः । जनयो न पत्नीः जाया इव पत्न्यः आसते । ता अच्छिन्नं तन्तुम् अविस्रस्तयज्ञम् पयसा हविषा कुर्वन्तु । कतमास्तास्तिस्रो देव्य इत्यत आह । सरस्वती च इडा च । देवी दानादिगुणयुक्ता । भारती आदित्यप्रभा । विश्वतूर्तिः सर्वतः तूर्णं यायिनी । आख्यातमन्त्रे नास्त्यतोऽध्याहृतम् ॥ ४३ ॥

**म०** सरस्वती इडा भारती तिस्रो देव्यः पयसा हविषा कृत्वा तन्तुं यज्ञमच्छिन्नं छेदेन विघ्नेन रहितं कुर्वन्त्विति शेषः । वर्धमानाः पुष्टियुक्ताः । पत्नीः पत्न्यः साध्व्यो जनयो न जाया-इव इन्द्रं जुषाणाः सेवमानाः । देवीः दीप्यमानाः विश्वस्मिन् सर्वत्र त्वरते तूर्णं गच्छति विश्वतूर्तिः सर्वगामिनीति द्वे विशेषणे तिसृणाम् ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

त्वष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकोऽचिष्टुर्यशसे पुरूणि । वृषा यजन् वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥ ४४ ॥

**उ०** त्वष्टा दधत् त्वष्टा तक्षतेः करोत्यर्थस्य । यस्त्वष्टा दधत् धारयत् शुष्मं बलम् इन्द्राय इन्द्रार्थम् । वृष्णे सेक्त्रे । कथंभूतस्त्वष्टा । अपाकः । पाक इति प्रशस्यनाम । न विद्यते यस्मात्त्वष्टुरन्यः पाकः प्रशस्यः स अपाकः । 'नञोऽस्त्यर्थानां बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्च' इति समासः । अचिष्टुः अचितस्त्यानशरीरः अञ्चनशीलो वा । यशसे च इन्द्राय । पुरूणी बहूनि भैषज्यानि अकरोदिति शेषः । वृषा सेक्ता यष्टा यजन् वृषणं सेक्तारमिन्द्रम् भूरिरेताः सर्वजनकः त्वष्टा । स मूर्धनि यज्ञस्य आहवनीये सम् अनक्तु भक्षयतु हविः सहितेनाज्येन देवान् । अनक्तिर्भोजनार्थः । आहवनीयात्मनावस्थितान् भोजयतु देवानित्यर्थः ॥ ४४ ॥

**म०** त्वष्टा यज्ञस्य मूर्धन् मूर्धनि शिरःस्थानीये आहवनीये देवान् समनक्तु भोजयतु । अन्तर्भूतण्यर्थोऽनक्तिरत्र भोजनार्थः । कीदृशस्त्वष्टा । यशसे यशस्विने वृष्णे सेक्त्रे इन्द्राय पुरूणि । वचनव्यत्ययः । पुरु बहु शुष्मं बलं दधत् धारयन् । तथा अपाकः इति प्रशस्यनाम । न विद्यते पाकः प्रशस्यो यस्मात्सोऽपाकः । 'नञोऽस्त्यर्थानां बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्च' इति समासः । अचिष्टुः अञ्चनशीलः सर्वत्र गतः । वृषा वर्षिता वृषणमिन्द्रं यजन् पूजयन् । भूरिरेताः भूरि बहु रेतो वीर्यं यस्य सः सर्वजनक इत्यर्थः । 'त्वष्टा त्वक्षतेः करोत्यर्थस्य' ( निरु० ८ । १३ ) इति यास्कोक्तेः । ईदृशस्त्वष्टा देवान्भोजयत्वित्यर्थः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः । इन्द्रस्य हव्यैर्जठरं पृणानः स्वदाति यज्ञं मधुना घृतेन ॥ ४५ ॥

उ० वनस्पतिरवसृष्टः वनस्पतिर्यूपः अवसृष्टोन अभ्यनुज्ञातइव पाशैर्बद्धमध्वर्युणा पशुम् त्मन्या आत्मनि समञ्जन् सङ्गमयतु संबध्नातु । कथमिव। शमिता न देवः। यथा शमिता देवः अपापः पशुबद्धमात्मना संगमयेत् एवम्। किंच इन्द्रस्य जठरमुदरम् हव्यैः पृणानः पूरयन् । स्वदाति यज्ञं समनक्तु यागम् मधुना च रसेन घृतेन च ॥ ४५ ॥

म० वनस्पतिर्यूपो देवो मधुना रसेन घृतेन च यज्ञं स्वदाति स्वदतु लेट्। आस्वादयतु समनक्तु वा । कीदृशो वनस्पतिः । अवसृष्टो न आज्ञप्त इव पाशैः कृत्वा । त्मन्या आत्मनि समञ्जन् अर्थात् पशुम् संयोजयन् । आत्मन्शब्दस्य तृतीयाया यादेशः। 'मन्त्रेष्वाङ्यादेरात्मनः' (पा० ६।४।१४१) इति आलोपः । तत्र दृष्टान्तः । शमिता न शमिता इव । यथा शमिता पाशैः पशुमात्मनि संयोजयति तथा हव्यैरिन्द्रस्य जठरमुदरं पृणानः पूरयन् पृणीतेऽसौ । पृणानः ॥ ४५ ॥

## षट्चत्वारिंशी ।

स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् । घृतप्रुषा मनसा मोदमानाः स्वाहा देवा अमृता मादयन्ताम् ॥ ४६ ॥

उ० स्तोकानामिन्दुम् । वपास्तोकानां संबन्धिनमिन्दुम् प्रति सोमंप्रति पशोः सोमसंस्तवस्तदभिप्रायमेतत् । गमनाय शूरः विक्रान्तः। इन्द्रो वृषायमाणः वृषइव आचरन्। वृषभः सर्वलोकत्रासकृत् । तुराषाट् तूर्णं सहते अभिभवतीति तुराषाट् । स इन्द्रः स्वाहाकृतिभिर्मादयताम् तृप्यन्तु इत्यनुषङ्गः । घृतप्रुषा च घृतावयवेन च । मनसा मोदमानाः हृष्यन्तः । स्वाहा अविभक्तिको निर्देशः । स्वाहाकृतिभिर्देवाः अमृताः अमरणधर्माणः मादयन्ताम् तृप्यन्तु ॥ ४६ ॥

म० इन्द्रः स्वाहा देवाः । नामैकदेशे नामग्रहणम्। स्वाहाकृतयो देवाश्च मादयन्तां तृप्यन्तु । 'मद तृप्तौ' चुरादिः। किमुद्दिश्य स्तोकानामिन्दुं प्रति स्तोका वपासंबन्धिनो घृतबिन्दवः तत्संबन्धी य इन्दुः सोमः तंप्रति तमुद्दिश्य वपास्तोकेषु सोमत्वमारोप्यते । वपास्तोकरूपं सोममुद्दिश्येन्द्रः स्वाहाकृतयश्च तृप्यन्तामित्यर्थः । कीदृश इन्द्रः । शूरः शौर्यवान् वृषायमाणः वृषवदाचरति वृषायते वृषायतेऽसौ वृषायमाणः। शत्रून्प्रतिगर्जन्नित्यर्थः । वृषभः वर्षिता । तुराषाट् तूर्णं सहते शत्रूनभिभवति तुराषाट्। कीदृशाः स्वाहाकृतयः । घृतप्रुषा घृतबिन्दुनापि मनसा मोदमानाः मोदन्ते ते मोदमानाः संतुष्टाः। अमृताः अमरणधर्माणः । नास्ति मृतं मरणं येषां ते ॥ ४६ ॥

## सप्तचत्वारिंशी ।

आयात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः । वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥ ४७ ॥

उ० आयातु षट् त्रिष्टुभः। ऐन्द्रस्य पशोर्वपापुरोडाशपशूनां याज्यानुवाक्याः । आयातु आगच्छतु इन्द्रः । अवसे अवनाय तर्पणाय रक्षणाय वा । उप नः समीपेऽस्माकम् आगच्छतु । ततश्च इहास्माभिः स्तुतः सधमात् सहमदनः सहभोजनः अस्तु । शूरो विक्रान्तः । वावृधानः वर्धमानः स्ववलोः । तविषीर्यस्य पूर्वीः द्यौर्न । तविषीति बलनाम । तवतेर्वृद्धिकर्मणः । यस्येन्द्रस्य बलानि पूर्वाणि वृत्रवधादीनि बलानि द्यौरिवोच्चैः कथ्यन्ते । यश्चास्मदीयं क्षत्रम् । अभिभूति अभिभवितृ अभिभवनशीलमपि पुष्यात् पुष्णाति स आयात्विति संबन्धः ॥ ४७ ॥

म० 'याज्यानुवाक्याश्च' (का० १९।६।१३।) वपापुरोडाशपशुयागानां याज्यानुवाक्याः आयात्विन्द्र (४७) इति वपायाः पुरोनुवाक्या, आ न इन्द्रो दूरात् (४८) इति याज्या, आ न इन्द्रो हरिभिः (४९) इति पशुपुरोडाशस्य पुरोऽनुवाक्या, त्रातारमिन्द्रमिति (५०) याज्या, इन्द्रः सुत्रामा (५१) इति पशुयागे पुरोऽनुवाक्या, तस्य वयम् (५२) इति याज्येति सूत्रार्थः । सप्त त्रिष्टुभ इन्द्रदेवत्याः । इन्द्रो नोऽस्मानवसे अवितुं रक्षितुमुप आयातु समीपमागच्छतु । तुमर्थेऽवतेरसेन्प्रत्ययः । इहायातः सन् । सधमात् अस्तु सह देवैः सार्धं मादयति तृप्यतीति सहमात् सहभोजनकर्तास्तु । मादयतेः क्विप् । कीदृश इन्द्रः । शूरः विक्रान्तः । स्तुतोऽस्माभिः । वावृधानः वर्धमानः । यस्येन्द्रस्य पूर्वीः तविषीः पूर्वाः तविष्यः पूर्वाणि कृतानि बलानि वृत्रवधादयः पराक्रमाः द्यौर्न स्वर्ग इव कथ्यन्ते । स्वर्गो यथा स्तूयते तथा यस्येन्द्रस्य बलानि स्तूयन्ते । तविषीति बलनाम 'तवतेर्वृद्धिकर्मणः' ( निरु० ९। २५ ) इति यास्कः । यश्चेन्द्रः क्षत्रमस्मदीयं पुष्यात् पुष्यति 'लेटोऽडाटौ' । कीदृशं क्षत्रम् । अभिभूति अभिभवनशीलं शूरम् । स इन्द्र आयात्विति संबन्धः ॥ ४७ ॥

## अष्टचत्वारिंशी ।

आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः । ओजिष्ठेभिर्नृपतिर्वज्रबाहुः सङ्गे समत्सु तुर्वणिः पृतन्यून् ॥ ४८ ॥

उ० आ न इन्द्रः आउपसर्गो यासदित्यत्र संबध्यते । आयासत् आयातु नः अस्माकम् इन्द्रः दूरात् द्युलोकादेः । आ न आसात् । आयासच्च अस्माकम् । आसादित्यन्तिकनाम । आगच्छतु चास्माकं समीपात् । यद्यपि दूरे यद्यप्यन्तिक इत्यर्थः । अभिष्टिकृत् अभिलषितपदार्थकारी । अवसे अवनाय अन्नाय वा । उग्रः अतिविषमः । एत्य च । ओजिष्ठेभिः ओजस्वितमैः बलैरुपेतः । नृपतिः वज्रबाहुः सङ्गे संग्रामे । समत्सु । एतदपि संग्रामनाम । एकस्मिन्संग्रामे बहुषु च युगपदुपस्थितेषु । तुर्वणिः तूर्णवनिः तूर्णसंभक्ता । पृतन्यून् संग्रामयतः शत्रून् ॥ ४८ ॥

**म०** इन्द्रो नोऽस्माकं दूरादूरप्रदेशात् द्युलोकादेरपि आयासत् आयातु । यातेः 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इति अटि कृते 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) इति सिप्प्रत्ययः । आसान्निकटप्रदेशादपि आयासत् । आसादित्यन्तिकनाम । दूरात्समीपाच्चागच्छत्वित्यर्थः । किं कर्तुम् । अवसे अवितुमस्माकं रक्षणं कर्तुम् । कीदृश इन्द्रः । अभिष्टिकृत् अभिष्टिमभिलाषं करोतीत्यभिष्टिकृत् मनोरथप्रदः । उग्रः उत्कृष्टः । ओजिष्ठेभिः तेजस्वितमैर्बलैर्युक्त इति शेषः । ओजो विद्यते येषां ते ओजस्विनः अत्यन्तमोजस्विन ओजिष्ठाः । विन्मतोर्लुक् तैः । नृपतिः नृणां पालकः । वज्रबाहुः वज्रं बाहौ यस्य सः । तथा सङ्गे समत्सु सङ्गः समदिति द्वे संग्रामनामनी । सङ्गे एकस्मिन् संग्रामे समत्सु बहुष्वपि संग्रामेषु युगपदुत्थितेषु सत्सु पृतन्यून् शत्रून् तुर्वणिः 'तुर्वि हिंसायां' तुर्वतीति तुर्वणिः हन्ता । पृतनामिच्छन्ति पृतन्यन्ति 'सुप आत्मनः क्यच्' ( ३ । १ । ८ ) इति क्यचि परे 'कव्यध्वर–' ( पा० ७ । ४ । ३९ ) इत्यलोपः । ततः 'क्याच्छन्दसि' ( पा० ३ । २ । १७० ) इति उप्रत्ययः । संग्रामेच्छूनां हन्तेत्यर्थः ॥ ४८ ॥

## एकोनपञ्चाशी ।

आ नु इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च । तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥ ४९ ॥

**उ०** आ न इन्द्रः । आयातु नः अस्मानभि इन्द्रः । हरिभिः हरितवर्णैः अच्छ । अच्छाभेरर्थे सचास्मानेत्य । अर्वाचीनः अर्वागञ्चनः अवसे अन्नाय राधसे धनाय च दानार्थम् । एत्य च । तिष्ठाति तिष्ठतु वज्री मघवान् धनवान् । विरप्शी विरमणशीलः । इमं यज्ञम् अनु प्रति । नः अस्माकम् वाजसातौ अन्नसंभजने निमित्तभूते ॥ ४९ ॥

**म०** अच्छाभेरर्थे । इन्द्रोऽर्वाचीनोऽभिमुखः सन् नोऽस्मानच्छ अस्मानभि आयातु । कैः हरिभिरश्वैः किमर्थमवसे अवनमवः असुन् तस्मै रक्षणाय राधसे धनाय च । आगत्य च वज्री इन्द्रो नोऽस्माकमिमं यज्ञमनु प्रति वाजसातौ अन्नसंभजने निमित्ते तिष्ठति तिष्ठतु लेट् । कीदृशः । मघवा मघं धनमस्यास्तीति धनवान् । विरप्शी विविधं रपति लपतीति विरप्शी महान् ॥ ४९ ॥

## पञ्चाशी ।

त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ ५० ॥

**उ०** त्रातारमिन्द्रम् । त्रातारम् रक्षितारम् इन्द्रं यतः कथयन्ति । अवितारं च यतः इन्द्रं कथयन्ति । हवेहवे सुहवम् । आह्वाने आह्वाने शोभनाह्वानमिन्द्रं यतः कथयन्ति । शूरं विक्रान्तमिन्द्रं यतः कथयन्ति जनाः । अतः ह्वयामि शक्रं शक्तम् इन्द्रं तमहम् । पुरुहूतं बहुभिराहूतम् । सचाहुतः सन् । स्वस्ति नः अविनाशमस्माकम् मघवा धनवान् धातु दधातु इन्द्रः ॥ ५० ॥

**म०** गर्गदृष्टा । त्रातारं रक्षितारमिन्द्रम् अवितारं प्रीणयितारमिन्द्रम् । हवे हवे आह्वाने आह्वाने यज्ञे वा । सुहवं सुखेन हूयते आहूयत इति सुहवम् शूरम् । शक्रम् शक्नोति शक्रस्तं समर्थम् । पुरुहूतं पुरुभिर्बहुभिर्हूयते पुरुहूतस्तं बहुभिराहूतम् । ईदृशमिन्द्रं ह्वयामि आह्वयामि । मघवा धनवानिन्द्र आहूतः सन्नोऽस्माकं स्वस्ति अविनाशं धातु दधातु करोतु । विकरणव्यत्ययः । इन्द्रशब्दावृत्तिरादरार्था ॥ ५० ॥

## एकपञ्चाशी ।

इन्द्रः सुत्रामा स्ववाँ २॥ अवोभिः सुमृडीको भवतु विश्ववेदाः । बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ ५१ ॥

**उ०** इन्द्रः सुत्रामा इन्द्रः साधुत्राणः स्ववान् धनवान् । अवोभिः अन्नैः सुमृडीकः शोभनसुखकारी भवतु । विश्ववेदाः सर्वधनः । किंच बाधताम् अपगमयतु द्वेषः दौर्भाग्यम् । अभयं कृणोतु करोतु । त्वत्प्रसादाच्च सुवीर्यस्य धनस्य पतयः स्याम ॥ ५१ ॥

**म०** इन्द्रः अवोभिरन्नैः सुमृडीकः शोभनसुखकारी भवतु । शोभनं मृडीकं सुखं यस्मात्स सुमृडीकः । कीदृश इन्द्रः । सुत्रामा सुष्ठु त्रायते रक्षति सुत्रामा 'आतो मनिन्–' ( पा० ३ । २ । ७४ ) इति मनिन् । स्ववान् स्वं धनमस्यास्तीति स्ववान् । 'आतोऽटि नित्यम्' ( पा० ८ । ३ । ३ ) इत्यनुनासिकत्वम् 'दीर्घादटि समानपादे' ( पा० ८ । ३ । ९ ) इति नस्य रुः । विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य सः । स चेन्द्रो द्वेषः दौर्भाग्यं बाधतां निवर्तयतु । अभयं च कृणोतु करोतु । किंच इन्द्रप्रसादाद्वयं सुवीर्यस्य धनस्य पतयः स्वामिनः स्याम भवेम । शोभनाश्च ते वीराश्च सुवीराः पुत्रादयः तेभ्यो हितं सुवीर्यं तस्य ॥ ५१ ॥

## द्विपञ्चाशी ।

तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाँ २॥ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ॥ ५२ ॥

**उ०** तस्य वयम् । तस्येन्द्रस्य सुत्राम्णः वयं सुमतौ कल्याणमतौ स्याम । यज्ञियस्य यज्ञसंपादिनः । अपि किंच । भद्रे भन्दनीये सौमनसे कल्याणमनसि स्याम वयम् । ततोऽनुग्राह्यबुद्धौ वर्तमानानामस्माकम् । स सुत्रामा शोभनत्राणः । स्ववान्धनवान् इन्द्रः अस्मे अस्मत्तः आराच्चित्

दूरादपि द्वेषः दौर्भाग्यम् तत्र वर्तमानम् । सनुतरिति निर्णीतान्तर्हितनाम । अन्तर्हितं कृत्वा युयोतु । यद्वा दूरे वर्तमानं प्रकटं कृत्वा युयोतु पृथक्करोतु ॥ ५२ ॥

म० वयं तस्येन्द्रस्य सुमतौ शोभनबुद्धौ स्याम भवेम । भद्रे कल्याणरूपे । सौमनसे सुमनसो भावे शोभनमनस्कत्वेऽपि स्याम । इन्द्रोऽस्मासु सुमतिं मनश्च भद्रं करोतित्यर्थः । कीदृशस्येन्द्रस्य । यज्ञियस्य यज्ञाय हितो यज्ञियस्तस्य यज्ञसंपादिनः । सुत्रामा सुरक्षकः स्ववान् धनवान् स इन्द्रः अस्मे अस्मत्तः आराचित् दूरादपि वर्तमानं द्वेषो दौर्भाग्यं सनुतरन्तर्हितं कृत्वा युयोतु पृथक्करोतु । विकरणव्यत्ययः । सनुतरिति निर्णीतान्तर्हितनाम ॥ ५२ ॥

## त्रिपञ्चाशी ।

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः । मा त्वा केचिन्नियमन्विं न पाशिनोऽतिधन्वेव ताँ२॥ इहि ॥ ५३ ॥

उ० आ मन्द्रैः बृहत्यैन्द्री । आयाहि मन्द्रैः मन्दनीयैः हे इन्द्र । हरिभिः हरिद्वर्णैः अश्वैः । मयूररोमभिः बभ्रवो ह्यश्वाः । किंच मा त्वा केचिन्नियमन्विं न पाशिनः । मा च त्वामागच्छन्तं केचिन्नियमन्निबध्नन्तु । कथमिव । विरिति शकुनिनाम । शकुनिमिव पाशप्रतिबन्धका आखेटकिनः । अथ केचित्परिपन्थिनो भवेयुः । अतिधन्वेव तान् इहि । अतीत्य तान् इहि आगच्छ । कथमिव धन्वइव । यथा धन्व निरुदकदेशं परित्यज्य अन्यतममागच्छेयुः एवमागच्छेति ५३

म० विश्वामित्रदृष्टा बृहती । तृतीयो द्वादशार्णोऽन्ये त्र्योऽष्टार्णाः । आ मन्द्रैः एवेत् अनयोर्विनियोगाभावः । हे इन्द्र, त्वं हरिभिः अश्वैः आयाहि । कीदृशैः । मन्द्रैः गम्भीरनादैः मयूररोमभिः मयूरस्येव रोमाणि येषां ते मयूररोमाणस्तैः मयूरसमवर्णैः । किंच केचित् दुष्टा आगच्छन्तं त्वा त्वां मा नियमन् नियच्छन्तु मा निबध्नन्तु । तत्र दृष्टान्तः । पाशिनो पाशहस्ता व्याधाः विं पक्षिणमिव । यथा पाशिनः पक्षिणं बध्नन्ति तथा त्वां मा बध्नन्तु । अथ ये परिपन्थिनो भवेयुस्तानतीहि अतिक्रम्यागच्छ । किमिव धन्व इव । धन्व निरुदकदेशः । यथा पान्थो मरुदेशमतिक्रम्य गच्छति तथा गच्छ ॥ ५३ ॥

## चतुःपञ्चाशी ।

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः । स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥ ५४ ॥

उ० एवेत् । ऐन्द्री त्रिष्टुप् यमेवमनेन प्रकारेण । इत् पादपूरणः । इन्द्रं वृषणं वर्षितारं वज्रबाहुं वसिष्ठासः वसिष्ठस्यापत्यानि बहूनि । यद्वा वस्तृतमा ऋषयः । अभ्यर्चन्ति अभिष्टुवन्ति अर्कैः मन्त्रैः । स नः सोऽस्मभ्यम् स्तुतः वीरवत् साधुपुत्रसंयुक्तम् धातु ददातु धनम् । गोमच्च गोसंयुक्तम् । एवं त्रिभिः पादैरिन्द्रमभिष्टुत्य अथेदानीं ये याजयन्ति तानाह । यूयं पात पालयत स्वस्तिभिरविनाशैः सदाकालं नोऽस्मान् ॥ ५४ ॥

म० वसिष्ठदृष्टा इन्द्रदेवत्या त्रिष्टुप् । वसिष्ठाः वसिष्ठापत्यानि मुनयः अर्कैर्मन्त्रैः एव इत् एवमेव इन्द्रमभ्यर्चन्ति पूजयन्ति । कीदृशमिन्द्रम् । वृषणं वर्षितारम् । वज्रबाहुं वज्रं बाहौ यस्य तम् । स इन्द्रः स्तुतः सन् वीरवत् वीरा विद्यन्ते यत्र तत् पुत्रयुक्तम् । गोमत् गावो विद्यन्ते यत्र तत् गोसंयुक्तं धनम् नोऽस्मभ्यं धातु दधातु । विकरणव्यत्ययः । एवं पादत्रयेणेन्द्रं स्तुत्वा ऋत्विज आह । हे ऋत्विजः, यूयं स्वस्तिभिः अविनाशैः सदा सर्वदा नोऽस्मान् पात रक्षत ॥ ५४ ॥

## पञ्चपञ्चाशी ।

समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः । दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रियम् ॥५५॥

उ० इतउत्तरं त्रिपशुः आअध्यायात् तत्र द्वादशानुष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः । समिद्धः संदीप्तोऽग्निः हविःक्षपणसमर्थः । हे अश्विनौ । किंच तप्तो घर्मः प्रवर्ग्यः विराट् च सोमोऽभिषुतः । किंच दुहे प्रपूरयति च धेनुः सरस्वती । सोमं शुक्रं शुक्रम् इह इन्द्रियं वीर्यम् ॥ ५५ ॥

म० 'आप्रियश्च समिद्धो अग्निरश्विनेति' ( का० १९ । ६ । १५ ) । समिद्ध इत्याद्या द्वादशानुष्टुभः चकारात्त्रिपशोः प्रयाजयाज्याः इति सूत्रार्थः । विदर्भिदृष्टा अश्विसरस्वतीन्द्रदेवत्या आप्रीसंज्ञा द्वादशानुष्टुभः । अश्विनावध्वर्यू देवानामिति तौ प्रति होता प्राह । हे अश्विना अश्विनौ, अग्निः समिद्धो दीप्तोऽस्ति हविर्दहनक्षमोऽस्ति । घर्मः प्रवर्ग्यः तप्तोऽस्ति । विराट् विविधं राजमानः सोमः सुतोऽभिषुतः । किंच धिनोति प्रीणाति धेनुः । औणादिको नुप्रत्ययो धिवेः वलोपो गुणश्च । प्रीणयित्री सरस्वती इह यज्ञे सोमं दुग्धे 'दुह प्रपूरणे' लटि तङि प्रथमैकवचने टेरेत्वे 'लोपस्त आत्मनेपदेषु' ( पा० ७ । १ । ४१ ) इति तलोपे दुहे इति रूपम् । कीदृशं सोमम् । शुक्रं शुक्रं शुद्धम् इन्द्रियमिन्द्राय हितं बलकरम् । एतावता यज्ञसंपत्तिरस्ति युवामागच्छतमिति भावः ॥ ५५ ॥

## षट्पञ्चाशी ।

तनूपा भिषजा सुतेऽश्विनोभा सरस्वती । मध्वा रजाꣳसीन्द्रियमिन्द्राय पथिभिर्वहान् ॥ ५६ ॥

उ० अश्विनावध्वर्यू तयोर्होता कथयति यज्ञसंपत्तिम् । तनूपा भिषजा तनूनां पातारौ भिषजौ च । सुते सोमे अश्विनावुभौ सरस्वती च मध्वा रसेन रजांसि पूरयत्विन्द्रोपभोगाय । लोका रजांस्युच्यन्ते इतीह लोकवचनो रज-

इशब्दः । इन्द्रियं वीर्यम् इन्द्राप्यायनार्थम् पथिभिर्मार्गैर्वहान्वहन्तु ॥ ५६ ॥

**म०** उभा अश्विना उभौ अश्विनौ सरस्वती मघ्वा मधुना रजांसि लोकान् दुहन्ति पूरयन्ति । पूर्वेर्चो दुहे इतस्य वचनव्यत्ययेनेहानुषङ्गः । 'लोका रजांस्युच्यन्ते' ( निरु० ४।१९ ) इति यास्कोक्तेः रजःशब्दोऽत्र लोकवाची । कीदृशावश्विनौ । तनूपा तनूः शरीराणि पातस्तौ तनूपौ शरीराणां रक्षितारौ । भिषजा भिषजौ वैद्यौ । क्व सति । सुते सोमेऽभिषुते सति पूरयन्तीत्यर्थः । किंच अश्विसरस्वत्य इन्द्राय इन्द्रियं वीर्यं पथिभिर्यज्ञमार्गैः वहान् वहन्ति । 'इतश्च लोपः परस्मैपदेषु' ( पा० ३।४।९७ ) इतीकारलोपे वहानिति रूपम् ॥ ५६ ॥

## सप्तपञ्चाशी ।

इन्द्रायेन्दुꣳ सरस्वती नराशꣳसेन नग्नहुम् ।
अधातामश्विना मधु भेषजं भिषजा सुते ॥ ५७ ॥

**उ०** इन्द्रायेन्दुम् । इन्द्रार्थमिन्दुं सोमं सरस्वती अभिषुणोदिति वाक्यपरिपूर्तिः । नराशंसेन यज्ञेन सहिता नग्नहुम् । किंच अधातां सुरायाम् अश्विनौ मधु रसरूपं भेषजरूपं च । भिषजौ वैद्यौ सुते सोमेन्द्रायेत्यनुपङ्गो विभक्तिव्यत्ययेन ॥ ५७ ॥

**म०** सरस्वती नराशंसेन यज्ञेन सह इन्द्राय इन्द्रार्थमिन्दुं सोमं नग्नहुं सुराकन्दं च पूर्वोक्तमधात् धृतवती । किंच भिषजा अश्विना भिषजौ अश्विनौ सुते सोमेऽभिषुते सति मधु मधुरं भेषजमौषधमधातां धारितवन्तौ । अधातामित्येव क्रिया वचनव्यत्ययेन पूर्वार्धे योज्या ॥ ५७ ॥

## अष्टपञ्चाशी ।

आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् ।
इडाभिरश्विनाविषꣳसमूर्जꣳ सꣳ रयिं दधुः॥५८॥

**उ०** आजुह्वाना आह्वयन्ती सरस्वती इन्द्रायेन्द्रियाणि चक्षुःप्रभृतीनि वीर्यं च वीरकर्म । इडाभिर्यज्ञियाभिर्हेतुभूताभिः । अश्विनौ च सहायभूतावुपादाय संदधुः । इषं चान्नं च संदधुः । ऊर्जं तदुपसेचनं च दध्यादि संदधुः संदधुश्च रयिं धनम् ॥ ५८ ॥

**म०** आहूयते आजुह्वाना अर्थादिन्द्रमाह्वयन्ती सरस्वती अश्विना चेन्द्राय इन्द्रियाणि चक्षुरादीनि संदधुः । वीर्यं सामर्थ्यं च दधुः । इडाभिः पशुभिः सह इषमन्नं संदधुः । 'पशवो वा इडा' ( १।८।१।१२ ) इति श्रुतिः । ऊर्जं दध्यादि रयिं धनं च संदधुः । एतानि ददुरित्यर्थः ॥ ५८ ॥

## एकोनषष्टी ।

अश्विना नमुचेः सुतꣳ सोमꣳ शुक्रं परिस्रुता ।
सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥ ५९ ॥

**उ०** अश्विना नमुचेः । यमश्विनौ नमुचेराहृत्य सुतमभिषुतं सोमं शुक्रम् अमलिनम् परिस्रुता सहितं स्थापितवन्तौ । सरस्वती तमेवाहरत् बर्हिषास्तरणार्थेन सहिता । इन्द्राय पातवे इन्द्रपानार्थम् ॥ ५९ ॥

**म०** अश्विना अश्विनौ परिस्रुता सुरया सह सुतमभिषुतं शुक्रं शुद्धममलिनं सोमं नमुचेः असुरात्सकाशात् आहरताम् । सरस्वती च तमेव सोमं बर्हिषास्तरणार्थेन सह आभरत् आहरत् । किमर्थम् । इन्द्राय पातवे इन्द्रस्य पानार्थम् । तुमर्थे तवेप्रत्ययः ॥ ५९ ॥

## षष्टी ।

कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिशः ।
इन्द्रो न रोदसी उभे दुहे कामान्सरस्वती ॥ ६० ॥

**उ०** कवष्यो न यज्ञगृहद्वार उच्यते । कवष्यो न 'कुष् निष्कर्षे' । समुच्चयार्थीयो नकारः । अस्यामृचि ससुषिराश्च व्यञ्जनवत्यश्च अश्विभ्यांन अश्विभ्यांचाध्वर्युभ्यां सहिताः दुरः द्वारदिशः । द्वार्भिर्दिशो लक्ष्यन्त्य इत्यतएवमुक्तम् । इन्द्रो न इन्द्रश्च यासु द्वास्सु व्यवस्थितः । रोदसी द्यावापृथिव्यौ उभे अपि दुहे दोग्धि । कामांश्च सरस्वती दुहे । इन्द्रायायाताय यज्ञगृहद्वार इन्द्रं कुर्वन्निति शेषः ॥ ६० ॥

**म०** अस्यामृचि त्रयो नकाराश्चकारार्थाः । अश्विभ्यां सहिता सरस्वती इन्द्रो न इन्द्रश्च उभे रोदसी द्यावापृथिव्यौ कामान् दुहे दुग्धे । द्विकर्मकः द्यावापृथिवीभ्यां सकाशात्कामान् दोग्धि दुरो दिशश्च सकाशात् दोग्धि । 'अकथितं च' ( पा० १।४।५१ ) इति द्वारां दिशां रोदसोश्च कर्मत्वम् । कीदृश्यो द्वारः । कवष्यः 'कुष निष्कर्षे' । कुषिताः सच्छिद्राः । तथा व्यचस्वतीः व्यचनं व्यचोऽवकाशः तद्वत्यः ॥ ६० ॥

## एकषष्टी ।

उषासानक्तमश्विना दिवेन्द्रꣳ सायमिन्द्रियैः ।
संजानाने सुपेशसा समञ्जाते सरस्वत्या ॥ ६१ ॥

**उ०** उषासानक्तम् । उषा आदित्यप्रभा । नक्तं रात्रिः । हे अश्विनौ, उषाश्च रात्रिश्च दिवा अहनि च इन्द्रम् इन्द्रियैर्वीर्यैः समञ्जाते संश्लक्षयतः सायं च इन्द्रियैः समञ्जाते । सातत्याभिप्रायम् । संजानाने एकमतीभूते उषाश्च रात्रिश्च सुपेशसा सुरूपे शुक्लेन उषाः कृष्णेन रात्रिः । किमिन्द्रमुषाश्च रात्रिश्च केवले एव समञ्जाते नेत्याह । सरस्वत्या च सह समञ्जाते ॥ ६१ ॥

**म०** हे अश्विनौ, उषासा रविप्रभा नक्तं रात्रिश्च सरस्वत्या सह दिवा दिवसे सायंकाले च इन्द्रमिन्द्रियैः वीर्यैः सह समञ्जाते संयोजयतः । कीदृश्यौ ते । संजानाने संजानीतः ते संजानाने एकमती । सुपेशसा शोभनं पेशो रूपं ययोस्ते । शुक्ला उषाः कृष्णा रात्रिः ॥ ६१ ॥

## द्विषष्टी।

पातं नो अश्विना दिवा पाहि नक्तꣳ सरस्वति। दैव्या होतारा भिषजा पातमिन्द्रꣳ सचा सुते ६२

उ० पातं नः पालयतं नोऽस्मान् हे अश्विनौ दिवा अहनि। पाहि पालय च नक्तं हे सरस्वति। युवां च हे देव्यौ, होतारौ भिषजौ, पातं पालयतम्। इन्द्रम् सचा सहेत्यर्थः। सुते सोमे॥ ६२॥

म० हे अश्विना अश्विनौ, दिवा दिवसे नोऽस्मान् युवां पातं रक्षतम्। हे सरस्वति, नक्तं रात्रौ त्वं नः पाहि रक्ष। हे दैव्या होतारा देवसंबन्धिनौ होतारौ, भिषजा भिषजौ अश्विनौ सुते सोमेऽभिषुते सति सचा सह एकीभूय युवमिन्द्रं पातं रक्षतम्। सर्वत्र विभक्तेराकारः॥ ६२॥

## त्रिषष्टी।

तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा। तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम्॥ ६३॥

उ० तिस्रस्त्रेधा। तिस्रो देव्यः सरस्वती च मध्यस्थाना। भारती आदित्यप्रभा द्युस्थाना। इडा पृथिवीस्थाना। एतास्त्रिषु स्थानेषु स्थिताः। अश्विनौ च। तीव्रं पटुतमं परिस्रुता सहितं सोमम्। इन्द्राय सुषुवुः अभिषुतवन्तः। मदं तर्पणम्॥ ६३॥

म० तिस्रो देव्यः अश्विना अश्विनौ च परिस्रुता सुरया सह सोममिन्द्राय सुषुवुरभिषुतवन्तः। काः तिस्रः। सरस्वती भारती इडा च। कीदृश्यः। त्रेधा स्थिता इति शेषः। सरस्वती मध्यस्थाना भारती द्युस्थाना इडा पृथिवीस्थाना। कीदृशं सोमम्। तीव्रं पटुत्वकरम्। मदं मदजनकम्॥ ६३॥

## चतुःषष्टी।

अश्विना भेषजं मधु भेषजं नः सरस्वती। इन्द्रे त्वष्टा यशः श्रियꣳ रूपꣳ रूपमधुः सुते॥६४॥

उ० अश्विना भेषजं मधु। एतदाख्यातं तस्मादधुरिति परिणामः। के अदधुः। अश्विनौ सरस्वती त्वष्टा च प्रयाजदेवताः। किमदधुः। अश्विनौ तावद्भेषजं मधुरूपं भेषजम्। नः अस्मत्संबन्धिनी सरस्वती। त्वष्टा च यशः श्रियं रूपं च। कस्मिन्नदधुः। इन्द्रे। कस्मिन्नवसरे। सुतेऽभिषुते सोमे॥ ६४॥

म० अश्विना नोऽस्माकं सरस्वती त्वष्टा प्रयाजदेवता च सुते सोमेऽभिषुते सति इन्द्रे एतानि वस्तूनि अधुः स्थापयामासुः। दधातेर्लुङ्। कानीत्यत आह। भेषजमौषधं मधु मधुरूपं भेषजं च यशः कीर्तिं श्रियं लक्ष्मीं रूपं रूपं नानाविधं रूपं च। 'नित्यवीप्सयोः' (पा० ८।१।४) इति रूपशब्दस्य द्वित्वम्॥ ६४॥

## पञ्चषष्टी।

ऋतुथेन्द्रो वनस्पतिः शशमानः परिस्रुता। कीलालमश्विभ्यां मधु दुहे धेनुः सरस्वती॥ ६५॥

उ० ऋतुथेन्द्रः। ऋतावृतौ कालेकाले इन्द्रायेति विभक्तिव्यत्ययः। वनस्पतिः शशमानः संशममानः स्तुवन् परिस्रुता साधनभूतया। कीलालमन्नरसम् दुहे इत्यनुषङ्गः। अश्विभ्यां च सहिता। दुहे दोग्धि धेनुर्भूत्वा सरस्वती॥ ६५॥

म० वनस्पतिः प्रयाजदेवः शशमानः स्तुवन् सन् ऋतुथा ऋतौ ऋतौ काले काले परिस्रुता सुरया सह कीलालमन्नरसमिन्द्रः इन्द्राय इन्द्रार्थं दुहे दुग्धे। 'सुपां सुलुक्' (पा० ७।१।३९) इत्यादिना चतुर्थ्येकवचनस्य सुआदेशे इन्द्र इति 'लोपस्त आत्मनेपदेषु' (पा० ७।१।४१) इति तलोपे दुहे इति रूपम्। किंच सरस्वती अश्विभ्यां सहिता धेनुर्भूत्वा इन्द्राय मधु दुहे दुग्धे॥ ६५॥

## षट्षष्टी।

गोभिर्न सोममश्विना मासरेण परिस्रुता। समधातꣳ सरस्वत्या स्वाहेन्द्रे सुतं मधु॥ ६६॥

उ० गोभिर्न। गोप्रभृतिश्च पशुभिः सोमं सहितं मासरेण परिस्रुता च। कथंभूतं सुतं मधु। अभिषुतं मधुस्वादं च। हे अश्विनौ, युवां समधातम्। कस्मिन्समधातम्। इन्द्रे। किं केवलावेवाश्विनौ समधातं नेत्याह। सरस्वत्या सह। स्वाहा स्वाहाकृतिभिः प्रयाजेन सार्धम्॥६६॥

म० हे अश्विना अश्विनौ, मासरेण परिस्रुता सह गोभिर्न गोप्रभृतिपशुभिश्च सह। नश्चार्थे। सुतमभिषुतं सोमं मधु च इन्द्रे युवां समधातमारोपयतम्। संपूर्वाद्धधातेर्लुङि मध्यमद्विवचनम्। हे स्वाहाकृतयः प्रयाजदेवाः, यूयं सरस्वत्या सह इन्द्रे सुतं मधु समधातेति वचनव्यत्ययः॥ ६६॥

## सप्तषष्टी।

अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती। आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे॥ ६७॥

उ० अश्विना हविः। तिस्रो वपानां याज्यानुवाक्या अनुष्टुभः। एकैकाश्विसरस्वतीन्द्रदेवत्या। आजभ्रिरे इत्याख्यातपदे सर्वाणि पदानि संबध्यन्ते। अश्विनौ सरस्वती च आजभ्रिरे। हविरिन्द्रियं वीर्यं शुक्रममलिनम्। वसु धनं मघं महनीयम्। कुत आजभ्रिरे नमुचेः आसुरात्। कया हेतुभूतया आजभ्रिरे। धिया बुद्ध्या। कस्मै आजभ्रिरे इन्द्राय॥ ६७॥

म० अश्विना हविरिति तिस्रो वपानां याज्यानुवाक्याः प्रथमामनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या

तृतीयामनूच्य प्रथमा याज्या । अश्विनेत्याद्यास्तिस्रस्तिसृणां वपानां क्रमाद्याज्यापुरोनुवाक्याः । तत्प्रकारमाह । आश्विनवपायागे अश्विना ( ६७ ) इति अनुवाक्या यमश्विना ( ६८ ) इति याज्या, सारस्वतवपायागे यमश्विना ( ६८ ) इति अनुवाक्या तमिन्द्रम् ( ६९ ) इति याज्या, ऐन्द्रवपायागे तमिन्द्रम् ( ६९ ) इति अनुवाक्या अश्विना ( ६७ ) इति याज्येति सूत्रार्थः । अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना अश्विनौ सरस्वती च धिया बुद्ध्या कृत्वा नमुचेर्नमुचिसंज्ञात् आसुरात् दैत्यात् इन्द्रायेन्द्रार्थमेतानि वस्तूनि आजभ्रिरे आजह्रिरे । कानीत्यत आह । हविः शुक्रं शुद्धममलिनं हविः इन्द्रियं वीर्यं मघं महनीयं वसु धनं च ॥ ६७ ॥

## अष्टषष्टी ।

यमश्विना सरस्वती हविषेन्द्रमवर्धयन् । स बिभेद बलं मघं नमुचावासुरे सचा ॥ ६८ ॥

**उ०** यमश्विना । यमिन्द्रमश्विनौ सरस्वती च हविषा वर्धयन् । स बिभेद । 'भिदिर् विदारणे' विदारितवान् । बलं मघम् । वृणोतिर्बलः मघं महनीयम् । नमुचौ आसुरे सचा । सचा सहशब्दवचनः तद्योगाच्च विभक्तिव्यत्ययः । नमुचिना असुरेण सह बलं बिभेदेति ॥ ६८ ॥

**म०** अश्विनौ सरस्वती च हविषा कृत्वा यमिन्द्रमवर्धयन् । स इन्द्रो नमुचावासुरे सचा नमुचिना असुरेण सह मघं महनीयं बलं मेघं बिभेद विदारितवान् । सचेत्यव्ययं सहार्थे । तद्योगे नमुचावासुरे इति तृतीयार्थे सप्तमी । 'वृणोतेर्बले' ( निरु० ६ । २ ) इति यास्कः । नमुचिं विदार्य वृष्टिं कारितवानित्यर्थः ॥ ६८ ॥

## एकोनसप्ततितमी ।

तमिन्द्रं पशवः सचाश्विनोभा सरस्वती । दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियैः ॥ ६९ ॥

**उ०** तमिन्द्रं तमुक्तगुणमिन्द्रं पशवः कर्माङ्गभूताः गोमेषाजाः सचा सहभूताः । अश्विनौ उभौ सरस्वती च दधानाः धारयन्तः । अभ्यनूषत । नूषतिर्वृद्ध्यर्थः । अभिवर्धयन्ति । केन हविषा । कस्मिन् यज्ञे । इन्द्रियैर्वीर्यैः ॥ ६९ ॥

**म०** पशवः कर्माङ्गभूता गोमेषाजाः उभा अश्विना उभौ अश्विनौ सरस्वती च सचा सहभूताः सन्तः यज्ञे हविषा इन्द्रियैः वीर्यैश्च दधानाः पुष्णन्तः सन्तः तमिन्द्रमभ्यनूषत अवर्धयन् अस्तुवन् वा 'णू स्तवने' ॥ ६९ ॥

## सप्ततितमी ।

य इन्द्र इन्द्रियं दधुः सविता वरुणो भगः । स सुत्रामा हविष्पतिर्यजमानाय सश्चत ॥ ७० ॥

**उ०** य इन्द्र । तिस्रोऽनुष्टुभः पशुपुरोडाशानां याज्यानुवाक्या इन्द्रसवितृवरुणदेवत्याः । सर्वाः ये इन्द्रे इन्द्रियं दधुः स्थापितवन्तः । सविता वरुणो भगः । भगशब्देनात्रेन्द्रो लक्ष्यते । ते यजमानेऽपि वीर्यं दधतीति वाक्यपरिपूर्तिः । स सुत्रामा यश्च सुत्रामा इन्द्रः हविष्पतिः हविषः स्वामी । यजमानमिति विभक्तिव्यत्ययः । सश्चत सचतामिति पुरुषवचनव्यत्ययः । एवमेते विषमा मन्त्रा लक्षणया व्याख्येयाः ॥ ७० ॥

**म०** 'य इन्द्र इति पुरोडाशानां पूर्ववत्' ( का० १९ । ६ । १८ ) य इन्द्र इति तिसृस्त्रयाणां पशुपुरोडाशानां याज्यानुवाक्याः पूर्ववत्' य इन्द्रे ( ७० ) सविता ( ७१ ) इत्यैन्द्रस्यानुवाक्यायाज्ये, सविता ( ७१ ) वरुणः क्षत्रम् ( ७२ ) इति सावित्रस्य ते । वरुणः क्षत्रम् ( ७२ ) य इन्द्रे ( ७० ) इति वारुणस्येति सूत्रार्थः । प्रत्येकमिन्द्रसवितृवरुणदेवत्यास्तिस्रोऽनुष्टुभः । सविता वरुणो भग इति ये त्रयो देवाः इन्द्रे इन्द्रियं वीर्यं दधुः स्थापयामासुः । हविष्पतिः हविषां स्वामी सुत्रामा शोभनत्राणकर इन्द्रो यजमानाय । कर्मणि चतुर्थी । यजमानं सश्चत सेवताम् । इष्टदानेन यजमानं सुखयत्वित्यर्थः । 'षच सेवने' लोडर्थे लङ् । अडभाव आर्षः ॥ ७० ॥

## एकसप्ततितमी ।

सविता वरुणो दधद्यजमानाय दाशुषे । आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥ ७१ ॥

**उ०** सविता वरुणः द्वितीयोऽर्धर्चः प्रथमं व्याख्येयः । आदत्त जग्राह नमुचेः सकाशात् वसु धनं बलं चेन्द्रियं च । सुत्रामा इन्द्रः । तत् सवितृवरुणप्रभृतयः पशुपुरोडाशदेवताः दधत् दधातु । यजमानाय दाशुषे हवींषि दत्तवते ॥ ७१ ॥

**म०** सुत्रामा इन्द्रो नमुचेरसुरात्सकाशात् यद्वसु धनं बलमिन्द्रियं वीर्यं च आदत्त जग्राह । सविता वरुणो भगश्च पशुपुरोडाशमन्त्रदेवास्तत् नमुचेरानीतं वस्वादिकं यजमानाय दधत् दधातु । ददत्वित्यर्थः । कीदृशाय यजमानाय । दाशुषे दाशति ददातीति दाश्वान् तस्मै हवींषि दत्तवते 'दाश्वान्साह्वान्–' ( पा० ६ । १ । १२ ) इत्यादिना क्वसन्तो निपातः ॥ ७१ ॥

## द्विसप्ततितमी ।

वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥ ७२ ॥

**उ०** वरुणः क्षत्रम् । वरुणः सविता च सुत्रामा च दधाना इन्द्रे यजमाने वा यज्ञं सौत्रामणीम् । आसत व्याप्तवन्तः । किंकिं दधानाः । वरुणः क्षत्रमिन्द्रियं च । सविता भगेन धनेन सहितां श्रियम् । सुत्रामा यशसा बलम् ॥ ७२ ॥

**म०** वरुणः सविता सुत्रामा इन्द्रश्च यज्ञं सौत्रामणीमाशत भक्षितवन्तः व्याप्तवन्तो वा । 'अश भोजने' 'अशूङ् व्याप्तौ' वा । उभयोर्विकरणव्यत्ययः । कीदृशास्ते । क्षत्रं क्षतात् त्राण-

सामर्थ्यमिन्द्रियं वीर्यं भगेन भाग्येन सह श्रियं लक्ष्मीं यशसा सह बलं च दधानाः यजमाने स्थापयन्तः । तत्र वरुणः क्षत्रमिन्द्रियं च दधाति सविता भगं श्रियं सुत्रामा यशो बलं चेति विभागः ॥ ७२ ॥

## त्रिसप्ततितमी ।

अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम् । हविषेन्द्रꣳ सरस्वती यजमानमवर्धयन् ॥ ७३ ॥

उ० अश्विना गोभिः । तिस्रोऽनुष्टुभः । हविषां याज्यानुवाक्या अश्विसरस्वतीन्द्रदेवत्याः । अश्विनौ सरस्वती च गोभिः गोप्रभृतिभिः पशुभिः इन्द्रियम् । इन्द्रियेणेति विभक्तिव्यत्ययो वाक्यसंबन्धात् । अश्वेभिः अश्वदक्षिणाभिः । वीर्यं बलम् वीर्येण बलेन । हविषा पुरोडाशेन । इन्द्रं यजमानं च अवर्धयन् ॥ ७३ ॥

म० 'अश्विना गोभिरिति च हविषाम्' (का० १९ । ६ । १९ )। अश्विना गोभिरिति तिस्रो हविषां याज्यानुवाक्याः चात् । पूर्ववत् अश्विना ( ७३ ) ता नासत्या ( ७४ ) इत्याश्विनपशुयागे पुरोऽनुवाक्यायाज्ये, ता नासत्या ( ७४ ) ता भिषजा ( ७५ ) इति सारस्वते, ता भिषजा ( ७५ ) अश्विना ( ७३ ) इत्यैन्द्रे इति सूत्रार्थः । अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना सरस्वती च एतैः पदार्थैः इन्द्रं यजमानं चावर्धयन् । कैस्तत्राह । गोभिर्गोप्रभृतिपशुभिः इन्द्रियम् । विभक्तिव्यत्ययः । इन्द्रियेण इन्द्रियपाटवेन अश्वेभिः अश्वैः दक्षिणारूपैः वीर्यं बलं वीर्येण मनःसामर्थ्येन बलेन शरीरदार्ढ्येन हविषा पशुपुरोडाशेन च । इन्द्रस्य वर्धनं तृप्तिः यजमानस्य वर्धनं धनपुत्रपश्वादिपुष्टिः ॥ ७३ ॥

## चतुःसप्ततितमी ।

ता नासत्या सुपेशसा हिरण्यवर्तनी नरा । सरस्वती हविष्मतीन्द्र कर्मसु नोऽवत ॥ ७४ ॥

उ० ता नासत्या । तौ नासत्यौ न असत्यौ सत्यावेव । सुपेशसा सुरूपौ । हिरण्यवर्तनी हिरण्यदानोपलक्षितपन्थानौ । नरा नृगुणयुक्तौ नराकारौ वा । सरस्वती च हविष्मती हविषा संयुक्ता । एते त्रयः पादाः परोक्षकृताः । चतुर्थस्तु पादः प्रत्यक्षकृतः । अतो वाक्यभेदः । तौ नासत्यावुक्तगुणौ सरस्वती च कर्मसु वर्तमानान् नोऽस्मान् अवत अवन्त्विति पुरुषव्यत्ययः । ततो द्वितीयं वाक्यम् । इन्द्र कर्मसु नोऽवत । हे इन्द्र, त्वमपि कर्मसु वर्तमानान् नः अस्मान् अवत । अवेति वचनव्यत्ययः ॥ ७४ ॥

म० ता तौ नासत्या नासत्यौ अश्विनौ सरस्वती च कर्मसु सौत्रामण्यादियागेषु नोऽस्मानवत अवन्तु रक्षन्तु । पुरुषव्यत्ययः । हे इन्द्र, त्वमपि नोऽस्मान् कर्मसु अव । वचनव्यत्ययः । कीदृशौ नासत्यौ । हिरण्यवर्तनी हिरण्येनोपलक्षिता वर्तनिर्मार्गो ययोस्तौ । यत्र पथि गच्छतस्तत्र सुवर्णमेव संपद्यत इत्यर्थः । सुपेशसा शोभनं पेशो रूपं ययोस्तौ सुन्दरौ । नरा नरौ नरगुणयुक्तौ नराकारौ च । कीदृशी सरस्वती । हविष्मती हविर्विद्यते यस्याः सा ॥ ८४ ॥

## पञ्चसप्ततितमी ।

ता भिषजा सुकर्मणा सा सुदुघा सरस्वती । स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥ ७५ ॥

उ० तौ भिषजौ । सुकर्मणा कल्याणकर्माणौ । सा सुदुघा सुदोहना सरस्वती च । सच वृत्रहा शतक्रतुः बहुकर्मा इन्द्राय दधुः ददुः इन्द्रियं वीर्यम् । ननु स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियमिति इन्द्र इन्द्राय ददातीत्येतन्नोपपद्यते । कल्पान्तरीण इन्द्र एतत्कल्पप्रभवाय ददातीत्यदोषः । विभवो वा देवा अचिन्त्यशक्तयः । एकधा द्विधा बहुधा भवेयुः । एवमेवान्यत्र विरोधाः परिहर्तव्याः ॥ ७५ ॥

म० ता तौ प्रसिद्धौ भिषजा भिषजौ वैद्यौ अश्विनौ सा प्रसिद्धा सरस्वती च स प्रसिद्धो वृत्रहा इन्द्रः कल्पान्तरप्रभवः इन्द्राय एतत्कल्पप्रभवाय इन्द्रियं वीर्यं दधुः । यद्वा इन्द्र एव दातृपात्ररूपेण बहुधा भवति देवानामचिन्त्यशक्तित्वात् । कीदृशौ भिषजौ । सुकर्मणा सुकर्माणौ शोभनं कर्म ययोस्तौ । कीदृशी सरस्वती । सुदुघा सुष्ठु दुग्धे सा सुदुघा साधुदोहना । कीदृशो वृत्रहा । शतक्रतुः शतं क्रतवः कर्माणि यस्य । बहुकर्मकर्ता ॥ ७५ ॥

## षट्सप्ततितमी ।

युवꣳ सुराममश्विना नमुचावासुरे सचा । विपिपानाः सरस्वतीन्द्रं कर्मस्वावत ॥ ७६ ॥

उ० ग्रहाणां याज्यानुवाक्यौ । युवं सुरामम् । पुत्रमिव पितरौ । अनुष्टुप्त्रिष्टुभावश्विसरस्वतीन्द्रदेवत्ये । युवं यूयमिति विभक्तिव्यत्ययः । सरस्वती हि तृतीया । युवं यूयम् हे अश्विसरस्वत्यः । सुरामं सुरामयम् । नमुचौ आसुरे वर्तमानम् । सचा सह विपिपानाः विविधं पिबन्तः कर्मसु वर्तमानाः इन्द्रम् आ अवत पालयत ॥ ७६ ॥

म० 'ग्रहाणां युवꣳ सुरामं पुत्रमिवेति' ( का० १९ । ६ । २० ) । त्रयाणां पयोग्रहाणां सुराग्रहाणां च युवमिति पुरोऽनुवाक्या पुत्रमिवेति याज्येति सूत्रार्थः । द्वे अश्विसरस्वतीन्द्रदेवत्येऽनुष्टुप्त्रिष्टुभौ । हे अश्विनौ, हे सरस्वति, युवं यूयं वचनव्यत्ययः । नमुचावासुरे दैत्ये वर्तमानं सुरामं सुरामयं ग्रहं सचा सह विपिपाना विविधं पिबन्तः सन्तः कर्मस्विन्द्रमावत आसमन्ताद्रक्षत । पिपाना अत्र विकरणव्यत्ययः ॥ ७६ ॥

## सप्तसप्ततितमी ।

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ७७ ॥

उ० पुत्रमिव पितरौ । व्याख्यातम् ॥ ७७ ॥

म० इयं व्याख्याता दशमेऽध्याये । ( अ० १० । क० ३४ ) ॥ ७७ ॥

## अष्टसप्ततितमी ।

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः । कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥ ७८ ॥

उ० पशुस्विष्टकृतौ । यस्मिन्नश्वासः अहाव्यग्ने इति । जगतीत्रिष्टुभावाग्नेय्यौ । यस्मिन्नग्नौ अश्वासः ऋषभासः उक्षणः वशाः मेषाः अवसृष्टासः अवदायावदाय चतुरवत्तेन निक्षिप्ताः । आदायादायहुताः । तस्मै अग्नये । कीलालपे कीलालमन्नरसं पिबतीति कीलालपाः । सोमपृष्ठाय सोमाहुतयो यस्य पृष्ठे हूयन्ते । वेधसे मेधाविने । हृदा मतिं जनये । हृदयं मतिपूर्वकं जनय । चारुम् अग्नये ॥ ७८ ॥

म० 'पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यग्न इति' ( का० १९ । ६ । २१ ) । पशोः संबन्धिनि स्विष्टकृद्यागे यस्मिन्नश्वास इति पुरोनुवाक्या अहाव्यग्न इति याज्या द्वे अग्निदेवत्ये जगतीत्रिष्टुभौ । हे अध्वर्यो, तस्मै अग्नये हृदा सह मतिं बुद्धिं चारुं समीचीनां जनय । अग्न्यर्थं मनोबुद्धी शुद्धे कुरु इत्यर्थः । कीदृशायाग्नये । कीलालपे कीलालमन्नरसं पिबतीति कीलालपास्तस्मै । सोमपृष्ठाय सोमः पृष्ठे यस्य तस्मै । यस्य पृष्ठे सोमाहुतयो हूयन्त इत्यर्थः । वेधसे विदधाति शुभं करोति वेधास्तस्मै शुभमतिकर्त्रे । तस्मै कस्मै । यस्मिन्नग्नौ एते पशवः अवसृष्टाः अवदायावदाय चतुरवत्तेन निक्षिप्ताः । तथा आहुताः आदायादाय हुताः । के पशवः । अश्वासः अश्वाः ऋषभासः ऋषभाः उक्षणः उक्षाणः सेचनसमर्था वृषाः । 'वा षपूर्वस्य निगमे' ( पा० ६ । ४ । ९ ) इति उपधादीर्घाभावः । वशाः वन्ध्याः । मेषाः अजाः । यस्मिन्नेते पशवो हुतास्तस्मै मनःशुद्धिं कुर्विति होतुर्वाक्यम् ॥ ७८ ॥

## एकोनाशीतितमी ।

अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः । वाजसनिꣳ रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ ७९ ॥

उ० अहाव्यग्ने । यस्य ते तव आस्ये मुखे हे अग्ने, अहावि हुतं मया हविः । कथमिव । स्रुचीव घृतम् । यथा स्रुचि नित्यावस्थितं घृतम् । चम्वीव सोमः चम्वामिव । यथाच अधिषवणचर्मणि नित्यावस्थितः सोमः । एवम् । तं त्वां ब्रवीमि । वाजसनिम् वाजमन्नं संसेवते वाजसनिं रयिं धनम् । अस्मे अस्मासु । सुवीरं शोभनवीरं प्रशस्तं । धेहि स्थापय । यशसं च । 'यशो वै सोमो राजा' । बृहन्तं महान्तम् ॥ ७९ ॥

म० हे अग्ने, ते तवास्ये हविरहावि हुतम् सर्वतः । जुहोतेः कर्मणि लुङ् । सन्ततहोमे दृष्टान्तः । स्रुचि घृतमिव । यथा स्रुचि घृतं सर्वदा स्थितम् चम्वि चम्वामधिषवणचर्मणि सोम इव । तत्र यथा सोमः सर्वदा स्थितस्तद्वन्नित्यं मया तवास्ये हविर्हुतम् । हे अग्ने, सः त्वमस्मे अस्मासु एतानि वस्तूनि धेहि स्थापय । कानि । वाजसनिं वाजस्य अन्नस्य सनिं भोगम् । रयिं धनम् । कीदृशम् सुवीरं शोभना वीराः पुत्रा यत्र तं सुपुत्रयुक्तं धनमित्यर्थः । प्रशस्तं सर्वलोकस्तुतं बृहन्तं महान्तं यशसं यशश्च । पुंस्त्वमार्षम् । सर्वलोकप्रसिद्धं यशो देहीत्यर्थः । 'यशो वै सोमो राजा' इति श्रुतेः । यशसं सोममिति वा ॥ ७९ ॥

## अशीतितमी ।

अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम् । वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम् ॥ ८० ॥

उ० शतम् । अश्विना तेजसा । एकादशं च शस्त्रम् । आद्यानुष्टुप् अश्विसरस्वतीन्द्रदेवत्या च । द्वितीयाद्यास्त्रयस्त्यृचो गायत्र्योऽश्विसरस्वतीन्द्रदेवत्या यथासंख्यम् । अश्विना अश्विनौ तेजसा सह । चक्षुः प्राणेन प्राणेन सह वीर्यम् । सरस्वती वाचा सह बलेन च सह । एवमेता देवताः प्रतिनियतचक्षुरादिद्वारेण इन्द्राय दधुः ददुः इन्द्रियम् ॥ ८० ॥

म० 'प्रतिगरिष्यत्युपविष्टेऽध्वर्यौ शोꣳसावेत्याहूयाश्विना तेजसेत्यनुवाकꣳ शꣳसति' ( का० १९ । ७ । १ ) । त्रयस्त्रिंशवसामहसादनानन्तरमध्वर्योः होतुः पुरस्तात् प्रतिगरार्थमुपवेशनमुक्तम् तदाह प्रतिगरिष्यत्यध्वर्यो पुर उपविष्टे सत्यध्वर्यो शोꣳसावो३मित्याहूयाश्विना तेजसा चक्षुरित्येकादशर्चमनुवाकं शस्त्रं शंसति । प्रथमान्त्ये ऋचौ त्रिः शंसनीये मध्यस्थानां त्रयाणां तृचानामादिष्वाहावः कार्य इति सूत्रार्थः । अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् । आद्यः पादोऽष्टार्णः द्वितीयो निवार्णः तृतीयः षडर्णः चतुर्थोऽष्टार्णः । अश्विनौ तेजसा सह चक्षुरिन्द्रियमिन्द्राय दधुः दधतुः । सरस्वती प्राणेन सह वीर्यमिन्द्राय दधौ ददौ । इन्द्रः कल्पान्तरीणः वाचं बलेन च सह इन्द्रायैतत्कल्पोत्थाय इन्द्रियं सामर्थ्यं ददौ । एवमश्विसरस्वतीन्द्रा इन्द्राय तेजआदि दधुरित्यर्थः । सर्वापेक्षया दधुरिति बहुवचनम् ॥८०॥

## एकाशीतितमी ।

गोमदू षु णासत्याश्वावद्यातमश्विना । वर्ती रुद्रा नृपाय्यम् ॥ ८१ ॥

उ० गोमदू षु । हे नासत्यौ, गोमद्धनं संगृह्य । उ सु पादपूरणौ । अश्ववच्च धनं संगृह्य यातम् हे अश्विनौ, वर्तिः वर्तिन्या प्रसिद्धेन मार्गेण । हे रुद्रा रुद्रौ, शत्रूणां रोदयितारौ । नृपाय्यं प्रति सदेवा नरः यस्मिन्यज्ञे पिबन्ति स नृपाय्यः ॥ ८१ ॥

म० गृत्समदहष्टा अश्विदेवत्यास्तिस्रो गायत्र्यः । आद्या पादनिचृद्गायत्री 'त्रयः सप्तकाः पादनिचृत्' इति वचनात् । उ सु निपातौ पादपूरणौ । 'इकः सुञि' (पा० ६।३।१३४) इति वाते परे उ इत्यस्य संहितायां दीर्घः 'सुञः' (पा० ८।३।१०७) इति सूत्रेण सु इत्यस्य षत्वम् 'पूर्वपदात्' (पा० ८।३।१०६) इति नासत्यशब्दनकारस्य णत्वम् । हे नासत्या नासत्यौ, हे अश्विना, हे रुद्रा रुद्रौ, शत्रूणां रोदयितारौ, वर्तिः विभक्तिव्यत्ययः । वर्त्या मार्गेण युवां नृपाय्यं यज्ञं प्रति यातं गच्छतम् । नृभिः पीयते सोमो यस्मिन् स नृपाय्यः 'क्रतौ कुण्डपाय्यसंचाय्यौ' (पा० ३।१।१३०) इत्यत्र कुण्डशब्द उपलक्षकः । नृशब्देऽपि तृतीयान्ते उपपदे पिवतेर्धातोरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । किं कृत्वा । गोमत् गावो विद्यन्ते यस्मिन् गोमत् । अश्वावत् अश्वा विद्यन्ते यस्य तदश्ववत् । 'मन्त्रे सोमाश्व–' (पा० ६।३।१३१) इत्यादिना अश्वशब्दस्य दीर्घः । गोयुक्तमश्वयुक्तं च धनमादाय यज्ञं गच्छतमित्यर्थः ॥ ८१ ॥

## द्व्यशीतितमी ।

न यत्परो नान्तर आदधर्षद्वृषण्वसू । दुःशंसो मर्त्यो रिपुः ॥ ८२ ॥

उ० न यत्परः । यमेनं न परः अन्तरेण असंबद्धः नच अन्तरः संबद्धः आदधर्षत् आधृष्णुयात् अभिभूय गृह्णीयात् । हे वृषण्वसू । वर्षणं वृष्टिर्वसु धनं ययोस्तौ तथोक्तौ । यद्वा वृष्टिद्वारेणावासयितारौ । दुःशंसः दुष्टमसद्वृत्तं शंसति यः स तथोक्तः । मर्त्यो मनुष्यः । रिपुः शत्रुः ॥ ८२ ॥

म० हे वृषण्वसू, वृषा वृष्टिरेव वसु धनं ययोस्तौ । यद्वा वृष्ट्या वासयतो लोकं स्थापयतस्तौ वृषण्वसू हे अश्विनौ, दुःशंसो दुष्टमपवादं शंसति कथयति दुःशंसोऽपवदिता रिपुः शत्रुः मर्त्यः मनुष्यः परः असंबद्धः अन्तरः संबद्धः स्वकीयोऽपि ईदृशो मर्त्यो यत् यमिन्द्रं न आदधर्षीत् न आधृष्णुयात् न पराभूयात् । स्वजनोऽस्वजनोऽपि रिपुः पिशुनोऽपि यमिन्द्रं पराभवितुं न शक्त इत्यर्थः । 'ञिधृषा प्रागल्भ्ये' अस्माद्धातोर्यङ्लुगन्ताच्छतृप्रत्ययः ॥ ८२ ॥

## त्र्यशीतितमी ।

ता न आवोढमश्विना रयिं पिशङ्गसंदृशम् । धिष्ण्या वरिवोविदम् ॥ ८३ ॥

उ० ता नः । यौ युवामुक्तगुणौ तौ नः अस्माकम् । आवोढम् आवहतम् हे अश्विनौ, रयिं धनम् पिशङ्गसंदृशं अनेकरूपसंदर्शनम् । हे धिष्ण्या धिष्ण्याग्निरूपौ दातारौ वा । वरिवोविदं वरिवो धनं विन्दति वरिवोविदः । वरिवो धननाम । यल्लब्धं सदन्यस्य धनलाभस्य हेतुभूतं भवति ॥ ८३ ॥

म० हे धिष्ण्या धिष्ण्यौ धिष्ण्याग्निरूपौ धातारौ वा हे अश्विनौ, युवां नोऽस्माकं रयिं धनमावोढमावहतम् । आनयतमित्यर्थः । वहतेर्लुङि परस्मैपदे मध्यमद्विवचनम् । कीदृशं रयिम् । पिशङ्गसंदृशं पिशङ्गं पीतं सम्यक् दृश्यते तत् पिशङ्गसंदृशम् पीतवर्णं सुवर्णमित्यर्थः । तथा वरिवोविदं वरिवो धनं विन्दति प्राप्नोति वरिवोविदस्तम् 'विदॢ लाभे' 'इगुपध–' (पा० ३।१।१३२) इति कः । यच्च धनं धनान्तरहेतुभूतं भवतीत्यर्थः ॥ ८३ ॥

## चतुरशीतितमी ।

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥ ८४ ॥

उ० पावका नः । पावयित्री सरस्वती वाजेभिः अन्नैः वाजिनीवती अन्नवती । सा नः अस्माकम् यज्ञं वष्टु कामयताम् । यो हि यदिच्छति स तत्प्रति गच्छति । धियावसुः धिया वसु धनं यस्याः सा धियावसुः ॥ ८४ ॥

म० मधुच्छन्दोदृष्टाः सरस्वतीदेवत्यास्तिस्रो गायत्र्यः । सरस्वती नोऽस्माकं यज्ञं वष्टु कामयताम् । 'वश कान्तौ' यो यदिच्छति स तत् प्रति गच्छति । अस्मद्यज्ञं प्रत्यागच्छत्वित्यर्थः । कीदृशी सरस्वती । पावका पावयित्री पवनं पावः शोधनं घञ् पावं कायति कथयति पावका 'आतोऽनुपसर्गे कः' (पा० ३।२।३) वाजेभिर्वाजैः अन्नैः । वाजिनीवती वाजा अन्नानि विद्यन्ते यस्यां सा वाजिनी यज्ञक्रिया । वाजिनी विद्यते यस्याः सा वाजिनीवती यज्ञक्रियाधिष्ठात्री । धियावसुः धिया कर्मणा वसु धनं यस्याः सा धियावसुः । छान्दसस्तृतीयाया अलुक् ॥ ८४ ॥

## पञ्चाशीतितमी ।

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ८५ ॥

उ० चोदयित्री सूनृतानाम् । चोदयित्री प्रेरयित्री । सूनृतानां शोभनानामृतां वचसाम् । त्रयीलक्षणस्य वाग्विभवस्य चोदयित्रीत्यर्थः । चेतन्ती चेतयमाना सुमतीनां शोभनमतीनाम् । यज्ञं दधे धारयति सरस्वती ॥ ८५ ॥

म० सरस्वती यज्ञं दधे धारयति । कीदृशी । सूनृतानां प्रियं सत्यं सूनृतम् । प्रियसत्यवचनानां वेदत्रयीशब्दानां चोदयित्री प्रेरयित्री 'चुद प्रेरणे' णिजन्तात्तृच् ततो ङीप् । सुमतीनां शोभनानां बुद्धीनां चेतन्ती चेतयन्ती प्रकटयन्ती । सुमतिदात्रीत्यर्थः । 'छन्दस्युभयथा' (पा० ३।४।११७) इति शपोऽप्यार्धधातुकत्वाण्णिचो लोपः ॥ ८५ ॥

## षडशीतितमी ।

महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥ ८६ ॥

उ० महो अर्णः । या महत् अर्णः महान्तमुदकमित्यर्थः । सरस्वती प्रचेतयति प्रज्ञापयति । केन हेतुना । केतुना कर्मणा प्रज्ञया वा । मध्यस्थाना नदी वा । धियो बुद्धीः

विश्वाः सर्वाः सर्वप्राणिष्ववस्थिताः । विराजति । राजतिर्दीप्त्यर्थः अन्तर्भावितण्यर्थश्च द्रष्टव्यः । विविधं दीपयति प्रकाशयति । तां वयं स्तुम इति शेषः ॥ ८६ ॥

म० सरस्वती केतुना कर्मणा प्रज्ञया वा महो महत् अर्णः उदकं प्रचेतयति प्रज्ञापयति प्रेरयति । सर्वस्यां भूमौ वृष्टिं कारयतीत्यर्थः । किंच विश्वाः सर्वाः धियः सर्वप्राणिस्था बुद्धीः विराजति विराजयति दीपयति सर्वजन्तुबुद्धीः प्रकाशयति तां स्तुमः ॥ ८६ ॥

## सप्ताशीतितमी।

इन्द्रायाहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ॥ ८७ ॥

उ० इन्द्रायाहि । हे इन्द्र, आयाहि आगच्छ । हे चित्रभानो चित्रदीप्ते । किं कारणम् । सुता अभिषुताः इमे सोमाः त्वायवः त्वां कामयमानाः 'सुपआत्मनः क्यच्' 'क्याच्छन्दसि' इति दीर्घः । त्वायव इति सिद्धम् । नचाभिषुता एव केवलम् । किंतर्हि । अण्वीभिः तना पूतासः । अण्व्य इत्यङ्गुलिनाम । अङ्गुलीभिः तना च धनदानेन च पूताः पवित्रीकृताः । यद्वा तनाशब्देन दशापवित्रमभिधाय अङ्गुलीभिर्दशापवित्रेण च पूता इत्यर्थः ॥ ८७ ॥

म० मधुच्छन्दोदृष्टा इन्द्रदेवत्यास्तिस्रो गायत्र्यः । चित्रा नानाविधा भानवो दीप्तयो यस्य स चित्रभानुः । हे चित्रभानो इन्द्र, त्वमायाहि आगच्छ । किमिति । इमे सोमाः सुताः अभिषुताः । कीदृशा इमे । त्वायवः त्वां कामयन्ते त्वायवः 'सुपः आत्मनः क्यच्' ( पा० ३ । १ । ८ ) 'क्याच्छन्दसि' ( पा० ३ । २ । १७० ) इत्युप्रत्ययः । तथा अण्वीभिः अण्वीत्यङ्गुलिनाम । अङ्गुलीभिः तना दशापवित्रेण च पूतासः पूताः शोधिताः । तनाशब्दो दशापवित्रवाची । तृतीयैकवचनस्य पूर्वसवर्णः । शोधिताः सुताः सोमा इन्द्रोऽस्मान् पिबत्विति कामयन्ते अतोऽत्रायाहीत्यर्थः ॥ ८७ ॥

## अष्टाशीतितमी।

इन्द्रायाहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥ ८८ ॥

उ० इन्द्रायाहि । हे इन्द्र, आयाहि आगच्छ धिया स्वकीयया बुद्ध्या ईषितः प्रेषितः । अनन्यप्रेषित इत्यभिप्रायः । विप्रजूतः जूतिर्ग्रन्थिः प्रीतिर्वा । मेधाव्यनुगतः सुतावतः अभिषुतवतो यजमानस्य यज्ञम् । किमित्यागन्तव्यमिति चेद् । उप समीपे ब्रह्माणि हवींषि वर्तन्ते । उपपुरोडाशानृत्विजो वर्तन्त इत्यर्थः । वाघत इति ऋत्विङ्नामसु पठितम् ८८

म० हे इन्द्र, धिया स्वबुद्ध्या इषितः प्रेरितः सन्नायाहि । अनन्यप्रेरित आगच्छेत्यर्थः । कीदृशस्त्वम् । विप्रजूतः 'जु गतौ' विप्रैर्मेधाविभिरनुगतः सेवितः । किमित्यागन्तव्यमिति चेत् सुतावतः । छान्दसो दीर्घः । सुतवतः सोममभिषुतवतो यजमानस्य ब्रह्माणि हवींषि उप हविषां समीपे वाघतः ऋत्विजो वर्तन्त इति शेषः । वाघत इति ऋत्विङ्नामसु पठितम् । ऋत्विजो हविरादाय स्थिता वर्तन्त इत्यायाहीत्यर्थः ॥८८॥

## एकोननवतितमी।

इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ८९ ॥

उ० इन्द्रायाहि । हे इन्द्र, आगच्छ तूतुजानः । तूतुजान इति क्षिप्रनाम । क्षिप्रं त्वरमाणः । कुत्रागच्छ इति । उपब्रह्माणि हवींषि हे हरिवः । हरी अश्वौ तद्वन् इन्द्र । 'मतुवसोरुः संबुद्धौ' इति रुत्वम् । एत्य च सुते अभिषुते सोमे दधिष्व उदरेण धारयस्व । नः अस्माकं स्वभूतं चनः अन्नलक्षणम् ८९

म० हरी अश्वौ विद्येते यस्य स हरिवान् 'मतुवसो रुः संबुद्धौ छन्दसि' ( पा० ८ । ३ । १ ) इति रुत्वम् । हे हरिवः, अश्ववन् हे इन्द्र, तूतुजानः त्वरमाणः सन् त्वं ब्रह्माणि हवींषि उप हवींषि प्रति आयाहि । तूतुजान इति क्षिप्रनाम । आगत्य सुते सोमेऽभिषुते सति नोऽस्माकं चनः अन्नं सोमरूपं हविः दधिष्व उदरे धारय । 'धि धारणे' व्यत्ययेन शपो लुकि द्वित्वं जुहोत्यादित्वादभ्यासस्यात्वं छान्दसम् । चन इत्यन्ननाम ८९

## नवतितमी।

अश्विना पिबतां मधु सरस्वत्या सजोषसा । इन्द्रः सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु ॥९०॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
विंशोऽध्यायः ॥ २० ॥

उ० अश्विना पिबतां अश्विनौ पिबतां मधु मधुरस्वादोपलक्षितम् । सोमं पिबतां । सरस्वत्या च सजोषसा समानसोमपानौ इन्द्रश्च सुत्रामा वृत्रहा पिबतु मधु । ततो भूयोभूयोऽश्विसरस्वतीन्द्राः जुषन्तां पिबन्तां सोम्यं मधु सोममयं मधु ९०

इति उवटकृतौ मन्त्रभाष्ये विंशतितमोऽध्यायः ॥ २० ॥

आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना
उवटेन कृतं भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥

म० अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् । अश्विना अश्विनौ मधु मधुरस्वादं सोमं पिबतां भक्षयताम् । कीदृशौ अश्विनौ । सरस्वत्या सजोषसा सजोषसौ । जोषः प्रीतिः असुन् । समानं जोषः प्रीतिर्ययोस्तौ । सरस्वत्या सह प्रीतिमन्तावित्यर्थः । किंच सुष्ठु त्रायते रक्षति सुत्रामा वृत्रं हतवान् वृत्रहा ईदृश इन्द्रः अश्विनौ सरस्वती च मधु मधुरं सोम्यं सोममयं हविर्जुषन्तां सेवन्ताम् । 'मये च' ( पा० ४ । ४ । १३८ ) इति सोमशब्दान्मयडर्थे यप्रत्ययः । सोममयं सोम्यम् ॥ ९० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सेकासन्यादिहौत्रान्तो विंशोऽध्यायो निरूपितः ॥ २० ॥

# उत्तरार्धप्रारम्भः ।

## एकविंशोऽध्यायः ।

### तत्र प्रथमा ।

इ॒मं मे॑ वरुण श्रुधी हव॑म॒द्या च॑ मृडय । त्वाम॑व॒स्युरा च॑के ॥ १ ॥

**उ०** इमं मे इमं मेनानुवाकेनैष्टिकं हौत्रम् । प्रथमे वारुण्यौ गायत्री त्रिष्टुभौ वारुणस्य हविषो याज्यानुवाक्ये । हे वरुण, त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु च । अपरम् अद्य मृडय सुखय कालविलम्बनं मा कृथाः । यतः अहम् अवस्युः आत्मनोऽवनं पालनमिच्छन् त्वाम् आचके । आचक इति कान्तिकर्मा । कामये ॥ १ ॥

प्रणम्य शिरसा देवं लक्ष्मीकान्तमुमापतिम् ।
एकविंशेऽधुनाध्याये वेददीपो वितन्यते ॥

**म०** 'इमं मे तत्त्वेत्येककपालस्य' (का० १९ । ७ । १३)। अवभृथेष्टौ वारुणस्यैककपालस्य पुरोडाशस्य द्वे पुरोऽनुवाक्यायाज्ये इत्यर्थः । वरुणदेवत्ये गायत्रीत्रिष्टुभौ शुनःशेपदृष्टे । हे वरुण, त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु । 'शुशृणु–' (पा० ६ । ४ । १०२ ) इति हेर्धिः संहितायां दीर्घः । च पुनः अद्य दिने मृडयास्मान् सुखय । यतोऽहं त्वामाचके कामये । आचक इति कान्तिकर्मा । कीदृशोऽहम् । अवस्युः अवनमवः पालनम् । अवतेरसुन् तदिच्छति अवस्युः 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) 'क्याच्छन्दसि' ( पा० ३ । २ । १७० ) इत्युप्रत्ययः । आत्मनो रक्षणमिच्छन् त्वामिच्छामीत्यर्थः ॥ १ ॥

### द्वितीया ।

तत्त्वा॑ यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒विर्भिः॑ । अहे॑डमानो वरुणे॒ह बो॒ध्युरु॑शꣳस॒ मा न॒ आयुः॒ प्र मो॑षीः ॥ २ ॥

**उ०** तत्त्वा यामि ॥ २ ॥

**म०** व्याख्याता ( अ० १९ । क० ४९ ) ॥ २ ॥

### तृतीया ।

त्वं नो॑ अग्ने॒ वरु॑णस्य वि॒द्वान्दे॒वस्य॒ हेडो॒ अव॑ यासिसीष्ठाः । यजि॑ष्ठो॒ वह्नि॑तमः॒ शोशु॑चानो॒ विश्वा॒ द्वेषा॑ꣳसि॒ प्र मु॑मुग्ध्य॒स्मत् ॥ ३ ॥

**उ०** त्वं नः । आग्निवारुण्यौ त्रिष्टुभौ अग्निवरुणयोः स्विष्टकृतोर्याज्यानुवाक्ये । हे अग्ने, त्वं नोऽस्मान्प्रति वरुणस्य देवस्य हेडः क्रोधम् । अवयासिसीष्ठाः 'यसु उपक्षये' । अस्यावपूर्वस्य ण्यन्तस्य लिङि रूपम् । अवगमय । यजिष्ठः यष्टृतमः । वह्नितमः वोढृतमो हविषाम् । शोशुचानः देदीप्यमानः । किंच अस्मत् अस्मत्तः विश्वा विश्वानि सर्वाणि द्वेषांसि दौर्भाग्यानि प्रमुमुग्धि मुञ्च ॥ ३ ॥

**म०** 'अग्निवरुणयोस्त्वं नः स त्वं न इति' ( का० १८ । ७ । १४ ) । अवभृथेष्टावेवाग्निवरुणयागे पुरोनुवाक्यायाज्ये अग्निवरुणदेवत्ये त्रिष्टुभौ वामदेवदृष्टे । हे अग्ने, त्वं नोऽस्मान्प्रति वरुणस्य देवस्य हेडः क्रोधमवयासिसीष्ठाः निवर्तय । 'यसु उपक्षये' अवपूर्वस्य णिजन्तस्याशीर्लिङि रूपम् । किंच विश्वा विश्वानि सर्वाणि द्वेषांसि दौर्भाग्यानि अस्मत् अस्मत्तः सकाशात् प्रमुमुग्धि प्रमुञ्च दूरीकुरु । मुचेर्व्यत्ययेन शपः श्लुः । कीदृशस्त्वम् । विद्वान् स्वाधिकारं जानन् यजिष्ठः अतिशयेन यष्टा यजिष्ठः । 'तुरिष्ठेमेयःसु' ( पा० ६ । ४ । १५४ ) इति तृचो लोपः । वह्नितमः वहतीति वह्निः अत्यन्तं वह्निर्वह्नितमः हविषां वोढा । शोशुचानः अत्यन्तं शोचते दीप्यते शोशुचानः । शोचतेर्यङन्ताच्छानच्प्रत्ययः ॥ ३ ॥

### चतुर्थी ।

स त्वं नो॑ अग्नेऽव॒मो भ॑वो॒ती नेदि॑ष्ठो अ॒स्या उ॒षसो॒ व्युष्टौ । अव॑ यक्ष्व॒ नो॒ वरु॑णꣳ॒ ररा॑णो वी॒हि मृ॑डी॒कꣳ॑ सु॒हवो॑ न एधि ॥ ४ ॥

**उ०** स त्वं नः हे अग्ने, स त्वम् ऊती ऊत्या अवनेन । नः अस्माकम् । अवमः अवितृतमः पालयितृतमः भव । अस्या उपसः व्युष्टौ व्युष्टिकाले अस्मिन्नेवाहनीति भावः । नेदिष्ठः अन्तिकतमश्च भव । रराणः रममाणः 'रा दाने' । हविर्ददद्वा । नोऽस्माकं वरुणम् अवयक्ष्व अवगत्य यज । अवपूर्वो यजतिर्नाशनार्थः । इहतु धात्वन्तरयोगात्स्वार्थमेव वक्ति । ततः सुमृडीकं सुखकरं हविः वीहि भक्षय । नः अस्माकं सुहवः स्वाह्वानः एधि ॥ ४ ॥

**म०** हे अग्ने, स त्वमस्या उषसो व्युष्टौ व्युष्टिकालेऽस्मिन्नहनि ऊती ऊत्या अवनेन नोऽस्माकमवमः रक्षकः नेदिष्ठोऽन्तिकतमः समीपतमश्च भव । अवतीत्यवमः अवतेरमप्रत्ययः । यद्वा अवतीत्यवः पचाद्यच् अन्तत्यमवोऽवतमः तलोपश्छान्दसः । अत्यन्तमन्तिको नेदिष्ठः 'अन्तिकबाढयोर्नेदसाधौ' ( पा० ५ । ३ । ६३ ) इति इष्ठे परे नेदादेशः । किंच रराणो हविर्ददत् सन् नोऽस्माकं वरुणमवयक्ष्व अवयज । अवपूर्वायजतेर्लोटि शपो लुक् । ततो मृडीकं सुखकरं हविः वीहि भक्षय । 'वी कान्तिव्याप्तिक्षेपप्रजनखादनेषु' । किंच नोऽस्माकं सुहवः स्वाह्वान एधि भव । 'घ्वसोरेद्धावभ्यासलोपश्च' ( पा० ६ । ४ । ११९ ) इत्येकारः ॥ ४ ॥

### पञ्चमी ।

म॒हीमू॒ षु मा॒तरꣳ॑ सुव्र॒ताना॑मृ॒तस्य॒ पत्नी॒मव॑से

हुवेम । तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ॥ ५ ॥

उ० महीमूषु आदित्यचरोर्याज्यानुवाक्ये त्रिष्टुभौ। महीं महतीम्। ऊसू निपातोपसर्गौ छन्दःपरिपूर्तिफलौ । मातरं निर्मात्रीं साधुव्रतानाम्। ऋतय यज्ञस्य पत्नीं जायां पालयित्रीं वा। अवसे अवनाय तर्पणाय वा। हुवेम आह्वयाम। तुविक्षत्रां बहुक्षरणां वा बहुक्षतत्राणां वा । अजरन्तीं जरारहिताम्। उरूचीं बहुव्यञ्चनाम् । सुशर्माणं कल्याणाश्रयां साधुसख्याम्। अदितिमदीनाम् । सुप्रणीतिं सुप्रणेत्रीम् ॥ ५ ॥

म० 'आदित्यस्य सुत्रामाणं महीमूषु मातरमिति' (का० १९।७।१५)। आदित्यं चरुं यक्ष्यमाणो निर्वपत्यादित्यमीजान इत्यादावन्ते चादित्यश्चरुरुक्तस्तस्य सुत्रामाणमिति (६) पुरोऽनुवाक्या महीमूष्विति याज्या अदितिदेवत्या त्रिष्टुप्। उ सु निपातौ पादपूरणौ । संहितायामाद्यस्य दीर्घोऽन्त्यस्य षत्वम्। वयमवसे अवितुं रक्षितुमदितिं हुवेम आह्वयामः। तुमर्थे असेप्रत्ययः। कीदृशीमदितिम्। महीं महतीम् सुव्रतानां शोभनकर्मणां मातरं निर्मात्रीम्। व्रतमिति कर्मनाम। ऋतस्य यज्ञस्य पत्नीं पालयित्रीम्। तुविक्षत्राम्। तुवीति बहुनाम। बहुक्षतात् त्राणशीलाम् । अजरन्तीं न जीर्यत्यजरन्ती तां जरारहिताम्। उरु अञ्चतीति उरूचीं बहुगमनशीलाम्। सुशर्माणं शोभनं शर्माश्रयः सुखं वा यस्यास्ताम् । सुप्रणीतिं शोभना प्रणीतिः प्रणयनं भजनं यस्यास्ताम्। 'अदितिरदीना देवमाता' (निरु० ४।२२) इति ॥ ५ ॥

## षष्ठी ।

सुत्रामाणं पृथिवीं द्यामनेहसꣳ सुशर्माणमदितिꣳ सुप्रणीतिम्। दैवीं नावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥ ६ ॥

उ० सुत्रामाणं साधुपालयित्रीम् । पृथिवीम् पृथिवीमिव । लुप्तोपमानमेतत् । द्यामनेहसम् द्यामिव वाहयित्रीं जीवनहेतुभूताम् सुशर्माणं साधुशरणां शोभनाश्रयां वा। अदितिमदीनाम्। सुप्रणीतिं सुप्रणेत्रीम्। दैवीं यज्ञमयीं नावम्। स्वरित्रां साधुकेन्दुवालां, अरित्रशब्दः केन्दुवालवचनः। अनागसमनपराधाम्। अस्रवन्तीम् अपूर्यमाणामुदकेन । अनवच्छिन्नसाधुकर्मदायिनीमित्यर्थः। आरुहेम। स्वस्तये अविनाशाय ॥ ६ ॥

म० अदितिदेवत्या त्रिष्टुप् गयप्लातदृष्टा । दैवीं देवसंबन्धिनीं नावं यज्ञरूपां स्वस्तये कल्याणायाविनाशाय वयमारुहेम। यज्ञं कृत्वा स्वर्गं गच्छेमेत्यर्थः। कीदृशीं नावम्। सुत्रामाणं सुष्ठु त्रायते रक्षति सुत्रामा ताम्। पृथिवीं विशालाम्। द्यां स्वर्गरूपाम्। स्वर्गहेतुभूतामित्यर्थः। अनेहसम्। एह इति क्रोधनाम। नास्ति एहो यत्र क्रोधरहिताम्। यद्वा लुप्तोपमानम्। पृथिवीमिव सुत्रामाणं पालयित्रीं द्यामिवानेहसमक्रोधाम्। सुशर्माणं साधुशरणभूताम्। अदितिमखण्डितामदीनां वा। सुप्रणीतिं सुष्ठु प्रणयतीति सुप्रणीतिः साधुप्रणेत्री। स्वरित्रां साधुकेन्दुवालाम्। अरित्रशब्दः केन्दुवालवाचकः। 'अरित्रं केनिपातकः' इत्यभिधानात्। प्रयाजानुयाजादयोऽरित्रस्थानीयाः। अनागसमनपराधाम्। अस्रवन्तीमच्छिद्राम्। निर्दोषामित्यर्थः । ईदृशीं नावमारुहेम । संहितायां दीर्घः ॥ ६ ॥

## सप्तमी ।

सुनावमारुहेयमस्रवन्तीमनागसम्। शतारित्राꣳ स्वस्तये ॥ ७ ॥

उ० सुनावम् । गायत्री। 'तद्वै सर्व एव यज्ञो नौः स्वर्ग्या' इति श्रुतेरुपकल्पना। कल्याणीं नावम् आरुहेयम्। अस्रवन्तीम् अच्छिद्राम्। निर्दोषामित्यर्थः। अनागसमपापाम्। अभीष्टितार्थसाधनतत्परामित्यर्थः। शतारित्रां बहुकेन्दुवालाम्। ऋग्यजुःसामाभिप्रायम्। स्वस्तये अविनाशाय। संसारसागरोत्तरणाय वा ॥ ७ ॥

म० स्वर्गसंबन्धिनी यज्ञदेवत्या गायत्री । 'तद्वै सर्व एव यज्ञो नौः स्वर्ग्या' इति श्रुतेः स्वर्ग्या नौर्यज्ञ एव। सुनावं शोभनां नावं यज्ञरूपां स्वस्तयेऽविनाशाय संसारसागरोत्तरणायाहमारुहेयमारोहेयम्। यज्ञं कुर्यामित्यर्थः। कीदृशीम् । अस्रवन्तीमच्छिद्राम्। अनागसं निरपराधां सर्वेष्टदामित्यर्थः। शतारित्रां बहुकेन्दुवालाम्। ऋग्यजुःसामभिरित्यर्थः। स्मार्ते नावारोहणे विनियोगोऽस्या ऋचः ॥ ७ ॥

## अष्टमी ।

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजाꣳसि सुक्रतू ॥ ८ ॥

उ० आ नः। मैत्रावरुण्याः पयस्यायाज्यानुवाक्ये गायत्रीत्रिष्टुभौ आ उक्षन्तम् आसिञ्चतम् नः अस्माकम् हे मित्रावरुणौ। घृतैः अक्षारोदकैः। गव्यूतिम् गवि पृथिव्यामवनहेतुभूतं क्षेत्रं गोप्रचारं वा । किंच मध्वा रजांसि मधुस्वादोदकेन रजांसि। लोका रजांस्युच्यन्ते। तान् आ उक्षतम् । हे सुक्रतू सुकर्माणौ ॥ ८ ॥

म० 'आ नः प्र बाहवेति पयस्यायाः' (का० १९।७।१६)। अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतीति या पयस्या तस्या आ नो मित्रावरुणेति पुरोनुवाक्या प्र बाहवेति याज्या मित्रावरुणदेवत्या गायत्री विश्वामित्रदृष्टा। हे मित्रावरुणा मित्रवरुणौ देवौ, नोऽस्माकं गव्यूतिं यज्ञमार्गं घृतैर्युवामा उक्षतं सर्वतः सिञ्चतम्। यद्वा गवि पृथिव्यामूतिमवनहेतुभूतं क्षेत्रं घृतैः शुद्धोदकैः सिञ्चतम् । किंच हे सुक्रतू शोभनः क्रतुः

कर्म ययोस्तौ हे सुकर्माणौ, मध्वा मधुना रजांसि लोकानां उक्षतम्। अनित्यमागमशासनमिति नुमभावः॥ ८॥

## नवमी।

प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन। आ मा जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा॥ ९॥

उ० प्रवाहवा प्रसिसृतम्। अन्तर्भावितण्यर्थः। प्रसारयतम्। बाहवा बाहू। किमर्थमितिचेत्। जीवसे नः जीवनायास्माकम्। बाहुप्रसारणं जीवनहेतुप्रतिपक्षनिराकरणायेत्यर्थः। तत आ उक्षतम् आभिमुख्येन सिञ्चतम् नः अस्माकम् गव्यूतिम्। गवि पृथिव्यामूतिमवनम्। जीवनहेतुभूतानि क्षेत्राण्यत्राभिप्रेतानि। तदर्थं हि वृष्टिः प्रार्थ्यमाना दृष्टार्था भवति। गोजातिविषयभूतां वा ऊतिम् अवनमार्गम्। भक्षणमार्गाभिप्रायतो गोप्रवाटमिति यावत्। घृतेनाक्षारोदकेन। आ मा जने श्रवयतं युवाना। एवमक्षारोदकेन सिक्तधान्यनिष्पत्तिहेतुना यज्ञं कुर्वाणम् मा साम् जने जनपदे आ श्रवयतं प्रकथयतम्। इत्थमदादित्थमयाक्षीदिति। हे युवानौ उच्छिन्नजरसौ। श्रुतम् आशृणुतं मम। हे मित्रावरुणौ हवेमा हवान् आह्वानानि इमानि। श्रुत्वा चातिष्ठतमित्यभिप्रायः॥९॥

म० मित्रावरुणदेवत्या त्रिष्टुप् वसिष्ठदृष्टा। हे मित्रावरुणौ, हे युवाना युवानौ तरुणौ छिन्नजरसौ, नोऽस्माकं जीवसे चिरं जीवनाय बाहवा बाहू प्रसिसृतम्। अन्तर्भूतण्यर्थः प्रसारयतम्। जीवनविघ्ननिवारणाय बाहुप्रसारणं कुरुतमित्यर्थः। किंच नोऽस्माकं गव्यूतिं क्षेत्रं घृतेन जलेन आ उक्षतं सिञ्चतम्। भवत्सिक्तक्षेत्रनिष्पन्नधान्यैः यज्विनं मा मां जने जनपदे युवामश्रवयतम् आश्रावयतम्। इत्थमदात् इत्थमयाक्षीदिति लोके मां कथयतमित्यर्थः। वृद्ध्यभाव आर्षः। किंच युवां मे मम इमा इमानि हवा हवानि आह्वानानि श्रुतं शृणुतम्। श्रुत्वा पूर्वोक्तं कुरुतमित्यर्थः। शृणोतेः शपो लुक्॥ ९॥

## दशमी।

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः। जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः॥ १०॥

उ० शं नः। व्याख्यातम्॥१०॥

म० 'वाजिनस्य शं नो वाजेवाज इति' (का० १६। ७। १७) पयस्यायां वाजिनयागोऽस्ति तत्र शं न इति पुरोनुवाक्या वाजेवाज इति याज्या। व्याख्याते (९। १६। १८)॥ १०॥ ११॥

## एकादशी।

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः॥ ११॥

उ० वाजेवाजेऽवत॥ वाजिनस्य याज्यानुवाक्ये व्याख्याते॥ १०॥ ११॥

## द्वादशी।

समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः। गायत्री छन्द इन्द्रियं त्र्यविर्गौर्वयो दधुः॥ १२॥

उ० समिद्धो अग्निः। एकादश आप्रियः। अनराशंसा ऐन्द्रायवायोधसेऽनुष्टुभः। समिद्धः संदीप्तः अग्निः समिधा प्रयाजदेवतया। सुसमिद्धः प्रयाजघृतेन। वरेण्यः वरणीयः संभजनीयः। गायत्रीछन्दः। त्र्यविश्च गौः वयः अवयः अनुचरत्वेन यस्य स तथोक्तः। इन्द्रियं वीर्यं च। वयः सत्त्वमन्नं वा आयुर्वा इन्द्रे दधुः निदध्युः॥ १२॥

म० 'वायोधस आप्रियः समिद्धो अग्निः समिधेति' (का० १९। ७। १९)। वायोधसे पशौ समिद्धो अग्निरित्याद्या एकादश ऋच आप्रियः प्रयाजानां याज्या इति सूत्रार्थः। एकादश आप्रीदेवत्या अनुष्टुभः स्वस्त्यात्रेयदृष्टाः। अग्निः गायत्री छन्दो गौश्च एते त्रय इन्द्रे इन्द्रियं वीर्यं वयः सत्त्वमन्नमायुर्वा दधुः दधतु प्रयच्छन्तु। कीदृशोऽग्निः। समिधा प्रयाजदेवतया समिद्धः दीप्तः सुसमिद्धश्च अतिदीप्तः प्रयाजघृतेनेति शेषः। वरेण्यः वरणीयः संभजनीयः। कीदृशो गौः। त्र्यविः त्रयोऽवयोऽनुचरत्वेन यस्य स त्र्यविः। यद्वा षण्मासावधिः कालोऽविः त्रयोऽवयो यस्य सार्धवत्सरो गौरित्यर्थः॥ १२॥

## त्रयोदशी।

तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती। उष्णिहा छन्द इन्द्रियं दित्यवाड् गौर्वयो दधुः॥ १३॥

उ० तनूनपात्। तनूनामपां नपान्नप्ता अग्निः। गौर्वा तनूः तस्या नप्ता घृतम्। शुचिव्रतः उज्ज्वलकर्मा। तनूपाः सरस्वती च। उष्णिहा विभक्तिव्यत्ययः। उष्णिक्छन्दः दित्यवाट् गौः एते चत्वारः इन्द्रियं वयश्च इन्द्रे दधुः॥१३॥

म० तनूनामपां नपात् पौत्रोऽग्निः तनूनां गवां नपात् घृतं वा प्रयाजदेवता सरस्वती उष्णिहा छन्दः। हलन्तत्वादाप् उष्णिक् छन्दः। गौश्च एते चत्वार इन्द्रे इन्द्रियं वयश्च दधुःदधतु। कीदृशस्तनूनपात्। शुचिव्रतः शुचि शुद्धं व्रतं कर्म यस्य सः। कीदृशी सरस्वती। तनूपाः तनूं शरीरं पाति रक्षतीति। कीदृशो गौः। दित्यवाट् दिव्यं हविर्वहतीति॥ १३॥

## चतुर्दशी।

इडाभिरग्निरीड्यः सोमो देवो अमर्त्यः। अनुष्टुप् छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधुः॥ १४॥

उ० इडाभिरग्निः। इडाभिः प्रयाजदेवतया सह अग्निः

ईड्यः स्तोतव्यः । सोमश्च देवः अमर्त्यः अमरणधर्मा अनुष्टुप्छन्दः । पञ्चाविश्च गौः इन्द्रियं वयश्च इन्द्रे दधुः ॥१४॥

म० इडाभिः प्रयाजदेवताभिः सहाग्निः सोमो देवः अनुष्टुप्छन्दः गौः एते पञ्च इन्द्रियं वयश्चेन्द्रे दधुः । कीदृशोऽग्निः । ईड्यः स्तुत्यः । कीदृशः सोमः । अमर्त्यः अमरणधर्मा । कीदृशो गौः । पञ्चाविः पञ्चावयोऽनुचराः कालविशेषा वा यस्य सार्धद्विवर्षः ॥ १४ ॥

## पञ्चदशी ।

सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः । बृहती छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधुः ॥ १५ ॥

उ० सुबर्हिरग्निः शोभनबर्हिः प्रयाजदेवतयाग्निः । पूषण्वान् पूष्णा संयुक्तः । स्तीर्णबर्हिः स्तीर्णं बर्हिर्यस्य स तथोक्तः । अमर्त्यः अमरणधर्मा । बृहतीच्छन्दः त्रिवत्सश्च गौः एते इन्द्रियं वयश्च इन्द्रे दधुः ॥ १५ ॥

म० शोभनं बर्हिः प्रयाजदेवता अग्निः बृहती छन्दः गौः एते चत्वार इन्द्रियं वयश्चेन्द्रे दधुः । कीदृशोऽग्निः । पूषण्वान् पूषास्यास्तीति पूष्णा युक्तः । स्तीर्णबर्हिः स्तीर्णं बर्हिर्यस्य सः । अमर्त्यः अनश्वरः । कीदृशो गौः । त्रिवत्सः त्रयो वत्सा अनुचरा वत्सरा वा यस्य स त्रिवत्सः ॥ १५ ॥

## षोडशी ।

दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः । पङ्क्तिश्छन्द इहेन्द्रियं तुर्यवाड् गौर्वयो दधुः ॥१६॥

उ० दुरो देवीः । दुरः द्वारः प्रयाजदेवताः । छान्दसं संप्रसारणम् । देवीः देव्यः दिशश्च । महीः महत्यः । ब्रह्मा च देवः बृहस्पतिश्च । पङ्क्तिश्च छन्दः । इहेत्यभिनयनिर्देशः । इह यज्ञावयवे इह इन्द्रशरीरावयवे । तुर्यवाट् गौश्च इन्द्रियं वयश्च दधुः ॥ १६ ॥

म० दुरो द्वारो देव्यः प्रयाजदेवताः छान्दसं संप्रसारणम् । महीर्महत्यो दिशः ब्रह्मा देवो बृहस्पतिः पङ्क्तिश्छन्दः तुर्यं चतुर्थं वर्षं वहतीति तुर्यवाट् गौः एते षट् देवा इह इन्द्रे इन्द्रियं वयश्च दधुः ॥ १६ ॥

## सप्तदशी ।

उषे यह्वी सुपेशसा विश्वेदेवा अमर्त्याः । त्रिष्टुप्छन्द इहेन्द्रियं पष्ठवाड् गौर्वयो दधुः ॥ १७ ॥

उ० उषे यह्वी । उषे इति द्विवचनसामर्थ्यात्सहचरितत्वाच्च द्वितीयारात्रिर्गृह्यते । उषाश्च रात्रिश्च । किंदृश्यौ । यह्वी महत्यौ । सुपेशसा साधुरूपे । विश्वे च देवाः अमर्त्याः अमरणधर्माणः । त्रिष्टुप् च्छन्दः । इह इन्द्रयज्ञयोः । पष्ठवाट् च गौः पष्ठं भारं वहतीति पष्ठवाट् । इन्द्रियं वयश्च दधुः ॥ १७ ॥

म० उषे द्विवचनाद्दिनं रात्रिश्च । अमर्त्याः विश्वेदेवाः त्रिष्टुप् छन्दः । पष्ठं भारं वहतीति पष्ठवाड् गौः । एते पञ्चेहेन्द्रियं वयश्च दधुः । कीदृश्यौ उषे । यह्वी यह्वौ महत्यौ । यह्व इति महन्नाम । सुपेशसा शोभनं पेशो रूपं ययोस्ते सुपेशसौ सुरूपे । विभक्तेराकारः ॥ १७ ॥

## अष्टादशी ।

दैव्या होतारा भिषजेन्द्रेण सयुजा युजा । जगतीछन्द इन्द्रियमनड्वान् गौर्वयो दधुः ॥ १८ ॥

उ० दैव्या होतारा अयं चाग्निः । असौ च मध्यमः । भिषजौ इन्द्रेण सयुजौ संयुक्तौ समानकार्यौ । युजा परस्परेण युक्तौ । जगती च्छन्दः । अनड्वांश्च गौः एते इन्द्रे इन्द्रियं वयश्च दधुः ॥ १८ ॥

म० दैव्यौ होतारौ प्रयाजदेवौ अयं चाग्निरसौ च मध्यमो वायुः । जगती छन्दः । अनः शकटं वहतीत्यनड्वान् गौः एते चत्वार इन्द्रे इन्द्रियं वयश्च दधुः । कीदृशौ होतारौ । भिषजा भिषजौ वैद्यौ इन्द्रेण सयुजौ सह युज्येते सयुजौ संयुक्तौ युजौ परस्परं संयुक्तौ ॥ १८ ॥

## एकोनविंशी ।

तिस्र इडा सरस्वती भारती मरुतो विशः । विराट्छन्द इहेन्द्रियं धेनुर्गौर्न वयो दधुः ॥ १९ ॥

उ० तिस्र इडा । तिस्रो देव्यः इडा सरस्वती भारती । मरुतश्च विशः इन्द्रस्य प्रजाः । विराट् छन्दः धेनुर्दोग्ध्री गौश्च । नकारश्चार्थे । एते इन्द्रियं वयश्च इन्द्रे दधुः ॥ १९ ॥

म० इडा सरस्वती भारतीति तिस्रः प्रयाजदेव्यः मरुतो विशः इन्द्रप्रजाः विराट् छन्दः धेनुर्दोग्ध्री गौश्च । नकारश्चार्थे । एते षट् इहेन्द्रे इन्द्रियं वयश्च दधुः ॥ १९ ॥

## विंशी ।

त्वष्टा तुरीपो अद्भुत इन्द्राग्नी पुष्टिवर्धना । द्विपदाछन्द इन्द्रियमुक्षा गौर्न वयो दधुः ॥ २० ॥

उ० त्वष्टा तुरीपः तूर्णमापन्नः अद्भुतः । अद्भुत इव महानित्यर्थः । इन्द्राग्नी च पुष्टिवर्धनौ । द्विपदा च छन्दः । उक्षा गौर्न । नकारश्चार्थे । उक्षा सेक्ता च गौः । एते इन्द्रे इन्द्रियं वयश्च दधुः ॥ २० ॥

म० त्वष्टा प्रयाजदेवः इन्द्राग्नी द्विपदा छन्दः । उक्षा सेक्ता गौश्च पञ्चेन्द्रे इन्द्रियं वयश्च दधुः । कीदृशः त्वष्टा तुरीपः तूर्णमाप्नोति व्याप्नोति तुरीपः अद्भुतो महान् । कीदृशाविन्द्राग्नी । पुष्टिवर्धना पुष्टिं धनादिपोषं वर्धयतस्तौ पुष्टिवर्धनौ । नश्चार्थः ॥ २० ॥

## एकविंशी ।

शमिता नो वनस्पतिः सविता प्रसुवन्भर्गम् । ककुप्छन्द इहेन्द्रियं वशा वेहद्वयो दधुः ॥ २१ ॥

उ० शमिता नः शमयिता इति प्राप्ते 'शमिता मन्त्रे' इति छान्दसः प्रयोगः । शमिता नः अस्माकं वनस्पतिः सविता च प्रसुवन् भर्ग धनम् ककुप् च छन्दः इहेत्यभिनयः। इह इन्द्रे वशा वन्ध्या गौः वेहच्च विहति त्यजति गर्भं या गौः सा तथोक्ता । इन्द्रियं वयश्च दधुः ॥ २१ ॥

म० वनस्पतिः प्रयाजदेवः सविता सूर्यः ककुप्छन्दः वशा वन्ध्या गौः वेहत् गर्भघ्नो गौः एते पञ्च इहेन्द्रे इन्द्रियं वयश्च दधुः । कीदृशो वनस्पतिः । नोऽस्माकं शमिता शमयति सुखयति शमिता 'शमिता मन्त्रे' ( पा० ६ । ४ । ५४ ) इति छान्दसो णिचो लोपः । कीदृशः सविता । भर्गं प्रसुवन् धनं प्रेरयन् ददत् ॥ २१ ॥

## द्वाविंशी ।

स्वाहा यज्ञं वरुणः सुक्षत्रो भेषजं करत् । अतिच्छन्दा इन्द्रियं बृहदृषभो गौर्वयो दधुः ॥ २२ ॥

उ० स्वाहा यज्ञम् । स्वाहाकृतिभिः यज्ञं भेषजं करत् करोतु । कः करोतु । वरुणः सुक्षत्रः । अतिच्छन्दाश्च च्छन्दः बृहदृषभश्च गौः इन्द्रे इन्द्रियं वयश्च दधुः ॥ २२ ॥

म० शोभनं क्षत्रं क्षतत्राणं यस्य स सुक्षत्रः शोभनक्षतत्राता वरुणः स्वाहा । नामैकदेशे नामग्रहणम् । स्वाहाकृतिभिः प्रयाजदेवैः सह यज्ञं भेषजं यज्ञलक्षणमौषधमिन्द्राय करत् करोतु । किंच अतिच्छन्दाः छन्दः बृहत् महान् ऋषभः समर्थो गौः वरुणश्च स्वाहाकृतयोऽपि एते चत्वार इन्द्रियं वयश्च इन्द्रे दधुः दधतु ॥ २२ ॥

## त्रयोविंशी ।

वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः । रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥ २३ ॥

उ० वसन्तेन ऋतुना । वपापुरोडाशपशूनां याज्यानुवाक्या अनुष्टुभः । वयोधसस्य पशोः । इन्द्रश्च वयोधा देवता । वसन्तेन ऋतुना सहायेन देवाः वसवः त्रिवृता स्तोमेन स्तुताः सन्तः रथन्तरेण च पृष्ठेन च सहायेन इन्द्रे तेजसा सह हविर्वपाख्यं वयश्च दधुः । यद्वा वसन्तेन ऋतुना स्तुताः त्रिवृता स्तोमेन च स्तुताः रथन्तरेण च पृष्ठेन स्तुताः सन्तो वसवो देवाः स्वकीयेन तेजसा इन्द्रे हविर्वयश्च दधुः । एवमुत्तरेष्वपि योज्यम् ॥ २३ ॥

म० 'याज्यापुरोऽनुवाक्याश्च वपापुरोडाशपशूनां वसन्तेन ऋतुनेति' ( का० १९ । ७ । २० ) । चकाराद्वयोधसे पशावेव षड़ृचो यथाक्रमं वपादीनां याज्यानुवाक्याः वपायागे वसन्तेनेति ( २३ ) पुरोऽनुवाक्या ग्रीष्मेणेति ( २४ ) याज्या, पशुपुरोडाशयागे वर्षाभिरिति ( २५ ) पुरोनुवाक्या शारदेनेति ( २६ ) याज्या, हृदयादियागे हेमन्तेनेति ( २७ ) पुरोनुवाक्या, शैशिरेणेति ( २८ ) याज्येति सूत्रार्थः । अनुष्टुभः षट् लिङ्गोक्तदेवता । वयोधा इन्द्रो देवतेत्यर्थः । वसवो देवा इन्द्रे तेजसा सह हविर्वपाख्यं वयः शक्तिं च दधुः दधतु स्थापयन्तु । कीदृशा वसवः । वसन्तेन ऋतुना त्रिवृता स्तोमेन रथन्तरेण पृष्ठेन च स्तुताः ॥ २३ ॥

## चतुर्विंशी ।

ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः । बृहता यशसा बलꣳ हविरिन्द्रे वयो दधुः ॥ २४ ॥

उ० ग्रीष्मेण ऋतुना सह देवा रुद्राः पञ्चदशे । पञ्चदशेनेति विभक्तिव्यत्ययः । पञ्चदशेन स्तोमेन स्तुताः सन्तः बृहता पृष्ठेन च सह । यशसा सह बलं हविः इन्द्रे वयश्च दधुः ॥ २४ ॥

म० रुद्रा देवा इन्द्रे यशसा सह बलं हविर्वयश्च दधुः । कीदृशा रुद्राः । ग्रीष्मेण ऋतुना पञ्चदशः पञ्चदशेन स्तोमेन विभक्तिव्यत्ययः । बृहता पृष्ठेन च स्तुताः ॥ २४ ॥

## पञ्चविंशी ।

वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुताः । वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः ॥ २५ ॥

उ० वर्षाभिर्ऋतुना । सह आदित्याः स्तोमे सप्तदशे स्तोमे । सप्तदशेनेति विभक्तिव्यत्ययः । स्तुताः सन्तः वैरूपेण पृष्ठेन सह विशा च । ओजसा च हविरिन्द्रे वयश्च दधुः ॥ २५ ॥

म० आदित्या देवाः इन्द्रे विशा प्रजया ओजसा च सह हविर्वयश्च दधुः । कीदृशाः । वर्षाभिर्ऋतुना सप्तदशेन स्तोमेन । तृतीयार्थे सप्तम्यौ । वैरूपेण पृष्ठेन च स्तुताः ॥ २५ ॥

## षड्विंशी ।

शारदेन ऋतुना देवा एकविꣳश ऋभवः स्तुताः । वैराजेन श्रिया श्रियꣳ हविरिन्द्रे वयो दधुः ॥ २६ ॥

उ० शारदेन ऋतुना सह ऋभवो देवाः एकविꣳशे । एकविंशेनेति विभक्तिव्यत्ययः । एकविंशेन स्तोमेन स्तुताः सन्तः विराजेन च पृष्ठेन सह श्रिया च श्रियं च । हविरिन्द्रे वयश्च दधुः ॥ २६ ॥

म० ऋभवः ऋभुसंज्ञा देवाः इन्द्रे श्रियं हविर्वयश्च दधुः । कीदृशाः । शारदेन ऋतुना एकविंशेन स्तोमेन वैराजेन पृष्ठेन श्रिया लक्ष्म्या च स्तुताः । सप्तमी तृतीयार्थे ॥ २६ ॥

## सप्तविंशी ।

हेमन्तेन ऋतुना देवास्त्रिणवे मरुतः स्तुताः । बलेन शक्वरीः सहो हविरिन्द्रे वयो दधुः ॥ २७ ॥

उ० हेमन्तेन ऋतुना सह देवाः मरुतः त्रिणवे । त्रिणवेनेति विभक्तिव्यत्ययः । त्रिणवेन स्तोमेन स्तुताः सन्तः । बलेन शक्करीः सह । शक्करीरिति योनिनिर्देशः । शाक्करस्य । शाक्करेणेति विभक्तिव्यत्ययः । शाक्करेण च पृष्ठेन सह । बलेन च सह । हविः इन्द्रे वयश्च दधुः ॥ २७ ॥

म० मरुतो देवाः इन्द्रे बलेन सह । सहः इन्द्रियसामर्थ्यं हविर्वयश्च दधुः । कीदृशा मरुतः । हेमन्तेन ऋतुना त्रिणवेन स्तोमेन स्तुता । शक्करीरिति शाक्करस्य योनिनिर्देशः । शाक्करेण पृष्ठेन स्तुता इत्यर्थः ॥ २७ ॥

## अष्टाविंशी ।

शै॒शि॒रेण॑ ऋ॒तुना॑ दे॒वास्त्र॑यस्त्रि॒ꣳशे॒ऽमृता॑: स्तु॒ताः । स॒त्येन॑ रे॒वती॑: क्ष॒त्रꣳ ह॒विरिन्द्रे॒ वयो॑ दधुः ॥२८॥

उ० शैशिरेण ऋतुना । सह देवाः अमृताः । त्रयस्त्रिꣳशे । त्रयस्त्रिंशेनेति विभक्तिव्यत्ययः । त्रयस्त्रिंशेन स्तोमेन स्तुताः सन्तः । सत्येन रेवतीः । रेवतीरिति रैवतस्य योनिनिर्देशः । रैवतेन च पृष्ठेन सह सत्येन च । क्षत्रं हविश्च इन्द्रे वयश्च दधुः ॥ २८ ॥

म० अमृता देवाः सत्येन सह क्षत्रं क्षतत्राणं हविर्वयः च इन्द्रे दधुः दधतु । कीदृशा अमृताः । शारदेन ऋतुना त्रयस्त्रिंशेन स्तोमेन स्तुताः । रेवतीरिति रैवतस्य योनिः । रैवतेन च पृष्ठेन स्तुता इत्यर्थः ॥ २८ ॥

## एकोनत्रिंशी ।

होता॑ यक्षत्स॒मिधा॒ग्निमि॒डस्प॒देऽश्विनेन्द्र॒ꣳ सर॑स्वतीम॒जो धू॒म्रो न गो॒धूमै॒: कुव॑लैर्भेष॒जं मधु॒ शष्पै॒र्न तेज॑ इन्द्रि॒यं पय॒: सोम॑: परि॒स्रुता॑ घृ॒तं मधु॒ व्यन्त्वाज्य॑स्य हो॒तर्यज॑ ॥ २९ ॥

उ० होता यक्षत् । द्वादशाप्रियस्तनूनपान्नराशंसयुक्ताः । प्रैषिकमश्विसरस्वतीन्द्रदेवत्यम् । दैव्यो होता यक्षत् यजतु । समिधा प्रयाजदेवतयाग्निमवस्थितम् । इडस्पदे इडा गौरुच्यते तस्याः पदे आहवनीये स्थाप्यते तदभिप्रायमेतत् । गोः पदे अवस्थितमाहवनीयमग्निम् । एताश्च देवताविशेषाः यजतु । अश्विनौ इन्द्रं सरस्वतीम् । अजो धूम्रो न । नकारः प्रायः समुच्चयार्थः । अजो धूम्रो मेषश्च । गोधूमैः कुवलैश्च सहितः भेषजमत्र संपद्यते । मधुशष्पैः न । मधु च संपद्यते सशष्पैरङ्कुरितव्रीहिभिः सहितः । तेजः इन्द्रियं च इन्द्रस्य यजमानस्य वा संपद्यते । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः सन्तः पयः सोमश्च । सोममिति विभक्तिव्यत्ययः । परिस्रुता सह घृतं मधु च । व्यन्तु पिबन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज आज्यं देहि ॥ २९ ॥

म० 'होता यक्षत्समिधाग्निमिति प्रयाजप्रैषास्त्रिपशोः' ( का० १९ । ६ । १४ ) । होता यक्षत्समिधाग्निमिडस्पद इत्यादयो द्वादश कण्डिकास्त्रिपशोः प्रयाजप्रैषाः स्युः । द्वादशाप्रीणां प्रयाजयाज्यानां प्रैषा अश्विसरस्वतीन्द्रदेवत्याः आद्या अष्टिः । दैव्यो होता समिधा प्रयाजदेवत्या सह अग्निमश्विना अश्विनौ इन्द्रं सरस्वतीं च इडः पदे गोपदे आहवनीये यक्षत् यजतु । गोपदे स्थाप्यत इत्यभिप्रायेणेदं वचनम् । तत्र यागे अजो धूम्रो मेषश्च गोधूमैः कुवलैः बदरैः शष्पैः अङ्कुरितव्रीहिभिश्च सहितो भेषजमौषधं भवति । नकारौ चार्थौ । इन्द्रायेति शेषः । कीदृशं भेषजम् । मधु मधुरं तेजः तेजःप्रदमिन्द्रियमिन्द्रियसामर्थ्यप्रदम् । किंच ते अश्विसरस्वतीन्द्रा दैव्येन होत्रेज्यमानाः सन्तः पयः परिस्रुता मदिरया सह सोमः सोमं घृतं मधु च व्यन्तु पिबन्तु । सोम इति विभक्तिव्यत्ययः । सर्वत्र हे होतर्मनुष्यहोतः, त्वमपि आज्यस्य यज । कर्मणि षष्ठी । यजतिर्दानार्थः । अश्व्यादिभ्य आज्यं देहीत्यर्थः ॥ २९ ॥

## त्रिंशी ।

होता॑ यक्षत्तनू॒नपा॒त्सर॑स्वती॒मवि॑र्मे॒षो न भे॑ष॒जं प॒था मधु॑मता॒ भर॑न्न॒श्विनेन्द्रा॑य वी॒र्यं॒ बद॑रैरुप॒वाका॑भिर्भेष॒जं तोक्म॑भि॒: पय॒: सोम॑: परि॒स्रुता॑ घृ॒तं मधु॒ व्यन्त्वाज्य॑स्य हो॒तर्यज॑ ॥ ३० ॥

उ० होता यक्षत्तनूनपात्सरस्वतीम् । तनूनपातमिति विभक्तिव्यत्ययः । सरस्वतीं च । अश्विनेन्द्रायेत्युपरिष्टाद्व्यवहितं यत्पठ्यते तदिह कृतविभक्तिव्यत्ययं योज्यतेऽर्थसंबन्धात् । अश्विनौ इन्द्रं च । अविर्मेषो न भेषजम् । नकारः समुच्चयार्थीयो भिन्नक्रमः । अविश्च मेषश्च भेषजम् इन्द्राय यजमानाय वा करोति । पथा मधुमता भरन् । पथा यज्ञमार्गेण मधुमता रसवता आत्मानं भरन् हरन् हवींषि देवान्प्रति । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । वीर्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः उपवाकाभिरिन्द्रयवैः । तोक्मभिरङ्कुरितयवैः । वीर्यं भेषजं करोति मेष एव । इन्द्राय यजमानाय वा । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः पयःप्रभृतीनि पिबन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥३०॥

म० एकाधिका अत्यष्टिः । तनूनपादिति प्रथमा द्वितीयार्थे । इन्द्रायेति चतुर्थी द्वितीयार्थे । नकारश्चार्थः । दैव्यो होता तनूनपातं प्रयाजदेवं सरस्वतीमश्विनौ इन्द्रं च यजतु । तत्र यागे अविः अजः मेषश्च । नश्चार्थे मधुमता रसवता पथा यज्ञमार्गेण भरन् आत्मानं हरन् सन् बदरैर्बदरीफलैः । उपवाकाभिरिन्द्रयवैः तोक्मभिरङ्कुरितव्रीहिभिर्यवैर्वा सहितो वीर्यं वीर्यकरं भेषजं भवति । अश्विसरस्वतीन्द्रा दैव्येन होत्रेज्यमानाः पयआदीनि व्यन्तु । हे होतः, त्वमपि आज्यस्य यज आज्यं देहि ॥ ३० ॥

## एकत्रिंशी ।

होता॑ यक्ष॒न्नरा॒शꣳस॒ं न न॒ग्नहुं॒ पति॒ꣳ सुर॑या

भेषजं मेषः सरस्वती भिषग्रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३१ ॥

उ० होता यक्षन्नराशꣳसं न । दैव्यो होता यजतु नराशंसं न नग्नहुं पतिम् । व्यवहितपदकल्पना । नराशंसं च । पतिमधिपतिं जगतः । यज्ञो हि नराशंसः स आहुतिपरिणामद्वारेण जगद्बिभर्ति । नग्नहुम् सुरया सहितं नग्नहुं किण्वं च होता यजत्वित्यनुवर्तते । भेषजं मेषः वपा इन्द्रस्येत्युपरिष्टाद्ग्रैपस्य श्रूयते स इहानुषज्यते । भेषजं मेषः इन्द्रस्य करोत्विति वाक्यशेषः । सरस्वती भिषक् इन्द्रस्य भवतु । रथो न चन्द्र्यश्विनोः । रथश्च भिषगिन्द्रस्य भवतु । कथंभूतो रथः । चन्द्री । चन्द्रमिति हिरण्यनाम । तदस्यास्तीति चन्द्री सुवर्णखचितः । अश्विनोः संबन्धी । नन्वश्विनोः संबन्धिनो रथस्य कथं भिषिक्त्वम् । शृणु । 'आयुधं वाहनं वापि स्तुतौ यस्येह दृश्यते । तमेव तत्स्तुतं विन्द्यात्तस्यात्मा बहुधा हि सः' । वपा इन्द्रस्य वीर्यं कुर्वन्त्विति शेषः । वपा इति बहुवचनोपदेशस्त्रिपशुविषयः । बदरैः उपवाकाभिः तोक्मभिः भेषजमिन्द्रस्य भवत्वितिशेषः। अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि पिबन्तु। त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३१ ॥

म० दैव्यो होता नराशंसं प्रयाजदेवं सरस्वती सरस्वतीं भिषक् भिषजोः अश्विनोः रथः रथंच यक्षत् यजतु । कीदृशो रथः । चन्द्री चन्द्रं सुवर्णमस्मिन्नस्तीति चन्द्री सुवर्णमयः । रथस्य यागोऽश्विनोरेव । तदुक्तम्'आयुधं वाहनं वापि स्तुतौ यस्येह दृश्यते । तमेव तत्स्तुतं विन्द्यात्तस्यात्मा बहुधा हि सः' इति । सरस्वतीरथयोः प्रथमा द्वितीयार्थे । भिषजि । प्रथमा षष्ठ्यर्थे । तत्र सुरया सह नग्नहुं नग्नहुः किण्वः मेषः वपाः बहुलात्त्रिपशुसंबन्धिन्यो वपाः बदरैः उपवाकाभिर्यवैः तोक्मभिश्च व्रीहिभिः सहिता इन्द्रस्य वीर्यकरं भेषजं भवतु । अश्व्यादयः पयआदीनि पिबन्तु। हे होतः, आज्यस्य यज देहि । कीदृशं नराशंसम् । पतिं पालकम् । नग्नहुः सुराकन्दः । नकारौ चार्थौ । द्वितीयो भेषजशब्द आर्षः ॥ ३१ ॥

## द्वात्रिंशी ।

होता यक्षदिडेडित आजुह्वानः सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजं यवैः कर्कन्धुभिर्मधु लाजैर्न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३२ ॥

उ० होता यक्षदिडेडितः । होता यजतु । इडा प्रयाजदेवतया ईडितः स्तुतः सन् । किंकुर्वन् । आजुह्वानः सरस्वतीमाह्वयन् । अश्विनेन्द्रायेत्युपरिष्टाद्ग्रैपस्य पठ्यते तदेतत्पदद्वयमिह कृतविभक्तिव्यत्ययं संबध्यते । उक्तंच 'यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य तत् । अर्थतो ह्यसमानाना(?)मानन्तर्यमकारण' मिति । अश्विनौ इन्द्रं च । किंच । इन्द्रं बलेन वर्धयन् । ऋषभेण गवा च इन्द्रियमिन्द्रस्य वर्धयन् । मधु मासरं च उपादायेति शेषः । यवैः कर्कन्धुभिर्लाजैश्च भेषजमिन्द्रस्य वर्धयन् । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३२ ॥

म० दैव्यो होता इडा इडां प्रयाजदेवतां सरस्वतीमिन्द्रमश्विना अश्विनौ च यक्षत् यजतु । किं कुर्वन् ऋषभेण गवा च धेन्वा च बलेन वर्धयन् इडादीन् समर्धयन् यजतु । कीदृशो होता । इडितः ऋत्विग्भिः स्तुतः । आजुह्वानः इडादीनाह्वयन् । तत्र यवैः लाजैश्च सहितं मधु मासरमोदनं निःस्रावं च इन्द्राय इन्द्रियं वीर्यकरं भेषजं भवति । अश्विसरस्वतीन्द्रा होत्रेज्यमानाः पयआदीनि पिबन्तु । हे होतः, त्वं च यज ॥ ३२ ॥

## त्रयस्त्रिंशी ।

होता यक्षद्बर्हिरूर्णम्रदा भिषङ्नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषग्दुह इन्द्राय भेषजं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३३ ॥

उ० होता यक्षद्बर्हिरूर्णम्रदाः होता यजतु प्रकृता देवता । बर्हिश्च प्रयाजदेवता । ऊर्णम्रदाः ऊर्णम्रद इति प्राप्ते ऊर्णम्रदा इति छान्दसो लिङ्गविपर्ययः। ऊर्णेव मृदुर्भिषग्भवतु इन्द्राय । भिषग्वैद्य उक्तः । नासत्या भिषजाश्विना । नासत्या नासिकाप्रभवावश्विनौ भिषजौ भवतामिन्द्रस्य । अश्वा वडवा शिशुमती धेनुश्च भिषगिन्द्रस्य भवतु । इत्थंभूता हि सा दक्षिणा पठ्यते। कस्मात्पुनरेवमाशास्यत इत्यत आह । यतः सरस्वती भिषक् स्वयमेव दुहे दोग्धि इन्द्राय भेषजम् । अतो यूयमपि भिषजौ भवथेति । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३३ ॥

म० दैव्यो होता ऊर्णम्रदाः ऊर्णमिव म्रदीयः बर्हिः प्रयाजदेवम् । भिषजा भिषजौ वैद्यौ । नासत्या न असत्यौ सत्यरूपौ अश्विना अश्विनौ । सरस्वती सरस्वतीं च यक्षत् यजतु । तत्र शिशुमती बालकोपेता अश्वा वडवा भिषक् धेनुः भिषक् च इन्द्राय भेषजमौषधं दुहे दुग्धे पूरयति । अश्वादयो दक्षिणा दीयन्ते । 'लोपस्त आत्मनेपदेषु' ( पा० ७।१।४१ ) इति तलोपः । ते पयआदीनि व्यन्तु होतर्यज ॥ ३३ ॥

## चतुस्त्रिंशी ।

होता॑ यक्षद्दुरो॒ दिशः॑ कव॒ष्यो॑ न व्यच॑स्वतीर॒श्विभ्यां॒ न दुरो॒ दिश॒ इन्द्रो॒ न रोद॑सी॒ दुघे॒ दुहे॑ धे॒नुः सर॑स्वत्य॒श्विनेन्द्रा॑य भेष॒जꣳ शु॒क्रं न ज्योति॑रिन्द्रि॒यं पयः॒ सोमः॑ परि॒स्रुता॑ घृ॒तं मधु॒ व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ॥ ३४ ॥

**उ०** होता यक्षद्दुरो दिशः होता यजतु । दुरः द्वार इति प्राप्ते छान्दसं संप्रसारणम् । द्वाराणीति लिङ्गव्यत्ययेन पर्यायः । कथंभूता यज्ञगृहद्वारः । दिशः कवष्यो न व्यचस्वतीः । लुप्तोपमानमेतत् । दिश इव याः कवष्यः ससुपिराः । व्यचस्वतीः व्यञ्चनवत्यः गमनवत्यश्च याः । अश्विभ्यां न दुरो दिशः । अश्विभ्यां च वा अधिष्ठिताः यज्ञगृहद्वारो दिश इव बभूवुः । इन्द्रो न रोदसी दुघे इन्द्रश्च या अधिष्ठाय रोदसी द्यावापृथिव्यौ दुहे । हकारस्य घकारः । दुग्धवान् । याश्चाधिष्ठाय दुहे धेनुर्भूत्वा सरस्वती अश्विनौ च । कस्मै दुहे किंच दुह इत्यत आह । इन्द्राय भेषजं शुक्रं शुक्रं ज्योतिश्च इन्द्रियं च दुहे । अश्विसरस्वतीन्द्राश्च पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३४ ॥

**म०** दैव्यो होता दुरो द्वारः प्रयाजदेवीः इन्द्रः इन्द्रं सरस्वती सरस्वतीं अश्विना अश्विनौ च यक्षत् यजतु । नकाराश्चार्थाः । द्वारशब्दस्य संप्रसारणम् । कीदृशीः द्वारः । दिशः दिश इव सावकाशाः कवष्यः ससुषिराः । अतएव व्यचस्वतीः व्यचो व्यञ्चनं गमनं विद्यते यासु ताः गमनवत्यः । दिशो दिक्तुल्या दुरो द्वार अश्विभ्यां सहिताः सत्यो रोदसी द्यावापृथिव्यौ इन्द्राय भेषजमौषधं दुहे दुग्धे । कीदृश्यौ रोदसी । दुघे 'दुहः कब्घश्च' ( पा० ३ । २ । ७० ) इति हकारस्य घकारः । दुहे इत्यत्र तलोपश्च वचनव्यत्ययः । दुहते । रोदसीभ्यां सकाशादिन्द्रायौषधं दुहते इत्यर्थः । 'अकथितं च' ( पा० १ । ४ । ५१ ) इति द्विकर्मकत्वम् । सरस्वती च धेनुर्भूत्वा इन्द्राय शुक्रं शुक्रं शुद्धं ज्योतिरिन्द्रियं वीर्यं च दुहे दुग्धे । अन्यद्व्याख्यातम् ॥ ३४ ॥

## पञ्चत्रिंशी ।

होता॑ यक्षत्सु॒पेश॑सो॒षे, नक्तं॒ दिवा॒श्विना॒ सम॑ञ्जाते॒ सर॑स्वत्या॒ त्विषि॒मिन्द्रे॒, न भे॑षजꣳ श्ये॒नो न रज॑सा हृ॒दा श्रि॒या न मास॑रं॒ पयः॒ सोमः॑ परि॒स्रुता॑ घृ॒तं मधु॒ व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ॥ ३५ ॥

**उ०** होता यक्षत्सुपेशसोषे । होता यक्षत् यजतु सुपेशसा सुरूपे । उषे इति द्विवचनोपदेशाद्रात्रिश्च उषाश्च गृह्येते । नक्तंदिवा रात्रौ च अहनि च । यौ चाश्विनौ समञ्जातः संश्लेषयतः सरस्वत्या सहितौ । त्विषिं दीप्तिम् इन्द्रे । इन्द्रभेषजं च संश्लेषयतः । तौ च होता यजतु । यश्च श्येनः रजसा । रजःशब्दो ज्योतिर्वचनः । ज्योतिषा हृदा हृदयेन । श्रिया न । नकाराः सर्वे समुच्चयार्थीया इहानुवाके प्रायशः । श्रिया च सह मासरमुपादाय इन्द्रे समनक्ति । तं च होता यजतु । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३५ ॥

**म०** होता सुपेशसा सुरूपे उषे द्विवचनाद्रात्रिश्च नक्तोषे प्रयाजदेवौ सरस्वत्या सहितौ अश्विनौ च यक्षत् । तौ चाश्विनौ नक्तं दिवा दिने च रजसा ज्योतिषा । रजःशब्दो ज्योतिर्वचनः । हृदा चित्तेन श्रिया च सह मासरं भेषजं मासरूपमौषधं श्येनः श्येनपत्रं त्विषिं कान्तिं च इन्द्रे समञ्जाते संश्लेषयतः । नकाराश्चार्थाः । ते पयआदीनि व्यन्तु हे होतः, त्वं यज ॥ ३५ ॥

## षट्त्रिंशी ।

होता॑ यक्ष॒द्दैव्या॒ होता॑रा भि॒षजा॒श्विनेन्द्रं॒ न जागृ॑वि॒ दिवा॒नक्तं॒ न भे॑षजैः शू॒षꣳ सर॑स्वती भि॒षक् सीसे॑न दुह इन्द्रि॒यं पयः॒ सोमः॑ परि॒स्रुता॑ घृ॒तं मधु॒ व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ॥ ३६ ॥

**उ०** होता यक्षद्दैव्या होतारा होतारौ अयं चाग्निरसौ च मध्यमः । भिषजौ अश्विनौ इन्द्रंन इन्द्रंच होता यजतु । जागृवि दिवानक्तं न भेषजैः शूषꣳसरस्वती भिषक्सीसेन दुह इन्द्रियम् । या चैषा सरस्वती भिषक् जागृवि । स्वकार्यसिद्धावप्रमत्ता जागरणशीला । विभक्तिलोपः । दिवानक्तं च भेषजैरौषधैः शूषं बलम् सीसेन च दुहे दोग्धि । इन्द्रियं च इन्द्रार्थम् । तां च दैव्यो होता यजतु । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हेमनुष्यहोतः, आज्यस्य यज ॥ ३६ ॥

**म०** दैव्यो होता दैव्या होतारा दैव्यौ होतारौ अयं अग्निरसौ च मध्यमः एतौ प्रयाजदेवौ भिषजौ वैद्यौ अश्विनौ इन्द्रंच यक्षत् यजतु । नौ चार्थौ । भिषग्भूता सरस्वती भेषजैः सह शूषं बलमिन्द्रियं वीर्यं च सीसेन कृत्वा दुहे दुग्धे । दुहेर्लट् 'लोपस्त आत्मनेपदेषु' ( पा० ७ । १ । ४१ ) । तलोपः । इन्द्रियार्थम् । कीदृशी सरस्वती । दिवानक्तमहोरात्रं जागृवि जारणशीला स्वकार्यसिद्धावप्रमत्ता 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) । सोर्लुक् तां च दैव्यो होता यजतु । अश्व्यादयः पयआदीनि व्यन्तु । हे होतः, त्वमपि यज ॥ ३६ ॥

## सप्तत्रिंशी ।

होता॑ यक्षत्ति॒स्रो दे॒वीर्न भे॑षजं॒ त्रय॑स्त्रि॒धात॑वो॒ऽपसो॑ रू॒पमिन्द्रे॑ हिर॒ण्यय॑म॒श्विनेडा॒ न भार॑ती

वाचा सरस्वती मह इन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३७ ॥

उ० होता यक्षत्तिस्रो देवीः । होता यजतु तिस्रो देवीः वक्ष्यमाणाः । नभेषजं त्रयस्त्रिधातवोपसः । नकारः समुच्चयार्थीयो भिन्नक्रमः । भेषजं च या इन्द्रे कुर्वन्ति ताश्च होता यजतु । त्रयः पशवः त्रिधातवः । आश्विनो धूम्रः सारस्वतो मेषः ऐन्द्र ऋषभः इति त्रयः पशवः । प्रधानाङ्गोपाङ्गभेदात्त्रिधातवः पशवः । अपसः अपस्विन इति प्राप्ते छान्दसो मतुब्लोपः । कर्मवन्तः । अग्नयो वा त्रयस्त्रिधातवः । रूपमिन्द्रे हिरण्ययमश्विनेडा न भारती । ये च इन्द्रे रूपं हिरण्मयं कुर्वन्ति ताश्च होता यजतु । के ते इत्यत आह । अश्विनौ इडा च भारती च । वाचा सरस्वती मह इन्द्राय दुह इन्द्रियम् । या च वाचा त्रयीलक्षणया सरस्वती महः महत्वं पूजामिन्द्राय दुहे दोग्धि इन्द्रियं च । तां च होता यजतु । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३७ ॥

म० नौ चार्थौ । दैव्यो होता । इडा भारती सरस्वती चेति तिस्रो देवीः प्रयाजदेवीः इन्द्रे इन्द्रमश्विना अश्विनौ च यक्षत् यजतु । या सरस्वती वाचा त्रयीलक्षणया भेषजमौषधं हिरण्ययं द्योतमानं रूपं च महस्तेजश्च इन्द्रियं चेन्द्राय इन्द्रार्थे दुहे दुग्धे । कैः कृत्वा । त्रयस्त्रिधातवः त्रिभिः पशुभिः । तृतीयार्थे प्रथमा । त्रयो धातवः प्रधानाङ्गोपाङ्गलक्षणाः प्रकारा येषां ते त्रिधातवः पशवः । ते च त्रयः आश्विनो धूम्रः सारस्वतो मेषः ऐन्द्र ऋषभः । कीदृशाः पशवः । अपसः अप इति कर्मनाम विनो लोपः । अपस्विनः कर्मवन्तः । त्रिभिः पशुभिर्भेषजरूपेन्द्रियमहांसि इन्द्राय दुग्धे । तेऽश्व्यादयः पयआदीनि पिबन्तु । हे होतः, त्वमप्याज्यस्य यज घृतं देहि ॥ ३७ ॥

## अष्टात्रिंशी ।

होता यक्षत्सुरेतसमृषभं नर्यापसं त्वष्टारमिन्द्रमश्विना भिषजं न सरस्वतीमोजो न जूतिरिन्द्रियं वृको न रभसो भिषग्यशः सुरया भेषजꣳ श्रिया न मासरं, पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३८ ॥

उ० होता यक्षत्सुरेतसम् । होता यजतु सुरेतसं शोभनं रेतः उदकलक्षणं यस्य । 'शोभनं ह्येतस्य रेतो यदुदकम्' । यद्वा सुष्ठु रेतो यस्मात्तं पुंसो रेतःकारणभूतम् । ऋषभं वर्षितारम् । नर्यापसम् नरेभ्यो हितं नर्यम् तदस्य अपःकर्म स नर्यापसः तं नर्यापसं त्वष्टारम् दैव्यो होता यजतु । किंच इन्द्रमश्विना भिषजं न सरस्वतीम् । इन्द्रम् अश्विनौ भिषजं च सरस्वतीम् दैव्यो होता यजतु । केन यजतु । ओजो न जूतिरिन्द्रियं वृको न रभसो भिषक् । नकारः समुच्चयार्थीयः । ओजश्च जूतिर्जवः इन्द्रियं च यो वृकः सरभसः सोऽयमो दक्षः भिषक् तेन यजतु । सुरायां वृकलोमानि क्षिप्यन्त इत्यत एवमुच्यते । पयः सुरया भेषजं श्रियान मासरम् । तथा मासरमुपादाय सुरया च यजतु । यशो भेषजं श्रिया सह इन्द्रे यजमाने वा । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३८ ॥

म० नकाराश्चार्थाः । होता त्वष्टारं प्रयाजदेवमिन्द्रमश्विना अश्विनौ सरस्वतीं भिषजं च यक्षत् यजतु । कीदृशं त्वष्टारम् । सुरेतसं शोभनं रेतो वीर्यं वृष्टिलक्षणं यस्य स सुरेताः तम् । यद्वा सुष्ठु रेतो यस्मात्तम् पुंसो रेतःकारणभूतम् । ऋषभं वर्षितारम् नर्यापसं नरेभ्यो हितं नर्यमपः कर्म यस्य स नर्यापाः तम् । केन यजतु तदाह । रभसः सोऽयमो भिषग्वैद्यभूतो यो वृकः तेन । प्रथमा तृतीयार्थे । सुरायां वृकलोमानि क्षिप्यन्तेऽतो वृकेन यजतु सुरया च यजतु । भेषजं यन्मासरं तेन च यजतु । एवंच यागे ओजस्तेजः जूतिर्वेगः इन्द्रियं वीर्यं श्रिया सह यशश्चेन्द्रे भवन्त्विति शेषः । अश्व्यादयः पयआदीनि व्यन्तु । हे होतः, त्वमप्याज्यस्य यज ॥ ३८ ॥

## एकोनचत्वारिंशी ।

होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुं भीमं न मन्युꣳ राजानं व्याघ्रं नमसाश्विना, भामꣳ सरस्वती भिषगिन्द्राय दुह इन्द्रियं, पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३९ ॥

होता यक्षद्वनस्पतिम् होता यजतु । वनस्पतिं शमितारं शतक्रतुं बहुकर्माणम् भीमं न मन्युं राजानं व्याघ्रम् । भीमं भयानकम् मन्युं क्रोधात्मानम् । राजानमारण्यानां पशूनां व्याघ्रं च होता यजतु । नमसाश्विना हविषा । अश्विनौ च होता यजतु । भामं सरस्वती भिषगिन्द्राय दुह इन्द्रियम् । या च भामं क्रोधम् । सरस्वतीभिषक् इन्द्राय दुहे दोग्धि इन्द्रियं च तां च दैव्यो होता यजतु । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ३९ ॥

म० दैव्यो होता वनस्पतिं प्रयाजदेवं व्याघ्रं विशेषेणाजिघ्रतीति व्याघ्रः । व्याघ्रमिव राजानं शतक्रतुमिन्द्रमश्विना अश्विनौ सरस्वती सरस्वतीं च नमसा अन्नेन यक्षत् यजतु । कीदृशं वनस्पतिम् । शमितारं पशूनां संस्कर्तारं यूपरूपेण । भीमं भयंकरं मन्युं क्रोधात्मानम् । भिषक् वैद्यरूपा या सरस्वती इन्द्राय भामं क्रोधमिन्द्रियं वीर्यं च दुहे दोग्धि । ते वनस्पत्यादयः इज्यमानाः पयआदीनि पिबन्तु । हे होतर्यज ॥ ३९ ॥

## चत्वारिंशी ।

होता॑ यक्षद॒ग्निꣳ स्वाहाज्य॑स्य स्तो॒काना॒ꣳ स्वाहा॒ मेद॑सां पृथ॒क् स्वाहा॒ च्छाग॑म॒श्विभ्या॒ꣳ स्वाहा॑ मे॒षꣳ सर॑स्वत्यै॒ स्वाहं॑ ऋ॒ष॒भमिन्द्रा॑य सि॒ꣳहाय॒ सह॑से इन्द्रि॒यꣳ स्वाहा॒ग्निं न भे॑ष॒जꣳ स्वाहा॒ सोम॑मिन्द्रि॒यꣳ स्वाहेन्द्र॒ꣳ सु॒त्रामा॑णꣳ सवि॒तारं॒ वरु॑णं भि॒षजां॒ पति॒ꣳ स्वाहा॒ वन॒स्पतिं॑ प्रि॒यं पाथो॒ न भे॑ष॒जꣳ स्वाहा॑ दे॒वा आ॑ज्य॒पा जु॑षा॒णो अ॒ग्निर्भे॑ष॒जं पयः॒ सोमः॑ परि॒स्रुता॑ घृ॒तं मधु॒ व्यन्त्वाज्य॑स्य होत॒र्यज॑ ॥ ४० ॥

**उ०** होता यक्षदग्निं स्वाहा । दैव्यो होता यजतु । अग्निं प्रयाजदेवतां वा आहवनीयं वा । स्वाहाज्यस्य स्तोकानाम् सुष्ठु आह शोभनमाह यजमानः आज्यस्य स्तोकानाम् । स्तोका विप्रुषः । स्वाहा मेदसां पृथक् । शोभनमाह यजमानः मेदसां वपासंबद्धानाम् पृथक् पृथक् । वपाः श्रप्यमाणा आज्येनाभिघार्यन्ते तदभिप्रायमेतत् । स्वाहा छागमश्विभ्याम् । छागमेषर्षभशब्दाः पशुवचनाः । शोभनमाह यजमानश्छागपशुमश्विभ्यां मेषं शोभनं सरस्वत्यै च । स्वाहा ऋषभमिन्द्राय । शोभनमाह यजमानः ऋषभं इन्द्राय । कथंभूताय इन्द्राय । सिंहाय अभिभवित्रे । पुनः कथंभूताय । सहसे बलात्मकाय च । किंभूतमृषभम् । इन्द्रियं इन्द्रियात्मकमिति सामानाधिकरण्यात्संबन्धः । स्वाहाग्निं न भेषजम् आज्यभागौ सुआह यजमानः । अग्निं च भेषजम् । स्वाहा सोममिन्द्रियं शोभनमाह यजमानः सोममिन्द्रियात्मकम् । स्वाहेन्द्रं सुत्रामाणं सवितारं वरुणं भिषजांपतिम् । पशुपुरोडाशदेवताः । सुआह यजमानः । इन्द्रं सुत्रामाणम् सवितारं च । वरुणं वैद्यानां पतिं च । स्वाहा वनस्पतिम् प्रियं पाथोन भेषजम् । सुआह यजमानः वनस्पतिम् प्रियं पाथश्चान्नं भेषजं च । पशुदेवतानां वनस्पतिम् स्वाहादेवा आज्यपाः । प्रयाजानुयाजा वै देवा आज्यपाः । शोभनमाह यजमानः देवा आज्यपाः इज्यमाना वै देवा उत्तमे प्रयाजे स्मर्यन्त इत्यतो विभक्तिव्यत्ययोऽत्र न कृतः । श्रुतिस्तु 'देवा ह वा ऊचुर्हन्त विजितमेवानुसर्वं यज्ञꣳ सꣳस्थापय' इत्युपक्रम्य 'त उत्तमे प्रयाजे स्वाहाकारेणैव सर्वं यज्ञꣳ सꣳस्थापयन्'इत्याह । अतः स्वाहाकाराः समाप्तिवचनाः समाप्तिवचनत्वाच्च स्वाहाकाराणां देवतापदस्य चतुर्थ्या भवितव्यम् । स्वाहा देवेभ्य आज्यपेभ्य इत्ययं प्रकारः । जुषाणो अग्निर्भेषजम् । जुषाणः सेवमानः अग्निः भेषजमौषधम् इन्द्रस्य यजमानस्य वा करोतु अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि व्यन्तु । त्वमपि हे मनुष्यहोतः, आज्यस्य यज ॥ ४० ॥

**म०** होता अग्निं प्रयाजदेवमाहवनीयं वा यक्षत् यजतु । किंच आज्यस्य घृतस्य स्तोकानां विप्रुषां स्वाहा सुष्ठु आह शोभनं वदति । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति दीर्घः । ब्रुवो रूपम् । यजमान इति शेषः । यजमानो घृतबिन्दून् शोभनान्वदतीत्यर्थः । कर्मणि षष्ठी । मेदसां वपासंबन्धिनां पृथक स्वाहा । वपासंबन्धिमेदांसि समीचीनानीति पृथग्वदति अश्विभ्यामश्विनोरर्थे छागं शोभनमाह । सरस्वत्यै मेषं शोभनमाह । इन्द्राय इन्द्रियं वीर्यप्रदमृषभं सु आह । कीदृशायेन्द्राय । सिंहाय सिंहतुल्याय हिनस्तीति सिंहस्तस्मै शत्रूणामभिभवित्रे । तथा सहसे बलात्मकाय । भेषजं हितकारिणमग्निं च सु आह । नश्चार्थः । इन्द्रियं वीर्यप्रदं च सोमं सु आह । एतावग्नीषोमावाज्यभागौ सु आहेत्यर्थः । सुष्ठु त्रायते सुत्रमा तं सुत्रामाणमिन्द्रं सवितारं भिषजां वैद्यानां पतिं वरुणं च सु आह । पशुपुरोडाशदेवताः सु आहेत्यर्थः । प्रियमिष्टं पाथोऽन्नमन्नभूतं भेषजंच पशुदेवतानां वनस्पतिं प्रयाजदेवं सु आह । नकारश्चार्थः । आज्यपा देवा आज्यपान् देवान् सु आह । 'प्रयाजानुयाजा वै देवा आज्यपाः' । स्वाहेतिक्रियाया यजमानः कर्ता । 'देवा ह वा ऊचुर्हन्त विजितमेवानु सर्वं यज्ञं सꣳस्थापय' इत्युपक्रम्य 'तत उत्तमे प्रयाजे स्वाहाकारेणैव यज्ञꣳसमस्थापयन्' इत्याहेति श्रुतेः समाप्तिवचनाः स्वाहाकाराः । भेषजमौषधभूतं जुषाणः सेवमानोऽग्निरश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयआदीनि व्यन्तु । हे मनुष्यहोतः, त्वमपि यज ॥ ४० ॥

## एकचत्वारिंशी ।

होता॑ यक्षद॒श्विनौ॒ छाग॑स्य व॒पाया॒ मेद॑सो जु॒षेता॒ꣳ ह॒विर्होत॒र्यज॑ । होता॑ यक्ष॒त्सर॑स्वतीं मे॒षस्य॑ व॒पाया॒ मेद॑सो जु॒षता॒ꣳ ह॒विर्होत॒र्यज॑ । होता॑ यक्ष॒दिन्द्र॑मृष॒भस्य॑ व॒पाया॒ मेद॑सो जु॒षता॒ꣳ ह॒विर्होत॒र्यज॑ ॥ ४१ ॥

**उ०** होता यक्षदश्विनौ छागस्य त्रयो वपानां प्रैषा यथालिङ्गम् । दैव्यो होता यजतु । अश्विनौ छागस्य वपाया मेदसः स्नेहप्रकृतिर्मेदः । तौ चेज्यमानौ जुषेतां हविः । त्वं च हे मनुष्यहोतः यज । होता यक्षत्सरस्वतीं मेषस्य । जुषतामित्येकवचनविशेषः । होता यक्षदिन्द्रमृषभस्य । समममन्यत् ॥ ४१ ॥

**म०** 'होता यक्षदश्विनाविति त्रयो वपानां प्रैषा यथालिङ्गम्' ( का० १९ । ६ । २२ ) । होता यक्षदश्विनौ छागस्य होता यक्षत्सरस्वतीम् होता यक्षदिन्द्रमृषभस्येति त्रयो वपात्रयस्य क्रमात् प्रैषा एककण्डिकायामिति सूत्रार्थः । सप्त लिङ्गोक्तदेवताः । तत्राद्यास्त्रयो वपानां प्रैषाः त्रयाणां प्राजापत्या पङ्क्तिश्छन्दः । द्वितीयस्य द्व्यधिका प्रथमतृतीययोरेकाधिका । दैव्यो होता अश्विनौ यक्षत् यजतु । इज्यमानौ तावश्विनौ छागस्य वपाया मेदसः हविर्जुषेतां सेवेताम् । मेद-

स्निग्धभागः । हे होतर्यज । होता सरस्वतीं यक्षत् । सा मेषस्य वपाया मेदसो हविर्जुषताम् । हे होतः, त्वं यज । होता इन्द्रं यक्षत् स इन्द्रः ऋषभस्य वपाया मेदसो हविर्जुषताम् । हे मनुष्यहोतः त्वमपि यज ॥ ४१ ॥

## द्विचत्वारिंशी ।

होता यक्षदश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणमिमे सोमाः सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृता शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्चुतस्तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु पिबन्तु मदन्तु व्यन्तु होतर्यज ॥ ४२ ॥

उ० होता यक्षदश्विनौ सरस्वतीम् । ग्रहाणां प्रैषः । दैव्यो होता यजतु । अश्विनौ च सरस्वतीं च इन्द्रं च सुत्रामाणम् । एवं होतारमुक्त्वाथेदानीमध्वर्यूनाह । हे अध्वर्यवः, इमे सोमाः सुरामाणः सुरमणीयाः सुरावन्तो वा । सुरामया वा । छागैर्नमेषैः ऋषभैः सुताः । नकाराः सर्वे समुच्चयार्थीयाः । छागैश्च मेषैश्च ऋषभैश्च सुता अभिषुताः समर्थीकृताः । शष्पैश्च तोक्मभिश्च लाजैश्च महस्वन्तः महाभाग्ययुक्ताः महातर्पणीयाः । मासरेण परिष्कृताः । 'संपर्युपेभ्यः करोतौ भूषणे' इति सुट् । मासरेण अलंकृताः । शुक्राः शोचिष्मन्तः पयस्वन्तः पयसा संयुक्ताः । अमृताः अमृतकल्पाः । प्रस्थिताः होमाभिमुखीभूताः । वः युष्मत्संबन्धेन । इत्यध्वर्युविषयम् । मधुश्चुतः मधुस्रवाः मधुक्षरणाः तानेतान्सोमान् अश्विनौ च सरस्वती च इन्द्रश्च सुत्रामा । साधुत्राणः वृत्रहा जुषताम् जुषित्वा च । सोम्यं सोममयं मधु पिबन्तु च मदन्तु च व्यन्तु च । त्वमपि हे मनुष्यहोतः, यज ॥ ४२ ॥

म० 'ग्रहाणां चतुर्थः' ( का० १९ । ६ । २३ ) । होता यक्षदश्विनौ सरस्वतीमिन्द्रमिति चतुर्थो ग्रहाणां प्रैषः । होता यक्षदश्विनौ सरस्वतीं सुष्ठु रक्षितारमिन्द्रं च यक्षत् यजतु । एवं होतारमुक्त्वाध्वर्यूनाह । हे अध्वर्यवः, इमे सोमाः वो युष्माकं युष्माभिः सुता अभिषुताः । कीदृशाः सोमाः । छागैर्मेषैर्ऋषभैश्च सुरामाणः सुष्ठु रमयन्ति ते सुरामाणः रमणीयाः । रमतेरनण्प्रत्ययः । पशुभिः कृत्वा रमणीयाः नौ चार्थौ । सुरावन्तः सुरामया वा । तथा शष्पैः तोक्मभिर्यवाङ्कुरैर्लाजैश्च महस्वन्तः तेजोयुताः । मदाः मदयन्ति तर्पयन्तीति मदाः । मासरेण पूर्वोक्तेन परिष्कृता अलंकृताः 'संपर्युपेभ्यः-' ( पा० ६ । १ । १३७ ) इति सुट् । शुक्राः शोचिष्मन्तः । पयस्वन्तः पयसा युक्ताः अमृताः अमृतकल्पाः । प्रस्थिताः होमाभिमुखं चलिताः । मधुश्चुतः मधु श्चोतन्ते ते मधुस्राविणः । अश्विनौ सरस्वती सुत्रामा वृत्रहा वृत्रासुरहन्ता इन्द्रश्च तान् सोमान् जुषन्तां सेवन्तां । सोम्यं मधु पिबन्तु मदन्तु तृप्यतु व्यन्तु राजन्तां हविर्भक्षयन्तु वा । हे होतः, त्वमपि यज ॥ ४२ ॥

## त्रिचत्वारिंशी ।

होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेताꣳ हविर्होतर्यज ॥ ४३ ॥

उ० होता यक्षदश्विनौ छागस्य । प्रैषः । होता यजतु । अश्विनौ छागस्य छागाङ्गस्य तावश्विनौ छागसंबन्धिनः हविषः अत्ताम् । 'अद भक्षणे' । अभक्षयताम् भक्षितवन्तौ । अद्य अस्मिन्नवि । मध्यतो मेद उद्भृतम् उदरमध्यतो वपालक्षणं मेदः उद्धृतम् । 'हृग्रहोर्भश्छन्दसि हस्य' इति भकारः । पुराद्वेषोभ्यः पूर्वमसुररक्षोभ्यः यज्ञद्वेष्टृभ्यो वा । पुरा च पौरुषेय्यागृभः पुरुषार्थं गृह्यते इति पौरुषेयीगृप् तस्याः पौरुषेय्यागृभः । इडाया इत्यर्थः । नहि वपायागे इडा विद्यते । यावेवं वपाहविष आत्तां ताविदानीं घस्तां भक्षयताम् । अङ्गानां स्वमंशभूतमिति शेषः । विशेषणैर्विशेष्यस्याध्याहारः । नूनं निश्चयेन । किंभूतानामङ्गानाम् । घासे ग्रासे अज्राणाम् अवत्तानाम् । घासेयैरजितं स्वेच्छया घासे वा यान्यजराणि स्युः । यवसप्रथमानां यवसानामन्नानां यानि प्रथमानि मन्त्रैः संस्कृतत्वात् । 'एतद्वै परममन्नाद्यं यन्मांसम्' इति श्रुतेः । सुमत्क्षराणाम् । सुमत् स्वयमित्यर्थः । स्वयमेव यानि क्षरन्ति अदितानि । शतरुद्रियाणाम् बहुस्तुतीनाम् । रुद्र इति हि स्तोतृनामसु पठितम् । रुद्रस्य स्तोतुरिमा रुद्रियाः स्तुतयः । बहुशो वा रुद्राणां अग्निष्वात्तानां अग्निना साधुपाकार्थमासादितानाम् । अग्निना सुशृतानामित्यर्थः । पीवोपवसनानाम् । पीवशब्दः स्थूलवचनः । पीवभिः स्थूलैरुपोषितं यैरवदानैः स्थूलानामुपवसनम् । समीपस्थितिर्येषामिति वा । किंच । पार्श्वतः श्रोणितः शितामत उत्सादतः । अङ्गादङ्गादवत्तानां पार्श्वतोवत्तानाम् पार्श्वे परशुमयमङ्गं भवति । श्रोणितोऽवत्तानां शितामतोऽवत्तानाम् । शितामशब्देन यकृद्वाशिताम् योनिर्वाशिताम् मेदोवाशिताम् इति व्याख्या-भेदाः । उत्सादनप्रदेशात् छेदनप्रदेशात् । अवत्तानाम् । एवमङ्गादङ्गादवत्तानाम् । करत एवाश्विनौ तृप्तिमिति शेषः । जुषेतां च । पुनर्वचनमादरार्थम् । त्वमपि हे मनुष्यहोतः, यज ॥ ४३ ॥

**म०** 'हविषामुत्तरे यथालिङ्गम्' ( का० १९। ६। २४)। चतुर्थात्प्रैषादग्रे पठ्यमाना 'होता यक्षदश्विनौ छागस्य हविषः' इत्याद्यास्त्रयो यथालिङ्गमाश्विनादिहविर्यागानां प्रैषा इत्यर्थः। दैव्यो होता अश्विनौ यक्षत् यजतु। ताविज्यमानावश्विनौ छागस्य हविषः छागसंबन्धि हविः आत्ताम् अभक्षयताम्। कर्मणि षष्ठी। किंच अद्य अस्मिन् दिने मध्यतः उदरमध्यादुद्धृतमुद्धृतं मेदो वपारूपं चात्ताम्। 'हृग्रहोर्भश्छन्दसि'। कथमुद्धृतं तत्राह। द्वेषोभ्यः द्विषन्तीति द्वेषांसि। द्विषेरसुन्प्रत्ययः। यज्ञद्वेष्टॄणि असुररक्षांसि तेभ्यः उद्धृतम्। यावत्तानि पराभवायागच्छन्ति ततः पुरैवोद्धृतमित्यर्थः। तथा गृभः गृह्यते भक्ष्यार्थमिति गृप् तस्या गृभः इडायाः पुरा प्रथममुद्धृतम्। वपायामिडाप्रयोजनाभावात्। कीदृश्या गृभः। पौरुषेय्याः पुरुषार्थमियं पौरुषेयी ऋत्विगर्था तस्याः। तावश्विनौ नूनं निश्चितमङ्गानां घस्तामङ्गानि भक्षयताम्। 'घस्लृ अदने' विशेषणैर्विशेष्यस्याध्याहारः। कीदृशानामङ्गानाम्। घासे अज्राणाम्। एकपदं घासे ग्रासे अजराणां नवानां रुचिजनकानाम्। अन्यानि ग्रासेषूत्तरोत्तरमरुचिं जनयन्ति नेमानि। तथा यवसप्रथमानां यवसानामन्नानां मध्ये प्रथमानां मुख्यानां मांसत्वात्। 'एतद्वै परममन्नाद्यं यन्माꣳसम्' इति श्रुतेः। सुमत्क्षराणां सुमत् स्वयं क्षरन्ति तानि सुमत्क्षराणि तेषाम्। सुमदिति स्वयमित्यस्य पर्यायः। शतरुद्रियाणाम्। रुद्र इति स्तोतृनामसु पठितम्। रुद्रस्य स्तोतुरिमा रुद्रियाः स्तुतयः। शतमसंख्या रुद्रिया येषां तेषाम्। बहुमन्त्रैः स्तुतानामित्यर्थः। अग्निष्वात्तानाम् अग्निना स्वात्तानामास्वादितानाम्। पाककाले पूर्वमग्निना सुश्रुतानामित्यर्थः। पीवोपवसनानाम्। पीवस्शब्दोऽसुन्नन्तः स्थूलवाची। पीवसां स्थूलानामङ्गानामुप समीपे वसनं स्थितिर्येषां तानि पीवोपवसनानि तेषाम्। स्थूलाङ्गसमीपस्थितानां सूक्ष्माणामित्यर्थः। 'उपवसने पीवः' इति प्रातिशाख्यसूत्रेण उपवसने परे पीवसो विसर्गलोपः। किंच पार्श्वतः पार्श्वप्रदेशात्। श्रोणितः कटिप्रदेशात् शितामतो बाहुप्रदेशात्। उत्सादतः उत्सादनमुत्सादः, छेदनप्रदेशः तस्मात्। एवमङ्गादङ्गात् एकपदम् 'नित्यवीप्सयोः' ( पा० ८। १। ४ ) इति द्वित्वम्। प्रसङ्गात् अवत्तानामवदानधर्मेण गृहीतानामङ्गावयवानमश्विनौ घस्ताम् तान् भक्षयतामिति पूर्वेण संबन्धः। एव एवमश्विना अश्विनौ हविर्जुषेतां सेवेताम् भक्षितावदानौ तौ करतः कुरुतः। तृप्तिमिति शेषः। विकरणव्यत्ययः। पुनर्वचनमादराय। हे मनुष्यहोतः, त्वमपि यज। शितामशब्देन बाहुयकृद्योनिमेदांस्युच्यन्ते॥ ४३॥

## चतुश्चत्वारिंशी।

होता॑ यक्ष॒त्सर॑स्वतीं मे॒षस्य॑ ह॒विष॒ आव॑यद॒द्य मध्य॒तो मेद॒ उद्भृ॑तं पु॒रा द्वेषो॑भ्यः पु॒रा पौरु॑षेय्या गृ॒भो घस॑न्नू॒नं घा॒से अ॑ज्रा॒णां यव॑सप्रथमानाꣳ सु॒मत्क्ष॑राणाꣳ शतरु॒द्रिया॑णामग्निष्वा॒त्ताना॒ं पीवो॑पवसनानां पार्श्व॒तः श्रो॑णि॒तः शि॑ताम॒त उ॑त्साद॒तोऽङ्गा॑दङ्गा॒दव॑त्ताना॒ं कर॑दे॒वꣳ सर॑स्वती जुषता॒ꣳ ह॒विर्हो॑त॒र्यज॑॥ ४४॥

**उ०** होता यक्षत्सरस्वतीं मेषस्य। होता यजतु सरस्वतीम्। या हविष आवयत्। आङ्पूर्वस्य वनेः खादनार्थस्य लिटि भूतार्थाभिधायिन्येतद्रूपम्। घसत् लोडर्थे लेट्। जुषतामेकवचनम्। अन्यदुक्तम्॥ ४४॥

**म०** होता सरस्वतीं यक्षत् या सरस्वती मेषस्य हविषः हविः आवयत् अभक्षयत्। आङ्पूर्वस्य वेतेर्लङि रूपम्। यद्वा भक्षयतु। लेटि वाडागमे रूपम्। अद्य मध्यतो मेद इत्यादिव्याख्या पूर्ववत्। सा अङ्गानि घसत्। एवं सरस्वती हविर्जुषतां तृप्तिं च करदित्येकवचनानि। अन्यदुक्तम्॥ ४४॥

## पञ्चचत्वारिंशी।

होता॑ यक्ष॒दिन्द्र॑मृष॒भस्य॑ ह॒विष॒ आव॑यद॒द्य म॑ध्य॒तो मेद॒ उद्भृ॑तं पु॒रा द्वेषो॑भ्यः पु॒रा पौरु॑षेय्या गृ॒भो घस॑न्नू॒नं घा॒से अ॑ज्रा॒णां यव॑सप्रथमानाꣳ सु॒मत्क्ष॑राणाꣳ शतरु॒द्रिया॑णामग्निष्वा॒त्ताना॒ं पीवो॑पवसनानां पार्श्व॒तः श्रो॑णि॒तः शि॑ताम॒त उ॑त्साद॒तोऽङ्गा॑दङ्गा॒दव॑त्ताना॒ं कर॑दे॒वमिन्द्रो॑ जुषता॒ꣳ ह॒विर्हो॑त॒र्यज॑॥ ४५॥

**उ०** होता यक्षदिन्द्रमृषभस्य। तुल्यव्याख्यानम्॥ ४५॥

**म०** होता इन्द्रं यक्षत्। स इन्द्र ऋषभस्य हविष आवयत् भक्षयतु। एवमिन्द्रो हविर्जुषतामित्यन्तं पूर्ववत्॥ ४५॥

## षट्चत्वारिंशी।

होता॑ यक्ष॒द्वन॒स्पति॑म॒भि हि पि॒ष्टत॑मया॒ रभि॑ष्ठया रश॒नया॑धित। यत्रा॒श्विनो॒श्छाग॑स्य ह॒विषः॑ प्रि॒या धामा॑नि॒ यत्र॒ सर॑स्वत्या मे॒षस्य॑ ह॒विषः॑ प्रि॒या धामा॑नि॒ यत्रेन्द्र॑स्य ऋष॒भस्य॑ ह॒विषः॑ प्रि॒या धामा॑नि॒ यत्रा॒ग्नेः प्रि॒या धामा॑नि॒ यत्र॒ सोम॑स्य प्रि॒या धामा॑नि॒ यत्रेन्द्र॑स्य सु॒त्राम्णः॑ प्रि॒या धामा॑नि॒ यत्र॑ सवि॒तुः प्रि॒या धामा॑नि॒ यत्र॒ वरु॑णस्य प्रि॒या धामा॑नि॒ यत्र॒ वन॒स्पतेः॑ प्रि॒या पाथा॑ꣳसि॒ यत्र॑ दे॒वाना॑माज्य॒पाना॑ं प्रि॒या धामा॑नि॒ यत्रा॒ग्नेर्होतु॑ः प्रि॒या धामा॑नि॒ तत्रै॒तान्प्र॒स्तुत्ये॑वोपस्तु॒त्ये॑वोपाव॑स्रक्षद्र॒भीय॑स इव कृ॒त्वी कर॑दे॒वं दे॒वो वन॒स्पति॑र्जुषता॒ꣳ ह॒विर्हो॑त॒र्यज॑॥ ४६॥

उ० होता यक्षद्वनस्पतिम् । वनस्पतिप्रैषः । होता यजतु वनस्पतिं यूपम् । अभि हि पिष्टतमया रभिष्टतया रशनयाधित । कस्माद्वनस्पतिं यजतु । हिशब्दो यस्मादर्थे । यस्मात् अभ्यधित । 'स्थाघ्वोरिच्च' इति दधातेर्लुङ् । इत्यभिधारितवान् । केनाभिधारितवान् । पिष्टशब्दो रूपवाची । पिष्टतमया रभिष्टया च आलब्धतमया । अतिशयेन नियमकारिण्या । रशनया जालभूतया । प्रार्थयामि वनस्पतिम् । यत्र देशे अश्विनौ छागस्य च हविषश्च प्रिया प्रियाणि धामानि स्थानानि । यत्र सरस्वत्याः यत्रेन्द्रस्य । एताः पशुदेवताः । अथाज्यभागौ । यत्राग्नेः यत्र सोमस्य। अथ पशुपुरोडाशदेवताः । यत्रेन्द्रस्य सुत्राम्णः यत्र सवितुः यत्र वरुणस्य यत्र वनस्पतेः प्रियापाथांसि । पाथःशब्दोऽन्नवचनः। वनस्पतिः पशोरिवाङ्गम् । अथ प्रयाजानुयाजाः । यत्र देवानामाज्यपानाम् । अथ स्विष्टकृत् । यत्राग्नेर्होतुः प्रियाणि स्थानानि तत्र तेषु स्थानेषु एतान् पशून् । प्रस्तुत्येव प्रस्तुत्य च उपस्तुत्येव । अतिशयार्थं पुनर्वचनम् । उपावस्रक्षत् उपावसृजतु । रभीयस इव कृत्वी 'रभ राभस्ये' रभसांश्च पशून् कृत्वा करत् करोतु । एवं देवो वनस्पतिर्जुषतां हविः । त्वमपि हे मनुष्यहोतः, यज ॥ ४६ ॥

म० 'उत्तमौ वनस्पतिस्विष्टकृतोः' (का० १९ । ६ । २५)। अन्ते पठ्यमानौ होता यक्षद्वनस्पतिमभि होता यक्षदग्निं स्विष्टकृतमिति क्रमेण वनस्पतियागे स्विष्टकृद्यागे च प्रैषौ । यूपो देवता । दैव्यो होता वनस्पतिं यूपमभियक्षत् अभियजतु । हि यस्मात् वनस्पतिः रशनया रज्ज्वा कृत्वा अधित धृतवान् । पशूनिति शेषः । दधातेर्लुङि 'स्थाघ्वोरिच्च' ( पा० १ । २ । १७ ) इतीकारः । कीदृश्या रज्ज्वा । पिष्टतमया । पिष्टशब्दो रूपवाची । अत्यन्तं पिष्टा सुरूपा पिष्टतमा तया । रभिष्ठया रभते पशून्नियच्छतीति रब्धी तृच् ङीप् । अत्यन्तं रब्ध्री रभिष्ठा तया 'तुश्छन्दसि' ( पा० ५ । ३ । ५९ ) इतीष्ठनि तृचो लोपः । समर्थयेत्यर्थः । इदानीं वनस्पतिः प्रार्थ्यते । यत्र अश्विनोः संबन्धिनः छागस्य हविषः छागरूपस्य हविषः प्रिया प्रियाणि इष्टानि धामानि स्थानानि वर्तन्त इति शेषः । एवमग्रेऽपि । यत्र सरस्वत्या मेषस्य मेषरूपस्य हविषः प्रियाणि धामानि यत्र इन्द्रस्य ऋषभस्य हविषः प्रियाणि धामानि एतेषां पशुदेवानां स्थानानि । यत्राग्नेः प्रियाणि धामानि यत्र करणस्य प्रियाणि धामानि एते पशुपुरोडाशदेवा यत्र सोमस्य प्रियाणि धामानि एतावाज्यभागौ । यत्र सुत्राम्ण इन्द्रस्य प्रियाणि धामानि । यत्र सवितुः प्रियाणि धामानि यत्र वनस्पतेः प्रियाणि पाथांसि अन्नानि । अथ यत्र आज्यपानां देवानां प्रयाजानुयाजानां प्रियाणि धामानि । यत्र होतुरग्नेः स्विष्टकृतः प्रियाणि धामानि । एताञ्छागादीन् पशून् रभीयस इव कृत्वी रभन्ते ते रब्धारः अत्यन्तं रब्धारो रभीयांसः सरभसांश्च कृत्वा इवश्चार्थः । प्रस्तुत्येव प्रकर्षेण स्तुत्वा च उपस्तुत्येव उप समीपे स्तुत्वा च । इवौ चार्थौ । तत्र तेषु पूर्वोक्तेषु स्थानेषु वनस्पतिर्देव उपावस्रक्षत् उपावसृजतु स्थापयतु । सृजेर्लेङि रूपं लेटि वा 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) इति सिप्प्रत्ययेऽडागमे च रूपम् । वनस्पतिर्देव एवं करत् करोतु । हविश्च जुषताम् । हे मनुष्यहोतः, त्वमपि यज ॥ ४६ ॥

## सप्तचत्वारिंशी ।

होता॑ यक्ष॒द॒ग्निꣳ स्वि॑ष्ट॒कृत॑म॒या॑ड॒ग्निर॒श्विनो॑श्छा॒ग॑स्य ह॒विषः॑ प्रि॒या धामा॑न्यया॒ट् सर॑स्वत्या मे॒षस्य॑ ह॒विषः॑ प्रि॒या धामा॑न्यया॒डिन्द्र॑स्य ऋ॒ष॒भस्य॑ ह॒विषः॑ प्रि॒या धामा॑न्यया॒ड॒ग्नेः प्रि॒या धामा॑न्यया॒ट् सोम॑स्य प्रि॒या धामा॑न्यया॒डिन्द्र॑स्य सु॒त्राम्णः॑ प्रि॒या धामा॑न्यया॒ट् स॑वि॒तुः प्रि॒या धामा॑न्यया॒ड् वरु॑णस्य प्रि॒या धामा॑न्यया॒ड् व॒न॒स्पतेः॑ प्रि॒या पाथा॑ꣳस्यया॒ड् दे॒वानां॑माज्य॒पानां॑ प्रि॒या धामा॑नि य॒क्ष॑द॒ग्नेर्हो॒तुः प्रि॒या धामा॑नि य॒क्ष॑त्स्वं म॑हि॒मान॒माय॑जता॒मेज्या॒ इषः॑ कृ॒णोतु॒ सो अ॑ध्व॒रा जा॒तवे॑दा जु॒षता॒ꣳ ह॒विर्हो॑त॒र्यज॑ ॥ ४७ ॥

उ० होता यक्षदग्निं स्विष्टकृतम् । स्विष्टकृत्प्रैषः । दैव्यो होता यजतु । अग्निं स्विष्टकृतम् । कस्माद्धेतोरित्यत आह । अयाट् अयासीत् इष्टवान् । एवमग्रेऽपि । योऽग्निः अश्विनोः छागस्य च हविषश्च प्रियाणि धामानि । अयाट् सरस्वत्याः अयाट् इन्द्रस्य । प्रधानदेवताः । अयाट् अग्नेः अयाट् सोमस्य । आज्यभागौ । अयाट् इन्द्रस्य सुत्राम्णः अयाट् सवितुः अयाट् वरुणस्य । पशुपुरोडाशदेवताः । अयाट् वनस्पतेः प्रियाणि पाथांस्यन्नानि । वनस्पतिः प्रधानाङ्गदेवता । अयाट् देवानाम् आज्यपानाम् प्रयाजानुयाजा आज्यपाः । यक्षदग्नेर्होतुः यक्षत् इष्टवान् अग्नेर्होतुः स्विष्टकृतः स्वयमेव प्रियाणि धामानि यक्षत् अयाक्षीत् । स्वं महिमानं स्वकीयां विभूतिम् । किंच । आयजतामेज्या इषः । यजतामिति वचनव्यत्ययः । आइज्या अभियष्टव्या यागार्हा इषः प्रजाः । इषान्नेन तासां स्थितिरुत्पत्तिश्चेति इषः प्रजा उक्ताः । यागशीला यागार्हाः प्रजा भवन्तीत्यर्थः । कृणोतु करोतु । सः अध्वरा अध्वरान् यज्ञान् जातवेदाः जुषतां च हविः । हे मनुष्यहोतः, त्वमपि यज ॥ ४७ ॥

म० स्विष्टकृदग्निदेवता । होता स्विष्टकृतमग्निं यक्षत् यजतु। योऽग्निः स्विष्टकृत् अश्विनोः छागस्य हविषः संबन्धीनि प्रियाणि धामानि अयाट् अयाक्षीत् इष्टवान् । अवदानानि यजति स्मेत्यर्थः । एवमग्रेऽपि । सरस्वत्या मेषस्य हविषः प्रियाणि धामानि अवदानानि अयाट् इन्द्रस्य ऋषभस्य हविषः प्रियाणि

धामानि अयाट् एताः प्रधानदेवताः। अग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामानि अयाट् एतावाज्यभागौ। सुष्ठु त्रायते सुत्राम्ण इन्द्रस्य प्रियाणि सवितुः प्रियाणि वरुणस्य प्रियाणि एताः पशुपुरोडाशदेवताः। वनस्पतेः प्रियाणि एतत्प्रधानाङ्गम्। आज्यपानां देवानां प्रियाणि एते प्रयाजानुयाजाः। होतुरग्नेः स्विष्टकृतः स्वस्यैव प्रियाणि धामानि यक्षत् इष्टवान्। स्वं महिमानं स्वां विभूतिं यक्षत्। किंच आ इज्याः समन्ताद् यष्टुं योग्या एज्याः यागार्हाः। इषः इच्छन्तीति इषः सकामाः प्रजाः आयजतां सम्यक् यजतु। वचनव्यत्ययः। प्रजा यागशीला यागयोग्याश्च भवन्त्वित्यर्थः। स जातवेदाः स्विष्टकृदग्निः अध्वरा अध्वरान्यज्ञान् कृणोतु करोतु। हविश्च जुषताम्। हे मनुष्यहोतः, त्वं यज। विभक्तेराकारः॥ ४७॥

## अष्टचत्वारिंशी।

देवं बर्हिः सरस्वती सुदेवमिन्द्रे अश्विना। तेजो न चक्षुरक्ष्योर्बर्हिषा दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज॥ ४८॥

उ० देवं बर्हिः एकादशानुयाजप्रैषाः अश्विसरस्वतीन्द्रदेवत्या व्यवहितपदप्रायाः। यत् देवं बर्हिः सुदेवम् शोभना देवा अस्येति सुदेवम्। तेन बर्हिषा सरस्वती अश्विनौ च इन्द्रे। तेजो न। नकारः समुच्चये। तेजश्च चक्षुश्च इन्द्रियं च अक्ष्योः अक्ष्णोः दधुः। वसुवननाय धनलाभाय। वसुधेयस्य धननिधानाय च। व्यन्तु पिबन्तु अश्विसरस्वतीन्द्राः। त्वमपि यज। अथ समस्तार्थः। यद्देवं बर्हिः सुदेवं तेन बर्हिषा सरस्वती अश्विनौ च तेजश्च अक्ष्णोः इन्द्रियं च दधुः। एवमग्रेऽपि॥ ४८॥

म० 'अनुयाजप्रैषा देवं बर्हिरिति याज्याश्च' (का० १९।७।८—९) देवं बर्हिः सरस्वतीत्याद्या एकादश कण्डिकास्त्रिपशोरनुयाजानां प्रैषा याज्याश्च भवन्तीत्यर्थः। एकादशानुयाजप्रैषा अश्विसरस्वतीन्द्रदेवत्याः चतस्र आर्घ्यस्त्रिष्टुभः व्यवहितपदप्रायाः। शोभना देवा यस्य तत्सुदेवं यद्बर्हिः देवमनुयाजदेवता तेन बर्हिषा सरस्वती अश्विना अश्विनौ च इन्द्रे तेजो दधुः दधतु। अक्ष्योः इन्द्रनेत्रयोः चक्षुः इन्द्रियं च दधुः। नकारश्चार्थः। एवमग्रेऽपि। वसुवने वसुवननाय धनलाभाय वसुधेयस्य वसुनो धेयं वसुधेयं तस्य वसुनिधानाय च अश्विसरस्वतीन्द्रा व्यन्तु हविर्भक्षयन्तु। हे मनुष्यहोतः, त्वमपि यज। सप्तमीषष्ठ्यौ चतुर्थ्यर्थे॥ ४८॥

## एकोनपञ्चाशी।

देवीर्द्वारो अश्विना भिषजेन्द्रे सरस्वती। प्राणं न वीर्यं नसि द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज॥ ४९॥

उ० देवीर्द्वारः। या देव्यः यज्ञगृहद्वारः ताभिः अश्विनौ भिषजौ च। सरस्वती च प्राणं च। नसि नासिकायाम्। वीर्यं च इन्द्रियं च। द्वारः द्वार्भिरिति विभक्तिव्यत्ययः। इन्द्रे दधुः। वसुवने इति व्याख्यातम्॥ ४९॥

म० उत्तरार्धे द्वार इति प्रथमा तृतीयार्था। या द्वारो देवीः यज्ञगृहद्वारो देव्योऽनुयाजदेवाः ताभिर्द्वार्भिः सह भिषजा अश्विना वैद्यावश्विनौ सरस्वती च इन्द्रे वीर्यं बलं दधुः। नसि इन्द्रस्य नासिकायां प्राणमिन्द्रियं प्राणेन्द्रियं च दधुः। वसु० व्याख्यातम्॥ ४९॥

## पञ्चाशी।

देवी उषासावश्विना सुत्रामेन्द्रे सरस्वती। बलं न वाचमास्य उषाभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज॥ ५०॥

उ० देवी उषासौ। नक्तोषासाविति प्राप्ते छान्दसः प्रातिपदिकलोपः। यौ देव्यौ नक्तोषासौ। ताभ्याम् अश्विनौ सुत्रामा शोभनत्राणौ सरस्वती च। बलं च वाचं च आस्ये मुखे। इन्द्रियं च इन्द्रे। उषाभ्यां नक्तोषोभ्यां दधुः व्याख्यातमन्यत्॥ ५०॥

म० नक्तोषासाविति प्राप्ते छान्दस आदिपदलोपः। उषासा देवी नक्तोषसी अनुयाजदेव्यौ ताभ्यामुषाभ्यां नक्तोषोभ्यां सह अश्विनौ सुत्रामा शोभनरक्षणकर्त्री सरस्वती च इन्द्रे बलं दधुः आस्ये इन्द्रमुखे वाचमिन्द्रियं वागिन्द्रियं च दधुः नश्चार्थः। वस्वित्युक्तम्॥ ५०॥

## एकपञ्चाशी।

देवी जोष्ट्री सरस्वत्यश्विनेन्द्रमवर्धयन्। श्रोत्रं न कर्णयोर्यशो जोष्ट्रीभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज॥ ५१॥

उ० देवी जोष्ट्री। ये देव्यौ जोषयित्र्यौ द्यावापृथिव्यौ इति वा। अहोरात्रे इति वा। 'शस्यं च समा चेति कात्थक्यः'। ताभ्यां जोष्ट्रीभ्याम् सरस्वती चाश्विनौ च इन्द्रं अवर्धयन्। कथमवर्धयन्। श्रोत्रं च कर्णयोः यशश्च इन्द्रियं च इन्द्रे दधुः। वसुवन इति समञ्जसम्॥ ५१॥

म० ये जोष्ट्री जोषयित्र्यौ सुखस्य सेवयित्र्यौ देवी देव्यौ अनुयाजदेव्यौ द्यावापृथिव्यौ अहोरात्रे वा। 'शस्यं च समा चेति कात्थक्यः' (निरु० ९।४१।६) ताभ्यां जोष्ट्रीभ्यां सह सरस्वती अश्विना अश्विनौ च इन्द्रमवर्धयन्। कथमवर्धयन् तत्राह। इन्द्रे यशो दधुः। तत्कर्णयोश्च श्रोत्रमिन्द्रियं दधुः। वसु० व्याख्यातम्॥ ५१॥

## द्विपञ्चाशी।

देवी ऊर्जाहुती दुघे सुदुघेन्द्रे सरस्वत्यश्विना

भिषजावतः । शुक्रं न ज्योतिस्तनयोराहुती धत्त इन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥ ५२ ॥

**उ०** देवी ऊर्जाहुती । जोष्ट्र्यास्तुल्यदेवताविकल्पः । ये देव्यौ ऊर्जाहुती रसवती आहुतिराह्वानम् । दुघे दुग्धे सुदुघे सुदोहने । उपरितनेर्धर्चे आहुतीशब्दः श्रूयते स इह कृतविभक्तिव्यत्ययः समर्थीक्रियते । ताभ्यामाहुतीभ्याम् सरस्वती च अश्विनौ च भिषजौ अवतः । अवन्तीति वचनव्यत्ययः । इन्द्रमिति शेषः । कथं कृत्वा । शुक्रं च ज्योतिश्च पयोलक्षणं स्तनयोः इन्द्रियं च इन्द्रे धत्त इति विभक्तिव्यत्ययः । दधुः । वसुवने इति व्याख्यातम् ॥ ५२ ॥

**म०** उत्तरार्धे आहुतीशब्दस्तृतीयार्थः । जोष्ट्र्योरेव देवताविकल्पः । ये देवी ऊर्जाहुती ऊर्जा रसवती आहुतिराह्वानं होमो वा ययोस्ते ऊर्जाहुती । दुघे दुग्धस्ते दुघे कामपूरके । सुदुघे सुदोहने ताभ्यामाहुतिभ्यां सह सरस्वती भिषजावश्विनौ च इन्द्रे इन्द्रमवतः अवन्ति रक्षन्ति । वचनव्यत्ययः । कथं तदाह । ज्योतिः तेज इन्द्रे धत्तः दधति । स्तनयोः शुक्रमिन्द्रियं च धत्तः । वचनव्यत्ययः नश्चार्थः । व्याख्यातमन्यत् ॥ ५२ ॥

## त्रिपञ्चाशी ।

देवा देवानां भिषजा होताराविन्द्रमश्विना । वषट्कारैः सरस्वती त्विषिं न हृदये मतिᳬं होतृभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥ ५३ ॥

**उ०** देवा देवानाम् । यौ देवौ होतारौ देवानां भिषजौ ताभ्यां होतृभ्यां वषट्कारैश्च । अश्विनौ च सरस्वती च इन्द्रं । इन्द्रे इति विभक्तिव्यत्ययः । इन्द्रियं च त्विषिं दीप्तिं च हृदये मतिं च दधुः । वसुवने इति समञ्जसम् ॥ ५३ ॥

**म०** देवानां देवा देवौ यौ होतारौ अनुयाजदेवौ ताभ्यां होतृभ्यां सह वषट्कारैश्च सह भिषजौ अश्विनौ सरस्वती च इन्द्रमिन्द्रे त्विषिं कान्तिं दधुः । हृदये मतिमिन्द्रियं बुद्धीन्द्रियं च दधुः नश्चार्थः । वसु० उक्तम् ॥ ५३ ॥

## चतुःपञ्चाशी ।

देवीस्तिस्रस्तिस्रो देवीरश्विनेडा सरस्वती । शूषं न मध्ये नाभ्यामिन्द्राय दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥ ५४ ॥

**उ०** देवीस्तिस्रः । या देव्यस्तिस्रः सरस्वतीडाभारत्यः तिस्रोदेवीः । अत्र विभक्तिव्यत्ययोऽध्याहारश्च वाक्यवशात् । तिसृभिर्देवीभिः सरस्वतीडाभारतीभिः । अश्विनौ च इडा च सरस्वती च । शूषं बलं च मध्येनाभ्याम् इन्द्रियं च इन्द्राय । इन्द्रे इति विभक्तिव्यत्ययः । दधुः । वसुवने इति समानम् ॥ ५४ ॥

**म०** यास्तिस्रो देव्यो भारती इडा सरस्वती तिस्रो देवीः । विभक्तिव्यत्ययः । ताभिस्तिसृभिः देवीभिः सह अश्विनौ सरस्वती इडा च इन्द्राय इन्द्रे नाभ्यां मध्ये च शूषं बलमिन्द्रियं च दधुः नश्चार्थः । वसु० व्याख्यातम् ॥ ५४ ॥

## पञ्चपञ्चाशी ।

देव इन्द्रो नराशᳬंसस्त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथः । रेतोन रूपममृतं जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि वसुवने वसुधेयस्य व्यन्तु यज ॥ ५५ ॥

**उ०** देव इन्द्रः । यो देव इन्द्रः । 'इदि परमैश्वर्ये' । परमैश्वर्ययुक्तः । नराशंसः नरा अस्मिन्नासीनाः शंसन्तीति नराशंसः । त्रिवरूथः त्रिगृहः सदोहविर्धानाग्नीध्रैः । त्रिलोक्या वा त्रिगृहः । यस्य च सरस्वत्या अश्विभ्यां च ईयते उह्यते नीयते रथः । स यज्ञः । रेतोन रेतश्च अमृतं च रूपं च जनित्रं जन्म च । इन्द्राय इन्द्रे इन्द्रस्य चेति विभक्तिव्यत्ययः । कथंभूतो यज्ञः । त्वष्टा त्वक्षतिः करोत्यर्थः । जगतः कर्ता । दधत् दधातु इन्द्रियाणि च । वसुवन इति व्याख्यातम् ॥ ५५ ॥

**म०** 'नरा अस्मिन्नासीनाः शंसन्ति' ( निरु० ८ । ६ ) इति यास्कोक्तेः नराशंसो देवोऽनुयाजरूपो यज्ञः रेतो वीर्यं रूपं सौन्दर्यममृतं जनित्रमुत्तमं जन्म इन्द्रियाणि च इन्द्राय दधद्धातु । नश्चार्थः । कीदृशो नराशंसः । इन्द्रः इन्द्रतीतीन्द ऐश्वर्यवान् । 'इदि परमैश्वर्ये' । त्रिवरूथः त्रीणि वरूथानि गृहाणि सदोहविर्धानाग्नीध्राणि यस्य सः । तथा त्वष्टा । त्वक्षतिः करोतिकर्मा । जगतः कर्ता यज्ञादेव जगदुत्पत्तेः । यस्य नराशंसस्य रथः सरस्वत्या अश्विभ्यां च ईयते नीयते ऊह्यते । वसु० व्याख्यातम् ॥ ५५ ॥

## षट्पञ्चाशी ।

देवो देवैर्वनस्पतिर्हिरण्यपर्णो अश्विभ्याᳬं सरस्वत्या सुपिप्पल इन्द्राय पच्यते मधु । ओजो न जूतिर्ऋषभो न भामं वनस्पतिर्नो दधदिन्द्रियाणि वसुवने वसुधेयस्य व्यन्तु यज ॥ ५६ ॥

**उ०** देवो देवैः । यो देवो वनस्पतिर्यूपः । देवैर्हिरण्यपर्णः यस्य देवा हिरण्मयानि पर्णानि । रूपकोऽत्रालंकारः । यश्च अश्विभ्यां सरस्वत्या च सुपिप्पलः । अश्विनौ सरस्वती च यस्य वनस्पतेः फलानीत्यर्थः । इन्द्राय इन्द्रार्थं च यः पच्यते फलति मधु मधुराणि फलानि । स वनस्पतिः ऋषभः । ऋषभशब्दः पूजावचनः । पूज्यः । जूतिः जूति-

जवतेः । वेगवान् । ओजश्च भामं च । भामशब्दः क्रोधवचनः। इन्द्रियाणि च नः अस्माकम् । 'अस्मदो द्वयोश्च' इति बहुवचनम् । दधत् दधातु । वसुवने इति व्याख्यातम् ॥ ५६ ॥

**म०** वनस्पतिर्देवो नोऽस्माकमोजः तेजः जूतिः जूतिं जवं वेगं भामं क्रोधमिन्द्रियाणि च दधत् दधातु । यो वनस्पतिर्यूपः इन्द्राय मधु मधुरं फलं पच्यते पचति फलति इन्द्राय फलं ददाति । नकारौ चार्थौ । कीदृशो वनस्पतिः । देवैर्हिरण्यपर्णः हिरण्यरूपाणि पर्णानि यस्य । देवा यस्य हिरण्मयानि पर्णानीत्यर्थः । अश्विभ्यां सरस्वत्या च सुपिप्पलः शोभनं पिप्पलं फलं यस्य सः । अश्विनौ सरस्वती च यस्य वनस्पतेः फलानीत्यर्थः । ऋषभः पूज्यः । ऋषभशब्दः पूजावचनः । वसु० व्याख्यातम् ॥ ५६ ॥

## सप्तपञ्चाशी ।

देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदाः सरस्वत्या स्योनमिन्द्र ते सदः । ईशायै मन्युᳬं राजानं बर्हिषा दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥ ५७ ॥

**उ०** देवं बर्हिः । यस्माद्देवं बर्हिः वारितीनाम् उदकवतीनां वा वारिप्रभवाणां वा वरतराणां वा ओषधीनां संबन्धि । अध्वरे स्तीर्णम् अश्विभ्यामध्वर्युभ्याम् ऊर्णम्रदाः ऊर्णेव मृदु । सरस्वत्या च । स्तीर्णमित्यनुवर्तते । तस्मात् स्योनं सुखरूपम् । हे इन्द्र, तव सदः स्थानम् । किंच तस्मिन्सदसि । ईशायै ईशिताय ऐश्वर्याय मन्युं क्रोधम् त्वां राजानम् इन्द्रियं च अश्विनौ च सरस्वती च बर्हिषा दधुः । यद्वा ईशानाय तव मन्युं राजानमिन्द्रियं च । अश्विनौ सरस्वती च हविषा दधुः । वसुवन इति व्याख्यातम् ॥५७॥

**म०** हे इन्द्र, वारितीनां वारि जले इतिर्गतिर्यासां ता वारितयः तासां जलोद्भवानामोषधीनां संबन्धि बर्हिः ते तव सदः सदसि अध्वरे यज्ञे अश्विभ्यां सरस्वत्या च स्तीर्णमास्तृतम् । कीदृशं बर्हिः । देवं दीप्यमानम् ऊर्णम्रदाः ऊर्णमिव म्रदीयः । छान्दस ईयोलोपः । अतएव स्योनं सुखरूपम् । किंच अश्विसरस्वत्यः बर्हिषा सह राजानं दीप्यमानं मन्युं क्रोधमिन्द्रियं च हे इन्द्र, त्वयि दधुः । किमर्थम् । ईशायै ऐश्वर्याय ईशनमीशा तस्यै 'गुरोश्च हलः' (पा० ३।३।१०३) इति स्त्र्यधिकारे ईशतेरप्रत्ययः स्त्रीत्वादाप् । वसु० व्याख्यातम् ॥ ५७ ॥

## अष्टपञ्चाशी ।

देवो अग्निः स्विष्टकृद्देवान्यक्षद्यथायथᳬं होताराविन्द्रमश्विना वाचा वाचᳬं सरस्वतीमग्निᳬं सोमᳬं स्विष्टकृत्स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः स्विष्टा देवा आज्यपाः स्विष्टो अग्निरग्निना होता होत्रे स्विष्टकृद्यशो न दधदिन्द्रियमूर्जमपचितिᳬं स्वधां वसुवने वसुधेयस्य व्यन्तु यज ॥ ५८ ॥

**उ०** देवो अग्निः । यो देवो अग्निः स्विष्टकृत् शोभनमिष्टं कर्तव्यमित्ययमधिकारो यस्य स तथोक्तः । देवान् यक्षत् इष्टवान् । यथायथम् यथास्वं यथायथम् । यो यथा यष्टव्यः स तथेत्यर्थः । एवं सामान्यत उक्त्वा अथेदानीं विशेषत आह । होतारौ अयं चाग्निरसौ च मध्यमो वायुः होतृमित्रावरुणौ वा । इन्द्रं च अश्विनौ च वाचं कृत्वा वाचं च सरस्वतीं च अग्निं च सोमं च यक्षदिति संबन्धः । स्विष्टकृच्च स्विष्टः शोभनमिष्टः इन्द्रः सुत्रामा च इष्टः सविता इष्टः वरुणो भिषक् इष्टश्च देवो वनस्पतिः । स्विष्टा देवा आज्यपाः प्रयाजानुयाजाः इष्टश्चाग्निरग्निना । अथेदानीं होता स्विष्टकृत् होत्रे मानुषाय । यशो न दधत् । ददात्यर्थे दधातिः । ददातु । इन्द्रियं च ऊर्जं च अपचितिं पूजां च स्वधामन्नं च । वसुवने इति व्याख्यातम् ॥ ५८ ॥

**म०** शोभनमिष्टं यागं करोतीति स्विष्टकृत् अग्निर्देवो यथायथं यथास्वं यो यथा यष्टव्यस्तथा देवान् वक्ष्यमाणान् यक्षत् इष्टवान् । कान् देवानत आह । होतारौ अयं चाग्निरसौ च मध्यमो वायुः होतृमैत्रावरुणौ वा इन्द्रम् अश्विना अश्विनौ च वाचा मन्त्रेण वाचं च यक्षत् सरस्वतीमग्निं सोमं च । किंच स्विष्टकृत् शोभनयज्ञकारी सुत्रामा शोभनरक्षकः । मनिन्प्रत्ययः । इन्द्रः स्विष्टः सुष्ठु इष्टः सविता वरुणो भिषगिष्टः वनस्पतिर्देवश्च इष्टः । आज्यपा देवाः प्रयाजानुयाजाः स्विष्टाः । अग्निरधिष्ठाता अग्निना भौमेन हविर्द्वारा सुष्ठु इष्टः । किंच होता दैव्यः स्विष्टकृत् होत्रे मानुषाय यशः इन्द्रियमूर्जमन्नमपचितिं पूजां स्वधां पित्रर्थमन्नं दधत् ददातु । नकारश्चार्थः । वसुवननाय वसुधनाय च देवा व्यन्तु हविरदन्तु । मनुष्यहोतर्यज ॥ ५८ ॥

## एकोनषष्टी ।

अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशान्बध्नन्नश्विभ्यां छागᳬं सरस्वत्यै मेषमिन्द्राय ऋषभᳬं सुन्वन्नश्विभ्याᳬं सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् ॥ ५९ ॥

**उ०** अग्निमद्य । सूक्तवाकप्रैषः । अग्निम् अद्य अस्मिन्द्यवि होतारम् अवृणीत वृतवानयं यजमानः । किं कुर्वन् । पचन् पक्तीः । पक्तव्यानि वसूनि इति सामान्यवचनम् । अथ विशेषः । पचन् पुरोडाशान् पशुपुरोडाशान् । बध्नन् पशुं यूपे इति शेषः । अश्विभ्यां छागम् अश्विनोरर्थे छागम् सरस्वत्यै

मेषम् इन्द्राय च ऋषभम् । अन्यच्च सुन्वन् अश्विभ्यां सरस्वत्यै च इन्द्राय च सुत्राम्णे सुरासोमान् । तानि च वस्तूनि कुतोऽन्ययजमानः अग्निं होतारमवृणीतेति संबन्धः ॥ ५९ ॥

**म०** 'अग्निमद्येति सूक्तवाकप्रैषः' (का० १९ । ७ । १०)। अग्निमद्य होतारमित्यादिः सूक्ता ब्रूहीत्यन्तः कण्डिकात्रयात्मकः सूक्तवाके प्रैषो भवति । लिङ्गोक्तदेवतः प्रैषः । प्रथमा अष्टिः द्वितीया धृतिः तृतीया विकृतिः । अयं यजमानोऽद्य अग्निं होतारमवृणीत वृतवान् । वृणातेर्लङ् । किं कुर्वन् । पक्तीः पक्तव्यानि हवींषि पचन् । सामान्येनोक्त्वा विशेषमाह । पुरोडाशान्पचन् अश्विभ्यामश्विनोरर्थे छागं बध्नन् । यूपे इति शेषः । सरस्वत्यै मेषं बध्नन् इन्द्राय ऋषभं च बध्नन् तथा अश्विभ्यां सरस्वत्यै सुत्राम्णे रक्षकाय इन्द्राय च सुरा सोमान्सुन्वन् अग्निमवृणीत ॥ ५९ ॥

## षष्टी ।

सूपस्था अद्य देवो वनस्पतिरभवदश्विभ्यां छागेन, सरस्वत्यै मेषेणेन्द्राय ऋषभेणाक्षँस्तान्मेदस्तः, प्रति पचताग्रभीषतावीवृधन्त पुरोडाशैरपुरश्विना सरस्वतीन्द्रः सुत्रामा सुरासोमान्, ॥ ६० ॥

**उ०** सूपस्था अद्य । साधुयज्ञमुपतिष्ठति इति सूपस्थाः अद्यास्मिन्नहनि देवः वनस्पतिः अभवत् । अश्विभ्यां छागेन सरस्वत्यै च मेषेण इन्द्राय च ऋषभेण । कथमेवमवगम्यत इत्यत आह । अक्षंस्तान् भक्षितवन्तः अश्विप्रभृतयः तान् छागादीन् । कुत आरभ्येत्याह । मेदस्तः वपाया आरभ्य । प्रतिपचताग्रभीषत । प्रत्यग्रभीषत प्रतिगृहीतवन्तः । पचता पक्वानि अग्निपक्वानि अवदानानि । अवीवृधन्त च पुरोडाशैः । किंच । अपुः पीतवन्तः अश्विनौ च सरस्वती च इन्द्रश्च सुत्रामा । सुरासोमान् सुरा च सोमाश्च । यद्वा सुरामयान्सोमान् ॥ ६० ॥

**म०** अद्य वनस्पतिर्देवः छागेन कृत्वा अश्विभ्यां सूपस्था अभवत् सुष्ठु उपतिष्ठते सेवते सूपस्थाः । छागेनाश्विनोः सेवां चकारेत्यर्थः । मेषेण सरस्वत्यै सूपस्था अभवत् । ऋषभेण इन्द्राय सूपस्था अभवत् । वनस्पतिना छागमेषर्षभैरश्व्यादीनामुपस्थानं कृतं तत्कथं ज्ञायते तत्राह । अश्व्यादयो मेदस्तः मेदो वपामारभ्य तान् छागादीन् अक्षन् अभक्षयन् । पुनः पचता पच्यन्ते तानि पचता पचतानि पक्वानि अवदानानि प्रत्यग्रभीषत प्रत्यगृह्णन् । पचतेः 'सृदशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच्' ( उणा० ३ । १०९ ) इत्यतच्प्रत्ययः । 'भूतेऽपि दृश्यन्ते' ( पा० ३ । ३ । २ ) इति वचनाद्भूतेऽपि द्रष्टव्यः । विभक्तेराकारः । पुनस्ते पुरोडाशैरवीवृधन्त ऐधन्त । किंच अश्विना सरस्वती सुत्रामा इन्द्रश्च सुरासोमानपुः पीतवन्तः । पातेर्लङ् पिबादेशाभावश्छान्दसः । ररक्षुर्वा । सुराश्च सोमाश्च तान् सुरामयान् सोमान् वा ॥ ६० ॥

## एकषष्टी ।

त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ सङ्गतेभ्य, एष मे देवेषु वसु वार्यायक्ष्यत इति, ता या देवा देव दानान्यदुस्तान्यस्मा आ च शास्स्वा च गुरस्वेषितश्च होतरसि, भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय, सूक्ता ब्रूहि ॥ ६१ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायामेकविंशोऽध्यायः ॥ २१ ॥

**उ०** त्वामद्य । दैव्यो होताग्निरुच्यते । त्वाम् अद्य हे ऋषे मन्त्राणां द्रष्टः, हे आर्षेय, यजमान आर्षेयैर्व्रियते इत्येवं संबोध्यते । हे ऋषीणामृत्विजांनपात् पुत्र, अवृणीत वृतवान् अयं यजमानः । बहुभ्यो देवेभ्यः आसङ्गतेभ्यः त्वामेव अवृणीतेत्यभिप्रायः । किमर्थम् । एषः मे मह्यम् देवेषु वसु धनम् वारि वरणीयम् आयक्ष्यते आदास्यति अयं दातुं समर्थ इति । एवंच । ता या देवदानान्यदुः । ता तानि । या यानि । हे देव, यानि देवा दानानि अदुः दत्तवन्तः इमानि अस्मै यजमानाय दातव्यानीति । तानि अस्मै यजमानाय । आच शास्स्वाच गुरस्व । आकारौ भिन्नक्रमौ । आशास्स्व च इच्छ । आगुरस्व च 'गुरी उद्यमने' । उद्यच्छ च । दानाय प्रेषितश्चासि । हे होतः, भद्रवाच्याय भन्दनीयवचनाय । भद्रं च वचनं त्वं ब्रूया इति । अथेदानीं प्रेषितो मानुषो होता सूक्तवाकाय । कथं कृत्वा सूक्ता ब्रूहि । सूक्तानि साधुवचनानि वद इति ॥ ६१ ॥ समाप्ता सौत्रामणी ।

इति उवटकृतौ मन्त्रभाष्ये एकविंशोऽध्यायः ॥ २१ ॥

**म०** दैव्यो होता अग्निरुच्यते । हे ऋषे मन्त्राणां द्रष्टः, हे आर्षेय, यजमानार्षेयैर्व्रियत इत्येवं संबोध्यते । हे ऋषीणां नपात् पुत्र, अयं यजमानः बहुभ्यः सङ्गतेभ्यः मिलितेभ्यो देवेभ्य इति हेतोरथ त्वामेव आ अवृणीत सम्यग् वृतवान् । इति किम् । एषोऽग्निर्मे मह्यं देवेषु वारि वरीतुं योग्यं वारि वरणीयं वसु धनमायक्ष्यते आदास्यते । यजतेर्दानार्थाल्लृट् । मया देवेभ्यो दातुं ग्रहीष्यते इत्यर्थः । किंच हे देव अग्ने, या यानि ता तानि दानानि देवा अदुः दत्तवन्तः तानि दानानि अस्मै यजमानाय आशास्स्व च इच्छ । तानि यजमानाय दातव्यानीति इच्छेत्यर्थः । आगुरस्व च उद्यच्छ । 'गुरी उद्यमे' तुदादिः । दानायोद्यमं कुरु । आकारौ चकारौ च भिन्नक्रमौ । हे होतः, त्वमिषितः प्रेषितोऽसि प्रेरितोऽसि । कथं तदाह । भद्रवाच्याय वक्तुं योग्यं वाच्यं भद्रं शुभं च तत् वाच्यं च भद्रवाच्यं तस्मै । भद्रं ब्रूहीति प्रेषितोऽसीत्यर्थः । किंच सूक्ता सूक्तानि त्वं ब्रूहि इति सूक्तवाकाय सूक्तवचनाय सूक्तानि वक्तुं मानुषः होता च प्रेषितोऽस्ति ॥ ६१ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
एकविंशोऽयमध्यायो याज्यादिप्रेषणान्तिमः ॥ २१ ॥

## द्वाविंशोऽध्यायः ।

### तत्र प्रथमा ।

तेजो॑ऽसि शु॒क्रम॒मृत॑मायु॒ष्पा आयु॑र्मे पाहि । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्यामाद॑दे ॥ १ ॥

उ० अथाश्वमेधश्चतुर्भिरध्यायैः । तं प्रजापतिरपश्यत् । तेजोसि । सौवर्णं निष्कं प्रतिमुञ्चन्वाचयति । यस्मात्तेजस्त्वमसि शुक्रं चाग्नेः 'अग्निर्हवा अपोऽभिदध्यौ' इत्युपक्रम्य 'तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्' इति श्रुतेः । अमृतं च अग्निप्रभवत्वात् दानेनामृतत्वप्रदानाच्च । 'हिरण्यदा अमृतत्वं भजन्ते' इति श्रुतेः । आयुषश्च पाता गोपायिता । अतः त्वां प्रार्थये । आयुः मे मम पाहि । यज्ञसमाप्त्यर्थमायुः प्रार्थ्यते । रशनामादत्ते । देवस्य त्वेति व्याख्यातम् ॥ १ ॥

म० सर्वकामस्य राज्ञोऽश्वमेधः तस्य फाल्गुनशुक्लाष्टम्यामारम्भः । 'निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति' ( का० २० । १ । ९ ) । चतुःसुवर्णनिर्मित आभरणविशेषो निष्कः । तं यजमानकण्ठे प्रतिबध्नन्नध्वर्युस्तेजोऽसीति मन्त्रं पाहीत्यन्तं वाचयति । तं च निष्कं प्रातर्होमान्ते पूर्णाहुतिं कृत्वाध्वर्यवे दद्यादिति सूत्रार्थः । चत्वारोऽध्याया अश्वमेधमन्त्रास्तेषां प्रजापतिर्ऋषिः । तेजोऽसीत्यस्य सौवर्णं निष्कं देवता । प्राजापत्यानुष्टुप् । हे निष्क, तेजोऽसि आग्नेयत्वात् । शुक्रमग्नेर्वीर्यं चासि । 'अग्निर्ह वाऽपोऽभिदध्यौ' इत्युपक्रम्य 'तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्' इति श्रुतेः । अमृतं च वह्नितापेऽनुच्छिद्यमानद्रवत्वाधिकरणत्वात् दानेनामृतत्वप्रदानाच्च 'हिरण्यदा अमृतत्वं भजन्ते' इति श्रुतेः । आयुष्पाः आयुः पातीति आयुषो गोपायिता । अतो याचे मे ममायुः पाहि रक्ष । यज्ञसमाप्तिपर्यन्तमायुः प्रार्थ्यते 'देवस्य त्वेति रशनामादाय ब्रह्मन्नश्वं भन्त्स्यामीत्याह' ( का० २० । १ । २७ ) इति । देवस्यत्वेत्यादि-सरमारपन्तीत्यन्तेन मन्त्रेण त्रयोदशारत्निं दर्भमयीं द्विगुणामश्वबन्धनार्थां रशनां रज्जुमादाय ब्रह्मन्नश्वमित्यादि-तेनराध्यासमित्यन्तं मन्त्रं ब्रह्माणं प्रत्याहेति सूत्रार्थः । देवस्य त्वेति व्याख्यातम् ( अ० ११ क १० ) ॥ १ ॥

### द्वितीया ।

इ॒माम॑गृभ्णन्रश॒नामृ॒तस्य॒ पूर्व॒ आयु॑षि वि॒दथे॑षु क॒व्या । सा नो॑ अ॒स्मिन्सु॒त आब॑भूव ऋ॒तस्य॒ साम॑न्स॒रमा॒ऽऽरप॑न्ती ॥ २ ॥

उ० इमामगृभ्णन् । त्रिष्टुब्रशनादेवत्या । यामिमाम् अगृभ्णन्नगृह्णन् गृहीतवन्तः रशनां दर्भमयीम् । ऋतस्य यज्ञस्य पूर्वे प्रथमे आयुषि । यज्ञारम्भे इत्यर्थः । के रशनामगृह्णन्नित्यत आह । विदथेषु कव्या यज्ञेषु कवयः । विश्वस्रष्टारो वा आद्ये सर्गे प्रजापतिप्रभृतयः । एते हि सृष्टिं यज्ञादसृजन्त । सा रशना नः अस्माकम् अस्मिन्सुते यज्ञे आबभूव आभूता उत्पन्ना । ऋतस्य सामन् संमनने यज्ञप्रारम्भे । सरं यज्ञप्रसरम् । आरपन्ती शब्दायमाना ॥ २ ॥

म० यज्ञपुरुषदृष्टा रशनादेवत्या त्रिष्टुप् । सवनं सुतं यज्ञः भावे क्तः । नोऽस्माकमस्मिन् सुते यज्ञे सा रशना आबभूव उत्पन्ना । कीदृशी । ऋतस्य यज्ञस्य सामन् साम्नि समारम्भे सरं प्रसरं यज्ञप्रसारमारपन्ती 'रप उक्तौ' उच्चारयन्ती । यज्ञप्रसारो भवत्विति वदन्तीत्यर्थः । सा का । विद्यते लभ्यते स्वर्गो यैस्ते विदथा यज्ञाः । विदथेषु यज्ञेषु 'विदेरथक्' इत्यथक्प्रत्ययः । कव्या कवयः विभक्तेर्ड्यादेशः 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्यादिना । यज्ञेषु कुशलाः प्रजापत्यादयो यामिमां रशनामृतस्य यज्ञस्य पूर्वे प्रथमे आयुषि प्रारम्भे इत्यर्थः । अगृभ्णन् अगृह्णन् या पूर्वैर्गृहीता सा रशनात्रोद्भूतेत्यर्थः ॥ २ ॥

### तृतीया ।

अ॒भि॒धा अ॑सि॒ भुव॑नमसि य॒न्तासि॑ ध॒र्ता । स त्वम॒ग्निं वै॑श्वान॒रꣳ सप्र॑थसं गच्छ॒ स्वाहा॑कृतः ॥ ३ ॥

उ० बध्नात्यश्वम् अभिधासि । यस्त्वम् अभिधा असि अभिधातव्योऽसि । भुवनं चासि । भुवनमाश्रयः यन्ता नियमनकर्ता चासि । धर्ता धरयिता चासि । स त्वमेवंप्रभावः सन् । अग्निं वैश्वानरम् । कथंभूतम् । सप्रथसं सर्वतः पृथुम् । तिर्यगूर्ध्वमधश्चैव महतैश्वर्येण पृथुम् । गच्छ । स्वाहाकृतः साधुहुतश्च सन् ॥ ३ ॥

म० 'तं बधानेति ब्रह्मानुज्ञातोऽभिधा असीति । बध्नात्यश्वम्' (का० २० । १ । २८ )तं बधान देवेभ्यः प्रजापतये तेन राध्नुहीति मन्त्रेण ब्रह्मणानुज्ञातोऽध्वर्युरभिधा असीत्यादि-स्वगात्वा-देवेभ्यः-प्रजापतय इत्यन्तेन मन्त्रेण रशनयाश्वं बध्नाति । लिङ्गोक्तदेवतानि यजूंषि अश्वो देवतायस्य । हे अश्व, यस्त्वमभिधा असि अभिधीयते स्तूयत इत्यभिधाः क्विप् । भुवनं सर्वेषामाश्रयश्चासि यन्ता नियमनकर्ता चासि धर्ता जगद्धारयिता च । स एवंविधः त्वं स्वाहाकृतः स्वाहाकारेण कृतः हुतः सन् अग्निं गच्छ प्राप्नुहि । कीदृशमग्निम् । वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितम् । सप्रथसं प्रथतेरसुन्प्रत्ययः । प्रथनं प्रथो विस्तारस्तत्सहितम् । यद्वा सर्वतस्तिर्यगूर्ध्वमधश्च प्रथते सप्रथाः तम् । सर्वतःशब्दस्य सादेशः ॥ ३ ॥

### चतुर्थी ।

स्व॒गा त्वा॑ दे॒वेभ्यः॑ प्र॒जाप॑तये ब्रह्म॒न्नश्वं॑ भ॒न्त्स्यामि॑ दे॒वेभ्यः॑ प्र॒जाप॑तये॒ तेन॑ राध्यासम् । तं ब॑धान दे॒वेभ्यः॑ प्र॒जाप॑तये॒ तेन॑ राध्नुहि ॥ ४ ॥

उ० स्वगा त्वा । हे अश्व, स्वगाकरोमि त्वां देवेभ्यः प्रजापतये च । स्वगाशब्दो डाजन्तः । स्वयंगामिनमित्यर्थः ।

ब्रह्माणमामन्त्रयते । ब्रह्मन्नश्वं भन्त्स्यामि । बध्नातेरेतद्रूपम् । अश्वस्य बन्धनं करिष्यामि । देवेभ्यः प्रजापतये च । तेन बद्धेनाहं राध्यासं राधिं प्राप्नुयाम् । राधिः कर्मपरिसमाप्तिः । ब्रह्मा प्रसौति । तं बधान यमिच्छसि तमश्वं बधान । तस्य बन्धनं कुरु । किमर्थम् । देवेभ्यः प्रजापतये च । तेन बन्धेन राध्नुहि यज्ञसमाप्तिं प्राप्नुहीत्यर्थः ॥ ४ ॥

**म०** हे अश्व, त्वा त्वां देवेभ्यः प्रजापतये च देवार्थं प्रजापत्यर्थं च स्वगा करोमीति शेषः । स्वेनैव गच्छतीति स्वगा। डाजन्तः विभक्तेर्डादेशो वा । स्वयंगामिनमित्यर्थः । ब्रह्मन्नश्वम् ब्रह्मा देवता ब्रह्माणमामन्त्रयते । हे ब्रह्मन्, अश्वं भन्त्स्यामि बन्धनं करिष्यामि । बध्नातेर्लृटि स्यपि 'एकाचो बशः' ( पा० ८।२।३७ ) इति भष्त्वम् । किमर्थम् । देवेभ्यः प्रजापतये च तेनाश्वबन्धेनाहं राध्यासं 'राध संसिद्धौ' सिद्धिं कर्मसमाप्तिरूपां प्राप्नुयाम् । आशीर्लिङ् । ब्रह्मा प्रसौति तं बधान अध्वर्युदैवतं यजुः । हे अध्वर्यो, यं बन्द्धुमिच्छसि तमश्वं बधान । किमर्थम् । देवेभ्यः प्रजापतये च तेनाश्वबन्धनेन राध्नुहि सिद्धिं यज्ञसमाप्तिलक्षणां प्राप्नुहि । राधेः स्वादित्वाल्लोटि श्नुप्रत्ययः ॥ ४ ॥

## पञ्चमी ।

प्र॒जाप॑तये त्वा॒ जुष्टं॒ प्रोक्षा॑मीन्द्रा॒ग्निभ्यां॑ त्वा॒ जुष्टं॒ प्रोक्षा॑मि वा॒यवे॑ त्वा॒ जुष्टं॒ प्रोक्षा॑मि विश्वे॑भ्यस्त्वा दे॒वेभ्यो॒ जुष्टं॒ प्रोक्षा॑मि॒ सर्वे॑भ्यस्त्वा दे॒वेभ्यो॒ जुष्टं॒ प्रोक्षा॑मि । यो अर्व॑न्तं॒ जिघा॑ᳪसति॒ तम॒भ्य॑मीति॒ वरु॑णः प॒रो मर्तः॑ प॒रः श्वा ॥ ५ ॥

**उ०** प्रोक्षत्यश्वम् । प्रजापतये त्वा जुष्टं प्रोक्षामीति । ऋजवः प्रोक्षणमन्त्राः। यजमानं वाचयति। यो अर्वन्तम् । गायत्री अर्धेनाश्वस्तुतिः। यःपुरुषोऽर्वन्तं अश्ववचनोर्वशब्दः । अश्वं जिघांसति हन्तुमिच्छति । तम् अभ्यमीति । 'मी हिंसायाम्' हिनस्ति वरुणः श्वानं चतुरक्षम् हत्वाऽधस्पदमश्वस्योपप्लावयति । 'यस्य शुनश्चक्षुषोः समीपे पुण्ड्रे स्तः स चतुरक्ष उच्यते' परो मर्तः । परः पराभूतः अधस्पदं नीतः मर्तो मनुष्यः यो अर्वन्तं जिघांसतीति । परः पराभूतश्च श्वा ॥५॥

**म०** 'स्थावरा अपो गत्वा प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम्' ( का० २०।१।३७ ) । ततोऽध्वर्युः स्थावरास्तडागादिस्था अपो गत्वा ताभिरद्भिः पञ्चमन्त्रैः प्रतिमन्त्रमश्वं प्रोक्षति । लिङ्गोक्तदेवतानि पञ्च यजूंषि । हे अश्व, प्रजापतये जुष्टं त्वा त्वां प्रोक्षामि सिञ्चामि । अनेन प्रोक्षणेन प्रजापतेरिवाश्वे वीर्यं दधाति । तथाच श्रुतिः 'प्रजापतिर्वै देवानां वीर्यवत्तमो वीर्यमेवास्मिन्दधाति तस्मादश्वः पशूनां वीर्यवत्तमः' ( १३।१।२।५ ) इति । इन्द्राग्निभ्यां जुष्टं त्वां प्रोक्षामि । अनेनेन्द्राग्न्योरिवाश्वे ओजो दधाति । तथाच श्रुतिः 'इन्द्राग्नी वै देवानामोजस्वितमा ओज एवास्मिन् दधाति तस्मादश्वः पशूनामोजस्वितमः' ( १३।१।२।६ ) इति । वायवे जुष्टं प्रीतं त्वां प्रोक्षामि । अनेन वायोरिवाश्वे वेगं दधाति । तथाच श्रुतिः 'वायुर्वै देवानामाशिष्ठो जवमेवास्मिन्दधाति तस्मादश्वः पशूनामाशिष्ठः' ( १३।१।२।७ ) इति । आशिष्ठो वेगवत्तरः । विश्वेभ्यो देवेभ्यो जुष्टं त्वां प्रोक्षामि अनेनाश्वे यशो दधाति 'विश्वे वै देवा यशस्वितमा यश एवास्मिन्दधाति तस्मादश्वः पशूनां यशस्वितमः' ( १३।१।२।८ ) इति श्रुतेः । सर्वेभ्यो देवेभ्यो जुष्टं त्वां प्रोक्षामि। अनेन सर्वा देवता अश्वे दधाति । 'सर्वेभ्यस्त्वा देवभ्यो जुष्टं प्रोक्षामीति सर्वा एवास्मिन्देवता अश्वे अन्वायातयति' ( १३।१।२।९ ) इति श्रुतेः । 'यो अर्वन्तमिति वाचयति' ( का० २०।२।१ ) । शूद्रावैश्यायां जातेन पुंसा अध्वर्युप्रेरितेन चतुर्नेत्रे शुनि खादिरमुसलेन हते सति यो अर्वन्तमित्यादि-वरुण-इत्यन्तं मन्त्रं यजमानं वाचयति । गायत्री पूर्वार्धेऽश्वस्तुतिः परेऽर्धे लिङ्गोक्तदेवता । यः अर्वन्तमश्वं जिघांसति हन्तुमिच्छति 'अर्वणस्त्रसावनञः' ( पा० ६।४।१२७ ) इति त्रन्तादेशः । हन्तेः सन्नन्ताल्लट् । वरुणः तमश्वं जिघांसन्तमभ्यमीति हिनस्ति 'अम् हिंसायाम्' एतस्य लटि 'तुरुस्तुशम्यमः' (पा० ७।३।९५) इति ईप्रत्ययः । 'वेतसकटेनाधोऽश्वं प्लावयति परो मर्त इति' ( का० २०।२।४ ) । वेतसतरुकृतेन कटेन मृतं श्वानमश्वाधो जले तारयति । अश्वं जिघांसुर्मर्तो मनुष्यः परः पराभूतः अधसदं नीतः श्वा च परः पराकृतः । श्वरूपेणाश्वहन्तेव पराकृत इत्यर्थः ॥ ५ ॥

## षष्ठी ।

अ॒ग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहा॒पां मोदा॑य॒ स्वाहा॑ सवि॒त्रे स्वाहा॑ वा॒यवे॒ स्वाहा॒ विष्ण॑वे॒ स्वाहेन्द्रा॑य॒ स्वाहा॒ बृह॒स्पत॑ये॒ स्वाहा॑ मि॒त्राय॒ स्वाहा॒ वरु॑णाय॒ स्वाहा॑ ॥ ६ ॥

**उ०** दशाश्वस्तोमीयानि जुहोति । अग्नये स्वाहेति ऋजवो मन्त्राः ॥ ६ ॥

**म०** 'अग्निसमीपमानीयाग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रᳪ सहस्रं वावर्तम्' ( का० २०।२।३।४ ) । ततः स्थावराभ्योऽद्भ्यः सकाशादश्वमग्निपार्श्वमानीयाग्नये स्वाहेत्येककण्डिकात्मकेनानुवाकेन प्रतिमन्त्रं सकृद्गृहीत्वा जुह्वा स्तोकीयसंज्ञा दशाज्याहुतीर्जुहोति यद्वानुवाकमावर्त्यावर्त्य सहस्रमाज्याहुतीर्जुहोतीति सूत्रार्थः । दश यजूंषि लिङ्गोक्तदेवतानि । अङ्गतीत्यग्निः । सुनोतीति सोमः । अपां जलानां मोदाय मोदयति हर्षयति मोदः । सूते सविता । वातीति वायुः । वेवेष्टि व्याप्नोति विष्णुः । इन्दतीतीन्द्रः । बृहतां वेदानां पतिर्बृहस्पतिः । मियति स्निह्यति मित्रः । वृणोति भक्तं भजते वरुणः । एताभि-

राहुतिभिरेतेभ्यो दश देवेभ्योऽश्वं ददाति। तथाच श्रुतिः 'एतावन्तो वै सर्वे देवास्तेभ्य एवैनं जुहोतीति' (१३।१।३।३)॥ ६॥

## सप्तमी।

हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा-वक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा संदिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा सꣳहानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा॥ ७॥

उ० अश्वस्य रूपाणि जुहोति। हिंकाराय स्वाहेति। एकोनपञ्चाशत्। अश्वस्य चेष्टितानि क्रियाश्चात्राभिधीयन्ते॥७॥

म० 'दक्षिणाग्नौ जुहोति हिङ्काराय स्वाहेति प्रक्रमान्' (का० २०।३।३)। एतदर्थमेवोद्धृते दक्षिणाग्नौ प्रतिमन्त्रं प्रक्रमसंज्ञान्होमानेकोनपञ्चाशज्जुहोतीत्यर्थः। अश्वस्यैकोनपञ्चाशच्चेष्टितानि व्यापाराः कण्डिकाद्वयेन। हिङ्करणं हिङ्कारस्तस्मै। हिङ्कृताय कृतं यद्धिङ्कृतं तस्मै। क्रन्दतीति क्रन्दन्। अव नीचैः क्रन्दतीत्यवक्रन्दः। प्रोथतीति प्रोथन् 'प्रोथृ पर्याप्तौ'। प्रकृष्टः प्रोथो घोणा यस्य 'घोणा तु प्रोथमस्त्रियाम्'। गन्धोऽस्यास्ति गन्धः। घ्रातमाघ्राणमस्यास्ति घ्रातः। निविशते निविष्टः। उपविशतीत्युपविष्टः। सम्यक् दितं लूनं खण्डनं यस्य स संदितः। वल्गतीति वल्गन्। आस्तेऽसावासीनः। शेतेऽसौ शयानः। स्वपिति स्वपन्। जाग्रतीति जाग्रत्। कूजतीति कूजन्। प्रकर्षेण बुध्यते प्रबुद्धः। विजृम्भते विजृम्भमाणः। 'चृती दीप्तौ' विशेषेण चर्ततीति विचृतः। संहानाय सङ्गतशरीराय। उपतिष्ठते उपस्थितः। अयतेऽयनः। प्रकृष्टमयते प्रायणः तस्मै स्वाहा॥ ७॥

## अष्टमी।

यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहेक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा कुर्वते स्वाहा कृताय स्वाहा॥ ८॥

उ० यते स्वाहा एतीति यन् तस्मै यते। स्पष्टमन्यत्॥८॥

उ० एतीति यन्। धावतीति धावन्। उत् अधिको द्रावो गतिर्यस्य स उद्द्रावः। उत् अधिकं द्रुतं यस्य स उद्द्रुतः। शू इति करोतीति शूकारः। शूकृतमस्यास्ति शूकृतः। निषीदति निषीदन्। उत्तिष्ठते उत्थितः। जवते जवो वेगवान्। बलमस्यास्तीति बलः। विवर्तते स विवर्तमानः विवर्तते स्म विवृत्तः। विधूनुते कम्पते स विधून्वानः। विधूयतेऽसौ विधूतः। श्रोतुमिच्छति शुश्रूषमाणः 'ज्ञाश्रुस्मृदृशां सनः' (पा० १।३।५७) इति शानन्। शृणोति शृण्वन्। ईक्षते स ईक्षमाणः। ईक्षते स्मेति ईक्षितः। विशेषेणेक्षितो वीक्षितः। निमिषति निमेषः। यत्किंचित् अत्ति तस्मै। यत् जलादिकं पिबति तस्मै पानकर्त्रे। यन्मूत्रं करोति तस्मै मूत्रयते। करोति कुर्वन्। कृतमस्यास्ति कृतः। तस्मै स्वाहेति सर्वत्र। इत्येकोनपञ्चाशत् प्रक्रमाः॥ ८॥

## नवमी।

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ ९॥

उ० अथ सावित्रीणामिष्टीनाम्। तत्सवितुरित्यादिकाः षट् याज्यानुवाक्याः सावित्र्यो गायत्र्यः। आद्या व्याख्याता॥ ९॥

म० षड़ृचः सवितृदेवत्या गायत्र्यः सावित्रीणामिष्टीनां याज्यानुवाक्याः। आद्या व्याख्याता (अ० ३। क० ३५)॥ ९॥

## दशमी।

हिरण्यपाणिमूतये सवितारमुपह्वये। स चेत्ता देवता पदम्॥ १०॥

उ० हिरण्यपाणिमूतये हिरण्मयौ पाणी यस्य स हिरण्यपाणिः तम्। ऊतये अवनाय। सवितारम् उपह्वये आह्वयामि। किमिति। यतः सः सविता चेत्ता सर्वार्थदृक्। महती च देवता पदं च स्थानं च ज्ञानकर्मसमुच्चयकारिणाम्॥ १०॥

म० मेधातिथिदृष्टा। अहं सवितारमुपह्वये आह्वयामि। किमर्थम्। ऊतये अवनाय। कीदृशं सवितारम्। हिरण्यपाणिं हिरण्मयौ पाणी यस्य तम्। यतः स सविता चेत्ता चेतयिता सर्वज्ञः। देवता। पदं स्थानं ज्ञानिनाम्॥ १०॥

## एकादशी।

देवस्य चेततो महीं प्र सवितुर्हवामहे। सुमतिꣳ सत्यराधसम्॥ ११॥

उ० देवस्य चेततः । देवस्य दानादिगुणयुक्तस्य चेततः विराजमानस्य महीं महतीम् प्रहवामहे आह्वयामि । सवितुः संबन्धिनीं सुमतिं कल्याणीं मतिम् । किंभूतां मतिम् । सत्यराधसम् अनश्वरधनां सत्यसाधयित्रीं वा ॥ ११ ॥

म० वयं सवितुः देवस्य सुमतिं शोभनां बुद्धिं प्रहवामहे प्रकर्षेण प्रार्थयामहे । कीदृशस्य सवितुः । चेततः चेततीति चेतन् तस्य जानतः । कीदृशीं सुमतिम् । महीं महतीं सत्यराधसं सत्यमनश्वरं राधो धनं यस्यास्ताम् । यद्वा सत्यं राधयति साधयति सा सत्यराधास्ताम् ॥ ११ ॥

## द्वादशी ।

सुष्टुतिꣳ सुमतीवृधो रातिꣳ सवितुरीमहे । प्रदेवाय मतीविदे ॥ १२ ॥

उ० सुष्टुतिꣳ सुमतीवृधः । सुष्टुतिं शोभनां स्तुतिम् सुमतीवृधः शोभनां मतिं वर्धयतीति सुमतीवृत् तस्य सुमतीवृधः संबन्धिनीं रातिं दानं च सवितुः ईमहे याचेम । प्रदेवाय मतीविदे देवस्य मतीविदे देवस्य मतीविदः इत्युभयोः पदयोः विभक्तिव्यत्ययः ॥ १२ ॥

म० देवाय मतिविदे इति चतुर्थ्यौ षष्ठ्यर्थे । वयं सवितुर्देवस्य सुष्टुतिं शोभनां स्तुतिं रातिं दानं च प्र ईमहे प्रकर्षेण याचामहे । 'छन्दसि परेऽपि' ( पा० १ । ४ । ८१ ) इति क्रियापदात्परः प्रशब्दः । कीदृशस्य सवितुः । सुमतीवृधः शोभनां मतिं वर्धयति सुमतिवृत् तस्य । संहितायामिति दीर्घः । तथा मतीविदे सर्वेषां मतिं वेत्ति मतिवित् तस्य । पूर्ववद्दीर्घः ॥ १२ ॥

## त्रयोदशी ।

रातिꣳ सत्पतिं महे सवितारमुपह्वये । आसवं देववीतये ॥ १३ ॥

उ० रातिं सत्पतिम् । 'रा दाने' । रातिनिमित्तत्वाद्रातिशब्देन सवितैवोक्तः । रातिं दानरूपम् । यद्वा राति ददातीति रातिम् । सत्पतिं सतां पालयितारम् । महे पूजयामि । सवितारम् उपह्वये आह्वयामि च । आसवम् आभिमुख्ये प्रसौति कर्माणीत्यासवः तमासवं सवितारम् । किमर्थं पूजयाम्याह्वयामि च । देववीतये देवतर्पणाय ॥१३॥

म० अहं सवितारमुपह्वये आह्वयामि । महे पूजयामि च । 'मह पूजायाम्' । किमर्थम् । देववीतये देवानां तर्पणाय । कीदृशं सवितारम् । रातिं राति ददातीति रातिः तम् 'ऊतियूति–' ( पा० ३ । ३ । ९७ ) इत्यादिना कर्तरि क्तिप्रत्ययान्तो निपातः । सत्पतिं सतांपतिं पालकम् । आसवम् आभिमुख्येन सौति कर्मण्यनुजानाति आसवस्तम् । पचाद्यजन्तः ॥ १३ ॥

५४ य० उ०

## चतुर्दशी ।

देवस्य सवितुर्मतिमासवं विश्वदेव्यम् । धिया भगं मनामहे ॥ १४ ॥

उ० देवस्य सवितुः मतिम् । आसवम् प्रसवरूपम् । विश्वदेव्यं सर्वेभ्यो देवेभ्यो हितम् । धिया स्वकीयया प्रज्ञया भगं भजनीयं धनं मनामहे याचामि । द्विकर्मा चायं धातुः । तेन मतिशब्दे भगशब्दे च द्वितीया ॥ १४ ॥

म० सवितुर्देवस्य मतिं बुद्धिं प्रति वयं धिया बुद्ध्या भगं धनं मनामहे याचामहे । सवितुर्देवस्य बुद्धिरस्मासु दानतत्परा भवत्वित्यर्थः । कीदृशं भगम् । आसवम् आसौत्यनुजानाति येन आसवस्तम् । धनेन सर्वेषामाज्ञा दातुं शक्यत इत्यर्थः । विश्वदेव्यं विश्वेभ्यो देवेभ्यो हितम् । धनेनैव देवतर्पणादित्यर्थः ॥ १४ ॥

## पञ्चदशी ।

अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥ १५ ॥

उ० अग्निं स्तोमेन । तिस्र आग्नेय्यो गायत्र्यः । हे अध्वर्यो, अग्निं स्तोमेन स्तुतिभिः बोधय अवगतार्थं कुरु । किंकुर्वन् । समिधानः संदीपयन् । कथंभूतमग्निम् । अमर्त्यं अमरणधर्माणम् । किमर्थं पुरस्कृत्येति चेत् । हव्या हवींषि देवेषु नः अस्मत्संबन्धीनि दधत् दधातु । सद्यस्याधिकार इति ॥ १५ ॥

म० तिस्रः स्विष्टकृतिपुरोऽनुवाक्याः अग्निदेवत्या गायत्र्यो यथाक्रमं सुतंभरविश्वामित्रविश्वरूपदृष्टाः । हे अध्वर्यो, त्वं स्तोमेन स्तुत्वा अग्निं बोधय अवगतार्थं कुरु । किं कुर्वन् । समिधानः समिन्द्धे स समिधानः संदीपयन् । कीदृशमग्निम् । अमर्त्यं मरणधर्मरहितम् । सोऽग्निर्बोधितः सन्नोऽस्माकं हव्या हवींषि देवेषु दधत् धारयतु । अस्य सोऽधिकारोऽस्ति ॥ १५ ॥

## षोडशी ।

स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः । अग्निर्धिया समृण्वति ॥ १६ ॥

उ० स हव्यवाट् । यदोऽत्राध्याहारः तच्छब्दश्रवणात् । यः हव्यवाट् हविषो वोढा । अमर्त्यः अमरणधर्मा । उशिक् मेधावी । दूतः देवानाम् । चनो हितः । चन इत्यन्ननाम । हविर्भूतस्यान्नस्य भक्षणार्थं हितः निहितः । सः अग्निः धिया प्रज्ञया समृण्वति संगच्छते देवैः सह हविषः तर्पणाय ॥१६॥

म० सोऽग्निर्धिया बुद्ध्या समृण्वति संगच्छते देवैः सह हविर्दानाय । कीदृशोऽग्निः । हव्यवाट् हव्यं वहतीति हविषां वोढा । अमर्त्यः मरणहीनः । उशिक् वष्टि उश्यते वा सर्वैरित्युशिक् कामनीयः मेधावी वा । दूतः देवानां दूत्यकर्ता ।

चनोहितः चन इत्यन्ननाम । चनसेऽन्नाय हितः हवीरूपान्नस्वादनाय स्थापितः ॥ १६ ॥

## सप्तदशी ।

अ॒ग्निं दू॒तं पु॒रो द॑धे ह॒व्य॒वाह॒मुप॑ब्रुवे ॥ दे॒वाँ२॥ आसा॑दयादि॒ह ॥ १७ ॥

**उ०** अग्निं दूतम् । यम् अग्निम् दूतं देवानां दूतम् अहं पुरोदधे अग्रतः स्थापयामि । हव्यवाहं हविषो वोढारम् । तम् उपगम्य ब्रुवे ब्रवीमि । किं ब्रवीमि तदाह । देवानासादयादिह । हे अग्ने, देवान् आसादयात् आसादय इह अस्मिन्यज्ञे गृहे यागाय ॥ १७ ॥

**म०** यमग्निमहं पुरो दधे पुरतः स्थापयामि तं प्रति उपब्रुवे कथयामि । किं तदाह । हे अग्ने, इह यज्ञे त्वं देवानासादयात् आसादय स्थापय । कीदृशमग्निम् । दूतं देवानां हव्यवाहं हविषां वोढारम् ॥ १७ ॥

## अष्टादशी ।

अजी॑जनो॒ हि प॑वमान॒ सूर्यं॑ वि॒धारे॒ शक्म॑ना॒ पयः॑ । गोजी॑रया॒ रᳫं॒ह॑माणः॒ पुर॑न्ध्या ॥ १८ ॥

**उ०** अजीजनो हि । पावमानी सौमी विहृतिः अनुष्टुप् । यस्मात् अजीजनः जनितवानसि जनयसि वा हे पवमान सोम, सूर्यम् । यस्माच्च शक्मना चर्मणा पयः अपः विधारे उपरिष्टात् विधारयसि । केन हेतुना । गोजीरया जीवैरेतद्रूपम् । गोजीविकया हेतुभूतया । कथंनु नाम गावो जीवेयुरिति । गोभिर्हि यज्ञस्तायते प्राणिनश्च जीवन्तीति । किं कुर्वन् । रंहमाणः पुरंध्या रंहमाणः गच्छन् दशापवित्राद्द्रोणकलशं प्रति पुरन्ध्या बहुधारयित्र्या धारया । तस्मात्त्वां स्तुम इति शेषः ॥ १८ ॥

**म०** अरुणत्रसदस्युभ्यां दृष्टा पवमानदेवत्या पिपीलिकमध्या कृतिरनुष्टुप् । यस्या आद्यतृतीयौ पादौ द्वादशार्णौ द्वितीयोऽष्टार्णः सा पिपीलिकमध्या कृतिरनुष्टुप् जागतावष्टकश्च कृतिर्मध्ये चेदष्टकः पिपीलिकमध्येति वचनात् । पवमानस्तुतिः । हे पवमान, त्वं सूर्यमजीजनः उत्पादितवानसि । जनेर्णिजन्ताल्लुङ् । शक्मना शकनं शक्म 'शक्लृ शक्तौ' मनिन्प्रत्ययः । शक्मना सामर्थ्येन पयः जलं विधारे विशेषेण धारयामि वृष्टये । केन हेतुना । गोजीरया जीवनं जीरा वस्य रेफः छान्दसः । गवां जीरा गोजीरा तया गवां जीविकाहेतुना जलं धारयसि तासां हविषा यज्ञनिष्पत्तेः प्राणिनां जीवनाच्च । कीदृशस्त्वम् । पुरन्ध्या रंहमाणः पुरं बहु दधाति पुरन्धिर्धारा तया रंहमाणः रंहत इति रंहमाणो गच्छन् । दशापवित्राद्द्रोणकलशमभिगच्छन्नित्यर्थः । विधारे विधारये विधारयसि पुरुषव्यत्ययः । धारयतेस्तङि लटि उत्तमैकवचने धारये इति प्राप्ते 'छन्दस्युभयथा'( पा० ३ । ४ । ११७ )इति शितोऽप्यार्धधातुकत्वे सति 'णेरनिटि' ( पा० ६ । ४ । ११ ) इति णिलोपे धारे इति रूपम् ॥ १८ ॥

## एकोनविंशी ।

वि॒भूर्मा॒त्रा प्र॒भूः पि॒त्राश्वो॑ऽसि॒ ह॒योऽस्यत्यो॑ऽसि॒ म॒योऽस्यर्वा॑सि॒ सप्ति॑रसि वा॒ज्य॒सि॒ वृषा॑सि नृ॒मणा॑ असि । य॒युर्नामा॑सि॒ शि॒शु॒र्नामा॑स्यादि॒त्या॒नां॒ पत्वा॒न्विहि । दे॒वा॑ आशापाला ए॒तं दे॒वेभ्योऽश्वं॒ मेधा॑य॒ प्रोक्षि॑तᳫं रक्षत । इ॒ह॒ रन्ति॑रि॒ह॒ र॑मतामि॒ह॒ धृति॑रि॒ह॒ स्वधृ॑ति॒ः स्वाहा॑ ॥ १९ ॥

**उ०** अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतः । विभूर्मात्रा । अश्व उच्यते । यस्त्वं विभूरसि विभवसि मात्रा प्रभवसि च पित्रा । 'इयं वै मातासौ ते पिता' इति श्रुतिः । अथाश्वं नामक्रियाभिः स्तौति । अश्वो महाशनस्त्वमसि । हयोसि 'हि गतौ' अस्य हयः । अत्योऽसि 'अत सातत्यगमने' । मयोसि मय इति सुखनाम । सुखरूपोऽसि अर्वासि । ऋगतावस्यार्वा । सप्तिरसि सरणोसि । वाज्यसि वेजनवानसि । वृषा सेक्ता असि । नृमणा असि नृणां मनुष्याणां यत्र मनः स नृमणाः । ययुर्नामासि ययुः एवं नामा त्वमसि । ययुर्यानशीलः । शिशुर्नामासि शिशुः एवंनामा त्वमसि शंसनीयो भवसि । अपारमार्थिको वा नामशब्दः । यस्त्वमेवंप्रभावः तं त्वां ब्रवीमि । आदित्यानां पत्वान्विहि । पत्वा पतनमार्गेण । येन यथा आदित्याः पतन्ति गच्छन्ति तमनुगच्छेत्यर्थः । रक्षिणोऽस्यादिशति । देवा आशापालाः । एतं देवेभ्यः प्रोक्षितम् अश्वम् मेधाय यज्ञाय रक्षत । चतस्रो धृतीर्जुहोति । अश्व उच्यते । इह रन्तिः रमणम् । इह रमताम् । इह धृतिः इह स्वधृतिः साधुधृतिः । इह यज्ञे हे अश्व, तव क्रीडादय इत्यर्थः ॥ १९ ॥

**म०** 'अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति' ( का० २० । २ । १८ ) । तृतीयायां सावित्र्यामिष्टौ समाप्तायामध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतोऽभिर्भूमात्रेति सूत्रार्थः । अश्वदैवतं यजुः अतिजगतीच्छन्दस्कम् । मात्रा पित्रेति तृतीये पञ्चम्यर्थे । हे अश्व, त्वं मात्रा मातुः पृथिव्याः सकाशात् विभूरसि विभवति विभूः समर्थोऽसि । पित्रा पितुः सकाशाद्दिवः प्रभुः समर्थोऽसि । 'इयं वै मातासौ पिता ताभ्यामेवैनं परिददाति' ( १३ । १ । ६ । १ ) इति श्रुतेः । अथ नामभिरश्वं स्तौति । त्वमश्वोऽसि । अश्नुते व्याप्नोति मार्गमित्यश्वः 'अशूप्रुषि–' ( उणा० १ । १५० ) इत्यादिना अशेः क्वन्प्रत्ययः । अश्नाति वाश्वः । हयोऽसि हयति याति हयः 'हय गतौ' पचाद्यच् । अत्योऽसि 'अत सातत्यगमने' अततीत्यत्यः सततगामी । औणादिको यत्प्रत्ययः । मयोऽसि मयते गच्छति मयः 'यम गतौ' पचाद्यच् । यद्वा मय इति सुखनाम । सुखरूपोऽसि ।

अर्वासि इयर्ति गच्छतीति अर्वा 'स्नामदिपद्यर्तिपॄशकिभ्यो वनिन्' ( उणा० ४ । ११४ ) इति वनिन्प्रत्ययः । यद्वा अ-र्वति हिनस्ति रिपूनित्यर्वा कनिन्प्रत्ययः । सप्तिरसि सपति सैन्येन समवैति सप्तिः 'सप संबन्धे' क्तिन्प्रत्ययः । वाजी असि वाजति तच्छीलो वाजी । 'वज गतौ' अनेकगतिसूचनाय पुनः पुनर्गत्युक्तिः । यद्वा वाजाः पक्षा अभूवन्नस्येति वाजी । वृषासि वर्षति सिञ्चति वृषा 'कनिन्युवृषि–' ( उणा० १ । १५५ ) इत्यादिना कनिन्प्रत्ययः । नृमणा असि नृषु यजमानेषु मनो यस्य स नृमणाः । नाम नाम्ना ययुरसि । अत्यर्थं याति ययुः 'ययुरश्वोऽश्वमेधीयः' इत्यभिधानात् 'यो द्वे च'(उणा० १ । २१) इत्युप्रत्ययः । किंच नाम्ना शिशुरसि । श्यति कृशं करोति स्तनमिति शिशुः 'शः कित्सन्वच' ( उणा० १ । २० ) उप्र-त्ययः सन्वद्भावाद् द्वित्वमभ्यासस्येकारश्च । एवंविधनामा त्वमादित्यानामदितेरपत्यानां देवानां पत्वा मार्गमन्विहि । पतन्ति गच्छन्ति यत्र स पत्वा मार्गः 'स्नामदि–' ( उणा० ४ । ११४ ) इत्यादिना वनिन्प्रत्ययः । आदित्या येन पथा गच्छन्ति तमनुगच्छ । देवा आशापाला इति रक्षिणोऽस्यादिशत्यनुचरीजा-तीयास्तावतस्तावतः कवचिनिषङ्गिकलापिदण्डिनो, यथासंख्यम् ( का० २० । २ । २० ) । चतुर्विंशतिवार्षिकाश्वशतमध्य-स्थस्यैशान्यामुत्सृष्टस्य रक्षकान्नरानादिशति । कीदृशान् । अनुचरीसजातीयान् तावतोऽनुचरीसंख्यान् तेन शतं राजपुत्रान् शतं क्षत्रियपुत्रान् शतं सूतग्रामण्यां पुत्रान् । सूता अश्वपोष-कास्तेषां मध्ये ग्रामण्यो मुख्यास्तत्सुतानित्यर्थः । शतं क्षात्र-संग्रहीतॄणां पुत्रान् । क्षत्तार आयव्ययाध्यक्षास्तत्समूहः क्षात्रं तत्राधिकृताः क्षात्रसंग्रहीतारस्तत्सुतान् क्रमात्कवचिनिषङ्गिकला-पिदण्डिनः तेन राजपुत्राः संनाहवन्तः क्षत्रियपुत्रा निषङ्गिणः सखड्गाः, सूतग्रामणीपुत्रा इषुधिमन्तः, क्षात्रसंग्रहीतृपुत्राः । वंशादिदण्डधरा इत्यर्थः । वडवाभ्यो जलस्नानाच्चाश्ववारणम् वर्षमश्वरक्षणम् तावद्यजमानो वावातोर्वोः शेते सावित्रीः कारयति वीणागानं पारिप्लवशास्त्रपाठं धृतिहोमं चेत्यादि ज्ञेय-मिति सूत्रार्थः । देवदेवत्यं यजुः ऋगुष्णिक् । आशा दिशः पालयन्तीति आशापाला हे देवाः, यूयमेतमश्वं रक्षत । कीदृ-शम् । मेधाय यागाय प्रोक्षितं प्रोक्षणेन संस्कृतम् । राजपुत्रा-दय एवाशापालाः । तदुक्तम् 'शतं वै तल्प्या राजपुत्रा आशापालास्तेभ्य एवैनं परिददातीति' ( १३ । १ । ६ । २ ) । 'आहवनीयेऽस्तमिते चतस्रो धृतीरिह रन्तिरिति' ( का० २० । ३ । ४ ) । अस्तमितेऽर्केऽग्निहोत्रहोमात् प्रागग्निहोत्राद्धुते आहवनीयेऽग्नौ चतस्रो धृतिसंज्ञा आहुतीः प्रतिमन्त्रं जुहोति वर्षपर्यन्तं प्रत्यहम् एवं चत्वारिंशदधिका चतुर्दशशती भवति । तथाच श्रुतिः 'संवत्सरमाहुतीर्जुहोति षोडश नवतीरेता वा अश्वस्य बन्धनं ताभिरेवैनं बध्नातीति' ( १३ । १ । ६ । २ ) । चत्वारि यजूंषि अग्निदेवत्यानि । चतुर्थमन्त्रान्ते स्वाहाकारश्रव-णात्त्रिष्वपि स्वाहाकारः प्रयोज्यः । अश्वं प्रत्युच्यते । हे अश्व, इह रन्तिः रमणं तेऽस्तु । इह भवान् रमताम् । इह ते धृतिः सन्तोषोऽस्तु । इह यज्ञे स्वधृतिः स्वा निजा धृतिर्धारणमस्तु स्वाहा ॥ १९ ॥

## विंशी ।

काय॒ स्वाहा॒ कस्मै॒ स्वाहा॑ कत॒मस्मै॒ स्वाहा॑ । स्वाहा॒धिमाधी॑ताय॒ स्वाहा॒ स्वाहा॒ मनः॑ प्रजाप॑तये॒ स्वाहा॑ चि॒त्तं विज्ञा॑ता॒याऽदि॑त्यै॒ स्वाहाऽदि॑त्यै म॒ह्यै॒ स्वाहाऽदि॑त्यै सुमृडी॒कायै॒ स्वाहा॒ सर॑स्वत्यै॒ स्वाहा॒ सर॑स्वत्यै पाव॒कायै॒ स्वाहा॒ सर॑स्वत्यै बृह॒त्यै स्वाहा॑ पू॒ष्णे स्वाहा॑ पू॒ष्णे प्र॑प॒थ्या॒य॒ स्वाहा॑ पू॒ष्णे नर॑न्धिषाय॒ स्वाहा॒ त्वष्ट्रे॒ स्वाहा॒ त्वष्ट्रे॑ तु॒रीपा॑य॒ स्वाहा॒ त्वष्ट्रे॑ पुरु॒रूपा॑य॒ स्वाहा॒ विष्ण॑वे॒ स्वाहा॒ विष्ण॑वे नि-भूय॒पाय॒ स्वाहा॒ विष्ण॑वे शिपिवि॒ष्टाय॒ स्वाहा॑ ॥ २० ॥

उ० औद्रभणानि जुहोति । काय स्वाहा । कस्मै स्वाहा । कतमस्मै स्वाहा । स्वाहाधिमाधीताय । पूर्वं स्वाहाकारान्तास्तिस्र आहुतयः प्राजापत्याः । आधिमाध्यानम् । चतुर्थी चात्र कर्तव्या । आधये स्वाहेति । आधीताय स्वाहा । चित्तं विज्ञाताय । चित्तायेति विभक्तिव्यत्ययः । मनः मनसे इति विभक्तिव्यत्ययः । प्राजापत्याय स्वाहा । अदित्यै मह्यै । 'मह पूजायाम्' पूजितायै अदित्यै सुमृडीकायै 'मृड सुखने' । सुखयित्र्यै सरस्वत्यै स्वाहा । सरस्वत्यै पावकायै पावयित्र्यै । सरस्वत्यै बृहत्यै महत्यै । पूष्णे स्वाहा पूष्णे प्रपथ्याय । प्रगतः पन्थाः प्र तत्र भवः प्रपथ्यः । पूष्णे नरन्धिषाय । नॄन् दधाति धारयतीति नरन्धिषः । त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय तूर्णं पाति रक्षतीति तुरीपः । त्वष्ट्रे पुरुरूपाय बहुरूपः विष्णवे स्वाहा । विष्णवे निभूयपाय । नीचैर्भूत्वा यः पाति स निभूयपः । विष्णवे शिपिविष्टाय । शिपिं पशुं यज्ञस्य वेष्टयति साधुं करोतीति शिपिविष्टः ॥ २० ॥

म० 'काय स्वाहेति चाश्वमेधिकानि' ( का० २० । ४ । ३-५ ) त्रीणि कृष्णाजिनदीक्षातोऽध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि । चत्वार्याध्वरिकाण्यौद्रभणानि हुत्वा काय स्वाहेत्याश्वमेधिकानि त्रीण्यौद्रभणानि जुहुयात् अत औद्रभणहोमानन्तरं दीक्षणीयाशेषं समाप्य कृष्णाजिनदीक्षा तत्रोपवेशनान्ता कर्तव्या । 'सप्ताहं प्रचरन्ति' ( १३ । १ । ७ । २ ) इति श्रुतेः सप्ताहं दीक्षणीया कार्या । तत्र प्रत्यहं कर्तव्यमाह । अध्वरदीक्षणीयायाश्चत्वारि चत्वार्यौद्रभणानि आकूत्यै प्रयुजे इत्यादीनि ( ४ । ७ ) त्रीणि त्रीणि चाश्वमेधि-कानि काय स्वाहेति कण्डिकापठितानि प्रत्यहमन्यान्यन्यानि पाठक्रमेण एवं सप्त-सप्त प्रत्यहं हूयन्ते । काय स्वाहेति कण्डि-

कायां सप्त त्रिकाणि पठितानि तन्मध्ये सप्तस्वहःसु क्रमेणैकैकं त्रिकं हूयते तत्र द्वितीयत्रिके स्वाहाकाराद्यं मन्त्रत्रयं स्वाहाधिमाधीतायेत्यादीति सूत्रार्थः । औद्भ्रभणसंज्ञानि यजूंषि लिङ्गोक्तदेवतानि । काय प्रजापतये सुहुतमस्तु । कस्मै प्रजापतये कतमस्मै प्रजापतिश्रेष्ठाय । आधिमाधानमाधीताय प्राप्ताय मनः मनसि वर्तमानाय प्रजापतये चित्तं विज्ञाताय सर्वेषां चित्तसाक्षिणे । अदित्यै अखण्डितायै मह्यै पूज्यायै अदित्यै सुमृडीकायै सुखयित्र्यै अदित्यै । सरस्वत्यै वागधिष्ठात्र्यै पावयति पावका तस्यै शोधयित्र्यै सरस्वत्यै बृहत्यै महत्यै सरस्वत्यै । पूष्णे प्रपथ्याय प्रगतः पन्थाः प्रपन्थाः तत्र भवः प्रपथ्यः तस्मै पूष्णे । नरन्धिषाय 'धिषू शब्दे' ह्लादिर्वैदिकः । नरं दिधेष्टि शब्दयति उदयेन स नरन्धिषः तस्मै पूष्णे 'इगुपध' ( पा० ३ । १ । १३५ ) इति कः । त्वष्ट्रे त्वक्षति तनूकरोति त्वष्टा तस्मै । तुरीपाय 'तुर वेगे' तस्य रूपम् । तुरी वेगस्तं पाति रक्षति तुरीपस्तस्मै । त्वष्ट्रे पुरुरूपाय पुरूणि बहूनि रूपाणि यस्य तस्मै त्वष्ट्रे । वेवेष्टि व्याप्नोति विष्णुस्तस्मै निभूयपाय नितरां भूत्वा मत्स्याद्यवतारं कृत्वा पाति निभूयपस्तस्मै विष्णवे शिपिषु पशुषु प्राणिषु विष्टः प्रविष्टोऽन्तर्यामिरूपेण शिपिविष्टस्तस्मै विष्णवे । एते औद्भ्रभणमन्त्राः ॥२०॥

## एकविंशी ।

विश्वो॑ दे॒वस्य॑ ने॒तुर्मर्तो॑ वुरीत स॒ख्यम् । विश्वो॑ रा॒य इ॑षुध्यति द्यु॒म्नं वृ॑णीत पु॒ष्यसे॒ स्वाहा॑ ॥२१॥

उ० विश्वो देवस्येति व्याख्यातम् ॥ २१ ॥

म० 'षडाग्निकानि चतुःस्थाने दशमं विश्वो देवस्येति' ( का० २० । ४ । ९ । १० ) । सप्तम्यां दीक्षणीयायामयं विधिः । प्रत्ययानि चत्वार्यौद्भ्रभणान्याध्वरिकाणि हूयन्ते तेषां ...र्णां स्थाने षडाग्निकानि आकूतिं प्रयुजमग्निं स्वाहेति ( ... । ११ । ६६ ) हुत्वाश्वमेधिकानि च त्रीणि विष्णवे स्वाहेत्यादीनि हुत्वा विश्वो देवस्येति दशममौद्भ्रभणं जुहोतीति सूत्रार्थः । व्याख्याता ( अ० ४ । क० ८ ) ॥ २१ ॥

## द्वाविंशी ।

आ ब्रह्म॑न्ब्राह्म॒णो ब्र॑ह्मवर्च॒सी जा॑यता॒मा रा॒ष्ट्रे रा॑ज॒न्यः॒ शूर॑ इष॒व्यो॑ऽतिव्या॒धी म॑हार॒थो जा॑यतां॒ दोग्ध्री॑ धे॒नुर्वोढा॑न॒ड्वाना॒शुः सप्तिः॒ पुर॑न्धि॒र्योषा॑ जि॒ष्णू र॑थे॒ष्ठाः स॒भेयो॒ युवा॒स्य यज॑मानस्य वी॒रो जा॑यतां नि॒कामे॑ निकामे नः प॒र्जन्यो॑ वर्षतु॒ फल॑वत्यो न॒ ओष॑धयः पच्यन्तां योगक्षे॒मो नः॑ कल्पताम् ॥ २२ ॥

उ० जयति । आब्रह्मन् आ जायतां हे ब्रह्मन्, ब्राह्मणः ब्रह्मवर्चसी । यज्ञाध्ययनशीलो ब्राह्मण आजायतामित्यर्थः । राष्ट्रे । आजायतां च राष्ट्रे राजन्यः शूरः इषव्यः इषुभिः विध्यति इषव्यः इषुषु वा साधुः इषव्यः । अतिव्याधी महारथः । अतिविध्यति द्विषन्तमित्यतिव्याधी । महारथश्च दोग्ध्री धेनुः राष्ट्रे आजायतामिति सर्वत्र संबन्धः । वोढा अनड्वान् आशुः शीघ्रः सप्तिरश्वः । पुरन्धिर्योषा । पुरं शरीरं रूपादिगुणसमन्वितं धारयतीति पुरन्धिः । जिष्णू रथेष्ठाः । जयनशीलः रथे तिष्ठतीति रथेष्ठाः युयुत्सुः सभेयो युवा । सभामर्हति विद्यागुणचरित्रैः सभेयः युवा आ अस्य यजमानस्य आजायतां चास्य यजमानस्य धीरः पुत्रः । किंच निकामे निकामे नः पर्जन्यो वर्षतु प्रार्थनायामवश्यं भवतीत्ति निकामः । अभ्यासो वीप्सार्थः । अस्माकं राष्ट्र इत्यर्थः फलवत्य अतिशयेन फलयुक्ताः नोऽस्माकं राष्ट्रे ओषधयः पच्यन्ताम् । योगक्षेमो नः कल्पताम् । योगो द्रव्यादीनां संयोगः क्षेमस्तेषामेव परिपालनम् । योगश्च क्षेमश्चास्माकं क्लृप्तो भवतु । योगश्च क्षेमश्चेति द्वन्द्वः । तत्र नपुंसकलिङ्गता वा स्यात् द्विर्वचनं वा इति । तत्र छान्दसो विसर्जनीयो द्रष्टव्यः ॥ २२ ॥

म० 'कृष्णाजिनाद्या समिदाधानात् कृत्वा ब्रह्मन्निति जपत्युत्सर्गकाल एके' ( का० २० । ४ । ११ ) । कृष्णाजिनदीक्षात आरभ्योखायां त्रयोदशसमिदाधानान्तं कृत्वाध्वर्युरेव ब्रह्मन्निति जपति उत्सर्गैरुपतिष्ठत इत्युत्सर्गोपस्थानकाले एके आ ब्रह्मन्निति जपमिच्छन्ति । यद्वाश्वस्योत्सर्गकाले विभूर्मात्रेति जपानन्तरमित्यर्थः । लिङ्गोक्तदेवता उत्कृतिः । हे ब्रह्मन्, राष्ट्रेऽस्मद्देशे ब्रह्मवर्चसी यज्ञाध्ययनशीलो ब्राह्मणः आजायतामुत्पद्यताम् । राजन्यः क्षत्रियश्चेदृश आजायताम् । कीदृशः । शूरः पराक्रमी । 'शूर विक्रान्तौ' शूरयति शूरः इषव्यः इषुभिर्विध्यतीति इषव्यः । यद्वा इषौ कुशलः इषव्यः । अतिव्याधी अत्यन्तं विध्यतीत्यतिव्याधी शत्रुभेदनशीलः । महारथः एकः सहस्रं यजति स महारथः । दोग्ध्री दुग्धपूरयित्री धेनुः आजायतां राष्ट्रे इति सर्वत्र संबन्धः । अनड्वान् वृषभो वोढा वहनशीलो जायताम् । सप्तिरश्व आशुः शीघ्रगामी जायताम् । योषा स्त्री पुरन्धिः पुरं शरीरं सर्वगुणसंपन्नं दधाति पुरन्धिः । रथे तिष्ठति रथेष्ठाः क्विप् सप्तम्या अलुक् । रथे स्थितो युयुत्सुर्नरो जिष्णुः जयनशीलो जायताम् । युवा आ अस्येति पदच्छेदः । अस्य यजमानस्य युवा समर्थः सभेयः सभायां योग्यो वीरः पुत्रो जायताम् । सभायां साधुः सभेयः 'ढश्छन्दसि' ( पा० ४ । ४ । १०६ ) इति सभाशब्दात्तत्र साधुरित्यर्थे ढप्रत्ययः । तस्य ण्यादेशः । किंच नोऽस्माकं राष्ट्रे पर्जन्यो निकामे निकामे नितरां कामनायां सत्यां वर्षतु । अभ्यासो वीप्सार्थः । नोऽस्माकमोषधयः यवाद्याः फलवत्यः फलयुक्ताः पच्यन्तां स्वयमेव पक्वा भवन्तु । नोऽस्माकं योगक्षेमः कल्पतां

योगेन युक्तः क्षेमो योगक्षेमः स क्लृप्तो भवतु । अलब्धलाभो योगः । लब्धस्य परिपालनं क्षेमः ॥ २२ ॥

## त्रयोविंशी ।

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥ २३ ॥

उ० आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिमन्त्रं सर्वरात्रमावर्तम् ॥ २३ ॥

म० 'आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिमन्त्रꣳ सर्वरात्रमावर्तम्' ( का० २० । ४ । ३१ ) । आज्यादीनां प्रतिप्रहरमेकैकं क्रमेण सर्वरात्रमुत्तरवेदिस्थाग्नौ जुहोति प्राणाय स्वाहेत्यादिद्वादशकण्डिकात्मकैरनुवाकैः । किं कृत्वा । आवर्तम् प्राणाय स्वाहेत्यादिकमेकशताय स्वाहेत्यन्तं मन्त्रगणमावर्त्यावर्त्य सर्वरात्रमिति द्वितीयाग्रहणाद्धोमक्रियाया रात्रेः कात्स्न्र्येन संयोगः कार्यः । ततः प्रथमयामे घृतेन यागः द्वितीये सक्तुभिः तृतीये धानाभिः चतुर्थे लाजैः । एकस्मै इति द्वादशेऽनुवाके ( ३४ ) एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेत्यत्र त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पञ्चभ्यः स्वाहा षड्भ्यः स्वाहा सप्तभ्यः स्वाहा अष्टभ्यः स्वाहा नवभ्यः स्वाहेत्येवमादयो मन्त्रा अपठिता अपि एकैकोच्चयेन शतपर्यन्ताः प्रयोज्याः । 'एकोत्तरा जुहोति' ( १३ । २ । १ । ५ ) इति श्रुतेः । व्युष्टायां समाप्तायां रात्रौ व्युष्ट्यै स्वाहेति घृताहुतिमेकामुदिते सूर्ये स्वर्गाय स्वाहेति च जुहोतीति सूत्रार्थः । लिङ्गोक्तदेवतानि यजूंषि । प्राणादय इन्द्रियदेवाः ॥ २३ ॥

## चतुर्विंशी ।

प्राच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहार्वाच्यै दिशे, स्वाहावाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ २४ ॥

उ० प्राच्यै । दिग्देवताः ॥ २४ ॥

म० प्राच्यै । दिग्देवताः ॥ २४ ॥

## पञ्चविंशी

अद्भ्यः स्वाहा वार्भ्यः स्वाहोदकाय स्वाहा तिष्ठन्तीभ्यः स्वाहा स्रवन्तीभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा, कूप्याभ्यः स्वाहा सूद्याभ्यः स्वाहा धार्याभ्यः स्वाहार्णवाय स्वाहा समुद्राय स्वाहा सरिराय स्वाहा ॥ २५ ॥

उ० अद्भ्यः । जलदेवताः ॥ २५ ॥

म० अद्भ्यः । जलदेवताः ॥ २५ ॥

## षड्विंशी ।

वाताय स्वाहा धूमाय स्वाहाभ्राय स्वाहा मेघाय स्वाहा विद्योतमानाय स्वाहा स्तनयते स्वाहावस्फूर्जते स्वाहा, वर्षते स्वाहाववर्षते स्वाहोग्रं वर्षते स्वाहा, शीघ्रं वर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा प्रुष्णते स्वाहा शीकायते स्वाहा प्रुष्वाभ्यः स्वाहा ह्रादुनीभ्यः स्वाहा नीहाराय स्वाहा ॥ २६ ॥

उ० वाताय । मेघोपयोगिदेवताः ॥ २६ ॥

म० वाताय । मेघोपयोगिदेवताः ॥ २६ ॥

## सप्तविंशी ।

अग्नये स्वाहा सोमाय स्वाहेन्द्राय स्वाहा, पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा, दिग्भ्यः स्वाहाशाभ्यः स्वाहोर्व्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ २७ ॥

उ० अग्नये । अग्न्यादयः प्रसिद्धाः ॥ २७ ॥

म० अग्नये । अग्न्यादयः प्रसिद्धाः ॥ २७ ॥

## अष्टाविंशी ।

नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्धमासेभ्यः स्वाहा मासेभ्यः स्वाहा ऋतुभ्यः स्वाहार्तवेभ्यः स्वाहा संवत्सराय स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा, शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥ २८ ॥

उ० नक्षत्रेभ्यः । नक्षत्रादयः कालाधिष्ठात्र्यः ॥ २८ ॥

म० नक्षत्रेभ्यः । नक्षत्रादयः कालाधिष्ठात्र्यः ॥ २८ ॥

## एकोनत्रिंशी ।

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥ २९ ॥

उ० पृथिव्यै। पृथिव्यादयो लोकाधिष्ठात्रयः॥ २९॥

म० पृथिव्यै। पृथिव्यादयो लोकाधिष्ठात्र्यः॥ २९॥

### त्रिंशी।

असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा गणश्रिये स्वाहा गणपतये स्वाहाभिभुवे स्वाहाधिपतये स्वाहा शूषाय स्वाहा सꣳसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा दिवा पतयते स्वाहा॥ ३०॥

उ० असवे। अस्वादयश्च॥ ३०॥

म० असवे। अस्वादयश्च॥ ३०॥

### एकत्रिंशी।

मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहाꣳहसस्पतये स्वाहा ३१

उ० मधवे। मध्वादयो मासाधिष्ठातारः॥ ३१॥

म० मधवे। मध्वादयो मासाधिष्ठातारः॥ ३१॥

### द्वात्रिंशी।

वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा स्वः स्वाहा मूर्ध्ने स्वाहा व्यश्नुविने स्वाहान्त्याय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा॥ ३२॥

उ० वाजाय। वाजादयोऽन्नाधीशाः॥ ३२॥

म० वाजाय। वाजादयोऽन्नाधीशाः॥ ३२॥

### त्रयस्त्रिंशी।

आयुर्यज्ञेन कल्पताꣳ स्वाहा प्राणो यज्ञेन कल्पताꣳ स्वाहापानो यज्ञेन कल्पताꣳ स्वाहा व्यानो यज्ञेन कल्पताꣳ स्वाहोदानो यज्ञेन कल्पताꣳ स्वाहा समानो यज्ञेन कल्पताꣳ स्वाहा चक्षुर्यज्ञेन कल्पताꣳ स्वाहा श्रोत्रं यज्ञेन कल्पताꣳ स्वाहा वाग्यज्ञेन कल्पताꣳस्वाहा मनो यज्ञेन कल्पताꣳ स्वाहात्मा यज्ञेन कल्पताꣳ स्वाहा ब्रह्मा यज्ञेन कल्पताꣳस्वाहा ज्योतिर्यज्ञेन कल्पताꣳस्वाहा स्वर्यज्ञेन कल्पताꣳ स्वाहा पृष्ठं यज्ञेन कल्पताꣳ स्वाहा यज्ञो यज्ञेन कल्पताꣳ स्वाहा॥ ३३॥

उ० आयुः। यज्ञेनाश्वमेधेनायुः कल्पताम्। एवमग्रेऽपि प्रार्थनामन्त्राः॥ ३३॥

म० आयुः। यज्ञेनाश्वमेधेनायुः कल्पताम्। एवमग्रेऽपि प्रार्थनामन्त्राः॥ ३३॥

### चतुस्त्रिंशी।

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा शताय स्वाहैकशताय स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा॥ ३४॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां द्वाविंशोऽध्यायः॥ २२॥

उ० व्युष्ट्या इति व्युष्टयम् स्वर्गायेत्युदिति। प्राणायस्वाहेत्यारभ्य द्वादशभिः कण्डिकासंमितैरनुवाकैर्देवता उक्ताः आज्यादिहविर्भिः। एते सर्वे एव यागाः महतो यज्ञस्य लोककालाग्न्यादिवपुषोऽवयविनोऽवयवभूताः। यथा देवदत्तस्यावयविनोऽवयवभूताः शिरःपाण्यादयः एवं सोऽयमश्वमेधः प्रजापतेरवयविनोऽवयवभूतः। प्रजापतेश्चात्मनः सोऽयमात्मा। शाखाप्रशाखागतः स्तूयते हूयते च ज्ञानकर्मसमुच्चयकारिभिर्यजमानैः। एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति प्रकारदर्शनम्। त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहेति एकशतात्॥ ३४॥

इति उवटकृतौ मन्त्रभाष्ये द्वाविंशोऽध्यायः॥ २२॥

म० एकस्मै। संख्याधीशाः। व्युष्टी रात्रिः स्वर्गो दिनम्। 'रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे एव तत् प्रीणाति' (१३। २।१।६) इति श्रुतेः। प्राणादयोऽश्वमेधस्यावयविनोऽवयवाः स च प्रजापतेरवयवः स आत्मन इत्यात्मैव स्तूयते इज्यते इति भावः। 'सर्वमिदं यदयमात्मा' इति श्रुतेः॥ ३४॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
अश्वमेधाहुतिर्नाम द्वाविंशोऽध्याय ईरितः॥ २२॥

---

## त्रयोविंशोऽध्यायः।

### तत्र प्रथमा।

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ १॥

उ० हिरण्यगर्भः सम्। महिम्नः पुरोरुक्। व्याख्यातम्॥ १॥

म० द्वाविंशे होममन्त्रास्त्रयोविंशेऽध्याये शिष्टं कर्मोच्यते। 'प्रातरुक्थ्यो महिमानौ गृह्णाति सौवर्णेन पूर्वꣳ हिरण्यगर्भ इति' (का० २०।५।१—२)। प्रातर्द्वितीयेऽहनि उक्थ्यसंस्थमहर्भवति तत्र महिमसंज्ञौ द्वौ ग्रहौ गृह्णाति आगन्तुत्वादाग्रयणोक्थ्ययोर्मध्ये तौ गृह्णाति 'अन्तराग्रयणोक्थ्यावागन्त्वानतुं

ग्रहाणाम्' इति वचनात् द्वयोर्मध्ये पूर्वं महिमानं सौवर्णेनोलूखलेन गृह्णाति । व्याख्याता ( अ० १३ । क० ४ ) ॥ १ ॥

## द्वितीया ।

उपयामगृहीतोसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः सूर्यस्ते महिमा । यस्तेऽहन्त्संवत्सरे महिमा संबभूव यस्ते वायावन्तरिक्षे महिमा संबभूव यस्ते दिवि सूर्ये महिमा संबभूव तस्मै ते महिम्ने प्रजापतये स्वाहा देवेभ्यः ॥ २ ॥

उ० उपयामगृहीतोसि । प्रजापतये त्वा जुष्टमभिरुचितं गृह्णामि । सादयति । एष ते तव योनिः स्थानं सूर्यस्तव महिमा महाभाग्यं शक्तिः दीपस्येव प्रभा । जुहोति । यस्तेऽहन् यस्तव अहनि संवत्सरे च महिमा संबभूव संभूत उत्पन्नः । अहनि निमित्तभूते सर्वाण्येव भूतानि संपद्यन्ते । निमित्तसप्तम्यश्चैताः । 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्' इति यथा। यः ते वायौ अन्तरिक्षे च महिमा संबभूव । यस्ते दिवि सूर्ये च महिमा संबभूव । तस्मै ते तव महिम्ने प्रजापतये च स्वाहा देवेभ्यश्च ॥ २ ॥

म० उपयाम० प्रजापतये जुष्टं रुचितं त्वां हे ग्रह, अहं गृह्णामि । 'एष ते योनिरिति ग्रहसादनम्' ( का० ९ । ५ । २५ ) । एष ते योनिः स्थानं ते तव महिमा शक्तिः सूर्यः दीपस्येव प्रभा । 'यस्तेऽहन्निति जुहोति' ( का० २० । ७ । १६ ) । पूर्वमहिमानं ग्रहं जुहोति वषट्कृते सर्वहुतम् । देवदेवत्यं यजुः ब्यधिका शक्करी । हे महिमन्, यः ते तव महिमा अहन् अह्नि दिवसे संवत्सरे च निमित्ते संबभूव उत्पन्नः, वायौ अन्तरिक्षे च यः तव महिमा संबभूव दिवि सूर्ये च यस्ते महिमा संबभूव ते तव तस्मै महिम्ने प्रजापतये देवेभ्यश्च स्वाहा सुहुतमस्तु ॥ २ ॥

## तृतीया ।

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥

उ० द्वितीयं गृह्णाति तस्य पुरोरुक्यः प्राणतः कायी प्राजापत्या । यः कः प्रजापतिः प्राणतः प्राणनं कुर्वतः भूतग्रामस्य निमिषतः निमेषणं कुर्वतः क्रियावत इत्यर्थोन्तरम् महित्वा स्वकीयेन महाभाग्येन । एकइत् । इच्छब्द एवार्थे । एकएव समस्तस्य जगतो राजा बभूव संवृत्तः । यश्च ईशे ईष्टे अस्य द्विपदः प्राणिजातस्य यश्च चतुष्पदः ईष्टे प्राणिजातस्य । तस्मै कस्मै देवाय प्रजापतये हविषा विधेम। विदधातिर्दानकर्मा । हविरिति विभक्तिव्यत्ययो द्वितीयान्तः । हविर्दद्मः ॥ ३ ॥

म० 'द्वितीयꣳ राजतेन यः प्राणत इति' ( का० २० । ५ । २ ) । द्वितीयं महिमानं ग्रहं राजतेनोलूखलेन गृह्णाति । हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् । तस्मै कस्मै प्रजापतये देवाय वयं हविर्विधेम हविर्दद्मः । विधृतिर्दानार्थः । तृतीया द्वितीयार्थे । तस्मै कस्मै । यः प्रजापतिः प्राणतः प्राणनं जीवनं कुर्वतो निमिषतो निमेषणं कुर्वतः । उपलक्षणमेतत् दृगादीन्द्रियव्यापारं कुर्वतः सचेतनस्य जगतः । विश्वस्य एक एव राजा बभूव । केन । महित्वा मद्देर्महिम्नो भावो महित्वं तेन महित्वेन । विभक्तेः पूर्वसवर्णः । महाभाग्येनेत्यर्थः । यश्चास्य द्विपदः द्वौ पादौ यस्य स द्विपात् तस्य 'पादः पत्' (पा० ६ । ४ । १३०) इति पदादेशः । द्विपादस्य मनुष्यपक्ष्यादेः चतुष्पदः हस्तिगवादेः प्राणिजातस्य ईशे ईष्टे ऐश्वर्यं करोति । 'लोपस्त आत्मनेपदेषु' ( पा० ७ । १ । ४१ ) इति तकारलोपे ईशे इति रूपम् । 'अधीगर्थदयेशां कर्मणि' ( पा० २ । ३ । ५२ ) कर्मणि षष्ठी ॥ ३ ॥

## चतुर्थी ।

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिश्चन्द्रमास्ते महिमा । यस्ते रात्रौ संवत्सरे महिमा संबभूव यस्ते पृथिव्यामग्नौ महिमा संबभूव यस्ते नक्षत्रेषु चन्द्रमसि महिमा संबभूव तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा ॥ ४ ॥

उ० उपयामगृहीतोसि प्रजापतये त्वां जुष्टं गृह्णामि । सादयति । एष ते योनिः चन्द्रमास्ते महिमा । जुहोति यस्ते रात्रौ संवत्सरे पृथिव्यामग्नौ च नक्षत्रेषु चन्द्रमसि च महिमा संबभूव तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा॥४॥

म० उपयामपात्रेण गृहीतोऽसि प्रजापतये जुष्टं त्वां गृह्णामि । सादयति । एष ते । चन्द्रमास्ते तव महिमा दीप्तिः । 'वपान्ते द्वितीयेन पूर्ववद् यस्ते रात्राविति जुहोति'(का० २० । ७ । २६ ) । वपायागान्ते द्वितीयेन महिम्ना पूर्ववदिति सर्वहुतं महिमानं जुहोति । अष्टिः हे महिमन्, रात्रौ संवत्सरे च यस्ते तव महिमा संबभूव पृथिव्यामग्नौ च यस्ते महिमा संबभूव नक्षत्रेषु चन्द्रमसि च यस्तव महिमा संबभूव सर्वव्यापकस्तव यो महिमा तस्मै महिम्ने प्रजापतये देवेभ्यश्च स्वाहा सुहुतमस्तु ॥ ४ ॥

## पञ्चमी ।

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ ५ ॥

उ० अश्वं युनक्ति । युञ्जन्ति ब्रध्नम् । अश्वोऽत्रादित्यवत्स्तूयते उत्तरोर्धर्चः प्रथमं व्याख्यायते । यस्य भासा रोचन्ते देदीप्यन्ते रोचनाः रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि ।

दिवि द्युलोके । तं युञ्जन्ति रथे बध्नन्ति । कथंभूतम् । ब्रध्नम् परिवृढं आदित्यम् अरुषमरोषणम् । चरन्तं गच्छन्तं वैदिककर्मसिध्यर्थम् । के युञ्जन्ति परितस्थुषः सर्वतःस्थिता ऋत्विग्यजमानाः ॥ ५ ॥

**म०** 'युनक्त्येनं युञ्जन्ति ब्रध्नमिति' ( का० २०।५।११ )। अश्वं रथे युनक्ति । मधुच्छन्दोदृष्टा आदित्यदेवत्या गायत्री । तस्थुषः । विभक्तेर्व्यत्ययः । तस्थिवांसः कर्मार्थं स्थिता ऋत्विजः ब्रध्नमादित्यं युञ्जन्ति रथे योजयन्ति । अश्व आदित्यत्वेन स्तूयते । 'असौ वा आदित्यो ब्रध्नोऽरुषोऽमुमेवास्मा आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै' ( १३।२।६।१ ) इति श्रुतेः । किंभूतं ब्रध्नम् । अरुषं रोषति कुध्यति रुषः 'इगुपध–' ( पा० ३।१।१३५ ) इति कः । न रुषः अरुषः तं क्रोधरहितम् । परिचरन्तं वैदिककर्मसिद्ध्यर्थं सर्वत्र गच्छन्तम् । यस्य ब्रध्नस्य रोचना । विभक्तिलोपः । दीप्तयो दिवि आकाशे रोचन्ते प्रकाशन्ते । यद्वा रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि ब्रध्नस्य भासा रोचन्ते 'तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलकाः' इति ज्योतिःशास्त्रोक्तेः ॥ ५ ॥

## षष्ठी ।

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ ६ ॥

**उ०** इतराश्वं युनक्ति । युञ्जन्त्यस्य । गायत्री । युञ्जन्ति रथे अस्याश्वमेधिकस्याश्वस्य काम्या काम्यौ कामसंपादिनौ । नह्येको रथं वोढुं शक्तः । हरी हरितवर्णावश्वौ हरिणौ वा वेगवन्तौ विपक्षसा । विविधाः पक्षसः पक्षा ययोस्तौ विपक्षसौ विविधपक्षावस्थितौ । यद्वा विरिति शकुनिनाम वेतेर्गतिकर्मणः । वेः शकुनेरिव पक्षौ ययोस्तौ शोणा शोणौ । शोणशब्दोऽत्र वर्णवचनः । रक्तो वर्णो धूम्रभासः शोण इत्युच्यते । धृष्णू प्रसहनौ । नृवाहसा नृणां मनुष्याणां वोढारौ ॥ ६ ॥

**म०** 'इतरांश्च युञ्जन्त्यस्येति' ( का० २०।५।११ )। इतरान्त्रीनश्वान्रथे युनक्ति । गायत्री अश्वस्तुतिः । ऋत्विजो हरी अश्वौ रथे युञ्जन्ति । कीदृशौ । अस्याश्वमेधिकाश्वस्य काम्या काम्यौ काम्येते तौ काम्यौ कामसंपादिनौ न त्वेको वोढुं शक्त इति तौ काम्यौ । विपक्षसा 'पक्ष परिग्रहे' असुन्प्रत्ययः । पक्षयन्ति शरीरं गृह्णन्ति पक्षसः पक्षाः विविधाः पक्षसः पक्षाः ययोस्तौ विपक्षसौ । यद्वा विरिति शकुनिनाम 'वेतेर्गतिकर्मणः' ( निरु० २।६ ) इति यास्कः । वेः पक्षिण इव पक्षसो ययोस्तौ । शोणा शोणौ रक्तौ धृष्णू प्रगल्भौ 'ञिधृषा प्रागल्भ्ये' कुप्रत्ययः । नृवाहसा नॄन् वहतस्तौ । वहेरसुन्प्रत्ययः सर्वत्र विभक्तेराकारः । नृणां वोढारौ ॥ ६ ॥

## सप्तमी ।

यद्वातो अपो अगनीगन् प्रियामिन्द्रस्य तन्वम् । एतꣳ स्तोतरनेन पथा पुनरश्वमावर्तयासि नः ॥ ७ ॥

**उ०** अपो यात्वावगाढेषु वाचयति । यद्वातः बृहती । अश्वदेवत्या । यत् यस्मात् वातः वातवेगोऽश्वः अपः प्रति अगनीगन् अत्यर्थंगतः । प्रियांच इन्द्रस्य तन्वं शरीरम् अगनीगन् अतो ब्रवीमि । एतम् अश्वम् हे स्तोतः अध्वर्यो, अनेन पथा येन गतः पुनः अश्वम् आवर्तयासि आवर्तय आनय नोऽस्माकम् ॥ ७ ॥

**म०** 'अपो यात्वावगाढेषु वाचयति यद्वात इति' ( का० २०।५।१४ ) । चतुर्भिरश्वैर्युक्तं रथमध्वर्युयजमानावारुह्य तडागादिजलं गत्वा जलं प्रविष्टेष्वश्वेषु यजमानं वाचयति । बृहती अश्वस्तुतिः । सिंहो माणवक इति वत् वातः वातसमानवेगोऽश्वः यत् यस्मात् अपो जलानि अगनीगन् इन्द्रस्य प्रियं तन्वं शरीरं चागनीगन् अत्यर्थं गतः 'दाधर्तिदर्धर्ति–' ( पा० ७।४।६५ ) इत्यादिना यङ्लुगन्तो निपातः । अतो हे स्तोतः अध्वर्यो, एतं नोऽस्माकमश्वमनेन पथा मार्गेण येन गतस्तेन पुनरावर्तयासि आवर्तय आनय 'लेटोऽडाटौ' पुरुषव्यत्ययः ॥ ७ ॥

## अष्टमी ।

वसवस्त्वाञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसादित्यास्त्वाञ्जन्तु जागतेन छन्दसा भूर्भुवः स्वर्लाजी३ञ्छाची३न्यव्ये गव्य एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते ॥ ८ ॥

**उ०** 'आगतमश्वं महिषीवावातापरिवृक्ता आज्येनाभ्यञ्जयन्ति वसवस्त्वेति प्रतिमन्त्रम्' । वसवस्त्वाञ्जन्तु । निगदव्याख्यातम् । सौवर्णान्मणीनेकशतमश्वकेसरपुच्छेषु प्रवयन्ति पत्न्यः । भूर्भुवः स्वः । व्याख्यातम् । अश्वाय रात्रिहुतशेषं प्रयच्छति । लाजीन् शाचीन् । योयं लाजानां समूहो लाजीनित्युक्तः । योयं सक्तूनां समूहः शाचीनित्युक्तः । सक्तवो हि । अतितरां शच्या कर्मणा निष्पद्यन्त इति शाचीनित्युक्ताः यश्चायं यव्ये यवमयः समूह उक्तो धानाः । यश्चायं गोर्विकारसमूह उक्तो गव्य इति । एतदन्नम् अत्त भक्षयत हे देवाः । एतदन्नमद्धि भक्षय हे प्रजापते । येभ्योऽश्वः प्रोक्षितः तद्देवतत्वादेतद्देवत्यइति ॥ ८ ॥

**म०** 'आयाय विमुक्तमश्वं महिषी वावाता परिवृक्ताज्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान्यथादेशं वसवस्त्वेति प्रतिमन्त्रम्' ( का० २।५।१५ ) । आयाय जलप्रदेशाद्देवयजनमागत्य रथाद्विमुक्तमश्वं महिष्याद्यास्तिस्रः पत्न्यो यथाक्रममश्वस्य पूर्वादिकानभ्यञ्जन्ति घृतेन महिषी पूर्वकायं वसव इति वावाता देहमध्यं रुद्रा इति परिवृक्ता पश्चाद्भागमादित्या

इति मन्त्रेणेति सूत्रार्थः । त्रीणि यजूंषि लिङ्गोक्तदेवतानि । हे अश्व, वसवोऽष्टौ देवा गायत्रेण छन्दसा त्वा त्वामञ्जन्तु स्निग्धं कुर्वन्तु । रुद्रा एकादश त्रैष्टुभेन छन्दसा त्वामञ्जन्तु । आदित्या द्वादश जागतेन छन्दसा त्वामञ्जन्तु । 'अभ्यञ्ज्यमानान्मणीन् सौवर्णानेकशतमेकशतं केसरापुच्छेष्वावयन्ति भूर्भुवः स्वरिति प्रतिमहाव्याहृति' (का० २० । ५ । १६ ) । महिष्याद्यास्तिस्रः पत्न्यः एकाधिकं शतं सुवर्णमयमणीन् यथा न पतन्ति तथा केसरयोः शिरःस्कन्धस्थयोः पुच्छे चावध्नन्ति महिष्यश्वशिरोरोमसु भूरिति एकशतं मणीन्प्रवयति वावाता ग्रीवारोमसु भुव इति परिवृक्ता पुच्छरोमसु स्वरिति वयतीति सूत्रार्थः । भूर्भुवः स्वः व्याख्याताः । 'अश्वाय रात्रिहुतशेषं प्रयच्छति लाजीञ्छाचीनिति' ( का० २० । ५ । १८ ) । सक्तुधानालाजारूपं रात्रिहुतशेषमश्वाय ददाति भक्ष्याय । अश्वो नात्ति चेत् जले प्रक्षेपः । लाजीन् अश्वदेवत्यं यजुः । लाजानां समूहो लाजीनित्युक्तः सक्तूनां समूहः शाचीन् यश्यायं यव्ये यव्यः यवसमूहः गव्ये गव्यः गोर्विकारसमूहो दध्यादिः हे देवाः, एतदन्नमत्त भक्षयत । हे प्रजापते, एतदन्नमद्धि भक्षय । येभ्योऽश्वः प्रोक्षितस्तद्रूपोऽश्वः संबोध्यते ॥ ८ ॥

## नवमी ।

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किᳫं स्विद्धिमस्य भेषजं किंवावपनं महत् ॥ ९ ॥

उ० ब्रह्मा पृच्छति होतारं यूपमभितः । कः स्वित् । चतस्रोऽनुष्टुभः प्रश्नप्रतिप्रश्नरूपाः । कः पुनरेकाकी असहायः चरति गच्छति । कउ स्वित् कोनु विनष्टः सन् जायते । पुनः उकारः पादपूरणः । किंपुनः हिमस्य शीतस्य भेषजम् । किंच आवपनं महत् । उप्यते निक्षिप्यतेऽस्मिन्नित्यावपनम् ॥ ९ ॥

म० 'ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकीति' ( का० २० । ५ । २० ) । यूपस्य दक्षिणत उदङ्मुखो ब्रह्मा यूपोत्तरतो दक्षिणामुखं होतारं पृच्छति । ब्रह्मोद्ये कर्मणि होतुर्ब्रह्मणश्च प्रश्नप्रतिप्रश्नभूताश्चतस्रोऽनुष्टुभः । स्विदिति वितर्के । एकः असहायः कः चरति गच्छति । उ पादपूरणः । कःस्वित् विनष्टः सन् पुनर्जायते उत्पद्यते । किंस्वित् हिमस्य शीतस्य भेषजमौषधम् । किंस्वित् महत् आवपनम् आ समन्तादुप्यते यस्मिंस्तद्वपनस्थानम् ॥ ९ ॥

## दशमी ।

सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ १० ॥

उ० होता प्रत्याह । सूर्य एकाकी चरति । चन्द्रमा जायते पुनः । अग्निश्च हिमस्य शीतस्य भेषजम् । भूमिः अयं लोकः आवपनं महत् ॥ १० ॥

म० 'सूर्य इत्याचष्टे होता ब्रह्माणं प्रति वक्ति' ( का० २० । ५ । २१ ) । सूर्योऽसहायो गच्छति अनेन होतृब्रह्माणौ यजमाने ब्रह्मवर्चसं धत्तः । 'असौ वा आदित्य एकाकी चरत्येष ब्रह्मवर्चसं ब्रह्मवर्चसमेवास्मिंस्तद्धत्ते' ( १३ । २ । ६ । १० ) इति श्रुतेः । चन्द्रमाः क्षीणः पुनर्जायते वर्धते अनेनायुर्धत्तः । 'चन्द्रमा वै जायते पुनरायुरेवास्मिंस्तद्धत्ते' ( १३ । २ । ६ । ११) इति श्रुतेः । हिमस्य भेषजमग्निः अनेन तेजो धत्तः । 'अग्निर्वै हिमस्य भेषजं तेज एवास्मिंस्तद्धत्ते' (१३।२।६।१२ ) इति श्रुतेः । भूमिरयं लोको महदावपनम् अनेनास्मिन् प्रतिष्ठां धत्तः । 'अयं वै लोक आवपनं महदस्मिन्नेव लोके प्रतितिष्ठति' ( १३ । २ । ६ । १३ ) इति श्रुतेः ॥ १० ॥

## एकादशी ।

का स्विदासीत्पूर्वचित्तिः किᳫंस्विदासीद्बृहद्वयः । का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ॥ ११ ॥

उ० होता ब्रह्माणं पृच्छति । कास्वित् । का पुनः आसीत् पूर्वचित्तिः । किं पुनरासीत् बृहत् महत् वयः पक्षी । का पुनरासीत् पिलिप्पिला । का पुनरासीत् पिशङ्गिला ॥ ११ ॥

म० 'होता ब्रह्माणं का स्विदासीदिति' ( का० २० । ५ । २२ ) होता ब्रह्माणं पृच्छति । पूर्वं चिन्त्यत इति पूर्वचित्तिः सर्वेषां प्रथमस्मृतिविषया का स्वित् बृहत् महत् । वयः पक्षी किं स्वित् आसीत् । पिलिप्पिला का स्वित् पिशङ्गिला च का स्विदासीत् ॥ ११ ॥

## द्वादशी ।

द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥ १२ ॥

उ० ब्रह्मा प्रश्नान् व्याकरोति । द्यौरासीत् । द्युग्रहणेनात्र वृष्टिर्लक्ष्यते । सा हि पूर्वं सर्वैः प्राणिभिश्चित्यते । अश्व आसीद्बृहद्वयः अश्वशब्देनाश्वमेधो लक्ष्यते । वयसा इव ह्यनेनाश्वमेधेन स्वर्गं लोकमारोहन्ति । अविरासीत् अविः पृथिव्यभिधीयते सा आसीत् पिलिप्पिला । वृष्ट्या हि क्लिद्यमाना पृथिवी पिलिप्पिला भवति । श्रीरिति श्रुत्या पृथिव्युक्ता च । रात्रिरासीत्पिशङ्गिला । पिशमिति रूपनाम । रात्रिर्हि सर्वाणि रूपाणि गिलति अदृश्यानि करोति ॥ १२ ॥

म० 'द्यौरिति प्रत्याह' ( का० २० । ५ । २३ ) । ब्रह्मा होतारं प्रति वक्ति । पूर्वचित्तिः पूर्वस्मरणविषया द्यौर्वृष्टिरासीत् । द्योशब्देन वृष्टिर्लक्ष्यते सर्वप्राणिनामिष्टत्वात् । तथाच श्रुतिः 'द्यौर्वै वृष्टिः पूर्वचित्तिर्दिवमेव वृष्टिमवरुन्द्धे' ( १३ । २ । ६ । १४ ) इति । अश्वः बृहद्वयः आसीत् । अश्वशब्देनाश्वमेधो लक्ष्यते । अश्वमेधेन वयसेव स्वर्गमारोहतीत्यश्वमेधो वयः । अवतीत्यविः पृथिवी पिलिप्पिलासीत् । वृष्ट्या भूः पिलिप्पिला

चिक्कणा भवति। 'श्रीर्वै पिलिप्पिला' ( १३।२।६।१६ ) इति श्रुत्या श्रयन्त एनामिति श्रीशब्देन भूरेव। रात्रिः पिशङ्गिला आसीत्। पिशमिति रूपनाम पिशं रूपं गिलतीति पिशङ्गिला रात्रौ सर्वाणि रूपाण्यन्तर्भवन्ति॥ १२॥

## त्रयोदशी।

वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैः शल्मलिर्वृद्ध्या। एष स्य राथ्यो वृषा पड्भिश्चतुर्भिरेदगन्ब्रह्माऽकृष्णश्च नोऽवतु नमोऽग्नये॥ १३॥

उ० प्रोक्षत्यश्वम्। वायुष्ट्वा वायुः त्वा पचतैः पाकैः अवतु। वाय्वग्निसंयोगाद्धि द्रव्याणि पच्यन्ते। असितग्रीवः छागैः असितग्रीवोऽग्निः धूमसंयोगात्। छागैः अवतु कृष्णग्रीवादिभिः पर्यङ्गैः। अश्वाङ्गेष्वालभ्यमाना अश्वायोपकुर्वन्ति अदृष्टेनोपकारेण। न्यग्रोधश्चमसैः अवतु सोमसंबन्धेन। शल्मलिः स्वकीयया वृद्ध्या त्वा अवतु। पालयतु। एष स्यः एष सः राथ्यः रथे साधू राथ्यः। वृषा सेक्ता। पद्भिश्चतुर्भिः आ इत् आगन् आगतः चतुर्ग्रहणं किम्। 'तस्मादश्वस्त्रिभिस्तिष्ठति अथ युक्तः सर्वैः समममायुत' इति श्रुतिः। ब्रह्माऽकृष्णश्च। ब्रह्मा परिवृढः अकृष्णः न विद्यते कृष्णमस्येत्यकृष्णश्चन्द्रमाः। स च नोऽस्माकम् अश्वम् अवतु। नमः अग्नये अग्निं नमस्करोत्यविघ्नाय॥ १३॥

म० 'अश्वप्रोक्षणमद्भ्यस्त्वा वायुष्ट्वेति' (का० २०। ६। ७)। अद्भ्यस्त्वौषधीभ्य इति प्राकृतमन्त्रेण ( ६। ९ ) वायुष्ट्वेत्यारभ्य देवः सविता दधात्विस्वन्तेन ( १६ ) कण्डिकाचतुष्टयेनाश्वमेधिकेन चाश्वप्रोक्षणं करोतीति सूत्रार्थः। चत्वारि यजूंष्यश्वदेवत्यानि। हे अश्व, वायुः पचतैः पाकैः त्वा त्वामवतु। वायुसंयोगादग्निः शीघ्रं पचति। असिता ग्रीवा यस्य धूमेनेत्यसितग्रीवोऽग्निः छागैः त्वामवतु। 'अग्निर्वा असितग्रीवः' ( १३। २। ७। २ ) इति श्रुतेः। 'कृष्णग्रीव आग्नेयो रराटे' ( २४। १ ) इति वक्ष्यमाणत्वादश्वाङ्गेषु कृष्णग्रीवादयः पञ्चदश पर्यङ्ग्याः पशवः सन्ति तैरग्निरवत्वित्यर्थः। न्यग्रोधः चमसैः सोमपात्रैः त्वामवतु। शल्मलिः वृक्षविशेषो वृद्ध्या त्वामवतु 'शल्मलिर्वनसतीनां वर्षिष्ठं वर्धते' ( १३। २। ७। ४ ) इति श्रुतेः। किंच स्यः स एष वृषा सेक्ताश्वः राथ्यः रथे साधुः पद्भिः पादैः चतुर्भिरेव आ अगन् आगतः आ इदगन्निति पदच्छेदः। अश्वस्त्रिभिः पादैस्तिष्ठति चतुर्भिश्च गच्छतीति चतुर्ग्रहणम्। तथाच श्रुतिः 'तस्मादश्वस्त्रिभिस्तिष्ठत्यथ युक्तः सर्वैः पद्भिः समममायुत' ( १३। २। ७। ५ ) इति। पदशब्दस्य डान्तत्वं छान्दसम्। किंच अकृष्णः नास्ति कृष्णं लाञ्छनं यस्मिन् स ब्रह्मा चन्द्रो नोऽस्मानवतु। 'चन्द्रमा वै ब्रह्मा कृष्णश्चन्द्रमस एनं परिददाति' ( १३। २। ७। ७ ) इति श्रुतेः। नोस्माकमश्वमवत्विति वा। अग्नये नमः नमस्कारोऽस्तु विघ्नाभावायाग्नेर्नतिः क्रियते॥ १३॥

## चतुर्दशी।

सᳬंशितो रश्मिना रथः सᳬंशितो रश्मिना हयः। सᳬंशितो अप्स्वप्सुजा ब्रह्मा सोमपुरोगवः॥ १४॥

उ० सᳬंशितो रश्मिना। तिस्रोऽनुष्टुब्विराट्त्रिष्टुभः। प्रोक्षणे एव अश्वदेवत्याः। संपूर्वः श्यतिः शोभने वर्तते। संशितः यथा दर्शनीयतमः रश्मिना रथो भवति। यथाच संसितः रश्मिना हयोऽश्वः। एवमयं संशितः। अप्सु। अद्भिः। अप्सुजाः अप्सुजातोऽश्वः। 'अप्सुजाता अश्वा' इति श्रुतिः। किंभूतः ब्रह्मा विभर्ता परिवृढो वा। सोमपुरोगवः सोमसंस्कारान्पुरस्कृत्य स्वर्गं लोकं गच्छतीति सोमपुरोगवः। सोमार्था हि पशवः। 'स यत्पशुमालभते रसमेवास्मिन्दधाति' इति श्रुतिः॥ १४॥

म० अश्वदेवत्यानुष्टुप्। संपूर्वः श्यतिः शोभनार्थः। रथः रश्मिना कृत्वा संशितः दर्शनीयो भवति 'तस्माद्रथः पर्युतो दर्शनीयतमो भवति' ( १३। २। ७। ८ ) इति श्रुतेः। हयोऽश्वो रश्मिना संशितः शोभितः। अप्सु जायते अप्सुजा अश्वः अप्सु अद्भिः संशितः। विभक्तिव्यत्ययः। 'अप्सुयोनिर्वा अश्वः' ( १३। २। ७। ९ ) इति श्रुतेः। कीदृशः ब्रह्मा। परिवृढः सोमपुरोगमः सोमः पुरोगमोऽग्रगामी यस्य सः सोमं पुरस्कृत्य स्वर्गं लोकं गच्छति। 'सोमपुरोगममेवैनᳬं स्वर्गं लोकं गमयति' ( १३। २। ७। १० ) इति श्रुतेः॥ १४॥

## पञ्चदशी।

स्वयं वाजिंस्तन्वं कल्पयस्व स्वयं यजस्व स्वयं जुषस्व। महिमा तेऽन्येन न संनशे॥ १५॥

उ० किंच। स्वयं वाजिन्। स्वयमेव हे वाजिन्, तन्वं शरीरं कल्पयस्व। स्वराज्यं तवास्तीत्यर्थः। अतएव स्वयमेव यजस्व। तेन्यो यष्टा नास्तीति भावः। स्वयं च जुषस्व। स्वयमेवाभिरुचितं स्थानं कुरुष्व। किमर्थमिदमुच्यतेस्माभिरितिचेत्। महिमा ते तव संबन्धी अन्येन महिम्ना न संनशे। नशिरदर्शनार्थः। वेदे तु व्याप्त्यर्थोऽपि भवति न संव्याप्यते॥ १५॥

म० आश्वी विराट्। हे वाजिन्, स्वयं तन्वं शरीरं त्वं कल्पयस्व 'स्वयं रूपं कुरुष्व यादृशमिच्छसि' ( १३। २। ७। ११ ) इति श्रुतेः। स्वाराज्यं तवास्तीति भावः। अतः स्वयं यजस्व न तवान्यो यष्टास्ति। स्वयं जुषस्व इष्टस्थानं सेवस्व। यतस्ते तव महिमा अन्येन न संनश्यते महिम्ना न संनशे न व्याप्यते। नशिरदर्शनार्थोऽत्र तु व्याप्त्यर्थः। यलोपे नशे रूपम्॥ १५॥

## षोडशी।

न वा उ एतन्म्रियसे न रिष्यसि देवाँ २॥

इदेषि पथिभिः सुगेभिः । यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥ १६ ॥

उ० नवै । वै उ पादपूरणौ । न एतत् म्रियसे यत् संज्ञप्यसे । न च रिष्यसि विनश्यसि विशस्यमानः । किमिति । यत् देवान् इत्प्रति एषि गच्छसि । पथिभिः सुगेभिः साधुगमनैर्देवयानैरित्यर्थः । किंच । यत्र आसते सुकृतः साधुकारिणः । यत्र च ते ययुः गताः तत्र त्वां देवः सविता दधातु ॥ १६ ॥

म० आश्वी त्रिष्टुप् । हे अश्व, अस्माभिर्यत्त्वं संज्ञप्यसे एतत्त्वं न म्रियसे मरणं नाप्नोषि नच रिष्यसे न विनश्यसि विशस्यमानः । वै उ निपातौ पादपूरणौ । यत्सुगेभिः सुगैः 'सुदुरोरधिकरणे' ( पा० ३ । १ । ४८ ) इति गमेर्डप्रत्ययः । साधुगमनैः पथिभिः देवयानमार्गैः देवानित् देवान्प्रति एषि गच्छसि । किंच सुकृतः साधुकारिणो नरा यत्र लोके आसते तिष्ठन्ति । यत्र च ते सुकृतो ययुर्गताः तत्र लोके सविता देवः त्वा त्वां दधातु स्थापयतु । 'सवितैवैनꣳ स्वर्गे लोके दधाति' ( १३ । २ । ७ । १२ ) इति श्रुतेः ॥ १६ ॥

## सप्तदशी ।

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः । वायुः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः सूर्यः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्सूर्यः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ॥ १७ ॥

उ० उपगृह्णात्यपः । अग्निः पशुः सृष्टियज्ञे देवानामासीत् । तेनाग्निना ते अयजन्त । स चाग्निस्तत्र साधनभावमुपगतः सन् । एतं पृथिवीलोकम् अजयत् । यस्मिन् लोके अग्निः । अतः स ते लोको भविष्यति तं च जेष्यसि । पिब एताः प्रोक्षणीः अपः । वायुः सूर्यः पशुः । व्याख्यातमन्यत् ॥ १७ ॥

म० 'उपगृह्णात्यपां पेरुरग्निः पशुरिति' ( का० २० । ६ । ८ ) । अपां पेरुरिति ( अ० ६ । क० १० ) प्राकृतेन मन्त्रेणाग्निः पशुरिति वैकृतेन च प्रोक्षणीरश्वास्ये उपगृह्णातीति सूत्रार्थः । अश्वदेवत्यानि त्रीणि यजूंषि । सृष्टिदेवानामग्निः पशुरासीत् तेनाग्निरूपेण पशुना देवा अयजन्त ईजिरे । स पशुभावमुपगतोऽग्निः एतं लोकं पृथ्वीलोकमजयत् यस्मिन् लोकेऽग्निः हे अश्व, स लोकः ते तव भविष्यति तं लोकं त्वं जेष्यसि एताः प्रोक्षणीरपः पिब । तथाच श्रुतिः 'यावानग्नेर्विजयो यावांल्लोको यावदैश्वर्यं तावांस्ते विजयस्तावांल्लोकस्तावदैश्वर्यं भविष्यतीत्येवैनं तदाह' ( १३ । २ । ७ । १३ ) इति । वायुः पशुरासीत् सूर्यः पशुरासीत् वायुलोकोऽन्तरिक्षं सूर्यलोकः स्वर्गः तावपि ते भविष्यत इत्यर्थः ॥ १७ ॥

## अष्टादशी ।

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा । अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ १८ ॥

उ० परिपशव्ये हुत्वा प्राणाय स्वाहेति । तिस्रोऽपराः वाचयति पत्नीर्नयन् । अम्बे । अनुष्टुप् । अश्वस्तुतिः । पत्न्यः परस्परमामन्त्रयन्ते । हे अम्बे हे अम्बिके हे अम्बाले, न मां नयति अश्वं प्रति प्रापयति कश्चन कश्चिदपि मद्गमनेन च । ससस्ति 'सस् स्वप्ने' । य अन्यां परिगृह्य शेते । कुत्सितोऽश्वः अश्वकः । अकुत्सितोऽपीर्ष्यया कुत्स्यते । सुभद्रिकाम् कुत्सिता सुभद्रा सुभद्रिका । इयमपीर्ष्यया कुत्स्यते । कांपीलवासिनीम् । कांपीलनगरे हि सुभगा सुरूपा विदग्धा विनीताश्च स्त्रियो भवन्ति ॥ १८ ॥

म० 'परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः' ( का० २० । ६ । ११ ) । 'परिपशव्ये स्वाहा देवेभ्यः स्वाहेति' ( २० । ६ । ११ ) द्वे आहुती हुत्वा प्राणायेत्याद्यास्तिस्र आहुतीर्जुहोति एकामश्वसंज्ञपनादौ चतस्रोऽन्ते इति सूत्रार्थः । त्रीणि यजूंषि । प्राणाय अपानाय व्यानाय आभिराहुतिभिरश्वं प्राणवन्तं करोति । तथाच श्रुतिः 'प्राणानेवास्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टं भवति' ( १३ । २ । ८ । २ ) । 'वाचयति पत्नीर्नयन्नमस्तेऽन्व इति' ( का० २० । ६ । १२ ) । 'सर्वाः पत्नीः पशुशोधनाय पात्नेजनीहस्ताः पशून् प्रति नयन्नमस्ते आतानेति' ( २० । ६ । १२ ) प्राकृतं मन्त्रमम्बे इत्याश्वमेधिकं च वाचयतीति सूत्रार्थः । अश्वदेवत्यानुष्टुप् । पत्न्यः परस्परं वदन्ति हे अम्बे, हे अम्बिके, हे अम्बालिके, नामान्येतानि । कश्चन नरो मां न नयति अश्वं प्रति न प्रापयति । तर्हि किमर्थं गम्यते तत्राह । अश्वकः कुत्सितोऽश्वोऽश्वकः अकुत्सितोऽपीर्ष्यया कुत्स्यते । सुभद्रिकां कुत्सिता सुभद्रा सुभद्रिका ईर्ष्यया कुत्स्यते तां नारीमादाय ससस्ति शेते 'सस् स्वप्ने' ह्यादिः । मद्गमनेऽश्वोऽन्यामादाय शयिष्यत इति मया गम्यते न तु मां कश्चिन्नयतीति भावः । किंभूतां सुभद्रिकां काम्पीलवासिनीं काम्पीले नगरे वसतीति काम्पीलवासिनी ताम् । तत्र हि विदग्धाः सुरूपाः कामिन्यो भवन्ति । 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे' ( पा० ६ । १ । ११८ ) इति प्रकृतिभावः ॥ १८ ॥

## एकोनविंशी ।

गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ-

हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम्॥ १९॥

उ० पत्नयः त्रिः परियन्त्यश्वम्। गणानां त्वा स्त्रीगणानां मध्ये त्वां युगपत् गणपतिं हवामहे आह्वयामः। एवमेव। प्रियाणां मनुष्याणां मध्ये त्वामेव प्रियपतिं प्रियं भर्तारं हवामहे। एवमेव निधीनां सुखनिधीनां मध्ये त्वामेव निधिपतिं हवामहे। कथं कृत्वा। हे वसो अश्व, मम त्वं पतिर्भूयाः इति। महिषी अश्वमुप संविशति। आहमजानि। आकृष्य अहम् अजानि 'अज गतिक्षेपणयोः'। क्षिपामि। गर्भधं गर्भस्य धारयितृ रेतः। आत्वमजासि गर्भधम्। आकृष्य च त्वं हे अश्व, अजासि क्षिपसि गर्भधं रेतः॥१९॥

म० अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति' ( का० २०। ६। १३ )। सर्वाः पत्नयः पान्नेजनहस्ता एव प्राणशोधनात्प्राक् अश्वं त्रिस्त्रिः परियन्ति मध्ये पितृवत् अप्रदक्षिणं परियन्ति त्रिः त्रिभिर्मन्त्रैः। वसो ममेति त्रिष्वप्यनुषङ्गः। ततश्चैवं प्रथमं गणानामिति त्रिः प्रदक्षिणं परियन्ति। तत्र सकृन्मन्त्रेण द्विस्तूष्णीम्। ततः प्रियाणामित्यप्रदक्षिणं त्रिः निधीनामिति प्रदक्षिणं त्रिः एवं नवकृत्व इति सूत्रार्थः। त्रीणि यजूंषि लिङ्गोक्तदेवत्यानि। हे अश्व, वयं त्वां हवामहे आह्वयामः। कीदृशं त्वाम्। गणपतिं गणानां मध्ये गणपतिं गणरूपेण पालकम्। प्रियाणां वल्लभानां मध्ये प्रियपतिं प्रियस्य पालकम्। निधीनां सुखनिधीनां मध्ये निधिपतिं सुखनिधेः पालकं त्वां हवामहे। हे वसुरूप अश्व, मम पतिस्त्वं भूया इति शेषः। 'प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति' ( का० २०। ६। १४ )। प्रक्षालितेषु शोधितेषु पशूनां प्राणेषु पत्नीभिरध्वर्युणा यजमानेन प्राणशोधने कृते महिषी अश्वसमीपे शेते। अश्वदेवत्यम्। हे अश्व, गर्भधं गर्भं दधाति गर्भधं गर्भधारकं रेतः अहम् आ अजानि आकृष्य क्षिपामि। 'अज गतिक्षेपणयोः' लोट्। तं च गर्भधं रेतः आ अजासि आकृष्य क्षिपसि॥ १९॥

## विंशी।

ता उभौ चतुरः पदः संप्रसारयाव स्वर्गे लोके प्रोर्णुवाथां वृषा वाजी रेतोधा रेतो दधातु॥ २०॥

उ० ता उभौ। यौ आवां कृतसंकेतौ तौ उभौ त्वं चाहं च। चतुरः पदः पादान्। द्वौ तव संबन्धिनौ द्वौ च मम संबन्धिनौ। संप्रसारयाव। एवं हि संबन्धे संवेशप्रकार इत्यभिप्रायः। अधीवासेन प्रच्छादयति। स्वर्गे लोके। 'एष वै स्वर्गो लोको यत्र पशुꣳ संज्ञपयन्ति'। प्रोर्णुवाथाम्। ऊर्णोतिराच्छादने। प्रोर्णुवनं कुरुतमित्यध्वर्युराह। अश्वशिश्नमुपस्थे कुरुते। वृषा वाजी वृषा सेक्ता वाजी अश्वः रेतोधा रेतसः धारयिता रेतो दधातु आसिञ्चतु॥ २०॥

म० पूर्वमन्त्रशेषः। तौ त्वमहं च उभौ चतुरः पदः पादानावां संप्रसारयाव तव द्वौ मम द्वौ एवं संवेशनप्रकारः 'अधीवासेन प्रच्छादयति स्वर्गे लोक इति' ( का० २०। ६। १४ )। अधीवासेनाश्वमहिष्यौ छादयति अध उपरिष्टाच्चाच्छादनक्षमं वासोऽधीवासः। अश्वदेवत्यम्। अध्वर्युर्वदति। हे अश्वमहिष्यौ, युवां स्वर्गे लोकेऽस्यां यज्ञभूमौ प्रोर्णुवाथां वास आच्छादयतम्। 'ऊर्णुञ् आच्छादने' 'एष वै स्वर्गो लोको यत्र पशुꣳ संज्ञपयन्ति' ( १३। २। ८। ५ ) इति श्रुतेः। 'अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति' ( का० २०। ६। १६ )। महिषी स्वयमेवाश्वशिश्नमाकृष्य स्वयोनौ स्थापयति। अश्वदेवत्यम्। वाजी अश्वो रेतो दधातु मयि वीर्यं स्थापयतु। कीदृशोऽश्वः। वृषा सेक्ता रेतोधाः रेतो दधातीति रेतोधाः वीर्यस्य धारयिता॥ २०॥

## एकविंशी।

उत्सक्थ्या अवगुदं धेहि समञ्जिं चारया वृषन्। यः स्त्रीणां जीवभोजनः॥ २१॥

उ० उत्सक्थ्या। गायत्र्याऽश्वं यजमानोऽभिमन्त्रयते। उद्गते सक्थिनी यस्याः सा उत्सक्थी तस्या उत्सक्थ्या महिष्याः। अवगुदं धेहि अवाचीनं गुदम् रेतो धेहि सिञ्च। कथमितिचेत्। समञ्जिं चारया वृषन् संचारय अञ्जिम्। अनक्ति व्यनक्ति पुंस्त्वमित्यञ्जिः पुंस्त्वजननमुक्तम्। हे वृषन् सेक्तः। कथंभूतोऽञ्जिः। यः स्त्रीणां जीवभोजनः यस्मिन्सति स्त्रियो जीवन्तीत्युच्यन्ते। यस्मिंश्च सति भोजनादीन् भोगान् लभ्यते। स जीवभोजनः॥ २१॥

म० 'उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते' ( का० २०। ६। १७ )। अश्वदेवत्या गायत्री। हे वृषन् सेक्तः अश्व, महिष्या गुदमव गुदोपरि रेतो धेहि वीर्यं धारय। कीदृश्याः। उत्सक्थ्याः उत् ऊर्ध्वे सक्थिनी ऊरू यस्याः सा उत्सक्थी तस्याः। कथं तदाह। अञ्जि लिङ्गं संचारय। अनक्ति व्यनक्ति पुंस्त्वमित्यञ्जिर्लिङ्गम्। लिङ्गं योनौ प्रवेशय। योऽञ्जिः स्त्रीणां जीवभोजनः जीवयति जीवः भोजयति भोजनः जीवश्चासौ भोजनश्च जीवभोजनः। यस्मिन् लिङ्गे योनौ प्रविष्टे स्त्रियो जीवन्ति भोगांश्च लभन्ते तं प्रवेशय॥ २१॥

## द्वाविंशी।

यकाऽसकौ शकुन्तिकाऽऽहलगिति वञ्चति। आहन्ति गभे पसो निगल्गलीति धारका॥ २२॥

उ० इत उत्तरं दशानुष्टुभोऽभिमेथिन्यः। पुंस्त्वजननमुक्तम्। द्वितीयोपरिष्टाद्बृहती। अत्र च यो यत्र भण्यते स तत्र देवतात्वमुपगच्छति। अध्वर्युः कुमारीमभिमेथयति। यकासकौ। अकचप्रत्ययोऽत्र कुत्सायाम्। अङ्गुल्या प्रदर्शयन्नाह। यकाऽसकौ शकुन्तिका। अल्पे कन् प्रत्ययः।

अल्पीयसी पक्षिणीव। आहलक् इति प्रकारवचनम्। हलेहले इति ब्रुवन्ती। वञ्चति त्वरितं गच्छति। चपलेत्यर्थः। तस्या अपि आहन्ति। हन्तिर्गत्यर्थः। आगच्छति। अन्तर्भावितण्यर्थो वा। आगमयति प्रवेशयति। अत्यर्थं वाहन्ति। गभे पसः गभ इति आद्यन्तवर्णविपर्ययः। पसः पसतेः स्पृशतिकर्मणः। भगे शिश्नमाहन्तीत्यर्थः। अथ तदा निगल्गलीति अत्यर्थं शुक्रं मुञ्चति धारका योनिः। यद्वा शब्दानुकरणम् निगल्गलीति गिरते वा। निगिरति शिश्नं योनिः॥ २२॥

**म०** 'अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्याᳪ हये-हयेऽसाविल्यामन्त्र्यामन्त्र्य' (का० २०। ६। १८)। अध्वर्य्वादयः पञ्च हये-हयेऽसाविति संबुध्यन्तनामोच्चारणपूर्वकं संमुखीकृत्य यकासकाविति दशर्चसंबन्धिनीभ्यां द्वाभ्यामृग्भ्यां कुमारीपत्नीभिः सहसोपहासं संवदन्ते। तत्र प्रथममध्वर्युः कुमारीं पृच्छति कुमारि हये हये कुमारि यकासकौ शकुन्तिकेत्यर्थः। कुमार्यादिदेवत्या दश तन्मध्ये द्वितीयोपरिष्टाद्बृहती अन्या नवानुष्टुभः। 'अव्ययसर्वनाम्नामकच्प्राक्टेः' (पा० ५। ३। ७१) इति अकच् कुत्सायाम्। अल्पा शकुन्तिः शकुन्तिका 'अल्पे' (पा० ५। ३। ८५) इति कन्। अङ्गुल्या योनिं प्रदेशयन्नाह। यका या असकौ असौ शकुन्तिका अल्पपक्षिणीव आहलक् शब्दानुकरणम्। हले हले इति शब्दयन्ती वञ्चति गच्छति। स्त्रीणां शीघ्रगमने योनौ हलहलाशब्दो भवतीत्यर्थः। गभे वर्णविपर्यय आर्षः। भगे योनौ शकुनिसदृश्यां यदा पसो लिङ्गमाहन्ति आगच्छति 'पस इति पसतेः स्पृशतिकर्मणः' (निरु० ५। १६) इति यास्कः। पुंस्प्रजननस्य नाम। हन्तिर्गत्यर्थः। यदा भगे शिश्नमागच्छति तदा धारका धरति लिङ्गमिति धारका योनिर्निगल्गलीति नितरां गलति वीर्यं क्षरति। यद्वानुकरणम्। गल्गलेति शब्दं करोति॥ २२॥

## त्रयोविंशी।

यकोऽसकौ शकुन्तक आहलगिति वञ्चति। विवक्षत इव ते मुखमध्वर्यो मा नस्त्वमभिभाषथाः॥ २३॥

**उ०** अध्वर्युं प्रत्याह कुमारी। यकोऽसकौ। यकः असकौ यः असौ शकुन्तक इव आहलगिति वञ्चति। तस्याश्लीलं भाषिणः किमन्यत् ब्रवीमि। विवक्षत इव ते मुखम्। असाधु वक्तुमिच्छत इव ते मुखं पश्यामि अतो हे अध्वर्यो, मा नः अस्मान् त्वमभिभाषथाः॥ २३॥

**म०** कुमारी अध्वर्युं प्रत्याह। अङ्गुल्या शिश्नं प्रदर्शयन्त्याह। हे अध्वर्यो, यकः यः असकौ असौ शकुन्तकः पक्षीव विवक्षतः वक्तुमिच्छतस्ते तव मुखमिव आहलगिति वञ्चति इतस्ततश्चलति अग्रभागे सच्छिद्रं लिङ्गं तव मुखमिव भासते। अतो नोऽस्मान्प्रति मा अभिभाषथाः मा वद तुल्यत्वात्॥ २३॥

## चतुर्विंशी।

माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः। प्रतिलामीति ते पिता गभे मुष्टिमतᳪसयत्॥ २४॥

**उ०** ब्रह्मा महिषीमभिमेथति। माता च ते। हे महिषि यदा माता च तव पिता च तव। अग्रं वृक्षस्य। वार्क्ष्यस्येति तद्धितलोपः। वार्क्ष्यस्य पर्यङ्कस्य उपरितनं भागं रोहतः। मैथुनार्थमेकं पर्यङ्कमारोहत इति अश्लीलाभिप्रायं वचनम्। तदा प्रतिलामीति 'तिल स्नेहने'। स्नेहाम्यहमनेन कर्मणा। इति एवमिति प्रकारवचनं वदन्। तव पिता गभे भगे मुष्टिं मुष्ट्याकारं शिश्नम् अतंसयत् अक्षिपत्। एवं तवोत्पत्तिः॥ २४॥

**म०** ब्रह्मा महिषीमाह। महिषि हे महिषि, ते तव माता च पुनस्ते तव पिता यदा वृक्षस्य वृक्षजस्य काष्ठमयस्य मञ्चकस्याग्रमुपरिभागं रोहतः आरोहतः तदा ते पिता गभे भगे मुष्टिं मुष्टितुल्यं लिङ्गमतंसयत् तंसयति प्रक्षिपति एवं तवोत्पत्तिरित्यश्लीलम्। 'तसि अलंकृतौ चुरादिः। लिङ्गमुत्थानेनालंकरोति वा। किं कुर्वन्। प्रतिलामीति वदन्निति शेषः। 'तिल स्नेहने' तव भोगेन स्निह्यामीति वदन्। एवं तवोत्पत्तिः॥ २४॥

## पञ्चविंशी।

माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः। विवक्षत इव ते मुखं ब्रह्मन्मा त्वं वदो बहु॥ २५॥

**उ०** महिषी प्रत्याह। माता च ते। हे ब्रह्मन्, यदा माता च ते पिता च ते अग्रे वृक्षस्य पर्यङ्कस्य क्रीडतः। तदा त्वमुत्पन्नः। तुल्योत्पत्तिरावयोः। यश्चोभयोर्दोषो न तमेकश्चोदयितुमर्हति। एवं सति यदसाधु वदितुमिच्छत इव ते मुखं पश्यामि तत् हे ब्रह्मन्, मा त्वं वदो बहु॥ २५॥

**म०** सानुचरी महिषी ब्रह्माणं प्रत्याह। हे ब्रह्मन्, ते तव माता ते पिता च यदि वृक्षस्य वृक्षविकारस्य मञ्चकस्याग्रे क्रीडतः रमेते तदा तवोत्पत्तिरिति तवापि तुल्यम्। 'यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे' इति न्यायात्त्वयेदं न वक्तव्यमिति भावः। एवं सत्यपि विवक्षतः वक्तुमिच्छोरिव ते तव मुखं लक्ष्यत इति शेषः। हे ब्रह्मन्, त्वं मा बहु वदः मा ब्रूहि॥ २५॥

## षड्विंशी।

ऊर्ध्वामेनामुच्छ्रापय गिरौ भारᳪ हरन्निव। अथास्यै मध्यमेधताᳪ शीते वाते पुनन्निव॥ २६॥

**उ०** उद्गाता वावातामभिमेथयति ऊर्ध्वामेनाम् कंचित्पुरुषमाह । ऊर्ध्वामेनां वावाताम् उच्छ्रितां कुरु । कथमिव । गिरौ भारं मध्ये निगृह्य हरेत् एवमेनां मध्ये निगृह्य । ऊर्ध्वामुच्छ्रापय । अथ यथेत्येतस्य स्थाने । तथाच उच्छ्रापय यथा अस्या वावाताया मध्यं योनिप्रदेशः एधताम्। 'एध वृद्धौ' वृद्धिं यायात् अथैनां गृह्णीयाः । शीते वाते पुनन्निव । यथा कृषीवलः धान्यं वाते शुद्धं कुर्वन् ग्रहणमोक्षौ झटिति करोति ॥ २६ ॥

**म०** उद्गाता वावातामाह । कंचिन्नरं प्रत्याह । हे नर, एनां वावातामूर्ध्वामुच्छ्रापय उच्छ्रितां कुरु । कथमिव । गिरौ भारं हरन्निव । यथा कश्चित् गिरौ पर्वते भारं हरन् पर्वतोपरि भारमारोपयन् यथा तमुच्छ्रयति तथैनामूर्ध्वां कुरु । कथमूर्ध्वा कार्या तदाह । अथेति निपातो यथार्थः । यथा अस्यै अस्या वावाताया मध्यमेधतां योनिप्रदेशो वृद्धिं यायात् । यथा योनिर्विशाला भवति तथा मध्ये गृहीत्वोच्छ्रापयेत्यर्थः । दृष्टान्तान्तरमाह । शीते वाते पुनन्निव । यथा शीतले वायौ वाति पुनन्धान्यपवनं कुर्वाणः कृषीवलो धान्यपात्रं यथा ऊर्ध्वं करोति तथेत्यर्थः ॥ २६ ॥

## सप्तविंशी ।

ऊ॒र्ध्वमे॑नमुच्छ्र॑यताद्गि॒रौ भा॒रꣳ हर॑न्निव । अथा॑स्य॒ मध्य॑मेजतु शी॒ते वाते॑ पु॒नन्नि॑व ॥ २७ ॥

**उ०** वावाता प्रत्याहोद्गातारम् । भवतोप्येतदेवम् । ऊर्ध्वमेनम् । उद्गातारमुच्छ्रयतात् उच्छ्रापय । अत्र स्त्री पुरुषायते । गिरौ भारं हरन्निव । अथैवं क्रियमाणस्यास्य मध्यं प्रजननम् एजतु चलतु । अथैनं निगृहीष्व शीतेवाते पुनन्निव । यवान् ॥ २७ ॥

**म०** वावातोद्गातारं प्रत्याह । भवतोऽप्येतत्समानम् । हे नर, एनमुद्गातारमूर्ध्वमुच्छ्रयतात् ऊर्ध्वं कुरु । गिरौ भारमिति पूर्ववत् । अथ यथास्य उद्गातुर्मध्यं लिङ्गमेजत् कम्पताम् 'एजृ कम्पने' लोट् । शीते वाते उक्तम् ॥ २७ ॥

## अष्टाविंशी ।

यद॑स्या अꣳहु॒भेद्याः॑ कृ॒धु स्थू॒लमु॒पात॑सत् । मु॒ष्काविद॑स्या एजतो गोश॒फे श॑कु॒लावि॑व ॥ २८ ॥

**उ०** होता परिवृक्तामभिमेथयति । यदस्याः । यत् यदा अस्याः परिवृक्तायाः। अंहुभेद्याः अल्पयोनेः । अंहुः हन्तव्यः भेद्यप्रदेशः प्रजननमस्या इति अंहुभेदी तस्याः अंहुभेद्याः । कृधु इति ह्रस्वनाम । ह्रस्वं शिश्नम् स्थूलं च उपातसत् उपसङ्गच्छेत् । अथ तदा अल्पत्वात् योनेः स्थूलत्वात् ह्रस्वत्वाच्च दुःप्रजननस्य । मुष्कौ वृषणौ इत् एवम् अस्याः प्रजननस्योपरि एजतः। 'एजृ कम्पने' कम्पनं कुरुतः। कथमिव गोशफे गोष्पदे उदकपूर्णे । शकुलाविव मत्स्याविव ॥ २८ ॥

**म०** होता परिवृक्तामाह । यत् यदा अस्याः परिवृक्तायाः कृधु ह्रस्वं स्थूलं च शिश्नमुपातसत् उपगच्छेत् योनिं प्रति गच्छेत् 'तंस उपक्षये' तदा मुष्कौ वृषणौ इत् एव अस्याः योनेरुपरि एजतः कम्पेते । लिङ्गस्य स्थूलत्वाद्योनेरल्पत्वाद्वृषणौ बहिस्तिष्ठत इत्यर्थः । तत्र दृष्टान्तः । गोशफे जलपूर्णे गोः खुरे शकुलौ मत्स्याविव यथा उदकपूर्णे गोः पदे मत्स्यौ कम्पेते । कृध्विति ह्रस्वनाम । कीदृश्या अस्याः । अंहुभेद्याः अंहु भगं भेद्यं विदार्यं यस्याः सा अंहुभेदी तस्याः अंहुर्भिद्यते यस्या वा ॥ २८ ॥

## एकोनत्रिंशी ।

यद्दे॒वासो॑ ल॒लाम॑गुं॒ प्रवि॑ष्टी॒मिन॒मावि॑षुः । स॒क्थ्ना दे॑दिश्यते॒ नारी॑ स॒त्यस्या॑क्षि॒भुवो॒ यथा ॥ २९ ॥

**उ०** परिवृक्ता प्रत्याह । यद्देवासः । होतृप्रमुखान् सर्वानेव ऋत्विजः परिवदति । यदा एते देवासः शिश्नदेवाः शिश्नक्रीडनाः । ललामगुम् । ललामेति सुखमभिधीयते सुखं कर्तुं गच्छतीति ललामगुः शिश्नम् । यद्वा ललामेति पौण्ड्रमभिधीयते । शिश्नं हि योनिं प्रविशत् पौण्ड्रं भवति । प्रविष्टीमिनम् प्रवेश्य विष्टभ्य च । आविषुः आलिङ्गनचुम्बनादिभिर्निगृह्णीयुर्नारीम् । अथ तदा सक्थ्ना देदिश्यते नारी सक्थिकृतेन कुटिलगमनेन निर्दिश्यते लक्ष्यते नारी । नहि तस्याः किंचिदव्याप्तम् पुरुषेण भवति अन्यत्र सक्थ्न इत्यभिप्रायः । कथमिव सत्यस्याक्षिभुवो यथा । द्विप्रकारं सत्यम् अक्षिप्रभवमनक्षिप्रभवं चेति । अक्षिग्राह्यमक्षिप्रभवम् । तत्रहि सर्वं व्याप्तं भवति । अनक्षिप्रभवं श्रोत्रग्राह्यम् तत्तु साकाङ्क्षं वक्तुराप्ततामपेक्षते । अतो विशिनष्टि अक्षिभुव इति । सत्यस्य अक्षिभुवो यथा अवितथत्वं तथेति ॥ २९ ॥

**म०** परिवृक्ता होतारमाह । यत् यदा देवासः देवाः दीव्यन्ति क्रीडन्ति देवा होत्रादय ऋत्विजो ललामगुं लिङ्गं प्र आविषुः योनौ प्रवेशयन्ति । 'अव रक्षे गतौ कान्तौ तृप्तौ प्रीतौ श्रुतौ श्रुतौ । प्राप्तौ श्लेषेऽर्पणे वेशे भागे वृद्धौ गृहे वधे ॥'इत्युक्तेरत्रावधातुः प्रवेशनार्थः । लुङ् 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति वर्तमाने लुङ् 'व्यवहिताश्च' ( पा० १ । ४ । ८२ ) इति प्रोपसर्गेण व्यवधानम् । ललामेति सुखनाम । ललाम सुखं गच्छति प्राप्नोति ललामगुः शिश्नः । यद्वा ललामं पुण्ड्रं गच्छति ललामगुः लिङ्गं योनिं प्रविशदुत्थितं पुण्ड्राकारं भवतीत्यर्थः । कीदृशं ललामगुम् । विष्टीमिनं 'ष्टीम क्लेदे' विशेषेण स्तीमनं क्लेदनं विष्टीमः घञ्प्रत्ययः विष्टीमः क्लेदोऽस्यास्ति विष्टीमी तम् 'अत इनिठनौ' ( पा० ५ । २ । ११५ ) इत्यस्त्यर्थे इनिप्रत्ययः । शिश्नस्य योनिप्रवेशे क्लेदनं भवतीत्यर्थः । यदा देवाः शिश्नक्रीडिनो भवन्तो ललामगुं योनौ प्रवेशयन्ति तदा नारी सक्थ्ना ऊरुणा ऊरुभ्यां देदिश्यते

निर्दिश्यते अत्यन्तं लक्ष्यते। दिश्यतेर्यङ्प्रत्ययः। भोगसमये सर्वस्य नार्यङ्गस्य नरेण व्याप्तत्वादूरुमात्रं लक्ष्यते इयं नारीत्यर्थः। तत्र दृष्टान्तः। सत्यस्याक्षिभुवो यथेति। सत्यं द्विविधम् अक्षिभ्यां भवतीत्यक्षिभु प्रत्यक्षं। एकं च श्रोत्रग्राह्यम्। षष्ठ्यौ तृतीयार्थे। भवति यथा कश्चिदक्षिभुवा प्रत्यक्षेण सत्येन निर्दिश्यते तत्र विश्वासो भवति तथा ऊरुणा दृष्टेन नारीति लक्ष्यत इत्यर्थः। श्रोत्रग्राह्ये तु सत्ये वक्तुराप्ततमत्वमपेक्षितम्॥ २९॥

## त्रिंशी।

यद्ध॒रि॒णो यव॒मत्ति॒ न पु॒ष्टं प॒शु मन्य॑ते। शू॒द्रा यदर्य॑जारा॒ न पोषा॑य धनायति॥ ३०॥

उ० क्षत्ता पालागलीमभिमेथयति। यद्धरिणः। यदा हरिणो मृगः यवं सस्यम् अत्ति भक्षयति। अथ तदा क्षेत्री। न पुष्टं पशु। पशुमिति प्राप्ते विभक्तिलोपः। पुष्टं पशुम् मन्यते अवगच्छति। मम क्षेत्रं भक्षितमिति यथा। एवं शूद्रा यत् यस्य शूद्रस्य भर्तुः। अर्यजारा अर्यः वैश्यः जारो यस्याः सा अर्यजारा भवेत् तदा स शूद्रः क्षेत्री। न पोषाय ममैतदिति मन्यते। नच तस्यां धनायति धनमिव च तां न मन्यते परस्योपभोग्यत्वात्॥ ३०॥

म० क्षत्ता पालागलीमाह। यत् यदा हरिणो यवमत्ति मृगो यदा क्षेत्रस्थं धान्यं भक्षयति तदा क्षेत्री पशु पशुं हरिणं पुष्टं न मन्यते मम धान्यभक्षणेन पशुः पुष्टो जातः सम्यगिति न जानाति किंतु मदीयं क्षेत्रं भक्षितमिति दुःखी भवतीत्यर्थः। पशुशब्दात् 'सुपां सुलुक्' इत्यमो लुक्। एवं शूद्रा शूद्रजातिः स्त्री यदा अर्यजारा भवति 'अर्यः स्वामिवैश्ययोः' (पा० ३।१।१०३) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा। 'शूद्रा चामहत्पूर्वा जातिः' (पा० ४।१।४) इति शूद्राज्जात्यर्थे टाप्। वैश्यो यदा शूद्रां गच्छति तदा शूद्रः पोषाय न धनायते पुष्टिं न इच्छति मद्भार्या वैश्येन भुक्ता सती पुष्टा जातेति न मन्यते किंतु व्यभिचारिणी जातेति दुःखितो भवतीत्यर्थः। 'अशनायोदन्य–' (पा० ७।४।३४) इति क्यचि धनायतीति इच्छार्थे निपातः॥ ३०॥

## एकत्रिंशी।

यद्ध॒रि॒णो यव॒मत्ति॒ न पु॒ष्टं ब॒हु मन्य॑ते। शू॒द्रो यदर्या॑यै जा॒रो न पोष॒मनु॑मन्यते॥ ३१॥

उ० पालागली प्रत्याह। यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते क्षेत्रीति। यदुक्तं भवतोप्येतदेवमिति सोल्लुण्ठमाह। इयांस्तु विशेषः। शूद्र यत् अर्यायै अर्यायाः वैश्यायाः जारः जारयिता। तदा क्षेत्री वैश्यः आत्मनः पोषं नानुमन्यते। नहि सा तस्य पोष्या निकृष्टश्च शूद्रः उत्कृष्टा वैश्या इति। समाप्तमश्लीलभाषणम्॥ ३१॥

म० पालागली क्षत्तारमाह। यदा हरिणो यवमत्ति तदा बहु यथा तथा पशुं पुष्टं न मन्यते। इदं भवतोऽपि तुल्यम्। इयान् विशेषः। यत् यदा शूद्रः अर्यायै अर्याया वैश्याया जारो भवति तदा वैश्यः पोषं पुष्टिं नानुमन्यते मम स्त्री पुष्टा जातेति नानुमन्यते किंतु शूद्रेण नीचेन भुक्तेति क्लिश्यतीत्यर्थः। अश्लीलभाषणं समाप्तम्॥ ३१॥

## द्वात्रिंशी।

द॒धि॒क्राव्णो॑ अकारिषं जि॒ष्णोरश्व॑स्य वा॒जिनः॑। सु॒र॒भि नो॒ मुखा॑ कर॒त्प्र ण॒ आयूं॑षि तारिषत्॥ ३२॥

उ० ऋत्विजो यजमानश्च सुरभिमतीमृचमन्तत आहुः वाचमेवं पुनन्ति। दधिक्राव्णः। अनुष्टुब्वैश्वदेवत्या। यत् दधिक्राव्णः अश्वस्य संस्कारार्थमश्लीलभाषणं अकारिषं अकार्षम् अकार्ष्म कृतवन्तः। वचनव्यत्ययः एकवचनस्य स्थाने बहुवचनं बोध्यम्। उपरिष्टाद्बहूनि पदानि बहुवचनान्तानि दृश्यन्ते। किंभूतस्य दधिक्राव्णः। जिष्णोः जेतुः अश्वस्य अशनस्य व्यापिनः वाजिनः। 'ओविजी भयचलनयोः' वेजनवतः तत्र सुरभीणि सुगन्धीनि। अश्लीलभाषणेन हि दुर्गन्धीनि मुखानि भवन्ति पापहेतुत्वात्। नः अस्माकं मुखानि। निकारलोपश्छान्दसः। करत् करोतु यज्ञ इत्यध्याहारः। किंच। प्र णः आयूंषि तारिषत्। प्रतारिषत् प्रवर्धयतु च नः अस्माकम्। बहुवचनं बालयौवनवृद्धवयोपेक्षम्॥ ३२॥

म० 'महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः' (का० २०।६।२१)। महिषीं यजमानस्य प्रथमपरिणीतां पत्नीमश्वसमीपसुप्तामुत्थाप्य पुरुषा अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारो मन्त्रं पठेयुरिति सूत्रार्थः। वामदेवात्मजदधिक्रावदृष्टाश्वदेवत्यानुष्टुप्। वयमध्वर्यादयः अकारिषमकार्ष्म कृतवन्तः। वचनव्यत्ययः। अश्लीलभाषणमिति शेषः। किमर्थम्। अश्वस्य संस्कारायेति शेषः। अश्वसंस्कारायाश्लीलभाषणं कृतवन्त इत्यर्थः। कीदृशस्याश्वस्य। दधिक्राव्णः दधाति धारयति नरमिति दधिः 'आदृगमहन–' (पा० ३।२।१७१) इति किप्रत्ययः। दधिः सन् क्रामतीति दधिक्रावा। तस्य 'अन्येभ्योऽपि दृश्यते' (पा० ३।२।७५) इति वनिप्प्रत्ययः 'विड्वनोरनुनासिकस्यात्–' (पा० ६।४।४१) इति धातोराकारः। जिष्णोः जयनशीलस्य। वाजिनः वजति गच्छति वाजी वाजोऽस्यास्तीति वा वाजी। तस्य च नोऽस्माकं मुखा मुखानि सुरभि सुरभीणि करत् करोतु यज्ञ इति शेषः। अश्लीलभाषणेन दुर्गन्धं प्राप्तानि मुखानि सुरभीणि यज्ञः करोत्वित्यर्थः। तथाच श्रुतिः 'सुरभिमतीमृचमन्ततोऽन्वाहुर्वाचमेव पुनतः' (१३।२।९।९) इति। सुरभिशब्दाद्विभक्तिलोपः। किंच नोऽस्माकमायूंषि जीवनानि बाल्ययौवनवार्धकानि प्रतारिषत् प्रतारयतु प्रवर्धयतु। लेटि रूपम्॥ ३२॥

## त्रयस्त्रिंशी ।

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुप् सूचीभिः शम्यन्तु त्वा ॥ ३३ ॥

उ० पत्न्योसि पथं कल्पयन्ति । गायत्री त्रिष्टुप् षड्भिर्ऋग्भिः । तत्राद्या उष्णिक् चतस्रोऽनुष्टुभः परा त्रिष्टुप् । गायत्री च त्रिष्टुप् च जगती च अनुष्टुप् च पङ्क्त्या सह बृहती च । उष्णिहा सह ककुप् च । सूचीभिः शम्यन्तु त्वाम् हे अश्व, मनमगानामभेदेन(?) वर्त्मनि दर्शनं सूचीभिः क्रियते तेन पथा असिः प्रवर्तते ॥ ३३ ॥

म० 'तिस्रः पत्न्योऽसि पथान्कल्पयन्त्यश्वस्य' सूचीभिर्लौहराजतसौवर्णीभिर्मणिसंख्याभिर्गायत्रीत्रिष्टुबिति द्वाभ्यां द्वाभ्याम् ( का० २०।७।१ ) । गायत्री त्रिष्टुबिति षडृचे द्वाभ्यां द्वाभ्यामृग्भ्यां महिष्याद्यास्तिस्रः पत्न्यः ताम्ररूप्यस्वर्णमयीभिः प्रत्येकमेकाधिकशतसंख्याभिः सूचीभिरश्वाङ्गेऽसेः शासस्य मार्गान्कुर्वन्ति । शासस्य सुखप्रवेशाय सूचीभिर्वितुद्य-वितुद्याश्वत्वचं जर्जरीकुर्वन्तीति सूत्रार्थः । अश्वदेवत्याः षडृचः आद्योष्णिक् । हे अश्व, गायत्री त्रिष्टुप् जगती अनुष्टुप् पङ्क्त्या सह बृहती उष्णिहा सह ककुप् एतानि छन्दांसि सूचीभिरेताभिः त्वां शम्यन्तु संस्कुर्वन्तु । विकरणव्यत्ययः । असिपथार्थं त्वग्भेदनं संस्कारः ॥ ३३ ॥

## चतुस्त्रिंशी ।

द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः । विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ॥ ३४ ॥

उ० द्विपदा याः । याः द्विपादाः याश्च चतुष्पदाः याश्च त्रिपदाः याश्च षट्पदाः । याश्च विच्छन्दाः विगतं छन्दो याभ्यस्ताः । विषमाक्षराः विषमपदाः छन्दोलक्षणेनानभिसंबद्धाः । याश्च सच्छन्दाः अन्यूनातिरिक्ताक्षराश्छन्दसां जातयः ताः सर्वाः सूचीभिः शम्यन्तु त्वाम् ॥ ३४ ॥

म० चतस्रोऽनुष्टुभः । द्वे पदे यासां ता द्विपदाः याः चतुष्पदाः याः त्रिपदाः याः षट्पदाः याः विच्छन्दाः विगतं छन्दो याभ्यस्ताः छन्दोलक्षणहीनाः याः सच्छन्दाः छन्दोलक्षणयुताः ताः सर्वाः छन्दोजातयः हे अश्व, सूचीभिः त्वां शम्यन्तु ॥ ३४ ॥

## पञ्चत्रिंशी ।

महानाम्न्यो रेवत्यो विश्वा आशाः प्रभूवरीः । मैघीर्विद्युतो वाचः सूचीभिः शम्यन्तु त्वा ॥३५॥

उ० महानाम्न्यो रेवत्यः । महानाम्न्य ऋचः शाक्वर्य इति या भण्यन्ते । रेवत्य एता अपि रेवत्यः । रेवतं तासु साम भवति । विश्वाः सर्वाः आशा दिशः । प्रभूवरीः प्रभूततमाः । मैघीः मेघे भवाः विद्युतः तदुत्पन्ना याश्च वाचः ताः सर्वाः सूचीभिः शम्यन्तु । शमनेन हविः कुर्वन्तु त्वाम् ॥ ३५ ॥

म० महत् नाम यासां ता महानाम्न्यः शक्वर्य ऋचः । रेवत्यः ऋचः यस्यामृचि रैवतं साम गीयते सा रेवती । विश्वाः सर्वाः आशा दिशः । कीदृश्य आशाः । प्रभूवरीः प्रभवन्ति सर्वभूतानि धारयितुं समर्था भवन्ति प्रभूवर्यः 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३।२।७५ ) इति वनिप् 'ऋन्नेभ्यः' ( पा० ४।१।५ ) इति ङीप् 'वनो र च-' ( पा० ४।१।७ ) इति तस्य रेफः पूर्वसवर्णदीर्घत्वम् । मेघे भवा मैध्यः । पूर्वसवर्णः । मेघोत्था विद्युतः वाचो वेदलक्षणा अन्या अपि । एताः सर्वाः सूचीभिः हे अश्व, त्वां शम्यन्तु हविः कुर्वन्तु ॥ ३५ ॥

## षट्त्रिंशी ।

नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया । देवानां पत्न्यो दिशः सूचीभिः शम्यन्तु त्वा ॥३६॥

उ० नार्यस्ते । नृणामपत्यानि बहूनि स्त्रीलक्षणानि नार्यः। ते तव । पत्न्यः यजमानस्य पत्न्यः । लोम लोमानि विचिन्वन्तु पृथक्कुर्वन्तु । मनीषया मनस इच्छया मनसः पर्यालोचनेन । देवानां च याः पत्न्यः दिशः ताः सर्वाः सूचीभिः शम्यन्तु शमनेन हविष्कुर्वन्तु त्वाम् ॥ ३६ ॥

म० हे अश्व, नार्यः नृणामपत्यानि स्त्रियः ते तव लोम रोमाणि मनीषया मनसः इच्छया विचार्य विचिन्वन्तु पृथक्कुर्वन्तु । रोमेत्यत्र जातावेकवचनं विभक्तिलोपो वा । कीदृश्यो नार्यः । पत्न्यः 'पत्युर्नो यज्ञसंयोगे' ( पा० ४।१।३३ ) इति नकारः । यजमानभार्या महिष्याद्या इत्यर्थः । किंच देवानामिन्द्रादीनां पत्न्यः दिशः प्राच्याद्याः सूचीभिः त्वां शम्यन्तु ॥ ३६ ॥

## सप्तत्रिंशी ।

रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः । अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः ॥ ३७ ॥

उ० रजता हरिणीः । रजतसुवर्णसीसमय्यः सूच्यः । युजः सहयोजनाः । युज्यन्ते कर्मभिः सीमालक्षणैः याः ताः अश्वस्य वाजिनः वेजनवतः त्वचि रोमसु सीमाः । सिमाशब्दः सीमपर्यायो मर्यादावचनः । सीमानं कुर्वाणाः शम्यन्तु हविः कुर्वन्तु । शम्यन्तीः हविष्कुर्वाणाः अश्वम् ॥३७॥

म० रजताः रजतमय्यः हरिणीः हरिण्यः सुवर्णमय्यः सीसाः सीसं ताम्रं तन्मय्यः । 'त्रय्यः सूच्यो भवन्ति लोहमय्यो रजता हरिण्यः दिशो वै लोहमय्योऽवान्तरदिशो रजता ऊर्ध्वा हरिण्यस्ताभिरेवैनं कल्पयन्ति' ( १३।२।१०।६ )

इति श्रुतेः । सूचीनां दिग्रूपत्वादश्वसंस्कारक्षमत्वम् । ताः सूच्यः कर्मभिः अश्वदेहे सीमाकरणलक्षणैः युज्यन्ते योगं प्राप्नुवन्ति । सीमाकरणयोग्या भवन्तीत्यर्थः । कीदृश्यस्ताः । युजः युज्यन्ते ता युजः संयुताः । एकीभूता इत्यर्थः । ताः सूच्यो वाजिनो वेगवतोऽश्वस्य त्वचि सिमाः सीमारेखाः शम्यन्तु सम्यक् कुर्वन्तु । सिमाशब्दः सीमापर्यायः । कीदृश्यस्ताः । शम्यन्तीः शम्यन्त्यः संस्कारं कुर्वाणाः ॥ ३७ ॥

## अष्टत्रिंशी ।

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति ॥ ३८ ॥

उ० कुविदङ्गेति व्याख्यातम् ॥ ३८ ॥

म० इयं व्याख्याता ( अ० १० । क० ३२ ) ॥ ३८ ॥

## एकोनचत्वारिंशी ।

कस्त्वाऽऽच्छयति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति । क उ ते शमिता कविः ॥ ३९ ॥

उ० अश्वं विशास्ति अनुवाकेन षड्टचेन । तत्राद्या गायत्री परा अनुष्टुभः । कस्त्वा । कः प्रजापतिः त्वाम् आच्छयति । 'छो छेदने' । आछिनत्ति त्वचः । कश्च प्रजापतिः त्वां विशास्ति त्वचा वियोजयति । कश्च प्रजापतिः ते तव गात्राणि शरीराणि शम्यति शमनेन हविर्भावमापादयति । क उ ते प्रजापतिरेव ते शमिता कविः मेधावी क्रान्तदर्शनः । यद्वा प्रश्नरूपोऽयं मन्त्रः । कोयं मनुष्यः त्वाम् आच्छयति कश्च त्वां विशास्ति कश्च ते गात्राणि शम्यति । कश्च उ ते शमिता कविः । न कश्चिदपीत्यभिप्रायः । उः पादपूरणः ॥ ३९ ॥

म० 'अश्वं विशास्त्यनुवाकेन कस्त्वाऽऽच्छयतीति' ( का० २० । ७ । ६ ) । षड्टचेनानुवाकेनाश्वं विशास्ति अश्वोदरं पाटयति मेदस उद्धरणाय । वपाया अभावात् उदरमध्यस्थं स्त्यानं घृताभं घनं श्वेतं मांसं मेद इति सूत्रार्थः । अश्वदेवत्याः षड्टचः । आद्या गायत्री । हे अश्व, कः प्रजापतिः त्वा त्वामाच्छयति छिनत्ति । 'छो छेदने' लट् 'ओतः श्यनि' ( पा० ७ । ३ । ७१ ) इति ओकारलोपः । हे अश्व, कः त्वां विशास्ति त्वचा वियोजयति । ते तव गात्राणि कः शम्यति शमनेन हविः करोति । कः उ कश्च प्रजापतिरेव कविर्मेधावी ते तव शमिता शमयिता । प्रजापतिरेव सर्वं करोति नाहमित्यर्थः ॥ ३९ ॥

## चत्वारिंशी ।

ऋतवस्त ऋतुथा पर्व शमितारो विशासतु । संवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा ॥ ४० ॥

उ० यस्मिन् पक्षे कस्त्वा प्रजापतिस्त्वेति व्याख्यातं तस्मिन्पक्षे प्रतार्यते । ऋतवस्ते । ऋतवश्च तव शमितारः ऋतुथा ऋतावृतौ काले काले । पर्व पर्वणि । संवत्सरस्य च तेजसा । शमीभिः कर्मभिः शम्यन्तु शमनेन हविर्भावमापादयन्तु त्वां । हे अश्व, यदा तु कः त्वां विशासितुं समर्थो मनुष्य एवं व्याख्यातं तदा ऋतवो देवाः ते शमितार इत्येवं व्याख्येयम् ॥ ४० ॥

म० पञ्चानुष्टुभः । हे अश्व, ऋतवः शमितारः ऋतुथा ऋतौ ऋतौ काले काले ते तव पर्व पर्वाणि अस्थिग्रन्थीन् शमीभिः कर्मभिः विशासतु भिन्नानि कुर्वन्तु । केन संवत्सरस्य संवत्सरात्मकस्य कालस्य तेजसा । किंच ऋतवः त्वा त्वां शम्यन्तु पर्वविशासनेन हविः कुर्वन्तु ॥ ४० ॥

## एकचत्वारिंशी ।

अर्धमासाः परूँषि ते मासा आच्छयन्तु शम्यन्तः । अहोरात्राणि मरुतो विलिष्टँ सूदयन्तु ते ॥ ४१ ॥

उ० अर्धमासाः पक्षाः मासाश्च ते तव परूंषि पर्वाणि आछयन्तु आछिन्दन्तु । शम्यन्तः शमनेन हविर्भावमापादयन्तः । किंच । अहोरात्राणि मरुतश्च विलिष्टं दुःश्लिष्टं सूदयन्तु । 'षूद क्षरणे' पठितोऽपीह संधाने वर्तते वाक्ययोगात् । संदधन्तु ते तव ॥ ४१ ॥

म० अर्धमासाः पक्षाः मासाश्च तदभिमानिनो देवाः शम्यन्तः संस्कुर्वन्तः सन्तो हे अश्व, ते तव परूंषि पर्वाणि आच्छयन्तु समन्तात्छिन्दन्तु । 'ग्रन्थिर्ना पर्वपरुषी' इति कोशः । किंच अहोरात्राणि अहोरात्राभिमानिदेवा मरुतश्च देवाः ते तव विलिष्टं 'लिश अल्पीभावे' विशेषेणाल्पमङ्गम् तत् सूदयन्तु संदधतु 'सूद क्षरणे' अत्र सन्धानार्थः व्यर्थ मास्तु ॥ ४१ ॥

## द्विचत्वारिंशी ।

दैव्या अध्वर्यवस्त्वाच्छयन्तु वि च शासतु । गात्राणि पर्वशस्ते सिमाः कृण्वन्तु शम्यन्तीः ॥४२॥

उ० दैव्या अध्वर्यवः । ये च दैव्या दिव्या अध्वर्यवः अश्विप्रभृतयः ते च त्वा त्वाम् आछयन्तु विच शासतु चकारो भिन्नक्रमः । विशासतु च । किंच गात्राणि पर्वशः ते तव सिमाः मर्यादाः कृण्वन्तु कुर्वन्तु । शम्यन्तीः मर्यादादर्शनेन शमनं कुर्वाणाः ॥ ४२ ॥

म० देवानामिमे दैव्याः अश्विनौ देवानामध्वर्यू इत्युक्तत्वात् अश्विप्रभृतयो देवसंबन्धिनोऽध्वर्यवः हे अश्व, त्वा त्वामाच्छयन्तु आच्छिन्दन्तु विशासतु च । चकारो भिन्नक्रमः । हविः कुर्वन्तु । किंच ते तव गात्राणि । विभक्तिव्यत्ययः । गात्रेषु शरीरेषु पर्वशः पर्वणि पर्वणि सिमाः सीमा मर्यादाः

कृण्वन्तु कुर्वन्तु । 'कृ करणे' स्वादिः । कीदृशीः सीमाः । शम्यन्तीः संस्कुर्वाणाः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

द्यौस्ते पृथिव्युन्तरिक्षं वायुश्छिद्रं पृणातु ते । सूर्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया ॥ ४३ ॥

उ० द्यौस्ते द्यौश्च ते तव पृथिवी च अन्तरिक्षं च वायुश्च छिद्रं पृणातु पूरयतु ते । किंच । सूर्यश्च ते तव नक्षत्रैः सह लोकं स्थानं कृणोतु । साधुया साधुम् । द्वितीयार्थे या छान्दसः ॥ ४३ ॥

म० द्यौः स्वर्गः पृथिवी अन्तरिक्षं लोकत्रयाभिमानिनो देवाः अग्निवायुसूर्याः वायुरन्योऽपि शरीरस्थः प्राणादिः हे अश्व, ते तव छिद्रं पृणातु । वचनव्यत्ययः पृणन्तु पूरयन्तु । यत् न्यूनं तत् पूरयन्तु । किंच नक्षत्रैः सह नक्षत्रयुक्तः सूर्यः ते तव साधुयां साधुं समीचीनं लोकं कृणोतु करोतु । 'सुपां सुलुक्' इत्यादिना साधुशब्दात्परस्यामो यादेशः । सूर्यस्ते उत्तमं लोकं ददात्वित्यर्थः ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शम्वस्तु तन्वै तव ॥ ४४ ॥

उ० शं ते सुखं ते तव अस्तु । हे अश्व, परेभ्यः गात्रेभ्यः । शं सुखम् अवरेभ्यः अस्तु । शम् अस्थभ्यः अस्थिभ्यः मज्जभ्यश्च अस्तु । शं चास्तु तन्वै शरीराय । षष्ठ्यर्थे छन्दसि चतुर्थी वक्तव्येति षष्ठ्यर्थे चतुर्थी । तन्वाः तव ॥४४॥

म० हे अश्व, ते तव परेभ्योऽवयवेभ्य उच्चेभ्यः शिरआदिभ्यः शं सुखमस्तु । अवरेभ्यः अधःस्थेभ्यश्च पादादिभ्यो गात्रेभ्यः शमस्तु । अस्थभ्यः तवास्थिभ्यश्च शमस्तु । 'अस्थिदधि' ( पा० ७ । १ । ७५ ) इत्यस्यानुवृत्तौ 'छन्दस्यपि दृश्यते' ( पा० ७ । १ । ७६ ) इति सूत्रेण हलादावप्यस्थिशब्दस्यानङादेशः । मज्जभ्यः पृष्ठधातुभ्योऽपि शमस्तु । किंबहुना तव तन्वै तन्वाः सर्वस्यापि शरीरस्य शमु सुखमेवास्तु । षष्ठी चतुर्थ्यर्थे । आशिषि वा चतुर्थी । उ एवार्थे ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किंस्विद्धिमस्य भेषजं किंवावपनं महत् ॥ ४५॥

उ० इत उत्तरं ब्रह्मोद्यमष्टादशर्चम्[१] । तत्राद्याः चतस्रोऽनुष्टुभः कास्विदासीत्पूर्वचित्तिरित्याद्याश्च चतस्रोऽनुष्टुभः त्रिष्टुभोऽन्याः । होताध्वर्युं पृच्छति कःस्विदेकाकी इति ॥ ४५ ॥

म० 'प्रागवपाहोमाद्धोताध्वर्युश्च सदसि संवदेते चतसृभिः' ( का २० । ७ । १० ) । कः स्विदेकाकीति पूर्ववत् । वपाहोमात्प्राक् च चतुर्ऋग्भिः पूर्ववदुक्तिप्रत्युक्त्या सदोमध्ये गत्वा होता अध्वर्युश्च संवादं कुरुतः । अष्टादश ऋचो ब्रह्मोद्यसंज्ञाः । ब्रह्मोद्यं परस्परं संवादः । आद्याश्चतस्रोऽनुष्टुभः कास्विदित्याद्याश्च ( ५३ ) अनुष्टुभः । होताध्वर्युं पृच्छति । व्याख्याता ॥ ४५ ॥

## षट्चत्वारिंशी ।

सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ ४६ ॥

उ० तं प्रत्याह । सूर्य एकाकी चरति । अग्ने व्याख्यातौ ॥ ४६ ॥

म० व्याख्याता ॥ ४६ ॥

## सप्तचत्वारिंशी ।

किंस्वित्सूर्यसमं ज्योतिः किं समुद्रसमं सरः । किंस्वित्पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥ ४७ ॥

उ० अध्वर्युर्होतारं पृच्छति । किंस्वित्सूर्यसमं ज्योतिः । किंच समुद्रसमं सरः । किंस्वित्पृथिव्यै पृथिव्याः वर्षीयः महत्तरम् । कस्य च मात्रा परिमाणम् न विद्यते नास्ति ॥ ४७ ॥

म० अध्वर्युर्होतारं पृच्छति । हे होतः, स्विदिति तर्के । सूर्यसमं सूर्यमण्डलतुल्यं ज्योतिः तेजः किं तत् ब्रूहि । समुद्रसमं सरः किं स्वित् । पृथिव्यै पृथिव्याः सकाशात् वर्षीयः महत्तरं किं स्वित् । 'प्रियस्थिर–' ( पा० ६ । ४ । १५७ ) इत्यादिना वृद्धस्य वर्षादेशः । कस्य मात्रा परिमाणं न विद्यते ॥ ४७ ॥

## अष्टचत्वारिंशी ।

ब्रह्म सूर्यसमं ज्योतिर्द्यौः समुद्रसमं सरः । इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥ ४८ ॥

उ० तं प्रत्याह । ब्रह्म सूर्यसमम् । ब्रह्म त्रयीलक्षणं परं वा । सूर्यसमं ज्योतिः । द्यौः समुद्रसमं सरः । इन्द्रः पृथिव्यै वर्षीयान् महत्तरः । गोस्तु मात्रा न विद्यते । गवा हि यज्ञो धार्यते । स जातः कारणं भवतीत्येतदभिप्रायम् । पृथिवी वा गौः ॥४८॥

म० होता प्रत्याह सूर्यसमं ज्योतिर्ब्रह्म त्रयीलक्षणम् परं च । समुद्रसमं सरो द्यौरन्तरिक्षं यतो वृष्टिर्भवति । पृथिव्यै पृथिव्याः सकाशात् इन्द्रः वर्षीयान् वृद्धतरः । तु पुनः गोः धेनोः मात्रा न विद्यते यज्ञधारकत्वात् ॥ ४८ ॥

## एकोनपञ्चाशी ।

पृच्छामि त्वा चितये देवसख यदि त्वमत्र म-

[१] उत्तरप्रत्युत्तरैः परस्परं संवादो ब्रह्मोद्यम्.

नसा जगन्थ । येषु विष्णुस्त्रिषु पदेष्वेष्टस्तेषु विश्वं भुवनमाविवेशाँ३॥ ॥ ४९ ॥

उ० ब्रह्मोद्गातारं पृच्छति । पृच्छामि त्वा भवन्तं चितये । 'चिती संज्ञाने' परिज्ञानाय । हे देवसख उद्गातः । यदि त्वम् अत्र पृष्टः सन्मनसा प्रश्नविवेचनाय सूक्ष्मानर्थान् जगन्थ अवगच्छसि । येषु विष्णुः यज्ञः त्रिषु पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु आइष्टः । यजेरेतद्रूपम् । तेषु विश्वं भुवनं भूतजातम् । आविवेश उत नेति प्रश्ने प्लुतः ॥ ४९ ॥

म० 'ब्रह्मोद्गातारौ च पृच्छामि त्वेति' ( का० २० । ७ । ११ ) । ब्रह्मोद्गातारं पृच्छति पृच्छामीति । चकाराच्चतुर्ऋग्भिः सदसि ब्रह्मोद्गातारौ संवदेते । ब्रह्मा उद्गातारं पृच्छति । पृच्छामि । देवानां सखा देवसखः 'राजाहःसखिभ्यष्टच्' हे देवसख देवानां मित्र उद्गातः, त्वा त्वां चितये ज्ञानायाहं पृच्छामि । अत्र मत्कृते प्रश्ने यदि त्वं मनसा जगन्थ जानासि गमेर्लिट् । ये गत्यर्थास्ते ज्ञानार्थाः । किं पृच्छसीत्यत आह । विष्णुः यज्ञो येषु त्रिषु पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु एष्टः आ इष्टः यागेन तर्पितः यजेः क्तः । तेषु त्रिषु पदेषु विश्वं सर्वं भुवनमाविवेश प्रविष्टमुत नेति प्रश्ने प्लुतः ॥ ४९ ॥

## पञ्चाशी ।

अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमाविवेश । सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठम् ॥ ५० ॥

उ० प्रत्याह । अपि तेषु तेषु अहमस्मि अपि त्वं चेत्यपिशब्दः । तेषु गार्हपत्याहवनीयदक्षिणाग्निषु त्रिषु पदेषु । अहमस्मि त्वं च । केषु । येषु विश्वं भूतजातम् । आविवेश आविष्टम् यत्पुनरेतदुक्तं भवता यदि त्वमत्र मनसा जगन्थेति । अत्र ब्रूमः । सद्यः एककालमेव । पर्येमि परिगच्छामि पृथिवीम् । उत अपिच द्याम् एकेन अङ्गेन मनसा अस्य दिवः पृष्ठं च किमुत भूतानि तत्राविष्टानीति ॥ ५० ॥

म० उद्गाता प्रत्याह । येषु त्रिषु पदेषु विश्वं भुवनमाविवेशेति यत्त्वया पृष्टम् तेषु त्रिषु पदेषु गार्हपत्यादिषु अहमस्मि अहमपि तत्रैव स्थितोऽस्मि । अपिशब्दात् त्वं च तत्रैवासि । किमेतावदेव जानामि किंतु पृथिवीमुतापि च द्यां स्वर्गं दिवः स्वर्गस्य पृष्ठमुपरिभागमपि सद्यः तत्क्षणमेव एकेनाङ्गेन मनसा पर्येमि परिगच्छामि सर्वं जानामि किंपुनर्भूतानि प्रविष्टानीति भावः ॥ ५० ॥

## एकपञ्चाशी ।

केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि । एतद्ब्रह्मन्नुपवल्हामसि त्वा किꣳ स्विन्नः प्रतिवोचास्यत्र ॥ ५१ ॥

उ० उद्गाता ब्रह्माणं पृच्छति । केष्वन्तः । केषु अन्तर्मध्ये पुरुषः आविवेश आविष्टः प्रविष्टः । कानि चान्तः मध्ये पुरुषे अर्पितानि । एतत् हे ब्रह्मन् उपवल्हामसि । 'वल्ह प्राधान्ये' । इह तु आह्वानपूर्वे संहर्षे वर्तते । उपसङ्गम्याहूयोत्क्षिप्य बाहू पृच्छामि भवन्तम् किंस्विन्नः किं पुनरस्माकं प्रति वोचासि मध्ये पुरुष आविवेश । किंच तानि प्राणाधीनानि करणानि अन्तः पुरुषे अर्पितानि । एतत् त्वा भवन्तं प्रति मन्वानः प्रतिजानानः अस्मि अवस्थितः । नच मायया प्रज्ञया भवसि उत्तरः उद्गातृतरः मत् प्रति ब्रवीषि अत्र प्रश्ने ॥ ५१ ॥

म० उद्गाता ब्रह्माणं पृच्छति । हे ब्रह्मन्, पुरुषः केषु पदार्थेषु अन्तर्मध्ये आविवेश प्रविष्टः । पुरुषे अन्तः पुरुषमध्ये कानि वस्तूनि अर्पितानि स्थापितानि । एतत् त्वा त्वां वयमुपवल्हामसि उपवल्हामः स्पर्धया पृच्छामः 'वल्ह प्राधान्यपरिभाषणहिंसादानेषु' लट् 'इदन्तो मसि' अत्र प्रश्ने । किंस्वित् त्वं प्रतिवोचासि प्रतिवदसि । 'वच उम्' ( पा० ७ । ४ । २० ) इति लेटि छान्दस उम् । 'लेटोऽडाटौ' ( पा० ३ । ४ । ९४ ) इत्याडागमः ॥ ५१ ॥

## द्विपञ्चाशी ।

पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषे अर्पितानि । एतत्त्वात्र प्रतिमन्वानो अस्मि न माययां भवस्युत्तरो मत् ॥ ५२ ॥

उ० प्रत्याह । पञ्चस्वन्तः पञ्चस्विति प्राणाः ख्यायन्ते । पञ्चसु प्राणेषु मत्तः मामपेक्ष्य ॥ ५२ ॥

म० ब्रह्मा प्रत्याह । पुरुषः आत्मा पञ्चसु प्राणेषु अन्तः प्राणमध्ये आविवेश प्रविष्टः तानि प्रसिद्धानि श्रोत्राधिकरणानि पुरुषे अन्तः मध्ये अर्पितानि । प्राणात्मनामन्योन्यापेक्षासिद्धिरित्यर्थः । नचात्मानमन्तरेण प्राणाः ख्यायन्ते न प्राणानन्तरेणात्मेति' बह्वृचश्रुतेः । यद्वा पञ्चसु भूतेषु भूम्यादिषु आत्मा प्रविष्टस्तानि चात्मनि प्रविष्टानि 'तानि सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः । उद्गातः, अहमत्र प्रश्ने त्वा त्वां प्रति एतदुत्तरं प्रतिमन्वानः प्रतिजानानोऽस्मि । एवमुत्तरं ददामीत्यर्थः । किंच मायया बुद्ध्या मत् मत्तः उत्तरोऽधिकस्त्वं न भवसि । मत्तो बुद्धिमान्नासीत्यर्थः ॥ ५२ ॥

## त्रिपञ्चाशी ।

का स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः । का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ॥ ५३ ॥

उ० होताध्वर्युं पृच्छति । कास्विदासीत् ॥ ५३ ॥

म० 'पुनः पूर्वापरेणोत्तरवेदिं का स्विदिति' ( का० २० । ७ । १२ ) । ततः सदसो निष्क्रम्य हविर्धानस्य पुर

उत्तरवेदेः पश्चादुपविश्य पूर्वौ पूर्वोक्तौ होत्रध्वर्यू चतुर्ऋग्भिः संवदेते इति सूत्रार्थः । होताध्वर्युं पृच्छति । व्याख्याता ( ११ ) ॥ ५३ ॥

## चतुःपञ्चाशी ।

द्यौरा॑सीत्पू॒र्वचि॑त्ति॒रश्व॑ आसीद्बृ॒हद्वयः॑ । अवि॑रासीत्पिलिप्पि॒ला रात्रि॑रासीत्पिशङ्गि॒ला ॥ ५४ ॥

**उ०** प्रत्याह । द्यौरासीत् व्याख्यातौ ॥ ५४ ॥

**म०** व्याख्यांता ( १२ ) ॥ ५४ ॥

## पञ्चपञ्चाशी ।

का ई॑मरे पिशङ्गि॒ला का ई॑ कुरुपिशङ्गि॒ला । क ई॑मास्कन्द॑मर्षति॒ क ई॒ पन्थां॒ विस॑र्पति ॥ ५५ ॥

**उ०** अध्वर्युर्होतारं पृच्छति । का ईमरे ईमिति चकारार्थे । अरे इत्यामन्त्रितविषयः । उभावपि निपातौ । का च अरे होतः, पिशङ्गिला । का च कुरुपिशङ्गिला । कश्च आस्कन्दम् अर्षति कश्च पन्थां विसर्पति ॥ ५५ ॥

**म०** अध्वर्युर्होतारं पृच्छति । ईमिति निपातश्चार्थः । अरे होतः, का च पिशंगिला का च कुरुपिशंगिला कश्च आस्कन्दं णमुलन्तः । आस्कद्य उत्प्लुत्य अर्षति गच्छति 'ऋष गतौ' तुदादिः व्यत्ययेन शप् । कश्च पन्थां पन्थानं मार्गं प्रति विसर्पति विविधं गच्छति ॥ ५५ ॥

## षट्पञ्चाशी ।

अ॒जारे॑ पिशङ्गि॒ला श्वा॒वित्कु॑रुपिशङ्गि॒ला । श॒श आ॒स्कन्द॑मर्ष॒त्यहि॒ः पन्थां॒ विस॑र्पति ॥ ५६ ॥

**उ०** प्रत्याह अजारे अजा नित्यारात्रिः अरे अध्वर्यो, पिशङ्गिला । सा हि पिशं रूपं गिलति भक्षयति । स हि तस्याः प्रभावः । श्वावित् सेधा उच्यते । कुरुपिशंगिला । कृत्वा उपलभ्योपलभ्य पिशं रूपं गिलति भक्षयति सा कुरुपिशंगिला । सा हि शतं मूलानां श्वोभक्षणाय कुक्षौ स्थापयति शतं च भक्षयति स हि तस्याः स्वभावः । शशश्च आस्कन्दं आस्कन्द्यास्कन्द्य अर्षति गच्छति स हि तस्य स्वभावः । अहिश्च स्वकीयं पन्थानम् विसर्पति विकुर्वन् गच्छति ॥ ५६ ॥

**म०** अरे अध्वर्यो, अजा पिशंगिला अजा नित्या माया रात्रिर्वा पिशंगिला पिशं रूपं गिलति भक्षयति पिशंगिला माया विश्वं ग्रसते । रात्रावपि रूपाणि न प्रतीयन्ते तमसा । श्वावित् सेधा कुरुपिशंगिला कुरुशब्दोऽनुकरणे 'पिश अवयवे' इति धातोरिगुपधेति कप्रत्ययः । कुरु इति शब्दमनुकुर्वाणा पिशान् मूलावयववान् गिलति पिशंगिला । मूलानां शतं कुक्षौ स्थापयति शतं च भक्षयतीति सेधायाः स्वभावः । शशः वन्यो जीवविशेषः आस्कन्दमास्कद्यास्कद्य अर्षति स तस्य स्वभावः । अहिः सर्पः पन्थां पन्थानं विसर्पति विशेषेण गच्छति ॥ ५६ ॥

## सप्तपञ्चाशी ।

क॒त्यस्य॑ वि॒ष्ठाः क॒त्यक्षरा॑णि॒ कति॒ होमा॑सः क॒तिधा॒ समि॑द्धः । य॒ज्ञस्य॑ त्वा वि॒दथा॑ पृच्छ॒मत्र॒ कति॒ होता॑र ऋतु॒शो य॑जन्ति ॥ ५७ ॥

**उ०** ब्रह्मोद्गातारं पृच्छति । कत्यस्य अस्य यज्ञस्य कति विष्ठाः विशेषेण तिष्ठति यज्ञो यासु ता विष्ठा अन्नानि । कति च अक्षराणि कति च होमाः कतिधा च समिद्धः समिधः यज्ञस्य त्वा भवन्तम् विदथा आवेदनेन हेतुना पृच्छं पृच्छामि । अत्र च यज्ञे कति होतारः ऋतुशः ऋतुयाज्यान् यजन्ति ॥ ५७ ॥

**म०** 'उत्तरौ च कत्यस्येति' ( का० २० । ७ । १३ ) । उत्तरौ पश्चादुक्तौ ब्रह्मोद्गातारौ चतुर्ऋग्भिः संवदेते । ब्रह्मोद्गातारं पृच्छति । अस्य कति विष्ठाः कियन्ति अन्नानि का संख्या यासां ताः कति । विशेषेण तिष्ठति यज्ञो यासु ताः विष्ठाः अन्नानि कियत्प्रकाराणि यज्ञे । अक्षराणि च कति । होमासः होमाः कति । समिद्धः समिधः कतिप्रकाराः । धकारस्य द्वित्वमार्षम् । यज्ञस्य विदथा वेत्तीति विदः विदस्य भावो विदथा यज्ञवेदितृत्वेन हेतुना अत्र स्थले त्वा त्वामहं पृच्छमपृच्छं पृच्छामि । पृच्छतेर्लङ् अडभाव आर्षः । ऋतुशः ऋतौ ऋतौ कति होतारः यजन्ति ॥ ५७ ॥

## अष्टपञ्चाशी ।

षड॑स्य वि॒ष्ठाः श॒तम॒क्षरा॑ण्यशी॒तिर्होमा॑ः स॒मिधो॑ ह ति॒स्रः । य॒ज्ञस्य॑ ते वि॒दथा॒ प्रब्र॑वीमि स॒प्त होता॑र ऋतु॒शो य॑जन्ति ॥ ५८ ॥

**उ०** प्रत्याह । षडस्य । रससंख्ययोपसंजिहीर्षुराह । अस्य यज्ञस्य षड्विष्ठाः अन्नानि सर्वान्नानां षड्रसात्मकत्वात् शतमक्षराणि । छन्दसामुद्धारेणापसंजिहीर्षुराह । चतुर्दश छन्दांसि गायत्रीप्रभृतीनि चतुर्विंशत्यक्षरादीनि । चतुरुत्तराणि अतिधृतिपर्यन्तानि । अतिधृतिस्तु षट्सप्तत्या भवति । एतैः प्रायशो यज्ञस्तायते । तत्र गायत्री अतिधृतिश्च शतम् । एवमुष्णिक् धृतिश्च शतम् । एवमन्येष्वपि छंदस्सु इत्येतदभिप्रायम् । अशीतिर्होमाः । एकविंशतिरश्वमेधे यूपाः । तत्राग्निष्ठे अश्वस्तूपरो गोमृगान् नियुनक्ति । इतरेषु षोडश षोडश । तत्र विंशतियूपैः चतस्रो शीतयो भवन्ति तदभिप्रायमेतत् । कतिधा समिद्ध इति यदुक्तम् अत्र ब्रूमः । समिधो ह तिस्रः याभिः समिद्धिः संदीप्तो यज्ञः तास्तिस्रः अश्वस्तूपरो गोमृगाः प्राजापत्याः पशवः यज्ञस्य ते तव विदथा वेदनेन । ब्रवीमि सप्तहोतारः वषट्कर्तारः ऋतुशः ऋतुयागेषु यजन्ति ॥ ५८ ॥

**म०** उद्गाता प्रत्याह । रससंख्यया अन्नसंख्यामाह । अस्य यज्ञस्य षट् विष्ठाः अन्नानि । सर्वेषामन्नानां षड्सात्मकत्वात्षडेवान्नानीत्यर्थः । अस्य यज्ञस्य शतमक्षराणि छन्दोभिर्यज्ञो निष्पाद्यते तानि च छन्दांसि गायत्र्यादीन्यतिधृत्यन्तानि चतुर्दश चतुर्विंशत्यक्षरादीनि चतुर्वर्णान्तराणि तेषां क्रमोत्क्रमगत्या द्वाभ्यां शतमक्षराणि भवन्ति । तथा हि । गायत्री चतुर्विंशतिवर्णा । अतिधृतिः षट्सप्तत्यक्षरा एवं द्वे मिलित्वा शतमक्षराणि उष्णिक् २८ धृतिः ७२ एवं शतम् । अनुष्टुप् ३२ अत्यष्टिः ६८ एवं शतम् । अष्टिः ६४ बृहती ३६ एवं शतम् । अतिशक्करी ६० पङ्क्तिः ४० एवं शतम् । शक्करी ५६ त्रिष्टुप् ४४ एवं शतम् । अतिजगती ५२ जगती ४८ एवं शतमक्षराणि । अनेनाभिप्रायेण शतमक्षराणीत्युक्तम् । होमाः अशीतिः अश्वमेध एकविंशतिर्यूपाः तत्राग्निष्ठे मध्यमयूपेऽश्वतूपरगो मृगान्नियुनक्ति इतरेषु षोडश पशून् तत्र विंशतियूपेषु चतस्रोऽशीतयः पशवो भवन्तीत्यभिप्रायेणोक्तम् । अशीतिर्होमाः ह स्फुटम् । तिस्रः समिधः अश्वतूपरगोमृगाः प्राजापत्याः पशवः तद्रूपाभिः समिद्भिर्यज्ञो दीप्त इति तिस्रः समिध उक्ताः । यज्ञस्य विदथा वेदनेन हेतुना ते तुभ्यं प्रब्रवीमि प्रवदामि । किंच सप्त होतारः वषट्कर्तारः ऋतुशः ऋतुयाजेषु यजन्ति ॥ ५८ ॥

## एकोनषष्टी ।

को अस्य वेद भुवनस्य नाभिं को द्यावापृथिवी अन्तरिक्षम् । कः सूर्यस्य वेद बृहतो जनित्रं को वेद चन्द्रमसं यतोजाः ॥ ५९ ॥

**उ०** उद्गाता ब्रह्माणं पृच्छति । को अस्य । कः अस्य वेद जानाति । कश्च द्यावापृथिवी अन्तरिक्षं च वेद । कश्च सूर्यस्य वेद जानाति । बृहतः महतः जनित्रं जन्म । कश्च वेद चन्द्रमसम् । चन्द्रमसः इति विभक्तिव्यत्ययः । यतोजाः यतो जन्म ॥ ५९ ॥

**म०** उद्गाता ब्रह्माणं पृच्छति । हे ब्रह्मन्, अस्य भुवनस्य जातस्य नाभिं नभ्यते यत्र स नाभिर्बन्धनस्थानं कारणमिति यावत् । नाभौ हि सर्वा नाड्यो बध्यन्ते 'नभ हिंसायाम्' अत्र बन्धनार्थः । औणादिक इप्रत्ययः । भूतजातस्य कारणं को वेद जानाति । द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षं च को वेद । बृहतो महतो जनित्रं जन्म को वेद । सूर्यस्योत्पत्तिः कस्मादित्यर्थः । जनेस्त्रल्प्रत्ययः । यतो जायते उत्पद्यते इति यतोजाः यत इत्युपपदे 'जनसनखनक्रमगमो विट्' (पा० ३ । २ । ६७) इति विट्प्रत्ययः 'विड्वनोरनुनासिकस्य' (पा० ६ । ४ । ४१) इति नकारस्यात्वम् । प्रथमा द्वितीयार्था । यतोजाः यत उत्पन्नं चन्द्रमसमिन्दुं को वेद । यतश्चन्द्रस्योत्पत्तिस्तं को वेदेत्यर्थः ॥ ५९ ॥

## षष्टी ।

वेदाहमस्य भुवनस्य नाभिं वेद द्यावापृथिवी अन्तरिक्षम् । वेद सूर्यस्य बृहतो जनित्रमथो वेद चन्द्रमसं यतोजाः ॥ ६० ॥

**उ०** प्रत्याह । वेदाहम् । वेद जानामि अहम् । अस्य भुवनस्य नाभिं नहनं बन्धनं परं ब्रह्म । वेद च द्यावापृथिवी अन्तरिक्षं च ब्रह्मणो विकारभूतम् । वेद च सूर्यस्य बृहतः जनित्रम् परमात्मलक्षणम् । अथो अपिच वेद जानामि चन्द्रमसं यतोजाः चन्द्रमसः यतोजन्म परमात्मनः यज्ञाद्वा ॥ ६० ॥

**म०** ब्रह्मा प्रत्याह । अस्य भुवनस्य नाभिं कारणमहं वेद जानामि 'विदो लटो वा' (पा० ३ । ४ । ८३) परब्रह्मैव जगत्कारणं जानामीत्यर्थः । द्यावापृथिवी अन्तरिक्षं च वेद ब्रह्मणो विकारभूतं जानामि । बृहतः सूर्यस्य जनित्रमुत्पत्तिकारणं ब्रह्मैव वेद । अथो अपिच यतोजाः चन्द्रमसमहं वेद परमात्मनो जातं चन्द्रमहं वेद्मीत्यर्थः ॥ ६० ॥

## एकषष्टी ।

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥ ६१ ॥

**उ०** अध्वर्युं यजमानः पृच्छति पृच्छामि त्वा । पृच्छामि त्वां भवन्तम् परम् अन्तं पृथिव्याः । पृच्छामि च यत्र भुवनस्य नाभिः नहनम् । पृच्छामि च भवन्तम् वृष्णः सेक्तुः अश्वस्य रेतः । पृच्छामि च वाचः परमं व्योम व्यवनं स्थानम् ॥ ६१ ॥

**म०** 'यजमानोऽध्वर्युं पृच्छामि त्वेति' (का० २० । ७ । १४) । यजमानोऽध्वर्युं पृच्छति । हे अध्वर्यो, पृथिव्याः परमन्तमवधिभूतं पर्यन्तं त्वा त्वामहं पृच्छामि । द्विकर्मकः । यत्र यस्मिन्स्थले भुवनस्य भूतजातस्य नाभिः कारणं तदपि त्वां पृच्छामि । वृष्णः सेक्तुः अश्वस्य रेतः वीर्यं त्वां पृच्छामि । वाचो वाण्याः त्रयीलक्षणायाः परममुत्कृष्टं व्योम स्थानं त्वां पृच्छामि ॥ ६१ ॥

## द्विषष्टी ।

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः । अयꣳ सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥ ६२ ॥

**उ०** प्रत्याह इयं वेदिः । इयं वेदिः परः अन्तः पृथिव्याः । वेदिर्हि सर्वा पृथिवीरूपा भवति । अयं च यज्ञः भुवनस्य नाभिः नहनम् 'यज्ञाद्धि प्रजाः प्रजायन्ते' इति श्रुतेः । अयं च सोमः चन्द्रमाः लता सोमो वा वृष्णः सेक्तुः अश्वस्य रेतः । अयं च ब्रह्मा ऋत्विक् वाचः परमं व्योम व्यवनं स्थानम् त्रिवेदयोगात् । समासं ब्रह्मोद्यम् ॥ ६२ ॥

**म०** 'इयं वेदिरित्यध्वर्युः' ( का० २०।७।१५ ) । अध्वर्युः यजमानं प्रत्याह । इयं वेदिः उत्तरवेदिः पृथिव्याः परः अन्तोऽवधिः । वेदेः सर्वपृथ्वीरूपत्वादित्यर्थः । भुवनस्य नाभिः कारणम् । अयं यज्ञोऽश्वमेधः भुवनस्य प्राणिजातस्य नाभिः कारणम् । 'यज्ञाद्वै प्रजाः प्रजायन्ते' इति श्रुतेः । वृष्णः अश्वस्य रेतः अयं सोमः सोमलताश्वस्य वीर्याज्जातेत्यर्थः । अयं ब्रह्मा ऋत्विक् वाचः त्रयीरूपायाः परमं व्योम स्थानम् । ब्रह्मणस्त्रिवेदसंयोगादित्यर्थः । ब्रह्मोयं समाप्तम् ॥ ६२ ॥

## त्रिषष्टी ।

सुभूः स्वयंभूः प्रथमोऽन्तर्महत्यर्णवे । दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ॥ ६३ ॥

**उ०** महिम्नः पुरोनुवाक्या । सुभूः स्वयंभूः । अनुष्टुप् प्राजापत्या । साधुभवनः स्वयंभूः स्वेच्छया गृहीतशरीरः । प्रथमः अनादिनिधनः पुरुषः । किमकरोदित्याह । अन्तर्महत्यर्णवे दधेह । अन्तर्महतोऽर्णवस्य । हेति निपातः पुराकल्पद्योतनार्थः । किं दधे । गर्भं ऋत्वियं प्राप्तकालम् । कथंभूतं गर्भम् । यतो जातः प्रजापतिः । यस्माद्गर्भात् जातः प्रजापतिः अनन्योपमः ॥ ६३ ॥

**म०** सुभूरिति पूर्वस्य महिम्नः पुरोऽनुवाक्या उत्तरस्य याज्या च । 'उदिते ब्रह्मोद्यं संप्रपद्याध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति तस्य पुरोरुग्घिरण्यगर्भः समवर्तताग्र इत्यथास्य पुरोऽनुवाक्याः सुभूः स्वयंभूः' ( १३।५।२।२३ ) इति श्रुतेः । प्रजापतिदेवत्यानुष्टुप् । ह इति प्रसिद्धम् । प्रथमः सर्वस्य आदिः अनादिनिधनः पुरुषः महति अर्णवे कल्पान्तकालीने समुद्रे अन्तर्मध्ये गर्भं दधे स्थापितवान् । कीदृशः । सुष्ठु भूरुत्पत्तिर्यस्मात्स सुभूः विश्वोत्पादकः । स्वयं भवतीति स्वयंभूः स्वेच्छाधृतशरीरः । कीदृशं गर्भम् । ऋत्वियम् ऋतुः प्राप्तो यस्य । घस्प्रत्ययः । प्राप्तकालम् । यतो गर्भात् प्रजापतिः ब्रह्मा जातः उत्पन्नः ॥ ६३ ॥

## चतुःषष्टी ।

होता यक्षत्प्रजापतिꣳ सोमस्य महिम्नः । जुषतां पिबतु सोमꣳ होतर्यज ॥ ६४ ॥

**उ०** प्रैषः । होता यक्षत् । दैव्यो होता यजतु । प्रजापतिम् सोमस्य महिम्नः संबन्धिनम् । स चेज्यमानः सन् जुषतां प्रीत्या परिगृह्णातु पिबतु च सोमम् । त्वमपि च हे मनुष्यहोतः, यज ॥ ६४ ॥

**म०** महिम्नः प्रैषः । 'होता यक्षत्प्रजापतिमिति प्रैषः' ( १३।५।२।२३ ) इति श्रुतेः । आर्षी गायत्री । महिम्नः सोमस्य महिमसंज्ञस्य सोमग्रहस्य संबन्धिनं प्रजापतिं होता दैव्यो यक्षत् यजतु । इज्यमानः स प्रजापतिः जुषतां सोमं महिमग्रहं पिबतु च । हे मनुष्यहोतः, त्वमपि यज ॥ ६४ ॥

## पञ्चषष्टी ।

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥ ६५ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
त्रयोविंशोऽध्यायः ॥ २३ ॥

**उ०** प्रजापते न । व्याख्यातो मन्त्रः ६५ ॥

इति उवटकृतौ मन्त्रभाष्ये त्रयोविंशोऽध्यायः ॥ २३ ॥

**म०** पूर्वस्य महिम्नो याज्या । 'प्रजापते न त्वदेतान्यन्य इति होता यजतीति' ( १३।५।२।२३ ) इति श्रुतेः । व्याख्याता ( १०।२० ॥ ६५ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
त्रयोविंशोऽयमध्यायो व्यरंसीदाश्वमेधिकः ॥ २३ ॥

---

# चतुर्विंशोऽध्यायः ।

## तत्र प्रथमा ।

अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो रराटे पुरस्तात्सारस्वती मेष्यधस्ताद्धन्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णः श्यामो नाभ्याꣳ सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्यः श्वेतः पुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः ॥ १ ॥

**उ०** इतउत्तरं श्रुतिरूपा मन्त्रा आश्वमेधिकानां पशूनां देवतासंबन्धाभिधायिनोऽध्यायेनोच्यन्ते । अश्वस्तूपरोगो मृगस्ते प्रजापत्या इति शतपथोप्येतमध्यायं श्रुतिकृत्याह । अश्वस्तूपरोगो मृग इति । तन्मध्ये यूप आलभत इत्यादिना ग्रन्थेन दिङ्मात्रं प्रदर्शयन् सूत्रकृता चायम[illegible]ायः सूत्रीकृतः । येनैवमाह अग्निष्टे अश्वस्तूपरो गोमृगान्नियुनक्ति । यथोक्तमश्वादौ देवता इति । तत्र वैष्णवो वामन इत्येवमन्ताः पर्यङ्ग्याः । अश्वः तूपरो निःशृङ्गः गोमृगो गवयः एते प्रजापतिदेवत्याः । कृष्णग्रीवश्छाग आग्नेयः । पुरस्ताल्ललाटे अश्वस्य बन्धनीय इति शेषः । एवं सारस्वती मेषी अधस्ताद्धन्वोः आश्विनौ अधोरामौ अधः शुक्लौ च्छागौ पूर्वपादयोः सोमपूषदेवत्यो नाभ्याम् बन्ध० । सूर्यदेवत्यः श्वेतयमदेवताः कृष्णश्च पार्श्वयोः लोमयुते सक्थनी ययोस्तौ त्वष्टृदेवत्यौ सक्थ्नोः । वायव्यः श्वेतः पुच्छे स्वपस्याय शोभनकर्मणे इन्द्राय वेहत् विष्णुदेवत्यो वामनश्च पशुः अश्वस्य पुच्छ एव । एते पर्यङ्ग्याः । एवमग्रेऽपि देवतापशुबन्धो ज्ञेयः । ललाटादिषु पशुबन्धनायाश्वशरीरं रज्जुभिर्वेष्टनीयम् । एते मध्यमयूपे ॥ १ ॥

**म०** श्रुतिरूपमन्त्रा आश्वमेधिकानां पशूनां देवतासंबन्धविधायिनोऽध्यायेनोच्यन्ते । तत्राश्वमेधे एकविंशतिर्यूपाः सन्ति तत्र मध्यमो यूपोऽग्निष्ठसंज्ञः तत्र सप्तदश पशवो नियोजनीयाः । तान् देवतासंबन्धकथनपूर्वकमाह । अश्वस्तूपरो गोमृगस्ते प्राजापत्याः । अश्वः तूपरः शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनः गोमृगः गवयः एते प्रजापतिदैवत्याः । ततः प्रजापतये जुष्टं नियुनज्मीति मन्त्रेण बन्धनीयाः । एवमग्रेऽपि यो यद्दैवत्यः पशुः सः अमुष्मै जुष्टं नियुनज्मीत्यादिमन्त्रैर्बन्धनीयः । आग्नेयोऽग्निदैवतः कृष्णग्रीवः श्यामवर्णगलोऽजः अश्वस्य पुरस्तात् ललाटे उपनये बन्धनीयः । हन्वोरधस्तात्सारस्वती मेषो बन्धनीयः । आश्विनावधोरामौ अधोभागे शुक्लवर्णाविजौ बाह्वोः अश्वस्य पूर्वपादयोरेकैकः । सोमपूषदेवत्यः श्यामः शुक्लकृष्णरोमाजोऽश्वस्य नाभ्यां । श्वेतः कृष्णश्च सौर्ययामौ श्वेतः पशुः सूर्यदेवतो दक्षिणपार्श्वे । यमदैवतः कृष्णोऽश्ववामपार्श्वे । त्वाष्ट्रौ त्वष्टृदेवतौ लोमशसक्थौ बहुरोमपुच्छिकौ पशू अश्वस्य सक्थ्योरूर्वोः पश्चात्पदयोरेकैकः । वायव्यः श्वेतवर्णः पशुरश्वस्य पुच्छे । स्वपस्याय शोभनकर्मणे इन्द्राय स्वपस्येन्द्रदेवता वेहत् गर्भघातिनी वैष्णवो वामनः पशुश्च पुच्छ एव अङ्गान्तरानुक्तेः । एवमश्वादिभिः सह पञ्चदश भवन्ति । एते पर्यङ्गया उच्यन्ते । अत्राश्वस्य शरीरं तरणाय तुंबीफलवद्रज्जुं बद्ध्वा गुम्फनीयम् । ततः कृष्णग्रीवः आग्नेयो रराट इत्यादयोऽश्वस्य शरीरे यथोक्तस्थाने संवद्धायां रज्वां बन्धनीयाः । ततो रोहितो धूम्ररोहित इत्यादयो द्वादशसंख्याकाः शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्या इत्यन्ता मध्यमे एव यूपे नियोज्याः । 'सप्तदशैव पशून्मध्यमे यूप आलभते' ( १३।५।१।१५ ) इति श्रुतेः । तत्र त्रयोऽश्वतूपरगोमृगाः द्वौ चाग्नेयावेकादशिनौ द्वादश रोहितादयः एवं सप्तदश मध्यमे यूपे । ततः पृषती क्षुद्रपृषतीत्यादीनां श्वेताः सौर्या इत्यन्तानां ( १९ ) शतत्रयसंख्याकानां पशूनां मध्ये पञ्चदश पञ्चदश पशूनेकैकस्मिन्यूपे युनक्ति । एवमितरेषु यूपेषु पञ्चदश पञ्चदशैते पशवः एकैकश्चैकादशिनः । एवं मध्ययूपव्यतिरिक्तेषु विंशतियूपेषु षोडश षोडश पशवो भवन्ति 'षोडशषोडशेतरेषु' ( १३।५।१।१५ ) इति श्रवणात् ॥ १ ॥

## द्वितीया ।

रोहि॑तो धू॒म्ररो॑हितः क॒र्कन्धु॑रोहित॒स्ते सौ॒म्या ब॒भ्रुर॑रु॒णब॑भ्रुः शु॒कब॑भ्रु॒स्ते वा॑रु॒णाः शि॑ति॒रन्ध्रो॒ऽन्यत॑ः शिति॒रन्ध्रः॑ सम॒न्तशि॑तिरन्ध्र॒स्ते सा॑वि॒त्राः शि॑ति॒बा॒हुर॒न्यत॑ः शिति॒बा॑हुः सम॒न्तशि॑तिबाहुस्ते बा॑र्ह॒स्प॒त्याः पृष॑ती क्षु॒द्रपृ॑षती स्थू॒लपृ॑षती॒ ता मै॑त्राव॒रु॒ण्यः॑ ॥ २ ॥

**उ०** रोहितोधूम्र । रोहित इत्यादयः श्वेता वायव्याः श्वेता सौर्या इत्येवमन्तः । इतरेषु यूपेषु रोहितादिषु ये गुणवचनाः शब्दास्ते गुणिनं पशुं लक्षयन्ति ॥ २ ॥

**म०** रोहितः सर्वरक्तः धूम्ररोहितः धूम्रवर्णमिश्रो रक्तः तृतीयः कर्कन्धुरोहितः बदरसदृशरक्तः ते त्रयः सौम्याः सोमदैवत्याः सोमाय जुष्टं नियुनज्मीत्यादिमन्त्रेण प्रत्येकं मध्यमे यूप एव नियोज्याः । ततो बभ्रुः कपिलवर्णः अरुणबभ्रुः अरुणवर्णमिश्रः कपिलः शुकबभ्रुः शुकपक्षिसमवर्णः कपिलश्च ते त्रयो वारुणाः वरुणदैवत्याः मध्यमयूप एव । शिति कृष्णं रन्ध्रं छिद्रं यस्य स शितिरन्ध्रः । अन्यत इत्येकपार्श्वे शितिरन्ध्रः समन्तं सर्वतः शितिरन्ध्रः एते सारस्वताः मध्यमे एव । शितिबाहुः श्वेतपूर्वपादः अन्यतः शितिबाहुः एकस्मिन्नेव पार्श्वे शितिपादः समन्तशितिबाहुः सर्वश्वेतबाहुः 'शिती धवलमेचकौ' एते बार्हस्पत्याः बृहस्पतिदैवत्याः मध्यमे एव । अथ द्वितीययूपे । पृषती विचित्रवर्णबिन्दुयुक्तशरीरा क्षुद्रपृषती सूक्ष्मविचित्रबिन्दुयुक्ता स्थूलपृषती स्थूलविचित्रबिन्दुयुक्ता एते स्त्रीपशवो मित्रावरुणदेवताः द्वितीये यूपे नियोज्याः ॥ २ ॥

## तृतीया ।

शु॒द्धवा॑लः स॒र्वशु॑द्धवालो म॒णिवा॑ल॒स्त आ॑श्वि॒नाः श्येत॑ः श्येता॒क्षो॑ऽरु॒णस्ते रु॒द्राय॑ पशु॒पत॑ये क॒र्णा या॒मा अ॑वलि॒प्ता रौ॒द्रा नभो॑रूपाः पार्ज॒न्याः ॥ ३ ॥

**उ०** महीधरोक्तमर्थं विलिखामि । शुद्धवालः शुभ्रवालः सर्वशुद्धवालः मणिशुद्धवालः मणिवर्णकेशः ते त्रयः अश्विदैवत्याः द्वितीये । श्येतः श्वेतवर्णः श्येताक्षः श्वेतनेत्रः अरुणः रक्तः ते त्रयो रुद्राय पशुपतये पशुपतिरुद्रदैवता द्वितीये । कर्णास्त्रयः पशुविशेषाः 'कर्णश्चन्द्रे च वृक्षे च' इति विश्वोक्तेः । कर्णाश्चन्द्रसदृशश्वेतकर्णास्त्रयः पशवः । बहुवचनस्य त्रित्वे पर्यवसानात् । यामाः यमदैवताः द्वितीये । अवलिप्ताः सगर्वास्त्रयो रौद्राः । एते द्वितीये पञ्चदश । अथ तृतीये यूपे । नभोरूपाः आकाशवन्नीलवर्णाः पार्जन्याः पर्जन्यदैवताः पशवस्तृतीये नियोज्याः ॥ ३ ॥

**म०** शुद्धवालः शुभ्रवालः सर्वशुद्धवालः मणिशुद्धवालः मणिवर्णकेशः ते त्रयः अश्विदैवत्याः द्वितीये । श्येतः श्वेतवर्णः श्येताक्षः श्वेतनेत्रः अरुणः रक्तः ते त्रयो रुद्राय पशुपतये पशुपतिरुद्रदैवता द्वितीये । कर्णास्त्रयः पशुविशेषाः 'कर्णश्चन्द्रे च वृक्षे च' इति विश्वोक्तेः । कर्णाश्चन्द्रसदृशश्वेतकर्णास्त्रयः पशवः । बहुवचनस्य त्रित्वे पर्यवसानात् । यामाः यमदैवताः द्वितीये । अवलिप्ताः सगर्वास्त्रयो रौद्राः । एते द्वितीये पञ्चदश । अथ तृतीययूपे । नभोरूपाः आकाशवन्नीलवर्णाः पार्जन्याः पर्जन्यदैवताः पशवः तृतीये नियोज्याः ॥ ३ ॥

## चतुर्थी ।

पृश्नि॑स्तिर॒श्चीन॑पृश्निरू॒र्ध्वपृ॑श्नि॒स्ते मा॑रु॒ताः फ॒ल्गू-

लोहितोर्णी पलक्षी ताः सारस्वत्यः प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ॥ ४ ॥

**उ०** पृश्निः विचित्रवर्णा तिरश्चीनानि पृश्नीनि बिन्दवो यस्य सः । एवमूर्ध्वानि पृश्नीनि यस्य सः । ते त्रयो मारुताः मरुद्देवत्यास्तृतीये । फल्गूः अपुष्टशरीरा लोहितोर्णी रक्तरोमवती पलक्षी श्वेता । पलक्षशब्दो वलक्षार्थः श्वेतपर्यायः । तास्तिस्रोऽजाः सारस्वत्यः सरस्वतीदैवतास्तृतीये । प्लीहाकर्णः प्लीहा रोगविशेषः तद्युक्तौ कर्णौ यस्य स प्लीहकर्णः 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । शुण्ठकर्णः ह्रस्वकर्णः अध्यालोहकर्णः रक्तवर्णकर्णः ते त्रयस्त्वाष्ट्राः त्वष्टृदैवतास्तृतीये । कृष्णग्रीवः शितिकक्षः श्वेतकक्षः अञ्जिसक्थः अञ्जि पुण्ड्रं सक्थ्नोरूर्वोर्यस्य सः ते त्रय ऐन्द्राग्नाः इन्द्राग्निदैवताः तृतीये । पञ्चदश पूर्णाः । कृष्णाञ्जिः कृष्णपुण्ड्रः अल्पाञ्जिः महाञ्जिः अल्पमञ्जि यस्य महदञ्जि यस्य तथा ते त्रय उषस्याः उषादेवताश्चतुर्थे यूपे नियोज्याः ॥ ४ ॥

**म०** पृश्निः विचित्रवर्णा तिरश्चीनानि पृश्नीनि बिन्दवो यस्य सः एवमूर्ध्वानि पृश्नीनि यस्य सः ते त्रयो मारुताः मरुद्देवत्यास्तृतीये । फल्गूः अपुष्टशरीरा लोहितोर्णी रक्तरोमवती पलक्षी श्वेता । पलक्षशब्दो वलक्षार्थः श्वेतपर्यायः । तास्तिस्रोऽजाः सारस्वत्यः सरस्वतीदैवतास्तृतीये । प्लीहाकर्णः प्लीहा रोगविशेषः तद्युक्तौ कर्णौ यस्य स प्लीहकर्णः 'अन्येषामपि दृश्यते' (पा० ६ । ३ । १३७) इति संहितायां दीर्घः । शुण्ठकर्णः ह्रस्वकर्णः अध्यालोहकर्णः रक्तवर्णकर्णः । ते त्रयस्त्वाष्ट्राः त्वष्टृदैवतास्तृतीये । कृष्णग्रीवः शितिकक्षः श्वेतकक्षः अञ्जिसक्थः अञ्जि पुण्ड्रं सक्थ्नोरूर्वोर्यस्य सः ते त्रय ऐन्द्राग्नाः इन्द्राग्निदैवताः तृतीये । पञ्चदश पूर्णाः । कृष्णाञ्जिः कृष्णपुण्ड्रः अल्पाञ्जिः महाञ्जिः अल्पमञ्जि यस्य महदञ्जि यस्य स तथा । ते त्रय उषस्याः उषोदेवताश्चतुर्थे यूपे नियोज्याः ॥ ४ ॥

## पञ्चमी ।

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाता अदित्यै सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥ ५ ॥

**उ०** विचित्रवर्णास्तिस्रः स्त्रीपशवो वैश्वदेव्यः विश्वदेवदेवताश्चतुर्थे । रोहिण्यः रक्तवर्णाः त्र्यवयः सार्धसंवत्सरास्तिस्रोऽजा वाचे वाग्देवताश्चतुर्थे । अविज्ञाताः कृष्णग्रीवादिचिह्नविज्ञानशून्यास्त्रयः पशवोऽदित्यै अदितिदेवताश्चतुर्थे । सरूपाः समानरूपास्त्रयः पशवो धात्रे धातृदेवताश्चतुर्थे । एवं पञ्चदशः । अथ पञ्चमे यूपे तिस्रो वत्सतर्यः बालछाग्यो देवतानां पत्नीभ्यः तद्देवताः पञ्चमे ॥ ५ ॥

**म०** विचित्रवर्णास्तिस्रः स्त्रीपशवो वैश्वदेव्यः विश्वदेवदेवताश्चतुर्थे । रोहिण्यः रक्तवर्णाः त्र्यवयः सार्धसंवत्सरास्तिस्रोऽजा वाचे वाग्देवताश्चतुर्थे । अविज्ञाताः कृष्णग्रीवादिचिह्नविज्ञानशून्यास्त्रयः पशवोऽदित्यै अदितिदेवताश्चतुर्थे । सरूपाः समानरूपास्त्रयः पशवो धात्रे धातृदेवताश्चतुर्थे एवं पञ्चदश । अथ पञ्चमे यूपे तिस्रो वत्सतर्यः बालछाग्यो देवानां पत्नीभ्यः तद्देवताः पञ्चमे ॥ ५ ॥

## षष्ठी ।

कृष्णग्रीवा आग्नेयाः शितिभ्रवो वसूनाᳪं रोहिता रुद्राणाᳪं श्वेता अवरोकिण आदित्यानां नभोरूपाः पार्जन्याः ॥ ६ ॥

**उ०** कृष्णग्रीवाः कालकण्ठास्त्रयः पशव आग्नेयाः अग्निदेवताः पञ्चमे । शितिभ्रवः श्वेतवर्णभ्रूयुक्तास्त्रयो वसूनां वसुदेवताः पञ्चमे । रोहिताः रक्तवर्णास्त्रयः रुद्राणां रुद्रदेवताः पञ्चमे । श्वेताः अवरोकिणः अवलोकिनः । यद्वा अवाधस्ताद्रोकः छिद्रं येषां ते । 'छिद्रं निर्व्यथनं रोकः' । ते त्रयः आदित्यानां तद्देवताः पञ्चमे । अथ षष्ठे यूपे । नभोरूपाः पार्जन्यास्त्रयः षष्ठे ॥ ६ ॥

**म०** कृष्णग्रीवा कालकण्ठास्त्रयः पशव आग्नेयाः अग्निदेवताः पञ्चमे । शितिभ्रवः श्वेतवर्णभ्रूयुक्तास्त्रयो वसूनां वसुदेवताः पञ्चमे । रोहिताः रक्तवर्णास्त्रयः रुद्रदेवताः पञ्चमे । श्वेताः अवरोकिणः अवलोकिनः । यद्वा अवाधस्ताद्रोकः छिद्रं येषां ते 'छिद्रं निर्व्यथनं रोकः' इति कोशः । ते त्रयः आदित्यानां तद्देवताः पञ्चमे । अथ षष्ठे यूपे । नभोरूपाः पार्जन्यास्त्रयः षष्ठे ॥ ६ ॥

## सप्तमी ।

उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवा उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः शुकरूपा वाजिनाः कल्माषा आग्निमारुताः श्यामाः पौष्णाः ॥ ७ ॥

**उ०** उन्नतः उच्चः ऋषभः पुष्टः वामनः बह्वन्यपि वयसि गते वृद्धिरहितः ते त्रय ऐन्द्रावैष्णवाः इन्द्रविष्णुदेवताः षष्ठे । उन्नतः शितिबाहुः श्वेतपूर्वपादः शितिपृष्ठः श्वेतपृष्ठः ते त्रयः ऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताः षष्ठे । शुकरूपाः शुकपक्षिसमवर्णाः त्रयो वाजिनाः वाजिदेवताः षष्ठे । कल्माषाः कर्बुरास्त्रयः पशव आग्निमारुताः षष्ठे । एवं पञ्चदश । अथ सप्तमे यूपे । श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवताः सप्तमे ॥ ७ ॥

**म०** उन्नतः उच्चः ऋषभः पुष्टः वामनः बह्वन्यपि वयसि गते वृद्धिरहितः ते त्रय ऐन्द्रावैष्णवाः इन्द्रविष्णुदेवताः षष्ठे ।

उन्नतः शितिबाहुः श्वेतपूर्वपादः शितिपृष्ठः श्वेतपृष्ठः ते त्रयः ऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताः षष्ठे । शुकरूपाः शुकपक्षिसमवर्णाः त्रयो वाजिनाः वाजिदेवताः षष्ठे । कल्माषाः कर्बुराख्रयः पशव आग्निमारुताः षष्ठे । एवं पञ्चदश । अथ सप्तमे यूपे । श्यामाः कृष्णवर्णाः पौष्णाः पूषदेवताः सप्तमे ॥ ७ ॥

## अष्टमी ।

एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्नावैष्णवा वशा मैत्रावरुण्योऽन्यत एन्यो मैत्र्यः ॥ ८ ॥

उ० एताः कर्बुरवर्णास्त्रय इन्द्राग्निदेवताः सप्तमे । द्विरूपाः वर्णद्वयोपेतास्त्रयः अग्नीषोमीयाः अग्निसोमदेवत्याः सप्तमे । वामना अनड्वाहः त्रय आग्नावैष्णवाः अग्निविष्णुदेवत्याः सप्तमे । वशाः वन्ध्याः तिस्रोऽजाः मैत्रावरुण्यः तद्देवताः सप्तमे । अथाष्टमे यूपे । अन्यत एन्यः एकपार्श्वे कर्बुरवर्णास्तिस्रोऽजा मैत्र्याः मित्रदेवत्याः अष्टमे ॥ ८ ॥

म० एताः कर्बुरवर्णास्त्रय इन्द्राग्निदेवताः सप्तमे । द्विरूपाः वर्णद्वयोपेतास्त्रयः अग्नीषोमीयाः अग्निसोमदेवत्याः सप्तमे । वामना अनड्वाहः त्रय आग्नावैष्णवाः अग्निविष्णुदेवत्याः सप्तमे । वशाः वन्ध्याः तिस्रोऽजाः मैत्रावरुण्यः तद्देवताः सप्तमे । अथाष्टमे यूपे । अन्यत एन्यः एकपार्श्वे कर्बुरवर्णास्तिस्रोऽजा मैत्र्यः मित्रदेवत्याः अष्टमे ॥ ८ ॥

## नवमी ।

कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः श्वेता वायव्या अविज्ञाता अदित्यै सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥ ९ ॥

उ० कृष्णग्रीवा आग्नेयास्त्रयः अष्टमे । बभ्रवः कपिलवर्णास्त्रयः सौम्याः सोमदेवत्याः अष्टमे । श्वेतास्त्रयः वायव्याः वायुदेवत्याः अष्टमे । अविज्ञाताः चिह्नविशेषेणाज्ञातास्त्रयः अदितिदेवत्या अष्टमे । अथ नवमे सरूपाः धातृदेवत्याः नवमे । वत्सतर्यः देवपत्नीदेवत्यास्तिस्रः नवमे ॥ ९ ॥

म० कृष्णग्रीवा आग्नेयास्त्रयः अष्टमे । बभ्रवः कपिलवर्णास्त्रयः सौम्याः सोमदेवत्याः अष्टमे । श्वेतास्त्रयः वायव्याः वायुदेवत्याः अष्टमे । अविज्ञाताः चिह्नविशेषेणाज्ञातास्त्रयः अदितिदेवत्याः अष्टमे । अथ नवमे । सरूपाः धातृदेवत्याः नवमे । वत्सतर्यः देवपत्नीदेवत्यास्तिस्रः नवमे ॥ ९ ॥

## दशमी ।

कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः शबला वैद्युताः सिध्मास्तारकाः ॥ १० ॥

उ० कृष्णाः भौमाः भूमिदेवत्यास्त्रयः नवमे । धूम्रवर्णास्त्रयः अन्तरिक्षदेवत्याः नवमे । बृहन्तो महान्तस्त्रयः दिव्याः द्युदेवत्याः नवमे । अथ दशमे शबलाः कर्बुरास्त्रयः वैद्युताः विद्युद्देवत्याः दशमे । सिध्माः सिध्माख्यरोगवन्तस्त्रयः तारकाः नक्षत्रदेवत्याः दशमे ॥ १० ॥

म० कृष्णाः भौमा भूमिदेवत्यास्त्रयः नवमे । धूम्रवर्णास्त्रयः अन्तरिक्षदेवत्याः नवमे । बृहन्तो महान्तस्त्रयः दिव्याः द्युदेवत्याः नवमे । अथ दशमे शबलाः कर्बुरास्त्रयः वैद्युताः विद्युद्देवत्याः दशमे । सिध्माः सिध्माख्यरोगवन्तस्त्रयः नक्षत्रदेवत्याः दशमे ॥ १० ॥

## एकादशी ।

धूम्रान्वसन्तायालभते श्वेतान् ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥ ११ ॥

उ० धूम्रवर्णान् त्रीनजान् वसन्ताय वसन्तदेवतानालभते नियुनक्ति दशमे । श्वेतांस्त्रीन् ग्रीष्माय दशमे । कृष्णवर्णान् त्रीन् वर्षाभ्यः दशमे । अथैकादशे अरुणान् रक्तांस्त्रीन् शरदे एकादशे । पृषतः नानावर्णबिन्दुयुक्तान् त्रीन् हेमन्ताय एकादशे । पिशङ्गान् लोहितमिश्रकपिलवर्णांस्त्रीन् शिशिराय एकादशे ॥ ११ ॥

म० धूम्रवर्णान् त्रीनजान् वसन्ताय वसन्तदेवतानालभते नियुनक्ति दशमे । श्वेतान् त्रीन् ग्रीष्माय दशमे । कृष्णवर्णान् त्रीन्वर्षाभ्यः दशमे । अथैकादशे अरुणान् रक्तान् त्रीन् शरदे एकादशे । पृषतः नानावर्णबिन्दुयुक्तान् त्रीन् हेमन्ताय एकादशे । पिशङ्गान् लोहितमिश्रकपिलवर्णान् त्रीन् शिशिराय एकादशे ॥ ११ ॥

## द्वादशी ।

त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै त्रिवत्सा अनुष्टुभे तुर्यवाह उष्णिहे ॥ १२ ॥

उ० सार्धसंवत्सरास्त्रयः गायत्र्यै एकादशे । सार्धद्विसंवत्सरास्त्रयः त्रिष्टुभे एकादशे । अथ द्वादशे यूपे । दित्यवाहः । द्विसंवत्सरास्त्रयो जगत्यै द्वा० । त्रिवत्साः त्रिवर्षास्त्रयोऽनुष्टुभे द्वा० । तुर्यवाहः सार्धत्रिसंवत्सरास्त्रय उष्णिहे द्वा० ॥ १२ ॥

म० सार्धसंवत्सरास्त्रयः गायत्र्यै एकादशे । सार्धद्विसंवत्सरास्त्रयः त्रिष्टुभे एकादशे । अथ द्वादशे यूपे । दित्यवाहः द्विसंवत्सरास्त्रयो जगत्यै द्वा० । त्रिवत्साः त्रिवर्षाः त्रयोऽनुष्टुभे द्वा० । तुर्यवाहः सार्धत्रिसंवत्सरास्त्रय उष्णिहे द्वा० ॥ १२ ॥

## त्रयोदशी ।

पष्ठवाहो विराज उक्षाणो बृहत्या ऋषभाः ककुभेऽनड्वाहः पङ्क्त्यै धेनवोऽतिच्छन्दसे ॥ १३ ॥

उ० पष्ठवाहः चतुःसंवत्सरास्त्रयो विराजे द्वा० । उक्षाणः

सेचनसमर्था युवानस्त्रयः बृहत्यै द्वा० । अथ त्रयोदशे यूपे । ऋषभाः उक्ष्णोऽप्यधिकवयस्काः त्रयः ककुभे त्रयोदशे । अनड्वाहः शकटवहनसमर्था अजास्त्रयः पङ्क्त्यै त्रयो० । धेनवः नवप्रसूता अजास्तिस्रः अतिच्छन्दसे त्रयो० १३

**म०** पष्ठवाहः चतुःसंवत्सरास्त्रयो विराजे द्वा० । उक्षाणः सेचनसमर्था युवानस्त्रयः बृहत्यै द्वा० । अथ त्रयोदशे यूपे । ऋषभाः उक्ष्णोऽप्यधिकवयस्काः त्रयः ककुभे त्रयोदशे । अनड्वाहः शकटवहनसमर्था अजास्त्रयः पङ्क्त्यै त्रयो० । धेनवः नवप्रसूता अजास्तिस्रः अतिच्छन्दसे त्रयो० ॥ १३ ॥

## चतुर्दशी ।

कृष्णग्रीवा आग्नेया बभ्रवः सोम्या उपध्वस्ताः सावित्रा वत्सतर्यः सारस्वत्यः श्यामाः पौष्णाः पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥ १४ ॥

**उ०** अथ चातुर्मास्यदेवाः पशवः श्वेताः सौर्या इत्यन्ताः । तत्र प्रथमं वैश्वदेवपर्वपशव उच्यन्ते । कृष्णग्रीवाः त्रयः आग्नेयाः त्रयः बभ्रवः कपिलास्त्रयः सौम्याः । अथ चतुर्दशे यूपे । उपध्वस्ताः उपध्वंसनमधःपतनं तद्गुणविशिष्टा वर्णान्तरमिश्रिता वा त्रयः सवितृदेवताः चतु० । वत्सतर्यः तिस्रः सरस्वतीदेवताः चतु० । श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवत्याः चतु० । पृश्नयः तनुकाया विचित्रवर्णा वा त्रयोः मरुद्देवताः चतु० । बहुरूपास्त्रयो वैश्वदेवाः चतु० । अथ पञ्चदशे । वशाः वन्ध्यास्तिस्रो द्यावापृथिवीयाः द्यावापृथिवीदेवत्याः पञ्च० ॥ १४ ॥

**म०** अथ चातुर्मास्यदेवाः पशवः श्वेता सौर्या इत्यन्ताः । तत्र प्रथमं वैश्वदेवपर्वपशव उच्यन्ते । कृष्णग्रीवाः त्रयः आग्नेयाः त्रयो० । बभ्रवः कपिलास्त्रयः सौम्याः । अथ चतुर्दशे यूपे । उपध्वस्ताः उपध्वंसनमधःपतनं तद्गुणविशिष्टा वर्णान्तरमिश्रिता वा त्रयः सवितृदेवताः चतु० । वत्सतर्यः तिस्रः सरस्वतीदेवताः चतु० । श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवत्याः चतु० । पृश्नयः तनुकाया विचित्रवर्णा वा त्रयो मरुद्देवताः चतु० । बहुरूपास्त्रयो वैश्वदेवाः चतु० । अथ पञ्चदशे । वशाः वन्ध्यास्तिस्रो द्यावापृथिवीयाः द्यावापृथिवीदेवत्याः पञ्च० ॥ १४ ॥

## पञ्चदशी ।

उक्ताः संचरा एता ऐन्द्राग्नाः कृष्णा वारुणाः पृश्नयो मारुताः कायास्तूपराः ॥ १५ ॥

**उ०** अथ वरुणप्रघासपर्वपशव उच्यन्ते । संचरशब्देन कृष्णग्रीवा आग्नेया इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदश पशव उच्यन्ते । पञ्च संचराणि हवींषि भवन्तीतिवत् यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि पञ्च हवींषि समानानि एवमत्रापि चतुर्णां पर्वणां संबन्धिनामाद्यानां पञ्चानां देवानामाद्या एते पञ्चदश पशवः समाना एव भवन्ति । तेन संचरा उक्ताः । आग्नेयादयः पञ्चदश पशव उक्ता इत्यर्थः । आग्नेयाः कृष्णग्रीवास्त्रयः पञ्चदशे । सौम्याः बभ्रवस्त्रयः पञ्च० । सावित्रा उपध्वस्ताः त्रयः पञ्च० । सारस्वत्यः वत्सतर्यः तिस्रः पञ्च० । अथ षोडशे । पौष्णाः श्यामाः त्रयः षोडशे । एते संचरा उक्ताः । एताः कर्बुरास्त्रय ऐन्द्राग्नाः इन्द्राग्निदेवताः षो० । कृष्णाः कृष्णवर्णास्त्रयो वारुणाः वरुणदेवताः षो० । पृश्नयः तनुशरीरास्त्रयः मारुताः षो० । त्रयः तूपराः निःश्रृङ्गाः कायाः कदेवताः षो० ॥ १५ ॥

**म०** अथ वरुणप्रघासपर्वपशव उच्यन्ते । संचरशब्देन कृष्णग्रीवा आग्नेया इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदश पशव उच्यन्ते । पञ्च संचराणि हवींषि भवन्तीतिवत् । यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि पञ्च हवींषि समानानि एवमत्रापि चतुर्णां पर्वणां संबन्धिनाम् आद्यानां पञ्चानां देवानामाद्या एते पञ्चदश पशवः समाना एव भवन्ति । तेन संचरा उक्ताः । आग्नेयादयः पञ्चदश पशव उक्ता इत्यर्थः । आग्नेयाः कृष्णग्रीवास्त्रयः पञ्चदशे । सौम्याः बभ्रवस्त्रयः पञ्च० । सावित्रा उपध्वस्ताः त्रयः पञ्च० । सारस्वत्यः वत्सतर्यः तिस्रः पञ्च० । अथ षोडशे । पौष्णाः श्यामाः त्रयः षोडशे । एते संचरा उक्ताः । एताः कर्बुरास्त्रय ऐन्द्राग्ना इन्द्राग्निदेवताः षो० । कृष्णाः कृष्णवर्णास्त्रयो वारुणाः वरुणदेवताः षो० । पृश्नयः तनुशरीरास्त्रयः मारुताः षो० । त्रयः तूपराः निःश्रृङ्गाः कायाः कदेवताः षो० ॥ १५ ॥

## षोडशी ।

अग्नयेऽनीकवते प्रथमजानालभते मरुद्भ्यः सान्तपनेभ्यः सवात्यान्मरुद्भ्यो गृहमेधिभ्यो बष्किहान्मरुद्भ्यः क्रीडिभ्यः सꣳसृष्टान्मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् ॥ १६ ॥

**उ०** अथ सप्तदशे । अथ साकमेधपशवः । प्रथमगर्भे जातान् त्रीन् अजान् अनीकवते अनीकवद्गुणविशिष्टायाग्नये । आलभते नियुनक्ति सप्त० । वातसमूहो वात्या तया सह वर्तन्त इति सवात्याः वातमण्डलीमध्यस्थान् त्रीनजान् सांतपनेभ्यः मरुद्भ्यः सप्त० । बष्किहान् चिरप्रसूतात्रीन्गृहेमधिभ्यो मरुद्भ्यः सप्त० । संसृष्टान् सह सृष्टान् त्रीन् क्रीडिभ्यो मरुद्भ्यः सप्त० । अनुसृष्टान् अनुक्रमेण जातान् त्रीन् स्वतवद्भ्यो मरुद्भ्यः सप्त० ॥ १६ ॥

**म०** अथ सप्तदशे । अथ साकमेधपशवः । प्रथमजान् मात्रा प्रथमगर्भे जातान् त्रीन् अजान् अनीकवते अनीकवद्गुणविशिष्टायाग्नये आलभते नियुनक्ति सप्त० । वातसमूहो वात्या तया सह वर्तन्त इति सवात्याः वातमण्डलीमध्यस्थां-

स्त्रीनजान् सान्तपनेभ्यः मरुद्भ्यः सप्त० । वष्किहान् चिरप्रसूतान् त्रीन् गृहमेधिभ्यो मरुद्भ्यः सप्त० । संसृष्टान् सह सृष्टान् त्रीन् क्रीडिभ्यः मरुद्भ्यः सप्त० । अनुसृष्टान् अनुक्रमेण जातान् त्रीन् स्वतवद्भ्यो मरुद्भ्यः सप्त० ॥ १६ ॥

## सप्तदशी ।

उक्ताः सं॑चरा ए॒ता ऐ॑न्द्राग्नाः प्रा॑शृ॒ङ्गा मा॑हे॒न्द्रा ब॑हुरू॒पा वै॑श्वकर्म॒णाः ॥ १७ ॥

**उ०** अथाष्टादशे यूपे महाहविःपशवः कृष्णग्रीवादयः पञ्चदश पूर्ववत् । अथैकोनविंशतितमे एताः कर्बुरास्त्रय ऐन्द्राग्नाः एकोन० । प्राश्रृङ्गाः संहितायां दीर्घः । प्रकृष्टशृङ्गयुक्ता माहेन्द्राः महेन्द्रदेवता एकोन० । बहुरूपास्त्रयो वैश्वकर्मणाः विश्वकर्मदेवताः एकोन० ॥ १७ ॥

**म०** अथाष्टादशे यूपे महाहविःपशवः कृष्णग्रीवादयः पञ्चदश पूर्ववत् । अथैकोनविंशतितमे एताः कर्बुरास्त्रय ऐन्द्राग्नाः एकोन० । प्राश्रृङ्गाः संहितायां दीर्घः । प्रकृष्टशृङ्गयुक्ता माहेन्द्राः महेन्द्रदेवताः एकोन० । बहुरूपास्त्रयो वैश्वकर्मणाः विश्वकर्मदेवताः एकोन० ॥ १७ ॥

## अष्टादशी ।

धू॒म्रा ब॒भ्रुनी॑काशाः पि॒तॄणा॑ᳬ सोम॑वतां ब॒भ्रवो॑ धू॒म्रनी॑काशाः पि॒तॄणां ब॑र्हि॒षदां॑ कृ॒ष्णा ब॒भ्रुनी॑काशाः पि॒तॄणाम॑ग्निष्वात्ता॒नां कृ॒ष्णाः पृष॑न्तस्त्रै॑यम्ब॒काः ॥ १८ ॥

**उ०** अथ पित्र्येष्टिदेवतापशवः धूम्राः कृष्णवर्णमिश्रा लोहितवर्णाः बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवः सोमवतां पितॄणां नियोज्याः एकोन० । बभ्रवः कपिलाः धूम्रनीकाशाः धूम्रा इव नितरां काशन्ते इति तादृशास्त्रयः बर्हिषदां पितॄणामेकोन० । अथ विंशे । यूपे कृष्णाः बभ्रुनीकाशाः अग्निष्वात्तानां पितॄणां विंशे । कृष्णाः पृषन्तः विन्दुयुक्ताः त्र्यम्बकदेवताः विंशे ॥ १८ ॥

**म०** अथ पित्र्येष्टिदेवतापशवः । धूम्राः कृष्णवर्णमिश्रा लोहितवर्णाः बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवः सोमवतां पितॄणां नियोज्याः एकोन० । बभ्रवः कपिलाः धूम्रनीकाशाः धूम्रा इव नितरां काशन्ते इति तादृशास्त्रयः बर्हिषदां पितॄणामेकोन० । अथ विंशे यूपे । कृष्णा बभ्रुनीकाशाः अग्निष्वात्तानां पितॄणां विंशे । कृष्णाः पृषन्तः बिन्दुयुक्ताः त्रैयम्बकाः त्र्यम्बकदेवताः विंशे ॥ १८ ॥

## एकोनविंशी ।

उक्ताः सं॑चरा ए॒ताः शु॑ना॒सीरी॑याः श्वे॒ता वा॑य॒व्याः श्वे॒ताः सौ॒र्याः ॥ १९ ॥

**उ०** अथ शुनासीरीयपशवः । तत्र संचराः आग्नेयादयः पञ्चदशोक्ताः । तेन कृष्णग्रीवा आग्नेयाः विंशे । बभ्रवः सौम्याः विंशे । उपध्वस्ताः सावित्राः विंशे । अथैकविंशे यूपे वत्सतर्यः सारस्वत्यः एकविंशे । श्यामाः पौष्णाः एक० । एताः कर्बुराः शुनासीरीयाः शुनासीरदेवताः एक० । एवं श्वेताः त्रयो वायव्याः वायुदेवत्याः एक० । श्वेताः त्रयः सौर्याः सूर्यदेवताः एक० । एवं समाप्ताः यूपाः । इत्यश्वाद्याः सौर्यान्ताः सप्तविंशत्यधिकशतत्रयं ग्राम्याः पशवः सर्वे उक्ताः ॥ १९ ॥

**म०** अथ शुनासीरीयपशवः । तत्र संचराः आग्नेयादयः पञ्चदशोक्ताः तेन कृष्णग्रीवा आग्नेयाः विंशे । बभ्रवः सौम्याः विंशे । उपध्वस्ताः सावित्राः विंशे । अथैकविंशे यूपे । वत्सतर्यः सारस्वत्यः एकविंशे । श्यामाः पौष्णाः एक० । एताः कर्बुराः शुनासीरीयाः शुनासीरदेवताः एक० । श्वेताः त्रयो वायव्याः वायुदेवत्याः एक० । श्वेताः त्रयः सौर्याः सूर्यदेवताः एक० । एवं समाप्ताः यूपाः । इत्यश्वाद्याः सौर्यान्ताः सप्तविंशत्यधिकशतत्रयं ग्राम्याः पशवः सर्वे उक्ताः ॥ १९ ॥

## विंशी ।

व॒स॒न्ताय॑ क॒पिञ्ज॑लाना॒लभते ग्री॒ष्माय॑ कल॒विङ्का॑न्व॒र्षाभ्य॑स्ति॒त्तिरी॑ञ्छ॒रदे॑ वर्ति॑का हे॒म॒न्ताय॒ कक॑रा॒ञ्छिशि॑राय॒ विक॑करान् ॥ २० ॥

**उ०** 'वसन्ताय कपिञ्जलानालभते' इत्यादयः विश्वेषां देवानां पृषन्त इत्येवमन्ता यूपान्तरेषु त्रयोदश त्रयोदशारण्याः पशव आलभ्यन्ते ॥ २० ॥

**म०** अथारण्याः पशव उच्यन्ते । अत्रैकविंशतिर्यूपाः तेषां यूपानां विंशतिरन्तरालानि तेष्वन्तरालेषु अन्तरालोत्पत्तिक्रमेण कपिञ्जलादयस्त्रयोदश त्रयोदश पशव आलम्भनीयाः । अत्र यूपान्तरालेष्वारण्यपशूनां बन्धनोपाय उक्तो मानवसूत्रे । नाडीषु पुत्तिमशकान् करण्डेषु सर्पान् पञ्जरेषु मृगव्याघ्रसिंहान् कुम्भेषु मकरमत्स्यमण्डूकान् जालेषु पक्षिणः कारासु हस्तिनो नौषु चौदकानि यथार्थमितरानिति । ये पशवो येनोपायेन यूपान्तरालेषु तिष्ठन्ति ते तेनोपायेन स्थापनीया इति तात्पर्यम् । अत्र येषामारण्यजीववाचिपदानामर्था न ज्ञायन्ते ते निगमनिरुक्तनिघण्टुव्याकरणोणादिवृत्त्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः । आटविकेभ्यश्च लक्षणीयाः । तत्र प्रथमोत्पन्ने यूपान्तराले त्रीन् कपिञ्जलान् वसन्ताय आलभते नियुनक्ति । त्रीन् कलविङ्कान् चटकान् ग्रीष्माय । तित्तिरीन् त्रीन् वर्षाभ्यः । वर्तिकाः पक्षिविशेषान् शरदे । ततस्त्रयाणां ककराणां मध्ये एकं ककरं हेमन्ताय । अथ द्वितीयेऽवकाशे शिष्टौ द्वौ ककरौ पक्षिविशेषौ हेमन्ताय । त्रीन् विककरान् शिशिराय ॥ २० ॥

## एकविंशी ।

स॒मु॒द्राय॑ शिशु॒मारा॒नाल॑भते प॒र्जन्या॑य म॒ण्डू-

कान्क्र्यो मत्स्यान्मित्राय कुलीपयान्वरुणाय नाकान् ॥ २१ ॥

उ० त्रीन् शिशुमारान् जलचरजन्तून् समुद्रायालभते । त्रीन्मण्डूकान्भेकान् पर्जन्याय । त्रयाणां मत्स्यानां मध्ये द्वौ अद्भ्यः । अथ तृतीयेऽवकाशे एकं शिष्टं मत्स्यमद्भ्यः । त्रीन् कुलीपयान् सोमाय । जलजान् मित्राय । त्रीन् नाक्रान् नक्रा एव नाक्रास्ताञ्जलचरान् वरुणाय ॥ २१ ॥

म० त्रीन् शिशुमारान् जलचरजन्तून् समुद्रायालभते । त्रीन्मण्डूकान्भेकान् पर्जन्याय । त्रयाणां मत्स्यानां मध्ये द्वौ अद्भ्यः । अथ तृतीयेऽवकाशे एकं शिष्टं मत्स्यमद्भ्यः । त्रीन् कुलीपयान् जलजान् मित्राय । त्रीन् नाकान् नक्रा एव नाकास्ताञ्जलचरान् वरुणाय ॥ २१ ॥

## द्वाविंशी ।

सोमाय हुꣳसानालभते वायवे बलाका इन्द्राग्निभ्यां क्रुञ्चान्मित्राय मद्गून्वरुणाय चक्रवाकान् ॥ २२ ॥

उ० त्रीन् हंसान् तिस्रो बलाकाः बकपत्नीः वायवे । अथ चतुर्थेऽवकाशे । त्रीन् क्रुञ्चान् पक्षिणः इन्द्राग्निभ्याम् । त्रीन् मद्गून् जलकाकान् मित्राय । त्रीन् चक्रवाकान् वरुणाय॥२२॥

म० त्रीन् हंसान् सोमाय । तिस्रो बलाकाः बकपत्नीः वायवे । अथ चतुर्थेऽवकाशे । त्रीन् कुञ्चान् पक्षिणः इन्द्राग्निभ्याम् । त्रीन् मद्गूञ्जलकाकान् मित्राय । त्रीन् चक्रवाकान् वरुणाय ॥ २२ ॥

## त्रयोविंशी ।

अग्नये कुटरूनालभते वनस्पतिभ्य उलूकानग्नीषोमाभ्यां चाषानश्विभ्यां मयूरान्मित्रावरुणाभ्यां कपोतान् ॥ २३ ॥

उ० त्रीन् कुटरून् कुक्कुटानग्नये । ततस्त्रयाणामुलूकानां मध्ये एकमुलूकं वनस्पतिभ्यः । अथ पञ्चमेऽवकाशे द्वौ उलूकौ काकवैरिणौ । त्रीन् चाषानग्नीषोमाभ्याम् त्रीन्मयूरानश्विभ्यां त्रीन्कपोतान्मित्रावरुणाभ्याम् ॥ २३ ॥

म० त्रीन् कुटरून् कुक्कुटानग्नये । ततस्त्रयाणामुलूकानां मध्ये एकमुलूकं वनस्पतिभ्यः । अथ पञ्चमेऽवकाशे द्वौ उलूकौ काकवैरिणौ । त्रीन् चापानग्नीषोमाभ्यां त्रीन् मयूरानश्विभ्यां त्रीन् कपोतान् मित्रावरुणाभ्याम् ॥ २३ ॥

## चतुर्विंशी ।

सोमाय लबानालभते त्वष्ट्रे कौलीकान् गोषादीर्देवानां पत्नीभ्यः कुलीका देवजामिभ्योऽग्नये गृहपतये पारुष्णान् ॥ २४ ॥

उ० त्रयाणां लवानां लावकानां मध्ये द्वौ सोमाय अथ षष्ठेऽवकाशे एकं लवं सोमाय । कौलीकान् पक्षिणः त्वष्ट्रे । तिस्रो गोषादीः गवां सादयित्रीः पक्षिणीः देवानां पत्नीभ्यः । तिस्रः कुलीकाः पक्षिणीः देवजामिभ्यः देववधूभ्यः । 'जामिः स्वसृकुलस्त्रियोः' । त्रीन्पारुष्णसंज्ञान्गृहपतयेऽग्नये ॥ २४ ॥

म० त्रयाणां लवानां लावकानां मध्ये द्वौ सोमाय । अथ षष्ठेऽवकाशे एकं लवं सोमाय । कौलीकान् पक्षिणः त्वष्ट्रे । तिस्रो गोषादीः गवां सादयित्रीः पक्षिणीः देवानां पत्नीभ्यः । तिस्रः कुलीकाः पक्षिणीः देवजामिभ्यः देववधूभ्यः । 'जामिः स्वसृकुलस्त्रियोः' । त्रीन् पारुष्णसंज्ञान् गृहपतयेऽग्नये ॥ २४ ॥

## पञ्चविंशी ।

अह्ने पारावतानालभते रात्र्यै सीचापूरहोरात्रयोः सन्धिभ्यो जतूर्मासेभ्यो दात्यौहान्संवत्सराय महतः सुपर्णान् ॥ २५ ॥

उ० अथ सप्तमेऽवकाशे त्रीन्पारावतान्कलरवानह्ने । तिस्रः सीचापूः पक्षिणीः रात्र्यै । तिस्रो जतूः पात्राख्याः अहोरात्रयोः सन्धिभ्यः । त्रीन्दात्यूहान् कालकण्ठान्मासेभ्यः । त्रयाणां महतां सुपर्णानां मध्ये एकं संवत्सराय । अथाष्टमेऽवकाशे द्वौ महान्तौ सुपर्णौ संवत्सराय ॥ २५ ॥

म० अथ सप्तमेऽवकाशे त्रीन् पारावतान् कलरवानह्ने । तिस्रः सीचापूः पक्षिणी रात्र्यै । तिस्रो जतूः पात्राख्याः पक्षिणीः अहोरात्रयोः सन्धिभ्यः । त्रीन् दात्यूहान् कालकण्ठान् मासेभ्यः । त्रयाणां महतां सुपर्णानां मध्ये एकं संवत्सराय । अथाष्टमेऽवकाशे द्वौ महान्तौ सुपर्णौ संवत्सराय ॥ २५ ॥

## षड्विंशी ।

भूम्या आखूनालभतेऽन्तरिक्षाय पाङ्क्तान्दिवे कशान्दिग्भ्यो नकुलान्बभ्रुकानवान्तरदिशाभ्यः २६

उ० भूम्यै आखून्मूषकान् त्रीन् पाङ्क्तान् मूषकजातिविशेषानन्तरिक्षाय । काशान् तद्भेदानेव दिवे । त्रीन्नकुलान्दिग्भ्यः तत्र द्वौ अष्टमे । अथ नवमे एकम् त्रीन्बभ्रुकानवान्तरदिशाभ्यः ॥ २६ ॥

म० भूम्य आखून् मूषकान् त्रीन् पाङ्क्तान् मूषकजातिविशेषानन्तरिक्षाय । काशान् तद्भेदानेव दिवे । त्रीन् नकुलान् दिग्भ्यः तत्र द्वौ अष्टमे । अथ नवमे एकम् । त्रीन् बभ्रुकानवान्तरदिशाभ्यः ॥ २६ ॥

## सप्तविंशी ।

वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून् विश्वेभ्यो देवेभ्यः पृषतान् साध्येभ्यः कुलुङ्गान् ॥ २७ ॥

उ० त्रीनृष्यान्वसुभ्यः । ऋष्यादयो मृगविशेषाः रुद्रेभ्यः रुरून् । त्रीन्न्यङ्कूनादित्येभ्यः । अथ दशमेऽवकाशे त्रीन् पृषतान्विश्वेभ्यो देवेभ्यः । त्रीन् कुलुङ्गान् साध्येभ्यः ॥ २७ ॥

म० त्रीनृष्यान् वसुभ्यः । ऋष्यादयो मृगविशेषाः । रुद्रेभ्यः रुरून् । त्रीन् न्यङ्कूनादित्येभ्यः । अथ दशमेऽवकाशे त्रीन् पृषतान् विश्वेभ्यो देवेभ्यः । त्रीन् कुलुङ्गान् साध्येभ्यः ॥२७॥

## अष्टाविंशी ।

ईशा॑नाय प॒रस्व॑त॒ आल॑भते मि॒त्राय॑ गौ॒रान्व॑रु॒णाय महि॒षान्बृह॒स्पत॑ये गव॒याँस्त्वष्ट्र॒ उष्ट्रा॑न् ॥२८॥

उ० परस्वतः मृगविशेषानीशानाय । त्रीन्गौरान्मृगान्मित्राय । त्रीन्महिषान्वरुणाय तत्रैकं दशमे । अथैकादशेऽवकाशे त्रीन् गवयान्गोसदृशानारण्यपशून्बृहस्पतये । त्रीनुष्ट्रान् त्वष्ट्रे ॥२८॥

म० परस्वतः मृगविशेषानीशानाय । त्रीन् गौरान्मृगान् मित्राय । त्रीन् महिषान्वरुणाय तत्रैकं दशमे । अथैकादशेऽवकाशे त्रीन् गवयान्गोसदृशानारण्यपशून्बृहसतये । त्रीनुष्ट्रान् त्वष्ट्रे ॥ २८ ॥

## एकोनत्रिंशी ।

प्र॒जाप॑तये॒ पुरु॑षान्ह॒स्तिन॒ आल॑भते वा॒चे प्लु॒षीँश्चक्षु॑षे म॒शका॑ञ्छ्रो॒त्राय॑ भृङ्गाः॑ ॥ २९ ॥

उ० प्रजापतये पुरुषान्हस्तिनः त्रीन् । त्रीन् प्लुषीन्वक्रतुण्डान्वाचे । तन्मध्ये द्वौप्लुषी एकादशे । अथ द्वादशेऽवकाशे एकं प्लुषिम् । त्रीन्मशकान् चक्षुषे । त्रयो भृङ्गाः श्रोत्राय नियोज्याः ॥ २९ ॥

म० प्रजापतये पुरुषान् हस्तिनः त्रीन् । त्रीन् प्लुषीन् वक्रतुण्डान् वाचे तन्मध्ये द्वौ प्लुषी एकादशे । अथ द्वादशेऽवकाशे एकं प्लुषिम् । त्रीन् मशकान् चक्षुषे । त्रयो भृङ्गाः श्रोत्राय नियोज्याः ॥ २९ ॥

## त्रिंशी ।

प्र॒जाप॑तये च वा॒यवे॑ च गोमृ॒गो वरु॑णायार॒ण्यो मे॒षो य॒माय॑ कृ॒ष्णो॑ मनुष्यरा॒जाय॑ म॒र्कट॑ः शार्दू॒लाय॑ रोहि॒दृ॑षभाय॑ गव॒यी क्षि॑प्रश्ये॒नाय॑ वर्ति॑का नील॑ङ्गोः कृ॒मिः॑ समु॒द्राय॑ शिशु॒मारो॑ हि॒मव॑ते ह॒स्ती ॥ ३० ॥

उ० प्रजापतये च वायवे च एको गोमृगः गवयः । एक आरण्यो मेषो वरुणाय । एकः कृष्णो मेषो यमाय । एको मर्कटः मनुष्यराजाय । एको रोहिदृष्यः शार्दूलाय । एका गवयी ऋषभाय तदाख्यदेवाय । अथ त्रयोदशेऽवकाशे एका वर्तिका क्षिप्रश्येनाय देवाय । एकः कृमिः कीटः नीलङ्गोः नीलङ्गवे । शिशुमारः एको जलचरः समुद्राय । हस्ती हिमवते ॥ ३० ॥

म० प्रजापतये च वायवे च एको गोमृगः गवयः । एक आरण्यो मेषो वरुणाय । एकः कृष्णो मेषो यमाय । एको मर्कटः मनुष्यराजाय । एको रोहिदृष्यः शार्दूलाय । एका गवयी ऋषभाय तदाख्यदेवाय । अथ त्रयोदशेऽवकाशे एका वर्तिका क्षिप्रश्येनाय देवाय । एकः कृमिः कीटः नीलङ्गोः नीलङ्गवे । शिशुमारः एको जलचरः समुद्राय । हस्ती हिमवते ॥ ३० ॥

## एकत्रिंशी ।

म॒युः प्रा॑जाप॒त्य उ॒लो ह॒लिक्ष्णो॑ वृषद॒ꣳशस्ते धा॒त्रे दि॒शां क॒ङ्को धुङ्क्षा॑ग्ने॒यी क॑लवि॒ङ्को लो॑हि॒ताहि॑ः पुष्करसा॒दस्ते॑ त्वा॒ष्ट्रा वा॒चे क्रुञ्चः॑ ॥ ३१ ॥

उ० मयुः प्राजापत्यः तुरङ्गवदनः किन्नरः प्रजापतिदैवतः । उलो मृगविशेषः हलिक्ष्णः सिंहविशेषः वृषदंशो बिडालः ते त्रयो धात्रे । एकः कङ्कः बकः दिशां दिग्भ्यः । एका धुङ्क्षा पक्षिणी आग्नेयी अग्निदेवत्या । कलविङ्कः चटकः लोहिताहिः रक्तवर्णसर्पः पुष्करसदः पुष्करे सीदतीति कमलभक्षी पक्षिविशेषः ते त्रयः त्वाष्ट्राः त्वष्टृदेवताः । अथ चतुर्दशेऽवकाशे एकः क्रुञ्चः वाचे ॥ ३१ ॥

म० मयुः प्राजापत्यः तुरङ्गवदनः किन्नरः प्रजापतिदैवतः । उलो मृगविशेषः हलिक्ष्णः सिंहविशेषः वृषदंशो बिडालः ते त्रयो धात्रे । एकः कङ्कः बकः दिशां दिग्भ्यः । एका धुङ्क्षा पक्षिणी आग्नेयी अग्निदेवत्या । कलविङ्कः चटकः लोहिताहिः रक्तवर्णसर्पः पुष्करसादी पुष्करे सीदतीति कमलभक्षी पक्षिविशेषः ते त्रयः त्वाष्ट्राः त्वष्टृदेवताः । अथ चतुर्दशेऽवकाशे एकः क्रुञ्चः वाचे ॥ ३१ ॥

## द्वात्रिंशी ।

सोमा॑य कुलु॒ङ्ग आ॑र॒ण्योऽजो न॑कु॒लः शका॑ ते पौ॒ष्णाः क्रो॒ष्टा मा॒योरिन्द्र॑स्य गौ॒रमृ॑गः पि॒द्वो न्यङ्कु॑ः कक्कटस्तेऽनु॑मत्यै प्रति॒श्रुत्का॑यै चक्रवा॒कः ॥ ३२ ॥

उ० कुलुङ्गः कुरङ्गो हरिण एकः सोमाय । आरण्यो वनजोऽजश्छागः नकुलः शका शकुन्तिः एते त्रयः पौष्णाः पूषदेवत्याः । क्रोष्टा शृगालो मायोर्देवस्य । एको गौरमृगः इन्द्रस्य । पिद्वो मृगविशेषः न्यङ्कुः अपि कक्कटः स एव ते त्रयोऽनुमत्यै । चक्रवाकः प्रतिश्रुत्कायै ॥ ३२ ॥

म० कुलुङ्गः कुरङ्गो हरिण एकः सोमाय । आरण्यो वनजोऽजश्छागः नकुलः शका शकुन्तिः एते त्रयः पौष्णाः पूषदेवत्याः । क्रोष्टा शृगालो मायोर्देवस्य । एको गौरमृगः इन्द्रस्य । पिद्वो मृगविशेषः न्यङ्कुः अपि कक्कटः स एव ते त्रयोऽनुमत्यै । चक्रवाकः प्रतिश्रुत्कायै ॥ ३२ ॥

## त्रयस्त्रिंशी ।

सौ॒री ब॒लाका॑ शा॒र्गः सृ॒ञ्जयः॑ श॒याण्ड॑क॒स्ते मै॒त्राः

सरस्वत्यै शारिः पुरुषवाक् श्वाविद्भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक् ॥ ३३ ॥

उ० बलाका बकस्त्री सूर्यदेवत्या । शार्गः पक्षिविशेषः । अथ पञ्चदशेऽवकाशे सृजयः पक्षिविशेषः शयाण्डकोऽपि ते मैत्राः मित्रदेवत्याः । पुरुषवाक् मनुष्यवद्वादिनी शारिः शुकी सरस्वत्यै । श्वावित् सेधा भौमी भूदेवत्या शार्दूलो व्याघ्रः वृकः चित्रकः पृदाकुः सर्पः ते त्रयो मन्यवे । पुरुषवाक् शुकः सरस्वते समुद्राय ॥ ३३ ॥

म० बलाका बकस्त्री सूर्यदेवत्या । शार्गः पक्षिविशेषः । अथ पञ्चदशेऽवकाशे सृजयः पक्षिविशेषः शयाण्डकोऽपि ते मैत्राः मित्रदेवत्याः । पुरुषवाक् मनुष्यवद्वादिनी शारिः शुकी सरस्वत्यै । श्वावित् सेधा भौमी भूदेवत्या शार्दूलो व्याघ्रः वृकः चित्रकः पृदाकुः सर्पः ते त्रयो मन्यवे । पुरुषवाक् शुकः सरस्वते समुद्राय ॥ ३३ ॥

## चतुस्त्रिंशी ।

सुपर्णः पार्जन्य आतिर्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलज आन्तरिक्षः प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः ॥ ३४ ॥

उ० सुपर्णः गरुत्मान् पार्जन्यः पर्जन्याय । आतिः आडी वाहसः दार्विदा काष्ठकुट्टः ते त्रयः पक्षिविशेषाः वायवे । बृहस्पतये वाचस्पतये वाचो वाण्याः पतये इति बृहस्पतिविशेषणम् । ईदृशाय बृहस्पतये पैङ्गराजः पक्षिविशेषः । अथ षोडशेऽवकाशे अलजः पक्षिविशेषः आन्तरिक्षः अन्तरिक्षदेवतः । प्लवः जलपक्षी मद्गुः कारण्डवः मत्स्यः ते नदीपतये । कूर्मः कच्छपः द्यावापृथिवीयः द्यावापृथिवीदेवतः ॥ ३४ ॥

म० सुपर्णः गरुत्मान् पार्जन्यः पर्जन्याय । आतिः आडी वाहसः दार्विदा काष्ठकुट्टः ते त्रयः पक्षिविशेषाः वायवे । बृहसतये वाचसतये वाचो वाण्याः पतये इति बृहसतिविशेषणम् । ईदृशाय बृहसतये पैङ्गराजः पक्षिविशेषः । अथ षोडशेऽवकाशे अलजः पक्षिविशेषः आन्तरिक्षः अन्तरिक्षदेवतः । प्लवः जलपक्षी मद्गुः कारण्डवः मत्स्यः ते नदीपतये । कूर्मः कच्छपः द्यावापृथिवीयः द्यावापृथिवीदेवतः ॥ ३४ ॥

## पञ्चत्रिंशी ।

पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां कृकवाकुः सावित्रो हंसो वातस्य नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः ॥ ३५ ॥

उ० पुरुषमृगः पुंमृगः चन्द्रमसः । गोधा कालका पक्षिविशेषः दार्वाघाटः सारसः ते वनस्पतीनाम् । कृकवाकुः ताम्रचूडः सावित्रः सवितृदेवतः हंसः वातस्य । नाक्रः मकरः कुलीपयः ते त्रयो जलचरविशेषाः अकूपारस्य समुद्रस्य । त्रयाणां मध्ये द्वौ षोडशे । अथ सप्तदशेऽवकाशे एकः कुलीपयः अकूपारस्य । शल्यकः श्वावित् ह्रियै देव्यै ॥ ३५ ॥

म० पुरुषमृगः पुंमृगः चन्द्रमसः । गोधा कालका पक्षिविशेषः दार्वाघाटः सारसः ते वनस्पतीनाम् । कृकवाकुः ताम्रचूडः सावित्रः सवितृदेवतः हंसः वातस्य । नाक्रः मकरः कुलीपयः ते त्रयो जलचरविशेषाः अकूपारस्य समुद्रस्य । त्रयाणां मध्ये द्वौ षोडशे । अथ सप्तदशेऽवकाशे एकः कुलीपयः अकूपारस्य । शल्यकः श्वावित् ह्रियै देव्यै ॥ ३५ ॥

## षट्त्रिंशी ।

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां लोपाश आश्विनः कृष्णो रात्र्या ऋक्षो जतूः सुषिलीका त इतरजनानां जहका वैष्णवी ॥ ३६ ॥

उ० एणी मृगी अह्नः आलभ्या । मण्डूको मूषिका तित्तिरिः ते त्रयः सर्पाणाम् । लोपाशो वनचरविशेषः आश्विनः अश्विदेवतः । कृष्णो मृगः रात्र्यै । ऋक्षः भल्लूकः जतूः सुषिलीका एतौ पक्षिविशेषौ ते त्रयः इतरजनानां देवानाम् । जहका गात्रसङ्कोचनी वैष्णवी विष्णुदेवत्या ॥ ३६ ॥

म० एणी मृगी अह्नः आलभ्या । मण्डूको मूषिका तित्तिरिः ते त्रयः सर्पाणाम् । लोपाशो वनचरविशेषः आश्विनः अश्विदेवतः । कृष्णो मृगः रात्र्यै । ऋक्षः भल्लूकः जतूः सुषिलीका एतौ पक्षिविशेषौ ते त्रयः इतरजनानां देवानाम् । जहका गात्रसङ्कोचनी वैष्णवी विष्णुदेवत्या ॥ ३६ ॥

## सप्तत्रिंशी ।

अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णस्ते गन्धर्वाणामपामुद्रो मासां कश्यपो रोहित्कुण्डृणाची गोलत्तिका तेऽप्सरसां मृत्यवेऽसितः ॥ ३७ ॥

उ० अन्यवापः कोकिलाख्यः पक्षिविशेषोऽर्धमासानां पशुः । अथाष्टादशेऽवकाशे । ऋश्यो मृगविशेषः मयूरः बर्ही सुपर्णो गरुत्मान् ते गन्धर्वाणां पशवः । उद्रः जलचरः कर्कटसंज्ञः अपां पशुः । कश्यपः कच्छपः मासां मासानाम् । रोहित् ऋष्यः कुण्डृणाची वनचरीविशेषः गोलत्तिकापि ते त्रयोऽप्सरसाम् । असितः कृष्णः पशुर्मृत्यवे ॥ ३७ ॥

म० अन्यवापः कोकिलाख्यः पक्षिविशेषोऽर्धमासानां पशुः । अथाष्टादशेऽवकाशे । ऋष्यो मृगविशेषः मयूरः बर्ही सुपर्णो गरुत्मान् ते गन्धर्वाणां पशवः । जलचरः कर्कटसंज्ञः अपां पशुः । कश्यपः कच्छपः मासां मासानाम् । रोहित् ऋष्यः

कुण्डृणाची वनचरीविशेषः गोलत्तिकापि ते त्रयोऽप्सरसाम् । असितः कृष्णः पशुर्मृत्यवे ॥ ३७ ॥

## अष्टात्रिंशी ।

वर्षाहूर्ऋतूनामाखुः कशो मान्थालस्ते पितृणां बलायाजगरो वसूनां कपिञ्जलः कपोत उलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥ ३८ ॥

**उ०** वर्षाहूः वर्षाभूः भेकी ऋतूनाम् । आखुः मूषकः कशः मान्थालश्च तद्विशेषौ ते त्रयः पितृणाम् । अथैकोनविंशे । अजगरो महासर्पः बलाय । कपिञ्जलो वसूनाम् । कपोतः उलूकः शशः ते निर्ऋत्यै । आरण्यो मेषो वरुणाय ॥ ३८ ॥

**म०** वर्षाहूः वर्षाभूः भेकी ऋतूनाम् । आखुः मूषकः कशः मान्थालश्च तद्विशेषौ ते त्रयः पितृणाम् । अथैकोनविंशे । अजगरो महासर्पः बलाय । कपिञ्जलो वसूनाम् । कपोतः उलूकः शशः ते निर्ऋत्यै । आरण्यो मेषो वरुणाय ॥ ३८ ॥

## एकोनचत्वारिंशी ।

श्वित्र आदित्यानामुष्ट्रो घृणीवान् वार्ध्रीनसस्ते मत्या अरण्याय सृमरो रुरू रौद्रः क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामाय पिकः ॥ ३९ ॥

**उ०** श्वित्रः श्वेतः पशुरादित्यानाम् । उष्ट्रः दीर्घग्रीवः घृणिवान् तेजस्वी पशुविशेषः। संहितायां घृणिशब्दो दीर्घः। वार्ध्रीनसः कण्ठे स्तनवानजः ते त्रयो मत्यै देव्यै । सृमरः गवयोऽरण्याय देवाय । रुरुः मृगः रौद्रः रुद्रदेवतः। क्वयिः पक्षिविशेषः । अथ विंशेऽवकाशे । कुटरुः कुक्कुटः दात्यौहः कालण्ठः ते त्रयो वाजिनां देवानाम् । पिकः कोकिलः कामाय ॥ ३९ ॥

**म०** श्वित्रः श्वेत पशुरादित्यानाम् । उष्ट्रः दीर्घग्रीवः घृणिवान् तेजस्वी पशुविशेषः।संहितायां घृणिशब्दोदीर्घः। वार्ध्रीनसः कण्ठे स्तनवानजः ते त्रयो मत्यै देव्यै । सृमरः गवयोऽरण्याय देवाय । रुरुः मृगः रौद्रः रुद्रदेवतः क्वयिः पक्षिविशेषः । अथ विंशेऽवकाशे । कुटरुः कुक्कुटः दात्यौहः कालकण्ठः ते त्रयो वाजिनां देवानाम् । पिकः कोकिलः कामाय ॥ ३९ ॥

## चत्वारिंशी ।

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिꣳहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः ॥ ४० ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
चतुर्विंशोऽध्यायः ॥ २४ ॥

**उ०** खड्गो मृगविशेषो विश्वदेवदेवतः । एकः कृष्णः श्वा सारमेयः द्वितीयः कर्णो लम्बकर्णो गर्दभः तृतीयस्तरक्षुः मृगादनः ते त्रयो रक्षसां पशवः । सूकरः इन्द्राय । सिंहो मारुतः मरुद्देवतः । कृकलासः सरटः पिप्पका पक्षिणी शकुनिः पक्षी एते त्रयः शरव्यायै । एकः पृषतः मृगविशेषो विश्वेषां देवानां पशुर्भवति विश्वेभ्यो दवेभ्यो जुष्टं नियुनज्मीति योज्यः । एवं षष्टयधिकं शतद्वयमारण्याः पशव उक्ताः। अत्र द्वाविंशतिरेकादशिनः सप्तविंशत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः षडधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः सर्वे मिलित्वा षट् शतानि नवाधिकानि पशवो भवन्ति । श्लोकश्च । षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि चेति । तेष्वारण्याः सर्वे उत्स्रष्टव्या न तु हिंस्याः ॥ ४० ॥

इति उवटकृतौ मन्त्रभाष्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

**म०** खड्गो मृगविशेषो विश्वदेवदेवतः । एकः कृष्णः श्वा सारमेयः द्वितीयः कर्णो लम्बकर्णो गर्दभः तृतीयस्तरक्षुः मृगादनः ते त्रयो रक्षसां पशवः । सूकरः इन्द्राय । सिंहो मारुतः मरुद्देवतः । कृकलासः सरटः पिप्पका पक्षिणी शकुनिः पक्षी ते त्रयः शरव्यायै । एकः पृषतः मृगविशेषो विश्वेषां देवानां पशुर्भवति। विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मीति योज्यः । एवं षष्ट्यधिकं शतद्वयमारण्याः पशव उक्ताः। अत्र द्वाविंशतिरेकादशिनः सप्तविंशत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः षष्ट्यधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः सर्वे मिलित्वा षट्शतानि नवाधिकानि पशवो भवन्ति । श्लोकश्च । षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि चेति । तेष्वारण्याः सर्वे उत्स्रष्टव्या न तु हिंस्याः ॥ ४० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
गतोऽध्यायश्चतुर्विंशो देवतापशुवाचकः ॥ २४ ॥

---

# पञ्चविंशोऽध्यायः ।

## तत्र प्रथमा ।

शादं दद्भिरवकां दन्तमूलैर्मृदं बर्स्वैस्तेगान्दꣳष्ट्राभ्याꣳ सरस्वत्या अग्रजिह्वं जिह्वाया उत्सादमवक्रन्देन तालु वाजꣳ हनुभ्यामप आस्येन वृषणमाण्डाभ्यामादित्याँश्मश्रुभिः पन्थानं भ्रूभ्यां द्यावापृथिवी वर्तोभ्यां विद्युतं कनीनकाभ्याꣳ शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्या इक्षवोऽवार्याणि पक्ष्माणि पार्या इक्षवः ॥ १ ॥

**उ०** शादं दद्भिः । इयमपि श्रुतिर्देवताश्वाङ्गयोश्चोदनां विदधाति । शादो देवताविशेषः दन्ता अश्वाङ्गम् । शादं दद्भिः प्रीणाति देवता भोक्त्री द्वितीयया निर्दिश्यते । अश्वाङ्गं भोग्यं तृतीयया करणविभक्त्या निर्दिश्यते । एवं हि विभक्त्योः सामर्थ्यं भवति । युक्तंच होमकाले अङ्गाभिधानं देवतायै होमः । आहच श्रुतिः । 'आज्यमवदानीकृत्वा प्रत्याख्यायम् देवताभ्य आहुतीर्जुहोतीति दद्भिः शादाय स्वाहा । दन्तमूलैरवकाय स्वाहा इत्येवं प्रयोगाः । क्वचिच्च देवता केवला भवति यथा शुक्लायस्वाहा कृष्णायस्वाहेति । क्वचिच्चान्यया विभक्त्या निर्देशो द्रव्यदेवतयोः यथा अग्नेः पक्षतिर्वायोर्निपक्षतिरिति । एवं द्रव्यदैवतमप्रसिद्धं यज्ञपार्श्वादिभ्योऽवगन्तव्यमिति पृथिवीं त्वचेति यावत् ॥ १ ॥

प्रणम्य कमलानाथं गणेशं गिरिजां गिरम् ।
पञ्चविंशेऽयमध्याये वेददीपो मयेर्यते ।

**म०** 'स्विष्टकृद्वनस्पत्यन्तरे शूल्यꣳ हुत्वा देवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतꣳ शादप्रभृतिलगन्तेभ्यो विमुखाच परेभ्य इति' ( का० २०।८।५।६ ) । स्विष्टकृद्वनस्पत्योरन्तरे वनस्पतियागानन्तरं स्विष्टकृद्यागात्पूर्वं शूले श्रपितं मांसं प्राजापत्योऽश्व इति वचनात्प्रजापतये हुत्वा अमुष्मै स्वाहेति प्रतिदेवतं शादादित्वगन्तेभ्यो देवताश्वाङ्गेभ्यो देवताभ्योऽश्वाङ्गेभ्यश्च घृतं जुहुयात् । अनादेशे घृतस्योक्तत्वात् । तत्र शादं दद्भिरित्यादि पृथिवीं त्वचेत्यन्तः संहिताभागो ब्राह्मणं न मन्त्राः । शादादयो देवाः दन्ताद्यङ्गानि । ततश्चतुर्गृहीतमाज्यं गृहीत्वा शादाय स्वाहा दद्भ्यः स्वाहा अवकाभ्यः स्वाहा दन्तमूलेभ्यः स्वाहेत्यादि पृथिव्यै स्वाहा त्वचे स्वाहेत्यन्तं जुहुयादित्येकः पक्षः शाखान्तरोदितः । स्वपक्षे तु शादं दद्भिः प्रीणामि स्वाहेत्यादिहोममन्त्राः । देवता भोक्त्री द्वितीयया निर्दिश्यते । अश्वाङ्गं भोग्यं तृतीयया करणविभक्त्या निर्दिश्यते । क्वचित्केवला देवतैव यथा शुक्लाय स्वाहा कृष्णाय स्वाहेति । क्वचिदन्यविभक्त्यैव द्रव्यदेवतयोर्निर्देशः यथा अग्नेः पक्षतिर्वायोर्निपक्षतिरिति । तथाच श्रुतिः 'शादं दद्भिरवकां दन्तमूलैरित्याज्यमवदानानि कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति या एव देवता अपिभागास्ता भागधेयेन समर्धयति' ( १३।३।५।१ ) इति । अस्यायमर्थः । शादं नाम देवमश्वस्य दद्भिर्दन्तैः प्रीणामीति शेषः । स्वाहाकारो दानार्थः । ततश्च शादं दद्भिः प्रीणामि स्वाहेति एवमन्यान्यपि योज्यानि । आज्यमवदानानि कृत्वा आज्यमेवाश्वाङ्गत्वेन परिकल्प्य प्रत्याख्यायमवदानमवदानं प्रति शादादिदेवता आख्यायाख्यायाज्याहुतीर्जुहोति संकल्पिताश्वाङ्गभवा घृताहुतीः शादादिभ्यो ददाति । एवं कुर्वन्नपिभागाः कल्पितभागास्ता भागेन समर्धयति प्रीणातीत्यर्थः । अथ संहितार्थः । दद्भिरश्वदन्तैः शादं देवं प्रीणामि । दन्तमूलैरवकां देवतां प्रीणामि । वर्स्वैर्दन्तपीठैर्मृदं देवतां प्रीणामि 'वर्स्वं स्याद्दन्तपीठिका' । शादादयोऽप्रसिद्धा देवाः आदित्यादयः प्रसिद्धाः । दंष्ट्राभ्यां तेगां देवतां प्रीणामि । सरस्वत्यै अग्रजिह्वम् । अत्र चतुर्थ्या देवतोद्देशः प्रथमयाङ्गस्य अतो विभक्तिव्यत्ययः । जिह्वाया अग्रमग्रजिह्वं जिह्वाग्रेण सरस्वतीं प्रीणामि । जिह्वायाः उत्सादम् । अत्र षष्ठ्याश्वाङ्गोद्देशः द्वितीयया देवस्य विभक्तिव्यत्ययः । जिह्वयोत्सादं देवं प्रीणामि । अवक्रन्देन तालु अत्र देवे तृतीया अङ्गे प्रथमा व्यत्ययः । तालुना अवक्रन्दं देवं प्रीणामि । वाजं हनुभ्याम् । हनुभ्यां वक्त्रैकदेशाभ्यां वाजं देवं प्रीणामि । आस्येन मुखेनापो देवताः प्रीणामि । आण्डाभ्यां वृषणाभ्यां वृषणं देवं प्रीणामि । श्मश्रुभिर्मुखकेशैरादित्यान्प्रीणामि । भ्रूभ्यां ललाटगरोमपङ्क्तिभ्यां पन्थानं देवं प्रीणामि । वर्तोः पक्ष्मपङ्क्तिः ताभ्यां द्यावापृथिव्यौ देवते प्रीणामि । कनीनकाभ्यां नेत्रमध्यगकृष्णगोलाभ्यां विद्युतं देवतां प्रीणामि । शुक्लाय स्वाहा कृष्णाय स्वाहा देवोद्देश एव न त्वङ्गम् । शुक्लाय कृष्णाय देवाय सुहुतमस्तु । यद्वा चतुर्थ्याश्वाङ्गमेव निर्दिश्यते । प्राजापत्योऽश्व इति वचनाद्देवोऽध्याहर्तव्यः । शुक्लेन कृष्णेन चाश्वाङ्गेन प्रजापतिं प्रीणामि । एवं लोमभ्यः स्वाहेत्यादावपि बोध्यम् । पार्याणि पक्ष्माणि । अत्र तद्धितेन देवतोद्देशः । पक्ष्माणि नेत्रोपरिलोमानि पार्याणि पारदेवत्यानि ततः पक्ष्मभिः पारं प्रीणमि । इक्षवो नेत्राधोभागरोमाणि अवारदेवत्याः ततः इक्षुभिरवारं प्रीणामि । विपरीतं वा अवार्याणि अवारदेवत्यानि पक्ष्माणि इक्षवः पार्याः पारदेवत्याः ॥ १ ॥

## द्वितीया ।

वातं॑ प्रा॒णेना॑पा॒नेन॒ नासि॑के उपया॒मम॑ध॒रेणौष्ठे॑न॒ सदुत्त॑रेण॒ प्रका॑शे॒नान्त॑र॒मनू॑का॒शेन॒ बाह्यं॒ नि॒वे॒ष्यं॑ मू॒र्ध्ना स्त॑नयि॒त्नुं निर्बा॑धे॒नाश॒निं॑ म॒स्तिष्के॑ण वि॒द्युतं॑ क॒नीन॑काभ्यां॒ कर्णा॑भ्या॒ꣳ श्रोत्र॒ꣳ श्रोत्रा॑भ्यां॒ कर्णौ॑ ते॒द॒नीम॑धर॒कण्ठे॑ना॒पः शु॒ष्कक॒ण्ठेन॑ चि॒त्तं मन्या॑भि॒रदि॑ति॒ꣳ शी॒र्ष्णा निर्ऋ॑तिं॒ निर्ज॑ल्पेन॒ शी॒र्ष्णा सं॑क्रो॒शैः प्रा॒णान् रे॒ष्माण॑ꣳ स्तु॒पेन॑ ॥ २ ॥

**उ०** अश्वस्य प्राणवायुना वातं प्रीणामि । अपानवायुना नासिकासंज्ञे द्वे देवते प्रीणामि । अधस्तनेन ओष्ठेन उपयामं देवं प्रीणामि । उपरितनेन ओष्ठेन सत्संज्ञं देवं प्रीणामि । प्रकाशेनोपरितनदेहकान्त्या अन्तरं देवं प्रीणामि । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति अनोर्दीर्घः । अनूकाशेनाधस्तनदेहकान्त्या बाह्यं देवं प्रीणामि । मूर्ध्ना मस्तकेन निवेष्यं देवं प्रीणामि । निश्चितं बध्यते निर्बाधः शिरोऽस्थिमध्यसंलग्नो मज्जाभागः तेन स्तनयित्नुं देवं प्रीणामि । मस्तके भवं मस्तिष्कं शिरोमध्यस्थो जर्जरो मांसभागः । 'मस्तिष्कं गोर्दम्' इत्यमरः । मस्तकमिष्यति गच्छति मस्तिष्कम् 'इष गतौ'

मस्तकमज्जेति क्षीरस्वामी । तेन मस्तिष्केणाशनिं देवं प्रीणामि । विद्युतं कनीनकाभ्यां प्रीणामीति पूर्ववत् । कर्णाभ्यां श्रोत्रम् । अत्राश्वाङ्गात्मिका एव देवता । कर्णाभ्यां कर्णशष्कुलीभ्यां श्रोत्रं देवं प्रीणामि । श्रोत्रेन्द्रियाभ्यां कर्णौ देवौ प्रीणामि । कण्ठाधोभागेन तेदनीं देवतां प्रीणामि । शुष्कश्चासौ कण्ठश्च शुष्ककण्ठम् कण्ठस्य यः शुष्को निर्मांसो देशः तेनापोदेवताः प्रीणामि । 'पश्चाद्ग्रीवा शिरा मन्या' इत्यमरः । ग्रीवापश्चाद्भागे कृकाटिकायां शिरा मन्या मन्यत इति मन्या 'संज्ञायां समजनि'इति क्यप् । ग्रीवापश्चान्नाडीभिश्चित्तं प्रीणामि । शीर्ष्णा शिरसा दितिं देवतां प्रीणामि । शीर्षस्य शीर्षन्नादेशः शसादौ । नितरां जर्जरीभूतेन शिरोभागेन निर्ऋतिं देवं प्रीणामि । सम्यक् क्रोशन्ति शब्दायन्ते तानि संक्रोशानि गच्छतोऽश्वस्य यान्यङ्गानि शब्दं कुर्वन्ति तैरङ्गैः प्राणान् देवान् प्रीणामि । 'स्तुप उच्छ्राये' । स्तुपेन उच्छ्रितेन शिखाभूतेनाङ्गेन रेष्माणं देवं प्रीणामि ॥ २ ॥

**म०** अश्वस्य प्राणवायुना वातं प्रीणामि । अपानवायुना नासिकासंज्ञे द्वे देवते प्रीणामि । अधस्तनेन ओष्ठेन उपयामं देवं प्रीणामि । उपरितनेन ओष्ठेन सत्संज्ञं देवं प्रीणामि । प्रकाशेनोपरितनदेहकान्त्या अन्तरं देवं प्रीणामि । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' ( पा० ६ । ३ । १२२ ) इत्यनोर्दीर्घः । अनूकाशेनाधस्तनदेहकान्त्या बाह्यं देवं प्रीणामि । मूर्ध्ना मस्तकेन निवेष्यं देवं प्रीणामि । निश्चितं बध्यते निर्बाधः शिरोऽस्थिमध्यसंलग्नो मज्जाभागः तेन स्तनयित्नुं देवं प्रीणामि । मस्तके भवं मस्तिष्कं शिरोमध्यस्थो जर्जरो मांसभागः । 'मस्तिष्कं गोर्दम्' इत्यमरः । मस्तकमिष्यति गच्छति मस्तिष्कम् 'इष गतौ' मस्तकमज्जेति क्षीरस्वामी । तेन मस्तिष्केणाशनिं देवं प्रीणामि । विद्युतं कनीनकाभ्यां प्रीणामीति पूर्ववत् । कर्णाभ्यां श्रोत्रम् । अत्राश्वाङ्गात्मिका एव देवता । कर्णाभ्यां कर्णशष्कुलीभ्यां श्रोत्रं देवं प्रीणामि । श्रोत्रेन्द्रियाभ्यां कर्णौ देवौ प्रीणामि । कण्ठाधोभागेन तेदनीं देवतां प्रीणामि । शुष्कश्चासौ कण्ठश्च शुष्ककण्ठम् । कण्ठस्य यः शुष्को निर्मांसो देशः तेनापो देवताः प्रीणामि । 'पश्चाद्ग्रीवा शिरा मन्या' इत्यमरः । ग्रीवापश्चाद्भागे कृकाटिकायां शिरा मन्या मन्यत इति मन्या 'संज्ञायां समजनि–' ( पा० ३ । ३ । ९९ ) इति क्यप् । ग्रीवापश्चान्नाडीभिश्चित्तं प्रीणामि । शीर्ष्णा शिरसा दितिं देवतां प्रीणामि । शीर्षस्य शीर्षन्नादेशः शसादौ । नितरां जर्जरीभूतेन शिरोभागेन निर्ऋतिं देवं प्रीणामि । सम्यक् क्रोशन्ति शब्दायन्ते तानि संक्रोशानि गच्छतोऽश्वस्य यान्यङ्गानि शब्दं कुर्वन्ति तैरङ्गैः प्राणान्देवान्प्रीणामि । 'स्तुप उच्छ्राये' स्तुपेन- उच्छ्रितेन शिखाभूतेनाङ्गेन रेष्माणं देवं प्रीणामि ॥ २ ॥

## तृतीया ।

मशकान्केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन कूर्माञ्छफैराक्रमणꣳ स्थूराभ्यामृक्षलाभिः कपिञ्जलाञ्जवं जङ्घाभ्यामध्वानं बाहुभ्यां जाम्बीलेनारण्यमग्निमतिरुग्भ्यां पूषणं दोर्भ्यामश्विनावꣳसाभ्याꣳ रुद्रꣳ रोराभ्याम् ॥ ३ ॥



**उ०** केशैः स्कन्धस्थरोमभिः मशकान् देवान् प्रीणामि । वहः स्कन्धस्तेनेन्द्रं प्रीणामि । कीदृशेन वहेन । स्वपसा अप इति कर्मनाम । शोभनमपः कर्म पर्याणधारणनरवहनादिकं यस्य स स्वपाः तेन । शकुनिः पक्षी तद्वत् सादो गमनम् 'षद्लृ विशरणगत्यादौ' घञ् । वेगवत् कूर्दनं तेन बृहस्पतिं देवं प्रीणामि । 'शफं क्लीबे खुरः पुमान्' इति कोशः । खुरैः कूर्मान् देवान् प्रीणामि । रलयोरैक्यम् । स्थूलाभ्यां गुल्फाभ्यामाक्रमणं देवं प्रीणामि । गुल्फाधःस्था नाड्य ऋक्षलास्ताभिः कपिञ्जलान् देवान् प्रीणामि । गुल्फजानुनोर्मध्यभागो जङ्घा ताभ्यां जवं देवं प्रीणामि । अग्रपादयोर्जानूर्ध्वभागौ बाहू ताभ्यां अध्वानं देवं प्रीणामि । जाम्बीरं जम्बीरतरोः फलं । रलयोरभेदः । तदाकारो जानुमध्यभागो जाम्बीरस्तेनारण्यं देवं प्रीणामि । अत्यन्तं रोचेते तौ अतिरुचौ जानुदेशौ ताभ्यामग्निं देवं प्रीणामि । अग्रपादयोर्जान्वधो दोषौ करौ ताभ्यां पूषणं देवं प्रीणामि । अंसौ स्कन्धौ ताभ्यामश्विनौ देवौ प्रीणामि । रोरावंसग्रन्थी ताभ्यां रुद्रं प्रीणामि ॥ ३ ॥

**म०** केशैः स्कन्धस्थरोमभिः मशकान्देवान्प्रीणामि । वहः स्कन्धस्तेनेन्द्रं प्रीणामि । कीदृशेन वहेन । स्वपसा अप इति कर्मनाम । शोभनमपः कर्म पर्याणधारणनरवहनादिकं यस्य स स्वपाः तेन । शकुनिः पक्षी तद्वत् सादो गमनम् 'षद्लृ विशरणगत्यादौ' घञ् । वेगवत् कूर्दनं तेन बृहस्पतिं देवं प्रीणामि । 'शफं क्लीबे खुरः पुमान्' । खुरैः कूर्मान्देवान्प्रीणामि । रलयोरैक्यम् । स्थूलाभ्यां गुल्फाभ्यामाक्रमणं देवं प्रीणामि । गुल्फाधःस्था नाड्यः ऋक्षलास्ताभिः कपिञ्जलान्देवान्प्रीणामि । गुल्फजानुनोर्मध्यभागो जङ्घा ताभ्यां जवं देवं प्रीणामि । अग्रपादयोर्जानूर्ध्वभागौ बाहू ताभ्यां अध्वानं देवं प्रीणामि । जाम्बीरं जम्बीरतरोः फलं रलयोरभेदः तदाकारो जानुमध्यभागो जाम्बीरस्तेनारण्यं देवं प्रीणामि । अत्यन्तं रोचेते तौ अतिरुचौ जानुदेशौ ताभ्यामग्निं देवं प्रीणामि । अग्रपादयोर्जान्वधो दोषौ करौ ताभ्यां पूषणं देवं प्रीणामि । अंसौ स्कन्धौ ताभ्यामश्विनौ देवौ प्रीणामि । रोरावंसग्रन्थी ताभ्यां रुद्रं प्रीणामि ॥ ३ ॥

## चतुर्थी ।

अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्थ्यदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताꣳ

सप्तमी बृहस्पतेरष्टम्यर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी ॥४॥

**उ०** अत्र षष्ठ्या देवतोद्देशः प्रथमयाङ्गोद्देशः ततोऽस्त्वित्यध्याहारः । अग्नेः देवस्य पक्षतिरस्तु । 'पक्षः साध्यविरोधयोः । बले काले पतत्रे च रुचौ पार्श्वे प्रकल्पितः' इत्यभिधानोक्तेरत्र पक्षः पार्श्ववाची । पक्षस्य मूलं पक्षतिः 'पक्षात्तिः' इति मूलार्थे तिप्रत्ययः । ततः पक्षस्य पार्श्वस्य मूलभूतान्यस्थीनि वंकिशब्दवाच्यानि पक्षतिशब्देनोच्यन्ते । तानि च प्रतिपार्श्वं त्रयोदश भवन्ति । 'षड्विꣳशतिरश्वस्य वंकयः' इति श्रुतेः । तेषां क्रमेण देवतासंबन्धं वक्ति । तत्रादौ दक्षिणपार्श्वस्थां देवता आह । अग्नेः पक्षतिः प्रथमं दक्षिणपार्श्वास्थि अग्नेरस्तु । विभक्तिव्यत्ययो वा । पक्षत्या अग्निं देवं प्रीणामि । वायोर्निपक्षतिः नीचा पक्षतिर्निपक्षतिः द्वितीयं दक्षिणपार्श्वास्थि वायोर्देवस्यास्तु । एवमग्रेऽपि व्याख्येयम् । तृतीया पक्षतिरिन्द्रस्यास्तु । चतुर्थी पक्षतिः सोमस्य । अदित्यै । चतुर्थी षष्ठ्यर्था । पञ्चमी पक्षतिः अदित्याः । षष्ठी पक्षतिः इन्द्राण्याः । सप्तमी पक्षतिः मरुताम् । अष्टमी पक्षतिः बृहस्पतेः । नवमी पक्षतिरर्यम्णो देवस्य । दशमी धातुर्देवस्य । एकादशी पक्षतिः इन्द्रस्य । द्वादशी पक्षतिः वरुणस्य । त्रयोदशी पक्षतिः दक्षिणपार्श्वास्थि यमस्य देवस्यास्तु ॥ ४ ॥

**म०** अत्र षष्ठ्या देवतोद्देशः प्रथमयाङ्गोद्देशः ततोऽस्त्वित्यध्याहारः । अग्नेः देवस्य पक्षतिरस्तु । 'पक्षः साध्यविरोधयोः बले काले पतत्रे च रुचौ पार्श्वे प्रकल्पितः' इत्यभिधानोक्तेरत्र पक्षः पार्श्ववाची । पक्षस्य मूलं पक्षतिः 'पक्षात्तिः' ( पा० ५ । २ । २५ ) इति मूलार्थे तिप्रत्ययः । ततः पक्षस्य पार्श्वस्य मूलभूतान्यस्थीनि वंकिशब्दवाच्यानि पक्षतिशब्देनोच्यन्ते । तानि च प्रतिपार्श्वं त्रयोदश भवन्ति 'षड्विꣳशतिरश्वस्य वंकयः' ( कौषी० ब्रा० १० । ४ ) इति श्रुतेः । तेषां क्रमेण देवतासंबन्धं वक्ति । तत्रादौ दक्षिणपार्श्वस्थां देवता आह । अग्नेः पक्षतिः प्रथमं दक्षिणपार्श्वास्थि अग्नेरस्तु । विभक्तिव्यत्ययो वा । पक्षत्याग्निं देवं प्रीणामि । वायोर्निपक्षतिः नीचा पक्षतिर्निपक्षतिः । द्वितीयं दक्षिणपार्श्वास्थि वायोर्देवस्यास्तु । एवमग्रेऽपि व्याख्येयम् । तृतीया पक्षतिरिन्द्रस्यास्तु । चतुर्थी पक्षतिः सोमस्य । अदित्यै । चतुर्थी षष्ठ्यर्था । पञ्चमी पक्षतिः अदित्याः । षष्ठी पक्षतिः इन्द्राण्याः । सप्तमी पक्षतिः मरुताम् । अष्टमी पक्षतिः बृहस्पतेः । नवमी पक्षतिरर्यम्णो देवस्य । दशमी धातुर्देवस्य । एकादशी पक्षतिः इन्द्रस्य । द्वादशी पक्षतिः वरुणस्य । त्रयोदशी पक्षतिः दक्षिणपार्श्वास्थि यमस्य देवस्यास्तु ॥ ४ ॥

## पञ्चमी ।

इन्द्राग्न्योः पक्षतिः सरस्वत्यै निपक्षतिर्मित्रस्य तृतीयापां चतुर्थी निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी सर्पाणाꣳ सप्तमी विष्णोरष्टमी पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरम् ॥ ५ ॥

**उ०** अथ वामपार्श्वस्थान् देवानाह । प्रथममुपरिस्थं वामपार्श्वास्थि इन्द्राग्न्योर्देवयोरस्तु । सरस्वत्यै निपक्षतिः द्वितीया पक्षतिः सरस्वत्याः । तृतीया पक्षतिर्मित्रस्य देवस्य । चतुर्थी अपां देवतानाम् । पञ्चमी निर्ऋत्यै निर्ऋतेः । षष्ठी अग्नीषोमयोः । सप्तमी सर्पाणां देवानाम् । अष्टमी विष्णोर्देवस्य । नवमी पूष्णो देवस्य । दशमी त्वष्टुः । एकादशी इन्द्रस्य । द्वादशी वरुणस्य । यमस्येयं यमी । त्रयोदशी पक्षतिः यमसंबन्धिनी । चतुर्थी प्रथमार्था । अथ समस्तयोः पार्श्वयोर्देवानाह । दक्षिणं पार्श्वं द्यावापृथिव्योरस्तु । उत्तरं वामं पार्श्वं विश्वेषां देवानामस्तु ॥ ५ ॥

**म०** अथ वामपार्श्वस्थां देवानाह । प्रथममुपरिस्थं वामपार्श्वास्थि इन्द्राग्न्योर्देवयोरस्तु । सरस्वत्यै निपक्षतिः । द्वितीया पक्षतिः सरस्वत्याः । तृतीया पक्षतिर्मित्रस्य देवस्य । चतुर्थी अपां देवतानाम् । पञ्चमी निर्ऋत्यै निर्ऋतेः । षष्ठी अग्नीषोमयोः । सप्तमी सर्पाणां देवानाम् । अष्टमी विष्णोर्देवस्य । नवमी पूष्णो देवस्य । दशमी त्वष्टुः । एकादशी इन्द्रस्य । द्वादशी वरुणस्य । यमस्येयं यमी त्रयोदशी पक्षतिः यमसंबन्धिनी । चतुर्थी प्रथमार्था । अथ समस्तयोः पार्श्वयोर्देवानाह । दक्षिणं पार्श्वं द्यावापृथिव्योरस्तु । उत्तरं वामं पार्श्वं विश्वेषां देवानामस्तु ॥ ५ ॥

## षष्ठी ।

मरुताꣳ स्कन्धा विश्वेषां देवानां प्रथमा कीकसा रुद्राणां द्वितीयादित्यानां तृतीया वायोः पुच्छमग्नीषोमयोर्भासदौ कुञ्चौ श्रोणिभ्यामिन्द्राबृहस्पती ऊरुभ्यां मित्रावरुणावल्गाभ्यामाक्रमणꣳ स्थूराभ्यां बलं कुष्ठाभ्याम् ॥ ६ ॥

**उ०** अथाङ्गान्तराणां देवता आह । विभक्तिव्यत्ययः । स्कन्धप्रदेशैर्मरुतो देवान् प्रीणामि । अश्वपुच्छोपरि तिस्रोऽस्थिपङ्क्तयः सन्ति तासां देवता आह । 'कीकसं कुल्यमस्थि च' इत्यमरः । कीकसति शब्दं करोतीति कीकसमस्थि । प्रथमा कीकसा प्रथमानि कीकसानि पुच्छोपरिस्थाद्यस्थिपङ्क्तिर्विश्वेषां देवानां । प्रथमकीकसैर्विश्वान्देवान्प्रीणामि । द्वितीयास्थिपङ्क्तिः रुद्राणां द्वितीयैः रुद्रान् प्रीणामि । तृतीयानि कीकसानि आदित्यानां तृतीयैः कीकसैरादित्यान् प्रीणामि । वायोः पुच्छं पुच्छेन वायुं प्रीणामि । भासदौ भासेते तौ

भासदौ नितम्बौ त्वग्नीषोमयोः भासद्भ्यामग्नीषोमौ प्रीणामि । कुष्ठौ श्रोणिभ्यां पुनः पूर्ववदङ्गात्तृतीया । 'कटिः श्रोणिः ककुद्मती' इत्यमरः । श्रोणिभ्यां दक्षवामाभ्यां कटिप्रदेशाभ्यां कुष्ठौ देवौ प्रीणामि । इन्द्राबृहस्पती ऊरुभ्याम् । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । ऊरुभ्यामिन्द्राबृहस्पती देवौ प्रीणामि । मित्रावरुणौ अल्गाभ्याम् अलमत्यर्थं गच्छतः ऊरुभ्यां संयोगं प्राप्नुतस्तौ अल्गौ वङ्क्षणौ ऊरुसन्धी ताभ्यां मित्रावरुणौ प्रीणामि । स्थूरौ स्थूलौ स्फिचौ नितम्बाधोभागौ ताभ्यामाक्रमणं देवं प्रीणामि । 'कुष निष्कर्षे' कुष्येते तौ कुष्ठौ नितम्बस्थौ कूपकौ आवर्तौ ककुन्दरशब्दवाच्यौ ताभ्यां बलं देवं प्रीणामि ॥ ६ ॥

**म०** अथाङ्गान्तराणां देवता आह । विभक्तिव्यत्ययः । स्कन्धप्रदेशैर्मरुतो देवान् प्रीणामि । अश्वपुच्छोपरि तिस्रोऽस्थिपङ्क्तयः सन्ति तासां देवता आह । 'कीकसं कुल्यमस्थि च' इत्यमरः । कीकसति शब्दं करोति कीकसमस्थि प्रथमा कीकसा प्रथमानि कीकसानि पुच्छोपरिस्थायास्थिपङ्क्तिर्विश्वेषां देवानां प्रथमकीकसैर्विश्वान्देवान्प्रीणामि । द्वितीयास्थिपङ्क्तिः रुद्राणां द्वितीयैः रुद्रान्प्रीणामि । तृतीयानि कीकसानि आदित्यानां तृतीयैः कीकसैरादित्यान्प्रीणामि । वायोः पुच्छं पुच्छेन वायुं प्रीणामि । भासदौ भासेते तौ भासदौ नितम्बौ तावग्नीषोमयोः भासद्भ्यामग्नीषोमौ प्रीणामि । कुष्ठौ श्रोणिभ्यां पुनः पूर्ववदङ्गात् तृतीया । 'कटिः श्रोणिः ककुद्मती' इत्यमरः । श्रोणिभ्यां दक्षवामाभ्यां कटिप्रदेशाभ्यां कुष्ठौ देवौ प्रीणामि । इन्द्राबृहस्पती ऊरुभ्याम् 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । ऊरुभ्यामिन्द्राबृहस्पती देवौ प्रीणामि । मित्रावरुणौ अल्गाभ्याम् अलमत्यर्थं गच्छत ऊरुभ्यां संयोगं प्राप्नुतस्तौ अल्गौ वङ्क्षणौ ऊरुसन्धी ताभ्यां मित्रावरुणौ प्रीणामि । स्थूरौ स्थूलौ स्फिचौ नितम्बाधोभागौ ताभ्यामाक्रमणं देवं प्रीणामि । 'कुष निष्कर्षे' कुष्येते तौ कुष्ठौ नितम्बस्थौ कूपकौ आवर्तौ ककुन्दरशब्दवाच्यौ ताभ्यां बलं देवं प्रीणामि ॥ ६ ॥

## सप्तमी ।

पूषणं वनिष्ठुनान्धाहीन्स्थूलगुदया सर्पान्गुदाभिर्विह्रुत आन्त्रैरपो वस्तिना वृषणमाण्डाभ्यां वाजिनꣳ शेपेन प्रजाꣳ रेतसा चाषान्पित्तेन प्रदरान्पायुना कूश्माञ्छकपिण्डैः ॥ ७ ॥

**उ०** वनति संभजति वनिष्ठुः स्थूलान्त्रं तेन पूषणं देवं प्रीणामि । 'गुदं त्वपानं पायुर्ना' इत्यमरः । स्त्रीत्वं छान्दसम् । स्थूला चासौ गुदा च स्थूलगुदा तया गुदस्य स्थूलभागेन अन्धाहीन्प्रीणामि । अन्धाश्च ते अहयश्च सर्पास्तान् सर्पान् गुदाभिः स्थूलगुदातिरिक्तैर्गुदभागैः सर्पान् प्रीणामि । विहुत आन्त्रैः 'अन्त्रं पुरीतत्' इत्यमरः । 'अम् गतौ भजने शब्दे' अमति भजत्यनेनान्नमित्यन्त्रम् अन्त्रे भवा आन्त्राः अन्त्रसंबन्धिनो मांसभागाः तैर्विहुतो देवान्प्रीणामि । अपो वस्तिना 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः । वसति मूत्रं यस्मिन् स वस्तिः नाभेरधो वर्तमानं मूत्रपुटं देवताः प्रीणामि । 'मुष्कोऽण्डो वृषणः कोशः' अण्ड ए[वाण्डः] ताभ्यां लिङ्गोभयपार्श्वस्थाभ्यां मांसपिण्डाभ्यां वृषणं [देवं] प्रीणामि । शेपो लिङ्गं तेन वाजिनं देवं प्रीणामि । '[शिश्नो] मेढ्रो मेहनशेफसी' इत्यमरः । 'शि निशाने' शिनोति [भग]मिति शेपः सान्तोऽदन्तश्च । प्रजां रेतसा 'शुक्रं तेजो[रेत]सी च बीजवीर्येन्द्रियाणि च' इत्यमरः । 'रीङ् स्रवणे' [रियते] स्रवति रेतो वीर्यं तेन प्रजादेवतां प्रीणामि । मायुः [पित्तं] पतति स्रंसते पित्तं धातुविशेषस्तेन चाषान् देवान् प्रीणामि पाति मलोत्सर्गमिति पायुर्गुदमुक्तातिरिक्तं तेन गुदतृतीयभागेन प्रदरान्देवान्प्रीणामि । कूश्मान् शकपिण्डैः । 'शको देशे नृपे विशि' । विशि विष्ठायां शकस्य विष्ठायाः पिण्डैः कूश्मान् देवान् प्रीणामि ॥ ७ ॥

**म०** वनति संभजति वनिष्ठुः स्थूलान्त्रं तेन पूषणं देवं प्रीणामि । 'गुदं त्वपानं पायुर्ना' इत्यमरः । स्त्रीत्वं छान्दसम् । स्थूला चासौ गुदा च स्थूलगुदा तया गुदस्य स्थूलभागेन अन्धाहीन् प्रीणामि । अन्धाश्च ते अहयश्च सर्पास्तान् सर्पान् गुदाभिः स्थूलगुदातिरिक्तैर्गुदभागैः सर्पान्प्रीणामि । विहुत आन्त्रैः 'अन्त्रं पुरीतत्' इत्यमरः । 'अम् गतौ भजने शब्दे' अमति भजत्यनेनान्नमित्यन्त्रम् । अन्त्रे भवा आन्त्राः अन्त्रसंबन्धिनो मांसभागाः तैर्विहुतो देवान्प्रीणामि । अपो वस्तिना 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः । वसति मूत्रं यस्मिन्स वस्तिः नाभेरधो वर्तमानं मूत्रपुटं तेनापो देवताः प्रीणामि । 'मुष्कोऽण्डो वृषणः कोशः' इत्यमरः । अण्ड एवाण्डः ताभ्यां लिङ्गोभयपार्श्वस्थाभ्यां मांसपिण्डाभ्यां वृषणं देवं प्रीणामि । शेपो लिङ्गं तेन वाजिनं देवं प्रीणामि 'शिश्नो मेढ्रो मेहनशेपसी' इत्यमरः । 'शि निशाने' शिनोति भगमिति शेपः सान्तोऽदन्तश्च । प्रजां रेतसा 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः । 'रीङ् स्रवणे' रियते स्रवति रेतो वीर्यं तेन प्रजां देवतां प्रीणामि । मायुः पित्तं पतति स्रंसते पित्तं धातुविशेषस्तेन चाषान्देवान्प्रीणामि । पाति मलोत्सर्गमिति पायुर्गुदमुक्तातिरिक्तं तेन गुदतृतीयभागेन प्रदरान्देवान्प्रीणामि । कूश्मान् शकपिण्डैः । 'शको देशे नृपे विशि' । विशि विष्ठायां शकस्य विष्ठायाः पिण्डैः कूश्मान् देवान् प्रीणामि ॥ ७ ॥

## अष्टमी ।

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवोऽदित्यै भसज्जीमूतान्हृदयौपशेनान्तरिक्षं पुरीतता नभ उदर्येण चक्रवाकौ मतस्नाभ्यां दिवं वृक्काभ्यां गि-

रीन्प्लाशिभिरुपलान्प्लीह्ना वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिः स्रवन्तीर्ह्रदान्कुक्षिभ्यांꣳ समुद्रमु- ... वैश्वानरं भस्मना ॥ ८ ॥

उ० अत्र ...

त्यध्याहारः । ० पुनर्देवे षष्ठी अङ्के प्रथमा । 'क्रुड घनत्वे' क्रुडतीति
धयोः । बले व घनो वक्षोमध्यभागः स इन्द्रस्यास्तु । क्रोडेन वा
धानोक्तेरत्र पष्ठ प्रीणामि । एवमग्रेऽपि । पाजसे बलाय हितं पाजस्यं
इति मूलार्थे करमङ्गं तददित्याः देवतायाः । अंसकक्षयोः सन्धिर्जत्रु ।
स्थीनि वंक्रि त इति पुंस्त्वमार्षम् । तानि दिशां देवतानाम् । 'भस
प्रतिपार्श्वे त्र नदीप्त्योः' बभस्ति दीप्यते भसत् लिङ्गाग्रं तददित्याः
इति श्रुतेः स्तु । पुनर्देवे द्वितीया अङ्के तृतीया । हृदये उपशेते हृद-
दक्षिणपार्श्व योपशं हृदयस्थं मांसं तेन जीमूतान्प्रीणामि । पूर्यते पुरीतत्
श्वोस्थि हृदयाच्छादकमन्त्रं तेनान्तरिक्षं देवं प्रीणामि । उदरे भवमु-
णामि दर्यमुदरस्थं मांसं तेन नभोदेवं प्रीणामि । शरीरावयवा-
दक्षि यत् । ग्रीवाधस्ताद्भागस्थितहृदयोभयपार्श्वस्थे अस्थिनी
तृती मतस्ने ताभ्यां चक्रवाकौ देवौ प्रीणामि । 'वृक आदाने'
अदिते वृक्यते स्वादुतया गृह्यते वृक्का । नान्तः पुंस्त्वयम् । स्त्रीत्येके
पक्षतिः इति क्षीरस्वामी । वृक्का मुख्यं मांसं तेन दिवं देवतां प्रीणामि ।
पक्षतिः वृक्कौ कुक्षिस्थौ मांसगोलकावाम्रफलाकृती इति याज्ञिकाः ।
धातुर्देवस् प्रकर्षेणाश्नन्ति भुञ्जतेऽन्नानीति प्लाशयः शिश्नमूलनाड्यः
वरुणस्य तन्नाडीद्वारैवान्नस्य देहे संचारात् रलयोरभेदः ताभिर्गिरी-
देवस्यास्तु न्देवान्प्रीणामि । हृदयवामभागे शिथिलो मांसभागः पुप्पुससंज्ञः 'प्लिह गतौ' प्लेहते प्लीहा नान्तः तेन उपलान्देवान्प्रीणामि । क्लोमति क्लोमा उदर्यो जलाधारः । 'हृदयस्य दक्षिणे यकृत् क्लोमा वामे प्लीहा पुप्पुसश्चेति वैद्य' इति क्षीरस्वामी । क्लोमा गलनाडीति कर्कः । तैर्वल्मीकान् देवान्प्रीणामि । ग्लायन्ति श्राम्यन्ति ग्लावो हृदयनाड्यः ताभिर्गुल्मान्देवान्प्रीणामि । हरन्त्यन्नरसमिति हिरा अन्यवाहिन्यो नाड्यः ताभिः स्रवन्तीः देवताः प्रीणामि । जठरस्य दक्षवामभागौ कुक्षी ताभ्यां ह्रदान्देवान्प्रीणामि । उदरेण जठरेण समुद्रं प्रीणामि । भस्मनाङ्गोत्थेन वैश्वानरं देवं प्रीणामि ॥ ८ ॥

म० पुनर्देवे षष्ठी अङ्के प्रथमा । 'नना क्रोडं भुजान्तरम्' इत्यमरः । 'क्रुड घनत्वे' क्रुडतीति क्रोडः घनो वक्षोमध्यभागः स इन्द्रस्यास्तु क्रोडेन वा इन्द्रं प्रीणामि एवमग्रेऽपि । पाजसे बलाय हितं पाजस्यं बलकरमङ्गं तददित्याः देवतायाः । 'सन्धी तस्यैव जत्रुणी' इत्यमरः । अंसकक्षयोः सन्धिर्जत्रु । जायत इति पुंस्त्वमार्षम् । तानि दिशां देवतानाम् । 'भस भर्त्सनदीप्त्योः' बभस्ति दीप्यते भसत् लिङ्गाग्रं तददित्याः अस्तु । पुनर्देवे द्वितीया अङ्के तृतीया । हृदये उपशेते हृदयौपशं हृदयस्थं मांसं तेन जीमूतान्प्रीणामि । पूर्यते पुरीतत् हृदयाच्छादकमन्त्रं तेनान्तरिक्षं देवं प्रीणामि । उदरे भवमुदर्यमुदरस्थं मांसं तेन नभो देवं प्रीणामि । 'शरीरावयवायत्' । ग्रीवाधस्ताद्भागस्थितहृदयोभयपार्श्वस्थे अस्थिनी मतस्ने ताभ्यां चक्रवाकौ देवौ प्रीणामि । 'वृक्काग्रमांसम्' इत्यमरः । 'वृक आदाने' वृक्यते स्वादुतया गृह्यते वृक्का । नान्तः पुंस्त्वयं स्त्रीत्येके इति क्षीरस्वामी । वृक्का मुख्यं मांसं तेन दिवं देवतां प्रीणामि । वृक्कौ कुक्षिस्थौ मांसगोलकावाम्रफलाकृती इति याज्ञिकाः । प्रकर्षेणाश्नन्ति भुञ्जतेऽन्नानीति प्लाशयः शिश्नमूलनाड्यः तन्नाडीद्वारैवान्नस्य देहे संचारात् रलयोरभेदः । ताभिर्गिरीन्देवान्प्रीणामि । 'गुल्मस्तु प्लीहा पुंसि' इत्यमरः । हृदयवामभागे शिथिलो मांसभागः पुप्पुससंज्ञः 'प्लिह गतौ' प्लेहते प्लीहा नान्तः तेन उपलान्देवान्प्रीणामि । 'क्लिदक क्लोमेत्यमरः' क्लोमेति क्लोमा उदर्यो जलाधारः । हृदयस्य दक्षिणे यकृत् क्लोमा वामे प्लीहा पुप्पुसश्चेति वैद्या इति क्षीरस्वामी । क्लोमा गलनाडीति कर्कः । तैर्वल्मीकान्देवान्प्रीणामि । ग्लायन्ति श्राम्यन्ति ग्लावो हृदयनाड्यः ताभिर्गुल्मान्देवान्प्रीणामि । हरन्त्यन्नरसमिति हिरा अन्नवाहिन्यो नाड्यः ताभिः स्रवन्तीः देवताः प्रीणामि । 'पिचण्डकुक्षी जठरोदरं तुण्डम्' इत्यमरः । जठरस्य दक्षवामभागौ कुक्षी ताभ्यां ह्रदान्देवान्प्रीणामि । उदरेण जठरेण समुद्रं प्रीणामि । भस्मनाङ्गोत्थेन वैश्वानरं देवं प्रीणामि ॥ ८ ॥

## नवमी ।

विधृतिं नाभ्या घृतꣳ रसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनं वसया प्रुष्वा अश्रुभिर्ह्रादुनीर्दूषीकाभिरस्रा रक्षाꣳसि चित्राण्यङ्गैर्नक्षत्राणि रूपेण पृथिवीं त्वचा जुम्बकाय स्वाहा ॥ ९ ॥

उ० नाभ्या उदराधःस्थग्रन्थिना विधृतिं देवतां प्रीणामि । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादिरसे वीर्ये देहधात्वम्बुपारदे' इति विश्वः । रसेन वीर्येण धातुविशेषेण वा घृतं देवं प्रीणामि । यूषः क्वथितो रसः 'पद्दन्–'इत्यादिना यूषन्नादेशः । यूष्णा पक्वान्नरसेनापो देवताः प्रीणामि । विप्रुड्भिर्वसाबिन्दुभिर्मरीचीर्देवताः प्रीणामि । 'ऊष्मणस्तु निदाघोष्णग्रीष्मा बाष्पसहा अपि' इति विश्वः । ऊष्मणा शरीरगतेनौष्ण्येन नीहारं देवं प्रीणामि । वस्ते मांसमिति वसा 'शुद्धमांसस्य यः स्नेहः सा वसा' इति वैद्या इति स्वामी । वसया मांसस्नेहेन शीनं देवं प्रीणामि । दूषीकाभिर्नेत्रमलैर्ह्रादुनीर्देवताः प्रीणामि । अस्यते सृज्यते इति वा असृक् रुधिरं 'पद्दन्–' इत्यसन्नादेशः । अस्ना रक्षांसि प्रीणामि । अङ्गैः पूर्वानुक्तावयवैः चित्राणि दैवतानि प्रीणामि । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः' इति विश्वः । रूपेण सौन्दर्येण नक्षत्राणि दैवतानि प्रीणामि । त्वचा चर्मणा पृथिवीं प्रीणामि । स्वाहेति मन्त्रैराज्यं जुहोतीत्यर्थः । अत्र अग्निं हृदयेनाशनिं हृदयाग्रेण-

त्यादि द्यावापृथिवीभ्यां स्वाहेत्यन्ता अपि आहुतीर्जुहुयात् आश्वमेधिकत्वात् । अवभृथे अप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्रस्य मूर्धनि जुहोति जुम्बकायस्वाहा इति । वारुणी द्विपदा शुण्डिभ औदन्यदृष्टा । 'वरुणो वै जुम्बकः' इति श्रुतिः । एषा चान्तर्जले जप्ता पापनाशनी । तदुक्तं हारीतेन 'जम्बुका नाम गायत्री वेदे वाजसनेयके । अन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोहति' इति ॥ ९ ॥

**म०** नाभ्या उदराधःस्थग्रन्थिना विधृतिं देवतां प्रीणामि । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादिरसे वीर्ये देहधात्वम्बुपारदे' इति विश्वः । रसेन वीर्येण धातुविशेषेण वा घृतं देवं प्रीणामि । यूषः क्वथितो रसः 'पद्दन्' (पा० ६ । १ । ६३ ) इत्यादिना यूषन्नादेशः । यूष्णा पक्वान्नरसेनापो देवताः प्रीणामि । 'पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रियः' इत्यमरः । विप्रुड्भिर्वसाविन्दुभिर्मरीचीर्देवताः प्रीणामि । 'ऊष्माणस्तु निदाघोष्णग्रीष्माः शष्पसहा अपि' इति विश्वः । ऊष्मणा शरीरगतेनौष्ण्येन नीहारं देवं प्रीणामि । 'मेदस्तु वपा वसा' इत्यमरः । वस्ते मांसमिति वसा । 'शुद्धमांसस्य यः स्नेहः सा वसेति वैद्याः' इति स्वामी । वसया मांसस्नेहेन शीनं देवं प्रीणामि । 'अश्रु नेत्राम्बु रोदनम्' इत्यमरः । अश्रुभिर्नेत्राम्बुभिः प्रुष्वाः देवताः प्रीणामि । 'दूषिका नेत्रयोर्मलम्' इत्यमरः । दूषीकाभिर्नेत्रमलैर्ह्रादुनीर्देवताः प्रीणामि । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः । अस्यते सृज्यते इति वा असृक् रुधिरम् 'पद्दन्–' ( पा० ६ । १ । ६३ ) इत्यसन्नादेशः । अस्ना रक्षांसि प्रीणामि । अङ्गैः पूर्वानुक्तावयवैः चित्राणि दैवतानि प्रीणामि । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः' इति विश्वः । रूपेण सौन्दर्येण नक्षत्राणि दैवतानि प्रीणामि । त्वचा चर्मणा पृथिवीं देवीं प्रीणामि । स्वाहेति मन्त्रैराज्यं जुहोतीत्यर्थः । अत्र अग्निं हृदयेनाशनिं हृदयाग्रेणेत्यादि द्यावापृथिवीभ्यां स्वाहेत्यन्ता अपि ( ३९ । ८-१३ ) आहुतीर्जुहुयात् आश्वमेधिकत्वात् । 'अवभृथेऽभ्यन्तेऽप्सु मग्नस्याक्षिपिङ्गलस्य खलतिविक्लिधशुक्रस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति' ( का० २० । ८ । १८ ) । अवभृथयागान्ते एवंविधस्य पुंसो मूर्धनि जुम्बकायेति मन्त्रेणाज्यं सकृद्गृहीतं जुहुयात् । कीदृशस्य पुंसः । जले मग्नस्य पिङ्गलाक्षस्य खलतेः खल्वाटस्य । विक्लिधस्य दन्तुरस्य शुक्रस्यातिगौरस्येति सूत्रार्थः । वरुणदेवत्या द्विपदा यजुर्गायत्री उदन्यपुत्रमुण्डिभदृष्टा । जुम्बकाय वरुणाय स्वाहा सुहुतमस्तु । 'वरुणो वै जुम्बः' ( १३ । ३ । ७ । ५ ) इति श्रुतेः । एषा चान्तर्जले जप्ता पापनाशिनी तदुक्तं हारीतेन 'जुम्बका नाम गायत्री वेदे वाजसनेयके । अन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोहति ॥' इति ॥ ९ ॥

## दशमी ।

✓ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १० ॥

## एकादशी ।

✓ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ११ ॥

**उ०** चतस्रः कदेवत्याः त्रिष्टुभः प्रजापतिसुतहिरण्यगर्भदृष्टाः प्राजापत्यपशूनामश्वादीनां याज्यानुवाक्याः । द्वे व्याख्याते ॥ १० ॥ ११ ॥

**म०** चतस्रः कदेवत्याः त्रिष्टुभः प्रजापतिसुतहिरण्यगर्भदृष्टाः प्राजापत्यपशूनामश्वादीनां याज्यानुवाक्याः । द्वे व्याख्याते ( २३ । १ । ३ ) ॥ १० ॥ ११ ॥

## द्वादशी ।

✓ यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ १२ ॥

**उ०** वयं कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः । विभक्तिव्यत्ययः । कशब्दस्य सर्वनामत्वमार्षम् । इमे हिमवन्तः बहुवचनादन्येऽपि हिमाचलप्रभृतयः पर्वताः । प्रथमा द्वितीयार्थे । 'सुपां सुपो भवन्ति' इति वचनात् । इमान्हिमवत्प्रभृत्यद्रीन्यस्य प्रजापतेर्महित्वं महिमानमाहुर्बुधाः । महित्वेति विभक्तेराकारः । रसा नदी रसतेः शब्दकर्मण इति निरुक्ते यास्कः । रसया नद्या सह समुद्रं यस्य महित्वमाहुः । इमाः प्रदिशः पूर्वाद्याः प्रकृष्टा आशा यस्य महित्वमाहुः । यस्य बाहू भुजौ जगद्रक्षणाविति शेषः । सर्वं जगद्यस्य प्रजापतेर्विभूतिरित्यर्थः । कस्मै देवाय हविषा विधेमेति व्याख्यातम् ॥ १२ ॥

**म०** वयं कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः । विभक्तिव्यत्ययः । कशब्दस्य सर्वनामत्वमार्षम् । इमे हिमवन्तः बहुवचनादन्येऽपि हिमाचलप्रभृतयः पर्वताः । प्रथमा द्वितीयार्थे । सुपां सुपो भवन्तीति वचनात् । इमान् हिमवत्प्रभृत्यद्रीन् यस्य प्रजापतेर्महित्वं महिमानमाहुर्बुधाः । महित्वेति विभक्तेराकारः । 'रसा नदी रसतेः शब्दकर्मणः' ( निरु० ११ । २५ ) इति यास्कः । रसया नद्या सह समुद्रं यस्य महित्वमाहुः । इमाः प्रदिशः पूर्वाद्याः प्रकृष्टा आशा यस्य महित्वमाहुः । यस्य बाहू भुजौ जगद्रक्षणाविति शेषः । सर्वं जगद्यस्य प्रजापतेर्विभूतिरित्यर्थः ॥ १२ ॥

## त्रयोदशी ।

✓ य आत्मदा बलदा यस्य विश्व उपासते प्र-

शिषं यस्य देवाः। यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ १३ ॥

**उ०** आत्मानं ददाति आत्मदाः उपासकानां सायुज्यप्रदः। बलं सामर्थ्यं ददाति बलदाः। मुक्तिमुक्तिप्रद इत्यर्थः। विश्वे सर्वे मनुष्याः यस्य प्रशिषं शासनमुपासते। देवाश्च यस्य प्रशिषमुपासते। तदुक्तम् 'यस्य ज्ञेयावधि ज्ञानं शिक्षावधि च शासनम्। कार्यावधि च कर्तृत्वं स स्वयंभूः पुनातु वः' इति। किंच यस्य छाया आश्रयो ज्ञानपूर्वमुपासनम् अमृतं मुक्तिहेतुः यस्य अज्ञानमिति शेषः। मृत्युः संसारहेतुः। तदुक्तम् 'ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' इति श्वेताश्वतरोपनिषत् ॥ १३ ॥

**म०** कस्मै देवाय हविषा विधेमेति व्याख्यातम्। आत्मानं ददाति आत्मदाः उपासकानां सायुज्यप्रदः। बलं सामर्थ्यं ददाति बलदाः। मुक्तिमुक्तिप्रद इत्यर्थः। विश्वे सर्वे मनुष्याः यस्य प्रशिषं शासनमुपासते देवाश्च यस्य प्रशिषमुपासते। तदुक्तम् 'यस्य ज्ञेयावधि ज्ञानं शिक्षावधि च शासनम्। कार्यावधि च कर्तृत्वं स स्वयंभूः पुनातु वः' इति। किंच यस्य छाया आश्रयो ज्ञानपूर्वमुपासनम् अमृतं मुक्तिहेतुः यस्य। अज्ञानमिति शेषः। मृत्युः संसारहेतुः। तदुक्तम् 'यए तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' ( श्वेता० ३।१० ) इति ॥ १३ ॥

## चतुर्दशी।

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ १४ ॥

**उ०** आ नो भद्राः। वैश्वदेवानां पशूनां याज्यानुवाक्या दश। पञ्चाद्याः सप्तमी च जगत्यः त्रिष्टुभोऽन्याः। आयन्तु आगच्छन्तु नः अस्माकम्। भद्राः भन्दनीयाः स्तुत्याः। क्रतवः यज्ञाः संकल्पा वा। विश्वतः सर्वतः अदब्धासः अनुपहिंसिताः अपरीतासः अपरिज्ञाताः केनचित्। उद्भिदः उद्भेत्तारोऽन्येषां यज्ञक्रतूनां कल्पानां वा। किंच देवाः नः अस्माकम् सदं सदा। इच्छब्द एवार्थे। सदाकाल एव। वृधे वर्धनाय। असन् स्युः भूयासुः। कथंभूताः। अप्रायुवः अप्रमाद्यन्तः रक्षितारश्च। दिवेदिवे अहन्यहनि तथा भूयादिति वाक्यशेषः ॥ १४ ॥

**म०** वैश्वदेवपशुवपापुरोडाशपशूनां याज्यानुवाक्या दश ऋचो विश्वदेवदेवत्या गोतमदृष्टाः। तत्रादौ पञ्च जगत्यः। क्रतवो यज्ञाः संकल्पा वा नोऽस्मान् प्रति आयन्तु आगच्छन्तु। यज्ञकर्तारो वयं भवेमेत्यर्थः। कीदृशाः क्रतवः। भद्राः भन्दनीयाः 'भदि कल्याणे' कल्याणकारिणः। तथा विश्वतः अदब्धासः सर्वतोऽनुपहिंसिताः। निर्विघ्ना इत्यर्थः। अपरीतासः न परीता अपरीताः अपरिगता अज्ञाताः। केनचित्फलानुमेया इत्यर्थः। उद्भिदः उद्भिन्दन्ति प्रकटयन्ति उद्भिदः उद्भेत्तारः। यज्ञान्तराणां प्रकटीकर्तार इत्यर्थः। किंच यथा येन प्रकारेण देवा नोऽस्माकं सदमित् सदैव वृधे वृद्ध्यै असन् भवन्ति। तथा क्रतवः आयन्त्वित्यर्थः। सदमिदित्यव्ययं सदार्थे। कीदृशा देवाः। अप्रायुवः प्रकर्षेणायुवन्ति प्रमाद्यन्ति ते प्रायुवः। यौतेः क्विप् तुगभाव आर्षः। न प्रायुवः अप्रायुवः अनलसा अस्माकं वृद्ध्यै भवन्त्वित्यर्थः। तथा दिवे-दिवे अहन्यहनि प्रत्यहं रक्षितारः पालकाः ॥ १४ ॥

## पञ्चदशी।

देवानां भद्रा सुमतिर्ऋजूयतां देवानाँ रातिरभि नो निवर्तताम्। देवानाँ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ १५ ॥

**उ०** देवानां भद्रा। देवानां भद्रा भन्दनीया सुमतिः कल्याणी मतिः। अभिनो निवर्ततामित्यनुषङ्गः। अस्मान्प्रत्यभिमुखीभवतु। कथंभूतानां देवानाम्। ऋजूयतां ऋजुगामिनाम्। यद्वा ऋजुकामिनाम्। ऋजुं प्रगुणम् यजमानं कर्तुं ये कामयन्ते ते तथोक्ताः। किंच। देवानां रातिः दानम् अभि नः अस्मान्प्रति निवर्तताम्। ततो लब्धदानाः सन्तः। देवानां सख्यं सखिभावम्। यजमानाः सन्तः उपसेदिम प्राप्नुयाम वयम्। ततो देवाः नः अस्माकं भक्तानामायुः प्रतिरन्तु प्रवर्धयन्तु। किमर्थम्। जीवसे चिरं जीवनाय ॥ १५ ॥

**म०** भद्रा कल्याणकारिणी देवानां सुमतिः शोभना बुद्धिः नोऽस्मान् प्रति अभिनिवर्ततामस्मदभिमुखीभवतु। कीदृशानां देवानाम्। ऋजूयताम् ऋजु अवक्रं यन्ति गच्छन्ति ऋजुयन्तस्तेषाम्। इणः शतृप्रत्ययः। अवक्रगामिनाम्। यद्वा ऋजुमवक्रं साधुं यजमानं कामयन्ते ते ऋजूयन्ति 'सुप आत्मनः क्यच्' ऋजूयन्ति ते ऋजूयन्तस्तेषाम्। क्यजन्ताच्छतृ। साधुं यजमानं कामयमानानामित्यर्थः। किंच देवानां रातिः दानं नोऽस्मानभिनिवर्तताम्। देवा अस्मभ्यं ददत्वित्यर्थः। देवेभ्यो लब्धदाना वयं देवानां सख्यं मैत्रीमुपसेदिम प्राप्नुयाम। सदेर्लिटि उत्तमबहुत्वे रूपम्। संहितायां दीर्घः। देवा नोऽस्माकं सखीनामायुः जीवसे जीवितुं प्रतिरन्तु प्रवर्धयन्तु ॥ १५ ॥

## षोडशी।

तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम्। अर्यमणं वरुणँ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ १६ ॥

**उ०** तान् पूर्वया। तान्देवान् पूर्वया अकृत्रिमया स्वयं-

भुवा । निविदा । निविच्छब्दो वाग्वचनः । हूमहे आह्वयामो वयम् । तान् कानित्यत आह । भगं मित्रम् अदितिम् दक्षम् अस्रिधम् अच्युतसद्भवाम् दक्षस्यैतद्विशेषणम् । अर्यमणम् वरुणम् सोमम् अश्विनौ च । यैः सहिता सरस्वती सुभगा नः अस्माकम् मयः सुखं करत् करोत्विति ॥ १६ ॥

म० पूर्वया प्राचीनया अकृत्रिमया स्वयंभुवा निविदा वाचा वेदरूपया वयं तान्प्रसिद्धान्देवान् हूमहे आह्वयामः । निविच्छब्दो वाग्वाचकः । तान् कान् तत्राह । भगं मित्रमदितिं देवमातरम् दक्षं प्रजापतिम् अर्यमणं वरुणं सोममश्विना अश्विनौ । अस्रिधमिति भगादीनां विशेषणम् । न स्रेधते च्योतते सोऽस्रित् तमच्युतसद्भावम् । किंच शोभनं भगं भाग्यं यस्याः सा सुभगा भजनीया सरस्वती भगादिसहिता नोऽस्माकं मयः करत् सुखं करोतु ॥ १६ ॥

## सप्तदशी ।

तन्नो॒ वातो॑ मयो॒भु वा॑तु भेष॒जं तन्मा॒ता पृ॑थि॒वी तत्पि॒ता द्यौः । तद्ग्रावा॑णः सोम॒सुतो॑ मयो॒भुव॒स्तद॑श्विना शृणुतं धिष्ण्या युवम् ॥ १७ ॥

उ० तन्नः । तत् भेषजं मयोभु सुखस्य भावयितृ नः अस्माकम् वातः वातु अनुगृह्णातु । तच्च भेषजं माता पृथिवी अनुगृह्णातु । तच्च पिता द्यौः अनुगृह्णातु । तच्च ग्रावाणः सोमसुतः सोमाभिषवकारिणः मयोभुवः सुखस्य भावयितारः अनुगृह्णन्तु । तच्च हे अश्विनौ, धिष्ण्या धारयितारौ युवं युवामपि शृणुतम् । श्रुत्वा च अनुगृह्णीतम् ॥ १७ ॥

म० वातः पवनः नोऽस्माकं भेषजमौषधं हितं यथा तथा वातु 'वा गतिगन्धनयोः' लोट् प्रवातु । अनुगृह्णात्वित्यर्थः । ददात्विति यावत् । कीदृशं हितम् । मयोभु मयः सुखं भवति यस्मात् तन्मयोभु सुखोत्पादकं हितं ददातु । माता जगन्निर्मात्री पृथिवी तत् हितं वातु । पिता पालको द्यौः स्वर्गः तत् हितं वातु । सोमं सुन्वन्ति सोमसुतः सोमाभिषवकारिणो ग्रावाणः दृषदः तत् भेषजं वान्तु ददतु । कीदृशा ग्रावाणः । मयोभुवः मयः सुखं भावयन्ति ते मयोभुवः सुखस्य दातारः । हे अश्विना अश्विनौ, युवं युवां तत् वातादिभ्यो भेषजप्रार्थनं शृणुतं युवामपि हितं दत्तमित्यर्थः । कीदृशौ युवाम् । धिष्ण्या धिष्ण्यौ गृहवद्धारयितारौ ॥ १७ ॥

## अष्टादशी ।

तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियंजि॒न्वमव॑से हूमहे व॒यम् । पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ॥ १८ ॥

उ० तमीशानम् । तम् ईशानं रुद्रम् । कथंभूतम् । जगतः जंगमस्य तस्थुषः स्थावरस्य पतिमिव पतिम् । धियंजिन्वम् धिया बुद्ध्या संकल्पमात्रेण जिन्वति प्रीणाति इति धियंजिन्वम् । यद्वा धिया कर्मणा जिन्वति प्रीणातीति धियंजिन्वम् अवसे अवनाय तर्पणाय । हूमहे आह्वयामः वयम् । किंच पूषा नः अस्माकम् वेदसां धनानाम् असत् भूयात् वृधे वर्धनाय । रक्षिता च वायुः पाता च अदब्धः अनुपहिंसितश्चान्येन केनचित् स्वस्तये अविनाशाय । तथा हूमहे वयमित्यनुषङ्गः ॥ १८ ॥

म० वयं तं प्रसिद्धमीशानं रुद्रं हूमहे आह्वयामः । कीदृशं तम् । जगतः जंगमस्य तस्थुषः स्थावरस्य च भूतजातस्य पतिं पालकम् । धियंजिन्वं धियं बुद्धिं जिन्वति प्रीणातीति धियंजिन्वस्तम् अलुक् बुद्धिसन्तोषकारकम् । जिन्वतिः प्रीणनार्थः । किमर्थं हूमहे । अवसे अवितुं तर्पयितुं । तुमर्थे असेप्रत्ययः । यथा येन प्रकारेण पूषा नोऽस्माकं वृधे वृद्ध्यै स्वस्तये कल्याणाय च असत् भवतु तथा हूमहे इत्यर्थः । कीदृशः पूषा । वेदसां धनानां ज्ञानानां वा रक्षिता रक्षकः । पायुः पालकः पुत्रादीनाम् । अदब्धः अनुपहिंसितः ॥ १८ ॥

## एकोनविंशी ।

स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः । स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥ १९ ॥

उ० स्वस्ति नः स्वस्ति स्वस्त्ययनम् नः अस्माकम् इन्द्रः दधातु स्थापयतु । कथंभूतः । वृद्धश्रवाः प्रभूतधनः । महाशब्दो महाकीर्तिर्वा स्वस्ति नोऽस्माकं पूषा ददातु । कथंभूतः । विश्ववेदाः सर्वज्ञो वा । स्वस्ति नः तार्क्ष्यो दधातु । कथंभूतः । अरिष्टनेमिः अनुपहिंसितासुः । स्वस्ति नः अस्माकं बृहस्पतिश्च दधातु ॥ १९ ॥

म० विराट्स्थाना । आद्यौ पादौ नववर्णौ तृतीयो दशकः तुर्यो व्यूहेनैकादशकः 'नवकौ वैराजस्त्रैष्टुभश्च' इति वचनात् । इन्द्रः नोऽस्मभ्यं स्वस्ति अविनाशं शुभं दधातु ददातु । कीदृशः । वृद्धश्रवाः वृद्धं महत् श्रवः कीर्तिर्यस्य सः । पूषा नः स्वस्ति ददातु । कीदृशः । विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य विश्वं वेत्तीति वा विश्ववेदाः । तार्क्ष्यो रथो गरुडो वा नः स्वस्ति दधातु । कीदृशः । अरिष्टनेमिः अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा पक्षो वा यस्य सः । बृहस्पतिः देवगुरुर्नोऽस्मभ्यं स्वस्ति ददातु ॥ १९ ॥

## विंशी ।

पृष॑दश्वा म॒रुतः॒ पृश्नि॑मातरः शुभं॒यावा॑नो वि॒दथे॑षु॒ जग्म॑यः । अ॒ग्नि॒जि॒ह्वा मन॑वः॒ सूर॑चक्षसो॒ विश्वे॑ नो दे॒वा अव॒सा ग॑मन्नि॒ह ॥ २० ॥

उ० पृषदश्वा मरुतः । पृषन्तः शबला अश्वा येषां ते पृषदश्वाः । पृश्निमातरः । पृश्निः द्यौर्माता येषां त एवमुच्यन्ते । शुभंयावानः शुभं कर्तुं जनान्प्रति ये यान्ति ते

शुभंयावानः। 'आतो मनिन्क्वनिप्वनिपश्च' इति वनिप्। विदथेषु यज्ञेषु जग्मयः गमनशीलाः। 'आदृगमहन–' इति किः। य इत्थंभूता मरुतस्ते अवसा अन्नेन हविर्लक्षणेन आहूताः सन्तः आगमन् आगच्छन्तु इहेत्यनुषङ्गः। ये च अग्निजिह्वा अग्निमुखाहुतादा इत्यर्थः। मनवः चतुर्दश ते च अवसा गमन्निह। ये च सूरचक्षसः आदित्यदर्शनाः विश्वदेवाः ते च नः अस्माकम् अवसागमन्निह यज्ञे ॥ २० ॥

**म०** जगती। मरुतो देवाः अवसान्नेन हविर्लक्षणेन हेतुना इह यज्ञे आगमन्नागच्छन्तु। कीदृशा मरुतः। पृषदश्वा पृषत्यः पृषतीसंज्ञा अश्वा अडवा वाहनं येषां ते पृषदश्वाः। पुंवद्भावः 'पृषत्यो मरुताम्' इति निघंटुवचनात्। यद्वा पृषन्तः शबलाः अश्वाः येषां ते। पृश्निर्यौर्गौर्दितिर्वा माता जननी येषां ते पृश्निमातरः। शुभं कल्याणं यान्ति प्राप्नुवन्ति प्रापयन्ति वा शुभंयावानः 'आतो मनिन्' ( पा० ३। २। ७४ ) इति वनिप्प्रत्ययः। विदथेषु यज्ञगृहेषु जग्मयः गमनशीलाः 'आदृगमहन–' ( पा० ३। २। १७१ ) इति किः। अग्निजिह्वाः अग्निर्जिह्वा भोजनसाधनं येषां ते 'अग्निमुखा वै देवाः' इति श्रुतेः। हुताद इत्यर्थः। मन्यन्ते जानन्ति मनवः सर्वज्ञाः। सूरः सूर्यश्चक्षुः चक्षुः येषां ते सूर्ये चक्षते पश्यन्ति वा सूरचक्षसः। किंच न केवलं मरुतः विश्वे सर्वे देवाः च नोऽस्माकं यज्ञे आगमन्नागच्छन्तु ॥ २० ॥

## एकविंशी।

भ॒द्रं कर्णे॑भिः शृणुयाम देवा भ॒द्रं प॑श्येमा॒क्षभि॑र्यजत्राः। स्थि॒रैरङ्गै॑स्तुष्टु॒वाᳬंस॑स्त॒नूभि॒र्व्य॑शेमहि दे॒वहि॑तं॒ यदायुः॑ ॥ २१ ॥

**उ०** भद्रं कर्णेभिः। भद्रमनुकूलं कर्णेभिः कर्णाभ्यां शृणुयाम हे देवाः। भद्रं पश्येम अक्षभिः अक्षिभ्यां। हे यजत्राः यजनीयाः। किंच। स्थिरैरङ्गैः अशिथिलैः अङ्गैः। तुष्टुवांसः देवान्स्तुतवन्तः। तनूभिः भार्यापुत्रपौत्रादिकाभिस्तनूभिः सहिताः व्यशेमहि व्यश्नुवीमहि। देवहितं देवैर्यत्स्थापितं मनुष्याणामायुः तद्व्यश्नुवीमहि ॥ २१ ॥

**म०** तिस्रस्त्रिष्टुभः। हे देवाः, कर्णेभिः कर्णैः भद्रं कल्याणमनुकूलं वयं शृणुयाम। हे यजत्राः, यजन्तं त्रायन्ते रक्षन्ति यजत्राः यजमानपालकाः अक्षभिः नेत्रैः भद्रं वयं पश्येम 'बहुलं छन्दसि' ( पा० ७। १। ७६ ) इति हलादौ अक्षिशब्दस्यानङादेशः। किंच देवहितं देवैः स्थापितं देवानां हितं देवोपासनयोग्यं वा यदायुः जीवनं तद्वयं व्यशेमहि व्यश्नुवीमहि प्राप्नुयाम। कीदृशा वयम्। स्थिरैः दृढैरङ्गैः अवयवैः करचरणादिभिः तनूभिः शरीरैश्च पुत्रादिभिर्वा युताः तुष्टुवांसः भवतः स्तुवन्तः सन्तः ॥ २१ ॥

## द्वाविंशी।

श॒तमिन्नु श॒रदो॒ अन्ति॑ दे॒वा यत्रा॑ नश्च॒क्रा ज॒रसं॑ त॒नूना॑म्। पु॒त्रासो॒ यत्र॑ पि॒तरो॒ भव॑न्ति॒ मा नो॑ म॒ध्या री॑रिषता॒युर्गन्तोः॑ ॥ २२ ॥

**उ०** शतमित्। शतमपि शरदः अन्ति अन्तिके समीपे भवथ हे देवाः। आकल्पकालमित्यभिप्रायः। ऋषिभिरुदितमेतत्। यत्र यस्मिन् शरदांशते नः अस्माकं यूयं चक्र कृतवन्तः। जरसं जरां तनूनां जरानिमित्तां शक्तिमित्यभिप्रायः। किंच। पुत्रासो यत्र पितरो भवन्ति पुत्रा अग्नयः यत्र शरदां शते। यजमानस्य पितरो जनितारो भवन्ति। तदुक्तम् 'तत्र वै प्रजापतिः प्रजाः ससृज' इत्युपक्रम्य 'तस्माज्जनयित्वा बिभृहीति'। यत्र पितरो भवन्ति। एतदप्युक्तमेव। 'स यत्र म्रियते यत्रैनमग्नावभ्यादधाति तदेषोऽग्नेरधिजायते स एष पुत्रः सन्पिता भवति अथवा पुत्रा एव पितॄणामौर्ध्वदेहिकं कुर्वाणाः पितरो यत्र संपद्यन्ते तदपि शरदांशतमन्तिक एव इति। यत एवमतो ब्रूमः। मा नो मध्यारीरिषतायुर्गन्तोः मारीरिषत् माहिंसीष्ट नोऽस्माकं मध्या मध्ये अकाल एव आयुः गन्तोः गन्तृ गमनशीलम्। उक्तंच 'संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य। वर्षासु सिक्ताइव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति' इति ॥ २२ ॥

**म०** हे देवाः, शतमित् शतमपि शरदो वर्षाणि शतवर्षपर्यन्तं यूयमन्ति अन्तिके समीपे भवतेति शेषः। यत्र शरच्छते नोऽस्माकं तनूनां शरीराणां यूयं जरसं जरां चक्र कुरुथ। करोतेर्लिटि मध्यमबहुवचनम्। 'द्व्यचोऽतस्तिङः' ( पा० ६। ३। १३५ ) इति चक्रेत्यत्र संहितायां दीर्घः 'निपातस्य च' ( पा० ६। ३। १३६ ) इति यत्रेत्यत्र दीर्घः। वार्धकावधि यूयं समीपे भवतेत्यर्थः। यत्रास्माकं जरायां पुत्रासोऽस्मत्पुत्राः पितरो भवन्ति पुत्रवन्तो भवन्ति। यावदस्माकं पौत्रा भवन्तीत्यर्थः। तावत् मध्या मध्ये नोऽस्माकमायुर्मा रीरिषत मा हिंसिष्ट। रिषतेर्हिंसार्थस्य णिजन्तस्य चङि रूपम्। कीदृशमायुः। गन्तोः गन्तृ गमनशीलम्। तदुक्तम् 'संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य। वर्षासु सिक्ता इव चर्मदण्डाः सर्वे प्रयत्नाः शिथिलीभवन्ति' इति ॥ २२ ॥

## त्रयोविंशी।

अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः। विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ २३ ॥

**उ०** सर्वात्मकत्वेनादितिं मन्त्रदृक्स्तौति। अदितिश्च द्यौः अदितिश्च अन्तरिक्षम् अदितिश्च माता स च पिता स च पुत्रः स इति छान्दसो लिङ्गव्यत्ययः। विश्वे च देवाः पञ्चजनाः मनुष्याश्च अदितिः। किं बहुनोक्तेन अदितिरेव जातं भूतम्। अदितिरे-

जनित्वं जनिष्यमाणम् । अथवा नैवादितिरनेनोच्यते किंपुनः एतान्येव द्यौःप्रभृतीनि अदानानि महाभाग्ययुक्तानीति ॥२३॥

म० मन्त्रदृक् सर्वात्मकत्वेनादितिं स्तौति । द्यौः स्वर्गोऽदितिः तदधिष्ठातृत्वात् । एवमग्रेऽपि अन्तरिक्षमदितिः माता पुत्रश्च सः सादितिरेव लिङ्गव्यत्ययः । विश्वे सर्वे देवाः अदितिः। पञ्चजनाः मनुष्या अप्यदितिः । किं बहुना जातमुत्पन्नं प्राणिजातं जनित्वं जनिष्यमाणं च सर्वमदितिरेव । यद्वाऽदितिर्मन्त्रेण नोच्यते द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितिः अदितीनि अदीनानि महाभाग्ययुक्तानि सन्तु ॥ २३ ॥

## चतुर्विंशी ।

मा नो॑ मि॒त्रो वरु॑णो अ॒र्य॒मा॒युरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ख्यन् । यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्र॒वक्ष्यामो॑ वि॒दथे॑ वी॒र्या॒णि ॥ २४ ॥

उ० मा नः । अश्वस्तोमीयं जुहोति । द्वाविंशत्यृग्भिस्त्रिष्टुब्भिः । तृतीयाषष्ठ्यौ जगत्यौ । दीर्घतमा ऋषिः अश्वस्य स्तूयमानत्वात् । या तेनोच्यते सा देवतेति न्यायेन अश्वो देवता । तृतीयः पादः प्रथमं व्याख्यायते यच्छब्दयोगात् । यत् वाजिनः अश्वस्य । देवजातस्य देवैर्जनितस्य 'सूरादश्वं वसवो निरतष्ट' इत्येतदभिप्रायम् । सप्तेः सरणस्य प्रवक्ष्यामः उच्चारयामः । विदथे यज्ञे वीर्याणि चरित्राणि तत् मापरिख्यान् मा गर्हन्तु नः अस्माकं देवाः स्तुत्याः। नत्वश्वप्रभृतयस्तिर्यञ्च इति स्याद्गर्हा । अतो ब्रवीमि मापरिख्यन्निति । यद्यपि गर्होचिता तथापि अश्वादिरूपेण देवानामेव स्तुतत्वादित्याशयः । के ते देवाः । मित्रः वरुणः अर्यमा आयुर्वायुः वकारलोपेन । इन्द्रश्च ऋभुक्षा मरुतश्च ॥ २४ ॥

म० 'मा नो मित्र इति च प्रत्यृचमनुवाकाभ्याम्' ( का० २० । ८ । ७ ) । मा न इत्यादिषोडशकण्डिकात्मकेनानुवाकद्वयेन पूर्ववच्चतुर्गृहीतमाज्यं गृहीत्वा जुहोति । मा नो यदश्वस्याष्टकावित्युक्तेः 'षोडशाश्वस्तोमीया जुहोति' इति श्रुतेश्च । द्वाविंशतिर्ऋचोऽश्वस्तुतिपरत्वादश्वदेवत्यास्त्रिष्टुभो दीर्घतमोदृष्टाः अत्र एष छाग ( २६ ) इति तृतीया यूपव्रस्का ( २९ ) इति षष्ठी, एते द्वे जगत्यौ । ततः षोडशभिर्होमः षड्भिः स्तुतिः सर्वाभिर्वा होमः 'अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति' इति श्रुतेः । अथ मन्त्रार्थः । विदथे यज्ञे वाजिनोऽश्वस्य वीर्याणि चरित्राणि यत् वयं प्रवक्ष्यामः उच्चारयिष्यामः तत्र मित्रादयो देवा नोऽस्मान्मा परिख्यन् मा निन्दन्तु । परिख्यानं निन्दा 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( पा० ३ । १ । ५२ ) च्लेरङ् 'न माङ्योगे' ( पा० ६ । ४ । ७४ ) इत्यडभावः । अस्माभिर्देवाः स्तुता न त्वश्वादयस्तिर्यञ्च इति यद्यपि निन्दोचिता तथाप्यश्वरूपेण देवानामेव स्तुतिः क्रियते । कीदृशस्य वाजिनः । देवजातस्य देवात्सूर्याज्जातस्योत्पन्नस्य देवैर्जनितस्य वा 'सूरादश्वं वसवो निरतष्ट' ( २९ । १३ ) इत्युक्तेः । सप्तेः 'सप संबन्धे' सपति देवैः सह युज्यत इति सप्तिस्तस्य । के मा निन्दन्तु तानाह । मित्रः अहरभिमानी देवः । वरुणः राज्यभिमानी देवः । अर्यमा आदित्यः । आयुः एति सततं गच्छतीति आयुर्वायुः । इन्द्रः देवराजः । ऋभुक्षाः ऋभवो देवाः क्षियन्ति निवसन्ति यस्मिन् स ऋभुक्षाः देवाधारः प्रजापतिः । यद्वा इयर्ति व्याप्नोति सर्वमिति ऋभुक्षाः अर्तेर्भुक्षिन्प्रत्ययः 'पथिमथ्यृभुक्षामात्' ( पा० ७ । १ । ८५ ) इति सावाकारः । इन्द्रविशेषणं वा ॥ २४ ॥

## पञ्चविंशी ।

यन्नि॒र्णिजा॒ रेक्ण॑सा॒ प्रावृ॑तस्य रा॒तिं गृ॑भी॒तां मु॑ख॒तो नय॑न्ति । सुप्रा॑ङ्जो मेम्य॑द्वि॒श्वरू॑प इन्द्राप॒ूष्णोः प्रि॒यमप्ये॑ति॒ पाथः॑ ॥ २५ ॥

उ० यन्निर्णिजा । यदा निर्णिजा निर्णेजनेनोदकस्नानेन संस्कृतस्य आलम्भनकाले यत्स्नापनमश्वस्य तदेतदुक्तम् । तथा रेक्णसा । रेक्ण इति धननाम । धनेन मणिकाख्येन प्रावृतस्य केसरपुच्छेषूपचितस्य अश्वस्य । सुवर्णान्मणीन्केसरपुच्छेषु पत्न्य आवपन्ति तदभिप्रायमेतत् । रातिं दानम् आज्यसक्तुधानालाजालक्षणं गृभीतां गृहीतां मुखतो नयन्ति । अश्वाय रात्रिहुतशेषं प्रयच्छन्तीत्येतदभिप्रायम् । तत् तदा अश्वस्य सुप्राङ् सुष्ठु प्रागञ्चनः अजः मेम्यत् । मेम्यदिति शब्दानुकरणम् । मेमे इति शब्दं कुर्वाणः । विश्वरूपः नानावर्णः कृष्णग्रीव आग्नेयो रराटे पुरस्तादित्येतदभिप्रायमेतत् । किंच इन्द्रापूष्णोः इन्द्रस्य पूष्णश्च प्रियं पाथः अन्नं पशुलक्षणम् । अप्येति अभ्यागच्छति । यदिह पठ्यते सौमापौष्णः श्यामो नाभ्याम् तदेवान्यस्यां श्रुतौ पठ्यते इन्द्रापौष्णः श्यामो नाभ्यामिति । तदयं मन्त्रोऽभिवदति इन्द्रापूष्णोः प्रियमप्येति पाथ इति ॥ २५ ॥

म० यत् यदा विप्रा अश्वस्य मुखतो मुखाग्रे गृभीतां गृहीतां रातिं दानमाज्यसक्तुधानालक्षणं नयन्ति प्रापयन्ति 'अश्वाय रात्रिहुतशेषं प्रयच्छति' इत्युक्तेः । तदा अजः छागः अप्येति भक्षणायागच्छति । कीदृशोऽजः । सुप्राङ् सुष्ठु प्राञ्चति पूर्वं गच्छति सुप्राङ् । ललाटे बद्ध इत्यर्थः । 'कृष्णग्रीव आग्नेयो ललाटे पुरस्तात्' ( २४ । १ ) इत्युक्तेः । तथा मेम्यत् शब्दानुकरणम् । मे मे इति शब्दं कुर्वन् । विश्वरूपः विश्वानि रूपाणि यस्य । नानावर्ण इत्यर्थः । किंच इन्द्रापूष्णोः इन्द्रश्च पूषा च इन्द्रपूषणौ तयोः 'देवताद्वन्द्वे च' ( पा० ६ । ३ । २६ ) इतीन्द्रपदस्य दीर्घः । इन्द्रस्य पूष्णश्च प्रियमिष्टं पाथोऽन्नं पशुलक्षणं तदप्येति भक्षाय नाभिबद्धोऽप्यागच्छति 'सौमापौष्णः श्यामो नाभ्याम्' ( २४ । १ ) इत्युक्तेः । हुतशेषमन्नं यद्यश्वाय दीयते तदा ललाटनाभिबद्धावजौ भक्षायागच्छत

इत्यर्थः। कीदृशस्याश्वस्य। निर्णिजा निर्णेजनेन स्नानेन प्रावृतस्य संस्कृतस्य। आलम्भनकाले स्नापितस्य निर्णेजनं निर्णिक् तया। निजतेः संपदादित्वाद्भावे क्विप्। तथा रेक्णसा प्रावृतस्य आच्छादितस्य। रेक्ण इति धननाम। धनेन सौवर्णमणिलक्षणेन प्रावृतस्य अश्वस्य सौवर्णान्मणीन् केसरपुच्छेषु पत्न्य आवपन्तीत्युक्तेः॥ २५॥

## षड्विंशी।

एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः। अभिप्रियं यत्पुरोडाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति॥ २६॥

उ० एष छागः। एष आग्नेयश्छागः पुरः अग्रतोऽग्रेस्थितः नीयते अश्वेन वाजिना व्यापकेन सहितः। पूष्णश्च पोषकस्याग्नेश्च भागो भजनीयः नीयते अश्वैः सह। सोपि पर्यग्य एव। विश्वेदेव्यः विश्वेभ्यः सर्वेभ्यो देवेभ्यः हितः अग्नेः सर्वदेवात्मकत्वात्सर्वदेवप्रियत्वम्। कस्मात् अभिप्रियम् अभिप्रेतं यत् यच्च पुरोडाशं पुरोडाशं कर्तुम् अर्वता अश्वेन सहितम्। अश्वस्तस्मिन्काले संज्ञप्यते पशुपुरोडाशः क्रियते तदेतदुक्तम्। त्वष्टा च एनमजम् तदा सौश्रवसाय शोभनान्तःकरणाय जिन्वति प्रीणाति। स हि तस्याधिकार इति॥ २६॥

म० यत् यदा एषः छागोऽजः वाजिना वेगवताश्वेन पुरः पुरस्तात् नीयते प्राप्यते ललाटबद्धत्वात्। कीदृशः छागः। पूष्णो भागः पुष्णाति देवानिति पूषाग्निस्तस्य भागः भजनीयः 'आग्नेयो रराटे' (२४।१) इत्युक्तत्वात्। तथा विश्वदेव्यः विश्वेभ्यो देवेभ्यो हितः सर्वदेवार्हः अग्नेः सर्वदेवात्मकत्वात्। तदा त्वष्टा इत् त्वष्टैव प्रजापतिरेव अर्वता अश्वेन सह एनं छागं जिन्वति प्रीणाति। किमर्थम्। सौश्रवसाय शोभनं श्रवः कीर्तिर्यस्य सः सुश्रवास्तस्य भावः सौश्रवसं तस्मै सुकीर्तये यज्ञे मृतानां स्वर्गाप्तेरुक्तत्वात्। किंभूतमेनम्। अभिप्रियं अभिप्रीणातीति तम् समन्ताद्देवानां प्रीणयितारम्। पुरोडाशं पुरोडाश्यन्ते ददति एनं स पुरोडाशः तम् पुरस्ताद्दातव्यम्॥ २६॥

## सप्तविंशी।

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति। अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः॥ २७॥

उ० यद्धविष्यम् यदा हविष्यम् ऋतुशः ऋतावृतौ खचारिणं देवयानम् देवानां प्रापणीयं देवयानमार्गगामिनं वा आदित्यवदनिवारितगतिं वा। त्रिःसंस्कृतम् स्नापनव्यञ्जनसुवर्णमणिकप्रवारैः। मानुषः ऋत्विग्यजमानाः परिणयन्ति अश्वम्। अत्र तत्रेत्यर्थः। तस्मिन् काले पूष्णः पोषकस्याग्नेः प्रथमो भागोऽजाख्यः एति यज्ञम् देवेभ्यः प्रतिवेदयन् अजः स्वकीयेन शब्देन। चरकश्रुतौ पूष्णो ललाट इति पठ्यते तदभिप्रायमेतत्॥ २७॥

म० मानुषा मनुष्या ऋत्विजो यत् यदा अश्वं त्रिः परिणयन्ति वारत्रयं पर्यग्निकुर्वन्ति। कीदृशमश्वम्। हविष्यं हविषे हितं हविर्योग्यम्। ऋतुशः ऋतौ ऋतौ यज्ञकाले देवयानं देवानां प्रापणीयं देवेषु यानं गमनं यस्य तम्, देवयानमार्गगामिनं वा। यद्वा देववदादित्यवद्यानं गतिर्यस्य। अनिवारितगतिमित्यर्थः। अत्रास्मिन्समये पर्यग्निकरणकाले पूष्णः पोषकस्य वृद्धस्य वाग्नेर्भागोऽजः प्रथमः पुरोगामी सन् एति गच्छति। किं कुर्वन्। देवेभ्यः यज्ञं प्रतिवेदयन्प्रख्यापयन् स्वशब्देन ज्ञापयन्। 'पूष वृद्धौ' पूषति वर्धते पूषाग्निः॥ २७॥

## अष्टाविंशी।

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः। तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आपृणध्वम्॥ २८॥

उ० होताध्वर्युः। होता तत्र शंसिता सुविप्र इति संबन्धः। यस्मिन्यज्ञे होता विशसिता। शस्त्राणामपि साधुमेधावी साधुब्राह्मणो वा अध्वर्युश्च यस्मिन्यज्ञे आवयाः आभिमुख्येन वयति कर्मणीत्यावयाः अग्निमिन्धः अग्निदीपकः ग्रावग्राभः ग्रावग्राहः सोमाभिषवाय ग्रावग्रहणशीलः उत अपि शंस्ता। तेन यज्ञेन साध्वलंकृतेन स्विष्टेन साधु इष्टेन च। वक्षणाः नदीः देवानां तुष्टिकराः पयोदधिपयस्यापुरोडाशमांसैः। आपृणध्वं आपूरयध्वम्। अकृपणं दातव्यमित्यभिप्रायः॥ २८॥

म० हे होत्रादय ऋत्विजः, तेन प्रसिद्धेन यज्ञेनाश्वमेधेन वक्षणाः नदीः घृतकुल्याद्याः आपृणध्वं घृतपयोदधिपयस्यापुरोडाशमांसैः पूरयत। वहन्तीति वक्षणाः। यज्ञं संपाद्य फलं साधयतेत्यर्थः। कीदृशेन यज्ञेन। स्वलंकृतेन रलयोरैक्यम्। सुष्ठु अलंकृतेन विप्रहविर्दक्षिणादिभिः शोभितेन। स्विष्टेन सुष्ठु इष्टेन। के ऋत्विजस्तानाह। होता आह्वाता देवानां तन्नामक ऋत्विक्। अध्वर्युः अध्वरमिच्छति अध्वर्यति 'सुप आत्मनः क्यच्' 'कव्यध्वरपृतनस्यर्चि लोपः' (पा० ७।४।३९) इति टिलोपः ततः 'क्याच्छन्दसि' (पा० ३।२।१७०) इत्युप्रत्ययः। आवयाः आभिमुख्येनावयजतीत्यावयाः श्वेतवाहोक्थशासेति उस्। आवयाः प्रतिप्रस्थाता 'अवे यजः' (पा० ३।२।७२) इति ण्विन् अवाप्योरिति अवस्याल्लोपः। अग्निमिन्धः अग्निमिन्द्धे दीपयति अग्निमिन्धः अग्नीत् 'भ्राष्ट्राग्न्योरिन्धे' (पा० ६।३।७०) इति मुम्। ग्रावग्राभः ग्राव्णो गृह्णाति स्तौति ग्रावग्राभः। कर्मण्यण् हस्य भः ग्रावस्तोता। उतापि शंस्ता शंसति स्तौति शंस्ता प्रशास्ता। सुविप्रः शोभनो विप्रो मेधावी सुविप्रो ब्रह्मा 'ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति'

इत्युक्तेः । अयमनुक्तलिंगुपलक्षकः । एते यज्ञेन वक्षणाः पृणन्त्वमिति संबन्धः ॥ २८ ॥

## एकोनत्रिंशी ।

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति । ये चार्वते पचनꣳ संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ २९ ॥

उ० यूपव्रस्का उत यूपं ये वृश्चन्ति त एवमुच्यन्ते । उत अपिच ये यूपवाहाः यूपं ये वहन्ति । चषालं ये अश्वयूपाय तक्षति ये जनाः अश्वबन्धनयूपाय चषालं यूपाग्रभागं तक्षति । तक्षन्तीति प्राप्ते छान्दसमेकवचनम् । साधुसंपादयन्ते । ये च अर्वते अश्वाय पचनं पच्यतेनेनेति पचनं काष्ठादि संभरन्ति । उतो अपिच तेषां जनानां संबन्धिनी अभिगूर्तिः 'गुरी उद्यमने' । आगूरणमभिगूर्तिः स्वकाले सर्वं करणीयमिति बुद्धिः इन्वतु व्याप्नोतु ॥ २९ ॥

म० तेषामृत्विजामभिगूर्तिः अभिगोरणमभिगूर्तिरुद्यमः नोऽस्मानिन्वतु प्रीणातु व्याप्नोतु वा । अस्माकं यज्ञं सम्यक् साधयत्वित्यर्थः । 'इवि व्याप्तिप्रीणनयोः' लोट् शपि 'इदितो नुम् धातोः' ( पा० ७ । १ । ५८ ) इति नुमागमः । तेषां केषाम् । ये यूपव्रस्काः यूपाय वृश्चन्ति तरुं छिन्दन्ति ते यूपव्रस्काः । उतापि च ये यूपवाहाः यूपं वहन्ति ते यूपवाहाः । कर्मण्यण् । छिन्नस्य यूपस्य वोढारः । ये च अश्वयूपाय अश्वबन्धनयूपार्थं चषालं तक्षति यूपाग्रभागे स्थाप्यं काष्ठं तक्षन्ति वचनव्यत्ययः । 'चषालो यूपकटकः' इत्यमरः । 'तक्षू तनूकरणे' साधु संपादयन्तीत्यर्थः । उतो अपिच ये नराः अर्वते अश्वाय पचनं पच्यतेऽनेनेति पचनं पाकसाधनं काष्ठभाण्डादिकं संभरन्ति संहरन्ति आनयन्ति तेषामुद्यमोऽस्मान्प्रीणात्वित्यर्थः ॥ २९ ॥

## त्रिंशी ।

उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥ ३० ॥

उ० उप प्र । उपप्रागात् उपैतु सुमत् 'सुमत्स्वयमित्यर्थे' इति यास्कः । मे मम अधायि निहितम् यत् मन्म मननम् । किं तदिति चेत् । देवानाम् आशाः शंसनानि साधुसाध्वयं पशुरागच्छेदित्येवमादीनि । उप आगतः वीतपृष्ठः साधुपोषणेन प्राप्तपश्वाद्भागः । कामितपृष्ठो वा । अश्वपृष्ठं हि सर्व एवारोढुं कामयन्ति । यत एवमतो ब्रवीमि । अन्वेनं विप्रा ऋषयो मदन्ति । अनुमदन्ति अनुमोदन्ति एनमश्वं विप्रा ऋषयश्च । स्वयं च देवानां पुष्टे पोषणाय । चकृम कृतवन्तः । सुबन्धुं शोभनबन्धनं शोभनार्थवादं वा ॥ ३० ॥

म० मन्म मननीयं फलं सुमत् स्वयमुपप्रागात् उपगच्छतु । सुमदित्यव्ययं स्वयमित्यर्थे।'सुमत् स्वयमित्यर्थे' ( निरु० ६ । २२ ) इति यास्कोक्तेः । तन्मन्म फलं मे मया अधायि धृतमित्यर्थः । किंच अयं वीतं पुष्टं पृष्ठं यस्य । यद्वा वीतं कामितं पृष्ठं यस्य अश्वपृष्ठमारोहणाय सर्वे कामयन्ते स वीतपृष्ठोऽश्वो देवानामाशाः मनोरथान् पूरयितुमिति शेषः । उप गच्छतु उपसर्गेण क्रियावृत्तिः । किंच देवानां पुष्टे पोषणं पुष्टम् भावे निष्ठा । निमित्ते सप्तमी । देवपुष्टिनिमित्तं यमश्वं वयं सुबन्धुं चकृम कृतवन्तः । संहितायां दीर्घः । शोभनो बन्धुर्बन्धनं यस्य तम् यमश्वं बद्धवन्तः । एनमश्वं विप्रा मेधाविनः ऋषयो मन्त्रदर्शिन ऋत्विजोऽनुमदन्ति अनुमोदन्तां तुष्यन्तु ॥ ३० ॥

## एकत्रिंशी ।

यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ॥ ३१ ॥

उ० यद्वाजिनः वेजनवतः दाम ग्रीवाबन्धनरज्जुः संदानं सम्यगवच्छेदकं पादबन्धनम् अर्वतः अश्वस्य । याच शीर्षण्या शिरसि बद्धा नियोजनीया रज्जुः अस्याश्वस्य । यद्वा घः पादपूरणे । अस्याश्वस्य प्रभृतं प्रहृतं निक्षिप्तम् आस्ये मुखे तृणम् सर्वाणि तानि ते तव हे यजमान । अपि देवेषु अपि प्रजापतये अस्तु । सन्त्विति प्राप्ते वचनव्यत्ययः ॥ ३१ ॥

म० वाजिनो वेगवतोऽर्वतोऽश्वस्य यत् दाम ग्रीवाबद्धा रज्जुः यच्च संदानं पादबन्धनरज्जुः । या च शीर्षण्या शीर्षे भवा शीर्षण्या शिरोबद्धास्याश्वस्य रज्जुः । शिरःशब्दात् 'भवे छन्दसि' ( पा० ४ । ४ । ११० ) इति यत् । 'ये च तद्धिते' ( पा० ६ । १ । ६१ ) इति शीर्षन्नादेशः । तित् स्वरितम् । कटिस्था रशना रज्जुः अस्यान्यापि या रज्जुः । वाथवा अस्याश्वस्य घ प्रसिद्धम् आस्ये मुखे प्रभृतं प्रहृतं प्रक्षिप्तं यत् तृणं हे अश्व, ते तव सर्वा सर्वाणि ता तानि देवेषु अस्तु देवोपयोगीनि भवन्तु देवत्वं प्राप्नुवन्तु वा । अत्रोपयुक्तानां सर्वेषां देवत्वमाशास्यते ॥ ३१ ॥

## द्वात्रिंशी ।

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति । यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥ ३२ ॥

उ० यदश्वस्य । यत् अश्वस्य क्रविषः अश्वाङ्गभूतस्य क्रव्यस्य मांसस्य 'क्रव्यं विकृन्ताज्जायत' इति नैरुक्ताः । अङ्गम् । मक्षिका आश अशितवती । यद्वा । स्वरौ स्वधितौ रिप्तमस्ति । यच्च स्वरौ पश्वञ्जनकाले स्वधितौ शासे छेदनकाले

लिप्तं लग्नमस्ति। यच्च हस्तयोः शमितुः रिप्तम्। यच्च नखेषु रिप्तम् सर्वा ता ते अपि देवेष्वस्तु इति व्याख्यातम्॥ ३२॥

**म०** मक्षिका अश्वस्य क्रविषः क्रविः यदाश भक्षितवती। अश्नातेर्लिट् क्रविषः इति कर्मणि षष्ठी। वाथवा यत् मांसं स्वरौ पश्वञ्जनकाले रिप्तं लिप्तमस्ति 'स्वरुणा पशुमनक्ति' इति श्रुतेः। यत् स्वधितौ शासे लिप्तमस्ति छेदनकालेऽवदानकाले च। यच्च शमितुर्हस्तयोः लिप्तं यच्च शमितुर्नखेषु लिप्तम् हे अश्व, सर्वा ता सर्वाणि तानि अपि देवेषु अस्तु भवन्तु। वचनव्यत्ययः। सर्वं त्वदीयं देवभोग्यं भवतु॥ ३२॥

## त्रयस्त्रिंशी।

यदूव॑ध्यमु॒दर॑स्याप॒वाति॒ य आ॒मस्य॑ क्र॒विषो॑ ग॒न्धो अस्ति॑। सु॒कृ॒ता तच्छ॑मि॒तार॑ः कृण्वन्तू॒त मेध॑ꣳ शृ॒त॒पाकं॑ पचन्तु॥ ३३॥

**उ०** यदूवध्यम् यत् ऊवध्यम्। भक्षितमपरिणतमामाशयस्थमूवध्यमुच्यते। उदरस्य अयुतं पृथग्भूतम् अपवाति गन्धायते। यश्च आमस्य अपक्वस्य क्रविषः मांसस्य गन्धः अस्ति विद्यते। सुकृता तच्छमितारः कृण्वन्तु। तत्सर्वं शमितारः विशसनकर्तारः सुकृतानि सुसंस्कृतानि दोषरहितानि कुर्वन्तु। उत अपिच मेधं मेध्यं यज्ञार्हम्। शृतपाकं देवयोग्यपाकं पचतु। अतिपक्वमीषत्पक्वं च मा कुर्वन्त्वित्यर्थः॥ ३३॥

**म०** उदरस्य ऊवध्यमीषज्जीर्णतृणपुरीषं यत् अपवाति अपगच्छति। भक्षितमपक्वमामाशयस्थमूवध्यमुच्यते। आमस्यापक्वस्य क्रविषो मांसस्य यो गन्धो लेशोऽस्ति शमितारः विशसितारः तत्सर्वं सुकृता सुकृतं सुसंस्कृतं कृण्वन्तु कुर्वन्तु। उतापि च मेधं मेध्यमश्वं शृतपाकं यथा पचन्तु शृतो देवयोग्यो जातः पाको यस्मिन् कर्मणि तथा पचन्तु। अतिपक्वमीषत्पक्वं च मा कुर्वन्त्वित्यर्थः॥ ३३॥

## चतुस्त्रिंशी।

यत्ते॒ गात्रा॑द॒ग्निना॑ प॒च्यमा॑नाद॒भि शूलं॒ निह॑तस्याव॒धाव॑ति। मा तद्भूम्या॒मा श्रि॑ष॒न्मा तृणे॑षु दे॒वेभ्य॒स्तदु॒शद्भ्यो॑ रा॒तम॑स्तु॥ ३४॥

**उ०** यत्ते। शूले सशेषश्रपणम् तदभिवदत्ययं मन्त्रः। यच्च ते तव गात्रादवयवात् अग्निना पच्यमानात् ऊष्मरूपं रसो वा अवधावति गच्छति तथा निहतस्य निःशेषेण हतस्य यदङ्गरसरूपम् अभिशूलं शूलमभिलक्ष्य मांसादुत्कृष्टं धावति गच्छति। माश्रिषत् माश्लिषत् तदङ्गं भूम्याम् माच तृणेषु। किंतु देवेभ्यः तत् उशद्भ्यः 'वश कान्तौ' कामयमानेभ्यः रातं दानम् अस्तु॥ ३४॥

**म०** हे अश्व, अग्निना पच्यमानात्ते तव गात्रात् शरीरात् यत् ऊष्मा रसो वा अवधावति अधस्ताद्गच्छति। तथा निहतस्य निःशेषेण हतस्य यत् अङ्गं शूलमभि अवधावति शूलेन पाके क्रियमाणे यन्निर्गच्छति तन्निर्गतमूष्माङ्गादिकं भूम्यां मा आश्रिषत् भूम्याश्लिष्टं मा भूत्। श्रिषेः पुषादित्वात् च्लेरङ्। तथा तृणेषु माश्रिषत् विशसनसमये तृणलग्नं मास्तु। किं तर्हि तत्पतितं तृणलग्नं सर्वं देवेभ्यो रातं दत्तमस्तु 'रा दाने'। कीदृशेभ्यो देवेभ्यः। उशन्ति कामयन्ते ते उशन्तः तेभ्यः हविःकामयमानेभ्यः। 'वश कान्तौ' लटः शत्रादेशः॥ ३४॥

## पञ्चत्रिंशी।

ये वा॒जिनं॑ परि॒पश्य॑न्ति प॒क्वं य ई॑मा॒हुः सु॑र॒भिर्निर्ह॒रेति॑। ये चार्व॑तो मा॒ꣳसभि॒क्षामु॒पास॑त उ॒तो तेषा॑म॒भिगू॑र्तिर्न इन्वतु॥ ३५॥

**उ०** ये वाजिनम्। ये जनाः वाजिनमश्वं परिपश्यन्ति पक्वं सन्तम्। ये च एनमश्वम् आहुः। किमाहुः। सुरभिरयमश्वः अतो निर्हर किंचिदस्मभ्यं देहीति। इतिशब्दः प्रकारवचनः। ये च अर्वतोऽश्वस्य संबन्धिनीं मांसभिक्षाम् उपासते हुतशिष्टमांसयाच्ञां काङ्क्षन्ते। उतो तेषाम् अपिच तेषां संबन्धिनी या अभिगूर्तिः सा नः अस्मान् इन्वतु व्याप्नोतु। यद्वा देवपरोयं मन्त्रो व्याख्येयः। ये देवाः वाजिनं परिपश्यन्ति पक्वम् कदा होष्यतीति। विलम्बं दृष्ट्वा ये च सुरभिरयमश्वोतनिर्हर निःशेषेणास्मभ्यं देहीत्याहुः। ये चार्वन्तो मांसभिक्षामुपासते लिप्सते उतो तेषामभिगूर्तिं न इन्वतु। वयं तु देवानामन्यभूता इत्यभिप्रायः॥ ३५॥

**म०** ये जनाः पक्वं वाजिनमश्वं परिपश्यन्ति अयं पक्व इति जानन्ति। य ईम् ईमित्यव्ययं चार्थे। ये च इत्याहुः एवं कथयन्ति। किम्। सुरभिः सुगन्धः पाको जातः अतो निर्हर अग्नेः सकाशादुत्तारयेति। ये च जनाः अर्वतोऽश्वस्य मांसभिक्षामुपासते हुतशिष्टमांसयाचनां कुर्वते। उतो अपिच तेषां पाकद्रष्ट्रादिजनानामभिगूर्तिः उद्यमो नोऽस्मानिन्वतु प्रीणातु। यद्वायं मन्त्रो देवपरो व्याख्येयः। ये देवाः पक्वं वाजिनं परिपश्यन्ति कदा होष्यतीति। ये च विलम्बं दृष्ट्वा सुरभिः पाको जातोऽस्मभ्यं निर्हर देहीत्याहुः। ये चार्वतो मांसभिक्षामुपासते मांसं याचन्ते तेषामभिगूर्तिः संकल्पोऽस्मान्प्रीणातु। सफलो भवत्वित्यर्थः॥ ३५॥

## षट्त्रिंशी।

यन्नीक्ष॑णं मा॒ꣳस्पच॑न्या उ॒खाया॒ या पात्रा॑णि यू॒ष्ण आ॒सेच॑नानि। ऊ॒ष्म॒ण्या॒पि॒धाना॑ च॒रूणा॑म॒ङ्काः सू॒नाः परि॑भूष॒न्त्यश्व॑म्॥ ३६॥

**उ०** यन्नीक्षणम्। यत् नीक्षणम् नितरामीक्ष्यते शृताश्च तव संबन्धिनोर्था इति येन दध्यादिना तत् नीक्षणम्। मांस्पचन्याः। 'मांसस्य पचि युड्घञोः' इत्यकार-

लोपः । उखायाः यानि च पात्राणि यूष्णः वसायाः । यूपशब्दस्य यूषन्नादेशः षष्ठ्येकवचने उपधालोपश्च । आसेचनानि आसिच्यते येष्वित्यासेचनानि । ऊष्मण्या । ऊष्मशब्दस्य धारणार्थे यत् प्रत्ययः । यानि च ऊष्मण्यानि पिधाना पिधानानि च चरूणां स्थालीनाम् । ये च अङ्काः अङ्कोपलक्षकाः । शरीरवचनोऽङ्कशब्दः । याश्च सूनाः अश्वविशसनाधिकरणभूताः वेतसमय्यः तानि सर्वाणि । परिभूषन्ति 'भूष अलंकारे' । अलंकुर्वन्ति परिरक्षन्ति वा अश्वम् ॥ ३६ ॥

**म०** एते पदार्था अश्वं परिभूषन्ति अलंकुर्वन्ति । स्वव्यापारेण साधयन्तीत्यर्थः । 'भूष अलंकारे' भौवादिकः । एते के तानाह । यत् उखायाः स्थाल्याः नीक्षणं नितरामीक्षणं पाकपरीक्षार्थं दर्शनम् । कीदृश्या उखायाः । मांसचन्याः मांसं पच्यते यस्यां सा मांसचनी तस्याः मांसपाकाधिकरणभूतायाः । 'करणाधिकरणयोश्च' ( पा० ३ । ३ । ११७ ) ल्युट् । 'मांसस्य पचि युड्घञोः' इति मांसस्याकारलोपः 'टिड्ढाणञ्–' ( पा० ४ । १ । १५ ) इति ङीप् । तथा यूष्णः पक्वरसस्य आसेचनानि आसिच्यन्ते येषु तानि आसेचनसाधनानि या यानि पात्राणि । 'पद्दन्' इति यूषशब्दस्य यूषन्नादेशः । यानि च चरूणां मांसपूर्णपात्राणामपिधाना अपिधानानि आच्छादनपात्राणि । कीदृशानि तानि । ऊष्मण्या ऊष्माणं धारयन्ति तानि ऊष्मण्यानि । ऊष्मन्शब्दाद्धारणार्थे यप्रत्ययः । आच्छादने ऊष्मा बहिर्न यातीत्यर्थः । तथा अङ्काः चिह्नसाधनानि हृदयाद्यवयवज्ञापकानि वेतसमयानि । सूनाः विशसनकरणभूताः स्वधित्यादयः । एतेऽश्वं परिभूषयन्ति ॥ ३६ ॥

## सप्तत्रिंशी ।

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः । इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् ॥ ३७ ॥

**उ०** मा त्वाग्निः हे अश्व, मा त्वा अग्निः ध्वनयीत् । ध्वनिः शब्दकर्मा । शब्दं कारयेत् । कथंभूतः । धूमगन्धिः अल्पधूमावरणः । मांसं हि पचन्नग्निर्दहन्नप्यल्पधूमावरणो भवति । तत्र दह्यमानं सिमसिमाशब्दं करोत्यत एवमुच्यते । मा च उखा भ्राजन्ती संदीपिता अत्यन्ताग्निसंयोगेन । अविविक्त 'ओविजी भयचलनयोः' अभिविनक्तु अभिनष्टा विदीर्येत वा । उद्भावा वृद्धा मांसरसं तदिहोच्यते । जघ्रिः गन्धग्रहणशीला उखा । नन्वचेतनोखा कथं गन्धं जिघ्रति । उच्यते । अधिष्ठात्र्योऽत्र देवताः सन्तीति पुरस्तात्प्रतिपादितं तचात्र पुनः स्मार्यते । इष्टं योगेन सङ्गतीकृतम् वीतं कामितम् अभिगूर्तम् अभ्युद्यतम् वषट्कृतं चादानकाले । यद्वा इष्टं प्रयाजैः वीतमाप्रीभिः पर्यग्निकृतम् अभिगूर्तं येयजामह इत्यागूर्योक्तम् षट्कृतं वषट्कारेण संस्कृतम् तं तादृशम् देवा एव देवासः प्रतिगृभ्णन्ति प्रतिगृह्णन्ति अश्वम् ॥ ३७ ॥

**म०** हे अश्व पच्यमानाश्वावयव, अग्निः त्वा त्वां मा ध्वनयीत् ध्वनिं मा कारयतु । ध्वनौ सति भाण्डभङ्गः स्यात् । दह्यमानं मांसं सिमसिमेति शब्दं करोति तन्मास्तु 'नोनयतिध्वनयति–' ( पा० ३ । १ । ५१ ) इत्यादिना ण्यन्ताच्चङ्प्रतिषेधः 'ह्यन्तक्षण–' ( पा० ७ । २ । ५ ) इति वृद्ध्यभावः । कीदृशोऽग्निः । धूमगन्धिः धूमस्य गन्धो लेशो यत्र सः अल्पधूमवानित्यर्थः । 'अल्पाख्यायाम्–' ( पा० ५ । ४ । १३६ ) इति धूमादिकारः । किंच भ्राजन्ती अतितापेन दीप्यमाना उखा स्थाली मा अभिविक्त मा चलतु 'ओविजी भयचलनयोः' लुङि तङि 'झलो झलि' ( पा० ८ । २ । २६ ) इति सिलोपे रूपम् । 'न माङ्योगे' ( पा० ६ । ४ । ७४ ) इत्यडभावः । कीदृशी उखा । जघ्रिः जिघ्रति गन्धं गृह्णातीति जघ्रिः 'आदृगम–' ( पा० ६ । २ । १७१ ) इति किन्प्रत्ययः । अधिष्ठात्र्या देवताया घ्राणम् । तमेवंविधमश्वं देवासः देवाः प्रतिगृभ्णन्ति प्रतिगृह्णन्तु । कीदृशमश्वम् । इष्टं प्रयाजैः । वीतमाप्रीभिः पर्यग्निकृतम् । अभिगूर्तं ये यजामह इत्यागूर्योक्तम् । वषट्कृतं वषट्कारेण संस्कृतम् ॥ ३७ ॥

## अष्टत्रिंशी ।

निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः । यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ ३८ ॥

**उ०** निक्रमणं निषदनम् निक्रमणं गमनं वसतिस्थानात् । निषदनं तत्रैव स्थितिः । विवर्तनं भ्रमणम् । यान्येतानि चेष्टितानि । यच्च पड्बीशम् । पादेषु विशतीति पड्बिशं पादबन्धनमुच्यते अर्वतः अश्वस्य । यच्च पपौ पीतवानुदकम् । यच्च घासिं यवसं जघास । 'घस्लृ अदने' भक्षितवान् । सर्वाणि तानि निक्रमणादीनि ते तव हे अश्व, अपि देवेषु अपि प्रजापतये अस्तु सन्तु । तान्यपि निरर्थकानि मा भूवन्नित्याशयः ॥ ३८ ॥

**म०** यत् निक्रमणं नितरां क्रमते यत्र तत् निष्क्रमणस्थानम् । निषदनं नितरां सीदत्यस्मिन्निति निषदनमुपवेशनस्थानम् । विवर्तनं विविधं वर्तते यत्र तत् इतस्ततो लुण्ठनस्थानम् । सर्वत्राधिकरणे ल्युट् । यच्चार्वतोऽश्वस्य पड्बीशम् पदेषु विशति पड्बीशं पादबन्धनम् । क्रियापरा वा निक्रमणादयः शब्दाः । आलम्भसमये यानि अश्वस्य निक्रमणादीनि चेष्टितानि । किंच यच्च पपौ यज्जलं पीतवान् यच्च घासिमदनीयं तृणादिकं जघास भक्षितवान् 'घस्लृ अदने' लिट् । हे अश्व, ता तानि सर्वाणि ते तव निक्रमणादीनि देवेषु अस्तु सन्तु । देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वं मास्त्वित्यर्थः ॥ ३८ ॥

## एकोनचत्वारिंशी ।

यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै । संदानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति ॥ ३९ ॥

उ० यदश्वाय । यत् अश्वाय संज्ञप्यमानाय वासः उपस्तृणन्ति सर्वत आच्छादयन्ति । यच्च अधीवासम् उपर्याच्छादनयोग्यं वास उपस्तृणन्ति । यानि च हिरण्यानि उपस्तृणन्ति अस्मै अश्वाय । यच्च संदानं संदीयतेऽनेनेति संदानं शिरोबन्धनम् अर्वन्तम् अर्वते इति विभक्तिव्यत्ययः । अश्वायेति सामानाधिकरण्यात् । यच्च पड्वीशं पादवासः एतानि प्रियाणि देवेषु आयामयन्ति गमयन्ति ॥ ३९ ॥

म० प्रिया प्रियाणि एतानि वस्तूनि देवेषु आयामयन्ति आगमयन्ति । ऋत्विजोऽश्वस्यैतानि देवेष्वेव प्रापयन्तीत्यर्थः । कानीत्यत आह । अश्वाय यत् अधीवासमाच्छादकं वासो वस्त्रमुपस्तृणन्ति 'स्तृञ् आच्छादने' क्र्यादिकः । तथा या यानि हिरण्यानि सौवर्णशकलानि अस्मै अश्वाय उपस्तृणन्ति । तथा अर्वन्तम् षष्ठ्यर्थे द्वितीया । अर्वतोऽश्वस्य संदानं शिरोबन्धनं पड्वीशं पादबन्धनम् । एतानि देवेषु प्रापयन्ति । कीदृशानि । प्रिया प्रियाणि देवानामिष्टानि ॥ ३९ ॥

## चत्वारिंशी ।

यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद । स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥ ४० ॥

उ० यत्ते सादे । हे अश्व, यत् ते तव सादे । सीदन्त्यश्ववारा अस्मिन्निति सादोऽश्वपृष्ठम् तस्मिन्सादे अवस्थितोऽश्ववारः महसा महत्वेनान्वितः सन् । कथंभूतस्य । शूकृतस्य शब्दानुकरणमेतत् । शूत्कारं कुर्वतः । अनन्तरम् पार्ष्ण्या वा कशया वा तुतोद । 'तुद व्यथने' । तुदति व्यथयति स्रुचा इव ता तानि यथा स्रुचा हविषः हविरिति विभक्तिव्यत्ययः । अध्वरेषु यज्ञेषु जुह्वति एवं सर्वाणि ते तव ब्रह्मणा त्रयीलक्षणेन सूदयामि क्षारयामि । आहुतित्वेन कल्पयामीत्यर्थः ॥ ४० ॥

म० हे अश्व, अश्ववारः सादे गमने यत्ते तव त्वां पार्ष्ण्या पादाधोभागेन कशया वा तुतोद पीडितवान् 'तुद व्यथने' लिट् । सदनं सादः घञ् । कीदृशस्य तव । महसा बलेन शूकृतस्य शूकृतमस्यास्ति शूकृतः तस्य । शब्दानुकरणमेतत् । शूकारं कुर्वतः । अध्वरेषु ता सर्वा तानि सर्वाणि ते तव पार्ष्णिकशाताडनानि ब्रह्मणा मन्त्रेणाहं सूदयामि 'षूद क्षरणे' चुरादिः क्षारयामि । यज्ञे आहुतित्वेन कल्पयामीत्यर्थः । तत्र दृष्टान्तः । हविषः स्रुचेव हविराज्यादिकं यथा स्रुचा जुह्वा सूदयामि तद्वत् । एकं तापदं पादपूरणाय ॥ ४० ॥

## एकचत्वारिंशी ।

चतुस्त्रिꣳशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्त ॥ ४१ ॥

उ० चतुस्त्रिंशत् । चतुस्त्रिंशत् वंक्रयः । वाजिनः वेजनवतोऽश्वस्य देवबन्धोः देवानां प्रियस्य । देवा बन्धवोऽस्य इति वा भावी देवबन्धुः । देवो ह्यसौ भविष्यति एवंभूतस्याश्वस्य वंक्रीः वंक्रयः उभयपार्श्वस्यास्थीनि स्वधितिः छेदनसाधनोऽसिः समेति एकमकृत्वा सङ्गच्छति यतः अतो ब्रवीमि । अच्छिद्रा गात्रा अच्छिद्राणि अनवखण्डितानि गात्रा गात्राणि वयुना प्रज्ञानेन कृणोत कुरुत हे शमितारः । किंच परुष्परुः पर्वपर्व हृदयाद्यङ्गम् अनुघुष्य इदमिदमिति संशब्द्य विशस्त विशसनं कुरुत । उत्तरार्धस्यैव मन्त्ररूपसंबन्धः ॥४१॥

म० स्वधितिः पशुच्छेदनसाधनोऽसिः अश्वस्य चतुस्त्रिंशत् वंक्रीः चतुस्त्रिंशत्संख्याकान्युभयपार्श्वास्थीनि समेति सम्यगागच्छति छेदनाय । कीदृशस्याश्वस्य । वाजिनः वजति गच्छतीति वाजी तस्य । वेगवत इत्यर्थः । देवबन्धोः देवानां बन्धुः प्रियस्तस्य, देवा बन्धवो यस्येति वा । भावी निर्देशः । अश्वस्य चतुस्त्रिंशद्वंक्रयः अजादीनां षड्विंशतिः । अतो हे ऋत्विजः, वयुना वयुनेन ज्ञानेनाश्वस्य गात्रा गात्राणि अच्छिद्रा अच्छिद्राणि छिद्रहीनानि यूयं कृणोत कुरुत । स्वधितिना छिन्नानि सच्छिद्राणि वर्तन्ते तान्यच्छिद्राणि कुरुत । किंच परुः परुः 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः । 'नित्यवीप्सयोः' इति ( पा० ८ । १ । ४ ) द्वित्वम् । प्रतिपर्व प्रत्यवयवम् अनुघुष्य इदमिति नाम्ना संशब्द्य यूयं विशस्त विशसनं छेदं कुरुत । 'शसु हिंसायाम्' छान्दसः शपो लुक् । कृणोत 'कृ करणे' स्वादिः 'तप्तनप्–' ( पा० ७ । १ । ४५ ) इति मध्यमबहुवचनस्य तबादेशः ततो गुणः । अनुघुष्य 'घुषिर् शब्दे' क्त्वो ल्यप् ॥ ४१ ॥

## द्विचत्वारिंशी ।

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथ ऋतुः । या ते गात्राणामृतुथा कृणोमि ता ता पिण्डानां प्र जुहोम्यग्नौ ॥ ४२ ॥

उ० एकस्त्वष्टुः । एकः अश्वस्य विशस्ता विशसिता संवत्सरः । तदुक्तम् 'संवत्सरस्य तेजसेति' । त्वष्टुः आदित्यादुत्पन्नस्याश्वस्य । तदुक्तम् 'सूरादश्वं वसवो निरतष्टत' इति । द्वा यन्तारा द्वौ नियन्तारौ अहोरात्रौ द्यावापृथिव्यौ वा भवतः । तथ ऋतुः द्वितीयो मासानां नियन्तेति शेषः । एवमश्वस्य विशसितॄन् उक्त्वा अथेदानीं स्वकीयं कर्माध्वर्युराह । या ते यानि तव हे अश्व गात्राणामङ्गानाम् ऋतुथा ऋतावृतौ काले काले बन्धनानि कृणोमि करोमि ता ता तानि तानि

पिण्डानां मांसपिण्डानां मध्ये प्रजुहोमि प्रज्ञानानुरोधेन जुहोमि अग्नौ ॥ ४२ ॥

**म०** अश्वस्य विशस्ता विशसनकर्ता एकः ऋतुः । कीदृशस्याश्वस्य । त्वष्टुः दीप्तस्य । ऋतूपलक्षितः कालात्मा प्रजापतिरेवाश्वस्य शस्तेत्यर्थः । शसेस्तृच् । तथा यन्तारा यन्तारौ नियमनकर्तारौ द्वा द्वौ द्यावापृथिव्यभिमानिदेवौ भवतः । तयोरेव सर्वेषां नियन्तृत्वादिति भावः । तथ ऋतुः अत्र 'ऋत्यकः' (पा० ६।१।१२८) इति ह्रस्वप्रकृतिभावौ । एवमश्वस्य विशसितृयन्तॄनुक्त्वाध्वर्युः स्वकर्माह । हे अश्व, ते तव गात्राणां पिण्डानां गात्रसंबन्धिनां मांसपिण्डानां या यानि अङ्गानि अहं कृणोमि हन्मि छिनद्मि । 'कृञ् वन्धे' स्वादिः । ऋतुथा ऋतौ ऋतूपलक्षिते वसन्तादियज्ञकाले ता ता तानि तान्यङ्गानि अग्नौ प्रजुहोमि प्रकर्षेण हुतानि करोमि ॥ ४२ ॥

## त्रिचत्वारिंशी ।

मा त्वा॑ तपत्प्रि॒य आ॒त्मा पि॒यन्तं॒ मा स्वधि॑ति॒स्त॒न्व॒ आ ति॑ष्ठिपत्ते । मा ते॑ गृ॒ध्नुर॑विश॒स्ताति॒हाय॑ छि॒द्रा गात्रा॑ण्य॒सिना॒ मिथू॑ कः ॥ ४३ ॥

**उ०** मा त्वा तपत् । मा त्वां तपत् । त्वाशब्देनात्र विज्ञानात्मोच्यते । सुखदुःखयोर्भोक्ता प्रिय आत्मा प्राण उक्तः । स हि श्रुतौ प्रियमित्येतदुपासीतेत्युक्तः । देवानाम् पियन्तम् देवलोकगमनप्रवृत्तं सन्तम् । माच स्वधितिः शस्त्रं तन्वः शरीरस्य अतिष्ठिपत् अस्थापयत् एकादशमवदानभूतम् ते तव । माच ते तव गृध्नुः मांसग्रहणे गर्धालुर्लुब्धः । अविशस्ता विशसने अकुशलः अतिहाय अतिक्रम्य । छिद्रा छिद्राणि गात्राणि असिना मिथूकः मिथ्या अकार्षीत् ॥ ४३ ॥

**म०** हे अश्व, प्रियः वल्लभो भोगायतनत्वात् तवात्मा देहः त्वा त्वां मा तपत् तप्तं दुःखितं मा कार्षीत् । तव देहवियोगजनिता व्यथा मा भूदिति विज्ञानात्मानं प्रत्युच्यते । किंभूतं त्वाम् । अपियन्तम् । अप्येतीत्यपियन् तम् देवलोकं गच्छन्तम् । अपिपूर्वादेतेः शतृप्रत्ययः । किंच स्वधितिः शस्त्रं ते तव तन्वः तनूः अङ्गानि मा आतिष्ठिपत् मा स्थापयतु । सर्वाणि छित्त्वा देवेभ्यो ददत्वित्यर्थः । तिष्ठतेर्ण्यन्तस्य लुङि चङि 'तिष्ठतेरित्' (पा० ७।४।५) इतीकारे कृते द्वित्वादि । किंच शमिता ते तव गात्राणि अङ्गानि अतिहाय त्यक्त्वा शास्त्रोक्तक्रमं त्यक्त्वा असिना शासेन मिथु मिथ्या छिद्रा छिद्राणि अयथाच्छिन्नानि मा कः मा कार्षीत् । करोतेर्लुङि 'मन्त्रे घसह्वर–' (पा० २।४।८०) इत्यादिना च्लेर्लुक् गुणे 'हल्ङ्याव्' (पा० ६।१।६८) इति तिपो लोपे विसर्गः । मिथु इति मिथ्यार्थेऽव्ययम् । संहितायां दीर्घः । कीदृशः शमिता । गृध्नुः गृध्यतीति गृध्नुः लुब्धः केवलं मांसग्रहणेच्छुः । अतएवाविशस्ता न विशेषेण शसति हिनस्ति अविशस्ता विशसने अकुशलः । अतएवान्यथा मा छिदत् । सम्यगवदानानि करोत्वित्यर्थः ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

न वा उ॑ ए॒तन्म्रि॑यसे॒ न रि॑ष्यसि दे॒वाँ२॥ इदे॑षि प॒थिभि॑: सु॒गेभि॑: । हरी॑ ते॒ युञ्जा॒ पृष॑ती अभू॒ताम॒पा॑स्थाद्वा॒जी धु॒रि रास॑भस्य ॥ ४४ ॥

**उ०** न वै । न वा उ एतदिति व्याख्यातम् । अन्यच्च हरीन्द्राश्वौ ते तव । युञ्जा योजनार्हौ वोढारौ प्रतिधुरौ अभूताम् । पृषती च मरुतां संबन्धिनावश्वौ प्रतिधुरावभूताम् । तदुक्तमश्वरथयाने 'युञ्जन्त्यस्य काम्या हरी' इति । एभिर्दिव्यैस्त्वं समानं लोकं संज्ञस इत्यभिप्रायः । एनमुपश्रुत्य स्वयमेव उपास्थात् उपस्थितः वाजी । धुरि रासभस्य अश्विसंबन्धिनः । रासभावश्विनोरित्यादिष्टं प्रयोजनम् ॥ ४४ ॥

**म०** वै एवार्थे उ अवधारणे । हे अश्व, त्वमेतन्नैव म्रियसे इतराश्ववत् मृतो न भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात् । अतएव न रिष्यसि हिंससे व्यर्थहिंसाया अभावात् । रिषतेर्यकि परस्मैपदमार्षम् । ननु प्रत्यक्षत्वे मरणमङ्गनाशश्च दृश्यते तर्हि कथमेवमुच्यते तत्राह । सुष्ठु गम्यते यत्र ते सुगाः तैः सुगेभिः सुगैः साधुगमनैः पथिभिर्मार्गैः देवयानरूपैः देवान् इत् एषि देवानेव गच्छसि । अथो युक्ता मदुक्तिः । कथं देवान् प्रति गमनं तत्राह । हे अश्व, ते तव हरी इन्द्राश्वौ युञ्जा युञ्जौ रथे युक्तौ अभूतां भविष्यतः । 'आशंसायां भूतवच्च' (पा० ३।३।१३२) इति भूतकालप्रयोगो भविष्यदर्थे । हरी इन्द्रस्येति यास्कः । तथा पृषती मरुतां वाहनभूते तव युञ्जौ अभूताम् । पृषत्यो मरुतामिति च । युङ्क्तस्ते युञ्जौ 'ऋत्विग्दधृग्–' (पा० ३।२।५९) इत्यादिना क्विन् 'क्विन्प्रत्ययस्य कुः' (पा० ८।२।६२) इति कुत्वम् 'युजेरसमासे' (पा० ७।१।७१) इति नुम् 'सुपां सुलुक्' (पा० ७।१।३९) इति विभक्तेरात्वम् । किंच रासभस्याश्विवाहनस्य धुरि अश्विवाहनस्थाने वाजी कश्चिदश्वः उपास्थात् उपस्थास्यति । देवत्वं प्राप्तस्य तव वहनाय इन्द्रादयो निजवाहनानि प्रेषयिष्यन्तीति भावः । यद्वा तत्तद्देवभावं प्राप्तं त्वां तानि तानि वाहनानि वक्ष्यन्तीत्यर्थः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

सु॒गव्यं॑ नो वा॒जी स्वश्व्यं॑ पुं॒सः पु॒त्राँ२॥ उ॒त वि॑श्वा॒पुषं॑ र॒यिम् । अ॒ना॒गा॒स्त्वं नो॒ अदि॑तिः कृणोतु क्ष॒त्रं नो॒ अश्वो॑ वनतां ह॒विष्मा॑न् ॥ ४५ ॥

**उ०** इदानीं याच्ञा । सुगव्यं नः । शोभनगव्यं नोऽस्माकं वाजी कृणोतु करोतु । स्वश्व्यं शोभनाश्वं च करोतु पुंसः पुत्रान्करोतु । दुहितरः पुत्राश्च पुत्रशब्देनोच्यन्ते इत्यतो विशेषणं पुंस इति । उत अपिच विश्वापुषम् सर्वस्य पोषकं

रयिं धनं करोतु । किंच अनागाः अनपराधम् त्वं च । नोऽस्माकम् अदितिर्देवमाता च करोतु । नैघंटुको वा अदितिशब्दः अनागास्त्वं नः अदितिः अदीनोऽश्वः करोतु । किंच । क्षत्रं नोऽस्माकं वनताम् । करोत्यर्थे वनतिः । करोतु हविष्मान् अश्वः सर्वे अश्वावयवाः हवींषि ॥ ४५ ॥

**म०** इदानीं याच्ञा क्रियते । वाजी देवत्वं प्राप्तोऽश्वः नोऽस्माकं सुगव्यं शोभनं गोसमूहं कृणोतु । गवां समूहो गव्यम् । 'खलगोरथात्' ( पा० ४ । २ । ५० ) इति यत्प्रत्ययः । शोभनं गव्यं सुगव्यम् । तथा स्वश्व्यं कृणोतु अश्वानां समूहः अश्व्यम् 'केशाश्व–' ( पा० ४ । २ । ४८ ) इति विकल्पात्पक्षे यत् । शोभनमश्व्यं स्वश्व्यम् । तथा पुंसः पुत्रान्करोतु । पुत्रशब्दोऽपत्यवाचक इति पुंस इति विशेषणम् । यद्वा पुंसः पुरुषार्थसाधकान्पुत्रान् करोतु । उतापि च रयिं धनं करोतु । कीदृशं रयिम् विश्वपुषम् पुष्णातीति पुषः 'इगुपध–' ( पा० ३ । १ । १३५ )इति कप्रत्ययः । विश्वस्य सर्वस्य पुषस्तम् सर्वजनपोषणसमर्थं धनं करोत्वित्यर्थः । संहितायां विश्वशब्दस्य दीर्घः । किंच नोऽस्माकमनागास्त्वं करोतु नास्ति आगः अपराधः पापरूपो यस्य सोऽनागाः तस्य भावोऽनागस्त्वम् दीर्घछान्दसः । निष्पापत्वं करोतु पापसद्भावे उक्तफलाप्राप्तेः । किंच अश्वो नोऽस्माकं क्षत्रं क्षतत्राणं परवालंभनाद्रक्षणं वा करोतु । कीदृशोऽश्वः । अदितिः नास्ति दितिः खण्डनं दैन्यं वा यस्य सः । हविष्मान् हविरस्यास्तीति हविष्मान् 'तदस्यास्ति–' ( पा० ५ । २ । ९४ ) इति मतुप् । हविर्भूतावयवः । यद्वा देवत्वाप्त्या हविष्मान् । ईदृशोऽश्वो नः क्षत्रं वनतां करोतु । वनतिः करोत्यर्थः ॥ ४५ ॥

## षट्चत्वारिंशी ।

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः । आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् । यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधाति ॥ ४६ ॥

**उ०** इमा नु । षड् द्विपदाः विराजः तिस्रो वैश्वदेव्यः । तिस्र आग्नेय्यः 'द्विपदा उत्तमा जुहोति' इति श्रुतिः । नुकम् इतिनिपातावनर्थकौ । इमानि भुवनानि भूतजातानि सीषधाम साधयाम वयम् । ततोऽनन्तरम् इन्द्रः ऐश्वर्यवान् विश्वे च देवाः आदित्यैः सहितः इन्द्रः सगणः मरुद्भिश्च सहितः अस्मभ्यमस्माकं भेषजा भेषजानि करत्करोतु । किंच यज्ञं च नोऽस्माकं तन्वं च शरीरं च आदित्यैः सह इन्द्रः सीषधाति साधयतु वश्यं करोतु ॥ ४६ ॥

**म०** 'इमा नु कमिति च द्विपदाः' ( का० २० । ८ । १२ ) । अयस्मयपात्रेणाश्वलोहितहोमानन्तरमिमा नु कमित्याद्याः षट् द्विपदाः जुहोति । कण्डिकाद्वयस्य षडर्धानि सन्ति तैः षडाहुतीर्जुहोतीति सूत्रार्थः । द्विपदाच्छन्दस्का विश्वदेवदेवत्या आप्त्यपुत्रभुवनदृष्टास्तिस्र ऋचः । नु कम् एतौ निपातौ पादपूरणौ । इमा इमानि भुवना भुवनानि भूतजातानि वयं सीषधाम साधयामः । वशीकुर्म इत्यर्थः । साधयतेर्लुङि उत्तमबहुवचने रूपम् अडभाव आर्षः । किंच इन्द्रः 'इदि परमैश्वर्ये' ऐश्वर्यवान् सगणो निजगणैः परिवारैः सहित इन्द्रो देवेशो विश्वे देवाश्च आदित्यैः द्वादशभिः मरुद्भिः एकोनपञ्चाशत्संख्यैश्च सहिताः अस्मभ्यं भेषजा भेषजानि औषधानि हितानि करत् कुर्वन्तु । सर्वे देवा अस्माकं हितकारिणो भवन्त्वित्यर्थः । किंच इन्द्रः आदित्यैः सह नोऽस्माकं यज्ञमश्वमेधं तन्वं शरीरं प्रजां पुत्रादिकां च सीषधाति साधयतु । वशीकरोत्वित्यर्थः । नीरोगाः सपुत्रा वयं यज्ञं सम्यक् कुर्म इति भावः ॥ ४६ ॥

## सप्तचत्वारिंशी ।

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः । तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ४७ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
पञ्चविंशोऽध्यायः ॥ २५ ॥

**उ०** अग्ने त्वं न इति व्याख्यातम् ॥ ४७ ॥

इति उवटकृतौ मन्त्रभाष्ये पञ्चविंशोऽध्यायः ॥ २५ ॥

**म०** तिस्रो द्विपदा व्याख्याताः (अ० ३ । क० २५—२६) । समिद्धो अञ्जन् ( अ० २९ । क० १ ) आश्वमेधिकोऽध्याय इति वचनात्तत्र हौत्रे तन्मन्त्राणां विनियोगः । समाप्तोऽश्वमेधः सप्तविंशत्युत्तरवर्षसाध्यः ॥ ४७ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अध्यायः पञ्चविंशोऽयमश्वमेधगतोऽगमत् ॥ २५ ॥

# षड्विंशोऽध्यायः ।

## तत्र प्रथमा ।

अग्निश्च पृथिवी च संनते ते मे संनमतामदो वायुश्चान्तरिक्षं च संनते ते मे संनमतामद आदित्यश्च द्यौश्च संनते ते मे संनमतामद आपश्च वरुणश्च संनते ते मे संनतामदः । सप्त सꣳसदो अष्टमी भूतसाधनी सकामाँ२॥ अध्वनस्कुरु संज्ञानमस्तु मेऽमुना ॥ १ ॥

**उ०** इषेत्वेति प्रारभ्य दर्शपौर्णमासाग्निहोत्रपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसंबद्धा मन्त्रा

व्याख्याताः। नामाख्यातोपसर्गनिपातजनिता वाक्यार्थाश्च। अथेदानीं खिलान्यनुक्रमिष्यामः। अग्निष्टोमाग्निसौत्रामण्यश्वमेधपुरुषमेध सर्वमेधपितृमेधप्रवर्ग्योपनिषत्संबद्धा मन्त्रा व्याख्येयाः त इहोच्यन्ते। अत्र च ये अत्र संबद्धा मन्त्रास्तेषां तदेवार्षम्। असंबद्धानां तु आदित्य एव 'आदित्यानीमानि यजूꣳषीति वा आहुः' इति श्रुतेः। याज्ञवल्क्यो वा 'याज्ञवल्क्येनाख्यायन्ते' इति श्रुतेः। अविनियुक्तानां मन्त्राणां लैङ्गिको विनियोगः। तद्यथा अग्निश्च पृथिवी चेति सप्त सन्नतिमन्त्राः। लिङ्गं नाम प्रकाशनसामर्थ्यमुच्यते। यो हि यमर्थं वदितुं समर्थः स तत्र श्रुत्वा विनियुज्यते। अग्निश्च पृथिवी च सन्नते। सन्नमनं सन्नतिः प्रह्वीभावः आनुकूल्येन प्रवृत्तिः। अग्निश्च पृथिवी च संभोगार्थं संनते कस्मादतो ब्रवीमि ते अग्निपृथिव्यौ मे मम सन्नमताम्। अत्र णिचो लोपश्छान्दसः। सन्नमयतां वशवर्तिनं कुरुतामित्यर्थः। अद इति पुरुषादेर्विशेषनामोपलक्षणम्। द्वितीयान्तं चोपलक्ष्यति कर्मभावात्। एवमुत्तरेष्वपि योज्यम्। वायुश्चान्तरिक्षं च आदित्यश्च द्यौश्च आपश्च वरुणश्च सप्तसंसदः परमात्मोच्यते। यस्य तव सप्तसंसदः सप्तसंसदानि प्रकृतानीत्येवम् अग्निपृथिवीवाय्वन्तरिक्षादित्यद्युलोकाम्बुवरुणान्तानि। यस्य च तव अष्टमी बभूव भूतानां साधनी पृथिवी। नहि पृथिवीमन्तरेण भूतानामुत्पत्तिरस्ति। तत्त्वं प्रार्थ्यसे। सकामान् अध्वनः कुरु सकामान्मार्गान् अस्माकं कुरु। यदा हि तैर्लभ्यते तदा सकामा मार्गाः स्युः। संज्ञानं च सङ्गतं च ज्ञानम् अस्तु मे मम अमुना। विशेषनामाभिप्रायमेतत्। विज्ञानात्मा वोच्यते। यस्य तव सप्तसंसदः। मनश्च बुद्धिश्च पञ्च बुद्धीन्द्रियाणि च। अष्टमी च वाक् भूतसाधनी भूतप्रज्ञप्तिकरी। तं त्वां ब्रवीमि। सकामान् अध्वनः कुरु अस्माकम्। संज्ञानं च अस्तु मे मम अमुना ॥ १ ॥

**म०** इषे त्वेत्यारभ्य दर्शपौर्णमासपितृयज्ञाग्निहोत्रोपस्थानपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसंबद्धा मन्त्रा व्याख्याताः। इदानीं खिलान्युच्यन्ते क्वचिद्विनियोगानुक्तेः। तेषां विवस्वानृषिरन्यस्यानुक्तेः 'आदित्यानीमानि यजूंषि व्याख्यायन्ते' (बृह० ५।५।३३) इति श्रुतेः याज्ञवल्क्यो वा 'याज्ञवल्क्येन व्याख्यायन्ते' इति श्रुतेः। अग्निश्च। सप्त लिङ्गोक्तानि यजूंषि। चतस्र ऋग्गायत्र्यः। सप्त संसदः आसुर्यनुष्टुप्। सकामान् प्राजापत्यानुष्टुप्। यथेमाम् ब्राह्मी गायत्री। अग्निश्च पृथिवी च संते संनमनं संतम् आनुकूल्येन प्रवृत्तिः अग्निपृथिव्यौ भोगाय सङ्गते। अतो ब्रवीमि ते अग्निपृथिव्यौ मे ममादः असुकं संनमताम् संनमयताम् वशवर्तिनं कुरुतामित्यर्थः। अद इति पुरुषादेर्नाम द्वितीयान्तं प्रयोज्यम्। 'छन्दस्युभयथा' (पा० ३।४।११७) इति शपोऽप्यार्धधातुकत्वात् 'णेरनिटि' (पा० ६।४।५१) इति णिचो लोपः संनमतामित्यत्र। एवमुत्तरेष्वपि मन्त्रेषु योज्यम्। वायुरन्तरिक्षं च संते ते ममामुकं संनमयताम्। आदित्यः द्यौश्च संते ते म०। आपश्च वरुणश्च संते ते म०। परमात्मानं प्रत्युच्यते। हे स्वामिन्, यस्य तव सप्त संसदः संसदनानि अधिष्ठानानि अग्निवाय्वन्तरिक्षादित्यद्युलोकाम्बुवरुणाख्यानि तत्राष्टमी भूतसाधनी पृथ्वी। भूतानि साधयति उत्पादयति भूतसाधनी। भूमिं विना भूतोत्पत्तेरभावात्। अतः सर्वाधिष्ठानभूतस्त्वमध्वनो मार्गान् सकामान् कुरु। येषु मार्गेषु मया गम्यते तत्रास्माकं कामप्राप्तिरस्त्वित्यर्थः। किंच मे ममामुना देवदत्तादिना संज्ञानं सङ्गतं ज्ञानमस्तु इष्टेन मम प्रीतिरस्तु। विज्ञानात्मा वोच्यते। यस्य तव सप्त संसदः पञ्च बुद्धीन्द्रियाणि मनो बुद्धिश्चेति सप्तायतनानि अष्टमी भूतसाधनी भूतानि साधयति वशीकरोतीति भूतसाधनी वाक् स त्वं नोऽस्माकमध्वनः सकामान् कुरु। अमुना सह मे संज्ञानं सङ्गतमस्तु ॥ १ ॥

## द्वितीया ।

यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुप मादो नमतु ॥ २ ॥

**उ०** यथेमाम्। यथा इमां वाचं कल्याणीं अनुद्वेजिनीम् दीयतां भुज्यतामित्येवमादिकाम्। आवदानि जनेभ्योऽर्थाय। के ते जना इत्यत आह। ब्रह्मराजन्याभ्यां ब्राह्मणाय राजन्याय च शूद्राय च अर्याय च। अर्यो वैश्यः। स्वाय चात्मीयाय च। अरणः अपगतोदकः पर इत्यर्थः। आवदानीति सर्वत्र संबध्यते। प्रियो देवानाम्। अवसानरहितानुष्टुप्। यथेमां वाचमिति यथाशब्दयोगात्तथाशब्दोऽत्राध्याहर्तव्यः। तथा तेन प्रकारेण प्रियो देवानां भूयासम्। दक्षिणायै दक्षिणाया दातुश्च इहास्मिन्नेव काले प्रियो भूयासम्। अयमिति कामनामग्रहणम्। तद्यथा अयं ग्रामलाभकामः असौ मे समृद्ध्यताम्। किंच उपमा अदः नमतु। अद इति यः काम इष्यते स उच्यते। तद्यथा उपनमतु मां प्रति देवदत्तः ॥ २ ॥

**म०** इमां कल्याणीमनुद्वेगकरीं वाचमहं यथा यतः आवदानि सर्वतो ब्रवीमि दीयतां भुज्यतामिति सर्वेभ्यो वच्मि। केभ्यस्तदाह। ब्रह्मराजन्याभ्यां ब्राह्मणाय राजन्याय क्षत्रियाय च शूद्राय अर्याय वैश्याय स्वायात्मीयाय अरणाय पराय। अरणोऽपगतोदकः शत्रुः। नास्ति रणः शब्दो येन सह, वाक्संबन्धरहितः शत्रुरिति वा। प्रियो देवानां मध्येऽवसानरहितानुष्टुप् लौगाक्षिदृष्टा। यथेति पूर्वोक्तेरत्र तथाशब्दोऽध्याहार्यः। यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं वदामि तथा ततोऽहं देवानां प्रियः भूयासम्। इह संसारे दक्षिणायै दक्षिणायाः दातुश्च प्रियः भूयासम्। देवा दक्षिणादातारश्च मयि प्रीतिं

कुर्वन्त्वित्यर्थः । किंच मे ममायं कामः समृध्यतां सफलो भवतु । अयमिति नामनिर्देशः । धनपुत्रादिलाभकामो मे संपद्यतामित्यर्थः । किंच अदो मा मामुपनमतु । अद इति इष्टनामग्रहणम् । देवदत्तादिर्मां प्रीणयतु ॥ २ ॥

## तृतीया ।

बृह॑स्पते॒ अति॒ यद॒र्यो अर्हा॑द्द्यु॒मद्वि॒भाति॒ क्रतु॑मज्जने॑षु । यद्दी॒दय॒च्छव॑स ऋतप्रजात॒ तद॒स्मासु॒ द्रवि॑णं धेहि चि॒त्रम् । उ॒प॒या॒मगृ॑हीतोऽसि॒ बृह॒स्पत॑ये त्वै॒ष ते॒ योनि॒र्बृह॒स्पत॑ये त्वा ॥ ३ ॥

**उ०** बृहस्पते अति । बृहस्पतिसवेऽनया त्रिष्टुभा बृहस्पतिदेवतया ग्रहो गृह्यते । गृत्समदस्यार्षम् बृहस्पतेर्वा । हे बृहस्पते, अतिशयेन यत् द्रविणं धनम् । अर्य ईश्वरः । अर्यशब्दः स्वामिन्यन्तोदात्तः वैश्ये आद्युदात्तः । अर्हात् पूजयेत् । यच्च द्युमद्विभाति द्युमत् द्युतिमत् विभाति भासते । क्रतुमज्जनेषु यच्च क्रतुमत् यज्ञवत् जनेषु विभातीत्यनुवर्तते । यत् दीदयत् शवसा यच्च दीप्यते शवसा बलेन । रक्षितारोऽपि यस्य सन्तीत्यभिप्रायः । हे ऋतप्रजात ऋतात्सत्याद्विनाशिनः प्रजायत इति ऋतप्रजातः तत्संबुद्धौ हे ऋतप्रजात, तत् द्रविणम् अस्मासु धेहि स्थापय । चित्रं नानारूपम् । उपयाम गृहीतोसि बृहस्पतये त्वा । एष ते योनिर्बृहस्पतये त्वा । स्थापनमन्त्रः ॥ ३ ॥

**म०** ब्रह्मदेवत्या त्रिष्टुप् गृत्समददृष्टा । बृहस्पतिसवे बार्हस्पत्यग्रहणेऽस्याः सोपयामाया विनियोगः । ऋतात् सत्यात् हे ऋतप्रजात, ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य ऋतप्रजातः । हे बृहस्पते बृहतां वेदानां पते पालक, चित्रं नानाविधं तत् द्रविणमस्मासु यजमानेषु धेहि धारय स्थापय देहीत्यर्थः । तत्किम् । अर्यः स्वामी यद्धनमर्हति पूजयति । 'लेटोडाटौ' ( पा० ३ । ४ । ९४ ) इत्याडागमः । 'अर्यः स्वामिवैश्ययोः' ( पा० ३ । १ । १०३ ) इत्यर्यशब्दः स्वामिन्यन्तोदात्तः वैश्ये आद्युदात्तः । ईश्वरयोग्यं धनं देहीत्यर्थः । यद्धनं जनेषु लोकेषु विभाति विविधं शोभते । कीदृशं धनम् । द्युमत् द्यौः कान्तिरस्यास्तीति द्युमत् 'दिव उत्' ( पा० ६ । १ । १३१ ) इत्युकारः । क्रतुमत् क्रतवो यज्ञा विद्यन्ते येन तत् । येन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः । यत् धनं शवसा बलेन दीदयत् दापयति प्रापयति वा धनान्तरम् तद्धनं देहीत्यर्थः । 'दय दानगतिहिंसादानेषु' अस्माण्णिजन्ताल्लुङि रूपम् । अडभाव आर्षः । उपयामेन पात्रेण गृहीतोऽसि बृहस्पतयेऽर्थाय त्वा गृह्णामि । स्थापयति एष ते योनिः स्थानम् । बृहस्पतये त्वां सादयामि ॥ ३ ॥

## चतुर्थी ।

इन्द्र॒ गोम॑न्नि॒हाया॑हि॒ पिबा॒ सोम॑ᳬ शतक्रतो । वि॒द्यद्भि॒र्ग्राव॑भिः सु॒तम् । उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा॒ गोम॑त ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा॒ गोम॑ते ॥ ४ ॥

**उ०** इन्द्र गोमन् । द्वाभ्यां गायत्रीभ्यामिन्द्राय गोमते ग्रहो गृह्यते गोसवे । आदित्यस्यार्षं याज्ञवल्क्यस्य वा । हे इन्द्र गोमन् गोभिः स्तुतिभिर्वा संयुक्त, इह यज्ञे आयाहि आगच्छ । एत्य च पिब सोमम् । हे शतक्रतो बहुकर्मन् । कथंभूतं सोमम् । विद्यद्भिर्ग्रावभिः सुतम् 'दो अवखण्डने' अस्य शतरि । विद्यन्तः ते विद्यद्भिः विशेषेणावखण्डयद्भिः ग्रावभिः सुतमभिषुतं सोमम् । उपयामगृहीतोसीन्द्राय त्वा गोमते गृह्णामि । एष ते योनिरिन्द्राय त्वा गोमते सादयामि ॥ ४ ॥

**म०** द्वे इन्द्रदेवत्ये गायत्र्यौ, रम्याक्षिदृष्टे गोसवे यज्ञे ग्रहग्रहणे नियुक्ते सोपयामे । शतं क्रतवः कर्माणि यस्य स शतक्रतुः हे शतक्रतो हे इन्द्र, हे गोमन् गावो धेनवः स्तुतयः किरणा वा विद्यन्ते यस्य स गोमान् । त्वमिह यज्ञे आयाहि आगच्छ । सोमं च पिब । 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति दीर्घः । कीदृशं सोमम् । ग्रावभिः सुतमश्मभिरभिषुतम् । कीदृशैर्ग्रावभिः । विद्यद्भिः विशेषेण द्यन्ति खण्डयन्ति ते विद्यन्तः तैः । 'दो अवखण्डने' दिवादित्वाच्छ्यन् शतरि 'ओतः श्यनि' ( पा० ७ । ३ । ७१ ) इत्योकारलोपः । उपयाम० गोमते इन्द्राय त्वां गृह्णामि । सादयति एष ते० ॥ ४ ॥

## पञ्चमी ।

इन्द्राया॑हि वृत्रह॒न्पिबा॒ सोम॑ᳬ शतक्रतो । गोम॑द्भि॒र्ग्राव॑भिः सु॒तम् । उ॒प॒या॒मगृ॑हीतो॒सीन्द्रा॑य त्वा॒ गोम॑त ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा॒ गोम॑ते ॥ ५ ॥

**उ०** इन्द्रायाहि । हे इन्द्र, आगच्छ । हे वृत्रहन् वृत्रस्य हन्तः, एत्य च सोमं पिब । हे शतक्रतो बहुकर्मन् । कथंभूतं सोमम् । गोमद्भिः स्तुतिमद्भिः । माध्यसंयुतैर्वा अंशुवचनो वा गोशब्दः । ग्रावभिः सुतमभिषुतम् । उपयामेति व्याख्यातम् ॥ ५ ॥

**म०** वृत्रं दैत्यं हन्ति वृत्रहा । शतं क्रतवो मखा यस्य स शतक्रतुः । हे वृत्रहन् हे शतक्रतो, हे इन्द्र, त्वमायाहि आगच्छ सोमं च पिब । कीदृशं सोमम् । ग्रावभिः सुतम् । कीदृशैर्ग्रावभिः । गोमद्भिः गौः स्तुतिर्विद्यते येषां ते गोमन्तस्तैः । उप० एष ते व्याख्याते ॥ ५ ॥

## षष्ठी ।

ऋ॒तावा॑नं वैश्वान॒रमृ॒तस्य॒ ज्योति॑ष॒स्पति॑म् । अज॑स्रं घ॒र्ममी॑महे । उ॒प॒या॒मगृ॑हीतोऽसि वैश्वान॒राय॑ त्वै॒ष ते॒ योनि॒र्वैश्वान॒राय॑ त्वा ॥ ६ ॥

उ० ऋतावानम्। तिस्रो वैश्वानरीयाः पुरोरुचः गायत्री-त्रिष्टुप्गायत्र्यः। अधस्तन एव ऋषिः। ऋतावानं सत्यव्रतं यज्ञवन्तमुदकवन्तं वा वैश्वानरम्। ऋतस्य वा उदकस्य यज्ञस्य सत्यस्य वा ज्योतिषश्च पतिम्। अथवा ऋतस्य सर्वगतस्य ज्योतिषः पतिमधिपतिम्। अजस्रं अनुपक्षीणं घर्मम् अक्षरणं दीप्तं वा ईमहे याचामहे। आयज्ञसमाप्तिमिति शेषः। सामर्थ्यात्। उपयामेति व्याख्यातम्॥ ६॥

म० तिस्रो वैश्वानरीयाः पुरोऽनुवाक्याः। आद्या गायत्री प्रदुराक्षिदृष्टा। वयं वैश्वानरमीमहे याचामः। यज्ञसमाप्तिमिति शेषः। ईमहे याञ्चाकर्मसु पठितः। कीदृशं वैश्वानरम्। ऋतवानम् ऋतं सत्यं यज्ञो जलं वास्यास्ति ऋतवा तम् 'छन्दसीवनिपौ वाच्यौ' (पा० ५।२।१०९। वा० २) इत्यस्त्यर्थे वन्प्रत्ययः संहितायामृतस्य दीर्घः। ऋतस्य सत्यस्याविनाशिनो ज्योतिषः तेजसः पतिं पालकम्। तेजोऽधिष्ठानमित्यर्थः। अजस्रं न जस्यति नश्यति अजस्रस्तमनुपक्षीणम् 'जसु हिंसायाम्' 'नमिकम्पि-' (पा० ३।२।१६७) इति रप्रत्ययः। घर्मं 'घृ क्षरणदीप्त्योः' जिघर्ति क्षरति जलं घर्मस्तम् दीप्तं वा। उपया० वैश्वानराय त्वां गृह्णामि। एष ते० सादयामि॥ ६॥

## सप्तमी।

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः। इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण। उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा॥ ७॥

उ० वैश्वानरस्य सुमतौ। द्वितीयः पादः पूर्वं व्याख्यायते। यः वैश्वानरः राजा दीप्तः। हिकमिति निपातसमाहारोऽनर्थः। यश्च वैश्वानरः भुवनानां भूतजातानामभिश्रीः अभ्याश्रयणीयः सर्वोपकारसामर्थ्यात्। यश्च इतो जातः इतोऽरणितः कुतश्चिद्वा उत्पन्नः सन् विश्वमिदं सर्वमिदं विचष्टे अभिविपश्यति। यथा द्रष्टव्यं कर्मानुरूपेण यश्च वैश्वानरः यतते स्पर्धते। सूर्येण सह स्वकीयदीप्त्या तस्य वैश्वानरस्य सुमतौ कल्याणमतौ वयं स्यामेति प्रार्थना। उपयामेति समञ्जसम्॥ ७॥

म० त्रिष्टुप् कुत्सदृष्टा। वैश्वानरस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेम। कं निपातः पादपूरणः। हि यस्माद्धेतो-र्वैश्वानरः इतोऽरणितो जातः उत्पन्नः सन् इदं विश्वं सर्वं विचष्टे कर्मानुरूपं पश्यति। सूर्येण सह यतते स्पर्धते च। सूर्यसमतेजा इत्यर्थः। कीदृशोऽग्निः। राजा राजते दीप्यते राजा। भुवनानां भूतजातानामभिश्रीः आश्रयणीयः। अभि समन्तात् श्रीयते सेव्यतेऽभिश्रीः। कर्मणि क्विप्। उप० एष ते उक्ते॥ ७॥

## अष्टमी।

वैश्वानरो न ऊतय आ प्रयातु परावतः। अग्निरुक्थेन वाहसा। उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा॥ ८॥

उ० वैश्वानरो नः वैश्वानरोऽग्निः नोऽस्मान् ऊतये अवनाय पालनाय आप्रयातु आगच्छतु। परावतः दूरात्। यो हि दूरादागच्छेत् आगच्छेदप्यसौ समीपादित्यभिप्रायः। केन आप्रयातु। उक्थेन स्तोमेन। वाहसा वाहनभूतेन। अन्यत्रापि स्तोमो वाहन इत्युच्यते। वाहिष्ठो वाहनः स्तोम इति। उपयामेति समानम्॥ ८॥

म० गायत्री। नोऽस्माकमूतयेऽवनाय परावतः दूरदेशाद्वैश्वानरः आ प्रयातु आगच्छतु। केन। वाहसा वाहनभूतेन। उक्थेन स्तोमेन 'वाहिष्ठो वाहनानां स्तोमो दूतो हुवं नरा' इति श्रुत्यन्तरे स्तोमस्य वाहनत्वमुक्तम्। उप० एष० उक्ते॥ ८॥

## नवमी।

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम्। उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे॥ ९॥

उ० अग्निर्ऋषिः। आग्नेयी गायत्री पुरोरुक्। ऋषिरुक्तः। यः अग्निः ऋषिः द्रष्टा मन्त्राणाम्। पवमानः इतश्चेतश्च गच्छन्। पाञ्चजन्यः पञ्चजनेभ्यो हितः। चत्वारो वर्णा निषादपञ्चमाः पञ्चजनाः। तेषां हि यज्ञेऽधिकारोऽस्ति। पुरोहितः पुर एनं दधाति यज्ञं कुर्वाणाः। तम् ईमहे याचामहे। महागयं महान्तं गृहम्। महत्त्वं च गृहस्य द्रव्यनिबन्धनम्। उपयामगृहीतोस्यग्नये त्वा वर्चस इति व्याख्यातम्॥ ९॥

म० अग्निदेवत्या गायत्री वसिष्ठभरद्वाजदृष्टा पुरोरुक्। महान् गयः स्तुतिर्यस्य स महागयो महागृहरूपो वा तमग्निं वयमीमहे याचयामः। तं कम्। योऽग्निर्ऋषिः मन्त्रद्रष्टा। पवमानः 'पव गतौ' पवत इतस्ततो गच्छति पवमानः। यद्वा 'पूङ् शोधने' पवते शोधयति पवमानः। पाञ्चजन्यः पञ्चजनेभ्यो हितः। विप्राद्यश्चत्वारो वर्णा निषादश्चेति पञ्चजनास्तेषां यज्ञाधिकारात्। पुरोहितः पुरोऽग्रे हितः स्थापितः दधातेर्निष्ठा। उप० वर्चसे तेजोरूपायाग्नये त्वां गृह्णामि। एष०॥ ९॥

## दशमी।

महाँ २॥ इन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु। हन्तु पाप्मानं योऽस्मान्द्वेष्टि। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा॥ १०॥

**उ०** महाँ इन्द्रः। माहेन्द्री पुरोरुक् गायत्री। उक्तमार्षम्। महान् इन्द्रः वज्रहस्तः। षोडशी पञ्चप्राणाः पञ्चबुद्धीन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनः षोडशं एतल्लिङ्गं यस्य स षोडशीन्द्रः। पञ्चदशो वा वज्रश्चेन्द्रश्च षोडशी वज्रस्य। शर्म शरणं यच्छतु ददातु। हन्तु च पाप्मानं ब्रह्महत्यादिकम्। यश्चास्मान् द्वेष्टि तं च हन्तु। यं च वयं द्विष्मः तं च हन्तु। उपयामेति समानम् ॥ १० ॥

**म०** महेन्द्रदेवत्या गायत्री वसिष्ठकृता पुरोरुक्। इन्द्रः शर्म सुखं यच्छतु ददातु। योऽस्मान् द्वेष्टि तं च पाप्मानं पापिष्ठं हन्तु नाशयतु। यद्वास्मद्द्वेष्टारं पाप्मानं च पापं ब्रह्महत्यादिकं हन्तु। 'अस्त्री पङ्कं पुमान्पाप्मा' इत्यमरः। कीदृश इन्द्रः। महान् श्रेष्ठः वज्रहस्तः वज्रं हस्ते यस्य सः। षोडशी पञ्च प्राणा दशेन्द्रियाणि मनश्चेति षोडशपदार्था लिङ्गशरीररूपा यस्य स षोडशी। आत्मरूप इत्यर्थः। उप० एष० उक्त ॥ १० ॥

## एकादशी।

तं वो॑ द॒स्ममृ॑ती॒षहं॒ वसो॑र्मन्दा॒नमन्ध॑सः। अ॒भि व॒त्सं न स्वस॑रेषु धे॒नव॒ इन्द्रं॑ गी॒र्भिर्न॑वामहे ॥ ११ ॥

**उ०** तं वः ऐन्द्री बृहती। जपस्वाध्यायादिषु विनियोगः। आदित्यस्यार्षं याज्ञवल्क्यस्य वा आ अध्यायपरिसमाप्तेः। हे ऋत्विग्यजमानाः, तमिन्द्रं गीर्भिर्वाग्भिः स्तुतिलक्षणाभिः। नवामहे 'णु स्तुतौ' अभिष्टुमः। किमर्थम्। वः युष्मभ्यं दास्यतीति। कथंभूतमिन्द्रम्। दस्मं दर्शनीयम्। प्रियवादिनं कार्यसाधकं च। ऋतीषहम् ऋती गतिः गतिमात्रेण शत्रुं सहत इत्यृतीषाट् तमृतीषहम्। वसोर्मन्दानमन्धसः। वसोर्वासयितुः सोमस्य स्वकीयेनैकदेशेन मन्दानं माद्यन्तम् अन्धसः अध्यापनीयस्य चान्नस्य स्वकीयेनैवांशेन माद्यन्तम्। कथमिव नवामहे। वत्सं न स्वसरेषु धेनवः। नकार उपमार्थीयः। वत्समिव। स्वसरेषु स्वयमेव सरन्ति येषु तानि स्वसराण्यहानि तेषु स्वसरेषु अहस्सु। धेनवः यथा नवप्रसूता धेनवः दिनेषु अतिहार्दात् वत्सं शब्दैराश्वासयेयुः एवं वयमप्यतिसौहार्देनेन्द्रं गीर्भिर्नवामह इति समस्तार्थः ॥ ११ ॥

**म०** इन्द्रदेवत्या पथ्या बृहती नोधागोतमदृष्टा स्वाध्यायादिषु नियुक्ता। आदित्ययाज्ञवल्क्ययोरार्षमाध्यायात्। हे यजमानाः, तमिन्द्रं वयं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः अभिनवामहे सम्यक् स्तुमहे 'नु स्तुतौ' व्यत्ययेन शप्। किंभूतमिम्। वो युष्माकं दस्मं दर्शनीयम् 'दस दर्शने' मप्रत्ययः। ऋतीषहम् 'ऋ गतौ' क्तिन्प्रत्ययः। ऋत्या गत्या सहतेऽभिभवति शत्रूनिति ऋतिषट् तम् 'पूर्वपदाच्च' (पा० ८। ३। १०६) इति षत्वम्। संहितायां दीर्घः। वसोः वासयितुः स्थितिहेतुभूतस्यान्धसोऽन्नस्य। षष्ठी तृतीयार्थे। अन्नेन मन्दानं मोदमानम् 'मदिङ् स्वप्ने जाड्ये मदे मोदे स्तुतौ गतौ' इति धातोः शानच्प्रत्ययेन शपो लुक्। दृष्टान्तमाह। वत्सं न नकार इवार्थः। स्वसरेषु स्वेनैवात्मनैव सरन्ति प्रसरन्ति किरणा येषु ते स्वसरा दिवसाः तेषु। यथा धेनवो नवप्रसूता गावो वत्सं नुवन्ति स्तुवन्ति। शब्दैराह्वयन्तीत्यर्थः। तद्वद्वयमिन्द्रं स्तुमः ॥ ११ ॥

## द्वादशी।

यद्वाहि॑ष्ठं॒ तद॒ग्नये॑ बृ॒हद॑र्च विभावसो। महि॑षीव॒ त्वद्र॒यिस्त्वद्वाजा॒ उदी॑रते ॥ १२ ॥

**उ०** यद्वाहिष्ठम्। आग्नेय्यनुष्टुप्। हे उद्गातः, यत् वाहिष्ठं वोढृतमं बृहत्साम तत् अग्नये अर्थाय अर्च गाय। ततो दृष्ट्वाग्निं ब्रूहि। हे विभावसो विभूतधन अग्ने, महिषीव त्वद्रयिः महिषी प्रथमवित्ता। यथा प्रथमपत्नी धर्मार्थकामात्मिका उदीरते उत्तिष्ठति सुखात्मिका भवति एवं त्वद्रयिः सुखात्मिका उदीरते उत्तिष्ठति। अथवा महिषी यथा सर्वान्भोगान् उदीरते उत्क्षिपति परोपकाराय। एवं त्वत्तो रयिः उदीरते त्वत्तश्च वाजा अन्नानि उदीरते उद्गच्छन्ति परोपकाराय ॥ १२ ॥

**म०** अग्निदेवत्यानुष्टुब् वसूयुदृष्टा। हे उद्गातः, अग्नये अग्न्यर्थं तत् बृहत्साम अर्च गाय बृहत्साम्नो गानं कुरु। तत्किम्। यत् वाहिष्ठम् वाहयति प्रापयति इष्टमिति वाहयितृ। वहेर्ण्यन्तात् तृच्। अत्यन्तं वाहयितृ वाहिष्ठम् 'अतिशायने तमबिष्ठनौ' (पा० ५। ३। ५५) इत्यनुवृत्तौ 'तुश्छन्दसि' (पा० ५। ३। ५९) इति इष्ठनि परे 'तुरिष्ठेमेयःसु' (पा० ५। ४। १५४) इति च तृचो लोपे वाहिष्ठमिति रूपम्। किंच सामगानेन प्रत्यक्षमग्निं ब्रूहि। किम्। हे विभावसो, विभा कान्तिरेव वसु धनं यस्य स विभावसुः हे अग्ने, रयिः धनं वाजा अन्नानि च त्वत् त्वत्तः सकाशात् उदीरते उद्गच्छन्ति। 'ईर गतौ कम्पे च' लट् शपो लुक् 'अदभ्यस्तात्' (पा० ७।१।४) इत्यदादेशः। तत्र दृष्टान्तः। महिषीव यथा महिषी प्रथमपरिणीता स्त्री गृहात् भोगार्थं पतिं प्रति उदीर्तें उद्गच्छति। एकं त्वत्पदं पादपूरणम्। रयिः त्वदुदीर्ते इति वा ॥ १२ ॥

## त्रयोदशी।

एह्यूषु ब्रवा॑णि॒ तेऽग्न॑ इ॒त्थेत॑रा॒ गिरः॑। ए॒भिर्व॑र्धास॒ इन्दु॑भिः ॥ १३ ॥

**उ०** एहि। आग्नेयी गायत्री अधस्तनमन्त्रस्तुतोऽग्निरिह संबोध्यते। एहि आगच्छ हे अग्ने। ऊकारोऽनर्थकः। को हेतुरिति चेत्। सुब्रवाणि साधुब्रवाणि ते तव हे भगवन्नग्ने, इत्थेतरा इत्थं त्वदीयैर्नामबन्धकर्मरूपैर्ग्रथिता इतराः स्तुतिलक्षणाः गिरो वाचः। यद्वा इत्थमुद्गातृस्तोत्रजनिताः इतरा अन्या गिरो

या गीयन्ते । हेतुं न्यस्यति । एभिश्च इन्दुभिः अध्वर्युणाभिषुतैः सोमैः त्वं वर्धासे वर्धस्व ॥ १३ ॥

म० अग्निदेवत्या गायत्री भरद्वाजदृष्टा । हे अग्ने, त्वमेहि आगच्छ । उ पादपूरणः । सुभि चेति संहितायामुकारस्य दीर्घः । इत्था इत्थमनेन प्रकारेण न इतराः अन्याः गिरो वाणीः स्तुतिलक्षणाः ते तव सुब्रवाणि सुतरां वदानि । ब्रूञो लोट् । किंच एभिरिन्दुभिः सोमैः वर्धासे वर्धस्व 'लेटोऽडाटौ' ॥ १३ ॥

## चतुर्दशी ।

ऋतवस्ते यज्ञं वितन्वन्तु मासा रक्षन्तु ते हविः। संवत्सरस्ते यज्ञं दधातु नः प्रजां च परिपातु नः ॥ १४ ॥

उ० ऋतवस्ते यजमानेनाग्निरुच्यते अनया बृहत्या । ऋतवः ते तव यज्ञं वितन्वन्तु । मासाश्च ते हविः रक्षन्तु । संवत्सरश्च तव यज्ञं दधातु धारयतु । नः इति निपातोऽनर्थकः । प्रजां च परिपातु नः इति यजमान आत्मानमाह । नोऽस्माकं प्रजां च परिपातु संवत्सर एव ॥ १४ ॥

म० अग्निदेवत्या बृहती वर्णपादा विषमपादा । नवकाष्टकैकादशाष्टिनो विषमपादेति वचनात् । हे अग्ने, ऋतवः ऋतूपलक्षिताः कालविशेषाः ते तव यज्ञं वितन्वन्तु विस्तारयन्तु । मासाः चैत्राद्यधिष्ठातारो देवास्ते तव हविः पुरोडाशादिकं रक्षन्तु पान्तु । संवत्सरस्तदधिष्ठाता देवः ते तुभ्यं त्वदर्थं नोऽस्माकं यज्ञं दधातु पुष्णातु । नोऽस्माकं प्रजां पुत्रादिकां च परिपातु रक्षतु संवत्सर एव ॥ १४ ॥

## पञ्चदशी ।

✓उपह्वरे गिरीणाꣳ संगमे च नदीनाम् । धिया विप्रो अजायत ॥ १५ ॥

उ० उपह्वरे गिरीणाम् । चतस्रो गायत्र्यः सौम्यः । उपह्वरे निकटे गिरीणां पर्वतानाम् । प्रसिद्धमेतत् । एकाहाहीनसत्राणि क्रियन्तामित्यनया धिया बुद्ध्या विप्रः मेधावी सोमः अजायत जगद्धारयितुमिच्छन् ॥ १५ ॥

म० सोमदेवत्या गायत्री वत्सदृष्टा । गिरीणां पर्वतानामुपह्वरे निकटे नदीनां गङ्गादीनां च संगमे विप्रो मेधावी सोमः अजायत उत्पन्नः । जनेर्लङ् । कया । धिया बुद्ध्या विप्रादयो मया यज्ञं करिष्यन्तीति विचार्येत्यर्थः ॥ १५ ॥

## षोडशी ।

उच्चा ते जातमन्धसो दिवि सद्भूम्याददे । उग्रꣳ शर्म महि श्रवः ॥ १६ ॥

उ० उच्चा ते । व्यवहितपदप्रायो मन्त्रः । हे सोम, ते तव अन्धसः अध्यानीयात् रसीभूतात् । जातमुत्पन्नं यज्ञपरिणामभूतम् उच्चा उच्चैः । दिवसत् द्युलोके विद्यमानम् । पश्चात् भूमिः आददे गृहीतवती । किं तत् द्युलोकप्राप्तं भूमिराददे । उग्रम् उद्गूर्णं महाचौरादिभिरनाधृष्यम् शर्म शरणं गृहम् । महिश्रवः महच्च श्रवणीयं धनम् । पञ्चाहुतिपरिणामोद्घाटनमात्रमेतत्कृतम् । यथाहुतिः प्रथमं दिवि गच्छति ततोऽन्तरिक्षे जलरूपेण ततो भूमावन्नरूपेण ततो नरे रेतोरूपेण ततो योनौ पुरुषरूपेणेति पञ्चधाहुतिपरिणामः ॥ १६ ॥

म० सोमदेवत्यास्तिस्रो गायत्र्य आमहीयवदृष्टाः । हे सोम, ते तव अन्धसोऽन्नाद्रसरूपात् जातमुत्पन्नं होमतो जातमपूर्वम् । उच्चा उच्चं गतं दिवि स्वर्गे सत् विद्यमानं भूमिः आददे गृह्णाति । भूमिशब्दस्य विसर्गलोपे सन्धिश्छान्दसः । किं तत् द्युलोकस्थं भूमिर्गृह्णाति तदाह । उग्रमुत्कृष्टं शर्म सुखं गृहपुत्रादिजन्यं महि महत् श्रवः कीर्तिर्धनं वा । अनेन मन्त्रेण पञ्चाहुतिपरिणाम उक्तः । स यथा हुताहुतिरादौ दिवि गच्छति ततोऽन्तरिक्षे जलरूपेण ततो भूमावन्नरूपेण ततो नरे रेतोरूपेण ततो योनौ नररूपेणागत्य तं नरं धनयशोभ्यां सुखिनं करोतीति भावः ॥ १६ ॥

## सप्तदशी ।

स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित्परिस्रव ॥ १७ ॥

उ० स नः । यस्त्वं वरिवोवित् वरिवो धनम् तद्विन्दति वेत्ति वा योसौ वरिवोवित् यस्त्वं धनस्य लब्धा वेदिता वा । सः नः सोऽस्माकं यज्ञम् इन्द्राय यज्यवे यष्टव्याय वरुणाय च मरुद्भ्यश्चार्थाय । परिस्रव रक्ष । अथवा स त्वं नः यज्ञम् इन्द्राय यज्यवे वरुणाय मरुद्भ्यश्च वरिवोविदिति एतेषां विशेषणं कृतविभक्तिव्यत्ययं गृह्यते सामानाधिकरण्यात् । वरिवोविद्भ्यः धनविद्भ्यः परिस्रव । क्रियाविशेषणं वा । एतेभ्यो देवेभ्यः परिस्रव । तथाच परिस्रव यथा वरिवोविद्भवति ॥ १७ ॥

म० हे सोम, स त्वं नोऽस्माकं परिस्रव क्षर । रसरूपो भूत्वाहुतित्वमेहीत्यर्थः । किमर्थम् । इन्द्राय वरुणाय मरुद्भ्यश्च इन्द्रादीनां तृप्तये परिस्रवेत्यर्थः । कीदृशायेन्द्राय । यज्यवे यष्टुं योग्यो यज्युस्तस्मै यष्टव्याय । इदं त्रयाणां विशेषणम् । यज्युभ्य इति मरुताम् । कीदृशस्त्वम् । वरिवोवित् वरिवो धनं वेत्ति जानाति विन्दति लभते वा वरिवोवित् धनस्य ज्ञाता प्रापकश्च ॥ १७ ॥

## अष्टादशी ।

एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥ १८ ॥

उ० एना विश्वानि । एना एनानि विश्वानि सर्वाणि

द्युम्नानि धनानि। अर्य ईश्वरः सोमः आ आदाय अस्मभ्यं ददात्विति शेषः। तानि च सोमदत्तानि। सिषासन्तः। 'षणु दाने'। अस्य सन्यनुनासिकस्याकारः। दातुमिच्छन्तः दानाभिमुखीभूताः सन्तो वयं धनानि वनामहे संभुञ्ज्महे ॥ १८ ॥

**म०** अर्यः ईश्वरः सोमः एना एनानि विश्वानि सर्वाणि मानुषाणां नराणां द्युम्नानि धनानि यशांसि वा आनयत्विति शेषः। अस्मभ्यं ददात्वित्यर्थः। तानि सोमदत्तानि द्युम्नानि वयं वनामहे 'वन संभक्तिशब्दयोः' लट्। संभजामहे। कीदृशा वयम्। सिषासन्तः 'षणु दाने' सनितुं दातुमिच्छन्ति सिषासन्ति ते सिषासन्तः। सनेर्धातोः सन्नन्ताच्छतृप्रत्ययः 'जनसनखनां सञ्झलोः' (पा० ६।४।४२) इत्यात्वम् 'सन्यतः' (पा० ७।४।७९) इति अभ्यासेकारः। दानं कुर्वाणा धनभाजः स्यामेत्यर्थः ॥ १८ ॥

## एकोनविंशी।

अनु॑ वी॒रैरनु॑ पुष्यास्म॒ गोभि॒रन्वश्वै॒रनु॒ सर्वे॑ण पु॒ष्टैः। अनु॒ द्विप॒दानु॒ चतु॑ष्पदा व॒यं दे॒वा नो॑ य॒ज्ञमृ॒तुथा न॑यन्तु ॥ १९ ॥

**उ०** किमर्थं धनमतो दातुमिच्छन्तो धनवन्त इत्याह। अनुवीरैः। आशीर्देवता त्रिष्टुप्। अनु पुष्यास्म वीरैः वयम् अनु पुष्यास्म च गोभिः वयम्। अन्वश्वैः अनु पुष्यास्म च वयमश्वैः। अनु सर्वेण पुष्टैः। अनुपुष्यास्म च वयं सर्वेण पुष्टेनेति वचनव्यत्ययः। अनु द्विपदा अनुपुष्यास्म च वयं द्विपदा द्विपादेन अनु पुष्यास्म च चतुष्पादेन। किंच। देवाः नोऽस्माकं यज्ञम् ऋतुथा ऋतावृतौ कालेकाले नयन्तु ॥ १९ ॥

**म०** आशीरियं देवदेवत्या त्रिष्टुप् मुद्गलदृष्टा। वयं वीरैः पुत्रैः अनुपुष्यास्म पुष्टा भवेम। पुषेराशीर्लिङि उत्तमबहुवचनम्। गोभिर्धेनुभिः अनुपुष्यास्म उपसर्गावृत्त्या क्रियावृत्तिः। अश्वैरनु पुष्यास्म। सर्वेणान्येनापि कामेन पुष्यास्म। पुष्टैः सर्वपदार्थैर्गृहादिभिः पुष्यास्म। द्वौ पादौ यस्येति द्विपात् तेन द्विपदा मनुष्येण दासादिना चतुष्पदा गजादिना च पुष्यास्म 'पादोऽन्यतरस्याम्' (पा० ४।१।८) इत्यन्तलोपः 'पादः पत्' (पा० ६।४।१३०) इति पदादेशः। किंच ऋतुथा ऋतावृतौ कालेकाले देवा नोऽस्माकं यज्ञं नयन्तु प्रापयन्तु प्राप्नुवन्तु ॥ १९ ॥

## विंशी।

अग्ने॒ पत्नी॑रि॒हाव॑ह दे॒वाना॑मुश॒तीरुप॑। त्वष्टा॑रꣳ सोम॑पीतये ॥ २० ॥

**उ०** अग्ने पत्नीः। इत उत्तरं पञ्च नेष्टुर्याज्याः। आद्या गायत्री। देवानां पत्न्यः त्वष्टा च देवता। हे अग्ने, देवानां पत्नीः इहास्मिन्यज्ञे उपावह आगमय। कथंभूताः। उशतीः कामयमानाः अस्मान्। त्वष्टारं च उपावह। किमर्थम्। सोमपीतये सोमपानाय ॥ २० ॥

**म०** अग्निदेवत्या गायत्री मेधातिथिदृष्टा। इतः पञ्च ऋचोऽग्निष्टोमे नेष्टुर्याज्याः। आद्या प्रातःसवने नेष्टृचमसयागे याज्या। हे अग्ने, देवानां पत्नीः इह यज्ञे त्वमुपावह आगमय। कीदृशीः पत्नीः। उशतीः हविःकामयमानाः। वशेः शत्रन्तात् 'उगितः–' (पा० ४।१।६) इति ङीप्। किंच सोमपीतये सोमपानाय त्वष्टारं देवं चोपावह ॥ २० ॥

## एकविंशी।

अ॒भि य॒ज्ञं गृ॑णीहि नो॒ ग्नावो॒ नेष्टः॒ पिब॑ ऋ॒तुना॑। त्वꣳ हि र॑त्न॒धा असि॑ ॥ २१ ॥

**उ०** अभि यज्ञम्। द्वे गायत्र्यौ ऋतुग्रहाणां याज्ये। नेष्टा स्वकीयामधिष्ठात्रीं देवतां ब्रवीति। अभिगृणीहि स्तुहि यज्ञं नोऽस्मत्संबन्धिनम्। हे ग्नावः ग्नाः पत्न्यः ता विद्यन्तेऽस्य स ग्नावान् तत्संबोधनं हे ग्नावः। 'मतुवसो रुः संबुद्धौ छन्दसि' इति रुत्वम्। हे नेष्टः, पिब च ऋतुना कालेन सह। कस्मात्त्वमेवमुच्यसे इतिचेत्तत्राह। त्वं हि रत्नधा असि। यस्मात्त्वमेव रमणीयानां धनानां दातासि ॥ २१ ॥

**म०** द्वे ऋतुदेवते गायत्र्यौ मेधातिथिदृष्टे ऋतुयागे नेष्टुर्याज्ये। ग्नाः पत्न्योऽस्य सन्तीति ग्नावा। 'तदस्यास्ति–' (पा० ५।२।९४) इति मतुप्। 'मादुपधायाः–' (पा० ८।२।९) इति वत्वम्। तस्य संबोधनं हे ग्नावः पत्नीवन्, हे नेष्टः, नोऽस्माकं यज्ञमभिगृणीहि स्तुहि 'गॄ शब्दे' क्र्यादित्वात् श्ना 'ई हल्यघोः' (पा० ६।४।११३) इति तस्येकारः 'प्वादीनां ह्रस्वः' (पा० ७।३।८०) इति धातोर्ह्रस्वः। किंच ऋतुना देवेन सह पिब सोममिति शेषः। हि यस्मात् त्वं रत्नधा असि रत्नानि दधाति ददाति रत्नधाः रमणीयधनानां दातासि ॥ २१ ॥

## द्वाविंशी।

द्र॒वि॒णो॒दाः पि॑पीषति जु॒होत॒ प्र च॑ तिष्ठत। ने॒ष्ट्रादृ॒तुभि॑रिष्यत ॥ २२ ॥

**उ०** द्रविणोदाः। ऋत्विज उच्यन्ते। अयमग्निः द्रविणोदाः धनस्य बलस्य वा दाता। पिपीषति पातुमिच्छति। पिबतेः सनीकारः। सोममिति शेषः। एवंचेदतो ब्रवीमि। हे ऋत्विजः, जुहोत प्रच तिष्ठत जुहुत च प्रतिष्ठत च कर्मसु। किंच। नेष्ट्रात् नेष्ट्रियात् धिष्ण्यात् ऋतुभिः कालैः सह सोमम् इष्यत पुनःपुनः पिबत ॥ २२ ॥

**म०** द्रविणस्शब्दः सान्तो धनवाची। द्रविणो धनं ददाति द्रविणोदाः धनदाताग्निः। पिपीषति पातुमिच्छति सोममिति

शेषः । 'पीङ् पाने' अस्माद्दैवादिकात्सन्प्रत्ययः । अतो हे ऋत्विजः, यूयं जुहोत जुहुत प्रतितिष्ठत च । 'तप्तनप्-' (पा० ७।१।४५) इति तबादेशः । कर्मसूद्युक्ता भवतेत्यर्थः । किंच नेष्टुरिदं नेष्ट्रम् । वृद्ध्यभाव आर्षः । नेष्टुधिष्ण्यात् ऋतुभिः देवैः सह इष्यत सोमं प्रतिगच्छत । 'इष गतौ' दिवादिला-च्छ्यन् लोट् ॥ २२ ॥

## त्रयोविंशी ।

तवायꣳ सोमस्त्वमेह्यर्वाङ् शश्वत्तमꣳ सुमना अस्य पाहि । अस्मिन्यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र ॥ २३ ॥

उ० तवायम् । ऐन्द्री त्रिष्टुप् माध्यन्दिनीया । हे इन्द्र, यतः तवायं माध्यन्दिनीयः सोमः अतः अस्माभिः प्रार्थ्य-मानः त्वम् आ इहि आगच्छ । कथंभूतः । अर्वाङ् अर्वागञ्चनः अवरेणाञ्चितः । एत्य च शश्वत्तमं शाश्वतिकत-मम् सोमं सोमभागं गृहाण । संगृह्य च सुमना भूत्वा अस्य सोमस्य पाहि पिब । पीत्वा च अस्मिन्यज्ञे बर्हिषि निषद्य अवस्थानं कृत्वा दधिष्व धारयस्व । इमं जठरे इन्दुं सोमम् हे इन्द्र ॥ २३ ॥

म० इन्द्रदेवत्या त्रिष्टुप् विश्वामित्रदृष्टा । माध्यन्दिने सवने नेष्टृचमसयागे याज्या । हे इन्द्र, तव अयं सोमोऽस्ति । अतः अर्वाङ् अस्मदभिमुखः त्वमेहि आगच्छ । शश्वत्तमं सर्वकाल-मस्य पाहि । कर्मणि षष्ठी । इमं सोमं रक्ष 'पा रक्षणे' लोट् । कीदृशः त्वम् । सुमनाः शोभनं मनो यस्य सः प्रसन्नचित्तः । किंच अस्मिन् यज्ञे बर्हिषि आस्तृतदर्भेषु निषद्य उपविश्य इममिन्दुं सोमं जठरे उदरे दधिष्व धारय । 'धि धारणे' तुदादिः व्यत्ययेन शपः श्लुस्तङ् च । अभ्यासेकारस्याकार आर्षः ॥ २३ ॥

## चतुर्विंशी ।

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन । अथा मदस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥ २४ ॥

उ० अमेव नः । देवपत्न्यः त्वष्टा चात्र दृश्यन्ते । जगती तार्तीयसवनीया याज्या । अमाशब्दो गृहवचनः । यथा गृहाणि स्वानि एवं नः अस्माकं यज्ञगृहाणि । सुहवाः सा-ध्वाह्वानाः आहिगन्तन आगच्छत । हिः पादपूरणः । आगत्य च निबर्हिषि सदतन निषीदत उपविशत बर्हिषि । निषद्य च रणिष्टन रतिं कुरुत । अथ उपविष्टासु देवपत्नीषु । मन्दस्व तृप्यस्व । जुजुषाणः सेवमानः । अन्धसः सोमस्य स्वमंशम् । हे त्वष्टः, देवेभिर्देवैः जनिभिः जननहेतुभूताभिः देवपत्नीभिः सुमद्गणः सन् । शोभनमदा देवास्तेपां स्त्रीणां च गणः यस्य स सुमद्गणः ॥ २४ ॥

म० त्वष्टृदेवत्या जगती गृत्समददृष्टा । तृतीयसवने नेष्टृच-मसयागे याज्या । देवपत्न्यः प्रार्थ्यन्ते । अमाशब्दो गृहवा-चकः । अमेव स्वगृहमिव नोऽस्माकं यज्ञगृहाणि हे देवपत्न्यः, यूयमागन्तन आगच्छत । गमेः शपो लुक् लोटि मध्यमबहु-वचने । हि पादपूरणः । बर्हिषि दर्भे निसदतन निषीदत उपविशत । 'सद्लृ गतौ' रणिष्टन 'रण शब्दे' अस्य लुङि रूपम् अडागमाभावः । परस्परं वार्तां कुरुतेत्यर्थः । 'तप्तनप्-' (पा० ७।१।४५) इति सर्वत्र तनबादेशः । कीदृश्यो यूयम् । सुहवाः शोभनः सुकरो हव आह्वानं यासां ताः । एवं देवप-त्नीरुक्त्वाथ त्वष्टारमाह । हे त्वष्टः, त्वमथानन्तरं देवपत्नीष्वाग-तासु मदस्व मोदस्व तृप्यस्वेत्यर्थः । कीदृशस्त्वम् । अन्धसः अन्धः हविर्लक्षणमन्नं । जुजुषाणः सेवमानः । 'जुषी प्रीतिसेव-नयोः' व्यत्ययेन शानचि शपः श्लुः । अन्धसः इति कर्मणि षष्ठी । देवेभिः देवैः जनिभिः देवपत्नीभिश्च सुमद्गणः सुष्ठु माद्यन्ति हृष्यन्ति सुमदः । मदेः क्विप् । सुमदः सन्तुष्टा गणा देवाः स्त्रीगणाश्च यस्य स सुमद्गणः । जनयन्तीति जनयो नार्यः ॥ २४ ॥

## पञ्चविंशी ।

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ २५ ॥

उ० स्वादिष्ठया । सौम्यौ पावमान्यौ गायत्र्यौ । जपादिषु विनियोगः । उक्तं च । 'रसीभूतो यदा सोमः पवित्रात्क्ष-रति ग्रहम् । ऋग्भिः स्वादिष्ठयाद्याभिः पवमानः स उच्यते' । स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया पवस्व दशापवित्रात् द्रोणकलशं प्रति गच्छ । हे सोम धारया । यस्त्वम् इन्द्राय पातवे इन्द्रः पिबतु इत्यनेनाभिप्रायेण सुतः अभि-षुतोऽस्माभिः ॥ २५ ॥

म० सोमदेवत्ये द्वे गायत्र्यौ मधुच्छन्दोदृष्टे जपादिषु विनि-युक्ते । हे सोम, धारया कृत्वा पवस्व गच्छ दशापवित्राद्द्रोण-कलशं प्रति गच्छ । कीदृश्या धारया । स्वादिष्ठया स्वादो विद्यते यस्यां सा स्वादवती अत्यन्तं स्वादवती स्वादिष्ठा तया । 'विन्मतोर्लुक्' (पा० ५।३।६५) इतीष्ठनि मतुपो लुक् । स्वादुतमया । मदिष्ठया मदयति मदयित्री अत्यन्तं मदयित्री मदिष्ठा तया । इष्ठनि 'तुरिष्ठेमेयःसु' (पा० ६।४।१५४) इति तृचो लोपः । यत इन्द्राय पातवे इन्द्रस्य पातुं त्वं सुतो-ऽभिषुतोऽसि अस्माभिरतो धारया पवस्व ॥ २५ ॥

## षड्विंशी ।

रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ २६ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां षड्विंशोऽध्यायः ॥ २६ ॥

**उ०** रक्षोहा विश्वचर्षणिः । अयमेव सोमः रक्षोहा रक्षसामपहन्ता । विश्वचर्षणिः सर्वस्य जगतो द्रष्टा । यथार्हं प्रति । अभि आसदत आभिमुख्येन सन्तः सीदति वा । किमभ्यासदत् । योनिं स्थानम् । कथंभूताम् । अयोहते अयसा कृष्णलोहेन हतमुत्कीर्णं सोमभाजनीकृतम् । हतमिति विभक्तिव्यत्ययः योनिसामानाधिकरण्यात् । किंनामानं योनिम् । द्रोणे । अत्रापि विभक्तिव्यत्ययः । द्रोणं द्रोणकलशलक्षणम् । सधस्थं सहस्थानलक्षणं सोमानाम् ॥ २६ ॥

इति उवटकृतौ मन्त्रभाष्ये षड्विंशतितमोऽध्यायः ॥२६॥

**म०** सोमः द्रोणे । विभक्तिव्यत्ययः । द्रोणं द्रोणकलशलक्षणं योनिं स्थानमभि आसदत् आभिमुख्येन सीदति तिष्ठति । कीदृशः सोमः । रक्षोहा रक्षांसि हन्तीति रक्षोहा दुष्टनाशकः । विश्वचर्षणिः विश्वं सर्वं जगत् चष्टे पश्यति विश्वचर्षणिः । सर्वस्य शुभाशुभद्रष्टा । यद्वा चर्षणिरिति मनुष्यनामसु पठितम् । विश्वे सर्वे चर्षणयो मनुष्या ऋत्विग्यजमानलक्षणा यस्य कण्डनाहरणादिषु सः । तथा कीदृशं द्रोणम् । अयः 'सुपां सुलुक्' इति तृतीयैकवचनलोपः । अयसा लोहेन हतमुत्कीर्णम् । वास्या कृत्वा तक्षणा सोमभाजनीकृतम् हतमिति विभक्तिव्यत्ययः । तथा सधस्थं सह सार्धं तिष्ठन्ति सोमा यत्र स सहस्थः 'सुपि स्थः' ( पा० ३ । २ । ४ ) इति कप्रत्ययः । 'आतो लोपः' ( पा० ६ । ४ । ६४ ) इति आलोपः 'सधमादस्थयोश्छन्दसि' ( पा० ६ । ३ । ९६ ) इति सहस्य सधादेशः । असदत् 'पुषादि–' ( पा० ६ । १ । ५५ ) इति लुङि च्लेरङ् 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति लडर्थे लुङ् ॥ २६ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अनुक्तमन्त्रकथनः षड्विंशोऽध्याय ईरितः ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

### तत्र प्रथमा ।

समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या । सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्रः ॥ १ ॥

**उ०** समास्त्वा । आग्निकोऽध्यायः । सामिधेन्यो नव त्रिष्टुभः आग्नेय्योऽग्निना दृष्टाः । प्राक्पीवोन्नाया ऋषिरग्निः कर्माङ्गभूतमग्निं स्तौति । समाशब्दो मासवचनः संवत्सर इति शब्दोपादानसामर्थ्यात् । समाः मासाश्च त्वां हे अग्ने, ऋतवश्च वर्धयन्तु । संवत्सराश्च ऋषयश्च सप्त ऋषयो मन्त्रद्रष्टारो वा प्राणा वा । यानि च सत्या सत्यानि आर्षा मन्त्राः त्वां वर्धयन्त्वित्यनुवर्तते । त्वमप्येतैर्वर्धमानः संदिव्येन दीदिहि रोचनेन । संदीदिहि संदीप्यस्व दिव्येन दिविभवेन रोचनेन दीप्त्या । किंच विश्वाः सर्वा आभाहि दीपय दिशः प्रदिशश्च चतस्रः आभाहि ॥ १ ॥

**म०** अयमध्यायः पञ्चचितिकस्याग्नेः संबन्धी प्रजापतिदृष्टः । नव ऋचोऽग्निदेवत्यास्त्रिष्टुभोऽग्निना दृष्टाः इष्टकापशौ समिध्यमानसमिद्धयोरन्तराले आसां विनियोगः । अग्निर्ऋषिः कर्माङ्गभूतमग्निं स्तौति । हे अग्ने, एते त्वा त्वां वर्धयन्तु । के समा मासाः । संवत्सरस्य पृथगुक्तेः समाशब्दो मासवाचकः । ऋतवो वसन्ताद्याः संवत्सराः तदधिष्ठातारः ऋषयो मन्त्रद्रष्टारः । यानि सत्या सत्यानि । सत्यरूपा मन्त्रा इत्यर्थः । त्वमप्येतैर्वर्धमानो दिव्येन दिवि भवेन रोचनेन दीप्त्या संदीदिहि संदीप्यस्व । दिवेः श्लौ लुकि रूपम् । 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६ । १ । ७ ) इत्यभ्यासदीर्घः । किंच विश्वाः सर्वाः प्रदिशो विदिशः चतस्रो दिशश्च आभाहि दीपय । अन्तर्भूतो ण्यर्थः 'भा दीप्तौ' ॥ १ ॥

### द्वितीया ।

सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय । मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥ २ ॥

**उ०** संच समिध्यस्व च हे अग्ने, प्रबोधय च अवगतार्थं च एनं यजमानं कुरु यथाग्निश्चेतव्य इति । उत्तिष्ठ च महते सौभगाय ऐश्वर्याय । किंच मा च रिषत् मा च विनश्यतु । उपसत्ता उपसदनस्य कर्ता यजमानः । सह्यग्निमुपसीदति । ते तव । हे अग्ने । किंच । ब्रह्माणस्ते ब्राह्मणाश्च ऋत्विग्यजमानाः तवसंबन्धिनः । यशसः सन्तु । मत्वर्थीयलोपः । यशस्विनः सन्तु । मा अन्ये यशस्विनः सन्तु अयजमाना अलंकरिष्णवः ॥ २ ॥

**म०** 'व्यवहिताश्च' ( १ । ४ । ८२ ) इति पाणिन्युक्तेः । उपसर्गक्रिययोर्व्यवधानम् । हे अग्ने, समिध्यस्व दीप्यस्व च । व्यत्ययेन श्यन् । एनं यजमानं प्रबोधय च ज्ञातार्थं कुरु अग्निश्चेतव्य इति । महते सौभगाय ऐश्वर्याय उत्तिष्ठ च । ऐश्वर्यं दातुमुद्यमं कुर्वित्यर्थः । किंच हे अग्ने, ते तव उपसीदतीत्युपसत्ता तृच् सेवकः । मा रिषत् च मा नश्यतु च । यजमानो ह्यग्निमुपसीदति । ते तव ब्रह्माणः ब्राह्मणा ऋत्विग्यजमानाः यशसः यशस्विनः सन्तु । मत्वर्थीयप्रत्ययलोपः । मा अन्ये अयज्वानो मा यशसः सन्तु ॥ २ ॥

### तृतीया ।

त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः । सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ॥ ३ ॥

उ० त्वामग्ने । हे अग्ने, त्वाम् इमे ब्राह्मणाः ऋत्विजः वृणते वृण्वन्ति यागाय । यतएवमतः प्रार्थयामः । शिवः शान्तः हे अग्ने, संवरणे ब्राह्मणैः सह एकस्मिन्वरणे भव । नः अस्माकम् । त्वं देवो वयं च मर्त्या इत्यभिप्रायः । सपत्नहा अभिमातिजिच्च । सपत्नानां हन्ता च भवास्माकम् । अभिमातिशब्दोपि शत्रुवचनः । अत एवं व्याख्यायते । सपत्नानां हन्ता भव हतावशिष्टानां जेता च भवेति । किंच । स्वे गये स्वकीये गृहे । जागृहि अप्रयुच्छन् । 'युच्छी प्रमादे' । अप्रमाद्यन् उद्गतमना इत्यर्थः ॥ ३ ॥

म० हे अग्ने, इमे ब्राह्मणाः ऋत्विजः त्वा त्वां वृणते 'वृङ् संभक्तौ' यागाय भजन्ति । अतो हे अग्ने, संवरणे ब्राह्मणैः सहैकस्मिन्वरणे सति नोऽस्माकं शिवः शान्तो भव । अस्माकं सपत्नहा अभिमातिजिच्च भव । अभिमातिरपि शत्रुः तत एवं व्याख्या । सपत्नानां हन्ता भव हतावशिष्टानां जेता च भव । किंच स्वे गये निजे गृहे जागृहि सावधानो भव । किं कुर्वन् । अप्रयुच्छन् अप्रमाद्यन् ॥ ३ ॥

## चतुर्थी ।

इहैवाग्ने अधिधारया रयिं मा त्वा निक्रन्पूर्वचितो निकारिणः । क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥ ४ ॥

उ० इहैव । इह एव कर्मणि वर्तमानानामस्माकम् हे अग्ने, अधिधारय रयिं उपरि निक्षिप धनम् । किंच । मा त्वा त्वां निक्रन्नीचैः कुर्वन्तु अवज्ञया पश्यन्तु । पूर्वचितः पूर्वं ये अग्निं चितवन्तः । निकारिणः ज्ञानकर्मसमुच्चयातिशयेन येऽन्योन्यजन्मानि नीचैः कुर्वन्ति । किंच । क्षत्रम् हे अग्ने, सुयमं साधुयन्तृ अस्तु तुभ्यं तव । किंच उपसत्ता यजमानः । सद्युपसदनं करोत्यग्नेः । वर्धतां ते तव । अनिष्टृतः । 'स्तृ हिंसायाम्' । अनुपहिंसितः सन् ॥ ४ ॥

म० हे अग्ने, इहैवास्मास्वेव यजमानेषु रयिं धनं त्वमधिधारय अधिकं देहि । किंच पूर्वं चिन्वन्ति पूर्वचितः पूर्वमग्निं चितवन्तोऽतएव निकारिणः नितरां यज्ञकरणशीलाः त्वा त्वां मा निक्रन् मा नीचैः कुर्वन्तु । मावजानन्त्वित्यर्थः । करोतेः शपि लुप्ते लङि प्रथमबहुवचने रूपम् । किंच हे अग्ने, क्षत्रं क्षत्रजातिः तुभ्यं तव सुयममस्तु । सुखेन यन्तुं शक्यं सुयमं सुखेन वशीकर्तुं शक्यमस्तु । 'ईषद्दुःसुषु'– ( पा० ३ । ३ । १२६ ) इति सुपूर्वाद्यमेः खल् । किंच ते तव उपसत्ता उपसदनकर्ता यष्टा अनिष्टृतः अनुपहिंसितः सन् वर्धताम् धनपुत्रादिभिरेधताम् । 'स्तृञ् हिंसायां' निष्ठान्तः ॥ ४ ॥

## पञ्चमी ।

क्षत्रेणाग्ने स्वायुः सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व । सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह ॥ ५ ॥

उ० क्षत्रेणाग्ने । क्षत्रेण संपाद्यात्मानम् हे अग्ने, स्वायुः साध्वायुः सन् । संभरस्व यज्ञं वोढुम् । मित्रेण च संपाद्यात्मानं मित्रधेये यतस्व । यथा मित्राणि धार्यन्ते तथा यत्नं कुरु । किंच सजातानां समानजन्मनाम् । मध्यमस्था एधि मध्यमस्थानो भव । यथा सजाता अपि यज्वानो भवन्ति तथा स्यादित्यभिप्रायः । किंच राज्ञां हे अग्ने, विहव्यः विविधमाह्वातव्यः । दीदिहि दीप्यस्व । इह यज्ञगृहे । यथा राजानोऽपि यज्वानो भवेयुः तथास्त्वित्यभिप्रायः ॥ ५ ॥

म० हे अग्ने, त्वं क्षत्रेण संरभस्व समारभस्व । ण्यन्तो बोध्यः । क्षत्रेण समारम्भय यज्ञमिति शेषः । क्षत्रियान्यज्ञं कारयेत्यर्थः । कीदृशस्त्वम् । स्वायुः शोभनमायुः जीवनं यस्य सः । यद्वा आयुः उकारान्तो मनुष्यवाची । शोभन आयुर्मनुष्यो यजमानो यस्य स स्वायुः । किंच हे अग्ने, मित्रेण सूर्येण सह वर्तमानः सन् मित्रधेये यतस्व । धातुं धारयितुं योग्यं धेयम् मित्रस्य यजमानस्य धेयं कार्यं यागलक्षणं तत्र यत्नं कुरु यजमानेन यज्ञं कारय । किंच सजातानां समानजन्मनां मध्यमस्थाः मध्यमे तिष्ठतीति क्विप् । मध्यमस्थ एधि भव । सजाता अपि यज्वानो भवन्त्वित्यर्थः । किंच हे अग्ने, इह यज्ञगृहे दीदिहि दीप्यस्व । दीव्यतेर्व्यत्ययेन शपः श्लुः 'श्लौ' ( पा० ६ । १ । १० ) इति द्वित्वम् 'तुजादीनां दीर्घः' ( पा० ६ । १ । ७ ) इत्यभ्यासदीर्घः । कीदृशस्त्वम् । राज्ञां विहव्यः । कर्तरि षष्ठी राजभिर्विविधं हूयते आहूयते विहव्यः राजभिर्यज्ञे आह्वातव्यः ॥ ५ ॥

## षष्ठी ।

अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने । विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ रयिं दाः ॥ ६ ॥

उ० अति निहः अतिक्रम्य निहन्तॄन् । निपूर्वस्य हन्तेः डःप्रत्ययः । प्रथमैकवचनस्य स्थाने द्वितीयाबहुवचनं वाक्यसंबन्धात् । अतिस्रिधः । स्रेधतिः कुत्सितकर्मा । अतिक्रम्य च कुत्सिताचरणान् । अत्यचित्तिम् । अचित्तिरन्यमनस्कता । अतिक्रम्य चान्यमनस्कताम् । अत्यरातिम् अरातिरनुपजीव्यो जनः तं चातिक्रम्य हे अग्ने, विश्वा ह्यग्ने दुरिता सहस्व विश्वानि दुरितानि सहस्व अभिभव । हिरनर्थकः । अथानन्तरम् । अस्मभ्यं सहवीरां सपुत्रां रयिं धनं दाः दद्याः ॥ ६ ॥

म० हे अग्ने, हि निश्चितं विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि त्वं सहस्व अभिभव । निवर्तयेत्यर्थः । किं कृत्वा । निहः निहन्ति निहः । निपूर्वाद्धन्तेर्डप्रत्ययः सुपां सुलुगिति शसः सु आदेशः । निहान् हन्तॄन् अतिक्रम्य ।

स्रेधतिः कुत्सितकर्मा। स्रेधन्ति स्रिधः क्विप्। कुत्सिताचारान् अतिक्रम्य। अचित्तिमन्यमनस्कतामतिक्रम्य। न रातिर्दानं यस्य सोऽरातिस्तमदातारमतिक्रम्य। दुष्टान्सर्वानतिक्रम्य पापं नाशयेत्यर्थः। किंच अथानन्तरं हे अग्ने, अस्मभ्यं सहवीरां वीरैः पुत्रैः सहितां रयिं दाः देहि लुङ्॥ ६॥

## सप्तमी।

✓ अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह। विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः शिवेभिरद्य परिपाहि नो वृधे॥ ७॥

**उ०** अनाधृष्यः। यस्त्वमनाधृष्यः अशक्यः खलीकर्तुम्। जातवेदाः जातप्रज्ञानश्च। अनिष्टृतः अनुपहिंसितश्च। स्तृणातेरेतद्रूपम्। विराट् च 'राजृ दीप्तौ'। विराजनशीलः विराट् क्षेत्रभृच्च। तं त्वां ब्रवीमि हे अग्ने, दीदिहि दीप्यस्व। इह कर्मणि वर्तमानः। विश्वाः सर्वा आशा दिशः। किंच प्रमुञ्चन्मानुषीर्भियः विक्षिपन्मानुषाणि भयानि जन्मजरामृत्युशोकदैन्यादीनि। शिवेभिः शिवैः शान्तैः (अर्चिभिः) अद्याश्विन्यवि। परिपाहि नः सर्वतो गोपायास्मान्। किमर्थम्। वृधे वर्धनाय॥ ७॥

**म०** हे अग्ने, इह कर्मणि वर्तमानस्त्वं विश्वा आशाः दीदिहि सर्वाः दिशः प्रकाशय। कीदृशस्त्वम्। अनाधृष्यः पराभवितुमशक्यः। जातवेदाः जातं वेदो धनं ज्ञानं वा यस्मात्। अनिष्टृतः न हिंसितः केनापि 'स्तृ हिंसायां' क्तान्तः। विराट् विविधं राजमानः क्षत्रभृत् क्षत्रं बिभर्ति पुष्णाति। किंच मानुषीः मनुष्यसंबन्धिनीर्भियः जन्मजरामृतिदैन्यशोकादिकाः प्रमुञ्चन्निवर्तयन्सन् शिवेभिः शिवैः शान्तैस्तेभिरद्य वृधे वृद्ध्यै नोऽस्मान्परिपाहि। वर्धनं वृत् तस्मै वृधे संपदादित्वाद्भावे क्विप्॥ ७॥

## अष्टमी।

✓ बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्संतराꣳ सꣳशिशाधि। वर्धयैनं महते सौभगाय विश्व एनमनुमदन्तु देवाः॥ ८॥

**उ०** बृहस्पते सवितः। हे बृहस्पते, हे सवितः, बोधय कामेष्ववगतार्थं कुरु। एनं यजमानं। किंच। संशितं चित्। चिच्छब्दोऽप्यर्थे। संशितव्रतमपि यजमानम् संतरामतितराम् संशिशाधि शिक्षय। वर्धय च एनं यजमानम्। महते सौभगाय ऐश्वर्याय। विश्वे च देवा एनं यजमानम् अनुमदन्तु उत्साहयन्तु। बृहस्पतिशब्देन सवितृशब्देन चात्राग्निरेवोच्यते। अथवा वाक्यद्वयम्। एकेन बृहस्पतिरुक्तः अपरेण सविता॥ ८॥

**म०** हे बृहस्पते हे सवितः, एनं यजमानं बोधय कर्माभिज्ञं कुरु। किंच चिदप्यर्थे। संशितं चित् संशितं शिक्षितमपि संतरामतितरां संशिशाधि शिक्षय। शासेः शपः श्लौ द्वित्वम् छान्दसमभ्यासस्येत्वम्। किंच महते सौभगाय ऐश्वर्याय एनं वर्धय। विश्वे देवाः एनं यजमानमनुमदन्तु तृप्ता हृष्टा वा भवन्तु। बृहस्पतिसवितृशब्दाभ्यां सामिधेन्यङ्गभूतोऽग्निरेवोच्यते वाक्यद्वयं वा। एकेन बृहस्पतिरुक्तोऽन्येन सविता॥ ८॥

## नवमी।

✓ अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः। प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः॥ ९॥

**उ०** अमुत्र भूयात्। अमुत्रामुष्मिँल्लोके यत् शरीरं भूयात्। अध अथ यत् यमस्य सदने च शरीरं भूयात्। तस्मात् च हे बृहस्पते, अभिशस्तेः अभिशंसनाच्च अमुञ्चः। किंच प्रत्यौहतां प्रतिप्रेरयताम् अन्यत्र नयताम्। अश्विनौ मृत्युम् अस्माद्यजमानात्। कथंभूतावश्विनौ। देवानां भिषजौ हे अग्ने, शचीभिः। अत्रापि बृहस्पतिशब्द आमन्त्रितोऽग्निशब्दस्य द्रष्टव्यः। सामिधेनीप्रकरणस्याग्नेयत्वात्। ननु बृहस्पतिशब्दो नैघण्टुको न चाग्निशब्द इति 'ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत् तेनाग्नेय्यो यत्प्रजापतिꣳ समैधत तेन प्राजापत्या' इति श्रुतेः प्रजापतेः सर्वदेवात्मकत्वात्। 'तस्मादेनं प्रजापतिꣳ सन्तमग्निरित्याचक्षते' इति श्रुतेरदोषः॥ ९॥

**म०** हे बृहस्पते, त्वममुत्रभूयादध अमुत्र परलोके भवनममुत्रभूयम्। 'भुवो भावे' (पा० ३।१।१०७) इति क्यप्। परलोकगमनान्मरणान्मुञ्च। मरणाद्रक्षेत्यर्थः। लकारव्यत्ययः। अध अथ यत् यमस्य भयं परलोकभयं नरकपातादि तस्मादपि मुञ्च। किंच अभिशस्तेः अभिशापादपि लोकापवादादपि मुञ्च। देवानां भिषजौ अश्विना अश्विनौ अस्माद्यजमानात् मृत्युं प्रत्यौहतां निवर्तयतां। कैः शचीभिः कर्मभिः कृत्वा। अत्र बृहस्पतिरग्निरेव सामिधेनीप्रकरणस्याग्नेयत्वात्॥ ९॥

## दशमी।

✓ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ १०॥

**उ०** उद्वयमिति व्याख्यातम्॥ १०॥

**म०** व्याख्याता (अ० २०। क० २१)॥ १०॥

## एकादशी।

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः। द्युमत्तमा सुप्रतीकस्य सूनोः॥ ११॥

**उ०** ऊर्ध्वा अस्य। द्वादश आप्रियः प्रयाजदेवत्य

उष्णिहः । अष्टम्याद्ये द्वे गायत्र्यौ । 'ता विषमा विषमाक्षरपादा' इत्यादि श्रुतेः । ता आग्नेय्यः प्राजापत्याः । 'यदग्निरपश्यत्ते-नाग्नेय्यः यत्प्रजापतिमाप्रीणात्तेन प्राजापत्या' इति च श्रुतिः । अग्निर्ऋषिः । प्रजापतिश्चाग्निरूपेण संस्तूयते । अस्याग्नेः प्रजापतिरूपेण संस्तूयमानस्य ऊर्ध्वाः प्रगुणाः देवमार्गेण यायिन्यः समिधो भवन्ति । ऊर्ध्वा शुक्रा ऊर्ध्वानि च शुक्राणि शौचींष्यर्चींषि भवन्ति । द्युमत्तमा दीप्ति-मत्तमा च वीर्यवत्तमानि चेत्यर्थः । सुप्रतीकस्य सुमुखस्य यजमानस्य सूनोः । स ह्येनं जनयति । य इत्थंभूतोऽग्निस्तं वयं स्तुम इति वाक्यशेषः ॥ ११ ॥

म० द्वादशाप्रीदेवत्या उष्णिहो विषमपादा आग्नेय्योऽग्निना दृष्टाः । अग्निः प्रजापतिर्लेन स्तूयते तेन प्राजापत्या अपि । ता आग्नेय्यः प्राजापत्या 'यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापति-माप्रीणात्तेन प्राजापत्याः' इति श्रुतेः । अस्याग्नेः समिधः ऊर्ध्वाः देवगामिन्यो भवन्ति शोचींषि तेजांस्यपि ऊर्ध्वा ऊर्ध्वानि भवन्ति । कीदृशानि शोचींषि । शुक्रा शुक्राणि शुद्धानि । द्युमत्तमा द्यौः दीप्तिः प्रकाशो येषां तानि द्युमन्ति अत्यन्तं द्युमन्ति द्युमत्तमानि विश्वप्रकाशकानि । कीदृशस्याग्नेः । सुप्र-तीकस्य सुष्ठु प्रतीकं मुखं यस्य । तथा सूनोः यजमानपुत्रस्य 'स यदेनं जनयति तेनास्यैष सूनुः' इति श्रुतेः । य ईदृशस्तं स्तुम इति शेषः ॥ ११ ॥

## द्वादशी ।

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।
पथो अनक्तु मध्वा घृतेन ॥ १२ ॥

उ० तनूनपात् । आज्यस्य अग्नेर्वा । यः तनूनां गवां नपात् आज्याभिप्रायमेतदुच्यते । अथवा योऽग्निः तनूनामपां नपात् पौत्रः । असुरः असुमान् प्राणवान् । रो मत्वर्थीयः । यद्वा असुरः वसुरः धनवान् । अस्मिन्पक्षे आदिलोपः । विश्ववेदाः सर्वधनः सर्वज्ञो वा । देवो दानादिगुणयुक्तः । देवेष्वपि देवः दीप्तिमान् । य ईदृशः सः पथः यज्ञमार्गान् अनक्तु । मध्वा मधुस्वादुना घृतेन । इत्थं नाम प्रभूतं यज्ञे घृतमस्तु येन मार्गा अभ्यक्ताः स्युरित्यभिप्रायः ॥ १२ ॥

म० देवोऽग्निः मध्वा मधुना मधुरेण घृतेन पथो यज्ञमा-र्गाननक्तु । मध्वेति नुमभावः अनित्यमागमशासनमित्युक्तेः । पथोअनक्तु इत्यत्र 'प्रकृत्यान्तःपादमव्यपरे' ( पा० ६ । १ । ११५ ) इति सन्ध्यभावः । यज्ञे बहु घृतमस्तु । येन मार्गा घृताभ्यक्ताः स्युरिति भावः । कीदृशो देवः । तनूनपात् तनू-नामपां नपात् पौत्रः । अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरि-त्यपां पौत्रः । असुरः असवोऽस्य सन्ति प्राणवान् । रो मत्वर्थः । विश्ववेदाः सर्वधनः । देवेषु अपि देवः दीप्तिमान् श्रेष्ठः ॥ १२ ॥

## त्रयोदशी ।

मध्वा यज्ञं नक्षसे प्रीणानो नराशंसो अग्ने ।
सुकृद्देवः सविता विश्ववारः ॥ १३ ॥

उ० मध्वा यज्ञम् । हे अग्ने, यस्त्वं मध्वा मधुस्वादुना घृतेन यज्ञं नक्षसे व्याप्नोषि । नक्षतिर्व्याप्तिकर्मा । कथं-भूतः । प्रीणानः देवान् । नराशंसश्च नरैर्ऋत्विग्भिर्यः शंस्यते स्तूयते स तथोक्तः । सुकृच्च साधुकृच्च । देवः सविता । विश्ववारः सर्वस्य वरणीयश्च भवसि । तं त्वां स्तुम इति शेषः ॥ १३ ॥

म० हे अग्ने, त्वं मध्वा स्वादुना घृतेन यज्ञं नक्षसे व्या-प्नोषि । नक्षतिर्व्याप्तिकर्मा । कीदृशस्त्वम् । प्रीणानः प्रीणीतेरसौ प्रीणानः देवान् तर्पयन् । नराशंसः नरैर्ऋत्विग्भिराशंस्यते स्तूयते नराशंसः । सुकृत् शोभनकारी । देवः दीप्तिमान् । सविता विश्वस्योत्पादकः । विश्वेन व्रियते सेव्यते विश्ववारः विश्वं वृणोति अङ्गीकरोतीति वा कर्मण्यण् । सर्वस्य वरणीयः सर्वाङ्गीकर्ता वा ॥ १३ ॥

## चतुर्दशी ।

अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा ।
अग्निं स्रुचो अध्वरेषु प्रयत्सु ॥ १४ ॥

उ० अच्छायम् । 'अच्छाभेराप्तुमिति शाकपूणिः' । अच्छ एति अभ्येति । अग्निम् अयमध्वर्युः । शवसा स्वकीयेन प्रज्ञानबलेन युक्तः । घृतेन च गृहीतेन इडानः स्तुवन् । वह्निर्वोढा । नमसा चानेन हविर्लक्षणेनाभ्युद्यतेन स्रुचः बाहुभ्यां गृहीत्वा । अध्वरेषु प्रयत्सु यज्ञेषु वर्तमानेषु ॥१४॥

म० अयमध्वर्युः अध्वरेषु प्रयत्सु वर्तमानेषु सत्सु अग्नि-मच्छ एति अभ्येति । 'अच्छाभेराप्तुमिति शाकपूणिः' ( निरु० ५ । २८ ) । कीदृशः । शवसा ज्ञानबलेन ईडानः 'ईड स्तुतौ शानच्' । तथा वह्निः वहति यज्ञभारमिति वह्निः यज्ञ-निर्वाहकः । किं कृत्वा । घृतेन नमसा अन्नेन हविर्लक्षणेनो प लक्षिताः स्रुचो जुह्वाद्या गृहीत्वेति शेषः ॥ १४ ॥

## पञ्चदशी ।

स यक्षदस्य महिमानमग्नेः स ई मन्द्रा सुप्र-
यसः । वसुश्चेतिष्ठो वसुधातमश्च ॥ १५ ॥

उ० स यक्षत् । स एवाध्वर्युः यक्षत् यजतु । अस्याग्नेः संबन्धि महिमानं महाभाग्यम् । स ईम् स एव च मन्द्रा मन्दनीयान्यन्नानि यजतु । कथंभूतस्याग्नेः । सुप्रयसः । प्रय इत्यन्ननाम । शोभनानि प्रयांस्यन्नानि हविर्लक्षणानि यस्य स सुप्रयाः तस्य सुप्रयसः । अथ कस्मादन्यदेवताः परित्यज्याग्नेर्महिमानं यक्षदित्युच्यत इतिचेदत आह । वसुश्चेतिष्ठो वसुधातमश्च । यतोऽसौ वसुः वासयिता चेति-

ष्ठोऽतिशयेन चेतयिता । कृताकृतगुणविशेषः । वसूनां धनानां धातमो दातृतमश्च अतः अग्निः स्तूयते ॥ १५ ॥

**म०** सोऽध्वर्युरस्याग्नेः महिमानं यक्षत् यजतु 'सिब्बहुलं लेटि' (पा० ३।१।३४) 'लेटोऽडाटौ' 'इतश्च लोपः परस्मैपदेषु' (पा० ३।९४—९७) इति सूत्रैर्यक्षदिति रूपम्। सः ईम् स च मन्द्रा मन्द्राणि मदजनकानि हवींषि च यजतु ददातु। कीदृशस्याग्नेः । सुप्रयसः प्रयस् इत्यन्ननाम। शोभनानि प्रयांसि यस्य सुप्रयास्तस्य । कीदृशस्याग्नेर्महिमानं यजतु। यो वसुः वासयिता। चेतिष्ठः अतिचेतयिता। वसुधातमः वसूनां धनानां दातृतमः। क्विबन्तात्तमप् ॥ १५ ॥

## षोडशी।

द्वारो॑ दे॒वीरन्व॑स्य॒ विश्वे॑ व्र॒ता द॑दन्ते अ॒ग्नेः। उ॒रु॒व्यच॑सो॒ धा॑म्ना॒ पत्य॑मानाः ॥ १६ ॥

**उ०** द्वारो देवीः। अस्याग्नेः प्रथमम् द्वारः देव्यः व्रता व्रतानि कर्माणि ददन्ते धारयन्ति। ताभ्यः अनु पश्चात्। विश्वे विश्वेदेवाः। देवशब्दलोपः। व्यवहितपदप्रायोऽर्धर्चः। कथंभूता द्वारः। उरुव्यचसः बहुव्यञ्चनाः। धाम्ना स्थानेन। ऋत्विक्संबन्धिना। पत्यमानाः। 'पत ऐश्वर्ये' ऐश्वर्यं कुर्वाणाः। या इत्थंभूता यज्ञगृहद्वारस्ता वयं स्तुम इति शेषः ॥ १६ ॥

**म०** द्वारो देव्योऽस्याग्नेर्व्रता व्रतानि कर्माणि ददन्ते धारयन्ति 'दद दाने धृतौ च'। अनु पश्चात् विश्वे सर्वे देवाः अग्निव्रतानि ददन्ते। कीदृश्यो द्वारः। उरुव्यचसः उरु विशालं व्यचोऽवकाशो यासां ताः विशालान्तराः। तथा धाम्ना स्थानेन पत्यमानाः 'पत ऐश्वर्ये' दिवादिरात्मनेपदी। पत्यन्ते ईशते ताः पत्यमानाः स्थानैरैश्वर्यं कुर्वाणाः। ऋत्विजां स्थानानि ददाना इत्यर्थः। ताः स्तुमः ॥ १६ ॥

## सप्तदशी।

ते अ॒स्य॒ योष॑णे दि॒व्ये न योना॑ उ॒षासा॒नक्ता॑। इ॒मं य॒ज्ञम॑वतामध्व॒रं नः॑ ॥ १७ ॥

**उ०** ते अस्य। ते उषासानक्ता उषाश्चाहो नक्ता च रात्रिः। अस्याग्नेः। योना योनौ आहवनीयाख्ये स्थितस्य। योषणे भार्ये। दिव्ये दिवि भवे। नकारोऽनर्थकः। ते इमं यज्ञम् अवतां सुगुप्तं कुरुताम्। अध्वरं सोमं च नोऽस्माकं संपादयतामिति शेषः ॥ १७ ॥

**म०** उषाश्च नक्ता रात्रिश्च उषासानक्ता। उषस उषासादेशो द्वन्द्वे। ते प्रसिद्धे उषासानक्ता अहोरात्रिदेव्यौ नोऽस्माकमिमं यज्ञमवतां रक्षताम्। कीदृश्यौ ते। अस्याग्नेः योषणे भार्ये। तथा दिव्ये दिवि भवे स्वर्गस्थे। कीदृशस्याग्नेः। योनौ गार्हपत्यस्थाने स्थितस्येति शेषः। नकारः पादपूरणः। कीदृशं यज्ञम्। अध्वरम् 'ध्वृ कौटिल्ये' न ध्वरतीत्यध्वरस्तम्। अकुटिलं शास्त्रोक्तमित्यर्थः ॥ १७ ॥

## अष्टादशी।

दैव्या॒ होता॑रा ऊ॒र्ध्वम॑ध्व॒रं नो॒ऽग्नेर्जि॒ह्वाम॒भिगृ॑णीतम्। कृ॒णु॒तं नः॒ स्वि॑ष्टिम् ॥ १८ ॥

**उ०** दैव्या होतारा। अयं चाग्निरसौ च मध्यमः हे दैव्यौ होतारौ, ऊर्ध्वमध्वरं नः कुरुतम् देवयानयायिनं कुरुतमित्यभिप्रायः। अग्नेर्जिह्वामभिगृणीतम्। अग्निमुखं साधु वर्णयतमित्यर्थः। कृणुतं कुरुतं च नः अस्माकं स्विष्टिं साधुयजनम् ॥ १८ ॥

**म०** अयं चाग्निरसौ च मध्यमो वायुः हे दैव्याहोतारौ अग्निवायू, युवां नोऽस्माकं स्विष्टिं शोभनं यजनं कृणुतं कुरुतम्। किंच नोऽस्माकमध्वरं यज्ञमूर्ध्वं कृणुतं देवमार्गगामिनं कुरुतम्। अग्नेर्जिह्वां ज्वालामभिगृणीतं वर्णयतम् समीची वह्निज्वालेति स्तुतमित्यर्थः ॥ १८ ॥

## एकोनविंशी।

ति॒स्रो दे॒वीर्ब॒र्हिरे॒दꣳ स॑द॒न्त्विडा॒ सर॑स्वती॒ भार॑ती। म॒ही गृ॒णा॒ना ॥ १९ ॥

**उ०** तिस्रो देवीः तिस्रः देव्यः। बर्हिः आ इदं सदन्तु आसदन्तु आसीदन्तु इदं बर्हिः। कतमास्ताः। इडाः पृथिवीस्थाना। सरस्वती च मध्यस्थाना। मही स्तुवन्तीति प्रत्येकं तिसृभिरपि योज्यम्। यद्वा एकमेव वाक्यम्। तिस्रो देव्यो बर्हिरिदमासदन्तु इडासरस्वतीभारत्यो महत्यो गृणाना इति ॥ १९ ॥

**म०** तिस्रो देव्यः इदं बर्हिरासदन्तु आसीदन्तु। छान्दसः सीदादेशाभावः 'व्यवहिताश्च' (पा० १।४।८२) इत्याङा सह क्रियापदव्यवधानम्। कास्ता अत आह। इडा पृथिवीस्थाना सरस्वती मध्यस्थाना भारती द्युस्थाना। मही महती गृणाना स्तुवन्तीति विशेषणद्वयं तिसृणाम् ॥ १९ ॥

## विंशी।

तन्न॑स्तु॒रीप॒मद्भु॑तं पु॒रु॒क्षु त्वष्टा॑ सु॒वीर्य॑म्। रा॒यस्पोषं॒ विष्य॑तु॒ नाभि॑म॒स्मे ॥ २० ॥

**उ०** तन्नः तत् रायस्पोषम् नः अस्मभ्यमस्मदर्थम्। तुरीपं तूर्णमश्नुते तूर्णं चाप्नोति। अद्भुतं महत् अभूतपूर्वम्। पुरुक्षु पुरुषु बहुषु यत्क्षियति निवसति तत्पुरुक्षु। त्वष्टा देवः सुवीर्यं साधुवीर्यम्। रायस्पोषविषयान्येतानि चत्वारि पदानि। विष्यतु। स्यतिरुपसृष्टो विमोचने। विमुञ्चतु। नाभिमस्मे राष्ट्रमध्यं प्रत्यस्मासु ॥ २० ॥

**म०** त्वष्टा देवः तं प्रसिद्धं रायो धनस्य पोषं पुष्टिमस्मे अस्माकं नाभिं प्रति विष्यतु विमुञ्चतु। नाभौ मुक्तमुत्सङ्गे पततीति भावः। 'षोऽन्तकर्मणि' 'ओतः श्यनि' (पा० ७।३।७१) इत्योकारलोपः। 'स्यतिरुपसृष्टो विमोचने' इति

यास्कः । कीदृशं रायस्पोषम् । नोऽस्माकं तुरीपम् तुरा वेगेन आप्नोति तुरीपं शीघ्रप्रापकम् । अद्भुतं महान्तम् । पुरुक्षु पुरुषु बहुषु क्षियति निवसति पुरुक्षु 'सुपां सुलुक्' (पा० ७ । १ । ३९ ) इत्यमो लुक् । क्षियतेरौणादिको डुप्रत्ययः । सुवीर्यं साधु वीर्यं सामर्थ्यं येन तम् । ईदृशं धनं देहीत्यर्थः ॥ २० ॥

## एकविंशी ।

वन॑स्पतेऽव॑सृजा॒ ररा॑ण॒स्त्मना॑ दे॒वेषु॑ । अ॒ग्निर्ह॒व्यꣳ श॑मि॒ता सू॑दयाति ॥ २१ ॥

उ० वनस्पतेऽव हे वनस्पते, अवसृज । सङ्मुखयोरवाचीनं निक्षिप । हवींषि रराणः । यद्वा 'रा दाने' ददानः । त्मना 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । देवेषु विषयभूतेषु । कस्मात्त्वमेवमुच्यसेऽस्माभिरित्यत आह । यतः अग्निः शमिता शामित्रमिति तद्धितलोपः । हव्यं हविर्जातम् सूदयाति । 'षूद क्षरणे' संस्करोति । अतो हे वनस्पते, अवसृजेति संबन्धः ॥ २१ ॥

म० अग्निः शमिता हव्यं सूदयाति सूदयति संस्करोति यतः अतो हे वनस्पते, तत्संस्कृतं हव्यमवसृज सुङ्मुखतोऽवाचीनां क्षिप । कीदृशस्त्वम् । त्मना आत्मना देवेषु रराणः हविर्ददानः 'रा दाने' कानच् । 'मन्त्रेष्वाङ्यादेरात्मनः' (पा० ६ । ४ । १४१ ) इत्यालोपः ॥ २१ ॥

## द्वाविंशी ।

अग्ने॒ स्वाहा॑ कृणुहि जातवेद॒ इन्द्रा॑य ह॒व्यम् । विश्वे॑दे॒वा ह॒विरि॒दं जु॑षन्ताम् ॥ २२ ॥

उ० अग्ने स्वाहा । हे जातवेदः, स्वाहा कृणुहि स्वाहाकृतिं यज । इन्द्राय हव्यं हविः । प्रयच्छेति शेषः । विश्वेदेवाश्च इदं हविः । जुषन्तां सेवन्ताम् ॥ २२ ॥

म० हे अग्ने, हे जातवेदः जातप्रज्ञान, हव्यमिन्द्राय स्वाहा कृणुहि स्वाहाकारेण प्रयच्छ । किंच विश्वेदेवा इदं हविर्जुषन्तां सेवन्ताम् ॥ २२ ॥

## त्रयोविंशी ।

पीवो॑अन्ना रयि॒वृध॑ः सु॒मेधाः॑ श्वे॒तः सि॑षक्ति नि॒युता॑मभि॒श्रीः । ते वा॒यवे॒ सम॑नसो॒ वित॑स्थु॒र्विश्वे॒न्नरः॑ स्वप॒त्यानि॑ चक्रुः ॥ २३ ॥

उ० अथैनं वायवे नियुत्वते शुक्लं तूपरमालभत इत्यस्य पशोः 'पीवो अन्नां रयिवृधः' इत्याद्याः षट् याज्यानुवाक्यास्त्रिष्टुभो वायव्याः । तत्र च प्राजापत्यः पशुपुरोडाश इति पठ्यते । तस्य आपो ह यत् द्वे प्राजापत्ये । यान् नियुतः अश्वान् । पीवोअन्नान् पीवः पुष्टमन्नं येषामिति पीवोअन्नान् । रयिंधनं ये वर्धयन्ति ते रयिवृधः । सुमेधाः कल्याणप्रज्ञानो वायुः । श्वेतः वायोर्वर्णवचनम् 'शुक्लो हि वायुः' इति श्रुतिः । सिषक्ति सेचति । नियुतामभिश्रीः नियुतामभ्याश्रयणीयः । अथ यान्वायुः सिषक्ति ते नियुतोऽश्वा वायवेऽर्थाय । समनसः समनस्काः सन्तः वितस्थुः तान् विश्वा विश्वानि । इत् पादपूरणे । नरः मनुष्या ऋत्विग्यजमानाः स्वपत्यानि शोभनानामपत्यानां यानि कर्माणि तानि चक्रुः कुर्वन्ति । एतदुक्तं भवति । वाय्वश्वसंयोगे सति सर्वमिदं यज्ञादि प्रवर्तते इति ॥ २३ ॥

म० अथैतं वायवे नियुत्वते शुक्लं तूपरमालभते इति हुतस्य पशोः पीवोअन्ना रयिवृध इत्याद्याः षट् याज्यानुवाक्याः । द्वे वायुदेवत्ये त्रिष्टुभौ वसिष्ठदृष्टे । 'शुक्लो हि वायुः' इति श्रुतेः श्वेतो वायुः यान्नियुतोऽश्वान् सिषक्ति सेवते ते नियुतः समनसः सममनस्काः सन्तो वायवेऽर्थाय वितस्थुर्विशेषेण तिष्ठन्ति । कीदृशान्नियुतः । पीवोअन्ना पीवः पुष्टमन्नं येषां तान् । नकारलोपः 'प्रकृत्यान्तःपादम्' ( पा० ६ । १ । ११५ ) इति पीवोअन्नानित्यत्र सन्ध्यभावः । तथा रयिवृधः रयिं धनं वर्धयन्ति तान् । कीदृशः श्वेतः । सुमेधा शोभना मेधा बुद्धिर्यस्य । नियुतामभिश्रीः अश्वानामाश्रयणीयः । एवमश्वयोगे वायुना कृते नरो मनुष्या ऋत्विजः विश्वा इत् विश्वानि सर्वाण्येव स्वपत्यानि शोभनापत्यप्रापकाणि चक्रुः कर्माणीति शेषः ॥ २३ ॥

## चतुर्विंशी ।

रा॒ये नु यं ज॒ज्ञतू॒ रोद॑सी॒मे रा॒ये दे॒वी धि॒षणा॑ धाति दे॒वम् । अध॑ वा॒युं नि॒युत॑ः सश्चत॒ः स्वा उ॒त श्वे॒तं वसु॑धिती नि॒रे॒के ॥ २४ ॥

उ० राये नु । राये धनाय उदकलक्षणाय नु क्षिप्रम् यं वायुं जज्ञतुः जनयामासतुः रोदसी द्यावापृथिव्यौ इमे । अनयोर्द्यावापृथिव्योः संयोगेऽपिसति वायुमन्तरेण जगद्धारणं नोपपद्यत इति जनितवत्यौ द्यावापृथिव्यौ । यं वायुं च राये धनायोदकलक्षणाय । देवी धिषणा धियं बुद्धिं कर्म वा सनोति संभजते इति धिषणा वाक् मध्यस्थाना धाति धारयति । देवं दानादिगुणयुक्तम् । अध अथेत्यर्थः । समनन्तरमेव । तं वायुं नियुतः अश्वाः सश्चतः सरन्तः सेवन्तः स्वाः स्वकीयाः । उत अपिच श्वेतं वायुं वसुधितिं वसुनो धनस्योदकलक्षणस्य धारयितारम् । निरेके जनैराकीर्णप्रदेशेऽवस्थितं वायुम् । नियुतः सश्चतः स्वा इत्यनुवर्तते ॥ २४ ॥

म० इमे रोदसी द्यावापृथिव्यौ यं वायुं जज्ञतुः उत्पादयामासतुः नु क्षिप्रम् । किमर्थम् । राये धनायोदकरूपाय । धियं सनोति ददाति धिषणा वाक् देवी देवं वायुं धाति धारयति । शपो लुक् । राये धनाय । रोदस्योः सद्भावेऽपि वायुं विना जगद्धारणाशक्तेर्वायुरुत्पादितः । धिषणेति ह्रस्वमार्षम् । अध अथ उत्पत्त्यनन्तरमेव उत निश्चितं स्वा नियुतो निजाश्वा वायुं सश्चतः सचन्ते सेवन्ते 'षच सेवने' पुरुषव्यत्ययः । क्र ।

निरेके निर्गतः रेकः रेचनं रेकः शून्यता यस्मात् तादृशे बहुजनाकीर्णे स्थाने । कीदृशं वायुम् । श्वेतं श्वेतवर्णम् । तथा वसुधितिं वसुनो धनस्य धितिर्धारणं यत्र तं धनस्य धारयितारम् ॥ २४ ॥

## पञ्चविंशी ।

आपो॑ ह॒ यद्बृ॑ह॒तीर्विश्व॒माय॒न्गर्भं॒ दधा॑ना ज॒नय॑न्तीर॒ग्निम् । ततो॑ दे॒वाना॒ᳬ सम॑वर्त॒तासु॒रेकः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ २५ ॥

उ० आपो ह । 'आपो ह वा इदमग्रे सलिलमेवासीत्' इत्येतद्ब्राह्मणं निदानभूतमनयोः कण्डिकयोः । आपः । पुराकल्पद्योतको ह इति निपातः । यत् । बृहतीः बृहत्यः महत्यः । विश्वं सर्वम् आत्मत्वेन । आयन् प्रापुः । गर्भं हिरण्यगर्भलक्षणं दधानाः । जनयन्तीः जनयिष्यन्त्यः । अग्निम् अग्निरूपं हिरण्यगर्भम् । हिरण्यगर्भवचनो वा अग्निशब्दः । ततः गर्भात्संवत्सरोषितात् देवानां मध्ये समवर्तत समभवत् असुः प्राणात्मकः एकः देवानां । स हि लिङ्गशरीरः य इत्थंभूतो हिरण्यगर्भः । तस्मै कस्मै प्रजापतये हविषा विधेम हविर्दद्म इति विभक्तिव्यत्ययः ॥ २५ ॥

म० द्वे प्रजापतिदेवत्ये त्रिष्टुभौ हिरण्यगर्भदृष्टे प्रथमा द्व्यधिका । 'आपो ह वा इदमग्रे सलिलमेवास' ( ११ । १ । ६ । १ ) इति ब्राह्मणमेतयोः कण्डिकयोर्निदानभूतं बोध्यम् । ह प्रसिद्धौ । यत् यदा पुरा आपो जलानि विश्वमायन् प्रापुः । कीदृश्य आपः । बृहतीः बृहत्यो महत्यः बहुलाः । तथा गर्भं हिरण्यगर्भलक्षणं दधानाः धारयन्त्यः । अतएवाग्निं जनयन्तीः अग्निरूपं हिरण्यगर्भं जनयन्त्यः उत्पादयिष्यन्त्यः । ततो गर्भात्संवत्सरोषितात् देवानामसुः प्राणरूप आत्मा लिङ्गशरीररूपो हिरण्यगर्भः समवर्तत उदपद्यत । कस्मै । प्रजापतिरूपाय देवाय हिरण्यगर्भाय हविषा विधेम हविर्दद्मः । विभक्तिव्यत्ययः विधतिर्दानार्थः ॥ २५ ॥

## षड्विंशी ।

यश्चि॒दापो॑ महि॒ना प॒र्यप॑श्य॒द्दक्षं॒ दधा॑ना ज॒नय॑न्तीर्य॒ज्ञम् । यो दे॒वेष्वधि॑ दे॒व एक॒ आसी॒त्कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ २६ ॥

उ० यश्चित् । योऽपि देवः अन्तर्यामी । आपः अपः इति विभक्तिव्यत्ययः । महिना महाभाग्येन । पर्यपश्यत् परितो दृष्टवान् । दक्षं प्रजापतिं दधानाः जनयन्तीः यज्ञं सृष्टियज्ञं । यश्च देवेष्वपि अधिदेवः एक आसीत् तस्मै कस्मै प्रजापतये हविषा विधेम हविर्दद्म इति विभक्तिव्यत्ययः ॥ २६ ॥

म० चिदप्यर्थः । यो देवोऽन्तर्यामी महिना महिम्ना आपः । विभक्तिव्यत्ययः । अपः पूर्वोक्ताः पर्यपश्यत् सर्वतो ददर्श । कीदृशीः । दक्षं कुशलं प्रजापतिं दधानाः । यज्ञं जनयन्तीः । यज्ञशब्देन यज्ञकर्त्री प्रजा उच्यते । सृष्टिकर्त्रीरित्यर्थः । यश्च देवेष्वधि अधिकः एको मुख्यो देव आसीत् । तस्मै देवाय हविर्दद्मः ॥ २६ ॥

## सप्तविंशी ।

प्र या॒भिर्यासि॑ दा॒श्वाᳬस॒मच्छा॑ नि॒युद्भि॑र्वाय वि॒ष्टये॑ दुरो॒णे । नि नो॑ र॒यिᳬ सु॒भोज॑सं युवस्व नि वी॒रं गव्य॒मश्व्यं॑ च॒ राधः॑ ॥ २७ ॥

उ० प्रयाहि प्रयासि याभिर्नियुद्भिः । नियुच्छब्द उभयलिङ्गः स्त्रियां पुंसि च । दाश्वांसं यजमानं 'अच्छाभेराप्तुमिति शाकपूणिः' । हवींषि दत्तवन्तं यजमानमभि । हे वायो, इष्टये यागाय एषणाय वा । दुरोणे यज्ञगृहे वर्तमानं यजमानम् । ताभिर्नियुद्भिरागत्य । नो रयिं सुभोजसं युवस्व । निपूर्वो यौतिर्दानार्थः । नियुवस्व देहि नोऽस्मभ्यं रयिं धनम् । किंभूतम् । सुभोजसम् साधु भुज्यत इति सुभोजाः तं सुभोजसम् । किंच । वीरं पुत्रम् गव्यं च राधः अश्व्यं च राधो धनम् नियुवस्व इति ॥ २७ ॥

म० द्वे वायुदेवत्ये त्रिष्टुभौ वसिष्ठदृष्टे । हे वायो, त्वं याभिर्नियुद्भिरश्वाभिः कृत्वा इष्टये यागाय दुरोणे यज्ञगृहे वर्तमानं दाश्वांसं हविर्दत्तवन्तं यजमानमच्छ अभिमुखं प्रयासि गच्छसि । 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति संहितायामच्छा इति दीर्घः । 'व्यवहिताश्च' ( पा० १ । ४ । ८२ ) इति प्रणयासीत्यस्य व्यवधानम् । ताभिर्नियुद्भिरागत्य नोऽस्मभ्यं रयिं धनं नियुवस्व देहि । नियौतिर्दानार्थः व्यत्ययेन शप्रत्ययः । कीदृशं रयिम् । सुभोजसं सुष्ठु भुज्यत इति सुभोजास्तम् । भुजेरसुन्प्रत्ययः । किंच वीरं पुत्रं गव्यं गोसंबन्धि अश्वमश्वसंबन्धि गोऽश्वरूपं राधः धनं च नियुवस्व ॥ २७ ॥

## अष्टाविंशी ।

आ नो॑ नि॒युद्भिः॑ श॒तिनी॑भिरध्व॒रᳬ स॑ह॒स्रिणी॑भि॒रुप॑याहि य॒ज्ञम् । वायो॑ अ॒स्मिन्सव॑ने मादयस्व यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ २८ ॥

उ० आ नः । आ उपयाहि नः अस्माकम् अध्वरं यज्ञम् । नियुद्भिः अश्वैः । शतिनीभिः शतानि विद्यन्ते यासु ताः शतिन्यः ताभिः शतिनीभिः सहस्रिणीभिश्च । एतदुक्तं भवति । बहूनामपि वाहनानां वयं तर्पयितुं क्षमाः । एत्य च हे वायो, अस्मिन्सवने तृतीयसवने मादयस्व तृप्यस्व । इदानीमृत्विजः पादेनाह । यूयं पात पालयत स्वस्तिभिः अविनाशैः सदा नः अस्मान् ॥ २८ ॥

म० हे वायो, नियुद्भिरश्वाभिः नोऽस्माकमध्वरं यज्ञमुपयाहि । कीदृशीभिः । शतिनीभिः सहस्रिणीभिः शतं सहस्रं च संख्या यासां ताभिः वयं बहुवाहनतर्पणे शक्ता इति भावः ।

एत्य चास्मिन् सवने तृतीये मादयस्व तृप्यस्व । अथ पादेन ऋत्विज आह । हे ऋत्विजः, स्वस्तिभिः कल्याणैर्यूयं नोऽस्मान् पात रक्षत ॥ २८ ॥

## एकोनत्रिंशी ।

नियुत्वान्वायवागह्ययꣳ शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् ॥ २९ ॥

उ० नियुत्वान्वायो । षट् वायव्या याज्यानुवाक्याः । तत्र वायो शुक्रो इत्यनुष्टुप् । एकया चेति त्रिष्टुप् । गायत्र्योऽन्याश्चतस्रः । तृतीयः पादः प्रथमं व्याख्यायते । यतो गन्ता गमनशीलः । तृन्नन्तोयं गन्ता उदात्तः । तद्धर्मा वा तत्साधुकारी वा एते हि तृनोऽर्थाः । असि । सुन्वतः अभिषवं कुर्वतः यजमानस्य गृहान्प्रति । अतो ब्रवीमि । नियुत्वान् नियुद्गुणको भूत्वा हे वायो, आगहि आगच्छ । अयंच शुक्रो ग्रहः अयामि आगच्छत्विति लकारपुरुषव्यत्ययः । ते त्वांप्रति । त्वमेव हि शुक्रादीनां ग्रहाणां स्थानमित्यभिप्रायः ॥ २९ ॥

म० षडृचो वायुदेवत्याः वायव्येष्टकापशुपक्षे वपादीनां याज्यानुवाक्यात्वेन नियुक्ताः । आद्या गायत्री गृत्समदद्दृष्टा । हे वायो, यतः सुन्वतो यजमानस्य गृहं प्रति त्वं गन्ता गमनशीलोऽसि । तृन्नन्त आद्युदात्तत्वात् । अतो नियुत्वानश्ववान्सन् आगहि आगच्छ । शपो लुक् । अयं शुक्रो ग्रहः ते त्वां प्रति अयामि आगच्छतु प्राप्नोतु । लकारपुरुषव्यत्ययः । शुक्रादिग्रहाणां पात्रं त्वमेवेति भावः ॥ २९ ॥

## त्रिंशी ।

वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु । आयाहि सोमपीतये स्पार्हो देव नियुत्वता ॥ ३० ॥

उ० वायो शुक्रः । हे वायो, शुक्रो ग्रहः अयामि स्वयमेवागच्छतु ते त्वांप्रति । कथंभूतः । मध्वो अग्रम् रसस्य सारभूतः दिविष्टिषु यज्ञेष्वित्यर्थः । त्वं च आयाहि सोमपीतये सोमपानाय । यतः स्पार्हः स्पृहणीयः हे देव । नियुत्वता नियुच्छब्दवता मन्त्रेण स्तूयसे ॥ ३० ॥

म० अनुष्टुप् पुरुमीढाजमीढदृष्टा । हे वायो, शुक्रो ग्रहः त्वामयामि आगच्छतु । कीदृशः शुक्रः । दिविष्टिषु मध्वः अग्रं द्यौरिष्यते प्रार्थ्यते याभिस्ता दिविष्टयो यज्ञाः ज्योतिष्टोमेन स्वर्गकामो यजेतेत्युक्तेः मध्वः मधुनो रसस्याग्रं सारभूतः । यज्ञरसेषु शुक्रो ग्रहः सारभूत इत्यर्थः । किंच हे देव वायो, नियुत्वता अश्ववता रथेन आयाहि आगच्छ । किमर्थम् । सोमपीतये सोमपानाय । कीदृशस्त्वम् । स्पार्हः स्पृहायोग्यः जयमानादिभिः स्पृहणीयः ॥ ३० ॥

## एकत्रिंशी ।

वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम् । शिवो नियुद्भिः शिवाभिः ॥ ३१ ॥

उ० वायुरग्रेगाः । वायुः अग्रेगमनशीलः यज्ञप्रीः यज्ञेन प्रीयन्त इति यज्ञप्रीः । साकं गच्छ गच्छति मनसा यज्ञम् । यो ह्यादरेण विस्मित आगच्छति स मनसा सहागतो भवति । कथंभूतः । शिवः शान्तः नियुद्भिः अश्वाभिः शिवाभिरेव ॥ ३१ ॥

म० द्वे गायत्र्यौ । वायुः शिवाभिः कल्याणरूपाभिः नियुद्भिरश्वाभिः कृत्वा मनसा साकं चित्तेन सह सादरं यज्ञं गन् गच्छतु । कीदृशः । अग्रेगाः अग्रे गच्छत्यग्रेगाः 'विड्वनोरनुनासिकस्यात्' ( पा० ६ । ४ । ४१ ) इत्याकारः । यज्ञप्रीः यज्ञेन प्रीयते तुष्यति यज्ञप्रीः । शिवः कल्याणकरः ॥ ३१ ॥

## द्वात्रिंशी ।

वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्सोमपीतये ॥ ३२ ॥

उ० वायो ये । हे वायो, ये ते तव । सहस्रिणः सहस्रसंख्याभिर्युक्ताः । रथासः रथा एव रथासः । तेभिः तै आगहि आगच्छ । नियुत्वान्भूत्वा सोमपीतये सोमपानाय ॥ ३२ ॥

म० हे वायो, ये ते तव सहस्रिणः सहस्रसंख्याका रथासः रथाः तेभिस्तैः रथैः आगहि आगच्छ । किमर्थं सोमपानाय । कीदृशस्त्वम् । नियुत्वान् अश्वायुक्तः । नियुतो वायोरिति निघण्टूक्तेः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च । तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वायविह ता विमुञ्च ॥ ३३ ॥

उ० एकया च एकस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते । हे वायो, स्वभूते स्वकीया भूतिर्यस्य जगत्सर्वं स स्वभूतिः । यानि पात्राणि वहसे इष्टये देवयज्यायै । एकया च नियुता दशभिश्च नियुद्भिः द्वाभ्यां च नियुद्भ्याम् । विंशती च । विंशतिशब्दस्य पूर्वसवर्णदीर्घ आदेशः । विंशत्या च नियुद्भिः । तिसृभिश्च त्रिंशता च नियुद्भिरेव । ता तानि पात्राणि इह विमुञ्च ॥ ३३ ॥

म० त्रिष्टुप् अनयर्चा पात्राणि मुच्यन्ते । स्वा निजा भूतिः समृद्धिर्जगद्रूपा यस्य स स्वभूतिः हे स्वभूते, हे वायो, एकया दशभिः द्वाभ्यां विंशती विंशत्या पूर्वसवर्णः । तिसृभिः त्रिंशता च नियुद्भिः अश्वाभिः कृत्वा । इष्टये यज्ञाय त्वं यानि पात्राणि वहसे ता तानि पात्राणि इह यज्ञे विमुञ्च । पञ्च चकाराः समुच्चयार्थाः ॥ ३३ ॥

## चतुस्त्रिंशी ।

तव॑ वायवृतस्पते॒ त्वष्टु॑र्जामातरद्भुत । अवा॒ᳪंस्यावृ॑णीमहे ॥ ३४ ॥

उ० तव वायो । हे वायो, ऋतस्पते सत्यपालक । यज्ञवचन ऋतशब्दः । सत्यपते । त्वष्टुरादित्यस्य जामातः, स ह्यादित्यादप आदाय गर्भयति ततो विप्रुषो जायन्ते अतो वायुर्जामाता त्वष्टुः । अद्भुत अभूतपूर्व । तव संबन्धीनि अवांसि अन्नानि । आवृणीमहे आयाचामः ॥ ३४ ॥

म० गायत्री व्यश्वदृष्टा । हे वायो, हे ऋतसते सत्यस्य पालक, ऋतस्य पतौपरे सुडागमः । हे त्वष्टुर्जामातः, आदित्यादप आदाय वायुर्गर्भयति ततो वृष्टिर्भवतीति वायुरादित्यस्य जामाता । हे अद्भुत आश्चर्यरूप, तवावांसि अन्नानि वयमावृणीमहे प्रार्थयामः ॥ ३४ ॥

## पञ्चत्रिंशी ।

✓ अ॒भि त्वा॑ शूर॒ नोनु॒मोऽदु॑ग्धा इव धे॒नव॑: । ईशा॑नम॒स्य जग॑तः स्व॒र्दृश॒मीशा॑नमिन्द्र त॒स्थुष॑: ॥ ३५ ॥

उ० अभि त्वा 'रथन्तरं दक्षिणे पक्षे' इति श्रुतिः । नान्योऽध्वर्योर्गायेदिति यतोऽत एषां साम्नां योनयः पठ्यन्ते । तत्रेन्द्रप्रगाथो रथन्तरस्य योनिः । तत्र प्रथमा बृहती द्वितीया सतोबृहती । अभि त्वा शूर नोनुमः आभिमुख्येन त्वां हे शूर, नोनुमः नमामः । कथमिव । अदुग्धा इव धेनवः । यथा वत्सान्प्रति अदुग्धा धेनवः नमन्ति एवं त्वां प्रति हविर्भिः स्तोत्रैः शस्त्रैश्चाभिमुख्येन नमामः । यद्वा 'णु स्तुतौ' । अयमत्र धातुः शब्दसारूप्यात् । अभिनोनुमः अभिष्टुमः त्वां कृतकृत्याः सन्तः स्तुतस्तोत्राः कृतशस्त्रा उद्यतहविष्काः । कथमिव । अदुग्धा इव धेनवः । यथा अदुग्धा अकृतकृत्या धेनवः वत्समभितुष्टुवुः एवम् । कथंभूतं त्वामभिनोनुमः । ईशानमस्य जगतः जङ्गमस्य । स्वर्दृशम् स्वः पश्यतीति स्वर्दृक् तं स्वर्दृशम् । यद्वा स्वरादित्यः तद्वत् यो दृश्यते स स्वर्दृक् तं स्वर्दृशम् । ईशानं च हे इन्द्र, तस्थुषः स्थितवतः स्थावरस्येत्यर्थः ॥ ३५ ॥

म० बृहतीसतोबृहतीद्वयं प्रगाथं वसिष्ठदृष्टमिन्द्रदेवत्यम् । 'रथन्तरं दक्षिणे पक्षे' इति श्रुतेः । 'नान्योऽध्वर्योर्गायेत्' इत्यध्वर्योर्गानं विहितम् । अतः साम्नां योनय ऋचः पठ्यन्ते । तत्रैन्द्रः प्रगाथो रथन्तरस्य योनिः । हे शूर इन्द्र, वयं त्वा त्वामभिनोनुमः आभिमुख्येनात्यन्तं स्तुमः 'नु स्तुतौ' यङ्लुगन्तम् । तत्र दृष्टान्तः । अदुग्धाः धेनवः इव यथा अदुग्धा गावो वत्सान्स्तुवन्ति । कीदृशं त्वाम् । जगतो जङ्गमस्येशानं प्रभुम् । स्वर्दृशं स्वः पश्यतीति स्वर्दृक् तम् । यद्वा स्वः आदित्य इव दृश्यते स्वर्दृक् तस्थुषः स्थावरस्य ईशानम् । विश्वनियन्तारमित्यर्थः ॥ ३५ ॥

## षट्त्रिंशी ।

न त्वावाँ२॥ अ॒न्यो दि॒व्यो न न पार्थि॑वो॒ न जा॒तो न ज॑निष्यते । अ॒श्वा॒यन्तो॑ मघवन्निन्द्र वा॒जिनो॑ ग॒व्यन्त॑स्त्वा हवामहे ॥ ३६ ॥

उ० न त्वावान् । येन त्वावान् त्वत्सदृशः अन्यः दिव्यः दिविभवः नच पार्थिवः अस्तीति शेषः । नच जातः नच जनिष्यते उत्पत्स्यति । अतः अश्वायन्तः अश्वान्कामयमानः हे मघवन् धनवन् इन्द्र, वाजिनः वाजोऽन्नम् तद्येषामस्ति ते वाजिनः हविषा संयुक्ताः सन्तः । गव्यन्तः गाः कामयमानाः । त्वां हवामहे आह्वयामः ॥ ३६ ॥

म० हे मघवन् धनवन्, हे इन्द्र, दिवि भवो दिव्यः पार्थिवः पृथिवीभवश्च त्वावान् त्वत्सदृशोऽन्यो नास्तीति शेषः । न च जातः न जनिष्यते उत्पत्स्यते । त्वत्सदृशोऽस्तीति त्वावान् । सादृश्यार्थे वतुप्रत्ययः । अतो वयं त्वा त्वां हवामहे । कीदृशा वयम् । अश्वायन्तः अश्वान् कामयमानाः 'अश्वाघस्यात्' ( पा० ७ । ४ । ३७ ) इति क्यचि आत्वम् । ततः शतृप्रत्ययः । वाजिनोऽन्नवन्तः हविर्युताः । गव्यन्तः गा इच्छन्ति गव्यन्तः गोकामाः । गवाश्वान्देहीत्यर्थः ॥ ३६ ॥

## सप्तत्रिंशी ।

त्वामिद्धि ह॒वाम॑हे सा॒तौ वाज॑स्य का॒रव॑: । त्वां वृ॒त्रेष्वि॑न्द्र॒ सत्प॑तिं॒ नर॒स्त्वां काष्ठा॒स्वर्व॑तः ॥ ३७ ॥

उ० त्वामित् । बृहतो योनिः देवतादितुल्यम् । इच्छब्द एवार्थे हिर्निरर्थकः । त्वामेव हवामहे आह्वयामः । सातौ वाजस्य सातिर्लाभः । लाभे अन्नस्य विषयभूते । अपिच कारवः कर्तारः स्तोमानां वयम् त्वामेव च वृत्रेषु शत्रुषु हन्तव्येषु हे इन्द्र, सत्पतिं सतां पालयितारम् श्रुतिस्मृतिविहितानुष्ठातारो निषिद्धकर्मपरित्यागिनः सन्तः तत्पतिम् । नरः मनुष्याः आह्वयन्ति । त्वामेव काष्ठासु जेतव्यासु अर्वतः अश्ववतः रथिनो वा आह्वयन्ति । नहि त्वदृते पुरुषाणां किंचित्सिध्यतीत्यभिप्रायः ॥ ३७ ॥

म० ऋग्द्वयमैन्द्रः प्रगाथः शम्युदृष्टः बृहत्साम्नो योनिः अध्वर्योर्गानस्योक्तेः । आद्या बृहती द्वितीया सतोबृहती 'बृहदुत्तरे पक्षे' इति श्रुतेः । हे इन्द्र, कारवः कर्तारः यज्ञानाम् नरः ऋत्विजो वयं त्वामेव हवामहे आह्वयामः । इत् एवार्थे हि निश्चये । किंनिमित्तम् । वाजस्यान्नस्य सातौ लाभनिमित्तम् । वृत्रेषु शत्रुषु शत्रुघातनिमित्तम् । काष्ठासु दिक्षु दिग्विजयनिमित्तम् । कीदृशं त्वाम् । सत्पतिं सतां पालयितारम् । श्रुतिस्मृत्युक्ताचाररता निषिद्धत्यागिनः सन्तः कथ्यन्ते । तथा अर्वतः अश्वप्राप्तिनिमित्तं च । विभक्तिव्यत्ययः । त्वांशब्दावृत्तिरादरार्था ॥ ३७ ॥

## अष्टत्रिंशी ।

स त्वं न॑श्चित्र वज्रहस्त धृष्णुया म॒हः स्त॑वानो अद्रिवः । गामश्व॑ᳬ र॒थ्य॒मिन्द्र॒ संकि॑र स॒त्रा वाज॒ं न जि॒ग्युषे॑ ॥ ३८ ॥

**उ०** स त्वम् । सः त्वं नः अस्मभ्यम् हे चित्र चायनीय, हे वज्रहस्त, धृष्णुया प्रसहनेन महः महत्वेन च स्तवानः स्तूयमान इति विकरणव्यत्ययः । हे अद्रिवः अद्रिवन्, अद्रिसारमयं वज्रं तदस्यास्तीति संबोध्यते अद्रिव इति । गाम् अश्वं च रथ्यं रथे साधुम् हे इन्द्र, संकिर । संकिरतिर्दानातिशये । अनेकदेशप्रकीर्णं देहि । कथमिव । सत्रा वाजं न जिग्युषे । नकार उपमार्थीयः । यथा जिग्युषे विजितवते । अश्वाय हस्तिने वा । सत्रा त्राणसहितम् वाजं यवसम् । सस्नेहमपरिमितं संकिरेयुर्दद्युः एवमस्मभ्यं देहि ॥ ३८ ॥

**म०** हे चित्र आश्चर्यकारिन्, हे वज्रहस्त, वज्रं हस्ते यस्य, हे अद्रिवः अद्रयोऽजेयत्वेन सन्तीत्यद्रिवान् तत्संबुद्धिः 'मतुवसोः' (पा० ८ । ३ । १) इति रुत्वम् । हे इन्द्र, स त्वं नोऽस्मभ्यं गामश्वं च संकिर देहि । संपूर्वः किरतिर्दानार्थः । कीदृशमश्वम् । रथ्यं रथे साधुं रथवहनसमर्थम् । कीदृशस्त्वम् । धृष्णुया प्रागल्भ्येन महः महसा तेजसा च स्तवानः स्तूयमानः । धृषेः क्नुः ततो विभक्तेर्यादेशः । धृष्णुना धृष्णुत्वेन भावप्रधानो निर्देशः । महः विभक्तिलोपः । स्तवान इत्यत्र विकरणव्यत्ययः। कथमिव । वाजंन वाजमिव । न इवार्थे । यथा जिग्युषे जितवतेऽश्वाय हस्तिने वा यथा सत्रा त्राणं त्रा रक्षणम् तत्सहितं वाजमन्नं यवं यथा ददति तथास्मभ्यं देहि ॥३८॥

## एकोनचत्वारिंशी ।

कया॑ नश्चि॒त्र आ भु॑वदू॒ती स॒दावृ॑धः सखा॑ । कया॒ शचि॑ष्ठयाऽवृ॒ता ॥ ३९ ॥

**उ०** कया नः । वामदेव्यस्य योनिः तिस्र ऐन्द्र्यो गायत्र्यः अन्त्यपादो निचृत् । कया नश्चित्र आभुवदूती कया पुनः ऊती ऊत्या केन पुनरवनेन तर्पणेन । नः अस्माकम् चित्रः चायनीयः इन्द्रः । आभुवत् भूयात् । आकारो वृष्णासह(?)-संबध्यते । सदावृधः सदाकालं वर्धयिता । सखा च कया च नाम शचिष्ठया । शचीति कर्मनाम मतुब्लोपः । अतिशयेन कर्मवत्या अवृता कर्मणा सदावृधः सखा भूयादिति वर्तते ॥ ३९ ॥

**म०** तिस्रो गायत्र्य इन्द्रदेवत्या वामदेवदृष्टाः वामदेव्यसाम्नो योनिः 'वामदेव्यमातमन्' इति श्रुतेः अन्त्या पादनिचृत् सप्ताक्षरत्रिपादा । पूर्वर्चः इन्द्रपदमनुषञ्जनीयम् । इन्द्रः कया ऊती ऊत्या अवनेन तर्पणेन प्रीणनेन वा नोऽस्माकं सखा सहायः आभुवत् आभिमुख्येन भवति । तथा वृता वर्तेत इति वृत् तया वृता वर्णमानया शचिष्ठया अतिशयेन शची शचिष्ठा तया अतिशयवत्या यागक्रिययास्माकं सखा भवति । शचीति कर्मनाम तत इष्ठन्प्रत्ययः । कीदृश इन्द्रः । चित्रः विचित्रः पूज्यो वा । सदावृधः सदा वर्धत इति सदावृधः 'इगुपध—' (पा० ३ । १ । १३५) इति कप्रत्ययः । सदा वर्धमानः । ऊती तृतीयैकवचनस्य 'सुपां सुलुक्' (पा० ७ । १ । ३९) इति पूर्वसवर्णः । आभुवत् 'इतश्च लोपः परस्मैपदेषु' (पा० ३ । ४ । ९७) इति तिप इलोपः शपश्छान्दसे ङित्वे धातोरुवङादेशः ॥ ३९ ॥

## चत्वारिंशी ।

कस्त्वा॑ स॒त्यो मदा॑नां॒ मᳬहि॑ष्ठो मत्स॒दन्ध॑सः । दृ॒ढा चि॑दा॒रुजे॒ वसु॑ ॥ ४० ॥

**उ०** कस्त्वा को नाम त्वाम् मत्सत् मादयति । सत्यः अवितथः । मदानां मध्ये मंहिष्ठः अतिशयेन मदजनकः । अन्धसः सोमस्य स्वभूतोंऽशः । येन मत्तः सन् त्वम् । दृढा चित् दृढान्यप्यसुरवृन्दानि । आरुजे आरुजसि चूर्णयसि वसु च ददासीति शेषः । यद्वा दृढान्यपि सुवर्णप्रभृतीनि चिरकालस्थायीनि वसूनि आरुजसि चूर्णयसि दानाय ॥४०॥

**म०** हे इन्द्र, अन्धसोऽन्नस्य सोमरूपस्य कः अंशः त्वा त्वां मत्सत् मादयति मत्तं करोति 'मदी हर्षे' 'लेटोऽडाटौ' (पा० ३ । ४ । ९४) इत्यडागमः 'सिब्बहुलं लेटि' (पा० ३ । १ । ३४) सिप्प्रत्ययः तिप इलोपः । कीदृशः । मदानां मंहिष्ठः मदयन्ति तानि मदानि पचाद्यच् मदजनकानि हवींषि तेषां मध्ये मंहिष्ठः श्रेष्ठः अत्यन्तमदजनकः 'मंहि कान्तौ' चुरादिः । मंहयति द्योतते मंही अत्यन्तं मंही मंहिष्ठः । यद्वा 'महि वृद्धौ' भ्वादिः । मंहते वर्धते मंही अत्यन्तं मंही मंहिष्ठः । येनांशेन मत्तः सन् दृढचित् दृढान्यपि वसु वसूनि धनानि कनकादीनि त्वमारुजे 'रुजो भङ्गे' पुरुषपदव्यत्ययः । आरुजसि चूर्णयसि दातुं भनक्षि । भङ्क्त्वा भङ्क्त्वा ददासीत्यर्थः ॥ ४० ॥

## एकचत्वारिंशी ।

अ॒भी षु ण॒ः सखी॑नामवि॒ता ज॑रितॄ॒णाम् । श॒तं भ॑वास्यू॒तये॑ ॥ ४१ ॥

**उ०** अभी षु णः आभिमुख्येन सुष्ठु च नः अस्माकं सखीनाम् अविता पालयिता । जरितॄणां स्तोतॄणां च अस्माकं पालयिता । किंच । शतं भवासि शतधा भवसि । हे इन्द्र, ऊतये अवनाय रक्षणाय । प्रकृतत्वादस्माकमेव सखीनां जरितॄणां च ॥ ४१ ॥

**म०** हे इन्द्र, त्वमूतयेऽवनाय पालनाय सु सुष्ठु सम्यक् अभि आभिमुख्येन शतं भवासि भवसि । आडागमः शतशब्दो बहुवाची । बहुरूपो भवसि । पालनाय नानारूपाणि दधासीत्यर्थः । कीदृशस्त्वम् । सखीनां मित्राणां जरितॄणां स्तोतॄणां नोऽस्माक-

मृलिजामविता पालयिता । संहितायामभीत्यस्य दीर्घः ।'सुञः' (पा० ८।३।१०७) सुशब्दस्य षत्वम् । 'नश्च इति धातुस्थोरुषुभ्यः (पा० ८।४।२७) इति षुशब्दात् परस्य नः इत्यस्य णत्वम् ॥ ४१ ॥

## द्विचत्वारिंशी ।

यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंꣳसिषम् ॥ ४२ ॥

**उ०** यज्ञा यज्ञा वः आग्नेयस्तृचः । तत्र द्वे बृहत्यौ तृतीया सतोबृहती । यज्ञायज्ञस्य साम्नो योनिः । यज्ञेयज्ञे इति सप्तम्येकवचनस्य आ आदेशः वीप्सायाम् । वः इति यजमानविषयं युष्मदर्थम् । अग्नये अग्निमिति विभक्तिव्यत्ययः वाक्यसंबन्धात् । गिरा गिरा च । तया तया च गिरा वाचा स्तुतिलक्षणया दक्षसे । दक्षसमिति सन्नतिः । दक्षवन्तमुत्साहवन्तम् । अग्निविशेषणं चैतत् । प्रप्रः 'प्रसमुपोदः पादपूरणम्' इत्यभ्यासः । शंसिषेत्याख्यातेन संबन्धः । प्रशंसिषं वयम् अहमिति वचनव्यत्ययः । अमृतममरणधर्माणम् । जातवेदसं जातप्रज्ञानम् । प्रियं मित्रं न मित्रमेव । अथ वाक्यार्थवशा सदानुपूर्वी । अहं यज्ञे यज्ञे वः युष्मदर्थे अग्निं दक्षवन्तं तयातया च स्तुत्या प्रशंसिषम् अमृतं जातवेदसं प्रियं मित्रमिव ॥ ४२ ॥

**म०** तृचः प्रगाथः आग्नेयः शंयुदृष्टः यज्ञायज्ञियस्य साम्नो योनिः । 'यज्ञायज्ञियं पुच्छम्' इति श्रुतेः । द्वे बृहत्यौ । तृतीया सतोबृहती । यज्ञायज्ञा वीप्सायां द्वित्वम् । सप्तम्येकवचनस्याकारः । व इति द्वितीयाबहुवचनमेकवचनार्थे यजमानविषयं वा । अग्नये चतुर्थ्येकवचनं द्वितीयैकवचनार्थे । गिरागिरा वीप्सायां द्वित्वम् । चः पादपूरणः । दक्षसे । चतुर्थी द्वितीयार्थे । 'प्रसमुपोदः पादपूरणे' (पा० ८।१।६) इति द्वित्वम् । तस्य च शंसिषमिति क्रियया संबन्धः । वयमिति प्रथमाबहुवचनमेकवचनार्थे । तथा चैवं योजना । यज्ञेयज्ञेऽनेकयज्ञेषु गिरागिराऽन्ययान्यया स्तुत्या वः त्वाम् । यद्वा वो युष्माकमर्थे अग्निं प्रशंसिषं स्तौमि 'शंस स्तुतौ' लुङ् अडभाव आर्षः । कीदृशमग्निं । दक्षसम् दक्षतेरुत्साहार्थस्य धातोरसुन्प्रत्ययः । दक्षते उत्सहते दक्षाः तम् उत्साहिनम् । यद्वा दक्ष इति बलनाम अन्तर्नीतमत्वर्थं द्रष्टव्यम् । दक्षसं बलवन्तम् । अमृतममरणधर्माणम् । जातवेदसम् जातं वेदो ज्ञानं धनं वा यस्मात्तम् । प्रियं प्रीतिजनकम् । नशब्द उपरिष्टादुपचारादुपमार्थीयः । मित्रं न मित्रमिव यथा कश्चित्प्रियं मित्रं स्तौति तद्वदग्निं स्तुमह इत्याशास्महे ॥ ४२ ॥

## त्रिचत्वारिंशी ।

पाहि नो अग्न एकया पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥४३॥

**उ०** पाहि नः गोपाय नः अस्मान् । हे अग्ने, एकया गिरा ऋग्लक्षणया । पाह्युत गोपाय च । द्वितीयया द्वाभ्यां गीर्भ्यामृग्यजुर्लक्षणाभ्याम् । पाहि च गीर्भिः तिसृभिः स्तुतिभिः । हे ऊर्जामन्नानां पते, पाहि च चतसृभिः गीर्भिः । ऋगाद्यास्तिस्रः गद्यपद्यकाव्यलक्षणा चतुर्थी गीः । हे वसो वासयितः ॥ ४३ ॥

**म०** गर्गदृष्टा । हे अग्ने, हे ऊर्जां पते अन्नानां पालक, हे वसो वासयितः, यद्वा लुप्तमत्वर्थं द्रष्टव्यम् । हे वसो वसुमन् धनवन्, एकया गिरा इति पदस्यानुषङ्गः एकया गिरा ऋग्लक्षणया तृतीयानिर्देशात् स्तुतः सन्निति वाक्यशेषः । नोऽस्मान् पाहि रक्ष । उत अपिच द्वितीयया यजुर्लक्षणया स्तुतः सन् पाहि । तिसृभिर्गीर्भिः ऋग्यजुःसामलक्षणाभिः स्तुतो नः पाहि । चतसृभिः ऋग्यजुःसामनिगदलक्षणाभिः स्तुतो नः पाहि गद्यपद्यकाव्यादिरूपा चतुर्थी गीः ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

ऊर्जो नपातꣳ स हिनाऽयमस्मयुर्दाशेम हव्यदातये । भुवद्वाजेष्ववि॒ता भुवद्वृध उत त्राता तनूनाम् ॥ ४४ ॥

**उ०** ऊर्जो नपातम् । स त्वं हे अध्वर्यो, ऊर्जो नपातम् ऊर्जशब्देनाप उच्यन्ते । ताभ्य ओषधिवनस्पतयो जायन्ते तेभ्य एष जायते इत्यपां पौत्रोऽग्निः । तम् । हिन तर्पय । अयम् अस्मयुः । अयं हि अग्निः अस्मान्कामयते । अतो वयं च । दाशेम संकल्पं कुर्याम । हव्यदातये हविषो दानाय । भुवद्वाजेष्ववि॒ता यतोयम् वाजेष्वन्नेषु विषयभूतेषु अविता गोप्ता । भुवत् भवति । भुवद्वृधे वर्धनाय च भवति । उत अपिच । त्राता तनूनां शरीराणाम् । बहुवचनोपदेशाद्भार्यादिशरीरग्रहणम् । यत एवम् अतः ऊर्जो नपातं हिन इति संबन्धः । एवमदूरविप्रकर्षेण विषममन्त्रा व्याख्येयाः ॥ ४४ ॥

**म०** यजमानोऽध्वर्युं प्रार्थयते । हे अध्वर्यो, ऊर्जो नपातमपां पौत्रमग्निं स त्वं हिन हिनु तर्पय 'हि गतौ वृद्धौ' स्वादिः लोट् उलोपश्छान्दसः । उर्क्शब्देनाप उच्यन्ते । अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः । यतोऽयमग्निरस्मयुः अस्मानिच्छति अस्मयुः 'क्याच्छन्दसि' ( पा० ३।२।१७० ) इत्युप्रत्ययः । अतो हव्यदातये हविषो दानाय दाशेम संकल्पयामः । 'दाश्र दाने' अत्र संकल्पार्थः । यतोऽयं वाजेष्वन्नेषु अविता रक्षिता भुवत् भवति । वृधे वृद्धौ च भुवत् भवति । उतापिच तनूनां शरीराणां त्राता रक्षिता भवति । बहुवचनं भार्यादिशरीररक्षार्थमुपात्तम् । अग्निरन्नतनुरक्षिता वर्धयितास्मान् कामयतेऽतो हविर्दानाय तं संकल्पयामः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्व-

त्सरोऽसि वत्सरोऽसि । उपसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्तां मासास्ते कल्पन्तामृतवस्ते कल्पन्ताꣳ संवत्सरस्ते कल्पतात् । प्रेत्या एत्यै संचाञ्च प्र च सारय । सुपर्णचिदसि तया देवतयाङ्गिरस्वद्ध्रुवः सीद ॥ ४५ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
सप्तविंशोऽध्यायः ॥ २७ ॥

उ० संवत्सरोसि । संचितोऽग्निरनेन वपुषा अभिमृश्यते । 'पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्' इति यदुक्तं ज्योतिःशास्त्रे तदिहोच्यते । हे अग्ने, यस्त्वं संवत्सरोसि । सर्वस्य सारितासि । नच त्वामन्यः सारयति । यश्च त्वं परिवत्सरोऽसि यश्च इदावत्सरोऽसि । इदा इदानीमिति समानार्थौ । यश्च इद्वत्सरोऽसि इदिति निपातः । यश्च वत्सरोऽसि निर्विशेषेण तस्य ते भवतः उषसः कल्पन्तां कॢप्ता भवन्त्ववयवत्वेन । एवम् अहोरात्रा अर्धमासा मासा ऋतवश्च संवत्सरश्च कल्पताम् । त्वंच प्रेत्यै प्रगमनाय एत्यै आगमनाय संचाञ्च प्रसारय च । समं च प्रसारय च । स्वेच्छया संकोचविकाशधर्मा भवेत्यभिप्रायः । सुवर्णचिदसीत्याकृतिवचनम् । तया देवतया वाचा सहितः । अङ्गिरस्वत् प्राण इव । ध्रुवः शाश्वतिकः । सीद अवस्थानं कुरु । अभि त्वा शूरनोनुम इत्यादिपरमेष्ठ्यपश्यत् ॥ ४५ ॥

इति उवटकृतौ मन्त्रभाष्ये सप्तविंशोऽध्यायः ॥ २७ ॥

म० अग्निदेवत्यं यजुः । अत्र यजुषि नवनवत्यक्षराणि एको व्यूहः । ततः शताक्षराभिकृतिश्छन्दः । चित्याग्नेरभिमर्शने विनियोगः । 'पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्' इति ज्योतिःशास्त्रोक्तमिहोच्यते । हे अग्ने, त्वं संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इद्वत्सरोऽसि वत्सरोऽसि निर्विशेषणः पञ्चसंवत्सरात्मकयुगरूपोऽसीत्यर्थः । 'युगं भवेद्वत्सरपञ्चकेन' इति ज्योतिःशास्त्रोक्तेः । तस्य ते तव उषसः प्रातःकालादयः कालविशेषाः सङ्गवमध्याह्नादयः अहोरात्राः दिवसनिशाः अर्धमासाः पक्षाः मासाश्चैत्रादयः ऋतवो वसन्तादयः कल्पन्तामवयवत्वेन कॢप्ता भवन्तु । संवत्सरश्च उपलक्षणम् । संवत्सरादयः पञ्चापि कल्पन्ताम् । क्रियावृत्तिरादरार्था । किंच प्रेत्यै प्रगमनाय एत्यै आगमनाय च समञ्च संकुच प्रसारय च स्वेच्छया संकोचविकासौ कुर्विति भावः । किंच सुपर्णाकारेण चितत्वात्सुपर्णचिदसि । तया देवतया वाचा सहितः सन् अङ्गिरस्वत् अङ्गिरस इव प्राणा इव ध्रुवः स्थिरः सीद तिष्ठ ॥ ४५ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सप्तविंशोऽयमध्याय आग्निको विरतोऽधुना ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ।

### तत्र प्रथमा ।

होता यक्षत्समिधेन्द्रमिडस्पदे नाभा पृथिव्या अधि । दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहां वेत्वाज्यस्य होतर्यज ॥ १ ॥

उ० होता यक्षत्समिधेन्द्रम् । सौत्रामण्यामैन्द्रस्य पशोः प्रयाजप्रैषाः एकादश ऐन्द्रानेके प्रथमस्येत्यैन्द्राः । आप्रीदेवतास्तु इन्द्रस्यैव विभूतय इति । होतायक्षत् दैव्यो होता यजतु । समिधा इध्मकाष्ठेन हविर्भूतेन । समिधा वा सहितम् इन्द्रम् । य इन्द्रः त्रिषु स्थानेषु समिध्यते । प्रथमं तावत् इडस्पदे पृथिव्या यजनाय प्रदेशे समिध्यते अग्न्यात्मना । द्वितीयं विद्युदात्मना समिध्यते । नाभौ पृथिव्या अधि । पृथिवीशब्देनान्तरिक्षमुच्यते । नाभिभूते अन्तरिक्षप्रदेशे अध उपरि ततः तृतीयमादित्यात्मना दिवः द्युलोकस्य वर्ष्मन् वर्षिष्ठे प्रदेशे समिध्यते एवं त्रिस्थान इन्द्रः स्तूयते । यश्च ओजिष्ठः अतिशयेन बली । केषां मध्ये । चर्षणीसहाम् चर्षणयो मनुष्याः तान् ये सहन्ते अभिभवन्ति ते चर्षणीसहः देवाः तेषां चर्षणीसहां देवानां मध्ये । स चेज्यमानो वेतु पिबतु स्वमंशमाज्यस्य । त्वमपि हे मनुष्यहोतः, यज ॥ १ ॥

म० इन्द्रमिडः सौत्रामणिकोऽध्याय इति कात्यायनोक्तेः अयमध्यायः सौत्रामणिसंबन्धी सौत्रामण्यङ्गभूतयोरैन्द्रवायोधसयोराद्यन्तपश्वोः प्रयाजानुयाजप्रैषरूपः । ततश्च प्रजापत्यश्विसरस्वत्योऽध्यायस्य ऋषयः । आद्येऽनुवाके एकादशैन्द्रपशोः संबन्धिन आप्रीदेवताः समित्तनूनपादित्यादिदेवताकाः प्रयाजानां प्रैषाः होता यक्षत्समिधेन्द्रमित्यादयो होता यक्षदिन्द्रमित्यन्ताः [ ११ क० ] । अथ मन्त्रार्थः । आर्षी त्रिष्टुप् । दैव्यो होता । समिधा समित्काष्ठेन हविर्भूतेन समिधाप्रीदेवतया सहितं वा इन्द्रं यक्षत् यजतु । य इन्द्रः त्रिषु स्थानेषु समिध्यते दीप्यते । प्रथमम् इडः पृथिव्याः पदे यजनीये प्रदेशे अग्न्यात्मना समिध्यते । द्वितीयम् पृथिव्याः नाभौ पृथिवीशब्देनान्तरिक्षम् अन्तरिक्षस्य मध्ये विद्युदात्मना समिध्यते अधिउपरि । तृतीयम् दिवो वर्ष्मन् स्वर्गस्य वर्ष्मणि वर्षिष्ठे प्रदेशे आदित्यात्मना समिध्यते । कीदृशः । चर्षणिसहामोजिष्ठः चर्षण्यो मनुष्यास्तान्सहन्तेऽभिभवन्ति चर्षणीसहो मनुष्याभिभावुकास्तेषां मध्ये ओजस्वितमः अत्यन्तमोजस्वी ओजिष्ठः इष्ठनि परे 'विन्मतोर्लुक्' (पा० ५ । ३ । ६५) इति विनो लुकि टिलोपे ओजिष्ठ इति रूपम् । संहितायां चर्षणिशब्दस्य दीर्घः । एवंविध इन्द्रः आज्यस्य वेतु घृतं पिबतु । हे मनुष्यहोतः, त्वमपि यज ॥ १ ॥

### द्वितीया ।

होता यक्षत्तनूनपातमूतिभिर्जेतारमपराजितम् ।

इन्द्रं देवꣳ स्वर्विदं पथिभिर्मधुमत्तमैर्नराशꣳसेन तेजसा वेत्वाज्यस्य होतर्यज ॥ २ ॥

उ० होता यक्षत्तनूनपातम् आप्रीदेवताभिप्रायमिन्द्राभिप्रायं वा । स हि मरीचेः पौत्रः । दैव्यो होता यजतु तनूनपातमिन्द्रम् ऊतिभिरवनैः सहितम् जेतारम् अयज्वनाम् अपराजितम् इन्द्रं । देवं दानादिगुणयुक्तम् । स्वर्विदम् स्वर्गं वेत्ति जानाति स्वर्गे वा विद्यते इति स्वर्वित् तं स्वर्विदम् । केन यजतु । पथिभिर्मधुमत्तमैः । पथिशब्देनात्र हवींष्युच्यन्ते । तैर्हि स्वर्गं लोकं प्रति पतन्ति यजमानाः । हविर्भिः मधुमत्तमैरतिशयेन रससंयुक्तैः । कथंभूतमिन्द्रम् । नराशंसेन यज्ञेन सहितम् । तत्र तनूनपान्नराशंसावेकस्मिन्प्रयाजे पठितावत उभयवानयं प्रयाजः । तेजसा च सहितमिन्द्रं यजतु । स चेज्यमानो वेतु पिबतु आज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥ २ ॥

म० अतिजगती । नराशंसेन देवेन युतं तनूनपातमिन्द्रं च देवं होता यजतु । कैः पथिभिः । पतन्ति गच्छन्ति स्वर्गं यजमाना यैस्ते पन्थानो हवींषि तैः । कीदृशैः । ऊतिभिः अवन्ति तर्पयन्ति ते ऊतयस्तैः 'ऊतियूति–' ( पा० ३ । ३ । ९७ ) इत्यादिना कर्तरि निपातः । तथा मधुमत्तमैः मधुर्मधुरस्वादोऽस्ति येषु ते मधुमन्तः अत्यन्तं मधुमन्तो मधुमत्तमाः तैः । कीदृशमिन्द्रम् । जेतारं शत्रूणाम् अपराजितं केनापि न पराभूतम् । स्वर्विदं स्वः स्वर्गं वेत्ति स्वीयं जानाति स्वर्वित् । यद्वा स्वः स्वर्गे विद्यते स्वर्वित्तम् 'विद सत्तायाम्' । कीदृशेन नराशंसेन । तेजसा तेजस्विना । एवं देवद्वययुत इन्द्रः आज्यस्य वेतु । शेषं पूर्ववत् । अत्र तनूनपान्नराशंसावेकत्र प्रयाजे पठितावित्युभयवानयं प्रयाजः ॥ २ ॥

## तृतीया ।

होता यक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम् । देवो देवैः सवीर्यो वज्रहस्तः पुरंदरो वेत्वाज्यस्य होतर्यज ॥ ३ ॥

उ० होता यक्षदिडाभिरिन्द्रम् । दैव्यो होता यजतु इडाभिः प्रयाजदेवतया सहितमिन्द्रम् ईडितं स्तुतम् । आजुह्वानमाहूयमानं यजमानैरनेकशः । अमर्त्यममरणधर्माणम् । स चेज्यमानः देवः द्युस्थान इन्द्रः । देवैः द्युस्थानैः सवीर्यैः समानवीर्यैः । वज्रहस्तः । पुरन्दरः पुरां दारयिता । वेतु पिबतु आज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥ ३ ॥

म० ब्राह्मी उष्णिक् । होता इडाभिः प्रयाजदेवताभिः सह इन्द्रं यजतु । कीदृशमिन्द्रम् । ईडितम् ऋत्विग्भिः स्तुतम् । आजुह्वानमाहूयमानम् यजमानैः देवानाह्वयन्तं वा । अमर्त्यममरणधर्माणम् ईदृशो देव इन्द्रः आज्यस्य वेतु । कीदृशो देवः । सवीर्यः समानं वीर्यं यस्य सः । सर्वदेवेषु यादृशं वीर्यं तदेकस्मिन्निन्द्रे इत्यर्थः । वज्रहस्तः वज्रं हस्ते यस्य । पुरन्दरः पुरं शत्रूणां नगरं दारयति पुरन्दरः । उक्तमन्यत् ॥ ३ ॥

## चतुर्थी ।

होता यक्षद्बर्हिषीन्द्रं निषद्वरं वृषभं नर्यापसम् । वसुभी रुद्रैरादित्यैः सयुग्भिर्बर्हिरासदद्वेत्वाज्यस्य होतर्यज ॥ ४ ॥

उ० होतायक्षद्बर्हिषीन्द्रम् । दैव्यो होता यजतु । बर्हिषीन्द्रं बर्हिषि प्रयाजदेवतायां स्थितमिन्द्रम् । यज्ञसाधनमेवात्र प्रयाजदेवताबर्हिः । कथंभूतमिन्द्रम् । निषद्वरमनिराकुर्वतां वरमुत्कृष्टम् । वृषभं वर्षितारं च । नर्यापसम् नृभ्यो मनुष्येभ्यो हितं नर्यं नर्यम् अपः कर्म यस्य स नर्यापाः तं नर्यापसमिन्द्रम् । स चेज्यमानः वसुभिः रुद्रैः आदित्यैः । सयुग्भिः समानयोजनैः बर्हिः आसदत् । आसीदत्विति लकारव्यत्ययः । वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ ४ ॥

म० आर्षी त्रिष्टुप् । बर्हिषि प्रयाजदेवतायां स्थितमिन्द्रं होता यजतु । कीदृशमिन्द्रम् । निषद्वरं निषीदन्ति निषद उपवेष्टारः तेषां वरं श्रेष्ठम् । वृषभं वर्षितारम् । नर्यापसं नरेभ्यो यजमानेभ्यो हितं नर्यमपः कर्म यस्य स नर्यापाः तं नराणां हितकारिणम् । स इन्द्रो वसुभिः रुद्रैः आदित्यैः सवनत्रयदेवैः सहितः बर्हिरासदत् आसीदतु आज्यस्य वेतु च । कीदृशैर्वस्वादिभिः । सयुग्भिः सह युञ्जन्ति ते सयुजः तैः समानयोगैः ॥४॥

## पञ्चमी ।

होता यक्षदोजो न वीर्यꣳ सहो द्वार इन्द्रमवर्धयन् । सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो द्वार इन्द्राय मीढुषे व्यन्त्वाज्यस्य होतर्यज ॥ ५ ॥

उ० होता यक्षदोजो न । दैव्यो होता यजतु । ओजः न इति समुच्चयार्थीयो निपातः । ओजश्च वीर्यं च सहश्च द्वारश्च इन्द्रियशरीरमनोबलान्यपि समुच्चितानि । कस्माद्धेतोरेतानि यजतु । यत एतानि इन्द्रमवर्धयन् वर्धयन्ति । इदानीं नव स्तुत्यद्वारः स्तौति । एवमनेन कर्मणा कृतकृत्याः द्वारः । सुप्रायणाः सुप्रगमनाः । अस्मिन्यज्ञे विश्रयन्ताम् विश्रिता भवन्तु । ऋतावृधः सत्यवृधो वा यज्ञवृधो वा । इन्द्राय इन्द्रार्थम् । कथंभूताय । मीढुषे सेक्त्रे व्यन्तु पिबन्तु आज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥५॥

म० अतिजगती । नकारश्चार्थः । या द्वारः प्रयाजदेवाः इन्द्रमिन्द्रे ओजो वीर्यं सहश्चावर्धयन् । ओज इन्द्रियबलं, वीर्यं शारीरबलं सहो मनोबलम् ता द्वारो होता यजतु । ताश्च द्वार इन्द्राय इन्द्रार्थं विश्रयन्तां विवृता भवन्तु । अस्मिन्

यज्ञे आज्यं व्यन्तु पिबन्तु च । कीदृश्यो द्वारः । सुप्रायणाः सुखेन प्रकृष्टमयनं गमनं यासु ताः विवृतत्वादित्यर्थः । ऋतं यज्ञं वर्धयन्ति ऋतवृधः संहितायामृतशब्दस्य दीर्घः । इन्द्राय कीदृशाय । मीढुषे मेहतीति मीढ्वान् तस्मै सेक्त्रे । क्वसन्तो निपातः ॥ ५ ॥

## षष्ठी ।

होता॑ यक्षदु॒षे इन्द्र॑स्य धे॒नू सु॒दुघे॑ मा॒तरा॑ म॒ही । स॒वा॒तरौ॑ न तेज॑सा व॒त्समिन्द्र॑मवर्धतां वी॒तामाज्य॑स्य हो॒तर्यज॑ ॥ ६ ॥

**उ०** होता यक्षदुषे दैव्यो होता यजतु । उषे नक्तोषासाविति प्राप्ते पूर्वपदलोपश्छान्दसः । इन्द्रस्य धेनू सुदुघे शोभनदोहने मातरा मातरौ । मही महत्यौ । ते चेज्यमाने सवातरौ । वातृशब्दो वत्सवचनः समानो वाता वत्सः ययोस्ते सवातरौ । नकार उपमार्थीयः । एकशिशुके इव गावौ तेजसा वत्समिव इन्द्रं अवर्धताम् । वीतां पिबताम् आज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥ ६ ॥

**म०** आर्षी त्रिष्टुप् । उषे अत्र पूर्वपदलोपः । होता उषे नक्तोषे यजतु । ते च तेजसा इन्द्रमवर्धताम् आज्यं वीतां पिबतां च । तत्र दृष्टान्तः । सवातरौ न । न इवार्थे । समानो वाता वत्सौ ययोस्ते सवत्सौ एकशिशुके गावौ वत्सं यथा वर्धयेते तथेन्द्रं वर्धयताम् । कीदृश्यौ उषे । इन्द्रस्य धेनू धिनुतस्ते धेनू प्रीणयित्र्यौ । सुदुघे सुष्ठु दुग्धस्ते सुदुघे दुग्धं पूरयन्त्यौ । मातरा मातरौ । विभक्तेराकारः । मातृवत्पालिके । मही मह्यौ महत्यौ । विभक्तिलोपः ॥ ६ ॥

## सप्तमी ।

होता॑ यक्ष॒द्दैव्या॒ होता॑रा भि॒षजा॒ सखा॑या ह॒विषेन्द्रं॑ भिषज्यतः । क॒वी दे॒वौ प्रचे॑तसा॒विन्द्रा॑य धत्त इन्द्रि॒यं वी॒तामाज्य॑स्य हो॒तर्यज॑ ॥ ७ ॥

**उ०** होतायक्षद्दैव्याहोतारा । दैव्यो होता यजतु दैव्यौ होतारौ । भिषजा भिषजौ देवानां वैद्यौ । सखाया सखायौ समानख्यानौ । यौ च हविषा इन्द्रम् भिषज्यतः यौ च कवी क्रान्तदर्शनौ यौ च देवौ द्युस्थानौ यौ च प्रचेतसौ प्रकृष्टज्ञानौ यौ च इन्द्राय इन्द्र इति विभक्तिव्यत्ययः । धत्तः स्थापयतः इन्द्रियं वीर्यम् । तौ चेज्यमानौ वीतां पिबताम् आज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥७॥

**म०** अतिजगती । दैव्यौ होतारौ अयं चाग्निरसौ च मध्यमस्तौ होता यजतु । यौ च हविषा इन्द्रं भिषज्यतः चिकित्सतः 'भिषज् रुग्जये' कण्ड्वादिभ्यो यक् । इन्द्राय इन्द्रियं वीर्यं धत्तः । तौ च आज्यं वीताम् । कीदृशौ । भिषजा भिषजौ चिकित्साकुशलौ । सखाया सखायौ अन्योन्यं स्नेहवन्तौ । कवी कान्तदर्शनौ । देवौ दीप्यमानौ । प्रचेतसौ प्रकृष्टं चेतो ज्ञानं ययोस्तौ ॥ ७ ॥

## अष्टमी ।

होता॑ यक्ष॒त्तिस्रो॑ दे॒वीर्न भे॑ष॒जं त्रय॑स्त्रि॒धात॑वो॒ऽपस॒ इडा॒ सर॑स्वती॒ भार॑ती म॒हीः । इन्द्र॑पत्नीर्ह॒विष्म॑ती॒र्व्यन्त्वाज्य॑स्य हो॒तर्यज॑ ॥ ८ ॥

**उ०** होता यक्षत्तिस्रो देवीः । न भेषजं त्रयस्त्रिधातवोपसः । नकारो भिन्नक्रमः समुच्चयार्थीयः । भेषजं च ये च त्रयो लोकाः त्रिधातवः अग्निवायुसूर्यास्तेषां धातवः अपसः । अप इति कर्मनाम मत्वर्थीयलोपः । अपस्विनः कर्मवन्तः । शीतोष्णवर्षादीनि हि तेषां कर्माणि । तांश्च होता यजतु । कतमास्तिस्रो देव्यः इडा सरस्वती भारती च । महीः महतीः इन्द्रपत्नीः इन्द्रस्य पालयित्रीः हविष्मतीः हविषा संयुक्ताः । ताश्चेज्यमानाः व्यन्तु पिबन्तु आज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥ ८ ॥

**म०** ब्राह्मी अनुष्टुप् । भेषजं भेषजरूपा ये त्रयो लोकास्तान् इडा सरस्वती भारतीति तिस्रो देवीश्च होता यजतु । ताश्चाज्यं व्यन्तु नकारश्चार्थे । कीदृशास्त्रयः । त्रिधातवः त्रयोऽग्निवायुसूर्या धातवो धर्तारो येषां ते । अपसः अपस्विनः कर्मवन्तः शीतोष्णवातवर्षादीनि लोकानां कर्माणि । कीदृश्यस्तिस्रः । महीः महत्यः । इन्द्रपत्नीः इन्द्रस्य पत्यः पालयित्र्यः । हविष्मतीः हविर्विद्यते यासां ताः ॥ ८ ॥

## नवमी ।

होता॑ यक्ष॒त्त्वष्टा॑र॒मिन्द्रं॑ दे॒वं भि॒षजं॑ᳫं सु॒यजं॑ घृत॒श्रिय॑म् । पु॒रु॒रूप॑ᳫं सु॒रेत॑सं म॒घोन॒मिन्द्रा॑य॒ त्वष्टा॒ दध॑दिन्द्रि॒याणि॒ वेत्वाज्य॑स्य हो॒तर्यज॑ ॥ ९ ॥

**उ०** होता यक्षत्त्वष्टारमिन्द्रम् । दैव्यो होता यजतु । त्वष्टारं प्रयाजदेवताम् । इन्द्रम् 'इदि परमैश्वर्ये' त्वष्टा चेन्द्रः सामानाधिकरण्यात् । देवं दानादिगुणयुक्तम् भिषजमिन्द्रस्य । सुयजम् साधुयष्टव्यम् अक्लेशयागं वा । घृतश्रियम् आज्यहविष्का हि प्रयाजाः । पुरुरूपं बहुरूपम् । सुरेतसं शोभनरेतस्कम् । मघोनं मघवन्तं धनवन्तम् । स चेज्यमानस्त्वष्टा इन्द्राय इन्द्रे इति विभक्तिव्यत्ययः । दधत् स्थापयत् । इन्द्रियाणि वीर्याणि वेतु च पिबतु च आज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥ ९ ॥

**म०** अतिजगती । होता त्वष्टारं प्रयाजदेवतां यजतु । कीदृशं त्वष्टारम् । इन्द्रम् 'इदि परमैश्वर्ये' ईश्वरं प्रभुम् । देवं दातारम् । भिषजं रोगनिवर्तकम् । सुयजं सुष्ठु इज्यते स सुयजस्तं साधु यष्टव्यम् । घृतश्रियं घृतेन श्रीः शोभा यस्य तम् । आज्यहविष्का हि प्रयाजाः । पुरुरूपं पुरूणि बहूनि रूपाणि

यस्य तम् । सुरेतसं शोभनं रेतो वीर्यं यस्य तम् । मघोनं मघवन्तं धनवन्तम् । स त्वष्टा इन्द्राय इन्द्रियाणि वीर्याणि दधत् सन् आज्यं वेतु ॥ ९ ॥

## दशमी ।

होता॑ यक्षद्वन॒स्पति॑ꣳ शमि॒तार॑ꣳ श॒तक्र॑तुं धि॒यो जो॒ष्टार॑मिन्द्रि॒यम् । मध्वा॑ सम॒ञ्जन्प॒थिभिः॑ सु॒गेभिः॒ स्वदा॑ति य॒ज्ञं मधु॑ना घृ॒तेन॒ वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥ १० ॥

**उ०** होता यक्षद्वनस्पतिम् । दैव्यो होता वनस्पतिं यजतु शमितारं हविषा संस्कर्तारम् । शतक्रतुं बहुकर्माणम् । धियो जोष्टारम् बुद्धेः कर्मणो वा सवितारम् । इन्द्रियं वीर्यात्मकम् । स चेज्यमानः । मध्वा समञ्जन् मधुस्वादुना घृतेन समञ्जन् यज्ञं संमृष्टीकुर्वन् । पथिभिः सुगेभिः मार्गैः शोभनगमनैः स्वदाति यज्ञम् । स्वदातिः प्रापणार्थः । प्रापयतु यज्ञं देवाननु । मधुना मधुस्वादुना घृतेन सहितम् । वेतु च पिबतु चाज्यस्य स्वमंशं । त्वमपि हे मनुष्यहोतः, यज ॥ १० ॥

**म०** शक्करी । होता वनस्पतिं प्रयाजदेवतां यजतु । कीदृशं वनस्पतिम् । शमितारम् उलूखलादिरूपेण हविषां संस्कर्तारम् । शतक्रतुं शतं क्रतवः कर्माणि यस्य तं बहुकर्माणम् । धियो जोष्टारं बुद्धेः सेवितारम् । इन्द्रियमिन्द्रस्यात्मनो हितं वीर्यरूपं वा । स त्वष्टा मध्वा मधुना स्वादुना घृतेन समञ्जन् यज्ञं संम्रक्षयन् सन् । सुगेभिः सुगैः सुगमनैः पथिभिर्मार्गैः मधुना स्वादुना घृतेन युतं यज्ञं । स्वदाति देवान् प्रापयति । स्वदातिः प्रापणार्थः । स आज्यं वेतु । सुखेन गम्यते येषु ते सुगाः 'सुदुरोरधिकरणे' ( पा० ३ । २ । ४८ ) इति गमेर्डप्रत्ययः ॥ १० ॥

## एकादशी ।

होता॑ यक्ष॒दिन्द्र॑ꣳ स्वाहाज्य॑स्य॒ स्वाहा॒ मेद॑सः॒ स्वाहा॑ स्तो॒काना॑ꣳ स्वाहा॒ स्वाहा॑कृतीना॒ꣳ स्वाहा॑ ह॒व्यसू॑क्तीनाम् । स्वाहा॑ दे॒वा आ॑ज्य॒पा जु॑षा॒णा इन्द्र॒ आज्य॑स्य॒ व्यन्तु॒ होत॒र्यज॑ ॥ ११ ॥

**उ०** होता यक्षदिन्द्रम् । दैव्यो होता यजतु इन्द्रम् । स्वाहाज्यस्य स्वाहाकारेणाज्यदेवतानां च संस्थां करोतु । स्वाहामेदसः स्वाहाकारेण मेदोदेवतानां च संस्थां करोतु । स्वाहा स्तोकानाम् स्तोका बिन्दवः । स्वाहाकारेण च स्तोकदेवतानां संस्थां करोतु । स्वाहा स्वाहाकृतीनाम् स्वाहाकारेण च स्वाहाकृतिदेवतानां संस्थां करोतु । स्वाहादेवा आज्यपा जुषाणा इन्द्र आज्यस्य । प्रयाजानुयाजा वै देवा आज्यपाः स्वाहाकारेण वै देवा आज्यपाः जुषाणाः सेवमानाः प्रीयमाणा वा इन्द्रं । आज्यस्य वेतु स्वमंशं पिबतु । त्वमपि हे मनुष्यहोतः, यज ॥ ११ ॥

**म०** शक्करी । होता इन्द्रं यजतु । स्वाहाकारेणाज्यस्य देवान्यजतु । स्वाहाकारेण मेदसो देवान्यजतु । स्वाहाकारेण स्तोकानां सोमबिन्दूनां देवान्यजतु । स्वाहाकारेण स्वाहाकृतीनां देवानां स्वाहाकृतीः प्रयाजदेवताः यजतु । स्वाहाकारेण हव्यसूक्तीनां हव्यसंबन्धिसुवचनानां देवान्यजतु । स्वाहाकारेणाज्यपा देवाः प्रयाजाः जुषाणाः प्रीयमाणा भवन्तः सन्तः इन्द्रश्चाज्यं व्यन्तु पिबन्तु ॥ ११ ॥

## द्वादशी ।

दे॒वं ब॒र्हिरिन्द्र॑ꣳ सु॒दे॒वं दे॒वैर्वी॒रव॑त्स्ती॒र्णं वेद्या॑मवर्धयत् । वस्तो॑र्वृ॒तं प्राक्तो॑र्भृ॒तꣳ रा॒या ब॒र्हिष्म॑तोऽत्यगाद्वसु॒वने॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥ १२ ॥

**उ०** देवं बर्हिः । एकादशानुयाजप्रैषाः ऐन्द्राः मैत्रावरुणो ब्रवीति यज्ञसाधनभूतं बर्हिरिह देवता । यद्देवं बर्हिः । इन्द्रमवर्धयदिति संबन्धः । कथंभूतमिन्द्रम् । सुदेवं शोभना देवा मरुदादयो यस्य स सुदेवः तं सुदेवम् । देवैर्वीरवत् । बर्हिषो विशेषणमेतत् । देवैः हविषा दातृभिः ऋत्विग्भिः वीरवत् वीरयुक्तम् । यच्च स्तीर्णं वेद्याम् यच्च बर्हिः वस्तोर्वृतम् अहनि लूनम् यच्च अक्तोः रात्रौ प्रभृतं प्रधारितम् । वस्तोरहर्वचनः अक्तो रात्रिवचनः इत्यव्ययद्वयम् । इन्द्रमवर्धयदिति सर्वत्र संबध्यते । यच्च राया धनेन हविर्लक्षणेन अन्यान्यजमानान् । बर्हिष्मतः बर्हिषा संयुक्तान् । अत्यगात् अतिक्रम्य गतं संस्कारोत्कर्षात् तद्धविः वसुवने वसुवननाय च धननिखननाय च वेतु पिबतु । त्वंच हे होतः, यज ॥ १२ ॥

**म०** एकादश ऐन्द्रपशोः संबन्धिन एवानुयाजप्रैषाः । देवता बर्हिरादयः । अतिजगती । मैत्रावरुणो वदति । बर्हिः देवं बर्हिःसंज्ञानुयाजदेवता इन्द्रमवर्धयत्पुष्णाति । किंभूतं बर्हिः । सुदेवं शोभना देवा मरुदादयो यत्र तत् । तथा देवैः दातृभिः ऋत्विग्भिः वीरवत् वीरयुतम् । वेद्यां स्तीर्णमाच्छादितम् । वस्तोरहनि वृतं लूनम् धातूनामनेकार्थत्वात् । अक्तोरात्रौ प्रभृतं प्रकर्षेण धृतम् । वस्तोरक्तोरित्यव्ययद्वयं क्रमादहर्निशावाचकम् । यत् बर्हिः राया हविर्लक्षणेन धनेन बर्हिष्मतः बर्हिषा युक्तानन्यान् यागानत्यगात् अतिक्रम्य गतं संस्कारोत्कर्षात् तत् बर्हिः वसुवने वसुवननाय धनदानाय वसुधेयस्य वसुधेयाय वसुनो धानाय निधानाय यजमानगृहे निखननाय वेतु आज्यं पिबतु । वसुवने वसुधेयस्येति सप्तमीषष्ठ्यौ चतुर्थ्यर्थे । हे मनुष्यहोतः, त्वमपि यज । एवमग्रेऽपि कण्डिकाशेषो व्याख्येयः ॥ १२ ॥

## त्रयोदशी ।

देवीर्द्वारु इन्द्रंᳬ संघाते वीड्वीर्यामन्नवर्धयन् । आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाणंᳬ रेणुकंकाटं नुदन्तां वसुवने वसुधेयस्य व्यन्तु यज ॥ १३ ॥

उ० देवीर्द्वारः यज्ञगृहद्वार उच्यन्ते । या देव्यो यज्ञगृहद्वारः इन्द्रं यामन् यामनि कर्मप्राप्तौ सत्याम् अवर्धयन् । याश्च संघाते देहलीकपाटपुटार्गलादिसंघाते सति वीड्वीः दृढाः । नहि संघातमन्तरेण तासां दृढत्वमुपपद्यते । ता इदानीम् आ आभिमुख्येन स्थित्वा वत्सेन तरुणेन कर्मक्षमेण कुमारेण च मीवता 'मीङ् हिंसायाम्' शत्रूणां हिंसावता अपअर्वाणम् रेणुककाटम् समासपदमेतत् । नुदन्ताम् । इतिपदानि अपनुदन्तामपनयन्तु । वत्सैः पुत्रैश्च अर्वते गम्यते पत्यते यस्मिन्निति अर्वा तमर्वाणम् रेणुककाटम् । काटः कूपः । ककाराभ्यासः कुत्सार्थः रेणुःपूर्णः कुत्सितः कूपः रेणुककाटः तं रेणुककाटम् । उपलक्षणमेतत् यज्ञभ्रंशकराणि कूपादीनि यज्ञमार्गादपनयन्त्वित्यर्थः । वसुवननाय वसुनिधानाय च व्यन्तु पिबन्तु । त्वमपि हे होतः, यज ॥ १३ ॥

म० एकाधिका शक्करी । यज्ञगृहद्वारोऽत्र देवताः । यच्छन्ति नियता भवन्ति ऋत्विजो यत्रेति याम कर्म । यमेरनिण्प्रत्ययो वृद्धिश्च सप्तम्या लुक् । यामनि कर्मणि या द्वारो देव्यः इन्द्रमवर्धयन् । कीदृश्यो द्वारः । संघाते देहलीकपाटद्वारशाखार्गलादिसमूहे सति वीड्वीः वीड्व्यः दृढाः । संघातं विना न द्वारां दृढत्वं स्यात् । ता द्वारो रेणुककाटमपनुदन्ताम् । काटः कूपः कुत्सितः काटः ककाटः । रेणुभिः कृत्वा ककाटो रेणुककाटः तम् अपनुदन्तां निवर्तयन्तु । किमित्यतो विशेषणे । कीदृशं कूपम् । वत्सेन गोपुत्रेण तरुणेन कुमारेण च आ आभिमुख्येन अर्वाणम् अर्यते गम्यते यत्रेत्यर्वा तम् 'ऋ गतौ' इत्यतो 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति वनिप्प्रत्ययः । कीदृशेन । मीवता 'मीञ् हिंसायाम्' मयनं मीः क्विप् । मीरस्यास्ति मीवान् तेन हिंसाशीलेन । हिंसाशीलाश्चञ्चला उच्चलन्तो वत्साः कुमाराश्च यत्र पतन्ति तं कूपमपनुदेत्यर्थः । उपलक्षणमेतत् यज्ञप्रजाविघ्नकराणि कूपादीनि मार्गादपनयन्त्वित्याशयः । ता व्यन्तु च ॥ १३ ॥

## चतुर्दशी ।

देवी उषासानक्तेन्द्रं यज्ञे प्रयत्यह्वेताम् । दैवीर्विशः प्रायासिष्टांᳬ सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज ॥ १४ ॥

उ० देवी उषासानक्ता ये देव्यौ उषाश्च नक्ता रात्रिश्च इन्द्रं यज्ञे प्रयति गच्छति वर्तमाने अह्वेताम् आहूतवत्यौ वर्धनाय । ये च देव्यौ दैवीर्विशः वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्यादिकाः प्रति । अयासिष्टाम् गतवत्यौ स्वेन संभोगेन । यद्वा 'देव्यौ वा एता विशो यत्पशवः' इति श्रुतिः । दैवीर्विशः यज्ञाङ्गभूतान्पशून्प्रति अयासिष्टां गतवत्यौ । अनुयाजेषु हि तयोर्भाग इत्यभिप्रायः । ये च सुप्रीते साधुप्रीते । ये च सुधिते साधुहिते । ते वसुवननाय वसुनिधानाय च वीतां पिबतां । त्वमपि हे होतः, यज ॥ १४ ॥

म० ब्राह्मी उष्णिक् । उषाश्च नक्ता च उषासानक्ता । समासे उषःशब्दस्य उषासादेशः । अहोरात्राधिष्ठात्र्यौ देवी देव्यौ यज्ञे प्रयति प्रवर्तमाने सति इन्द्रमह्वेतामाहूतवत्यौ । प्रैति प्रयन् प्रपूर्वादिणः शतृ । ये च दैवीः देवसंबन्धिनीर्विशः प्रजाः प्रायसिष्टां प्रगतवत्यौ । यातेर्लुङ् । वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्यादयो देवप्रजाः । ते च वीतां पिबताम् । कीदृश्यौ । सुप्रीते अतितुष्टे । सुधिते सुतरां हिते ॥ १४ ॥

## पञ्चदशी ।

देवी जोष्ट्री वसुधिती देवमिन्द्रमवर्धताम् । अयाव्यन्याघा द्वेषांᳬस्यान्याव॑क्षद्वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ १५ ॥

उ० देवी जोष्ट्री देव्यौ जोषयित्र्यौ । इदानीं देवताविकल्पः । द्यावापृथिव्याविति वा अहोरात्रे इति वा । सस्यं च समा चेति कात्थक्यः । ये देव्यौ जोषयित्र्यौ । वसुधिती वसुधानं याते वसुनो धारयित्र्यौ वा ये च देवमिन्द्रम् अवर्धताम् अवर्धयताम् । अयाव्यन्याघाद्वेषांसि ययोश्च मध्ये अयावि । 'यु पृथग्भावे' पृथक्करोति । लकारव्यत्ययः । अन्या एका अघा अघानि पापानि द्वेषांसि च दौर्भाग्यानि आ अन्यावक्षत् वसुवार्याणि यजमानाय । अन्या एका आवक्षत् आवहति वसूनि व रणीयाणि यजमानार्थम् । कथंभूते । शिक्षिते विदितवेद्ये तत्वज्ञे । ते च वसुवननाय वसुधानाय च वीतां पिबतां त्वमपि हे होतः, यज ॥ १५ ॥

म० एकाधिकातिजगती । जोष्ट्री जुषेते ते जोष्ट्र्यौ प्रीतियुक्ते देवी देव्यौ । वसुधिती वसुनो धनस्य धितिर्धारणं याभ्यां ते द्यावापृथिव्यौ अहोरात्रे वा । 'सस्यं च समा चेति कात्थक्यः' ( निरु० ९ । ४१ ) । ते इन्द्रं देवमवर्धतामवर्धयताम् । तयोर्मध्ये अन्या एका अघा अघानि पापानि द्वेषांसि दौर्भाग्यानि च अयावि । 'यु पृथग्भावे' दूरीकरोति । यौतेश्चिण् लकारव्यत्ययः । अन्या द्वितीया वार्याणि वरणीयानि भोगयोग्यानि वसु वसूनि धनानि आवक्षत् आवहति । कीदृश्यौ ते । शिक्षिते विदितवेद्ये तत्त्वज्ञे । ते वीताम् ॥ १५ ॥

## षोडशी ।

देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम् ।

इषमूर्जमन्या वक्षत्सग्धिꣳ सपीतिमन्या नवेन पूर्वं दयमाने पुराणेन नवमधातामूर्जमूर्जाहुती ऊर्जयमाने वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ १६ ॥

उ० देवी ऊर्जाहुती । अधस्तनप्रैषोक्त एव देवताविकल्पः। ये देव्यौ ऊर्जाहुती ऊर्जाह्वान्यौ दुघे दोग्ध्र्यौ अन्योन्यम् । 'अनयोरनुसंभोगमिमाः सर्वाः प्रजाः अनुसंभुञ्जत' इति श्रुतिः । सुदुघे साधुदोहने । ये च पयसा इन्द्रम् अवर्धताम- वर्धयताम् । ययोश्च इषमन्नम् ऊर्जं च तदुपसेचनं दध्यादि अन्या एका आवक्षत् आवहति यजमानाय । सग्धिं सपीतिमन्या अन्या अपरा च सग्धिं समानां जग्धिं पुत्रपौत्रादिभिः । सपीतिं समानां पीतिं पानं च आवक्षत् आवहति यजमानाय नवेन पूर्वं दयमाने पुराणेन नवमधाताम् । ये च देव्यौ नवेन ऊर्जा धान्येन पूर्वं पुरातनम् ऊर्जं धान्यम् । दयमाने दयतिः रूपदयाकर्मा । रक्षितवत्यौ सत्यौ अधाताम् । पुराणेन च ऊर्जा धान्येन नवमूर्जं धान्यम् अधाताम् धारितवत्यौ । ये च ऊर्जाहुती ऊर्जयमाने स्वीकुर्वाणे । वसूनि वरणीयानि यजमानाय । शिक्षिते विदितवेद्ये च वसुवननाय वसुधानाय च वीतां पिबताम् । त्वमपि हे होतः, यज ॥ १६ ॥

म० विकृतिः । अधस्तनमन्त्रोक्तो देवताविकल्पः । देवी देव्यौ पूर्वप्रैषोक्ते पयसा दुग्धेनेन्द्रमवर्धताम् अवर्धयताम् 'छन्दस्युभयथा' (पा०३।४।११७) इति शप् आर्धधातुकत्वाण्णिचो लोपः । कीदृश्यौ । ऊर्जाहुती ऊर्जा बलं तद्युक्ता आहुतिराह्वानं ययोस्ते । दुघे दुग्धस्ते दुघे 'दुहः कब्घश्च' ( पा० ३ । २ । ७० ) इति कप् घादेशश्च । दोग्ध्र्यौ 'अनयोरनु संभोगमिमाः सर्वाः प्रजा अनुसंभुञ्जतः' इति श्रुतेः । सुदुघे साधुदोहने । तयोर्मध्ये अन्या एका इषमन्नमूर्जं दध्यादि च वक्षत् वहति यजमानाय । अन्या द्वितीया सग्धिं सपीतिं च वक्षत् समाना ग्धिर्भोजनं सग्धिः ताम् । समाना पीतिः सपीतिः पुत्रादिभिः सह पानभोजने वहति । ये देव्यौ नवेनान्नेन पूर्वं पुराणमन्नमधाताम् पुराणेनान्नेन नवमन्नमधाताम् । यजमानाय वार्याणि वसु वसूनि चाधाताम्। अन्नं धनं चाक्षयं कृतवत्याविलर्थः । कीदृश्यौ । दयमाने उक्षन्त्यौ कृपयन्त्यौ वा । ऊर्जाहुती ऊर्जायुता आहुतिर्होमो ययोस्ते । ऊर्जं रसमूर्जयमाने वर्धयन्त्यौ । शिक्षिते तत्त्वज्ञे । ते वीतां पिबताम् ॥ १६ ॥

## सप्तदशी ।

देवा दैव्या होतारा देवमिन्द्रमवर्धताम् । हताघशꣳसावाभार्ष्टां वसु वार्याणि यजमानाय शिक्षितौ वसुवने वसुधेयस्य वीतां यज ॥ १७ ॥

उ० देवा दैव्या । यौ देवौ दैव्यौ होतारौ । एकः पार्थिवोऽग्निः एकश्च मध्यमः । देवमिन्द्रमवर्धताम् । यौ च हताघशंसावभार्ष्टां वसुवार्याणि यजमानाय । शिक्षितौ अघं पापं ये शंसन्ति ते अघशंसाः । हता अघशंसा याभ्यां तौ हताघशंसौ । आभार्ष्टाम् आहार्ष्टाम् हृतवन्तौ वसूनि वरणीयानि यजमानाय । शिक्षितौ अवगतार्थौ तौ च वसुवननाय वसुधानाय च वीतां पिबतां । त्वमपि हे होतः, यज ॥ १७ ॥

म० अतिजगती । एकः पार्थिवोऽग्निः अन्यो मध्यमः । देवा देवौ दैव्या दैव्यौ होतारौ इन्द्रं देवमवर्धताम् । यजमानाय वार्याणि वसु वसूनि च आभार्ष्टाम् आहार्ष्टामाहृतवन्तौ । आङ्पूर्वाद्धरतेर्लुङ् हस्य भः । कीदृशौ । हताघशंसौ अघं पापं शंसतीच्छति अघशंसः पापी हतोऽघशंसो याभ्यां तौ पापिनिवर्तकौ । तौ वीताम् ॥ १७ ॥

## अष्टादशी ।

देवीस्तिस्रस्तिस्रो देवीः पतिमिन्द्रमवर्धयन् । अस्पृक्षद्भारती दिवꣳ रुद्रैर्यज्ञꣳ सरस्वतीडा वसुमती गृहान्वसुवने वसुधेयस्य व्यन्तु यज ॥ १८ ॥

उ० देवीस्तिस्रः । आदरार्थोऽभ्यासः । पतिं देवानां पालयितारम् इन्द्रमवर्धयन् । तासां मध्ये भारती भरत आदित्यः तस्य इयं भारती दिवम् अक्षत् स्पृशति । रुद्रैर्यज्ञं सरस्वती। सरस्वती च रुद्रैः सहिता यज्ञम् अस्पृक्षत् । इडा च वसुमती वसुभिः तद्वती गृहान् अस्पृक्षत् । गृहशब्देनात्रायं लोकोऽभिधीयते लक्षणया पृथिवीस्थानत्वादिडायाः । ताः वसुवननाय वसुधानाय च व्यन्तु पिबन्तु । त्वमपि हे होतः, यज ॥ १८ ॥

म० अतिजगती । तिस्रो देवीः देव्यः पतिं पालकमिन्द्रमवर्धयन् । आदरार्थं पुनरुक्तिः । ता एवाह । भारती दिवं स्वर्गमस्पृक्षत् स्पृशति । भरतो रविस्तत्कान्तिर्भारती । सरस्वती रुद्रैः युता यज्ञमस्पृक्षत् । वसुमती वसुयुता इडा गृहानस्पृक्षत्। गृहशब्देन भूलोकः । ता व्यन्तु ॥ १८ ॥

## एकोनविंशी ।

देव इन्द्रो नराशꣳसस्त्रिवरूथस्त्रिवन्धुरो देवमिन्द्रमवर्धयत् । शतेन शितिपृष्ठानामाहितः सहस्रेण प्रवर्तते मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिः स्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज ॥१९॥

उ० देव इन्द्रः । यज्ञो देवता देवः दानादिगुणयुक्तः यज्ञः इन्द्रः । 'इदि परमैश्वर्ये' परमेश्वरः । नराशंसः नरा अस्मिन्नासीनाः शंसन्तीति नराशंसः । त्रिवरूथः वरूथशब्दो गृहवचनः। त्रीणि वरूथानि गृहाणि सदोहविर्धानाग्नीध्राणि यस्य स त्रिवरूथः । त्रिवन्धुरः । वन्धुरशब्दः सारथिस्थानवचनः । त्रीणि वन्धुराणि सारथिस्थानानि ऋग्यजुःसामलक्षणानि यस्य स त्रिवन्धुरः । देवमिन्द्रमवर्धयत् । यश्च

शतेन शितिपृष्ठानामाहितः । शतगुणो हि अग्निराधेयस्तद्भिप्रायमेतत् । सहस्रेण गवां प्रवर्तते । सहस्रेण गवां यष्टव्यमित्युक्तेः । यस्य चास्य मित्रावरुणा इत् मित्रावरुणावेव होत्रमर्हतः । बृहस्पतिश्च स्तोत्रमौद्गात्रमर्हति । अश्विनौ च आध्वर्यवमर्हतः । स वसुवननाय वसुधानाय च वेतु पिबतु । त्वमपि हे होतः, यज ॥ १९ ॥

**म०** कृतिः । नरा अस्मिन्नासीनाः शंसन्ति नराशंसः यज्ञो देवः इन्द्रं देवमवर्धयत् । कीदृशो नराशंसः । इन्दतीतीन्द्रः ऐश्वर्यवान् । त्रिवरूथः वरूथं गृहम् । त्रीणि वरूथानि सदोहविर्धानाग्नीध्राणि यस्य सः । त्रिवन्धुरः त्रीणि वन्धुराणि ऋग्यजुःसामलक्षणानि वन्धनानि यस्य सः । नराशंसः शितिपृष्ठानां शतेनाहितः सन् सहस्रेण गोसहस्रेण प्रवर्तते । शिति श्यामं पृष्ठं यासां ताः शितिपृष्ठा गावः । मित्रावरुणा इत् मित्रावरुणावेवास्य नराशंसस्य होत्रमर्हतः होतृकर्मणि योग्यौ भवतः । बृहस्पतिः स्तोत्रमौद्गात्रमर्हति । अश्विना अश्विनौ अस्याध्वर्यवमर्हतः । स वेतु ॥ १९ ॥

## विंशी ।

दे॒वो दे॒वैर्वन॒स्पति॒र्हिर॑ण्यपर्णो॒ मधु॑शाखः सुपि॒प्पलो दे॒वमिन्द्र॑मवर्धयत् । दिव॒मग्रे॑णास्पृक्ष॒दान्तरि॑क्षं पृथि॒वीम॑दृ॒ꣳहीद्वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥२०॥

**उ०** देवो देवैः । यूप उच्यते । यो देवो वनस्पतिः देवैरेव हिरण्यपर्णः देवाः सौवर्णानि पर्णानि यस्य स तथोक्तः । मधुशाखः मधुरसवती शाखा यस्य स मधुशाखः देवैरेव । सुपिप्पलः साधुफलो देवैरेव देवमिन्द्रमवर्धयत् । यश्च दिवम् अग्रेण अस्पृक्षत् स्पृशति । आ अन्तरिक्षमस्पृक्षदित्यनुषङ्गः । मध्येनेति शेषः साकाङ्क्षत्वात् । पृथिवीमदंहीत् पृथिवीम् उपरेणेति शेषः । अदंहीत् दृढामकरोत् । स वनस्पतिः वसुवननाय वसुधानाय च वेतु पिबतु । त्वमपि हे होतः, यज ॥ २० ॥

**म०** अतिशक्वरी । यूप उच्यते । वनस्पतिर्देवो देवैः सह इन्द्रमवर्धयत् । कीदृशः । हिरण्यपर्णः हिरण्यमयानि पर्णानि यस्य । मधुशाखः मधुर्मधुरा रसवती शाखा यस्य । सुपिप्पलः शोभनानि पिप्पलानि फलानि यस्य । यो वनस्पतिरग्रेण दिवं स्वर्गमस्पृक्षत् स्पृशति । स्पृशेर्लुङि 'शल इगुपधादनिटः क्सः' ( पा० ३ । १ । ४५ ) इति क्सप्रत्ययः । अन्तरिक्षं मध्येनेति शेषः । आ स्पृशति । पृथिवीमुपरेणेति शेषः । अदंहीत् दृढामकरोत् । स वेतु ॥ २० ॥

## एकविंशी ।

दे॒वं ब॒र्हिर्वारि॑तीनां दे॒वमिन्द्र॑मवर्धयत् । स्वा॒स॒स्थमिन्द्रे॒णास॑न्नम॒न्या ब॒र्हीꣳष्य॒भ्य॒भूद्वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ २१ ॥



**उ०** देवं बर्हिः । यद्देवं बर्हिः । वारितीनाम् वाः उदकम् 'इण् गतौ' वारुदकमितिः स्थानं यासां ता वारितय ओषधयः तासां मध्ये देवं वरिष्ठम् । यद्वा वार्यं इति दर्भरूपेणावस्थानं येषां ते वारितयः दर्भाः । अत्र श्रुतिः 'तदेताभ्यामुत्पुनाति' इत्युपक्रम्य 'तस्मादुहैका आपो बीभत्सांचक्रिरे' इति अभिधीयते । त इमे दर्भा इत्याह । वारितीनां दर्भाणां संघातभूतम् देवमिन्द्रमवर्धयत् । यच्च स्वासस्थम् साधु आस्थेयं देवमनुष्यैः । यत्र च इन्द्रेण आसन्नम् आस्थितम् । यच्च अन्या अन्यानि हवींषि अभ्यभूत् अभिभवतीति कालव्यत्ययः । तत् वसुवननाय वसुधानाय च वेतु पिबतु । त्वमपि हे होतः, यज ॥ २१ ॥

**म०** आर्षी त्रिष्टुप् । बर्हिः अनुयाजदेव इन्द्रं देवमवर्धयत् । अन्या अन्यानि बर्हींष्यभ्यभूत् अभिभवति तद्वेतु । कीदृशं बर्हिः । वारितीनामोषधीनां मध्ये देवं दीप्यमानं श्रेष्ठम् । वारि जले इतिर्गतिर्यासां ता वारितयो जलाश्रिता ओषधयः । स्वासस्थं सुखेनासनेन स्थीयते यत्र तत्स्वासस्थम् । इन्द्रेणासन्नमाश्रितम् ॥ २१ ॥

## द्वाविंशी ।

दे॒वो अ॒ग्निः स्वि॑ष्ट॒कृद्दे॒वमिन्द्र॑मवर्धयत् । स्वि॑ष्टं कु॒र्वन्स्वि॑ष्ट॒कृत्स्वि॑ष्टम॒द्य क॑रोतु नो वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ २२ ॥

**उ०** देवो अग्निः । स्विष्टकृत् शोभनमिष्टं कर्तव्यमिति यस्यायमधिकारः । देवं च इन्द्रमवर्धयत् । यश्च स्विष्टं कुर्वन् स्विष्टकृतनामभूतः सः । स्विष्टं साध्विष्टम् अद्य अस्मिन्कर्मणि करोतु नोऽस्माकम् । अपिच वसुवननाय सुधानाय च वेतु पिबतु । त्वमपि हे होतः, यज ॥ २२ ॥

**म०** आर्षी त्रिष्टुप् । स्विष्टकृद्देवः अग्निः इन्द्रं देवमवर्धयत् स नोऽस्माकं स्विष्टं साधु इष्टं करोतु वेतु च । कीदृशः । स्विष्टं कुर्वन्सन् स्विष्टकृत् नाम शोभनमिष्टं कर्तव्यमिति तस्याधिकारः ॥ २२ ॥

## त्रयोविंशी ।

अ॒ग्निम॒द्य होता॑रमवृणीता॒यं यज॑मानः॒ पच॒न्पक्तीः॒ पच॑न्पुरो॒डाशं॑ ब॒ध्नन्निन्द्रा॑य॒ छाग॑म् । सू॒प॒स्था अ॒द्य दे॒वो वन॒स्पति॑रभव॒दिन्द्रा॑य॒ छागे॑न । अघ॑त्तं मेद॒स्तः प्रति॑ पच॒ताग्र॑भीदवी॑वृधत्पुरो॒डाशे॑न । त्वाम॒द्य ऋषे० ॥ २३ ॥

**उ०** अग्निमद्य । व्याख्यातः प्रैषः । ऐन्द्र एकः पशुरिति विशेषः ॥ २३ ॥

**म०** त्वामद्य अयं प्रतीकः उभयत्रापि । ऐन्द्रपशुसंबन्धी सूक्तवाकप्रैषः । त्वामद्य ऋषे इत्ययं मन्त्र उभयत्रापि ऐन्द्रानु-

वाके वायोधसानुवाके च प्रतीकोक्तः आदिमात्रेणोक्तः सकलो ज्ञेयः । अग्निमय एकाधिका प्राजापत्या जगती । सूपस्थाः ब्राह्मी उष्णिक् । त्वामय एकाधिका विकृतिः । व्याख्यातः प्रैषः ( २१ । ५९—६१ ) ॥ २३ ॥

## चतुर्विंशी ।

होता॑ यक्षत्स॒मिधा॑नं म॒हद्यशः॒ सुस॑मिद्धं॒ वरे॑ण्यम॒ग्निमिन्द्रं॑ व॒यो॒धस॑म् । गा॒य॒त्रीं छन्द॑ इन्द्रि॒यं त्र्यविं॒ गां वयो॒ दध॒द्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥ २४ ॥

उ० होता यक्षत् । इन्द्राय वयोधसे । पशुसंस्कारश्चैन्द्रः तत्रैते प्रैषाः । अतः प्रयाजदेवताऽविरोधेन यथैन्द्राः संपद्यन्ते तथा व्याख्यायन्ते । दैव्यो होता यजतु समिधानमग्निम् । महच्च यशः अग्निसंबन्धि । सुसमिद्धं चाग्निमेव । वरेण्यं वरणीयं चाग्निम् । इन्द्रं च वयोधसम् वयः आधातव्यमस्मिन्निति वयोधास्तं वयोधसम् । वयसः आयुषो वा धारयितारम् । किं कुर्वन् दैव्यो होता यजतु । गायत्रीं च छन्दः इन्द्रियं वीर्यं च त्र्यविं च गां वयश्च आयुः दधत् धारयन् । इन्द्रे इत्यध्याहारः प्रकरणात् । प्रयाजदेवता च इन्द्रसहिता वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ २४ ॥

म० एकादश वायोधसे पशौ प्रयाजप्रैषाः समित्तनूनपादाद्याप्रीदेवताः । अतिजगती । दैव्यो होता अग्निं वयोधसमिन्द्रं च यजतु । वयः आयुर्दधाति वयोधाः तम् आयुषो धातारं धारयितारं वा । कीदृशमग्निम् । समिधानं दीप्यमानम् । महद्यशः । सुपां सुलुगिति तृतीयैकवचनस्य सुआदेशः । महता यशसा समिद्धं दीप्तम् । वरेण्यं वरणीयम् । किं कुर्वन् यजतु । गायत्रीं छन्दः इन्द्रियं वीर्यम् त्र्यविं गाम् वयः आयुश्च दधत् स्थापयन् इन्द्रे इति शेषः । षण्मासात्मकः कालोऽविः त्र्योऽवयो यस्याः सा त्र्यविः सार्धसंवत्सरा गौः ताम् । प्रयाजदेवतेन्द्रयुता आज्यं वेतु । हे मनुष्यहोतः, त्वमपि यज । एवमग्रेऽपि ॥ २४ ॥

## पञ्चविंशी ।

होता॑ यक्ष॒त्तनू॒नपा॑तमु॒द्भिदं॒ यं गर्भ॒मदि॑ति॒र्द॒धे शुचि॒मिन्द्रं॑ व॒यो॒धस॑म् । उ॒ष्णिहं॒ छन्द॑ इन्द्रि॒यं दि॑त्य॒वाहं॒ गां वयो॒ दध॒द्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥ २५ ॥

उ० होता यक्षत्तनूनपातम् । दैव्योहोता यजतु तनूनपातम् । उद्भिदम् उद्भेत्तारं यज्ञफलानाम् । यं च गर्भम् अदितिः दधे धारितवती । शुचिं पवित्रम् । इन्द्रं च यजतु वयोधसम् । वय आयुर्धीयते यस्मिन् तं वा वयसो धारयितारं वा । किंकुर्वन्दैव्यो होता यजतु । उष्णिहं च छन्दः इन्द्रियं वीर्यं च दित्यवाहं च गां वय आयुश्च इन्द्रे दधत् धारयन् । प्रयाजदेवता च इन्द्रसहिता वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ २५ ॥

म० एकाधिका जगती । होता तनूनपातं प्रयाजदेवं वयोधसमिन्द्रं च यजतु । अदितिर्यं गर्भं दधे तं इन्द्रमित्यर्थः । कीदृशं तनूनपातम् । उद्भिदम् उद्भिनत्ति प्रकटयति फलमित्युद्भित् तं । यज्ञफलानामुद्भेत्तारम् । शुचिं पवित्रम् । किं कुर्वन् । उष्णिहं छन्दः इन्द्रियम् दित्यवाहं गाम् वयश्च इन्द्रे दधत् । द्विवर्षा गौर्दित्यवाट् । स सेन्द्रो वेतु ॥ २५ ॥

## षड्विंशी ।

होता॑ यक्ष॒दीडे॒न्य॑मीडि॒तं वृ॑त्र॒हन्त॑ममि॒डाभि॒रीड्य॒ꣳ सहः॒ सोम॒मिन्द्रं॑ व॒यो॒धस॑म् । अ॒नु॒ष्टुभं॒ छन्द॑ इन्द्रि॒यं पञ्चा॑विं॒ गां वयो॒ दध॒द्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥ २६ ॥

उ० होता यक्षदीडेन्यम् । दैव्यो होता यजतु । ईडेन्यं स्तुत्यम् । ईडतेरेन्यप्रत्ययः । ईडितम् ऋषिभिः स्तुतम् । वृत्रहन्तमम् अतिशयेन वृत्रस्य हन्तारम् । इडाभिः प्रयाजदेवताभिः । ईड्यं स्तुत्यम् । इन्द्रविशेषणान्येतानि । सहः सोमं च यजतु । सहःसोमशब्दौ नैघण्टुकौ इन्द्रसंबन्धात्पठ्येते । इन्द्रं च वयोधसं वयस आयुषो धारयितारम् । किं कुर्वन्यजतु । अनुष्टुभं च छन्दः इन्द्रियम् वीर्यं च पञ्चाविं च गां वय आयुश्च इन्द्रे दधत् धारयन् । प्रयाजदेवता च इन्द्रसहिता वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ २६ ॥

म० व्यूहेन शक्वरी । होता इडाभिः प्रयाजदेवताभिः सह वयोधसमिन्द्रं यजतु । कीदृशमिन्द्रम् । ईडेन्यम् ईडितुं योग्य ईडेन्यः ईडेरेन्यप्रत्ययः । ईडितमृषिभिः स्तुतम् । वृत्रहन्तमम् 'नाद्धस्य' ( पा० ८ । २ । १७ ) इति नुडागमः । ईड्यं सर्वैः स्तुत्यम् । सहः सोमं सहसा बलेन सोमवदाह्लादकम् । किं कुर्वन् । अनुष्टुभं छन्दः इन्द्रियम् पञ्चाविं गाम् वयश्चेन्द्रे दधत् । पञ्चावयो यस्याः सा सार्धद्विवर्षा गौः । स वेतु ॥ २६ ॥

## सप्तविंशी ।

होता॑ यक्षत्सु॒ब॒र्हिषं॑ पूष॒ण्वन्त॒मम॑र्त्य॒ꣳ सीद॑न्तं ब॒र्हिषि॑ प्रि॒येऽमृ॒तेन्द्रं॑ व॒यो॒धस॑म् । बृ॒ह॒तीं छन्द॑ इन्द्रि॒यं त्रि॒व॒त्सं गां वयो॒ दध॒द्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥ २७ ॥

उ० होता यक्षत् । दैव्यो होता यजतु । सुबर्हिषं शोभनबर्हिष्कम् । पूषण्वन्तं पूष्णा संयुक्तम् अमर्त्यममरणधर्माणम् । सीदन्तं बर्हिषि प्रिये अवस्थानं कुर्वन्तं बर्हिष्यभिरुचिते । अमृते इन्द्रं वयोधसम् । किं कुर्वन् यजतु । बृहतीं

च छन्दः इन्द्रियं वीर्यं च त्रिवत्सं च गां वय आयुश्च इन्द्रे दधत् धारयन् । प्रयाजदेवता चेज्यमाना इन्द्रेण सह वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज । ननु प्रयाजदेवताया अत्राधिकरणभावः केवलमुपलभ्यते न तु देवतात्वमिति यश्चोदयेत् तं प्रत्याह । इत्थंभूतमेव बर्हिषो देवतात्वमित्यदोषः । तथा द्वारामपि देवतात्वम् ॥ २७ ॥

**म०** शक्वरी । होता वयोधसमिन्द्रं यजतु । कीदृशम् । सुबर्हिषं शोभनं बर्हिः प्रयाजदेवता यस्य तम् । पूषण्वन्तम् पूषास्यास्ति पूषण्वांस्तं पूष्णा युक्तम् । अमर्त्यममरणधर्माणम् । प्रिये रुचिते अमृता अमृते अनश्वरे बर्हिषि सीदन्तं तिष्ठन्तम् । किं कुर्वन् । बृहतीं छन्दः इन्द्रियम् त्रिवत्सं गां वयश्चेन्द्रे दधत् । वत्सः संवत्सरः त्रयो वत्सा यस्य त्रिवत्सो गौः त्रिवर्षो वृषः । स वेतु ॥ २७ ॥

## अष्टाविंशी ।

होता॑ यक्ष॒द्व्यच॑स्वतीः सुप्राय॒णा ऋ॑ता॒वृधो॒ द्वारो॑ दे॒वीर्हि॑र॒ण्ययी॑र्ब्र॒ह्माण॒मिन्द्रं॑ वयो॒धस॑म् । प॒ङ्क्तिं छन्द॑ इ॒हेन्द्रि॒यं तु॒र्य॒वाहं॒ गां वयो॒ दध॒द्व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ॥ २८ ॥

**उ०** होता यक्षद्व्यचस्वतीः । दैव्यो होता यजतु व्यचस्वतीर्व्यञ्चनवतीर्गमनवतीः । सुप्रायणाः साधुप्रगमनाः । ऋतावृधः सत्यवृधो वा यज्ञवृधो वा । द्वारः यज्ञगृहद्वारः । द्वितीयाबहुवचनान्तान्येतानि पदानि । देवीर्यज्ञफलदात्रीः हिरण्ययीः अविनाशिनीः । तथा । ब्रह्माणं परिवृढम् इन्द्रं । वयोधसम् आयुषो धारयितारं च यजतु पङ्क्तिं च छन्दः । इहेत्यभिनयदर्शनम् । इहास्मिन्निन्द्रे इन्द्रियं वीर्यं च तुर्यवाहं गां च आयुश्च दधत् धारयन् । सेन्द्रा द्वारश्चेज्यमाना व्यन्तु पिबन्तु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ २८ ॥

**म०** अतिशक्वरी । होता द्वारो देवीः ब्रह्माणं परिवृढं वयोधसमिन्द्रं च यजतु । कीदृशीर्द्वारः । व्यचस्वतीः व्यचो व्यञ्चनं गमनावकाशो विद्यते यासु ताः । अतएव सुप्रायणाः शोभनं प्रकर्षेणायनं गमनं यासु ताः । ऋतवृधः सत्यस्य वर्धयित्रीः । हिरण्ययीः हिरण्मयीः दृढाः । किं कुर्वन् । पङ्क्तिं छन्दः इन्द्रियम् तुर्यवाहं गाम् वयश्च इह इन्द्रे दधत् । सार्धत्रिवर्षो गोस्तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति ॥ २८ ॥

## एकोनत्रिंशी ।

होता॑ यक्षत्सु॒पेश॑सा सु॒शि॒ल्पे बृ॑ह॒ती उ॒भे नक्तो॒षासा॒ न द॑र्श॒ते विश्व॒मिन्द्रं॑ वयो॒धस॑म् । त्रि॒ष्टुभं॒ छन्द॑ इ॒हेन्द्रि॒यं प॑ष्ठ॒वाहं॒ गां वयो॒ दध॑द्वी॒तामाज्य॑स्य॒ होत॒र्यज॑ ॥ २९ ॥

**उ०** होता यक्षत्सुपेशसा । दैव्यो होता यजतु सुपेशसा सुपेशसौ । पेश इति रूपनाम । सुरूपे सुशिल्पे । 'यद्वै प्रतिरूपं तच्छिल्पम्' अन्योन्यं प्रतिरूपे । बृहती महत्यौ उभे नक्तोषासा न । समुच्चयार्थीयो नकारः । उभे अपि नक्तोषसौ । नक्ता रात्रिः उषाश्च रात्रेरपरकालः । दर्शते दर्शनीये । विश्वं सर्वात्मकमिन्द्रं वयोधसम् आयुषो धारयितारं च यजतु । किं कुर्वत् यजतु । त्रिष्टुभं च छन्दः इह इन्द्रे इन्द्रियं च वीर्यं पष्ठवाहं गां च वय आयुश्च दधत् धारयन् । नक्तोषासौ सेन्द्रे चेज्यमाने वीतां पिबतामाज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ २९ ॥

**म०** अतिशक्वरी । होता उभे नक्तोषासा नक्तोषसौ विश्वं सर्वात्मकं वयोधसमिन्द्रं च यजतु । नक्ता रात्रिः उषा रात्रेरपरभागः । नकारश्चार्थः । कीदृश्यौ नक्तोषसौ । सुपेशसा सुपेशसौ पेशः रूपनाम । शोभनं पेशो ययोस्ते सुरूपे । सुशिल्पे 'यद्वै प्रतिरूपं तच्छिल्पं' इति श्रुतेः । सुष्ठु शिल्पं ययोस्ते अन्योन्यं प्रतिरूपे । बृहती बृहत्यौ । दर्शते दर्शनीये । दृशेरतच् प्रत्ययः । किं कुर्वन् । त्रिष्टुभं छन्दः इन्द्रियम् पष्ठवाहं गाम् वयश्च इहेन्द्रे दधत् । ते वीतां पिबताम् ॥ २९ ॥

## त्रिंशी ।

होता॑ यक्ष॒त्प्रचे॑तसा दे॒वाना॑मुत्त॒मं य॒शो होता॑रा॒ दैव्या॑ क॒वी स॒युजेन्द्रं॑ वयो॒धस॑म् । जग॑तीं॒ छन्द॑ इन्द्रि॒यम॑न॒ड्वाहं॒ गां वयो॒ दध॑द्वी॒तामाज्य॑स्य॒ हो॑त॒र्यज॑ ॥ ३० ॥

**उ०** होता यक्षत्प्रचेतसा । दैव्यो होता यजतु । प्रचेतसा प्रकृष्टज्ञानौ । यौ च देवानामुत्तमं यशः । यशः पुञ्जीकृतये होतारौ दैव्यौ । अयं चाग्निरसौ च मध्यमः । कवी कान्तदर्शनौ । सयुजा सहयोगिनौ । इन्द्रं च वयोधसम् आयुषो धारयितारम् । किंकुर्वन् दैव्यो होता यजतु । जगतीं छन्दः इन्द्रियं वीर्यं च । अनड्वाहं च गां वयः आयुश्च इन्द्रे दधत् धारयन् । तौ च दैव्यौ होतारौ सेन्द्रावीज्यमानौ वीतां पिबतामाज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ ३० ॥

**म०** एकाधिका शक्वरी । होता दैव्यौ होतारौ वयोधसमिन्द्रं च यजतु । अयं चाग्निरसौ च मध्यम इति । होतारौ कीदृशौ । प्रचेतसा प्रकृष्टं चेतो ययोस्तौ प्रचेतसौ । देवानामुत्तमं यशः पुञ्जीकृतदेवयशोरूपौ । कवी क्रान्तदर्शनौ । सयुजा सह युङ्क्तस्तौ समानयोगौ । किं कुर्वन् । जगतीं छन्दः इन्द्रियम् अनड्वाहं गाम् वयश्च इन्द्रे दधत् । अनः शकटं वहतीत्यनड्वान् शकटक्षमो वृषः तौ वीताम् ॥ ३० ॥

## एकत्रिंशी ।

होता॑ यक्ष॒त्पेश॑स्वतीस्ति॒स्रो दे॒वीर्हि॑र॒ण्ययी॒र्भार॑-

तीर्बृहतीर्मही: पतिमिन्द्रं वयोधसम् । विराजं छन्द इहेन्द्रियं धेनुं गां न वयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥ ३१ ॥

उ० होता यक्षत्पेशस्वतीः । दैव्यो होता यजतु पेशस्वतीः रूपसमृद्धाः तिस्रो देवीः हिरण्ययीः हिरण्यालंकृतशरीराः । भारतीः भरत आदित्यः तस्य भारतीः । बहुवचनमिडासरस्वत्युपलक्षणार्थम् । बृहतीः प्रभावतः महत्यः आदित्येन्द्राग्निसंबन्धात् । पतिं पालयितारम् इन्द्रं च वयोधसम् आयुषो धारयितारं यजतु । किंकुर्वन्यजतु । विराजं छन्दः इहास्मिन्निन्द्रे इन्द्रियं वीर्यं च । धेनुं गां न । नकारः समुच्चयार्थीयः । धेनुं च गां वय आयुश्च दधत् धारयन् । तिस्रो देव्यश्च सेन्द्रा ईज्यमानाः व्यन्तु पिबन्तु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ ३१ ॥

म० एकाधिका शक्करी । होता तिस्रो देवीः पतिं पालकं वयोधसमिन्द्रं च यजतु । कीदृशीस्तिस्रः । पेशो रूपमस्ति यासां ताः रूपसमृद्धाः । हिरण्ययीः हिरण्यालंकृतदेहाः । बृहतीः प्रभावेण । महीः महतीः तेजसा आदित्येन्द्राग्निसंबन्धात् । कास्ताः भारतीः । बहुवचनमिडासरस्वत्युपलक्षणम् । इडासरस्वतीभारत्यस्तिस्र इत्यर्थः । किं कुर्वन् । विराजं छन्दः इन्द्रियम् धेनुं दोग्ध्रीं गाम् वयश्चेन्द्रे दधत् । नकारश्चार्थः । सेन्द्रास्ता व्यन्तु ॥ ३१ ॥

## द्वात्रिंशी ।

होता यक्षत्सुरेतसं त्वष्टारं पुष्टिवर्धनं रूपाणि बिभ्रतं पृथक्पुष्टिमिन्द्रं वयोधसम् । द्विपदं छन्द इन्द्रियमुक्षाणं गां न वयो दधद्वेत्वाज्यस्य होतर्यज ॥ ३२ ॥

उ० होता यक्षत्सुरेतसम् । दैव्यो होता यजतु सुरेतसं त्वष्टारम् । शोभनं हि रेतस्त्वष्टुर्जगदुत्पत्तिबीजत्वात् । पुष्टिं वर्धयितारम् । रूपाणि बिभ्रतं पृथक् पुष्टिम् । जातिषु रूपाणि पुष्टिं च पृथक् धारयन्तम् । इन्द्रं च वयोधसं आयुषो धारयितारं यजतु । किंकुर्वन्यजतु । द्विपदं च छन्दः इन्द्रियं वीर्यम् उक्षाणं गां न । नकारः समुच्चयार्थीयो भिन्नक्रमः । उक्षाणं च गाम् वय आयुश्च इन्द्रे दधत् धारयन् । त्वष्टा च सेन्द्रः ईज्यमानः वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ ३२ ॥

म० एकाधिका शक्करी । होता त्वष्टारं वयोधसमिन्द्रं च यजतु । कीदृशं त्वष्टारम् । सुरेतसं शोभनं रेतो यस्य तम् जगदुत्पादकत्वात्त्वष्टुः शोभनं रेतः । पुष्टिवर्धनं पुत्रादिपुष्टेर्वर्धयितारम् । पृथक् नानाजातिषु रूपाणि पुष्टिं च बिभ्रतम् । किं कुर्वन् । द्विपदं छन्दः इन्द्रियम् उक्षाणं रेतःसेकक्षमं गां वृषम् वयश्चेन्द्रे दधत् । नश्चार्थः । सेन्द्रस्त्वष्टा वेतु ॥ ३२ ॥

## त्रयस्त्रिंशी ।

होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुꣳ हिरण्यपर्णमुक्थिनꣳ रशनां बिभ्रतं वशिं भगमिन्द्रं वयोधसम् । ककुभं छन्द इहेन्द्रियं वशां वेहतं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥ ३३ ॥

उ० होता यक्षद्वनस्पतिम् । दैव्यो होता यजतु वनस्पतिं शमितारं हविषः संस्कर्तारम् । शतक्रतुं बहुकर्माणम् । हिरण्यपर्णं सुवर्णमयपत्रम् । उक्थिनम् । 'वच परिभाषणे' अस्य उक्थिनं वचनवन्तं यज्ञवन्तं वा । रशनां बिभ्रतम् स्वरूपानुवादः । यूपे हि पशुबन्धनार्थं रज्जुर्बध्यते । वशिं कान्तं भगं भजनीयम् । इन्द्रं च वयोधसमायुषो धारयितारं यजतु । किं कुर्वन् दैव्यो होता यजतु । ककुभं च छन्दः इहेन्द्रे इन्द्रियं वीर्यं च वशां वन्ध्यां वेहतं गर्भघातिनीं च गां वय आयुश्च दधत् धारयन् । वनस्पतिश्च सेन्द्र ईज्यमानः वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ ३३ ॥

म० अत्यष्टिः । होता वनस्पतिं वयोधसमिन्द्रं च यजतु । कीदृशं वनस्पतिम् । शमितारं संस्कर्तारं हविषाम् । शतक्रतुं बहुकर्माणम् । हिरण्यपर्णं हिरण्मयानि पर्णानि यस्य तम् । उक्थिनम् उक्थानि शस्त्राणि सन्त्यस्य यज्ञवन्तं वा । रशनां रज्जुं बिभ्रतम् । स्वभावानुवादः । यूपे हि पशुबन्धाय रज्जुर्बध्यते । वशिं कान्तम् । भगं भजनीयम् । किं कुर्वन् । ककुभं छन्दः इन्द्रियम् वशां वन्ध्यां वेहतं गर्भोपघातिनीं च गाम् वयश्च इह इन्द्रे दधत् । सेन्द्रो वनस्पतिर्वेतु ॥ ३३ ॥

## चतुस्त्रिंशी ।

होता यक्षत्स्वाहाकृतीरग्निं गृहपतिं पृथग्वरुणं भेषजं कविं क्षत्रमिन्द्रं वयोधसम् । अतिच्छन्दसं छन्द इन्द्रियं बृहदृषभं गां वयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥ ३४ ॥

उ० होता यक्षत्स्वाहाकृतीः । दैव्यो होता यजतु स्वाहाकृतीः प्रयाजदेवताः । अग्निं च गृहपतिं पृथक् यजतु । वरुणं च भेषजम् । तथा कविं क्रान्तदर्शनं । क्षत्रं प्रहाराद्रक्षितारम् । इन्द्रं च वयोधसमायुषो धारयितारम् यजतु । किंकुर्वन्यजतु । अतिच्छन्दसं च छन्दः इन्द्रियं च वीर्यं बृहन्महत् ऋषभं च गां वय आयुश्च इन्द्रे दधत् धारयन् । सेन्द्राश्च प्रयाजदेवता ईज्यमाना व्यन्तु पिबन्तु आज्यस्य स्वमंशम् । त्वमपि हे मनुष्यहोतः, यज ॥ ३४ ॥

म० अतिशक्करी । होता स्वाहाकृतीः प्रयाजदेवताः इन्द्रं च यजतु । कीदृशमिन्द्रम् । अग्निम् अङ्गतीत्यग्निः अग्रे गन्तारम् । पृथक् प्रत्येकं यज्ञेषु । गृहपतिं गृहस्य पालकम् ।

वरुणम् व्रियतेऽसौ वरुणस्तम् ऋत्विग्भिर्वरणीयम् । भेषजं रोगनाशकम् । कविं क्रान्तदर्शनम् । क्षत्रं क्षतात्प्रहारात्त्रातारम् । वयोधसमायुषो दातारम् । किं कुर्वन् । अतिच्छन्दसं छन्दः इन्द्रियं वीर्यं बृहत् महत् ऋषभं पुष्टं गां वयश्चेन्द्रे दधत् । सेन्द्राः स्वाहाकृतयः आज्यं व्यन्तु । हे मनुष्यहोतः, त्वमपि यज ॥ ३४ ॥

## पञ्चत्रिंशी ।

दे॒वं ब॒र्हिर्व॑यो॒धसं॑ दे॒वमिन्द्र॑मवर्धयत् । गाय॒त्र्या छन्द॑सेन्द्रि॒यं चक्षु॒रिन्द्रे॒ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ ३५ ॥

**उ०** अथ वयोधसोनुयाजप्रैषाः । देवं बर्हिः यत् देवं द्योतनं बर्हिः । वयोधसमायुषो धारयितारं देवं दानादिगुणयुक्तं इन्द्रं अवर्धयत् । किंकुर्वन् । गायत्र्या छन्दसा इन्द्रियं वीर्यं चक्षुश्च इन्द्रे वय आयुश्च दधत् धारयत् । तत् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे होतः, यज ॥ ३५ ॥

**म०** वायोधसे पशावेवैकादशानुयाजानां प्रैषाः बर्हिरादिदेवताः । एकाधिके आर्ष्यौ त्रिष्टुभौ द्वे । बर्हिः देवं वयोधसमिन्द्रं देवमवर्धयत् । कीदृशं बर्हिः । गायत्र्या छन्दसा कृत्वा चक्षुरिन्द्रियं वयश्चेन्द्रे दधत् । तत् वसुवननाय वसुधानाय चाज्यं वेतु । षष्ठीसप्तम्यौ चतुर्थ्यर्थे । हे मनुष्यहोतः, त्वमपि यज । एवमग्रेऽपि व्याख्येयम् ॥ ३५ ॥

## षट्त्रिंशी ।

दे॒वीर्द्वारो॑ वयो॒धस॒ꣳ शु॒चिमिन्द्र॑मवर्धयन् । उ॒ष्णिहा॒ छन्द॑सेन्द्रि॒यं प्रा॒णमिन्द्रे॒ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥ ३६ ॥

**उ०** देवीर्द्वारः । या देव्यः द्वारः वयोधसमायुषो धारयितारम् । शुचिं पवित्रम् इन्द्रम् अवर्धयन् । किं कुर्वत्यः । उष्णिहा । छन्दसा इन्द्रियं वीर्यं प्राणं च इन्द्रे वय आयुश्च दधत् दधत्य इति लिङ्गवचनव्यत्ययः । धारयन्त्य इत्यर्थान्तरम् । ताः वसुवननाय वसुधानाय च व्यन्तु पिबन्तु । त्वमपि हे होतः, यज ॥ ३६ ॥

**म०** द्वारो देव्यः वयोधसं शुचिं पवित्रमिन्द्रमवर्धयन् । कीदृश्यो द्वारः । उष्णिहा छन्दसा कृत्वा सह वा प्राणमिन्द्रियं प्राणेन्द्रियं वयश्चेन्द्रे दधत् दधत्यः । लिङ्गवचनव्यत्ययः । ता व्यन्तु ॥ ३६ ॥

## सप्तत्रिंशी ।

दे॒वी उ॒षासा॒नक्ता॑ दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वी दे॒वम॑वर्धताम् । अ॒नु॒ष्टुभा॒ छन्द॑सेन्द्रि॒यं ब॒लमिन्द्रे॒ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥ ३७ ॥

**उ०** देवी उषासानक्ता । ये देव्यौ उषासानक्ता उषाश्च रात्रेरपरकालः नक्तेति रात्रिनाम । देवमिन्द्रं वयोधसमायुषो धारयितारम् । देवी देव्यौ देवम् । एको देवीशब्दो द्विवचनोऽपरो दानादिगुणयुक्तवचनः । देवशब्दोऽप्येवमेव । अवर्धताम् । किंकुर्वन्त्यौ । अनुष्टुभा छन्दसा इन्द्रियं बलं च इन्द्रे वय आयुश्च दधत् धारयन्त्यौ । ते वसुवननाय वसुधानाय च वीतां पिबतामाज्यस्य स्वमंशम् । त्वमपि हे होतः, यज ॥ ३७ ॥

**म०** द्वे ब्राह्मौ बृहत्यौ । उषासानक्तौ देवी देव्यौ वयोधसमिन्द्रं देवमवर्धताम् । उषाश्च नक्तं च उषासानक्ता 'उषासोषसः' ( पा० ६ । ३ । ३१ ) इत्युषःशब्दस्य देवताद्वन्द्वे उषासाआदेशः विभक्तेराकारश्च । कीदृश्यौ ते । देवी दीप्यमाने । कीदृशमिन्द्रम् । देवं दीप्यमानम् । एकौ देवीदेवशब्दौ दीप्तिवाचकौ अन्यौ सुरवाचकौ । अनुष्टुभा छन्दसा बलमिन्द्रियं वयश्च इन्द्रे दधत् दधत्यौ । दधदित्यव्ययम् लिङ्गवचनव्यत्ययो वा । ते वीताम् ॥ ३७ ॥

## अष्टत्रिंशी ।

दे॒वी जोष्ट्री॒ वसु॑धिती दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वी दे॒वम॑वर्धताम् । बृ॒ह॒त्या छन्द॑सेन्द्रि॒यꣳ श्रोत्र॒मिन्द्रे॒ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥ ३८ ॥

**उ०** देवी जोष्ट्री । ये देव्यौ जोष्ट्र्यौ जोषयित्र्यौ । वसुधिती वसुधात्र्यौ देवं दीप्तं वयोधसमायुषो धारयितारमिन्द्रम् देव्यौ देवम् अवर्धताम् । ते बृहत्या छन्दसा इन्द्रियं वीर्यं श्रोत्रं च इन्द्रे वय आयुश्च दधत् धारयन्त्यौ सत्यौ वसुवननाय वसुधानाय च वीतां पिबतामाज्यस्य स्वमंशम् । त्वमपि हे होतः, यज ॥ ३८ ॥

**म०** देवी देव्यौ दीप्यमाने अनुयाजदेवते देवं दीप्तं वयोधसमिन्द्रं देवमवर्धताम् । देवीदेवशब्दौ पूर्ववत् । कीदृश्यौ । जोष्ट्र्यौ जुषेते ते जोष्ट्र्यौ प्रीतियुक्ते । जुषेस्तृच् । वसुधिती वसुनो धनस्य धारयित्र्यौ । बृहत्या छन्दसा श्रोत्रमिन्द्रियं वयश्च इन्द्रे दधत्यौ ॥ ३८ ॥

## एकोनचत्वारिंशी ।

दे॒वी ऊ॒र्जाहु॑ती दु॒घे सु॒दु॒घे पय॒सेन्द्रं॑ वयो॒धसं॑ दे॒वी दे॒वम॑वर्धताम् । प॒ङ्क्त्या छन्द॑सेन्द्रि॒यꣳ शु॒क्रमिन्द्रे॒ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥ ३९ ॥

**उ०** देवी ऊर्जाहुती । ये देवी दात्र्यौ ऊर्जाहुती ऊर्जाह्वान्यौ दुघे दोग्ध्र्यौ सुदुघे सुदोहने पयसा इन्द्रं वयोधसं देवी देव्यौ द्युस्थाने देवं द्युस्थानम् अवर्धताम् । ते पङ्क्त्या छन्दसा इन्द्रियं वीर्यं शुक्रं च इन्द्रे वय आयुश्च दधत् धारयन्त्यौ वसुवननाय वसुधानाय च वीतां पिबतामाज्यस्य स्वमंशम् । त्वमपि हे होतः, यज ॥ ३९ ॥

**म०** शक्करी । देवी दात्र्यौ ऊर्जाहान्यौ देव्यौ पयसा वयोधसं देवमिन्द्रमवर्धताम् । कीदृश्यौ । दुघे दोग्ध्र्यौ । सुदुघे सुखेन दोग्धुं शक्ये । पङ्क्त्या छन्दसा शुक्रं वीर्यमिन्द्रियं वयः चेन्द्रे दधत्यौ ॥ ३९ ॥

## चत्वारिंशी ।

दे॒वा दैव्या॒ होता॑रा दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वौ दे॒वम॑वर्धताम् । त्रि॒ष्टुभा॒ छन्द॑सेन्द्रि॒यं त्विषि॒मिन्द्रे॑ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥ ४० ॥

**उ०** देवा दैव्या । यौ देवौ दातारौ दैव्यौ होतारौ अयं चाग्निरसौ च मध्यमः । देवं दातारमिन्द्रं वयोधसमायुषो धारयितारम् देवौ द्युस्थानौ देवं द्युस्थानम् अवर्धताम् । तौ त्रिष्टुभा छन्दसा इन्द्रियं वीर्यं त्विषिं दीप्तिं च इन्द्रे वयश्चायुः दधत् धारयन्तौ वसुवननाय च वसुधानाय वीतां पिबतामाज्यस्य स्वमंशम् । हे होतः, यज ॥ ४० ॥

**म०** अतिजगती । दैव्या दैव्यौ देवा देवौ दीप्तौ देवसंबन्धिनौ होतारा होतारौ देवौ वयोधसं देवं दीप्तमिन्द्रं देवमवर्धताम् । त्रिष्टुभा छन्दसा त्विषिं कान्तिमिन्द्रियं त्वगिन्द्रियं वयश्चेन्द्रे दधतौ ॥ ४० ॥

## एकचत्वारिंशी ।

दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीर्व॑योधसं॒ पति॒मिन्द्र॑मवर्धयन् । जग॑त्या॒ छन्द॑सेन्द्रि॒यꣳ शू॒षमिन्द्रे॑ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥ ४१ ॥

**उ०** देवीस्तिस्रः । याः तिस्रो देव्यः सरस्वतीडाभारत्यः । आदरार्थमभ्यासः । वयोधसमायुषो धारयितारम् पतिं पालयितव्यम् इन्द्रमवर्धयन् । ता जगत्या छन्दसा इन्द्रियं वीर्यम् । शूषम् शूषशब्दो बलवचनः । बलम् इन्द्रे वय आयुश्च दधत् दधत्यः वसुवननाय वसुधानाय च व्यन्तु पिबन्तु आज्यस्य स्वमंशं हे होतः, यज ॥ ४१ ॥

**म०** एकाधिका ब्राह्मी अनुष्टुप् । तिस्रो देव्यो भारतीडासरस्वत्यः पतिं पालकं वयोधसमिन्द्रमवर्धयन् । अभ्यास आदरार्थः । कीदृश्यः । जगत्या छन्दसा शूषं बलमिन्द्रियं वयश्चेन्द्रे दधत्यः ॥ ४१ ॥

## द्विचत्वारिंशी ।

दे॒वो न॑राशꣳसो॑ दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वो दे॒वम॑वर्धयत् । वि॒राजा॒ छन्द॑सेन्द्रि॒यꣳ रू॒पमिन्द्रे॑ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ ४२ ॥

**उ०** देवो नराशंसः । यो देवो द्युस्थानो नराशंसो यज्ञः देवं द्युस्थानम् इन्द्रं वयोधसमायुषो धारयितारम् । देवो देवम् दानादिगुणयुक्त इत्युभयत्र । अवर्धयत् । स इदानीं विराजा छन्दसा इन्द्रियं वीर्यं रूपं च इन्द्रे वय आयुश्च दधत् धारयन् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशं हे होतः, यज ॥ ४२ ॥

**म०** अतिजगती । देवो दाता नराशंसो देवः देवं दीप्तं वयोधसमिन्द्रमवर्धयत् । कीदृशः । विराजा छन्दसा रूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४२ ॥

## त्रिचत्वारिंशी ।

दे॒वो वन॒स्पति॑र्दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वो दे॒वम॑वर्धयत् । द्वि॒पदा॒ छन्द॑सेन्द्रि॒यं भग॒मिन्द्रे॑ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ ४३ ॥

**उ०** देवो वनस्पतिः । यो देवो वनस्पतिर्यूपः । देवं द्युस्थानम् इन्द्रं वयोधसमायुषो धारयितारम् देवो देवम् दीप्त इत्युभयत्र । अवर्धयत् । स इदानीं द्विपदा छन्दसा इन्द्रियं वीर्यं भगमैश्वर्यं च इन्द्रे वय आयुश्च दधत् धारयन् वसुवननाय वसुधानाय च वेतु पिबतु । त्वमपि हे होतः, यज ॥ ४३ ॥

**म०** अतिजगती । देवो दाता वनस्पतिर्यूपः देवं द्योतनं वयोधसमिन्द्रं देवमवर्धयत् । कीदृशः । द्विपदा छन्दसा भगं सौभाग्यरूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

दे॒वं ब॒र्हिर्वा॑रि॒तीनां॑ दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वं दे॒वम॑वर्धयत् । क॒कुभा॒ छन्द॑सेन्द्रि॒यं यश॒ इन्द्रे॑ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ ४४ ॥

**उ०** देवं बर्हिः । यद्देवं श्रेष्ठं बर्हिः । वारितीनां वार्भ्यः अद्भ्यः इतीनामुद्गतानाम् । ओषधीनामित्यर्थः । देवं द्युस्थानम् इन्द्रं वयोधसमायुषो धारयितारम् देवं देवम् दानादिगुणयुक्तमित्युभयत्र । अवर्धयत् । तत्ककुभा छन्दसा इन्द्रियं वीर्यं यशश्च इन्द्रे वय आयुश्च दधत् धारयन् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे होतः, यज ॥ ४४ ॥

**म०** ब्राह्मी बृहती । बर्हिः देवमिन्द्रमवर्धयत् । कीदृशमिन्द्रम् । देवं दीप्यमानम् । वयोधसं वयसो दातारम् । कीदृशं बर्हिः । वारितीनां वार्भ्यः सकाशात् इतिरुत्पत्तिर्यासां ता वारितय ओषधयस्तासां मध्ये देवं दीप्तं श्रेष्ठमित्यर्थः । ककुभा छन्दसा यशोरूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

दे॒वो अ॒ग्निः स्वि॑ष्ट॒कृद्दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वो दे॒वम॑वर्धयत् । अति॑च्छन्दसा॒ छन्द॑सेन्द्रि॒यं क्ष॒त्रमिन्द्रे॑ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ ४५ ॥

**उ०** देवो अग्निः । यो देवो द्युस्थानः अग्निः स्विष्टकृत्

साधु इष्टं कर्तव्यमिति यस्यायमधिकारः । देवं द्युस्थानम् इन्द्रं वयोधसमायुषो धारयितारम् देवो देवम् दीप्त इत्युभयत्र । अवर्धयत् अतिच्छन्दसा छन्दसा स इदानीम् इन्द्रियं वीर्यम् क्षत्रं क्षतात्त्राणम् इन्द्रे वय आयुश्च दधत् धारयन् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशम् । त्वमपि हे होतः, यज ॥ ४५ ॥

**म०** ब्राह्मी बृहती । देवो दाता स्विष्टकृत् अग्निः देवो वयोधसं देवं दीप्तमिन्द्रं देवमवर्धयत् । कीदृशः । अतिच्छन्दसा छन्द[illegible]तारा । [illegible] क्षतात्त्राणरूपमिन्द्रं वयश्चेन्द्रे दधत् । स वस[illegible]दना चोदना[illegible]य च वेतु । हे होतः, त्वमपि यज ॥४५॥

[illegible] प्रदेशेन षट्चत्वारिंशी ।

अ॒ग्निम॒द्य होता॑रमवृणीता॒यं यज॑मानः॒ पच॒न्पक्तीः॒ पच॑न्पुरो॒डाशं॑ ब॒ध्नन्निन्द्रा॑य व॒यो॒ध॒से॒ छाग॑म् । सू॒प॒स्था अ॒द्य दे॒वो वन॒स्पति॑रभव॒दिन्द्रा॑य वयो॒ध॒से॒ छागे॑न । अध॒त्तं मेद॒स्तः प्रति॑ पच॒ताग्र॑भी॒दवी॑वृधत्पुरो॒डाशे॑न ॥ त्वाम॒द्य ऋ॑षे० ॥ ४६ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां अष्टाविंशोऽध्यायः ॥ २८ ॥

**उ०** अग्निमद्येति व्याख्यातम् । इन्द्राय वयोधसे इति विशेषः ॥ ४६ ॥

इति उवटकृतौ मन्त्रभाष्ये अष्टाविंशतितमोऽध्यायः ॥ २८ ॥

**म०** अग्निमद्य एकाधिका ब्राह्मी गायत्री । सूपस्थाः ब्राह्म्यनुष्टुप् । एते व्याख्याते ( क० २३ ) । त्वामद्य प्रतीकोक्तः सर्वोऽपि पाठ्यः । एकाधिका विकृतिः । अयमपि व्याख्यातः ( क० २३ ) । इन्द्राय वयोधसे इति विशेषः ॥ ४६ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अष्टाविंशोऽयमध्यायोऽगमत्सौत्रामणीभवः ॥
इति सौत्रामणीसंबन्धिप्रयाजानुयाजप्रैषनिरूपणं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

### तत्र प्रथमा ।

समि॑द्धो अ॒ञ्जन्कृद॑रं मती॒नां घृ॒तम॑ग्ने॒ मधु॑म॒त्पिन्व॑मानः । वा॒जी वह॑न्वा॒जिनं॑ जातवे॑दो दे॒वानां॑ वक्षि प्रि॒यमा स॒धस्थ॑म् ॥ १ ॥

**उ०** एकादश त्रिष्टुभः । आप्र्यो नराशंसः बृहदुक्थो वामदेव्यः । अश्वो वा समुद्रिरपश्यत् । अश्वस्तुतिः । आश्वमेधिकं प्रागाग्नेयः कृष्णग्रीव इत्येतस्मात् । हे भगवन्नग्ने, समिद्धः संदीप्तः । अञ्जन् व्यक्तीकुर्वन् । आज्ये हि सर्वासां देवतानां मनांस्येतानि ममेदं स्यान्ममेदं स्यादिति घृतं मधुमत् मधुस्वादु । पिन्वमानः आत्मानंप्रति सिञ्चन् स्वेच्छया पिबन्नित्यर्थः । वाजी वेजनवान् चलनवान् वहन्वाजिनं हविः । हे जातवेदः देवानां वक्षि वह प्रापय । प्रियं आ सधस्थं सहस्थानम् ॥ १ ॥

**म०** आश्वमेधिकोऽध्यायः । ततोऽस्य प्रजापतिर्ऋषिः । आद्या एकादश त्रिष्टुभः आप्रीसंज्ञाः अश्वस्तुतयो वामदेवपुत्रेण बृहदुक्थेन समुद्रपुत्रेणाश्वेन वा दृष्टाः समित्तनूनपादिडादिदेवताकाः । हे अग्ने, हे जातवेदः जातप्रज्ञान, त्वं देवानां सधस्थं सह तिष्ठन्ति यत्रेति सहस्थानं प्रति प्रियं प्रीतिमानक्षि आवह देवान्प्रीणयेत्यर्थः । वहतेः शपो लुकि मध्यमैकवचने रूपम् । कीदृशस्त्वम् । समिद्धः दीप्तः मतीनां कृदरं बुद्धीनामुदरं गर्भमञ्जन् व्यक्तीकुर्वन् । बुद्धिरहस्यं प्रकाशयन्नित्यर्थः । मधुमत् स्वादु घृतं पिन्वमानः देवेषु सिञ्चन् । वाजी वजतीति वाजी 'वज गतौ' चलनवान् । वाजिनं हविः वहन् देवान्प्रापयन्सन् प्रीणय ॥ १ ॥

### द्वितीया ।

घृ॒तेना॒ञ्जन्सं प॒थो दे॑व॒याना॑न्प्रजा॒नन्वा॒ज्यप्ये॑तु दे॒वान् । अनु॑ त्वा सप्ते प्र॒दिशः॑ सचन्ता॒ᳫं स्व॒धाम॒स्मै यज॑मानाय धेहि ॥ २ ॥

**उ०** घृतेनाञ्जन् । प्रथमोऽर्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः । यतस्तयोरेकवाक्यता नोपपद्यते अतः पुरुषव्यत्ययः। घृतेन अञ्जन्समञ्जन् । पथः देवयानान् । हवींषि देवयानाः पन्थान उच्यन्ते । तैर्हि ते जीवन्ति । प्रजानन् अहं देवानां हविरिति जानन् वाजी अप्येतु अभ्यागच्छतु देवान् । किंच अनुसचन्ताम् अनुसेवन्ताम् त्वां हे सप्ते सरण, प्रदिशः दिगाश्रयाणि भूतानि । किंच स्वधामन्नम् अस्मै यजमानाय धेहि प्रयच्छ । अत्र घृतशब्दस्तनूनपाच्छब्दपर्यायः ॥ २ ॥

**म०** वाजी अश्वो देवानप्येतु । कीदृशः । घृतेन देवयानान् पथः समञ्जन् देवा यायन्ते यैस्ते देवयानाः पन्थानो हवींष्युच्यन्ते । प्रजानन् देवानां हविरहमिति जानन् । एवं परोक्षमुक्त्वा प्रत्यक्षमाह । हे सप्ते अश्व, प्रदिशो दिगाश्रयाणि भूतानि त्वा त्वामनुसचन्ताम् । 'षप् संबन्धे' सपति कर्मणा संबध्यते स सप्तिः । किंच अस्मै यजमानाय स्वधामन्नं धेहि प्रयच्छ । अत्र घृतशब्दस्तनूनपाद्वाची ॥ २ ॥

### तृतीया ।

ईड्य॒श्चासि॒ वन्द्य॑श्च वाजिन्ना॒शुश्चासि॒ मेध्य॑श्च सप्ते । अ॒ग्निष्ट्वा॑ दे॒वैर्वसु॑भिः स॒जोषाः॑ प्री॒तं वह्निं॑ वहतु जा॒तवे॑दाः ॥ ३ ॥

**उ०** ईड्यश्चासि । यस्त्वं ईड्याश्चासि स्तुत्यश्चासि वन्द्यश्च । हे वाजिन् , आशुश्च शीघ्रश्च मेध्यश्च यज्ञसंपादी च असि । हे सप्ते, तं त्वाम् अग्निः देवैः वसुभिः सजोषाः स-

मानजोषणः प्रीतम् आग्नीभिः प्रीतम् वह्निं वोढारम् वहतु प्रापयतु जातवेदाः ॥ ३ ॥

**म०** हे वाजिन्, हे सप्ते, ईड्यः स्तुत्योऽसि । वन्द्यः नमनीयोऽसि । आशुः शीघ्रः मेध्यः मेधायाश्वमेधाय योग्यः । चकाराः समुच्चयार्थाः । किंच जातवेदा: अग्निः त्वा त्वां वहतु देवान् प्रापयतु । कीदृशोऽग्निः । वसुभिः देवैः सजोषाः जोषसा प्रीत्या सहितः । कीदृशं त्वाम् । प्रीतं तुष्टम् वह्निं हविषो वोढारम् ॥ ३ ॥

## चतुर्थी ।

स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् । देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥ ४ ॥

**उ०** स्तीर्णं बर्हिः । स्तीर्णमपि बर्हिः सुष्टरीम् साधुस्तृणाम् आजुषाणा विभक्तेर्डादेशः । सेवमानम् । ततस्तीर्यमाणम् उरु बहु पृथु विस्तीर्णम् प्रथमानम् । पृथिव्यां वेद्याम् । देवेभिः देवैः युक्तम् । अदितिः सजोषाः समानजोषणा सह प्रीयमाणा स्योनं सुखं कृण्वाना कुर्वाणा । सुविते सुगते स्वर्गे प्रजायां वा । दधातु स्थापयतु ॥ ४ ॥

**म०** वयं बर्हिः सुष्टरीम साधु स्तरीम स्तृणाम । अदितिर्देवी स्तीर्णं तत् बर्हिः सुविते सु इते साधु गते स्वर्गलोके दधातु स्थापयतु । कीदृशी अदितिः । सजोषाः जोषसा प्रीत्या युक्ता । स्योनं कृण्वाना सुखं कुर्वती । जुषाणा प्रीयमाणा । कीदृशं बर्हिः । उरु बहु पृथु विस्तीर्णम् पृथिव्यां प्रथमानं विस्तार्यमाणम् । देवेभिर्युक्तं देवैः सहितम् ॥ ४ ॥

## पञ्चमी ।

एता उ वः सुभगा विश्वरूपा विपक्षोभिः श्रयमाणा उदातैः । ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ॥ ५ ॥

**उ०** एता उ वः एताश्च यज्ञगृहद्वारः हे ऋत्विग्यजमानाः, वः युष्माकं सुभगाः विश्वरूपाः अनेकरूपचित्रिताः । विपक्षोभिः श्रयमाणा उदातैः । पक्षोभिः पक्षैः । उदातैः ऊर्ध्वमायातैः सततमायातैः सततगमनैः विश्रयमाणा विस्तीर्यमाणाः । पक्षःशब्दः सान्तः कपाटवचनः । ऋष्वाः महत्यः सतीः सत्यः कवषः कुषिताः ससुषिराः । शुंभमानाः आत्मानं शोभयन्त्यः । द्वारो देवीः दीप्तिमत्यः । सुप्रायणाः सुप्रगमनाः भवन्तु ॥ ५ ॥

**म०** हे ऋत्विग्यजमानाः, वो युष्माकमेता द्वारो देवीः यज्ञगृहद्वारो देव्यः ईदृश्यो भवन्तु । उ पादपूरणः । कीदृश्यः । सुभगाः शोभनं भगं श्रीर्यासां ताः । विश्वरूपाः नानारूपचित्राः । पक्षोभिः पक्षस्शब्दः सान्तः पक्षवाची । पक्षैः पक्षप्रायैः कपाटैः विश्रयमाणाः विस्तार्यमाणाः । कीदृशैः पक्षोभिः । उत् ऊर्ध्वम् आतैः अत्यन्ते विस्तार्यन्ते आताः 'अत सातत्यगमने' ऊर्ध्वं प्रसृतैरित्यर्थः । पुनः कीदृश्यो द्वारः । ऋष्वाः ऋषन्ति ऋष्वाः 'ऋष गतौ' इतस्ततो गमनशीलाः महत्यः । सतीः सत्यः समीचीनाः । कवषः 'कु शब्दे' कुवन्ति शब्दं कुवन्ति कवषः । कुवतेरसुन्प्रत्ययः षत्वमार्षम् । कपाटपिधानसमये शब्दं कुर्वाणाः ससुषिरा वा । शुम्भमानाः शोभमानाः सुप्रायणाः सुखेन प्रकृष्टमयनं गमनं यासु सुगमनाः ॥ ५ ॥

## षष्ठी ।

अन्तरा मित्रावरुणा चरन्ती [illegible]नाम्भिसंविदाने । उषासा वाꣳ सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि ॥ ६ ॥

**उ०** अन्तरा मित्रावरुणा । ये अन्तरा मध्येन मित्रावरुणा चरन्ती । 'अयं वै लोको मित्रोऽसौ वरुण' इति श्रुतिः । द्यावापृथिव्योर्मध्येन संचरन्त्यौ । मुखं यज्ञानामभिसंविदाने यज्ञानां मुखमग्निहोत्रं तस्य कालम् अभिसंविदाने प्रकथयन्त्यौ । उत्तिष्ठतामयमग्निहोत्रहोमकालः आद्य इतीव लक्ष्यते । ते उषासा । द्विवचनोपदेशात्सहचरितत्वाच्च द्वितीया रात्रिः । नक्तोषासौ वां युवयोः हे दम्पतियजमानौ, सुहिरण्ये साधुहिरण्यालंकारभूषिते । सुशिल्पे साध्वन्योन्यं प्रतिरूपे ऋतस्य यज्ञस्य योनौ इह सादयामि स्थापयामि ॥ ६ ॥

**म०** हे पत्नीयजमानौ, वां युवयोर्ऋतस्य यज्ञस्य योनौ इह उषासा उषसौ नक्तोषसौ सादयामि स्थापयामि । द्विवचनात्सहचारित्वाच्च द्वितीया रात्रिः । कीदृश्यौ उषसा । मित्रावरुणा मित्रावरुणौ अन्तरा द्यावापृथिव्योर्मध्ये संचरन्ती संचरन्त्यौ वर्तमाने 'अयं वै लोको मित्रोऽसौ वरुणः' इति श्रुतेर्मित्रवरुणशब्देन द्यावापृथिव्यावुच्येते । यज्ञानां मुखमग्निहोत्रहोमकालमभिसंविदाने कथयन्त्यौ उत्तिष्ठतायमग्निहोत्रहोमकाल इति प्रातर्विप्रा वदन्ति तदुषस्युपचर्यते । सुहिरण्ये साधु हिरण्यं भूतं ययोस्ते । सुशिल्पे अन्योन्यं प्रतिरूपे । शिल्पं प्रतिरूपं भवतीति वचनात् ॥ ६ ॥

## सप्तमी ।

प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा । अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥

**उ०** प्रथमा वाम् । यौ प्रथमौ होतारौ अयं चाग्निरसौ च मध्यमः । वां युवयोः हे दम्पती यजमानौ । सरथिना एकरथारूढौ । सुवर्णा शोभनवर्णौ । देवौ दानादिगुणयुक्तौ । पश्यन्तौ भुवनानि भूतजातानि । विश्वानि सर्वाणि मध्यस्थतया । अपिप्रयम् । प्रीणातेरेतद्रूपम् । प्रीणितवानहमस्मि तौ चोदना सुप्रमाणकं कर्म । वां युवयोः हे दम्पती यज-

मानौ, मिमाना निर्मिमाणौ होतारौ । ज्योतिः प्रदिशा दिशन्ता आहवनीयाख्यं ज्योतिः प्रष्टव्यमिति प्रदिशा प्रदेशेन अभिनयेन दिशन्ता दर्शयन्तौ । आसते इति वाच्यम् ॥७॥

म० हे यजमानौ, वां युवयोः प्रथमा प्रथमौ मुख्यौ होतारा होतारौ अहमपि प्रयं प्रीणितवानस्मि । प्रीणातेर्णिजन्तस्य लुङि उत्तमैकत्वे रूपम् । अयं चाग्निरसौ च मध्यम इति । होतारौ कीदृशौ । सरथिना सरथिनौ समानो रथो ययोस्तौ एकरथारूढौ । सुवर्णा सुवर्णौ शोभनो वर्णो द्युतिर्ययोस्तौ । देवौ दीप्यमानौ दातारौ । विश्वा सर्वाणि भुवनानि पश्यन्तौ । वां युवयोश्चोदना चोदनानि कर्माणि मिमाना मिमानौ निर्मिमाणौ । प्रदिशा प्रदेशेनाभिनयेन ज्योतिः दिशन्तौ आहवनीयाख्यं ज्योतिर्यष्टव्यमिति दर्शयन्तौ ॥ ७ ॥

## अष्टमी ।

आदि॒त्यैर्नो॒ भार॑ती वष्टु य॒ज्ञꣳ सर॑स्वती स॒ह रु॒द्रैर्न॑ आवीत् । इडोप॑हूता वसु॑भिः स॒जोषा॑ य॒ज्ञं नो॑ देवीर॒मृते॑षु धत्त ॥ ८ ॥

उ० आदित्यैर्नः । अत्र त्रयः पादाः परोक्षकृताः चतुर्थः पादः प्रत्यक्षकृतः । नचैवं सामञ्जस्यम् । अतश्चतुर्थस्य पादस्य सन्नतिः । आदित्यैः सहिता नो अस्माकं भारती वष्टु कामयतां यज्ञम् सरस्वती च रुद्रैः सहिता नः अस्मान् आवीत् अवतु । इड च उपहूता कृतोपह्वाना वसुभिः सजोषा समानप्रीतिः । नः आवीदित्यनुवर्तते । एवमनेन प्रकारेण यज्ञं नोऽस्माकं तिस्रो देव्यः अमृतेषु देवेषु धत्त दधत्विति पुरुषव्यत्ययः । परोक्षीकृत्य स्तुताः ता इदानीं प्रत्यक्षकृताः स्तौति । यज्ञं नो देवीरमृतेषु धत्तेति ॥ ८ ॥

म० आदित्यैः युता भारती नोऽस्माकं यज्ञं वष्टु कामयताम् । सरस्वती रुद्रैः सह नोऽस्माकं यज्ञमावीत् अवतु । इडा चावतु । कीदृशी । उपहूता कृतोपहवा । वसुभिः देवैः । सजोषाः प्रीतियुता । एवं परोक्षमभिधाय प्रत्यक्षमाह । हे देवीः देव्यो भारतीसरस्वतीडाः । नोऽस्माकं यज्ञममृतेषु देवेषु धत्त यूयं स्थापयत ॥ ८ ॥

## नवमी ।

त्वष्टा॑ वी॒रं दे॒वका॑मं जजान॒ त्वष्टु॒रर्वा॑ जायत आ॒शुरश्वः॑ । त्वष्टे॒दं विश्वं॒ भुव॑नं जजान ब॒होः क॒र्तार॑मि॒ह य॑क्षि होतः ॥ ९ ॥

उ० त्वष्टा वीरं । यः त्वष्टा वीरं पुत्रम् देवकामम् ऋणत्रयापाकरणसमर्थं जजान जनयति । यस्माच्च त्वष्टुः अर्वा अरणः आशुः शीघ्रः अश्वः जायते । यश्च त्वष्टा इदं विश्वं सर्वं भुवनं भूतजातं जजान जनयति । तं त्वष्टारं बहोः भूतग्रामस्य कर्तारम् इह यज्ञे यक्षि यज हे होतः ॥९॥

म० त्वष्टा वीरं पुत्रं जजान जनयति । कीदृशं वीरं । देवकामं देवान्कामयते देवकामस्तं यष्टारम् । ऋणत्रयापाकरणसमर्थमित्यर्थः । त्वष्टुः सकाशात् अश्वः जायते उत्पद्यते । कीदृशोऽश्वः । अर्वा इयर्ति गच्छति अर्वा 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति अर्तेर्वनिप् । आशुः अश्नुते दिशो व्याप्नोति अश्नाति भक्षयति वा आशुः उणप्रत्ययः । किंच त्वष्टा इदं विश्वं सर्वं भुवनं भूतजातं जजान उदपादयत् । हे होतः, एवं बहोः कार्यस्य कर्तारं त्वष्टारमिह यज्ञे त्वं यक्षि यज । यजतेः शपि लुप्ते रूपम् ॥ ९ ॥

## दशमी ।

अश्वो॑ घृ॒तेन॒ त्मन्या॒ सम॑क्त॒ उप॑ दे॒वाँ२॥ ऋ॑तु॒शः पाथ॑ एतु । व॒नस्पति॑र्देवलो॒कं प्र॑जा॒नन्न॒ग्निना॑ ह॒व्या स्व॑दि॒तानि॑ वक्षत् ॥ १० ॥

उ० अश्वो घृतेन । यः अश्वः पत्नीभिः घृतेन त्मन्या आत्मना स्वयमेव समक्तः समुक्षितः सन् । उप एतु उपगच्छतु देवान् प्रति । ऋतुशः ऋतावृतौ काले काले पाथः अन्नं भूत्वा । कथं देवलोकमजानन्न देवान् प्रति यायादित्यत आह । वनस्पतिः देवलोकं प्रजानन् अश्वस्य दर्शयत्विति शेषः । अग्निना च तन्मित्रेण । हव्या हवींषि स्वदितानि मृष्टीकृतानि । वक्षत् वहतु देवान्प्रति ॥ १० ॥

म० पाथ इत्यन्ननाम । अश्वः पाथः अश्वरूपं हविः ऋतुशः ऋतौ-ऋतौ यज्ञकाले त्मन्या आत्मन्या स्वयं देवान् उप एतु प्राप्नोतु । विभक्तेर्यादेशे 'मन्त्रेष्वाङ्यादेरात्मनः' ( पा० ६ । ४ । १४१ ) इति आलोपः । कीदृशोऽश्वः । घृतेन समक्तः पत्नीभिः समुक्षितः । किंच वनस्पतिर्देवः हव्या हव्यानि वक्षत् वहतु देवान्प्रति । कीदृशो वनस्पतिः । देवलोकं प्रजानन्विदन् अतएव वहतु । कीदृशानि हव्यानि । अग्निना स्वादितानि आस्वादितानि आस्वाद्य मिष्टीकृतानि ॥ १० ॥

## एकादशी ।

प्र॒जाप॑तेस्तप॑सा वावृधा॒नः स॒द्यो जा॒तो द॑धिषे य॒ज्ञम॑ग्ने । स्वाहा॑कृतेन ह॒विषा॑ पुरो॒गा या॒हि सा॒ध्या ह॒विर॑दन्तु दे॒वाः ॥ ११ ॥

उ० प्रजापतेस्तपसा । यस्त्वं प्रजापतेस्तपसा वावृधानः वर्धमानः । सद्योजातः अरण्योः सकाशादुत्पन्नः । दधिषे धारयसि यज्ञं । हे अग्ने, तं त्वां ब्रवीमि । स्वाहाकृतेन हविषा स्वाहाकारोपलक्षितेन हविषा । पुरोगाः पुरोगामी सन् । याहि साध्या । साधुशब्दविभक्त्यर्थे ड्यादेशे टिलोपः । साधु हविः अदन्तु देवाः ॥ ११ ॥

म० हे अग्ने, त्वं यज्ञं दधिषे धारयसि । लडर्थे लिट् । कीदृशस्त्वम् । प्रजापतेस्तपसा वावृधानः वर्धमानः । सद्यो जातः अरण्या उत्पन्नः । किंच स्वाहाकृतेन स्वाहाकारमुक्त्वा हुतेन हविषा सह । पुरोगाः पुरो गच्छतीति अग्रगामी सन्

याहि देवान् गच्छ । त्वयि गते सति देवाः हविरदन्तु भक्षयन्तु । कीदृशं हविः । साध्या साधु । श्रेष्ठम् । विभक्तेर्ड्यादेशे टिलोपे रूपम् ॥ ११ ॥

### द्वादशी ।

यदक्र॑न्दः प्रथ॒मं जाय॑मान उ॒द्यन्त्स॑मु॒द्रादु॒त वा॒ पुरी॑षात् । श्ये॒नस्य॑ प॒क्षा ह॑रि॒णस्य॑ बा॒हू उ॑प॒स्तुत्यं॒ महि॑ जा॒तं ते॑ अर्वन् ॥ १२ ॥

उ० यदक्रन्दः । त्रयोदश त्रिष्टुभोऽश्वाभिष्टवो होतुः । यत् यदा अक्रन्दः हेषाशब्दमकार्षीः प्रथमं जायमानः । यच्च उद्यन् उद्गच्छन् समुद्रात् अन्तरिक्षलोकात् पार्थिवाद्वा समुद्रात् । उत वा अपिच पुरीषात् अन्यस्माज्जलसङ्घात्पशोर्वा । उद्यन् अक्रन्दः तदा श्येनस्य पक्षौ शीघ्रतया अजैषीः । हरिणस्य बाहू शीघ्रतया अजैषी इति शेषः । उपस्तुत्यम् उपसङ्गम्य स्तुत्यं स्तवनीयमृषिभिः । महि महत् जातमुत्पन्नम् ते तव । हे अर्वन् अरण अश्व ॥ १२ ॥

म० त्रयोदशाश्वस्तुतिरूपास्त्रिष्टुभो जमदग्निदीर्घतमोभ्यां दृष्टाः अश्वस्तुतौ विनियुक्ताः । हे अर्वन् अश्व, यत् यदा त्वमक्रन्दः क्रन्दितवान् हेषारवमकार्षीः तदा ते तव महि माहात्म्यम् उपस्तुत्यं स्तोतुं योग्यं जातम् । कथं स्तुत्यं तदाह । श्येनस्य पक्षौ हरिणस्य बाहू । अनेन क्रन्दनेन जिताविति शेषः । श्येनपक्षौ शौर्येण हरिणबाहू वेगेनेत्यर्थः । कीदृशस्त्वम् । समुद्रात् अन्तरिक्षात् उदधेर्वा प्रथमं जायमानः । उतवा अथवा पुरीषात् पशोः सकाशात् उद्यन् उत्पद्यमानः ॥ १२ ॥

### त्रयोदशी ।

य॒मेन॑ द॒त्तं त्रि॒त ए॑नमायुन॒गिन्द्र॑ एणं प्रथ॒मो अध्य॑तिष्ठत् । ग॒न्ध॒र्वो अ॑स्य रश॒नाम॑गृभ्णा॒त्सूरा॑द॒श्वं॑ वसवो॒ निर॑तष्ट ॥ १३ ॥

उ० यमेन दत्तम् । अत्र चतुर्थः पादः प्रथमं व्याख्यायते योग्यत्वात् । सूरादश्वं वसवो निरतष्ट । हे वसवः यूयं सूरात् आदित्यमण्डलात् अश्वं निरतष्ट । तक्षतिः करोतिकर्मा । निष्कृष्य कृतवन्तः । तं यमेन दत्तम् त्रितः त्रिस्थानो वायुः एनम् आयुनक् युक्तवान् । इन्द्रश्च एनं प्रथमः अध्यतिष्ठत् । गन्धर्वश्च विश्वावसुः अस्य रशनाम् अगृभ्णात् अगृह्णात् । य इत्थंभूतोऽश्वः तं वयं स्तुम इति वाक्यशेषः॥१३॥

म० वसवोऽष्टगणदेवाः सूरादादित्यमण्डलादश्वं निरतष्ट निष्कृष्टवन्तः । तक्षतेर्लङि मध्यमबहुवचनम् । ततः त्रितः त्रिस्थानो वायुः । यमेन दत्तमेनमश्वम् अयुनक् युक्तवान् । युजेर्लङ् संहितायामटि दीर्घः । इन्द्रश्चैनमश्वं प्रथमः अध्यतिष्ठत् आदावधिष्ठितवान् । गन्धर्वः विश्वावसुरस्याश्वस्य रशनामगृभ्णात् गृहीतवान् । य ईदृशस्तं स्तुमः । एणमिति णत्वं छान्दसम् ॥ १३ ॥

### चतुर्दशी ।

असि॑ य॒मो अस्या॑दि॒त्यो अ॑र्वन्नसि॑ त्रि॒तो गुह्ये॑न व्र॒तेन॑ । असि॒ सोमे॑न स॒मया॒ विपृ॑क्त आ॒हुस्ते॒ त्रीणि॑ दि॒वि बन्ध॑नानि ॥ १४ ॥

उ० असि यमः भवसि च आदित्यः हे अर्वन् अरण अश्व, भवसि च त्रितस्त्रिस्थान इन्द्रः गुह्येन गुप्तव्रतेन कर्मणा । भवसि च सोमेन समया मध्यतः विपृक्तः संपृक्तः एकीभूतः । एताभिर्देवताभिस्तव सायुज्यं जातमित्यभिप्रायः । किंच आहुः बुधाः ते तव । त्रीणि दिवि द्युलोके आदित्यात्मनावस्थितस्य । बन्धनानि ऋग्यजुःसामलक्षणानि मण्डलान्तरपुरुषार्चीँषि ॥ १४ ॥

म० हे अर्वन्, त्वं यमोऽसि आदित्यश्चासि । गुह्येन गोप्येन व्रतेन कर्मणा त्रितः त्रिस्थान इन्द्रोऽसि । सोमेन समया सह विपृक्तः संपृक्तः एकीभूतोऽसि । एवं यमादिभिः सायुज्यं प्राप्तस्य तव दिवि नभसि आदित्यरूपेण स्थितस्य त्रीणि बन्धनानि बुधा आहुः । ऋग्यजुःसामरूपाणि मण्डलान्तरपुरुषार्चींषि त्रीणि बन्धनानि स्वरूपाणि । 'यदेतन्मण्डलं तपति तन्महदुक्थम्' इत्यादिश्रुतेः ॥ १४ ॥

### पञ्चदशी ।

त्रीणि॑ त आहुर्दि॒वि बन्ध॑नानि॒ त्रीण्य॒प्सु त्रीण्य॒न्तः स॑मु॒द्रे । उ॒तेव॑ मे॒ वरु॑णश्छन्त्स्यर्व॒न्यत्रा॑ त आ॒हुः प॑र॒मं ज॒नित्र॑म् ॥ १५ ॥

उ० त्रीणि ते । त्रीणि त आहुर्दिवि बन्धनानि इति व्याख्यातम् । त्रीणि अप्सु बन्धनानि कृषिर्वृष्टिर्बीजमिति । त्रीण्यन्तःसमुद्रे । समुद्रशब्देनान्तरिक्षमभिधीयते । अन्तरिक्षस्य मध्ये तव त्रीणि बन्धनानि । मेघो विद्युत् अशनिरिति उतइव अपिच । मे मम वरुणः छंत्सि । छन्दतिरर्चतिकर्मा । शंसति कथयति । हे अर्वन् अरण अश्व, यत्र ते तव आहुः परमं जनित्रं जन्म वायुरूपेण ॥ १५ ॥

म० हे अर्वन्, यत्र ते तव परमं जनित्रं बुधा आहुः आदित्यरूपेण तत्र ते तव त्रीणि बन्धनानि पूर्वमन्त्रोक्तान्याहुः । अप्सु उदकेषु त्रीणि बन्धनानि आहुः कृषिर्वृष्टिर्बीजमिति । अन्तःसमुद्रे अन्तरिक्षमध्ये त्रीणि बन्धनानि आहुः मेघो विद्युत् स्तनयित्नुरिति । उतेव उतापिच वरुणः वरुणरूपः त्वं मे मां छन्त्सि प्रशंससि । कर्मणि षष्ठी । छन्दतिरर्चतिकर्मा । अर्चनं प्रशंसनम् ॥ १५ ॥

### षोडशी ।

इ॒मा ते॑ वाजिन्नव॒मार्ज॑नानी॒मा श॒फाना॑ᳫं सनि॒तुर्नि॒धाना॑ । अत्रा॑ ते भ॒द्रा र॑श॒ना अ॑पश्यमृ॒तस्य॒ या अ॑भि॒रक्ष॑न्ति गो॒पाः ॥ १६ ॥

उ० इमा ते । इमानि ते तव हे वाजिन् अश्व, अवमार्जनानि यैस्त्वावमार्जनं कृतं तान्येव मार्जनानि नूतनवेतसकटप्रभृतीनि अहमपश्यं पश्यामि । इमानि च शफानां खुराणां सनितुः संभक्तुः पादवाससः निधाना निधानानि यत्र पादवासःप्रभृतीनि धीयन्ते तानि अहमपश्यम् । अपिच अत्र ते तव भद्रा भन्दनीया स्तुत्याः रशनाः अहमपश्यम् । ऋतस्य यज्ञस्य या रशना अभिरक्षन्ति गोपाः गोपायितव्यान्पश्यन् ॥ १६ ॥

म० हे वाजिन्, ते तव इमा इमानि अवमार्जनानि अहमपश्यं पश्यामि । अवमार्ज्यते यैस्तानि अवमार्जनानि वेतसकटादीनि । शफानां खुराणां सनितुः संभक्तुर्नियन्तुः पादवासस्य इमा इमानि निधाना निधानानि स्थानानि अपश्यम् । अत्र यज्ञे ते तव रशनाः मध्यवन्धनरज्जूः अपश्यम् । कीदृशी रशनाः । भद्राः कल्याणरूपाः स्तुत्याः । गोपाः गोपायन्ति गोपाः रक्षणकर्त्र्यः । या रशनाः ऋतस्य ऋतं यज्ञमभिरक्षन्ति कर्मणि षष्ठी । 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इत्यत्र पदस्य दीर्घः ॥ १६ ॥

## सप्तदशी ।

आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् । शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥ १७ ॥

उ० एतैरधस्तनैरश्वचरित्रैरश्वमभिष्टुत्य अथेदानीं भविष्यत्कर्मभिरभिष्टौति । आत्मानं ते । पशुसंस्पर्शनोत्तरकालम् आत्मानं ते तव दिव्यमहं मनसा आराद्दूरात् । अजानाम् जानामि । जानातेरेतदनुदात्तत्वाद्रूपं लुङ्येकवचने । अवः अधस्तात् प्रदेशात् । दिवा दिवंप्रति । पतयन्तम् उत्पतन्तम् । पतङ्गम् आदित्यरूपिणम् । शिरश्चाहं तव अपश्यम् पथिभिः मार्गैः सुगेभिः सुगमनैः अरेणुभिः उपद्रवरहितैः जेहमानं गच्छत् पतत्रि उत्पतनशीलम् ॥ १७ ॥

म० एवमश्वं स्तुत्वा भविष्यत्कर्मणा स्तौति । हे अश्व, ते तवात्मानं मनसा आराद्दूरे अहमजानां जानामि । जानातेर्लङ्युत्तमैकवचनम् । कीदृशमात्मानम् । अवः अधस्तात्प्रदेशात् दिवा नभोमार्गेण पतङ्गं सूर्यं प्रति पतयन्तमुत्पतन्तम् । 'पत ऐश्वर्यगत्योः' चुरादिरदन्तः । किंच ते शिरः सूर्यरूपं पश्यामि । कीदृशं शिरः । पथिभिः नभोमार्गैः जेहमानं गच्छत् । कीदृशैः पथिभिः । सुगेभिः सुगैः सुखेन गम्यते येषु ते सुगास्तैः 'सुदुरोरधिकरणे' (पा० ३ । २ । ४८) इति गमेर्डः । अरेणुभिः नास्ति रेणुर्येषु ते अरेणवस्तैः । उपद्रवरहितैरित्यर्थः । पुनः कीदृशं शिरः । पतत्रि पतनशीलं गन्तृ ॥ १७ ॥

## अष्टादशी ।

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः । यदा ते मर्तो अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः ॥ १८ ॥

उ० अत्रा ते । अत्र द्युलोके ते तव रूपमुत्तमम् अहमपश्यं पश्यामि । कथंभूतम् । जिगीषमाणं जेतुमिच्छत् इषः अन्नानि आ आस्थितं पदे गोः गन्तुर्मण्डलस्य । एवं द्युलोकावस्थितस्य तवाहं रूपमपश्यम् । अथ पुनः पृथिवीस्थितस्य यदा ते तव मर्तो मनुष्यः भोगं वाहनादिकम् । अनुआनट् अनुव्याप्नोत् । आत् इत् इति पादपूरणार्थौ । तदा ग्रसिष्ठः 'ग्रसु अदने' । ग्रसितृतमः अतिशयेन भक्षयिता सन् ओषधीः अजीगः गृह्णासि गिरसि वा । अन्यो हि वाहितश्चलितुमपि न शक्नोति त्वं वीर्यवत्तरोऽसीति भावः ॥ १८ ॥

म० हे अश्व, अत्रास्मिन् गोः सूर्यस्य पदे मण्डले ते तवोत्तमं रूपमहम् आ अपश्यम् समन्तात्पश्यामि । 'गौर्नादित्ये बलीवर्दे' इत्यभिधानाद् गौरादित्यः । कीदृशं रूपम् । इषः अन्नानि हवींषि जिगीषमाणं जेतुमिच्छत् । जयतेः सन्नन्ताच्छानच् 'सन्लिटोर्जेः' ( पा० ७ । ३ । ५७ ) इति गः । किंच मर्तः मनुष्यो यदा ते तव भोगमनु आनट् अनुव्याप्नोति हवीरूपं भोगं समर्पयति आत् इत् अनन्तरमेव त्वमोषधीः हवीरूपाः अजीगः 'गॄ निगरणे' गिरसि भक्षयसि । कीदृशस्त्वम् । ग्रसिष्ठः ग्रसते इति ग्रसिता अतिशयेन ग्रसिता ग्रसिष्ठः । अत्यन्तं भक्षयिता । इष्ठनि तृचो लुक् । गृणातेर्णिजन्तस्याजीगः ॥ १८ ॥

## एकोनविंशी ।

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् । अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥ १९ ॥

उ० अनु त्वा । अनु इति परभावमाचष्टे । हे अर्वन्, यस्य सुकृतिनो गृहे त्वं चेष्टसे तस्य गृहे त्वामनु रथः त्वामनु मर्यो मनुष्यः त्वामनु भगः सौभाग्यं कनीनां कन्यकानाम् । तत्रैते पदार्था भवन्तीत्यर्थः । किंच । व्रातासः पुरुषसङ्घा अपि तव सख्यं सखिभावमन्वीयुः । किमन्यद्बहु बदामः । अनु देवा ममिरे वीर्यं ते अनुममिरे अनुमितवन्तः देवा वीर्यं वीरकर्म ते तव । अचिन्त्यशक्तिस्त्वमसीत्यभिप्रायः ॥ १९ ॥

म० हे अर्वन् अश्व, रथः त्वा त्वामनु वर्तत इति शेषः । मर्यः मनुष्यः त्वामनु । गावः त्वामनु । कनीनां कन्यानां भगः सौभाग्यं त्वामनु । यत्र त्वं तत्र रथादयः स्युरित्यर्थः । किंच व्रातासः व्राताः मनुष्यसङ्घाः तव सख्यं मैत्रीम् अन्वीयुः प्रापुः । किं बहुना । देवाः तव वीर्यं सामर्थ्यमनुममिरे अनुमितवन्तः ॥ १९ ॥

## विंशी।

हिर॑ण्यशृङ्गोऽयो॑ अस्य॒ पादा॒ मनो॑जवा॒ अव॑र॒ इन्द्र॑ आसीत्। दे॒वा इद॑स्य ह॒विर॒द्यमा॑य॒न्यो अर्व॑न्तं प्रथ॒मो अ॒ध्यति॑ष्ठत् ॥ २० ॥

**उ०** हिरण्यशृङ्गः हिरण्यं शृङ्गस्थानीयमस्येति हिरण्यशृङ्गः। अयो अस्य पादाः यस्य चास्य अयः । अय इति सर्वेषां रजतादीनामुपलक्षणम् । पादा इत्यवयवानाम् । रजतादिविशिष्टा अवयवाः । मनोजवाः मनोवेगयुक्ताः। यस्माच्च अवरः कनिष्ठः इन्द्रः आसीत् अभवत् । वायुरूपेणाश्वस्यावस्थानात्। देवा इत् देवा अपि यस्याश्वस्य हविरद्यं हविर्लक्षणमदनीयमायन्नागच्छन्। यश्च अर्वन्तं प्रथमः अध्यतिष्ठत् स च इन्द्रः यस्य हविरद्यमागतम् तं वयं स्तुम इति शेषः ॥ २० ॥

**म०** यः प्रथमः मुख्यः अर्वन्तमश्वमध्यतिष्ठत् अधिष्ठितवान् सोऽपि इन्द्रः अवरः इन्द्रापेक्षया न्यून आसीत्। कीदृश इन्द्रः। हिरण्यश्‍ृङ्गः हिरण्यवत् शृङ्गं दीप्तिर्यस्य । शृङ्गमिति ज्वलन्नामसु पठितम् । अस्याश्वस्य पादा अयः लोहं हिरण्यं वा। अयोरूपाः पादा इत्यर्थः। कीदृशाः पादाः। मनोजवाः मनोवत् जवो वेगो येषां ते। किंच देवा अस्याश्वस्य हविरद्यमायन् अत्तुं योग्यमद्यं हविश्च तदद्यं च हविरद्यम् हविर्लक्षणं भक्ष्यं प्रति आयन् आगच्छन् । इत् एवार्थे अप्यर्थे वा ॥ २० ॥

## एकविंशी।

ई॒र्मान्ता॑सः॒ सिलि॑कमध्यमा॒सः॒ सꣳशूर॑णासो दि॒व्यासो॒ अत्या॑ः। ह॒ꣳसा इ॑व श्रेणि॒शो य॑तन्ते॒ यदाक्षि॑षुर्दि॒व्यमज्म॒मश्वा॑ः ॥ २१ ॥

**उ०** ईर्मान्तासः आदित्यस्य रथे येऽश्वा युक्तास्तद्द्वारेणायमश्वः स्तूयते। ईर्मे ईरितः अन्तो येषां ते ईर्मान्ताः ईर्मान्ता एव ईर्मान्तासः । तेषां हि सप्तानामश्वानां समीरितान्ताः विक्षिप्ताः प्रान्ताः । विरला इत्यर्थः । दृष्टान्ता वा । ते हि पृथूरस्काः पृथुजघनाश्चेत्यर्थः। सिलिकमध्यमासः संलग्नमध्यमाः कृशोदरा इत्यर्थः । सप्तानामपि संश्लिष्टा उदरप्रदेशा निरुदरास्तेऽश्वा इत्यर्थः । तथापि हि स्तुतिरुपपद्यते एव संशूरणासः सहिताः शूरणेन भगवताऽदित्येन दिव्यासः दिविजाः। अत्याः सततगमनाः । ते हि सकृद्युक्ता ब्राह्मं सहस्रयुगपर्यन्तमहर्वहन्ति । य इत्थंभूता अश्वाः ते हंसा इव श्रेणिशो यतन्ते । यथा हंसाः श्रेणीभूता एकया रीत्या प्रथमगमनाद्यान्कुर्वन्ति एवमश्वा अपीत्युपमार्थः । कदा इत्याह । यदा यस्मिन्काले आक्षिषुः 'अशूङ् व्याप्तौ' इत्यस्यैतद्रूपम् । व्याप्नुवन्ति दिव्यं दिवि भवम् । अज्मम् अजनम् आजिम् अश्वाः ॥ २१ ॥

**म०** सूर्याश्वरूपेणायमश्वः स्तूयते । यत् यदा अश्वाः सप्त रविरथस्थाः श्रेणिशः श्रेणीभूता हंसा इव संयतन्ते सम्यक् प्रयत्नं कुर्वन्ति तदा दिव्यं दिवि भवमज्मं गमनं संग्रामं वा आक्षिषुः व्याप्नुवन्ति। 'अक्षू व्याप्तौ' लुङि रूपम्। हंसा यथा गमनाय यतन्ते तथाश्वा अपि। कीदृशा अश्वाः। ईर्मान्तासः ईर्मान्ताः ईर्यते ईर्मः 'ईर प्रेरणे' मप्प्रत्ययः। ईर्मः प्रेरितः अन्तः शरीरप्रान्तो येषां ते। पृथुजघनोरस्का इत्यर्थः। सिलिकमध्यमासः सिलिकः श्लिष्टः संलग्नो मध्यमो मध्यप्रदेशो येषां ते शिलिकमध्यमाः। कृशोदरा इत्यर्थः। 'षिल संश्लेषे' इकप्रत्ययः। शूरणासः शू शीघ्रं रणो रवो युद्धं वा येषां ते शूरणाः। यद्वा शूरणो रविस्तदीयाः शूरणाः। दिव्यासः दिवि भवा दिव्याः। अत्याः अतन्ति सततं गच्छन्ति अत्याः सकृद्युक्ता ब्रह्माहःपर्यन्तं रविरथं वहन्ति ॥ २१ ॥

## द्वाविंशी।

तव॒ शरी॑रं पतयि॒ष्ण्व॑र्वन्त॒व चि॒त्तं वात॑ इ॒व ध्रजी॑मान्। तव॒ शृङ्गा॑णि॒ विष्ठि॑ता पुरु॒त्रार॑ण्येषु॒ जर्भु॑राणा चरन्ति ॥ २२ ॥

**उ०** तव शरीरम्। हे अर्वन्, तव शरीरं पतयिष्णु उत्पतनशीलम्। तव चित्तं च वात इव ध्रजीमान् गतिमत् वेगवत् सूक्ष्मानर्थान्प्रति गच्छेदित्यर्थः। तव शृङ्गाणि शृङ्गाणीति ज्वलन्नामसु पठितम् । तवार्चींषि विष्ठिता विविधं स्थितानि पुरुत्रा बहुधा विद्युच्चन्द्रार्काग्न्यादिषु । अरण्येषु वनेषु। जर्भुराणा जर्भुराणानि देदीप्यमानानि दावाग्निरूपेण चरन्ति ॥ २२ ॥

**म०** हे अर्वन्, तव शरीरं पतयिष्णु उत्पतनशीलम्। तव चित्तं ध्रजीमान् गतिमत् । वात इव वेगवत्सूक्ष्मार्थान्गच्छतीत्यर्थः। तव शृङ्गाणि दीप्तयः अरण्येषु वनेषु दवाग्निरूपेण चरन्ति प्रसरन्ति। कीदृशानि शृङ्गाणि। पुरुत्रा बहुधा विष्ठिता विविधं स्थितानि विद्युच्चन्द्रार्काग्निषु स्थितानि। जर्भुराणा जर्भुराणानि । 'जृम्भ विकसने' विकसितानि ॥ २२ ॥

## त्रयोविंशी।

उप॒ प्रागा॒च्छस॑नं वा॒ज्यर्वा॑ देव॒द्रीचा॒ मन॑सा॒ दीध्या॑नः। अ॒जः पु॒रो नी॑यते॒ नाभि॑रस्या॒नु प॒श्चात्क॒वयो॑ यन्ति रे॒भाः ॥ २३ ॥

**उ०** उपप्रागात्। उपप्र अगात् शसनं विशसनम्। वाजी वेजनवान् अर्वा अरणोऽश्वः। देवद्रीचा देवान्प्रत्यञ्चितेन। मनसा दीध्यानः ध्यायन् हिरण्यगर्भपदम् । किंच अजः पुरो नीयते। तदुक्तम् 'कृष्णग्रीव आग्नेयो रराटे पुरस्तात्' इति । नाभिरस्य अश्वस्य। तदुक्तम् 'सौमापौष्णः श्यामो नाभ्याम्' इति। किंच अनुलग्नाः पश्चात्। कवयः क्रान्तदर्शिनाः। यन्ति गच्छन्ति। रेभाः स्तोतारः ॥ २३ ॥

म० अर्वा अश्वः शसनं विशसनस्थानमुपप्रागात् आगतः । कीदृशोऽर्वा । वाजी वजतीति वाजी गमनशीलः अन्नवान् वा । देवद्रीचा मनसा दीध्यानः । देवान्प्रत्यञ्चति देवद्र्यक् तेन 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' ( पा० ६ । ३ । ९२ ) इति देवशब्दस्य टेरञ्चतौ परेऽद्र्यादेशः । दीधीते दीध्यानः 'दीधीङ् दीप्तिदेवनयोः' शानच्प्रत्ययः । देवान्प्रति गतेन चित्तेन दीप्यमानः । किंच अस्याश्वस्य पुरोऽग्रे अजो नीयते स्थाप्यते । तदुक्तम् 'कृष्णग्रीव आग्नेयो रराटे पुरस्तात्' इति । अस्य नाभिः अजो नीयते नाभौ स्थाप्यते । तदुक्तम् 'सौमापौष्णः श्यामो नाभ्याम्' इति । अस्य पश्चात् कवयः ऋत्विजः अनुयन्ति अनुगच्छन्ति । कीदृशाः कवयः । रेभाः रेभन्ते रेभाः 'रेभृ शब्दे' स्तोतार इत्यर्थः ॥ २३ ॥

## चतुर्विंशी ।

उप॒ प्रागा॑त्पर॒मं यत्स॒धस्थ॒मर्वाँ॒२॥ अच्छा॑ पि॒तरं॑ मा॒तरं॑ च । अ॒द्या दे॒वाञ्जुष्ट॑तमो॒ हि ग॒म्या अथा॒ शास्ते॑ दा॒शुषे॒ वार्या॑णि ॥ २४ ॥

उ० उपप्रागात् । एवमश्वमभिष्टुत्य अथेदानीं यजमानं कृतकृत्यतया संबोधयन्नाह । उप प्रागात् प्राप्तवान् । परममुत्कृष्टम् । यत् यस्मात् सधस्थं सह स्थानं देवमनुष्याणाम् । अर्वान् अर्वा अश्वः । नकार उपजनः । अच्छा पितरं मातरं च 'अच्छाभेराप्तुमिति शाकपूणिः' अभ्यगाच्च यस्मात् पितरं मातरं च द्यावापृथिव्यौ अश्वः । तस्माद्ब्रवीमि हे यजमान, अद्या अद्य कृतकृत्यः सन् देवान् गम्याः गच्छेः जुष्टतमः सन् हिर्निश्चये । अथैवंगताय भवते दाशुषे दत्तवते हवींषि यजमानाय । आशास्ते अश्व एव वार्याणि वरणीयानि ॥ २४॥

म० एवमश्वं स्तुत्वा यजमानमाह । अर्वान् अर्वाश्वः पितरं मातरं च अच्छ द्यावापृथिव्यौ अभि समीपे परममुत्कृष्टं यत् सधस्थं सहस्थानं तत् उपप्रागात् । अर्वन्शब्दस्य नलोपाभावश्छान्दसः । अश्वे एव देवलोकं गते हे यजमान, जुष्टतमः प्रीततमः सन् अद्य त्वं देवान् गम्याः देवलोकं गच्छेः । गमेराशीर्लिङि मध्यमैकवचने गम्या इति रूपम् । अथैवं देवत्वं गताय दाशुषे हविर्दत्तवते तुभ्यं वार्याणि वरणीयानि भोग्यवस्तूनि हि नूनम् आशास्ते । देवगणोऽश्वो वा ददातीत्यर्थः ॥ २४ ॥

## पञ्चविंशी ।

समि॑द्धो अ॒द्य मनु॑षो दुरो॒णे दे॒वो दे॒वान्य॑जसि जातवेदः । आ च॒ वह॑ मित्रमहश्चिकि॒त्वान्त्वं दू॒तः क॒विर॑सि॒ प्रचे॑ताः ॥ २५ ॥

उ० समिद्धो अद्य । द्वादशाह्यस्त्रिष्टुभः भार्गवो जमदग्निरपश्यत् । यस्त्वं समिद्धः अद्यास्मिन्यजनीयेऽहनि । मनुषः मनुष्यस्य यजमानस्य । दुरोणे यज्ञगृहे देवो दानादियुक्तः । देवान् दानादियुक्तान् यजसि । हे जातवेदः जातप्रज्ञान, तं त्वां प्रार्थयामि । आच वह देवान्यज च । हे मित्रमहः मित्राणां पूजयितः, यस्त्वं चिकित्वान् चेतनावान्परिदृष्टकारी । अपि चैतदेव चित्रं यत्त्वमस्माकमस्मिन्कर्मणि वर्तेथाः । किं कारणं यतो ब्रवीमि । त्वं दूतः देवानां कविः क्रान्तदर्शनश्चासि । प्रचेताः प्रवृद्धचेताश्च ॥ २५ ॥

म० द्वादशाप्रीसंज्ञास्त्रिष्टुभो जमदग्निदृष्टाः समित्तनूनपादादयो देवताः । हे जातवेदः जातज्ञान,मनुषो मनुष्यस्य यजमानस्य दुरोणे यज्ञगृहे अद्य त्वं देवान् यजसि । कीदृशस्त्वम् । समिद्धः दीप्तः देवः दानादिगुणयुक्तः । हे मित्रमहः मित्रान् यजमानान्महति पूजयति मित्रमहाः तत्संबुद्धौ हे मित्रमहः, आवह च देवानावह यज चेत्यर्थः । यतः त्वमीदृशोऽसि । कीदृशः । चिकित्वान् चेतनावान् । दूतः कविः क्रान्तदर्शी । प्रचेताः प्रकृष्टं चेतो यस्य सोऽत एव यज ॥ २५ ॥

## षड्विंशी ।

तनू॑नपात्प॒थ ऋ॒तस्य॒ याना॒न्मध्वा॑ सम॒ञ्जन्त्स्व॑दया सुजिह्व । मन्मा॑नि धी॒भिरु॒त य॒ज्ञमृ॒न्धन्दे॑व॒त्रा च॑ कृणुह्यध्व॒रं नः॑ ॥ २६ ॥

उ० तनूनपात्पथः । तनूनपाच्छब्देनाज्यमभिधेयमग्निर्वा । हे तनूनपात् गवामपां वा पौत्र । पथः ऋतस्य यानान् ऋतस्य यज्ञस्य गमनान्पथः हवींषि । हविर्भिर्हि यज्ञो याति प्रवर्ततेऽतो यज्ञमार्गा हवींष्युच्यन्ते । मध्वा मधुरसेन समञ्जन् भक्षयन् । स्वदय देवेभ्यः रोचय । हे सुजिह्व कल्याणजिह्व । कल्या ह्यग्नेर्जिह्वा या नानादेवत्यानि हवींष्यभ्यवहरते न किंचनोच्छेषयति । किंच मन्मानि मननानि धीभिः बुद्धिभिः सहितानि । उत अपिच यज्ञम् ऋन्धन् समर्धयन् । देवत्रा च कृणुहि देवान्प्रति गमय । करोतिर्गमनार्थः । अध्वरं नः अस्माकम् ॥ २६ ॥

म० तनूनामपां नपात्पौत्रोऽग्निः अद्भ्यो वृक्षाः जायन्ते तेभ्योऽग्निरित्यपां पौत्रत्वमग्नेः । हे तनूनपात् अग्ने, हे सुजिह्व,शोभना जिह्वा यस्य स सुजिह्वः । नानादेवत्यानि हवींषि भक्षयन्नपि नोच्छिष्टानि करोतीति वह्नेः शोभनजिह्वत्वम् । हे सुजिह्व, ऋतस्य यानान् पथः स्वदय रोचय । भक्षयेत्यर्थः । यायन्ते यैर्येषु वा ते यानास्तान् 'करणाधिकरणयोः' ( पा० ३ । ३ । ११७ ) इति ल्युप्रत्ययः । ऋतो यज्ञः तस्य गमनसाधनमार्गा हवींषि तान्भक्षयेत्यर्थः । हविर्भिर्यज्ञः प्रवर्तते इति यज्ञगमनपन्थानो हवींषि । किं कुर्वन् । मध्वा समञ्जन् मधुरेण रसेन संम्रक्षयन् । किंच नोऽस्माकमध्वरं यज्ञं देवत्रा कृणुहि देवान् गमय । करोतिर्गत्यर्थः । किं कुर्वन् । धीभिः बुद्धिभिः सह मन्मानि ज्ञानानि । उत अपिच यज्ञमृन्धन् समर्धयन् अस्माकं ज्ञानं यज्ञं च वर्धयन् यज्ञं देवलोकं नयेत्यर्थः ॥२६॥

## सप्तविंशी ।

**नराशꣳसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः । ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥ २७ ॥**

**उ०** नराशंसस्य नरा अस्मिन्नासीनाः शंसन्तीति नराशंसो यज्ञः प्रजापतिर्वाग्निर्वा नरैः प्रशस्यो भवतीति नराशंसः । तस्य महिमानं महाभाग्यम् । एषां देवगणानां मध्ये उपस्तोषाम उपस्तुमः । कथंभूतस्य नराशंसस्य । यजतस्य यष्टव्यस्य यज्ञैराहुतिभिः । तस्य च महिमानमासाद्य ये देवाः सुक्रतवः सुकर्माणः । शुचयः निषिक्तपाप्मानः अणिमाद्यैश्वर्ययुक्ताः धियंधाः प्रज्ञायाः कर्मणो वा धारयितारः । स्वदन्ति भक्षयन्ति उभयानि हव्या हवींषि । सोमं च इतराणि च हवींषि तान्त्राणि प्रयाज्यभागस्विष्टकृत्प्रभृतीनि आवापिकानि प्रधानान्युभयानीति ॥ २७ ॥

**म०** नरा अस्मिन्नाशंसन्तीति नराशंसोऽग्निः प्रजापतिर्वा नरैः प्रशस्यो भवतीति वा । नराशंसस्य प्रजापतेरग्नेर्वा महिमानं महाभाग्यमेषां देवानां मध्ये वयमुपस्तोषाम उपस्तुमः । स्तौतेर्लेटि उत्तमैकवचने 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) इति सिप्प्रत्यये रूपम् । कीदृशस्य नराशंसस्य । यज्ञैः यजतस्य । यजेरतच्प्रत्ययः । एषां केषाम् । ये देवाः उभयानि हव्या हवींषि सोमम् इतराणि च स्वदन्ति भक्षयन्ति । कीदृशा देवाः । सुक्रतवः शोभनः क्रतुः कर्म येषां ते शुचयः शुद्धा निष्पापाः । धियंधाः धियं बुद्धिं कर्म वा दधतीति अलुगार्षः ॥ २७ ॥

## अष्टाविंशी ।

**आजुह्वान ईड्यो वन्द्यश्चायाह्यग्ने वसुभिः सजोषाः । त्वं देवानामसि यह्व होता स एतान्यक्षीषितो यजीयान् ॥ २८ ॥**

**उ०** आजुह्वानः । यस्त्वम् आजुह्वानः आहूयमानः सन् ईड्यः स्तुत्यः वन्द्यः नम्यश्च भवसि स त्वं याह्यागच्छ हे अग्ने, वसुभिः सजोषाः सहप्रीतिः । यश्च त्वं देवानां होतासि । हे यह्व महन्, स एतान्देवानाहूय यक्षि यज । इषितः प्रेषितः अधीष्टो वा । यजीयान् यष्टृतरः सन् ॥ २८ ॥

**म०** हे अग्ने, त्वमायाहि आगच्छ । कीदृशस्त्वम् । आजुह्वानः आह्वयते आह्वयति देवानित्याजुह्वानः । ह्वयतेः शपः श्लुः । 'ह्वः संप्रसारणम्' ( पा० ६ । १ । ३२ ) इत्यभ्यासस्य संप्रसारणं शानचि । ईड्यः स्तुत्यः । वन्द्यः नमनीयः । वसुभिः देवैः, सजोषाः समानप्रीतिः । किंच हे यह्व महन्, यः त्वं देवानां होता आह्वाता असि स त्वमेनान् यक्षि यज । कीदृशस्त्वम् । इषितः प्रेषितः अभीष्टो वा । यजीयान् यजतीति यष्टा अत्यन्तं यष्टा यजीयान् । ईयसुनि 'तुरिष्ठेमेयःसु' ( पा० ६ । ४ । १५४ ) इति तृचो लोपः ॥ २८ ॥

## एकोनत्रिंशी ।

**प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् । व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ २९ ॥**

**उ०** प्राचीनं बर्हिः प्राचीं प्रागग्रं वृज्यते प्रस्तीर्यते । किं स्वमनीषया नेत्याह । प्रदिशा । प्रदिक्शब्देन श्रुतिवाक्यमभिधीयते प्रागग्रं बर्हिस्तृणातीति । पृथिव्या वस्तोरस्याः । अस्याः पृथिव्याः वेदेः । वस्तोः वसनायाच्छादनाय । अग्रे अह्नाम् पूर्वाह्णदिवसानाम् । स हि यागकालः प्रशस्तः । तत् वृज्यमानं बर्हिः विउप्रथति विप्रथति विविधमाच्छादयति । उकारः पादपूरणः । वितरमतितराम् वरीयः वरतरमुरुतरं वा । किं कारणमपेक्ष्य व्युप्रथते इत्यत आह । देवेभ्यश्च अदितये च स्योनं सुखं कर्तुमिति शेषः ॥ २९ ॥

**म०** अह्नां दिनानामग्रे पूर्वाह्णे बर्हिः प्राचीनं प्रागग्रं वृज्यते प्रस्तीर्यते प्रातर्यागकालस्य प्रशस्तत्वादह्नामग्रे इत्युक्तम् । किं स्वबुद्ध्या नेत्याह । 'प्रदिशा प्रागग्रं बर्हिः स्तृणाति' इति श्रुतिवाक्येन प्रदिक्शब्देन श्रुतिवाक्यम् । अस्याः पृथिव्या वेदेः वस्तोः वसितुम् । आच्छादयितुमित्यर्थः । तद्बर्हिः वृज्यमानं सत् विप्रथते विविधं विस्तीर्णं भवति । उकारः पादपूरणः । कीदृशं बर्हिः । वितरं वरीयः अत्यन्तं वि वितरमतितराम् वरीयः अत्यन्तमुरु वरीयः 'प्रस्थस्फव–' (पा०६ । ४ । १५७) इत्यादिना उरोर्वरादेशः । देवेभ्यः अदितये च स्योनं सुखकरम् ॥ २९ ॥

## त्रिंशी ।

**व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ ३० ॥**

**उ०** व्यचस्वतीः । यज्ञगृहद्वारोऽभिधेयाः । अत्र च प्रथमोऽर्धर्चः परोक्षकृतो द्वितीयः प्रत्यक्षकृतः । नच तयोरेकवाक्यता संपद्यते अतः प्रथमस्य सन्नतिः । व्यचस्वतीः व्यञ्चनवत्यः गमनवत्यः । ऊर्विया उरुत्वेन विश्रयन्ताम् विवृता भवत । कथमिव । पतिभ्यो न जनयः शुंभमानाः यथा मैथुन्यधर्मे पतिभ्योऽर्थाय जनयः जाया आत्मानं शोभयन्त्यः ऊरू विश्रयेयुः विवृतौ कुर्वन्ति । यथा हि विवृता जाया उपसर्पन्ति पतिं न तथा इति इतीदमुक्तं पतिभ्यो न जनयः एवं विवृताश्च भूत्वा हे देव्यः द्वारः, बृहत्यः महत्यः । विश्वमिन्वाः विश्वमेत्यैताभिः विश्वमिन्वाः । यूयं देवेभ्यः ऋत्विग्यजमानेभ्यः भवत सुप्रायणाः सुप्रगमनाः ॥ ३० ॥

**म०** द्वारो देवीः देव्यो विश्रयन्तां विवृता भवन्तु । कीदृश्यो द्वारः । उर्विया उरुत्वेन व्यचस्वतीः व्यञ्चनवत्यो गमनवत्यः । कथमिव । पतिभ्यो जनयो न जनय इव । यथा जनयः

जायाः पत्यर्थं ऊरू विश्रयन्ति । एवं परोक्षमुक्त्वा प्रत्यक्षमाह । हे द्वारो देव्यः, यूयं देवेभ्यो देवार्थं सुप्रायणाः सुप्रगमनाः भवत । कीदृश्यः । बृहती बृहत्यः । विश्वमिन्वाः विश्वमेति गच्छति यासु ताः । एतेन्वैकप्रत्ययः अलुक्समासः । शुम्भमानाः शोभमानाः । उर्विया इति द्वार्विशेषणं वा । उरवो विशालाः 'इयाडियाजियारश्च' इति विभक्तेरियाजादेशः चित्वादन्तोदात्तः ॥ ३० ॥

## एकत्रिंशी ।

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ । दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥ ३१ ॥

**उ०** आसुष्वयन्ती । स्मयतेर्वा निरुपसर्गात्स्वपतेर्वा सूपसर्गात् । सेस्मीयमाने परस्परं हसन्त्यौ साधुस्वपन्त्यौ वा । यजते यज्ञे उपाके उपाक्रान्ते परस्परमेकदेशसवलीभूते । उषासानक्ता उषाश्च नक्ता रात्रिश्च । सदतां नियोनौ आसीदताम् । निरनर्थक उपसर्गः । यद्वा निरिति सदतामित्याख्यातेन युज्यते । निषीदताम् । योनौ यज्ञगृहे । कथंभूते । दिव्ये दिविभवे । योषणे प्रीतिमत्यौ स्त्रीरूपिण्यौ वा । बृहती बृहत्यौ महत्यौ । सुरुक्मे सुरोचने । अधिश्रियं शुक्रपिशं दधाने । शुक्रपिशं शुक्ररूपं श्रियम् अधिदधाने । स्थापयन्त्यौ ॥३१॥

**म०** आ नि एतयोः सदतामिति संबन्धः । अधीत्यस्य दधाने इत्यनेन संबन्धः । उषासानक्ता अहोरात्रे देवते योनौ यज्ञगृहे आनि सदताम् सम्यक् उपविशताम् । कीदृश्यौ ते । सुष्वयन्ती स्मयतेः स्वपतेर्वा सुपूर्वस्य रूपम् । पूर्वपक्षे मकारस्य वकारश्छान्दसः । उत्तरपक्षे पकारस्य यकारः । परस्परं हसन्त्यौ साधु स्वपन्त्यौ वा । यजते यजनीये । उपाके उप समीपमकतस्ते उपाके 'अक गतौ' परस्परं समीपस्थिते । दिव्ये दिवि भवे । योषणे योषे स्त्रीरूपिण्यौ । बृहती बृहत्यौ महत्यौ सुरुक्मे शोभनं रुक्मं सुवर्णं ययोस्ते । साभरणे इत्यर्थः । शुक्रपिशं शुक्रां कपिशां च श्रियं शोभामधिदधाने अधिकं धारयन्त्यौ । शुक्रमहः कपिशा रात्रिः ॥ ३१ ॥

## द्वात्रिंशी ।

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ३२ ॥

**उ०** दैव्या होतारा । यौ दैव्यौ होतारौ अयं चाग्निरसौ च मध्यमः प्रथमा आद्यौ सुवाचा सुवाचौ । नहि तौ पाठं विनाशयतः । मिमाना निर्मिमाणौ यज्ञम् मनुषो मनुष्यस्य यजध्यै यजनाय प्रचोदयन्तौ च विदथेषु यज्ञेषु अन्यानृत्विजः । स्वयं च कारू कर्तारौ । प्राचीनं पूर्वस्यां दिशि भवं आहवनीयाख्यं ज्योतिः यष्टव्यमिति प्रदिशा अभिनयेन श्रुतिवाक्येन वा दिशन्ता कथयन्तौ । आशास्तावस्मदीयं प्रसाधयेतामिति शेषः ॥ ३२ ॥

**म०** दैव्यौ होतारौ ईदृशौ आसाते इति शेषः । कीदृशौ । प्रथमा आद्यौ । सुवाचा शोभना वाक् ययोस्तौ । मनुषो मनुष्यस्य यजध्यै यष्टुं यज्ञं । मिमाना निर्मिमाणौ । तुमर्थे शध्यैप्रत्ययः । विदथेषु यज्ञेषु प्रचोदयन्ता प्रचोदयन्तौ ऋत्विजः प्रेरयन्तौ । कारू कुरुतस्तौ कारू 'उणादयो बहुलम्' ( पा० ३ । ३ । १ ) इत्युण् । स्वयं कर्तारौ । प्राचीनं पूर्वदिशि भवं ज्योतिः आहवनीयाख्यं प्रदिशा अभिनयेन श्रुतिवाक्येन दिशन्ता यष्टव्यमिति कथयन्तौ । सर्वत्र विभक्तेराकारः ॥३२॥

## त्रयस्त्रिंशी ।

आ नो यज्ञं भारती तूयमेत्विडा मनुष्वदिह चेतयन्ती । तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥ ३३ ॥

**उ०** आ नो यज्ञम् । आङुपसर्गः सदन्त्वित्याख्यातेन संबध्यते । आ एतु आगच्छतु नः अस्माकं यज्ञम् भारती भरत आदित्यस्तस्य भारती तूयं क्षिप्रम् इडा च आगच्छतु । मनुष्वत् मनुष्यवत् इह चेतयन्ती परिदृष्टकारिणी । सरस्वती च । या इत्थंभूतास्तिस्रो देव्यः ताः बर्हिः आङुपसर्गः सदन्त्वित्याख्यातेन संबध्यते । आसदन्तु आसीदन्तु इदं स्योनं सुखरूपम् स्वपसः । अप इति कर्मनाम । साधुकर्मणः ॥३३॥

**म०** भारती इडा सरस्वती च नोऽस्माकं यज्ञं तूयं क्षिप्रमा एतु आगच्छतु । कीदृशी । मनुष्वत् मनुष्यवदिह कर्मणि चेतयन्ती ज्ञापयन्ती कर्मज्ञानं बोधयन्ती । इदं तिसृणां विशेषणम् । एतास्तिस्रो देवीः देव्यः स्योनं सुखरूपमिदं बर्हिः आसदन्तु आसीदन्तु । कीदृश्यः । स्वपसः शोभनमपः कर्म यासां ताः शुभकर्माणः । अप इति कर्मनाम ॥ ३३ ॥

## चतुस्त्रिंशी ।

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा । तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥ ३४ ॥

**उ०** य इमे । यस्त्वष्टा इमे द्यावापृथिव्यौ जनित्री जनयित्र्यौ सर्वभूतानाम् । रूपैः अपिंशत् सुचित्रिते अकरोत् । भुवनानि विश्वा भूतजातानि च सर्वाणि रूपैरपिंशत् आवृतान्यकरोत् तम् अद्यास्मिन्नहनि । हे होतः, इषितः प्रेषित इति वा अधीष्ट इति वा । यजीयान् यष्टृतरः । देवं दानादिगुणयुक्तम् त्वष्टारम् । इह यज्ञे यक्षि यज । विद्वान् स्वमधिकारं जानानः ॥ ३४ ॥

**म०** हे होतः, अद्य इषितः प्रेषितः सन् तं त्वष्टारं देवमिह यज्ञे यक्षि यज । कीदृशः त्वम् । यजीयान् अत्यन्तं यष्टा 'तुरिष्ठेमेयःसु' ( पा० ६ । ४ । १५४ ) इतीयसुनि तृचो

लोपः । विद्वान् स्वाधिकारज्ञः । तं कम् । यः त्वष्टा इमे द्यावापृथिवी द्यावाभूमी रूपैः अपिंशदवयवैर्विचित्रे अकरोत् 'पिश अवयवे' तुदादिः । लङि 'शे मुचादीनाम्' ( पा० ७ । १ । ५९ ) इति नुम् । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि रूपैः अपिंशत् विविधरूपाण्यकरोत् । कीदृश्यौ द्यावापृथिव्यौ । जनित्री जनयतस्ते जनित्र्यौ प्राण्युत्पादिके ॥ ३४ ॥

## पञ्चत्रिंशी ।

उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ ३५ ॥

**उ०** उपावसृज । द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते सामर्थ्यात् । यजमान आह । वनस्पतिः यूपः शमिता देवः अग्निः शामित्रः स्वदन्तु मृष्टीकुर्वन्तु । हव्यं हविः मधुना मधुरसेन घृतेन । त्वमपि हे अध्वर्यो उपावसृज उत्पिष्टंपाशुकमवदानम् अवसृज निक्षिप । त्मन्या आत्मना । आदरार्थं वचनम् । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । समञ्जन् संम्रक्षयन् देवानां पाथः अन्नम् । ऋतुथा ऋतावृतौ च हवींषि अवसृज ॥ ३५ ॥

**म०** यजमानो वदति । हे होतः, त्मन्या आत्मना हवींषि ऋतुथा ऋतौ ऋतौ यज्ञकाले त्वमुपावसृज देहि । किं कुर्वन् । देवानां पाथः हविः मधुना मधुररसेन घृतेन समञ्जन् संम्रक्षयन् । देवानामित्युक्तं तानाह । वनस्पतिर्यूपः शमिता देवः अग्निः एते त्रयो हव्यं होत्रा संमृज्य दत्तं स्वदन्तु भक्षयन्तु । आत्मन्शब्दस्य विभक्तेर्यादेशे 'मन्त्रेष्वाङ्यादेरात्मनः' ( पा० ६ । ४ । १४१ ) इत्याकारलोपः ॥ ३५ ॥

## षट्त्रिंशी ।

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः । अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हविरदन्तु देवाः ॥ ३६ ॥

**उ०** सद्योजातः । योऽग्निः सद्योजातः जायमानः सन् व्यमिमीत निरमिमीत यज्ञम् । यश्च देवानाम् अभवत् पुरोगाः अग्रतोगामी । तस्यास्य होतुः प्रदिशि प्राच्यां दिशि ऋतुथा ऋतावृतौ आ च हवनीयात्मना व्यवस्थितस्य । वाचि आस्ये मुखे । वाग्ग्रहणेन लक्षणया मुखमभिधीयते । तदुक्तं वार्तिककारेण 'अभिधेयाविनाभावप्रतीतिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणतेति' । स्वाहाकृतम् स्वाहाकृत्युपलक्षितं हविः अदन्तु देवाः ॥ ३६ ॥

**म०** देवा हविरदन्तु भक्षयन्तु । कीदृशं हविः । अस्याग्नेः वाचि वागिन्द्रियोपलक्षिते मुखे स्वाहाकृतं स्वाहाकारेण हुतम् । कीदृशस्यास्य । होतुः देवानामाह्वातुः । प्रदिशि पूर्वदिशि ऋतस्य 'ऋ गतौ' आहवनीयात्मना स्थितस्य । अस्य कस्य । योऽग्निः सद्यो जातः उत्पन्नः सन् यज्ञं व्यमिमीत विशेषेण निरमात् । यश्च देवानां पुरोगाः अग्रगामी मुख्योऽभवत् । पुरो गच्छति पुरोगाः । विटि प्रत्यये 'विड्वनोरनुनासिकस्यात्' ( पा० ६ । ४ । ४१ ) इति मस्याकारः ॥ ३६ ॥

## सप्तत्रिंशी ।

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ३७ ॥

**उ०** इत उत्तरमश्वरक्षिणो योद्धारः युद्धोपकरणानि च स्तूयन्ते प्रागाग्नेय इति श्रुतेः । केतुं कृण्वन् । आग्नेयी गायत्री अनिरुक्ता । केतुं प्रज्ञानं कृण्वन्कुर्वन् । अकेतवे न विद्यते केतु प्रज्ञानं यस्य तस्मै अकेतवे । पेशः सुवर्णं रूप्यं वा । मर्याः मर्यायेति विभक्तिव्यत्ययः । मर्याय मनुष्याय अपेशसे न विद्यते पेशः यस्य तस्मै अविद्यमानसुवर्णाय अविद्यमानरूप्याय वा पेशः कुर्वन् । समुषद्भिरजायथाः हे अग्ने, उषद्भिः । 'उष दाहे' अग्निहोत्रादीनि कर्माणि कुर्वद्भिः । जायमानः सन् जन्मना जातेर्वा वसतेर्वा कृतसंप्रसारणस्यैतद्रूपम् । उषद्भिः अग्निं प्रति निवसद्भिः जायमानः सन् समजायथाः उत्पद्यसे ॥ ३७ ॥

**म०** अग्निदेवत्या गायत्री मधुच्छन्दोदृष्टानिरुक्ता । हे अग्ने, त्वमुषद्भिः कृत्वा अजायथाः उत्पन्नोऽसि । जनेर्लङि रूपम् । 'उष दाहे' उषन्ति हविर्दहन्ति ते उषन्तोऽग्निहोमकर्तारो यजमानाः । कीदृशस्त्वम् । अकेतवे अज्ञानाय मर्याः मर्याय मनुष्याय केतुं ज्ञानं कृण्वन्कुर्वन् । विभक्तिव्यत्ययः । नास्ति पेशः सुवर्णं यस्य स अपेशाः तस्मै अपेशसे मर्याय पेशः सुवर्णं कुर्वन् ॥ ३७ ॥

## अष्टत्रिंशी ।

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे । अनाविद्धया तन्वा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु ॥ ३८ ॥

**उ०** जीमूतस्येव । वर्म स्तूयते । जीमूतो मेघः तस्येव भवति प्रतीकम् अनीकम् मुखमिति पर्यायः । यथा मेघस्य मुखं विद्युत्स्फुरितस्तनयित्नुधारानिकरैरसह्यं भवत्यन्तःसरणैः एवं हस्त्यश्वपदातिमुखं निशिताम्रगम्भीरतूर्यनिनादशरधाराभिरसह्यं भवति । एवं कस्मिन्काले कस्यवेत्यत आह । यद्वर्मी यदा वर्मास्य विद्यते इति वर्मी । याति गच्छति समदाम् । संमाद्यन्ति सह वा माद्यन्ते आसु योद्धार इति समदः समदशब्दः संग्रामवचनः । समदां संग्रामाणाम् उपस्थे उपकण्ठे यत एवमतो ब्रवीमि । अनाविद्धया तन्वा जय त्वम् हे वर्मिन् , अनाविद्धया अक्षतया अरिष्टया तन्वा त्वं जयेम । किंच सत्त्वावर्मणो महिमा पिपर्तु पालयतु ॥ ३८ ॥

**म०** एवमग्निं स्तुत्वाश्वरक्षणे योधाः युद्धोपकरणानि च

स्तूयन्ते । भरद्वाजसुतपायुः संग्रामाङ्गानि प्रत्यृचं स्तौति । त्रिष्टुभिः वर्म स्तूयते । यत् यदा वर्मी कवचवान् समदां संग्रामाणामुपस्थे उत्सङ्गे याति तदा प्रतीकं सेनामुखं जीमूतस्य मेघस्येव भवति । सह माद्यन्ति योधा यासु ताः समदः संग्रामाः । मदेः क्विप् । मेघस्य मुखं विद्युत्स्तनयित्नुधाराभिर्यथासह्यम् एवं हस्त्यश्वरथपादात्यस्त्रजालतूर्यनादशरौघैः सेनामुखमसह्यं भवतीत्यर्थः । अतोऽहं ब्रवीमि । हे वर्मिन्, अनाविद्धया अक्षतया तन्वा शरीरेण त्वं शत्रून् हत्वा जयं प्राप्नुहि । किंच स वर्मणः महिमा त्वा त्वां पिपर्तु पालयतु ॥३८॥

## एकोनचत्वारिंशी ।

धन्व॑ना॒ गा धन्व॑ना॒जिं ज॑येम॒ धन्व॑ना ती॒व्राः स॒मदो॑ जयेम । ध॒नुः शत्रो॑रपका॒मं कृ॑णोति॒ धन्व॑ना॒ सर्वाः॑ प्र॒दिशो॑ जयेम ॥ ३९ ॥

**उ०** धन्वना गाः । धनुः स्तूयते त्रिष्टुभा । धन्वना धनुषा गाः जयेम । धनुषा च आजिं मार्गं जयेम । धनुषा च तीव्राः पटवः उद्गूर्णायुधाः समदः संग्रामाञ्जयेम । धनुश्च शत्रोः अपकामं कृणोति अपनयति कामम् । कर्तृत्वविवक्षात्र धनुषः । धनुषा च सर्वाः प्रदिशः जयेम ॥ ३९ ॥

**म०** धनुः स्तूयते । धन्वना धनुषा कृत्वा वयं गाः धेनूः जयेम । धन्वना आजिं मार्गं जयेम अजन्ति गच्छन्ति यस्मिन्नसावाजिर्मार्गः । तीव्राः उग्राः समदः संग्रामान् धन्वना जयेम । धनुः शत्रोरपकामं मनोरथाभावं कृणोति करोति । कामस्याभावोऽपकामम् 'अव्ययं विभक्ति–' ( पा० २ । १ । ६ ) इत्यादिना अर्थाभावेऽव्ययीभावः । किंच धन्वना सर्वाः प्रदिशो जयेम । ईदृशो धनुःप्रभावः ॥ ३९ ॥

## चत्वारिंशी ।

व॒क्ष्यन्ती॒वेदा ग॑नीगन्ति॒ कर्णं॑ प्रि॒यꣳ सखा॑यं परिषस्वजा॒ना । योषे॑व शिङ्क्ते॒ वित॒ताऽधि॒ धन्व॒न्ज्या इ॒यꣳ सम॑ने पा॒रय॑न्ती ॥ ४० ॥

**उ०** वक्ष्यन्तीवेत् । ज्या अभिधेया त्रिष्टुप् । या ज्या वक्ष्यन्ती इव वचनोत्सुकेव योषित् । इच्छब्दः पादपूरणार्थः । आगनीगन्ति आगच्छन्ति अत्यर्थमागच्छति वा कर्णं धानुष्ककर्णमूलम् । या च प्रियमिव सखायमिषुम् परिषस्वजाना आलिङ्गयन्ती । योषेव शिङ्क्ते । 'शिजि अव्यक्ते शब्दे' । यथा मुग्धा योषित्कामुकरञ्जनार्थमव्यक्तं कूजितं करोति एवमियमव्यक्तं शब्दं करोति । प्रसारिता च अधि उपरि धनुषि निबद्धा । सेयं ज्या समने संग्रामे पारयन्ती विजयं कुर्वन्ती संग्रामात् तारयन्ती स्तूयतेऽस्माभिरिति शेषः ॥ ४० ॥

**म०** ज्या स्तूयते । इयं ज्या धन्वन् धन्वनि धनुषि अधिवितता उपरि विस्तारिता सती शिङ्क्ते अव्यक्तशब्दं कुरुते । 'शिजि अव्यक्ते शब्दे' अदादिः 'इदितो नुम् धातोः' ( पा० ७ । १ । ५८ ) इति नुम् । का इव । योषेव यथा योषा कामिनी कामुकरञ्जनायाव्यक्तं वदति एवमियमपि । कीदृशी ज्या । समने संग्रामे पारयन्ती । 'पार तीर कर्मसमाप्तौ' अदन्तः । संग्रामादुत्तारयन्ती विजयं कुर्वन्तीत्यर्थः । इयं का । या ज्या कर्णमागनीगन्ति आकृष्टा सती योद्धुः कर्णं प्रत्यत्यर्थमागच्छति । यङ्लुकि गमेः रूपम् । कीदृशी उत्प्रेक्ष्यते । वक्ष्यन्तीव वक्तुमिच्छन्तीव । अन्योऽपि वक्तुमिच्छन्कर्णं प्रत्यागच्छति । प्रियं सखायमिष्टं मित्रं बाणरूपं परिषस्वजाना आलिङ्गन्ती । स्वजेः शानचि शपः श्लौ सति द्विलम् । इत् पादपूरणार्थः ॥ ४० ॥

## एकचत्वारिंशी ।

ते आ॒चर॑न्ती॒ सम॑नेव॒ योषा॑ मा॒तेव॑ पु॒त्रं बि॑भृ॒ताम॒ुपस्थे॑ । अप॒ शत्रू॑न्विध्यताꣳ संविदा॒ने आर्त्नी॑ इ॒मे वि॑ष्फु॒रन्ती॑ अ॒मित्रा॑न् ॥ ४१ ॥

**उ०** ते आचरन्ती । धनुषः कोटी स्तूयेते । त्रिष्टुप् । ये इमे आर्त्नी आर्त्न्यौ धनुषः कोटी । समना इव समने इति वचनव्यत्ययः । समानभर्तृगतमनस्के योषे इव । यथा समानभर्तृगतमनस्के योषे पतिमागच्छन्त्यौ तथा ते आचरन्ती आगच्छन्त्यौ धानुष्कम् । मातेव पुत्रं बिभृतामुपस्थे । यथा माता उपस्थे उत्सङ्गे पुत्रं धारयति एवं बिभृतां धारयतां शरम् । अपशत्रून् विध्यताम् 'व्यध ताडने' । अपविध्यतां च शत्रून् संविदाने सुखमनुभवन्त्यौ । विष्फुरन्ती अमित्रान् । अमित्रान् शत्रून् विष्फुरन्त्यौ ॥ ४१ ॥

**म०** धनुःकोटी स्तूयेते । ते प्रसिद्धे इमे आर्त्नी आर्त्न्यौ धनुःकोटी उपस्थे उत्सङ्गे मध्यभागे बिभृतां धारयतां शरमिति शेषः । तत्र दृष्टान्तः । माता पुत्रमिव यथा जननी पुत्रमुत्सङ्गे बिभर्ति तथा शत्रून् अपविध्यतां ताडयतां च । कीदृश्यौ आर्त्न्यौ । आचरन्ती आचरन्त्यौ आगच्छन्त्यौ धानुष्कं प्रति । तत्र दृष्टान्तः । समना योषा इव वचनव्यत्ययः । समना समानमेकपतिगतं मनो ययोस्ते समनसौ । विभक्तेर्डादेशः । समचित्ते योषा योषे स्त्रियौ यथा कान्तमागच्छतः । संविदाने संविदाते ते संविदाने 'समो गमि–' ( पा० १ । ३ । २९ ) इत्यादिना शानच् । परस्परं संकेतं कुर्वाणे । अमित्रान् शत्रून् प्रति विष्फुरन्ती टङ्कारं कुर्वाणे ॥ ४१ ॥

## द्विचत्वारिंशी ।

ब॒ह्वी॒नां पि॒ता ब॒हुर॑स्य पु॒त्रश्चि॒श्चा कृ॑णोति॒ सम॑नावग॒त्य॑ । इ॒षु॒धिः सङ्काः॒ पृत॑नाश्च॒ सर्वाः॑ पृ॒ष्ठे निन॑द्धो जयति॒ प्रसू॑तः ॥ ४२ ॥

**उ०** बह्वीनां पिता । इषुधिरभिधेयः त्रिष्टुप् । यः बह्वीनामिषूणां पिता पालयिता । तेन सहिताः पाल्यन्ते सहिताः

संनिदधाति। यस्य चास्य बहुः इषुकलापः पुत्रः पुत्रस्थानीयः। स हि तेन इषुकलापेन त्रायते बहु वा तदर्थं हितं करोति। चिश्चाकृणोति। शब्दानुकरणमेतत्। इषोर्निष्क्रम्यमाणः चिश्चेत्येवं शब्दं करोति। समनावगत्य समना संग्रामान् अवगत्य ज्ञात्वा। स इषुधिः संकाः संधत्ते अस्मिन् योधा इति संकाः संकीर्यन्ते अस्मिन्नरय इति संकाः शत्रुसंकटं। पृतनाश्च सर्वाः पृतनाः स्पर्धनीयतमाः। संग्रामभक्तीः सर्वाः पृष्ठे निनद्धः धानुष्कस्य पृष्ठे बद्धः प्रसूतः धानुष्केणाभ्यनुज्ञातः सन् जयति। अत्र इषुधेः कर्तृत्वम्। विवक्षातः कारकाणि भवन्तीति वैयाकरणाः॥ ४२॥

म० इषुधिः स्तूयते। य इषुधिः तूणो बह्वीनामिषूणां पिता पालकः। यतो बाणान्धरति। अस्येषुधेर्बहुः पुत्रः। बाणसमूहः पुत्रस्थानीयः पाल्यमानत्वात्। पुरून्बहून् त्रायत इति पुत्रः। स इषुधिः समना संग्रामान् अवगत्य ज्ञात्वा। चिश्चाकृणोति चिश्चेति शब्दं करोति। शब्दानुकरणमेतत्। बाणे तूणान्निष्काम्यमाणे चिश्चेति शब्दो भवति। च पुनः स इषुधिर्धानुष्केण पृष्ठे निनद्धः बद्धोऽपि प्रसूतः अनुज्ञातः सन् सर्वाः पृतनाः जयति शत्रुसेनाः पराभवति। कीदृश्यः पृतनाः। संकाः 'संकाः सचतेः संपूर्वाद्वा किरतेः' (निरु० ९। १४) इति यास्कोक्तेः सचतेः किरतेर्वा रूपम्। सचन्ते संबध्यन्ते संकीर्यन्ते वा योधा यासु ताः संकाः। विवक्षातः कारकाणि भवन्तीति वचनादिषुधेः कर्तृत्वम्॥ ४२॥

## त्रिचत्वारिंशी।

✓रथे॒ तिष्ठ॑न्नयति वा॒जिनः॑ पु॒रो यत्र॑ यत्र का॒मय॑ते सुषार॒थिः। अ॒भीशू॑नां महि॒मानं॑ पनायत मनः॑ प॒श्चाद॑नु॒यच्छन्ति र॒श्मयः॑॥ ४३॥

उ० रथे तिष्ठन्। जगत्या अर्धेन सारथिः स्तूयतेऽर्धेन रश्मयः। सुसारथिः रथे तिष्ठन् नयति वाजिनः प्रापयत्यश्वान् पुरः पुरतोऽवस्थितान्। यत्र यत्र कामयते तं वयं स्तुम इति शेषः। अभिशूनां प्रग्रहाणां महिमानं महाभाग्यं पनायत पूजयत हे जनाः। ये मनः अश्वसंबन्धि चित्तम् पश्चात्सन्तः अनुयच्छन्ति अनुगम्य गृह्णन्ति रश्मयः यन्तारः॥४३॥

म० अर्धेन सारथिरर्धेन रश्मयः स्तूयन्ते। जगती इयम्। सुषारथिः सुसारथिः शोभनः सारथिः यत्र यत्र प्रदेशे कामयते इच्छति मयात्र गन्तव्यमिति तत्र तत्र पुरो वर्तमानान् वाजिनः नयति प्रापयति। कीदृशः रथे तिष्ठन्। तं स्तुम इति शेषः। इदानीं रश्मयः स्तूयन्ते। हे जनाः, अभीशूनां रश्मीनां महिमानं महाभाग्यं यूयं पनायत स्तुत। ये रश्मयः पश्चाद्वर्तमानाः सन्तः मनोऽश्वचित्तमनुयच्छन्ति अनुगम्य गृह्णन्ति वशवर्तिनं कुर्वन्तीत्यर्थः। 'पन स्तुतौ' 'गुपूधूपेत्यादिना' (पा० ३।१।२८) आयप्रत्ययान्तात्पनेर्लोट्॥ ४३॥

## चतुश्चत्वारिंशी।

✓ती॒व्रान्घोषा॑न्कृण्वते॒ वृष॑पाणयोऽश्वा॒ रथे॑भिः स॒ह वा॒जय॑न्तः। अ॒व॒क्राम॑न्तः॒ प्रप॑दैर॒मित्रा॑न्क्षि॒णन्ति॒ शत्रूँ॑१॥ रन॑पव्ययन्तः॥ ४४॥

उ० तीव्रान्घोषान्। अश्वाः स्तूयन्ते त्रिष्टुभा। तीव्रान् जयजयेत्युग्रान् घोषान् शब्दान् कृण्वते कुर्वन्ति। वृषपाणयः वृषा अश्वाः पाणौ येषां संग्रहीतृप्रभृतीनां योक्तॄणां ते तथोक्ताः। युक्ताः श्वसन्तः अश्वाः रथेभिः रथैः। सह वाजयन्तः पूजयन्तः रथिनः। तीव्रानेव घोषान् हेषितादीन्कृण्वते। अवक्रामन्तः प्रपदैः खुरैः अमित्रान् शत्रून् क्षिणन्ति क्षिण्वन्ति हिंसन्ति। अनपव्ययन्तः। 'व्यय क्षये'। अपपूर्वादस्माच्छतृप्रत्ययः। अपव्ययन्तः नश्यन्तः न अपव्ययन्तोऽनपव्ययन्तः न नश्यन्तः। अपरित्यजन्तो वा स्वामिनम्॥ ४४॥

म० अश्वाः स्तूयन्ते। वृषाः अश्वाः पाणौ हस्ते येषां ते वृषपाणयोऽश्ववाराः तीव्रान्घोषान् जयजयेति शब्दान् कृण्वते कुर्वन्ति। अश्वा अपि रथेभिः रथैः सह वाजयन्तः गच्छन्तः सन्तस्तीव्रान्घोषाञ्शब्दान्कुर्वन्ति शत्रून् क्षिणन्ति नाशयन्ति च। कीदृशाः अश्वाः। प्रपदैः पादाग्रैः खुरैः अमित्रान् रिपून् अवक्रामन्तः आक्रामन्तः। अनपव्ययन्तः 'व्यय क्षये' अदन्तश्चुरादिः अपव्ययन्ति ते अपव्ययन्तः न अपव्ययन्तोऽनपव्ययन्तः अनश्यन्तः समर्थाः। वाजिनः 'वज गतौ' स्वार्थे णिच्॥४४॥

## पञ्चचत्वारिंशी।

✓र॒थ॒वाह॑णꣳ ह॒विर॑स्य॒ नाम॒ यत्रायु॑धं॒ निहि॑तमस्य॒ वर्म॑। तत्रा॒ रथ॒मुप॑ श॒ग्मꣳ स॑देम वि॒श्वाहा॑ व॒यꣳ सु॑मन॒स्यमा॑नाः॥ ४५॥

उ० रथवाहणम्। रथस्तुतिः त्रिष्टुप्। यस्य स्वनसः रथवाहणं रथवोढ इति नाम। हविरिति नाम्नोर्धलोपः। हविर्धानमिति च द्वितीयं नाम। विमुच्य सयन्तृकं रथवाहणं करोति अनस्तत्कर्मेति कात्यायनः। 'तस्मादनस एव पौरोडाशेषु यजूꣳषि' इति श्रुतिः। यत्र यस्मिन् आयुधं निहितं स्थापितम्। अस्य योद्धुः वर्म च संनहनम्। तथाऽनसि रथम् शग्मं सुखम् उपसदेम उपसादयाम। विश्वाहा सर्वदा वयम्। सुमनस्यमानाः अनुकूलचित्ताः॥ ४५॥

म० शकटद्वारा रथः स्तूयते। अस्यानसो रथवाहणं नाम रथं वहतीति रथवाहनम्। वाजपेयेऽनसि रथस्यारोप्यमाणत्वात्। तथास्य हविः हविर्धानं नाम। पृषोदरादित्वादुत्तरार्धलोपः। यत्रानसि अस्य योद्धुर्वर्म आयुधं च निहितं स्थापितम्। तत्रानसि वयं रथमुपसदेम उपसादयामः। कीदृशं रथं। शग्मं सुखकरम्। कीदृशा वयम्। विश्वाहा सर्वदा सुमनस्यमानाः शोभनं मनो येषां ते सुमनसः असुमनसः सुमनसो भवन्ति सुमनस्यन्ते

'भृशादिभ्यो भुव्यच्वेः–' (पा० ३।१।१२) इति क्यङ् ततः शानच्। अनुकूलचित्ता इत्यर्थः। तत्रेत्यस्य संहितायां 'निपातस्य च' (पा० ६।३।१३६) इति दीर्घः॥ ४५॥

## षट्चत्वारिंशी।

स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः। चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः॥ ४६॥

उ० स्वादुषंसदः। रथगोपान् स्तौति त्रिष्टुप्। स्वादु सुखकरं संसदः संसदनं येषां ते स्वादुसंसदः रथगोप्तारः पितरः पातारः। वयोधाः अन्नस्यायुषो वा धारयितारः। कृच्छ्रेश्रितः क्लेशाश्रयिणः। शक्तीवन्तः बलवन्त आयुधवन्तो वा। गभीराः गम्भीरप्रज्ञाना वा गम्भीरबला वा। चित्रसेनाः विचित्रसेनाः। इषुबलाः इषुषु विशेषतो बलं येषां ते तथोक्ताः। अमृध्राः अमृदवः उग्रशासनाः। सतोवीराः सतः विद्यमानस्य बलस्य दिविधमीरयितारो वा पृथुजवनोरस्का वा उरुमनसो वा। व्रातसाहाः व्राताः गणास्तेषामभिभवितारः। य इत्थंभूताः पुरुषास्तेऽस्माकं रथगोप्तारो भवन्त्विति शेषः॥ ४६॥

म० रथगोपान् स्तौति। ईदृशा नरा अस्माकं रथगोप्तारो भवन्त्विति शेषः। कीदृशाः। स्वादुसंसदः स्वादु सुखं यथा तथा संसीदन्ति ते स्वादुसंसदः। पितरः पान्ति ते पितरः रक्षितारः। वयोधाः वयोऽन्नमायुर्वा दधति धारयन्ति वयोधाः। कृच्छ्रेश्रितः इत्येकं पदम्। कृच्छ्रे कष्टे श्रीयन्ते सेव्यन्ते कृच्छ्रेश्रितः। कर्मणि क्विप् अलुक् सप्तम्याः। दुःखे सति आश्रणयोग्याः दुःखनाशकत्वात्। यद्वा सप्तमी द्वितीयार्थे। कृच्छ्रं श्रयन्ति कृच्छ्रेश्रिताः दुःखं प्राप्यापि स्वामिसेवनपराः। शक्तीवन्तः शक्तिः सामर्थ्यमायुधं वा अस्ति येषां ते। अश्वरश्मिमतीत्यादिप्रातिशाख्यसूत्रेण शक्तिशब्दस्य दीर्घः। गभीराः गम्भीरबला गम्भीरप्रज्ञाश्च। चित्रसेनाः चित्रा नानाविधा सेना येषां ते। इषुबलाः इषुभिर्बाणैर्बलं येषां ते। अमृध्राः मृध्रा मृदवो न भवन्त्यमृध्राः कठिनाङ्गा उग्रशासना वा। सतोवीराः इत्येकं पदम्। सतोऽश्वमेधयाजिनो वीराः शूराः यद्वा सतो विद्यमानस्य बलस्य वीराः प्रेरकाः विविधमीरयन्तीति वीराः षष्ठ्या अलुक्। उरवः विशालाः। पृथुजघनोरस्का इत्यर्थः। व्रातसाहाः व्रातान् शूरसमूहान् सहन्तेऽभिभवन्ति ते व्रातसहाः पचाद्यच् 'अभिमातिपृतना' (प्राति० ३।६।२७) इत्यादिना सूत्रेण सहतेरुपधादीर्घः॥ ४६॥

## सप्तचत्वारिंशी।

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा। पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशꣳस ईशत॥ ४७॥

उ० ब्राह्मणासः। जगती लिङ्गोक्तदेवता। ऋतावृध इत्यादिः प्रत्यक्षभूतो मन्त्रः। ब्राह्मणास इत्यादिः परोक्षकृतः अतएवं व्याख्यायते। हे ऋतावृधः सत्यवृधो वा यज्ञवृधो वा। देवा इत्यध्याहारः सामर्थ्यात्। रक्ष रक्षत इति वचनव्यत्ययः। माकिः मा च कश्चन नः अस्माकम्। अघशंसः अघानि पापानि यः शंसति प्रकाशयति सोऽघशंसः। ईशत ईष्टे इति वचनव्यत्ययः। भवत्प्रसादाच्च। ब्राह्मणासः ब्राह्मणाः पितरः सोम्यासः सोमसंपादिनः। पान्त्वित्यत्रान्वयः। शिवे कल्याणकारिण्यौ द्यावापृथिवी च अनेहसा अनुपहिंसिन्यौ अनपराधिन्यौ वा पाताम्। पूषा च नः अस्मान् पातु दुरितात् अशुभात्॥ ४७॥

म० जगती लिङ्गोक्तदेवता। ब्राह्मणासः ब्राह्मणाः नोऽस्मान् पान्तु रक्षन्तु। पालित्यस्यार्थवशाद्वचनव्यत्ययः कार्यः। पितरः च पान्तु। कीदृशाः। सोम्यासः सोम्याः सोमसंपादिनः सोमपानयोग्या वेत्युभयोर्विशेषणम्। द्यावापृथिवी द्यावाभूमी नः पाताम्। कीदृश्यौ। शिवे कल्याणकारिण्यौ। अनेहसा अनेहसौ नास्ति एहोऽपराधो ययोस्ते अपराधनिवर्तिके। किंच पूषा सूर्यो नोऽस्मान्दुरितात्पातु। एवं परोक्षेणोक्त्वा प्रत्यक्षमाह। हे ऋतावृधः, ऋतं सत्यं यज्ञं वा वर्धयन्ति ऋतवृधः देवाः। संहितायामृतस्य दीर्घः। रक्ष रक्षतास्मान् वचनव्यत्ययः। माकिः मा कश्चन अघशंसः पापी नोऽस्माकमीशत ऐश्वर्यं मा करोतु। वयं दुष्टवशा मा भूमेत्यर्थः। अघं पापं शंसति वक्ति प्रकाशयति वाघशंसः दुष्टः। ईशतेति वचनव्यत्ययः॥ ४७॥

## अष्टचत्वारिंशी।

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यꣳसन्॥ ४८॥

उ० सुपर्णं वस्ते। द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यामिषुं स्तौति। या सुपर्णं वस्ते सुपर्णः पक्षी तद्विकारः सौपर्णमिति भवति। तत्र कृत्स्नवन्निगमः। राजानमभिप्रेत्य। मृगो अस्या दन्तः यस्याश्चास्या इषोः मृगोदन्तः फलं मृगयतेर्मृगः। स हि वेध्यं मृगयते। या च गोभिः संनद्धा गोविकारैः श्लेष्मस्नायुभिः संनद्धा। पतति शत्रुबलंप्रति। प्रसूता प्रेरिता धनुष्मता सा इषुः। यत्र नरः संच विच द्रवन्ति संगच्छन्ति विगच्छन्ति च तत्र अस्मभ्यम् इषवः इषुरिति सन्नतिः। शर्म शरणम् यंसत् यच्छत्विति सन्नतिः॥ ४८॥

म० द्वाभ्यामिषुं स्तौति। आद्या त्रिष्टुप् अन्यानुष्टुप्। या इषुः सुपर्णं पक्षिपिच्छं वस्ते परिधत्ते। 'वस परिधाने' शोभनं पर्णं पिच्छं यस्य स सुपर्णः पक्षी तस्य विकारः सौपर्णम् तत्र 'कृत्स्नवन्निगमा भवन्ति' (निरु० २।५) इति यास्कोक्तेः सुपर्णशब्देन तत्पिच्छं गृह्यते। बाणपुच्छे पिच्छस्यारोप्यमाण-

त्वात्। किंच अस्या इषोः दन्तः फलं। मृगः मृगयतेऽन्विष्यति रिपून् हन्तुमिति मृगः 'मृग मार्गणे' चुरादिरदन्तः पचाद्यच् 'मृगो मृगयतेः' (निरु० ९।१९) इति यास्कः। शल्यं हि वेध्यं मृगयते। किंच या इषुः गोभिः गोविकारैः स्नायुभिः संनद्धा बद्धा प्रसूता धनुष्मता प्रेरिता सती पतति शत्रुबलं प्रति गच्छति। किंच यत्र नरो योद्धारः संद्रवन्ति च सम्यक् गच्छन्ति विद्रवन्ति च विविधं प्रसरन्ति। चौ समुच्चये। तत्र रणे इषवः बाणाः अस्मभ्यं शर्म सुखं यंसन् यच्छन्तु। 'यमु उपरमे' लेटि तिप इलोपेऽडागमे 'सिब्बहुलं लेटि' (पा० ३।१।३४) इति सिबागमे यंसन्निति रूपम्। सुखं ददतु ॥ ४८ ॥

## एकोनपञ्चाशी।

ऋजी॑ते॒ परि॑वृङ्ग्धि॒ नोऽश्मा॑ भवतु न॒स्तनूः॑। सोमो॒ अधि॑ब्रवीतु॒ नोऽदि॑तिः॒ शर्म॑ यच्छतु॒ ॥ ४९ ॥

**उ०** ऋजीते परि। हे ऋजीते ऋजुगामिनि, परिवृङ्ग्धि नः परिवर्जयास्मान्। अश्मा भवतु नस्तनूः अश्ममयी च भवतु नः अस्माकं तनूः शरीरम्। सोमश्च अधिब्रवीतु आधिक्येन वदतु नोऽस्माञ्जीवनाय। अदितिश्च शर्म शरणम् यच्छतु ददातु ॥ ४९ ॥

**म०** ऋजुः सरला ईतिर्यस्याः सा ऋजीतिः टिलोप आर्षः। हे ऋजीते ऋजुगामिनि। हे इषो, नोऽस्मान् परिवृङ्धि परिवर्जय। अस्मासु मा पतेत्यर्थः। किंच नोऽस्माकं तनूः शरीरम् अश्मा पाषाणतुल्यदृढा भवतु। सोमः नोऽस्मानधिब्रवीतु अधिकान् वदतु। अदितिः देवमाता शर्म सुखं यच्छतु ददातु ॥ ४९ ॥

## पञ्चाशी।

आज॑ङ्घन्ति॒ सान्वे॑षां ज॒घनाँ॒२॥ उप॑जिघ्नते। अश्वा॑जनि॒ प्रचे॑त॒सोऽश्वा॑न्त्स॒मत्सु॑ चोदय ॥ ५० ॥

**उ०** आजङ्घन्ति। कशास्तुतिः अनुष्टुप्। येषामश्वानाम् आजङ्घन्ति अश्वारोहाः सानु सानूनि मांसोपचितान्यङ्गानि। येषामेषां च जघनान् जघनानि। उपजिघ्नते उपनिघ्नन्ति। अश्वाजनि अश्वाञ्जनयतीत्यश्वाजनी तस्याः संबोधनं हे अश्वाजनि। प्रचेतसः परिदृष्टकारिणः प्रकृष्टज्ञानान्वा अश्वान्। समत्सु संग्रामेषु। चोदय प्रेरय ॥ ५० ॥

**म०** अनुष्टुप्। कशा स्तूयते। 'अज गतौ क्षेपणे च'। अश्वाः अज्यन्ते क्षिप्यन्ते यया सा अश्वाजनी। हे अश्वाजनि कशे, समत्सु संग्रामेषु त्वमश्वान् चोदय प्रेरय जयाय। कीदृशानश्वान्। प्रचेतसः प्रकृष्टं शूरं चेतो मनो येषां ते। हे कशे, यया त्वयाश्ववारा एषामश्वानां सानु सानूनि सानुतुल्यानि मांसोपचिताङ्गानि आजङ्घन्ति वचनव्यत्ययः आघ्नन्ति ताडयन्ति। जघनान् कटिभागान् उपजिघ्नते निघ्नन्ति। तुरङ्गारोहा ययाश्वान् वशयन्ति सा त्वमश्वान्प्रेरयेत्यर्थः ॥ ५० ॥

## एकपञ्चाशी।

अहि॑रिव भो॒गैः पर्ये॑ति बा॒हुं ज्याया॑ हे॒तिं परि॒बाध॑मानः। ह॒स्त॒घ्नो विश्वा॑ व॒युना॑नि वि॒द्वान्पुमा॒न्पुमा॑ꣳसं॒ परि॑पातु वि॒श्वतः॑ ॥ ५१ ॥

**उ०** अहिरिव। हस्तघ्नः स्तूयते त्रिष्टुप्। हस्ते एव स्थितो हन्ति यः स हस्तघ्नः खेटकः प्रकोष्ठादित्राणं वा। यः हस्तघ्नः अहिरिव सर्प इव भोगैः शरीरावयवैः। पर्येति परिवेष्टयति बाहुम्। ज्याया हेतिं परिबाधमानः ज्याया आयुधात्परित्रायमाणः। स हस्तघ्नः विश्वा विश्वानि सर्वाणि वयुनानि विद्वान् प्रजानन् परिदृष्टकारी वा। पुमान् शूरो क्लीबो वा। पुमांसमक्लीवं परिपातु विश्वतः सर्वतः ॥ ५१ ॥

**म०** हस्तघ्नः स्तूयते। सप्त त्रिष्टुभः। हस्ते स्थितो हन्ति हस्तघ्नः खेटकः। यद्वा हस्तं हन्ति प्राप्नोति हस्तघ्नः प्रकोष्ठत्राणम्। पुमांसं मां विश्वतः सर्वतः परिपातु रक्षतु। किंभूतो हस्तघ्नः। विश्वा विश्वानि सर्वाणि वयुनानि ज्ञानानि विद्वान् जानन्। तथा पुमान् पुंस्त्वयुक्तः। शूर इत्यर्थः। यो हस्तघ्नः भोगैः स्वशरीरावयवैः कृत्वा बाहुं पर्येति हस्तं वेष्टयति। क इव अहिरिव। यथाहिः सर्पो भोगैः स्वदेहैः हस्तादिकं वेष्टयति। कीदृशः। ज्यायाः हेतिं बाणं शत्रुप्रेरितं परिबाधमानः निवर्तयन् खेटकपक्षे, प्रकोष्ठत्राणपक्षे तु ज्याया हेतिं प्रहारं निवारयन् ज्याघातस्य निवारकत्वात् ॥ ५१ ॥

## द्विपञ्चाशी।

वन॑स्पते वी॒ड्व॑ङ्गो हि भू॒या अ॒स्मत्स॑खा प्र॒तर॑णः सु॒वीरः॑। गोभिः॒ संन॑द्धो असि वी॒डय॑स्वास्था॒ता ते॑ जयतु॒ जेत्वा॑नि ॥ ५२ ॥

**उ०** वनस्पते वीड्वङ्गः। रथदुन्दुभिदेवत्यावृचौ त्रिष्टुभौ। ऐन्द्रो वान्त्योऽर्धर्चः। हे वनस्पते वानस्पत्य रथ। कृत्स्नवन्निगमः। वीड्वङ्गो हि भूयाः वीडुशब्दो दृढवचनः। दृढाङ्गो भव। अस्मत्सखा सन्। प्रतरणः प्रतरन्त्यनेन संग्रामानिति प्रतरणः। सुवीरः साधुवीरः। यतश्च त्वम् गोभिः श्लेष्मचर्मभिः संनद्धोसि अतस्त्वां ब्रवीमि। वीडयस्व संस्तम्भय स्वात्मानम् आस्थाता ते संस्थाता च ते तव जयतु जेत्वानि जेतव्यानि ॥ ५२ ॥

**म०** तिस्र ऋचो रथदेवताः। हे वनस्पते वनस्पतिविकार काष्ठमय रथ, 'कृत्स्नवन्निगमः' (निरु० २।५१)। त्वं वीड्वङ्गः दृढाङ्गो भूयाः भव। वीडूनि अङ्गानि यस्य। कीदृशः। अस्मत्सखा अस्माकं मित्रभूतः। प्रतरणः प्रतरति संग्राममपारं गच्छति प्रतरणः। सुवीरः शोभनो वीरो रथी यत्र। किंच हे रथ, यतः त्वं गोभिः गोविकारैश्चर्मभिः सन्नद्धः बद्धोऽसि अतो वीडयस्व आत्मानं स्तम्भय। किंच ते तवास्थाता आरोढा रथी जेत्वानि जेतव्यानि रिपुधनानि जयतु। हि पादपूरणः ॥ ५२ ॥

## त्रिपञ्चाशी ।

दि॒वः पृ॑थि॒व्याः पर्योज॒ उद्भृ॑तं॒ वन॒स्पति॑भ्यः॒ पर्याभृ॑त॒ꣳ सहः॑ । अ॒पामो॒ज्मानं॒ परि॒ गोभि॒रावृ॑त॒मिन्द्र॑स्य॒ वज्र॑ꣳ ह॒विषा॒ रथं॑ यज ॥ ५३ ॥

**उ०** दिवः पृथिव्याः दिवः द्युलोकात् यत् ओजः परि सर्वतः उद्भृतं उद्धृतम् । यच्च पृथिव्याः पृथिवीलोकात् परि उद्भृतम् । यच्च वनस्पतिभ्यः वनस्पतिसकाशात् परि सर्वतः आभृतम् आहृतम् सहः बलम् । यच्च अपां संबन्धि ओज्मानम् ओजःपरिमाणम् । तदेतच्चतुष्टयं रथभावमुपनीतम् । परिगोभिरावृतम् परि समन्तात् गोभिः गोविकारैः स्नायुश्लेष्मचर्मभिः आवृतमुपनिबद्धम् इन्द्रस्य वज्रम् । 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार' इत्युपक्रम्य रथस्तृतीयं चेत्यभिधाय 'रथेन च शरेण च राजन्यबन्धव' इति श्रुतिः । तदभिप्रायमेतत् । हविषा तमीदृशं रथं यज हे अध्वर्यो ५३

**म०** हे अध्वर्यो, त्वं हविषा कृत्वा रथं यज । कीदृशं रथम् । दिवः द्युलोकात् पृथिव्याः भूमेः सकाशात् पर्युद्भृतं समन्तादुद्धृतम् ओजः तेजः । तथा वनस्पतिभ्यो वृक्षेभ्यः पर्याभृतं समन्तादाहृतमानीतं सहः बलम् । तथा अपां जलानामोज्मानं तेजःसारभूतम् । 'ओज बलतेजसोः' इति धातोः 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २।७५ ) इति मनिन् । ओजयति बलिनं करोतीति ओज्मा तम् । द्यावाभूमीवृक्षजलानां तेजश्चतुष्टयेन निर्मितमित्यर्थः । तथा गोभिः किरणैः पर्यावृतं वेष्टितम् तेजोनिर्मितत्वात् । यद्वा गोभिः चर्मभिर्वेष्टितम् । तथा इन्द्रस्य वज्रमिन्द्रवज्राज्जातमित्यर्थः । इन्द्रो यदा वृत्राय वज्रं प्रजहार तदा वृत्रशरीरकाठिन्येन प्रतिहतं चतुर्धा जातम् । यूपः स्फ्यः रथः शरश्चेति चतुःखण्डाः तत्र यूपस्फ्यौ विप्रैर्गृहीतौ रथशरौ नृपैरिति श्रुतिकथानुसंधेया । 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारे'त्युपक्रम्य रथस्तृतीयमित्यभिधाय 'रथेन च शरेण चेति राजन्यबन्धवः' ( १ । २ । ४ । १—२ ) इति श्रुतेः । ईदृशं यजेत्यर्थः ॥ ५३ ॥

## चतुःपञ्चाशी ।

इन्द्र॑स्य॒ वज्रो॑ म॒रुता॒मनी॑कं मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ । सेमां नो॑ ह॒व्यदा॑तिं जुषा॒णो देव॑ रथ॒ प्रति॑ह॒व्या गृ॑भाय ॥ ५४ ॥

**उ०** इन्द्रस्य वज्रः । यस्त्वम् इन्द्रस्य वज्रः असि मरुतां च अनीकं मुखमसि मित्रस्य च गर्भोसि वरुणस्य च नाभिरसि । सः त्वम् इमाम् नः अस्माकम् । हव्यदातिं हविषो दानम् । जुषाणः सेवमानः । हे देवरथ, प्रतिहव्या गृभाय प्रतिगृभाय प्रतिगृहाण हव्या हवींषि ॥ ५४ ॥

**म०** हे रथ हे देव, स त्वं हव्या हवींषि प्रतिगृभाय प्रतिगृहाण । कीदृशः त्वम् । इन्द्रस्य वज्रः वज्रोत्पन्नत्वात् । मरुतामनीकं मुखं मुख्यः देवानां जयप्रापकत्वात् । मित्रस्य देवस्य गर्भः गीर्यते स्तूयते गर्भः । गृणातेर्भप्रत्ययः । सूर्येण स्तूयमानः । वरुणस्य नाभिः नभ्यतेऽरिर्हन्यतेऽनेनेति नाभिः 'नभ हिंसायाम्' इण्प्रत्ययः । वरुणस्य हननसाधनम् । नोऽस्माकमिमां हव्यदातिं हविषो दानं जुषाणः सेवमानः । सेमामित्यत्र 'सोऽचि लोपे चेत्पादपूरणम्' ( पा० ६ । १ । १३४ ) इति सन्धिः । गृभाय गृह्णातेः 'हलः श्नः शानज्झौ' ( पा० ३ । १ । ८३ ) इत्यनुवृत्तौ 'छन्दसि शायजपि' ( पा० ३ । १ । ८४ ) इति हौ परे श्नाप्रत्ययस्य शायजादेशः हस्य भश्च ॥ ५४ ॥

## पञ्चपञ्चाशी ।

उप॑श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ मनुतां॒ विष्ठि॑तं॒ जग॑त् । स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्दवी॑यो॒ अप॑सेध॒ शत्रू॑न् ॥ ५५ ॥

**उ०** उपश्वासय उपशब्दय पृथिवीम् । उत द्याम् अपि च उपशब्दय द्याम् । पुरुत्रा ते बहुधा च ते तव एकस्य सतः घोषं मनुतां मन्यन्ताम् । विष्ठितं विविधं स्थितं स्थावरम् । जगत् जङ्गमं च । यस्त्वमेवास्माभिः प्रार्थितः स त्वम् हे दुन्दुभे, सजूः समानप्रीतिः सन् इन्द्रेण सह देवैश्च । दूराद्दूरतरम् अपसेध अपगमय शत्रून् ॥ ५५ ॥

**म०** तिस्र ऋचो दुन्दुभिदेवत्याः । हे दुन्दुभे, स त्वं पृथिवीमुत द्यामन्तरिक्षमपि उपश्वासय उपशब्दय । श्वसिः शब्दार्थः । विष्ठितं विविधं स्थितं जगत् स्थावरजङ्गमात्मकं विश्वम् । पुरुत्रा बहुधा ते त्वां मनुतां जानातु दुन्दुभिर्नदतीति । स त्वं दूराद्दवीयः अतिदूरं शत्रूनपसेध अपगमय । अत्यन्तं दूरं दवीयः 'स्थूलदूर–' (पा० ६ । ४ । १५६) इति रेफलोपपूर्वगुणौ । कीदृशः त्वम् । इन्द्रेण देवैश्च सजूः प्रीतियुक्तः ॥ ५५ ॥

## षट्पञ्चाशी ।

आक्र॑न्दय॒ बल॒मोजो॑ न॒ आधा॒ निष्टनिहि दुरि॒ता बाध॑मानः । अप॑प्रोथ दुन्दुभे दु॒च्छुना॑ इ॒त इन्द्र॑स्य मु॒ष्टिर॑सि वी॒डय॑स्व ॥ ५६ ॥

**उ०** आक्रन्दय । हे दुन्दुभे, आक्रन्दय दीनान् शब्दान्कारय अहो पलायध्वं पिता मे हतो भ्राता मे हत इति बलं शत्रुसेनाम् ओजो न आधाः ओजस्तेजः नः अस्माकम् आधाः आधेहि । किंच निष्टनिहि निश्चितं शब्दं जयाय कुरु । दुरिताबाधमानः दुरितानि अपगमयन् । किंच । अपप्रोथ । प्रोथतिर्नाशनार्थः । अपकृत्यापकृत्य प्रोथ नाशय । दुच्छुनाः दुष्टशुन इव याः सेनाः । सुखवचनो वा शुनाशब्दः । दुःसुखाः विसर्जनीयस्य दत्वम् । इतः सेनायाः । यतश्च त्वम् इन्द्रस्य मुष्टिरसि अतो ब्रवीमि । वीडयस्व दृढीकुरु आत्मानम् ॥ ५६ ॥

**म०** हे दुन्दुभे, त्वं बलं शत्रुसैन्यमाक्रन्दय रोदय । पलायध्वं मदीयाः सर्वे हता इत्यादिदीनरवं कारयेत्यर्थः । नोऽस्माकमोजः तेजः आधाः आधेहि देहि । दुरिता दुरितानि पापानि बाधमानो निराकुर्वन् सन् । निष्टनिहि शब्दं कुरु । 'स्तन शब्दे' चुरादिरदन्तः । किंच इतोऽस्मत्सेनायाः सकाशात् दुच्छुनाः दुष्टाश्च ते श्वानश्च दुच्छुनाः तान्दुष्टान् शुनः श्वसदृशान् शत्रूनपप्रोथ नाशय । प्रोथतिर्नाशनार्थः । यतः त्वमिन्द्रस्य मुष्टिः असि मुष्टिवदङ्गभूतोऽसि । अतो वीडयस्व आत्मनमस्मान्दृढय ॥ ५६ ॥

## सप्तपञ्चाशी ।

आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति । समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ५७ ॥

**उ०** आमूः । ऐन्द्री । आअज आक्षिप । 'अज गतिक्षेपणयोः' । अमूः शत्रुसेनाः । प्रत्यावर्तय इमाः प्रत्यावर्तय जितंजितमिति इमाः अस्मदीयसेनाः । किंच केतुमत् प्रज्ञातवान् दुन्दुभिः वावदीति । लोडर्थे लट् अत्यर्थं वदतु। जयप्रकाशकम् । किंच समश्वपर्णाश्चरन्ति नो नरः । अत्रापि लोडर्थे लट् । संचरन्तु अश्वपर्णाः अश्वपतनाः । नो नरः अस्मदीया मनुष्याः संग्रामे । हे इन्द्र, नः अस्माकं रथिनः जयन्तु त्वत्प्रसादादिति शेषः ॥ ५७ ॥

**म०** हे इन्द्र, अमूः शत्रुसेनाः त्वमा अज समन्तात्परिक्षिप 'अज गतिक्षेपणयोः' । यतो दुन्दुभिः केतुमत् प्रज्ञावत् यथा वावदीति अत्यन्तं वदति अत इमाः अस्मत्सेनाः प्रत्यावर्तय जयं प्रापय्य प्रत्यानय । किंच नोऽस्माकं नरः योधाः संचरन्ति । कीदृशा नरः । अश्वपर्णाः अश्वस्येव पर्णं पतनं येषां ते । किंच अस्माकं रथिनः रथस्थाः जयन्तु युद्धे जयं प्राप्नुवन्तु ॥ ५७ ॥

## अष्टपञ्चाशी ।

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः संᳫंहितोऽधोरामः सावित्रो वारुणः कृष्ण एकशितिपात्पेत्वः ॥ ५८ ॥

**उ०** आग्नेयः कृष्णग्रीव इति श्रुतिः आ अध्यायपरिसमाप्तेः । द्वयोरेकादशिन्योः पशुदेवतासंबन्धविधात्री परतो द्वादश हविषो वेष्टेर्देवताः ॥ ५८ ॥

**म०** अश्वमेधे श्रुतिरस्ति 'द्वे त्वेवैते एकादशिन्यावालभेतेति' (पा० १३ ।५।१ । ३) तयोरेकादशिन्योः पशवस्तद्देवताश्च कण्डिकाद्वयेनोच्यन्ते । तेनेमानि ब्राह्मणवाक्यानि द्रव्यदेवताप्रतिपादकानि नतु मन्त्राः । कृष्णा ग्रीवा यस्य स कृष्णग्रीवः पशुराग्नेयः अग्निदेवत्यः १, मेषी सारस्वती सरस्वतीदेवताका २, बभ्रुः पिङ्गलवर्णः पशुः सौम्यः सोमदेवत्यः ३, श्यामः कृष्णवर्णः पौष्णः पूषदेवत्यः ४, शिति श्यामं पृष्ठं यस्य स शितिपृष्ठः बार्हस्पत्यः बृहस्पतिदेवत्यः ५, शिल्पो विचित्रवर्णो वैश्वदेवः विश्वदेवदेवत्यः ६, अरुणः रक्तः ऐन्द्रः इन्द्रदेवत्यः ७, कल्माषः कर्बुरो मारुतः मरुद्देवत्यः ८, संहितः दृढाङ्गः ऐन्द्राग्नः इन्द्राग्निदेवत्यः ९ अधोरामः अधोदेशे श्वेतः सावित्रः सवितृदेवत्यः १०, एकः शिति श्वेतः पादो यस्य स एकशितिपात् एकपदे श्वेतोऽन्यत्र कृष्णः पेत्वः पतनशीलो वेगवान् पशुः वारुणः वरुणदेवत्यः ११, एवमेकादश जाताः ॥ ५८ ॥

## एकोनषष्टी ।

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः पेत्वः ॥ ५९ ॥

**उ०** अग्नये इति स्पष्टार्थः ॥ ५९ ॥

**म०** द्वितीयैकादशिनीपशुदेवानाह । रोहितो रक्तोऽञ्जिस्तिलको यस्य सोऽनड्वान् वृषभोऽनीकवतेऽग्नये आलभ्यः । अनीकं मुखं सैन्यं वा यस्य सोऽनीकवान् तस्मै १, अधोरामौ अधोभागे श्वेतौ द्वौ पशू सावित्रौ सवितृदेवत्यौ २, ३, रजतवर्णा नाभिर्ययोस्तौ रजतनाभी द्वौ पौष्णौ पूषदेवत्यौ ४, ५, पिशङ्गौ पीतौ तूपरौ निःश्रृङ्गौ वैश्वदेवौ विश्वदेवदेवत्यौ ६, ७, कल्माषः कर्बुरो मारुतः ८, कृष्णः । श्यामोऽजो मेषः आग्नेयः अग्निदेवत्यः ९, मेषी सारस्वती १०, पेत्वः वेगवान् वरुणदेवत्यः ११, एवमेकादश ॥ ५९ ॥

## षष्टी

अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविᳫंशाभ्यां वैराजाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्कराय चरुः सवित्र औष्णिहाय त्रयस्त्रिᳫंशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः ॥ ६० ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायामूनत्रिंशोऽध्यायः ॥ २९ ॥

उ० अग्नयेऽष्टाकपालः पुरोडाशः कार्यः । कीदृशायाग्नये । गायत्राय त्रिवृता स्तुताय राथन्तराय साम्ना स्तुताय इन्द्राय त्रैष्टुभाय त्रिष्टुभा स्तुताय पञ्चदशाय पञ्चदशस्तोमस्तुताय । बार्हताय बृहत्सामस्तुताय । विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः । कीदृशेभ्यः । जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः । सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः । वैरूपेभ्यः वैरूपसामस्तुतेभ्यः । मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः । कीदृशाभ्यामानुष्टुभाभ्याम् । अनुष्टुभा स्तुताभ्याम् । एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम् । वैराजाभ्यां वैराजसामस्तुताभ्याम् बृहस्पतये चरुः । कीदृशाय । पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्कराय शाक्करसामस्तुताय । सवित्रे द्वादशकपालः पुरोडाशः । कीदृशाय सवित्रे । औष्णिहाय उष्णिक् छन्दसा स्तुताय । त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय । रैवताय रैवतसामस्तुताय । एवं छन्दःस्तोमसामसहितान् षट् देवानभिधाय चतुरः केवलानह । प्राजापत्यश्चरुः प्रजापतिदेवत्यश्चरुः कार्यः । विष्णुपत्न्यै अदित्यै चरुरेव । वैश्वानराय वैश्वानरगुणविशिष्टायाग्नये द्वादशकपालः पुरोडाशः । अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः ॥ ६० ॥

इति उवटकृतौ मन्त्रभाष्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

म० 'अथाग्नीषोमीयस्य पशुपुरोडाशमनुदिशामोऽवेष्टीर्निर्वपती'त्युपक्रम्य 'तदाहुर्दशहविषमन्त्यामिष्टिं निर्वपेत्' इति श्रुत्या दशहविष्कावेष्टिसंज्ञेष्टिः कथिता तस्या देवता हवींषि चाह । इमान्यपि ब्राह्मणवाक्यानि न मन्त्राः । अग्नयेऽष्टाकपालः पुरोडाशः कार्यः । अष्टसु कपालेषु संस्कृतोऽष्टाकपालः 'तद्धितार्थोत्तरपदसमाहारे च' ( पा० २ । १ । ५१ ) इति समासः । 'अष्टनः कपाले हविषि' ( पा० ६ । ३ । ४६ ) इत्यष्टन्शब्दस्य दीर्घः । कीदृशायाग्नये । गायत्राय गायत्र्या स्तुताय । त्रिवृते त्रिवृत्स्तोमेन स्तुताय । राथन्तराय रथन्तरसाम्ना स्तुताय १, इन्द्राय एकादशकपालः पुरोडाशः । समासः पूर्ववत् । कीदृशाय इन्द्राय । त्रैष्टुभाय त्रिष्टुभा स्तुताय पञ्चदशाय पञ्चदशस्तोमस्तुताय बार्हताय बृहत्सामस्तुताय २, विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः । कीदृशेभ्यः । जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः वैरूपसामस्तुतेभ्यः ३, मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः । कीदृशाभ्यामानुष्टुभ्याम् अनुष्टुभा स्तुताभ्याम् एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम् । वैराजाभ्यां वैराजसामस्तुताभ्याम् ४, बृहस्पतये चरुः । कीदृशाय पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्कराय शाक्करसामस्तुताय ५, सवित्रे द्वादशकपालः पुरोडाशः । कीदृशाय सवित्रे । औष्णिहाय उष्णिक्छन्दसा स्तुताय त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय रैवताय रैवतसामस्तुताय ६, एवं छन्दःस्तोमसामसहितान् षट् देवानभिधाय चतुरः केवलानाह । प्राजापत्यश्चरुः प्रजापतिदेवत्यश्चरुः कार्यः ७, विष्णुपत्न्यै अदित्यै चरुरेव ८, वैश्वानराय वैश्वानरगुणविशिष्टायाग्नये द्वादशकपालः पुरोडाशः ९, अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः १०, दशहविषाऽवेष्टिदैवताहवींष्यपि अश्वमेधोपयोगित्वादुक्तानि समिद्धो अञ्जन्नाश्वमेधिकोऽध्याय इति कात्यायनोक्तेः अनुक्रमण्याम् ॥ ६० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
शिष्टाश्वमेधमन्त्रोक्तिर्गतोऽध्यायोऽङ्कदृग्मितः ॥ २९ ॥

## त्रिंशोऽध्यायः ।

### तत्र प्रथमा ।

देव॑ सवितः॒ प्रसु॑व य॒ज्ञं प्रसु॑व य॒ज्ञप॑तिं॒ भगा॑य । दि॒व्यो ग॑न्ध॒र्वः के॑त॒पूः केतं॑ नः पुनातु वा॒चस्प॑ति॒र्वाचं॑ नः स्वदतु ॥ १ ॥

### द्वितीया ।

तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ २ ॥

उ० इत उत्तरं पुरुषमेधः द्वावध्यायौ नारायणः पुरुषोऽपश्यत् । देवसवितः । तिस्रः सावित्रीराहवनीये जुहोति । देवसवितः । तत्सवितुर्वरेण्यम् । विश्वानि देवसवितरिति । तत्र द्वे व्याख्याते ॥ १ ॥ २ ॥

म० इतउत्तरं पुरुषमेधः । द्वावध्यायौ नारायणः पुरुषोऽपश्यत् । ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञको यज्ञो भवति । सर्वभूतान्यतिक्रम्य स्थानमतिष्ठा । चैत्रशुक्लदशम्यामारम्भः । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सुत्या इति चत्वारिंशद्दिनैः सिध्यति । अत्र यूपैकादशिनी भवति एकादशाग्नीषोमीयाः पशवो भवन्ति तेषां च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम् । आज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति । तत्र देव सवितः ( ११ । ७ ) तत्सवितुः ( ३ । ३५ ) द्वे व्याख्याते ॥ १ ॥ २ ॥

### तृतीया ।

विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑सुव । यद्भ॒द्रं तन्न॒ आसु॑व ॥ ३ ॥

उ० विश्वानि देव सवितरिति द्वे गायत्र्यौ । विश्वानि सर्वाणि हे देवसवितः, दुरितानि असत्यानि । परासुव पराञ्चि गमय । यच्च भद्रं भन्दनीयं तत् नः अस्माकम् । आसुव आगमय ॥ ३ ॥

म० हे देव सवितः, विश्वानि सर्वाणि दुरितानि पापानि परासुव दूरे गमय । यद्भद्रं कल्याणं तन्नोऽस्मान् प्रति आसुव आगमय ॥ ३ ॥

### चतुर्थी ।

विभक्तारँ हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम् ॥ ४ ॥

उ० विभक्तारं कर्मानुरूपेण विभक्तारम् । हवामहे आह्वयामः । वसोः वासयितुः। चित्रस्य चायनीयस्य । राधसः धनस्य आयुषश्च । सवितारम् नृचक्षसम् नृणां द्रष्टारम् । ये नरो यथा द्रष्टव्यास्तांस्तथा पश्यति ॥ ४ ॥

म० वयं सवितारं हवामहे आह्वयामः । किंभूतम् । वसोः वासयितुश्चित्रस्य नानाविधस्य राधसः धनस्य विभक्तारं विभज्य दातारम् । नृचक्षसं नृणां द्रष्टारं यथायोग्यम् ॥ ४ ॥

### पञ्चमी ।

ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणं पाप्मने क्लीबमाक्रयाया अयोगूं कामाय पुँश्चलूमतिक्रुष्टाय मागधम् ॥ ५ ॥

म० अतः परं पुरुषमेधकाः पशवः आ अध्यायसमाप्तेः । ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टचत्वारिंशत्संख्यान् पुरुषान् प्रकामोद्याय सदमित्यन्तानग्निष्ठे यूपे नियुनक्ति इतरेषु यूपेष्वेकादशैकादश पुरुषान् वर्णायानुरुधमित्यादीन्नियुनक्ति । ब्रह्मणे ब्राह्मणम् तत्र ब्रह्मणे जुष्टं नियुनज्मीति अग्निष्ठे ब्राह्मणं प्रथमं नियुनक्ति । एवमग्रे सर्वेषां यूपे एव बन्धनम् चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम् । क्षत्राय राजन्यं क्षत्रियम् २ मरुद्भ्यो वैश्यम् ३ तपसे शूद्रम् ४ तपसे तस्करं स्तेनम् ५ नारकाय वीरहणं नष्टाग्निं शूरं वा ६ पाप्मने क्लीबं नपुंसकम् ७ आक्रयायै अयोगूमयसो गन्तारम् ८ कामाय पुंश्चलूं व्यभिचारिणीम् ९ अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा १० ॥ ५ ॥

### षष्ठी ।

नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलं नर्माय रेभँ हसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ॥ ६ ॥

म० नृत्ताय सूतं ब्राह्मण्यां क्षत्रियाज्जातः सूतः ११ गीताय शैलूषं नटम् १२ धर्माय सभाचरं सभायां चरतीति तम् १३ नरिष्ठायै भीमलं भयङ्करम् १४ नर्माय रेभं शब्दकर्तारं वाचाटम् १५ हसाय कारिं करणविशिष्टम् १६ आनन्दाय स्त्रीषखं स्त्रियाः सखायम् १७ प्रमदे कुमारीपुत्रं कानीयम् १८ मेधायै रथकारं माहिष्येण कारण्यां जातम् १९ धैर्याय तक्षाणं सूत्रधारम् २० ॥ ६ ॥

### सप्तमी ।

तपसे कौलालं मायायै कर्मारँ रूपाय मणिकारँ शुभे वपँ शरव्याया इषुकारँ हेत्यै धनुष्कारं कर्मणे ज्याकारं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥ ७ ॥

म० तपसे कौलालं कुलालापत्यम् २१ मायायै कर्मारं लोहकारम् २२ रूपाय मणिकारं रत्नकर्तारम् २३ शुभे शुभाय वपं बीजवप्तारम् २४ शरव्यायै इषुकारं बाणकर्तारम् २५ हेत्यै धनुष्कारं चापकारिणम् २६ कर्मणे ज्याकारं प्रत्यञ्चनकर्तारम् २७ दिष्टाय रज्जुसर्जं रज्जोः स्रष्टारं निर्मातारम् २८ मृत्यवे मृगयुं मृगग्राहम् २९ अन्तकाय श्वनिनं शुनो नेतारम् ३० ॥ ७ ॥

### अष्टमी ।

नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्य उन्मत्तँ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम् ॥ ८ ॥

म० नदीभ्यः पौञ्जिष्ठं पुञ्जिष्ठोऽन्त्यजः पुल्कसस्तदपत्यम् ३१ ऋक्षीकाभ्यो नैषादं निषादपुत्रम् ३२ पुरुषव्याघ्राय दुर्मदमुन्मत्तम् ३३ गन्धर्वाप्सरोभ्यो व्रात्यं सावित्रीपतितम् ३४ प्रयुग्भ्यः उन्मत्तम् ३५ सर्पदेवजनेभ्यः अप्रतिपदं प्रतिपद्यते ज्ञातानीति प्रतिपत् अतथाविधं विकलमित्यर्थः ३६ अयेभ्यः कितवं द्यूतकारम् ३७ ईर्यतायै अकितवमद्यूतकृतम् ३८ पिशाचेभ्यः विदलकारीं वंशविदारिणीं वंशपात्रकारिणीम् ३९ यातुधानेभ्यः कण्टकीकारीं कण्टकी कर्म तत्कारिणीम् ४० ॥ ८ ॥

### नवमी ।

सन्धये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराध्या एदिधिषुःपतिं निष्कृत्यै पेशस्कारीँ संज्ञानाय स्मरकारीं प्रकामोद्यायोपसदं वर्णायानुरुधं बलायोपदाम् ॥ ९ ॥

म० सन्धये जारमुपपतिम् ४१ गेहाय उपपतिं व्यभिचारिणम् ४२ आर्त्यै परिवित्तम् ऊढे कनिष्ठेऽनूढम् ४३ निर्ऋत्यै परिविविदानम् अनूढे ज्येष्ठे ऊढवन्तम् ४४ आराध्यै देव्यै एदिधिषुःपतिम् ज्येष्ठायां पुत्र्यामनूढायामूढा एदिधिषुः तत्पतिम् ४५ निष्कृत्यै पेशस्कारीं रूपकर्त्रीम् ४६ संज्ञानाय स्मरकारीं कामदीप्तिकरीम् ४७ प्रकामोद्याय तत्संज्ञाय देवाय

१ इत उत्तरमाध्यायान्तमौवटभाष्यं नोपलब्धमिति महीधरीयमेकमेव संगृहीतम् ।

उपसीदतीत्युपसत् समीपस्थितस्तम् ४८ एतानष्टिष्टे नियुनक्ति । अथ द्वितीये यूपे । वर्णाय अनुरुधम् अनुरुध्यतेऽनुसरतीत्यनुरुत् तम् १ बलाय उपदाम् उपददातीत्युपदास्तमुपायनदातारम् २ ॥ ९ ॥

## दशमी ।

उ॒त्सा॒दे॒भ्यः॑ कु॒ब्जं प्र॒मुदे॑ वाम॒नं द्वा॒र्भ्यः स्रा॒मꣳ स्वप्ना॑यान्धमध॑र्माय बधि॒रं प॒वित्रा॑य भि॒षजं॑ प्र॒ज्ञाना॑य नक्षत्रद॒र्शमा॑शि॒क्षायै॑ प्र॒श्निन॑मुपशि॒क्षाया॑ अभिप्र॒श्निनं॑ म॒र्यादा॑यै प्रश्नवि॒वा॒कम् ॥ १० ॥

**म०** उत्सादेभ्यः कुब्जं वक्राङ्गम् ३ प्रमुदे वामनं ह्रस्वाङ्गम् ४ द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम् ५ स्वप्नाय अन्धं नेत्रहीनम् ६ अधर्माय बधिरं कर्णेन्द्रियहीनम् ७ पवित्राय भिषजं वैद्यम् ८ प्रज्ञानाय नक्षत्रदर्शं नक्षत्राणि दर्शयति तम् गणकम् ९ आशिक्षायै प्रश्निनं प्रश्नवन्तम् । शकुनादिप्रष्टारमित्यर्थः १० उपशिक्षायै अभिप्रश्निनमभिप्रश्नवन्तम् ११ अथ तृतीये यूपे । मर्यादायै प्रश्नविवाकं कृतान्प्रश्नान्यो विविनक्ति ब्रूते स प्रश्नविवाकस्तम् १ ॥ १० ॥

## एकादशी ।

अर्मे॑भ्यो हस्ति॒पं ज॒वाया॑श्व॒पं पुष्ट्यै॑ गोपा॒लं वी॒र्या॑याविपा॒लं तेज॑सेऽजपा॒लमिरा॑यै की॒नाशं॑ की॒ला॒ला॑य सुराका॒रं भ॒द्राय॑ गृह॒पꣳ श्रेय॑से वित्त॒धमाध्य॑क्ष्यायानुक्ष॒त्तार॑म् ॥ ११ ॥

**म०** अर्मेभ्यो हस्तिपं गजपालकम् २ जवाय अश्वपं तुरगपालकम् ३ पुष्ट्यै गोपालं धेनुपालकम् ४ वीर्याय अविपालम् ५ तेजसे अजपालम् ६ इरायै कीनाशं कर्षुकम् । 'कीनाशः कर्षुके यमे' ७ कीलालाय सुराकारं मद्यकृतम् ८ भद्राय गृहपं गेहपालकम् ९ श्रेयसे वित्तधं वित्तं दधातीति वित्तधस्तम् धनकर्तारम् १० आध्यक्ष्याय अनुक्षत्तारं सारथ्यनुसारिणम् ११ ॥ ११ ॥

## द्वादशी ।

भायै॑ दार्वाहा॒रं प्र॒भाया॑ अ॒ग्न्ये॒धं ब्र॒ध्नस्य॑ वि॒ष्टपा॑याभिषे॒क्तारं॑ वर्षि॑ष्ठाय॒ नाका॑य परिवे॒ष्टारं॑ देवलो॒का॑य पेशि॒तारं॑ मनुष्यलो॒काय॑ प्रकरि॒तारꣳ सर्वे॑भ्यो लो॒केभ्य॑ उपसे॒क्तार॒मव॑ऋत्यै व॒धायो॑पमन्थि॒तारं॒ मेधा॑य वासःपल्पू॒लीं प्र॑का॒माय॑ रजयि॒त्रीम् ॥ १२ ॥

**म०** अथ चतुर्थे यूपे । भायै दार्वाहारं काष्ठानामाहर्तारम् १ प्रभायै अग्न्येधम् अग्निमेधयतीति तमग्नेर्वर्धकम् २ ब्रध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम् ३ वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्तारम् ४ देवलोकाय पेशितारम् 'पिश अवयवे' पिंशतीति पेशिता तम् प्रतिमाद्यवयवकर्तारम् ५ मनुष्यलोकाय प्रकरितारम् 'कॄ विक्षेपे' विक्षेप्तारम् ६ सर्वेभ्यो लोकेभ्यः उपसेक्तारमुपसेचनकर्तारम् ७ अवऋत्यै वधाय उपमन्थितारमुपमन्थनकर्तारम् ८ मेधाय वासःपल्पूलीम् वाससां प्रक्षालनकर्तारम् 'पल्पूल प्रक्षालनच्छेदनयोः' ९ प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारिणीं नारीम् १० ॥ १२ ॥

## त्रयोदशी ।

ऋ॒तये॑ स्ते॒नहृ॑दयं॒ वैर॑हत्याय॒ पिशु॑नं॒ विवि॑क्त्यै क्ष॒त्तार॒मौप॑द्रष्ट्र्यायानुक्ष॒त्तारं॒ बला॑यानुच॒रं भू॒म्ने प॑रिष्क॒न्दं प्रि॒याय॑ प्रियवा॒दिन॒मरि॑ष्ट्या अश्वसा॒दꣳ स्व॒र्गाय॑ लो॒काय॑ भागदु॒घं वर्षि॑ष्ठाय॒ नाका॑य परिवे॒ष्टार॑म् ॥ १३ ॥

**म०** ऋतये स्तेनहृदयं स्तेनस्येव हृदयं यस्य तम् ११ । अथ पञ्चमे यूपे । वैरहत्याय पिशुनं परवृत्तसूचकम् १ विविक्त्यै क्षत्तारं प्रतीहारम् २ औपद्रष्ट्र्याय अनुक्षत्तारं प्रतिहारसेवकम् ३ बलाय अनुचरं सेवकम् ४ भूम्ने परिष्कन्दम् परितः स्कन्दति रेतः सिञ्चति तम् ५ प्रियाय प्रियवादिनं मधुरभाषिणम् ६ अरिष्ट्यै अश्वसादम् अश्वारोहम् ७ स्वर्गाय लोकाय भागदुघम् भागं दुग्धे भागदुघस्तम् विभागप्रदम् ८ वर्षिष्ठायनकाय परिवेष्टारम् ९ ॥ १३ ॥

## चतुर्दशी ।

म॒न्यवे॑ऽयस्ता॒पं क्रोधा॑य नि॒सरं॒ योगा॑य यो॒क्तारꣳ शोका॑याभिस॒र्तारं॒ क्षेमा॑य विमो॒क्तार॑मुत्कूलनिकू॒लेभ्य॑स्त्रि॒ष्ठिनं॒ वपु॑षे मानस्कृ॒तꣳ शीला॑याञ्जनीका॒रीं निर्ऋ॑त्यै कोशका॒रीं य॒माया॒सूम् ॥ १४ ॥

**म०** मन्यवे अयस्तापमयस्तपं लोहतापकम् १० क्रोधाय निसरं नितरां सर्तारम् ११ । अथ षष्ठे यूपे । योगाय योक्तारं योगकर्तारम् १ शोकाय अभिसर्तारं संमुखमागच्छन्तम् २ क्षेमाय विमोक्तारं विमोचनकरम् ३ उत्कूलनिकूलेभ्यः त्रिष्ठिनम् त्रिषु तिष्ठतीति तिष्ठी तम् विद्यादिषु स्थितं शीलवन्तमित्यर्थः ४ वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्तारम् । सक् छान्दसः ५ शीलाय आञ्जनीकारीम् अञ्जनविद्याकर्त्रीम् ६ निर्ऋत्यै कोशकारीं खड्गाद्यावरणं कोशस्तत्कारिणीं स्त्रियम् ७ यमाय असूम् न सूते सा असूः ताम् वन्ध्याम् ८ ॥ १४ ॥

## पञ्चदशी ।

य॒माय॑ यम॒सूमथ॑र्व॒भ्योऽव॑तोकाꣳ संवत्स॒राय॑ पर्या॒यिणीं॑ परिवत्स॒राया॒विजा॑तामिदावत्स॒राया॒ती-

त्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विर्जर्जराꣳ संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳ साध्येभ्यश्चर्मम्नम् ॥ १५ ॥

**म०** यमाय यमसूं युग्मप्रसवित्रीम् ९ अथर्वभ्योऽवतोकां निरपत्याम् १० संवत्सराय पर्यायिणीम् पर्यायोऽनुक्रमस्तद्वतीमनुक्रमप्रज्ञाम् ११ । अथ सप्तमे यूपे । परिवत्सराय अविजाताम् अप्रसूताम् १ इदावत्सराय अतीत्वरीमत्यन्तं कुलटाम् 'पुंश्चली कुलटेत्वरी' २ इद्वत्सराय अतिष्कद्वरीम् अतिस्कन्दति स्रवति इत्यतिस्कद्वरी । स्कन्देर्वनिन्तात् ङीब्रेफौ ३ वत्सराय विजर्जरां शिथिलशरीराम् ४ संवत्सराय पलिक्नीं श्वेतकेशाम् ५ ऋभुभ्यः अजिनसन्धं चर्मसन्धातारम् ६ साध्येभ्यः चर्मम्नं चर्माभ्यासकरम् ७ ॥ १५ ॥

## षोडशी ।

सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो वैन्दं नड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय कैवर्तं तीर्थेभ्य आन्दं विषमेभ्यो मैनालꣳ स्वनेभ्यः पर्णकं गुहाभ्यः किरातꣳ सानुभ्यो जम्भकं पर्वतेभ्यः किंपूरुषम् ॥ १६ ॥

**म०** सरोभ्यो धैवरं कैवर्तापत्यम् ८ उपस्थावराभ्यः दाशम् 'दाश्टृ दाने' दातारम् दाशो धीवरो वा ९ वैशन्ताभ्यो वैन्दं विन्दो निषादापत्यम् १० नड्वलाभ्यः शौष्कलं मत्स्यजीविनम् शुष्कला मत्स्यास्तैर्जीवति तम् ११ । अथाष्टमे यूपे । पाराय मार्गारम् मृगारेरपत्यं मार्गारस्तम् १ अवाराय कैवर्तम् २ तीर्थेभ्यः आन्दम् 'अदि बन्धने' अदति आन्दस्तं बन्धनकर्तारम् ३ विषमेभ्यो मैनालम् 'अल् वारणे' मीनानलति वारयति जालैरसौ मीनालस्तदपत्यम् ४ स्वनेभ्यः प्रर्णकं भिल्लम् ५ गुहाभ्यः किरातम् ६ सानुभ्यः जम्भकं 'जभि नाशने' जम्भयतीति तत् हिंसकम् ७ पर्वतेभ्यः किंपूरुषं कुत्सितनरम् ८ ॥ १६ ॥

## सप्तदशी ।

वीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥ १७॥

**म०** वीभत्सायै पौल्कसं पुल्कसापत्यम् ९ वर्णाय हिरण्यकारं स्वर्णनिष्पादकम् १० तुलायै वाणिजं वणिगपत्यम् ११ । अथ नवमे यूपे । पश्चादोषाय ग्लाविनं 'ग्लै हर्षक्षये' अहृष्टम् १ विश्वेभ्यो भूतेभ्यः सिध्मलं सिध्माख्यरोगवन्तम् २ भूत्यै जागरणं जागरूकम् ३ अभूत्यै स्वपनं शयालुम् ४ आर्त्यै जनवादिनं जनान् वदति तम् ५ व्यृद्ध्यै अपगल्भम् ६ संशराय प्रच्छिदं प्रच्छेदनकर्तारम् ७ ॥ १७ ॥

## अष्टादशी ।

अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥ १८ ॥

**म०** अक्षराजाय कितवं धूर्तम् ८ कृताय आदिनवदर्शम् आदीनवो दोषस्तं पश्यति तथाभूतम् ९ त्रेतायै कल्पिनं कल्पकम् १० द्वापराय अधिकल्पिनम् अधिकल्पनाकर्तारम् ११ । अथ दशमे यूपे । आस्कन्दाय सभास्थाणुं सभायां स्थिरम् १ मृत्यवे गोव्यच्छं गाः प्रति गमनशीलम् २ अन्तकाय गोघातं गवां हन्तारम् ३ क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति यः पुमान् गां विकृन्तन्तं छिन्दन्तं भिक्षमाणो याचमानः उपतिष्ठते तं याचितारं क्षुधे देव्यै आलभेत ४ दुष्कृताय चरकाचार्यं चरकाणां गुरुम् ५ पाप्मने सैलगं सीलगो दुष्टस्तदपत्यम् ६ ॥ १८ ॥

## एकोनविंशी ।

प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम् ॥ १९ ॥

**म०** प्रतिश्रुत्कायै अर्तनं दुःखिनम् ७ घोषाय भषं जल्पकम् ८ अन्ताय बहुवादिनम् ९ अनन्ताय मूकं वाग्विकलम् १० शब्दाय आडम्बराघातम् आडम्बरमाहन्ति तम् कोलाहलकर्तारम् ११ । अथैकादशे यूपे । महसे वीणावादं वीणावादनकर्तारम् १ क्रोशाय तूणवध्मं वाद्यविशेषं धमति तथाभूतम् २ अवरस्पराय शङ्खध्मं शङ्खवादकम् ३ वनाय वनपं वनपालकम् ४ अन्यतोऽरण्याय दावपं वनवह्निपम् ५ ॥ १९ ॥

## विंशी ।

नर्माय पुंश्चलूꣳ हसाय कारिं यादसे शाबल्यां ग्रामण्यं गणकमभिक्रोशकं तान्महसे वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्तायानन्दाय तलवम् ॥ २० ॥

**म०** नर्माय पुंश्चलूं दुष्टां नारीम् ६ हसाय कारिं करणशीलम् ७ यादसे शाबल्याम् शबलः कर्बुरवर्णः तदपत्यभूतां स्त्रियम् ८ ग्रामण्यं ग्रामनेतारम् ९ गणकं ज्योतिर्विदम् १०

अभिक्रोशकं निन्दकम् ११ तान् त्रीन्महसे जुष्टं नियुनज्मीति एकादशे यूपे आलभते । एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् समाप्तिपर्यन्तान् द्वितीयोच्छ्रिते यूपे नियुनक्ति । तांश्च वीणावादं पाणिघ्नमित्यादीन् रात्र्यै कृष्णं पिङ्गाक्षमित्यन्ताश्चतुर्दश । ततोऽथैतानष्टौ विरूपानित्यष्टौ च मागधादींश्चतुरः एवं षड्विंशतिं द्वितीये । यूपे पूर्वोक्ता एकादश एवं सप्तत्रिंशत् । तानेवाह । वीणावादम् पाणिघ्नं हस्ततालवादकम् तूणवध्मम् तान् त्रीन् नृत्ताय आलभते ३ आनन्दाय तलवम् 'वा गतिगन्धनयोः' गन्धनं हिंसा तलं हस्तादितलं वाति वाद्यमुखं हन्ति स तलवस्तम् वाद्यवादकम् ४ ॥ २० ॥

## एकविंशी ।

अ॒ग्नये॒ पीवा॑नं पृथि॒व्यै पी॑ठस॒र्पिणं॑ वा॒यवे॑ चा॒ण्डा॒लम॒न्तरि॑क्षाय वꣳशन॒र्तिनं॑ दि॒वे ख॑ल॒तिꣳ सूर्या॑य हर्य॒क्षं नक्ष॑त्रेभ्यः किर्मि॒रं च॒न्द्रम॑से कि॒लास॒महे॑ शु॒क्लं पि॑ङ्गा॒क्षꣳ रात्र्यै॑ कृ॒ष्णं पि॑ङ्गा॒क्षम् ॥२१॥

**म०** अग्नये पीवानं स्थूलम् ५ पृथिव्यै पीठसर्पिणं पीठेनासनेन सर्पति गच्छति पीठसर्पी तं पङ्गुम् ६ वायवे चाण्डालं चण्डालकर्माणम् ७ अन्तरिक्षाय वंशनर्तिनम् वंशेन नर्तनशीलम् ८ दिवे खलतिमलोमशिरस्कं खल्वाटमित्यर्थः ९ सूर्याय हर्यक्षं हरितनेत्रम् १० नक्षत्रेभ्यः किर्मिरं कर्बुरवर्णम् ११ चन्द्रमसे किलासं सिध्मरोगवन्तम् १२ अह्ने शुक्लवर्णं पिङ्गाक्षम् १३ रात्र्यै कृष्णवर्णं पिङ्गाक्षम् १४ ॥ २१ ॥

## द्वाविंशी ।

अथै॒ताने॒ष्टौ विरू॑पा॒नाल॑भ॒तेऽति॑दीर्घं॒ चाति॑ह्रस्वं॒ चाति॑स्थूलं॒ चाति॑कृ॒शं चाति॑शु॒क्लं चाति॑कृ॒ष्णं चाति॑कुल्वं॒ चाति॑लोम॒शं च॑ । अशू॑द्रा॒ अब्रा॑ह्मणा॒स्ते प्रा॑जाप॒त्याः । मा॒ग॒धः पुं॒श्च॒ली कि॑त॒वः क्ली॒बोऽशू॑द्रा॒ अब्रा॑ह्मणा॒स्ते प्रा॑जाप॒त्याः ॥ २२ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां त्रिंशोऽध्यायः ॥ ३० ॥

**म०** तत एतान् वक्ष्यमाणानष्टौ विरूपान् परस्परं विरुद्धरूपान् पशूनालभते । तानाह । अतिदीर्घम् अतिह्रस्वम् अतिस्थूलम् अतिकृशम् अतिशुक्लम् अतिकृष्णम् अतिकुल्वं रोमरहितम् अतिलोमशं सर्वाङ्गव्यापिरोमाणम् । ते अष्टौ अशूद्राः अब्राह्मणाः शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति । तेऽष्टावपि प्राजापत्याः प्रजापतिदेवताः 'अष्टावुत्तमानालभत' इत्युपक्रम्य 'ते वै प्राजापत्या भवन्ति' ( १३ । ६ । २ । ७—८ ) इति श्रुतेः । अत्र जातिनियमात्पूर्वेषु जातेरनियमः । वीणावादादयश्चतुर्दश अतिदीर्घादयोऽष्टौ एवं द्वाविंशतिः शेषाः । तथा मागधः पुंश्चली कितवः क्लीबः एते चत्वारोऽपि शूद्रब्राह्मणव्यतिरिक्ताः प्रजापतिदेवताः पूर्वैः सहैते षड्विंशतिः ते सर्वे द्वितीययूपे नियोज्याः । सर्वेषां नियोगानन्तरं तान्नियुक्तान् पुरुषान् 'सहस्रशीर्षा पुरुषः' ( ३१ । १–१६ ) इति षोडशर्चेनानुवाकेन दक्षिणत उपविष्टो होतृवदभिष्टौति । होतृवदिति प्रथमोत्तमयोस्त्रिर्वचनम् ऋगन्तानां प्रणवेन संधानं च । यथा सहस्रशीर्षा पुरुषः—०ङ्गुलो३म् पुरुष एवेदꣳ—०रोहतो३म् । एवमभिष्टौति । तत आलम्भनक्रमेण यथादेवतं प्रोक्षणादि । ब्राह्मणादीनां पर्यग्निकरणानन्तरमिदं ब्रह्मणे इदं क्षत्रायेत्येवं सर्वेषां यथा स्वस्वदेवतोद्देशेन त्यागः । ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजति । तत एकादशिनैः पशुभिः संज्ञपनादिप्रधानयागान्तं वनस्पतियागं कृत्वा प्राक् स्विष्टकृतः अध्वर्युराज्यं संस्कृत्य सकृद्गृहीतमाज्यं गृहीत्वा ओम् पुरुषदेवताभ्यो ब्रह्मादिभ्यः आहवनीये जुहोति ओम् ब्रह्मणे स्वाहा १ क्षत्राय स्वाहा २ मरुद्भ्यः ३ तपसे ४ तमसे ५ इत्याद्यध्यायान्तं सर्वदेवताभ्यः चतुरशीत्युत्तरशतसंख्याकाभ्यः तावतीर्घृताहुतीर्हुत्वा स्विष्टकृदादि उदवसानीयान्तं कर्म कृत्वान्ते यजमानः 'अयं ते योनिः' इति मन्त्रेणात्मन्यग्नीन् समारोप्य 'अद्भ्यः संभृत' ( ३१ । १७ ) इति षड्ऋचेनानुवाकेन सूर्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा संन्यसेत् । 'गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तेः । यदि पुरुषमेधानन्तरं ग्रामवासेच्छा तर्ह्युदवसानीयान्ते सायमाहुती हुत्वारण्योरग्नी समारोप्योत्तरनारायणेनार्कमुपस्थाय देवयजनमादीप्य गृहं व्रजेत् । गृहे आगत्य निर्मथ्याग्निं स्थापयेत् यथेच्छं यज्ञानपि कुर्यात् । अयमपि पक्षोऽस्ति । तत् पुरुषमेधानन्तरं संन्यास एव ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
त्रिंशेऽध्याये प्रकथिताः पशवो नरमेधिके ॥ ३० ॥

---

# एकत्रिंशोऽध्यायः ।

## तत्र प्रथमा ।

स॒हस्र॑शीर्षा॒ पुरु॑षः सहस्रा॒क्षः स॒हस्र॑पात् । स भूमि॑ꣳ स॒र्वत॑ स्पृ॒त्वात्य॑तिष्ठद्दशाङ्गु॒लम् ॥ १ ॥

**उ०** परमात्मविज्ञानानन्दादिगुणाध्यात्मनि प्रभूतः पुरुषमेधो यज्ञः प्रजापतिः लोककालाग्न्यादिवपुः पुरुषोत्पत्तिस्थितिसंहृतीनां हेतुः स्वर्गापवर्गैश्वर्यमोक्षदो ज्ञानकर्मसमुच्चयकारणं शरीरं 'यज्ञो वा अस्यात्मा भवती'ति श्रुतिः । सहस्रशीर्षा पुरुष इत्यनुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुबन्त्येन ब्रह्मणे ब्राह्मणमित्याद्यवयवभूतपुरुषद्वारेणावयवी

स्तूयते। इदानीं स्तुत्यर्थं निर्वचनद्वारेण द्रढयितुमाह। 'अथ यस्मात्पुरुषमेधो नानेमे वै लोकाः पूरयमेव पुरुषो योयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः। तस्य यदेषु लोकेष्वन्नं तदस्यान्नं मेधस्तदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधः'। पुरुषसूक्तस्य नारायणऋषिः पुरुषो देवतानुष्टुप्छन्दः अन्त्या त्रिष्टुप् मोक्षे विनियोगः। अस्य भाष्यं शौनको नाम ऋषिरकरोत्। प्रथमं विच्छेदः क्रियाकारकसंबन्धः समासः प्रमेयार्थव्याख्येति सर्वमेतज्जनकाय मोक्षार्थं कथयामासेति। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सः भूमिम् सर्वतः स्पृत्वा अति अतिष्ठत् दशाङ्गुलम्। सः पुरुषः नारायणाख्यः सर्वतः भुवनकोशस्य भूमिं स्पृत्वा व्याप्य दशाङ्गुलम् अत्यतिष्ठत्। दश च तानि अङ्गुलानि दशाङ्गुलानीन्द्रियाणि। केचिदन्यथा रोचयन्ति दशाङ्गुलप्रमाणं हृदयस्थानम्। अपरे तु नासिकाग्रं दशाङ्गुलमिति। किंभूतोऽसौ सहस्रशीर्षा। अनेकपर्यायः सहस्रशब्दः। अनेकानि शिरांसि यस्य स सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्राण्यक्षीणि नेत्राणि तस्यासौ सहस्राक्षः। सहस्रपात् पादानामङ्गानां सहस्राणि यस्य स सहस्रपात्। एतद्गुणः पुरुषः तद्व्याप्य अतिक्रम्य स्थित इति ॥ १ ॥

रमाकान्तं गिरं नत्वा हेरम्बं शिवमम्बिकाम्।
एकत्रिंशेऽधुनाध्याये वेददीपो वितन्यते ॥

**म०** 'नियुक्तान्ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति' ( का०श्रौ० २१।१।११ )। अस्यार्थः। नियुक्तान्ब्राह्मणमित्यादिपशून् सहस्रशीर्षेत्यनुवाकेन षोडशर्चेन ब्रह्मा स्तौति होतृवदिति त्रिः प्रथमां त्रिरुत्तमामित्याद्युक्तप्रकारेणेत्यर्थः। 'त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाग्ध्यः संभृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयाद् ग्रामे वाविवत्सन्नरण्योः' (का०२१।१।१७-१८)। त्रैधातवी उदवसानीयेष्टिः तदन्ते अयं ते योनिरित्यग्नी आत्मनि समारोह्य तदुप्माणमास्ये प्रवेश्याद्भ्यः संभृत इति षडृचेनानुवाकेन सूर्यमुपस्थाय पश्चादपश्यन्वनं गत्वा ग्रामं नागच्छेत्। वानप्रस्थो भवेदित्यर्थः। यद्वा ग्रामे वस्तुमिच्छन् अरण्योरग्नी समारोप्यार्कोपस्थानानन्तरं ग्रामे गत्वा यज्ञान्कुर्यादिति सूत्रार्थः। अथ मन्त्रार्थः। नारायणपुरुषदृष्टा जगद्वीजपुरुषदेवत्याः षोडश ऋचः पञ्चदशानुष्टुभः षोडशी त्रिष्टुप्। ब्रह्मणे ब्राह्मणमित्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवाः पूर्वाध्यायान्ते प्रोक्तास्तेषामवयवी पुरुषोऽत्र स्तूयते। अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किंचि' दित्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराजाख्योऽस्ति। कीदृशः। सहस्रशीर्षा सहस्रशब्दो बहुत्ववाची। संख्यावाचकत्वे सहस्राक्ष इति विरोधः स्यात् नेत्रसहस्रद्वयेन च भाव्यम्। ततः सहस्रमसंख्यानि शीर्षाणि शिरांसि यस्य सः 'शीर्षंच्छन्दसि' ( पा० ६।१।६० ) इति शिरःशब्दस्य शीर्षन्नादेशः। शिरोग्रहणं सर्वावयवोपलक्षणम्। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तस्यैवेति सहस्रशीर्षत्वम्। एवमग्रेऽपि। सहस्राक्षः सहस्रमक्षीणि यस्य सः। अक्षिग्रहणं सर्वज्ञानेन्द्रियोपलक्षकम्। सहस्रपात् सहस्रं पादा यस्य 'संख्यासुपूर्वस्य' ( पा० ५।४।१४० ) इति पादस्यान्त्यलोपः। पादग्रहणं कर्मेन्द्रियोपलक्षणम्। सः पुरुषो भूमिं ब्रह्माण्डलोकरूपां सर्वतः तिर्यक् ऊर्ध्वमधश्च स्पृत्वा व्याप्य। स्पृणोतिर्व्याप्तिकर्मा। यद्वा भूमिशब्दो भूतोपलक्षकः। पञ्च भूतानि व्याप्य दशाङ्गुलपरिमितं देशमध्यतिष्ठत् अतिक्रम्यावस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो-व्याप्यावस्थित इत्यर्थः। यद्वा नाभेः सकाशाद्दशाङ्गुलमतिक्रम्य हृदि स्थितः। नाभित इति कुतो लभ्यते 'कतम आत्मे' त्युपक्रम्य 'सोऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति' रिति श्रुतेः विज्ञानात्मनो हृद्यवस्थानं कर्मफलोपभोगाय अन्तर्यामिणो नियन्तृत्वेन। तदुक्तम् 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' ( मुण्ड० ३।१।१ ) इति। स पुरुषोऽत्र देवता। तथाच श्रुतिः 'इमे वै लोकाः पूरयमेव पूरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः' ( १३। ६।२।१ ) इति ॥ १ ॥

## द्वितीया।

पुरु॑ष ए॒वेदꣳ सर्वं॒ यद्भू॒तं यच्च॒ भाव्य॑म्। उ॒ताऽमृ॑त॒त्वस्येशा॑नो॒ यदन्ने॑नाति॒रोह॑ति ॥ २ ॥

**उ०** पुरुष एव। पुरुषः एव इदम् सर्वम् यत् भूतम् यत् च भाव्यम्। उत अमृतत्वस्य ईशानः यत् अन्नेन अतिरोहति। स एव पुरुषः पूर्वपर्यायविशेषित एवशब्दो नान्यः। इदं वर्तमानकं सर्वम् यच्च भूतमतीतम् यच्च भाव्यं भविष्यत् तस्य कालत्रयस्य ईशानः। न केवलं कालत्रयस्य ईशानः। उत अमृतत्वस्यापि मोक्षस्यापि। उतशब्दोऽपिशब्दार्थे। कस्मात्कारणात्। यत् अन्नेन अमृतेन अतिरोहति अतिरोधं करोति। सर्वस्येश्वर इति ॥ २ ॥

**म०** यत् इदं वर्तमानं जगत् तत्सर्वं पुरुष एव। यत् भूतमतीतं जगत् यच्च भाव्यं भविष्यं जगत् तदपि पुरुष एव। यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमिति भावः। उतापि च अमृतत्वस्य देवस्य ईशानः स्वामी स पुरुषः यत् यस्मात् अन्नेन प्राणिनां भोग्येनान्नेन फलेन निमित्तभूतेनातिरोहति स्वीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्पुरुष एव। प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः। यद्वा सर्वं पुरुषश्चेत्तर्हि परिणामीत्याशङ्क्याह। अमृतत्वस्यामरणधर्मस्येशानः मुक्तेरीशः। यो हि मोक्षेश्वरो नासौ म्रियत इत्यर्थः। किंच यत् जीवजातमन्नेनातिरोहति उत्पद्यते तस्य सर्वस्य ईशानः ब्रह्मादि-

स्तम्बपर्यन्तो भूतग्राम उक्तः तस्यान्नेनैव स्थितेः 'इतःप्रदानाद्धि देवा उपजीवन्ति' इति श्रुतेः ॥ २ ॥

## तृतीया ।

एतावा॑नस्य महि॒मातो॒ ज्याया॑ँश्च॒ पूरु॑षः । पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥ ३ ॥

**उ०** एतावानस्य । एतावान् अस्य महिमा अतः ज्यायान् च पूरुषः । पादः अस्य विश्वा भूतानि त्रिपात् अस्य अमृतं दिवि । अस्य पुरुषस्य पूर्वोक्तविशेषणविशेषितस्य एतावान् महिमा एतदेव महत्त्वमस्य । अतः कारणात् ज्यायांश्च पुरुषः महानित्यर्थः । कस्मान्महत्त्वमायातम् । यस्मात्पादः एकोंशः अस्य पुरुषस्य । विश्वा भूतानि विश्वानि चतुर्दशभुवनसमूहे यानि चतुर्धा भूतानि तान्येकोंशः । त्रिपात्पुनः त्रयोंशाः अस्य पुरुषस्य अमृतम् ऋग्यजुःसामलक्षणम् आदित्यलक्षणं वा दिवि द्योतते इति ॥ ३ ॥

**म०** अतीतानागतवर्तमानकालसंबद्धं जगद्यावदस्ति एतावान्सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषो विभूतिः नतु वास्तवं स्वरूपम् । वास्तवपुरुषस्तु अतः अस्मात् महिम्नः जगज्जालात् ज्यायांश्च अतिशयेनाधिकः । एतदुभयं स्पष्टीक्रियते । अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थांशः । अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपम् अमृतं विनाशरहितं तत् दिवि द्योतनात्मके स्वप्रकाशे स्वरूपेऽवतिष्ठत इति शेषः । यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' त्याम्नातस्य परब्रह्मण इयत्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥ ३ ॥

## चतुर्थी ।

त्रि॒पादू॒र्ध्व उदै॒त्पुरु॑षः॒ पादो॑ऽस्ये॒हाभ॑व॒त्पुनः॑ । ततो॒ विष्व॒ङ् व्य॑क्राम॒त्साशनानश॒ने अ॒भि ॥ ४ ॥

**उ०** त्रिपादूर्ध्वः । त्रिपात् ऊर्ध्वः उत् ऐत् पुरुषः पादः अस्य इह अभवत् पुनः । ततः विष्वङ् वि अक्रामत् साशनानशने अभि । यस्मादयं पुरुषः त्रिपात् त्र्यंशभूतः ऊर्ध्वः उपरिष्टात् उदैत् देदीप्यमानस्तिष्ठति । अस्य च पुरुषस्य पादः एकोंशः इह त्रैलोक्ये बीजभूतं चतुर्थं भूतेषु अभूत् भूतम् । ततः तस्मात्कारणात् विष्वङ् भुवनकोशं व्यक्रामत् उत्पन्नमित्यर्थः । तस्मादेव पुरुषात् । साशनानशने अभि साशनं स्वर्गम् अनशनं मोक्षम् सर्वं जगत्स्वर्गं प्रति मोक्षं प्रति च तस्मादेवोत्पन्नमित्यर्थः ॥ ४ ॥

**म०** योऽयं त्रिपात्पुरुषः संसारस्पर्शरहितब्रह्मरूपः अयमूर्ध्वः उदैत् अस्मादज्ञानकार्यात् संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् । तस्यास्य पादो लेशो जगद्रूपः इह मायायां पुनः अभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम् 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' ( भग० १० । ४२ ) इति । ततो मायायामागत्यानन्तरं विष्वङ् विषु सर्वत्राञ्चतीति विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् । किंकृत्वा साशनानशने अभि अभिलक्ष्य अशनेन सह वर्तमानं साशनम् अशनादिव्यवहारोपेतं चेतनप्राणिजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् ते अभिलक्ष्य स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥

## पञ्चमी ।

ततो॑ वि॒राड॑जायत वि॒राजो॒ अधि॒ पूरु॑षः । स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ॥ ५ ॥

**उ०** ततो विराट् । ततः विराट् अजायत विराजः अधिपूरुषः । सः जातः अति अरिच्यत पश्चात् भूमिम् अथो पुरः । तस्मादेव पुरुषात् विश्वोत्पत्तिः । तत्र पूर्वं विराट् अजायत । विराजः अधिपूरुषः प्रधानं तेजः । स क्षेत्रज्ञः ब्रह्मा सृष्टिकृत् जातः सन् अतिरिच्यते । सोऽभितः पश्चात् अस्मात् क्षेत्रज्ञात् ब्रह्मणः भूमिः पृथिव्यादौ जाता उत्पन्ना इति । अथोऽनन्तरम् पुरः शरीराणि पुराणि चतुर्विधानि भूतानि अजायन्त । पुत्रादीनि तेनैवोत्पादितानि एवमेकोंशः तेनैव सर्वं विश्वमुत्पादितमिति ॥ ५ ॥

**म०** विष्वङ् व्यक्रामदिति यदुक्तं तदेव प्रपञ्च्यते । ततः तस्मादादिपुरुषात् विराट् ब्रह्माण्डदेहोऽजायत जातः । विविधं राजन्ते वस्तून्यत्रेति विराट् । विराजः अधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी एक एव पुमानजायत । सर्ववेदान्तवेद्यः परमात्मा स्वमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदित्यर्थः । एतच्चाथर्वणोत्तरतापनीये स्पष्टमुक्तम् 'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वात्र प्रविष्ट इव विहरति' ( नृसिंहता० २ । ९ ) इति । किंच स जातो विराट्पुरुषोऽत्यरिच्यत अतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥ ५ ॥

## षष्ठी ।

तस्मा॑द्य॒ज्ञात्स॑र्व॒हुतः॒ संभृ॑तं पृषदा॒ज्यम् । प॒शूंस्तांश्च॑क्रे वाय॒व्या॑नार॒ण्या ग्रा॒म्याश्च॒ ये ॥ ६ ॥

**उ०** तस्माद्यज्ञात् । तस्मात् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम् । पशून् तान् चक्रे वायव्यान् आरण्याः ग्राम्याः च ये । यथा अग्निष्टोमाख्यात्तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् तेन वायव्यान् पशून् आरण्या ग्राम्याश्च ये तान् कृतवन्तः । एवमात्मयज्ञात् सर्वहुतात्पूरितात् उत्पन्नेन योगिनः सर्वान्

पशून् सर्वाणि भूतजातानि करतलवत्पश्यन्ति । पश्यन्ति किल ज्ञानतेजसा भूतजातानि ॥ ६ ॥

**म०** सर्वं हूयते यस्मिन् स सर्वहुत् तस्मात्पुरुषमेधाख्यात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम् । दध्याज्यादिभोग्यजातं संपादितमित्यर्थः । पुरुषेणेति शेषः । तथा स पुरुषः वायव्यान्वायुदेवताकान् तान्प्रसिद्धान् पशून् चक्रे उत्पादितवान् । 'अन्तरिक्षदेवत्याः खलु वै पशवः' इति श्रुतेः । अन्तरिक्षस्य च वायुदेवत्यत्वात्पशूनां वायुदेवत्वम् । तान्कान् । ये चारण्याः अरण्ये भवाः हरिणादयः । ये च ग्रामभवा गवाश्वादयस्तान्पशून् चक्रे ॥ ६ ॥

## सप्तमी ।

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांᳪसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥

**उ०** तस्माद्यज्ञात् । तस्मात् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्मात् यजुः तस्मात् अजायत । तस्मादेव यज्ञात्सर्वहुतः प्रज्वालितात् यथा ऋचः सामानि यजूंषि च देवा उत्पादयन्ति छन्दांसि च । एवमात्मयज्ञे प्रणवेन दीपिते स्वयमेव ज्ञान।दधिष्ठितानि भवन्ति । एवं येन परमात्मनि ज्ञायते सर्वं जग्धाः(?)सर्वं वाङ्मयं ज्ञानं भवतीति ॥७॥

**म०** सर्वहुतः तस्माद्यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नानि । छन्दांसि गायत्र्यादीनि जज्ञिरे तस्माद्यजुरप्यजायत । ऋग्यजुःसामभिश्छन्दोभिश्च विना यज्ञा न सिध्यन्ति ॥ ७ ॥

## अष्टमी ।

तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥

**उ०** तस्मात् । तस्मात् अश्वाः अजायन्त ये के च उभयादतः । गावः ह जज्ञिरे तस्मात् तस्मात् जाताः अजावयः । तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्नाः । तथा ये के चाश्वातिरिक्ता गर्दभादयोऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभयदतः । छान्दसं दीर्घत्वम् । ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा ह स्फुटं तस्माद्यज्ञात् गावः च जज्ञिरे । किंच तस्माद्यज्ञात् अजावयः अजाः अवयश्च जाताः । नहि पशुभिर्विना यज्ञः सिध्येत्॥८॥

**म०** तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्नाः तथा ये के चाश्वातिरिक्ता गर्दभादयोऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभयदतः । छान्दसं दीर्घत्वम् । ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा ह स्फुटं तस्मात् यज्ञात् गावः च जज्ञिरे । किंच तस्माद्यज्ञात् अजावयः अजाः अवयश्च जाताः । न हि पशुभिर्विना यज्ञः सिध्येत् ॥ ८ ॥

## नवमी ।

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥

**उ०** तं यज्ञम् । तम् यज्ञम् बर्हिषि प्रौक्षन् पुरुषम् जातम् अग्रतः । तेन देवाः अयजन्त साध्याः ऋषयः च ये । यथेन्द्रेण तत्र यज्ञे अग्निष्टोमाख्ये बर्हिषा प्रोक्षितः पुरुषो जातः । तद्वदात्मयज्ञे बर्हिषा प्राणायामेन दीपितेन तस्मिन्पुरुषो जातः । ज्ञानमुत्पद्यते दिव्यम् । अग्रतः प्रथमतः । तेन देवा इन्द्रादयः साध्याश्च ऋषयश्च यथा अयजन्त । तथा देवा योगिनः कपिलादयश्च साध्याश्चापरे ऋषयः । ऋषयश्चाप्येतेनैव प्रणवाधिष्ठितेन पुरुषेणात्मयज्ञं कृतवन्त इति॥९॥

**म०** यज्ञसाधने यज्ञशब्दः । यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वमाभाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन्प्रोक्षितवन्तः प्रोक्षणादिभिः संस्कारैः संस्कृतवन्तः । कीदृशम् । अग्रतः सृष्टेः पूर्वं जातं पुरुषत्वेनोत्पन्नम् । एतच्च प्रागेवोक्तम् तस्माद्विराडजायत विराजो अधि पूरुष इति । तेन पुरुषरूपेण पशुना देवा अयजन्त मानसयागं निष्पादितवन्तः । के ते देवा इत्यत्राह । ये साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः । ये च तदनुकूला ऋषयः मन्त्रद्रष्टारः ते सर्वेऽप्ययजन्त ॥ ९ ॥

## दशमी ।

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते ॥ १० ॥

**उ०** यत्पुरुषम् । यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखम् किम् अस्य आसीत् किं बाहू किम् ऊरू पादौ उच्येते । यत्पुरुषम् देवा इन्द्रादयः तस्मिन् यज्ञे व्यदधुः कृतवन्तो यथा । तद्वत् योगिनः आत्मयज्ञे पुरुषं ज्ञानम् यत् ज्ञानान्तं तत्कृतवन्तः कतिप्रकारं विकल्पितवन्तः । तस्यैवंविधस्य किं मुखम् कौ बाहू कौ ऊरू पादौ उच्येते उच्यन्तामित्यर्थः । ब्राह्मणक्षत्रियवैश्यशूद्राः स्थिता इत्यर्थः ॥ १० ॥

**म०** प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवा यत् यदा पुरुषं व्यदधुः कालेनोदपादयन् तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः । अस्य पुरुषस्य मुखं किमासीत् किं बाहू ऊरू चास्ताम् । किंच पादौ उच्येते पादावपि किमास्तामित्यर्थः ॥ १० ॥

## एकादशी ।

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्याᳪ शूद्रो अजायत ॥ ११ ॥

**उ०** ब्राह्मणोऽस्य । ब्राह्मणः अस्य मुखम् आसीत् बाहू राजन्यः कृतः । ऊरू तत् अस्य यत् वैश्यः पद्भ्याम् शूद्रः अजायत । अस्य यज्ञोत्पन्नस्य पुरुषस्य ये केचिद्ब्राह्मणाः ते मुखम् आसीत् । ये क्षत्रियाः ते बाहूकृताः । ये वैश्याः ते अस्य ऊरू कृताः । ये शूद्राः ते पद्भ्याम् अजायन्त इति कल्प्यन्ते तदङ्गोत्पन्नत्वादिति । एवमेतेऽवयवाः शिरःप्रभृतयः पुरुषस्य विद्यन्ते नान्ये इति ॥ ११ ॥

**म०** पूर्वोक्तप्रश्नोत्तराण्याह । ब्राह्मणः ब्रह्मत्वजातिविशिष्टः पुरुषोऽस्य प्रजापतेर्मुखमासीत् । मुखादुत्पन्न इत्यर्थः । राजन्यः क्षत्रियत्वजातिविशिष्टो बाहू कृतः बाहुत्वेन निष्पादितः । तत् तदानीमस्य प्रजापतेः यत् यावूरू तद्रूपो वैश्यः संपन्नः । ऊरुभ्यामुत्पादित इत्यर्थः । तथास्य पद्भ्यां शूद्रत्वजातिमान्पुरुषोऽजायत उत्पन्नः ॥ ११ ॥

## द्वादशी ।

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥

**उ०** चन्द्रमा मनसः । चन्द्रमाः मनसः जातः चक्षोः सूर्यः अजायत । श्रोत्रात् वायुः च प्राणः च मुखात् अग्निः अजायत । तस्यैवंविधस्य यज्ञोत्पन्नस्य पुरुषस्य । चन्द्रमाः मनसः चेतसः जातः अजायतेति कल्पना । मन एव चन्द्रमाः । चक्षोः नेत्राभ्यां सूर्यः । नेत्रे एव सूर्यः । यः प्राणो जीवः स एव वायुः श्रोत्रात् अजायतेति कल्प्यते श्रोत्रमेव वायुः । योऽयमग्निः स मुखात् अजायतेति कल्प्यते मुखमेवाग्निः अंशोत्पन्नत्वादिति ॥ १२ ॥

**म०** यथा दध्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह । मनसः सकाशाच्चन्द्रमाः जातः । चक्षोः चक्षुषः सकाशात्सूर्यः अजायत । वायुः प्राणश्च श्रोत्रात्कर्णादजायत । मुखादग्निरजायत ॥ १२ ॥

## त्रयोदशी ।

नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ अकल्पयन् ॥ १३ ॥

**उ०** नाभ्या आसीत् । नाभ्याः आसीत् अन्तरिक्षम् शीर्ष्णः द्यौः सम् अवर्तत । पद्भ्याम् भूमिः दिशः श्रोत्रात् तथा लोकान् अकल्पयन् । तस्यैवंविधस्य पुरुषस्य या नाभिः तदेवान्तरिक्षं नभः । या द्यौः तत् शीर्षं शिरः । समवर्ततेति कल्पितम् । पादौ भूमिरेव । श्रोत्रे श्रवणौ दिशः । श्रोत्रावयवाः यस्माद्दिशः ब्रह्मणो जाताः तथैव सर्वान् लोकान् पुरुषस्यावयवभूतान् अकल्पयंदिति ॥ १३ ॥

**म०** यथा प्रजापतेर्मनःप्रभृतयश्चन्द्रादीनकल्पयन् तथान्तरिक्षादिलोकानित्याह नाभ्येति । प्रजापतेः नाभेः सकाशात् अन्तरिक्षमासीत् । शीर्ष्णः शिरसः द्यौः स्वर्गः समवर्ततोत्पन्ना । अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना । श्रोत्राद्दिशः उत्पन्नाः । तथा तेनोक्तेन विधिना लोकान्भूरादीन् प्रजापतेः सकाशादकल्पयन् कल्पितवन्तः । फलादानोत्सुकाः काला इति शेषः ॥ १३ ॥

## चतुर्दशी ।

यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥

**उ०** यत्पुरुषेण । यत् पुरुषेण हविषा देवाः यज्ञम् अतन्वत । वसन्तः अस्य आसीत् आज्यम् ग्रीष्मः इध्मः शरत् हविः । कथमनेनाधिरोहति । यत् यस्मात्कारणात् पुरुषेण हविषा हविर्भूतेन देवा इन्द्रादयः यथा यज्ञम् अतन्वत विस्तारितवन्तः । तथा योगिनोऽपि पुरुषेणैवामृतभूतेन दीपितेनात्मना आत्मयज्ञं समधिकृतवन्तः । अत्र यज्ञे वसन्तः आज्यमासीत् ग्रीष्मः इध्मः शरद्धविरिति । इतरयागे वसन्तशब्देन सात्त्विको गुण उच्यते । ग्रीष्मशब्देन राजसः । शरच्छब्देन तामसः । त्रयो हि गुणास्तत्रात्मयज्ञे योगिनो जुह्वतीति ॥ १४ ॥

**म०** यत् यदा पूर्वोक्तक्रमेण देवशरीरेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतातनिषत तदानीमस्य यज्ञस्य वसन्तः ऋतुरेवाज्यमासीत् । आज्यत्वेन संकल्पितवन्त इत्यर्थः । एवं ग्रीष्मः इध्मः आसीत् । ग्रीष्ममेवेध्मत्वेन संकल्पितवन्तः । तथा शरत् हविः आसीत् । शरदमेव पुरोडाशादिहविष्ट्वेन संकल्पितवन्तः । पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम् । अत्र कण्डिकाव्युत्क्रमोऽस्ति अस्यानन्तरं तं यज्ञम् ( ९ ) ततः तस्माद्यज्ञादिति ( ६ ) तिस्रः क्रमेणैव । ततः सप्तास्यासन्निति ( १५ ) क्रमोऽपेक्षितः ॥ १४ ॥

## पञ्चदशी ।

सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥

**उ०** सप्तास्यासन् । सप्त अस्य आसन् परिधयः त्रिःसप्त समिधः कृताः । देवाः यत् यज्ञम् तन्वानाः अबध्नन् पुरुषम् पशुम् । देवा इन्द्रादयः यथा यज्ञं पुरुषमेधाख्यं विस्तारयन्तः पुरुषं पशुम् अबध्नन् हतवन्तः अस्य पुरुषमेधयज्ञस्य सप्त समुद्राः परिधयः आसन् । भारते हि वर्षे यागाः प्रवर्तन्ते । त्रिःसप्त छन्दांसि गायत्र्यादीनि समिधः

कृताः आत्मयागे परिधिशब्देन पृथिव्यापस्तेजोवायुराकाशं मनोबुद्धिरित्येते परिधयः कल्प्यन्ते । त्रिःसप्त समिधः । पञ्चमहाभूतानि पृथिव्यादीनि । पञ्चतन्मात्राणि रूपादीनि । पञ्च बुद्धीन्द्रियाणि श्रोत्रादीनि । पञ्च कर्मेन्द्रियाणि पाण्यादीनि मनश्च एताः त्रिःसप्त समिधः कल्पयन्ति । तथा देवा दीप्यमाना ज्ञानेन योगिनः समाध्याख्यं यज्ञं तन्वाना विस्तारयन्तः । पुरुषं ज्ञानं पुरुषमेधपशुरूपेणावस्थितम् अबध्नन् अगृह्णन् ॥ १५ ॥

**म०** यत् यदा देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वं (१४) पुरुषेण हविषेत्युक्तम् । तदा संकल्पितस्य यज्ञस्य सप्त गायत्र्यादीनि छन्दांसि परिधयः आसन् ऐष्टिकस्याहवनीयस्य त्रयः परिधय औत्तरवेदिकाः त्रयः आदित्यः सप्तमः परिधिः प्रतिनिधिरूपः तथा च श्रुतिः 'गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति'इति । तत एते आदित्यसहिताः सप्त परिधयोत्र सप्तच्छन्दोरूपाः । त्रिःसप्त त्रिगुणाः सप्त एकविंशतिसंख्याकाः समिधः कृताः 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यः' एते एकविंशतिरेकविंशतिदारुयुक्तेध्मत्वेन भाविताः । यद्वा सप्त समुद्राः क्षीरोदादयोऽस्य यज्ञस्य परिधयः आसन् । भारतखण्डे यागा भवन्तीति समुद्राणां परिधित्वम् । त्रिः त्रिगुणाः सप्त छन्दोवर्गाः समिधः कृताः गायत्र्यादीनि सप्त अतिजगत्यादीनि सप्त कृत्यादीनि सप्तेति ॥ १५ ॥

## षोडशी ।

य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन् । ते ह॒ नाकं॑ महि॒मान॑ः सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः ॥ १६ ॥

**उ०** यज्ञेन यज्ञम् । यज्ञेन यज्ञम् अयजन्त देवाः तानि धर्माणि प्रथमानि आसन् । ते ह नाकम् महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः । यथा इन्द्रादयो देवाः यज्ञेन ज्योतिष्टोमाख्येन यज्ञपुरुषं वासुदेवम् विधिना अयजन्त । यतः तानि यजनरूपाणि धर्माणि प्रथमानि आसन् ते ह महाभाग्ययुक्ताः नाकं सचन्त स्वर्गं सेवन्ते । यत्र पूर्वे साध्याः प्रथमे सुराः सन्ति विद्यन्ते देवाः तेजसा देदीप्यमानाः । एवं योगिनोऽपि दीपनाद्देवा यज्ञेन समाधिना नारायणाख्यं ज्ञानरूपम् अयजन्त । यतः तानि समाधिरूपाणि धर्माणि प्रथमान्यासन् ते तु नाकं सनकादीनां स्थानं गच्छन्ति । ये तु योगिनो महिमानः जन्मान्तरैर्निर्धूतगुणाः शुद्धाः ते नारायणाख्यं पुरुषमाविशन्ति । मुक्तिं गच्छन्तीत्यर्थः ॥ १६ ॥

**म०** पूर्वप्रपञ्चनोक्तमर्थं संक्षिप्याह । देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञेन यज्ञं यज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः । तस्मात्पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि भूतानि आसन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थं उक्तः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपाधिसाधकाः देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह एव ते महिमानः तदुपासका महात्मानः सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति । अडभाव आर्षः । सृष्टेः प्रवाहनित्यतां दर्शयति । तदुक्तम् 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति ॥१६॥

इति पुरुषसूक्तानुवाकः ।

## सप्तदशी ।

अ॒द्भ्यः सम्भृ॑तः पृथि॒व्यै रसा॑च्च वि॒श्वक॑र्मणः॒ सम॑वर्त॒ताग्रे॑ । तस्य॒ त्वष्टा॑ वि॒दध॑द्रू॒पमे॑ति॒ तन्मर्त्य॑स्य दे॒व॒त्वमा॒जान॒मग्रे॑ ॥ १७ ॥

**उ०** अद्भ्यः संभृतः । अद्भ्यः संभृतः पृथिव्यै रसात् च विश्वकर्मणः सम् अवर्तत अग्रे । तस्य त्वष्टा विदधत् रूपम् एति तत् मर्त्यस्य देवत्वम् आजानम् अग्रे । त्वष्टा प्रजापतिर्ब्रह्मा यद्रूपमेकांशभूतं विदधत्कृतवान् तदेव मर्त्यस्य मर्त्ये भूलोके देवत्वं प्रभुत्वम् आजानमाप्तमित्यर्थः । किंभूतोसौ । अद्भ्यः सकाशात् संभृतः पिण्डीभूतः पृथिव्या रसात् च । विश्वकर्मणः अग्रे प्रथमतः समवर्तत संयोगरूपेण कृतः । तस्यैव नान्यस्य तदेव कारणान्मर्त्ये प्राप्तवान् सतु पालनीयदानवादिविनाशनायेति ॥ १७ ॥

**म०** 'अद्भ्यः संभृत इत्युत्तरनारायणेनादित्यमुपस्थायेति' (१।३।६।२।२०) षट् कण्डिका उत्तरनारायणम् । उपान्त्ये द्वे अनुष्टुभौ शेषास्त्रिष्टुभः आदित्यदेवत्याः । पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते । अद्भ्यः जलात् पृथिव्याः सकाशाच्च पृथिव्यपां ग्रहणं भूतपञ्चकोपलक्षकम् । भूतपञ्चकात् यो रसः संभृतः पुष्टः । तथा विश्वं कर्म यस्य विश्वकर्मणः कालस्य रसात्प्रीतेः यो रसोऽग्रे प्रथमं समवर्तत समभवत् । भूतपञ्चकस्य कालस्य च सर्वं प्रति कारणत्वात्पुरुषमेधयाजिनो लिङ्गशरीरे पञ्च भूतानि तुष्टानि कालश्च । ततस्तुष्टेभ्यः कश्चिद्रसविशेषफलरूप उत्तमजन्मप्रद उत्पन्न इत्यर्थः । तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा आदित्यः एति प्रत्यहमुदयं करोति । अग्रे प्रथमं मर्त्यस्य मनुष्यस्य सतस्तस्य पुरुषमेधयाजिनः आजानदेवत्वं मुख्यं देवत्वम् सूर्यरूपेण । द्विविधा देवाः कर्मदेवा आजानदेवाश्च । कर्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः । सृष्ट्यादावुत्पन्ना आजानदेवाः । ते कर्मदेवेभ्यः श्रेष्ठाः 'ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः' (बृह० मा० ४।१।३५) इति श्रुतेः सूर्यादय आजानदेवाः ॥ १७ ॥

## अष्टादशी ।

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १८ ॥

उ० वेदाहम् वेद अहम् एतं पुरुषम् महान्तम् आदित्यवर्णम् तमसः परस्तात् । तम् एव विदित्वा अतिमृत्युम् एति न अन्यः पन्था विद्यते अयनाय । ऋषेः प्रतिवचनम् । अहमेतं पुरुषं वेद । महान्तं देशकालाद्यवच्छेदरहितम् । आदित्यवर्णं स्वप्रकाशम् । तमसः परस्तात् अविद्यायाः भेददर्शनम् । तमेव विदित्वा अतिमृत्युम् एति अतिक्रम्य मृत्युं तं पुरुषमनुप्रविशति । न अन्यः पन्था मार्गः तस्यायनाय गमनाय विद्यते ॥ १८ ॥

म० एतं महान्तं सर्वोत्कृष्टं पुरुषं सूर्यमण्डलस्थमहं वेद जानामि इति ऋषेर्वचनम् । कीदृशम् । आदित्यवर्णमादित्यस्येव वर्णो यस्य तम् । उपमान्तराभावात्स्वोपमम् । तथा तमसः परस्ताद्दूरतरम् । तमोरहितमित्यर्थः । तमःशब्देनाविद्योच्यते । तमेवादित्यं विदित्वा ज्ञात्वा मृत्युमत्येति अतिक्रामति परंब्रह्म गच्छति । अयनायाश्रयायान्यः पन्था मार्गः न विद्यते । सूर्यमण्डलान्तःपुरुषमात्मरूपं ज्ञात्वैव मुक्तिः ॥ १८ ॥

## एकोनविंशी ।

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥

उ० किंभूतं तं विशिष्यते । प्रजापतिश्चरति । प्रजापतिः चरति गर्भे अन्तः अजायमानः बहुधा विजायते । तस्य योनिम् परिपश्यन्ति धीराः तस्मिन् ह तस्थुः भुवनानि विश्वा । स एव पुरुष एकांशभूतः प्रजापतिः अस्य गर्भस्यान्तः अजायमानः चरति चतुर्विधेषु भूतेषु । स एव जायमानः बहुधाऽनेकप्रकारं विजायते । ये धीराः योगिनः ते तस्य योनिं परिपश्यन्ति सर्वत्यागेन परिहरन्ति । विश्वे त्रैलोक्ये भुवनानि तस्मिन्नातस्थुः ॥ १९ ॥

म० यः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति । यश्चाजायमानोऽनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते । धीराः ब्रह्मविदस्तस्य प्रजापतेः योनिं स्थानं स्वरूपं परिपश्यन्ति अहं ब्रह्मास्मीति जानन्ति । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि । सर्वं तदात्मकमेवेत्यर्थः ॥१९॥

## विंशी ।

यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥



उ० यो देवेभ्यः । यः देवेभ्यः आतपति यः देवानां पुरः हितः । पूर्वः यः देवेभ्यः जातः नमः रुचाय ब्राह्मये । अग्रे यो देवेभ्यः । योगिनस्तं नमन्ति ध्यायन्ति । यो देवेभ्यः सर्वेभ्यः आतपति अतिशयेन तेजसा तपति आदित्यरूपेणेत्यर्थः । यश्च देवानां पुरोऽग्रे इन्द्रत्वेन स्थितः । यश्च पूर्वः अग्रे ब्रह्मरूपेण देवेभ्यो जातः । तस्मै रुचाय तेजसे ब्राह्मये ब्रह्मपुरुषापत्याय नमः ॥ २० ॥

म० यः प्रजापतिरादित्यरूपो देवेभ्योऽर्थायातपति द्योतते । यश्च देवानां पुरोहितः सर्वकार्येष्वग्रे नीतः । यश्च देवेभ्यः सकाशात्पूर्वः जातः प्रथममुत्पन्नः तस्मै आदित्याय नमः । कीदृशाय । रोचतेऽसौ रुचस्तस्मै दीप्यमानाय 'इगुपध–' (पा० ३ । १ । १३५ ) इति कप्रत्ययः । तथा ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिः । इञि टिलोपः । ब्रह्मावयवभूताय वा ॥ २० ॥

## एकविंशी ।

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ २१ ॥

उ० रुचं ब्राह्मम् । रुचं ब्राह्मम् जनयन्तः देवाः अग्रे तत् अब्रुवन् । यः त्वा एवम् ब्राह्मणः विद्यात् तस्य देवाः असन् वशे । रुचं देदीप्यमानं ब्राह्मं ब्रह्मण उत्पन्नं जनयन्तः सृष्ट्यर्थम् देवा योगिनः तेजसा दीप्यमानाः यत् अब्रुवन् यदूचुः अग्रे प्रथमतः । किमूचुः । अपरोपि यो ब्राह्मणः स ब्रह्म विद्याज्जानीयात् तस्य देवा असन्वशे । सोऽपि सनकादीनां स्थानं गच्छतीत्यर्थः ॥ २१ ॥

म० देवाः दीप्यमानाः प्राणाः रुचं शोभनं ब्राह्मं ब्रह्मणोऽपत्यमादित्यं जनयन्तः उत्पादयन्तः अग्रे प्रथमं तत् वचोऽब्रुवन् ऊचुः 'ब्राह्मो जातौ' ( पा० ६ । ४ । १७१ ) इति निपातः । तत्किमत आह । यो ब्राह्मणः हे आदित्य, त्वा त्वामेवमुक्तविधिना उत्पन्नं विद्याज्जानीयात् तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति । आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः ॥ २१ ॥

## द्वाविंशी ।

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥ २२ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
एकत्रिंशोऽध्यायः ॥ ३१ ॥

उ० श्रीश्च ते । श्रीः च ते लक्ष्मीः च पत्न्यौ अहोरात्रे पार्श्वे नक्षत्राणि रूपम् अश्विनौ व्यात्तम् । इष्णन् इषाण अमुम् मे इषाण सर्वलोकम् मे इषाण । अस्य पुरुषस्यै-

तेऽवयवाः । श्रीश्च लक्ष्मीश्च पत्न्यौ भार्ये । अहश्च रात्रिश्च ते पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तं मुखम् । इष्णन् इषाण स्वर्गस्य लोकस्य ईशानः । एतद्गुणविशिष्टः नाम मोक्षस्य ईशानः सर्वलोकस्य च स एव देवानामीशान इति ॥२२॥

इति शौनकप्रणीतं पुरुषसूक्तभाष्यं समाप्तम् ॥

**म॰** ऋषिरादित्यं स्तुत्वा प्रार्थयते । हे आदित्य, श्रीः लक्ष्मीश्च ते तव पत्न्यौ । जायास्थानीये त्वद्वश्ये इत्यर्थः । यया सर्वजनाश्रयणीयो भवति सा श्रीः श्रीयतेऽनया श्रीः संपदित्यर्थः । यया लक्ष्यते दृश्यते जनैः सा लक्ष्मीः । सौंदर्यमित्यर्थः । अहोरात्रे तव पार्श्वे पार्श्वस्थानीये । नक्षत्राणि गगनगास्ताराः तव रूपम् । तवैव तेजसा भासमानत्वात् 'तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलकाः' इति ज्योतिःशास्त्रोक्तेः । अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विकासितमुखस्थानीये अश्वुवाते व्याप्तुतस्तौ अश्विनौ 'अश्विनौ द्यावापृथिव्यौ इमे हीदꣳ सर्वमश्नुवातां' इति श्रुतेः । य ईदृशस्तं त्वां याचे । इष्णन्कर्मफलमिच्छन्सन् इषाण इच्छ 'इषु इच्छायाम्' विकरणव्यत्ययः । यद्वा 'इष आभीक्ष्ण्ये' क्र्यादिः अत्रेच्छार्थः । किमेषणीयं तत्राह । अमुं परलोकं मे मम इषाण मम परलोकः समीचीनोऽस्त्वितीच्छा । अमोघेच्छत्वादिष्टं भवतीत्यर्थः । सर्वं मे मम इषाण सर्वलोकात्मकोऽहं भवेयमितीच्छेत्यर्थः । मुक्तो भवेयमित्यर्थः । 'सर्वं खल्विदं ब्रह्म' इति सामश्रुतेः ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
नरमेधाध्याय एष एकत्रिंशोऽयमीरितः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः ।

### तत्र प्रथमा ।

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥ १ ॥

**उ॰** इदानीं सर्वे मन्त्राः प्राक्प्रवायुमित्यस्मादनुवाकात्सर्वमेधसंबद्धाः । ब्रह्मण आर्षम् । तदेवाग्निः द्वे अनुष्टुभौ । विज्ञानात्मा परेणात्मना विशिष्टाद्ग्न्यादिषु ओतप्रोतत्वेनोपास्योऽभिधीयते । तदेव कारणमग्निः तदादित्यः तद्वायुः तत् उ चन्द्रमाः । उकार एवार्थे । तदेव शुक्रं त्रयीलक्षणम् । तद्ब्रह्म परम् ता आपः सः प्रजापतिः ॥ १ ॥

**म॰** पुरुषमन्त्रा उक्ताः । अथ सर्वमेधमन्त्रा उच्यन्ते प्रवायुमच्छेत्यस्मात्प्राक् ( ३३ । ५५ ) । स्वयंभुब्रह्मदृष्टा आत्मदेवत्याः सप्तमेऽहनि आप्तोर्यामसंज्ञिके सर्वहोमे विनियुक्ताः 'आप्तोर्यामः सप्तममहर्भवति' इत्युपक्रम्य 'सर्वं जुहोति सर्वस्यास्यै सर्वस्यावरुद्ध्यै' ( १३ । ७ । १ । ९ ) इति श्रुतेः । द्वे अनुष्टुभौ । विज्ञानात्मा परेणात्मना विशिष्टोऽग्न्यादिष्वोतप्रोतत्वेनोपास्योऽभिधीयते । अग्निः तदेव कारणं ब्रह्मैव आदित्यस्तदेव वायुस्तदेव चन्द्रमास्तत् तदेव । उ एवार्थे । शुक्रं शुक्रं तत् प्रसिद्धम् । ब्रह्म त्रयीलक्षणं तत् ब्रह्मैव । ताः प्रसिद्धाः आपः जलानि स प्रसिद्धः प्रजापतिरपि तदेव ब्रह्म ॥ १ ॥

### द्वितीया ।

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ॥ २ ॥

**उ॰** सर्वे निमेषाः । सर्वे निमेषत्रुटिकाष्ठादयः कालविशेषाः जज्ञिरे जाताः विद्युतः विद्युत्पर्जन्यस्तनयित्नवः । पुरुषादधि सकाशात् । नच एनं पुरुषं सर्वस्यापि जनकं सन्तं ऊर्ध्वं नच तिर्यञ्चं नच मध्ये परिजग्रभत् न परिगृह्णाति कश्चिदपि । नह्यसौ प्रत्यक्षादीनां विषयः । आगमो हि तत्र प्रवर्तते । तदुक्तम् 'एष नेतिनेत्यात्मना अगृह्यो नहि गृह्यते' इत्यादि ॥ २ ॥

**म॰** सर्वे निमेषाः त्रुटिकाष्ठाघट्यादयः कालविशेषाः पुरुषात् अधि पुरुषसकाशाज्जज्ञिरे । कीदृशात्पुरुषात् । विद्युतः विशेषेण द्योतते विद्युत् तस्मात् । किंच कश्चिदपि एनं पुरुषमूर्ध्वमुपरिभागे न परिजग्रभत्परिगृह्णाति । एनं तिर्यञ्चं चतुर्दिक्षु न परि॰ मध्ये मध्यदेशेऽपि न गृह्णाति । न ह्यसौ प्रत्यक्षादीनां विषय इत्यर्थः । 'स एष नेति नेत्यात्मागृह्यो न हि गृह्यते' इति श्रुतेः जग्रभत् । ग्रहेः शतरि जुहोत्यादित्वेन रूपम् ॥ २ ॥

### तृतीया ।

न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः । हिरण्यगर्भ इत्येष मा मा हिꣳसीदित्येषा यस्मान्न जात इत्येषः ॥ ३ ॥

**उ॰** न तस्य गायत्री द्विपदा । न तस्य पुरुषस्य प्रतिमा प्रतिमानभूतं किंचिद्विद्यते । यतो यस्य नाम महद्यश इत्येष वेदान्तविदः पठन्ति । हिरण्यगर्भ इत्येष चतुर्ऋचोऽनुवाकोदूरविप्रकर्षेण हिरण्यगर्भे प्रतिमाभूतमाह । मामाहिꣳसीदित्येषा च ऋक् यस्मान्न जात इत्येषा च द्विकण्डिकोऽनुवाकः षोडशिदैवत्योऽदूरविप्रकर्षेणाभिवदति । आसां च कण्डिकानां ब्रह्मयज्ञेऽध्ययनं कर्तव्यं प्रतीकग्रहणत्वात् ॥ ३ ॥

**म॰** द्विपदा गायत्री । तस्य पुरुषस्य प्रतिमा प्रतिमानमुपमानं किंचिद्वस्तु नास्ति । अतएव नाम प्रसिद्धं महत् यशः यस्यास्ति । सर्वातिरिक्तयशा इत्यर्थः । हिरण्यगर्भ इत्येषोऽनुवाकश्चतुर्ऋचः हिरण्यगर्भः यः प्राणतः यस्येमे य आत्मदाः इति ( २५ । १०—१३ ) । मा मा हिंसीज्जनितेत्येका एषा ( १२ । १०२ ) । यस्मान्न जातः इन्द्रश्च सम्राडिति ( ८ । ३६—३७ ) द्व्यृचोऽनुवाकः । एताः प्रतीकचोदिताः पूर्वं पठितत्वादादिमात्रेणोक्ताः ब्रह्मयज्ञे जपे च सर्वा अध्येयाः । एवं सर्वत्र ॥ ३ ॥

## चतुर्थी ।

एषो ह॑ दे॒वः प्र॒दिशोऽनु॒ सर्वाः॒ पूर्वो॑ ह जा॒तः स उ॒ गर्भे॑ अ॒न्तः । स ए॒व जा॒तः स ज॑नि॒ष्यमा॑णः प्र॒त्यङ् जना॑स्तिष्ठति स॒र्वतो॑मुखः ॥ ४ ॥

**उ०** एषो ह । त्रिष्टुभः सर्वाः सदसस्पतिमद्भुतमित्यस्या गायत्र्याः प्राक् । इदानीं स्वरूपतः कथयति । एष एव देवः प्रदिशः दिशश्च सर्वाः अनुव्याप्य वर्तन्ते तिर्यगूर्ध्वमधश्चेति । पूर्वो ह जात अनादिनिधनः संभूतः । स उ गर्भे अन्तः स एव च मातुरुदरे अन्तर्गर्भे व्यवतिष्ठते । स एव च जातः स एव च जनिष्यमाणः । तदुक्तम् 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'ति प्रतिपदार्थमञ्चनः । हे जनाः तिष्ठति सर्वतोमुखः सर्वतोऽक्षिशिरोग्रीवपाणिपादः तिष्ठति । अचिन्त्यशक्तिरित्यर्थः । जना इत्याद्युदात्तस्वरमपि स्वरामन्त्रितार्थस्यादावेव वर्तते ॥ ४ ॥

**म०** चतस्रस्त्रिष्टुभः । ह प्रसिद्धम् । एषो ह देवः सर्वाः प्रदिशः अनुतिष्ठति व्याप्य स्थितः । हे जनाः, ह प्रसिद्धमेष पूर्वः प्रथमो जात उत्पन्नः । गर्भे अन्तः गर्भमध्ये स उ स एव तिष्ठति । जातोऽपि स एव जनिष्यमाणः उत्पत्स्यमानोऽपि स एव । प्रत्यङ् प्रतिपदार्थमञ्चति प्रत्यङ् । सर्वतोमुखः सर्वतो मुखाद्यवयवा यस्य । अचिन्त्यशक्तिरित्यर्थः ॥ ४ ॥

## पञ्चमी ।

यस्मा॒ज्जा॒तं न पु॒रा किं च॒ नैव य आ॑ब॒भूव॒ भुव॑नानि॒ विश्वा॑ । प्र॒जाप॑तिः प्र॒जया॑ सꣳररा॒णस्त्रीणि॒ ज्योती॑ꣳषि सचते॒ स षो॑ड॒शी ॥ ५ ॥

**उ०** यस्मान्न जातः । यस्मात्पुरुषात् जातं न पुरा किंच एव । यश्च आबभूव संभावयति भुवनानि भूतजातानि विश्वा विश्वानि सर्वाणि । प्रजापतिरिति व्याख्यातम् । अयं षोडशकलिङ्गयुक्तः ॥ ५ ॥

**म०** यस्मात् पुरा किंचन किमपि न जातमेव । यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आबभूव समन्ताद्भावयामास । अन्तर्भूतो ण्यर्थः । स षोडशी षोडशावयवलिङ्गशरीरी प्रजापतिः प्रजया संरराणः रममाणः त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सचते सेवते ॥ ५ ॥

## षष्ठी ।

येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ढा येन॒ स्वः स्तभि॒तं येन॒ नाकः॑ । यो अ॒न्तरि॑क्षे॒ रज॑सो वि॒मानः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ६ ॥

**उ०** येन पुरुषेण द्यौः उग्रा उद्गूर्णा वृष्टिदायिनी कृता । पृथिवी च दृढा स्थिरा प्राणिधारणाय वृष्टिग्रहणाय च अन्ननिष्पादनाय च कृता । येन च स्वः आदित्यमण्डलं स्तभितं स्तम्भितम् । येन च नाकः स्वर्गो लोकः स्तम्भितः । यश्चान्तरिक्षे रजसः उदकस्य वृष्टिलक्षणस्य विमानो निर्माता । तं परित्यज्य कस्मै अन्यस्मै देवाय हविषा विधेम हविर्दद्म इति समंजसम् ॥ ६ ॥

**म०** येन पुरुषेण द्यौरुग्रा उद्गूर्णा । वृष्टिदा कृतेति शेषः । पृथिवी च येन दृढा कृता । सर्वप्राणिधारणं वृष्टिग्रहणं अन्ननिष्पादनं चेति भूमेर्दार्ढ्यम् । येन स्वः आदित्यमण्डलं स्तभितं स्तम्भितम् । येन नाकः स्वर्गोऽपि स्तम्भितः । यः अन्तरिक्षे नभसि रजसो जलस्य वृष्टिरूपस्य विमानः विमिमीते निर्माता । तं विहाय कस्मै देवाय हविषा विधेम हविर्दद्मः । न कस्मैचिदित्यर्थः ॥ ६ ॥

## सप्तमी ।

यं क्रन्द॑सी॒ अव॑सा तस्तभा॒ने अ॒भ्यैक्षे॑तां॒ मन॑सा॒ रेज॑माने । यत्राधि॒ सूर॒ उदि॑तो वि॒भाति॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ आपो॑ ह॒ यद्बृ॑ह॒तीर्य॑श्चि॒दापः॑ ॥ ७ ॥

**उ०** यं क्रन्दसी यं पुरुषं क्रन्दसी द्यावापृथिव्यौ अवसा अन्नेन हविर्लक्षणेन वृष्टिधारणाद्युपकारजनितेन । तस्तभाने संस्तम्भयन्त्यौ सर्वप्राणिजातम् । अभि ऐक्षेतां मनसा साध्वेतत्कृतमनेनेति । रेजमाने कम्पमाने । यत्र च अधि उपरि स्थितः यदाधार इत्यभिप्रायः । सूरः सूर्यः उदितः सन् विभाति । तं देवम् परित्यज्य कस्मै देवाय हविषा विधेम इति समंजसम् । आपो ह यद्बृहतीर्यश्चिदाप इति द्वे प्रतीकगृहीते । अत्रापि स्वाध्यायाध्ययनं प्राप्तं प्रतीकस्योपलक्षणार्थत्वात् ॥ ७ ॥

**म०** क्रन्दसी द्यावापृथिव्यौ यं पुरुषं मनसा अभ्यैक्षेतां साधु कृतमित्यपश्यताम् । कीदृश्यौ क्रन्दसी । अवसा हविर्लक्षणेनान्नेन वृष्टिजनकेन तस्तभाने प्राणिजातं स्तम्भयन्त्यौ व्यत्ययेन स्तम्भेर्ह्रादित्वम् । रेजमाने शोभमाने । सूरः सूर्यः यत्र द्यावापृथिव्योः उदितः सन् अधिविभाति अधिकं शोभते वित्रासयति वा । तं विहाय कस्मै हविर्दद्मः । आपो ह यद्बृहतीः ( २७ । २५ ) यश्चिदापः ( २७ । २६ ) द्वे प्रतीकोक्ते जपादावध्येये ॥ ७ ॥

## अष्टमी ।

वे॒नस्तत्प॑श्य॒न्निहि॑तं॒ गुहा॒ सद्यत्र॒ विश्वं॒ भव॒त्येक॑नीडम् । तस्मि॑न्नि॒दꣳ सं च॒ वि चै॑ति॒ सर्व॒ꣳ स ओत॒ः प्रोत॑श्च वि॒भूः प्र॒जासु॑ ॥ ८ ॥

**उ०** वेनस्तत्पश्यत् । वेनः पण्डितः विदितवेदान्तरहस्यः सद्भावनया तद्रूपं ब्रह्म पश्यत् पश्यति । निहितं स्थापितम् । गुहा गुहायामिव । सन्नित्यम् । यत्र विश्वं सर्वमिदं विका-

रजातं भवति एकनीडं एकनिलयमविभक्तम् । कारणमेवोपसंहृतं सर्वविशेषम् । तस्मिन्निदं सं च विचैति सर्वम् । तस्मिन्नेव परमात्मनि इदं विकारजातं सर्वं समेति च उपसंहृतिकाले । समेत्य च व्येति सृष्टिकाले सर्वमेव । स च परमेश्वरः ओतश्च शरीरभावेन प्रोतश्च जीवभावेन इतरथा वा विभूः विभवति च कार्यकारणभावेन प्रजासु ॥ ८ ॥

म० वेनः पण्डितो विदितवेदान्तरहस्यः तत् ब्रह्म पश्यत् पश्यति । जानातीत्यर्थः । कीदृशं तत् । गुहा गुहायां रहःस्थाने निहितं स्थापितं दुर्ज्ञेयमित्यर्थः । सत् नित्यम् । यत्र ब्रह्मणि विश्वं कार्यजातमेकनीडं भवति । एकमेव नीडमाश्रयो यस्य तत् । अविभक्तमविशेषं कारणमेव भवतीत्यर्थः । तस्मिन्ब्रह्मणि इदं सर्वं भूतजातं समेति च सङ्गच्छते संहारकाले व्येति च निर्गच्छति सर्गकाले । स परमात्मा प्रजासु ओतः प्रोतश्च ऊर्ध्वतन्तुषु पट इव शरीरभावेन ओतः तिर्यक्तन्तुषु पट इव शरीरिभावेन प्रोतश्च । कीदृशः । विभूः कार्यकारणरूपेण विविधं भवतीति विभूः । सर्वं स एवेत्यर्थः ॥ ८ ॥

## नवमी ।

प्र तद्वो॑चेद॒मृतं॒ नु वि॒द्वान्ग॑न्ध॒र्वो धाम॒ विभृ॑तं॒ गुहा॒ सत् । त्रीणि॑ प॒दानि॒ निहि॑ता॒ गुहा॑स्य॒ यस्तानि॒ वेद॒ स पि॒तुः पि॒तास॑त् ॥ ९ ॥

उ० प्र तत् प्रवोचेत् प्रब्रूयात् तत् अमृतं शाश्वतम् । नु क्षिप्रम् विद्वान् पण्डितः गन्धर्वः । गन्धर्वलोके हि ब्रह्मविद्या सुतरां ज्ञायते । धामस्थानम् । विभृतं विभृतं नानाभूतं सर्गस्थितिप्रलयैः । गुहासत् गुहायामिव निगूढम् अविवृतवेदान्तरहस्यसद्भावानाम् । किंच । त्रीणि पदानि निहितानि गुहा गुहायामिव अस्य अमृतस्य सर्गस्थितिप्रलयाः त्रयो वा वेदाः त्रयो वा कालाः । भूयस्त्वोपलक्षणार्थं वा । भूयांसो हि तत्र गुणाः श्रूयन्ते विज्ञानघनानन्दसत्यसंकल्पादयः । परब्रह्मान्तर्याम्यव्याकृतानि वा त्रयः पादाः । यश्च तानि वेद जानाति स पितुरपि पिता भवति । परं ब्रह्म भवतीत्यर्थः । तद्धि ब्रह्मरूपं श्रेष्ठम् ॥ ९ ॥

म० गां वेदवाचं धारयति विचारयतीति गन्धर्वः वेदान्तवेत्ता विद्वान् पण्डितः नु क्षिप्रम् अमृतं शाश्वतम् तत् ब्रह्म प्रवोचेत् प्रब्रूयात् । गुहा गुहायां सत् विद्यमानम् धाम स्वरूपं विभृतं विहृतं सर्गस्थितिप्रलयरूपैर्विभक्तम् । किंच अस्यामृतस्य त्रीणि पदानि स्वरूपाणि गुहा गुहायां निहिता निहितानि । पदानि सर्गस्थितिप्रलयाः वेदाः काला वा ब्रह्मान्तर्यामिविज्ञानात्मानो वा । किंच यः तानि पदानि वेद जानाति स पितुः ब्रह्मणोऽपि पिता परमात्मा असत् भवति । परंब्रह्मैव भवतीत्यर्थः ॥ ९ ॥

## दशमी ।

स नो॒ बन्धु॑र्जनि॒ता स वि॑धा॒ता धामा॑नि॒ वेद॒ भुव॑नानि॒ विश्वा॑ । यत्र॑ दे॒वा अ॒मृत॑मानशा॒नास्तृ॒तीये॒ धाम॑न्न॒ध्यैर॑यन्त ॥ १० ॥

उ० स नो बन्धुः । स नोऽस्माकं बन्धुः स चास्माकं जनिता । जनयितेति प्राप्ते 'जनिता मन्त्रे' इति णिचोलोपः । सच नो विधाता धारयिता । यः धामानि ब्रह्मणः स्थानानि वेद । भुवनानि भूतजातानि विश्वा सर्वाणि वेद । नानात्मनो भिन्नानि वेद । किंच । यत्र देवा अग्न्यादयः अमृतं परब्रह्मलक्षणम् । आनशानाः व्याप्नुवन्तः तृतीये धामन् धामनि स्थाने अधि उपरि स्थिताः ऐरयन्त स्वेच्छया प्रवर्तन्ते तच यो वेद स नो बन्धुरित्याद्यनुवर्तते ॥ १० ॥

म० स परमात्मा नोऽस्माकं बन्धुः बन्धुवन्मान्यः । जनिता जनयिता 'जनिता मन्त्रे' ( पा० ६ । ४ । ५३ ) इति णिचो लोपः । स च विधाता धारयिता । सः विश्वा सर्वाणि भुवनानि भूतजातानि धामानि स्थानानि च वेद । देवा अग्न्यादयः तृतीये धामन् धामनि स्थाने स्वर्गरूपे अध्यैरयन्त स्वेच्छया वर्तन्ते । कीदृशा देवाः । अमृतं मोक्षप्रापकं ज्ञानं यत्र ब्रह्मणि आनशानाः व्याप्नुवानाः अश्नुवते आनशानाः 'बहुलं छन्दसि' ( पा० २ । ४ । ७६ ) इत्यशेर्ह्वादित्वेन द्वित्वे शानचि अभ्यासस्य नुगागमः । ब्रह्मनिष्ठं ज्ञानं प्राप्ताः सन्तः स्वर्गे देवा मोदन्त इति भावः ॥ १० ॥

## एकादशी ।

प॒रीत्य॑ भू॒तानि॑ प॒रीत्य॑ लो॒कान्प॒रीत्य॒ सर्वाः॑ प्र॒दिशो॒ दिश॑श्च । उ॒प॒स्थाय॑ प्रथम॒जामृ॒तस्या॒त्मना॒त्मान॑म॒भि संवि॑वेश ॥ ११ ॥

उ० इदानीं सर्वेषु भूतेष्वहमस्मि सर्वाणि च भूतानि मयि सन्तीत्येतद्दर्शनावगुण्ठितस्य सर्वमेधयाजिनो मुक्तिरुच्यते द्वाभ्यां कण्डिकाभ्याम् । नचात्र सर्वमेधो ग्रहः कर्तव्यो दर्शनस्य प्राधान्यात् । एवं हि पश्यतो यजमानस्याग्निहोत्रादयो यज्ञाः सर्वे सर्वमेधा एव । आलम्बनमात्रं हि तत्र यज्ञाः । परीत्य भूतानि अनेन दर्शनेन परिज्ञाय सर्वाणि भूतानि एवमेतदित्यवधार्य । एवं परिज्ञाय च सर्वान् लोकान् । परिज्ञाय च सर्वाः दिशः । परिज्ञाय च सर्वाः प्रदिशः । उपस्थाय च प्रथमजां वाचं त्रयीलक्षणाम् । 'अपिहि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यते' तिश्रुतेः प्रथमजा वाक् । ऋतस्य यज्ञस्य आत्मना आत्मानम् । परेण ब्रह्मणा विशिष्टं ब्रह्म अभिसंविशति अपुनरावृत्तये ॥ ११ ॥

म० इदानीं सर्वभूतेष्वहमस्मि सर्वाणि भूतानि मयीति ज्ञानवतः सर्वमेधयाजिनो मुक्तिरुच्यते । किंच सर्वमेधग्रहोऽपि

न ज्ञानं प्रधानम् । ब्रह्मज्ञानवतो यजमानस्याग्निहोत्रादयोऽपि यज्ञाः सर्वमेधा एवेत्याह परीत्य भूतानीति कण्डिकाभ्याम् । एवंज्ञानवान् सर्वमेधयाजी आत्मना जीवरूपेण ऋतस्य यज्ञस्यात्मानं यज्ञाधिष्ठातारं परमात्मानमभिसंविवेश प्रविशति । ब्रह्मैव भवतीत्यर्थः । किं कृत्वा । भूतानि परीत्य सर्वभूतानि ब्रह्मत्वेन विज्ञाय । लोकान्भूरादीन्परीत्य ब्रह्मरूपाञ्ज्ञात्वा । सर्वाः प्रदिशः विदिशः दिशश्च परीत्य तद्रूपा ज्ञात्वा । प्रथमजां प्रथमोत्पन्नां त्रयीरूपां वाचमुपस्थाय संसेव्य । यज्ञादि कृत्वेत्यर्थः । 'अपिहि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यत' इति श्रुतेः प्रथमजा वाक् वेदरूपा ॥ ११ ॥

## द्वादशी ।

परि॒ द्यावा॑पृथि॒वी स॒द्य इ॒त्वा परि॑ लो॒कान्परि॒ दिश॒: परि॒ स्व॑: । ऋ॒तस्य॒ तन्तुं॒ वित॑तं वि॒चृत्य॒ तद॑पश्य॒त्तद॑भव॒त्तदा॑सीत् ॥ १२ ॥

उ० परि द्यावा । परीत्ययमुपसर्ग इत्वेत्यनेन संबध्यते । परीत्य द्यावापृथिव्यौ अनेन दर्शनेन परीत्य च लोकान् परीत्य च दिशः परीत्य च स्वः आदित्यम् । ऋतस्य यज्ञस्य तन्तुं विततं विचृत्य विच्छिद्य परिसमाप्य । सद्य एव तत् तथाभूतमात्मानम् अपश्यत् पश्यति । तदभवत् तथाभूतं ब्रह्म भवति । तदासीत् तदेवास्ति । तदुक्तम् 'तदेव सन्तस्तदु तद्भवामः' । 'यथा ह्येकस्याग्नेः प्रदीपसहस्राणि तुल्यशक्तीनि निर्गच्छन्ति एवं परमात्मन इमे जीवा अभ्युच्चरन्ति' । आभ्यां कण्डिकाभ्यां ग्रहस्थानामेव मुक्तिर्दर्शिता भवति । तेषां हि भूयांस उपायाः यज्ञादयः ॥ १२ ॥

म० परीत्युपसर्ग इत्वेत्यनेन संबध्यते । सर्वमेधयाजी तत् ब्रह्म अपश्यत् पश्यति तत् अभवत् भवति तत् आसीत् वस्तुगत्या तदेवास्ति । अज्ञाननिवृत्तिरेव दर्शनं भवनं चेति भावः । किं कृत्वा । द्यावापृथिवी सद्यः परि इत्वा परीत्य तद्रूपेण ज्ञात्वा । लोकान् परीत्य दिशः परीत्य स्वरादित्यं च परीत्य । गुह्यं वस्तु पुनःपुनः कथितं चित्तमारोहतीति पुनरुक्तिः । ऋतस्य यज्ञस्य तन्तुमितिकर्तव्यतां विततं प्रसारितं यथा तथा विचृत्य समाप्य यज्ञं कृत्वेत्यर्थः । 'तदेव सन्तस्तदु तद्भवाम' इति श्रुतेः 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेश्च ब्रह्मरूपस्य जीवस्याज्ञाननिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः ॥ १२ ॥

## त्रयोदशी ।

सद॑स॒स्पति॒मद्भु॑तं प्रि॒यमिन्द्र॑स्य॒ काम्य॑म् । स॒निं मे॒धाम॑यासिषꣳ स्वाहा॑ ॥ १३ ॥

उ० इतउत्तरम् तिसृभिः कण्डिकाभिर्मेधा याच्यते श्रीश्च चतुर्थ्यां । सदसस्पतिम् सदसस्पतिर्देवता सदो यज्ञगृहं तस्य पतिः तम् । अद्भुतं महान्तं अचिन्त्यशक्तिम् । प्रियमिन्द्रस्य । काम्यं कामसंपत्करम् कमनीयं वा धनमेधार्थिभिः । सनिं धनं मेधाम् अयासिषम् याचे । द्विकर्मा चायं धातुः ॥ १३ ॥

म० इत उत्तरमृक्त्रये मेधा याच्यते । चतुर्थ्यां श्रीर्याच्यते । प्रथमा गायत्री लिङ्गोक्तदेवता । अग्निं सनिं द्रव्यदानं मेधां बुद्धिं च अयासिषं याचे । द्विकर्मकः । कीदृशमग्निम् । सदसः यज्ञगृहस्य पतिं पालकम् अद्भुतमचिन्त्यशक्तिम् इन्द्रस्य प्रियं मित्रं काम्यं कामनीयं धनमेधार्थिभिः ॥ १३ ॥

## चतुर्दशी ।

यां मे॒धां दे॑वग॒णाः पि॒तर॑श्चो॒पास॑ते । तया॒ माम॒द्य मे॒धया॑ग्ने मे॒धावि॑नं कुरु॒ स्वाहा॑ ॥ १४ ॥

उ० याम् मेधाम् । तिस्रोऽनुष्टुभ आग्नेय्यः । यां मेधां देवगणाः पितरश्च उपासते पूजयन्ति । तया माम् अद्य मेधया हे अग्ने, मेधाविनं कुरु स्वाहा सुहुतमस्तु ॥ १४ ॥

म० अनुष्टुप् । हे अग्ने, तया मेधया अद्य मां मेधाविनं बुद्धियुक्तं कुरु । स्वाहा सुहुतमस्तु । 'अस्मायामेधास्रजो विनिः' ( पा० ५ । २ । १२१ ) इति विनिप्रत्ययः । मेधास्यास्तीति मेधावी तम् । तया कया । देवगणाः देवसमूहाः पितरश्च यां मेधामुपासते पूजयन्ति । देवपितृमान्या बुद्धिरस्माकमस्त्वित्यर्थः ॥ १४ ॥

## पञ्चदशी ।

मे॒धां मे॒ वरु॑णो ददातु मे॒धाम॒ग्निः प्र॒जाप॑तिः । मे॒धामिन्द्र॑श्च वा॒युश्च॑ मे॒धां धा॒ता द॑दातु मे॒ स्वाहा॑ ॥ १५ ॥

उ० मेधां मे । लिङ्गोक्तदेवता । मेधाम् मे मह्यं वरुणो ददातु । मेधां चाग्निः प्रजापतिश्च । मेधां इन्द्रश्च वायुश्च । मेधां च धाता ददातु मे मह्यम् स्वाहा सुहुतमस्तु ॥ १५ ॥

म० लिङ्गोक्तदेवतानुष्टुप् । वरुणो मे मह्यं मेधां ददातु । अग्निः प्रजापतिश्च मे मेधां ददातु । इन्द्रः वायुश्च मे मेधां ददातु । धाता मे मेधां ददातु स्वाहा सुहुतमस्तु ॥ १५ ॥

## षोडशी ।

इ॒दं मे॒ ब्रह्म॑ च क्ष॒त्रं चो॒भे श्रिय॑मश्नुताम् । मयि॑ दे॒वा द॑धतु॒ श्रिय॑मुत्त॒मां तस्यै॑ ते॒ स्वाहा॑ ॥१६॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

उ० इदं मे । श्रीः ऋक् । इदं ब्रह्म च क्षत्रं च उभे ब्रह्मक्षत्रे श्रियम् अश्नुताम् मदीयां श्रियमुपजीवताम् । मयि च देवाः दधतु स्थापयन्तु श्रियम् उत्तमाम् । ययाहं सर्वजनभोग्यो भवामि । तस्यै ते स्वाहा । या त्वमेवं सर्वजनैरभिलष्यसे तस्यै श्रियै ते तुभ्यं स्वाहा सुहुतमस्तु । अप्राप्य मेधां श्रियं च न यज्ञाः सिध्यन्तीत्येष संबन्धः ॥

इति उवटकृतौ मन्त्रभाष्ये द्वात्रिंशत्तमोऽध्यायः ॥

मः वृत्राणि

म० मन्त्रोक्तदेवतानुष्टुप् । श्रीकामोऽनया श्रियं याचते । ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः इदमिमे उभे ब्रह्मक्षत्रे मे मम श्रियमश्नुताम् । देवाः मयि उत्तमां श्रियं दधतु स्थापयन्तु । तस्यै प्रसिद्धायै ते तुभ्यं श्रियै स्वाहा सुहुतमस्तु । चौ समुच्चयार्थौ । श्रीमेधे विना यज्ञासिद्धेस्ते प्रार्थ्येते ॥ १६ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सार्वमेधिकमन्त्रोक्तिर्द्वात्रिंशोऽध्याय ईरिता ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ।

### तत्र प्रथमा ।

अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः । श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः ॥ १ ॥

उ० इत उत्तरं सप्तदशकाः पुरोरुग्गाना अस्मिन्नध्याये पठ्यन्ते । तत्र सार्वमेधिकानां चतुर्णामह्नां चत्वार आद्याः पुरोरुच इत्येवमेते विदुः । यथास्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति तस्याग्नेया ग्रहा भवन्ति आग्नेय्यः पुरोरुच इति । एवमिन्द्र स्तुदुक्थ्यो द्वितीयमहर्भवति तस्य एन्द्राग्रहा भवन्ति ऐन्द्र्यः पुरोरुचः । सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति तस्य सौर्या ग्रहा भवन्ति सौर्यः पुरोरुचः । वैश्वदेवश्चतुर्थमहर्भवति तस्य वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः पुरोरुच इति । य एतैस्त्रयोनुवाका अनारभ्याधीताः । एताश्च पुरोरुचो यच्छन्दस्काः प्रकृतिदृष्टास्तच्छन्दस्का इहापि प्रायो दृश्यन्ते अन्त्यमनुवाकं वर्जयित्वा । अस्या जरासः । ऐन्द्रवायवस्य द्वे पुरोरुचौ । अस्य यजमानस्य अजरासः जररहिताः । दमां ग्रहाणाम् अरित्राः अरणाः । नावामिव केनिपाताः। यद्वा दमां दमनीयानां रक्षसाम् अरणास्तारकाः। अर्चद्धूमासः अर्चन्पूजनीयो धूमो येषां ते अर्चद्धूमासः पूज्यधूमाः । पावकाः पावयितारश्च अग्नयो भवन्तु । अस्य च श्वितीचयः श्वेतत्वप्रचयकारिणः । श्वात्रासः । श्वात्रशब्दः क्षिप्रवचनः । क्षिप्रकर्माणः । भुरण्यवः भर्तारः वनसदः रेफ उपजनः । वनमुदकं तत्र सन्ना उदकाभिपुता इत्यर्थः । वायवो न वायव इवोद्दीपयितारः गृहे रक्ष्यमाणाः सोमाः सन्तु । यद्वा सर्वाण्यरण्यग्निविशेषणानि । श्वितीचयः श्वेतत्वमञ्चनाः । वायव इव श्वात्रासः क्षिप्रगमनाः । वनर्षदो वनसदः ।'वनसदो वेटो रेफेणे'ति प्रातिशाख्यसूत्रेण रेफागमः। सोमा इव यजमानेष्टदाः । समानमितरत् ॥ १ ॥

म० सर्वमेधेऽग्निष्टोमसंस्थेऽग्निष्टुत्संज्ञे प्रथमेऽहनि अस्याजरास इत्याद्या मह्यो अग्ने इत्यन्ताः सप्तदश ऋचोऽग्निदेवत्याः ... भवन्ति । पुरोरुक्शब्देन ऋग्रूपा ग्रहणमन्त्रा उच्यन्ते ... 'ऋग्घि पुरोरुक्' इति श्रुतेः । उक्थ्यमहावैश्वदेवपात्नीवतहारियोजनेषु यजूरूपे ग्रहणमन्त्रे सत्यपि 'तं वा अपुरोरुकं गृह्णाती'ति श्रुतेस्तत्र न दोषः । अतएवाग्नेयीभिर्ऋग्भिः एव निवर्त्यन्ते नोपयामादीनि । आद्ये द्वे ऐन्द्रवायवग्रहस्य पुरोरुचौ । वत्सप्रीदृष्टाग्नेयी त्रिष्टुप् आ वायविस्याः ( ७ । ७ ) स्थाने । अस्य यजमानस्य अग्नयः ईदृशाः सन्तु । कीदृशाः । अजरासः नास्ति जरा येषां ते अजराः वार्धक्यहीनाः। दमां गृहाणामरित्राः रक्षकाः नावामिव केनिपाताः । अरिभ्यः त्रायन्तेऽरित्राः । यद्वा दमानां दमनीयानां रक्षसामरित्राः तारकाः । विभक्तेर्डुडभावात्सवर्णदीर्घः । अर्चद्धूमासः अर्चन् अर्चनीयः पूजनीयो धूमो धूमोपलक्षिता ज्वाला येषां तेऽर्चद्धूमाः । पावकाः शोधकाः । श्वितीचयः श्वितिं श्वेतवर्णं चिन्वन्ति श्वितिचयः। चिनोतेः क्विप् अनित्यमागमशासनमिति तुगभावः श्वितिशब्दस्य छान्दसो दीर्घः । श्वेतत्वमुज्ज्वलत्वं यजमानस्य वर्धयन्तः । श्वात्रासः श्वात्रशब्दः क्षिप्रवाचकः । श्वात्राः क्षिप्रफलप्रदाः भुरण्यवः भरणकर्तारः । वनर्षदः वनसदः वने काष्ठे सीदन्तीति वनसदः 'वनसदोऽवेटो रेफेण' ( ३ । ३ । ११ ) इति प्रातिशाख्यसूत्रेण रेफागमः । वायवो न वायव इव दीपयितारः । सोमा इव यजमानेष्टदाः ॥ १ ॥

### द्वितीया ।

हरयो धूमकेतवो वातजूता उप द्यवि । यतन्ते वृथगग्नयः ॥ २ ॥

उ० हरयो धूमकेतवः । ये अग्नयः हरयो हरितवर्णाः । धूमकेतवः धूमप्रज्ञानाः । वातजूता वातगमनाः । उपद्यवि द्युलोकंप्रति । यतन्ते यत्नमाचरन्ति । वृथक् । पृथगिति प्राप्ते वर्णव्यापत्तिः । पृथक् नाना । ताम् स्तुम इति शेषः ॥ २ ॥

म० गायत्री विश्वरूपदृष्टा इन्द्रवायू इत्यस्याः ( ७ । ८ ) स्थाने । अग्नयः पृथक् पृथक् नानाप्रकारेण द्यवि स्वर्गे उपयतन्ते स्वर्गं गन्तुं यत्नं कुर्वन्ति । कीदृशाः । हरयः हरितवर्णाः। धूमकेतवः धूम एव केतुर्ज्ञापको येषां ते । यत्र धूमस्तत्राग्निरिति व्याप्तेः । वातजूताः वातेन जूतं गमनं प्रसारो येषां ते । 'आ वायो इन्द्रवायू इमे' ( ७ । ७-८ ) अनयोः स्थाने एते द्वे उक्ते ॥ २ ॥

### तृतीया ।

यजा नो मित्रावरुणा यजा देवाँ२॥ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥ ३ ॥

उ० यजा नः मैत्रवारुणी गायत्री । यज नः अस्माकम् मित्रावरुणा मित्रावरुणौ । यज च देवान् यज च ऋतं यज्ञम् बृहन्महान्तम् । हे अग्ने, यक्षि यज च स्वंदमं स्वकीयं गृहम् ॥ ३ ॥

**म०** गायत्री गोतमदृष्टा मैत्रावरुणस्य पुरोरुक् अयं वामित्यस्याः ( ७।९ ) स्थाने। हे अग्ने, नोऽस्माकं मित्रावरुणा यज। यज देवान्। यज बृहत् महत् ऋतं यज्ञम् स्वं दमं गृहं यक्षि यज॥ ३॥

## चतुर्थी।

युक्ष्वा हि देवहूर्तमाँ२॥ अश्वाँ अग्ने रथीरिव। नि होता पूर्व्यः सदः॥ ४॥

**उ०** अथाश्विनस्य। युक्ष्वाहीति व्याख्यातम्॥ ४॥

**म०** आश्विनग्रहस्य पुरोरुक् या वां कशेत्यस्याः स्थाने ( ७।११ )। व्याख्यातेयम् ( १३।३७ )॥ ४॥

## पञ्चमी।

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते। हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः॥ ५॥

**उ०** द्वे विरूपे। त्रिष्टुप् शुक्रस्य। द्वे राज्यहनी विरूपे नानारूपे। कृष्णा रात्रिः शुक्लमहः। चरतः आदित्येन सहाहश्चरति इतरत्र अग्निनातु रात्रिः। स्वर्थे शोभनार्थे। अन्यान्या वत्ससमुपधापयेते। अन्या एकारात्रिः एकमग्निरूपं वत्सम् अन्या एकमहः एकमादित्यरूपं वत्सम् उपधापयेते। रात्रिरग्निदेवत्यमग्निहोत्रम् अहः सूर्यदेवत्यमग्निहोत्रं वत्समित्याशयः। किंच हरिर्हरितवर्णोऽग्निः अन्यस्यां रात्रौ स्वधावान् अन्नवानुपभोग्यः तापपाकप्रकाशैर्भवति। शुक्रः शुक्लवर्ण आदित्यः अन्यस्यामहनि ददृशे दृश्यते सुवर्चाः सुतेजाः। यद्वा द्वे द्यावापृथिव्यौ विरूपे नानारूपे परस्परापेक्षया चरतः स्वर्थे कल्याणप्रयोजने। अन्या पृथिवी अग्निंवत्सम् अन्या द्यौरादित्यं वत्सम् उपधापयेते पोषयतः। किंच हरिरग्निः अन्यस्यां पृथिव्यां स्वधावान् भवति। शुक्र आदित्यश्च अन्यस्यां दिवि ददृशे सुवर्चाः दृश्यते सुतेजाः॥ ५॥

**म०** शुक्रग्रहपुरोरुक् कुत्सदृष्टा त्रिष्टुप् तं प्रत्नथेत्यस्याः ( ७।१२ ) स्थाने। द्वे राज्यहनी चरतः निरन्तरं प्रवर्तेते। कीदृशे। विरूपे विविधं रूपं ययोस्ते। कृष्णा रात्रिः शुक्लमहः। स्वर्थे शोभनोऽर्थो ययोस्ते कल्याणप्रयोजने। अन्यान्या अन्या च अन्या च वत्समुपधापयेते क्षीरं पाययतः। अन्या एका रात्रिः वत्समग्निमुपधापयते रात्रावग्निदेवत्यमग्निहोत्रम्। अन्या दिवसरूपा वत्समादित्यमुपधापयते अह्नि सूर्यदेवत्यमग्निहोत्रम्। किंच तदेवाह। अन्यस्यां रात्रौ हरिः हरितवर्णोऽग्निः स्वधावान् अन्नवान् भवति अन्यस्यामहनि शुक्रः शुक्र आदित्यः सुवर्चाः शोभनतेजाः ददृशे दृश्यते। यद्वा द्वे द्यावापृथिव्यौ अग्निर्भूमौ स्वधावान् रविर्दिवि सुवर्चाः दृश्यते॥ ५॥

## षष्ठी।

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्रवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे॥ ६॥

**उ०** मन्थिनः अयमिहेति व्याख्यातम्॥ ६॥

**म०** मन्थिग्रहपुरोरुक् अयं वेन इत्यस्याः ( ७।१६ ) स्थाने। व्याख्याता ( ३।१५ )॥ ६॥

## सप्तमी।

त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्। औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त॥ ७॥

**उ०** वैश्वदेवं गृह्णाति। त्रीणि शता शतानि त्री त्रीणि सहस्राणि त्रिंशत् नव च। देवाः असपर्यन्। सपर्यतिः परिचरणकर्मा। परिचरितवन्तः। कथमितिचेत्। औक्षन् असिञ्चन् अग्निम् घृतैः। अस्तृणन् बर्हिश्च अस्मै अग्नये। आत् इत् अथ एव अनन्तरमेव। होतारं वृत्वा न्यसादयन्त नितरां विनियुक्तवन्तः॥ ७॥

**म०** विश्वामित्रदृष्टा त्रिष्टुप् विश्वदेवदेवतस्याग्रयणग्रहस्य पुरोरुक्। ये देवास इति ( ७।१९ ) स्थाने। त्रीणि शता त्रीणि शतानि त्री त्रीणि सहस्राणि त्रिंशत् नव च देवाः यथा ३३३९। एते वस्वादिगणा देवा अग्निमसपर्यन् परिचरन्ति। सपर्यतिः परिचरणकर्मा। यद्वागमोक्ता देवाः 'नवैवाङ्गास्त्रिवृद्धाः स्युर्देवानां दशकैर्गणैः। ते ब्रह्मविष्णुरुद्राणां शक्तीनां वर्णभेदतः' इति। ते च ३३३ ३३३ ३३३ एतावन्तो भवन्ति। कथं परिचरन्ति तदाह। ते घृतैरग्निमौक्षन् असिञ्चयन् 'उक्ष सेचने' लुङ्। अस्मै अग्नये बर्हिरस्तृणन् आच्छादयन्। आत् इत् अनन्तरमेव होतारं वृत्वा हौत्रे कर्मणि न्यसादयन्त नियुक्तवन्तः। घृतसेचनबर्हिःस्तरणहोतृवरणमेवाग्निपरिचर्येति भावः॥ ७

## अष्टमी।

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविंसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥ ८॥

**उ०** अथ ध्रुवस्य। मूर्धानं दिव इति व्याख्यातम्॥ ८॥

**म०** प्रकृतिवदेव ध्रुवग्रहपुरोरुक् व्याख्याता ( ७।२४ )॥ ८॥

## नवमी।

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः॥ ९॥

**उ०** ऐन्द्राग्नस्य। अग्निर्वृत्राणि गायत्री। अग्निः वृत्राणि

यजमानस्य वृजिनानि। जंघनत् अत्यर्थं हन्ति। किंभूतः द्रविणस्युः धनं हविर्लक्षणमिच्छन्। केन हेतुना जंघनत्। विपन्यया। विपनिरर्चतिकर्मा। यजमानपूजया निमित्तभूतया। पुनः किंभूतोऽग्निः। समिद्धः दीप्तः शुक्रः शुक्लः आहुतः अभिहुतः सन्॥ ९॥

म० गायत्री भरद्वाजदृष्टा ऐन्द्राग्नग्रहपुरोरुक् इन्द्राग्नी आगतमित्यस्याः ( ७।३१ ) स्थाने। अग्निर्वृत्राणि पापानि जङ्घनत् अत्यर्थं हन्ति। यङ्लुगन्तम्। कया। विपन्यया पनतिरर्चतिकर्मा। विविधया पूजया पापं हन्ति। कीदृशोऽग्निः। द्रविणस्युः द्रविणो धनमिच्छति द्रविणस्यति 'सुप आत्मनः क्यच्' 'क्याच्छन्दसि' ( पा० ३।२।१७० ) इति क्यजन्तादुप्रत्ययः। हविर्लक्षणं धनमिच्छन्। समिद्धः दीप्तः। शुक्रः शुद्धः। आहुतः निमन्त्रितः॥ ९॥

## दशमी।

विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना। पिबा मित्रस्य धामभिः॥ १०॥

उ० वैश्वदेवस्य। विश्वेभिः सोम्यम् गायत्री। विश्वेभिः देवैः सह। सोमसंबन्धि मधु हे अग्ने, इन्द्रेण च सह वायुना च सह पिब। मित्रस्य धामभिर्नामभिः स्तुतः सन्। तदुक्तम् 'त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवसि दस्र ईड्यः' इति॥ १०॥

म० गायत्री मेधातिथिदृष्टा वैश्वदेवग्रहपुरोरुक् ओमासश्चर्षणीत्यस्याः ( ७।३३ ) स्थाने। हे अग्ने, विश्वेभिः विश्वैर्देवैः इन्द्रेण वायुना च सह सोम्यं सोममयं मधु पिव। कीदृशस्त्वम्। मित्रस्य धामभिः नामभिः स्तुत इति शेषः। 'त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवसि दस्र ईड्यः' इति श्रुतेः॥ १०॥

## एकादशी।

आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके। अग्निः शर्धमनवद्यं युवानꣳ स्वाध्यं जनयत्सूदयच्च॥ ११॥

उ० आ यत्। द्वाभ्यां मरुत्वतीयाभ्याम् द्वे त्रिष्टुभौ। व्यवहितपदप्रायः। आहुतिपरिणामवादिन्यौ। आ उपसर्गः आनट् इत्यनेनाख्यातेन संबध्यते। यत् यदा इषे अन्नाय निषिक्तं नितरां सिक्तं देवतोद्देशेन क्षिप्तम् शुचि मन्त्रैः संस्कृतम् तेजः जगदुत्पत्तिबीजम्। नृपतिम् अग्निम् आ आनट् अश्नोतेरेतद्रूपम्। व्याप्नोति। ततोपि रेतो मध्यस्थानं व्याप्नोति विद्युल्लक्षणं तेजः। द्यौरभीके द्यौरपि तस्याहुतिपरिणामभूतस्य रसस्य अभीके निकटएव वर्तते। तत् अग्निः शर्धम् शर्धं बलं तस्य हेतुभूतम्। अनवद्यं प्रशस्यम् युवानम् परिपक्वं रसम् स्वाध्यं सुष्ठु ध्यानीयम्। सर्वोपि वृष्टिमभिलषति। जनयत् जनयति अष्टभिर्मासैः। सूदयच्च। 'षूद क्षरणे'। निष्पन्नमुदकं चतुर्भिर्मासैः क्षरति च वृष्टिद्वारेण॥ ११॥

म० त्रिष्टुप् पराशरदृष्टा मरुत्वतीयग्रहपुरोरुक् इन्द्र मरुत्व इत्यस्याः ( ७।३५ ) स्थाने। आ उपसर्गः आनडित्यनेन संबध्यते। यत् यदा तेजः तेजसो हेतुभूतं हविर्नृपतिं नुर्यजमानस्य पालकमग्निमानट् अश्नुते व्याप्नोति। यदाग्नौ हविर्हूयत इत्यर्थः। तदा अग्निः रेतो जगद्बीजभूतं जलम् द्यौरभीके। प्रथमा षष्ठ्यर्थे। दिवः समीपेऽन्तरिक्षे जनयत् जनयति। मेघरूपेण च पुरः सूदयत् सूदयति क्षरति वृष्टिद्वारेण 'षूद क्षरणे'। कीदृशं तेजः। इषे वृष्ट्यै निषिक्तं देवतोद्देशेनाग्नौ सिक्तं हुतम्। शुचि मन्त्रसंस्कृतम्। कीदृशं रेतः। शर्धं बलहेतुभूतम्। अनवद्यं निर्दोषम् 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' ( पा० ३।१।१०१ ) इति गर्ह्यार्थेऽवद्यमिति निपातः। न अवद्यमनवद्यमगर्ह्यं प्रशस्यम्। युवानं युवतुल्यं परिपक्वरसं दृढमित्यर्थः। स्वाध्यं सुष्ठु आ समन्तात् ध्यायते चिन्त्यत इति स्वाध्यं चिन्तनीयम्। सर्वो वृष्टिमिच्छति। हविषा तर्पितोऽग्निरष्टमासैर्जलं निष्पाद्य वर्षासु वर्षतीत्यर्थः। व्यवहितपदो मन्त्रः॥ ११॥

## द्वादशी।

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु। सं जास्पत्यꣳ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि॥ १२॥

उ० अग्ने शर्ध। हे भगवन्नग्ने, शर्ध उत्सहस्व बलमाविष्कुरु। महते सौभगाय। महत्सौभाग्यं लोकस्थितिः। एवं कुर्वतस्तव द्युम्नानि उत्तमानि सन्तु। द्युम्नं द्योततेर्यशो वान्नं वा। हविर्लक्षणानि धनानि सन्तु यशांसि वा। किंच एतच्च त्वं प्रार्थ्यसे। संजास्पत्यम्। जायापतिमिति प्राप्ते आकारयकारयोर्लोपः सुक् च। सुयमं सुनियमं अन्योन्यबद्धरागम् समाकृणुष्व कुरुष्व। शत्रूयतां शत्रुत्वमिच्छताम्। अभितिष्ठ पद्भ्यामभिभव महांसि महत्त्वानि॥ १२॥

म० त्रिष्टुप् विश्ववारादृष्टा द्वितीयमरुत्वतीयपुरोरुक् मरुत्वन्तं वृषभमित्यस्याः ( ७।३६ ) स्थाने। हे अग्ने, त्वं शर्ध उत्सहस्व बलमाविष्कुरु। किमर्थम्। महते सौभगाय महत्सौभाग्यं लोकस्थितिः। उद्यच्छतस्तव द्युम्नानि उत्तमानि उत्कृष्टानि सन्तु 'द्युम्नं द्योततेर्यशो वान्नं वा' ( निरु० ५।५ ) इति यास्कः। हविर्लक्षणान्यन्नानि यशांसि वा सन्तु। किंच जास्पत्यं जायापत्यमित्यर्थं जास्पत्यमिति निपातः। जायापत्यं पत्नीयजमानरूपं सुयमं सुनियमं जितेन्द्रियमन्योन्याबद्धरागं समाकृणुष्व कुरु। सुष्ठु यम्यते सुयमम् 'ईषद्दुःसुषु' ( पा० ३।३।१२७ ) इति खल्प्रत्ययः। किंच शत्रूयतां शत्रुत्वमिच्छतां महांसि तेजांसि अभितिष्ठ आक्रमस्व अभिभव॥ १२॥

## त्रयोदशी ।

त्वाᳬं हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने । इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ १३ ॥

उ० त्वाᳬंहि । माहेन्द्रस्य त्रिष्टुप् । त्वां हि त्वामेव मन्द्रतमं मन्दनीयतमं मृदुहृदयं वा । अर्कशोकैः मन्त्रैर्दीप्तैः । यथोक्तस्थानकर्णानुप्रदानवद्भिः । देवताद्यात्मवित्तसन्तानगर्भगुरुशुश्रूषाधिगताविप्लावितब्रह्मचर्यैः । एवं हि मन्त्रा दीप्ताः स्युः । ववृमहे वृतवन्तो वयम् । त्वं च वृतः सन् महि महत् स्तोत्रम् नोऽस्माकम् श्रोषि शृणोषि । श्रुत्वा च प्रभावयसि कर्म हे अग्ने । किंच इत्थं नाम त्वं महती देवता । येन इन्द्रं न । उपमार्थीयो नकारः । इन्द्रमिव त्वा शवसा बलेन पृणन्ति पूरयन्ति । वायुमिव च पूरयन्ति राधसा हविर्लक्षणेन धनेन । नृतमाः मनुष्यतमाः मनुष्यश्रेष्ठाः ॥ १३ ॥

म० त्रिष्टुब् भरद्वाजदृष्टा माहेन्द्रग्रहपुरोरुक् इन्द्रो नृवदित्यस्याः ( ७ । ३९ ) स्थाने । हे अग्ने, वयं त्वां ववृमहे वृतवन्तः । कीदृशं त्वाम् । मन्द्रतममतिगम्भीरम् । कैः अर्कशोकैः अर्कवत् शोचन्तेऽर्कशोका मन्त्रास्तैः अविप्लुतब्रह्मचर्यैः । यथोक्तमधीता मन्त्रा अर्कवद्दीप्ताः स्युरिति भावः । हि यस्मात् नोऽस्माकं महि महत् स्तोत्रं त्वं श्रोषि शृणोषि । विकरणव्यत्ययः । किंच नृतमाः मनुष्यश्रेष्ठाः देवता देवतां त्वा त्वां राधसा हवीरूपेणान्नेन पृणन्ति पूरयन्ति । देवताशब्दात्सुपो लुक् । कीदृशं त्वाम् । शवसा बलेन इन्द्रं न इन्द्रमिव वायुमिव च स्थितम् । न इवार्थे उभयोः संबध्यते ॥ १३ ॥

## चतुर्दशी ।

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः । यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥ १४ ॥

उ० त्वे अग्ने आदित्यग्रहस्य धृत्यौ । त्वे तव हे अग्ने, स्वाहुत साधुना प्रकारेणाभिहुत । प्रियासः प्रियाः सन्तु सूरयः पण्डिताः । ये च यन्तारः निगृहीतसर्वविषयाः । ये च मघवानः धनवन्तः । जनानां मध्ये । न केवलं धनवन्त एव किंतर्हि । ऊर्वान् अन्नप्रकारान् दयन्त । दयतिर्दानार्थः । ददति । गोनाम् गवामिति प्राप्ते 'गोः पादान्ते' इति नुट् । गवां संबन्धिभिरुपसेचनैः सहितान् ॥ १४ ॥

म० द्वे बृहत्यौ आदित्यग्रहपुरोरुचौ । आद्या वसिष्ठदृष्टा अन्त्या प्रस्कण्वदृष्टा कदाचन स्तरीरसि कदाचन प्रयुच्छसीत्यनयोः ( ८ । २ । ३ ) स्थाने । सुष्ठु हूयते स्वाहुतः हे स्वाहुत हे अग्ने, जनानां मध्ये जनाः गोनां गवां संबन्धिभिर्दुग्धदधिकृतैः सह ऊर्वान् अन्नविशेषान् पुरोडाशादीन् दयन्त ददति 'दय दानगतिहिंसादानेषु' लङ् अडभाव आर्षः । ते सूरयः पण्डिताः त्वे तव प्रियासः सन्तु । कीदृशास्ते । यन्तारः निगृहीतेन्द्रियाः । मघवानः धनवन्तः । गोनामित्यत्र 'गोः पादान्ते' ( पा० ७ । १ । ५७ ) इति नुडागमः ॥ १४ ॥

## पञ्चदशी ।

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः । आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥ १५ ॥

उ० श्रुधि श्रुत्कर्ण । हे अग्ने, श्रुधि शृणु । 'श्रुशृणु' इत्यादिना धिभावः । सत्वरं यज्ञमाग्नेयम् । हे श्रुत्कर्ण, शृण्वतः कर्णावर्थिनां वचांसि यस्य स तथोक्तः । त्वयि श्रुतवति वह्निभिः वोढृभिर्देवैः । सयावभिः । 'या प्रापणे' वनिप् । समानमार्गिभिः सहिताः । आसीदन्तु बर्हिषि । मित्रः अर्यमा च । अन्ये च । प्रातर्यावाणः प्रातरेव हविःप्राप्तिर्येषां ते तथोक्ताः ॥ १५ ॥

म० शृणुतः इति श्रुतौ अर्थिवचःश्रोतारौ कर्णौ यस्य स श्रुत्कर्णः हे श्रुत्कर्ण, देवैः सह त्वमध्वरं यज्ञं श्रुधि शृणु । कीदृशैर्देवैः । वह्निभिः हवींषि वहन्ति ते वह्नयः तैः । सयावभिः सह यान्ति ते सयावानः तैः । किंच मित्रः अर्यमा प्रातर्यावाणश्च देवाः बर्हिषि आसीदन्तु उपविशन्तु प्रातर्यान्ति हविःप्राप्नुवन्ति प्रातःसवने येषां हविःप्राप्तिस्ते ॥ १५ ॥

## षोडशी ।

विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम् । अग्निर्देवानामव आवृणानः सुमृडीको भवतु जातवेदाः ॥ १६ ॥

उ० विश्वेषामदितिः । आदित्यग्रहे दधिश्रयणमन्त्रः । अयमपि पुरोरुचां मध्ये गण्यते । तथाहि । कदाचन स्तरीरसि । कदाचन प्रयुच्छसि । यज्ञो देवानामिति तिसृणामादित्येभ्यस्त्वेत्यनुषङ्गः । त्रिष्टुप् । योऽग्निः विश्वेषाम् अदितिः अदीनः । यज्ञियानां यज्ञसंपादकानाम् । विश्वेषां च अतिथिः मानुषाणाम् अग्निहोत्रिणाम् । सोऽग्निः देवानाम् अवः अन्नं हविर्लक्षणम् आवृणानः समर्पयन् । सुमृडीको भवतु । जातवेदाः जातप्रज्ञानः ॥ १६ ॥

म० त्रिष्टुब्गोतमदृष्टादित्यग्रहदधिश्रयणे विनियुक्ता यज्ञो देवानामित्यस्याः ( ८ । ४ ) स्थाने । अग्निः ईदृशो भवतु । कीदृशः । विश्वेषां सर्वेषां देवनां मध्ये अदितिः नास्ति दितिः खण्डनं यस्य अदीनः । कीदृशानां देवानाम् । यज्ञियानां यज्ञार्हाणाम् । तथा विश्वेषां सर्वेषां मानुषाणां नराणामतिथिः पूज्यः देवानामवो हविर्लक्षणमन्नमावृणानः समर्पयन् । सुमृडीकः शोभनं मृडीकं सुखं यस्मात् सुखकारी । जातवेदाः जातप्रज्ञानः ॥ १६ ॥

## सप्तदशी।

म॒हो अ॒ग्नेः स॑मिधा॒नस्य॒ शर्म॒ण्यना॑गा मि॒त्रे वरु॑णे स्व॒स्तये॑। श्रेष्ठे॑ स्याम सवि॒तुः सवी॑मनि॒ तद्दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ १७ ॥

उ० महो अग्नेः। सावित्रस्य त्रिष्टुप्। महः महतः अग्नेः समिधानस्य संदीप्यमानस्य। शर्मणि शरणे आश्रये वर्तमानाः अनागाः अनपराधाः स्याम। येन च मित्रे वरुणे अनपराधा एव स्याम। स्वस्तये अविनाशाय। येन च श्रेष्ठे स्याम सवितुः सवीमनि प्रसवे। तत् देवानां संबन्धि अवः हविर्लक्षणमन्नम्। अद्य आवृणीमहे अभिसंस्कुर्मः ॥ १७ ॥

म० कुसोधानाकदृष्टा त्रिष्टुप् सावित्रग्रहपुरोरुक् वाममद्ये-त्यस्याः (८।६) स्थाने। देवानां तत् अवः अन्नं हविर्लक्षणमद्य वयं वृणीमहे संस्कुर्मः। क सति। सवितुः सूर्यस्य सवीमनि सति आज्ञायां सत्याम्। 'देवस्य त्वा सवितुः प्रसवे' इत्युक्तेः। 'सवीमा प्रसवोऽनुज्ञा' इति कोशः। कीदृशे सवीमनि। श्रेष्ठे अन्यदेवाज्ञातः सूर्याज्ञोत्कृष्टा। तत्किम्। येनान्नेन वयं स्वस्तये स्वस्तिमन्तो भवेम। कीदृशा वयम्। अग्नेः शर्मणि शरणे आश्रये मित्रे वरुणे च अनागाः अनागसः 'सुपां सुप्' (पा० ७।१।३९) इति जसः सुः। अग्निमित्रवरुणेष्वपराधरहिताः। कीदृशस्याग्नेः। महः पूज्यस्य मह्यते पूज्यते मट् तस्य 'मह पूजायां' क्विप्। समिधानस्य दीप्यमानस्य ॥ १७ ॥

## अष्टादशी।

आप॑श्चित्पिप्युस्त॒र्यो॑ न गावो॒ नक्ष॑न्नृ॒तं ज॑रि॒तार॑स्त इन्द्र। या॒हि वा॒युर्न नि॒युतो॑ नो॒ अच्छा॒ त्वꣳ हि धी॒भिर्दय॑से॒ वि वाजा॑न् ॥ १८ ॥

उ० इदानीमिन्द्रस्तुतिः। उक्थसंस्थे द्वितीयेऽहनि पुरोरुच ऐन्द्यो द्वादश। आपश्चित् त्रिष्टुप्। आपोपि। पिप्युः प्यायः पी आदेशः। पाययेयुः निग्राह्य सोमे स्तर्यो न गावः सुन्वन्ति अभिषुण्वन्ति याभिर्वाग्भिः सोमं तास्तर्यः। सोमाभिषवे हि त्रयीलक्षणा वाचो व्याप्रियन्ते। तदेतदुक्तम्। तर्यो न गावः तर्य इव गावः। नक्षन्नृतं जरितारस्त इन्द्र। नक्षन्। नक्षतिर्व्याप्तिकर्मा। एवमनेन प्रकारेण नक्षन्व्याप्नुवन्ति ऋतं यज्ञम्। जरितारः स्तोतारः ते तव हे इन्द्र। एतच्च ज्ञात्वा। याहि वायुर्न नियुतो नो अच्छ। अच्छ अभियाहि। आयाहि नः अस्मान् वायुर्न वायुर्यथा नियुतः अश्वान् याति। त्वं हि यस्मात्। पुनस्त्वमेवमुच्यसे। यस्त्वं धीभिः स्वकीयाभिर्बुद्धिभिः दयसे ददासि। विविधं वाजान् अन्नानि ॥ १८ ॥

म० 'इन्द्रस्तदुक्थ्यो द्वितीयमहर्भवति तस्यैन्द्रा ग्रहा भवन्त्यैन्द्यः पुरोरुचः सर्वमैन्द्रमसत्' (पा० १३।७।१।४) इति सर्वमेधे श्रुतिः। ततः इन्द्रस्तुत्संज्ञे उक्थ्यसंस्थे सर्वमेधस्य द्वितीयेऽहनि आपश्चिदित्यादि इमां त इत्यन्ता द्वादश ऋचः। तं प्रत्नथा अयं वेनः महाँ इन्द्रः कदाचन स्तरीः कदाचन प्रयुच्छसीति पञ्च प्रतीकोक्ताः एवं सप्तदशैन्द्रदेवत्याः ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहणमन्त्राः वसिष्ठदृष्टाः त्रिष्टुप् ऐन्द्रवायवस्य पुरोरुक् आ वायो इत्यस्याः (७।७) स्थाने। हे इन्द्र, जरितारः स्तोतारः ऋत्विजः ते तव ऋतं यज्ञं नक्षन् नक्षन्ति व्याप्नुवन्ति। नक्षतिर्व्याप्तिकर्मा लङि अडभाव आर्षः। आपः चित् आपोऽपि निग्राभ्यारूपाः पिप्युः आप्याययन्ति सोमं वर्धयन्ति 'ओप्यायी वृद्धौ' लिटि प्यायः पी-आदेशः। तत्र दृष्टान्तः। स्तर्यो गावः इव स्तृण्वन्ति सुन्वन्ति याभिस्ताः स्तर्यः याभिः सोमः सूयते ता गावो वाचो वेदरूपा इव ता यथा सोममाप्याययन्ति तथापोऽपि। अतएव त्वं नोऽस्मानच्छ अभिमुखं याहि आगच्छ। वायुर्न वायुरिव वायुर्यथा नियुतः स्वानश्वानभियाति। हि यतः त्वं धीभिः बुद्धिभिः कर्मभिर्वा वाजानन्नानि विदयसे विविधं ददासि 'दय दानादौ' अत एवागच्छ ॥ १८ ॥

## एकोनविंशी।

गाव॒ उपा॑वतताव॒तं म॒ही य॒ज्ञस्य॑ र॒प्सुदा॑। उ॒भा कर्णा॑ हिर॒ण्यया॑ ॥ १९ ॥

उ० गाव उप। तिस्रो गायत्र्यः। दक्षिणालक्षणा गाव उच्यन्ते। हे गावः, उपावत उपगच्छत दक्षिणामार्गेण अवतः प्रति। अवतमिति कूपनाम। सचात्र चात्वालं तदन्तरेण हि गवां संचारः। को हेतुरागमन इति चेत्। मही यज्ञस्य रप्सुदा। मही महत्यः यज्ञस्य रप्सुदा दानं वर्तते। यतश्च भवतीनाम् उभाकर्णा हिरण्यया उभौ कर्णौ हिरण्मयौ कृतौ। दानार्थमेव अत उपावतेति संबन्धः ॥ १९ ॥

म० तिस्रो गायत्र्यः आद्या पुरुमीढाजमीढदृष्टा ऐन्द्रवायवस्य, द्वितीया पुरोरुक् इन्द्रवायू इत्यस्याः (७।८) स्थाने। गाव उच्यन्ते। हे गावः, अवतं कूपं चात्वालरूपं प्रति उपावत उपगच्छत दानार्थम्। चात्वालान्तरेण गवां संचारोऽस्ति। अवत इति कूपनाम। को हेतुरागमने तत्राह। मही महत्यौ द्यावापृथिव्यौ यज्ञस्य रप्सुदा रप्सुदे रप्श्विति रूपनाम तद्दत्तस्ते रप्सुदे वर्तेते। द्यावाभूमी यज्ञस्य शोभां कुरुत इति यूयमुपागच्छत। किंच उभा कर्णा भवतीनामुभौ कर्णौ हिरण्ययौ हिरण्मयौ अतएव दानार्थमागच्छतेत्यर्थः ॥ १९ ॥

## विंशी।

यद॒द्य सूर॒ उदि॒तेऽना॑गा मि॒त्रो अ॑र्य॒मा सु॒वाति॑ सवि॒ता भगः॑ ॥ २० ॥

उ० यदद्य। यत्कर्म अद्य अस्मिन्नपि सूरे उदिते उद्गते अनागाः अनपराधो मित्रः सुवाति प्रसौति तत्कर्म प्रया-

दिति शेषः। एवमर्यम्णः सवितुर्भगस्य च वाक्यानि अविशेषात् ॥ २० ॥

म० वसिष्ठदृष्टा मैत्रावरुणपुरोरुक् अयं वामित्यस्याः (७।९) स्थाने। अद्य सूरे सूर्ये उदिते सति मित्रः अर्यमा सविता भगश्च यत् सुवाति प्रेरयति तत् कर्म कुर्यादिति शेषः। नास्ति आगोऽपराधो यस्य सोऽनागा इति चतुर्णां विशेषणम् ॥ २० ॥

## एकविंशी।

आ सुते सिञ्चत श्रिय॑ᳪ रोद॑स्योरभिश्रिय॑म्। रसा द॑धीत वृष॒भम्। तं प्रत्नथायं वेनः ॥ २१ ॥

उ० आसुते। तृतीयः पादः प्रथमं व्याख्यायते। यं सोमम् रसा नदी रसतेः शब्दकर्मणः। दधीत धारयति। नद्युपकण्ठे हि सोमो जायते। वृषभं वर्षितारम् आसुते सिञ्चत आसिञ्चत ग्रहपात्रेषु चमसेषु सोमं हे ऋत्विजः। सुते अभिषुते सति सोमे। कथंभूतम्। श्रियम् श्रियोहेतुभूतम्। रोदस्योरभिश्रियम् द्यावापृथिव्योरधिगतश्रियम्। ब्रह्माण्डव्यापिनी हि सोमश्रीः। तं प्रत्नथायं वेनः इति द्वे प्रतीके उक्ते ॥ २१ ॥

म० सुनीतिदृष्टाश्विनपुरोरुक् या वामित्यस्याः (७।११) स्थाने। रसा नदी 'रसतेः शब्दकर्मणः' (निरु० ११।२५) इति यास्कः। रसा नदी वृषभं वर्षितारं सोमं दधीत पुष्णाति। दधातेर्लिङ्। नदीसमीपे हि सोमोत्पत्तेः। तस्मिन्सोमे सुते अभिषुते सति आसिञ्चत। चमसेष्विति शेषः। ऋत्विजः प्रति वचनमेतत्। कीदृशं वृषभम्। रोदस्योः द्यावापृथिव्योः श्रियं श्रीयते श्रीः तम् आश्रयम्। सोमस्य जगदाधारत्वात्। अभिश्रियम् अभि सर्वतः श्रीः शोभा यस्य सोऽभिश्रीः तम्। तं प्रत्नथा अयं वेनः द्वे प्रतीकोक्ते शुक्रमन्थिनोः प्राकृते (७।१२।१६) पुरोरुचौ ॥ २१ ॥

## द्वाविंशी।

आतिष्ठ॑न्तं परि॒ विश्वे॑ अभूषञ्छ्रियो वसा॑नश्चरति स्वरो॑चिः। मह॒त्तद्वृष्णो॒ असु॑रस्य॒ नामा वि॒श्वरू॑पो अ॒मृता॑नि तस्थौ ॥ २२ ॥

उ० आतिष्ठन्तम्। त्रिष्टुप्। इन्द्रस्यात्र वृष्टिकर्मोच्यते। ग्रीष्मान्ते मध्यमस्थाने आतिष्ठन्तम् इन्द्रं पर्यभूषन् परिरक्षितवन्तः। विश्वे सर्वे देवा मध्यमका देवगणाः। श्रियो वसानश्चरति स्वरोचिः। सतु मध्यमस्थानः सर्वेषां देवगणानां श्रियः आच्छादयन् स्वेच्छया चरति। स्वरोचिः अपराधीनदीप्तिः। तृतीयः पादश्चतुर्थान्ते व्याख्यायते तच्छन्दयोगात्। आविश्वरूपो अमृतानि तस्थौ। यत् आतस्थौ विश्वरूपः इन्द्रः अमृतानि उदकानि उदकेषु पातयितव्येषु। महत् तत् वृष्णः वर्षितुः असुरस्य प्रज्ञानवतः नाम। नमनं प्रह्वीभावः ॥ २२ ॥

म० विश्वामित्रदृष्टाग्रयणपुरोरुक् ये देवास इत्यस्याः (७।१९) स्थाने। इन्द्रस्य वृष्टिकर्मोच्यते। विश्वे देवाः आतिष्ठन्तं समन्तात् स्थितमिन्द्रं पर्यभूषन् परिरक्षितवन्तः। स इन्द्रः चरति सर्वत्र गच्छति। कीदृशः। श्रियो वसानः देवानां दीप्तीः आच्छादयन् स्वरोचिः स्वं रोचिर्यस्य सः अनन्याधीनदीप्तिः। किंच विश्वं रूपयति निरूपयति विश्वरूपः इन्द्रो यतः अमृतानि जलानि आतस्थौ वृष्ट्यै आस्थितवान् वृष्णः इन्द्रस्य तत् महत् प्रसिद्धं नाम वासवो वृत्रहा इत्यादि। कीदृशस्य वृष्णः। असुरस्य असवो विद्यन्ते यस्य सोऽसुरस्तस्य प्राणवतः सावधानस्य प्रज्ञावत इत्यर्थः ॥ २२ ॥

## त्रयोविंशी।

प्र वो॑ म॒हे मन्द॑मानाया॒न्धसोऽर्चा॑ वि॒श्वान॑राय वि॒श्वाभुवे॑। इन्द्र॑स्य॒ यस्य॑ सु॒मख॑ᳪ सहो॒ महि॒ श्रवो॑ नृ॒म्णं च॒ रोद॑सी सप॒र्यतः॑ ॥ २३ ॥

उ० प्र वः त्रिष्टुप्। हे ऋत्विजः, प्रार्च प्रार्चत। वः यूयम् स्तुतीः। महे इन्द्रविशेषणमेतत्। महते। अन्धसः अन्नस्य दात्रे इति वाक्यशेषः। मन्दमानाय स्तूयमानाय मोदमानाय वा। विश्वानराय सर्वभूताय। विश्वाभुवे सर्वव्यापिने। किंच इन्द्रस्य यस्य सुमखं साधुयज्ञम्। सहः बलं च महि महच्च श्रवः श्रवणीयं च यशः नृम्णं च धनं च नृन्नमयतीति नृम्णम्। रोदसी द्यावापृथिव्यौ सपर्यतः परिचर्यतः। तस्य चेन्द्रस्य प्रार्चत स्तुतीरित्यनुषङ्गः ॥ २३ ॥

म० सुचीकदृष्टा त्रिष्टुप् ध्रुवग्रहपुरोरुक् मूर्धानमित्यस्याः (७।२४) स्थाने। हे ऋत्विजः, यूयं विश्वानराय विश्वे सर्वे नरा यजमाना यस्य तस्मै प्रार्च प्रार्चत। वचनव्यत्ययः। इन्द्रं पूजयतेत्यर्थः। कीदृशाय। महे महते। वो युष्माकमन्धसः अन्धसा अन्नेन हवीरूपेण मन्दमानाय मोदमानाय। विश्वाभुवे विश्वं भवति प्राप्नोति विश्वभूः तस्मै सर्वव्यापिने, विश्वा भूर्यस्येति वा, विश्वं भवति यस्मादिति वा। संहितायां दीर्घः। किंच रोदसी द्यावापृथिव्यौ यस्येन्द्रस्य एतान् पदार्थान्सपर्यतः पूजयतः। कान् सुमखं शोभनं यज्ञम् सहः बलम् महि महत् श्रवो यशः नृम्णं धनं च। द्यावाभूमी यस्य मखादीनि मानयतस्तं पूजयतेत्यर्थः ॥ २३ ॥

## चतुर्विंशी।

बृ॒हन्निदि॒ध्म ए॑षां॒ भूरि॑ श॒स्तं पृ॒थुः स्वरुः॑। येषा॒मिन्द्रो॒ युवा॒ सखा॑ ॥ २४ ॥

उ० बृहन्नित्। द्वे गायत्र्यौ। अन्त्यः पादः प्रथमं व्याख्यायते यच्छब्दयोगात्। येषामिन्द्रो युवा सर्वकर्मसु दक्षः सखा। तेषामेषां यजमानानाम् बृहन्नित् महानेव इध्मः भवति। महत्त्वं च साधनानां साध्योत्कर्षं कुर्वतां

भवति। भूरिशस्तं भवति। पृथुश्च स्वरुः भवति। यज्ञानां वा भूयोभूयः करणमेवाभिप्रेतं स्यात् ॥ २४ ॥

म० त्रिशोकदृष्टा गायत्री ऐन्द्राग्नपुरोरुक् इन्द्राग्नी इत्यस्याः ( ३।७१ ) स्थाने। युवा समर्थः इन्द्रः येषां यजमानानां सखा सहायः एषामिन्द्रः बृहन् इत् महानेव भवति। शस्तं शस्त्रं भूरि बहु। स्वरुः खड्गः पृथुः विशालः। यज्ञबाहुल्यमाशास्यत इत्यर्थः ॥ २४ ॥

## पञ्चविंशी।

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः। महाँ२ ॥ अभिष्टिरोजसा ॥ २५ ॥

उ० इन्द्रेहि। हे इन्द्र, आ इहि आगच्छ। एत्य च मत्सि तृप्तिं कुरु अन्धसः अध्यानीयस्य सोमलक्षणस्यान्नस्य स्वेनांशेन। ततोऽपि विश्वेभिः सर्वैः सोमपर्वभिः सोमयागकालैर्निमित्तभूतैः। आइहि। यद्वा सर्वसवनगतैः सोमांशुभिः निमित्तभूतैः। कस्मात्पुनस्त्वमेवमस्माभिः प्रार्थ्यसे इत्यत आह। यतो महानसि अभिष्टिश्च अभ्येषणशीलश्च शत्रूणामभियष्टव्यो वा। ओजसा स्वकीयेन बलेन ॥ २५ ॥

म० मधुच्छन्दोदृष्टा गायत्री वैश्वदेवपुरोरुक् ओमास इत्यस्याः ( ७।३३ ) स्थाने। इन्द्र आ इहि 'ओमाङोश्च' ( पा० ६।१।९५ ) इति पररूपम्। हे इन्द्र, आ इहि आगच्छ। आगत्य अन्धसः अन्धसान्नेन हविर्लक्षणेन विश्वेभिः विश्वैः सर्वैः सोमपर्वभिः सोमांशुभिश्च त्वं मत्सि तृप्यस्व। 'मद तृप्तौ' शपो लुक्। कीदृशः त्वम्। ओजसा तेजसा महान् श्रेष्ठः। अभिष्टिः अभीज्यत इत्यभिष्टिः अभियष्टव्यः पृषोदरादिः ॥ २५ ॥

## षड्विंशी।

इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः। अहन्व्युꣳसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ॥ २६ ॥

उ० इन्द्रो वृत्रम् त्रिष्टुभौ। य इन्द्रः वृत्रं युद्धाय अवृणोत् शर्धनीतिः। शर्धइति बलनाम। शर्धे चतुरङ्गबले नीतिर्यस्य स तथोक्तः। प्रमायिनाममिनात् यश्च मायिनां मायाविनां प्र अमिनात्। 'मीङ् हिंसायाम्' हिनस्ति। यश्च वर्पणीतिः। वर्प इति रूपनाम। रूपसन्नद्धः स्वेच्छारूपविजृम्भकः। यश्च अहन् हन्ति व्यंसं निरसं संधिसंबन्धिनं मायिनम्। उशधक् 'वश कान्तौ' अस्य कृतसंप्रसारणस्यैतद्रूपम्। दहतेरुत्तरं कृतभष्भावस्य। अथ कोर्थः शत्रुत्वं कामयमानान् दहति वनेष्वपि वर्तमानान् आविर्धेना अकृणोद्राम्याणाम्। स इन्द्रः आविः प्रकटम् धेनाः स्तुतीः इत्थं शत्रून्हन्ति इत्थमपरिमितं धनं ददातीति। अवश्यं च रमयितव्यानां यायजूकानाम् ॥ २६ ॥

म० विश्वामित्रदृष्टा त्रिष्टुप् प्रथममरुत्वतीयपुरोरुक् इन्द्र मरुत्व इत्यस्याः ( ७।३५ ) स्थाने इन्द्रः वृत्रं दैत्यमवृणोत् युद्धाय वृणोति स्म। मायिनां मायिनो दैत्यान् प्रामिणात् हिनस्ति 'मीञ् हिंसायाम्' क्र्यादिः प्वादित्वाद्ध्रस्वः कर्मणि षष्ठी। व्यंसमहन् हन्ति। 'अंस विभागे' चुरादिरदन्तः अंसयति विभजति स्वान्परानिति व्यंसो दुष्टः तम्। क्व। वनेषु वनस्थान् हन्तीत्यर्थः। रमयन्ति देवान् ऋते राम्याः यायजूकाः तेषां धेनाः स्तुतिरूपा वाचः आविः अकृणोत् आविः करोति। यजमानाः स्तुवन्तीति देवेषु प्रकटयतीत्यर्थः। कीदृश इन्द्रः। शर्धनीतिः। शर्ध इति बलनाम। शर्धे चतुरङ्गे बले नीतिर्यस्य सः। वर्पणीतिः। वर्प इति रूपनाम। वर्पं नानारूपं नयति प्राप्नोति वर्पणीतिः नानारूपधारी। उशधक् उशन्ति कामयन्ते परस्वं ते उशाश्चौरास्तान् दहति उशधक् ॥ २६ ॥

## सप्तविंशी।

कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था। संपृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे। महाँ२॥ इन्द्रो य ओजसा कदा चन स्तरीरसि कदा चन प्रयुच्छसि ॥ २७ ॥

उ० कुतस्त्वम्। इन्द्रमरुत्संवादे मरुतामेतद्वाक्यम्। हे इन्द्र, त्वम् कुतः कस्माद्धेतोः माहिनः महनीयः सर्वस्य पूज्यः सन् शत्रून् एकः असहायः यासि। हे सत्पते, श्रुतिस्मृत्यनुष्ठानरतानां पालयितः। किंत इत्था किंच ते तव इत्थंभूतम् प्रयोजनमस्ति येनैकाकी यासि। संपृच्छसे समराणः संगच्छमानः शुभानैः शोभनैः वचोभिः संपृच्छसे कतमः पन्था इति। हे हरिवः हरिवन्। तत्करणं नः अस्माकं वोचेः ब्रूयाः। यत्ते अस्मे यत् व्यावृत्तिकारणं ते तव अस्मे अस्मासु वर्तत इति। महाँ २ इन्द्रो य ओजसा। कदाचन स्तरीरसि कदाचन प्रयुच्छसि इति तिस्रः प्रकृताः प्रतीकोक्ताः ॥ २७ ॥

म० अगस्त्यदृष्टा त्रिष्टुप् सशस्त्रमरुत्वतीयपुरोरुक् मरुत्वन्तमित्यस्याः ( ७।३६ ) स्थाने। इन्द्रं प्रति मरुद्वाक्यम्। हे इन्द्र, हे सत्पते, श्रुतिस्मृत्युक्ताचाररताः सन्तः तेषां पते पालक, त्वमेकः सन् कुतो यासि असहायः क्व गच्छसि। ते तव किमित्था गमने को हेतुः किं प्रयोजनम्। 'था हेतौ च छन्दसि' ( पा० ५।३।२६ ) इतीदमः थाप्रत्ययः। 'एतेतौ रथोः' ( पा० ५।३।४ ) इतीदम इदादेशः। कीदृशस्त्वम्। माहिनः महितः पूज्यः। निष्ठातस्य नत्वम् धातोर्वृद्धिश्च छान्दसी। यद्वा मह उत्सवोऽस्यास्तीति मही एव माहिनः स्वार्थेऽण् 'इनण्यनपत्ये' ( पा० ६।४।१६४ ) इति टिलोपाभावः। किंच समराणः सम्यक् गच्छन् सन् शुभानैः

शोभनैः वचनैः त्वं संपृच्छसे कतमः पन्था इति लोकान् पृच्छसि एकाकित्वात् । शोभन्ते तानि शुभानानि । शानचि शपि लुप्ते रूपम् । संपूर्वस्यर्तेः शानचि शपि लुप्ते समराण इति । हरयोऽश्वा अस्य सन्तीति हरिवान् 'मतुवसो रुः संबुद्धौ छन्दसि' ( पा० ८ । ३ । १ ) इति रुः । हे हरिवः इन्द्र, नोऽस्माकं तत् एकाकिगमनकारणं वोचेः ब्रूहि । यत् यतो हेतोः अस्मे वयं ते तव त्वदीया वयमिति हेतोर्वक्तव्यमित्यर्थः । तिस्रः प्रतीकोक्ताः तत्र महाँइन्द्र इत्यस्याः ( ७ । ४० ) महेन्द्रग्रहणे विनियोगः नृवदित्यस्याः ( ७ । ३९ ) स्थाने कदाचनेति ( ८ । २—३ ) द्वयोरादित्यग्रहणे विनियोगः ॥ २७ ॥

## अष्टाविंशी ।

आ तत्त इन्द्रायवः पनन्ताभि य ऊर्वं गोमन्तं तितृत्सान् । सकृत्स्वं ये पुरुपुत्रां महीᳬं सहस्रधारां बृहतीं दुदुक्षन् ॥ २८ ॥

**उ०** आ तत् त्रिष्टुप् । आङुपसर्गः पनन्तेत्याख्यातेन संबध्यते । आपनन्त । पनतिः पूजाकर्मा । पूजयन्ति वृत्रवधादिकम् ते तव संबन्धि कर्म हे इन्द्र, आयवः मनुष्याः यजमानाः । कथंभूता आयवः । अभितितृत्सान् । तृत्सतिर्हिंसाकर्मा । ये अभितर्दितुं हिंसितुमिच्छन्ति । किमित्यत आह । ऊर्वम् अन्नं सोमलक्षणम् । गोमन्तं उदकवन्तम् । निग्राभ्याभिः सोमोऽभिपूयते । येपि उदकवन्तं सोममभिपुण्वन्ति तेपि पूजयन्तीत्यर्थः । किंच । सकृत्स्वम् । एकवारमेव प्रसूयते यागो हिरण्यधान्यादिभिः सा सकृत्सूस्तां सकृत्स्वम् । ये यजमानाः । पुरुपुत्रां बहुपुत्राम् । सर्वे एव पदार्थाः पृथिवीत उत्पद्यन्ते । महीं भूमिम् । सहस्रधारां अनन्तभोगप्रदायिनीम् । बहुधा प्राणिजातं धारयन्तीं वा । बृहतीं महतीम् । दुदुक्षन् दोग्धुमिच्छन्ति । भूमिदानं सर्वमेधयाजिनश्चोद्यते तदभिप्रायमेतत् । ये च सोमाभिषवं कुर्वन्ति ये च पृथिवीं ददति ते त्वां पूजयन्ति नान्ये दुर्मेधस इति ॥ २८ ॥

**म०** गौरीवितिदृष्टा त्रिष्टुप् आदित्यग्रहस्य दधिश्रयणे विनियोगः । यज्ञो देवानामित्यस्याः ( ८ । ४ ) स्थाने । हे इन्द्र, आयवो मनुष्याः ते तव तत् कर्म आपनन्त पूजयन्ति । पनतिः पूजाकर्मा । लङ् अडभाव आर्षः । ये आयवः ऊर्वमन्नं सोमरूपमभितितृत्सान् अभितितृत्सन्ति तर्दितुं हिंसितुमिच्छन्ति तितृत्सन्ति 'उतृदिर् हिंसानादरयोः' सन्नन्तः 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इत्यतेरिकारलोपः । सोमं सोतुमिच्छन्तीत्यर्थः । कीदृशमूर्वम् । गोमन्तं गौरुदकमस्ति यस्मिन् स गोमान् तम् निग्राभ्यालक्षणोदकयुतम् । ताभिरेव सोमः सूयते । किंच ये मनुष्याः महीं भूमिं दुदुक्षन् दुधुक्षन्ति दोग्धुमिच्छन्ति । दुहेः सनन्ताल्लट् पूर्ववदिकारलोपः । तेऽपि तव कर्म पनन्ति स्तुवन्ति । कीदृशीं महीम् । सकृत्स्वं सकृदेकवारमेव सूते हिरण्यधान्यादि ददाति सकृत्सूः ताम् । पुरुपुत्रां बहुपुत्राम् । सर्वे पदार्थाः पृथिवीत उत्पद्यन्ते । सहस्रधारां सहस्रं धारा हिरण्यादयो यस्याः सा ताम् बहुभोगदाम् । यद्वा सहस्रमसंख्यं प्राणिजातं धरति सहस्रधारा ताम् । बृहतीं महतीम् । ये विप्राः सोमाभिषवं कुर्वन्ति ये च क्षत्रिया भूमिं दुहन्ति पालयन्ति ददते ते इन्द्रस्य वृत्रवधादिकर्म स्तुवन्ति नान्ये दुर्मेधस इत्यर्थः ॥ २८ ॥

## एकोनत्रिंशी ।

इमां ते धियं प्रभरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे । तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥ २९ ॥

**उ०** इमां ते । हे इन्द्र, इमां ते तव धियं स्तुतिं प्रभरे प्रहरामि शपयामि । कथंभूतस्य ते । महः महतः । कथंभूतां धियम् । महीं महतीम् । अस्य यज्ञस्य स्तोत्रे धिषणा वाक् । यत्ते यस्मात्ते तव स्वभूतान् गुणान् आनजे अभिव्यनक्ति ऐन्द्रमेव यज्ञं प्रकाशयति । किंच । तमेवेन्द्रम् । उत्सवे च अभ्युदये प्रसवे च अभ्यनुज्ञानाय विषयभूतायाम् । सासहिं शत्रूणामभिभवितारम् । देवासः देवा अपि शवसा मदन्ननु । शवसा बलेन अन्वमदन् अभिष्टुवन्ति । पूर्वोर्धर्चः प्रत्यक्षकृतः उत्तरस्तु परोक्षकृतः अतो वाक्यभेदेन व्याख्यानम् ॥ २९ ॥

**म०** कुत्सदृष्टा जगती सावित्रपुरोरुक् वाममद्येत्यस्याः ( ८ । ६ ) स्थाने । हे इन्द्र, इमां मामकीं धियं बुद्धिं स्तुतिं वा कर्म वा ते तुभ्यं प्रभरे प्रहरे समर्पयामि । कीदृशस्य ते । महः महतः पूज्यस्य । कीदृशीं धियम् । महीं महतीम् । यत् यस्मात् अस्य यजमानस्य धिषणा बुद्धिर्वाग्वा स्तोत्रे क्रियमाणे ते तव आनजे त्वां व्यनक्ति । कर्मणि षष्ठी । अञ्जेर्लिट् नलोपश्छान्दसः । किंच देवासः देवाः तमिन्द्रमन्वमदन् अनुमदन्ति स्तुवन्ति 'छन्दसि परेऽपि' ( पा० १ । ४ । ८१ ) इत्यनोः परः प्रयोगः । क स्तुवन्ति । उत्सवे अभ्युदये । प्रसवे गुर्वाद्यनुज्ञायां सत्याम् । यद्वा प्रसवे पुत्राद्युत्पत्तिरूपे उत्सवे इन्द्रं स्तुवन्ति । कीदृशमिन्द्रम् । शवसा बलेन सासहिम् सहते सासहिः शत्रूणामभिभवितारम् । चौ समुच्चये ॥ २९ ॥

इन्द्रस्तुत्संज्ञं द्वितीयमहः समाप्तम् ॥

## त्रिंशी ।

विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥ ३० ॥

**उ०** विभ्राट् बृहत् । जगती सूर्यस्तुतिः । द्वितीयेऽहनि ग्रहाणां पुरोरुचः । द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । यः वातजूतः वातप्रेरितः वातो यस्य वोढेत्यभि-

प्रायः । अभिरक्षति त्मना आत्मनैव जगत् । 'मन्त्रेष्वादेरात्मनः' इत्याकारलोपः । यश्च प्रजाः पुपोष पोषयति शीतोष्णवर्षैः । यश्च पुरुधा विराजति बहुधा च दीप्यति अग्निविद्युन्नक्षत्रादिरूपैः । स विभ्राट् विविधं भ्राजते इति विभ्राट् सूर्यः । बृहत् महत् पिबतु सोम्यं सोममयं मधु । किं कुर्वन् । आयुः जीवनम् दधत् स्थापयन् यज्ञपतौ यजमाने । अविहुतम् अनवखण्डितम् । 'हृ कौटिल्ये' । 'हुह्वरेश्छन्दसि' इति हुआदेशः ॥ ३० ॥

म० अथ तृतीयमहः सूर्यस्तुत् । तथाच श्रुतिः 'सूर्यस्तदुक्थ्यस्तृतीयमहर्भवति तस्य सौर्या ग्रहा भवन्ति सौर्यैः पुरोरुचः सर्वꣳसौर्यमसदिति' ( १३ । ७ । १ । ५ ) । चतुर्दश पुरोरुचस्तिस्रः प्रतीकोक्ताः । एवं सप्तदश ऋचः सूर्यस्तुत्संज्ञे उक्थ्यसंस्थे सर्वमेधस्य तृतीयेऽहनि । ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां पूर्वोक्तक्रमेण ग्रहणमन्त्रा बोध्याः । विभ्राड्दृष्टा जगती ऐन्द्रवायवपुरोरुक् । विविधं भ्राजते विभ्राट् सूर्यः सोम्यं सोमरूपं हविः पिबतु । कीदृशं सोम्यम् । बृहत् महत् मधु मधुरस्वादम् । यः सूर्यः त्मना आत्मना प्रजाः अभिरक्षति पालयति पुपोष पुष्णाति च । पुरुधा बहुधा विराजति च शोभते । कीदृशः । यज्ञपतौ यजमाने अविहुतमखण्डितमायुः दधत् स्थापयन् । वातजूतः वातेन प्रेरितः । वातेन प्रेरितं रविमण्डलं भ्रमतीति प्रसिद्धिः । त्मना 'मन्त्रेष्वाङ्यादेरात्मनः' ( पा० ६ । ४ । १४१ ) इत्याकारलोपः । 'हृ कौटिल्ये' 'हुह्वरेश्छन्दसि' ( पा० ७ । २ । ३१ ) इति हु आदेशः ॥ ३० ॥

## एकत्रिंशी ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहा ॥ ३१ ॥

उ० उदुत्यमिति व्याख्यातम् ॥ ३१ ॥

म० ऐन्द्रवायवस्य द्वितीया पुरोरुक् । व्याख्याता ( ७ । ४१ ) ॥ ३१ ॥

## द्वात्रिंशी ।

येना पावक चक्षसा भुरण्यन्तं जनाँ २॥ अनु । त्वं वरुण पश्यसि ॥ ३२ ॥

उ० येना पावक । द्वे गायत्र्यौ सर्वमेधाग्निश्रीयते । तेन रूपेण । आत्मानं संपाद्य क्षिप्रं यजमानो मोक्षं प्राप्नोति तदिह प्रार्थ्यते । येन हे पावक पावयितः, येन चक्षसा दर्शनेन । भुरण्यन्तम् जनान् अनु । शकुनिः क्षिप्रपाती भुरण्युरित्यभिधीयते । सर्वमेधयाजिनो जनान् अनुभुरण्यन्तम् पक्षिरूपेणात्मानं संपाद्य क्षिप्रं गच्छन्तमित्यर्थः । त्वं हे वरुण सूर्य, पश्यसि । तदोध्याहारेण वाक्यपरिपूर्तिः । येन जनान् अनु भुरण्यतः पश्येति ॥ ३२ ॥

म० प्रस्कण्वदृष्टा गायत्री मैत्रावरुणपुरोरुक् । सर्वमेधे पक्ष्याकारेणाग्निश्रीयते तद्रूपमात्मानं संपाद्य मुक्तिमाप्नोति तदत्र प्रार्थ्यते । हे पावक शोधक, येन चक्षसा दर्शनेन त्वं भुरण्यन्तमनुपश्यसि । क्षिप्रपाती पक्षी भुरण्युः । भुरण्युमात्मानं करोति भुरण्यति भुरण्यतीति भुरण्यन् तम् । क्विबन्तात् शतृप्रत्ययः । सर्वमेधयाजिनं भुरण्युपक्षिरूपमात्मानं कृत्वा स्वर्गंच्छन्तं येन चक्षसानुपश्यसीत्यर्थः । तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण, त्वं पश्य । वरुणः सूर्यः ॥ ३२ ॥

## त्रयस्त्रिंशी ।

दैव्यावध्वर्यू आगतꣳ रथेन सूर्यत्वचा । मध्वा यज्ञꣳ समञ्जाथे । तं प्रत्नथायं वेनश्चित्रं देवानाम् ॥ ३३ ॥

उ० दैव्यावध्वर्यू । हे दैव्यावध्वर्यू अध्वरस्य नेतारौ इह आगतम् आगच्छतम् आगमनं कुरुतम् । रथेन सूर्यत्वचा सूर्यस्येव त्वक् यस्य स सूर्यत्वक् तेन सूर्यत्वचा । मध्वा मधुस्वादुना हविषा सोमपुरोडाशेन दध्यादिना । यज्ञं समञ्जाथे समाप्तमिति साधुरूपं समंजयन्तम् । प्रभूतानि हवींषि कुरुतमित्यर्थः । तं प्रत्नथाऽयं वेनश्चित्रं देवानामिति तिस्रः प्रतीकोक्ताः ॥ ३३ ॥

म० आश्विनपुरोरुक् गायत्री । देवानामिमौ दैव्यौ हे दैव्यावध्वर्यू अश्विनौ, युवां रथेन आगतमागच्छतम् । शपो लुक् । कीदृशेन रथेन । सूर्यत्वचा सूर्यस्येव त्वक् कान्तिर्यस्य तेन । एत्य मध्वा मधुरेण हविषा सोमपुरोडाशदध्यादिना यज्ञं समञ्जाथे युवां संम्रक्षयतम् । बहूनि हवींषि कुरुतमित्यर्थः । तं प्रत्नथा ( ७ । १२ ) अयं वेनः ( ७ । १६ ) चित्रं देवानाम् ( ७ । ४२ ) तिस्रः प्रतीकोक्ताः । आद्ये द्वे शुक्रमन्थिपुरोरुचौ तृतीयाग्रयणस्य ॥ ३३ ॥

## चतुस्त्रिंशी ।

आ न इडाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु । अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥ ३४ ॥

उ० आ नः त्रिष्टुप् । द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । अपि यथा येन प्रकारेण । हे देवाः, युवानः सर्वकर्मक्षमा अविपरिणामिनो वा मत्सथ माद्यथ तृप्यथ नः अस्माकं गृहे । विश्वं जगदुद्दराम इति कृत्वा अभिपित्वे अभिपतनकाले प्राप्ते । मनीषा । मनीषयेति विभक्तिव्यत्ययः । मनस इच्छया । अपि तथा तेन प्रकारेण माद्यत यथेष्टम् । नः अस्माकं विदथे यज्ञे इडाभिः करणभूतैः । सुशस्ति अविभक्तिको निर्देशः । सुशस्तिभिश्च शोभनैः शंसनैश्च करणभूतैः । विश्वानरः आ एतु सविता च देवः आ एतु ॥ ३४ ॥

म० अगस्त्यदृष्टा त्रिष्टुप् ध्रुवपुरोरुक् । विश्वानरो विश्वनर-

हितकारी सविता देवः नोऽस्माकं विदथे यज्ञगृहे आ एतु आगच्छतु । कथम् । इडाभिः सुशस्ति यथा स्यात् तथा इडाभक्षणेन शोभना शस्तिः शंसनं प्रशंसा यस्यां क्रियायां तथा । यथा सर्वे इडां भक्षयन्ति तथा एत्वित्यर्थः । यद्वा सुशस्ति विभक्तिलोपः । कीदृशे यज्ञगृहे । सुशस्ति सुशस्तौ इडाभिः शोभनप्रशंसायुक्ते । एवं सूर्यमुक्त्वा देवानाह । हे युवानः, जरारहिता देवाः अपि निश्चितम् अभिपित्वे अभिपतने आगमनकाले यथा येन प्रकारेण यूयं मत्सथ 'मद तृप्तौ' तृप्यथ तथा नोऽस्माकं विश्वं सर्वं जगत् गन्तृ जङ्गमं पुत्रगवादिकं मनीषा मनीषया बुद्ध्या मत्सथ । अन्तर्भूतण्यर्थः । तर्पयत । यथा भवद्भिस्तृप्तिः क्रियते तथास्मत्प्रजास्तर्पणीया इत्यर्थः ॥ ३४ ॥

## पञ्चत्रिंशी ।

यदुद्य कच्चं वृत्रहन्नुदगां अभि सूर्य । सर्वं तदिन्द्र ते वशें ॥ ३५ ॥

उ० यदद्य । द्वे गायत्र्यौ । यत् अद्य कच्च कुत्रचित् यत् । हे वृत्रहन् वृत्रस्य पाप्मनः शार्वरस्य तमसो हन्तः, त्वम् उदगा अभि अभ्युदगाः अभ्युदेषि । हे सूर्य, तत्सर्वमेतत् हे इन्द्र ऐश्वर्ययुक्त, ते तव वशे वर्तते । त्वमेवैक ईश्वरो न द्वितीय इत्यभिप्रायः ॥ ३५ ॥

म० श्रुतकक्षसुकक्षदृष्टा गायत्री ऐन्द्राम्रपुरोरुक् । 'वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ' इति कोशाद्वृत्रमन्धकारं शार्वरं हन्ति वृत्रहा रविः । हे वृत्रहन्, हे सूर्य, हे इन्द्र ऐश्वर्ययुक्त, अद्य यत् कच्च यत्र कुत्रचित् त्वमभि उदगाः अभ्युदेषि तत्सर्वं ते तव वशेऽस्तीति शेषः । यद्वा उदगाः अत्र पुरुषव्यत्ययः । यत्किंचित्प्राणिजातमुदेति तत्सर्वं तव वशे सर्वस्येशिता त्वमेवेत्यर्थः ॥ ३५ ॥

## षट्त्रिंशी ।

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ॥ ३६ ॥

उ० तरणिर्विश्वदर्शतः । यस्त्वं तरणिरसि तूर्णं वर्तसे विश्वदर्शतः सर्वदर्शनीयश्चासि । ज्योतिष्कृत् ज्योतिषश्च कर्तासि हे सूर्य, तं त्वां प्रति तथा ब्रूमः त्वमेव विश्वं सर्वम् आभासि दीपयसि । रोचनं दीप्तम् अग्निविद्युद्ग्रहतारकारूपं त्वदीयमेवैकं ज्योतिः सर्वत्राभातीत्यर्थः ॥ ३६ ॥

म० प्रस्कण्वदृष्टा गायत्री वैश्वदेवपुरोरुक् । हे सूर्य, त्वं ज्योतिष्कृत् तेजसः कर्तासि । विश्वमाभासि प्रकाशयसि च । अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु त्वदीयं तेज इत्यर्थः । कीदृशं विश्वम् । रोचनं दीप्यमानं त्वत्प्रकाशेनेति भावः । कीदृशस्त्वम् । तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः 'अर्त्यवितृभ्यो-ऽनिः' ( उणा० २ । ९८ ) इति तरतेरनिप्रत्ययः । विश्वदर्शतः विश्वस्य दर्शतो दर्शनीयः । दृशेरतच् ॥ ३६ ॥

## सप्तत्रिंशी ।

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततꣳ संजभार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ३७ ॥

उ० तत्सूर्यस्य । द्वे त्रिष्टुभौ । तदेव सूर्यस्य देवत्वम् । तच्च महित्वं महाभाग्यम् । तत्किमित्यत आह । मध्याकर्तोर्विततं संजभार मध्या मध्ये इत्यर्थः । कर्तोः कर्मण इत्यर्थः । मध्ये यत्कर्मणां क्रियमाणानां देवासुरमनुष्यसंबन्धिनां विततं रश्मिजालं अहर्लक्षणं संजभार । अयमेव संहरते नान्य एतत्तनितुं शक्नोति न चोपसंहर्तुमित्यभिप्रायः । किंच यदा इत् अयुक्त यदा प्रयुङ्क्ते आत्मनि आत्मसंस्थान्करोति हरितः हरितवर्णान्रश्मीन् । ते ह्यस्तमनकाले लोहिततां यन्ति सधस्थात् सहस्थानादाहृत्य पृथिव्यादिलोकत्रयं तेषां सहस्थानम् । तत्रहि ते निपतन्ति । आद्रात्रीवासस्तनुते । आत् अथानन्तरम् रात्री तमोमयं वासः तनुते विस्तारयति । सिमस्मै सर्वस्मै जगति एकत्रादित्यसहितं ज्योतिरेकत्र तमः आदित्यप्रभावात्प्रभ्रमतीत्ययमभिप्रायः ॥ ३७ ॥

म० कुत्सदृष्टे द्वे त्रिष्टुभौ मरुत्वतीययोः पुरोरुचौ । सूर्यस्य तत् देवत्वं देवतानुभावः । तच्च महित्वं महाभाग्यमैश्वर्यम् । तत् किम् । कर्तोः 'ईश्वरे तोसुन्कसुनौ' ( पा० ३ । ४ । १३ ) करोतेस्तोसुन्प्रत्ययः । कार्यश्रेष्ठस्य जगद्रूपस्य मध्या मध्ये विततं विस्तारितमंशुजालं संजभार संजहार संहरते । न ह्यन्य एतादृशमंशुजालं प्रसारयितुं संहर्तुं वा शक्नोतीत्यर्थः । किंच यदा इत् यदैव हरितः हरितवर्णान्रश्मीनयुक्त युङ्क्ते आत्मनि आरोपयति सधस्थात् सह तिष्ठन्त्यंशवो यत्र तत्सधस्थं व्योममण्डलम् 'सध मादस्थयोश्छन्दसि' ( पा० ६ । ३ । ९६ ) इति सहस्य सधादेशः । सन्ध्याकाले पीतवर्णानंशून् यदा व्योममण्डलात्स्वस्मिन्योजयति । आत् अनन्तरमेव रात्री निशा सिमस्मै वासः तनुते । सर्वं वस्तु तमसाच्छादयतीत्यर्थः । सूर्यास्तादनन्तरं रात्रिसद्भावात् । सिमशब्दः सर्वपर्यायः ॥ ३७ ॥

## अष्टत्रिंशी ।

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ॥ ३८ ॥

उ० तन्मित्रस्य । सूर्यः तद्रूपं ज्योतिः कृणुते कुरुते द्योलोकस्य उपस्थे उत्सङ्गे । मित्रस्य वरुणस्याभिचक्षे अदर्शनाय । मित्रो हि सुकृतिनो गृह्णाति वरुणः दुष्कृतिनो गृह्णाति एवमनेन प्रकारेण जगदनुगृह्णातीत्यभिप्रायः । किंच अनन्तम् अपर्यन्तं कालतः देशतश्च । अन्यत् एकम् । रुशत् शुक्लं जरामरणादिभिर्वियुक्तम् । विज्ञानघनमानन्दः अस्य सूर्यस्य

पाजः । पाज इति बलनाम इह तु रूपमुच्यते । रूपम् अस्तीति शेषः । तच्चाद्वैतलक्षणम् कृष्णं द्वैतलक्षणं अन्यत् अपरं रूपम् हरितः हरिणा इन्द्रियवृत्तयः संभरन्ति निदानभूता भवन्ति ॥ ३८ ॥

म० सूर्यो द्योः द्युलोकस्योपस्थे उत्सङ्गे मित्रस्य वरुणस्य च तद्रूपं कृणुते कुरुते । येन रूपेण जनानभिचक्षे अभिचष्टे पश्यति । मित्ररूपेण सुकृतिनोऽनुगृह्णाति वरुणरूपेण दुष्कृतिनो निगृह्णातीत्यर्थः । अस्य सूर्यस्य अन्यत् एकं पाजो रूपमनन्तम् कालतो देशतश्चापरिच्छेद्यम् । रुशत् शुक्लं दीप्यमानं विज्ञानघनानन्दं ब्रह्मैव । अन्यत् कृष्णं द्वैतलक्षणं रूपं हरितः दिशः इन्द्रियवृत्तयो वा संभरन्ति धारयन्ति । इन्द्रियग्राह्यं द्वैतरूपमेकम् । एकं शुद्धं चैतन्यमद्वैतमिति द्वे रूपे सूर्यस्य सगुणनिर्गुणं ब्रह्म सूर्य एवेत्यर्थः । पाज इति बलनाम इह रूपमुच्यते । रोचत इति रुशत् । पौणादिकेऽतिप्रत्यये चकारो रस्य शकारो गुणाभावश्च निपात्यते । यद्वा 'रुश हिंसायाम्' रुच्यर्थे वर्तमानादस्माल्लटः शतरि रुशदिति रूपम् ॥ ३८ ॥

## एकोनचत्वारिंशी ।

बण्म॒हाँ२॥ अ॑सि सूर्य॒ बडा॑दित्य म॒हाँ२॥ अ॑सि । म॒हस्ते॑ स॒तो म॑हि॒मा प॑नस्यते॒ऽद्धा दे॑व म॒हाँ २॥ अ॑सि ॥ ३९ ॥

उ० बण्महान् । प्रगाथः द्वाभ्याम् । पूर्वा बृहती उत्तरा सतोबृहती । बट् सत्यम् महान्परब्रह्म असि । हे सूर्य, बट् हे आदित्य, तेजसामादानादादित्यः । महानसि । किंच महः महतः ते तव सतः महिमा महाभाग्यं सर्वेषु देवेष्ववस्थितम् । पनस्यते पूज्यते सर्वैः प्राणिभिः । अद्धा सत्यं हे देव दानादिगणयुक्त, महान् असि । अभ्यासे भूयांसमर्थं मन्यन्ते यथा अहो दर्शनीयाहो दर्शनीया इति ॥३९॥

म० जमदग्निदृष्टे द्वे बृहतीसतोबृहत्यौ । आद्या माहेन्द्रपुरोरुक् । बडित्यव्ययं सत्यार्थम् । हे सूर्य, सुवति प्रेरयति कार्येषु जगदिति सूर्यः 'राजसूयसूर्य–' ( पा० ३ । १ । ११४ ) इत्यादिना क्यबन्तो निपातः । बट् सत्यं त्वं महान् असि श्रेष्ठोऽसि । आदत्तेऽशूनित्यादित्यः हे आदित्य, बट् त्वं महानसि । किंच महः महतः सतः नित्यस्य ते तव महिमा पनस्यते लोकैः स्तूयते । हे देव, दीप्यमान, अद्धा सत्यं त्वं महानसि । अभ्यासे भूयांसमर्थं मन्यन्त इति पुनरुक्तिरादरार्था ॥ ३९ ॥

## चत्वारिंशी ।

बट्सू॑र्य॒ श्रव॑सा म॒हाँ२॥ अ॑सि स॒त्रा दे॑व म॒हाँ २॥ अ॑सि । म॒ह्ना दे॒वाना॑मसु॒र्यः पु॒रोहि॑तो वि॒भु ज्योति॒रदा॑भ्यम् ॥ ४० ॥

उ० बट् सूर्य । बट् सत्यम् हे सूर्य, श्रवसा श्रवणीयेन धनेन महानसि । सत्रा सत्यम् हे देव, महानसि । किंच मह्ना स्वकीयेन महत्त्वेन त्वमेव देवानां मध्ये असुर्यः । असवः प्राणाः सन्ति येषां ते असुराः रो मत्वर्थीयः । तेभ्यो हितः असुर्यः । उगवादित्वाद्यत् । प्राणिभ्यो हित इत्यर्थः । पुरोहितश्च पुर एनं धाति सर्वेषु कार्येष्विति पुरोहितः । किंच विभु व्यापि । ज्योतिः विज्ञानघनानन्दम् । अदाभ्यम् अनुपहिंसितम् ॥ ४० ॥

म० आदित्यग्रहप्रथमग्रहणम् । हे सूर्य, बट् सत्यं श्रवसा धनेन यशसा वा त्वं महानसि । हे देव, सत्यं त्वं महानसि देवानां मध्ये श्रेष्ठोऽसि । केन । मह्ना महत्त्वेन । कीदृशः त्वम् । असुर्यः असवः प्राणा येषां सन्ति तेऽसुराः तेभ्यो हितोऽसुर्यः प्राणिहितः पुरोऽग्रे हितः स्थापितः सर्वकार्येषु पुरःपूज्यः । सर्वदेवानां सूर्यार्घदानानन्तरमेव पूजाधिकारात् । विभु व्यापकमदाभ्यमनुपहिंस्यं ज्योतिः तेजः । त्वमेव तेजोरूप इत्यर्थः ॥ ४० ॥

## एकचत्वारिंशी ।

श्राय॑न्त इ॒व सूर्यं॒ विश्वे॒दिन्द्र॑स्य भक्षत । वसू॑नि जा॒ते जन॑मा॒न ओज॑सा॒ प्रति॑ भा॒गं न दी॑धिम॥४१॥

उ० श्रायन्त इव । बृहती । यथा श्रायन्त आश्रिताः सूर्यरश्मयः विश्वानि धनानि । इदिति निपातः पादपूरणार्थः । इन्द्रस्य संबन्धीनि इन्द्रानुज्ञातानि । भक्षत आख्यातमेतत् अनुदात्तत्वात् विभक्षन्ते विभजन्ते एवं वयमपि समाश्रिताः सूर्यं विश्वानीन्द्रस्य धनानि विभक्षामः । किंच वसूनि धनानि जाते पौत्रादौ जनमाने जनिष्यमाणे च भविष्यत्कालविषये । ओजसा बलेन ज्ञानकर्मसमुच्चयकारितया । प्रतिपुरुषम् भागंन भागमिव । दीधिम निधीमहि स्थापयाम । दधातेरेतद्रूपं नतु ध्यायतेरर्थपौष्कल्यात् ॥ ४१ ॥

म० नृमेधदृष्टा बृहती । आदित्यस्य पुनर्ग्रहणम् । श्रयन्त इति श्रायन्तः 'श्रिञ् सेवायाम्' अतः शतरि शपि गुणे प्राप्ते व्यत्ययेन वृद्धिः । इव एवार्थे । सूर्यं श्रायन्तः आश्रयन्तः एव अर्थाद्रश्मयः इन्द्रस्य विश्वा इत् विश्वानि सर्वाण्येव वसूनि धनानि वृष्टिधान्यनिष्पत्त्यादीनि भक्षत अभक्षत भजन्ते, विभजन्ते । प्राणिभ्यो विभज्य ददतीत्यर्थः । 'भज भागसेवयोः' अस्य लुङि तङि प्रथमबहुवचने रूपम् । अडभाव आर्षः 'आत्मनेपदेष्वनतः' ( पा० ७ । १ । ५ ) इति झस्यादादेशः । सूर्यकिरणा इन्द्रदत्तां वृष्टिं भूमौ विभजन्तीत्यर्थः । किंच वयं तान्येव वसूनि जाते पुत्रे जनमाने उत्पद्यमाने च ओजसा तेजसा सह प्रतिदीधिम धारयाम । स्थापयामेत्यर्थः । किमिव भागं न भागमिव । यथा स्वभागं पुत्रादिषु धारयामस्तथेत्यर्थः । 'धि धृतौ' लङ् व्यत्ययेन शपः श्लुः द्वित्वम् । तुजादित्वादभ्यासदीर्घः ॥ ४१ ॥

## द्विचत्वारिंशी ।

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ४२ ॥

उ० अद्या देवाः। द्वे त्रिष्टुभौ। अद्यास्मिन्नहनि हे देवाः, रश्मयः उदयकाले सूर्यस्य । निरंहसः पिपृत निष्पिपृत निर्मुंचत अंहसः पापात्सकाशात् अंहतिश्चांहश्चांहुश्च हीतनिगूढोपधाद्विपरीतात् निरवद्यात् निष्पिपृतच निर्मुञ्च च अवद्यात् अवदनीयात् । येन दुर्यशो भवति तदवद्यम् । तदेतदुच्यमानम् नः अस्माकम् मित्रावरुणः मामहन्तां पूजयतु । अदितिः सिन्धुः नदी । पृथिवी उत अपि च द्यौः ॥ ४२ ॥

म० कुत्सदृष्टा त्रिष्टुप् दध्नादिलग्रहश्रयणे विनियोगः । दीव्यन्ति दीप्यन्ते इति देवाः रश्मयः हे देवाः, नोऽस्मानंहसः पापात् निःपिपृत निर्मुंचत । अवद्यात् दुर्यशसोऽपि निःपिपृत पृथक् कुरुत । अस्माकं पापानि दुर्यशांसि च नाशयतेत्यर्थः । क । अद्यास्मिन्दिने सूर्यस्य उदिता उदिते उदये अद्य सूर्योदयेऽस्मान्शुद्धान्कुरुतेत्यर्थः । अद्येत्यत्र 'द्व्यचोऽतस्तिङः' । 'निपातस्य च' ( पा० ६ । ३ । १३५,३६ ) इति दीर्घः । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति दीर्घः पिपृतेत्यत्र । किंच मित्रादयः तत् नः अस्मद्वचनं मामहन्तां पूजयन्तु । अङ्गीकुर्वन्त्वित्यर्थः । के मित्रः वरुणः अदितिः देवमाता सिन्धुः समुद्रो नदी वा पृथिवी उतापि च द्यौः स्वर्गः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ४३ ॥

उ० आ कृष्णेन । आवर्तमानः पुनःपुनर्भ्रमणं कुर्वन् । कृष्णेन रजसा रात्रिलक्षणेन सह । निवेशयन् स्वेषु स्वेषु प्रदेशेषु स्थापयन् अमृतं देवादिकम् मर्त्यं च मनुष्यादिकं च । हिरण्ययेन हिरण्मयेन सविता रथेन । आदेवो याति आयाति देवः दानादिगुणयुक्तः भुवनानि भूतजातानि पश्यन् कानि कानि साधु कुर्वन्ति कानि कानि वा असाध्विति स्वरूपानुवादः ॥ ४३ ॥

म० हिरण्यस्तूपदृष्टा त्रिष्टुप् सावित्रपुरोरुक् । सविता देवः हिरण्ययेन हिरण्मयेन रथेन आयाति आगच्छति । किं कुर्वन् । कृष्णेन रजसा रात्रिलक्षणेन सह आवर्तमानः पुनर्भ्रमणं कुर्वन् अमृतं देवादिकं मर्त्यं मनुष्यादिकं च निवेशयन् स्वस्वप्रदेशेषु स्थापयन् भुवनानि पश्यन् कानि साधु कुर्वन्ति कान्यसाध्विति विचारयन् ॥ ४३ ॥

तृतीयं सूर्यस्तुदुक्थ्यमहः समाप्तम् ।



## चतुश्चत्वारिंशी ।

प्रवावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते । विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥ ४४ ॥

उ० प्रवावृजे । त्रिष्टुप् । वैश्वदेवस्तुतिः । चतुर्थेऽहनि सर्वमेधे वैश्वदेव्यः पुरोरुचः । प्रवावृजे प्रवृज्यते प्रच्छिद्यते सुप्रयाः सुप्रयाणं सुगमनम् बर्हिः एषाम् । येषामिति सर्वनामव्यत्ययः । येषां यजमानानाम् । आइयाते आगच्छतम् अश्विनौ । कथमिव । विश्पती इव सर्वस्य पती इव । बीरिटशब्दो गणवचनः । यथा विशां मनुष्याणां पती राजानौ विशां मनुष्याणां गणे अवस्थितौ । कस्मिन्काले । अक्तोः राव्याः अवसाने । उषसः आगमनकाले । पूर्वहूतौ पूर्वस्मिन् आह्वानकाले । किंच वायुः नियुत्वान् अश्ववान् । पूषा च स्वस्तये स्वस्त्ययनाय अविनाशाय आइयाते ॥ ४४ ॥

म० अथ चतुर्थमहः वैश्वदेवस्तुत् । तथाच श्रुतिः 'वैश्वदेववच्चतुर्थमहर्भवति वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः' ( १३ । ७ । १ । ६ ) इति । वैश्वदेवस्तु चतुर्थेऽह्नि एकादश पुरोरुचः षट् प्रतीकोक्ताः इति सप्तदश ऐन्द्रवायवादिसावित्रान्तग्रहाणां पुरोरुचो ग्रहणमन्त्राः । वसिष्ठदृष्टा त्रिष्टुप् ऐन्द्रावायवपुरोरुक् । एषां यजमानानां स्वस्तये कल्याणाय बीरिटेऽन्तरिक्षे वर्तमानौ वायुः पूषा च आ इयाते आगच्छतः । 'ई कान्त्यसनगतिव्याप्त्यादौ' व्यत्ययेन तङ् । कीदृशो वायुः । नियुत्वान् नियुतो नियुत्संज्ञा अश्वाः सन्त्यस्य सः । 'नियुतो वायोः' इत्युक्तेः । कस्मिन् काले । अक्तोः रात्रेः उषसः दिनस्य । पूर्वहूतौ पूर्वा चासौ हूतिश्च पूर्वहूतिस्तस्याम् । प्रथमाह्वानकाले । अग्निहोत्रहोमकाले इत्यर्थः । उषसः पूर्वाह्वाने पूषा रविरायाति रात्रौ वायुः । वायुना वायुसखत्वादग्निर्लक्ष्यते रात्रिहोमस्याग्निदेवत्यत्वात् । तत्र दृष्टान्तः । काविव । विश्पतीव यथा विशां पती द्वौ राजानौ विशां बीरिटे मनुष्याणां गणे आगच्छतस्तद्वत् तावपि तेषां स्वस्तये इयाते । एषां केषाम् । येषां बर्हिः प्रवावृजे प्रवृज्यते प्रस्तीर्यते 'वृजी वृतित्यागयोः' लिट् अभ्यासदीर्घः संहितायाम् । कीदृशं बर्हिः । सुप्रयाः शोभनं प्रयः प्रगमनं प्रस्तरणं यस्य तत् सुप्रयः दीर्घश्छान्दसः । सम्यक् विधिना प्रस्तीर्णमित्यर्थः । बीरिटशब्दो गणवाचकः । तथाच यास्कः 'प्रवृज्यते सुप्रायणं बर्हिरेषामियाते सर्वस्य पातारौ वा पालयितारौ वा बीरिटमन्तरिक्षं भियो वा भासो वा ततिरिति गणाभिधानं वा स्यात् सोऽपि भीतननो भासस्तनयश्च अन्तरिक्षे निरालम्बने भयं भासो नक्षत्राणां तननम् गणमपि दृष्ट्वा योद्धारो बिभ्यति भियो बी-आदेशे तनोतेः रिटः' ( निरु० ५ । २८ ) इति ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

इन्द्र॒वा॒यू बृह॒स्पतिं॑ मि॒त्राग्निं पू॒षणं॒ भग॑म् । आ॒दि॒त्यान्मारु॑तं ग॒णम् ॥ ४५ ॥

**उ०** इन्द्रवायू बृहस्पतिम् । तिस्रो गायत्र्यः । इन्द्रवायू बृहस्पतिम् । मित्रा मित्रमितिप्राप्ते आकारः । मित्रम् अग्निम् पूषणम् भगम् । आदित्यान् मारुतं च गणम् आह्वयामीति शेषः ॥ ४५ ॥

**म०** मेधातिथिदृष्टे द्वे गायत्र्यौ । आद्या ऐन्द्रवायवस्य पुनर्ग्रहणे द्वितीया मैत्रावरुणग्रहणे । इन्द्रवायू बृहस्पतिं मित्रा । विभक्तेराकारः । अग्निं पूषणं भगम् आदित्यान् मारुतं मरुत्संबन्धिनं गणं एतानाह्वयामि ॥ ४५ ॥

## षट्चत्वारिंशी ।

वरु॑णः प्रावि॒ता भु॑वन्मि॒त्रो विश्वा॑भिरू॒तिभिः॑ । कर॑तां नः सु॒राध॑सः ॥ ४६ ॥

**उ०** वरुणः प्राविता । वरुणः प्राविता प्रकर्षेण अविता रक्षकः भुवन् भवतु । मित्रश्च । विश्वाभिः सर्वाभिः ऊतिभिः अवनैः पालनैः । किंच करतां कुरुतां च नः अस्मान् सुराधसः शोभनधनान् ॥ ४६ ॥

**म०** वरुणः मित्रश्च विश्वाभिः सर्वाभिः ऊतिभिः अवनैः रक्षणप्रकारैः प्राविता प्रकर्षेण रक्षको भुवत् भवतु । भवतेर्व्यत्ययेन तुदादित्वात् शप्रत्ययः 'इतश्च लोपः' ( पा० ३ । ४ । ९७ ) इति तिप इलोपः धातोरुवङ् । किंच मित्रावरुणौ नोऽस्मान् सुराधसः शोभनधनान् करतां कुरुताम् । शोभनं राधो येषाम् ॥ ४६ ॥

## सप्तचत्वारिंशी ।

अधि॑ न इन्द्रै॒षां विष्णो॑ सजा॒त्याना॑म् । इ॒ता मरु॑तो॒ अश्वि॑ना । तं प्र॒त्नथा॒यं वे॒नो ये दे॑वा॒स॒ आ न॒ इडा॑भि॒र्विश्वे॑भिः॒ सोम्यं॒ मध्वो॒मा॑सश्चर्षणीधृ॒तः ॥ ४७ ॥

**उ०** अधि नः । अधि इत् अध्यागच्छति नोऽस्माकम् एषां च सजात्यानामृत्विजाम् । हे इन्द्र, हे विष्णो, हे मरुतः, हे अश्विनौ । अथ प्रतीकोक्ताः तं प्रत्नथा । अयं वेनः । ये देवासः । आ न इडाभिः । विश्वेभिः सोम्यं मधु । ओमासश्चर्षणीधृतः ॥ ४७ ॥

**म०** कुसीदिदृष्टा गायत्र्याश्विनपुरोरुक् । हे इन्द्र, हे विष्णो, हे मरुतः, हे अश्विना अश्विनौ, नोऽस्माकमेषां सजात्यानां समानजातीयानामधि सजात्यमध्ये यूयमित आगच्छत । अत्र प्रतीकोक्ताः तं प्रत्नथा ( ७ । १२ ) शुक्रग्रहे अयं वेनः ( ७ । १६ ) मन्थिग्रहे ये देवासः ( ७ । १९ ) आग्रयणस्य आ न इडाभिः ( ३३ । ३४ ) ध्रुवस्य विश्वेभिः सोम्यं मधु ( ३३ । १० ) ऐन्द्राग्नस्य ओमासश्चर्षणीधृतः ( ७ । ३३ ) वैश्वदेवस्य ग्रहणे ॥ ४७ ॥

## अष्टचत्वारिंशी ।

अग्न॒ इन्द्र॒ वरु॑ण॒ मित्र॒ देवाः॒ शर्धः॒ प्रय॑न्त॒ मारु॒तोत॒ विष्णो । उ॒भा नास॑त्या रु॒द्रो अध॒ ग्नाः पू॒षा भगः॒ सर॑स्वती जुषन्त ॥ ४८ ॥

**उ०** अग्न इन्द्र त्रिष्टुप् । हे अग्ने, हे इन्द्र, हे मित्र, हे देवाः । शर्धः बलं संगृह्य । प्रयन्त प्रगच्छत । सोमिनो गृहं सोमं पातुम् । हे मारुतगण उत अपि हे विष्णो । प्रत्यक्षकृतोऽयमर्धर्चः । द्वितीयस्तु परोक्षकृतः वाक्यभेदात् । उभा नासत्या उभौ नासत्यौ रुद्रः अध अथ ग्नाः देवपत्न्यः पूषा भगः सरस्वती च जुषन्त सेवन्त यज्ञं सोमपानाय ॥ ४८ ॥

**म०** प्रतिक्षत्रदृष्टा त्रिष्टुप् मरुत्वतीयपुरोरुक् । हे अग्ने, हे इन्द्र, हे वरुण, हे मित्र, हे देवाः, हे मारुत मरुद्गण, उतापि हे विष्णो, यूयं शर्धः बलं प्रयन्त प्रयच्छत दत्त । यमेः शपो लुक् । एवं प्रत्यक्षमुक्त्वा परोक्षमाह । उभा नासत्या उभौ नासत्यावश्विनौ रुद्रः अध अथ ग्नाः देवपत्न्यः पूषा भगः सरस्वती च जुषन्त जुषन्तां सेवन्तां हवींषि ॥ ४८ ॥

## एकोनपञ्चाशी ।

इ॒न्द्रा॒ग्नी मि॒त्रावरु॑णादि॑तिꣳ स्वः॑ पृथि॒वीं द्यां म॒रुतः॒ पर्व॑ताँ२॥ अ॒पः । हु॒वे विष्णुं॑ पू॒षणं॒ ब्रह्म॑ण॒स्पतिं॒ भग॒ं नु शꣳस॑ꣳ सवि॒तार॑मू॒तये॑ ॥ ४९ ॥

**उ०** इन्द्राग्नी मित्रावरुणा । जगती । इन्द्राग्नी च मित्रावरुणौ च अदितिं च स्वः आदित्यं च पृथिवीं च द्यां च मरुतश्च पर्वतांश्च अपश्च हुवे आह्वयामि । विष्णुं च पूषणं च ब्रह्मणस्पतिं च नु क्षिप्रम् शंसं शंसितव्यं सवितारं च हुवे । ऊतये अवनाय ॥ ४९ ॥

**म०** वत्सारदृष्टा जगती सशस्त्रमरुत्वतीयपुरोरुक् । इन्द्राग्नी मित्रावरुणौ अदितिम् स्वः आदित्यम् पृथिवीम् द्यां द्युलोकम् मरुतः पर्वतान् अपः विष्णुम् पूषणं ब्रह्मणस्पतिम् भगम् शंसं स्तुत्यं सवितारम् एतान् नु क्षिप्रमूतयेऽवनायाहं हुवे आह्वयामि ॥ ४९ ॥

## पञ्चाशी ।

अ॒स्मे रु॒द्रा मे॒हना॒ पर्व॑तासो वृत्र॒हत्ये॒ भर॑हूतौ स॒जोषाः॑ । यः शꣳस॑ते स्तुव॒ते धायि॒ प॒ज्र इन्द्र॑ज्येष्ठा अ॒स्माँ २॥ अ॑वन्तु दे॒वाः ॥ ५० ॥

**उ०** अस्मे रुद्राः । त्रिष्टुभः पञ्च । अस्मे अस्माकं रुद्राः मेहनाः सेचनाः । यद्वा महनीयाः पूजनीयाः पर्वतासः पर्वताश्च वृत्रहत्ये वृत्रवधे भरहूतौ संग्रामाह्वाने च । सजोषाः समानजोषणाः समानप्रीतयः । एकाभिप्राया भवन्त्विति

शेषः । यश्च शंसते शस्त्राणि स्तुवते स्तौति च स्तोत्राणि । धायि दधाति हवींषि । पज्रः प्रार्जितधनः सन् । तस्मै च रुद्राः सजोषाः भवन्तु । किंच इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो येषां ते तथोक्ताः । अस्मान् अवन्तु पालयन्तु देवाः ॥ ५० ॥

म० पञ्च त्रिष्टुभः आद्या प्रगाथदृष्टा माहेन्द्रपुरोरुक् । यो नरः शंसते शस्त्राणि शंसति स्तुवते स्तौति स्तोत्राणि प्रकर्षेण जपति पज्रः प्रार्जितधनः सन् धायि दधाति हवींषि । तान् अस्मांश्च यजमानान् देवा अवन्तु पान्तु । पज्रः पृषोदरादिः । कीदृशा देवाः । अस्मे अस्मासु मेहना । शस आकारः । मेहन्ति सिञ्चन्ति मेहनाः धनादिसेक्तारः । रोदयन्ति शत्रूनिति रुद्राः । पर्वतासः पर्वाणि उत्सवा विद्यन्ते येषां ते पर्वताः उत्सववन्तः 'तप्पर्वमरुद्भ्यां' ( पा० ५ । २ । १२२ ) तप्प्रत्ययः । वृत्रहत्ये वृत्रासुरवधाय । भरहूतौ भरे संग्रामे हूतिराह्वानं तत्र सजोषाः समानो जोषः प्रीतिर्येषां ते । एकमतय इत्यर्थः । इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो येषां ते । ईदृशा देवा नोऽवन्तु ॥ ५० ॥

## एकपञ्चाशी ।

अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् । त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥ ५१ ॥

उ० अर्वाञ्चो अद्य । अर्वागञ्चनाः अद्य भवत हे यजत्राः हे यजनीयाः । किंच आवो हार्दि भयमानो व्ययेयम् आव्ययेयम् । व्ययतिर्गत्यर्थः आगमयेयं अभिमुखमापादयेयं वः युष्माकं हार्दि हृदयम् भयमानः बिभ्यत् । बिभेतेर्विकरणव्यत्ययेन शानचि शप् । यतएवमतो ब्रवीमि त्राध्वं पालयत नः अस्मान् हे देवाः, निजुरः नितरां यो भक्षितं जरयति स निजूः बुभुक्षितादित्यः वृकस्य वृकादिति विभक्तिव्यत्ययः । त्राध्वं च कर्तात् कूपात् । अवपदः अवाचीनानि यत्र पदानि स तथोक्तः तस्मात् सोपानैर्यत्रोत्तरितुं न शक्यत इत्यर्थः । हे यजत्रा यष्टव्याः ॥ ५१ ॥

म० कूर्मदृष्टादित्यस्य प्रथमा पुरोरुक् । यजन्तं त्रायन्ते यजत्राः यष्टव्या वा हे यजत्राः देवाः, अद्य यूयमर्वाञ्चः अस्मदभिमुखाः भवत । दीर्घो संहितायाम् । यतो भयमानः बिभ्यत् अहं वो युष्माकं हार्दि हृदि भवं मनः आव्ययेयं आगमयेयम् । अभिमुखं संपादयेयमित्यर्थः । 'व्यय गतौ' णिजन्तः । भिञो व्यत्ययेन शपि भयमानः । किंच हे यजत्राः देवाः, नोऽस्मान् वृकस्य वृकात् त्राध्वम् पालयत । कर्तात् कूपाच्च त्राध्वम् । कीदृशाद् वृकात् । निजुरः 'जूरी वधे' नितरां जूर्यते हिनस्ति निजूः । क्विप् तस्मान्निजुरः हिंसकात् । कीदृशात् कर्तात् । अवपदः अवाचीनाः पादन्यासा यत्र सः अवपात् तस्मादवपदः सोपानैर्यत्रोत्तरीतुं न शक्यत इत्यर्थः ॥५१॥

## द्विपञ्चाशी ।

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे नो देवा अवसागमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥ ५२ ॥

उ० विश्वे अद्य इति व्याख्यातम् ॥ ५२ ॥

म० विश्वे अद्य छुरादृष्टादित्यपुनर्ग्रहणे । व्याख्याता (१८। ३१ ) ॥ ५२ ॥

## त्रिपञ्चाशी ।

विश्वेदेवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥ ५३ ॥

उ० विश्वेदेवाः हे विश्वेदेवाः, शृणुत इमं हवं आह्वानं मे मम । ये अन्तरिक्षे स्थ भवथ । ये च उपद्यवि द्युलोके स्थ भवथ । येच अग्निजिह्वा अग्निमुखाः । उत वा अपिच यजत्रा यष्टव्याः । श्रुत्वा च आह्वानम् आसद्य स्थित्वा अस्मिन्बर्हिषि मादयध्वं तृप्यध्वम् ॥ ५३ ॥

म० सुहोत्रदृष्टादित्यग्रहस्य दध्ना श्रयणे विनियुक्ता। हे विश्वेदेवाः, ये यूयमन्तरिक्षे स्थ भवथ । ये च द्यवि उप स्वर्गसमीपे स्थ । ये चाग्निजिह्वाः वह्निमुखाः । उत वा अपिच यजत्राः यजनीयाः ते सर्वे यूयमिमं मे मत्कृतं हवमाह्वानं शृणुत । श्रुत्वा चास्मिन्बर्हिषि आसद्योपविश्य मादयध्वं तृप्यध्वम् ॥५३॥

## चतुःपञ्चाशी ।

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् । आदिद्दामानꣳ सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥ ५४ ॥

उ० देवेभ्यो हि । यस्माद्देवेभ्यः प्रथमं यज्ञियेभ्यः यज्ञार्हेभ्यः अमृतत्वं सुवसि अभ्यनुजानासि भागं चोत्तमं सुवसि आत् इत् अथानन्तरमेव दामानम् दातारमुत्पत्तिस्थितिलयानाम् स्वकीयं रश्मिजालम् हे सवितः, व्यूर्णुषे विवृणोषि विस्तारयसि । रश्मीनामुद्गमे हि विप्रोऽकम्पितमनसाग्निहोत्रादीनि कर्माणि कुर्वीत । किंच अनूचीना अन्वञ्चितानि तदनुगतानि जीविता जीवितानि जीवनहेतूनि कर्माणि मानुषेभ्यः ददासि तस्मात् त्वामेव स्तुम इति वाक्यशेषः ॥ ५४ ॥

समाप्तं सर्वमेधिकं कर्म ।

म० वामदेवदृष्टा जगती सावित्रग्रहस्य पुरोरुक् । हे सवितः, हि निश्चितं प्रथममुदयसमये यज्ञियेभ्यः यज्ञार्हेभ्यो देवेभ्यः त्वमुत्तमं भागमग्निहोमरूपं सुवसि प्रेरयसि 'षू प्रेरणे' तुदादिः अभ्यनुजानासीत्यर्थः । कीदृशं भागम् । अमृतत्वममृतप्रदमित्यर्थः । कार्यकारणयोरभेदेन निर्देशः । आत् इत् अनन्तरमेव उदयानन्तरम् दामानम् ददाति प्रकाशमिति दामा रश्मिसमूहः तं । व्यूर्णुषे विवृणोषि विस्तारयसि । ततो मानु-

भ्यः जीविता जीवितानि जीवनहेतूनि कर्माणि व्यूर्णुषे । सूर्योदयानन्तरमेव प्राणिनां कर्मसु प्रवृत्तेः । कीदृशानि जीवितानि । अनूचीना अनूचीनानि अन्वञ्चन्ति तान्यनूचीनानि रश्मिसमूहानुगतानि तमसि तदभावात् । लौकिकवैदिकव्यवहारप्रवर्तयिता त्वमेवेत्यर्थः ॥ ५४ ॥

इति वैश्वदेवस्तुच्चतुर्थमहः समाप्तोऽयं सर्वमेधः ॥

## पञ्चपञ्चाशी ।

प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारꣳ रथप्राम् । द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥ ५५ ॥

उ० इदानीं त्रयोनुवाकाः पुरोरुचामनारभ्याधीताः व्याख्येया आदित्यस्य वा याज्ञवल्क्यस्य वा आर्षमापितृमेधात् । प्रवायुम् त्रिष्टुप् । चतुर्थः पूर्वं व्याख्यायते वाक्यवशात् । हे प्रयज्यो प्रकर्षेण यजनशील अध्वर्यो, योग्यस्त्वं कविः क्रान्तदर्शनः वायुम् अच्छ आभिमुख्येन प्रइयक्षसि प्रकर्षेण यष्टुमिच्छसि । यजतेरेतद्रूपम् । बृहती मनीषा बृहत्या मनीषया । किंभूतं वायुम् । बृहद्रयिम् महाधनम् । विश्ववारं सर्वस्य वरणीयम् । रथप्रां रथपूरणम् । शत्रुधनैरसौ रथं पूरयति । द्युतद्यामा द्योतनं यमनं यस्य स तथोक्तः । द्युतद्यामानमिति विभक्तिव्यत्ययः वायुविशेषणत्वात् । नियुतः पत्यमानः अत्रापि पत्यमानमिति पदयोर्विकारो वाक्यवशात् । नियुद्भिरश्वैरुत्पतन्तम् । कविं क्रान्तदर्शनम् ॥ ५५ ॥

म० अथ पञ्चदशपञ्चदशत्रयोदशर्चास्त्रयोऽनुवाकाः पुरोरुचोऽनारभ्याधीताः श्रौतकर्मण्यविनियुक्ताः ब्रह्मयज्ञार्हा आदित्ययाज्ञवल्क्यदृष्टाः पितृमेधपर्यन्तम् । ऋजिश्वदृष्टा त्रिष्टुप् वायुदेवत्या । प्रकर्षेण यजति प्रयज्युः हे प्रयज्यो अध्वर्यो, बृहती मनीषा महत्या बुद्ध्या कृत्वा अच्छ आभिमुख्येन त्वं वायुं प्र इयक्षसि प्रकर्षेण यष्टुमिच्छसि । कीदृशः त्वम् । कविः ज्ञानी । कीदृशं वायुम् । बृहद्रयिम् बृहन् रयिर्यस्य तं महाधनम् । विश्ववारम् विश्वेन व्रियते तम् सर्वस्य वरणीयम् विश्वं वृणोतीति वा सर्वव्यापकम् । रथप्राम् रथं प्राति पूरयति रथप्राः तम् । यजमानाय दातुं धनैः रथं पूरयति । द्युतद्यामा व्यत्ययः द्युतद्यामानम् द्युतत् दीप्यमानं याम यमनं नियमनं यस्य तम् । नियुतः पत्यमानः । उभयत्र विभक्तिव्यत्ययः । नियुद्भिरश्वैः पत्यमानं गच्छन्तम् । कविं क्रान्तदर्शनम् । ईदृशं वायुं यजेत्यर्थः ॥ ५५ ॥

## षट्पञ्चाशी ।

इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वा । एष ते योनिः सजोषोभ्यां त्वा ॥ ५६ ॥

उ० इन्द्रवायू इमे व्याख्यातम् ॥ ५६ ॥

म० इन्द्रवायू व्याख्याता ( ७ । ८ ) ॥ ५६ ॥

## सप्तपञ्चाशी ।

मित्रꣳ हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीꣳ साधन्ता ॥ ५७ ॥

उ० मित्रꣳहुवे । द्वे गायत्र्यौ मित्रमाह्वयामि । पूतदक्षम् पूतस्य शुद्धस्य प्राणिन उद्धरणे दक्षं सोमम् । वरुणं च रिशादसम् हिंसकादिविनाशने शक्तिं कुर्वाणम् हुवे । कीदृशः । धियं कर्म । घृताचीम् येन कर्मणा घृतमच्यते हूयते तत्कर्म । साधन्ता साधयन्तौ । नहि देवतामन्तरेण कर्मसिद्धिः ॥ ५७ ॥

म० द्वे मधुच्छन्दोदृष्टे गायत्र्यौ आद्या लिङ्गोक्तदेवत्या । मित्रं वरुणं चाहं हुवे आह्वयामि । कीदृशम् । पूतदक्षं पूतं पवित्रं सदाचारं दक्षयति धनपुत्रादिभिर्वर्धयति पूतदक्षस्तम् 'दक्ष कम्पृच्छ्योः' इत्यस्माण्णिजन्तात्कर्मण्यण् । रिशादसम् रिशन्ति हिंसन्ति रिशा दुष्टाः तान् समन्तादसति नाशयति रिशादसः तम् । 'रिश हिंसायाम्' 'दस उपक्षये' । द्वयोर्विशेषणे । कीदृशावुभौ । धियं कर्म साधन्ता साधयन्तौ । कीदृशीं धियम् । घृताचीम् घृतमच्यते हूयते यत्र ताम् ॥ ५७ ॥

## अष्टपञ्चाशी ।

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आयातꣳ रुद्रवर्तनी । तं प्रत्नथायं वेनः ॥ ५८ ॥

उ० दस्रा युवाकवः । द्वयोरश्विनोरेकस्य दस्र इति नाम अपरस्य नासत्य इति । तत्रायं विभक्त्यर्थे आकारो विरूपैकशेषे वर्तते । 'गुणो यङ्लुकोः' इति च पाणिनिर्दर्शयति । हे दस्रौ दर्शनीयौ,हे नासत्यौ न असत्यौ सत्यावेव । 'नभ्राण्नपात्–' इति प्रकृतिभावः । युवाकवः युवांकामयमानाः अहमहमिकया मां पिबतं मां पिबतमिति सुता अभिषुताः । वृक्तबर्हिषः प्रस्तीर्णबर्हिषः । यतः अतो ब्रवीमि आयातम् आगच्छतम् । हे रुद्रवर्तनी रुद्रस्येव वर्तनिर्ययोस्तौ तथोक्तौ रुद्रपन्थानौ । तं प्रत्नथायं वेन इति प्रतीकोक्तौ ॥ ५८ ॥

म० आश्विनी द्वयोरश्विनोरेकस्य दस्र इति नामापरस्य नासत्य इति । हे दस्रौ दर्शनीयौ, हे नासत्या नासत्यौ न असत्यौ । सत्यवादिनावित्यर्थः । युवामायातमागच्छतम् । यतः सुता अभिषुताः सोमा इति शेषः । कीदृशाः सोमाः । युवाकवः युवां कामयन्ते ते युवाकवः मां पिबतमितीच्छन्तः । यद्वा युवन्ति अग्नौ मिश्रीभवन्ति युवाकवः 'कटिकुषिभ्यां काकुः' ( उणा० ३ । ७६ ) इति बहुलग्रहणात्काकुप्रत्ययः । वृक्तबर्हिषः वृक्तं बर्हिर्यत्र ते । कीदृशौ युवाम् । रुद्रवर्तनी रुद्रस्येव वर्तनिः पन्था ययोस्तौ रुद्रवद्गमनशीलौ । तं प्रत्नथा ( ७ । १२ ) अयं वेनः ( ७ । १६ ) एते द्वे प्रतीकोक्ते ॥ ५८ ॥

## एकोनषष्टी ।

वि॒दद्यदी॑ स॒रमा॑ रु॒ग्णमद्रे॒र्महि॒ पाथः॑ पू॒र्व्यꣳ स॒ध्र्य॑क्कः । अग्रं॑ नयत्सु॒पद्यक्ष॑राणा॒मच्छा॒ रवं॑ प्रथ॒मा जा॒नती॒ गा॑त् ॥ ५९ ॥

उ० आग्रयणं गृह्णाति । विदद्यदि त्रिष्टुप् । इह वाक्प्रकटीभवेति सोच्यते । विदत् जानीयात् यदि । सरमा वाक् त्रयीलक्षणा । सा हि अभिषवे समानं रमते । रुग्णं चूर्णीकृतम् अद्रेः सोमाभिषवस्य कर्तुः अद्रिभिश्च सोमोऽभिपूयते। महि महत् पाथः सोमलक्षणमन्नम् पूर्व्यं उपांश्वन्तर्यामैन्द्रवायवादिषु गृहीतम् । सध्र्यक् समानाञ्चनम् । सहस्य सध्रिः अञ्चतेरुत्तरम् । कः कुर्यात् । किंच अग्रंनयत् यज्ञाग्रं नयति सा पाथः । सुपदी शोभनानि पदानि यस्या वाचः सा तथोक्ता । नहि पदानि प्रत्याख्याय वाक्यं स्यात् । अक्षराणामकारादीनां रवं शब्दं जानती प्रथमा अच्छ आभिमुख्येन अगात् गच्छति । एवमधियज्ञं मन्त्रो व्याख्यायते बह्वृचांतु संवादसूक्तम् । तत्र सरमा देवशुनी इन्द्रेण प्रेषितान्वेषणार्थम् गोधने पणिभिरसुरैर्हृते तदभिप्रायेण व्याख्यायते । तत्रासुराणां पर्यालोचनवाक्यम् । विदद्यदि विदत् अलभत् यदा सरमा देवशुनी । रुग्णं भग्नं गवां संबन्धिभिः खुरैः । अद्रेः पर्वतस्य द्वारम् । अथानन्तरं महि महत् गोलक्षणं पाथः अन्नम् । पूर्व्यम् पूर्वेषु कालेषु अपहृतम् । सध्र्यक् देवान्प्रति सहाञ्चनम् कः । करोतेः रूपं । करिष्यति । अग्रम् गवामग्रमवस्थाय नयत् नेष्यति । सुपदी शोभनपादयुक्ता पदेन यान्वेषयति नष्टं सैवमुच्यते । अक्षराणामस्मदीयवाक्यसंबन्धिनाम् अच्छ अभि रवमुच्चारणम् प्रथमा जानती अगात् आगमिष्यति ॥ ५९ ॥

म० कुशिकदृष्टा त्रिष्टुप् इन्द्रदेवत्या । सह रमन्ते देवा विप्रा वा यस्यां सा सरमा वाक् । प्रथमा आद्या सरमा त्रयीलक्षणा वाक् अच्छ यज्ञाभिमुखं गात् आगच्छति । यज्ञं प्रतिपादयतीत्यर्थः । कीदृशी सरमा । सुपदी शोभनानि पदानि सुप्तिङन्तानि यस्यां सा । अक्षराणामकारादीनां रवं शब्दं जानती ज्ञापयन्ती । अन्तर्भूतणिजर्थः । तां सरमां यदि चेत् विदज्जानीयात् अध्वर्युः तर्हि पाथः सोमलक्षणमन्नं कः कुर्यात् वेदानभिज्ञस्य सोमकण्डनानधिकारात् । कीदृशं पाथः । अद्रेः रुग्णम् विभक्तिव्यत्ययः । अद्रिणा सोमाभिषवग्राव्णा रुग्णमभिषुतम् । महि महत् । पूर्व्यं पूर्वगृहीतमुपांश्वन्तर्यामैन्द्रवायवादिपात्रेषु । सध्र्यक् सहाञ्चति सहस्य सध्रिः । सहैव हवनाय गच्छत् । अग्रं नयत् अग्रं मुख्यत्वं यजमानं प्रापयत् यज्ञेन यजमानो मुख्यो भवति । एवमधियज्ञं मन्त्रो व्याख्यातः । बह्वृचानां तु संवादसूक्तमिदम् । तत्र पणिभिरसुरैर्देवगोधनेऽपहृते इन्द्रेण देवशुनी तद्गत्यै प्रेरिता तदभिप्रायेण व्याख्यायते । सरमा देवशुनी इन्द्रेण वान्वेषणाय प्रहिता सती यदि यदा अद्रेः गिरेः रुग्णं भग्नम् द्वारम् विदत् अविदत् अलभत् तदा इन्द्रः पाथः हविरन्नं कः अकार्षीत् तस्यै दत्तवान् । ततः सुपदी शोभनपादयुक्ता सा सरमा अक्षराणां क्षरणेन नाशेन रहितानामनुपद्रुतानां गवाम् अग्रं प्रान्तं नयत् अनयत् प्राप्नोत् । प्रथमा प्रथमम् रवं गवां हम्भारवं जानती सती अच्छ गवामभिमुखं गात् अगात् जगाम । कीदृशं पाथः । महि महत् । पूर्व्यं पूर्वं प्रेषणकाले अन्नादिनीं ते प्रजां करिष्यामीति प्रतिज्ञातम् । सध्र्यक् सध्रीचीनमितरैरपि सह भोज्यम् । विदत् 'विदॢ लाभे' 'पुषादि' ( पा० ३ । १ । ५५ ) इत्यादिना च्लेरङादेशः अडभाव आर्षः । सरमा 'सृ गतौ' औणादिकोऽमप्रत्ययः । 'सरमा सरणिः' इति यास्कः । रुग्णम् 'रुजो भङ्गे' निष्ठायां 'ओदितश्च' ( पा० ८ । २ । ४५ ) इति नत्वम् । पाथः पातीति 'पा रक्षणे' अन्नम् असुन्प्रत्ययस्य थुडागमः । कः करोतेर्लुङि 'मन्त्रे घसह्वर–' ( पा० २ । ४ । ८० ) इत्यादिना च्लेर्लोपे रूपम् । सुपदी 'पादोऽन्यतरस्याम्' ( पा० ४ । १ । ८ ) इति ङीप् । गात् 'इणो गा लुङि' ॥ ५९ ॥

## षष्टी ।

न॒हि स्पश॒मवि॑दन्न॒न्यम॒स्माद्वै॑श्वान॒रात्पु॑रए॒तार॑म॒ग्नेः । एमे॑नमवृधन्न॒मृता॒ अम॑र्त्यं वैश्वान॒रं क्षैत्र॑जित्याय दे॒वाः ॥ ६० ॥

उ० नहि स्पशम् । त्रिष्टुप् । नहिशब्दः प्रतिषेधवचनः । स्पशम् स्पशः प्रणिधिरुच्यते । अविदन् अन्यम् अस्मात् वैश्वानरादग्नेः । पुरएतारं सर्वेषु कार्येषु अग्रगन्तारं च नहि अविदन् । आ ईम् द्वौ निपातौ अथशब्दस्यार्थे वर्तेते । अथ एनं वैश्वानरम् अवृधन् वर्धितवन्तः । अमृता अमरणधर्माणो देवाः । अमर्त्यम् अमरणधर्माणं वैश्वानरम् । क्षैत्रजित्याय यजमानस्य देवयजनक्षेत्रजयनिमित्तम् ॥ ६० ॥

म० विश्वामित्रदृष्टा त्रिष्टुब्वैश्वानरी । देवाः वैश्वानरात् विश्वेभ्यो हितात् अग्नेः अन्यं स्पशं दूतं पुरएतारं सर्वकार्येषु पुरःसरं च नहि अविदन् नालभन्त । नहिशब्दो निषेधवाची । स्पशः प्रणिधिरुच्यते । पुर एति गच्छति पुरएता तम् । आ ईम् निपातौ अथार्थौ । अथामृता देवाः एनं वैश्वानरमवृधन् अवर्धयन् । कीदृशमग्निम् अमर्त्यममरणधर्माणम् । किमर्थमवृधन् । क्षैत्रजित्याय क्षेत्रमेव क्षैत्रं तस्य जित्यं जयस्तस्मै यजमानस्य क्षेत्राप्त्यै ॥ ६० ॥

## एकषष्टी ।

उ॒ग्रा वि॑घ॒निना॒ मृध॑ इन्द्रा॒ग्नी ह॑वामहे । ता नो॑ मृडात ई॒दृशे॑ ॥ ६१ ॥

उ० उग्रा विघनिना । द्वे गायत्र्यौ । उग्रा उग्रौ उद्गूर्णौ । विघनिना हन्तेर्घस्त्वम् विहन्तारौ मृधः संग्रामस्य संग्रामका-

रिणां वा। इन्द्राग्नी हवामहे आह्वयामः। तौ च आहूतौ नः अस्मान् मृडातः मृडयतः सुखयतः ईदृशे कर्मणि ॥६१॥

**म०** भरद्वाजदृष्टा ऐन्द्राग्नी गायत्री। वयमिन्द्राग्नी हवामहे आह्वयामः। कीदृशाविन्द्राग्नी उग्रौ उद्गूर्णबलौ। मृधो हिंसकान् विघनिनौ विशेषेण हतो नाशयतस्तौ विघनिनौ हन्तेर्घः। ता तौ आहूतौ इन्द्राग्नी नोऽस्मान्। ईदृशे भयानके संग्रामे कर्मणि वा। मृडातः मृडयतः सुखयतः ॥ ६१ ॥

## द्विषष्टी।

उपा॑स्मै गायता नरः॒ पव॑माना॒येन्द॑वे। अ॒भि दे॒वाँ२॥ इय॑क्षते ॥ ६२ ॥

**उ०** उपास्मै। उपगायत हे नरः ऋत्विजः, अस्मै पवमानाय दशापवित्राद्द्रोणकलशं प्रति गच्छते। इन्दवे सोमाय अभिइयक्षते यष्टुमिच्छते। सनि यकारलोपः। देवान् ॥६२॥

**म०** देवलदृष्टा सोमदेवत्या गायत्री। हे नरो, यज्ञनेतारः ऋत्विजः, अस्मै इन्दवे सोमाय उपगायत उद्गातृशास्त्रमनुसृत्योपशब्दयत। स्तोत्राणि कुरुतेत्यर्थः। कीदृशायेन्दवे। पवमानाय 'पव गतौ' पवते दशापवित्राद्द्रोणकलशं गच्छति पवमानस्तस्मै देवान् यष्टव्यानभि संमुखमियक्षते यष्टुमिच्छते। यजेः सनि छान्दसोऽभ्यासयकारलोपः ॥ ६२ ॥

## त्रिषष्टी।

ये त्वा॑हिह॒त्ये॑ मघव॒न्नव॑र्धन्ये शा॑म्ब॒रे ह॑रिवो॒ ये गवि॑ष्टौ। ये त्वा॑ नू॒नम॑नु॒ मद॑न्ति॒ विप्राः॒ पिबे॑न्द्र॒ सोम॒ꣳ सग॑णो म॒रुद्भिः॑ ॥ ६३ ॥

**उ०** ये त्वा द्वे त्रिष्टुभौ। ये मरुतः त्वाम् अहिहत्ये अहिरसुरः। अहिवधे कर्तव्ये हे मघवन्, अवर्धन्वर्धितवन्तः। ये च शाम्बरे वधे कर्तव्ये हे हरिवन्। येच गविष्टौ गवामपामेषणायोपस्थितं सन्तं त्वामवर्धन्। ये च त्वा त्वाम् नूनं निश्चयेन अनुमदन्ति उत्कर्षयन्ति तर्पयन्ति वा। विप्राः मेधाविनः पिब हे इन्द्र, सोमम् सगणः समानगणः तैः मरुद्भिः ॥ ६३ ॥

**म०** विश्वामित्रदृष्टाया द्वे त्रिष्टुभौ इन्द्रदेवत्यास्तिस्रः। हे मघवन् धनवन्, ये मरुतो गणदेवाः अहिहत्ये वृत्रहननरूपे कर्मणि त्वा त्वामवर्धन् जहि वीरयस्वेत्यादिवचोभिस्ते वृद्धिमकुर्वन्। हे हरिवः, हरिनामकाश्वयुक्त, शाम्बरे शम्बरसंबन्धिनि युद्धे ये त्वामवर्धन्। ये च मरुतो गविष्टौ गवां पण्यसुरहृतानामिष्टौ प्रत्याहरणेच्छायां ये त्वामवर्धयन्। ये च विप्राः मेधाविनो मरुतो नूनं निश्चितं त्वामनु मदन्ति उत्कर्षयन्ति तर्पयन्ति वा। हे इन्द्र, तैर्मरुद्भिः सगणः गणसहितः सन् सोमं पिब मरुत्वतीयादिग्रहं पिबातृप्तेः। अहिहत्ये हन्तेर्भावे 'हनस्त च' ( पा० ३। १। १०८ ) इति क्यप् कृदुत्तरपदसमासः। अवर्धन्। ञेः सार्वधातुकत्वेऽपि 'छन्दस्युभयथा' ( पा० ३। ४। ११७ ) इत्यार्धधातुकत्वे णिलोपः। यद्वृत्तयोगान्निघाताभावः ( पा० ८। १। ६६ )। गवामिष्टिर्यस्मिन् रणे इति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( पा० ६। २। १ ) इति पूर्वपदस्वरः। अनुमदन्ति। ञेर्लसार्वधातुकानुदात्तत्वे धातुस्वरः 'तिङि चोदात्तवति–' ( पा० ८। १। ७१ ) इति गतेर्निघातः ॥ ६३ ॥

## चतुःषष्टी।

जनि॑ष्ठा उ॒ग्रः सह॑से तु॒राय॑ म॒न्द्र ओजि॑ष्ठो बहु॒लाभि॑मानः। अव॑र्ध॒न्निन्द्रं॑ म॒रुत॑श्चि॒दत्र॑ मा॒ता यद्वी॒रं द॒धन॒द्धनि॑ष्ठा ॥ ६४ ॥

**उ०** जनिष्ठा उग्रः। जातः उग्रः उद्गूर्णः। सहसे बलाय तुराय त्वरणाय। वचनविशेषणम्। मन्द्रः मन्दनीयः ओजिष्ठः अतिशयेन ओजसा युक्तः। बहुलाभिमानः अचिन्त्याभिमानः बहुप्रकाराभिमानो वा। अभिमानः ज्ञानम् यत् तस्मात्। अवर्धन् अवर्धयन् इन्द्रं। मरुतश्चित् मरुतोऽपि अत्र परमपदे स्थितम्। माता अदितिः यत् यस्मात् वीरंच दधनत् दधातेरेतद्रूपम् नकार उपजनः। धारितवती। धनिष्ठा अतिशयेन धन्या धनवती। तस्माच्च मरुतः अवर्धन्निति संबन्धः ॥ ६४ ॥

**म०** गौरिवीतिदृष्टा। हे इन्द्र, त्वं सहसे बलाय जनिष्ठा अजनिष्ठाः जातोऽसि लुङ् अडभावः। कीदृशाय। सहसे तुराय त्वरमाणाय वेगवते। कीदृशः त्वम्। उग्रः उत्कृष्टः। मन्द्रः स्तुत्यः ओजिष्ठः अत्यन्तमोजस्वी ओजिष्ठः 'विन्मतोर्लुक्' ( पा० ५। ३। ६५ ) इति विनो लुक्। बहुलाभिमानः सर्वं जगन्मद्विभूतिरिति भूयिष्ठाभिमानः। अत्र वृत्रवधे ईदृशमिन्द्रं मरुतश्चित् मरुतोऽपि अवर्धन्। स्तुतिसहायाभ्यामिति शेषः। इदं चेन्द्रसौभाग्यं गर्भकालीनमित्याह। यत् यस्मात् मातादितिः धनिष्ठान्या वीरमिन्द्रं दधनत् गर्भे धारितवती। नकार उपजनः ॥ ६४ ॥

## पञ्चषष्टी।

आ तू न॑ इन्द्र वृत्रहन्न॒स्माक॑म॒र्धमा ग॑हि। म॒हान्म॒हीभि॑रू॒तिभिः॑ ॥ ६५ ॥

**उ०** आ तू नः। आ तू नः इति त्रयो निपाताः छन्दःपरिपूर्तिकराः। हे इन्द्र, हे वृत्रहन् वृत्रस्य हन्तः, अस्माकमर्धम् अस्मदीयं पक्षम् आगहि आगच्छ। एत्य च अस्मान् पालयेति शेषः। महान् सन् महीभिर्महतीभिः ऊतिभिरवनैः पालनैः ॥ ६५ ॥

**म०** वामदेवदृष्टा गायत्री। तु इति निपातः क्षिप्रवचनः। 'ऋचि तुनुघ–'( पा० ६। ३। १३३ ) इत्यादिना तस्य संहितायां दीर्घः। वृत्राणामावरकाणां पाप्मनां हन्ता वृत्रहा। हे

वृत्रहन् हे इन्द्र, त्वं नोऽस्मान् प्रति तु क्षिप्रम् आ आगच्छे-त्यर्थः । आगत्य चास्माकमर्धमस्मन्निवासदेशमागहि । देवयजन-देशं प्राप्नुहीत्यर्थः । कीदृशस्त्वम् । महीभिः महतीभिः ऊतिभिः अवनैः रक्षाभिः महान् । योऽन्यं रक्षति स महानुच्यते ॥६५॥

## षट्षष्टी ।

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः । अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥ ६६ ॥

**उ०** त्वमिन्द्र बृहती । त्वमेव हे इन्द्र, प्रतूर्तिषु प्रतरणेषु शत्रुषु निमित्तभूतेषु । अभिविश्वा असि अभ्यसि अभिभवसि विश्वाः सर्वाः स्पृधः संग्रामान् । किंच अशस्तिहा अभेरादिशेषः । अभिशस्तिहा । जनयिता च सुखानाम् । विश्वतूः सर्वतूरणश्चासि । अतो ब्रवीमि । त्वमेव तूर्य जहि मारय । तरुष्यतः हनिष्यतः शत्रून् ॥ ६६ ॥

**म०** नृमेधदृष्टे द्वे ऐन्द्यौ पथ्याबृहतीसतोबृहत्यौ । प्रकृष्टा तूर्तिर्हिंसा येषां यत्र वा ते प्रतूर्तयः शत्रवः संग्रामा वा तेषु प्रतूर्तिषु हे इन्द्र, त्वं विश्वाः सर्वाः स्पृधः स्पर्धमानाः शत्रुसेनाः अभि असि अभिभवसि । किंच यतः त्वं विश्वतूरसि विश्वान् सर्वान् रिपून् तूर्यते हिनस्ति विश्वतूः । ततः तरुष्यतः हनिष्यतः शत्रून् तूर्य जहि मारय । कीदृशस्त्वम् । अशस्तिहा नास्ति शंसा प्रशस्तिर्येषां ते अशस्तयः दुष्टास्तान्हन्तीत्यशस्तिहा । जनिता जनयिता स्वपक्षप्रशंसोत्पादकः ॥ ६६ ॥

## सप्तषष्टी ।

अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा । विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ ६७ ॥

**उ०** अनु ते । सतोबृहती । चतुर्थः पादः प्रथमं व्याख्यायते यच्छब्दयोगात् । हे इन्द्र, यत् यस्मात्कारणात् वृत्रमसुरं तूर्वसि । तूर्वतिर्हिंसाकर्मा हिंसि । अतः कारणात् । अनु ते शुष्मं तुरयन्तमीयतुः । अन्वीयतुः अनुजग्मतुः अनुगतवत्यौ त्वामेव । ते तव शुष्मं बलं किंकुर्वाणं । तुरयन्तं तूर्णं गच्छन्तम् । क्षोणी क्षोण्यौ द्यावापृथिव्यौ । शिशुंन शिशुमिव पुत्रमिव । मातरा मातृपितरौ विरूपैकशेषः । किंच विश्वाः सर्वाः स्पृधः संग्रामाः ते तव मन्यवे मन्योः भयात् श्नथयन्ति विशीर्यन्ति । योहि वृत्रं हन्ति यस्य च द्यावापृथिव्यौ बलमीयतुः ॥ ६७ ॥

**म०** हे इन्द्र, क्षोणी द्यावापृथिव्यौ ते तव शुष्मं बलमन्वीयतुः अनुगच्छतः । द्यावापृथिवीस्था लोकास्त्वद्बलं बहु मन्यन्त इति भावः । कीदृशं शुष्मम् । तुरयन्तं शत्रुषु त्वरामाविष्कुर्वन्तम् । अनुगमने दृष्टान्तः । मातरौ मातापितरौ शिशुंन शिशुमिव । यथा पितरौ बालमनुगच्छतः 'यस्य बलाद् द्यावापृथिव्यावप्यबिभीताम्' ( निरु० १० । १० ) इति यास्कः । तदेव प्रपञ्चयति विश्वा इति । विश्वाः सर्वाः स्पृधः स्पर्धमानाः शत्रुसेनाः ते तव मन्यवे । षष्ठ्यर्थे चतुर्थी । तव क्रोधात् श्नथयन्त अश्नथयन्त श्नथिताः खिन्ना भवन्ति । तव क्रोधदर्शनादुद्विजन्त इत्यर्थः । युक्तमेतत् । यत् यस्मात् युद्धे हे इन्द्र, त्वं वृत्रं देवासुरावध्यं तूर्वसि हंसि । तूर्वतिर्हिंसार्थः ॥ ६७ ॥

## अष्टषष्टी ।

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् । आदित्येभ्यस्त्वा ॥ ६८ ॥

**उ०** यज्ञो देवानामिति व्याख्यातम् ॥ ६८ ॥

**म०** कुत्सदृष्टा त्रिष्टुप् व्याख्याता ( ८ । ४ ) ॥ ६८ ॥

## एकोनसप्ततितमी ।

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ॥ ६९ ॥

**उ०** अदब्धेभिः सवितः । जगती । हे सवितः, अदब्धेभिः अनुपहिंसितैः पायुभिः पालनैः त्वम् शिवेभिः शान्तैः अद्य परिपाहि परिपालय नोऽस्माकम् गयं गृहम् । हिरण्यजिह्वः सत्यवाक् भूत्वा । सुविताय सुप्रसूताय कर्मणे नव्यसे नवतराय । भवेति वाक्यशेषः । रक्ष च सर्वथा । माकिः मा कश्चन नोऽस्माकं अघशंसः अघं पापं यः शंसति स अघशंसः । ईशत ईष्टा ईशिता भवतु ॥ ६९ ॥

**म०** भरद्वाजदृष्टा जगती सवितृदेवत्या । हे सवितः सर्वस्य प्रसवितः, पायुभिः पालनैः नोऽस्माकं गयं गृहं धनं वा त्वमद्य परिपाहि रक्ष । 'गयः कृदरः' इति गृहनामसु, 'मीढुं गयः' इति धननामस्वपि पाठात् गृहधनयोर्गयशब्दः । कीदृशैः पायुभिः । अदब्धेभिः अदब्धैरनुपहिंसितैः । शिवेभिः शान्तैः सुखरूपैः । कीदृशस्त्वम् । हिरण्यजिह्वः हिरण्यवदविचला जिह्वा यस्य सत्यवाक् । यद्वा 'हिरण्या हितरमणीया जिह्वा ज्वाला यस्येति वा 'हिरण्यं कस्मादित्यादि हितरमणीयं भवतीति वा' ( निरु० २ । १३ । १२ ) इति यास्कोक्तेः । किंच नव्यसे नवीयसे नवतराय सुविताय सु इताय सुखाय अस्मान् रक्ष पालय । किंच माकिः मा कश्चनाघशंसः पापमाशंसमानः शत्रुः नोऽस्माकमीशत ऐश्वर्यं कुर्यात् । त्वत्प्रसादात्पाप्मास्माकमीशिता मा भूदित्यर्थः । ईशत लङ् 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुगभावः अडभावश्च ॥ ६९ ॥

## सप्ततितमी ।

प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्तः

सुतासः । वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ॥ ७० ॥

उ० प्रवीरया । अन्यः पुरोरुग्गणः त्रिष्टुप् । प्रवीरया । बहुवचनस्य स्थाने यादेशः । प्रकृष्टवीराः सोमाः शुचयः स्वभावादेव शुद्धाः । दद्रिरे 'दृ विदारणे' । विदीर्णाः कणीभूताः । वां युवयोः संबन्धिनः । हे यजमानौ जायापती । कथं दद्रिरे इति चेत् । वाम् अध्वर्युभिः मधुमन्तः उदकवन्तः सुतासः अभिषुताः ग्रावभिः । एवमनेनार्धर्चेन यजमानौ संबोध्य अथेदानीं संबोधयति वायुम् । वह वायो नियुतः । वह प्रापय । हे वायो, नियुद्गणकानश्वान् याहि च अच्छ सोममभि । सोमं वा प्राप्तुम् । पिबच सुतस्याभिषुतस्य । अन्धसः सोमस्य । मदाय तृप्तये मदजननार्थं वा ॥ ७० ॥

म० वसिष्ठदृष्टा त्रिष्टुप् । वायुदेवत्याः पञ्चदश ऋचः द्वे प्रतीकोक्ते एवं सप्तदशकः पुरोरुचां समूहः । वामिति द्विवचनं पत्नीयजमानविषयम् । हे पत्नीयजमानौ, वां युवयोः स्वभूताः सोमाः दद्रिरे विदीर्णाः चूर्णीभूताः 'दृ विदारे' कर्मकर्तरि लिट् । कीदृशाः । प्रवीरया प्रकृष्टा वीरा ज्ञानोद्भवा ऋत्विजो येषां सोमानां ते प्रवीराः 'सुपां सुलुक्' (पा० ७ । १ । ३९) इति जसो याजादेशः । शुचयः निर्मलाः । अध्वर्युभिः सुतासः सुताः अभिषवधर्मेण 'ग्रावभिः द्रवीभावमापादिताः अभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात्' (का० ९ । ५ । १) इति कात्यायनस्मरणादध्वर्युभिरिति बहुवचनम् । अध्वरनेतृभिर्ऋत्विग्विशेषैः सुता इत्यर्थः । मधुमन्तः मधु निग्राभ्यारूपमुदकं तद्वन्तः । एवं पूर्वार्धे पत्नीयजमानौ संबोध्य वायुमाह । वाति सर्वत्र गच्छति वायुः हे वायो, नियुतोऽश्वान् त्वं वह देवयजनदेशं प्रापय अच्छ याहि । अच्छाभेरर्थे आप्तुमिति वा । सोमाभिमुखं सोममाप्तुं वा याहीत्यर्थः । यात्वा च मदाय तृप्तये मत्ततायै वा सुतस्याभिषुतस्यान्धसः सोमस्य स्वमंशं पिब ॥ ७० ॥

## एकसप्ततितमी ।

गाव उपावतावतं मही यज्ञस्य रप्सुदा । उभा कर्णा हिरण्यया ॥ ७१ ॥

उ० गाव उपेति व्याख्यातम् ॥ ७१ ॥

म० गाव उपेति व्याख्याता (३३ । १९) ॥ ७१ ॥

## द्विसप्ततितमी ।

काव्ययोराजानेषु क्रत्वा दक्षस्य दुरोणे । रिशादसा सधस्थ आ ॥ ७२ ॥

उ० काव्ययोराजानेषु । गायत्री । काव्ययोः कवीनां हितयोः । आजानेषु आजन्मभूमिषु उत्पत्तिस्थानेषु । क्रत्वा कर्मणा अग्निष्टोमादिकया क्रियया । दक्षस्य उत्साहवतो यजमानस्य । दुरोणे यज्ञगृहे । रिशादसा । रेशितव्यस्योपलक्षयितारौ । सधस्थआ सहस्थाने आगच्छतम् । हे मित्रावरुणाविति शेषः ॥ ७२ ॥

म० दक्षदृष्टा गायत्री मैत्रावरुणी । कवीनां क्रान्तदर्शिनां ज्ञानसमुच्चयकारिणां हितौ काव्यौ तयोः । रिशन्ति हिंसन्ति रिशाः तानासमन्तादस्यतो नाशयतः तौ रिशादसौ । द्विवचनं मित्रावरुणविषयम् । हे रिशादसौ शत्रूपक्षयितारौ मित्रावरुणौ, यजमानस्य सधस्थे देवमनुष्याणां सहसोमपानस्थाने युवाम् आ आगच्छतम् । कीदृशस्य यजमानस्य । काव्ययोः कविहितयोर्युवयोः आजानेषु आ समन्ताज्जन्मसु सोमपानार्थमाविर्भूतभूमिषु देवयजनादिषु दुरोणे यज्ञगृहे च क्रत्वा क्रतुना यज्ञकर्मणा कृत्वा दक्षस्य उत्साहवतः यज्ञं समर्धयत इत्यर्थः । दक्षस्येति विशेषणाद्यजमानपदमध्याहर्तव्यम् । आ इत्युपसर्गेण गच्छतमिति क्रियाध्याहारः ॥ ७२ ॥

## त्रिसप्ततितमी ।

दैव्यावध्वर्यू आगतꣳ रथेन सूर्यत्वचा । मध्वा यज्ञꣳ समञ्जाथे ॥ तं प्रत्नथायं वेनः ॥ ७३ ॥

उ० दैव्यावध्वर्यू व्याख्यातम् । तं प्रत्नथा अयं वेन इति द्वे प्रतीकोक्ते ॥ ७३ ॥

म० दैवेति व्याख्याता (३३ । ३३) तं प्रत्नथा (७ । १२) अयं वेनः (७ । १६) इति द्वे प्रतीकोक्ते ॥ ७३ ॥

## चतुःसप्ततितमी ।

तिरश्चीनो विततो रश्मिरेषामधःस्विदासी३दुपरिस्विदासी३त् । रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ ७४ ॥

उ० तिरश्चीनो विततः । त्रिष्टुप् । आग्रयणेनया गृह्यते तदभिप्रायेण प्रधार्यते आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानः । ततो ग्रहग्रहणम् । तिरश्चीनो विततो रश्मिरेषाम् एषां सोमानाम् अन्तरा दशापवित्रलक्षणात् रश्मिः तिरश्चीनः विततः प्रसारितः उद्गातृभिः तस्मिन्दशापवित्रे सोमः प्रक्षिप्तः दशापवित्रात् अधःस्वित् अधश्च आसीत् उपरिस्वित् उपरि च आसीत् । आसीदित्युभयत्र विचारे प्लुतिः । किंच रेतोधा आसन् । रेतः सोमः स हि जगदुत्पत्तिबीजम् । तस्य धारयितार आसन् ग्रहचमसाधवनीयद्रोणकलशादयः । महिमानश्च आसन् । सोमैकादशाः सोमस्य महिमानः । किंच स्वधा अवस्तात् स्वधा अन्नम् अवस्तात् शुक्रो द्रोणकलश इत्येतदुक्तं भवति । प्रयतिः परस्तात् प्रयतनं प्रयतिः परस्तादुपरिष्टात् । आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानोऽवनयति इत्येतदुक्तं भवति ॥ ७४ ॥

म० प्रजापतिदृष्टा त्रिष्टुप् भाववृत्तदेवत्या । भावेषु पदार्थेषु

वृत्तः स्थितो भाववृत्तः परमात्मा सोऽस्या देवता । आग्रयणग्रहे विनियोगः क्रमपाठाल्लभ्यते ततोऽधियज्ञं ताव्द्व्याख्यायते । 'आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानस्ततो ग्रहग्रहणमा श्रुवादिति' ( का० ९ । ५ । १७ ) कात्यायनेनोक्तं तदभिप्रायेणोच्यते । एषां पूयमानसोमानां रश्मिः यमनात् ऋजीषादिकल्कनियामको दशापवित्रलक्षणः तिरश्चीनः तिर्यङ् एव विततो विस्तारितः उद्गातृभिरिति शेषः । तस्मिन् दशापवित्रे सोमः प्रक्षिप्तः सन् दशापवित्रादधश्च आसीत् उपरि च आसीत् । स्विच्छब्दौ चार्थौ । उपरि स्विदासीदितीकारः लुतः । किंच तत्रैके पदार्था ग्रहचमसाधवनीयद्रोणकलशादयो रेतोधा आसन् रेतो जगदुत्पत्तिबीजं सोमं दधति धारयन्ति ते रेतोधाः सोमाधारभूताः आसन् । 'यज्ञाद्वै प्रजाः प्रजायन्ते' इति श्रुतेर्जगद्बीजत्वं सोमस्य । तथापरे पदार्थाः सोमरसरूपास्तत्राधेयाः सन्तो महिमानः महान्तः उत्कृष्टा आसन् । आधाराधेयभावेन सर्वोऽयं यज्ञात्मैव स्थित इति भावः । 'ब्रह्मार्पणं ब्रह्म हविः' इति स्मृतेः । किंच स्वधान्नं तद्रूपः अवस्तात् अवरो होमात् प्राक् नीच आसीत् । प्रयतिः प्रयतते प्रयतिः प्रयत्नवान् होमानन्तरं लब्धफलकः सन् परस्तात् परः उत्कृष्टः आसीत् । अथाधिदैवतं व्याख्या । एषां प्रसिद्धानां सूर्यरश्मीनां मध्ये एकः सुषुम्णाख्यो रश्मिः तिरश्चीनः विततः विस्तृतः सन् किम् द्युलोकादधःस्वित् आसीत् उतो परिस्विदासीत् । स्विदिति वितर्के । 'विचार्यमाणानाम्' ( पा० ८ । २ । ९७ ) इति लुतः । किंच स रश्मिः रेतोधाः रेतसो विश्वबीजस्योदकस्य धारयिता आसीत् । व्यत्ययेनैकवचनम् । तथाच श्रुतिः 'सूर्यस्य ह्वा एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्ति' इति । अन्ये रश्मयो महिमानः माहात्म्याधायका आसन् विश्वप्रकाशत्वेन । किंच स्वधान्ननिष्पादकः स एव रश्मिः अवस्तात् अवरो भूम्यभिमुखः प्रयतिः प्रयत्नात्सोर्ध्वमुखः सन् परस्तात् परः उत्कृष्टः दर्शनमात्रेण देवानां तृप्तिदः । तथोक्तं छान्दोग्यश्रुतौ 'असौ वा आदित्यो देवमध्वित्युपक्रम्य न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' ( छां० ५ । १ । ६ ) इति । अथाध्यात्मपक्षे व्याख्या । नासदासीदिति सप्तर्चेऽध्यात्मप्रतिपादके सूक्ते ( ऋ० ८ । ७ । १७ ) बह्वृच इमामृचं पठन्ति तत्र । नासदासीदिति निरस्तसमस्तप्रपञ्चां प्रलयावस्थामनूद्य विश्वबीजमविद्योक्ता । कामस्तदग्रे समवर्ततेति पादेन च काम उक्तः । मनसो रेतः प्रथमं यदासीदिति पादेन पुण्यापुण्यात्मकं कर्मोक्तम् । एवमविद्याकामकर्माणि सृष्टिहेतून्युक्त्वा तेषां स्वकार्यजनने शैघ्र्यमाह तिरश्चीन इति । एषामविद्याकामकर्मणां रश्मिरिव रश्मिः कार्यवर्गो वियदादि विततः विस्तृतः सन् तिरश्चीनः तिर्यगवस्थितो मध्ये स्थितः अधश्चासीदुपरि चासीत् । सूर्यरश्मिवद्युगपत्सर्वं व्याप्येत्यर्थः । तदेव विभजते रेतोधा इति । सृष्टे कार्यवर्गे केचन रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः आसन् । अन्ये महिमानः महान्तो विपुला वियदादयो भोग्या आसन् । महिमान इति स्वार्थे इमनिच् । एवं मायायामीश्वरः सर्वं जगत्सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोज्यरूपेण विभागं कृतवानित्यर्थः । तयोर्भोक्तृभोग्ययोर्मध्ये स्वधान्नं भाग्यप्रपञ्चोऽवस्तादवरो निकृष्ट आसीत् । प्रयतिः प्रयतिता भोक्ता परस्तात् परः उत्कृष्टः भोक्तृप्रपञ्चाधीनं भोग्यप्रपञ्चं कृतवानित्यर्थः । 'विभाषा परावराभ्याम्' ( पा० ५ । ३ । २९ ) इति प्रथमार्थेऽस्तातिप्रत्ययः । 'अस्ताति च' ( पा० ५ । ३ । ४० ) इत्यवरशब्दस्यावादेशः । 'एतद्वा इदꣳ सर्वमन्नं चैवान्नादश्च' इति श्रुतेः ॥ ७४ ॥

## पञ्चसप्ततितमी ।

**आ रोद॑सी अपृणदा स्व॑र्म॒हज्जा॒तं यदे॑नम॒पसो॒ अधा॑रयन् । सो अ॑ध्व॒राय॒ परि॑णीयते क॒विरत्यो॒ न वाज॑सातये॒ चनो॑हितः ॥ ७५ ॥**

**उ०** आरोदसी जगती । वैश्वानर उच्यते । आ अपृणत् आपूरयति रोदसी द्यावापृथिव्यौ । आ स्वः आपूरयति च स्वः आदित्यम् महत् महान्तम् । कदा आपृणत् । यत् यदा जातं जातमात्रम् एनं वैश्वानरम् अपसः अपस्विनः कर्मवन्तः अधारयन् कर्मणि स्थापितवन्तः । सो अध्वराय स एवायमग्निः अध्वराय यज्ञार्थं परिणीयते । कविः क्रान्तदर्शनः । कथमिव अत्योन अश्वइव । वाजसातये अन्नसंभजनाय । चनोहितः चनसि अन्ने स्थापितः । अश्वो हि घृतादिभिरभिघारितेनान्नेन पोष्यते अतस्तेनोपमीयते ॥ ७५ ॥

**म०** तमेव वैश्वानराख्यं भोक्तारं परमात्मानं स्तौति । विश्वामित्रदृष्टा जगती वैश्वानरदेवत्या । यत् यदा जातमरणीत उत्पन्नमात्रमेनं वैश्वानरमपसोऽपस्विनः कर्मवन्तो यजमाना अधारयन् कर्मणि स्थापितवन्तः । तदा स रोदसी द्यावाभूमी आ सर्वतः अपृणत् पूरयति स्म । स्थावराणां प्रस्तरादौ तदुपलब्धेः । न केवलं रोदसी किंतु महत्प्रभूतं स्वः अन्तरिक्षमापृणत्सूर्यात्मना । त्रैलोक्यं जाठरात्मना पूरितमित्यर्थः । गार्हपत्यादीनां लोकत्वं श्रुत्योक्तम् 'अयं वै लोको गार्हपत्यो द्यौराहवनीय' इति । उक्तार्थमेव विवृणोति स इति । सोऽनिरध्वराय यागाय परिणीयते सर्वतोऽतिप्रणीताग्नीध्रीयादिधिष्ण्यादिषु प्रकर्षेण प्रापय्यते । नयने दृष्टान्तः । अत्यो न यथाश्वो वाजसातयेऽन्नलाभाय सर्वतो नीयते । राजाश्ववान्भोगजातं लभते यथा तद्वद्द्विजोऽग्निं सेवमानो ब्रह्मलोकान्तभोगानिति भावः । कीदृशोऽग्निः । कविः सर्वज्ञः चनोहितः चन इत्यन्ननामेति यास्कः । चनसेऽन्नाय भोग्याय हितः सर्वभोगसंपादक इत्यर्थः ॥ ७५ ॥

## षट्सप्ततितमी ।

**उ॒क्थेभि॑र्वृत्र॒हन्त॑मा॒ या म॑न्दा॒ना चि॒दा गि॒रा । आ॒ङ्गू॒षैरा॒विवा॑सतः ॥ ७६ ॥**

**उ०** उक्थेभिर्वृत्रहन्तमा । द्वे गायत्र्यौ । यौ इन्द्राग्नी । उक्थेभिः उक्थैः स्तुतौ सन्तौ । वृत्रहन्तमा वृत्रस्यातिशयेन हन्तारौ स्तः । या चित् यौ च गिरा वाचा स्तुतौ आमन्दाना मोदमानौ स्तः । यौ च आङ्गूषैः स्तोमैः स्तुतौ आविवासतः परिचरतः स्तोतॄन् । तौ उक्थैः गिरा आङ्गूषैश्च स्तुमः सर्वकामाह्वयर्थम् ॥ ७६ ॥

**म०** वसिष्ठदृष्टेन्द्राग्निदेवत्या गायत्री । या यौ इन्द्राग्नी आङ्गूषैः आघोषैः चित् लौकिकवाक्स्तोमैरपि स्तुतौ आ आगच्छतः 'आङ्गूषः स्तोम आघोषः' ( निरु० ५ । ११ ) इति यास्कः । तौ उक्थेभिः उक्थैः गिरा स्तोत्रात्मिकया स्तुत्या आविवासतः आविवस्येते परिचर्येते यजमानैरिति शेषः । व्यत्ययेन कर्तरि लट् । 'विवासतिः परिचर्यायाम्' ( निरु० ११ । २३ ) इति यास्कः । कीदृशौ तौ । वृत्रहन्तमा वृत्राणामावरकाणां पाप्मनां हन्तृतमौ 'नाद्धस्य' ( पा० ८ । २ । १७ ) इति नुम् । मन्दाना मन्दानौ मोदमानौ स्वभावतः । सर्वत्र विभक्तेर्डादेशः ॥ ७६ ॥

## सप्तसप्ततितमी ।

उप॑ नः सू॒नवो॒ गिरः॑ शृ॒ण्वन्त्व॒मृत॑स्य॒ ये । सु॒मृ॒डी॒का भ॑वन्तु नः ॥ ७७ ॥

**उ०** उप नः । उपशृण्वन्तु नोऽस्माकम् गिरः वाचः सूनवः पुत्राः अमृतस्य प्रजापतेः ये विश्वेदेवाः । श्रुत्वा च सुमृडीकाः अतिशयेन सुखयितारः भवन्तु नः अस्माकम् ७७

**म०** सुहोत्रदृष्टा वैश्वदेवी गायत्री । ये अमृतस्य मरणहीनस्य प्रजापतेः सूनवः पुत्राः विश्वेदेवाः ते नोऽस्माकं गिरः उपशृण्वन्तु समीपमागत्यावधारयन्तु । श्रुत्वा च नोऽस्माकं सुमृडीकाः सुखकराः भवन्तु । शोभनं मृडीकं सुखं येभ्यस्ते ॥ ७७ ॥

## अष्टसप्ततितमी ।

ब्रह्मा॑णि मे म॒तयः॒ शꣳ सु॒तासः॑ शु॒ष्म॑ इयर्ति॒ प्रभृ॑तो मे॒ अद्रिः॑ । आ॒शा॑सते॒ प्रति॑हर्यन्त्यु॒क्थेमा हरी॑ वह॒तस्ता नो॒ अच्छ॑ ॥ ७८ ॥

**उ०** ब्रह्माणि मे तिस्रस्त्रिष्टुभः । इन्द्रमरुत्संवादे इन्द्रस्य द्वैतवाक्यम् । ब्रह्माणि स्तुतयः हवींषि वा । मे मतयः मम मतीः इयर्ति उद्गमयन्ति । शं सुखम् सुतासः अभिषुताः सोमाः मम उद्गमयन्ति । शुष्म इयर्ति प्रभृतो मे अद्रिः । शुष्मः बलम् इयर्ति । 'ऋ गतौ' णिचो लोपश्छान्दसः । अर्पयति उद्गमयति । प्रभृतः 'हृग्रहोर्भश्छन्दसि हस्य' इति हकारस्य भकारः । प्रहृतः सोमाभिषवनिमित्तम् । मे मम अद्रिः ग्रावा । यत्र च आशासते यजमानाः मदीयमागमनमिच्छन्ति । यत्र च प्रतिहर्यन्ति प्रतिकामयन्ते । हर्यतिः प्रेप्साकर्मा । उक्था उक्थानि । इमानि इन्द्रः शृणोत्विति । इमा इमौ हरी अश्वौ वहतः प्रापयतः । ता तानि स्थानानि नः अस्मान् अच्छ आभिमुख्येन ॥ ७८ ॥

**म०** तिस्रस्त्रिष्टुभः द्वे इन्द्रमरुत्संवादे इन्द्रमरुद्देवत्ये । आद्येऽगस्त्यदृष्टे । इन्द्रो मरुतः सहचरानाह । हे मरुतः, ब्रह्माणि मन्त्रवाक्यात्मकानि स्तुतिवचांसि हवींषि वा सोमाज्यादीनि मे मम स्वभूतानि । चोदनावाक्येऽग्न्यादिदेवतान्तरसंबन्धेन प्रतीयमानान्यपि सर्वदेवताप्राणात्मनो ममेन्द्रस्यैव तानीति भावः । मतयः मननयुक्ताः स्तुतयोऽपि शं मम सुखोत्पादिकाः अतो यज्ञे गन्तव्यमिति भावः । किंच मे मया प्रभृतः प्रकर्षेण धृतः अद्रिः वज्रः इयर्ति गच्छत्येव लक्ष्यंप्रति । न प्रतिहन्यत इत्यर्थः । कीदृशः । शुष्मः शोषयति शत्रूनिति शुष्मः । अतएव गमने राक्षसाद्युपद्रवो नास्तीत्यर्थः । न केवलं हविरादीनां मदीयत्वेन गन्तव्यम् अपितु आशासते प्रार्थयन्ते यजमाना यानि उक्था उक्थानि ता तानि स्तोत्रशस्त्राणि मां प्रतिहर्यन्ति कामयन्ते । हर्यतिः प्रेप्साकर्मेति यास्कः । किंच नोऽस्माकमिमा इमौ हरी अश्वौ अच्छ यज्ञाभिमुखं वहतः मां प्रापयतः । अत एवास्माभिर्गन्तव्यमिति भावः । यद्वार्थान्तरम् । ब्रह्माणि मतयः सुताः सोमाः प्रहृतः अद्रिः सोमाभिषवग्रावा शुष्मः सुखरूपः एतत् सर्वं मम शं सुखमियर्ति अर्पयति उद्गमयति । णिजन्तर्भूतः समानमन्यत् । शुष्मः 'अविसिविशुषिभ्यः कित्' ( उणा० १ । १४२ ) इति मन्प्रत्ययः कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तः । अत्ति भक्षयति रिपूनित्यद्रिः 'अदिशदिभूशुभिभ्यः क्रिन्' ( उणा० ४ । ६६ ) इति क्रिन्प्रत्ययः आद्युदात्तः ॥ ७८ ॥

## एकोनाशीतितमी ।

अनु॑त्तमा ते॑ मघवन्न॒कि॒र्नु न त्वावाँ॑ २॥ अस्ति दे॒वता॒ विदा॑नः । न जाय॑मानो॒ नश॑ते॒ न जा॒तो यानि॑ करि॒ष्या कृ॑णु॒हि प्र॑वृद्ध ॥ ७९ ॥

**उ०** अनुत्तमा ते । एवमिन्द्रेणोक्ता मरुतः प्रत्याहुः । अनुत्तम् 'णुद प्रेरणे' अस्य निष्ठाप्रत्यये 'अनुत्तप्रतूर्त–'इत्यादिना सिद्धिः । अनुत्तम् अप्रच्युतस्वभावं महाभाग्यम् । आ आस्ते । ते तव । हे मघवन् धनवन् । नकिर्नु नवा कश्चित् प्रच्यावको महाभागस्य । किंच न त्वावान् । मतुप् सादृश्यार्थे । न त्वत्सदृशः अस्ति देवता देवः विदानः सर्वज्ञ इत्यर्थः । किंच न जायमानः नशते । नशिर्व्याप्त्यर्थश्छन्दसि । व्याप्नोति । नच जातः तानि करिष्यति । तानि कानि । यानि त्वं कृणुहि करोषीति लकारव्यत्ययः । हे प्रवृद्ध ॥ ७९ ॥

**म०** एवमिन्द्रेणोक्ता मरुतः प्रत्याहुः । 'नुद प्रेरणे' अस्य निष्ठायां 'नसत्तनिषत्त–' ( पा० ८ । २ । ६१ ) इत्यादिना अनुत्तमिति निपातः । आ इति स्मरणे । स्मृतवन्तो वयम् । हे मघवन् धनवन् इन्द्र, ते तव अनुत्तं न केनापि नुत्तं नाशितं महाभाग्यमिति शेषः । नु निश्चये । नकिः न कोऽपि

त्वन्महाभाग्यनाश इति शेषः । न केवलं तवैश्वर्यमात्रं किंतु सर्वज्ञत्वमपीत्याह न त्वेति । वतुरत्र सादृश्ये । त्वावान् त्वत्सदृशो विदानः विद्वान् देवता देवो नास्ति । स्वार्थे तल् विदेः शानन् नित्त्वादाद्युदात्तः । किंच हे प्रवृद्ध प्रकर्षेण वृद्ध पुराणपुरुष, यानि कर्माणि वृत्रवधादीनि त्वं कृणुहि करोषि । व्यत्ययेन लोट् । तानि कर्माणि जायमानः वर्तमानः जातो भूतपूर्वश्च देवमनुष्येषु कश्चित् न नशते न व्याप्नोति । न करोतीत्यर्थः । नशतिर्व्याप्तिकर्मा । न करिष्या न च करिष्यति । उत्पत्स्यमान इति शेषः । तिलोपो दीर्घश्च छान्दसः । कालत्रये त्वादृशो नास्तीत्यर्थः । अतो यज्ञेशस्त्वम् ॥ ७९ ॥

## अशीतितमी ।

तदिदा॑स॒ भुव॑नेषु॒ ज्येष्ठं॒ यतो॑ ज॒ज्ञ उ॒ग्रस्त्वे॒ष नृ॑म्णः । स॒द्यो ज॑ज्ञा॒नो निरि॑णाति॒ शत्रू॑न॒नु यं विश्वे॒ मद॒न्त्यूमाः॑ ॥ ८० ॥

**उ०** तदित् । तत् इत् आस । इच्छब्द एवार्थे । आसीदिति लकारव्यत्ययः । तदेवासीत् भुवनेषु भूतजातेषु ज्येष्ठं वृद्धतमम् । यतो जज्ञे जातः उग्रः उद्गूर्णः वज्रहस्त इन्द्रः । त्वेषनृम्णः तेजोधनो वा महाधनो वा । कार्यं दृष्ट्वा कारणानुमानं कुरुते । नहि यतःकुतश्चिदिन्द्रो जायत इति । किंच । यश्च सद्योजज्ञानः जायमानः बाल्यमनपेक्ष्य । निरिणाति निहन्ति शत्रून् । पुनरपि विशिनष्टि । अनु यं विश्वे मदन्ति अनुमदन्ति अनुतृप्यन्ति यं विश्वे सर्वे देवाः । ऊमाः अवितारः अवनीया वा । नास्ति यतः कुतश्चिज्जायत इति विशेषः ॥ ८० ॥

**म०** बृहद्दिवदृष्टा माहेन्द्री त्रिष्टुप् । भुवनेषु भूतजातेषु तत् इत् तदेव ज्येष्ठं श्रेष्ठमास बभूव । 'छन्दस्युभयथा' ( पा० ३ । ४ । ११७ ) इति लिटः सर्वधातुकत्वादस्तेर्भूभावः । न सर्वोत्कृष्टं ब्रह्मैवासीत् यतो ज्येष्ठात् उग्रः उत्कृष्टः इन्द्रो जज्ञे जातः । कीदृशः । त्वेषनृम्णः त्वेषः कान्तिः नृम्णं धनं यस्य तेजोधनः कार्यं दृष्ट्वा कारणमहत्त्वं कल्प्यते । किंच य इन्द्रो जज्ञानः जायमान एव सद्यः तत्क्षणं शत्रून्निरिणाति नितरां हन्ति । 'री वधे' क्र्यादिः प्वादित्वाद्ध्रस्वः । किंच विश्वे सर्वे देवाः यमिन्द्रमनुमदन्ति अनुतृप्यन्ति । 'अनुर्लक्षणे' ( पा० १ । ४ । ८४ ) इति द्वितीया 'यद्वृत्तान्नित्यम्' ( पा० ८ । १ । ६६ ) इति मदन्तीत्यत्र निघातो न । कीदृशा । विश्वे ऊमाः अवन्ति रक्षन्ति ऊमाः रक्षकाः । अवतेर्मन्प्रत्ययः 'छ्वोः शूड्–' ( पा० ६ । ४ । १९ ) इति ऊठ् ॥ ८० ॥

## एकाशीतितमी ।

इ॒मा उ॑ त्वा पुरूवसो॒ गिरो॑ वर्धन्तु॒ या मम॑ । पा॒व॒कव॑र्णाः॒ शुच॑यो वि॒प॒श्चितो॒ऽभि स्तोमै॑रनूषत ॥ ८१ ॥

**उ०** इमा उ त्वा द्वे बृहत्यौ । तृतीयः पादः पूर्वं व्याख्यायते सामर्थ्यात् । यं त्वां पावकवर्णा अग्निवर्णा ऋषयः । शुचयः यमनियमपराः । विपश्चितः त्रिकालदर्शिनः । अभ्यनूषत अभिष्टुवन्तः । स्तोमैः स्तोत्रैः । तं त्वा इमा उः पादपूरणः । याः मम गिरः हे पुरूवसो प्रभूतधन, ता वर्धन्तु वर्धयन्तु ॥ ८१ ॥

**म०** मेधातिथिदृष्टे आदित्यदेवत्ये द्वे बृहत्यौ । पुरु बहु वसु धनं यस्य स पुरुवसुः । संहितायां छान्दसो दीर्घः पुरुशब्दस्य । हे पुरुवसो बहुधनादित्य, या मम गिरः शस्त्ररूपा वाचः इमाः त्वा त्वां वर्धन्तु वर्धयन्तु । किंच विपश्चितो विद्वांसः तव स्वरूपाभिज्ञा उद्गातारश्च स्तोमैः स्तोत्रैः बहिष्पवमानादिभिः त्वामभ्यनूषत अस्तुवत । 'नू स्तुतौ' लुङ् कुटादित्वाद्गुणाभावः । कीदृशा विपश्चितः । पावकवर्णाः अग्नितुल्यतेजसः ब्रह्मवर्चसवन्तोऽत एव शुचयः शुद्धागमाः स्तोत्रशस्त्ररूपा गिरस्त्वां स्तुवन्तीत्यर्थः ॥ ८१ ॥

## द्व्यशीतितमी ।

यस्या॒यं विश्व॒ आर्यो॒ दासः॑ शेवधि॒पा अ॒रिः । ति॒रश्चि॑द॒र्ये रु॒शमे॒ पवी॑रवि॒ तुभ्येत्सो अ॑ज्यते र॒यिः ॥ ८२ ॥

**उ०** यस्यायम् । यस्येन्द्रस्य अयं विश्वः सर्वः आर्यः दासः वर्णाश्रमविहितकर्मानुष्ठाता दास इव । शेवधिपाअरिः शेवधिर्निधिः । निधिमिव यो धनं रक्षति न वर्णाश्रमविहितकर्मानुष्ठानं करोति सः यस्य शत्रुभूतः । किंच । तिरश्चित् प्राप्तेपि अर्ये ईश्वरे रुशमे । रुशतिर्हिंसाकर्मा । हिंस्रे । पवीरवि पवीरमायुधं तद्वति । आयुधवति युद्धकर्मणि । य इन्द्रः अरिः शत्रुः । हे यजमान, तुभ्य इत् तुभ्यमेव । स इन्द्रः अज्यते । धातूनामनेकार्थत्वादञ्जिर्दानार्थः विकरणव्यत्ययश्च । अनक्ति ददाति रयिः धनम् । अत्रापि रयिमिति विभक्तिव्यत्ययः ॥ ८२ ॥

**म०** हे आदित्य, यस्य तवायं विश्वः सर्वोऽपि आर्यः वर्णाश्रमविहितकर्मानुष्ठाता सन् दासः दासवत् सर्वदा रक्षणीयः शेवधिपाः निधिरक्षकः कृपणो यस्य तवारिः शत्रुः । निधिः शेवधिरिति यास्कः । किंच एवंविधे कृपणे अर्ये धनस्वामिनि वैश्ये वा तिरश्चित् । तिरोऽन्तर्धौ चिदप्यर्थे । अन्तर्भूतो भूमिगर्तादौ निक्षिप्तोऽपि तस्य रयिर्धननिचयः तुभ्यं इत् सलोपश्छान्दसः । तुभ्यमेव त्वदर्थमेवाज्यते व्यक्तो भवति । कर्मकर्तरि यक् । कृपणस्य धनं त्वदर्थमेवोपयुज्यते पक्षहरणादिना नतु कृपणभोगाय भवतीत्यर्थः । कीदृशेऽर्थे । रुशमे रुशतिर्हिंसाकर्मा औणादिकोऽमप्रत्ययः । रुशति हिनस्तीति रुशमः तस्मिन् धनापहर्तॄणां हिंसके । आतिथ्यादितिरस्कारेणात्मनोऽपि हिंसके । पवीरवि पविः शल्यमस्यास्तीति पवीरमायुधम् रो मत्वर्थीयः । पवीरं वाति गच्छति पवीरवाः तस्मिन्

धनरक्षार्थमायुधधारके । तथाच यास्कः 'पविः शल्यो भवति यद्धि पुनाति कायं तद्वत्पवीरमायुधं तद्वानिन्द्रः पवीरवान्' (नि० १२ । ३१ ) इति । धनिनातियत्नेन गुप्तमपि धनं तत आच्छिद्य धर्मिष्ठाय ददातीति भावः ॥ ८२ ॥

## त्र्यशीतितमी ।

अ॒यꣳ स॒हस्र॒मृषि॑भिः॒ सह॑स्कृतः समु॒द्र इ॑व पप्रथे । स॒त्यः सो अ॑स्य महि॒मा गृ॑णे॒ शवो॑ य॒ज्ञेषु॑ विप्र॒राज्ये॑ ॥ ८३ ॥

**उ०** अयꣳसहस्रम् । सतोबृहती । योयमिन्द्रः सहस्रं सहस्रकृत्वः । ऋषिभिः सहस्कृतः । सह इति बलनाम । बलं कृत्वा स्तुतः सन् समुद्र इव पप्रथे प्रथते । तस्यास्य सत्यः सः महिमा शवः बललक्षणः गृणे । गीयते अस्माभिर्यज्ञेषु विप्रराज्ये । यज्ञे हि ब्राह्मणाः स्वतन्त्रा राजान इव भवन्ति ॥ ८३ ॥

**म०** मेधातिथिदृष्टादित्यदेवत्या सतोबृहती । अयमादित्यरूप इन्द्रः समुद्र इव उदधिवत् पप्रथे प्रथितो विस्तीर्णो व्यापकोऽभूत् । कीदृशोऽयम् । ऋषिभिरतीन्द्रियार्थदर्शिभिः सहस्कृतः सहसा बलेन युक्तः कृतः । स्तुत्या हि देवताबलं वर्धते । किंच अस्यादित्यस्य स महिमा सत्योऽवितथः । शवो बलं च सत्यम् । यज्ञेषु विप्रराज्ये विप्राणां राज्ये स्तोत्रशस्त्रसंदेहे गृणे स्तौमि तं महिमानमिति शेषः । यज्ञेषु विप्राः स्वतन्त्राः राजान इव भवन्ति । राज्ञां कर्म राज्यम् । स्तोत्रशस्त्राणां संसदि पठनेन सोऽयं स्तूयत इत्यर्थः ॥ ८३ ॥

## चतुरशीतितमी ।

अद॑ब्धेभिः सवितः पा॒युभि॒ष्ट्वꣳ शि॒वेभि॑र॒द्य परि॑पाहि नो॒ गय॑म् । हिर॑ण्यजिह्वः सुवि॒ताय॒ नव्य॑से॒ रक्षा॒ माकि॑र्नो अ॒घश॑ꣳस ईशत ॥ ८४ ॥

**उ०** अदब्धेभिः सवितरिति व्याख्यातम् ॥ ८४ ॥

**म०** व्याख्याता ( ३३ । ६९ ) । षष्ठः पुरोरुग्गणः समाप्तः ॥ ८४ ॥

## पञ्चाशीतितमी ।

आ नो॑ य॒ज्ञं दि॑वि॒स्पृश॒ं वायो॑ या॒हि सु॒मन्म॑भिः । अ॒न्तः प॒वित्र॑ उ॒परि॑ श्रीणा॒नो॒ऽयꣳ शु॒क्रो अ॑यामि ते ॥ ८५ ॥

**उ०** आ नः आयाहि नः अस्माकं यज्ञम् । दिविस्पृशं द्युलोकयायिनम् । ऋत्विग्यजमानैर्विद्वद्भिरारब्धः दक्षिणादिभिः संपन्नः यज्ञः दिवं स्पृशत्येव । हे वायो, सुमन्मभिः सुमनसैः संकल्पैः । आगतस्य किं फलमितिचेत् । अन्तःपवित्रे दशापवित्रस्य उपरि श्रीणानः होतृचमसे निषिच्यमानः सोमो वर्तते तत्र तव ग्रहो गृह्यते । अयं च यः शुक्रः सोमः तम् अयामि प्रापयामि ते तव ॥ ८५ ॥

**म०** इतोऽध्यायसमाप्त्यन्तं त्रयोदश ऋचः प्रतीकोक्ताश्चतस्रश्चेति ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहणमन्त्राः पूर्ववत् । जमदग्निदृष्टा वायुदेवत्या बृहत्य आद्या नव द्वादशी च । दशम्येकादशीत्रयोदश्यः सतोबृहत्यः । हे वायो, नोऽस्माकं यज्ञमायाहि आगच्छ । कीदृशं यज्ञम् । दिविस्पृशं द्युलोकव्यापिनम् ऋत्विग्यजमानवैदुष्याद्दक्षिणासंपन्नत्वाच्च स्वर्गेऽपि श्रूयमाणमित्यर्थः । आगम्य किं फलमत आह अन्तरिति । अन्तः पात्रमध्यस्थः पवित्रे दशापवित्रस्योपरि श्रीणानः श्रयमाणः होतृचमसेन विषिच्यमानोऽयं शुक्रः शुद्धः ऋजीषकल्करहितः सोमो रसात्मा ते तुभ्यं त्वदर्थमयामि नियतः त्वदीयभागत्वेन मया संस्कृतः । 'यमु उपरमे' कर्मणि चिण् ॥ ८५ ॥

## षडशीतितमी ।

इन्द्र॑वायू सु॒स॒न्दृशा॑ सु॒हवे॒ह ह॑वामहे । यथा॑ नः॒ सर्व॒ इज्जनो॑ऽनमी॒वः स॒ङ्गमे॑ सु॒मना॒ अस॑त् ॥ ८६ ॥

**उ०** इन्द्रवायू सुसंदृशा । सुसंदृशा सुतरां सम्यग्दर्शनीयौ । सुहवा स्वाह्वानौ च । इह हवामहे आह्वयामः । तथाचाह्वयामः यथा येन प्रकारेण नः अस्माकम् सर्वइत् सर्वएव जनः । अनमीवः अमीवा व्याधिस्तद्रहितः । सङ्गमे इन्द्रवायू संगतौ । सुमना शोभनमनस्कः । असत् भूयात् ॥ ८६ ॥

**म०** तापसदृष्टैन्द्रवायवी । इह यज्ञे वयमिन्द्रवायू हवामहे आह्वयामः । उभयत्र वायोः प्रतिषेध इति आनङ्भावः । कीदृशौ सुसंदृशा सुसदृशौ सुतरां सम्यक् पश्यतस्तौ । सुहवा सुहवौ शोभनाह्वानौ । तथा हवामहे यथा नोऽस्माकं सर्वः इत् सर्व एव जनः पुत्रपौत्रादिरीदृशः असत् भवेत् । अस्तेर्लेट्यडागमः । कीदृशः । अनमीवः व्याधिरहितः । सङ्गमे धनप्राप्तौ बहूनां समागमे वा सुमनाः शोभनचित्तः । उदारो वक्ता चेत्यर्थः ॥ ८६ ॥

## सप्ताशीतितमी ।

ऋध॒गित्था स मर्त्यः॑ शश॒मे दे॒वता॑तये । यो नू॒नं मि॒त्रावरु॑णाव॒भिष्ट॑य आच॒क्रे ह॒व्यदा॑तये ॥ ८७ ॥

**उ०** ऋधगित्था । तृतीयः पादः प्रथमं व्याख्यायते यच्छब्दयोगात् । यः मर्त्यः नूनं निश्चयेन मित्रावरुणौ अभिष्टये स्वाभीष्टप्राप्तये । आचक्रे सेवते । हव्यदातये हविषो दानाय । स मर्त्यः ऋधक् समृद्धियुक्तः । इत्था इत्थमित्यभिनयेन दर्शयति । शशमे शाम्यति यमनियमज्ञो भवति । देवतातये देवानां कर्म देवतातिः तस्यै । यज्ञायेत्यर्थः ॥ ८७ ॥

**म०** जमदग्निदृष्टा मैत्रावरुणी । नूनं निश्चितं यो मर्त्यो मनुष्यो मित्रावरुणौ आचक्रे आकुरुते सेवते 'गन्धनावक्षेपण-' ( पा० १ । ३ । ३२ ) इत्यादिना करोतेः सेवनार्थे आत्मने-

पदम् । किमर्थम् । अभिष्टये अभिमतलाभाय । पृषोदरादि-लोपः । हव्यदातये हविषो दानाय च । स नरः इत्था अनेन हेतुना सेवनरूपेण शशमे शाम्यति । यमनियमशमदमादियुक्तो भवतीत्यर्थः । कीदृक् सः । देवतातये देवस्य कर्म देवतातिः तस्मै यज्ञाय । ऋधक् ऋध्नोतीति ऋधक् समृद्धिमान् यज्ञसंपत्तिक्षमधनाढ्यः सन् शान्तो भवतीत्यर्थः । वट् श्रत् सत्रा इत्थेति निपातः । सत्यवचनो वा । सत्यं शाम्यति । एत्वाभ्यास-लोपाभाव आर्षः शशमेत्यत्र ॥ ८७ ॥

## अष्टाशीतितमी ।

आया॑तमु॒प॑भू॒षत॒ं मध्वः॑ पिबतमश्विना । दु॒ग्धं पयो॑ वृषणा जेन्यावसू मा नो॑ मर्धि॒ष्टमाग॑तम् ॥८८॥

**उ०** आयातं आगच्छतम् । उपभूषतम् अलंकुरुतं च यज्ञम् । मध्वः मधुरूपस्य स्वमंशं पिबतं च । हे अश्विनौ । किंच । दुग्धं पयः महावीरसेचनार्थम् । हे वृषणौ सेक्तारौ हे जेन्यावसू जेन्यं जितं स्वीकृतं वसु धनं याभ्यां तौ जेन्यावसू। किंच मा नो मर्धिष्टं माच मर्धिष्टं संग्रहारं कुरुतम् नः अस्मान्प्रति । आगतम् अवश्यं च आगच्छतम् ॥ ८८ ॥

**म०** वसिष्ठदृष्टाश्विदेवत्या । हे अश्विना अश्विनौ, युवामायातं यज्ञं प्रत्यागच्छतम् । आगत्य च उपभूषतमलंकुरुतं यज्ञम् । मध्वः मधुरं सोमं पिबतम् । कर्मणि षष्ठी नुमभावश्छान्दसः । किंच हे वृषणा वृषणौ वर्षकौ यज्ञफलस्य सेक्तारौ, हे जेन्यावसू, जेन्यं जेतव्यं जितं वा आ समन्तात् वसु धनं याभ्यां तौ जेन्यावसू वशीकृतधनौ तादृशौ । युवां पयः वृष्ट्युदकं दुग्धमन्तरिक्षात्प्रक्षारयतम् । दुहेर्लोण्मध्यमद्विवचनं दुग्धमिति । किंच नोऽस्मान्मा मर्धिष्टं मा हिंस्तम् । मृधिर्हिंसार्थः लुङ् । किं बहुना युवामागच्छतम् । आदरार्थं पुनर्वचनम् ॥ ८८ ॥

## एकोननवतितमी ।

प्रैतु ब्रह्म॑ण॒स्पतिः॒ प्र दे॒व्ये॑तु सू॒नृता॑ । अच्छा॑ वी॒रं नर्यं॑ प॒ङ्क्तिरा॑धसं दे॒वा य॒ज्ञं न॑यन्तु नः ॥८९॥

**उ०** प्रैतु अस्मदीयं यज्ञं प्रति आगच्छतु । ब्रह्मणस्पतिः बृहस्पतिः । प्रैतु च देवी वाक् । सूनृता शोभना सत्यवती त्रयीलक्षणा । कं प्रत्यागच्छत्वित्यत आह । अच्छ अभि । वीरं पुत्रं महावीरं वा । नर्यम् नृभ्यो हितम् अनुग्राहकम् । पङ्क्तिराधसं ब्रह्मपङ्क्तिसाधकम् । पङ्क्तिपावनमित्यर्थः । किंच देवाः यज्ञं नयन्तु नः अस्माकम् ॥ ८९ ॥

**म०** कण्वदृष्टा वैश्वदेवी । ब्रह्मणो वेदस्य पतिः हिरण्यगर्भः नोऽस्माकं यज्ञमच्छ यज्ञाभिमुखं प्रैतु प्रकर्षेणागच्छतु । ब्रह्मणस्पतिः 'ब्रह्मणः पाता पालयिता वा' (निरु० १० । १२) इति यास्कः । तथा देवी देवतात्मा सूनृता प्रियसत्यस्वरूपा तस्यैव वाक् त्रयीरूपा यज्ञं प्रैतु । किंच देवा यष्टव्या नोऽस्मान् यज्ञं नयन्तु प्रापयन्तु । यज्ञं कारयन्त्वित्यर्थः । कीदृशं यज्ञम् । वीरं विशेषेणेरयति वीरस्तं शत्रूणां विशेषोन्मूलयितारम् । 'वीरो वीरयत्यमित्रान्' ( निरु० १ । ७ ) इति यास्कः । नर्यं नृभ्यो मनुष्येभ्यो हितम् 'उगवादिभ्यः' ( पा० ५ । १ । २ ) इति यत् । पङ्क्तिराधसम् इन्द्रस्य पुरोडाशः हर्यश्वानाः पूषणः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या एषा हविःपङ्क्तिः, द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयं सवनम् एषा नाराशंसपङ्क्तिः, त्रीणि सवनानि पशुरुपवसथ्यः पशुरनुबन्ध्यः एषा सवनपङ्क्तिः, एताभिः पङ्क्तिभिः राधः समृद्धिर्यस्य पङ्क्तयो राध्यन्ते साध्यन्ते यत्रेति वा पङ्क्तिराधाः तम् । ब्रह्मणस्पत्यादयः ईदृशं यज्ञमस्माभिः कारयन्त्विति सर्वार्थः ॥ ८९ ॥

## नवतितमी ।

च॒न्द्रमा॑ अ॒प्स्व॒न्तरा सु॑प॒र्णो धा॑वते दि॒वि । र॒यिं पि॒शङ्गं॑ बहु॒लं पु॑रु॒स्पृह॒ꣳ हरि॑रेति॒ कनि॑क्रदत् ॥ ९० ॥

**उ०** चन्द्रमा अप्सु । आहुतिपरिणामोऽत्रोच्यते । योसौ चन्द्रमाः स तथा सोमरूपापन्नः । अभिषुतः अप्स्वन्तः मध्ये रसरूपेण आस्थितः । अग्नौ हुतः सन् सुपर्णः सुपतनः धावते दिवि । तस्मात् पर्जन्यरूपमास्थाय उदकदानद्वारेण रयिं धनम् पिशङ्गं पीतवर्णम् । बहुलमसंख्यातम् । पुरुस्पृहं बहवो यत्र स्पृहयन्ति । हरिः सोम एति । कनिक्रदत् पर्जन्यरूपेणात्यर्थं स्तनितं कुर्वन् ॥ ९० ॥

**म०** त्रितदृष्टाहुतिपरिणामवादिन्यैन्द्री । 'आहुतेर्होमद्रव्यस्य परिणामो द्युपर्जन्यपृथिवीपुरुषयोषात्मकपञ्चाग्निक्रमेण परिपाकः 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुत्युक्तः तं वदत्येषा ऋक् । अधियज्ञं तावदर्थः । चन्द्रं देवानामाह्लादं मिमीते करोति चन्द्रमाः लतारूपः सोमोऽभिषुतः सन् अप्सु वसतीवरीनिग्राभ्यादिजलेषु अन्तर्मध्ये रसरूपेण स्थितोऽग्नौ हुतः सन् सुपर्णः गरुडाकृतिः साधुपतनो भूत्वा दिवि आधावते शीघ्रं गच्छति । 'सृ गतौ' इत्यस्य शीघ्रगतौ धावादेशः 'तृतीयस्यामितो दिवि सोम आसीत्' इति श्रुतेः । 'हरिः सोमो हरितवर्णः' ( निरु० ४ । १९ ) इति यास्कोक्तेर्हरिः पूर्वोक्तः सोम एव दिवि गतः पर्जन्यरूपमास्थायोदकदानद्वारेण रयिमेति 'रयिरिति धननाम' ( निरु० ४ । १७ ) इति यास्कः । धान्यभावं प्राप्नोति व्रीहियवाद्यन्नरूपो भवतीत्यर्थः । कीदृशं रयिम् । पिशङ्गम् परिपाकेन व्रीहियवादिकं धान्यं पीतवर्णं भवति । बहुलमसंख्यातम् । चतुर्विधभूतग्रामजीवनपर्याप्तमित्यर्थः । पुरुस्पृहं पुरूणां बहूनामपि स्पृहा लिप्सा यत्र तम् । बहवोऽपि यद्धान्यमिच्छन्ति तद्रूपो भवतीत्यर्थः । कीदृशो हरिः । कनिक्रदत् पर्जन्यरूपात्यर्थंस्तनितं कुर्वन् । 'दाधर्ति–' ( पा० ७ । ४ । ६३ ) इत्यादि निपातः ॥ ९० ॥

## एकनवतितमी ।

देवं देवं वोऽवसे देवं देवमभिष्टये । देवं देवं हुवेम वाजसातये गृणन्तो देव्या धिया ॥ ९१ ॥

**उ०** देवं देवं वः । देवं देवमिति वीप्सार्थोऽभ्यासः । यावन्तो देवास्तावतो देवान् वः युष्माकमवसे पालनाय । हुवेमेत्यनेन संबन्धः । आह्वयामः । देवं देवमभिष्टये अभीष्टकामावाप्तये आह्वयामः । देवं देवं हुवेम । वाजसातये अन्नसंभजनाय । कथं हुवेमेतिचेत् । गृणन्तः स्तुतिभिः देव्या धिया । देवतायाथात्म्यचिन्तनपरया बुद्ध्या ॥ ९१ ॥

**म०** मनुदृष्टा वैश्वदेवी । वीप्सार्थोऽभ्यासः । यावन्तो देवास्तान् वो युष्मानवसेऽवनाय पालनाय वयं हुवेम आह्वयामः । अभिष्टयेऽभिलषितफलाप्तये देवं देवं हुवेम । वाजसातयेऽन्नलाभाय देवं देवं हुवेम । 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १० । ४२ ) इति यास्कः । कीदृशा वयम् । देवया देवतायाथात्म्यानुसन्धानपरया धिया बुद्ध्या गृणन्तः स्तुवन्तः । यद्वा देव्या स्वरादिसौष्ठवेन दीप्यमानया धिया स्तुत्या गृणन्तः ॥ ९१ ॥

## द्विनवतितमी ।

दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन् । क्ष्मया वृधान ओजसा चनोहितो ज्योतिषा बाधते तमः ॥ ९२ ॥

**उ०** दिवि पृष्टः । योऽग्निर्वैश्वानरः दिविपृष्टः द्युलोके स्थितः आदित्यात्मना अरोचत देदीप्यते बृहन् महान् । सोऽयम् क्ष्मया पृथिव्या कारणभूतया । वृधानः वर्धमानः ओजसा बलेन च । चनोहितः चनसि अन्ने हविर्लक्षणे हितः स्थापितः । ज्योतिषा बाधते तमः ॥ ९२ ॥

**म०** मेधदृष्टा वैश्वानरी । योऽग्निः दिवि द्युलोके पृष्टः सिक्तः आदित्यात्मना स्थितः सन् अरोचत दीप्यते 'पृषु सेके' निष्ठान्तः सेकः स्थितिरेव । कीदृशोऽग्निः । वैश्वानरः विश्वेषां नराणां हितः । बृहन् महान् । किंच सोऽग्निः ज्योतिषा स्वप्रकाशेन तमः नैशं बाधते लोकानुग्रहायान्धकारं निवर्तयति । कीदृशः । क्ष्मया वृधानः क्ष्मा पृथिवी तया तत्स्था मनुष्या उपलक्ष्यन्ते मञ्चाः कोशन्तीति वत् । भूस्थैर्वर्णाश्रमिभिः नरैर्दत्तेन हविषा वर्धमानः । अतएव ओजसा च चनोहितः ओषधिपाकक्षमेण तेजसा चनसेऽन्नाय हितः 'चन इत्यन्ननाम' ( निरु० ६ । १८ ) अन्ननिष्पादक इत्यर्थः ॥ ९२ ॥

## त्रिनवतितमी ।

इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः । हित्वी शिरो जिह्वया वावदच्चरत्त्रिꣳशत्पदान्यक्रमीत् ॥ ९३ ॥

**उ०** इन्द्राग्नी अपात् । प्रवह्लिकेयमृक् । यथाप्रज्ञं तु व्याख्यायते । मानुषी वागनयोच्यते । उक्तंच 'अथ यन्मानुष्या वाचाह इतीदं कुरुतेतीदं कुरुतेति तदुह तया चीयत' इति । हे इन्द्राग्नी, अपात् पादरहिता गद्या इयं वाक् । पूर्वा आअगात् आगता । पद्वतीभ्यः पादवतीभ्यः सकाशात् । हित्वी हित्वा परित्यज्य शिरः प्रथमं पदम् अन्यत्करोति । नहि लौकिक्या वाचः कश्चित्पदनियमोऽस्ति । जिह्वया विदुषः वावदत् वदन्ती । चरत् चरति । कियन्ति तत्र पदानि । त्रिंशत्पदानि त्रिंशत्संख्याकानि पदानि अक्रमीत् अतिक्रामति । नहि परतः त्राणविषयः ॥ ९३ ॥

**म०** सुहोत्रदृष्टा इन्द्राग्निदेवत्या प्रवह्लिका । हे इन्द्राग्नी, अपात्स्वयं पादरहितापि इयमुषाः पद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः पूर्वा प्रथमभाविनी सती आ अगात् आगच्छति सा च तासां प्रजानां शिरो हित्वी निद्रात्याजनेन प्रेरयित्री । यद्वा शिरो हित्वी हित्वा त्यक्त्वा स्वयमशिरस्का सती जिह्वया प्राणिनां वागिन्द्रियेण वावदत् । यङ्लुगन्तं । भृशं शब्दं कुर्वती सती चरत् चरति प्रसरति । अडभावः । एवं चरन्ती उषा एकदिनेन त्रिंशत्संख्यानि पदा पदानि गमनसाधनभूतान् मुहूर्तान् नि अक्रमीत् नितरां क्रमते । अहोरात्रेण त्रिंशन्मुहूर्तान्क्रामतीत्यर्थः । यद्वा वाक्पक्षेऽर्थः । इन्द्रः प्राणः अग्निः पुरुषः । हे इन्द्राग्नी, युवयोरेवैतत् कर्म यत् अपात् पादरहिता गद्यात्मिका त्रयीलक्षणेयं वाक् पूर्वा प्रथमभाविनी सती आ अगात् । पद्वतीभ्यः पादयुक्ताभ्यो रामायणभारतादिश्लोकात्मकवाल्मीकिव्यासादिवाणीभ्यः सकाशात् वेदवाचः प्राथम्यं श्रुत्युक्तम् ततो ब्रह्मैव प्रथममसृज्यतेति । एवं प्रथमजाया वाचोऽविकृतत्वं निर्णीय मानुष्या वाचो विकृतत्वमाह हित्वी शिर इति । शिर इति प्राधान्यादाख्यातपदमुच्यते । अभ्याज गां दण्डेन शुक्लां गां दण्डेनाभ्याजेत्येवं लौकिक्या वाचः पदप्रयोगनियमाभावात् शिरः शिरःस्थानीयमाख्यातपदं हित्वा त्यक्त्वा जिह्वया विदुषो वागिन्द्रियेण वावदत् अतिवदन्ती सती चरति प्रकाशीभवति । एवं चरन्ती सा त्रिंशत्पदानि न्यक्रमीत् क्रमति । अत्र पदशब्दोऽङ्गुलवचनः । मूलाधारादारभ्य मुखपर्यन्तं त्रिंशदङ्गुलानि क्रामति । एवं वाग्विषयोऽर्थः ॥ ९३ ॥

## चतुर्नवतितमी ।

देवासो हि ष्मा मनवे समन्यवो विश्वे साकꣳ सरातयः । ते नो अद्य ते अपरं तुचे तु नो भवन्तु वरिवोविदः ॥ ९४ ॥

**उ०** देवासो हि ष्मा । हि स्म निपातौ । ये देवासः मनवे समन्यवः मनुना समानदीप्तयः समानक्रोधा वा । विश्वे सर्वे साकं सह उपास्याः । सरातयः समानदानाश्च । ते विश्वेदेवाः नः अस्माकम् अद्य । ते च अपरम् आगामिकाले । तुचे तु नः । तुगित्यपत्यनाम । अपत्याय च

अस्मदीयाय भवन्तु । वरिवोविदः वरिवो धनं ये अस्मदर्थं विन्दन्ति ते वरिवोविदः ॥ ९४ ॥

**म०** मनुदृष्टा वैश्वदेवी । हि स्म एतौ निपातौ प्रसिद्ध्यतिशयार्थौ । छान्दसौ षत्वदीर्घौ । ते प्रसिद्धा विश्वे देवासः अद्य वर्तमानकाले नोऽस्माकं साकं सहैव वरिवोविदः भवन्तु वरिवो धनं वेदयन्ति लम्भयन्ति वरिवोविदः एकीभूय धनप्रापका भवन्तु । तु पुनः अपरं भविष्यति काले नोऽस्माकं तुचे अपत्याय पुत्रपौत्रादिकाय ते वरिवोविदः भवन्तु । तुगित्यपत्यनाम । कीदृशास्ते । मनवे समन्यवः मनुनामकाय मुनये मन्त्रदर्शिने मह्यं समानो मन्युर्दीप्तिर्येषां ते । 'मन्युर्मन्यतेर्दीप्तिकर्मणः' ( निरु० १० । २९ ) इति यास्कः । मदर्थकमैकमत्यं प्राप्ताः । यद्वा मन्युना क्रोधेन सह वर्तमानाः । अस्मच्छत्रुहननाय क्रोधयुक्ता इत्यर्थः । तथा सरातयः रातिर्दानं तत्सहिताः दातार इत्यर्थः ॥ ९४ ॥

## पञ्चनवतितमी ।

अपा॑धमद॒भिश॑स्तीरशस्ति॒हाथेन्द्रो॑ द्यु॒म्न्याभ॑वत् ।
दे॒वास्त॑ इन्द्र स॒ख्याय॑ येमिरे॒ बृह॑द्भानो॒ मरु॑द्गण ९५

**उ०** अपाधमत् । प्रथमोऽर्धर्चः परोक्षकृतः द्वितीयः प्रत्यक्षकृतः अतो वाक्यभेदः पदसंनतिर्वैकल्पिकत्वादर्धर्चे । अपाधमत् धमतिर्गतिकर्मा । यदा अपगमयति । अभिशस्तीः अभिशापान् अशस्तिहा । अभेरादिर्लोपः । अभिशस्तिहा स्वतएव । अथानन्तरम् इन्द्रः द्युम्नी अन्नवान् यशस्वी वा आअभवत् भवति । एवं स्तुत इन्द्रः प्रत्यक्षीभूतः । इत उत्तरोऽर्धर्चः प्रत्यक्षकृतः । देवाः ते तव हे इन्द्र, सख्याय सखिभावाय येमिरे आत्मानं संयतं कृतवन्तः । हे बृहद्भानो महादीप्ते हे मरुद्गण, एकवाक्ये तु बहूनां पदानां संनतिः कार्या ॥ ९५ ॥

**म०** नृमेधदृष्टे द्वे मरुत्वद्गुणविशिष्टेन्द्रदेवत्ये । बृहन्तो महान्तो भानवो दीप्तयो यस्य स बृहद्भानुः मरुतां गणो यस्य स मरुद्गणः हे बृहद्भानो, हे मरुद्गण हे इन्द्र, देवाः वसुरुद्रादित्याः ते तव सख्याय मैत्रे येमिरे कथं नु नामेन्द्रोऽस्मान्सखिभावाय वृणीत इत्यभिप्राया आत्मानं संयतं कृतवन्त इत्यर्थः । स भवान् अभिशस्तीः अभिशापान् शत्रुप्रयुक्तानपवादान् अपाधमत् अपगमयति निवर्तयति । धमतिर्गतिकर्मा ( निरु० ६ । २ ) इति यास्कः । अथ पश्चात् द्युम्नी अन्नवान् यशस्वी वा आ अभवत् सर्वतो धनवान् भवति । कीदृशो भवान् । अशस्तिहा शंसनं शस्तिः प्रशंसा सा नास्ति येषां ते अशस्तयः निन्द्या असुरास्तान् हन्तीत्यशस्तिहा । इन्द्रः ऐश्वर्यवान् इन्दतीतीन्द्रः । यो दुष्टहन्ताभिशापनाशको यशस्वी तेजस्वी बहुभृत्यसेव्यस्तस्य सख्यायान्ये यतन्त इति युक्तमिति भावः ॥ ९५ ॥

## षण्णवतितमी ।

प्र व॒ इन्द्रा॑य बृह॒ते मरु॑तो॒ ब्रह्मा॑र्चत । वृ॒त्रꣳ ह॑नति वृत्र॒हा श॒तक्र॑तु॒र्वज्रे॑ण श॒तप॑र्वणा ॥ ९६ ॥

**उ०** प्र वः प्रथमाबहुवचनस्य वआदेशः । प्रार्चत प्रोच्चारयत वः यूयम् स्तुतीः । इन्द्राय बृहते महते हे मरुतः, ब्रह्म त्रयीलक्षणाः किमितिचेत् । वृत्रं हनति । हन्तीति प्राप्ते शपः श्रवणम् । वृत्रहा वृत्रवधप्रवणः शतक्रतुः बहुकर्मा । वज्रेण शतपर्वणा शतग्रन्थिना ॥ ९६ ॥

**म०** हे मरुतः, वो युष्माकं स्वामिने इन्द्राय यूयं ब्रह्म वेदं सामरूपस्तोत्रं प्रार्चत प्रोच्चारयत । कीदृशायेन्द्राय । बृहते महते । ततो वृत्रहा वृत्रस्यासुरस्य पाप्मनो वा हन्तेन्द्रो वृत्रं हनति हन्तु । 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुगभावः । केन । वज्रेण स्वायुधेन । कीदृशेन वज्रेण । शतपर्वणा शतसंख्यानि पर्वाणि धारा ग्रन्थयो वा यस्य स शतपर्वा तेन । कीदृशो वृत्रहा । शतक्रतुः शतं क्रतवो यस्य बहुकर्मा बहुप्रज्ञो वा ॥ ९६ ॥

## सप्तनवतितमी ।

अ॒स्येदिन्द्रो॑ वावृधे॒ वृष्ण्य॒ꣳ शवो॒ मदे॑ सु॒तस्य॒ विष्ण॑वि । अ॒द्या तम॑स्य महि॒मान॑मा॒यवोऽनु॑ष्टुवन्ति पू॒र्वथा॑ । इ॒मा उ॑ त्वा॒ यस्या॒यम॒ꣳ स॒हस्र॑मू॒र्ध्व ऊ॒ षु णः॑ ॥ ९७ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

**उ०** अस्येत् । अस्य इत् इदिति निपातः पादपूरणः । मदे सुतस्य विष्णवि विष्णुर्यज्ञः । यज्ञे अभिषुतस्य मदे संजाते य इन्द्रो वावृधे वृद्धश्च वृष्ण्यं सेक्तृत्वम् शवो बलं च आविष्करोति । तस्यास्य इन्द्रस्य अद्य अद्यापि तं महिमानं आयवः मनुष्याः अनुष्टुवन्ति । पूर्वथा पूर्ववत् यथा पूर्वमृषिभिः स्तुतः । इमा उत्वा यस्यायम् अयꣳ सहस्रम् ऊर्ध्व ऊषुणः इति चतस्रः प्रतीकोक्ता व्याख्याताः ॥ ९७ ॥

इति उवटकृतौ मन्त्रभाष्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

**म०** मेधातिथिदृष्टा माहेन्द्री सतोबृहती । इन्द्रः अस्य इत् अस्यैव यजमानस्य वृष्ण्यं शवः च वावृधे वर्धयति । णिजन्तत्वं बोध्यम् । वर्षति सिञ्चतीति वृषा तस्येदं वृष्ण्यं वीर्यम् । यप्रत्यये उपधालोपः । शवः बलम् । क्व सति । सुतस्याभिषुतस्य सोमस्य मदे सति । कीदृशे मदे । विष्णवि वेवेष्टि व्याप्नोति विष्णुस्तस्मिन् सर्वशरीरव्यापके । सप्तम्येकवचने 'घेर्ङिति' ( पा० ७ । ३ । १११ ) इति गुणेऽवादेशः । यद्वा विष्णवि विष्णौ यज्ञेऽभिषुतस्येति संबन्धः । 'यज्ञो वै विष्णुः' इति श्रुतेः । सोमपानेन मत्त इन्द्रो यजमानस्य माहात्म्यं बलं च वर्धयतीत्यर्थः । किंच अस्येन्द्रस्य तमुक्तं यज्वनो वीर्यादिवर्धनरूपं

महिमानमद्यास्मिन्कालेऽपि आयवः मनुष्याः अनुष्टुवन्ति आनुपूर्व्येण स्तुवन्ति। तत्र दृष्टान्तः। पूर्वथा पूर्वमिव यथा पूर्वमृषयोऽस्तुवन्नेवमिदानीमपि नराः स्तुवन्तीत्यर्थः। 'प्रत्नपूर्वविश्वेमात्थाल्छन्दसि' (पा० ५।३।१११) इति पूर्वशब्दादिवार्थे थाल्प्रत्ययः। इमा उ त्वा यस्यायम् अयं सहस्रम् (३३।८१—८३) ऊर्ध्व ऊ षुणः (११।४२) एताः प्रतीकोक्ताः॥ ९७॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
त्रयस्त्रिंशत्तमोऽध्यायो गतोऽयं सार्वमेधिकः॥ ३३॥

---

# चतुस्त्रिंशोऽध्यायः।

## तत्र प्रथमा।

यज्जाग्र॑तो दू॒रमु॒दैति॒ दैवं॒ तदु॑ सु॒प्तस्य॒ तथै॒वैति॑। दू॒र॒ङ्ग॒मं ज्योति॑षां॒ ज्योति॒रेकं॒ तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु॥ १॥

**उ०** यज्जाग्रतः षट्कण्डिकास्त्रिष्टुभो मनोदेवत्याः। अस्मिन्नध्याये लैङ्गिको विनियोगः। लिङ्गं च सामर्थ्यमुच्यते अभिधानशक्तिः। यन्मनः जाग्रतः पुरुषस्य दूरं उदैति उद्गच्छति चक्षुःप्रभृतीन्यपेक्ष्य। यच्च दैवम् देवो विज्ञानात्मा सोनेन गृह्यत इति दैवम्। उक्तंच 'मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवमि'ति। तदु सुप्तस्य। तदःस्थाने यदोवृत्तिः। उकारः समुच्चयार्थीयः। यच्च मनः सुप्तस्य तथैव तेनैव प्रकारेण एति। यच्च दूरंगमं दूरं गच्छतीति दूरंगमम् अतीतानागतवर्तमानव्यवहितविप्रकृष्टग्रहीतृ। ज्योतिषां श्रोत्रादीनां विज्ञाननेतॄणां मध्य एकमेव ज्योतिः। तत् मे मनः शिवसंकल्पम्। संकल्पः काममूलपदार्थस्य रूपादेः सुरूपताज्ञानवतः कामप्रभृति शान्तसंकल्पम् अस्तु भवतु॥ १॥

**म०** अनारभ्याधीतोऽध्यायः आ पितृमेधात् आदित्ययाज्ञवल्क्यदृष्टा मन्त्राः पाठे विनियुक्ताः। षड्ऋचस्त्रिष्टुभो मनोदेवत्याः शिवसंकल्पदृष्टाः। ऋषिर्वेदति। तन्मे मनः शिवसंकल्पमस्तु शिवः कल्याणकारी धर्मविषयः संकल्पो यस्य तत् तादृशं भवतु। मन्मनसि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः। तत्किम्। यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति। चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः। यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भवं दैवमात्मग्राहकमित्यर्थः। 'मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्' इति श्रुतेः। तत् उ। यदः स्थाने तच्छब्दः उकारश्चार्थः। यच्च मनः सुप्तस्य पुंसः तथैव एति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति। यच्च दूरंगमं दूरात् गच्छतीति दूरंगमम् खच्प्रत्ययः। अतीतानागतवर्तमानविप्रकृष्टव्यवहितपदार्थानां ग्राहकमित्यर्थः। यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः। प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते। आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनःसंबन्धमन्तरा तेषामप्रवृत्तेः। तादृशं मे मनः शान्तसंकल्पमस्तु॥ १॥

## द्वितीया।

येन॒ कर्मा॑ण्य॒पसो॑ मनी॒षिणो॑ य॒ज्ञे कृ॒ण्वन्ति॑ वि॒दथे॑षु॒ धीराः॑। यद॑पू॒र्वं य॒क्षम॒न्तः प्र॒जानां॒ तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु॥ २॥

**उ०** येन कर्माणि। येन मनसा सता कर्माणि। अपसः अप इति कर्मनाम तद्धितलोपः। अपस्विनः कर्मवतः। मनीषिणः मेधाविनः। यज्ञे कृण्वन्ति कुर्वन्ति। विदथेषु वेदनेषु यज्ञविधिविधानेषु धीराः धीमन्तः। यच्च अपूर्वम् न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम्। यद्वा अपूर्वमनपरम्। यच्च यक्षं पूज्यम्। यच्च अन्तर्मध्ये प्रजानामास्ते। तन्मे मन इति व्याख्यातम्॥ २॥

**म०** मनीषिणः मेधाविनः यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति 'कृ करणे' स्वादिः। मनःस्वास्थ्यंविना कर्माप्रवृत्तेः। केषु सत्सु। विदथेषु ज्ञानेषु सत्सु विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु। वेत्तेरौणादिकोऽथप्रत्ययः प्रत्ययोदात्तत्वेन मध्योदात्तं पदम् 'प्रत्ययः परश्च आद्युदात्तश्च' (पा० ३।१।१—३) इति पाणिन्युक्तेः यज्ञसंबन्धिनां हविरादिपदार्थानां ज्ञानेषु सत्स्वित्यर्थः। कीदृशा मनीषिणः। अपसः अप इति कर्मनाम (निघ० २।१।१) अपो विद्यते येषां ते अपस्विनः कर्मवन्तः 'अस्मायामेधास्रजो विनिः' (पा० ५।२।१२१) इति विन्प्रत्ययः 'विन्मतोर्लुक्' इतीष्ठाभावेऽपि छान्दसो विनो लुक् (पा० ५।३।६५) सदा कर्मनिष्ठा इत्यर्थः। तथा धीराः धीमन्तः धीर्विद्यते येषां ते धीराः कर्मण्यण् (पा० ३।२।१) यच्च मनः अपूर्वम् न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः। यद्वा अपूर्वमनपरमबाह्यमित्युक्तेरपूर्वमात्मरूपमित्यर्थः। यच्च यक्षं यष्टुं शक्तं यज्ञम् यजतेरौणादिकः सन्प्रत्ययः 'ञ्नित्यादिर्नित्यम्' (पा० ६।१।१९७) इत्याद्युदात्तं पदम्। यच्च प्रजायन्ते इति प्रजास्तासां प्राणिमात्राणामन्तः शरीरामध्ये आस्ते इतरेन्द्रियाणि बहिःष्ठानि मनस्त्वन्तरिन्द्रियमित्यर्थः। तत् तादृशं मे मनः शिवसंकल्पमस्त्विति व्याख्यातम्॥ २॥

## तृतीया।

यत्प्र॒ज्ञान॑मु॒त चेतो॒ धृति॑श्च॒ यज्ज्योति॑र॒न्तर॒मृतं॑ प्र॒जासु॑। यस्मा॒न्न ऋ॒ते किंच॒न कर्म॑ क्रि॒यते॒ तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु॥ ३॥

**उ०** यत्प्रज्ञानम्। यन्मनः प्रज्ञानं विशेषप्रतिपत्ति-

प्रज्ञाम् । उत अपिच । चेतः सामान्यप्रतिपत्तिश्चेतः । धृतिश्च प्रसिद्धा । यन्मनः अन्तर्ज्योतिरमृतं च प्रजासु । यस्मान्न ऋते येन च विना न किंचन कर्म क्रियते । तन्मे मन इति व्याख्यातम् ॥ ३ ॥

म० यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् । 'करणाधिकरणयोश्च' ( पा० ३ । ३ । ११७ ) इति करणे ल्युट्प्रत्ययः । उत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः 'चिती संज्ञाने' अस्मात् ण्यन्तादसुन्प्रत्ययः । सामान्यविशेषज्ञानजनकमित्यर्थः । यच्च मनो धृतिर्धैर्यरूपम् । मनस्येव धैर्योत्पत्तेर्मनसि धैर्यमुपचर्यते कार्यकारणयोरभेदात् । यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् । उक्तमपि पुनरुच्यते आदरार्थम् । 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १ । ४२ ) इति यास्कोक्तेः । यच्चामृतममरणधर्मि आत्मरूपत्वात् । यस्मान्मनसः ऋते यन्मनोविना किंचन किमपि कर्म न क्रियते जनैः । सर्वकर्मसु प्राणिनां मनःपूर्वं प्रवृत्तेर्मनःस्वास्थ्यंविना कर्माभावादित्यर्थः । 'अन्यारादितरर्ते–' ( पा० २ । ३ । २९ ) इत्यादिना यस्मादिति ऋतेयोगे पञ्चमी । तन्मे मन इति व्याख्यातम् ॥ ३ ॥

## चतुर्थी ।

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥

उ० येनेदम् । येन मनसा इदं भूतं भूतकालम्, भुवनं वर्तमानकालं,भविष्यत् भविष्यत्कालं च । परिगृहीतम् अमृतेन सर्वम् । येन च मनसा यज्ञस्तायते तन्यते । सप्तहोता । सप्त होतारो ह्यग्निष्टोमे भवन्ति । तन्मे मन इति व्याख्यातम् ॥ ४ ॥

म० येन मनसा इदं सर्वं परिगृहीतम् परितः सर्वतो ज्ञातम् । इदं किंभूतम् । भूतकालसंबन्धि वस्तु । भुवनं भवतीति भुवनम् । भवतेः क्युप्रत्ययः वर्तमानकालसंबन्धि । भविष्यत् 'लृटः सद्वा' ( पा० ३ । ३ । १४ ) इति शतृप्रत्ययः 'तौ सत्' ( पा० ३ । २ । १२७ ) इत्युक्तेः त्रिकालसंबद्धवस्तुषु मनः प्रवर्तत इत्यर्थः । श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति । कीदृशेन येन । अमृतेन शाश्वतेन । मुक्तिपर्यन्तं श्रोत्रादीनि नश्यन्ति मनस्त्वनश्वरमित्यर्थः । येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते । 'तनोतेर्यकि' ( पा० ६ । ४ । ४४ ) इत्याकारः । कीदृशो यज्ञः । सप्तहोता सप्त होतारो देवानामाह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता । अग्निष्टोमे सप्त होतारो भवन्ति । तन्मे मन इति व्याख्यातम् ॥४॥



## पञ्चमी ।

यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः । यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥

उ० यस्मिन्नृचः यस्मिन्मनसि ऋचः प्रतिष्ठिताः । यस्मिन्सामानि प्रतिष्ठितानि । यस्मिन् यजूंषि प्रतिष्ठितानि । कथमिव । रथनाभौ इव आराः । यस्मिन् चित्तं संज्ञानम् सर्वम् तस्य तस्यार्थस्य । ओतं निक्षिप्तम् तन्तुसंततमिव कृतं प्रजानाम् । तन्मे मन इति व्याख्यातम् ॥ ५ ॥

म० यस्मिन् मनसि ऋचः प्रतिष्ठिताः । यस्मिन् साम सामानि प्रतिष्ठितानि । यस्मिन् यजूंषि प्रतिष्ठितानि । मनसः स्वास्थ्ये एव वेदत्रयीस्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् 'अन्नमयं हि सोम्य मनः' इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता । तत्र दृष्टान्तः । रथनाभौ आराः इव । यथा आराः रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वच्छब्दजालं मनसि । किंच प्रजानां सर्वं चित्तं ज्ञानम् सर्वपदार्थविषयि ज्ञानं यस्मिन् मनसि ओतं प्रोतं निक्षिप्तं तन्तुसन्ततिः पटे इव सर्वं ज्ञानं मनसि निहितम् । मनःस्वास्थ्ये एव ज्ञानोत्पत्तिर्मनोवैयग्र्येच ज्ञानाभावः । तन्मे मम मनः शिवसंकल्पं शान्तव्यापारमस्तु ॥ ५ ॥

## षष्ठी ।

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

उ० सुषारथिः । यन्मनः मनुष्यान् । नेनीयते अत्यर्थं नयति । कथमिव । सुषारथिः कल्याणसारथिः अश्वान् इव यन्मनुष्यान् । यच्च मनः सुषारथिरिव । अभीशुभिः प्रग्रहैः वाजिन इव वेजनवतोऽश्वानिव यमयतीति शेषः । द्वे उपमे एकत्र नयनमन्यत्र नियमनमर्थः । यच्च हृत्प्रतिष्ठम् । तत्रोपलब्धेः । यच्च अजिरं जरारहितम् । यच्च जविष्ठं अतिशयेन गन्तृ । तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

म० यत् मनो मनुष्यान्नरान्नेनीयते अत्यर्थमितस्ततो नयति । नयतेः क्रियासमभिहारे यङ् । मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते । मनुष्यग्रहणं प्राणिमात्रोपलक्षकम् । तत्र दृष्टान्तः । सुसारथिः अश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान् नेनीयते । द्वितीयो दृष्टान्तः । अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनोऽश्वान्नेनीयत इत्यनुषङ्गः । रश्मिभिर्नियच्छतीत्यर्थः । उपमाद्वयम् । प्रथमायां नयनं द्वितीयायां नियमनम् । तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः । यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृद्येव मन उपलभ्यते । यच्च मनः अजिरं

जरारहितम् बाल्ययौवनस्थाविरेषु मनसस्तदवस्थत्वात्। यच्च जविष्ठम् अतिजववद्वेगवत् जविष्ठम् 'न वै वातात्किंचनाशीयोऽस्ति न मनसः किंचनाशीयोऽस्ति' इति श्रुतेः। तन्म इत्युक्तम् ॥ ६ ॥

## सप्तमी।

पितुं नु स्तोषं महो धर्माणं तविषीम्। यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ ७ ॥

**उ०** पितुं नु। अन्नस्तुतिः उष्णिगनुष्टुब्गर्भा। द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात्। यस्य पितोः अन्यस्य त्रितः त्रिस्थान इन्द्रः ओजसा बलेन वृत्रम्। विपर्वं विपर्वाणं विगतसन्धिबन्धनं कृत्वा। अमर्दयत् विविधं मर्दितवान् तम् पितुम् अन्नम्। नुरनर्थकः। स्तोषम् स्तौमि। महः महतः धर्माणं धारयितारम्। तविषीम् तविष्याः इति विभक्तिव्यत्ययः। तविषीति बलनाम। तवतेर्वृद्धिकर्मणः बलस्य ॥ ७ ॥

**म०** उष्णिक् अन्नस्तुतिः। तं पितुमन्नं स्तोषं स्तौमि। किंभूतम्। महो महसः तविषीं तविष्याः बलस्य धर्माणं धारयितारम्। तविषीति बलनाम। विभक्तिव्यत्ययः। अन्नेनैव बलोत्पत्तेः। तं कम्। यस्य पितोरोजसा बलेन त्रितः त्रिस्थान इन्द्रः वृत्रं दैत्यं विपर्वं गतसंधिबन्धनं कृत्वा वि अर्दयत् विविधमर्दितवान्। इन्द्रेण वृत्रोऽत्र बलेनैव हत इत्यर्थः। स्तोषं स्तौतेर्मिपि 'इतश्च लोपः परस्मैपदेषु' (पा० ३।४।९७) इति इकारलोपे 'लेटोऽडाटौ' (पा० ३।४।९४) इत्याडागमे 'सिब्बहुलं लेटि' (पा० ३।१।३४) इति सिप्प्रत्यये गुणे च रूपम्। महः। महच्छब्दस्य ङसि छान्दसष्टिलोपः। धर्माणम् धरतेर्मन्। विपर्वम् विगतानि पर्वाणि यस्य तम्। डप्रत्यये टिलोपः। अर्दयत् 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६।४।७५) इत्यडभावः। 'व्यवहिताश्च' (पा० १।४।८२) इति वेरुपसर्गस्य व्यवधानम् ॥ ७ ॥

## अष्टमी।

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि। क्रत्वे दक्षाय नो हिनु प्रण आयूंषि तारिषः ॥ ८ ॥

**उ०** अन्वित्। चतस्रोऽनुष्टुभः। अनुमन्यासै अनुमन्यस्व। इदिति निपातः पादपूरणः। हे अनुमते, त्वम्। शं च सुखं च नः अस्माकम् कृधि कुरु। हे अनुमते, क्रत्वे क्रतवे संकल्पाय। दक्षाय तत्समृद्धये संकल्पसिद्धये च। नः अस्मान् हिनु गमय। प्रण आयूंषि तारिषः प्रतारिषः प्रवर्धय च नः अस्माकमायूंषि ॥ ८ ॥

**म०** चतस्रोनुष्टुभः द्वयोऽरनुमतिर्देवता। इत् निपातोऽनर्थकः। हे अनुमते, त्वमनुमन्यासै अनुमन्यस्वास्मदुक्तं बुध्यस्व। नोऽस्माकं शं च शमेव सुखमेव कृधि कुरु। च पुनः नोऽस्माकं क्रत्वे क्रतवे संकल्पाय दक्षाय तत्समृद्धये संकल्पसिद्धये च नोऽस्मान् हिनु गमय। नोऽस्माकमायूंषि प्रतारिषः प्रतारय वर्धय। 'लेटोऽडाटौ' (पा० ३।४।९४) इत्याट् 'वैतोऽन्यत्र' (पा० ३।४।९६) इत्यैकारः। कृधि 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा० ६।४।१०२) इति हेर्धिः 'बहुलं छन्दसि' (पा० २।४।७३) इति शपो लुक्। क्रत्वे गुणाभावे यणादेशः। तारिषः 'सिब्बहुलं छन्दसि णिद्वक्तव्यः' (पा० ३।१।३४) इति वृद्धिः। अन्यत्पूर्ववत्। प्रपूर्वस्तरतिर्वृद्ध्यर्थः ॥ ८ ॥

## नवमी।

अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम्। अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ९ ॥

**उ०** अनु नः। अनुमन्यतां नः अस्माकम् अद्य अनुमतिः। यज्ञम् देवेषु यज्ञियेषु। अग्निश्च अनुमन्यताम्। हव्यवाहनः हविषो वोढा भवतं। भवतामिति पुरुषव्यत्ययः। दाशुषे हवींषि दत्तवते यजमानाय। मयः सुखरूपौ ॥ ९ ॥

**म०** अनुमतिः अद्य नोऽस्माकं यज्ञं देवेषु यज्ञियेषु अनुमन्यताम्। अग्निश्च यज्ञं देवेषु अनुमन्यताम्। किंभूतोऽग्निः। हव्यवाहनः हविषो वोढा। किंच दाशुषे हवींषि दत्तवते यजमानाय मयः सुखरूपौ अनुमत्यग्नी भवतम्। भवतामिति पुरुषव्यत्ययः। हव्यं वहतीति हव्यवाहनः 'हव्येऽनन्तःपादम्' (पा० ३।२।६६) इति वहेर्ण्युट्। दाशुषे 'दाश्वान्साह्वान्–' (पा० ६।१।१२) इति साधुः ॥ ९ ॥

## दशमी।

सिनीवालि पृथुष्टुके या देवानामसि स्वसा। जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ १० ॥

**उ०** सिनीवालि। सिनीवाली देवपुत्री। हे सिनीवालि हे पृथुष्टुके पृथुसंयमितकेशभारे। महास्तुतिर्वा पृथुष्टुका। या त्वं देवानाम् असि भवसि स्वसा भगिनी। तां त्वां ब्रवीमि। जुषस्व प्रीत्या परिगृह्णीष्व हव्यं हविः। आहुतमभिहुतमग्नौ। प्रजां च हे देवि, दिदिड्ढि दिश अतिसृज देहि नः अस्मभ्यम् ॥ १० ॥

**म०** सिनीवाली देवता। हे सिनीवालि, हे पृथुष्टुके, स्तुकं केशभारः स्तुतिः कामो वा। हे पृथुकेशभारे, महास्तुते वा पृथुकामे वा। या त्वं देवानां स्वसा असि भगिनी भवसि। सा त्वमाहुतं हव्यं जुषस्व प्रीत्या गृह्णीष्व। हे देवि, नोऽस्मभ्यं प्रजां च दिदिड्ढि दिश देहि। 'बहुलं छन्दसि' (पा० २।४।७६) इति दिशतेः शपः श्लुः ततो द्वित्वादि ॥ १० ॥

## एकादशी।

पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ ११ ॥

उ० पञ्च नद्यः सरस्वतीम् । नदीदेवता याः पञ्च नद्यः दृषद्वतीशतद्रूश्चन्द्रभागाविपाशेरावतीत्यादिकाः । सरस्वतीम् अपियन्ति अपिगच्छन्ति । सस्रोतसः समानानि स्रोतांसि यासां तास्तथोक्ताः । सरस्वती तु । तुशब्दोऽवधारणार्थः । सरस्वत्येव पञ्चधा । सो सा च स्वदेशेभवत् भवति । सरित् नदी । तस्यां हि सारस्वतानि सत्राणि भवन्ति ॥ ११ ॥

म० सरस्वतीनदीदेवत्या । याः दृषद्वत्याद्याः पञ्च नद्यः सरस्वतीमपियन्ति गच्छन्ति । किंभूताः सस्रोतसः समानं स्रोतः प्रवाहो यासां ताः । तुरवधारणे । सा उ सैव सरस्वत्येव पञ्चधा देशे सरिन्नदी अभवत् पञ्चापि स्वनामानि त्यक्त्वा सरस्वत्येवाभवत् ॥ ११ ॥

## द्वादशी ।

त्वम॑ग्ने प्रथ॒मो अङ्गि॑रा॒ ऋषि॑र्दे॒वो दे॒वाना॑मभवः शि॒वः सखा॑ । तव॑ व्र॒ते क॒वयो॑ विद्म॒नाप॒सोऽजा॑यन्त म॒रुतो॒ भ्राज॑दृष्टयः ॥ १२ ॥

उ० त्वमग्ने चतस्र आग्नेय्यः । द्वे जगत्यौ अन्ये त्रिष्टुबनुष्टुभौ । हे अग्ने, त्वं प्रथम आद्यः अङ्गिराः ऋषिः अभवः । त्वं च प्रथमः देवः देवानामभवः । शिवः कल्याणः सखा समानख्यानः । किंच तव व्रते कर्मणि वर्तमानाः कवयः क्रान्तदर्शनाः विद्मना अपसः । अप इति कर्मनाम । विदितकर्माणः । अजायन्त संवृत्ताः मरुतः । भ्राजन्त्यः ऋष्टयः खड्गा येषां ते भ्राजदृष्टयः । यो हि शत्रून् जयति भ्राजन्ते तस्यायुधानि ॥ १२ ॥

म० चतस्र आग्नेय्यः द्वे जगत्यौ अन्ये त्रिष्टुबनुष्टुभौ । हे अग्ने, त्वं देवानां प्रथमः सखा अभवः भूतोऽसि । आद्यो मित्रभूतो देवानां त्वमेवेत्यर्थः । किंभूतस्त्वम् । अङ्गिराः अङ्गानां रसः । यद्वा अङ्गिभ्य आत्मभ्यो यजमानेभ्यो राति सुखमित्यङ्गिराः । ऋषिर्द्रष्टा । देवो द्योतमानः । शिवः कल्याणः । किंच तव व्रते कर्मणि वर्तमाने मरुतः ईदृशा अजायन्त । कीदृशाः । कवयः क्रान्तदर्शिनः । विद्मनापसः अप इति कर्मनाम । विद्मना विदितानि अपांसि कर्माणि यैस्ते विदितकर्माणः । भ्राजदृष्टयः भ्राजन्त्यः शोभमानाः ऋष्टयः आयुधानि येषां ते तथा । शत्रुघातकत्वात् । विद्मनेति वेत्तेः कर्मणि मनिन्प्रत्ययः बहुलग्रहणात् ततो विभक्तेराकारः तस्य चालुक् । विद्मनापसः अजायन्त । जनेलङ् जादेशश्च श्यन् ॥ १२ ॥

## त्रयोदशी ।

त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य । त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेष॒ꣳ रक्ष॑माण॒स्तव॑ व्र॒ते ॥ १३ ॥

उ० त्वं नः । विषमोऽयं मन्त्रः साध्याहारः । त्वं नः अस्माकम् हे अग्ने, आश्रय इति शेषः । अथैवं सति तव हे देव, पायुभिः पालनैः धैर्यावलम्बिभिः पालिताः सन्तः आस्महे । किंच मघोनो रक्ष धनानि रक्ष । तन्वः शरीराणि च रक्ष । हे वन्द्य वन्दितव्य । कस्मात्पुनस्त्वमेवमुच्यसे । यतः स्वभावत एव त्राता तोकस्य पुत्रस्य । तनये तनयस्य पौत्रस्य च गवां च असि । कथम् । अनिमेषं रक्षमाणः प्रमादमकुर्वन् रक्षमाणः । एवं चेत् मृदुहृदयतमोसि । तव व्रते तव कर्मणि वयं स्याम । अन्या देवताः परित्यज्य त्वामेव परिचरामं इत्यभिप्रायः ॥ १३ ॥

म० रक्षणार्थो मन्त्रः । हे अग्ने, हे देव द्योतमान, हे वन्द्य स्तुत्य, तव व्रते कर्मणि वर्तमानान्मघोनो धनवतो यजमानात्रक्ष पालय । नोऽस्माकं तन्वः शरीराणि च रक्ष । कैः । तव पायुभिः त्वदीयैः पालनैः । यतस्त्वमनिमेषं सावधानं रक्षमाणः पालयन्सन् तोकस्य पुत्रस्य तनये । विभक्तिव्यत्ययः । तनयस्य पौत्रस्य गवां च त्राता रक्षकोऽसि ॥ १३ ॥

## चतुर्दशी ।

उ॒त्ता॒नाया॑मव॑ भरा चिकि॒त्वान्स॒द्यः प्रवी॑ता॒ वृष॑णं जजान । अ॒रु॒षस्तू॑पो॒ रुश॑दस्य॒ पाज॒ इडा॑यास्पु॒त्रो व॒युने॑ऽजनिष्ट ॥ १४ ॥

उ० उत्तानायामव द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते योग्यत्वात् । योऽयम् अरुषस्तूपः ज्वालासंघातमूर्तिः । यस्य चास्य रुशत्पाजः दीप्तं बलम् । यश्च इडायाः पृथिव्याः पुत्रः । यश्च वयुने प्रज्ञाने कर्तव्ये अजनिष्ट जातः तमग्निम् । उत्तानायां अवभर अवाचीनं हर । चिकित्वान् जानानः अरण्या वीर्यमिति शेषः । किंतद्वीर्यमिति चेत् सद्यः प्रवीता वृषणं जजान । सद्य एव प्रवीता कामिता सती वृषणं वर्षितारं सेक्तारं युवानं सर्वकर्मक्षमं जनयतीति ॥ १४ ॥

म० यः इडायाः पृथिव्याः पुत्रोऽग्निर्वयुने प्रज्ञाने कर्तव्ये अजनिष्ट जातः । किंभूतः । अरुषस्तूपः 'रुष वधे' रोषति रुषः अरुषोऽहिंसकः स्तूपो ज्वालोच्छ्रायो यस्य स तथा । 'ष्टु उच्छ्राये' अस्याग्नेः रुशत् दीप्तं पाजः बलमुत्तानायामरण्यामवभर अवाचीनं हर । 'द्व्यचोऽतस्तिङः' (पा० ६ । ३ । १३५) इति दीर्घः । चिकित्वान् अरणिबलं जानन् । किं बलमिति चेत् । याऽरणिः प्रवीता कामिता सती वृषणं सेक्तारमग्निं सद्यः तत्कालं जजान जनयति 'छन्दसि लुङ्लङ्लिटः' (पा० ३ । ४ । ६ ) इति लिट् । सोऽग्निर्जात इत्यर्थः ॥ १४ ॥

## पञ्चदशी ।

इडा॑यास्त्वा प॒दे व॒यं नाभा॑ पृथि॒व्या अधि॑ । जात॑वेदो॒ नि धी॑मह्य॒ग्ने ह॒व्याय॒ वोढ॑वे ॥ १५ ॥

उ० इडायास्त्वा । इडायाः पृथिव्याः त्वाम् । पदे देवय-

जनाख्ये। वयम् नाभा नाभौ पृथिव्या अधि। उत्तरवेद्यां नाभिका भवति तद्विषयमेतत्। हे जातवेदः जातप्रज्ञान, निधीमहि स्थापयामः। हे अग्ने, हव्याय वोढवे हविषो वहनाय ॥ १५ ॥

म० हे जातवेदः जातप्रज्ञान हे अग्ने, इडायाः पृथिव्याः स्थाने देवयजनाख्ये पृथिव्या नाभा अधि उत्तरवेद्या मध्ये वयं त्वा त्वां निधीमहि स्थापयामः। किमर्थम्। हव्याय वोढवे हव्यं वोढुम्। विभक्तिव्यत्ययः। वहतेः 'तुमर्थे सेसेन्–' (पा० ३।४।९) इति तवेप्रत्ययः 'सहिवहोः–' (पा० ६।३।११२) इत्योकारः॥ १५॥

## षोडशी।

प्रमन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत्। सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १६ ॥

उ० प्रमन्महे। चतस्र ऐन्द्र्यस्त्रिष्टुभः। प्रमन्महे प्रजानीमः शवसानाय बलमाविष्कुर्वते। शूषं बलम्। आङ्गूषम् आघोषं स्तोमम्। गिर्वणसे देवाय। कथमिव। अङ्गिरस्वत् अङ्गिरसा तुल्यप्रज्ञानाय च। सुवृक्तिभिः सुवृक्ताभिः शोभनाभिः स्तुतिभिः। स्तुवते स्तुवन्तीति विभक्तिव्यत्ययः सामर्थ्यात्। ऋग्मियाय ऋङ्मयाय स्तुतिमयाय। अर्चनीयायच। वयम् अर्चामः अर्कम् उच्चारयामः मन्त्रम्। नरे नृरूपाय। विश्रुताय शौर्यबलदानादिलब्धख्यातये॥१६॥

म० चतस्र ऐन्द्र्यस्त्रिष्टुभः। वयमिन्द्राय इन्द्रार्थमाङ्गूषं स्तोमं त्रिवृदादिकं प्रमन्महे जानीमः। किंभूतं स्तोमम्। शूषं बलहेतुम्। अर्कं मन्त्रं च अर्चाम उच्चारयाम। धातूनामनेकार्थत्वादर्चतिरुच्चारणार्थः। अङ्गिरस्वत् अङ्गिरस इव। तैर्यथा स्तोमो ज्ञातो मन्त्रश्च पठितस्तस्मै तद्वत्। किंभूतायेन्द्राय। शवसानाय शवो बलमात्मन इच्छति शवस्यति शवस्यतीति शवसानः तस्मै बलमभिलषमाणाय। 'सुप आत्मनः क्यच्' (पा० ३।१।८) इति क्यच् तदन्ताच्छानच् शप् 'बहुलं छन्दसि' (पा० २।४।२७) इति तस्य लुक् 'छन्दस्युभयथा' (पा० ३।४।११७) इति तस्य शानचोऽप्यार्धधातुकत्वात् 'क्यस्य विभाषा' (पा० ६।४।५०) इति क्यचो लोपः शवसान इति सिध्यति। पुनः कीदृशाय। गिर्वणसे गिरा स्तुत्या वनयति संभाजयति आत्मानमभिलषितदानात्स्तोतृभ्य इति गिर्वणाः। गीःशब्दोपपदाद्वनोतेर्ण्यन्तादसुनि वनेर्घटादित्वेन मित्संज्ञत्वात् ह्रस्वत्वम् णिचो लोपः। गीर्वणा इति प्राप्ते दीर्घाभावश्छान्दसः। यद्वा स्वार्थे णिच् गीर्भिरेनं देवा भजन्ति इति गिर्वणाः तस्मै। गीर्वाणशब्देन समानार्थो गिर्वणःशब्दः। पुनः किंभूताय। सुवृक्तिभिः शोभनाभिः स्तुतिभिः स्तुवते स्तौतीति स्तुवन् तस्मै। यजमानानिति शेषः। तदुक्तम् 'त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम्' (६।३७) इति। पुनः कीदृशाय। ऋग्मियाय ऋग्मयाय वेदमयाय। मयडर्थे छान्दसो मियट्। यद्वा 'ऋच स्तुतौ' इत्यस्माद्भावे औणादिको मक् कुत्वं जश्त्वं। ऋग्मः स्तुतिः तमर्हति ऋग्मियः अर्हार्थे घच् स्तुतियोग्याय। पुनः कीदृशाय। नरे नररूपाय। नृशब्दस्य ङे परे छान्दसो गुणः। पुनः कीदृशाय। विश्रुताय शौर्यदानबलादिभिर्लब्धख्यातये॥ १६॥

## सप्तदशी।

प्रवो महे महि नमो भरध्वमाङ्गूष्यꣳ शवसानाय साम। येना नः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन् ॥ १७ ॥

उ० प्र वः। सामर्थ्याद्द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते। येन साम्ना नः अस्माकम्। पूर्वे पितरः पदज्ञाः आत्मसतत्त्ववेदिनः। अर्चन्तः स्तुवन्तः अङ्गिरसः ऋषयः। गाः अविन्दन् आदित्यरश्मीन् लब्धवन्तः स हि साम्नां लोकः तत्साम प्रभरध्वम् आहरध्वम्। वः। प्रथमाबहुवचनस्य स्थाने व आदेशः। यूयम् हे पुत्रपौत्रप्रपौत्राः, महे महते इन्द्राय। महि महत्वम्। नमः अन्नम् आङ्गूष्यम् स्तोमस्य च हितम् साम। प्रभरध्वम्। शवसानाय बलमभिलषमाणाय॥ १७॥

म० महे महते शवसानाय बलमभिलषमाणायेन्द्राय महि महत् नमोऽन्नं वः यूयं प्रभरध्वं प्रहरतम् समर्पयत। यूयमित्यर्थे व इत्यव्ययम्। मुनीनां पुत्रादीन्प्रति वचः। आङ्गूष्यमाङ्गूषाय हितं साम प्रभरध्वमुच्चारयत। नोऽस्माकं पूर्वे पितरः अङ्गिरसः येनान्नेन साम्ना चार्चन्तः स्तुवन्तः सन्तः गाः सूर्यकिरणानविन्दन् लेभिरे। स हि साम्नां लोकः तत्साम प्रभरध्वम्। कीदृशा अङ्गिरसः। पदज्ञाः पदमात्मस्वरूपं जानन्तीति पदज्ञाः॥ १७॥

## अष्टादशी।

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयाꣳसि। तितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥ १८ ॥

उ० इच्छन्ति त्वा। इच्छन्ति त्वाम्। सोम्यासः सोमसंपादिनः। सखायः समानख्यानाः। कथं समानख्यानाः। श्रुतौ 'द्वया वै देवाः अहैवं देवाः अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः' इति। केन प्रकारेण इच्छन्ति। सुन्वन्ति अभिषुण्वन्ति सोमम्। दधति प्रयांसि। प्रय इत्यन्ननाम। धारयन्ति च हविर्लक्षणान्यन्नानि। किंच। तितिक्षन्ते अभिशस्तिं जनानाम्। मनोवाक्कायसंयताः क्षान्तिपराः। अभिशस्तिं दुर्वचनं जनानां सहन्ते। अथैवं त्वामिच्छताम् हे इन्द्र, त्वत् त्वत्तः सकाशात् आसमन्तांज्ञा-

वेन । कः चन । चनो निपातोऽप्यर्थे । हिरनर्थकः । कोऽपि प्रकेतः प्रज्ञानविशेषः अत्यर्थं भवति । यजमानानामिति शेषः ॥ १८ ॥

**म०** हे इन्द्र, त्वत् त्वत्तः सकाशात् कश्चन । चनशब्दोऽप्यर्थे । कोऽपि लोकोत्तरः प्रकेतः प्रकृष्टो ज्ञानविशेषः आ समन्तात् हि यतो भवति अतः सखायो विप्राः त्वामिच्छन्ति । 'अथ ये ब्राह्मणाः शुश्रुवांꣳसोऽनूचानास्ते मनुष्यदेवाः' इत्युक्तेर्देवानां विप्राणां च सखित्वम् । किंभूताः सखायः । सोम्यासः सोमसंपादिनः । इच्छन्तीति कथं ज्ञातं तत्राह । यतस्ते सोमं सुन्वन्ति अभिषुण्वन्ति प्रयांसि अन्नानि दधति च । प्रय इत्यन्ननाम । हवींषि धारयन्ति । किं । जनानामभिशस्तिं दुर्वचनं तितिक्षन्ते सहन्ते मनोवाक्कायसंयताः क्षान्तिपरा इत्यर्थः ॥१८॥

## एकोनविंशी ।

न ते दूरे परमा चिद्रजाꣳस्या तु प्रयाहि हरिवो हरिभ्याम् । स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने अग्नौ ॥ १९ ॥

**उ०** न ते । नहि ते तव दूरेऽपि परमा परमाणि विप्रकृष्टदेशानि । रजांसि स्थानानि । एवंचेत् । आ प्रयाहि आयाहि तु तूर्णम् । हे हरिवः हरिभ्यां अश्वाभ्याम् । किमर्थम् । स्थिराय दृढसौहृदाय । वृष्णे सेक्त्रे । सवना कृतेमा सवनानि कृतानि इमानि । किंच । युक्ताः अभिषवकर्मणि ग्रावाणः । समिधाने समिध्यमाने च अग्नौ आहवनीयाख्ये आहुतयः होष्यन्ते । अतश्च आयाहि ॥ १९ ॥

**म०** हे हरिवः, हरी अश्वौ विद्येते यस्य स हरिवान् तस्य संबोधनम् 'मतुवसोः–' ( पा० ८ । ३ । १ ) इति रुत्वम् । हे हरिवः, स्थिराय दृढसौहृदाय वृष्णे सेक्त्रे तुभ्यम् इमा सवना कृता इमानि सवनानि प्रातःसवनादीनि कृतानि । क्व सति । अग्नौ समिधाने समिध्यमाने सति । छान्दसो यको लुक् । ग्रावाणः च युक्ताः योजिताः अभिषवकर्मणि । तुशब्दो हेत्वर्थे । अतो हेतोः हरिभ्यामश्वाभ्यामा प्रयाहि आगच्छ । ननु स्वर्गात्कथमतिदूरे मया गन्तव्यमित्यत आह । परमा परमाणि दूरदेशस्थानि रजांसि स्थानानि ते तव दूरे न चित् दूरे न सन्ति । चिच्छब्दोऽप्यर्थे । अतिदूरमपि ते निकटम् अत आयाहीत्यर्थः ॥ १९ ॥

## विंशी ।

अषाढं युत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य गोपाम् । भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनुमदेम सोम ॥ २० ॥

**उ०** अषाढं युत्सु । अषाढं असोढम् । युत्सु युद्धेषु । पृतनासु सैन्येषु । पप्रिम् । 'पॄ पालनपूरणयोः' इत्यस्यैतद्रूपं 'नतु प्रा पूरण' इत्यस्य । पप्रिं पालनशीलम् । स्वर्षां स्वर्दिवं सनोति स तथा तम् । अप्साम् अपः सनोति संभजते स तथा तम् । वृजनस्य गोपां बलस्य गोप्तारम् । भरेषुजाम् जयतेरेतद्रूपं नतु जानातेः । संग्रामेषु जेतारम् । सुक्षितिं सुनिवासम् श्रवसं कल्याणकर्मैककर्तृत्वेन प्रसिद्धम् । जयन्तं त्वाम् अनुमदेम । मदेर्मोदनार्थस्य ग्रहणम् । परसैन्यानि जयन्तं त्वां दृष्ट्वा उत्साद्यन्ते तत् दृष्ट्वा प्रहृष्टाः स्याम हे सोम ॥ २० ॥

**म०** चतस्रः सोमदेवत्यास्त्रिष्टुभः । हे सोम, त्वां जयन्तमुत्कर्षेण वर्तमानमनु वयं मदेम हृष्टाः स्याम । किंभूतं त्वाम् । युत्सु युद्धेषु अषाढमसहनमनभिभूतम् । पुनः कीदृशम् । पृतनासु सेनासु पप्रिं पालयितारम् । स्वर्षाम् स्वर्दिवं सनोति संभजते स स्वर्षाः तम् । अप्साम् अपो जलानि सनोतीत्यप्साः तम् । वृजनस्य बलस्य गोपां रक्षकम् । भरेषुजां संग्रामेषु जेतारम् । सुक्षितिं सुनिवासम् । सुश्रवसं शोभनं श्रवः कीर्तिर्यस्य स सुश्रवाः तम् । अषाढम् सह्यतेऽसौ साढः न साढः असाढस्तम् । सहेः क्तः ढत्वं ( पा० ८ । २ । ३१ । ) धत्वं ( पा० ९ । २ । ४० ) ष्टुत्वम् ( पा० ८ । ४ । ४१ । ) 'ढो ढे लोपः' ( पा० ८ । ३ । १२ ) 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ( पा० ६ । ३ । १११ ) बाहुलकात् 'सहिवहोरोदवर्णस्य' ( पा० ६ । ३ । ११२ ) इत्यस्याप्रवृत्तिः षत्वं छान्दसम् । पप्रिम् 'पॄ पालनपूरणयोः' 'आदृगमहन–' ( पा० ३ । २ । १७१ ) इति किः द्वित्वादि । स्वर्षाम् स्वःपूर्वात्सनोतेर्विट् 'विड्वनोरनुनासिकस्यात्' ( पा० ६ । ३ । ४१ ) । एवमप्साम् । गोपायतीति गोपाः क्विप् अतो लोपः यलोपः । भरेषुजाम् भरेषु संग्रामेषु जयति शत्रूनिति भरेषुजाः 'हलदन्तात्सप्तम्याः' ( पा० ६ । ३ । ९ ) इति अलुक् । जयतेरौणादिको डाप्रत्ययः । मदेम 'मदी हर्षे' लिङ् व्यत्ययेन शप् ॥ २० ॥

## एकविंशी ।

सोमो धेनुꣳ सोमो अर्वन्तमाशुꣳ सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २१ ॥

**उ०** सोमो धेनुम् । सोमः धेनुं ददाति । सोम एव अर्वन्तमश्वं आशुम् शीघ्रगतिं ददाति । सोम एव च वीरं पुत्रम् कर्मण्यं कर्मणि साधुं ददाति । तमेव विशिनष्टि । सादन्यं सदने साधुम् । विदथ्यं विदथे यज्ञे साधुम् । सभेयं सभामर्हति सभेयस्तम् । पितृश्रवणं पितुरनुशासने च स्थितम् । विनीतमित्यर्थः । यः यजमानः ददाशत् अस्मै सोमाय हविः तस्मै सोमो धेन्वादीन्ददातीति संबन्धः ॥२१॥

**म०** यो यजमानोऽस्मै सोमाय ददाशत् ददाति हविः तस्मै सोमो धेनुं ददाति । आशु शीघ्रमर्वन्तमश्वं च सोमो ददाति । सोमश्च तस्मै वीरं पुत्रं ददाति । कीदृशं वीरम् । कर्मण्यं कर्मणि साधुम् । सादन्यं सदने गृहे साधुम् । विदथ्यं

विदथो यज्ञस्तत्र साधुम्। सभेयं सभामर्हति सभेयस्तम्। पितृश्रवणं पितरं शृणोति पितृश्रवणः पित्राज्ञाकारिणं विनीतमित्यर्थः। कर्मण्यमित्यादौ 'तत्र साधुः' ( पा०।४।४।९८ ) इति यत्। सभेयं 'ढश्छन्दसि' ( पा०४।४।१०६ ) इति सभायाः साध्वर्थे ढप्रत्ययः। तस्येयादेशः ( पा० ७।१।२ )। ददाशत् 'दाश्र दाने' 'बहुलं छन्दसि' ( पा० २।४।७६ ) इति शपः श्लुः द्वित्वम् 'इतश्च लोपः परस्मैपदेषु' ( पा०।३।४।९७ ) इति तिप इलोपः। 'लेटोऽडाटौ ( पा० ३।४।९४ ) इत्यडागमः॥ २१॥

## द्वाविंशी।

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः। त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ॥ २२॥

उ० त्वमिमाः। हे सोम, त्वम् इमाः ओषधीः विश्वाः सर्वाः अजनयः जनितवानसि। त्वम् अपः अजनयः। त्वंच गाः अजनयः। त्वम् आततन्थ आततवानसि।उरु विस्तीर्णमन्तरिक्षम्। त्वं ज्योतिषा वि तमो ववर्थ विवृणोषि तमः। त्वमेवादित्यात्मना तमोऽपनयसि। सर्वात्मत्वेन स्तुतिः॥२२॥

म० हे सोम, त्वमिमाः विश्वाः सर्वाः ओषधीः अपो जलानि गाः धेनूः अजनयः जनितवानसि। त्वमुरु विस्तीर्णमन्तरिक्षमाततन्थ विस्तारितवानसि। त्वं च ज्योतिषा तेजसा तमोऽन्धकारं विववर्थ विवृणोषि। आदित्यात्मना सर्वं तमोऽपनयसीति सर्वात्मा त्वमित्यर्थः। 'बभूथाततन्थजगृम्भववर्थेति निगमे' ( पा०।७।२।६४ ) इति निपातः॥ २२॥

## त्रयोविंशी।

देवेन नो मनसा देव सोम रायो भागꣳ सहसावन्नभियुध्य। मा त्वातनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ॥ २३॥

उ० देवेन नः। दैवेनेति प्राप्ते तद्धितलोपश्छान्दसः। दैवेन मनसा सह नः अस्मभ्यम्। रायो भागं धनस्य भागम्। सहःशब्दोः बलवचनः सान्तः तत्र अकारागमश्छान्दसः। हे सहस्वन्, अभियुध्य। युध्यतिर्गत्यर्थानां मध्ये पठ्यते अन्तर्भावितण्यर्थश्च गृह्यते। अभिगमय देहीत्यर्थः। एवं दानप्रवृत्तं त्वां कश्चित्प्रतिबध्नीयादित्यत आह। मा च त्वाम् आतनत्। तनोतिः प्रतिबन्धार्थः। प्रतिबध्नातु। कुतस्त्वमेवमुच्यस इतिचेत्। ईशिषे वीर्यस्य यतस्त्वं स्वकीयस्य वीरकर्मणः ईशिषे ईश्वरोयस्त्वमित्यभिप्रायः। किंच उभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं व्याध्यपगमं कुर्वित्यभिप्रायः। गविष्टौ गोशब्देनात्र द्युलोकोऽभिप्रेतः। स्वर्गैषणायां च विषयभूतायाम् अस्मान् प्रचिकित्स। दैवं मनः प्राप्य लब्धधना अरोगाश्च यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः॥२३॥

म० हे देव, सोम, हे सहसावन् बलवन्, देवेन मनसा देवसंबन्धिना मनसा सह रायो धनस्य भागं नोऽस्मभ्यमभियुध्य। युध्यतिर्गतिकर्मा अन्तर्भावितण्यर्थः। अभिगमय देहीत्यर्थः।एवं दानप्रवृत्तं त्वां कश्चित् मा आतनत् त्वा मां आतनोतु मा प्रतिबध्नातु। तनोतिः प्रतिबन्धार्थः। कुतस्त्वमेवमुच्यस इति चेत् यतस्त्वं वीर्यस्य ईशिषे वीरकर्मण ईश्वरो भवसि 'अधीगर्थदयेशाम्' (पा०।२।३।५२) इति कर्मणि षष्ठी। किंच गविष्टौ गोः स्वर्गस्य इष्टौ इच्छायां स्वर्गैषणायां विषयभूतायां समासुभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं चिकित्सां कुरु व्याध्यपगमं कुरु। उभयलोकप्रतिबन्धकं विघ्नं निवर्तयेत्यर्थः। दैवं मनः प्राप्य लब्धधना अरोगाश्च सत्कर्म कुर्वाणा यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः। देवेन देवानामिदं देवम् तद्धितप्रत्ययलोपः। सहसावन् प्रथमार्थे तृतीया। सहसा सहो बलमस्यास्तीति सहसावान् अलुक्। तनत् तनोतेः परस्य लेटोऽडागम इलोपश्च। चिकित्स 'गुप्तिज्किद्भ्यः सन्' ( पा० ३।१।५ ) 'अन्येषामपि दृश्यते' ( पा० ६।३।१३७ ) इति दीर्घः॥ २३॥

## चतुर्विंशी।

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून्। हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि॥ २४॥

उ० अष्टौ व्यख्यत्। चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः। यः अष्टौ व्यख्यत् प्रकाशितवान् ककुभः दिशः। चतस्रो दिशः चतस्रोऽवान्तरदिशः। पृथिव्याः संबन्धिनीः। त्रीधन्व त्रीणि धन्वानीति शब्दसमाधिः। धन्व इत्यन्तरिक्षनाम तदुपलक्षितावितरावपि लोकौ गृह्येते छत्रिणो यान्तीति यथा। यश्च त्रीन् लोकान् व्यख्यत्। यश्च योजनान् योजनगव्यूतिक्रोशादीन् मानविशेषान् व्यख्यत्। यश्च सप्तसिन्धून् सप्तसमुद्रान् व्यख्यत्। सोऽयं हिरण्याक्षः हिरण्यसदृशाक्षः अमृतदृष्टिर्वा सविता देवः आगात् आगच्छतु किं कुर्वन्नित्यत आह। दधत् स्थापयन् रत्ना रत्नमयानि धनानि। दाशुषे हवींषि दत्तवते यजमानाय। वार्याणि वरणीयानि॥ २४॥

म० चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः हिरण्यस्तूपदृष्टाः। स सविता देव आगात् आगच्छतु 'इणो गा लुङि' ( पा० २।४।४५ ) इतीणो गादेशः। किं कुर्वन्। दाशुषे हवींषि दत्तवते यजमानाय वार्याणि वरणीयानि रत्ना रत्नानि दधद्दत् स्थापयन्वा। कीदृशः। हिरण्याक्षः हिरण्यमिव कान्तियुक्ते अक्षिणी यस्य स हिरण्याक्षः अमृतदृष्टिर्वा। स कः। यः सविता पृथिव्याः संबन्धिनीः अष्टौ ककुभो दिशः व्यख्यत् प्रकाशितवान्। यश्च त्री त्रीणि धन्व धन्वानि लोकान् व्यख्यत्। धन्वेत्यन्तरिक्षनाम। तेन तदुपलक्षितावितरावपि लोकौ लक्ष्येते

छलिणो गच्छन्तीतिवत् । यश्च योजना योजनानि योजनगव्यूतिकोशादीनध्वपरिमाणविशेषान्व्यख्यत् । यश्च सप्त सिन्धून्समुद्रान्क्षीरोदाद्यान्व्यख्यत् । उपलक्षणमेतत् । सर्वजगत्प्रकाशकः सविता रत्नानि ददान आयात्वित्यर्थः । अख्यत् 'ख्या प्रकथने' 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( पा० ३ । १ । ५२ ) इति च्लेरङ् आलोपश्च धातूनामनेकार्थत्वादत्र प्रकाशनार्थो ग्राह्यः । त्री योजना 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्यादिना पूर्वसवर्णदीर्घो विभक्तेः । धन्व सुपो लुक् । रत्ना सुप आकारः । दाशुषो 'दाश्वान्साह्वान्' ( पा० । ६ । १ । १२ ) इति निपातः । वार्याणि 'ऋहलोर्ण्यत्' ( पा० । ३ । १ । १२४ ) इति वृणोतेर्ण्यत् ॥ २४ ॥

## पञ्चविंशी ।

हिर॑ण्यपाणिः सवि॒ता विच॑र्षणिरु॒भे द्यावा॑पृथि॒वी अ॒न्तरी॑यते । अपामी॑वां॒ बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्याम्ऋ॑णोति ॥ २५ ॥

**उ०** हिरण्यपाणिः सविता । सुवर्णपाणिः सविता । विचर्षणिः विविधं यष्टा कृताकृतप्रत्यवेक्षकः । उभे द्यावापृथिवी अन्तः । अधिकरणश्रुतेर्योग्यक्रियाया अध्याहारः । मध्ये स्थितः ईयते एति यदा । अथ तदा अपामीवां बाधते अमीवां व्याधिम् । वेति विगतिकर्मा । गच्छति सूर्यं सूर्यरूपमवस्थाय । ततोऽस्तमनकाले । अभिकृष्णेन रजसा द्यामृणोति । अभिमृणोति अभिव्याप्नोति । कृष्णेन रजसा तमोलक्षणेन । द्यां द्युलोकम् ॥ २५ ॥

**म०** सविता प्रसविता सूर्यं सूर्यः विभक्तिव्यत्ययः । उभे उभयोः द्यावापृथिवी द्यावापृथिव्योः अन्तर्मध्ये ईयते आगच्छति यदा तदा अमीवां व्याधिमपबाधते अन्धकारलक्षणरोगं निवर्तयति । अथ यदा वेति अस्तमयसमये गच्छति तदा कृष्णेन रजसा अन्धकारलक्षणेन द्यां द्युलोकमभि ऋणोति अभिव्याप्नोति । कीदृशः सूर्यः । हिरण्यपाणिः सुवर्णपाणिः । विचर्षणिः विविधं द्रष्टा कृताकृतप्रत्यवेक्षकः । उभे द्यावापृथिवी । षष्ठ्यर्थे द्वितीया । अन्तर्योगे वा । ईयते 'ईङ् गतौ' दिवादिः ॥ २५ ॥

## षड्विंशी ।

हिर॑ण्यहस्तो॒ असु॑रः सु॒नी॒थः सु॑मृडी॒कः स्ववा॑न्यात्व॒र्वाङ् । अ॒प॒सेध॑न्र॒क्षसो॑ यातु॒धाना॒नस्था॑द्दे॒वः प्र॑तिदो॒षं गृ॑णा॒नः ॥ २६ ॥

**उ०** हिरण्यहस्तः द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते सामर्थ्यात् । यः अपसेधन् अपगमयन् रक्षसः यातुधानांश्च असुखकारकान् । अस्थात् उदस्थात् । देवः प्रतिदोषं गृणानः श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः स्तुवन् उच्चारयन् गणयन् उपभोगार्थमित्यभिप्रायः । सोऽयं सविता हिरण्यहस्तः हिरण्यदानार्थं हस्तौ यस्य स तथोक्तः । रूपेण वा स्तुतिः । असुरः 'रा दाने' असून्प्राणान्ददातीत्यसुरः । सुनीथः । नीथा स्तुतिः । कल्याणस्तुतिः । सुमृडीकः साधु सुखयिता । स्ववान् । आत्मीयज्ञातिधनवचनः स्वशब्दः । यातु आयातु । अर्वाङ् अर्वागञ्चनः अस्मानभिमुखः ॥ २६ ॥

**म०** यो देवो रविः रक्षसो राक्षसान् यातुधानान् असुखकरांश्च अपसेधन् अपगमयन्सन् अस्थादुदस्थात् तदेति स देवः अर्वाङ् अर्वागञ्चनः अस्मदभिमुखः यातु आयात्वित्यर्थः । कीदृशो देवः । हिरण्यहस्तः हिरण्यं दानार्थं हस्ते यस्य स तथोक्तः। रूपेण वा स्तुतिः । असुरः असून् प्राणान् राति ददातीत्यसुरः । सुनीथः नीथा स्तुतिः कल्याणस्तुतिः । सुमृडीकः साधु सुखयिता । स्ववान्धववान् । प्रतिदोषम् प्रतिजनं यो दोषः प्रतिदोषः तम् । श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः गृणानः उच्चारयन् उपभोगार्थमित्यभिप्रायः । स्ववान् यातु इत्यत्र 'दीर्घादटि समानपादे' (पा०८ । ३ । ९) इति नस्य रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' (पा० ८ । ३ । १७) तस्य रोर्यादेशे 'हलि सर्वेषां' ( पा० ८।३ । २२ ) तस्य लोपः । रक्षस्शब्दस्य व्यत्ययेनाक्लीबत्वम् ॥ २६ ॥

## सप्तविंशी ।

ये ते॒ पन्था॑ः सवितः पू॒र्व्यासो॑ऽरे॒णवः॒ सुकृ॑ता अ॒न्तरि॑क्षे । तेभि॑र्नो अ॒द्य प॒थिभि॑ः सु॒गेभि॒ रक्षा॑ च नो॒ अधि॑ च ब्रूहि दे॒व ॥ २७ ॥

**उ०** ये ते पन्थाः। ये ते तव पन्थाः पन्थान इति वचनव्यत्ययः । हे सवितः, पूर्व्यासः पूर्वेष्वपि कालेषु भवाः । अरेणवः अपांसुलाः । सुकृताः साधुकृताः धात्रा अन्तरिक्षे । तेभिः तैः नः अस्मान् अद्य नयेति शेषः । पथिभिः सुगेभिः साधुगमनैः अन्नपानप्रभृतैर्गच्छतः रक्षा च रक्ष च नः अस्मान् । अधि च ब्रूहि अङ्गीकृत्य च ब्रूहि । यथा एते अस्मदीया इति । यद्वा यदस्माकं हितं पथ्यं तदधिब्रूहि उपदिश । हे देव, दानादिगुणयुक्त ॥ २७ ॥

**म०** हे सवितः हे देव, पन्थाः पन्थानो मार्गाः अन्तरिक्षे सुकृताः साधुकृताः धात्रा वर्तन्ते । कीदृशास्ते । पूर्व्यासः पूर्वेषु कालेषु भवाः पूर्व्याः । अरेणवः नास्ति रेणुर्येषु अपांसुलाः । तेभिः तैः पथिभिः मार्गैः नोऽस्मान् अद्य नयेति शेषः । च पुनः गच्छतो नोऽस्मान् रक्ष पालय । अधिब्रूहि च अधि अङ्गीकृत्य ब्रूहि एते मदीया इति । यद्वा अधिब्रूहि उपदिशास्माकं यद्धितं पथ्यं तत् । यद्वा अधि अधिकान् वद एते महायाज्ञिका दातार इत्यादि । किंभूतैः पथिभिः । सुगेभिः सुगैः सुखेन गम्यते येषु सुगाः तैः अन्नपानप्रभृतैरित्यर्थः । अधिकरणे गच्छतेर्डप्रत्ययः । पूर्वैः पूर्व्यासः कृताः 'पूर्वैः कृतमिनियौ च' ( पा० ४ । ४ । १३३ ) इति यप्रत्ययः ॥ २७ ॥

## अष्टाविंशी।

उभा पिबतमश्विनोभा नः शर्म यच्छतम्। अ-विद्रियाभिरूतिभिः॥ २८॥

उ० उभा पिबतम्। आश्विन्यस्तिस्रः एका गायत्री द्वे त्रिष्टुभौ। उभौ सोमं पिबतम् हे अश्विनौ, पीत्वा च सोमम् उभावपि नः अस्मभ्यम् शर्म शरणं प्रयच्छतं दत्तम्। किंच अविद्रियाभिः 'दृ विदारणे' अविदीर्णाभिः अनवखण्डिताभिः ऊतिभिरवनैः रक्षतमिति शेषः॥ २८॥

म० आश्विन्यस्तिस्रः एका गायत्री द्वे अनुष्टुभौ। हे अश्विना अश्विनौ, उभा उभौ द्वावपि युवां पिबतम्। सोममिति शेषः। उभा द्वौ युवां नोऽस्मभ्यं शर्म शरणं सुखं वा यच्छतम्। काभिः सह। अविद्रियाभिः अविदीर्णाभिः अखण्डिताभिः ऊतिभिः अवनैः पालनैः सह। सुखं दत्तं पालयतं चेत्यर्थः। उभा अश्विना विभक्तेराकारः। विदीर्यन्तीति विद्रियाः 'दृ विदारे' ओणादिक इयक्प्रत्ययः॥ २८॥

## एकोनत्रिंशी।

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम्। अद्यूत्येऽवसे निह्वये वां वृधे च नो भवतं वाजसातौ॥ २९॥

उ० अप्नस्वतीम्। अप्न इति कर्मनाम। कर्मवतीम् हे अश्विनौ, वाचम् अस्मे अस्माकम् कृतं कुरुतम्। किंच नः अस्माकम् हे दस्रौ दर्शनीयौ हे वृषणौ वर्षितारौ, युवानावित्यर्थः। मनीषां मनसः संबन्धिनीमिच्छां च। अप्नस्वतीमेव कृतम्। कस्मात्पुनरहमेवं ब्रवीमि। यतः अद्यूत्ये अवसे। द्यूते भवमवसमन्नं द्यूत्यम् द्यूतादागतं कर्मण्यं न भवति अत एवमुच्यते। अद्यूत्ये अन्ने निमित्तभूते। निह्वये वाम् आह्वयामि युवाम्। आगत्य च। वृधे वर्धनाय च नः अस्माकं भवतम्। वाजसातौ वाजसंभजननिमित्तभूते संग्रामे च यज्ञे वा वर्धनायैव भवतम्॥ २९॥

म० हे अश्विना अश्विनौ, हे दस्रा दर्शनीयौ हे वृषणा वर्षितारौ सेक्तारौ युवानौ, अस्मे अस्माकं वाचम् अप्नस्वतीं कर्मवतीं युवां कृतं कुरुतम्। तथा नोऽस्माकं मनीषां मनस इच्छामप्नस्वतीमेव कुरुतम्। मनसा वचसा च यज्ञं कुर्मस्तथा कुरुतमित्यर्थः। यतो ह वां युवां निह्वये आह्वयामि। किंनिमित्तम्। अद्यूत्ये सन्मार्गागते अवसे अन्ने अन्ननिमित्तम् तद्दानार्थमित्यर्थः। द्यूतादागतं द्यूते भवं वा द्यूत्यम् न द्यूत्यमद्यूत्यम् तस्मिन् द्यूतादागतं कर्मण्यं न भवतीत्येवमुच्यते द्यूतमन्येषामप्यन्याय्यधनागमानामुपलक्षकम्। किंच वाजसातौ वाजानामन्नानां सातिः संभजनं यस्मिन् स वाजसातिः तस्मिन् यज्ञे नोऽस्माकं वृधे वृद्धौ भवतम्। अस्मे विभक्तेः शेआदेशः। कृतम् करोतेः 'बहुलं छन्दसि' ( पा० २। ४। ७३ ) इति शपि लुप्ते लोण्मध्यमद्विवचने रूपम्। वृषणा वृषणौ 'वा षपूर्वस्य निगमे' ( पा० ६। ४। ९ ) इत्युपधादीर्घाभावः। वृधे वर्धनं वृत् संपदादित्वाद्भावे क्विप्॥ २९॥

## त्रिंशी।

द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ ३०॥

उ० द्युभिरक्तुभिः द्युभिरहोभिः कारणभूतैः अक्तुभिः अक्तू रात्रिः रात्रिभिश्च कारणभूताभिः। अधिकरणविवक्षा वा। काले हि द्युषु रात्रिषु वा। परि सर्वतः पातं परिपालयतम् युवाम् अस्मान्। न केवलं द्युभिरक्तुभिः परिपातम्। किं तर्हि। अरिष्टेभिः अनुपहिंसितैः हे अश्विनौ, सौभगेभिः। भग इति धननाम। शोभनैश्च धनैः। योजयतमित्यध्याहारः। तत् नः अस्माकम् मित्रः वरुणश्च मामहन्तां पूजयन्ताम्। अदितिश्च सिन्धुश्च पृथिवी च उत अपिच द्यौः॥ ३०॥

म० हे अश्विना अश्विनौ, द्युभिः दिवसैः अक्तुभिः रात्रिभिः सप्तम्यर्थे तृतीया। दिवसेषु रात्रिषु च अहोरात्रम् अस्मान् परिपातं सर्वतो रक्षतम्। कैः। सौभगेभिः सौभगैः। भग इति धननाम। शोभनैः धनैः। किंभूतैः। अरिष्टेभिः अनुपहिंसितैः अखण्डितैर्धनैरस्मान्रक्षतमित्यर्थः। किंच मित्रः वरुणः अदितिः सिन्धुः समुद्रः उतापि च द्यौः एते नोऽस्माकं तत् भवत्कृतं रक्षणं मामहन्तां पूजयन्ताम्। अनुमन्यन्तामित्यर्थः। द्युरित्यह्नो नाम अक्तुरिति रात्रेः। मामहन्ताम् 'मह पूजायाम्' 'बहुलं छन्दसि' ( पा० २। ४। ७६ ) इति शपः श्लुः। 'श्लौ' ( पा० ६। १। १० ) द्वित्वम् 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६। १। ७ ) इत्यभ्यासदीर्घः॥ ३०॥

## एकत्रिंशी।

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥ ३१॥

उ० आकृष्णेनेति व्याख्यातम्॥ ३१॥

म० व्याख्याता ( अ० ३३ क० ४३ )॥ ३१॥

## द्वात्रिंशी।

आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः। दिवः सदाꣳसि बृहती वितिष्ठस आ त्वेषं वर्तते तमः॥ ३२॥

उ० आरात्रि रात्रिदेवत्या बृहती। हे रात्रि, या त्वम् आ अप्रायि आअपूपुरः आपूरयसि। पार्थिवं रजः पृथिवीसंबन्धि-

लोकम् पितुः मध्यमस्य लोकस्य धामभिः स्थानैः सह । या च त्वम् दिवः द्युलोकस्य सदांसि स्थानानि । बृहती महती वितिष्ठसे आक्रामसि । यस्याश्च ते । तथापि आवर्तते । त्वेषं दीप्तं महाप्राग्भारं वा तमः तां त्वां स्तुमः ॥ ३२ ॥

म० रात्रिदेवत्या पथ्याबृहती । हे रात्रि, यया त्वया पार्थिवं रजः पृथिवीसंबन्धिलोकः पितुः मध्यलोकस्य धामभिः स्थानैः सह आ अप्रायि समन्तात्पूर्यते । या च त्वं दिवो द्युलोकस्य सदांसि स्थानानि बृहती महती सती वितिष्ठसे आक्रमसे व्याप्नोषि । तस्यास्तव तमः आवर्तते तथापि प्रवर्तते । किंभूतं तमः । त्वेषं दीप्तं महाप्राग्भारमित्यर्थः । रजःशब्दो लोकवचनः । अप्रायि 'प्रा पूरणे' कर्मणि लुङि चिणि रूपम् ॥ ३२ ॥

## त्रयस्त्रिंशी ।

उषस्तच्चित्रमाभरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥ ३३ ॥

उ० उषस्तत् । उषोदेवत्या परोष्णिक् । हे उषः, तत् चित्रं चायनीयं महनीयं धनम् आभर आहर अस्मभ्यम् । हे वाजिनीवति अन्नवति । येन धनेन तोकं पुत्रं तनयं पौत्रं च धामहे दध्महे ॥ ३३ ॥

म० उषोदेवत्या पुरोष्णिक् । हे उषः, हे वाजिनीवति हे अन्नवति, अस्मभ्यं तत् प्रसिद्धं चित्रं चायनीयमाश्चर्यकारि महनीयं धनमाभर आहर देहि । येन धनेन वयं तोकं पुत्रं तनयं पौत्रं च सर्वं सन्तानवर्गं धामहे दध्महे पुष्णीमः । धामहे दधातेः शपो लुकि रूपम् ॥ ३३ ॥

## चतुस्त्रिंशी ।

प्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रꣳ हुवेम ॥ ३४ ॥

उ० प्रातरग्निम् बहुदेवत्या जगती । प्रातःशब्दो वीप्सावचनः । प्रातःप्रातः पुनःपुनः । अग्निं च इन्द्रं च मित्रावरुणौ च अश्विनौ च । हवामह इति प्रत्येकमभिसंबध्यते । प्रातः भगं च पूषणं च ब्रह्मणस्पतिं च । प्रातः सोमम् उत अपिच रुद्रम् हुवेम आह्वयामः ॥ ३४ ॥

म० जगती बहुदेवत्या । प्रातःशब्दो वीप्सावचनः । वयं प्रातःप्रातः पुनःपुनः एतान्देवान् हवामहे आह्वयाम इति प्रत्येकं संबध्यते । कान् । अग्निम् इन्द्रं मित्रावरुणौ अश्विनौ भगम् पूषणम् ब्रह्मणस्पतिम् । सोमम् उत अपिच रुद्रं हुवेम आह्वयाम । हवामहे हुवेम । ह्वयतेः संप्रसारणे रूपद्वयम् ॥ ३४ ॥

## पञ्चत्रिंशी ।

प्रातर्जितं भगमुग्रꣳहुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ ३५ ॥

उ० प्रातर्जितम् । पञ्च भगदेवत्यास्त्रिष्टुभः । यो विधर्तेत्यादिमन्त्रो व्याख्यायते उद्दिश्यमानत्वात् । यः भगः विधर्ता विधारयिता सर्वस्य जगतः । आध्रश्चिद्यम् । प्रतिषेधस्य दीर्घत्वं छान्दसम् । आध्रः 'ध्रै तृप्तौ' अतृप्तः बुभुक्षितः । अथवा ध्रियतेः आध्रः दरिद्रः । चिच्छब्दोऽप्यर्थे । दरिद्रोऽपि यं भगं मन्यमानः । मन्यतिरर्चतिकर्मा । पूजयन्स्वार्थसिद्धये भगं भक्षि इत्याह । उदयं भक्षयस्व भजस्व इत्याह । तुरश्चित् आङोऽध्याहारः । आतुरोऽपि यं भगं मन्यमानः भक्षीत्याह उदयं भक्षयस्व इत्याह । यद्वा तुरशब्देन यमोऽभिधीयते । स हि तूर्णं प्राणिनो हन्ति । यमोऽपि यं भगं मन्यमानः भक्षीत्याह उदयं भक्षयस्वेत्याह । स हि दिवसान् प्राणिनो गणयति । राजा चित् राजापि यं भगं मन्यमानः भक्षीत्याह उदयं भक्षयस्व भजस्वेत्याह । तदुदये हि राज्ञां वार्तासिद्धिः तं प्रातर्जितं प्रातर्जयिनं भगम् उग्रमुद्गूर्णदानम् हुवेम आह्वयामः । वयम् ऋषिरात्मानमाह । पुत्रम् अदितेः ॥ ३५ ॥

म० पञ्च भगदेवत्यास्त्रिष्टुभः । वयं तं भगमादित्यं हुवेम आह्वयाम । किंभूतम् । प्रातर्जितं प्रातर्जयतीति प्रातर्जित् तम् प्रातर्जयनशीलम् । उग्रमुत्कृष्टमुद्गूर्णदानं वा । अदितेः पुत्रं तनयम् । तं कम् । यो विधर्ता जगतो धारयिता । यश्च आध्रश्चित् चिच्छब्दोऽप्यर्थे । न ध्रायति 'ध्रै तृप्तौ' न तृप्यति स अध्रः नञो दीर्घश्छान्दसः । यद्वा आ समन्तात् ध्रः आध्रः । यद्वा अध्र एवाध्रः स्वार्थे तद्धितः । आध्रः अतृप्तः बुभुक्षितो दरिद्रो वापि यं भगं भक्षि भजस्व अर्थादुदयम् इत्याह । किं कुर्वन् । मन्यमानः पूजयन् स्वार्थसिद्धये । मन्यतिरर्चतिकर्मा । स हि सूर्योदये भिक्षादिना किंचिल्लभते तत उदयं वाञ्छति तुरश्चित् आतुरोऽपि यं भगं मन्यमानो भक्षि उदयं भजस्वेत्याह । दिवसे तस्य सुखोदयात् रोगिणो रात्रिः कष्टेन याति । यद्वा तुरो यमः स हि मारणाय दिनानि गणयति । राजा चित् राजापि यं भगं भक्षि इत्याह । तदुदये हि राज्ञां व्यवहारदर्शनादिना सर्वेष्टसिद्धिः । भक्षि भजतेः शपि लुप्ते लटि मध्यमे रूपम् ॥ ३५ ॥

## षट्त्रिंशी ।

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः । भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ ३६ ॥

उ० भग प्रणेतः । हे भग, हे प्रणेतः प्रकर्षेण नयस्य कर्तः । हे भग, हे सत्यराधः, सत्यमविनाशि राधो धनं यस्य स तथोक्तः । हे भग, इमां धियं प्रज्ञाम् उत् अव उद्गमय । यथा सूक्ष्मानर्थान् पश्यामः तथा

कुर्वित्यभिप्रायः । ददत् नः देहि अस्मभ्यं धनम् । भग प्र नो जनय गोभिरश्वैः । हे भग, प्रजनय नः अस्मान् गोभिः अश्वैश्च । हे भग, नृभिः मनुष्यैः नृवन्तः स्याम भवेम ॥३६॥

**म०** हे भग, हे प्रणेतः प्रकर्षेण नयति प्रापयति धनमिति प्रणेता तस्य संबोधने हे प्रणेतः, आदरार्थं पुनः संबोधनम् । हे भग, हे सत्यराधः, सत्यमनश्वरं राधो धनं यस्य स सत्यराधाः तत्संबुद्धौ हे सत्यराधः हे भग, त्वं ददत् धनं प्रयच्छन्सन् नोऽस्माकमिमां धियं प्रज्ञां कर्म वा उदव उद्गमय । यथा सूक्ष्मार्थान्पश्यामस्तथा कुर्विति भावः । किंच हे भग, नोऽस्मान् गोभिः अश्वैः प्रजनय प्रवर्धय । गा अश्वांश्च बहून् देहीत्यर्थः । हे भग, वयं नृभिः पुत्रादिभिः नृवन्तः मनुष्यवन्तः प्रकर्षेण स्याम भवेम ॥ ३६ ॥

## सप्तत्रिंशी ।

उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन्सूर्यस्य वयं देवानाꣳ सुमतौ स्याम ॥ ३७ ॥

**उ०** उतेदानीम् । उत अपिच इदानीं भगवन्तः स्याम आदित्यप्रसादात् । उत अपिच प्रपित्वे प्राप्ते अस्तमनकाले भगवन्तः स्याम । उत अपिच मध्ये मध्यंदिने अह्नां भगवन्तः स्याम । उतोदिता उत अपिच उदिता उदयकाले हे मघवन् धनवन्, सूर्यस्य भगवतः प्रसादादेव वयम् देवानां सुमतौ कल्याण्यां मतौ स्याम भवेम ॥ ३७ ॥

**म०** हे मघवन् धनवन् रवे, उत अपिच वयमिदानीं भगवन्तो ज्ञानवन्तो वा स्याम भवेम । उतापिच सूर्यस्य प्रपित्वे प्रपतने अस्तमये भगवन्तः स्याम । उत अह्नां मध्ये मध्यंदिने भगवन्तः स्याम । उत सूर्यस्य उदिता उदितौ उदयसमये भगवन्तः स्याम । किं बहुना सर्वदास्माकं धनवत्तास्त्वित्यर्थः । किंच देवानां सुमतौ कल्याण्यां बुद्धौ वयं स्याम । देवा अस्मासु शोभनामनुग्रहविषयां बुद्धिं दधत्वित्यर्थः ॥३७॥

## अष्टत्रिंशी ।

भग एव भगवाँ२॥ अस्तु देवास्तेन वयं भगवन्तः स्याम । तं त्वा भग सर्व इज्जोहवीति स नो भग पुरएता भवेह ॥ ३८ ॥

**उ०** भग एव । हे देवाः, भगएव भगवान् धनवान् अस्तु किमन्यैर्दैवताविशेषैर्धनयुक्तैरदातृभिरित्यभिप्रायः । तेन भगप्रदत्तेन धनेन वयं भगवन्तः धनवन्तः स्याम भवेम । एकं वाक्यम् । द्वितीयेनार्धर्चेन द्वितीयम् । एकवाक्यताया असंभवात् । तं त्वा । उपरि तदः श्रवणात् यदोऽत्र वृत्तिः । तं त्वाम् । हे भग, सर्वइत् सर्वएव जोहवीति आह्वयति कामसिद्धये । स नः अस्माकम् हे भग, पुरएता अग्रयायी सर्वकार्येषु भव इह ॥ ३८ ॥

**म०** हे देवाः, भग एव भगवान् । धनवानस्तु किमन्यैरदातृभिर्धनिभिर्देवैरिति भावः । तेन भगदत्तेन धनेन वयं भगवन्तः स्याम । एवं देवानुक्त्वाथ भगमाह । हे भग, सर्वइत् सर्व एव जनः तं प्रसिद्धं त्वा जोहवीति अत्यन्तमाह्वयति इष्टसिद्धये । हे भग, स त्वमिह नोऽस्माकं कर्मणि पुरएता पुरोऽग्रे एतीति पुरएता अग्रयायी भव । अग्रेसरो भूत्वा सर्वकार्याणि साधयेत्यर्थः ॥ ३८ ॥

## एकोनचत्वारिंशी ।

समध्वरायोषसोऽनमन्त दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आवहन्तु ॥ ३९ ॥

**उ०** समध्वराय । समनमन्त प्रह्वीभवन्ति या उषसः । अध्वराय यज्ञाय अग्निहोत्रादिकर्मणे । कथमिव । दधिक्रावेव । यथा दधिक्रावा अश्वः शुचये पदाय । शुचिपदं अग्न्याधानार्थं कर्तव्यमिति संनमते । एवं ता उषसः । अर्वाचीनं अनन्यगतमनस्कम् । वसुविदं च वसु धनं विन्दतीति वसुवित् तं वसुविदम् । भगम् आदित्यम् । नः अस्मान् प्रति । रथमिव अश्वाः वाजिनः वेजनवन्तः अन्नवन्तो वा । आवहन्तु आगमयन्तु ॥ ३९ ॥

**म०** उषसः प्रातःकालाधिष्ठातारो देवाः अध्वराय संनमन्त संनमन्ते प्रह्वीभवन्ति । कथमिव । दधिक्रावा अश्वः इव । तथा अश्वः शुचये पदाय । अग्न्याधानार्थं शुचि पदम् । ता उषसः भगमादित्यं नोऽस्माकमर्वाचीनमभिमुखमावहन्तु आगमयन्तु । किंभूतं भगम् । वसुविदम् वसु धनं विन्दतीति वसुविदः 'इगुपध' (पा० ३।१।१३५) इति कः । यथा वाजिनोऽन्नवन्तो वेगवन्तो वा अश्वा रथमावहन्ति तद्वत् ॥ ३९ ॥

## चत्वारिंशी ।

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ४० ॥

**उ०** अश्वावतीः । उषोदेवत्या त्रिष्टुप् । अश्ववत्यः गोमत्यः नः अस्माकम् । उषासः वीरवत्यः सदं सदाकालम् उच्छन्तु । 'उच्छी विवासे' । विवासयन्तु तमः । भद्राः भन्दनीयाः । घृतमवश्यायजलं दुहानाः । विश्वतः प्रपीताः । प्यायः पीआदेशः । सर्वतः आप्यायिताः धर्मार्थकामैः । इदानीमृत्विग्विषयः प्रश्नः । यूयं पात पालयत स्वस्तिभिरविनाशैः सदा नः अस्मान् ॥ ४० ॥

**म०** उषोदेवत्या त्रिष्टुप् । उषसः सदं सदाकालं नोऽस्मानुच्छन्तु विवासयन्तु अज्ञानलक्षणं पाशं मोचयन्तु । 'उच्छी विवासे' । किंभूता उषसः । अश्वावतीः अश्ववत्यः गोमतीः गोमत्यः वीरवतीः वीरवत्यः भद्राः भन्दनीयाः कल्याणरूपाः घृतमव-

ह्यायजलं दुहानाः क्षरन्त्यः विश्वतः सर्वतः प्रपीताः धर्मार्थकामैराप्यायिताः । प्यायः पी आदेशः । एवं परोक्षं प्रार्थ्य प्रत्यक्षमाह । हे उषसः, यूयं स्वस्तिभिः अविनाशैः सदा नोऽस्मान् पात पालयत ॥ ४० ॥

## एकचत्वारिंशी ।

पूषन् तव व्रते वयं न रिष्येम कदाचन । स्तोतारस्त इह स्मसि ॥ ४१ ॥

उ० पूषन् तव । द्वे पौष्ण्यौ गायत्रीत्रिष्टुभौ । हे पूषन्, तव व्रते कर्मणि वर्तमाना वयम् न रिष्येम न विनश्येम कदाचन कदाचिदपि । अन्यच्च स्तोतारोऽपि । ते तव इहस्मसि स्म । 'इदन्तो मसि' इतीकार उपजनः ॥ ४१ ॥

म० द्वे पौष्ण्यौ गायत्रीत्रिष्टुभौ । हे पूषन्, तव व्रते कर्मणि वर्तमाना वयं कदाचन कदापि न रिष्येम न विनश्येम । किंच इह कर्मणि ते तव स्तोतारः स्तुतिकर्तारः स्मसि भवामः । इदन्तो मसि ॥ ४१ ॥

## द्विचत्वारिंशी ।

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कम् । स नो रासच्छुरुधश्चन्द्राग्रा धियंधियꣳ सीषधाति प्र पूषा ॥ ४२ ॥

उ० पथस्पथः । यः पथस्पथः मार्गस्य परिपतिम् अधिपतिमित्युपसर्गव्यत्ययः । वचस्या वचनेन वेदोक्तेन अभिमुखीकृतः । कामेन इच्छया च अभिमुखीकृतः । अभ्यानट् । आनशिर्व्याप्तिकर्मा । अभिव्याप्नोति । अर्कम् । सः नः अस्मभ्यम् रासत् ददातु । शुरुधः । पूर्वपदान्तलोपः । शुचं संतापं साधनाभावकृतं यानि रुधन्ति साधनानि भवन्ति तानि तथोक्तानि विव्यच्य व्यत्ययेन । चन्द्राग्राः । तान्येव विशिष्यन्ते । चायनीयाग्राणि । धियं धियं प्रसीषधाति । साधतिः कर्मवचनः प्रसाधयतु । पूषा ॥ ४२ ॥

म० यः पूषा अर्कं देवमभ्यानट् अभिव्याप्नोति । किंभूतः कामेन काम्यत इति कामं तेन वाञ्छितेन वचस्या वचसा वेदोक्तेन कृतः अभिमुखीकृतः । किंभूतमर्कम् । पथस्पथः मार्गस्य मार्गस्य सर्वेषां मार्गाणां परिपतिमधिपतिं स्वामिनम् । सः पूषा नोऽस्मभ्यं शुरुधः शुचं रुन्धन्ति वर्णनाशात् पृषोदरादित्वात् शोकनाशकराणि साधनानि रासत् ददातु । लिङ्गव्यत्ययः । किंभूताः शुरुधः । चन्द्राग्राः चन्द्रमाह्लादकमग्रं यासां ताः । साधने कृते आह्लादो भवति । पुनः पूषा धियं धियं कर्माणि सर्वाणि प्रसीषधाति प्रकर्षेण साधयतु । पथस्पथः धियं धियमिति 'नित्यवीप्सयोः' (पा० ८।१।४) इति द्वित्वम् । वचस्या विभक्तेर्यादेशः । आनट् व्याप्तिकर्मसु दशस्वयं पठितः । सीषधाति 'साध संसिद्धौ शपः श्लुश्छान्दसः द्वित्वम् । 'लेटोऽडाटौ' 'तुजादीनां दीर्घोऽभ्यासस्य' उपधाह्रस्वश्छान्दसः ॥ ४२ ॥

## त्रिचत्वारिंशी ।

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ ४३ ॥

उ० त्रीणि पदा । वैष्णव्यौ गायत्र्यौ । द्वाभ्यामेकवाक्यम् । यः विष्णुः यज्ञः त्रीणि पदानि । विचक्रमे क्रान्तवान् अग्निवाय्वादित्याख्यानि । गोपाः गोपायिता समस्तस्य जगतः । अदाभ्यः अनुपहिंस्यः । अतः अस्मादेव पदत्रयात् धर्माणि । धर्मशब्द उभयलिङ्गः अर्धर्चादौ गणे पठितः । धर्मान् धारयन् । कर्मपर्यायो वा । अतः एभ्यः पदेभ्यः कर्माणि धारयन् ॥ ४३ ॥

म० वैष्णव्यौ गायत्र्यौ द्वयोर्ऋचोरेकवाक्यम् । यो विष्णुः यज्ञः त्रीणि पदा पदानि विचक्रमे विक्रान्तवान् अग्निवाय्वादित्याख्यानि पदानि व्याप्तवान् । किंभूतो विष्णुः । गोपाः जगतो रक्षकः । अदाभ्यः अहिंस्यः । किं कुर्वन् । अतः अस्मादेव पदत्रायत् धर्माणि पुण्यानि कर्माणि धारयन् । धर्मसमस्त्रियाम् ॥ ४३ ॥

## चतुश्चत्वारिंशी ।

तद्विप्रासो विपन्यवो जागृवाꣳसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ४४ ॥

उ० तद्विप्रासः तस्य विष्णोर्यज्ञस्य यत् परमं पदं ब्रह्मलक्षणम् । तत् । विप्रासः ब्राह्मणाः विपन्यवः मेधाविनः । जागृवांसः असुप्ताः अप्रमत्ताः । ज्ञानकर्मसमुच्चयकारिणः । समिन्धते संदीपयन्ति उपासनैर्निर्मलीकुर्वन्ति ॥ ४४ ॥

म० तस्य विष्णोः यज्ञस्य यत्परमं पदं ब्रह्मलक्षणम् तद्विप्रासः विप्राः ब्राह्मणाः समिन्धते । णिचो लोपः । समिन्धयन्ति दीपयन्ति । उपासते इत्यर्थः । किंभूताः विप्राः । विपन्यवः विगतः पन्युः संसारव्यवहारो येभ्यः निष्कामाः । जागृवांसः जागरणशीलाः अप्रमत्ताः । ज्ञानकर्मसु समुच्चयकारिण इत्यर्थः ॥ ४४ ॥

## पञ्चचत्वारिंशी ।

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ४५ ॥

उ० घृतवती । द्यावापृथिवीया जगती । ये द्यावापृथिव्यौ घृतवत्यौ उदकवत्यौ । भुवनानामभिश्रिया भूतजातानामभ्याश्रयणीये । ऊर्वी विस्तीर्णे । पृथ्वी पृथुले । मधुदुघे मधु उदकं तस्य दोग्ध्र्यौ । सुपेशसा सुरूपे । ते वरुणस्यादित्यस्य धर्मणा धारणेन । विष्कम्भिते । स्कभ्नोतिर्दृढीकरणार्थः । दृढीकृते अजरे जरारहिते । भूरिरेतसा बहुरेतस्के । सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते ॥ ४५ ॥

**म०** जगती द्यावापृथिवीदेवत्या । द्यावापृथिवी द्यावापृथिव्यौ वरुणस्यादित्यस्य धर्मणा धारणेन धारणशक्त्या विष्कभिते स्तम्भिते । स्कभ्नोतिर्दृढीकरणार्थः । वरुणेन स्वशक्त्या दृढीकृते इत्यर्थः । किंभूते ते । घृतवती उदकवत्यौ । घृतमित्युदकनाम । भुवनानां भूतजातानामभिश्रिया अभिश्रियौ आश्रयणीये । कर्मणि क्विप् विभक्तेराकारः । उर्वी उर्व्यौ विस्तीर्णे । पृथ्वी पृथ्व्यौ पृथुले । आयामविस्ताराभ्यां महत्त्वं विशेषणद्वयेनोक्तम् । मधुदुघे मधु उदकं तस्य दोग्ध्र्यौ । सुपेशसा सुरूपे । अजरे जरारहिते । भूरिरेतसा भूरि रेतो ययोस्ते भूरिरेतसी बहुरेतस्के । सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते ॥ ४५ ॥

## षट्चत्वारिंशी ।

ये नः॑ स॒पत्ना॒ अप॒ ते भ॑वन्त्विन्द्रा॒ग्निभ्या॒मव॑ बाधामहे॒ तान् । वस॑वो रु॒द्रा आ॑दि॒त्या उ॑परि॒स्पृशं॑ मो॒ग्रं चेत्ता॑रमधिरा॒जम॑क्रन् ॥ ४६ ॥

**उ०** ये नः । जगती लिङ्गोक्तदेवता । ये नः अस्माकम् । सपत्नाः शत्रवः । अप ते भवन्तु अपगतवीर्या निरुद्यमास्ते भवन्तु । ततः इन्द्राग्निभ्याम् अवबाधामहे अवनाशयामः तान्शत्रून् । किंच वसवः रुद्राः आदित्याश्च । उपरिस्पृशम् उपरिस्थितः स्पृशतीति उपरिस्पृक् आधिपत्येऽवस्थितः पादेन स्पृशतीति उपरिस्पृक् तं उपरिस्पृशम् मां उग्रं च । चेत्तारं ज्ञातारं च ज्ञेयस्य । अधिराजं अधिपतिमीश्वरं च । अक्रन् कृतवन्तः कुर्वन्तु वा ॥ ४६ ॥

**म०** जगती लिङ्गोक्तदेवता । ये नोऽस्माकं सपत्नाः शत्रवः ते अपभवन्तु अपगतवीर्या निरुद्यमा भवन्तु । पराभवं यान्त्वित्यर्थः । यतो वयं तान् सपत्नान् इन्द्राग्निभ्यां कृत्वा अवबाधामहे इन्द्राग्निबलेन नाशयामः । किंच वसवोऽष्टौ रुद्रा एकादश आदित्या द्वादश एते मा मामेतादृशमक्रन् कुर्वन्तु । कीदृशम् । उपरिस्पृशम् उपरि स्पृशतीति उपरिस्पृक् तमुच्चस्थानस्थितम् । उग्रमुत्कृष्टम् । चेत्तारं ज्ञातारं ज्ञेयस्य । अधिराजम् अधिकश्चासौ राजा च अधिराजस्तम् अधिपतिमीश्वरं कुर्वन्त्वित्यर्थः ॥ ४६ ॥

## सप्तचत्वारिंशी ।

आ नास॑त्या त्रि॒भिरे॑काद॒शैरि॒ह दे॒वेभि॑र्यातं मधु॒पेय॑मश्विना । प्रायु॒स्तारि॑ष्टं॒ नी रपा॑ᳬसि मृक्षत॒ᳬ सेध॑तं॒ द्वेषो॒ भव॑तᳬ सचा॒भुवा॑ ॥ ४७ ॥

**उ०** आ नासत्या । आश्विनी जगती । आयातम् आगच्छतम् हे नासत्यावश्विनौ, त्रिभिरेकादशैः त्रयस्त्रिंशद्भिर्देवैः सहितौ भूत्वा । तदुक्तम् अष्टौ वसव इत्यादि । इह मधुपेयम् मधुः सोमः सोमपानं प्रति । एत्य च प्रायुस्तारिष्टं प्रतारिष्टं प्रवर्धयतम् आयुः । नी रपांसि मृक्षतम् । 'मृजूष् शुद्धौ' । रपः पापमुच्यते । निर्मृक्षतं निःशोधयतं नाशयतम् । रपांसि पापानि । सेधतं द्वेषः । 'षिधु गत्याम्' । गमयतं दौर्भाग्यम् । भवतं च सचाभुवा सहभुवौ सर्वकार्येषु संयुक्तौ ॥ ४७ ॥

**म०** जगती अश्विदेवत्या । हे नासत्या नासत्यौ, हे अश्विनौ त्रिभिः एकादशैः त्रिगुणैरेकादशभिः त्रयस्त्रिंशत्संख्याकैः देवेभिः देवैः इह स्थाने मधुपेयं सोमपानं प्रति आयातमागच्छतम् । मधुः सोमस्तस्य पेयं पानम् । किंच आयुः प्रतारिष्टम् । तरतिर्वृद्ध्यर्थः प्रवर्धयतम् । रपांसि पापानि निर्मृक्षतं निःशेषं शोधयतम् । नाशयतमित्यर्थः । द्वेषः दौर्भाग्यं सेधतं । 'षिधु गत्याम्' गमयतं नाशयतम् । सचाभुवा भवतम् । सचा इत्यव्ययं सहार्थे । सचा सह भवतस्तौ सचाभुवौ क्विप् । कार्येषु संयुक्तौ भवतम् । अष्टौ वसव इत्यादिना त्रयस्त्रिंशद्देवा गणिताः । तारिष्टम् तरतेर्लुङि मध्यमद्विवचनम् 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६ । ४ । ७५ ) इत्यडभावः । मृक्षतम् 'मृजूष् शुद्धौ' 'लेटोऽडाटौ' 'सिब्बहुलं लेटि' ( पा० ३ । १ । ३४ ) इति सिप् 'तस्थस्थमिपाम्' ( पा० ३ । ४ । १०१ ) इति व्यत्ययेन थसः तमादेशः ॥ ४७ ॥

## अष्टचत्वारिंशी ।

ए॒ष वः॒ स्तोमो॑ मरुत इ॒यं गीर्मा॑न्दा॒र्यस्य॑ मा॒न्यस्य॑ का॒रोः । एषा या॑सीष्ट त॒न्वे॒ व॒यां वि॒द्या॒मे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥ ४८ ॥

**उ०** एष वः मारुती त्रिष्टुप् । हे मरुतः, एष स्तोमः वः युष्माकम् इयं च गौः सत्या च । मम मान्दार्यस्य ऋषेः समेति स्वस्वामिसंबन्धं दृणातीति मान्दार्यः । यद्वा मां दारयति मां द्यतीत्येवं यः सपत्नानां प्रत्ययमादधाति स मान्दार्यः तस्य मम च मान्यस्य मानार्हस्य । कारोः कर्तुः तं स्तोमं तां च गिरम् उपश्रुत्य । एषायासीष्ट आ इषा यासीष्ट अयासीष्ट अयासीरन् इति वचनव्यत्ययः । आगच्छत । इषा अन्नेन निमित्तभूतेनाहूयमानाः । तन्वे वयां सशरीरस्थित्यर्थं वयोदृढंकर्तुम् आयासीष्ट । किंच विद्यां लभेमहि । इषमन्नम् वृजनं बलं च जीरदानुं जीवितदातृकर्म च ॥ ४८ ॥

**म०** मारुती त्रिष्टुप् । हे मरुतः, कारोः कर्तुर्यजमानस्य एषः स्तोमः इयंच गीः सत्या च प्रिया च वो युष्मभ्यं । युष्मदर्थं वर्तत इति शेषः । किंभूतस्य कारोः । मान्दार्यस्य मां ममेति स्वस्वामिसंबन्धं दारयतीति मान्दार्यः तस्य । वीतरागस्येत्यर्थः । यद्वा मां दारयतीत्येवं यः शत्रूणां प्रत्ययमादधाति स मान्दार्यः । यद्वा मन्दारः कल्पवृक्षः तत्तुल्यो मान्दार्यः तस्य अथ कामपूरस्येत्यर्थः । मान्यस्य मानार्हस्य । किंच हे मरुतः, यूयमिषा अन्नेन निमित्तेन अयासीष्ट आगच्छत । किमर्थम् । वयां वयसाम् । आमि टिलोप आर्षः । बाल्ययौवनस्थाविराणां वयसां संबन्धिन्यै तन्वे शरीराय । सर्वदा शरीरस्थित्यर्थमित्यर्थः । अस्मच्छरीरं दृढीकर्तुमिति भावः । किंच इषमन्नं

वृजनं बलं च वयं विद्याम लभेमहि । किंभूतमिषं वृजनं च । जीरदानुं जीवयतीति जीरदानुस्तम् । जीवेरौणादिको रदानुप्रत्ययः 'लोपो व्योर्वलि' ( पा० ६ । १ । ६६ ) इति वलोपः । जीवितदातृ बलमन्नं च वयं प्राप्नुयामेति प्रार्थना ॥ ४८ ॥

## एकोनपञ्चाशी ।

स॒हस्तो॑माः स॒हच्छ॑न्दस आ॒वृतः॑ स॒हप्र॑मा ऋष॑यः स॒प्त दैव्याः॑ । पूर्वे॑षां॒ पन्था॑मनु॒दृश्य॒ धीरा॑ अ॒न्वाले॑भिरे र॒थ्यो॒ न र॒श्मीन् ॥ ४९ ॥

उ० सहस्तोमाः । ऋषिसृष्टिप्रतिपादिका त्रिष्टुप् । सहस्तोमाः स्तोमसहिताः । सहछन्दसः छन्दःसहिताः आवृतः । आवृच्छब्देन कर्माभिधीयते । श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः । सहप्रमाः प्रमाणं प्रमा । शब्दप्रमाणपरीक्षणतत्पराः ऋषयः सप्त । सप्तऋषय इति प्राप्ते व्यत्ययः । भरद्वाजकश्यपगौतमात्रिविश्वामित्रजमदग्निवसिष्ठाः । दैव्याः प्रजापतेः प्राणाभिमानिनः एते अभिव्यज्यमानाः । पूर्वेषां अधस्तनकल्पोत्पन्नानां अवसिताधिकाराणाम् । पन्थां पन्थानम् । अनुदृश्य अवलोक्य । धीराः अन्वालेभिरे अन्वालभन्तः सृष्टवन्तः सृष्टियज्ञम् । कथमिव । रथ्यो न रश्मीन् रथे साधुः रथ्यः सारथिः । नकार उपमार्थीयः । यथा सारथिरिष्टदेशप्राप्त्यर्थं प्रथममश्वरश्मीनालभते स्पृशति एवं तेऽपि सृष्टियज्ञं सृष्टवन्तः ॥ ४९ ॥

म० ऋषिसृष्टिप्रतिपादिका त्रिष्टुप् । दैव्याः सप्त ऋषयः देवस्य प्रजापतेः इमे दैव्याः प्रजापतिप्राणाभिमानिनः सप्त ऋषयः भरद्वाजकश्यपगोतमात्रिवसिष्ठविश्वामित्रजमदग्निसंज्ञाः । अन्वालेभिरे सृष्टवन्तः । सृष्टियज्ञमिति शेषः । किं कृत्वा । पूर्वेषां पन्थां पन्थानमनुदृश्य अधस्तनकल्पोत्पन्नानामवसिताधिकाराणां मार्गं विलोक्य पूर्वकल्पोत्पन्नैर्ऋषिभिर्यथा सृष्टं तथा सृष्टवन्त इत्यर्थः । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इत्युक्तेः । कथमिव । रथ्यो न रश्मीन् । नकार उपमार्थः । रथे साधुः रथ्यः रथी यथा इष्टदेशप्राप्त्यर्थं प्रथमं रश्मीन् प्रग्रहानालभते स्पृशति सृजति वा तथा तेऽपि सृष्टियज्ञं सृष्टवन्तः । किंभूता ऋषयः । सहस्तोमाः स्तोमसहिताः । सहच्छन्दसः छन्दोभिर्गायत्र्यादिभिः सहिताः । आवृतः अत्रापि सहशब्दाध्याहारः । आवृच्छब्देन कर्मोच्यते । सहावृतः कर्मसहिताः श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः । सहप्रमाः प्रमाणं प्रमा तत्सहिताः शब्दप्रमाणपरीक्षणतत्पराः । धीराः धीमन्तः ॥ ४९ ॥

## पञ्चाशी ।

आ॒यु॒ष्यं॑ व॒र्च॒स्य॑ᳪ रा॒यस्पोष॒मौद्भि॑दम् । इ॒दᳪ हिर॑ण्यं॒ वर्च॑स्व॒ जैत्रा॒याविश॑तादु॒ माम् ॥ ५० ॥

उ० आयुष्यम् । तिस्रः हिरण्यस्तुतिः उष्णिक्शक्करीत्रिष्टुभः । यदिदं हिरण्यम् । आयुष्यं आयुषे हितम् । वर्चस्यं वर्चसे हितम् । रायस्पोषं धनस्य वर्धयितृ । औद्भिदं उद्भेत्तृ धनस्य स्वर्गस्य वा । वर्चस्वत् अन्नसंयुक्तम् । तत् जैत्राय विजयाय । आविशतात् आविशतु । उः पादपूरणार्थः । मामप्यवस्थानं करोतु ॥ ५० ॥

म० तिस्रः उष्णिक्शक्करीत्रिष्टुभः दक्षदृष्टाः । हिरण्यस्तुतिः । इदं हिरण्यं कनकं जैत्राय जयाय माम् मामेवाविशतात् आविशतु मयि तिष्ठतु । कीदृशम् । आयुष्यमायुषे हितम् । वर्चस्यं वर्चसे तेजसे हितम् । रायो धनस्य पोषं पोषयितृ वर्धकम् । औद्भिदम् उद्भिनत्तीति उद्भिद् उद्भिदेवौद्भिदमुद्भेत्तृ धनस्य स्वर्गस्य वा प्रकाशकम् । वर्चस्वत् अन्नसंयुक्तम् ॥ ५० ॥

## एकपञ्चाशी ।

न तद्रक्षा॑ᳪसि॒ न पि॑शा॒चास्त॑रन्ति दे॒वाना॒मोजः॑ प्रथम॒जᳪ ह्ये॒तत् । यो बि॒भर्ति॑ दाक्षाय॒णᳪ हिर॑ण्य॒ᳪ स दे॒वेषु॑ कृणुते दी॒र्घमायुः॒ स म॑नु॒ष्येषु कृणुते दी॒र्घमायुः॑ ॥ ५१ ॥

उ० न तत् हिरण्यं रक्षांसि न च पिशाचाः तरन्ति हिंसन्ति । देवानां प्रथमजं ओजः हि एतत् । यतश्च देवानामोजः प्रथमजम् अतः यो बिभर्ति दाक्षायणं हिरण्यम् । दाक्षायणमित्यलंकारविशेषः । स देवेषु देवलोकेषु कुरुते दीर्घमायुः । चिरं देवलोके वसतीत्यर्थः । स मनुष्येषु कुरुते दीर्घमायुः । स च मानुष्यमायुरतिक्रम्य जीवतीत्यर्थः ॥५१॥

म० रक्षांसि पिशाचाश्च तत् हिरण्यं न तरन्ति न हिंसन्ति । हि यस्मात् एतत् हिरण्यं देवानां प्रथमजमोजः । प्रथमोत्पन्नं देवानां तेज एवेदम् । अतएव यो हिरण्यं दाक्षायणं बिभर्ति अलंकारत्वेन धारयति । दाक्षायणशब्दोऽलंकारार्थः । स वेदेषु देवलोकेषु दीर्घमायुः कृणुते कुरुते । देवलोके चिरं वसतीत्यर्थः । स च मनुष्येषु मनुष्यलोकेषु स्वमायुर्दीर्घं कृणुते मनुष्यायुरतिक्रम्य जीवति ॥ ५१ ॥

## द्विपञ्चाशी ।

यदाब॑ध्नन्दाक्षाय॒णा हिर॑ण्य॒ᳪ श॒तानी॑काय सु॒मन॒स्यमा॑नाः । तन्म॒ आ ब॑ध्नामि श॒तशा॑रदा॒यायु॑ष्मा॒ञ्जर॑दष्टि॒र्यथास॑म् ॥ ५२ ॥

उ० यदाबध्नन् । यत् हिरण्यम् आबध्नन् आबद्धवन्तः । दाक्षायणाः दक्षस्यापत्यानि बहूनि । नडादिपाठात्फक् । शतानीकाय राज्ञे शतं बहूनि अनीकानि सेना यस्य स तथोक्तस्तस्मै शतानीकाय । सुमनस्यमानाः शोभनेन मनसा ध्यायन्तः । तत् हिरण्यम् । मे मयि आत्मनीति सम्युक्तिः । अहं आबध्नामि । शतशारदाय शतं शरदां जीवनाय । आयुष्मान् च जरदष्टिः जरामश्नुते व्याप्नोतीति जर-

दृष्टिः । यथा येन प्रकारेण आसं भूयासम् तथा बध्नामीति शेषः ॥ ५२ ॥

म० दाक्षायणाः दक्षस्यापत्यानि । नडादित्वात् फक् । दक्षवंशोत्पन्ना ब्राह्मणा यत् हिरण्यं शतानीकाय राज्ञे अबध्नन् बबन्धुः । शतं बहूनि अनीकानि सैन्यानि यस्य सः शतानीकस्तस्मै । किंभूताः दाक्षायणाः । सुमनस्यमानाः मनसि शोभनं ध्यायन्तः शोभनं मनः कुर्वते सुमनस्यन्ते सुमनस्यन्ते सुमनस्यमानाः । तत् हिरण्यं मे मयि आबध्नामि । किमर्थं शतशारदाय शतं शरदो जीवनाय । यथा येन प्रकारेण हिरण्यबन्धनाख्येन अहमायुष्मान् दीर्घजीवी जरदष्टिश्च आसं भूयासम् तथा आबध्नामि । जरदष्टिः जरामश्नुते व्याप्नोति जरदष्टिः । यद्वा जरन्ती जरां प्राप्ता अष्टिः शरीरं यस्य स जरदष्टिः ॥ ५२ ॥

### त्रिपञ्चाशी ।

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वेदेवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥ ५३ ॥

उ० उत नः । बहुदेवत्या त्रिष्टुप् । उत अपिच नः अस्माकम् । वचांसि अहिर्बुध्न्यः शृणोतु । अजएकपात् रुद्रः प्राणो वा शृणोतु । पृथिवी च समुद्रश्च शृणोतु । श्रुत्वा च अवन्तु । विश्वे च देवाः ऋतावृधः सत्यवृधः यज्ञवृधो वा । हुवाना आहूयमानाः स्तुताश्च मन्त्राः । मन्त्रैरिति विभक्तिव्यत्ययः । कविशस्ता मेधाविशस्ताः । अवन्तु पालयन्तु ॥५३॥

म० बहुदेवत्या त्रिष्टुप् । उत अपिच अहिर्बुध्न्यः रुद्रविशेषः शृणोतु । नः अस्माकं वचांसीति शेषः । अजएकपात् रुद्रः प्राणो वा शृणोतु पृथिवी च शृणोतु समुद्रश्च शृणोतु विश्वे देवाश्च शृण्वन्तु । श्रुत्वा च ते अहिर्बुध्न्यादयः अवन्तु पालयन्तु अस्मान् । किंभूतास्ते । ऋतावृधः सत्यवृधो वा । हुवाना आहूयमानाः । मन्त्राः मन्त्रैरिति विभक्तिव्यत्ययः । स्तुताः कविशस्ताः मेधाविभिः पूजिताः ॥ ५३ ॥

### चतुःपञ्चाशी ।

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ ५४ ॥

उ० इमा गिरः । आदित्यदेवत्या त्रिष्टुप् । या इमा गिरः वाचः आदित्येभ्यः घृतस्नूः घृतप्रस्राविणीः घृतप्रसारिणीर्वा घृतहोमसहचरिताः । सनात् चिरम् चिरकालम् राजभ्यः चिरराजभ्यो वा । जुह्वा स्रुचा जुहोमि । ताश्च शृणोतु मित्रः अर्यमा च भगश्च न अस्माकम् । तुविजातश्च धाता च । स हि बहुशः प्रजायते । वरुणश्च दक्षश्च अंशश्च एते सूर्यविशेषाः ॥ ५४ ॥

म० आदित्यदेवत्या त्रिष्टुप् । इमा गिरो वाचः जुह्वा स्रुचा कृत्वा आदित्येभ्यो जुहोमि । स्तुतिलक्षणा वाणीर्बुद्धिरूपया स्रुचादित्येभ्यः समर्पयामीत्यर्थः । किंभूता गिरः । घृतस्नूः घृतं स्नुवन्ति स्रवन्ति ताः घृतस्नवः ता घृतस्नूः । लुगभाव आर्षः । घृतप्रसारिणीर्घृतहोमसहचरिता वा । किंभूतेभ्य आदित्येभ्यः । सनात् चिरकालं राजभ्यः दीप्यमानेभ्यः । ताः स्रुचा हूयमाना नोऽस्माकं गिरः शृणोतु । कः । मित्रः अर्यमा भगश्च । तुविजातो बहुजातः त्वष्टा वातो वा । स हि बहुशः प्रजायते । वरुणः दक्षः अंशश्च । एते सूर्यविशेषाः ॥ ५४ ॥

### पञ्चपञ्चाशी ।

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥ ५५ ॥

उ० सप्त ऋषयः । अध्यात्मवादिनी जगती । सप्त प्राणाः षडिन्द्रियाणि मनःसप्तमानि । प्रतिहिताः प्रतिनिहिताः शरीरे व्यवस्थिताः ये त एव । सप्त रक्षन्ति सदं सदाकालं शरीरम् । अप्रमादं प्रमादमकुर्वाणाः । ते एव सप्त आपः आपना व्यापनाः । स्वपतः पुरुषस्य लोकं ईयुः । लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठित उच्यते । तत्र च संवित्स्थाने । तस्यामेवावस्थायां जागृतः जागरणं कुर्वाते । अस्वप्नजौ । ययोर्न जायते स्वप्नः तौ तथोक्तौ । सत्रसदौ सत्रे सतां त्राणे कृतावस्थानौ । देवौ जीवितदातारौ प्राणापानौ ॥ ५५ ॥

म० अध्यात्मवादिनी जगती । सप्त ऋषयः प्राणाः त्वक्चक्षुःश्रवणरसनाघ्राणमनोबुद्धिलक्षणाः शरीरे प्रतिहिताः व्यवस्थिताः ते एव सप्त सदं सदाकालमप्रमादं सावधानं यथा तथा शरीरं रक्षन्ति । ते सप्त स्वपतो नरस्य लोकमात्मानमीयुः प्राप्नुवन्ति । लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते । किंभूताः सप्त । आपः आप्नुवन्ति व्याप्नुवन्ति देहमित्यापः व्यापनाः । तत्र तस्यामृषीणां लोकगमनावस्थायां देवौ दीप्यमानौ प्राणापानौ जागृतः जागरणं कुर्वाते । कीदृशौ । अस्वप्नजौ न स्वप्नो निद्रा जायते ययोस्तौ अस्वप्नजौ । तथा सत्रसदौ सतां जीवानां त्राणं रक्षणं सत्रं तत्र सीदतः तौ सत्रसदौ । जीवितदातारावित्यर्थः ॥ ५५ ॥

### षट्पञ्चाशी ।

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ ५६ ॥

उ० उत्तिष्ठ । तिस्रो ब्राह्मणस्पत्यः द्वे बृहत्यौ तृतीया त्रिष्टुप् । हे ब्रह्मणस्पते, उत्तिष्ठ ऊर्ध्वो भव आरब्धकार्यो भव । यस्मात् देवयन्तः देवान्कामयमानाः यजमानाः त्वां भवन्तम् ईमहे याचामहे आगच्छेति । भव-

न्तमागच्छन्तम् उपप्रयन्तु उपसंगम्य आगच्छन्तु । मरुतः सुदानवः कल्याणदानाः । त्वं च हे इन्द्र, प्राशूः प्रकर्षेण शीघ्रो भव । सचा सहगमनाय ॥ ५६ ॥

म० तृचो ब्रह्मणस्पतिदैवतः । द्वे बृहत्यौ तृतीया त्रिष्टुप् । हे ब्रह्मणो देवस्य पते पालक, उत्तिष्ठ ऊर्ध्वः आरब्धकार्यो भव । यतो वयं देवयन्तो देवान्कामयमानाः त्वा त्वामीमहे याचामहे आगच्छेति । मरुतः भवन्तमागच्छन्तमुप समीपे प्रयन्तु आगच्छन्तु । किंभूताः मरुतः । सुदानवः शोभनं ददति ते सुदानवः । हे इन्द्र, त्वमपि सचा सह गमनाय प्राशूः प्रकर्षेण शीघ्रो भव । देवान्कामयन्ते देवयन्ति ततः शतृप्रत्ययः 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) 'न छन्दस्यपुत्रस्य' (पा० ७ । ४ । ३५) इति निषेधात् 'क्यचि च' इतीत्वाभावः ( पा० ७ । ४ । ३३ ) 'अश्वाघस्यात्' ( पा० ७ । ४ । ३७ ) इत्यश्वाघयोरेवाकारविधानात् 'अकृत्सार्वधातुकयोः' ( पा० ७ । ४ । २५ ) इति दीर्घोऽपि न स्यात् । ईमहे याचतिकर्मसु पठितः 'ई गतौ' दिवादित्वादागतस्य श्यनश्छान्दसो लोपः । सुदानवः 'दाभाभ्यां नुः' ( उणा० ३ । ३२ ) प्राशूः आशुशब्दे दीर्घश्छान्दसः । भवा संहितायां 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । १३५ ) इति दीर्घः ॥ ५६ ॥

## सप्तपञ्चाशी ।

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५७ ॥

उ० प्र नूनम् नूनमिति पादपूरणः । प्रवदति प्रोच्चारयति ब्रह्मणस्पतिः मन्त्रं उक्थ्यम् । उक्थ्यमिति शस्त्रमुच्यते तत्र सन्नमन्मत्र उक्थ्यः । कथंभूतोऽसौ मन्त्रः । यस्मिन् मन्त्रे इन्द्रश्च वरुणश्च अर्यमा च अन्ये देवाश्च ओकांसि । ओक इति निवासनाम । निवासानि चक्रिरे कृतवन्तः ॥ ५७ ॥

म० ब्रह्मणस्पतिः नूनं निश्चितमुक्थ्यं शस्त्रयोग्यं मन्त्रं प्रवदति प्रकर्षेणोच्चारयति । यस्मिन् मन्त्रे इन्द्रः वरुणः मित्रः अर्यमा अन्ये च देवाः ओकांसि निवासान् चक्रिरे कृतवन्तः । सर्वदेवाधारभूतं शस्त्रं पठनीयं मन्त्रवदित्यर्थः ॥ ५७ ॥

## अष्टपञ्चाशी ।

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः । य इमा विश्वा विश्वकर्मा यो नः पिता अन्नपतेऽन्नस्य नो देहि ॥ ५८ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

उ० ब्रह्मणस्पते । हे ब्रह्मणस्पते, त्वम् अस्य जगतः यन्ता । एवंचेत् विज्ञापयामि । सूक्तस्य साधुवचनस्य बोधि बुध्यस्व अवगतार्थो भव । तनयं च अपत्यानि च जिन्व । जिन्वतिः प्रीतिकर्मा । प्रीणीहि । विश्वं च तत् भद्रं भन्दनीयम् अस्माकम् अस्तु । यत् अवन्ति पालयन्ति देवाः त्वत्प्रसादात् । बृहत् महत् ऊर्जितम् । वदेम दीयतां भुज्यतामिति । विदथे यज्ञे । सुवीराः कल्याणपुत्राः सन्तः । अथ चतस्रः प्रतीकोक्ताः । इमा विश्वा भुवनानि जुह्वत् । विश्वकर्मा विमना । यो नः पिता । अन्नपतेऽन्नस्य नो देहीति ॥ ५८ ॥

इति उवटकृतौ मन्त्रभाष्ये चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥

म० हे ब्रह्मणस्पते, त्वं यतोऽस्य जगतो यन्ता नियन्ता अतः प्रार्थ्यते । सूक्तस्यास्मदुक्तस्य साधुवचनस्य । कर्मणि षष्ठी । सूक्तम् बोधि बुध्यस्व । अस्मदुक्ता स्तुतिर्भवता ज्ञायतामित्यर्थः । तनयं च अस्मदपत्यानि जिन्व प्रीणीहि । जिन्वतिः प्रीतिकर्मा । देवा यत् भद्रं कल्याणमवन्ति पालयन्ति तत् विश्वं सर्वं भद्रमस्माकमस्त्विति शेषः । किंच सुवीराः कल्याणपुत्राः सन्तो वयं विदथे यज्ञे बृहत् महत् वदेम दीयतां भुज्यतामित्यादि उच्चारयेम । अथ चतस्रः कण्डिकाः प्रतीकोक्ताः य इमा विश्वा भुवनानि जुह्वत् ( १७ । १७) विश्वकर्मा विमनाः ( १७ । २६ ) यो नः पिता ( १७ । २७ ) अन्नपतेऽन्नस्य नो देहि ( ११ । ८३ ) इति । ता ब्रह्मयज्ञेऽध्येयाः ॥ ५८ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
चतुस्त्रिंशोऽयमध्यायो ब्रह्मयज्ञार्थकोऽगमत् ॥ ३४ ॥

---

# पञ्चत्रिंशोऽध्यायः ।

## तत्र प्रथमा ।

अपेतो यन्तु पणयोऽसुम्ना देवपीयवः । अस्य लोकः सुतावतः । द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ॥ १ ॥

उ० अपेतो यन्तु । पित्र्योऽध्यायः । आदित्यस्यार्षं देवानां वा । गायत्रीव पलाशशाखया व्यूहति। अपेतो यन्तु पणयः । अपयन्तु इतः स्थानात् पणयः असुराः असुम्नाश्च असुखकराः । देवपीयवश्च । पीयतिर्हिंसाकर्मा । देवानां हिंसितारः देवद्विषः । किमिति अस्य यजमानस्य लोकः स्थानमत्र सुतावतः सोमाभिषवं कृतवतः । परं यजुः । द्युभिरहोभिरक्तुभिः । द्युशब्देन श्रुतौ ऋतव उक्ताः । ऋतुभिः अहोभिः अक्तुभिः रात्रिभिः व्यक्तं स्पष्टीकृतम् । यमः ददातु अवसानम् अवस्यत्यस्मिन्नित्यवसानम् । अस्मै यजमानाय ॥१॥

म० त्रयस्त्रिंशेऽध्याये सर्वमेधसंबन्धिनः कियतो मन्त्राननुक्त्वा प्रवायुमच्छेत्यारभ्य ( ३३ । ५५ ) अनारभ्याधीतान्म-

न्त्रानुक्त्वा चतुस्त्रिंशेऽध्याये तानेव समाप्येदानीं पञ्चत्रिंशेऽध्याये पितृमेधसंबन्धिनो मन्त्रा उच्यन्ते। स च पितृमेधो मृतस्य वर्षास्मरणे भवति। वर्षस्मृतौ तु विषमवर्षेषु भवति एकतारकनक्षत्रे चित्रादौ दर्शे वा ग्रीष्मे शरदि माघे भवति। पितृमेधं करिष्यता द्विजेन कुम्भेऽस्थिसंचयः कार्यः। मृतस्य च यावन्तोऽमात्यपुत्रपौत्रास्तावन्तः कुम्भाः कर्मदिने आनेयाः कुम्भेभ्योऽधिकानि छत्राणि च। ततोऽरण्ये कुम्भे कृतमस्थिसंचयनं ग्रामसमीपे समानीय शय्यायां कुम्भं संस्थाप्याहतवस्त्रैकदेशेन संवेष्ट्य मोहमयवादित्रेषु वाद्यमानेषु वीणायां च वाद्यमानायां मृतस्य पुत्रपौत्रा उत्तरीयैर्व्यजनैश्चास्थिकुम्भं वीजयन्तस्त्रिस्त्रिः प्रदक्षिणं परियन्ति। स्त्रियोऽपीति केचित्। रात्रेः पूर्वमध्यापरभागेषु तद्दिने बह्वन्नदानं कुर्वन्ति नृत्यगीतवादित्राणि च कारयन्ति अस्थिकुम्भायान्नमुपहरन्ति च। तत उपप्रातरस्थिकुम्भसहिताः पूर्वोक्तान्कुम्भाञ्छत्राणि चादाय ग्रामाद्दक्षिणस्यां बहिर्गच्छन्त्यध्वर्युयजमानामात्याः। श्मशानान्तं कर्म कुर्वतो यथा रविरुदयेत्तथा रात्रावारब्धव्यम्। तत्र वने गत्वा ग्रामान्मार्गादश्वत्थतिल्वकहरिद्रुस्फूर्जकविभीतकश्लेष्मातककोविदारादिभ्यश्च दूरे अन्यवृक्षगुल्मादिवृते ऊषरे वोदक्प्रवणे दक्षिणप्रवणे समे वा सुखकारिणि रम्ये वनादुदकाद्वा पूर्वभागे उत्तरभागे वा वर्तमाने गर्तवति वीरणतृणवति प्रदेशे श्मशानार्थं दिक्कोणं पुरुषप्रमाणं क्षेत्रं मिमीते। पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिरिति (यजुःपरिशिष्ट० ७। २) शुल्बोक्तविधिना तच्चतुरस्रमुत्तरतः पश्चाच्च पृथु भवति। तत्र साधनप्रकारः पूर्वदक्षिणपार्श्वयोर्नवाङ्गुलानि स्वत्रयोदशांशेनाङ्गुलचतुर्थभागसहितानि पुरुषप्रमाणमध्ये न्यूनानि कार्याणि पश्चिमोत्तरपार्श्वयोस्तावन्ति पुरुषप्रमाणादधिकानि। तथाहि पुरुषमात्रक्षेत्रस्याक्ष्णया प्राचीं कृत्वा तत्प्रान्तयोः शङ्कुं निखाय सार्धाष्टादशाङ्गुलहीनां पुरुषद्वयप्रमाणामुभयतःपाशां रज्जुं मध्यमदेशे सलक्षणां कृत्वा पूर्वापरयोः शङ्क्वोस्तस्याः पाशौ प्रतिमुच्य मध्यलक्षणेन दक्षिणत आयम्य दक्षिणः कोणः साधनीयः। ततः सार्धाष्टादशाङ्गुलाधिकां पुरुषद्वयप्रमाणां रज्जुमुभयतः पाशां मध्यलक्षणयुतां कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य मध्यलक्षणेनोत्तरत आयम्योत्तरकोणः साध्य इति। ततः पूर्वादिकोणेषु पालाशशमीवारणाश्ममयाश्चत्वारः शङ्कवो निखेयाः। एतत्कुर्वतां निकटे कश्चिद्यजमानपुरुषस्तृणपूलकमुच्छ्रित्य धारयेत्। कर्मसमाप्तौ गृहमागत्य तं गृहेपूच्छ्रयेत प्रजावृद्ध्यै इत्यादि बोध्यम्। कात्यायनः 'अपसलवि सृष्ट्या रज्ज्वा परितत्याऽपेतो यन्त्विति पलाशशाखया व्युदूहति' ( २१। ३। ३२ ) इति। अपसलवि अप्रादक्षिण्येन निष्पादितया रज्ज्वा तत्क्षेत्रं समन्तादप्रदक्षिणं संवेष्ट्यापेतो यन्त्विति मन्त्रेण क्षेत्रमध्यपतितं तृणपर्णादिकं पलाशशाखया कृत्वा क्षेत्राद्बहिर्निष्कासयतीति सूत्रार्थः॥ अस्याध्यायस्य पितरो देवता आदित्या ऋषयो देवा वा। आद्या गायत्री। पणन्ति परद्रव्यैर्व्यवहरन्तीति पणयोऽसुराः इतोऽपयन्तु अपगच्छन्तु 'व्यवहिताश्च' ( पा० १। ४। ८२ ) इत्युपसर्गस्य यन्त्विति क्रियापदेन व्यवधानम्। किंभूताः पणयः। असुम्नाः सुम्नमिति सुखनाम। नास्ति सुम्नं येभ्यस्ते असुखकराः। तथा देवपीयवः पीयतिर्हिंसाकर्मा। देवान्पीयन्ति हिंसन्ति ते देवपीयवः देवद्विषः। किमित्यसुराणामपगमोऽर्थ्यते तत्राह। अस्य लोकः अस्य यजमानस्यास्थिभूतस्यायं लोकः स्थानम्। किंभूतस्यास्य। सुतवतः सोमाभिषवं कृतवतः सुषावेति सुतवान् तस्य 'षुञ् अभिषवे' क्तवतुप्रत्ययान्तः 'अश्वरश्मिमतिसुमती' ( ३। ६। २ ) इत्यादिना प्रातिशाख्यसूत्रेण संहितायां सुतशब्दस्याकारे दीर्घः। द्युभिरहोभिरिति यजुः। यमोऽस्मै यजमानायावसानं ददातु। अवस्यन्त्यस्मिन्नित्यवसानं स्थानम्। किंभूतं द्युभिर्ऋतुभिः अहोभिः दिवसैः अक्तुभिः रात्रिभिश्च व्यक्तं स्पष्टीकृतम्। द्युशब्देन श्रुतौ ऋतव उक्ताः 'तदेनमृतुभिश्चाहोरात्रैश्च सलोकं करोति' ( १३। ८। २। ३ ) इति श्रुतेः। कलाद्यधिष्ठातृदेवताभिः प्रकटितमस्मै यमो ददात्वित्यर्थः॥ १॥

## द्वितीया।

सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु। तस्मै युज्यन्तामुस्रियाः॥ २॥

उ० जपति। सविता ते गायत्री। सविता ते तव शरीरेभ्यः शरीराणामिति विभक्तिव्यत्ययः। पृथिव्यां लोकं स्थानं इच्छतु। नहि सवित्राऽननुज्ञातेनावस्थातुं शक्यते। द्वितीयं वाक्यम्। तस्मै क्षेत्राय शरीराय संस्कारार्थं युज्यन्तां शरीरे उस्रियाः अनड्वाहः॥ २॥

म० 'औदुम्बरसीर उत्तरतो वा षड्गवे युज्यमाने युङ्क्तेति संप्रेष्य सविता त इति जपति' ( का० २१। ३। ३४ ) इति। ततोऽध्वर्युस्तां पलाशशाखां दक्षिणस्यां निरस्य परिश्रिद्भिर्वेष्टयित्वा तत्क्षेत्रस्य दक्षिणत उत्तरतो वा षड्भिरनडुद्भिः सीरं युनक्ति। तस्मिन् युज्यमाने युङ्क्तेति संप्रेष्य सवितेति मन्त्रं जपति। गायत्री। हे यजमान, सविता सूर्यः ते तव शरीरेभ्यः शरीराणां विभक्तिव्यत्ययः। पृथिव्यां लोकं स्थानमिच्छतु सवित्रनुज्ञां विना न केनापि स्थातुं शक्यते। द्वितीयं वाक्यमाह तस्मै इति। तस्मै सवित्रा दत्ताय क्षेत्राय संस्कारार्थम् उस्रियाः अनड्वाहो युज्यन्तां युक्ता भवन्तु॥ २॥

## तृतीया।

वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा। विमुच्यन्तामुस्रियाः॥ ३॥

उ० वायुः पुनातु। चतस्रः सीताः कर्षति चतुर्भिर्यजुर्भिः। वायुः पुनातु विदारयतु। सविता पुनातु विदारयतु अग्नेर्भ्राजसा दीप्त्या विदारयतु। सूर्यस्य वर्चसा भ्राजिष्णुतया विदारयतु। विमुञ्चत्यनडुहः। विमुच्यन्तामुस्रियाः विमुच्यन्तां शरीरात् उस्रियाः अनड्वाहः॥ ३॥

**म०** 'अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रमुत्तरतः प्रतीचीं प्रथमामिति' (का० २१ । ४ । १-२)। अध्वर्युः परितो वेष्टितां रज्जुमनुलक्षीकृत्य वायुः पुनात्विति प्रतिमन्त्रं पादेन पादेन चतस्रः सीताः अप्रदक्षिणं कृषति । तत्र प्रथमां सीतामुत्तरपार्श्वे प्रतीचीं कृषति । दक्षिणतः सीरयोजनपक्षेऽपि तत्सीरमप्रदक्षिणमुत्तरत आनीय प्रथममुत्तरत एव कृषति । 'तदपसलवि पर्याहृत्योत्तरतः प्रतीचीं प्रथमाᳪं सीतां कृषति वायुः पुनात्विति सविता पुनात्विति जघनार्धेन दक्षिणामग्नेर्भ्राजसेति दक्षिणार्धेन प्राचीᳪं सूर्यस्य वर्चसेत्यग्रेणोदीचीं' ( १३ । ८ । २ । ६ ) इति श्रुतेः । चत्वारि यजूंषि लिङ्गोक्तदेवतानि । हे पृथिवि, वायुः त्वां पुनातु विदारयतु । सूर्यः त्वां पुनातु अग्नेर्भ्राजसा दीप्त्या सूर्यस्य वर्चसा तेजसा च त्वां विदारयतु । 'अनडुहो विमुच्य विमुच्यन्तामिति' (का० २१ । ४ । ४) एवं पूर्वोक्तचतुर्मन्त्रैः पार्श्वचतुष्के कर्षणं कृत्वा मध्येऽपि सर्वं क्षेत्रं यथा कृष्टं भवति तथा परिमिताः सीताः कृत्वा वृषभान्सीराद्विमुञ्चति । यजुः वृषदैवतम् । उस्रा धेनुः तदपत्यानि उस्रियाः अनड्वाहो विमुच्यन्तां सीराद्वियुज्यन्ताम् ॥ ३ ॥

## चतुर्थी ।

अ॒श्व॒त्थे वो॑ नि॒षद॑नं प॒र्णे वो॑ वस॒तिष्कृ॒ता ।
गो॒भाज॒ इत्किला॑सथ॒ यत्स॒नव॑थ॒ पूरु॑षम् ॥ ४ ॥

**उ०** अश्वत्थे व इति व्याख्यातम् ॥ ४ ॥

**म०** 'दक्षिणा सीरं निरस्याश्वत्थे व इति सर्वौषधं वपतीति' ( का० २१ । ४ । ४ ) हलं दक्षिणदिशि तूष्णीं प्रक्षिप्य कृष्टक्षेत्रमध्ये सर्वौषधं वपति । अनुष्टुप् व्याख्याता ( अ० १२ । क० ७९ ) ॥ ४ ॥

## पञ्चमी ।

स॒वि॒ता ते॒ शरी॑राणि मा॒तुरु॒पस्थ॒ आ व॑पतु ।
तस्मै॑ पृथिवि॒ शं भ॑व ॥ ५ ॥

**उ०** शरीराणि निवपति । सविता ते । गायत्री । सविता ते तव शरीराणि अस्थीनि । मातुः पृथिव्याः उपस्थे उत्सङ्गे आवपतु स्थापयतु । तस्मै अस्थिरूपाय यजमानाय सवित्रा उप्ताय हे पृथिवि, शं भव सुखरूपा भव ॥ ५ ॥

**म०** 'सविता त इति शरीराणि निवपति मध्ये इति' ( का० २१ । ४ । ५ )। तस्य पुरुषमात्रस्य क्षेत्रस्य मध्ये ...तस्यास्थीनि राशीकरोति । एतच्च सूर्योदयकालं उद्...। कुर्वतोऽभ्युदियात्' ( १३ । ८ । ३ । २ ) इति देँव॒त्रा सू॒र्य॒म...तृदेवत्या । हे यजमान, सविता सूर्यः ते

**उ०** उद्वयमि ने मातुः पृथिव्याः उपस्थे उत्सङ्गे आव-

**म०** उद्वयं त...थिवि भूमे, तस्मै सवित्रोप्तायास्थिरूपाय

२० । क० २१ ) ...खरूपा भव ॥ ५ ॥

## षष्ठी ।

प्र॒जाप॑तौ त्वा दे॒वता॑यामु॒पोद॑के लो॒के नि द॑धा॒म्यसौ॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥ ६ ॥

**उ०** प्रजापतौ त्वा । यजुः कण्डिका । प्रजापतौ त्वाम् देवतायां उपोदके उप समीपे उदकं यस्य स तथोक्तः । लोके स्थाने निदधामि । असाविति नामग्रहणम् । अनुदात्तत्वादामन्त्रितम् । तद्यथा हे देवदत्त, अप नः शोशुचदघम् । अपेत्य नः अस्मान् अत्यर्थं दहतु पापम् द्वेष्टॄन् । यद्वा प्रजापतिः अपशोशुचत् अत्यर्थं दहतु । नोऽस्माकमघं पापम् ॥ ६ ॥

**म०** उष्णिक् प्रजापतिदेवत्या अस्थिनिवापे एव विनियुक्ता । असाविति नामग्रहणमनुदात्तत्वादामन्त्रितम् । हे देवदत्त, उपोदके उदकसमीपवर्तिनि लोके स्थाने प्रजापतौ देवतायां त्वां निदधामि स्थापयामि । स प्रजापतिर्नोऽस्माकमघं पापं शोशुचत् अत्यर्थं दहतु । 'शुच शोके' यङ्लुगन्तं रूपम् ॥ ६ ॥

## सप्तमी ।

परं॑ मृत्यो॒ अनु॒ परे॑हि॒ पन्थां॒ यस्ते॒ अन्य इत॑रो दे॒व॒याना॑त् । चक्षु॑ष्मते शृण्व॒ते ते॑ ब्रवीमि॒ मा नः॑ प्र॒जाᳪं री॑रिषो॒ मोत वी॒रान् ॥ ७ ॥

**उ०** प्रत्यागते जपति । परं मृत्यो त्रिष्टुप् मृत्युदेवत्या । हे मृत्यो, परं पन्थानमाश्रित्य । अनु परा इहि पराङ्मुखो भूत्वा आगच्छ । तं शब्देन दर्शयति । योऽसौ ते तव स्वभूतः अन्यः इतरः देवयानात् पितृयानाख्यः । अपिच चक्षुष्मते शृण्वते ते ब्रवीमि । षष्ठ्यर्थे चतुर्थी । चक्षुष्मतः शृण्वतः तव ब्रवीमि । अतिशयार्थे वचनम् । नहि तस्यादृष्टमश्रुतं चास्ति । मा च नः अस्माकं प्रजां रीरिषः हिंसीथाः । मोत वीरान् पुत्रान् ॥ ७ ॥

**म०** 'प्रत्यागते परं मृत्यविति जपतीति' ( का० २१ । ४ । ७ )। दक्षिणां गत्वानुच्छ्वसन् कुम्भं प्रक्षिप्यैहीति कश्चिद्विप्रः प्रेषितोऽस्ति तस्मिन् कुम्भं क्षिप्त्वा प्रत्यागते सति यजमानोऽध्वर्युर्वा जपति । मृत्युदेवत्या त्रिष्टुप् संकसुकदृष्टा । मृत्यो, परा पराङ्मुखो भूत्वा परमन्यं पन्थां पन्थानं मार्गमन्विहि अनुगच्छ । तमेव दर्शयति । यस्ते तव त्वदीयः पन्था देवयानात् पथः इतरः तुच्छः अन्यः पितृयानाख्यः देवा यान्ति यस्मिन् स देवयानः । किंच चक्षुष्मते ज्ञानिने शृण्वते च ते तुभ्यं मृत्यो, किंचिद् ब्रवीमि वदामि । आदरार्थं वचनम् । नहि तस्यादृष्टमश्रुतं वास्ति । षष्ठ्यर्थे चतुर्थी । चक्षुष्मतः शृण्वतस्तव वदामि । किम् । हे मृत्यो, नोऽस्माकं प्रजां सन्ततिं वंशपरम्परां मा रीरिषः मा हिंसीः । 'रिष वधे' स्वार्थे णिजन्तस्य लुङि रूपम् । उत अपिच वीरान्पुत्रान् मा हिंसीः ॥ ७ ॥

## अष्टमी ।

शं वातः शꣳ हि ते घृणिः शं ते भवन्त्विष्टकाः । शं ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ॥ ८ ॥

उ० यथार्थं कल्पयति अनुष्टुब्बृहतीभ्याम् । शं वातः सुखरूपो वातः ते भवतु । शं हि ते घृणिः सुखरूपश्च ते घृणिर्भवतु । घृणिरित्यहर्नाम । हीति स्वाध्यायार्थम् । सुखरूपाश्च ते भवन्तु इष्टकाः । सुखरूपाश्च ते भवन्तु अग्नयः । पार्थिवाः पृथिव्यां भवाः पार्थिवासः । मा च त्वाम् अभिशूशुचन् अभितापयन्तु ॥ ८ ॥

म० 'शं वात इति यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीमिति' ( का० २१ । ४ । १८ ) । शं वात इति मन्त्रद्वयेन तानि मध्ये न्युप्तान्यस्थीनि यथाङ्गं कल्पयित्वा यदस्थि यस्याङ्गस्य तेनाङ्ग्ना तदङ्गकल्पनया प्राक्शिरसं पुरुषाकृतिं कृत्वा तन्मध्ये पादमात्रामिष्टकां तूष्णीं निदधाति । द्वे ऋचावनुष्टुब्बृहत्यौ विश्वदेवदेवते । हे यजमान, वातो वायुस्ते तव शं सुखरूपो भवतु । हि पुनः घृणिः सूर्यकिरणः ते तव शं सुखरूपो भवतु । इष्टका मध्ये प्रतिदिशं च तिस्रस्तिस्रः प्रक्षिप्तास्ते तव शं सुखरूपा भवन्तु । अग्नयश्च ते शं भवन्तु । पार्थिवासः पृथिव्यां भवाश्चाग्नयः त्वा त्वां माभिशूशुचन् मा शोचयन्तु अभितापयन्तु ॥ ८ ॥

## नवमी ।

कल्पन्तां ते दिशस्तुभ्यमापः शिवतमास्तुभ्यं भवन्तु सिन्धवः । अन्तरिक्षꣳ शिवं तुभ्यं कल्पन्तां ते दिशः सर्वाः ॥ ९ ॥

उ० किंच । कल्पन्तां ते दिशः क्लृप्तास्ते दिशो भवन्तु । तुभ्यम् आपः शिवतमाः भवन्तु । तुभ्यं भवन्तु सिन्धवः समुद्राः शिवतमाः । अन्तरिक्षं शिवं तुभ्यं भवतु । कल्पन्तां ते दिशः सर्वाः । आदरार्थं पुनर्वचनं कात्स्न्यार्थं वा ॥ ९ ॥

म० दिशः ते तुभ्यं त्वदर्थं कल्पन्तां क्लृप्ता भवन्तु आपो जलानि तुभ्यं शिवतमाः कल्याणकारिण्यो भवन्तु । सिन्धवः समुद्राश्च शिवतमास्तुभ्यं भवन्तु । अन्तरिक्षमाकाशं तुभ्यं शिवं कल्याणकारि भवतु । सर्वाः दिशः ते तुभ्यं कल्पन्ताम् । आदरार्थं कात्स्न्यार्थं वा पुनर्वचनम् ॥ ९ ॥

## दशमी ।

अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः । अत्रा जहीमोऽशिवा ये असञ्छिवान्वयमुत्तरेमाभि वाजान् ॥ १० ॥

उ० अश्मन्वती रीयते । अश्मनस्त्रीन्विकिरन्ति ता अभ्युत्तरन्ति । त्रिष्टुब्वैश्वदेवी । अश्मन्वती पाषाणवती इयं नदी रीयते गम्यते अस्माभिः विषमम् । अतो ब्रवीमि । संरभध्वम् । संरम्भश्चोत्तरणाय प्रयत्नकरणम् । उत्तिष्ठत अभिमुखा भवत प्रतरत हे सखायः । किमित्यादरः । अत्राजहीमः परित्यजामः । अशिवाः अशान्ताः । ये असन् स्युः । शिवान् वाजान् अन्नविशेषान् वयम् अभ्युत्तरेम ॥ १० ॥

म० 'अध्यधिगच्छन्त्यश्मन्वतीरिति' (का० २१ । ४ । २१) । गर्तान्मृदमानीय पूर्ववर्जदिग्भ्यः कृष्ट्वा वा मृदमानीय तत् श्मशानं विप्रस्य मुखमितं क्षत्रस्योरोमितं वैश्यस्योरुमितं स्त्रिया भगमितं शूद्रस्य जानुमितं सर्वेषां वा जानुमितं मृदा कृत्वा शैवलैः कुशैश्च प्रच्छाय तद्दक्षिणतो गर्तौ खात्वा क्षीरोदकाभ्यां संपूर्य श्मशानोत्तरे सप्त गर्तान्खात्वा दक्षिणोत्तरान् जलेन संपूर्योत्तरगर्तेषु अध्वर्युयजमानामात्यांस्त्रीन्पाषाणान्प्रक्षिप्याश्मन्वतीरिति मन्त्रेण तद्गर्तोपरि गच्छन्ति । विश्वदेवदेवत्या त्रिष्टुप् सुचीकदृष्टा । हे सखायः मित्राणि, एषा अश्मन्वती पाषाणवती नदी रीयते गच्छति । 'री गतौ' दिवादिः आत्मनेपदी । अतो यूयं संरभध्वमुत्तरणाय प्रयतध्वम् । उत्तिष्ठत अभिमुखा भवत । प्रतरत प्रकर्षेण तां नदीं तरत । किमिति । यतोऽत्र प्रदेशे ये अशिवाः अशान्ता दुष्टा राक्षसादयः असन् स्युः तान् वयं जहीमः परित्यजामः । तेषु त्यक्तेषु शिवान्सुखकरान् वाजानन्नविशेषान् वयमुत्तरेम प्राप्नुयाम ॥ १० ॥

## एकादशी ।

अपाघमप किल्बिषमप कृत्यामपो रपः । अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ॥ ११ ॥

उ० अपामार्गेणापमृजति । अपाघम् अनुष्टुप् । हे अपामार्ग, त्वम् अस्मत् अस्मत्तः । अपसुव अपगमय अघं पापं मानसम् । अपगमय च किल्बिषं कीर्तिभेदकं पापमेव कायिकम् । अपगमय च कृत्याम् अभिचारम् । अपगमय च रपः । रपो रिप्रमिति पापनामनी भवतः । वाचिकं पापम् । अपगमय च दुःस्वप्न्यं दुःस्वप्ने भवं फलं दुःस्वप्न्यम् ॥ ११ ॥

म० 'अपाघमित्यपामार्गैरपमृजत इति' ( का० २१ । ४ । २२ ) । ते अमात्या यज्ञोपवीतिनो भूत्वाप उपस्पृश्य हस्तगृहीतैरपामार्गैः स्वशरीरं शोधयन्ते अपामार्गबीजैरुद्वर्तयन्तीति केचित् । लिङ्गोक्तदेवतानुष्टुप् शुनःशेपदृष्टा दुःस्वप्ननाशनी । हे अपामार्ग, त्वमस्मत् अस्मत्तः सकाशादघं मानसं पापमपसुव 'षू प्रेरणे' अपगमयेत्यर्थः । किल्बिषं कीर्तिभेदकं च पापमपसुव । कृत्यां परकृतमभिचारमपसुव । [illegible] वतुर्भिर्य- 'रपो रिप्रमिति पापनामनी भवतः' ( निघुनातु विदारयतु यास्कः । रपः पापं वाचिकं च अपसुव उच्चैसा आजिष्णु- दुष्टः स्वप्नो दुःस्वप्नः तत्र भवं दुःस्वप्नोत्थम् मुच्यन्तामुस्त्रियाः त्तोऽपसुव ॥ ११ ॥ [illegible] ३ ॥

## द्वादशी।

सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः॥१२॥

**उ०** सुमित्रिया न इति व्याख्यातम्॥१२॥

**म०** 'सुमित्रिया न इति स्नात्वाहतवाससोऽनड्वत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमित्यागच्छन्तीति' (का० २१।४।२३) सुमित्रिया इति मन्त्रेण स्नात्वा नूतनवस्त्राणि परिहितवन्तोऽनड्वाहमिति मन्त्रेण वृषपुच्छमन्वारभ्य उद्वयं तमिति मन्त्रेण यजमानामात्या ग्राममागच्छन्ति। यद्यप्यत्र सुमित्रिया इति मन्त्रेण स्नानमुक्तं तथापि सुमित्रिया इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चतीति' (का० १८।५।१५) द्वयं विधेयम्। 'दुर्मित्रिया द्विष्म इति यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेत् तेनैव तं पराभावयति' (१३।८।४।५) इति श्रुतेः। व्याख्याता (अ० ६।क० २२।अ० २०।क० १९)॥१२॥

## त्रयोदशी।

अनड्वाहमन्वारभामहे सौरभेयꣳस्वस्तये। स न इन्द्र इव देवेभ्यो वह्निः संतारणो भव॥१३॥

**उ०** अनडुत्पुच्छमन्वारब्धा आगच्छन्ति। अनड्वाहम्। आनडुही अनुष्टुप्। उत्तरोऽर्धर्चः प्रत्यक्षकृतः अतो यच्छब्दाध्याहारेण सामर्थ्यम्। या त्वाम् अनड्वाहं अन्वारभामहे आलभामहे। सौरभेयं सुरभ्या अपत्यम् 'स्त्रीभ्यो ढक्'। स्वस्तये अविनाशाय। स त्वम् नः अस्माकम् इन्द्रइव देवेभ्यः देवानामिति विभक्तिव्यत्ययः। वह्निर्वोढा संतारणश्च भव॥१३॥

**म०** अनुष्टुप् अनड्वद्देवत्या। उत्तरोऽर्धर्चः प्रत्यक्षकृतः ततः सर्वनाम्नोऽध्याहारेण सामर्थ्यम्। वयं यमनड्वाहमन्वारभामहे आलभामहे स्पृशामः। किंभूतम्। सौरभेयं सुरभ्याः अपत्यम् 'स्त्रीभ्यो ढक्' (पा० ४।१।१२०) इति ढक्। किमर्थम्। स्वस्तये अविनाशाय। हे अनड्वन्, स त्वं नोऽस्माकं संतरणः तारको दुःखनाशको भव। किंच त्वं वह्निः देवानां वोढा। तत्र दृष्टान्तः। देवेभ्यः इन्द्र इव। इन्द्रो यथा देवार्थे तारको भवति॥१३॥

## चतुर्दशी।

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥१४॥

**उ०** उद्वयमिति व्याख्यातम्॥१४॥

**म०** उद्वयं तमिति ग्राममागच्छन्ति। व्याख्याता (अ० २०।क० २१)॥१४॥

## पञ्चदशी।

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम्। शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन॥१५॥

**उ०** मर्यादाया एव लोष्टमाहृत्यान्तरेण तोरणे निदधाति। इमं जीवेभ्यः। त्रिष्टुप् मृत्युदेवत्या। इमं लोष्टं जीवेभ्यः अर्थाय। परिधिं परिधीयत इति परिधिः तं परिधिम्। दधामि स्थापयामि। किमर्थमिति चेत्। मा गात् मा गच्छतु एषां जीवानां मध्ये अपरः नु क्षिप्रं वेदोक्तादायुषोऽर्वाक् पितृलोकम्। एतमर्थं पुरस्कृत्य सर्वथा शतं जीवन्तु शरदः पुरूचीः बह्वञ्चनाः दानाध्ययनयागानुकूलाः अन्तर्मृत्युं दधताम् अन्तर्दधातु मृत्युम् पर्वतेन इव लोष्टेन॥१५॥

**म०** 'ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इति' (का० २१।४।२४)। स्वनिवासग्रामस्य श्मशानस्य च मध्ये मर्यादालोष्टं महत्तरं मृत्खण्डमध्वर्युरेव निदधाति। मनुष्यदेवत्या त्रिष्टुप् संकसुकदृष्टा। जीवेभ्यः विद्यमानजन्त्वर्थमिमं परिधिं मर्यादां दधामि स्थापयामि। कथमिति चेत्। एषां जीवानां मध्ये अपरः कश्चित् नु क्षिप्रं वेदोक्तादायुषोऽर्वाक् एतमर्थं पितृलोकगमनलक्षणं कार्यमुद्दिश्य मा गात् मा गच्छतु। एते जीवाः शतं शरदः जीवन्तु शतवर्षायुषो भवन्तु। किंभूताः शरदः। पुरूचीः पुरु बहु अञ्चन्तीति पुरूच्यः दानाध्ययनयागानुकूलाः। किंच पर्वतेन लोष्टेनैव मृत्युमन्तर्दधतां मृत्युमन्तर्हितं कुर्वन्तु एते जीवाः॥१५॥

## षोडशी।

अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्॥१६॥

**उ०** जुहोति द्वाभ्याम्। अग्न आयूꣳषि। व्याख्यातम्॥१६॥

**म०** 'अञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान् परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूꣳष्यायुष्मानग्न इति' (का० २१।४।२५)। कज्जलादिना नेत्राञ्जनमञ्जनम् तैलेन पादाञ्जनमभ्यञ्जनम् तद्द्वयं कृत्वा औपासनं कर्तुरावसथ्याग्निं दर्भैः परिस्तीर्य वारणवृक्षावयवांश्चतुरः परिधींश्चतुर्दिक्षु तूष्णीमेव परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोति ऋग्द्वयेन। औपासनः प्रेतस्यैव। तस्यैवाद्वारेण निरसनीयत्वादिति हरिस्वामिनः। कर्तुरेवौपासने होमस्तस्यैकदेशनिरसनमिति कर्कादयः। व्याख्याता (अ० १९।क० ३८)॥१६॥

## सप्तदशी।

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनि-

निरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान्स्वाहा ॥ १७ ॥

**उ०** आयुष्मानग्ने । वसुरन्ता त्रिष्टुप् । इमा स्वाहेति यजुः । हे अग्ने, यः त्वम् आयुष्मान् तं त्वां ब्रवीमि । हविषा वृधानः वर्धमानः । घृतप्रतीकः । प्रतीकं मुखम् । घृतयोनिः घृतसंस्थानः एधि भव । उत्तरवेद्यां धारणाभिप्रायमेतत् । घृतं च पीत्वा । मधु मधुरसम् । चारु सुगन्धि । गव्यं गोविकारसंभूतम् । पिता इव पुत्रम् अभिरक्षतात् । 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति तातङादेशः । अभिरक्ष इमान् जीवान् । स्वाहा सुहुतमस्तु ॥ १७ ॥

**म०** अग्निदेवत्या त्रिष्टुब्वैखानसदृष्टा । हे अग्ने, त्वमेवंभूत एधि भव । किंभूतः । आयुष्मान् चिरंजीवी । तथा हविषा वृधानः वर्धतेऽसौ वृधानः 'बहुलं छन्दसि' ( पा० २।४।७३ ) इति शानचि शपो लुक् । तथा घृतप्रतीकः घृतं प्रतीकं मुखं यस्य । घृतयोनिः घृतं योनिरुत्पत्तिस्थानं यस्य उत्तरवेद्या धारणाभिप्रायमेतत् । स त्वं गव्यं गोसंबन्धि घृतं पीत्वा इमान् जीवान् अभिरक्षतादभिरक्ष 'तुह्योस्तातङाशिष्यन्यतरस्याम्' ( पा० ७।१।३५ ) इति हेस्तातङादेशः । तत्र दृष्टान्तः । पिता पुत्रमिव यथा पिता पुत्रं रक्षति । किंभूतं घृतम् । मधु मधुरं चारु सुगन्धि । स्वाहा सुहुतमस्तु ॥ १७ ॥

## अष्टादशी ।

परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमाँ २॥ आदधर्षति ॥ १८ ॥

**उ०** अथैषां परिदां दधाति अनुष्टुभा । परीमे गामनेषत । इमे जीवाः परि सर्वतः गाम् अनेषत । नयतेर्लुङि सिच एतद्रूपम् । परिणीतवन्तः गाम् । अनडुत्पुच्छालम्बनाभिप्रायमेतत् । पर्यग्निमहृषत पर्यहृष्यत । हरतेरेतद्रूपम् । परिहृतवन्तः अग्निम् । यस्मिन्नग्नावेतत्कर्म क्रियते तमग्निं परिहृतवन्तः । अद्वारेणौपासनं निरस्यतीत्येतदभिप्रायमेतत् । देवेषु ऋत्विक्षु । अक्रत । अक्रुषतेति प्राप्ते सिचो लोपश्छान्दसः । श्रवः धनं दक्षिणालक्षणम् । अथेदानीं कृतकृत्यान् इमान् कः को नाम । आदधर्षति आधर्षयितुं आक्रमितुं शक्नुयात् । अशक्यप्रतिक्रिया ह्येते वर्तन्त इत्यभिप्रायः ॥ १८ ॥

**म०** 'अथैषां परिदां वदन्ति । परीमे गामनेषतेति ।(का० २१।४।२६ ) अध्वर्युयजमानामात्यानां परिदाम् परिदा रक्षणम् सत्संज्ञं मन्त्रं वदति 'दाङ् पालने' परिदीयते समन्ताद्रक्ष्यतेऽनेनेति परिदाः रक्षणः तम् । इन्द्रदेवत्यानुष्टुप् भरद्वाजात्मजशिरिम्बिठदृष्टा । इमे जीवाः गामनड्वाहं पर्यनेषत परिणीतवन्तः अनडुत्पुच्छालभनाभिप्रायम् । नयतेर्लुङि तङि सिचि प्रथमबहुवचने रूपम् 'व्यवहिताश्च' ( पा० १।४।८२ ) इति परेर्व्यवधानं क्रियापदेन । इमे जीवाः अग्निं च पर्यहृषत परिहृतवन्तः । यस्मिन्नग्नावेतत्कर्म कृतं तं परिजहुः । अद्वारेणौपासनं निरस्यतीत्येतदभिप्रायम् । इमे देवाः दीव्यन्ति कर्मसु दीप्यन्ते ते देवाः ऋत्विजः तेषु श्रवः धनं दक्षिणालक्षणमक्रत कृतवन्तः । अक्रुषतेति प्राप्ते सिचो लोपे अक्रतेति रूपम् । अत एतैः कर्मभिः कृतकृत्यानिमाञ्जीवान् कोनाम आदधर्षति आकर्षयितुं पराभवितुं शक्नुयात् । अशक्यप्रतिक्रिया एते जाता इति भावः ॥ १८ ॥

## एकोनविंशी ।

क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ १९ ॥

**उ०** अद्वारेणौपासनं निरस्यति । क्रव्यादमग्निम् । त्रिष्टुप् । अथ येन पुरुषं दहति स क्रव्यात् । क्रव्यादमग्निम् । प्रहिणोमि प्रेषयामि दूरमपुनरागमनाय । यमराज्यं गच्छन्तु रिप्रवाहः । रिप्रमिति पापनाम । रिप्रं मृतं वहति प्रापयति भस्मीभावमिति रिप्रवाहः । जपति । इह ग्रहे एव अयम् इतरः क्रव्यादादन्यः जातवेदाः जातप्रज्ञानः । देवेभ्यः हव्यं हविः वहतु । प्रजानन् स्वमधिकारम् ॥ १९ ॥

**म०** 'अद्वारेणौपासनं निरस्यति क्रव्यादमिति' ( का० २१।४।२७ ) । आहुतिहोमानन्तरं यत्र हुतं तस्यौपासनस्यैकदेशं निरस्यति । प्रेतस्यैवोपासन इति पक्षे सर्वमपि निरस्यति । अग्निदेवत्या त्रिष्टुप् दमनदृष्टा । येन पुरुषो दह्यते स क्रव्यात् तं क्रव्यादमग्निमहं दूरम् अपुनरागमनाय प्रहिणोमि प्रेषयामि । स प्रहितः क्रव्यादग्निः यमराज्यं गच्छतु यमस्य राज्यं प्रति व्रजतु । किंभूतः । रिप्रवाहः 'रिप्रमिति पापनाम' ( नि० ४।२१ ) रिप्रं पापं वहति नाशयति रिप्रवाहः । 'इहैवायमिति जपति' ( का० २१।४।२८ ) । यजमानो जपति । अयमितरः क्रव्यादादन्यो जातवेदाः जातप्रज्ञानोऽग्निः इहैवास्मिन्नेव गृहे सदने देवेभ्योऽर्थाय हव्यं हविः वहतु प्रापयतु । किं कुर्वन् । प्रजानन् स्वाधिकारं जानानः । इति पितृमेधः समाप्तः । उपधानासन्दीवृषभयवानजीर्णान् तद्दक्षिणात्वेन दद्यात् । इच्छन् हेमाद्यपि दद्यात् ॥ १९ ॥

२०-१२-१०२

## विंशी ।

वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके । मेदसः कुल्या उप तान्स्रवन्तु सत्या एषामाशिषः सन्नमन्ताᳬं स्वाहा ॥ २० ॥

**उ०** वपां जुहोति । वह वपाम् त्रिष्टुप् । वह प्रापय वपाम् । हे जातवेदः पितृभ्यः । यत्र यस्मिन्प्रदेशे एतान् पितॄन् वेत्थ जानासि । निहितान् स्थापितान् । पराके पराक्रान्ते सुदूरेऽपि । तत्र वपायाः सकाशात् मेदसः कुल्या नद्यः निःसृत्य उपस्रवन्तु । तान् पितॄन्प्रति । एषां च दा-

तृणाम् सत्या अवितथा आशिषः संनमन्तां प्रह्वीभवन्तु । स्वाहेति यजुः ॥ २० ॥

**म०** जातवेदोदेवत्या त्रिष्टुप् । अस्या विनियोगः श्रौतसूत्रे नास्ति । किंतु गृह्यसूत्रेऽस्ति । तथाहि 'मध्यमया गवा तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्यः' ( पार० ३ । ३ ) इति । अस्यार्थः । मध्यमाष्टका गोपशुना कार्या तस्या धेनोर्वपां जुहोति वह वपामिति मन्त्रेणेत्यर्थः । हे जातवेदः, जातं वेदो धनं यस्मात् स जातवेदाः तत्संबोधने हे जातवेदः, पितृभ्योऽर्थाय त्वं वपां धेनुसंबन्धि चर्मविशेषं त्वं वह प्रापय । पराके पराक्रान्ते दूरेऽपि यत्र यस्मिन्देशे निहितान्स्थापितानेनान्पितॄन् त्वं वेत्थ जानासि तत्र वहेत्यर्थः । तस्याः वपायाः निःसृत्य मेदसः धातुविशेषस्य कुल्याः नद्यः तान्पितॄन् प्रति उपस्रवन्तु प्रसरन्तु । किंच एषां दातॄणामाशिषः मनोरथाः सत्याः अवितथाः सन्नमन्तां प्रह्वीभवन्तु । स्वाहा सुहुतमस्तु । स्वाहेति ऋग्भिन्नं यजुः ॥ २० ॥

## एकविंशी ।

स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः । अप नः शोशुचदघम् ॥ २१ ॥

**उ०** स्योना पृथिवि । पार्थिवी गायत्री । स्योना सुखरूपा हे पृथिवि, नः अस्माकम् भव अनृक्षरा च । ऋक्षरः कण्टकः । अनृक्षरा अकण्टका । निवेशनी च साधुप्रतिष्ठाना । किंच । यच्छा नः प्रयच्छ च नः अस्माकम् शर्म शरणम् । सप्रथाः सर्वतः पृथुः । अप नः शोशुचदघमिति व्याख्यातम् ॥ २१ ॥

**म०** पृथिवीदेवत्या गायत्री मेधातिथिदृष्टा यजुरन्ता । अस्या अपि श्रौते विनियोगो नास्ति स्मार्ते स्वस्तरारोहणे शयने विनियोगः । तथाहि 'स्योना पृथिवि नो भवेति दक्षिणपार्श्वे प्राक्शिरसः संविशन्तीति' ( पार० ३ । २ ) । हे पृथिवि, त्वं नोऽस्माकं स्योना सुखरूपा भव । किंभूता त्वम् । अनृक्षरा ऋक्षरः कण्टकः ।'ऋच्छतेः कण्टकः कन्तपो वा कण्टतेर्वा कृन्ततेर्वा स्याद्गतिकर्मणः' ( निरु० ९ । ३२) इति यास्कः । तद्ग्रहणं चौरदायादादिदुःखनिवृत्त्यर्थम् । न सन्ति ऋक्षराः कण्टकाः दुःखदायिनो यस्यां सा अनृक्षरा । तथा निवेशनी निविशन्ति जनाः यस्यां सा निवेशनी साधुप्रतिष्ठाना 'करणाधिकरणयोश्च' ( पा० ३ । ३ । ११७ ) इति ल्युट् । तथा सप्रथाः प्रथनं प्रथः विस्तारः प्रथसा सह वर्तमाना सप्रथाः सर्वतः पृथुः । किंच नोऽस्मभ्यं शर्म शरणं यच्छ देहि । अतः परं यजुः तद्विनियोगो गृह्यसूत्रे संबन्धिमरणनिमित्ते स्नाने जलापनोदने । तथाहि 'सव्यस्यानामिकया अपनोद्याप नः शोशुचदघमिति' ( पार० ३ । १० ) । इदं जलं नोऽस्माकमघं पापमपशोशुचत् अपशोचयतु दहतु ॥ २१ ॥

## द्वाविंशी ।

अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहा ॥ २२ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

**उ०** अस्मात्त्वम् । गायत्री यजुरन्ता एकात्राहुतिः । अनिरुक्ताग्नेयी । अस्माद्यजमानात् । हे अग्ने, त्वम् अधिजातोसि यतः अतो ब्रवीमि । अयं पुनर्जायमानः त्वत् त्वत्तः जायतामुत्पद्यताम् । असाविति नामग्रहणम् । तद्यथा देवदत्तः स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थम् । त्वत्तो ह्ययं जायमानः त्वद्वंश्य एव स्यादित्यभिप्रायः । स्वाहेति संप्रदानमस्तु ॥२२॥

इति उवटकृतौ मन्त्रभाष्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

**म०** 'आहुतिं जुहोति पुत्रो भ्रातान्यो वा ब्राह्मणोऽस्मात्त्वमधिजातोऽसीति' ( का० २५ । ७ । ३७ ) । साग्निकस्य पात्रप्रतिपत्त्यन्ते दाहात्पूर्वमाज्याहुतिं पुत्रादिर्जुहोति । अग्निदेवत्या गायत्री अनिरुक्ता । हे अग्ने, त्वमस्मात् यजमानात् आधानकाले अधिजातोऽसि उत्पन्नोऽसि । अतोऽयं यजमानः पुनः त्वत् त्वत्तः जायतामुत्पद्यताम् । असाविति विशेषनामवचनः । तथाहि देवदत्तः स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थं त्वत्तो जायताम् । त्वद्वंश्य एव भवत्विति भावः । स्वाहा सुहुतमस्तु ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
पञ्चत्रिंशोऽयमध्यायः पितृमेधाभिधोऽगमत् ॥ ३५ ॥

# षट्त्रिंशोऽध्यायः ।

## तत्र प्रथमा ।

ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये । वागोजः सहौजो मयि प्राणापानौ ॥ १ ॥

**उ०** इदानीं प्रवर्ग्याग्निकाश्वमेधोपनिषत्संबद्धा मन्त्रास्तान्व्याख्यास्यामः । तत्राग्निका उग्रश्चेत्येवमादयः । तान्पुनः परमेष्ठ्यपश्यत् । प्राजापत्यो विमुख इति तस्य मन्त्रगणस्य संज्ञा । अग्निं हृदयेनेत्याश्वमेधिकाः आ अध्यायात् प्रजापतेरार्षम् । परिशिष्टं दध्यङ्ङाथर्वणोऽपश्यत् । 'दध्यङ् ह वा आथर्वणः' इत्येवमादिकया श्रुत्या तद्भावं प्रतिपद्यते । ऋचं वाचम् । प्रवर्ग्यस्यादावन्ते च शान्तिकरणोऽध्यायः । विश्वेदेवा अग्निकानामाश्वमेधिकानां च मन्त्राणाम् इह समाम्नानं दिवाकीर्तिसामान्यात् । प्रथमकण्डिका यजुः । ऋचं वाचं प्रपद्ये प्रविशामि यामि वा । एवं मनो यजुः साम प्राणं चक्षुः श्रोत्रमिति व्याख्येयम् । नहि त्रयीवि-

द्याप्रपन्नस्य प्रवर्ग्य आयुषो विनाशं कुर्यात् । तथा वाङ्मनःप्राणश्चक्षुःश्रोत्राणि प्रपन्नस्य सप्तदशं ह्येतत्प्रजापतेर्लिङ्गमुपलक्षितम् । अथैवंसति वाक् ओजो बलं मानसं धृष्टतानाम । पुनरोजोग्रहणमादरार्थं च । एतदुक्तं भवति वाक् अतिशयिकमोजः प्राणापानौ च सह एकीभूताः मयि वर्तन्तेऽतः प्रवर्ग्योऽस्मान्न हिनस्ति ॥ १ ॥

**म०** पञ्चाध्यायी आथर्वणेन दधीचा दृष्टा 'दध्यङ् ह वा आथर्वण एतᳬ शुक्रमेतं यज्ञं विदांचकार' ( १४।१।१।२० ) इति श्रुतेः । 'उग्रश्च' ( ३९।७।१७।८६ ) इत्याग्निको मन्त्रः । अग्निं हृदयेनेत्याद्यध्यायसमाप्तिपर्यन्तमाश्वमेधिकम् ( ३९।८—१३ ) तद्वयं वर्जयित्वा । ( का० अनुक्रमण्याम् ) शान्तिकरणमाद्यन्तयोः । ऋचं वाचमित्यध्यायेन शान्तिकरणं कार्यम् । स्वाध्याये मन्त्रपाठे प्रवर्ग्यमन्त्रादावस्याध्यायस्य दर्शनात् । अथ मन्त्रार्थः । पञ्च यजूंषि लिङ्गोक्तदेवतानि । ऋचमृग्रूपां वाचमहं प्रपद्ये प्रविशामि शरणं व्रजामि । यजुः यजूरूपं मनः प्रविशामि । प्राणं प्राणरूपं साम प्रपद्ये । चक्षुरिन्द्रियं श्रोत्रेन्द्रियं च प्रपद्ये । वागादिग्रहणं सप्तदशावयवोपलक्षणम् । सप्तदशावयवं प्रजापतेर्लिङ्गं प्रपद्ये इत्यर्थः । त्रयीविद्यां लिङ्गशरीरं च प्रपन्नं प्रवर्ग्यो न नाशयेदिति भावः । तथा वागिन्द्रियमोजो मानसं बलं धार्ष्ट्यम् । पुनरोजोग्रहणाच्छारीरं च बलम् । प्राणापानौ उच्छ्वासनिश्वासवायू च एते सह एकीभूताः सन्तो मयि वर्तन्ते । अतोऽपि प्रवर्ग्योऽस्मान्न हन्तीति भावः ॥ १ ॥

## द्वितीया ।

यन्मे॑ छि॒द्रं चक्षु॑षो॒ हृद॑यस्य॒ मन॑सो॒ वाति॑तृण्णं॒ बृह॒स्पति॑र्मे॒ तद्द॑धातु । शं नो॑ भवतु॒ भुव॑नस्य॒ यस्पतिः॑ ॥ २ ॥

**उ०** यन्मे बार्हस्पत्या पङ्क्तिः । यन्मे मम । छिद्रं अवखण्डितम् चक्षुषः हृदयस्य वा । हृदयग्रहणेन बुद्धिरुक्ता । मनसो वा अतितृण्णं अतिहिंसितम् प्रवर्ग्याचरणेन । बृहस्पतिः मम तत् दधातु । अथैवं बृहस्पत्यनुगृहीतानाम् । शं नः सुखरूपोऽस्माकं भवतु । भुवनस्य भूतजातस्य यः पतिः योऽधिपतिः प्रवर्ग्यरूपो यज्ञः ॥ २ ॥

**म०** बृहस्पतिदेवत्या पङ्क्तिः । मे मम चक्षुषः चक्षुरिन्द्रियस्य यत् छिद्रमवखण्डनं जातं प्रवर्ग्याचरणेन । हृदयस्य बुद्धेर्वा यत् छिद्रं जातम् । मनसो वा यत् अतितृण्णमतिहिंसितम् प्रवर्ग्याचरणेन यत् चक्षुर्बुद्धिमनसां व्याकुलत्वं जातम् बृहस्पतिर्देवगुरुः मे मम तत् छिद्रमतितृण्णं च दधातु संदधातु छिद्रं निवर्तयतु । भुवनस्य भूतजातस्य यः पतिरधिपतिः प्रवर्ग्यरूपो यज्ञः स नोऽस्माकं शं सुखरूपो भवतु । बृहस्पतिना छिद्रापाकरणात्प्रवर्ग्यः कल्याणरूपोऽस्त्वित्यर्थः ॥ २ ॥

## तृतीया ।

भूर्भुवः॒ स्वः॑ तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ ३ ॥

**उ०** भूर्भुवः स्वः यजूंषि । तत्सवितुरिति कयानस्तिस्रश्च व्याख्याताः । ऋषिकृतो विशेषः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

**म०** भूर्भुवः स्वः त्रीणि यजूंषि । तत्सवितुः, कया नः, कस्त्वा, अभी षु णः, एताश्चतस्र ऋचो व्याख्याताः [ ३, ३५ । २७, ३९—४१ ] अभी षु ण इत्यस्यामृचि शतं भवास्यूतिभिरिति बहुवचनम् । पूर्वमूतय इत्येव पाठः । ऊतिभिः अवनैर्हेतुभिः शतमसंख्यरूपो भवसीत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

## चतुर्थी ।

कया॑ नश्चि॒त्र आ भु॑वदू॒ती स॒दावृ॑धः॒ सखा॑ । कया॒ शचि॑ष्ठया वृ॒ता ॥ ४ ॥

## पञ्चमी ।

कस्त्वा॑ स॒त्यो मदा॑नां॒ मᳬहि॑ष्ठो मत्स॒दन्ध॑सः । दृ॒ढा चि॑दा॒रुजे॒ वसु॑ ॥ ५ ॥

## षष्ठी ।

अ॒भी षु णः॒ सखी॑नामवि॒ता ज॑रितॄ॒णाम् । श॒तं भ॑वास्यू॒तिभिः॑ ॥ ६ ॥

## सप्तमी ।

क॒या त्वं न॑ ऊ॒त्याभि प्र म॑न्दसे वृषन् । कया॑ स्तो॒तृभ्य॒ आ भ॑र ॥ ७ ॥

**उ०** कया त्वम् । गायत्री । ऐन्द्री अनिरुक्ता । हे इन्द्र, कया ऊत्या केन वा गमनेन त्वम् नः अस्मान् अभिप्रमन्दसे अभिमोदयसि हर्षयसि । हे वृषन् सेक्तः, कया च ऊत्या केन वा गमनेन स्तोतृभ्यः दातुं धनानि आभर आहरसि । लडर्थे लोट् । तत्कथय । येन तथानुतिष्ठामः ॥ ७ ॥

**म०** इन्द्रदेवत्या गायत्री अनिरुक्तेन्द्रपदहीना । आद्यपादे व्यूहद्वयम् । हे वृषन् वर्षतीति वृषा हे सेक्तः इन्द्र, 'वासवो वृत्रहा वृषा' इत्यभिधानम् । कया ऊत्या केन तर्पणेन हविर्दानेन नोऽस्मानभिप्रमन्दसे अभिमोदयसि । 'मदिस्तु स्वपने जाड्ये मदे मोदे स्तुतौ गतौ' लट् । कया च ऊत्या तृप्त्या स्तोतृभ्यः स्तुतिकर्तृभ्यो यजमानेभ्यः आभर आहर आहरसि । धनं दातुमिति शेषः । तद्वयेन तथा वयं कुर्म इति भावः । आभरेति लडर्थे लोट् ॥ ७ ॥

## अष्टमी ।

इन्द्रो॒ विश्व॑स्य राजति । शं नो॑ अस्तु द्वि॒पदे॒ शं चतु॑ष्पदे ॥ ८ ॥

उ० इन्द्रो विश्वस्य द्विपदा विराट् । योयं महावीर इन्द्र आदित्यो वा । कस्याधिष्ठात्री देवता । विश्वस्य जगतः राजति देदीप्यते ईष्टे वा । तस्य प्रसादात् । अस्माकम् अस्तु द्विपदे शं चतुष्पदे । द्विपदां चतुष्पदां चेति विभक्तिव्यत्ययः ॥८॥

म० द्विपदा विराट् इन्द्रदेवत्या । विंशत्यक्षरा द्विपदा विराट् कथ्यते । विश्वस्य सर्वस्य जगतः इन्द्रः 'इदि परमैश्वर्ये' इन्दतीतीन्द्रः परमेश्वरः महावीरः आदित्यो वा यो राजति देदीप्यते ईष्टे वा स नोऽस्माकं द्विपदे । विभक्तिव्यत्ययः । द्विपदां पुत्रादीनां शं सुखरूपोऽस्तु । चतुष्पदे चतुष्पदां गवादीनां च शं सुखरूपोऽस्तु ॥ ८ ॥

## नवमी ।

शं नो॑ मि॒त्रः शं वरु॑णः॒ शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पतिः॒ शं नो॒ विष्णु॑रुरुक्र॒मः ॥ ९ ॥

उ० शं नो मित्रः । द्वे अनुष्टुभौ । महावीरप्रसादात् आद्यौ च । शं सुखरूपः नोऽस्माकं भवतु मित्रः । शं च नः वरुणः भवतु । शं च नः भवतु अर्यमा शं च नः इन्द्रः बृहस्पतिः शं च नः विष्णुः उरुक्रमः उरु विस्तीर्णः क्रमो यस्य स उरुक्रमः । शेषं दर्शितया व्याख्येयम् ॥ ९ ॥

म० द्वे अनुष्टुभौ मित्रवरुणादयो देवताः । मित्रो देवो नोऽस्माकं शं सुखरूपो भवतु महावीरप्रसादात् । मेद्यति भक्तेषु स्निह्यतीति मित्रः । वरुणः शं सुखरूपो भवतु । वृणोत्यङ्गीकरोति भक्तमिति वरुणः । अर्यमा नोऽस्माकं शं भवतु । इयर्ति गच्छति भक्तं प्रतीत्यर्यमा । इन्द्रो देवेशो नोऽस्माकं शं भवतु । बृहस्पतिर्देवगुरुर्नः शं भवतु । बृहतां वेदानां पतिः पालकः । उरुर्विस्तीर्णः क्रमः पादन्यासो यस्य स विष्णुः नोऽस्माकं शं भवतु । वेवेष्टि व्याप्नोतीति विष्णुः ॥ ९ ॥

## दशमी ।

शं नो॒ वातः॑ पवता॒ꣳ शं न॑स्तपतु॒ सूर्यः॑ । शं नः॒ कनि॑क्रदद्दे॒वः प॒र्जन्यो॑ अ॒भिव॑र्षतु ॥ १० ॥

उ० शं नः शं सुखरूपः नोऽस्माकम् वातः अपरुषः अव्याधिजनकश्च पवतां वातु । शं सुखरूपः अदहनः भेषजरूपश्च नोऽस्माकं तपतु सूर्यः । शं नः सुखरूपश्चास्माकम् । पर्जन्यो देवः काशनिक्षाररहितं पवित्रमुदकम् भेषजकर्तृ अभिवर्षतु । कनिक्रदत् । स्तनयित्नु शब्दं कुर्वन् ॥ १० ॥

म० वातो वायुर्नोऽस्माकं शं सुखकारः अपरुषः अव्याधिजनकश्च पवतां वहताम् । 'पव गतौ' लोट् । सुवति जनान् स्वस्वव्यापारेषु प्रेरयति सूर्यः शं सुखरूपोऽदहनो भेषजरूपश्च नोऽस्माकं तपतु किरणान्प्रसारयतु । पर्जन्यः पिपर्ति पूरयति जनमिति पर्जन्यः, परोऽम्भःपूरो जन्यतेऽनेन वा । 'पर्जन्यौ रसदब्देन्द्रौ' इत्यभिधानम् । पर्जन्यः पर्जन्येशो देवः नोऽस्माकं शं सुखकरं काशनिक्षाररहितं यथा तथा अभिवर्षतु सिञ्चतु । कीदृशः । कनिक्रदत् अत्यन्तं क्रन्दतीति शब्दं कुर्वन् 'दाधर्तिदर्धर्ति–' ( पा० ७ । ४ । ६५ ) इत्यादिना यङ्लुगन्तो निपातः ॥ १० ॥

## एकादशी ।

अहा॑नि॒ शं भव॑न्तु नः॒ शꣳ रात्रीः॒ प्रति॑धीयताम् । शं न॑ इन्द्रा॒ग्नी भ॑वता॒मवो॑भिः॒ शं न॒ इन्द्रा॒वरु॑णा॒ रातह॑व्या । शं न॑ इन्द्रापू॒षणा॒ वाज॑सातौ॒ शमिन्द्रा॒सोमा॑ सुवि॒ताय॒ शं योः ॥ ११ ॥

उ० अहानि शम् द्विपदा गायत्री । अहानि दिवसाः शं सुखरूपाः भवन्तु नोऽस्माकम् । शं सुखरूपाः रात्रीः प्रतिधीयतां प्रतिदधात्वस्मासु महावीरः । शं सुखरूपौ च इन्द्राग्नी भवताम् अवोभिः पालनैः सह । शं नः सुखरूपौ चास्माकम् । इन्द्रावरुणा इन्द्रावरुणौ । रातहव्या दत्तहविष्कौ भवताम् । शं नः सुखरूपौ चास्माकं इन्द्रापूषणौ भवताम् । वाजसातौ अन्नसंभजने निमित्तभूते । शं सुखरूपौ च इन्द्रासोमौ भवताम् सुविताय साधुगमनाय साधुप्रसवाय वा । शं योः शमनाय रोगाणां यावनाय पृथक्करणाय च भयानाम् ॥ ११ ॥

म० द्विपदा गायत्री । अहानि रात्रयश्च देवताः । अहानि दिनानि नोऽस्माकं शं सुखरूपाणि भवन्तु । रात्रीः शं सुखरूपाः अस्मासु प्रतिधीयतां प्रतिदधातु । महावीर इति शेषः । कर्तरि यक् छान्दसः । शं न इन्द्राग्नी त्रिष्टुप् । इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवताः । इन्द्राग्नी अवोभिः पालनैः कृत्वा नोऽस्माकं शं सुखरूपौ भवताम् । रातं दत्तं हव्यं ययोस्तौ रातहव्यौ हविस्तृप्तौ इन्द्रावरुणौ नः शं भवताम् । वाजसातौ वाजस्यान्नस्य सातौ दाने निमित्तभूते इन्द्रापूषणा इन्द्रपूषसंज्ञौ देवौ नोऽस्माकं सुखरूपौ भवताम् । इन्द्रासोमा इन्द्रसोमौ देवौ शं सुखरूपौ भवताम् । किमर्थम् । सुविताय सुष्ठु इतं सुवितम् साधुगमनाय साधुप्रसवाय वा । तथा शं रोगाणां शमनाय । याः यवनाय पृथक्करणाय च भयानाम् । रोगं भयं च निवर्त्य सुखरूपौ भवतामित्यर्थः । 'देवताद्वन्द्वे च' (पा० ६ ३ । २६ ) इति सर्वत्र पूर्वपदस्य दीर्घः ॥ ११ ॥

## द्वादशी ।

शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ । शं योर॒भिस्र॑वन्तु नः ॥ १२ ॥

उ० शं नो देवीः । अब्देवत्या गायत्री । सुखरूपा अस्माकम् देवीः देव्यः अभिष्टये अभिषेकाय अभीष्टाय वा । आपः भवन्तु पीतये पानाय च । शं योः शमनाय रोगाणां पृथक्करणाय भयानां वा । अभिस्रवन्तु नः अस्माकम् ॥ १२ ॥

**म०** अब्देवत्या गायत्री । देवीः देव्यो दीप्यमाना अपो नोऽस्माकमभिष्टये अभिषेकायाभीष्टाय वा पीतये पानाय च शं सुखरूपा भवन्तु । अस्माकं स्नाने पाने चापः सुखयित्र्यो भवन्तु । आपः शं योः रोगाणां शमनं भयानां यवनं पृथक्करणं च अभिस्रवन्तु । नोऽस्माकं भयरोगनाशं कुर्वन्त्वित्यर्थः १२

## त्रयोदशी ।

स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥ १३ ॥

**उ०** स्योना पृथिवीति व्याख्यातम् ॥ १३ ॥

**म०** स्योना पृथिवि । व्याख्याता [अ० ३५ । क० २१] ॥ १३ ॥

## चतुर्दशी ।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १४ ॥

**उ०** आपो हिष्ठेति तिस्रश्च व्याख्याताः ॥ १४ ॥ ॥ १५ ॥ १६ ॥

**म०** आपो हि ष्ठा तृचो व्याख्यातः [अ० ११ । क० ५०–५२] ॥ १४ ॥ १५ ॥ १६ ॥

## पञ्चदशी ।

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ १५ ॥

## षोडशी ।

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ १६ ॥

## सप्तदशी ।

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १७ ॥

**उ०** द्यौः शान्तिः । या द्युलोकरूपा शान्तिः या चान्तरिक्षरूपा शान्तिः । या च पृथिवी । आपः ओषधयः वनस्पतयः विश्वेदेवाः ब्रह्म त्रयीलक्षणं परं वा । सर्वशान्तिः या च शान्तिरेव शान्तिः स्वरूपत एव शान्तिः । सा । मा मां शान्तिः एधि । अस्त्विति पुरुषव्यत्ययः । त्वत्प्रसादादित्यपेक्षा ॥ १७ ॥

**म०** यजूंषि संदृशि जीव्यासमित्यन्तानि (क० १९)। एकाधिका शक्करी । द्यौः द्युलोकरूपा या शान्तिः अन्तरिक्षरूपा च या शान्तिः पृथिवी भूलोकरूपा या शान्तिः आपो जलरूपा या शान्तिः ओषधयः ओषधिरूपा या शान्तिः वनस्पतयः वृक्षरूपा या शान्तिः विश्वेदेवाः सर्वदेवरूपा या शान्तिः ब्रह्म त्रयीलक्षणं परं वा तद्रूपा या शान्तिः सर्वं सर्वजगद्रूपा या शान्तिः शान्तिरेव शान्तिः या स्वरूपतः शान्तिः सा शान्तिः मा मां प्रति एधि अस्तु । पुरुषव्यत्ययः । महावीरप्रसादात्सर्वं शान्तिरूपं मां प्रत्यस्त्वित्यर्थः । यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययः सप्तम्यर्थे प्रथमा । दिव्यन्तरिक्षे पृथिव्यामप्स्वोषधिषु वनस्पतिषु विश्वदेवेषु ब्रह्मणि सर्वस्मिंश्च या शान्तिः सा मां प्रत्यस्त्वित्यर्थः ॥ १७ ॥

## अष्टादशी ।

दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे १८

**उ०** दृते दृꣳहमा । दृते यजुः । 'दॄ विदारणे' विदीर्णेऽपि शरीरे जरया । दृंह दृढीकुरु माम् । कथमिति चेत् । मित्रस्य मा चक्षुषा सर्वाणि भूतानि सं ईक्षन्तां पश्यन्तु । अहमपि मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे पश्यामि । शान्तं हि मित्रस्य चक्षुः । न वै मित्रं कंचन हिनस्ति । न मित्रः कंचन हिनस्तीति । एवमहिंस्यमाना अहिंसन्तश्च परस्परमद्रोहेण सर्वथा मित्रस्य चक्षुषा समीक्षामहे ॥ १८ ॥

**म०** दृते 'दॄ विदारे' विदीर्णे जराजर्जरितेऽपि शरीरे हे महावीर, मा मां त्वं दृंह दृढीकुरु । यद्वा दृते विदीर्णे कर्मणि मां दृंह अच्छिद्रं कर्म कुरु । यद्वा ससुषिरत्वात् सेक्तृत्वाच्च दृतिशब्देन महावीरः । हे दृते महावीर, मां दृंह दृढीकुरु । कथं दार्ढ्यं तदाह । सर्वाणि भूतानि प्राणिनो मा मां मित्रस्य चक्षुषा समीक्षन्तां सम्यक् पश्यन्तु मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या । सर्वेषां प्रियो भूयासमित्यर्थः । किंच अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे पश्यामि सर्वे मे प्रियाः सन्तु । मित्रचक्षुः शान्तं भवति । मित्रः कंचन न हन्ति मित्रं च कश्चन न हन्ति एवं परस्पराद्रोहेण सर्वानहिंसन्तो मित्रस्य चक्षुषा वयं समीक्षामहे पश्यामः ॥ १८ ॥

## एकोनविंशी ।

दृते दृंह मा० । ज्योक्ते संदृशि जीव्यासं ज्योक्ते संदृशि जीव्यासम् ॥ १९ ॥

**उ०** दृते दृꣳह । यजुः । दृते दृꣳहमा । अतिशयार्थं पुनर्वचनम् । ज्योक् चिरम् ते तव संदृशि संदर्शने । जीव्यासं जीवेयम् । आदरार्थं पुनर्वचनम् ॥ १९ ॥

**म०** हे दृते वीर, मां दृंह । आदरार्थं पुनर्वचनम् । हे महावीर, ते तव संदृशि संदर्शने अहं ज्योक् चिरं जीव्यासं जीवेयम् । जीवेराशीर्लिङि रूपम् । ज्योगिति निपातश्चिरार्थः । पुनरुक्तिरादरार्था । ते संदृशि ज्योग्जीव्यासम् ॥ १९ ॥

## विंशी ।

नम॑स्ते॒ हर॑से शो॒चिषे॒ नम॑स्ते अस्त्व॒र्चिषे॑ । अ॒न्याँस्ते॑ अ॒स्मत्त॑पन्तु हे॒तय॑: पाव॒को अ॒स्मभ्य॑ꣳ शि॒वो भ॑व ॥ २० ॥

उ० नमस्ते हरसे इति व्याख्यातम् ॥ २० ॥

म० नमस्ते व्याख्याता [ अ० १७ । क० ११ ] ॥ २० ॥

## एकविंशी ।

नम॑स्ते अस्तु वि॒द्युते॒ नम॑स्ते स्तनयि॒त्नवे॑ । नम॑स्ते भगवन्नस्तु य॒तः स्वः॑ स॒मीह॑से ॥ २१ ॥

उ० नमस्ते । द्वे अनुष्टुभौ । नमः ते तुभ्यं अस्तु । विद्युते विद्युद्रूपाय । नमस्ते स्तनयित्नवे स्तनयित्नुरूपाय नमः ते हे भगवन्, अस्तु । यतः यस्मात् स्वः स्वर्गं लोकं गन्तुम् समीहसे चेष्टसे । अमर्त्यस्त्वमित्यभिप्रायः ॥ २१ ॥

म० द्वे अनुष्टुभौ विद्युत्स्तनयित्नुरूपभगवद्देवते । हे भगवन् महावीर, विद्युते विद्युद्रूपाय ते तुभ्यं नमोऽस्तु । स्तनयित्नवे स्तनयित्नुर्गर्जितं तद्रूपाय ते नमोऽस्तु । यतः कारणात् स्वः स्वर्गं गन्तुं त्वं समीहसे चेष्टसे अतस्ते तुभ्यं नमोऽस्तु॥२१॥

## द्वाविंशी ।

यतो॑ यतः स॒मीह॑से॒ ततो॑ नो॒ अभ॑यं कुरु । शं नः॑ कुरु प्र॒जाभ्यो॒ऽभ॑यं नः प॒शुभ्य॑: ॥ २२ ॥

उ० यतो यतः यस्माद्यस्मात् दुश्चरितात् अपाकर्तुं समीहसे चेष्टसे ततस्ततः नः अस्माकम् अभयं भयरहितं कुरु । किंच । शं नः सुखमस्माकम् कुरु प्रजाभ्यः । अभयं नः पशुभ्यः कुरु ॥ २२ ॥

म० हे महावीर, यतो यतः यस्माद्यस्माद् दुश्चरितात्त्वं समीहसे अस्मास्वपकर्तुं चेष्टसे ततस्ततो नोऽस्माकमभयं कुरु । किंच नोऽस्माकं प्रजाभ्यः शं सुखं कुरु । नोऽस्माकं पशुभ्यः चाभयं भीत्यभावं कुरु ॥ २२ ॥

## त्रयोविंशी ।

सु॒मि॒त्रि॒या न॒ आप॒ ओष॑धयः सन्तु दु॒र्मि॒त्रि॒यास्तस्मै॑ सन्तु॒ यो॒ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः ॥२३॥

उ० इत उत्तरं यजूंषि व्याख्यायन्ते आअध्यायात् । तत्र सुमित्रिया न इति व्याख्यातम् ॥ २३ ॥

म० यजुः । व्याख्यातम् [ अ० ६ । क० २२ ] ॥ २३ ॥

## चतुर्विंशी ।

तच्चक्षु॑र्दे॒वहि॑तं पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त् । पश्ये॑म श॒रद॑: श॒तं जीवे॑म श॒रद॑: श॒तꣳ शृणु॑याम श॒रद॑: श॒तं प्र ब्र॑वाम श॒रद॑: श॒तमदी॑नाः स्याम श॒रद॑: श॒तं भूय॑श्च श॒रद॑: श॒तात् ॥ २४ ॥



इति माध्यन्दिनीयायां वाजसनेयिसंहितायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥

उ० तच्चक्षुः । योयं महावीरोऽस्माभिः स्तुतः । तत् आदित्यरूपं चक्षुः । देवहितं देवैर्निहितं स्थापितम् देवानां वा हितम् । पुरस्तात् प्राच्यां दिशि । शुक्रं शुक्रम् असंसृष्टं पाप्मभिः । शोचिष्मद्वा । उच्चरत् उदितम् । तत्प्रसादाच्च । पश्येम शरदः शतम् । जीवेम शरदः शतम् । शृणुयाम शरदः शतम् । प्रब्रवाम शरदः शतम् । अस्खलितवागिन्द्रिया भवामः । अदीनाः स्याम शरदः शतम् । भूयश्च बहुतरं कालं च शरदः शतात् ॥ २४ ॥

इति उवटकृतौ मन्त्रभाष्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

म० सूर्यदेवत्या ब्राह्मी त्रिष्टुप् । एतैर्मन्त्रैर्यो महावीरोऽस्माभिः स्तुतः तत् चक्षुः जगतां नेत्रभूतमादित्यरूपं पुरस्तात् पूर्वस्यां दिशि उच्चरत् उच्चरति उदेति 'इतश्च लोपः परस्मैपदेषु' ( पा० ३ । ४ । ९७ ) इतीकारलोपः । कीदृशं तत् । देवहितं देवैर्हितं स्थापितम् । यद्वा देवानां हितं प्रियम् शुक्रं शुक्रं पापासंसृष्टं शोचिष्मद्वा । तस्य प्रसादात् शतं शरदः वर्षाणि वयं पश्येम शतवर्षपर्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम । प्रार्थनायां लिङ् । अत्यन्तसंयोगे द्वितीया । शतं शरदः जीवेम अपराधीनजीवना भवेम । शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम । शतं शरदः प्रब्रवाम अस्खलितवागिन्द्रिया भवेम । शतं शरदः अदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्याम । शतात् शरदः शतवर्षोपर्यपि भूयश्च बहुकालं पश्येमेत्यादि योज्यम् ॥ २४ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अध्यायः शान्तिपाठार्थः षट्त्रिंशोऽयं प्रकाशितः ॥ ३६ ॥

---

# सप्तत्रिंशोऽध्यायः ।

## तत्र प्रथमा ।

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । आद॑दे॒ नारि॑रसि ॥ १ ॥

उ० महावीरसंभरणं अभ्यादानम् । देवस्य त्वेति व्याख्यातम् । नारिरसीति विशेषः ॥ १ ॥

म० 'देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीꣳ सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति' ( का० २६ । १ । ३ ) । उदुम्बरतरूत्थां विकङ्कततरूत्थां वा हस्तप्रमाणामभ्रिं देवस्य त्वा नारिरसीति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा युञ्जते मन इति मन्त्रं जपतीति सूत्रार्थः । देवस्य त्वा । अभ्रिदेवत्यं यजुः । हे अभ्रे, सवितुर्दे-

वस्त्राज्ञायां स्थितोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे गृह्णामि । त्वं च नारिरसि स्त्रीनाम्नी भवसि । युञ्जते मनः । व्याख्याता [ अ० ५ । क० १४ ] ॥ १ ॥ २ ॥

## द्वितीया ।

युञ्जते मनं उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ २ ॥

उ० आलभ्य जपति । युञ्जते मन इति व्याख्यातम् ॥२॥

## तृतीया ।

देवी द्यावापृथिवी मुखस्य वामद्य शिरो राध्यासं देवयजने पृथिव्याः । मुखाय त्वा मुखस्य त्वा शीर्ष्णे ॥ ३ ॥

उ० मृत्पिण्डान्परिगृह्णाति । देवी द्यावापृथिवी । हे देव्यौ द्यावापृथिव्यौ, मखस्य यज्ञस्य वां युवाम् उपादाय । मृदं चोदकं चादायेत्यर्थः । अद्य शिरः राध्यासम् । 'राध साध संसिद्धौ' संसाधयेयम् । देवयजने देवा अस्मिन्निज्यन्ते इति देवयजनम् । पृथिव्याः मखाय यज्ञाय त्वा परिगृह्णामि । ततोऽपि विशेषापेक्षायामाह । मखस्य शीर्ष्णे त्वां परिगृह्णामीति ॥ ३ ॥

म० द्यावापृथिवीदेवतं यजुः ब्राह्मी गायत्री । 'मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति' ( का० २६ । १ । ४ ) । अध्वर्युर्देवीति मन्त्रेण विषणं मृत्पिण्डमादत्ते पिण्डवदिति पाणिभ्यां गृह्णाति दक्षिणः साभ्रिरिति लभ्यत इति सूत्रार्थः । मन्त्रार्थस्तु हे देवी देव्यौ दीप्यमाने द्यावापृथिव्यौ, अद्यास्मिन्दिने पृथिव्याः देवयजने देवा इज्यन्ते अत्रेति देवयजनस्थाने मखस्य यज्ञस्य शिरो राध्यासं साधयेयम् 'राध साध संसिद्धौ' । महावीरो यज्ञशिराः । किं कृत्वा । वां युवां द्यावापृथिव्यौ आदायेति शेषः । दिवोंऽशं जलं पृथिव्यंशं मृदमादायेत्यर्थः । एवं द्यावापृथिव्यौ प्रार्थ्य मृदमाह । मखाय हे मृत्, यज्ञाय त्वां गृह्णामि । एवं सामान्येनोक्त्वा विशेषमाह । मखस्य यज्ञस्य शीर्ष्णे शिरसे महावीराय त्वां गृह्णामीति शेषः । तं मृत्पिण्डमुत्तरस्यापिते कृष्णाजिने निदध्यात् ॥ ३ ॥

## चतुर्थी ।

देव्यो वम्र्यो भूतस्य प्रथमजा मुखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः । मुखाय त्वा मुखस्य त्वा शीर्ष्णे ॥ ४ ॥

उ० अथ वल्मीकवपां गृह्णाति । देव्यो वम्र्यः । हे देव्यः वम्र्यः । उपजिह्विकाः सीमका इति पर्यायाः । या यूयं भूतस्य प्रथमजाः । पृथिवी भूतानां प्रथमजा तत्संबन्धाद्वम्र्योऽपि प्रथमजा उच्यन्ते । मखस्य शिरः राध्यासम् अद्य वः ताः युष्मान् उपादायेति शेषः । देवयजन इत्यादि व्याख्यातम् ॥ ४ ॥

म० 'उत्तरतो देव्यो वम्र्य इति वल्मीकवपाम्' ( का० २६ । १ । ५—६ ) । उपदीकृतो मृत्संचयो वल्मीकस्तस्य वपेव वपा तां मध्यस्थं लोष्टमादाय कृष्णाजिने मृत्पिण्डादुत्तरे तूष्णीं निदध्यादिति सूत्रार्थः । वल्मीकवपादेवता आर्षी पङ्क्तिः । हे देव्यो दीप्यमानाः वम्र्यः उपजिह्विकाः, वो युष्मानादाय पृथिव्याः देवयजने मखस्य शिरो महावीरमद्य राध्यासं संपादयेयम् । मखाय त्वामाददे मखस्य शीर्ष्णे त्वामाददे इति व्याख्यातम् । किंभूता वम्र्यः । भूतस्य प्राणिजातस्य प्रथमजाः प्रथमोत्पन्नाः पृथिवी जन्तूनां प्रथमजा तत्संबन्धात् वम्र्योऽपि प्रथमजा उच्यन्ते ॥ ४ ॥

## पञ्चमी ।

इयत्यग्र आसीन्मुखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः । मुखाय त्वा मुखस्य त्वा शीर्ष्णे ॥ ५ ॥

उ० वराहविहतमादत्ते । इयत्यग्रे । युष्मदः संबन्धान्मध्यमोऽत्र पुरुषः । या त्वम् इयती प्रादेशमात्रा अभिनयेन निर्दिश्यते । अग्रे वराहस्योद्धरतः आसीत् आसीः अभूः । 'इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री' इत्युपक्रम्य 'वराह उज्जघान' इत्याह । तां त्वां ब्रवीमि । मखस्य ते त्वामुपादाय अद्य शिरः राध्यासं देवयजने पृथिव्याः । मखाय त्वेति व्याख्यातम् ॥ ५ ॥

म० 'इयत्यग्र इति वराहविहतम्' ( का० २६ । १ । ७ ) वराहोत्खातमृदमादाय तूष्णीं कृष्णाजिने वल्मीकवपोत्तरे निदध्यादिति सूत्रार्थः । वराहविहतमृद्देवतं यजुः ब्राह्मी गायत्री । हे पृथिवि, भवती अग्रे आदौ वराहोद्धरणसमये इयती । प्रादेशमात्राभिनयेन प्रदर्श्यते । एतत्प्रमाणा आसीत् 'इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री' (१४ । १ । २ । ११) इत्यादि 'वराह उज्जघाने'ति श्रुतेः । ते इति द्वितीयार्थे षष्ठी । तां त्वामादाय पृथिव्याः देवयजनेऽद्य मखस्य शिरो राध्यासम् । मखायेति व्याख्यातम् ॥ ५ ॥

## षष्ठी ।

इन्द्रस्यौजः स्थ मुखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः । मुखाय त्वा मुखस्य त्वा शीर्ष्णे । मुखाय त्वा मुखस्य त्वा शीर्ष्णे । मुखाय त्वा मुखस्य त्वा शीर्ष्णे ॥ ६ ॥

उ० आदारानादत्ते । इन्द्रस्यौजःस्थ ये यूयं इन्द्रस्य ओजो भवथ । तान्युष्मान् अद्य उपादाय शिरः राध्यासमित्यादि व्याख्यातम् । अजाक्षीरमादत्ते । मखाय त्वेत्युक्तम् । संभृतानभिमृशति । मखायत्वेत्युक्तम् ॥ ६ ॥

म० 'इन्द्रस्यौजः स्थेति पूतीकान्' (का० २६ । १ । ८) । पूतीकान् रोहिषतृणान्यादाय तूष्णीं कृष्णाजिने वराहविहतोत्तरे निदध्यादिति सूत्रार्थः । आद्यार्देवत्यमृक्त्रिष्टुप् । हे पूतीकाः, यूयमिन्द्रस्य ओजः तेजोरूपाः स्थ भवथ । वो युष्मानादाय पृथिव्याः देवयजने अद्य मखस्य शिरो राध्यासम् । मखाय वो गृह्णामि मखस्य शीर्ष्णे महावीराय च गृह्णामीत्युक्तम् । 'मखायेति पयः' (का० २६ । १ । ९) । पय आदाय तूष्णीं कृष्णाजिने पूतीकोत्तरे निदध्यादिति सूत्रार्थः । पयोदेवत्यम् । हे पयः, मखाय मखशीर्ष्णे त्वां गृह्णामि । तूष्णीं गवेधुका अपि ग्राह्याः । 'संभृतानभिमृशति मखायेति' (का० २६ । १ । ११) । संभृतान्संभारान्करेण स्पृशेदित्यर्थः । संभारदेवत्यम् । हे संभाराः, मखाय तच्छीर्ष्णे च वः स्पृशामि ॥ ६ ॥

## सप्तमी ।

प्रैतु ब्रह्म॑ण॒स्पति॒: प्र दे॒व्ये॒तु सू॒नृता॑ । अच्छा॑ वी॒रं नर्यं॑ प॒ङ्क्तिरा॑धसं दे॒वा य॒ज्ञं न॑यन्तु नः । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥ ७ ॥

उ० परिश्रितमभिगच्छन्तो जपन्ति । प्रैत्विति व्याख्यातम् । खरे सादयति । मखाय शिरोसीत्युक्तार्थम् । मृत्पिण्डमादाय महावीरं करोति । मखाय त्वेत्युक्तम् ॥ ७ ॥

म० 'कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति' (का० २६ । १ । १२) । अध्वर्युप्रतिप्रस्थात्रादयः कृष्णाजिनं समन्तादादाय प्रैत्विति जपन्तोऽन्तःपात्यादुत्तरे परिवृतं प्रति गच्छन्ति । पश्चारत्निमितः समचतुरस्रः प्राग्द्वारः सिकतोपकीर्णः पूर्वमेव कृतः सप्तभूसंस्कारसंस्कृतश्छादितप्रदेशः परिवृत उच्यत इति सूत्रार्थः । बृहती व्याख्याता [ अ० ३३ । क० ८९ ] । 'परिवृते निदधाति संभारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति' (का० २६ । १ । १३–१४)। अध्वर्युः कृष्णाजिनस्थानेव संभारान्परिवृते निदधाति । कीदृशे । उद्धतावोक्षिते उल्लिखितजलसिक्ते । एतत्संस्कारद्वयं पश्चाधिकं सिकतायुक्ते प्राग्द्वारे चेति सूत्रार्थः । हे संभाराः, मखाय युष्मान्निदधामि । 'संभारैः सꣳसृजति मखायेति' (का० २६ । १ । १५) । गवेधुकाजापयसी पृथक्कृत्य वल्मीकवपादित्रिसंभारैर्मृत्पिण्डं मिश्रयतीत्यर्थः । हे संभाराः, युष्मान् मखाय मृत्पिण्डेन संसृजामि । 'मृदमादाय मखायेति महावीरं करोति प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्तं मध्यसंगृहीतमूर्ध्वं मेखलायास्त्र्यङ्गुलम्' (का० २६ । १ । १६) । महावीरपर्याप्तं तूष्णीं मृत्पिण्डमादाय मन्त्रेण महावीरं करोति । कीदृशम् । प्रादेशोच्चं गर्तवन्तं मेखलायुतं मध्ये संकुचितं मेखलोपरि त्र्यङ्गुलोच्चमिति सूत्रार्थः । हे महावीर, मखाय तच्छीर्ष्णे त्वां करोमि ॥ ७ ॥

## अष्टमी ।

म॒खस्य॒ शिरो॑ऽसि । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खस्य॒ शिरो॑ऽसि । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खस्य॒ शिरो॑ऽसि । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥ ८ ॥

उ० निष्ठितमभिमृशति । मखस्य शिरोसीत्युक्तार्थम् । एवं द्वितीयतृतीयौ । गवेधुकाभिः श्लक्ष्णयति । मखाय त्वेति त्रिभिर्मन्त्रैस्त्रीन्महावीरान् ॥ ८ ॥

म० 'निष्ठितमभिमृशति मखस्य शिर इति' (का० २६ । १ । १७) । निष्पन्नं महावीरं वामकरस्थं दक्षिणेन स्पृशतीत्यर्थः । हे महावीर, त्वं मखस्य शिरो मूर्धासि भवसि । 'एवमितरौ प्रतिमन्त्रम्' (का० २६ । १ । १९) । इतरौ द्वौ महावीरौ प्रतिमन्त्रमेवमेव करोति अभिमृशति चेत्यर्थः । मखाय द्वितीयं महावीरं करोमि । मखस्य निष्पन्नं स्पृशामि । मखाय तृतीयं महावीरं करोमि । मखस्येति निष्पन्नं स्पृशति । मखस्य शिरोऽसि मखाय त्वा मखस्य शीर्ष्णे त्वामभिमृशामि । 'गवेधुकाभिः श्लक्ष्णयति मखायेति प्रतिमन्त्रम्' (का० २६ । १ । २२) गवेधुकाभिः महावीरान् घर्षणेन मृदून् करोति मखायेति प्रतिमन्त्रमेकैकम् । मखाय मखस्य शीर्ष्णे च त्वां गवेधुकाभिः श्लक्ष्णयामि । एवमग्रिमौ मन्त्रौ ॥ ८ ॥

## नवमी ।

अश्व॑स्य त्वा॒ वृष्ण॑: श॒क्ना धू॑पयामि देव॒यज॑ने पृथि॒व्याः । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । अश्व॑स्य त्वा॒ वृष्ण॑: श॒क्ना धू॑पयामि देव॒यज॑ने पृथि॒व्याः ॥ म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥ ९ ॥

उ० अश्वशकृतावधूपयति । अश्वस्य त्वा त्वां हे महावीर, वृष्णः सेक्तुः । शक्ना शकृच्छब्दस्य शकन्नादेशः । धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे । एवं द्वितीयतृतीयौ । श्रपयति त्रीन्महावीरान् त्रिभिर्मन्त्रैः मखाय त्वेति प्रतिमन्त्रम् ॥ ९ ॥

म० 'अश्वशकृता धूपयत्यश्वस्येति प्रतिमन्त्रम्' (का० २६ । १ । २३) । दक्षिणाग्निदीप्तेनाश्वपुरीषेण त्रिभिर्मन्त्रैस्त्रीन्महावीरान्धूपयेत् । एकैकधूपने सप्तसप्ताश्वशकृन्ति गृह्णाति । हे महावीर, पृथिव्याः देवयजने मखाय मखस्य शीर्ष्णे च वृष्णः सेक्तुरश्वस्य शक्ना शकृता पुरीषेण त्वा त्वां धूपयामि । 'पद्भ्न—'

( पा० ६ । १ । ६३ ) इति सूत्रेण शकृच्छब्दस्य शकन्नादेशः । एवमितरमन्त्राभ्यामितरौ धूपयेत् । 'प्रदहनं च मखायेति प्रतिमन्त्रम्' ( का० २६ । १ । २४ ) । मखायेति त्रिभिर्मन्त्रैस्त्रीन्महावीरानुखावच्छूपयेत् पिन्वनरौहिणैः सहेत्यर्थः । मखाय मखस्य शीर्ष्णे त्वा त्वां निर्दहामि । एवमितरौ ॥ ९ ॥

## दशमी ।

ऋजवे॑ त्वा साधवे॑ त्वा सुक्षित्यै॑ त्वा॑ । मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे । मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे । मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे ॥ १० ॥

उ० पक्वानुद्धरति । ऋजवे त्वेति प्रतिमन्त्रम् । ऋजवे त्वा । असौ वै लोक ऋजुः । सत्यमेव तत्र कौटिल्यरहितम् । सत्यं वा आदित्यः । ऋजवे त्वा आदित्याय त्वाम् उद्धरामीति शेषः । एष उ प्रथमः प्रवर्ग्यः । साधवे त्वा । अयं वै साधुर्वायुः । एष हीमान् लोकान् सिद्धोऽप्रतिहतः पवते । एष उ द्वितीयः प्रवर्ग्यः । सुक्षित्यै त्वा । अयं वै लोकः सुक्षितः । अस्मिन्हि लोके सर्वाणि भूतानि क्षियन्ति । अग्निर्हि वा सुक्षितः । अग्निर्हि अस्मिन् लोके सर्वाणि भूतानि परिगृह्य वसति । एष उ तृतीयः प्रवर्ग्यः । अजापयसा परिसिञ्चति महावीरान् मखाय त्वेति प्रतिमन्त्रम् ॥ १० ॥

महावीरसंभरणं समाप्तम् ।

म० 'पक्वानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम्' ( का० २६ । १ । २५ ) । पक्वान्महावीरानापाकादिवोद्धरति त्रिभिर्मन्त्रैरित्यर्थः । ऋजवे । असौ लोक ऋजुः तत्र सत्यमेव नतु कौटिल्यम् । सत्यमादित्यः । हे महावीर, ऋजवे सत्यायादित्याय त्वा त्वामुद्वपामीति शेषः । तथाच श्रुतिः 'स उद्वपत्यृजवे त्वेत्यसौ वै लोक ऋजुः सत्यꣳह्यृजुः सत्यमेष य एष तपत्येष उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्जवे त्वा' ( १४ । १ । २ । २२ ) इति । अथ द्वितीयम् । साधवे त्वा साधवे वायवेऽर्थाय वायुप्रीत्यै त्वामुद्वपामि । तथाच श्रुतिः 'साधवे त्वेत्ययꣳ साधुर्योऽयं पवत एष हीमान् लोकान् सिद्धोऽनुपवत एष उ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत् प्रीणाति तस्मादाह साधवे त्वा' ( १४ । १ । २ । २३ ) इति । अथ तृतीयम् । सुक्षित्यै त्वा सुतरां क्षियन्ति निवसन्ति सर्वभूतानि यस्यां सा सुक्षितिर्भूमिः । तथाच श्रुतिः 'सुक्षित्यै त्वेत्ययं वै लोकः सुक्षितिरस्मिन् हि लोके सर्वाणि भूतानि क्षियन्त्यथोऽग्निर्वै सुक्षितिरग्निर्वास्मिन् लोके सर्वाणि भूतानि क्षियत्येष उ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वा' ( १४ । १ । २ । २४ ) इति । अजापयसावसिञ्चति मखायेति प्रतिमन्त्रम्' ( का० २६ । १ । २६ ) । अजादुग्धेन त्रीन्महावीरांस्त्रिभिः तुल्यमन्त्रैः सिञ्चतीत्यर्थः । मखाय मखशीर्ष्णे चाजापयसा त्वां सिञ्चामीत्यर्थः ॥ १० ॥

इति महावीरसंभरणं समाप्तम् ।

## एकादशी ।

यमाय॑ त्वा मखाय॑ त्वा सूर्य॑स्य त्वा तप॑से । देवस्त्वा॑ सविता मध्वा॑नक्तु । पृथिव्याः सꣳस्पृश॑स्पाहि । अर्चिर॑सि शोचिर॑सि तपो॑ऽसि ॥ ११ ॥

उ० महावीरं प्रोक्षति । यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । प्रोक्षामीति शेषः । महावीरमनक्ति । देवस्त्वा सविता मध्वानक्तु इति व्याख्यातम् । रजतशतमानं खरे उपगूहति । पृथिव्याः सꣳस्पृशः । संस्पृशतीति संस्पृक् क्विबन्तस्यैतद्रूपम् । हे रजत, पृथिव्याः संस्पृशो राक्षसात् महावीरं पाहि गोपाय । महावीरमाज्यवन्तं निदधाति । अर्चिरसि शोचिरसि तपोसि ऋज्वर्थम् ॥ ११ ॥

म० ब्रह्मानुज्ञातो यमाय त्वेति महावीरं प्रोक्षति' । ( का० २६ । २ । १३ ) प्रचरेति ब्रह्मणानुज्ञातोऽध्वर्युरुपविश्य यमाय त्वेति मन्त्रत्रयेण प्रचरणीयं महावीरं वारत्रयं प्रोक्षतीत्यर्थः । त्रीणि यजूंषि । यमयति नियच्छति सर्वमिति यम आदित्यस्तत्प्रीत्यै त्वा त्वां प्रोक्षामि । तथाच श्रुतिः 'स प्रोक्षति यमाय त्वेत्येष वै यमो य एष तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह यमाय त्वा' ( १४ । १ । ३ । ४ ) इति । मखाय त्वा । मखो यज्ञः प्रवर्ग्यः सूर्यरूपस्तस्मै त्वां प्रोक्षामि । तथाच श्रुतिः 'एष वै मखो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत् प्रीणाति तस्मादाह मखाय त्वा' ( १४ । १ । ३ । ५ ) इति । सूर्यस्य त्वा तपसे । तपतीति तपस्तेजः । सूर्यतेजोरूपाय प्रवर्ग्याय त्वां प्रोक्षामि । तथाच श्रुतिः 'एष वै सूर्यो य एष तपत्येष उ प्रवर्ग्यस्तदेवमेवैतत्प्रीणाति तस्मादाह सूर्यस्य त्वा तपसा' ( १४ । १ । ३ । ६ ) इति । 'अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यं संस्कृत्य' ( का० २६ । २ । २० ) । होत्रा अञ्जन्ति यं प्रथयन्तीति मन्त्रे पव्यमानेऽध्वर्युराज्यं विधिना संस्कृत्य तेनाज्येन प्रचरणीयं महावीरं मन्त्रेणानक्ति । सविता देवः मध्वा मधुना मधुरेण सर्वजगद्रूपेणाज्येन हे महावीर, त्वामनक्तु लिम्पतु । मध्वेति नुमभाव आगमस्यानित्यत्वात् । तथाच श्रुतिः 'सर्वं वा इदं मधु यदिदं किंच तदेनमनेन सर्वेण समनक्ति' ( १४ । १ । ३ । १३ ) इति । 'रजतशतमानं खर उपगूहति पृथिव्याः सꣳस्पृश' ( का० २६ । २ । २१ ) इति । रजतस्य शतमानं शतरक्तिकामितं रजतं खरे सिकतान्तरुपगूहतीत्यर्थः । प्राजापत्या गायत्री रजतदेवत्या । संस्पृशति उपद्रवार्थं स्पर्शं करोतीति संस्पृक् राक्षसः क्विबन्तम् । पृथिव्याः संबन्धिनः संस्पृशः राक्षसात् महावीरं हे रजत, त्वं पाहि रक्ष । देवा राक्षसेभ्यो भीताः सन्तो यज्ञरक्षार्थमग्नेरपत्यं रजतं रक्षसां घाताय खरं निदधुः । अथ च पृथिवी महावीरपाकेऽग्नेर्भीता ततोऽसौ मा दह्यतामिति रजतं खरेऽन्तर्हितमिति श्रुतौ कथा । तथाच श्रुतिः 'देवा अबिभयुर्यद्वै न इममधस्ताद्रक्षाꣳसि नाष्ट्रा

न हन्युरित्यग्नेर्वा एतद्रेतो यद्धिरण्यं नाष्ट्राणाᳪ रक्षसामपहत्या इति' ( १४ । १ । ३ । १४ ) तथा 'अथो पृथिव्यु ह वा एतस्माद्बिभयांचकार यद्वै मायं तप्तः शूशुचानो न हिᳪस्यादिति तदेवास्या एतदन्तर्दधाति रजतम्' ( १४ । १ । ३ । १४ ) इति । 'सᳪसीदस्वेत्युच्यमाने मुञ्जप्रलवान्द्विगुणानादीप्य प्रतिदिशं खरे करोति तेषु महावीरमाज्यवन्तमार्चिरसीति' ( का० २६ । ३ । ३ । ४ ) । होत्रा संसीदस्वेति ( ११ । ३७ ) पठ्यमानेऽध्वर्युर्द्विगुणितान्मुञ्जखण्डान्गार्हपत्ये प्रदीप्य खरे चतुर्दिक्षु कृत्वा तेषु मुञ्जेषु संस्कृताज्यपूर्णं प्रचरणीयं महावीरं निदधातीति सूत्रार्थः । यजुस्त्रिष्टुप् घर्मदेवत्या । हे महावीर, त्वमर्चिश्चन्द्रकान्तिरूपोऽसि शोचिरग्नितेजोरूपोऽसि तपः सूर्यतापरूपोऽसि 'एष वै घर्मो य एष तपति सर्वं वा एतदेष तदेतमेवैतत् प्रीणाति' ( १४ । १ । ३ । १७ ) इति श्रुतेः 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (गीता १५ । १२) इति स्मृतेश्च ॥११॥

## द्वादशी ।

अना॑धृष्टा पु॒रस्ता॑द॒ग्नेराधि॑पत्य॒ आयु॑र्मे दाः । पु॒त्रव॑ती दक्षिण॒त इन्द्र॒स्याधि॑पत्ये॒ प्र॒जां मे॑ दाः । सु॒षदा॑ प॒श्चाद्दे॒वस्य॑ सवि॒तुराधि॑पत्ये॒ चक्षु॑र्मे दाः । आश्रु॑तिरुत्तर॒तो धा॒तुराधि॑पत्ये रा॒यस्पोषं॑ मे दाः । विधृ॑तिरु॒परि॑ष्टा॒द्बृह॒स्पते॒राधि॑पत्य॒ ओजो॑ मे दा॒ विश्वा॑भ्यो मा ना॒ष्ट्राभ्य॑स्पाहि॒ मनो॒रश्वा॑सि ॥१२॥

**उ०** अनाधृष्टेति वाचयति प्रादेशमध्ये विधारयन् । हे पृथिवि, या त्वम् अनाधृष्टा अधर्षिता रक्षोभिः पुरस्तात् तां त्वां ब्रवीमि । अग्नेः आधिपत्ये सति आयुर्मेदाः देहि । या त्वं पुत्रवती दक्षिणतो भवसि तां त्वां ब्रवीमि इन्द्रस्याधिपत्ये सति प्रजां मे दाः मह्यं देहि । या त्वं सुषदा स्वास्थेया साध्वस्मिन्सीदतीति सुषदा । पश्चाद्भवसि तां त्वां ब्रवीमि । देवस्य सवितुः आधिपत्ये सति चक्षुर्मे दाः देहि । या त्वं आश्रुतिः आश्रयन्त्यस्मिन्यजमाना इत्याश्रुतिः । यज्ञियो ह्यसौ देशः । उत्तरतो भवसि । तां त्वां ब्रवीमि । धातुराधिपत्ये सति रायस्पोषं धनस्य पुष्टिं मे दाः देहि । या त्वं विधृतिः विधारिणी उपरिष्टाद्भवसि । तां त्वां ब्रवीमि बृहस्पतेः आधिपत्ये सति ओजो मे दाः । दक्षिणत उत्तानेन पाणिना निन्हुते । विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि । सर्वाभ्यः माम् आर्तिभ्यः गोपायेति । इमामभिमृश्य जपति । मनोरश्वासि । 'अश्वा ह वा इयं भूत्वा मनुमुवाह' इति श्रुतिः ॥ १२ ॥

**म०** 'अनाधृष्टेति वाचयति प्रादेशमध्यधि धारयन्तम्' ( का० २६ । ३ । ५ ) महावीरोपर्यङ्गुष्ठाङ्गुलिदेशं धरन्तं यजमानमध्वर्युर्मन्त्रान्वाचयतीति सूत्रार्थः । सप्त यजूंषि पृथिवीदेवत्यानि यजमानस्याशीः । हे पृथिवि, या त्वं पुरस्तात्पूर्वस्यां दिशि अनाधृष्टा रक्षोभिरनाधर्षिता अग्नेराधिपत्ये स्वामित्वे सति मे मह्यमायुर्दाः देहि । ददातेर्लुङि मध्यमैकवचनेऽडभाव आर्षः । 'अग्निमेवास्या अधिपतिं करोति' (१४ । १ । ३ । १९) इति श्रुतेः । या त्वं दक्षिणस्यां दिशि इन्द्रस्याधिपत्ये सति पुत्रवती पुत्रयुता सा मे मह्यं प्रजां पुत्रादिकां दाः देहि 'इन्द्रमेवास्या अधिपतिं करोति नाष्ट्राणाᳪ रक्षसामपहत्यै' ( १४ । १ । ३ । २० ) इति श्रुतेः । या त्वं पश्चात्पश्चिमायां दिशि सुषदा भवसि । सुष्ठु अस्यां सीदन्ति जना इति सुषदा 'ईषद्दुःसुषु'–( पा० ३ । ३ । १२६ ) इति खल्प्रत्ययः । सवितुर्देवस्याधिपत्ये सति सा त्वं मे चक्षुः नेत्रेन्द्रियं दाः देहि । 'देवमेवास्यै सवितारमधिपतिं करोति' ( १४ । १ । ३ । २१ ) इति श्रुतेः । हे पृथिवि, या त्वमुत्तरतः उत्तरस्यां दिशि धातुर्ब्रह्मण आधिपत्ये सति आश्रुतिरसि आश्रावयन्ति ऋत्विजो यस्यां सा आश्रुतिः यज्ञियो ह्युत्तरदेशः । सा त्वं मे रायो धनस्य पोषं पुष्टिं दाः देहि । 'धातारमेवास्या अधिपतिं करोति' ( १४ । १ । ३ । २२ ) इति श्रुतेः । या त्वमुपरिष्टादुपरिप्रदेशे बृहस्पतेराधिपत्ये सति विधृतिरसि । विशेषेण धारयतीति विधृतिः उपरिष्टाज्जुह्वादिकं ध्रियते । सा त्वं मे मह्यमोजो बलं दाः देहि । 'बृहस्पतिमेवास्या अधिपतिं करोति' ( १४ । १ । ३ । २३ ) इति श्रुतेः । 'विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति' ( का० २६ । ३ । ७ ) । महावीराद्दक्षिणभूमौ यजमानो मन्त्रं पठन्स्वकरं निदधात्युत्तानम् । यजुर्बृहती । हे महावीरदक्षिणभूमे, विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यः नाशकर्त्रीभ्यः पिशाचादिभ्यो लोकप्रसिद्धं नोऽस्मान्पाहि रक्ष 'सर्वाभ्यो मार्तिभ्यो गोपाय' ( १४ । १ । ३ । २४ ) इति श्रुतेः । 'छन्दसि वा प्राम्रेडितयोः' ( पा० ८ । ३ । ४९ ) इति विसर्गस्य सत्वम् । 'मनोरश्वेति प्रादेशमुत्तरतः' ( का० १६ । ३ । ८ ) । महावीरादुत्तरतो यजमानो निजप्रदेशं निदधातीति सूत्रार्थः । दैवीपङ्क्तिः । हे घर्मोत्तरभूमे, त्वं मनोः राज्ञः अश्वा वडवासि वहनाय 'अश्वा ह वा इयं भूत्वा मनुमुवाह' ( १४ । १ । ३ । २५ ) इति श्रुतेः ॥ १२ ॥

## त्रयोदशी ।

स्वाहा॑ म॒रुद्भिः॒ परि॑श्रीयस्व दि॒वः स॒ᳪस्पृश॑स्पाहि । मधु॒ मधु॒ मधु॑ ॥ १३ ॥

**उ०** विकङ्कतशकलैः परिश्रयति । स्वाहा मरुद्भिः परिश्रीयस्व । हे प्रवर्ग्य, यस्त्वं स्वाहाकारः तं त्वां ब्रवीमि । मरुद्भिः रश्मिभिः । यद्वा 'विशो वै मरुतः' इति श्रुतिः ताभिः परिश्रीयस्व । कर्मणि यक् आश्रीयस्व । मरुतस्त्वामाश्रयन्त्वित्यर्थः । सुवर्णशतमानेनापिदधाति । दिवः द्युलोकस्य संस्पर्शनो रक्षसो महावीरे पाहि गोपाय । अथवा द्युलोकस्य संस्पर्शनकर्तॄन्देवान् त्वं हे महावीर, पाहि । पवित्रैराधुनोति । मधु मधु मधु । मधु प्राणो मधु सामान्यादुच्यते स ह्यङ्गानां रसः तं महावीरे स्थापयति ॥ १३ ॥

**म०** 'धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरित्यधिकं दक्षिणतो द्वौ मन्त्रेण' ( का० २६ । ३ । ९ । १० ) । अध्वर्युर्धृष्टिभ्यां गार्हपत्यस्य भस्माङ्गारांश्च महावीरं परितो निक्षिप्य प्रागग्रैरुदगग्रैस्त्रयोदशविकङ्कतशकलैर्महावीरं वेष्टयति । अङ्गारोपरि शकलान्निक्षिपतीत्यर्थः । तन्मध्याद्द्वौ शकलौ मन्त्रेण प्राञ्चौ निदधाति शेषां तूष्णीम् । एवं प्रतिदिशं त्रिषु त्रिषु स्थितेषु अधिकं त्रयोदशं दक्षिणतो निदधातीति सूत्रार्थः । मासानां त्रयोदशत्वात्त्रयोदशशकलैराच्छादनम् 'त्रयोदश वै मासाः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रवर्ग्यः' ( १४ । १ । ३ । २८ ) इति श्रुतेः । यजुःपङ्क्तिर्घर्मदेवत्या । हे घर्म, त्वं स्वाहाकारोऽसि हविराधारत्वात्सूर्यरूपोऽसि । 'एष वै स्वाहाकारो य एष तपत्येष उ प्रवर्ग्यः' ( १४ । १ । ३ । २६ ) इति श्रुतेः । अतस्त्वं मरुद्भिः प्रजाभिरस्मद्रूपाभिः परिश्रीयस्व सेव्यस्व । कर्मणि यक् । मरुतस्त्वामाश्रयन्त्वित्यर्थः । 'विशो वै मरुतो विशैवैतत्क्षत्रं परिवृꣳहति तदिदं क्षत्रमुभयतो विशा परिवृढम्' ( १४ । १ । ३ । २७ ) इति श्रुतेः । 'सुवर्णशतमानेनापिदधाति दिवः सꣳस्पृश इति' ( का० २६ । ३ । १० ) । शतरक्तिकामितेन सुवर्णेन महावीरमाच्छादयतीति सूत्रार्थः । दैवी जगती सुवर्णदेवत्या । हे शतमान, दिवः द्युलोकसंबन्धिनः संस्पृशः स्पर्शकर्तॄन्देवान्पाहि । 'देवा राक्षसेभ्यो भीता महावीररक्षायै स्वर्णं स्थापितवन्तः' ( १४ । १ । ३ । २९ ) इति श्रुतौ कथा देवा अबिभयुरित्यादिकार्था । 'कृष्णाजिनावकृत्तैर्धवित्रैरुपवीजयति त्रिभिर्दण्डवद्भिर्मधु मध्विति' (का० २६।४।२) कृष्णाजिनकृतैर्दण्डयुक्तैस्त्रिभिर्व्यजनैरग्निं वीजयति दीपनायेति सूत्रार्थः । त्रीणि यजूंषि प्राणदेवत्यानि दैव्युष्णिक् । मधुररससाम्यात्प्राणो मधु उच्यते । मधु मधु मधु प्राणोदानव्यानत्रयं महावीरे स्थापयामीत्यर्थः । तथाच श्रुतिः 'अथ धवित्रैराधुनोति मधु मध्विति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति' ( १४ । १ । ३ । ३० ) इति ॥ १३ ॥

## चतुर्दशी ।

ग॒र्भो॑ दे॒वानां॑ पि॒ता म॑ती॒नां पतिः॑ प्र॒जाना॑म् । सं दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त॒ सꣳ सूर्ये॑ण रोचते १४

**उ०** महावीरमुपतिष्ठते । गर्भो देवानामित्यवकाशैः तेन त्वष्टृमन्त इत्यतः प्राक् । यो गर्भो देवानां गृह्णातीति गर्भः आदित्यात्मना महावीरः । यश्च पिता मतीनां गोपायिता बुद्धीनाम् । यश्च पतिरधिपतिः प्रजानाम् । यश्च सं देवो देवेन सवित्रा गत संगत संगच्छते । देवः प्रवर्ग्यः देवेन सवित्रा सह । यश्च संरोचते घर्मः सूर्येण सह एकीभूतः तं वयं स्तुम इति वाक्यशेषः ॥ १४ ॥

**म०** 'परिक्रम्योपतिष्ठन्तेऽकृतं चेद् गर्भो देवानामिति' ( का० २६ । ४ । ११ ) । धवित्रैर्वीजनसमये उत्तरं देववत्परिक्रमणं प्रागकृतं चेदिह त्रिः परिक्रम्येतरथावृत्ति सकृत्कृत्वा गर्भो देवानामित्यादिभिर्नमस्ते अस्तु मा मा हिंसीरित्यन्तैरवकाशसंज्ञकैर्मन्त्रैः सयजमाना ऋत्विजो महावीरमुपतिष्ठन्त इति सूत्रार्थः । घर्मदेवत्या अवकाशमन्त्रा मा मा हिंसीरित्यन्ताः । आद्या ऋचां पङ्क्तिः । अथ मन्त्रार्थः । देवो दीप्यमानो महावीरः सवित्रा देवेन सह सङ्गत सङ्गच्छते । गमेर्लुङि 'वा गमः' ( पा० १ । २ । १३ ) इति आत्मनेपदे विकल्पेन सिचः कित्वात् 'अनुदात्तोपदेश'–( पा० ६ । ४ । ३७ ) इति मलोपे 'ह्रस्वादङ्गात्' ( पा० ८ । २ । २७ ) इति सिचो लोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि ( पा० ६ । ४ । ७५ ) इत्यडभावः । 'समो गम्–' ( पा० १ । ३ । २९ ) इत्यादिना तङ् । यश्च घर्मः सूर्येण सहैकीभूतः सन् संरोचते सम्यग्दीप्यते तं वयं स्तुम इति शेषः । कीदृशः । देवानां दीप्तानां रश्मीनां दृश्यमानानां सर्वेषां वा गर्भः गृह्णातीति गर्भः ग्रहीता । 'एष वै गर्भो देवानां य एष तपत्येष हीदꣳ सर्वꣳ संगृभ्णात्येतेनेदꣳ सर्वं गृभीतमेष उ प्रवर्ग्यः' ( १४ । १ । ४ । २ ) इति श्रुतिः । तथा मतीनां बुद्धीनां पिता पालकः बुद्धिप्रवर्तकः प्रजानां पतिः पालकः ॥ १४ ॥

## पञ्चदशी ।

सम॒ग्निर॒ग्निना॑ गत॒ सं दैवे॑न सवि॒त्रा सꣳ सूर्ये॑णारोचिष्ट । स्वाहा॒ सम॒ग्निस्तप॑सा गत॒ सं दैव्ये॑न सवि॒त्रा सꣳ सूर्ये॑णारूरुचत ॥ १५ ॥

**उ०** समग्निः अनुष्टुप् ब्राह्मी । यश्च संगत संगच्छते अग्निः घर्मः अग्निना सूर्याख्येन सह । यश्च संगत संगच्छते दैवेन सवित्रा सह । यश्च समरोचिष्ट संरोचते दीप्यते सूर्येण सह स्पर्धयन् । तं वयं स्तुम इति वाक्यशेषः । स्वाहाकारः आदित्यप्रीणनार्थः । यश्च स्वाहा अग्निः संगत संगच्छते । तपसा आदित्यसंबन्धिना सह । यश्च संगत संगच्छते दैव्येन सवित्रा सह । यश्च समरूरुचत समरोचत संरोचते सूर्येण सह स्पर्धयन् । तं वयं स्तुम इति वाक्यशेषः ॥ १५ ॥

**म०** ब्राह्म्यनुष्टुप् । यः अग्निः घर्मः अग्निना सह सङ्गत सङ्गच्छते एकीभवति । देव एव दैवः सवित्रा दैवेन देवेन सह सङ्गच्छते । यश्च सूर्येण सह समरोचिष्ट संरोचते । 'अवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः' ( १४ । १ । ४ । ६ ) इति श्रुतेः । स्वाहा अग्निः । स्वाहासहितोऽग्निर्घर्मस्तपसा सूर्यतेजसा सङ्गत सङ्गच्छते । दैव्येन देवेन सवित्रा च सङ्गच्छते । सूर्येण सह समरूरुचत सर्वं सम्यक् रोचयति प्रकाशयति । रोचतेर्णिजन्ताल्लुङ् । वयं तं स्तुम इति शेषः ॥१५॥

## षोडशी ।

ध॒र्ता दि॒वो विभा॑ति॒ तप॑सस्पृथि॒व्यां ध॒र्ता दे॒वो

दे॒वाना॑मम॑र्त्यस्त॒पोजाः । वाच॑म॒स्मे निय॑च्छ देवा॒युव॑म् ॥ १६ ॥

उ० धर्ता दिवः । ऊर्ध्वबृहती घर्मस्तुतिः । योऽयं धर्ता धारयिता दिवः द्युलोकस्य । यश्च तपसः रश्मिजालस्य धर्ता । विभाति च पृथिव्यां अवस्थितः । धर्ता धारयिता च देवानाम् । स्वयं च देवः अमर्त्यः मनुष्यधर्मैरहितः । तपोजाः तपः आदित्यः तस्माज्जायते । सोयम् वाचं अस्मे अस्मासु । नियच्छ नियच्छत्विति पुरुषव्यत्ययः । निगृह्णातु स्थापयतु । देवायुवम् या देवान् यौति मिश्रयति आगमयति सा तथोक्ता तां देवायुवम् ॥ १६ ॥

म० ऊर्ध्वबृहती । त्रिजागतोर्ध्वबृहती अत्राद्यौ त्रयोदशवर्णौ तृतीय एकादशवर्णस्तेनैकाधिका । स देवो घर्मः अस्मे अस्मासु । विभक्तेः शे-आदेशः । वाचं नियच्छ पुरुषव्यत्ययः । यज्ञं नियच्छतु स्थापयतु । किंभूतां वाचम् । देवयुवं देवान् यौति मिश्रयति देवयुः ताम् । क्विपि तुगभाव आर्षः । अनित्यमागमशासनमिति वचनात् । देवसमूहमाह्वयन्तं यज्ञं समापयत्वित्यर्थः । 'यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह' ( १४ । १ । ४ । ८ ) इति श्रुतेः देवयुवमित्यत्र संहितायां वकारस्य दीर्घः । स कः । यो देवः पृथिव्यां विभाति शोभते । कीदृशः । दिवो धर्ता द्युलोकस्य धारयिता । तपसः रश्मिजालस्य च धर्ता । देवानां च धर्ता । अमर्त्यः मनुष्यधर्मैरहितः अजरामरः । तपोजाः तप आदित्यस्तस्माज्जायत इति तपोजाः सूर्योत्पन्नः ॥ १६ ॥

## सप्तदशी ।

अप॑श्यं गो॒पामनि॑पद्यमान॒मा च॒ परा॑ च प॒थिभि॒श्चर॑न्तम् । स स॒ध्रीचीः॒ स विषू॑ची॒र्वसा॑न॒ आव॑रीवर्ति॒ भुव॑नेष्व॒न्तः ॥ १७ ॥

उ० अपश्यम् । त्रिष्टुप् । आदित्यात्मना घर्मस्तुतिः । यमहमपश्यम् । गोपां गोप्तारम् । अनिपद्यमानम् अनालम्बने अन्तरिक्षे गच्छन्नसौ पतति । आ च परा च पथिभिश्चरन्तम् आचरन्तं च आगच्छन्तं च । पराचरन्तं च परागच्छन्तं च । पथिभिः देवैः सह । स सध्रीचीः सएव सध्रीचीः । सहस्य सध्रिरादेशः । सहाञ्चनाः दिशो रश्मीन्वा-सहस्रम् । सविषूचीः । विषु इति निपातो नानावचनः । अञ्चतेः परं क्विप् । नानाञ्चनाः दिशः नानाञ्चनान्वा रश्मीन् । वसानः आच्छादयन् । आवरीवर्ति पुनःपुनरावर्तते । भुवनेषु त्रिषु लोकेषु । अन्तर्मध्ये व्यवस्थितः ॥ १७ ॥

म० त्रिष्टुब्दीर्घतमोदृष्टा । स घर्मो भुवनेषु त्रिलोकेषु अन्तर्मध्ये व्यवस्थितः आवरीवर्ति पुनःपुनरावर्तते । वृतेर्यङ्लुकि रूपम् । कीदृशः । सध्रीचीः सह अञ्चन्तीति सध्रीच्यः सहस्य सध्रिरादेशः । सहाञ्चना दिशो रश्मीन् वा वसानः आच्छादयन् । 'वस आच्छादने' शानच्प्रत्ययः । विषूचीः विषुनिपातो नानार्थः । विषु अञ्चन्तीति विषूच्यः ताः नानाञ्चना दिशो रश्मीन् वा वसानः । क्विबन्तात् 'उगितश्च' ( पा० ४ । १ । ६ ) इति ङीपि 'अचश्च' ( पा० ६ । ४ । १३८ ) इत्यलोपे 'चौ' ( पा० ६ । ३ । १३८ ) इति पूर्वपददीर्घः 'सध्रीचीश्च ह्येष विषूचीश्च दिशो वस्तेऽथो रश्मीन्' ( १४ । १ । ४ । १० ) इति श्रुतिः । एकः सशब्दः पादपूरणः । स कः । यमहमपश्यमादित्यरूपं पश्यामि । कीदृशम् । गोपां गोपायतीति गोपास्तम् । क्विपि यलोपः । अनिपद्यमानं निपद्यते पततीति निपद्यमानः न निपद्यमानोऽनिपद्यमानस्तम् अन्तरिक्षे गच्छन्तमपि नाधः पतन्तम् । च पुनः पथिभिः देवमार्गैः आचरन्तमागच्छन्तम् । पराचरन्तं परागच्छन्तं च गमनागमने कुर्वाणम् ॥ १७ ॥

## अष्टादशी ।

विश्वा॑सां भुवां पते॒ विश्व॑स्य मनसस्पते॒ विश्व॑स्य वचसस्पते॒ सर्व॑स्य वचसस्पते । दे॒व॒श्रुत्त्वं दे॑व घर्म दे॒वो दे॒वान्पा॑ह्यत्र प्रावी॒रनु॑ वां दे॒ववी॑तये । मधु॒ माध्वी॑भ्यां मधु॒ माधू॑चीभ्याम् ॥ १८ ॥

उ० विश्वासां भुवाम् । सर्वासां पृथिवीनां पते हे प्रवर्ग्य, विश्वस्य मनसः सर्वस्य प्राण्याश्रयस्य मनसः पते । विश्वस्य वचसः सर्वस्य त्रयीलक्षणस्य वचसः पते । सर्वस्य वचसः सर्वस्य लौकिकस्य वचसः पते । त्वां स्तुम इति शेषः । यतश्च त्वं देवश्रुत् देवैः श्रुतः अतः त्वां याचे । हे देव घर्म, त्वं देवः सन् देवान्पाहि गोपाय । अत्र प्रावीरनु वां देव वीतये । अत्र सत्रे अस्मिन्नवसरे वा । प्रावीरिति पुरुषव्यत्ययः । प्रावतु तर्पयतु घर्मः । वां युवाम् हे अश्विनौ, अनु देववीतये । ततोऽनन्तरम् देवतर्पणाय नमस्करोत्विति वाक्यशेषः । मधुमाध्वीभ्याम् मधुनाम ब्राह्मणं तदश्विभ्यां ददौ दध्यङ्ङाथर्वणः । तदेतदुक्तम् । मधुमाधूचीभ्यां मधु ब्राह्मणं प्रति अञ्चतो गच्छतः तौ ताभ्यां मध्वञ्चनाभ्याम् । शेषं पूर्ववद्व्याख्येयम् ॥ १८ ॥

म० अत्यष्टिः । हे विश्वासां भुवां पते सर्वासां पृथिवीनां स्वामिन्, विश्वस्य सर्वप्राणिगतस्य मनसः पते अधिपते, विश्वस्य वचसः पते सर्वप्राणिवचनस्य पालक, सर्वस्य त्रयीलक्षणस्य वचसः पते प्रवर्तक, हे देवश्रुत् देवैः श्रूयत इति देवश्रुत् देवप्रसिद्ध, हे देव दीप्यमान हे घर्म देव, त्वं देवान् पाहि रक्ष । एवं घर्मं संप्रार्थ्याश्विनावाह । हे अश्विनौ, अत्र यज्ञे देववीतये देवतर्पणाय अनु अनन्तरं घर्मो वां प्रावीः प्रावीत् तर्पयतु । लोडर्थे लुङ् पुरुषव्यत्ययश्च । युवयोस्तृप्त्या सर्वेदेवास्तृप्यन्तीति भावः । याभ्यां युवाभ्यां दध्यङ्ङाथर्वणो मधुसंज्ञकं ब्राह्मणमुवाच 'दध्यङ् ह वा आभ्यामाथर्वणो मधुनाम ब्राह्मणमुवाच'

( १४।१।४।१३ ) इति श्रुतेः । कीदृशाभ्यां युवाभ्याम् । माध्वीभ्यां मधुब्राह्मणमीयाते तौ माध्व्यौ ताभ्याम् 'ई गतौ' क्विप् । तथा माधूचीभ्यां मधुब्राह्मणमञ्चतः पूजयतस्तौ मध्वञ्चौ ताभ्याम् । मध्वग्भ्यामिति प्राप्ते ङीपि अलोपे मधूचीभ्यामिति लिङ्गव्यत्ययः आदिदीर्घश्छान्दसः ॥ १८ ॥

## एकोनत्रिंशी ।

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वो अध्वरं दिवि देवेषु धेहि ॥ १९ ॥

**उ०** हृदे त्वा । परोष्णिक् । हृदे त्वा हृदयार्थं त्वां स्तुम इति शेषः । एवं मनसे त्वां स्तुमः । दिवे अर्थाय त्वां स्तुम इति शेषः । सूर्याय त्वा सूर्यतर्पणाय त्वां स्तुमः । यस्माच्च सर्वकार्येषु त्वामेव स्तुमः । अतो ब्रूमः ऊर्ध्वः अवहितचित्तः सन् अध्वरं दिवि देवेषु धेहि निधेहि स्थापय ॥ १९ ॥

**म०** परोष्णिक् । आद्यावष्टार्णौ तृतीयो द्वादशार्णः सा परोष्णिक् । 'परोष्णिक् परतः' इत्युक्तेः । आद्ययोर्व्यूहः । हे घर्म, हृदे त्वा हृदयस्वास्थ्याय त्वा त्वां स्तुम इति शेषः । मनसे मनःशुद्ध्यर्थं त्वा त्वां स्तुमः । दिवे स्वर्गप्राप्त्यै त्वा त्वां स्तुमः । सूर्याय सूर्यतृप्त्यै त्वा त्वां स्तुमः । हृदयं संशोध्य मनो निर्मलं कृत्वा दिवमस्मान्नीत्वा सूर्यं तर्पयेति भावः । किंच ऊर्ध्वः सावधानः सन् अध्वरमस्मदीयं यज्ञं दिवि द्युलोके वर्तमानेषु देवेषु धेहि स्थापय । यज्ञे गते यजमानो गच्छत्येवेति भावः ॥ १९ ॥

## विंशी ।

पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिꣳसीः । त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ सह पत्या भूयासम् ॥ २० ॥

**उ०** पिता नोऽसि । गायत्री । यतश्च त्वम् पिता नः अस्माकमसि भवसि । अतो ब्रवीमि । पितेव भूत्वा नः अस्मान् बोधि बोधय सर्वथा । नमः ते अस्तु मा मा हिंसीः हिंसीथाः । पत्नीं वाचयति महावीरमीक्षमाणाम् । त्वष्टृमन्तस्त्वा । यजुः । यतश्च त्वाष्ट्रसंयुक्ताः । त्वष्टा हि चेतसां विकर्ता । त्वामेव सपेम । सपतिः स्पृशतिकर्मा । मैथुनार्थमुपस्पृशामः । अतः पुत्रान् पशून् मयि धेहि स्थापय । प्रजां च भूयोभूयः अस्मासु धेहि स्थापय । किंच अरिष्टा अनुपहिंसिता अहम् । सह पत्या सह भर्त्रा भूयासम् । आशीः ॥ २० ॥

**म०** ऋग्गायत्री । हे महावीर, त्वं नोऽस्माकं पितासि पालको भवसि । पितेव नोऽस्मान् बोधि बोधय । सर्वथा नमस्ते अस्तु मा मां मा हिंसीः मा जहि । महावीरोपस्थानं समाप्तम् । 'त्वष्टृमन्त इत्येनां वाचयति' ( का० २६।४।१३ ) । महावीरमीक्षमाणामपनीतशिरोवस्त्रां घर्मं पश्यन्तीं पत्नीमध्वर्युर्वाचयतीत्यर्थः । ऋचां त्रिष्टुप् घर्मदेवत्या पत्न्याशीः । हे घर्म । वयं त्वा त्वां सपेम । सपतिः स्पृशतिकर्मा । मैथुनाय त्वामुपस्पृशामः । कीदृशा वयम् । त्वष्टृमन्तः त्वष्टा विद्यते येषां ते त्वष्टृमन्तः । त्वष्टा रेतसामधिकारी तत्सहिताः मैथुनार्थोपस्पर्शे वीर्याधिष्ठातापेक्षितोऽत एतद्युताः । अतः पुत्रान् पशून् च मयि विषये त्वं धेहि स्थापय । प्रजामुत्तरोत्तरवंशवृद्धिमस्मासु धेहि स्थापय । किंच पत्या भर्त्रा सहारिष्टा अनुपहिंसिता अहं भूयासं भवेयम् । भर्तृमती चिरं जीवेयमित्यर्थः । 'वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत् प्रजननं क्रियते' ( १४।१।४।१६ ) इति श्रुतेः ॥ २० ॥

## एकविंशी ।

अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा । रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ॥ २१

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

**उ०** रौहिणं जुहोति । अहः केतुना प्रज्ञया कर्मणा वा सहितम् जुषतां परिगृह्णातु । कथंभूतम् । यदहः सुज्योतिः शोभनज्योतिष्कम् । केन ज्योतिषा स्वकीयेनैव । स्वाहा सुहुतं चैतद्धविर्भवतु । रात्रिः केतुना । अधस्तनेन व्याख्यातम् ॥ २१ ॥

इति उवटकृतौ मन्त्रभाष्ये सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

**म०** 'अहः केतुनेति दक्षिणꣳ रौहिणं जुहोति' (का० २६।४।१४ ) । उपस्थानगानयोः समाप्तौ रौहिणहवन्या स्रुचा दक्षिणं रौहिणं पुरोडाशं सर्वहुतं जुहोतीत्यर्थः । घर्मदेवत्ये यजुषी सामानुष्टुभौ । केतुः प्रज्ञा कर्म वा । केतुना प्रज्ञया कर्मणा वा सहितमहः दिनं जुषतां रौहिणहोमेन प्रीयताम् । कीदृशमहः । ज्योतिषा स्वकीयेनैव तेजसा सुज्योतिः शोभनं ज्योतिर्यस्य तत् विशिष्टतेजस्कम् । स्वाहा एतद्धविः सुहुतमस्तु । रोहति स्वर्गं यजमानो याभ्यां तौ रौहिणौ अग्न्यादित्यौ अहोरात्रे वा 'इमौ लोकौ वा चक्षुषी वा शिरः प्रवर्ग्यौ रौहिणौ चक्षुषी तत्र दधाति' ( १४।२।१।१—५ ) इत्यादिरौहिणप्रशंसा श्रुतौ ज्ञेया । 'रात्रिरिति सायम्'(का०२६।४।१४)। सायंकालीने प्रवर्ग्ये रात्रिरिति मन्त्रेण द्वावपि प्रवर्ग्यौ यथाकालं जुहोतीत्यर्थः । केतुना सहिता रात्रिः जुषतां प्रीयताम् । ज्योतिषा कृत्वा सुज्योतिरित्युक्तम् ॥ २१ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अभ्यादिरौहिणान्तोऽयं सप्तत्रिंशो निरूपितः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ।

### तत्र प्रथमा ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽदित्यै रास्नासि ॥ १ ॥

**उ०** अथ घर्मधुग्दोहनार्थं रज्जुमादत्ते । देवस्यत्वेति व्याख्यातम् । आददे गृह्णामि । यतस्त्वम् अदित्यै रास्नासि ॥१॥

**म०** 'देवस्य त्वेति रज्जुसंदानमादायेड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन्' ( का० २६ । ५ । १ ) । अध्वर्युर्देवस्य त्वेति रज्जुसंदानमादाय गार्हपत्यस्य पश्चाद्गच्छन् इड एहीति वाक्यत्रयेण घर्मदुघां गामाह्वयति असावेहीति गोर्नाम्ना चोच्चैस्त्रिवारमाह्वयतीति सूत्रार्थः । रज्जुदेवत्यं यजुः प्राजापत्या गायत्री । हे रज्जो, सवितुर्देवस्याज्ञायां वर्तमानोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे गृह्णामि । यतः त्वमदित्यै अदित्या देवमातुः रास्ना रसना मेखलासि भवसि । षष्ठ्यर्थे चतुर्थी ॥ १ ॥

### द्वितीया ।

इड एह्यदित एहि सरस्वत्येहि । असावेह्यसावेह्यसावेहि ॥ २ ॥

**उ०** गामाह्वयति । इड एहि । अतस्मिंस्तच्छब्दस्तदतिदेशार्थः । हे इडे मानवि, आ इहि आगच्छ दोहाय । हे अदिते देवमातः, एहि । हे सरस्वति वाक्, एहि । असाविति नामग्रहणं त्रिरुच्चैः । असौ धवले एहि । त्रिः । आमन्त्रितस्येत्यादिरुदात्तः ॥ २ ॥

**म०** हे इडे मानवि, एहि आगच्छ । हे अदिते देवमातः, एहि । हे सरस्वति वाक्, एहि । अतस्मिंस्तच्छब्दस्तत्सादृश्यार्थः । 'इडा हि गौरदितिर्हि गौः सरस्वती हि गौः' ( १४ । २ । १ । ७ ) इति श्रुतेः । नाम्ना त्रिरुच्चैराह्वयति असौ धवलि एहि एवं त्रिः ॥ २ ॥

### तृतीया ।

अदित्यै रास्नासीन्द्राण्या उष्णीषः पूषासि घर्माय दीष्व ॥ ३ ॥

**उ०** अदित्यै रास्नासीति गां पाशेन प्रतिमुञ्चति । अदित्यै रास्नासि । इन्द्राण्या उष्णीषः इन्द्राणी इन्द्रस्य पत्नी तस्याः शिरोवेष्टनं त्वमसि । वत्समुत्सृजति । पूषासि । यथा पूषा वायुः पुष्टिमाप्याययति एवं त्वमपि प्रस्नावनेन जगदुत्पत्तिबीजं पय आप्याययसि । वत्समुन्नयति । घर्माय दीष्व देहि । दयां कुरु दो दाने दयायां च, मा सर्वं पासीः ॥ ३ ॥

**म०** अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बद्ध्वा पूषासीति वत्समुत्सृजति' ( का० २६ । ५ । ३ ) । आगतां गामदित्या इति मन्त्रेण पाशेन बद्ध्वा तं पाशं स्तम्भे बद्ध्वा पूषासीति वत्सं मुञ्चतीत्यर्थः । हे रज्जुपाश, त्वमदित्यै रास्ना रसनासि । इन्द्राण्यै इन्द्रपत्न्याः उष्णीषः शिरोवेष्टनमसि । एतेन पाशमिन्द्राण्युष्णीषं करोतीत्यर्थः । 'तमेवैनमेतत्करोति' ( १४ । २ । १ । ८ ) इति श्रुतेः । वत्सं मुञ्चति पूषासि दैव्यनुष्टुप् वत्सो देवता । हे वत्स, त्वं पूषा वायुरसि वायुर्यथा वृष्टिमाप्याययति तथा त्वं प्रस्रवेण पय आप्याययस्वेति भावः । 'अयं वै पूषा योऽयं पवत एष हीदꣳ सर्वं पुष्यत्येष उ प्रवर्ग्यः' ( १४ । २ । १ । ९ ) इति श्रुतेः । 'संदाय घर्माय दीष्वेति वत्समुन्नयति' ( का० २६ । ५ । ४ ) धेनुं रज्ज्वा पश्चिमपादयोर्बद्ध्वा वत्समपाकरोतीत्यर्थः । दैवी पङ्क्तिः वत्सो देवता । हे वत्स, घर्माय घर्मार्थं दीष्व देहि पयः । पयः शेषय मा सर्वं पासीरित्यर्थः । 'दो दाने' 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुक् ॥ ३ ॥

### चतुर्थी ।

अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व । स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥ ४ ॥

**उ०** पिन्वने दोग्धि । अश्विभ्यां पिन्वस्व अश्विभ्यामर्थाय पिन्वस्व प्लावयस्व । एवमेव सरस्वत्यै इन्द्राय च । विप्रुषाभिमन्त्रयते । स्वाहेन्द्रवदिति । यद्दुह्यमानं स्कन्नं तत्सुहुतमस्तु इन्द्रवद् इन्द्रसंयुक्तम् इति त्रिः ॥ ४ ॥

**म०** 'अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि' ( का० २६ ) ५ । ५ ) । पिन्वने पात्रे प्रतिमन्त्रं गां दोग्धीत्यर्थः । अश्विभ्यां पिन्वस्व इन्द्राय पिन्वस्व यजुर्गायत्र्यौ । सरस्वत्यै पिन्वस्व यजुरनुष्टुप् । लिङ्गोक्ता देवताः । हे पयः, अश्विभ्यामर्थाय त्वं पिन्वस्व संप्लवस्व । सरस्वत्यै च पिन्वस्व । 'अश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति' (१४ । २ । १ । १३) इति श्रुतिः । सरस्वत्या वाचा कृत्वा इन्द्राय यज्ञशिरोऽश्विभ्यां संहितमिति तयोरर्थे क्षरस्वेति भावः । 'स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते' ( का० २६ । ५ । ६ ) । पिन्वनपतितान्पयःकणानभिमन्त्रयत इत्यर्थः । यजुर्जगती विप्रुषो देवता । यद्दुह्यमाने स्कन्नं तत्स्वाहा सुहुतमस्तु । इन्द्रवत् इन्द्रसंयुक्तं चास्तु ॥ ४ ॥

### पञ्चमी ।

यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः । उर्वन्तरिक्षमन्वेमि ॥५॥

**उ०** स्तनमालभते । यस्ते स्तनः । त्रिष्टुब्वाग्देवत्या । 'वाग्देवीसरस्वती'ति श्रुतिः । यः ते तव स्तनः । कथंभूतः । शशयः । 'शीङ् स्वप्ने' । सुप्त इवास्ते अनुपभुक्तोऽन्यैः । यश्च मयोभूः मयः सुखं भावयति सर्वभूतानाम् । यश्च रत्नधाः

रमणीयानां धनानां धारयिता । यश्च वसुवित् वसु विन्दति । यश्च सुदत्रः कल्याणदानः । धनवानपि सन् कश्चिन्नोत्सहते दातुम् अतएवं भिक्ष्यते । येन विश्वा येन च विश्वा विश्वानि पुष्यसि पुष्णासि वार्याणि वरणीयानि । हे सरस्वति, तं स्तनं इह । धातवे । 'धेट् पाने' पानाय । अकः कुरु । गच्छति । उर्वन्तरिक्षमिति व्याख्यातम् ॥ ५ ॥

**म०** 'यस्ते स्तन इति स्तनमालभते' ( का० २६ । ५ । ७ ) । गोस्तनानालभते । जातावेकवचनमित्यर्थः । वाग्देवत्या त्रिष्टुप् दीर्घतमोदृष्टा । हे सरस्वति, तं स्तनमिहास्मिन्स्थाने धातवे 'धेट् पाने' तुमर्थे तवेप्रत्ययः । पानार्थमकः कुरु । मम पानाय प्रयच्छेत्यर्थः । लोडर्थे लङ् शपि लुप्ते गुणः । तं कम् । यस्ते तव स्तनः स्तन इव स्तनः । शशयः शेते इति शशयः । अच्प्रत्यये द्वित्वं पूर्वस्यात्वं च छान्दसम् । सुप्त इवास्ते अन्यैरनुपभुक्तत्वात् 'यस्ते स्तनो निहितो गुहायाम्' ( १४ । २ । १ । १५ ) इति श्रुतेः । यश्च स्तनो मयोभूः मयः सुखं भावयति प्रापयति सर्वभूतानामिति मयोभूः । यश्च रत्नधाः रत्नानि दधाति रत्नधाः रमणीयानां धनानां धारयिता । यश्च वसुवित् वसु धनं विन्दति वेत्ति वा वसुवित् । यश्च सुदत्रः सुष्ठु ददातीति सुदत्रः दाता । धनवानन्यो दातुं न शक्नोति त्वत्स्तनस्तु धनवान् दाता चेति अन्येभ्य आधिक्यम् । किंच येन स्तनेन विश्वा विश्वानि सर्वाणि वार्याणि वरणीयानि वस्तूनि त्वं पुष्यसि पुष्णासि । तं स्तनं मत्पानाय प्रयच्छेत्यर्थः । 'उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति' (का० २६ । ५ । ११) उपद्रवेति मन्त्रे होत्रोच्यमाने उर्विति मन्त्रेणाध्वर्युर्गोसमीपाद्गार्हपत्यं प्रति गच्छतीत्यर्थः । प्राजापत्या गायत्री । विशालमन्तरिक्षमनु एमि गच्छामि ॥ ५ ॥

## षष्ठी ।

गा॒य॒त्रं छन्दो॑ऽसि॒ त्रैष्टु॑भं॒ छन्दो॑ऽसि॒ द्यावा॑पृथि॒वीभ्यां॑ त्वा॒ परि॑गृह्णाम्य॒न्तरि॑क्षे॒णोप॑यच्छामि । इन्द्रा॑श्विना॒ मधु॑नः सार॒घस्य॑ घ॒र्मं पा॑त॒ वस॑वो॒ यज॑त॒ वाट् । स्वाहा॒ सूर्य॑स्य र॒श्मये॑ वृष्टि॒वन॑ये ॥ ६ ॥

**उ०** परीशासावादत्ते । गायत्रं छन्दोसि त्रैष्टुभं छन्दोसि । ऋक्षु महावीरं गृह्णाति । द्यावापृथिवीभ्यां त्वां परिगृह्णामि । परीशासयोः द्यौश्च पृथिवी च अध्यास्तः महावीरे चादित्यः । उपयमन्या उपगृह्णाति । अन्तरिक्षेणोपयच्छामि । अन्तरिक्षेण उपगृह्णामि । उपयमन्या अन्तरिक्षरूपेण संस्तवः । पयसा सिञ्चति । इन्द्राश्विना । हे इन्द्र हे अश्विनौ । मधुनः सारघस्य । सरघा मधुकृतः भ्रमरा इव ऋत्विजः तैः कृतस्य सारघस्य मधुनः घर्मं पात रसं पिबत । हे वसवः वासयितारः, यजत च वाट् वषट्कारेण । स्वाहा सुहुतमस्तु । सूर्यस्य रश्मये । वृष्टिवनये वृष्टेः संभक्त्रे दात्रे वा । 'सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम' इति श्रुतिः ॥ ६ ॥

**म०** परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम्' ( का० २६ । ५ । १२ ) गायत्रमिति मन्त्राभ्यां परीशासौ गृह्णातीत्यर्थः । यजुर्गायत्र्यौ परीशासौ देवते । हे परीशास, त्वं गायत्रं छन्दोऽसि गायत्र्येव गायत्रं स्वार्थेऽण् । गायत्रीच्छन्दोरूपोऽसि । त्रिष्टुबेव त्रैष्टुभं त्रिष्टुप्छन्दोरूपोऽसीति द्वितीयम् । 'ताभ्यां महावीरं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति' (का०२६ । ५ । १४) । ताभ्यां परीशासाभ्यां महावीरमादत्त इत्यर्थः । यजुर्जगती महावीरो देवता । हे महावीर, द्यावापृथिवीभ्यां द्युभूमिभ्यां कृत्वा त्वा त्वां परिगृह्णामि । परीशासयोर्द्यावाभूमी अध्यस्ते महावीरे चादित्योऽध्यस्तः । तथाच श्रुतिः 'इमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽसुं तदादित्यमाभ्यां द्यावापृथिवीभ्यां परिगृह्णाति' ( १४ । २ । १ । १६ ) इति । 'उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामि' इति । परीशासगृहीतं महावीरमूर्ध्वं कृत्वा मुञ्जकृतवेदेन संमार्ज्योपयमन्या स्रुचा तं गृह्णातीत्यर्थः । यजुर्बृहती घर्मो देवता । हे घर्म, अन्तरिक्षेणाकाशेनोदरेण वा त्वामुपयच्छामि निगृह्णामि । उपयमन्यन्तरिक्षत्वेनोदरत्वेन च स्तूयते । तथाच श्रुतिः 'अन्तरिक्षं वा उपयमन्यन्तरिक्षेण हीदᳪं सर्वमुपयतमथो उदरं वा उपयमन्युदरेण हीदᳪं सर्वमन्नाद्यमुपयतं तस्मादाहान्तरिक्षेणोपयच्छामि' (१४।२।१।१७) इति । 'अजापयसावासिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति' ( का० २६ । ५ । १६ ) । अजादुग्धेन महावीरं तूष्णीं सिक्त्वा शान्ते क्षीणज्वाले तत्र गोपयः सिञ्चतीत्यर्थः । त्राह्मी गायत्री विश्वेदेवा देवताः । हे इन्द्र, हे अश्विना अश्विनौ, हे वसवः वासयितारः, यूयं मधुनो मधुरस्य पयसो घर्मं रसं पात पिबत । पिबादेशाभावश्छान्दसः । कीदृशस्य मधुनः, सारघस्य सरघा मधुमक्षिका । अत्र सरघा मधुकृतो भ्रमरा इव ऋत्विजः तैः कृतं सारघं तस्य । 'घर्मं पातेति रसं पातेत्येवैतदाह' ( १४ । २ । १ । २० ) इति श्रुतिः । किंच हे इन्द्रादयः, वाट् वषट्कारेण स्वाहा सुष्ठु हुतं सारघं मधु सूर्यस्य रश्मये किरणाय यूयं यजत दत्त । यजतिर्दानार्थः । 'वषट्कृतᳪं हुतमेवमस्यैतद्भवति' ( १४ । २ । १ । २० ) इति श्रुतेः । किंभूताय रश्मये । वृष्टिवनये वृष्टिं वनति ददाति वृष्टिवनिस्तस्मै यो रश्मिर्वृष्टिं दत्ते तस्मै मधु दत्तेत्यर्थः । तथाच श्रुतिः 'सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्ति तमेवैतत्प्रीणाति' ( १४ । २ । १ । २१ ) इति ॥ ६ ॥

## सप्तमी ।

स॒मु॒द्राय॑ त्वा॒ वाता॑य॒ स्वाहा॑ सरि॒राय॑ त्वा॒ वाता॑य॒ स्वाहा॑ । अ॒ना॒धृ॒ष्याय॑ त्वा॒ वाता॑य॒ स्वाहा॑ प्रति॒धृ॒ष्याय॑ त्वा॒ वाता॑य॒ स्वाहा॑ । अ॒व॒स्यवे॑ त्वा॒ वाता॑य॒ स्वाहा॑ऽशिमि॒दाय॑ त्वा॒ वाता॑य॒ स्वाहा॑ ॥ ७ ॥

**उ०** इतउत्तरं द्वादश वातनामानि यजत्यध्वर्युः । समु-

द्राय त्वेति । 'एतस्माद्धि समुद्रात्सर्वाणि भूतानि समुद्द्रवन्ति' इति समुद्रो वातः । समुद्राय त्वां हे प्रवर्ग्य, वाताय स्वाहा जुहोमि । इयमेवोत्तरत्रापि योजना । सरिराय । एतस्मात्सरिरात्सर्वाणि भूतानि लब्धकार्याणि सन्ति । सह ईरते गच्छति । अनाधृष्याय अशक्याय आधर्षितुम् । अप्रतिधृष्याय अशक्याय प्रतिधर्षितुम् । अवस्यवे अवनशीलाय । अशिमिदाय । शिमीति कर्मनाम । क्लेशात्मकं चैतत् । अक्लेशदाय ॥ ७ ॥

**म०** 'पैतु ब्रह्मणस्पतिरित्युच्यमाने समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम्' ( का० २६ । ६ । ११ ) । पैत्विति होत्रोच्यमाने आहवनीयं प्रति गच्छन्नध्वर्युः समुद्रायेत्यादीनि द्वादश वातनामानि स्वरेण जपतीत्यर्थः । द्वादश यजूंषि वातनामदेवत्यानि । हे घर्म, वाताय त्वा त्वां स्वाहा जुहोमि । कीदृशाय वाताय । समुद्राय समुद्रवन्त्युद्द्रवन्ति सर्वाणि भूतानि यस्मात् स समुद्रस्तस्मै 'अयं वै समुद्रो योऽयं पवत एतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्द्रवन्ति तस्मा एवैनं जुहोति' ( १४ । २ । २ । २ ) इति श्रुतेः । सरिराय । सह ईरते यच्छन्ति सर्वभूतानि सिद्धार्थानि यस्मात् सरिरस्तस्मै वाताय घर्म, त्वां जुहोमि । 'अयं वै सरिरो योऽयं पवत एतस्माद्वै सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरते' ( १४ । २ । २ । ३ ) इति श्रुतेः । अनाधृष्याय न आधर्षितुं पराभवितुं शक्योऽनाधृष्यः तस्मै । अप्रतिधृष्याय न प्रतिधर्षितुं प्रतियोद्धुं शक्योऽप्रतिधृष्यस्तस्मै वातायेत्युक्तम् 'अयं वा अनाधृष्योऽप्रतिधृष्यो योऽयं पवते' ( १४ । २ । २ । ४ ) इति श्रुतेः । अवस्यवे । अवो रक्षणमिच्छति अवस्यति अवस्यतीत्यवस्युः 'सुप आत्मनः क्यच्' 'क्याच्छन्दसि' (पा० ३ । २ । १७० ) इत्युप्रत्ययः । अवनशीलाय । अशिमिदाय । क्लेशात्मकं कर्म शिमि तन्न ददातीत्यशिमिदस्तस्मै क्लेशनिवर्तकाय वाताय 'अयं वा अवस्युरशिमिदो योऽयं पवते' ( १४ । २ । २ । ५ ) इति श्रुतेः ॥ ७ ॥

## अष्टमी ।

इन्द्रा॑य त्वा वसु॑मते रु॒द्रव॑ते स्वाहेन्द्रा॑य त्वादि॒त्यव॑ते स्वाहेन्द्रा॑य त्वाभिमाति॒घ्ने स्वाहा॑ । स॒वि॒त्रे त्व॑ ऋ॒भुमते विभु॒मते॒ वाज॑वते॒ स्वाहा॒ बृह॒स्पत॑ये त्वा वि॒श्वदे॑व्यावते॒ स्वाहा॑ ॥ ८ ॥

**उ०** इन्द्राय त्वा । इन्द्राय त्वा वसुमते रुद्रवते स्वाहा । इन्द्राय त्वा आदित्यवते स्वाहा । इन्द्राय त्वा अभिमातिघ्ने । सपत्नो वा अभिमातिः सवित्रे त्वा ऋभुमते विभुमते वाजवते स्वाहा । ऋभुर्विभुर्वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषामयं संस्तवः । बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ॥ ८ ॥

**म०** वसवो विद्यन्ते यस्य स वसुमान् रुद्रा विद्यन्ते यस्य रुद्रवान् तस्मै वसुयुताय रुद्रयुतायेन्द्राय वाताय हे घर्म, त्वां स्वाहा जुहोमि 'अयं वा इन्द्रो योऽयं पवते' (१४ । २ । २ । ६) इति श्रुतेः । आदित्या विद्यन्ते यस्य स आदित्यवान् तस्मै आदित्ययुक्तायेन्द्राय वाताय स्वाहा । अभिमातीन्सपत्नान् हन्तीत्यभिमातिहा 'सपत्नो वा अभिमातिः' (१४ । २ । २ । ८) इति श्रुतेः । शत्रुनाशकायेन्द्राय वाताय त्वां जुहोमि । सूते स सविता तस्मै चेष्टयित्रे वाताय त्वां जुहोमि 'अयं वै सविता योऽयं पवते' ( १४ । २ । २ । ९ ) इति श्रुतेः । कीदृशाय । ऋभुमते ऋभुरस्यास्ति ऋभुमान् विभुरस्यास्ति विभुमान् वाजोऽस्यास्ति वाजवान् । आङ्गिरसस्य सुधन्वनस्त्रयः पुत्रा ऋभुविभुवाजास्तद्युक्ताय वाताय । बृहस्पतये बृहतां महतां पतिर्वातस्तस्मै 'अयं वै बृहस्पतिर्योऽयं पवते' (१४ । २ । २ । १० ) इति श्रुतेः । कीदृशाय । विश्वदेव्यावते विश्वेषां देवानां समूहो विश्वदेव्यम् तदस्यास्ति विश्वदेव्यवान् तस्मै । 'मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' ( पा० ६ । ३ । १३१ ) इति दीर्घः । सर्वदेवसहिताय जुहोमि ॥ ८ ॥

## नवमी ।

य॒माय॒ त्वाङ्गि॑रस्वते पितृ॒मते॒ स्वाहा॑ । स्वाहा॑ घ॒र्माय॒ स्वाहा॑ घ॒र्मः पि॒त्रे ॥ ९ ॥

**उ०** यमाय त्वा । अङ्गिरस्वते पितृमते स्वाहा । उपयमन्या आसिञ्चति । स्वाहा घर्माय सुहुतो घर्माय चैतत्स्यात् । स्वाहा घर्मः सुहुतो घर्मः पित्रे स्यादिति शेषः ॥ ९ ॥

**म०** यमाय वायवे हे घर्म, त्वां जुहोमि 'अयं वै यमो योऽयं पवते' ( १४ । २ । २ । ११ ) इति श्रुतेः । कीदृशाय यमाय । अङ्गिरस्वते अङ्गिरसो मुनयोऽस्य सन्ति अङ्गिरस्वान् 'अयस्मयादीनि छन्दसि' (पा० १ । ४ । २०) इति भसंज्ञायां सस्य विसर्गाभावः । पितृमते पितरोऽस्य सन्ति पितृमान् अङ्गिरःपितृयुताय वातायेत्यर्थः । वातनामानि समाप्तानि । 'स्वाहा घर्मायेत्युपयमन्या सिञ्चति घर्मे' ( का० २६ । ६ । २ ) । उपयमन्या स्रुचा स्रुक्स्थं घृतं घर्मे सिञ्चतीत्यर्थः । घर्माय स्वाहा एतदाज्यं सुहुतमस्तु । 'स्वाहा घर्मः पित्र' इति जपित्वातिक्रम्याश्राव्याह घर्मस्य यजेति' (का० २६ । ६ । ३)। अपसव्यवान् दक्षिणास्यः स्वाहेति मन्त्रं स्वरेण जपित्वा सव्येन जलं स्पृष्ट्वा घर्महस्तोऽतिक्रम्याश्राव्य घर्मस्य यजेत्याहेत्यर्थः । स्वाहा घर्मः पित्रे पित्रर्थायास्तु ॥ ९ ॥

## दशमी ।

विश्वा॒ आशा॑ द॒क्षिण॒सद्वि॒श्वान्दे॒वानया॑डि॒ह । स्वाहा॑कृतस्य घ॒र्मस्य॒ मधोः॑ पिबतमश्विना ॥ १० ॥

**उ०** वषट्कृते जुहोति । विश्वा आशाः । अनुष्टुबाश्विनी । विश्वाः सर्वाः आशाः काष्ठाः । दक्षिणसत् दक्षिणसद इति वचनव्यत्ययः । दक्षिणस्यां सीदन्ति । कस्मात् । यतः

विश्वान् सर्वान्देवान् अयाट् । यजतेरेतद्रूपम् । अयाक्षीत् इष्टवान् इह स्थितः। दक्षिणतो हि स्थित आहुतीर्जुहोति । आहुतिश्च यज्ञः। यत एवमतो ब्रवीमि । दक्षिणतोऽग्नेरस्माभिः स्वाहाकृतस्य वषट्कारानन्तरं स्वाहाकृतस्य घर्मस्य मधोः पिबतं मध्वास्वादस्य पिबतम् अश्विनौ ॥ १० ॥

म० 'वषट्कृते जुहोति विश्वा आशा इति' (का० २६। ६।४)। वषट्कृते सति घर्मं जुहोतीत्यर्थः। अश्विदेवत्यानुष्टुप्। इह यज्ञे दक्षिणसत् दक्षिणस्यां दिशि सीदति तिष्ठति दक्षिणसत्। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। दक्षिणतः स्थितोऽध्वर्युर्विश्वाः सर्वाः आशाः दिशो विश्वान् सर्वान् देवान् च अयाट् अयाक्षीत्। यजेर्लुङि च्लेर्लोपे रूपम्। इष्टवान् दक्षिणतः स्थितो ह्याहुतीर्जुहोति। अतो ब्रवीमि हे अश्विना अश्विनौ, स्वाहाकृतस्य वषट्कारानन्तरं हुतस्य मधोर्मधुरास्वादस्य घर्मं युवां पिबतम्। कर्मणि षष्ठी ॥ १० ॥

## एकादशी ।

दि॒वि धा॑ इ॒मं य॒ज्ञमि॒मं य॒ज्ञं दि॒वि धाः॑ । स्वाहा॒ग्नये॑ य॒ज्ञिया॑य॒ शं यजु॑र्भ्यः ॥ ११ ॥

उ०त्रिरुत्कम्पयति। दिवि धाः द्युलोके स्थापय इमं यज्ञं इमं यज्ञं दिविधाः। 'अभ्यासे भूयांसमर्थं मन्यन्ते' अनुवषट्कृते जुहोति । स्वाहाग्नये सुहुतमस्तु अग्नये । यज्ञियाय यज्ञहिताय । शं सुखं च यजुर्भ्यः सकाशात् अस्माकमस्त्विति शेषः। यद्वा शं यजुर्भ्यो देहि ॥ ११ ॥

म० 'दिवि धा इति त्रिरुत्कम्पयति' (का० २६।६। ५)। महावीरं त्रिरूर्ध्वं कम्पयति सकृन्मन्त्रेण द्विस्तूष्णीमिति सूत्रार्थः। यजुर्घर्मदेवत्यं सामोष्णिक्। हे महावीर, इमं मदीयं यज्ञं त्वं दिवि द्युलोके धाः धेहि स्थापय। इमं यज्ञं दिवि धा इति पुनरुक्तिरादरार्था। 'अभ्यासे भूयांसमर्थं मन्यन्ते' (निरु० १०।४२) इति वचनात्। 'स्वाहाग्नय इत्यनुवषट्कृते' (का० २६।६।६)। अनुवषट् स्वाहेति मन्त्रेण घर्मं जुहोतीत्यर्थः। यज्ञियाय यज्ञहितायाग्नये स्वाहा सुहुतमस्तु। यजुर्भ्यः सकाशात् अस्माकं शं सुखमस्तु ॥ ११ ॥

## द्वादशी ।

अश्वि॑ना घ॒र्मं पा॑तꣳ हार्द्वा॑न॒मह॑र्दि॒वाभि॑रू॒तिभिः॑। त॒न्त्रा॒यिणे॒ नमो॒ द्यावा॑पृथि॒वीभ्या॑म् ॥ १२ ॥

उ० ब्रह्मानुमन्त्रयते। अश्विना घर्मम्। उष्णिगाश्विनी। हे अश्विनौ, घर्मं पातं पिबतम्। हार्द्वानं हृदयस्य प्रियम्। हृदयं वा योऽनुवर्तते अहर्दिवाभिः। अहःशब्दः पूर्वाह्णवचनः दिवाशब्दस्तु सायाह्नवचनः। स हि प्रवर्ग्याय कालः। एतत्कालोपलक्षिताभिः ऊतिभिः अवनैर्निमित्तभूतैः। तन्त्रायिणे नमो द्यावापृथिवीभ्याम्। तन्त्रायिणे लोके ये प्रसारिताः तन्तवः तुरीशलाकाप्रोताः ते तन्त्रमित्युच्यन्ते। तन्तुनालिरिव सूत्रपूरणाय एति त्रींल्लोकान् स तन्त्रायी आदित्यः तस्मै नमः। उत्तरत्राप्यनुषङ्गः। द्यावापृथिवीभ्यां नमः अस्तु ॥ १२ ॥

म० 'अश्विना घर्ममिति ब्रह्मानुमन्त्रयते' (का० २६। ६।७)। ब्रह्मा घर्ममभिमन्त्रयत इत्यर्थः। स्वराडुष्णिक्। अश्विनावादित्यो द्यावापृथिव्यौ च देवताः। हे अश्विना अश्विनौ, युवां घर्मं पातं पिबतम्। काभिः। ऊतिभिरवनैर्निमित्तैः। अवनं कृत्वा पिबतमित्यर्थः। कीदृशीभिरूतिभिः। अहर्दिवाभिः। अहःशब्देन प्रातःकालः दिवाशब्देन सायंकालः। प्रातःसायंकालोपलक्षिताभिः। प्रवर्ग्यकालः स एव यतः। कीदृशं घर्मम्। हार्द्वानम् 'वा गतिगन्धनयोः' ल्युट्। हृदि वानं गमनं यस्य स हृद्वानः हृद्वान एव हार्द्वानस्तम्। स्वार्थेऽण्। हृदयप्रियमित्यर्थः। एवं घर्मपानायाश्विनौ संप्रार्थ्य तत्साहाय्याय सूर्यादीन्नमति। तन्त्रायिणे नमः तन्यते तन्त्रम् पटरचनाय तुरीशलाकाप्रोतास्तन्तवस्तन्त्रमुच्यते तद्वन्नभसि कालचक्रमपि तन्त्रमुच्यते। तथा चाभिधानम् 'तन्त्रं राष्ट्रे परच्छन्दाप्रधानयोः। अगदे कुटुम्बकृत्ये तन्तुवाने परिच्छदे। श्रुतिशाखान्तरे शास्त्रे करणे ब्यर्थसाधके। इतिकर्तव्यतातन्त्रोः' इति । तन्त्रे कालचक्रे एति निरन्तरं गच्छति तन्त्रायी तस्मै आदित्याय नमोऽस्तु 'एष वै तन्त्रायी य एष तपत्येष हीमाँल्लोकांस्तन्त्रमिवानुसंचरति' (१४। २।२।२२) इति श्रुतेः। द्यावापृथिवीभ्यामुभाभ्यां लोकाभ्यां तदधिष्ठात्रीभ्यां नमः ॥ १२ ॥

## त्रयोदशी ।

अपा॑ताम॒श्विना॑ घ॒र्ममनु॒ द्यावा॑पृथि॒वी, अ॑मꣳसाताम् । इ॒हैव रा॒तयः॑ सन्तु ॥ १३ ॥

उ० यजमानोऽनुमन्त्रयते। अपाताम्। आश्विनी ककुप्। अपातां पीतवन्तौ अश्विनौ घर्मम्। अनु द्यावापृथिवी अमंसाताम्। तच्च घर्मपानमश्विनोः द्यावापृथिवी अपि अमंसाताम् अनुमतवत्यौ साध्वभूदिति। यतएवमतो ब्रवीमि। इह एव अवस्थितानामस्माकं रातयः धनानि सन्तु ॥ १३ ॥

म० 'अपातामिति यजमानः' (का० २६।६।८)। यजमानः घर्ममभिमन्त्रयत इत्यर्थः। ककुबुष्णिक् अश्विदेवत्या मध्यमः पादो द्वादशार्णः आद्यन्तावष्टार्णौ सा ककुप्। मध्यमश्चेत्ककुबित्युक्तेः। अश्विना घर्ममपातामपिबतां लुङ्। द्यावापृथिवी अन्वमंसातामनुमतवत्यौ। साधु कृतमिति अनुमेनाते इत्यर्थः। अत एवाश्व्यादिप्रसादात् इहैवास्मद्गृहे स्थितानामस्माकं रातयो धनानि सन्तु 'इहैव रातयः सन्त्वितीहैव नो धनानि सन्त्वित्येवैतदाह' (१४।२।२।२६) इति श्रुतेः ॥ १३ ॥

## चतुर्दशी ।

इ॒षे पि॑न्वस्वो॒र्जे पि॑न्वस्व॒ ब्रह्म॑णे पिन्वस्व क्ष॒त्राय॑ पिन्वस्व॒ द्यावा॑पृथि॒वीभ्यां॒ पिन्वस्व । धर्मा॑सि

सुधर्माऽमेन्यस्मे, नृम्णानि धारय ब्रह्म धारय, क्षत्रं धारय, विशं धारय ॥ १४ ॥

उ० पिन्वमानमनुमन्त्रयते । इषे पिन्वस्व । वृष्टितर्पणाय विप्रुषो मुञ्च । एवं ऊर्जे अन्नाय । ब्रह्मणे ब्राह्मणेभ्यः । क्षत्राय क्षत्रियेभ्यः द्यावापृथिवीभ्यां पिन्वस्वेति । उत्क्रामत्युत्तरपूर्वार्धम् । धर्मासि सुधर्म । धर्मासि धारणं समस्तस्य जगतोऽस्याहुतिपरिणामद्वारेण । हे सुधर्म साधुधारणशील, खरे सादयति । अमेनि । 'मीङ् हिंसायाम्' । अहिंसन् अक्रुध्यन् । अस्मे अस्मासु । नृम्णानि । नृन्नमयन्तीति नृम्णानि धनानि । धारय स्थापय । ब्रह्म धारय क्षत्रं धारय विशं धारय त्रैवर्णिकानस्मासु स्थापय ॥ १४ ॥

म० 'इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते' ( का० २६ । ६ । ९ ) । पिन्वमानमतितप्तं घर्ममभिमन्त्रयत इत्यर्थः । ऋचां पङ्क्तिः घर्मदेवत्या । हे पिन्वमान घर्म, इषे वृष्ट्यै पिन्वस्व पुष्टो भव वृष्ट्यर्थम् । ऊर्जेऽन्नाय पिन्वस्व अन्नं वर्धय । ब्रह्मणे ब्राह्मणेभ्यः पिन्वस्व क्षत्राय क्षत्रियेभ्यः पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व । ब्राह्मणक्षत्रियद्यावापृथिवीस्तर्पयेत्यर्थः । 'घर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम्' ( का० २६ । ६ । १० ) । ऐशानीं दिशं प्रत्युत्क्रामतीत्यर्थः । यजुर्गायत्री घर्मदेवत्या । हे धर्म, हे सुधर्म, सुष्ठु धारयतीति सुधर्मः हे साधुधरणशील, त्वं घर्मः असि सर्वजगतो धारणमसि आहुतिपरिणामद्वारेण सर्वं धरसीत्यर्थः । 'अमेन्यस्मे इति खरे करोति' ( का० २६ । ६ । ११ ) । महावीरं खरे आसादयतीत्यर्थः । ऋग्बृहती घर्मदेवत्या । हे घर्म, अमेनि 'मिञ् हिंसायां' मिनोति हिनस्तीति मेनिः न मेनिरमेनिः 'सुपां सुलुक्' (पा० ७ । १ । ३९) सुलोपः । अमेनिः अहिंसन् अक्रुध्यन् सन् अस्मे अस्मासु नृम्णानि धनानि धारय स्थापय । नृन्नमयतीति नृम्णम् 'अक्रुध्यन्नो धनानि धारय' ( १४ । २ । २ । ३० ) इति श्रुतिः । ब्रह्म क्षत्रं विशं च धारय । विप्रादीनस्मद्वशान्कुर्वित्यर्थः ॥१४॥

## पञ्चदशी ।

स्वाहा पूष्णे शरसे, स्वाहा ग्रावभ्यः स्वाहा प्रतिरवेभ्यः । स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः स्वाहा द्यावापृथिवीभ्याᳬं स्वाहा विश्वेभ्यो देवेभ्यः ॥ १५ ॥

उ० शकलैर्जुहोति । स्वाहा पूष्णे । अयं वै पूषा योयं पवत एष हीदं सर्वं पुष्यत्येष उ प्राणः प्राणमेवास्मिन्निदधाति । इत्येतदुक्तम् । शरसे । अस्ति शरशब्दः काण्डवचनः अस्ति च सान्तः । दध्न उपरि स्नेहः शर इति यजमानाः प्राहुस्तदभिप्रायेणैतदुच्यते । स्वाहा ग्रावभ्यः प्राणेभ्यः विषयग्रहणशीलेभ्यः । स्वाहा प्रतिरवेभ्यः । प्राणाः प्रतिरवाः तान्प्राप्य सर्वं जगद्रमते । स्वाहा पितृभ्यः ऊर्ध्वबर्हिर्भ्यः । ऊर्ध्वं प्रागग्रं बर्हिर्येषां त एवमुच्यन्ते । सोमपा इत्येत इत्यर्थः । घर्मपावभ्यः घर्मपातृभ्यः । स्वाहा द्यावापृथिवीभ्याम् । प्राणोदानौ वै द्यावापृथिवी । स्वाहा विश्वेभ्यो देवेभ्यः । प्राणो वै विश्वेदेवाः ॥ १५ ॥

म० 'विकङ्कतशकलैर्जुहोति घर्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम्' ( का० २६ । ६ । १२ ) । घर्मे नितरामक्त्वा विकङ्कतशकलैर्घर्माज्यं जुहोति स्वाहा पूष्ण इति प्रतिमन्त्रमित्यर्थः । सप्त लिङ्गोक्तदेवतानि यजूंषि । शरःशब्दो दध्युपरिस्थस्नेहवाचकः अत्र तु स्नेहमात्रवाची । शरसे स्नेहकर्त्रे पूष्णे वाताय प्राणरूपाय स्वाहा सुहुतमस्तु । 'अवरᳬं स्वाहाकारं करोति परां देवताम्' ( १४ । २ । २ । ३२ ) इति श्रुतेरादौ स्वाहाकारस्ततो देवतापदानि । 'अयं वै पूषा योऽयं पवत एष हीदᳬं सर्वं पुष्यत्येष उ प्राणः प्राणमेवास्मिन्नेतद्धाति' ( १४ । २ । २ । ३२ ) इति श्रुतिः । गृह्णन्ति ते ग्रावाणः प्राणा विषयग्रहणशीलाः तेभ्यः स्वाहा 'प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति' ( १४ । २ । २ । ३३ ) इति श्रुतिः । प्रतिरुवन्ति शब्दं कुर्वन्ति प्रतिरमन्ते वा यान् प्राप्येति प्रतिरवाः तेभ्यः स्वाहा 'प्राणा वै प्रतिरवाः प्राणान्हीदᳬं सर्वं प्रतिरतम्' ( १४ । २ । २ । ३४ ) इति श्रुतिः । 'चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति' ( का० २६ । ६ । १४ ) । चतुर्थं शकलमहुतमेवोदीचीं पश्यन् वेदेः दक्षिणभागे आतिथ्याबर्हिषि प्रवेशयतीत्यर्थः । पितृभ्यः स्वाहा । कीदृशेभ्यः । ऊर्ध्वबर्हिर्भ्यः ऊर्ध्वं प्रागग्रं बर्हिर्येषां ते ऊर्ध्वबर्हिषः तेभ्यः । सोमपाभ्य इत्यर्थः । तथा घर्मपावभ्यः घर्मं पिबन्ति घर्मपावानः तेभ्यः स्वाहा । द्यावापृथिवीशब्देन प्राणोदानावुच्येते ताभ्यां सुहुतमस्तु 'प्राणोदानौ वै द्यावापृथिवी प्राणोदानावेवास्मिन्नेतद्दधाति' ( १४ । २ । २ । ३६ ) इति श्रुतिः । विश्वेभ्यो देवेभ्यः स्वाहा 'प्राणा वै विश्वेदेवाः प्राणानेवास्मिन्नेतद्दधाति' ( १४ । २ । २ । ३७ ) इति श्रुतिः ॥१५॥

## षोडशी ।

स्वाहा रुद्राय रुद्रहूतये स्वाहा सं ज्योतिषा ज्योतिः । अहः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहा । रात्रिः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहा । मधु हुतमिन्द्रतमे अग्नावश्याम ते देव घर्म नमस्ते अस्तु मा मा हिᳬंसीः ॥ १६ ॥

उ० स्वाहा रुद्राय रुद्रहूतये । रुद्र इति स्तोतृनामसु पठितम् । रुद्रैः स्तोतृभिराहूयते स रुद्रहूतिः महावीरादुपयमन्यां प्रत्यानयति । स्वाहा संज्योतिषा ज्योतिः स्वाहा संगच्छतां ज्योतिषा ज्योतिः । 'ज्योतिर्वा इतरस्मिन्वायौ भवति ज्योतिरितरस्माम्' इति श्रुतिः । अहः केतुना रात्रिः केतुना इति च व्याख्यातम् । भक्षयति मधु हुतम् यस्मान्मधु उत्कटरसं हुतम् ।

क्ष । इन्द्रतमे इन्द्रियवत्तमे वीर्यवत्तमे । अग्नौ तवास्माभिः अतएव शिष्टम् अश्याम व्याप्नुयाम भक्षयामः । ते तवांशम् । हे देव घर्म, सर्वथा नमस्ते अस्तु । मामाहिंसीरित्यात्मनः परित्राणमाह ॥ १६ ॥

**म०** 'सप्तमं च सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति' ( का० २६ । ६ । १५ ) । मूलाग्रावधि घर्मघृताभ्यक्तं सप्तमं शकलं दक्षिणं पश्यन्प्रतिप्रस्थात्रे ददातीत्यर्थः । रुद्र इति स्तोतृनामसु पठितम् । रुद्रैः स्तोतृभिर्हूयते आहूयत इति रुद्रहूतिः तस्मै स्तोतृस्तुताय रुद्राय सुहुतमस्तु । एवं सप्तयजुषां मध्ये चतुर्थसप्तमयोर्विनियोग उक्तः शेषैः पञ्चशकलैराज्यहोमः ( का० २६ । ६ । १७ ) । स्वाहा संज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यं घर्मसंबन्धि घृतमुपयमन्यामासिञ्चति । पूर्वं स्रुक्स्थं घर्मे नीतमधुना घर्मस्थं स्रुचि नयतीत्यर्थः । पयोदेवत्यं यजुरनुष्टुप् । ज्योतिः घर्मस्थं घृतं ज्योतिषोपयमनीस्थेन घृतेन सङ्गच्छतां स्वाहा सुहुतमस्तु । ज्योतिर्वा इतरस्मिन् पयो भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी सङ्गच्छेते' ( १४ । २ । २ । ४० ) इति श्रुतेः पयो देवता । 'मन्त्रक्रमेणोत्तरᳪं रौहिणं जुहोति' ( का० २६ । ६ । १८ ) । उत्तरं रौहिणं मन्त्रक्रमेण संज्योतिषाज्योतिरेतन्मन्त्रकर्मणोऽनन्तरं जुहोतीत्यर्थः । अहः केतुना । व्याख्याते यजुषी ( अ०३७ । क० २१ ) । 'अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति' ( का० २६ । ६ । २० ) । उपयमन्यामानीतं घर्माज्यमग्निहोत्रहोमप्रकारेण समन्त्रकं हुत्वा वाजिनवदुपहवप्रार्थनपूर्वकं भक्षयन्ति होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्रग्नीयजमानाः। घर्मदेवत्यम् ऋग्बृहती । अग्नौ मधु मधुरं घर्माज्यं हुतमस्माभिः । कीदृशेऽग्नौ । इन्द्रतमे इन्द्रं वीर्यमस्यास्ति इन्द्रवान् अत्यन्तमिन्द्रवानिन्द्रतमः । वत्प्रत्यये लोपः वीर्यवत्तमे इत्यर्थः । 'मधु हुतमिन्द्रियवत्तमेऽग्नाविव्येवैतदाह' ( १४ । २ । २ । ४२ ) इति श्रुतेः । हे घर्म हे देव, ते तव हुतशेषमंशं वयमश्याम भक्षयाम । अश्नोतेर्विकरणव्यत्ययेन 'बहुलं छन्दसि' ( पा०२। ४ । ७३ ) इति शपो लुक् । लिङि उत्तमबहुवचने । ते तुभ्यं नमोऽस्तु मा मां हिंसीः आत्मनः परित्राणमर्थ्यते ॥ १६ ॥

## सप्तदशी ।

अ॒भीमं म॑हि॒मा दिवं॒ विप्रो॑ बभूव स॒प्रथाः॑ । उ॒त श्रव॑सा पृथि॒वीᳪं सᳪंसी॑दस्व म॒हाँ २॥ अ॑सि॒ रोच॑स्व देव॒वीत॑मः । वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य सृ॒ज प्र॑शस्त द॒र्शत॑म् ॥ १७ ॥

**उ०** महावीरमासंद्यां करोति । अभीमम् गायत्रीबृहत्यौ । नच गायत्र्या अवसानमस्ति अतिशक्करी वा आग्नेयी अभिबभूव अभिभवति इमं दिवं महिमा यस्य तव । कथंभूतः । विप्रः मेधावी। सप्रथाः सर्वतः पृथुः । महिम्नो विशेषणद्वयम् । तं त्वां ब्रवीमि उत श्रवसा अपिच धनेन श्रवणीयेन वा यशसा । पृथिवीम् अभिबभूवेत्यनुषङ्गः । संसीदस्वेति व्याख्यातम् । रोचस्व दीप्यस्वेत्यनर्थान्तरम् ॥ १७ ॥

**म०** 'अभीममिति महावीरम्' ( का० २६ । ६ । २५ ) । प्रचरणीयं घर्ममासन्द्यां करोति मन्त्रेणेतराणि तूष्णीम् ततः शान्तिपाठ इत्यर्थः । गायत्रीबृहत्यौ मध्येऽवसानहीने अभीमं गायत्री संसीदस्व बृहती यद्वावसानत्रयोपेतातिशक्करी षष्ठ्यक्षराग्निदेवत्या एकैव ऋक् ऋग्द्वयं वेत्यर्थः । हे अग्ने, तव महिमा इमं दिवमभिबभूव अभिभवति 'छन्दसि लुङ्लङ्लिटः' ( पा० ३। ४ । ६) दिवशब्दः पुंलिङ्गः अर्धर्चादित्वात् । कीदृशो महिमा । विप्रः विशेषेण प्राति पूरयति सर्वमिति विप्रो मेधावी । सप्रथाः प्रथनं प्रथो विस्तारस्तेन सहितः सप्रथाः । उतापि च श्रवसा धनेन यशसा वा पृथिवीमभिभवतीत्यनुषङ्गः । संसीदस्वेति व्याख्यातैकादशेऽध्याये सप्तत्रिंशी कण्डिका । तत्र शोचस्वेति पाठेऽत्र रोचस्वेति अर्थ एक एव ॥ १७ ॥

## अष्टादशी ।

या ते॑ घर्म दि॒व्या शुग्या गा॑य॒त्र्याᳪं ह॑वि॒र्धाने॑ । सा त॒ आप्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ । या ते॑ घर्मा॒न्तरि॑क्षे॒ शुग्या त्रि॒ष्टुभ्या॒ग्नीध्रे॑ । सा त॒ आप्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ । या ते॑ घर्म पृथि॒व्याᳪं शुग्या जग॑त्याᳪं सद॒स्या॑ । सा त॒ आप्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ ॥ १८ ॥

**उ०** इत उत्तरे उत्सादनमन्त्राः । शालाकेषु जुहोति । या ते तव हे घर्म, दिव्या दिविभवा द्युलोकं प्रविष्टा । शुक् दीप्तिः । या च गायत्र्यां प्रविष्टा । या च हविर्धाने प्रविष्टा । सा ते तव आप्यायतां वर्धताम् । निष्ट्यायताम् 'स्त्यै ष्ट्यै शब्दसंघातयोः' । निष्ट्याना संहता भवतु । तस्यै शुचे तुभ्यं च हे घर्म, स्वाहा । या ते अन्तरिक्षे त्रिष्टुभि आग्नीध्रे । समानमन्यत् । या ते पृथिव्याम् जगत्याम् । सदस्या सदसि भवा सदस्या । सदसि प्रविष्टा । समानमन्यत् ॥ १८ ॥

**म०** 'चतुर्गृहीतेनाभिजुहोति या ते घर्म दिव्या शुगिति प्रतिमन्त्रम्' ( का० २६ । ७ । ४ ) । अध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं कृत्वा तेन जुहोति अग्नीधा ध्रियमाणेषु त्रिषु शलाकात्रिकेषु त्रिभिर्मन्त्रैस्तृतीयेनोपविश्येत्यर्थः । त्रीणि यजूंषि घर्मदेवत्यानि ऋक्पङ्क्तयः । हे घर्म, या ते तव दिव्या दिवि भवा शुक् दीप्तिः या गायत्र्यां छन्दसि प्रविष्टा या हविर्धाने यज्ञगृहे प्रविष्टा सा ते तव शुक् आप्यायतां वर्धताम् । निष्ट्यायतां संहता दृढा भवतु । 'ष्ट्यै स्त्यै शब्दसङ्घातयोः' लोट् । तस्यै शुचे ते तुभ्यं च स्वाहा । हे घर्म, या ते तवान्तरिक्षे शुक् त्रिष्टुभि छन्दसि अग्नीध्रसदने च प्रविष्टा सा त इति पूर्ववत् ।

या ते हे घर्म, पृथिव्यां शुक् जगत्यां छन्दसि प्रविष्टा। कीदृशी। सदस्या सदसि प्रविष्टा यज्ञगृहे स्थिता सा त इत्युक्तम् ॥१८॥

## एकोनविंशी ।

क्षत्रस्य त्वा परस्पाय ब्रह्मणस्तन्वं पाहि । विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे १९

उ० निष्क्रामति । क्षत्रस्य त्वा महावीरोऽभिधीयते बृहत्या। क्षत्रस्य संबन्धिनः परस्पाय परस्य पालनाय। हे महावीर, अनुक्रामामेति चतुर्थपादे भविष्यति तस्येह संबन्धः। अनुक्रामाम। किंच ब्रह्मणः तन्वं शरीरं पाहि गोपाय। किंच विशः। यज्ञो वै विशः। यज्ञस्य धर्मणा धारणेन निमित्तभूतेन त्वा त्वाम् हे महावीर, वयम् अनुक्रामाम अनुगच्छेम। सुविताय सुगताय सुप्रसूताय वा। नव्यसे नवतराय च कर्मणे अनुक्रामाम ॥ १९ ॥

म० 'क्षत्राय त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय' (का० २६।७।६)। होमानन्तरमध्वर्युः पत्नीमग्रे कृत्वा शालाया निष्क्रामतीत्यर्थः। उपरिष्टाद्बृहती घर्मदेवत्या। हे घर्म, वयं त्वा त्वामनुक्रामाम अनुगच्छाम। त्वं ब्रह्मणः तन्वं शरीरं पाहि पालय। किमर्थमनुगमनम्। क्षत्रस्य क्षत्रियस्य दैवस्य सूर्यस्य परस्पाय परमपालनाय। परःशब्दोऽव्ययम्। पर उत्कृष्टं पायते रक्ष्यत इति परस्पं तस्मै। 'एतद् वै दैवं क्षत्रं य एष तपति' (१४।३।१।१९) इति श्रुतेः। किंच विशः यज्ञस्य धर्मणा धारणेन निमित्तेन वयं त्वामनुक्रामामं 'यज्ञो वै विड्यज्ञस्य त्वारिष्ट्यै' (१४।३।१।१९) इति श्रुतेः। किमर्थम्। नव्यसे सुविताय नवीयसे नूतनाय सुगताय सुप्रसूताय कर्मणे कर्मसिद्ध्यर्थं त्वामनुगच्छामेत्यर्थः। सुष्ठु इतं सुवितम् 'इण् गतौ' क्तः उपसर्गस्योवङादेशः। यद्वा 'षू प्रेरणे' सूयते प्रेर्यते सुवितम् इडागमे धातोरुवङ् ॥ १९ ॥

## विंशी ।

चतुःस्रक्तिर्नाभिर्ऋतस्य सप्रथाः स नो विश्वायुः सप्रथाः स नः सर्वायुः सप्रथाः। अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिम ॥ २० ॥

उ० महावीरं निदधाति। चतुःस्रक्तिः। दिशो महावीरस्य स्रक्तयः कोणाः। यः चतुःस्रक्तिः। यश्च नाभिः नहनम् ऋतस्य सत्यस्य वा यज्ञस्य वा। एवं सप्रथाः सर्वतः पृथुः। सः नः अस्माकम् विश्वायुः सर्वस्यायुषः दाता। सप्रथाः सर्वतश्च प्रथयिता अस्तु। स नः सर्वायुः सप्रथाः। अभ्यासे भूयांसमर्थं मन्यन्ते। त्वत्प्रसादाच्च अपद्वेषः अपगच्छतु द्वेषः अस्मत्तः। वीतरागाः स्यामेत्यभिप्रायः। अपह्वरः। 'ह्वर ह्वल चलने'। अपगच्छतु ह्वरः चलनम् अस्मत्तः। जनित्वा म्रियते मृत्वा जायते इत्येतच्चलनमभिप्रेतम्। अन्यव्रतस्य सश्चिम अन्यत् व्रतं कर्म यस्य मनुष्यकर्मणः सकाशाज्जगदनुग्रहात्मकं यस्य स तथोक्तः। तस्य कर्म वयं सेवामहे सायुज्यं प्राप्ताः सन्तः ॥ २० ॥

म० 'नाभिरसृष्टं प्रवृञ्जनीयं निदधाति चतुःस्रक्तिरिति'। (का० २६।४।१४) प्रवृञ्जनीयं महावीरमुत्तरवेदौ नाभिलग्नं स्थापयतीत्यर्थः। महाबृहती घर्मदेवत्या। स घर्मो नोऽस्माकं सर्वायुरस्तु सर्वं पूर्णमायुर्यस्मात्स सर्वायुः। पूर्णायुःप्रदोऽस्त्वित्यर्थः। पुनरुक्तिरादरार्था। कीदृशः सः। चतुःस्रक्तिः चतस्रः स्रक्तयः कोणा दिग्रूपा यस्य सः 'एष वै चतुःस्रक्तिर्य एष तपति दिशो ह्येतस्य स्रक्तयः' (१४।३।१।१७) इति श्रुतेः। तथा ऋतस्य सत्यस्य यज्ञस्य वा नाभिः नहनं बन्धनस्थानम्। सप्रथाः सविस्तारः। विश्वायुः विश्वस्य जगतः आयुर्यस्मात् जगत आयुर्दाता। सप्रथाः सर्वतः प्रथयिता च। हे घर्म, त्वत्प्रसादात् द्वेषः अपगच्छत्विति शेषः। अस्मत्तो द्वेषः गच्छतु वीतरागाः स्यामेति भावः। 'ह्वर चलने' ह्वरः चलनं जन्ममरणलक्षणं चास्मत्तोऽपगच्छतु। वयमन्यव्रतस्य सश्चिम अन्यत् मनुष्यकर्मणः सकाशाद्भिन्नं व्रतं कर्म जगदनुग्रहरूपं यस्य सोऽन्यव्रतः परमात्मा तस्य। कर्मणि षष्ठी। 'सश्च सेवने' धातुः। अन्यव्रतं परमात्मानं सेवामहे सायुज्यं प्राप्नुम इति भावः। 'अन्यद्वा एतस्य व्रतमन्यन्मनुष्याणाम्' (१४।३।१।१९) इति श्रुतेः ॥ २० ॥

## एकविंशी ।

घर्मैतत्ते पुरीषं तेन वर्धस्व चा च प्यायस्व। वर्धिषीमहि च वयमा च प्यासिषीमहि ॥ २१ ॥

उ० पयसा पूरयति। घर्मैतत्। अनुष्टुप्। घर्म उच्यते। हे घर्म, एतत् पयः ते तव पुरीषं पूरयितृ। तेन वर्धस्वेत्यादिव्याख्यातम् ॥ २१ ॥

म० 'आसेचनवन्ति पयसः पूरयति घर्मैतत्त इति' (का० २६।७।३२)। आसेचनं गर्तः तद्युतानि पात्राणि दुग्धेन पूरयति तानि सप्त महावीरत्रयं द्वे पिन्वने उपयमनो स्रुवश्चेत्यर्थः। अनुष्टुप् घर्मदेवत्या। हे घर्म, एतत्पयः ते तव पुरीषम् पृणाति पूरयति पुरीषं पूरयितृ अन्नम् 'अन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधाति' (१४।३।१।२३) इति श्रुतेः। तेन पयसा वर्धस्व आप्यायस्व च। भवत्प्रसादाद्वयं वर्धिषीमहि आप्यासिषीमहि चेति व्याख्यातम् (अ०२।क०१४) ॥ २१ ॥

## द्वाविंशी ।

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः। सꣳसूर्येण दिद्युतदुदधिर्निधिः ॥ २२ ॥

उ० परिषिञ्चति। अचिक्रदत् परोष्णिक्। घर्मात्मनादित्यः स्तूयते। योऽयं महावीरः प्रवृज्यमानः अचिक्रदत्। क्रन्दतिः शब्दार्थः। पुनःपुनः शब्दमकरोत्। वृषा वर्षिता आहुतिपरिणामद्वारेण। हरिः हरितवर्णः हर्ता वा रसानाम्

महान् प्रभावतः । मित्रोन दर्शतः मित्रइव दर्शनीयः । मित्रो हि सर्वस्यैव मित्रम् । संसूर्येण दिद्युतत् संगत्य सूर्येण सह द्योतते समानइव । उदधिः उदकधारणः । निधिश्च सुखानाम् ॥ २२ ॥

**म०** 'त्रिः परिषिच्याचिक्रददिति' (का० २६ । ७ । १२)। सामगानान्तरमुत्सादनदेशे परिषिच्य वक्ष्यमाणं करोतीत्यर्थः । परोष्णिक् घर्मदेवत्या । घर्मः सूर्यात्मना स्तूयते । वृषा आहुतिद्वारेण वृष्टिकर्ता घर्मः प्रवृज्यमानः सन् अचिक्रदत् 'क्रदि शब्दे' पुनः पुनः शब्दमकरोत् । कीदृशः । हरिः हरितवर्णः रसानां हर्ता वा 'एष वै वृषा हरिर्य एष तपत्येष उ प्रवर्ग्यः' ( १४ । ३ । १ । २६ ) इति श्रुतिः । महान् प्रभावान् । मित्रो न दर्शतः । न उपमार्थः । मित्र इव दर्शनीयः । अतएव सूर्येण सह स दिद्युतत् सूर्यतुल्यो द्योतते । द्युतेर्लुङि णिजन्तस्य रूपमडभावः । सूर्यवत् सर्वं द्योतयतीत्यर्थः । उदधिः उदकं धीयते यस्मिन् । जलस्य धर्ता निधिः सुखानामिति शेषः । सुखनिधिः ॥ २२ ॥

## त्रयोविंशी ।

सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥२३॥

**उ०** सुमित्रिया न उद्वयमेधोऽसीति व्याख्यातास्त्रयो मन्त्राः ॥ २३ ॥ २४ ॥ २५ ॥

**म०** 'चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति' ( का० २६ । ७ । ३७ ) । सपत्नीका ऋत्विग्यजमानाः चात्वाले मार्जनं कुर्वते । पत्न्या अपि मन्त्रपाठः व्याख्याता ( अ० ६ । क० २२ ) ॥ २३ ॥

## चतुर्विंशी ।

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ २४ ॥

**म०** 'उद्वयमित्युत्क्रामत्युत्तरपूर्वार्धम्' ( का० २६ । ७ । ३८ ) । ऐशानीं दिशं प्रति यजमानो गच्छतीत्यर्थः । व्याख्याता ( अ० २० । क० २१ ) ॥ २४ ॥

## पञ्चविंशी ।

एधोऽस्येधिषीमहि । समिदसि तेजोऽसि तेजो मयि धेहि ॥ २५ ॥

**म०** 'अनपेक्षमेत्यैधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति' ( का० २६ । ७ । ३५ ) । यजमानः पश्चादनवलोकयन्नीशानदेशादेत्यैधोऽसीति मन्त्रेणैकां समिधं गृहीत्वा समिदसीति मन्त्रेणाहवनीये दधातीत्यर्थः । मन्त्रद्वयं व्याख्यातम् ( अ० २० । क० २३ ) ॥ २५ ॥

## षड्विंशी ।

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे । तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् ॥ २६ ॥

**उ०** दधिघर्मग्रहणम् । यावती द्यावापृथिवी । महाबृहती ऐन्द्री । यावती यावत्परिमाणे द्यावापृथिव्यौ । यावच्च क्षेत्रं सप्तसिन्धवः सप्तसमुद्राः वितस्थिरे व्याप्नुवन्ति । तावन्तम् हे इन्द्र, ते तव ग्रहम् ऊर्जा अन्नेन सह गृह्णामि । अक्षितमनुपक्षीणं मयि गृह्णामि । मयीत्यधिकरणनिर्देशः । विज्ञानायेति शेषः । गृह्णामीत्यादिव्याख्यातम् ॥ २६ ॥

**म०** 'यावती द्यावापृथिवी इति दधिघर्मग्रहणम्' (का० २६ । ७ । ५४ ) । सपवित्रायामग्निहोत्रहवण्यां दधिघर्मं गृह्णातीत्यर्थः । ब्राह्मी उष्णिक् दधिघर्मदेवत्या इन्द्रदेवत्या च । हे इन्द्र, ऊर्जा अन्नेन सह अक्षितमनुपक्षीणं ते तव ग्रहं तावन्तं तत्परिमाणमहं गृह्णामि । मयि च अक्षितं यथा स्यात्तथा गृह्णामि। तव ग्रहग्रहणेन मयि यज्ञक्षयो मास्त्वित्यर्थः । तावन्तं कियन्तम् । द्यावापृथिवी यावती द्यावाभूमी यत्परिमाणे । च पुनः सप्त सिन्धवः सप्त समुद्राः क्षीरोदाद्याः यावत् यत्परिमाणे देशे वितस्थिरे विशेषेण स्थिताः तावन्तमतिमहत्तरं दधिघर्मं गृह्णामीत्यर्थः ॥ २६ ॥

## सप्तविंशी ।

मयि त्यदिन्द्रियं बृहन्मयि दक्षो मयि क्रतुः । घर्मस्त्रिशुग्विराजति विराजा ज्योतिषा सह ब्रह्मणा तेजसा सह ॥ २७ ॥

**उ०** भक्षयति । मयि त्यत् पङ्क्तिः यजमानाशीः । मयि त्यत् तत् इन्द्रियं वीर्यम् बृहत् महत् अस्तु । मयि च दक्षः संकल्पसंपत्तिः अस्तु । मयि च क्रतुः संकल्पः विशिष्टोऽस्तु । मयि च घर्मः त्रिशुक् तिस्रः शुचोऽस्येति त्रिशुक् । ताश्च व्याख्याताः शाकलमन्त्रेषु । विराजति विराजत्विति लकारव्यत्ययः । विराजा आदित्याख्येन ज्योतिषा सह ब्रह्मणा त्रय्याख्येन तेजसा सह ॥ २७ ॥

**म०** 'मयि त्यदिति भक्षणम्' ( का० २६ । ७ । ५५ ) । हुतशेषं दधिघर्मं यजमानर्त्विजः सोपहवं भक्षयन्तीत्यर्थः । पङ्क्तिः अष्टाक्षरपञ्चपादा दधिघर्मदेवत्या यजमानाशीर्देवतेति केचित् । बृहत् महत् त्यत् तत् इन्द्रियं प्रसिद्धं वीर्यं मयि विराजति विराजतु लकारव्यत्ययः । दक्षः संकल्पसिद्धिः मयि विराजतु । क्रतुः सत्संकल्पो मयि विराजतु । विशेषेण राजते विराट् तेन जगत्प्रसिद्धेन ज्योतिषा तेजसा आदित्याख्येन सह ब्रह्मणा त्रयीलक्षणेन ज्योतिषा च सह घर्मो मयि विराजतु । कीदृशो घर्मः । त्रिशुक् तिस्रः शुचः दीप्तयो यस्य सः तास्तिस्रः शुचो या ते घर्म दिव्या शुगित्यष्टादश्यां कण्डिकायां शाकलमन्त्रे व्याख्याताः ॥ २७ ॥

## अष्टाविंशी ।

पयसो रेत आभृतं तस्य दोहमशीमह्युत्तरामु-

त्त॒राᳪं॑ समा॑म् । त्विषः॑ सं॒वृक् क्रत्वे॒ दक्ष॑स्य ते सु॒षु॒म्णस्य॑ ते सुषुम्णाग्निहुतः । इन्द्र॑पीतस्य प्र॒जाप॑तिभक्षितस्य॒ मधु॑मत उप॑हूत॒ उप॑हूतस्य भक्षयामि॥२८॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

**उ०** किंच । पयसो रेतः पयसः यत् रेतः जगदुत्पत्तिबीजम् । आभृतमाहृतम् तस्य दोहं प्रपूरणम् । अशीमहि व्याप्नुयाम । उत्तरामुत्तरां समाम् । उत्तरामुत्तरामिति वीप्सावचनम् । समाशब्दः संवत्सरवचनः । प्रतिसंवत्सरं च अशीमहि । सदाकालं यायजूकाः स्यामेत्यर्थः । त्विषः संवृक् महाव्रतीये भक्षणं दधिघर्मस्य । यस्त्वं त्विषः दीप्तेः संवृक् । संपूर्वो वृजिः स्वीकरणे वर्तते । दीप्तेः स्वीकरणः । तस्य तव । क्रत्वे क्रत्वोरिति विभक्तिव्यत्ययः । साधुक्रतुभूतस्य । दक्षस्य संकल्पसिद्धिभूतस्य च । सुषुम्णस्य साधुसुखभूतस्य । हे सुषुम्ण सुसुखस्वभाव, ते सुषुम्णाग्निहुतः । षष्ठ्यन्तमेतत् । अग्नौ हूयत इत्यग्निहुत् तस्याग्निहुतः । अपिच इन्द्रपीतस्य प्रजापतिभक्षितस्य । मधुमतः रसवतः उपहूतः उपहूतस्य ग्रहस्य भक्षयामि ॥ २८ ॥

इति उवटकृतौ मन्त्रभाष्ये अष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

**म०** गायत्र्यवसानहीना दधिघर्मभक्षणे एवं विनियुक्ता। पयसो रेतो वीर्यं सारं जगदुत्पत्तिबीजं यत् आभृतमाहृतम् दधिघर्मरूपं यत् तस्य दोहं प्रपूरणं वयमुत्तरामुत्तरां समामुत्तरोत्तरस्मिन् वर्षे अशीमहि व्याप्नुयाम 'कालाध्वनोः–' (पा० २ । ३।५) इति द्वितीया । वयं सर्वदा यायजूकाः स्यामेत्यर्थः । 'त्विषः संवृगिति महाव्रतीये' । ( का० २६ । ७ । ५६) महाव्रतीयेऽहनि त्विष इति मन्त्रेण हुतशेषदधिघर्मभक्षणं कार्यमित्यर्थः । अतिजगती दधिघर्मदेवत्या । संवृणक्ति स्वीकरोतीति संवृक् स्वीकर्ता । सापूर्वो वृजिः स्वीकरणार्थः । हे त्विषः संवृक् कान्तेः स्वीकर्तः, हे सुषुम्ण, शोभनं सुम्नं सुखं यस्मात् सुषुम्णः तत्संबोधनम् हे सुखदातः हे दधिघर्म, अहमुपहूतः कृतोपहवः सन् ते तवांशं भक्षयामि। कर्मणि षष्ठी वा । त्वां भक्षयामि । एकस्तेशब्दः पादपूरणः । कीदृशस्य ते । क्रत्वे दक्षस्य । चतुर्थी षष्ठ्यर्थे । क्रतोः संकल्पस्य दक्षः सिद्धिदाता तस्य संकल्पसिद्धिदातुः । क्रतुशब्दस्य चतुर्थ्येकवचने गुणाभाव आर्षः । तथा सुषुम्णस्य शोभनसुखभूतस्य । अग्निहुतः अग्नौ हूयत इत्यग्निहुत् तस्य अग्नौ हुतस्य । इन्द्रपीतस्य इन्द्रेण पीतो भक्षितस्तस्य । प्रजापतिभक्षितस्य प्रजापतिना भक्षितस्तस्य । मधुमतः मधुरस्वादोपेतस्य । उपहूतस्य कृतोपहवस्य । एवंविधस्य तवांशं हे दधिघर्म, अहं भक्षयामीत्यर्थः । समाप्ता घर्मेतिकर्तव्यता ॥ २८ ॥

श्रीमन्महीधरकृते वेददीपे निरूपितः ।
अष्टत्रिंशोऽयमध्यायो महावीरनिरूपणः ॥ ३८ ॥



# एकोनचत्वारिंशोऽध्यायः ।

## तत्र प्रथमा ।

स्वाहा॑ प्रा॒णेभ्यः॒ सा॒धि॑पतिकेभ्यः । पृ॒थि॒व्यै स्वाहा॒ग्नये॒ स्वाहा॒न्तरि॑क्षाय॒ स्वाहा॑ वा॒यवे॒ स्वाहा॑ । दि॒वे स्वाहा॒ सूर्या॑य॒ स्वाहा॑ ॥ १ ॥

**उ०** इतउत्तरं प्रवर्ग्यभेदं प्रायश्चित्तं स्वाहाप्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिं यावत् जुहोति । स्वाहा प्राणेभ्यः मनो वै प्राणानामधिपतिः । सुहुतमस्तु प्राणेभ्यः मनसा सहितेभ्यः । पृथिव्यै स्वाहेत्यादिस्पष्टम् ॥ १ ॥ २ ॥ ३ ॥

**म०** प्रवर्ग्ये घर्मभेदे प्रायश्चित्तम् । तत्र 'स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिमायामुत्तमां च मनसः काममाकूतिमिति' ( का० २६ । ७ । ४९ ) । तदर्थोऽयम् अध्वर्युः भूमिर्भूमिम् य ऋतेचिदिति मन्त्राभ्यां भग्नं घर्ममभिमृश्य परमेष्ठ्यादिचतुस्त्रिंशदाहुतीर्हुत्वा स्वाहा प्राणेभ्य इत्याद्यां पूर्णाहुतिं हुत्वा पृथिव्यै स्वाहेत्याहुतिर्विंशतिं सकृद्गृहीतेन हुत्वा मनस इत्यन्त्यां पूर्णाहुतिं करोतीति । मन्त्रार्थो यथा । साधिपतिकेभ्यः अधिपतिना हिरण्यगर्भेण सह वर्तमानेभ्यः प्राणेभ्यः स्वाहा सुहुतमस्तु इति पूर्णाहुतिमन्त्रः । ततो विंशतिः स्पष्टा मन्त्राः । पृथिव्यै सुहुतमस्तु । एवमग्रेऽपि अग्नये अन्तरिक्षाय वायवे दिवे सूर्याय ॥ १ ॥

## द्वितीया ।

दि॒ग्भ्यः स्वाहा॑ च॒न्द्राय॒ स्वाहा॒ नक्ष॑त्रेभ्यः॒ स्वाहा॒द्भ्यः स्वाहा॒ वरु॑णाय॒ स्वाहा॑ । नाभ्यै॒ स्वाहा॑ पू॒ताय॒ स्वाहा॑ ॥ २ ॥

**म०** दिग्भ्यः चन्द्राय नक्षत्रेभ्यः अद्भ्यः वरुणाय नाभ्यै देवतायै पूताय शोधकाय । पुनातीति पूतः देवस्तस्मै ॥ २ ॥

## तृतीया ।

वा॒चे स्वाहा॑ प्रा॒णाय॒ स्वाहा॑ प्रा॒णाय॒ स्वाहा॑ । चक्षु॑षे॒ स्वाहा॒ चक्षु॑षे॒ स्वाहा॒ श्रोत्रा॑य॒ स्वाहा॒ श्रोत्रा॑य॒ स्वाहा॑ ॥ ३ ॥

**म०** वाचे वागधिष्ठात्रे एवमग्रेऽपि । प्राणाय प्राणेन्द्रियाधिष्ठात्रे । प्राणादीनां द्विस्त्वान्मन्त्रावृत्तिः । चक्षुषे तदधिष्ठात्रे । श्रोत्राय ॥ ३ ॥

## चतुर्थी ।

मन॑सः॒ काम॒माकू॑तिं वा॒चः स॒त्यम॑शीय । प॒शू॒नाᳪं रू॒पमन्न॑स्य॒ रसो॒ यशः॒ श्रीः श्र॑यतां॒ मयि॒ स्वाहा॑ ॥ ४ ॥

**उ०** मनसः कामम् । पूर्णाहुतिहोमः अनुष्टुप् श्रीदेवत्या यजमानाशीः । मनसः कामं कामप्राप्तिः । आकूतिं आकवनम् । आत्मनो धर्मो मनसः संयोगे सति जायते । वाचः सत्यम् । यष्टव्यं मयेत्यादि । अशीय प्राप्नुयाम् । अनया पूर्णाहुत्या । किंच । पशूनां रूपं पशूपकारः । अन्नस्य रसः । यशश्च श्रीश्च श्रयतां आश्रयन्तु । मयि मामिति विभक्तिव्यत्ययो वा । यन्महावीरभेदनेनापचितं तत्सर्वमुपचीयतामित्यर्थः ॥ ४ ॥

**म०** द्वितीयः पूर्णाहुतिमन्त्रः । अहं मनसः काममभिलाषम् । आकुञ्चनमाकूतिः प्रयत्नस्तं चाशीय प्राप्नुयाम् । वाचः सत्यं चाशीय मद्वाक् सत्यं वदतु । मयि एतत्सर्वं श्रयतां तिष्ठतु । पशूनां रूपं पशुसंबन्धिनी शोभा अन्नस्य रसः स्वादुत्वम् यशः कीर्तिः श्रीर्लक्ष्मीश्च ॥ ४ ॥

## पञ्चमी ।

प्रजापतिः संभ्रियमाणः सम्राट् संभृतो वैश्वदेवः संसन्नो घर्मः प्रवृक्तस्तेज उद्यत आश्विनः पयस्यानीयमाने पौष्णो विष्यन्दमाने मारुतः क्लथन् । मैत्रः शरसि संताय्यमाने वायव्यो ह्रियमाण आग्नेयो हूयमानो वाग्घुतः ॥ ५ ॥

**उ०** प्रजापतिः संभ्रियमाण इति महावीरावस्थानप्रतिपादिका श्रुतिः ॥ ५ ॥

**म०** 'प्रजापतिः संभ्रियमाण इति यथाकालमिति' ( का० २६ । ७ । ५० ) । संभ्रियमाणाद्यवस्थायां महावीरभेदे प्रजापतये स्वाहेत्याद्या यथाकालमाहुतयो होतव्या इति सूत्रार्थः । तद्यथा मन्त्रो दर्शयति । संभ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता । प्रजापतये स्वाहेति प्रायश्चित्ताहुतिर्होतव्येत्यर्थः । प्रजापतिः संभ्रियमाणो यथाकालं प्रायश्चित्तदेवतेत्युक्तत्वात् ( अनु० ४ । ८ ) । निष्ठिताभिमर्शनादारभ्याजापयोऽवसेचनान्तं संभ्रियमाणः । सम्राट् संभृतः पयोऽवसेकानन्तरं कुशासादनात्प्राक् संभृत इत्युच्यते । तत्र भेदे सम्राट् प्रायश्चित्तदेवता सम्राजे स्वाहेति । वैश्वदेवः संसन्नः । आसादनादारभ्य मुञ्जप्रलवेष्वधिश्रयणात् प्राक् संसन्नः । तत्र भेदे विश्वदेवदैवतः विश्वेभ्यो देवेभ्यः स्वाहेति । घर्मः प्रवृक्तः । अधिश्रयणादारभ्य परिशासाभ्यां ग्रहणात्प्राक् प्रवृक्तः प्रवृज्यत इति । तत्र भेदे घर्माय स्वाहेति । तेज उद्यतः । उद्यम्यत इत्युद्यतः उद्यमनादारभ्य प्रागजापयोऽवसेकादुद्यतः । तत्र भेदे तेजसे स्वाहेति । आश्विनः पयस्यानीयमाने । अजापयस्यासिच्यमाने घर्मभेदे आश्विनः अश्विदेवत्यो घर्मः अश्विभ्यां स्वाहेति जुहोति । पौष्णी विष्यन्दमाने 'स्यन्दू प्रस्रवणे' विशेषेण स्यन्दमाने घृते बहिर्निःसरति सति भेदे घर्मः पौष्णः पूषदेवत्यः पूष्णे स्वाहेति जुहोति । मारुतः क्लथन् । क्लथनं मथ्ये घृतस्यावर्तनम् तदा मरुद्देवत्यः तत्र भेदे मरुद्भ्यः स्वाहेति जुहोति । मैत्रः शरसि संताय्यमाने पयोऽवसेके योपरि तरिका जायते सा शरःशब्देनोच्यते तस्मिन् संताय्यमाने मथ्यमाने मैत्रो मित्रदेवत्यः 'तायृ पालनसंतत्योः' कर्मणि यकि शानचि रूपम् । तत्र शरआदिहरणात् प्राक् भेदे मित्राय स्वाहेति जुहोति । वायव्यो ह्रियमाणः । आहवनीयं ह्रियमाणो होमात्प्राक् वायुदेवतः तत्र भेदे वायवे स्वाहेति जुहोति । आग्नेयो हूयमानः । हूयमानो घर्मोऽग्निदैवतः तत्र तद्भेदे अग्नये स्वाहेति जुहोति । वाग्घुतः । हुतो हुतहोमादूर्ध्वं प्रागुत्तरघर्मारम्भात् वाक् वाग्दैवतः तत्र भेदे वाचे स्वाहेति जुहोति । एता आहुतयः सकृद्गृहीताज्यैः ॥ ५ ॥

## षष्ठी ।

सविता प्रथमेऽहन्नग्निर्द्वितीये वायुस्तृतीय आदित्यश्चतुर्थे चन्द्रमाः पञ्चम ऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे मित्रो नवमे वरुणो दशम इन्द्र एकादशे विश्वेदेवा द्वादशे ॥ ६ ॥

**उ०** सविता प्रथमेऽहन्नित्याह । देवतासंबन्धविधाना श्रुतिः ॥ ६ ॥ महावीरप्रायश्चित्तानि समाप्तानि ॥

**म०** 'सविता प्रथमेऽहन्निति च प्रत्यहमिति' ( का० २६ । ७ । ५१ ) । प्रथमे अहन् दिने घर्मभेदे सविता देवता सवित्रे स्वाहेति जुहोति । एवमग्रेऽपि । अग्निर्द्वितीये द्वितीयेऽहनि घर्मभेदेऽग्निर्देवता । वायुस्तृतीये तृतीयेऽहनि वायुर्देवता । चतुर्थे आदित्यो देवता । चन्द्रमाः पञ्चमेऽह्नि । ऋतुः षष्ठेऽह्नि । मरुतः सप्तमेऽह्नि । बृहस्पतिरष्टमेऽह्नि । मित्रो नवमेऽह्नि । वरुणो दशमेऽह्नि । इन्द्र एकादशेऽह्नि । विश्वेदेवाः द्वादशेऽह्नि देवता । तत्र भेदे विश्वेभ्यो देवेभ्यः स्वाहेति जुहोति । उपसत्प्रवृद्धौ एता एवाहुतयः पुनरादित आरभ्यावर्त्यन्ते ॥ ६ ॥

महावीरप्रायश्चित्तानि समाप्तानि ॥

## सप्तमी ।

उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥ ७ ॥

**उ०** उग्रश्च । अग्निकण्डिका । अरण्याध्ययनसामान्यादिह पाठः । मारुती गायत्री विमुखाख्या । भीमश्च । ध्वान्तश्च । धुनिश्च । सासह्वांश्च । अभियुग्वा च । विक्षिपश्च । अत्रापि चकारः समुच्चयार्थीयः । एवं सप्त मरुतः ॥ ७ ॥

**म०** 'विमुखेनारण्येऽनूच्यमिति' ( का० १८ । ४ । २४ ) । चयने मारुतान् षट् पुरोडाशान् शुक्रज्योतिश्चेत्यादिषण्मारुतमन्त्रैः ( १७ । ८०—८५ ) हुत्वारण्येऽनूच्यसंज्ञं सप्तमं पुरोडाशं विमुखसंज्ञेनोग्रश्चेति मन्त्रेण जुहुयात् । तथाचानुक्रमणी 'उग्रश्च मारुती गायत्री विमुखाख्यो मन्त्रोऽग्नौ विनियुक्तस्तस्मादाग्निक एवास्यर्षिः परमेष्ठी प्राजापत्यो वेति' ( ४ । ८ ) । आग्निकः प्रजापतिर्ऋषिः । अस्य मन्त्रस्यात्र पाठोऽरण्ये पाठ-

योग्यत्वात् । अथ मन्त्रार्थः । य एते उग्रादिनामकाः सप्त मरुतः तेभ्यः स्वाहा सुहुतमस्तु । उग्रः उत्कृष्टः । बिभेत्यस्मादसौ भीमः । ध्वनति शब्दं करोतीति ध्वान्तः । धूनयति कम्पयति शत्रूनिति धुनिः । सहते शत्रूनभिभवति ससहान् 'सहतेः क्वसुश्च' ( पा० ३ । २ । १०७ ) इति क्वसुप्रत्ययः । संहितायामभ्यासदीर्घश्छान्दसः । अभियुनक्ति अस्मत्संमुखं योगं प्राप्नोतीत्यभियुग्वा । 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति युजेः क्वनिप्प्रत्ययः । विक्षिपः विविधं क्षिपति रिपूनिति विक्षिपः 'इगुपध–' (पा० ३।१।१३५) इति कप्रत्ययः ॥७॥

## अष्टमी ।

अ॒ग्निꣳ हृद॑येना॒शनि॒ꣳ हृदयाग्रेण॑ पशु॒पतिं॑ कृत्स्न॒हृद॑येन भ॒वं य॒क्ना । श॒र्वं मत॑स्नाभ्या॒मीशा॑नं म॒न्युना॑ महादे॒वम॑न्तः प॒र्श॒व्येनो॒ग्रं दे॒वं व॑नि॒ष्ठुना॑ वसिष्ठ॒हनुः॒ शिङ्गी॑नि को॒श्याभ्या॑म् ॥ ८ ॥

उ० अग्निं हृदयेन । आश्वमेधिकं आ अध्यायसमाप्तेः । अरण्येऽध्येयत्वादिह पाठः । द्वे कण्डिके श्रुतिर्देवताश्चावयवसंबन्धविधानात् ॥ ८ ॥

म० 'विमुखाच्च परेभ्यो मा नो मित्र इति प्रत्यृचमनुवाकाभ्यामन्त्यां द्यावापृथिवीयामिति' (का० २० । ८ । ६—८)। अस्यार्थः उग्रश्चेति मन्त्रो विमुखः ततः परेभ्यो देवताश्वाङ्गेभ्योऽग्निं हृदयेनेत्यादिभ्यश्चतुर्गृहीतमाज्यं गृहीत्वा जुहोति । तत्रापि पक्षद्वयम् । अग्नये स्वाहा हृदयाय स्वाहा अशनये स्वाहा हृदयाग्राय स्वाहा इत्यादि कात्यायनादीनामभिप्रायः । अग्निं हृदयेन प्रीणामि स्वाहेत्यादि हरिस्वामिमते प्रयोगः । ततश्चाग्निं हृदयेनेत्यादीन् विश्वेभ्यो देवेभ्यः स्वाहेत्यन्तान्होमान्कृत्वा मा न इत्यनुवाकाभ्यां (२५ । २४—३९) षोडशाहुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेति चरमामाहुतिं जुहोतीति सूत्रार्थः । 'अरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिं जुहोती'ति श्रुतेः अरण्येऽनूच्यानरण्ये पठितानग्निं हृदयेनेत्यादीन्विश्वेभ्यो देवेभ्यः स्वाहेत्येवमन्तान्होमान्कृत्वा द्यावापृथिवीयामुत्तमामाहुतिं जुहोतीति श्रुतेरर्थः । तथा चानुक्रमणी 'अग्निꣳ हृदयेनाश्वमेधिकानि तत्रत्य एवर्षिर्लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिꣳशत्' (४ । ८) । तत्राग्निं हृदयेन उग्रं लोहितेन द्वे कण्डिके ब्राह्मणरूपे देवताश्चावयवसंबन्धविधानात् । अरण्येऽध्येयत्वादिह पाठः । लोमादीन्यङ्गान्येव पठितानि । आयासादयो देवता एव । अथ मन्त्रार्थः । हृदयेनाङ्गेनाग्निं देवं प्रीणामि । हृदयस्याग्रभागेनाशनिं देवं प्रीणामि । समग्रहृदयेन पशुपतिं देवं प्रीणामि । यक्ना यकृता कालखण्डेन भवं प्रीणामि । 'पद्दन्–' ( पा० ६ । १ । ६३ ) इत्यादिना यकृच्छब्दस्य यकन्नादेशः । मतस्ने हृदयास्थिविशेषौ ताभ्यां शर्वं देवं प्रीणामि । मन्युना अश्वसंबन्धिक्रोधेन ईशानं देवं प्रीणामि । अन्तर्वर्तमानेन पर्शव्येन पार्श्वास्थिसंबन्धिना मांसेन महादेवं देवं प्रीणामि । पर्शवः पार्श्वास्थीनि । वनिष्ठुः स्थूलान्त्रं तेनोग्रं देवं प्रीणामि । वसिष्ठहनुः वसिष्ठस्य देवस्य हनुः कपोलैकदेशो ज्ञातव्यः । यद्वा वसिष्ठा या हनुः कपोलाधोदेशः 'तत्परा हनुः' इत्यमरः । तत्परा कपोलाधोभागस्था हन्त्याहारमिति हनुः लिङ्गव्यत्ययः । वसिष्ठहन्वा कोशाभ्यां कोशौ हृदयकोशः तत्स्थाभ्यां मांसपिण्डाभ्यां च शिङ्गीनि शिङ्गिसंज्ञानि दैवतानि प्रीणामि ॥ ८ ॥

## नवमी ।

उ॒ग्रं लोहि॑तेन मि॒त्रꣳ सौव्र॑त्येन रु॒द्रं दौर्व्र॑त्येनेन्द्रं॑ प्रक्री॒डेन॑ म॒रुतो॒ बले॑न सा॒ध्यान्प्र॒मुदा॑ । भ॒वस्य॒ कण्ठ्य॒ꣳ रु॒द्रस्या॑न्तःपा॒र्श्व्यं॑ म॒हा॒दे॒वस्य॒ यकृ॑च्छ॒र्वस्य॑ वनि॒ष्ठुः प॑शु॒पतेः॑ पु॒रीतत् ॥ ९ ॥

उ० उग्रेति स्पष्टार्थः ॥ ९ ॥

म० लोहितेनासृजा उग्रं देवं प्रीणामि । शोभनं व्रतं कर्म यस्य स सुव्रतस्तस्य भावः सौव्रत्यं शोभनगत्यादिकर्मकर्तृत्वं तेन मित्रं देवं प्रीणामि । दुष्टं स्खलनोच्छलनादि व्रतं यस्य स दुर्व्रतः तस्य भावो दौर्व्रत्यम् तेन रुद्रं देवं प्रीणामि । प्रकृष्टं क्रीडनं प्रक्रीडः तेनेन्द्रं देवं प्रीणामि । बलेन सामर्थ्येन मरुतो देवान्प्रीणामि । प्रमुदा प्रकृष्टा मुत् हर्षः प्रमुत् तया साध्यान्देवान्प्रीणामि । भवस्य कण्ठ्यम् अत्र षष्ठ्यन्तो देवः अङ्गं प्रथमान्तम् कण्ठ्यं कण्ठे भवं मांसं भवस्यास्तु । विभक्तिव्यत्ययो वा । कण्ठ्येन भवं देवं प्रीणामि । एवमग्रेऽपि । पार्श्वस्यान्तर्मध्ये भवं मांसमन्तःपार्श्व्यं तद्रुद्रस्यास्तु । यकृत् कालखण्डं महादेवस्यास्तु । वनिष्ठुः स्थूलान्त्रं शर्वस्यास्तु । पुरीतत् हृदयाच्छादकमन्त्रं पशुपतेर्देवस्यास्तु ॥ ९ ॥

## दशमी ।

लोम॑भ्यः॒ स्वाहा॒ लोम॑भ्यः॒ स्वाहा॑ त्व॒चे स्वाहा॑ त्व॒चे स्वाहा॒ लोहि॑ताय॒ स्वाहा॒ लोहि॑ताय॒ स्वाहा॒ मेदो॑भ्यः॒ स्वाहा॒ मेदो॑भ्यः॒ स्वाहा॑ । मा॒ꣳसेभ्यः॒ स्वाहा॑ मा॒ꣳसेभ्यः॒ स्वाहा॒ स्नाव॑भ्यः॒ स्वाहा॒ स्नाव॑भ्यः॒ स्वाहा॒स्थभ्यः॒ स्वाहा॒स्थभ्यः॒ स्वाहा॑ म॒ज्जभ्यः॒ स्वाहा॑ म॒ज्जभ्यः॒ स्वाहा॑ । रेत॑से॒ स्वाहा॑ पा॒यवे॒ स्वाहा॑ ॥ १० ॥

उ० तथाचानुक्रमणी 'अग्निꣳ हृदयेनाश्वमेधिका तत्रत्य एवर्षिर्लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् १०

म० लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् । लोमादीन्यङ्गानि । लोमभ्यः स्वाहा लोमानि जुहोमीत्यर्थः । २, त्वचे ४, लोहिताय ६, मेदोभ्यः मेदो धातुविशेषः ८, मांसेभ्यः १०, स्नावभ्यः स्नावानः स्नायवो नसाः १२, अस्थभ्यः

'छन्दस्यपि दृश्यते' ( पा० ७ । १ । ७६ ) इत्यस्थिशब्दस्य हलादिविभक्तावप्यनङादेशः १४, मज्जभ्यः मज्जा षष्ठी धातुः १६, रेतसे रेतो वीर्यम् १७, पायवे पांयुर्गुदम् १८ ॥ १० ॥

## एकादशी ।

आयासाय स्वाहा प्रायासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा । शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ॥ ११ ॥

उ० आयासायेत्यादयः स्पष्टार्थाः ॥ ११ ॥ १२ ॥ १३ ॥

म० आयासाय आयासादयो देवविशेषाः १९, प्रायासाय २०, संयासाय २१, वियासाय २२, उद्यासाय २३, शुचे २४, शोचते २५, शोचमानाय २६, शोकाय २७ ॥ ११ ॥

## द्वादशी ।

तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय स्वाहा । निष्कृत्यै स्वाहा प्रायश्चित्त्यै स्वाहा भेषजाय स्वाहा ॥ १२ ॥

म० तपसे २८, तप्यते २९, तप्यमानाय ३०, तप्ताय ३१, घर्माय ३२, निष्कृत्यै ३३, प्रायश्चित्त्यै ३४, भेषजाय ३५ ॥ १२ ॥

## त्रयोदशी ।

यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा ॥ १३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

इति उवटकृतौ मन्त्रभाष्ये एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

म० यमाय ३६, अन्तकाय ३७, मृत्यवे ३८, ब्रह्मणे ३९, ब्रह्महत्यायै ४०, विश्वेभ्यो देवेभ्यः ४१, एतेभ्यो देवेभ्यः सुहुतमस्तु । एता आहुतीर्हुत्वा द्यावापृथिवीभ्यः स्वाहेत्यन्त्यामाहुतिं जुहुयात् ४२ । एतावता कर्मकाण्डं समाप्तम् ॥ १३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
गतोऽध्याय उपान्त्योऽयं प्रोक्तघर्मादिनिष्कृतिः ॥ ३९ ॥

---

# चत्वारिंशोऽध्यायः ।

## तत्र प्रथमा ।

ईशा वास्यमिदꣳ सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥१॥

उ० समाप्तं कर्मकाण्डमिदानीं ज्ञानकाण्डं प्रस्तूयते । ईशावास्यम् । तिस्रोऽनुष्टुभः । दध्यङ्ङाथर्वणऋषिः स्वशिष्यं पुत्रं वा गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीतवेदमुत्पादितपुत्रं यथाशक्ति अनुष्ठितयज्ञमपापं निस्पृहं यमनियमवन्तमतिथिपूजापनीतकिल्बिषं मुमुक्षुमुपसन्नं शिक्षयन्नाह । ईशा वास्यम् । इदं सर्वम् ईशा 'ईश ऐश्वर्ये' तृतीयान्तस्यैतद्रूपम् । यदीशनेन । वास्यं वसनीयम् ममेदमित्यनया भावनया आच्छादनीयम् । इदं सर्वमिति प्रत्यक्षतो निर्दिश्यत इति । यत्किंच यत्किंचशब्दो भिन्नक्रमः । किंच । यत् जगत्यां पृथिव्यां जगत् जङ्गमादि स्वस्वामिसंबन्धाभिलक्षितं स्यात् । तेनानेन सर्वेण । त्यक्तेन त्यक्तस्वस्वामिसंबन्धेन । भोगान्भुञ्जीथाः अनुभावयस्व । मा गृधः । 'गृधु अभिकाङ्क्षायाम्' । माभिकाङ्क्षीः ममेदमिति धियं त्यज । कस्यस्विद्धनम् । स्विन्निपातो वितर्कवचनः । कस्य पुनरेतद्धनं न कस्यचिदपीत्यभिप्रायः । सर्वाण्ययथार्थानि हि द्रव्याण्युत्पद्यन्ते । तद्यथा । स्त्रियमिति अन्यथा भुङ्क्ते अन्यथा पुत्र अन्यथा प्राघूर्णकः । तथा कटककेयूरादीन्यलंकरणानि अन्यं चान्यं च पुरुषमुपतिष्ठमानानि दृश्यन्ते । अतः सर्वार्थस्य स्वस्वामिसंबन्धः सा त्वविद्या । निःस्पृहस्य योगेऽधिकार इति वाक्यार्थः ॥ १ ॥

गणेशनरहरिलक्ष्मीर्नत्वा तत्कृपया मया ।
संहिताचरमाध्याये वेददीपो वितन्यते ॥

म० एकोनचत्वारिंशताध्यायैः कर्मकाण्डं निरूपितम् । इदानीं कर्माचरणशुद्धान्तःकरणं प्रति ज्ञानकाण्डमेकेनाध्यायेन निरूप्यते । ईशावास्यमित्यादिमन्त्राणां कर्मसु विनियोगो नास्ति तेषां शुद्धत्वैकत्वापापविद्धत्वाशरीरत्वसर्वगतत्वाद्यात्मयाथात्म्यप्रतिपादनात् । तच्च कर्मणा विरुध्यते । नहीदृगात्मोत्पाद्यो विकार्य आप्यः संस्कार्यः कर्ता भोक्ता वा भवेद्येन कर्मशेषता स्यात् । तस्मादविद्याकृतमात्मनोऽनेकत्वकर्तृत्वभोक्तृत्वाशुद्धत्वपापविद्धत्वाद्यङ्गीकृत्य लोकबुद्धिसिद्धानि कर्माणि विहितानि । यो हि दृष्टेन ब्रह्मवर्चसादिना अदृष्टेन स्वर्गादिना कर्मफलेनार्थी सन्नहं द्विजातिः कर्माधिकारवानित्यात्मानं मन्यते तस्य कर्माधिकारः । तस्मादेते मन्त्रा आत्मयाथात्म्यप्रकाशनेन शोकमोहादिसाधनमज्ञानं विनिवर्त्यात्मज्ञानं जनयन्तीत्यभिधेयसंबन्धप्रयोजनानि । इदानीं ते मन्त्रा व्याख्यायन्ते । ईशा वास्यम् । आत्मदेवत्य अनुष्टुप्छन्दस्कोऽध्यायो दधीचाथर्वणेन दृष्टः । गर्भाधानादिसंस्कारसंस्कृतमधीतवेदं जनितसुतं यथाशक्तिकृतयज्ञं निष्पापं निःस्पृहं यमनियमोपेतं मुमुक्षुमुपसन्नं शिष्यं पुत्रं वा ऋषिरुपदिशन्नाह । 'ईश ऐश्वर्ये' क्विप् ईष्टे इतीट् ईशिता परमेश्वरः । स हि सर्वजन्तूनामात्मा सन् सर्वमीष्टे । तेन स्वेनात्मनेशा इदं प्रत्यक्षतो दृश्यमानं सर्वं वास्यम् 'वस आच्छादने' 'ऋहलोर्ण्यत्' ( पा० ३ । १ । १२४ ) इति ण्यत्प्रत्ययः । आच्छादनीयं परमात्माहमेवेदं सर्वमिति परमार्थसत्यरूपेणात्मना सर्वमिदमनृतमाच्छादनीयम् । परमात्माहमेवास्मि नान्य-

दस्तीति चिन्तयेदित्यर्थः । यत् किंचेति भिन्नक्रमः । किंच यत् जगत्यां लोकत्रये जगत् जङ्गमादिकं स्वामिसंबन्धालिङ्गितं भवेत् तेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसंबन्धेन भुञ्जीथाः भोगमनुभवेः । मा गृधः 'गृधु अभिकाङ्क्षायाम्' आकाङ्क्षां मा कृथाः । ममेदमिति धियं त्यजेत्यर्थः । किमिति स्विदिति निपातौ वितर्के । धनं कस्य स्वित् । न कस्यापीत्यर्थः । सर्वाणि द्रव्याण्यन्योन्यमुपगच्छन्ति दृश्यन्ते अतो ममेदमिति बुद्धिरविद्या तां त्यजतो योगेऽधिकार इत्यर्थः ॥ १ ॥

## द्वितीया ।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥

**उ०** निःस्पृहस्यापि योगिनो ज्ञाननिमित्ते कर्मण्यधिकार इत्येतमर्थमाह । कुर्वन्नेव । कुर्वन्नेव कर्माणि मुक्तिहेतुकानि । इह लोके जिजीविषेत् । जिजीविषेरिति पुरुषव्यत्ययः । प्रत्यक्षकृतत्वान्मन्त्रस्य । जीवितुमिच्छेः पथ्यहितमितभक्षणेन । शतं समाः इत्युपलक्षणार्थम् । यावदायुःपर्यवसानमित्यर्थः । एवम् त्वयि तवेति विभक्तिव्यत्ययः । मुक्तिरस्तीति शेषः । नान्यथेतोऽस्ति इतः प्रकारात् अन्यथा मुक्तिर्नास्ति । एतदुक्तं भवति । यथा स्वर्गप्राप्तौ नानाभूताः प्रकाराः सन्ति न तथा मुक्तावित्यर्थः । ननु कर्मणः फलेन भवितव्यमथ कथं मुक्तिप्राप्तिरित्येतदाशङ्क्याह । न कर्म लिप्यते नरे । नहि मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये संबध्यते । मुक्तिप्रदानेनोपक्षीणशक्तित्वात् । तथाच बृहदारण्यकम् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति । विविदिषन्ति वेदितुमिच्छन्ति । अनेनैतद्दर्शयति यावदिच्छाप्रवृत्तिः तावत्कर्मस्वधिकार इति ॥ २ ॥

**म०** आत्मज्ञानाशक्तस्य कर्मोपदेशमाह । कर्माणि अग्निहोत्रादीनि निष्कामानि मुक्तिहेतुकानि कुर्वन्नेवेह लोके शतं समाः शतवर्षपर्यन्तं जिजीविषेत् । पुरुषव्यत्ययः । त्वं जिजीविषेः जीवितुमिच्छेः । पुरुषायुषः शतवर्षत्वाच्छतग्रहणम् । त्वयीति विभक्तिव्यत्ययः । तवैवं कर्म कुर्वतो जिजीविषतो मुक्तिरस्तीति शेषः । इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्ति । अयमर्थः । स्वर्गादिप्राप्तौ यथा नानाप्रकारा न तथा मुक्तावित्यर्थः । निष्कामकर्मानुष्ठानेन शुद्धान्तःकरणस्यैव मुक्तिरित्यर्थः । ननु कर्मणः फलेन भाव्यम्, कथं मुक्तिरित्यत आह न कर्मेति । मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये न लिप्यते न संबध्यते । मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपक्षीणशक्तित्वात् यावदिच्छा तावत्कर्मस्वधिकार इति दर्शितम् । उत्तरार्धस्यार्थान्तरं वा । एवंप्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इतः एतस्मात्कर्मकरणादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते । अतः शास्त्रविहितं कर्म कुर्वन्नेव जीवितुमिच्छेत् प्रत्यवायपरिहारायेत्यर्थः । तदुक्तम् 'द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभाषितः' इति ॥ २ ॥

## तृतीया ।

असुर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्यापिगच्छन्ति ये के चात्महनो जनाः ॥३॥

**उ०** इदानीं स्वर्गादिप्राप्तिहेतुभूतानि कर्माणि ये कुर्वन्ति ते निन्द्यन्ते । असुर्या नामेति । असुर्याः । परमात्मभावमद्वयमपेक्ष्य देवा अप्यसुराः । असुराणां स्वभूता असुर्याः एवंसंज्ञकास्ते लोकाः अन्धेन तमसा अज्ञानलक्षणेन तमसा आवृताः सर्वतोवृताः । तान् लोकान् ते जनाः प्रेत्य मृत्वा अपिगच्छन्ति । ये केचात्महनो जनाः आत्मानं घ्नन्ति ये जनाः ते आत्महनः । आत्मानं च ते घ्नन्ति ये स्वर्गप्राप्तिहेतूनि कर्माणि कुर्वन्ति । ते हि जनित्वा म्रियन्ते मृत्वा च जायन्ते । एवमहर्निशं नाशं प्राप्नुवन्ति ॥ ३ ॥

**म०** अथ काम्यकर्मपरान्निन्दति । ये के च ये केचित् जनाः नराः आत्महनः आत्मानं घ्नन्तीत्यात्महनः अविद्वांसः काम्यकर्मपराः विद्यमानस्याजरामरस्यात्मनोऽविद्यादोषेण तिरस्करणादात्महन्तारः । ते प्रेत्य मृत्वा देहं त्यक्त्वा तान् लोकान् जन्मानि स्थावरान्तानि अपिगच्छन्ति प्राप्नुवन्ति । तान् कान् नाम प्रसिद्धं । ते ये यत्तदोर्व्यत्ययः । ये लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते कर्मफलानि यत्रेति लोका जन्मानि । असुर्याः असुराणामिमे असुर्याः, असुषु प्राणेषु रमन्तेऽसुराः प्राणपोषणपराः । अद्वैतमपेक्ष्य देवा अपि असुराः । कीदृशाः लोकाः । अन्धेन तमसा अदर्शनात्मकेनाज्ञानेन आवृताः आच्छादिताः । अनात्मज्ञाः पुनर्जायन्ते म्रियन्ते चेत्यर्थः ॥ ३ ॥

## चतुर्थी ।

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

**उ०** इदानीमधस्तनयमनियमवतां मुमुक्षूणां यथाभूतं परब्रह्म आत्मत्वेनोपास्यं तदाह । उक्तंच 'अहं ब्रह्मास्मि संरुध्य इदं सर्वं च मन्मयम् । इयं विद्या समुद्दिष्टा विमुक्त्यैन्निबन्धनी' इति । अनेजदेकम् । त्रिष्टुप् । यत् अनेजत् अचलत् तत्त्वमस्ति एकमद्वितीयं विज्ञानघनरूपेण । मनसो जवीयः । मनस्तावच्छीघ्रं भवति ततोऽपि शीघ्रतरं प्रसवदानेन कारणभूतत्वात् । नैनद्देवा आप्नुवन् नचैतत्तत्त्वं देवा अपि प्राप्तुं शक्ताः । सूक्ष्मत्वात् पूर्वम् अर्शत् । रिशतिर्हिंसाकर्मा अविनश्यदास्ते । अनादिनिधनमित्यर्थः । तद्धावतः तदः स्थाने यदो वृत्तिरुद्देश्यत्वात् । यच्च धावतः अन्यान्पुरुषादीनत्येति

अतिक्रम्य गच्छति । तथाच तिष्ठत् सर्वत्र स्थितम् । सर्वशक्तित्वं सर्वगतत्वं चानेन व्याख्यायते । तस्मिन्नपः । अत्रापि यदो वृत्तिः अस्मिंश्चापः कर्माणि मातरिश्वा वायुः दधाति स्थापयति । सर्वाणि कर्माणि यज्ञदानहोमादीनि समिष्टयजूंषि वायौ स्थाप्यन्ते । स्वाहा वातेधा इति वायोः प्रतिष्ठत्वाभिधानात् । समष्टिव्यष्टिरूपो ह्यसाविति वायुरपि यस्मिन्कर्माणि स्थापयति । यागहोमादीनां परमं निधानमित्यर्थः॥४॥

म० मुमुक्षुभिर्यादृशं ब्रह्मात्मत्वेनोपास्यं यस्याज्ञानात्संसारस्तदात्मस्वरूपमाह । त्रिष्टुप्छन्दस्केयमृक् । यत् ब्रह्म अनेजत् 'एजृ कम्पने' न एजतीत्यनेजत् अचलत् स्वावस्थाप्रच्युतिः कम्पनं तद्रहितम् । सदैकरूपमित्यर्थः । एकमद्वितीयं सर्वभूतेषु विज्ञानघनरूपेण । मनसः संकल्पादिलक्षणाज्जवीयः वेगवत्तरम् जवोऽस्यास्तीति जववत् अत्यन्तं जववत् जवीयः । ईयसुनि कृते 'विन्मतोर्लुक्' ( पा० ५ । ३ । ६५ ) इति मतुपो लुक् । नन्वनेजद्गवतोर्विरोधः । मैवम् निरुपाधित्वेनानेजत् संकल्पविकल्परूपान्तःकरणस्योपाधेरनुवर्तनाज्जविष्ठम् । देहस्थस्य मनसो दूरस्थब्रह्मलोकादिसंकल्पनं क्षणमात्राद्भवतीति मनो वेगवत्तरं लोके प्रसिद्धम् । मनसि दूरं गच्छत्यात्मचैतन्यावभासः प्रथमप्राप्त इव गृह्यतेऽतो मनसो जवीय इत्युक्तम् । देवा द्योतनात्मकाश्चक्षुरादीन्द्रियाणि एनत् प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः । चक्षुरादिभ्यो मनो जवीयोऽतो मनोव्यापारे व्यवहितत्वादात्मन आभासमात्रमपि देवानां गोचरो न भवतीत्यर्थः । यतः पूर्वमर्शत् वेगवन्मनसोऽपि प्रथममेव गच्छत् । 'ऋश गतौ' व्योमवद्व्यापित्वात्सर्वसंसारधर्मवर्जितं तदात्मतत्त्वं निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवेत्यविवेकिनां प्रतिदेहमनेकमिव प्रतिभासत इति भावः । यद्वा पूर्वं पूर्वमपि विद्यमानम् । अर्शत् 'रिश हिंसायां' रिशति नश्यति रिशत् न रिशदरिशत् अर्शत् । धातोरिकारलोपश्छान्दसः । किंच तत् । तदः स्थाने यदो वृत्तिः । यदात्मतत्त्वं धावतो द्रुतं गच्छतोऽन्यान् मनोवागिन्द्रियादीनात्मविलक्षणान् अत्येति अतीत्य गच्छतीव । कीदृशम् । तिष्ठत् स्वयमविक्रियमेव सद्गच्छतीव । मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः तस्मिन्नित्यचैतन्यस्वभावे आत्मतत्त्वे सति अपः कर्माणि दधाति धारयति कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि यः सूत्रसंज्ञः सर्वस्य जगतो विधारयिता सर्वप्राणभृत्क्रियात्मकः सोऽपि वायुः प्राणिनां चेष्टालक्षणानि अग्निरविमेघादीनां ज्वलनदहनप्रकाशाभिवर्षणादीनि च कर्माणि यस्मिन् ब्रह्मणि सत्येव दधाति विभजति धारयति वा । 'भीषास्माद्वातः पवते भीषोदेति सूर्यः' ( तै० आर० ८ । ८ ) । इत्यादिश्रुतेः सर्वा हि कार्यकारणादिक्रियाः सर्वास्पदे नित्यचैतन्यरूपे ब्रह्मणि सत्येव भवन्तीत्यर्थः । यद्वा मातरिश्वा वायुरपः कर्माणि आप्यन्ते प्राप्यन्ते सुखदुःखानि याभिस्ता आपः कर्माणि 'आप्नोतेर्ह्रस्वश्च' ( उणा० २ । ५९ ) इति क्विप् धातोर्ह्रस्वश्च । तानि कर्माणि यज्ञहोमादीनि यस्मिन् दधाति स्थापयति 'स्वाहा वाते धाः' ( ८ । २१ ) इति समिष्टयजुषि वायुस्थत्वोक्तेः कर्माणि तावद्वायौ स्थाप्यन्ते समष्टिरूपोऽसौ वायुरपि यस्मिन्कर्माणि स्थापयति । यागहोमदानादिकर्मणां परमं निधानमित्यर्थः ॥ ४ ॥

## पञ्चमी ।

तदे॑जति॒ तन्नैज॑ति॒ तद्दू॒रे तद्व॑न्ति॒के । तद॒न्तर॑स्य॒ सर्व॑स्य॒ तदु॒ सर्व॑स्यास्य बाह्य॒तः ॥ ५ ॥

उ० एवं कारणरूपमात्मानमुद्दिश्य अथेदानीं कार्यरूपेणोद्दिशति । तदेजति अनुष्टुभस्तिस्रः । तदेव सर्वप्राणिरूपेणावस्थितं सत् एजति कम्पवद्भवति क्रियावद्भवति । तन्नैजति तदेव च न चलति स्थावररूपावस्थितं सत् । तद्दूरे तदेव च दूरे आदित्यनक्षत्रादिरूपेणावस्थितम् । तत् उ अन्तिके । उः समुच्चये । तदेव च अन्तिके पृथिव्यादिरूपेणावस्थितम् । 'सर्वं खल्विदं ब्रह्मे'त्येतद्दर्शनार्थो ग्रन्थः । तदन्तरस्य सर्वस्य । तदेव च अस्य सर्वस्य प्राणिजातस्य विज्ञानघनरूपेणावस्थितं सत् अन्तर्मध्यत आस्ते । तदु सर्वस्यास्य बाह्यतः । तदेव च सर्वस्यास्य प्राणिजातस्य बाह्यतः जनरूपेणावस्थितमास्ते । चेतनाचेतनरूपमनन्तं सर्वगं ब्रह्मेत्यर्थः । अस्या उपासनाया अर्चिराद्यनुचिन्तनं नास्तीत्येवं केचिदाहुः इहैव ब्रह्मप्राप्तेः ॥ ५ ॥

म० रहस्यं सकृदुक्तं चित्ते नायातीति पूर्वमन्त्रोक्तमप्यर्थं पुनर्वदति । तत् प्रकृतमात्मतत्त्वमेजति चलति । तदेव च न एजति स्वतो नैव चलति । अचलमेव सत् मूढदृष्ट्या चलतीवेत्यर्थः । किंच तत् दूरे अविदुषामब्दकोट्याप्यप्राप्यत्वात् दूरे इवेत्यर्थः । तत् उ तदेव अन्तिके समीपे । विदुषामात्मत्वेन भासमानत्वान्न केवलं दूरेऽन्तिके च । अस्य सर्वस्य नामरूपक्रियात्मकजगतोऽन्तरभ्यन्तरे तदेव । अस्य सर्वस्य बाह्यतः बहिरपि तदु तदेव ब्रह्म नभोवद्व्यापकत्वात् । अस्य मन्त्रस्यार्थान्तरम् । यथा पूर्वमन्त्रेण कारणरूपमात्मानमुद्दिश्य कार्यरूपमुद्दिशति—तदेजति । तिस्रोऽनुष्टुभः । तत् आत्मतत्त्वमेजति सर्वजन्तुरूपेण स्थितं सत् कम्पते क्रियावद्भवति । तदेव च न एजति स्थावररूपावस्थं न चलति । तदेव दूरे आदित्यनक्षत्रादिरूपेण स्थितत्वात् । तदु अन्तिके समीपे धरादिरूपत्वात् 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः । अस्य सर्वस्य प्राणिजातस्यान्तर्मध्ये तदेवास्ते विज्ञानघनरूपेण । अस्य सर्वस्य बहिः तदु तदेव जडरूपत्वात् । चेतनाचेतनरूपमनन्तं ब्रह्मेत्यर्थः । एतदुपासितुरर्चिरादिमार्गेण गमनं नास्ति इहैव ब्रह्मप्राप्तेः 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः ५

## षष्ठी ।

यस्तु॒ सर्वा॑णि भू॒तान्या॒त्मन्ने॒वानु॒पश्य॑ति । स॒र्व॒भू॒तेषु॑ चा॒त्मानं॒ ततो॒ न वि चि॑कित्सति ॥ ६ ॥

उ० यस्तु । तुशब्दो विशेषणार्थः । यः पुनः सर्वाणि भूतानि चेतनाचेतनानि आत्मन्नेव अनुपश्यति । मय्येव सर्वाणि भूतान्यवस्थितानि न मद्व्यतिरिक्तानि । अहमेव परं ब्रह्मेति । सर्वभूतेषु चात्मानं अवस्थितं तद्व्यतिरिक्तं पश्यति । ततो न विचिकित्सति न संशेते । एवं पश्यतो योगिनः परब्रह्मरूपाण्यात्मसंस्थानि भवन्ति विज्ञानघनानन्दैकत्वादिति अतो विचारान्न विनिवर्तते ॥ ६ ॥

म० अथोपासनप्रकारमाह । यस्तु यः पुनः मुमुक्षुः सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि चेतनानि आत्मन् । सप्तम्या लुक् । आत्मनि एवानुपश्यति मय्येव सर्वभूतानि स्थितानि न मद्व्यतिरिक्तानीति पश्यति । आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु चात्मानमवस्थितमव्यतिरिक्तं पश्यति तेषां भूतानां स्वं आत्मानमात्मत्वेन पश्यतीत्यर्थः । अयमर्थः । अस्य कार्यकारणसंघातस्यात्माहं सर्वप्रत्ययसाक्षिभूतश्चेतयिता निर्गुणश्च तथा तेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्वेषु चात्मानं निर्विशेषं पश्यति । ततस्तस्माद्दर्शनान्न विचिकित्सति न संशेते 'कित् रोगापनयने संशये च' इति धातोः 'गुप्तिज्किद्भ्यः सन्' (पा० ३ । १ । ५) इति स्वार्थे सन्प्रत्ययः । आत्मनोऽन्यत्पश्यतः सर्वः संदेहो भवत्यात्मानमेवात्यन्तं शुद्धं निरन्तरं पश्यतो न संदेहावकाश इति भावः । अत आत्मज्ञस्य विचारनिवृत्तिः ॥ ६ ॥

## सप्तमी ।

र विचचक्षिरे व्याचभूतान्यात्मैवाभूद्विजानतः । तत्र
क श्रुतवन्तः ॥ १३ ॥ एकत्वमनुपश्यतः ॥ ७ ॥

उ० किंच । यस्मिन् अवस्थाविशेषे । सर्वाणि भूतानि चेतनाचेतनानि । आत्मैव अभूत् संभवन्ति । विजानतः 'आत्मैवेदं सर्वं' । 'सर्वं खल्विदं ब्रह्मे'त्येवमादिवाक्यविचारेण विधृतविज्ञानस्य । तत्र अवस्थाविशेषे कृतचेतसो योगिनः कः मोहः कश्च शोकः न कश्चिदपीत्यभिप्रायः । शोकमोहौ ह्यपरिज्ञाततत्वस्य भवतः । हेतुगर्भं विशेषणमाह । एकत्वमनुपश्यतः सर्वाणि भूतानि ध्यायतः ॥ ७ ॥

म० इममेवार्थमन्यो मन्त्रो वदति । यस्मिन्नवस्थाविशेषे विजानतः 'आत्मैवेदम्' 'सर्वं खल्विदं' ब्रह्मेत्यादिवाक्यविचारेणावधृतपरमार्थस्य सतः सर्वाणि भूतानि आत्मैवाभूत् परमार्थदर्शिनादात्मैव संवृत्तः । तत्र तस्यामवस्थायामेकत्वं विशुद्धं गगनोपममात्मैकत्वं पश्यतः जानतः को मोहः कः शोकश्च । अविद्याकार्ययोः शोकमोहयोरसंभवात्सकारणस्य संसारस्यात्यन्तमुच्छेद इति भावः ॥ ७ ॥

## अष्टमी ।

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

उ० स पर्यगात् । जगती । य एवमात्मानमुपास्ते स पर्यगात्परिगच्छति शुक्रं शुक्रं विज्ञानानन्दस्वभावमचिन्त्यशक्तिम् । अकायं न विद्यते कायः शरीरं यस्य स तथोक्तः । अव्रणं कायरहितत्वादेवास्नाविरं स्नायुरहितमकायत्वादेव शुद्धमनुपहतं सत्वरजस्तमोभिरपापविद्धं क्लेशकर्मविपाकाशयैरसंस्पृष्टम् । अकायमव्रणमस्नाविरमिति पुनरुक्तान्यभ्यासे भूयांसमर्थं मन्यन्त इत्यदोषः । इत्थंभूतं ब्रह्म प्रतिपद्यते । अथात्मोपासनायुक्तस्य फलमाह । यश्च कविः क्रान्तदर्शनः मनीषी मेधावी परिभूः सर्वतो भविता विज्ञानबलात्स्वयंभूः स्वयं ज्ञानबलाद्ब्रह्मरूपेण भविता सः याथातथ्यतोऽर्थान्व्यदधाद्यथास्वरूपमर्थान्विहितवान् त्यक्तस्वस्वामिसंबन्धैरर्थैश्चेतनाचेतनैरुपभोगं कृतवान् । शाश्वतीभ्योऽनन्ताभ्यः समाभ्योऽर्थाय अनन्तवर्षप्राप्तये च कर्म कृतवान् । ननु कर्मजाड्याल्लोकः कर्मवान्भवति । सत्यम् । आत्मसंस्कारकं तु कर्म ब्रह्मभावजनकं स्यात् । तस्मात्सोपि गच्छति शुक्रमकायं ब्रह्म इति ॥ ८ ॥

म० एवंभूतात्मज्ञस्य फलमाह । य एवमात्मानं पश्यति स ईदृशं ब्रह्म पर्यगात् परिगच्छति प्राप्नोतीत्यर्थः । कीदृशम् । शुक्रं शुद्धं विज्ञानानन्दस्वभावमचिन्त्यशक्ति । अकायं न कायः शरीरं यस्य तत् । अकायत्वादेवाव्रणमक्षतम् । अस्नाविरं न विद्यन्ते स्नावाः शिरा यत्र तदस्नाविरं स्नायुरहितम् । अकायत्वादेव शुद्धमनुपहतं सत्त्वरजस्तमोभिः । अपापविद्धं न पापैर्विद्धं क्लेशकर्मविपाकाशयैरस्पृष्टम् । अकायमव्रणमस्नाविरमिति पुनरुक्तिरर्थातिशयद्योतनाय । 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १० । ४२ ) इति यास्कोक्तेः । ईदृशं ब्रह्मात्मज्ञः प्रतिपद्यत इत्यर्थः । पुनस्तस्यैव फलान्तरमाह । य ईदृश उपासकः स शाश्वतीभ्यः समाभ्यः निरन्तरमनन्तवर्षेभ्योऽर्थाय अनन्तवर्षप्राप्तये याथातथ्यतः यथातथाभावो याथातथ्यं तेन यथास्वरूपमर्थान् व्यदधाद्विहितवान् । त्यक्तस्वस्वामिसंबन्धैश्चेतनाचेतनैरर्थैरुपभोगं कृतवानित्यर्थः । कीदृशः । कविः क्रान्तदर्शी । मनीषी मेधावी । परि सर्वतो भवतीति परिभूः ज्ञानबलात्सर्वरूपः । स्वयं भवतीति स्वयंभूः ब्रह्मरूपेण भविता । ईदृशोऽपि पूर्वोक्तं शुक्रमकायमित्यादिविशेषणविशिष्टं ब्रह्म प्राप्नोतीत्यर्थः । एतस्या ऋचोऽर्थान्तरं यथा । योऽयमतीतमन्त्रोक्त आत्मा स पर्यगात् परितः सर्वत्र गच्छति नभोवत्सर्वं व्याप्नोति । व्याप्य च शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यो याथातथ्यतः यथाभूतकर्मफलसाधनतः अर्थान्कर्तव्यपदार्थान् व्यदधात् । यथानुरूपं व्यभजदित्यर्थः । स कीदृशः । शुक्रमित्यादिविशेषणानि लिङ्गव्यत्ययेन पुंलिङ्गे नेतव्यानि । शुक्रः शुद्धो दीप्तिमान् । अकायोऽशरीरः । लिङ्गशरीरवर्जित इत्यर्थः । अव्रणोऽक्षतः । अस्नाविरः शिरारहितः । अव्रणोऽस्नाविर इति विशेषणद्वयेन स्थूलशरीरप्रतिषेधः । शुद्धो निर्मलः । अपापविद्धोऽधर्मादिवर्जितः । कविः सर्वदृक् 'नान्यदतोऽस्ति द्रष्टृ' इति श्रुतेः ।

मनीषी मनस ईषिता सर्वज्ञः । परिभूः परि सर्वेषामुपर्युपरि भवतीति परिभूः । स्वयंभूः स्वयमेव भवतीति येषामुपरि भवति यश्चोपरि भवति स स्वयमेव भवतीति स्वयंभूः । स नित्य ईश्वरः सर्वं कृतवानित्यर्थः ॥ ८ ॥

## नवमी ।

**अ॒न्धं तमः॒ प्र वि॑शन्ति॒ येऽसं॑भूतिमु॒पास॑ते । ततो॒ भूय॑ इव॒ ते तमो॒ य उ॒ संभू॒त्याᳫं र॒ताः ॥ ९ ॥**

**उ०** इत उत्तरमुपासनामन्त्राः प्रोच्यन्ते । अन्धं तमः षडनुष्टुभः । लोकायतिकाः प्रस्तूय निन्द्यन्ते । येषामेतद्दर्शनम् । जलबुद्बुदवज्जीवाः । मदशक्तिवद्विज्ञानमिति । अन्धं तमः प्रविशन्ति ये संभूतिमुपासते । मृतस्य सतः पुनः संभवो नास्ति । अतः शरीरग्रहणादस्माकं मुक्तिरेव । नहि विज्ञानात्मा कश्चिदनुच्छित्तिधर्मोस्ति यो यमनियमैः संबध्यते । एवं ये उपासते ते अन्धं अज्ञानलक्षणं तमः प्रविशन्ति ततो भूय इव ते तमः । ततोपि बहुतरम् । इवोऽनर्थकः । ते तमः प्रविशन्ति ये उ । उकारः कर्मोपसंग्रहार्थीयः । ये संभूत्यामेव रताः । आत्मैवास्मि नान्यत्किंचिदस्तीत्ययमभिप्रायः । कर्मपराङ्मुखाय तत्कर्मकाण्डज्ञानकाण्डयोरसंभव इत्ययमभिप्रेत्य स्वबुद्धिमद्भुतां विभावयन्तः आत्मज्ञान एव रताः ॥ ९ ॥

**म०** अतः परमुपासनामन्त्रा उच्यन्ते षडनुष्टुभः । यमनियमसंबन्धवान्विज्ञानात्मा कश्चिन्नास्ति जलबुद्बुदवज्जीवाः मदशक्तिवद्विज्ञानमित्यादिमतवादिनो बौद्धाः प्रस्तूय निन्द्यन्ते । ये नराः असंभूतिमसंभवमुपासते मृतस्य पुनः संभवो नास्ति अतः शरीरान्तेऽस्माकं मुक्तिरेवेति वदन्ति ते अन्धं तमोऽज्ञानलक्षणं प्रविशन्ति । ये उ ये च संभूत्यामेव रताः संभवत्यस्या इति संभूतिरात्मा तत्रैवासक्ताः कर्मपराङ्मुखाः स्वबुद्धिलाघवमजानाना आत्मज्ञानमात्ररताः आत्मैवास्ति नान्यत् कर्मादीनि कर्मकाण्डज्ञानकाण्डयोः संबन्धो नास्तीत्यभिप्रायवन्त इत्यर्थः । ते नराः ततोऽन्धात्तमसो भूय इव । इवशब्दोऽनर्थकः । बहुतरं तमोऽज्ञानं विशन्ति । अस्या ऋचोऽर्थान्तरमुच्यते । अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । संभवनं संभूतिः कार्यस्योत्पत्तिः तस्या अन्या असंभूतिः प्रकृतिः कारणमव्याकृताख्यं तामसंभूतिमव्याकृताख्यां प्रकृतिं कारणमविद्याकामकर्मबीजभूतामदर्शनात्मिकां ये उपासते ते तदनुरूपमेवान्धं तमोऽदर्शनात्मकं संसारं प्रविशन्ति । ये संभूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः ते ततस्तस्मादपि भूयो बहुतरमिव तमः प्रविशन्ति ॥ ९ ॥

## दशमी ।

**अ॒न्यदे॒वाहुः संभ॒वाद॒न्यदा॑हु॒रसं॑भवात् । इति॑ शुश्रु॒म धीरा॑णां॒ ये न॒स्तद्वि॑चचक्षि॒रे ॥ १० ॥**

**उ०** अन्यदेव । अन्यदेव फलं आहुः संभवात् संभवपरिज्ञानात् । अन्यच्च आहुः फलम् संभवपरिज्ञानात् । इति एवं शुश्रुम श्रुतवन्तो वयम् धीराणां वचांसि । ये धीराः नः अस्माकम् । तत् ब्रह्म विचचक्षिरे आख्यातवन्तः ॥ १० ॥

**म०** अथोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह । संभवात्संभूतेः कार्यब्रह्मोपासनात् अन्यदेव पृथगेवाणिमाद्यैश्वर्यलक्षणं फलमाहुः कथयन्ति धीराः । तथा असंभवात् असंभूतेरव्याकृतादव्याकृतोपासनादन्यदेव फलमुक्तम् । अन्धं तमः प्रविशन्तीत्युक्तं प्रकृतिलय इति पौराणिकोक्तं फलमाहुः इत्येवंविधं धीराणां विदुषां वचः शुश्रुम वयं श्रुतवन्तः । ये धीराः नोऽस्माकं तत् पूर्वोक्तं संभूत्यसंभूत्युपासनाफलं विचचक्षिरे व्याख्यातवन्तः ॥ १० ॥

## एकादशी ।

**संभू॑तिं च विना॒शं च॒ यस्तद्वेदो॒भयᳫं॑ स॒ह । वि॒नाशे॑न मृ॒त्युं ती॒र्त्वा संभू॑त्या॒मृत॑मश्नुते ॥ ११ ॥**

**उ०** संभूतिं च समस्तस्य जगतः संभवैकहेतुं च परं ब्रह्म । विनाशं च विनाशिशरीरं च । यः योगी तदुभयं वेद जानाति । सह एकीभूतम् । शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनि कर्माणि करोति । सः विनाशेन । विनाशिना शरीरेण । मृत्युं तीर्त्वा उत्तीर्य । संभूत्या [illegible]विज्ञानेन । अमृतमश्नुते । अमृतत्वमश्नातीत्यर्थः ॥ १[illegible]ति पूर्वमन्त्रोक्त[illegible]

**म०** संभूतिं सर्वजगत्संभवैकहेतुं [illegible]चलति । तदेव [illegible] विनाशोऽस्यास्तीति विनाशः अर्शआदित्वा[illegible] चलतीत्यर्थकं शरीरम् । तदुभयं शरीरिशरीररूपं द्वयं यो योगी सह एकीभूतं वेद जानाति । देहभिन्नोऽहं देहीवासे कर्मवशादिति ज्ञात्वा शरीरेण ज्ञानोत्पत्तिकराणि निष्कामकर्माणि करोतीत्यर्थः । स विनाशेन विनाशिना शरीरेण मृत्युं तीर्त्वान्तःकरणशुद्धिं संपाद्य संभूत्यात्मज्ञानेनामृतमश्नुते मुक्तिं प्राप्नोति । अस्या ऋचोऽर्थान्तरम् । यथा । संभूत्युपासनयोरेकपुरुषार्थत्वात्समुच्चय एव युक्त इत्याह । अत्र विनाशशब्दद्वये अवर्णलोपो द्रष्टव्यः पृषोदरादित्वात् । अन्यदाहुरसंभवादित्युक्तेः । संभूतिमविनाशं च व्याकृताव्याकृतोपासनद्वयं यः सह वेद । उभयमुपास्त इत्यर्थः । स योगी अविनाशेनाव्याकृतोपासनेन मृत्युमनैश्वर्यमधर्मकामादिदोषजातं च तीर्त्वातिक्रम्य संभूत्या हिरण्यगर्भोपासनेनामृतं प्रकृतिलयलक्षणमश्नुते ॥ ११ ॥

## द्वादशी ।

**अ॒न्धं तमः॒ प्र वि॑शन्ति॒ येऽवि॑द्यामु॒पास॑ते । ततो॒ भूय॑ इव॒ ते तमो॒ य उ॒ वि॒द्याया॑ᳫं र॒ताः ॥ १२ ॥**

**उ०** अन्धं तमः अज्ञानलक्षणं तमः प्रविशन्ति । ये अविद्यां स्वर्गाद्यर्थानि कर्माणि उपासते अनुतिष्ठन्ति । ततो भूय इव ते तमः । ततोपि बहुतरम् । इवोऽनर्थकः । ते

मः प्रविशन्ति । ये उ ये पुनः । विद्यायामेव रताः आत्मज्ञान एवाकृतकर्माणो रता नराः ॥ १२ ॥

म० ये तु कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषन्ति तान्प्रत्युच्यते । विद्याविद्ययोः समुचिचीषया प्रत्येकं निन्द्यते । विद्याया अन्या अविद्या कर्म । ये जना अविद्यामग्निहोत्रादिलक्षणां केवलामुपासते स्वर्गार्थानि कर्माणि केवलमनुतिष्ठन्ति ते अन्धमदर्शनात्मकं तमोऽज्ञानं प्रविशन्ति । संसारपरम्परामनुभवन्तीत्यर्थः । ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव तमः ते प्रविशन्ति । ये उ ये पुनर्विद्यायामात्मज्ञाने देवताज्ञाने एव रताः कर्माणि हित्वा कर्माकरणे प्रत्यवायोत्पत्त्यान्तःकरणशुद्ध्यभावेन ज्ञानानुदयादिति भावः ॥ १२ ॥

## त्रयोदशी ।

अन्यदेवाहुर्विद्याया अन्यदाहुरविद्यायाः । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

उ० अन्यदेव । अन्यदेव फलमाहुः विद्यायाः । आत्मज्ञानादन्यच आहुः अविद्यायाः । कर्मण इति शुश्रुमेत्यादिव्याख्यातम् ॥ १३ ॥

म० तयोः फलभेदमाह । विद्याया आत्मज्ञानस्य फलमन्यदेवाहुरमृतरूपम् । अविद्यायाः कर्मणश्च फलं पितृलोकरूपमन्यदेवाहुः । धीराः । 'कर्मणा पितृलोको विद्यया देवलोक' इति श्रुतेः । ये धीराः धीमन्तः आचार्याः नोऽस्मभ्यं ज्ञानं कर्म च विचचक्षिरे व्याचख्युः । तदुक्तमित्येवं धीराणां वचः शुश्रुम श्रुतवन्तः ॥ १३ ॥

## चतुर्दशी ।

विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ १४ ॥

उ० विद्यां च आत्मज्ञानं च अविद्यां कर्म च यस्तदुभयं वेद जानाति सह एकीभूतं कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतम् अथ कर्मकाण्डं ज्ञानकाण्डं च एकीकृत्य अविद्यया कर्मकाण्डेन मृत्युं तीर्त्वोत्तीर्य कृतकृत्यो भूत्वा विद्यया ब्रह्मपरिज्ञानेनामृतत्वं मोक्षमश्नुते प्राप्नोति ॥ १४ ॥

म० समुच्चयमाह । विद्यां देवताज्ञानं अविद्यां कर्म च तदुभयं विद्याविद्यारूपं द्वयं यः सह वेद एकीकृत्य वेद एकेन पुरुषेणानुष्ठेयं जानाति । कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतमित्यर्थः। सोऽविद्ययाग्निहोत्रादिकर्मणा मृत्युं स्वाभाविककर्मज्ञानं मृत्युशब्दवाच्यं तीर्त्वोत्तीर्यान्तःशुद्ध्या कृतकृत्यो भूत्वा विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति 'तद्धि अमृतमुच्यते यद्देवतात्मगमनम्' इति श्रुतेः ॥ १४ ॥

## पञ्चदशी ।

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ओ३म् क्रतो स्मर क्लिबे स्मर कृतꣳ स्मर ॥ १५ ॥



उ० इदानीमित्थं कृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरकाले यद्भवति तदाह । वायुरनिलं । वायुग्रहणमिन्द्रियाण्येकादश महाभूतानि पञ्च जीवात्मैकः एवं सप्तदशकलिङ्गोपलक्षणार्थं । वायुः प्राणोऽनिलं स्वकीयां प्रकृतिमापद्यते अमृतं परं ब्रह्म तद्धि तद्विज्ञाय संपद्यते । अथेदं स्थूलशरीरं कीदृशं तदा भवति । भस्मान्तं भस्मैव भवति कृतप्रयोजनत्वात् । इदानीं योगिनः आलम्बनभूतमक्षरं कथ्यते । ॐ इति नाम वा प्रतिमा वा ब्रह्मणः । इदानीमन्तकाले योगी स्मरणं करोति । क्रतो स्मर । योऽग्निर्ब्रह्मचर्यादारभ्य परिचरितः सः मनःश्वासरूपेणावस्थितः संबोध्यते । हे क्रतो, मां स्मर इदानीमुपस्थितः प्रत्युपकारस्य काल इत्यभिप्रायः । क्रतुर्वा यज्ञः संबोध्यते । क्रतो स्मर क्लिबे स्मर कृपाय लोकाय स्मर । कृतं स्मर मया यत्कृतं तत्स्मर ॥ १५ ॥

म० अथ कृतोपासनो योगी अन्तकाले प्रार्थयते । द्वे यजुषी । अथेदानीं परोष्यतो मम वायुः प्राणः । वायुग्रहणं सप्तदशकलिङ्गोपलक्षणार्थम् । सप्तदशात्मकलिङ्गरूपः प्राणोऽध्यात्मपरिच्छेदं हित्वाधिदैवतरूपं सर्वात्मकममृतं सूत्रात्मानमनिलं वायुं प्रतिपद्यतामिति वाक्यशेषः । 'वायुर्वै गौतम सूत्रं वायुना गौतम सूत्रेणेदꣳ सर्वꣳ संदृब्धम्' (बृह० माध्य० ३ । ५ । ६ ) इति श्रुतेः ज्ञानकर्मसंस्कृतं लिङ्गमुत्क्रामत्वित्यर्थः। अथ इदं स्थूलं शरीरमग्नौ हुतं सत् भस्मान्तं भस्मरूपं भूयात् । भस्मान्तः स्वरूपं यस्य तत्कृतप्रयोजनत्वात् । अथ योगिनोऽवलम्बभूतमक्षरमुच्यते । ओमिति ब्रह्मणः प्रतिमा नाम वा । अस्य ब्रह्म ऋषिः गायत्रीच्छन्दः परमात्मा देवता वेदारम्भे होमे शान्तिपुष्टिकर्मसु काम्येषु नैमित्तिकेष्वपि कर्मसु विनियोगः । ओंप्रतीकात्मकत्वात्सत्यात्मकमभ्याख्यं ब्रह्माभेदेनोच्यते । हे ओम्, हे क्रतो संकल्पात्मक, स्मर यन्मम स्मर्तव्यं तस्यायं कालः प्रत्युपस्थितोऽतः स्मर । यस्त्वं ब्रह्मचर्ये गार्हपत्ये च मया परिचरितस्तत् स्मर । क्लिबे स्मर कल्प्यते भोगायेति कॢप् लोकः तस्मै स्मर । जशादेश आर्षः 'छन्दस्युभयथा' इति पदान्तत्वात् । मयास्मै अयं लोको दातव्यस्तस्मै कृपाय लोकाय स्मर। कृतं स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच स्मर । स्मरेत्यस्यावृत्तिरादरार्था । 'क्रतो इत्यादि त्रिभिर्यजुर्भिरन्ते यज्ञान्योगी स्मारयति' ( अनु० ४ । ९ ) इति कात्यायनः ॥ १५ ॥

## षोडशी ।

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १६ ॥

उ० अग्ने नय । हे अग्ने, नय सुपथा देवयानेन मार्गेण राये मुक्तिलक्षणाय धनायास्मान् विश्वानि सर्वाणि । देव दानादिगुणयुक्त, वयुनानि प्रज्ञानानि विद्वाञ्जानानः युयोधि

पृथक्कुरु च अस्मत् अस्मत्तः जुहुराणं प्रतिबन्धकमेनः पापम्। यतो भूयिष्ठां ते नमउक्तिं विधेम बहुतरां तव नमस्कारोक्तिं कुर्मः । व्याख्याताया: पुनर्वचनं विशेषार्थम् ॥ १६ ॥

**म०** पुनरन्येन मन्त्रेणाभ्याख्यं ब्रह्मप्रति योगी मार्गं याचते । अगस्त्यदृष्टाग्नेयी त्रिष्टुप् ( अ० ५ । क० ३६ ) । व्याख्यातापि विशेषाय पुनर्व्याख्यायते । हे देव दानादिगुणयुक्त हे अग्ने, अस्मान् सुपथा शोभनेन मार्गेण देवयानेन नय । सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् । गतागतलक्षणेन दक्षिणमार्गेण निर्विष्टोऽहम् अतोऽग्ने, त्वां याचे पुनर्गमनागमनवर्जितेन शोभनेन पथास्मान्कर्मफलविशिष्टान्नय । किमर्थम् । राये धनाय मुक्तिलक्षणाय । कर्मफलभोगायेत्यर्थः । किंविधस्त्वम् । विश्वानि सर्वाणि वयुनानि कर्माणि प्रज्ञानानि वा विद्वान् जानन् । किंच जुहुराणं । 'हुर्छा कौटिल्ये' शानचि जुहोत्यादित्वेन रूपम् । कुटिलं प्रतिबन्धकं वञ्चनात्मकमेनः पापमस्मत् अस्मत्तः सकाशात् युयोधि पृथक्कुरु वियोजय । नाशयेत्यर्थः । 'यु मिश्रणामिश्रणयोः'ह्वादित्वाछ्छ्लोपद्वित्वे छान्दसं हेर्धित्वम् । ततो विशुद्धा वयं ते तुभ्यं भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं विधेम कुर्याम । इदानीं सपापत्वात्तव परिचर्यां कर्तुं न शक्नुमस्ततस्त्वया पापनाशे कृते शुद्धा वयं नमस्कारेण त्वां परिचरेमेत्यर्थः ॥ १६ ॥

## सप्तदशी ।

हि॒र॒ण्मये॑न॒ पात्रे॑ण स॒त्यस्यापि॑हितं॒ मुख॑म् । यो॒ऽसावा॑दि॒त्ये पु॑रु॑षः॒ सो॒ऽसाव॒हम् ॥ १७॥

ओ३म् खं ब्रह्म ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां चत्वारिंशोऽध्यायः ॥ ४० ॥

**उ०** **हिरण्मयेन । इदानीमादित्योपासनमाह । यद्यपि हिरण्मयरूपेण पात्रेण येन रौप्यमयेन पात्रेण । पिबन्त्यस्मिन्नवस्थितान् रसान् रश्मय इति पात्रं मण्डलं तेन पात्रेण मण्डलेन सत्यस्याविनाशिनः पुरुषस्य अपिहितमन्तर्हितम् । मुखं शरीरम् । तथापि यः असौ आदित्यः पुरुषः योगिभिरुपलक्ष्यते । सः असौ अहम् अस्मि । एतां चोपासनां कुर्यात्॥१७॥ ॐ खं ब्रह्म । ओमिति नामनिर्देशः । आकाशस्वरूपं ब्रह्म ध्यायेत् आत्मत्वेन । नन्वचेतन आकाशः चेतन आत्मा । तद्यथा 'विज्ञानमानन्दं ब्रह्म' इति तत्रानन्दप्रतिपादकं वाक्यम् । 'स यो मनुष्याणां राद्धः समृद्धो भवति'** इत्युपक्रम्य 'अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दः' इति । तथा सर्वनियन्तृत्वं दर्शयति 'एतस्य वा अक्षरस्य प्रशासने गार्गी'त्युपक्रम्य 'द्यावापृथिवी विधृते तिष्ठतः' इत्यादि । तथा सर्वज्ञत्वं दर्शयति । 'यद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ' इत्यादि । तथा सत्यसंकल्पादयोऽस्य गुणाः श्रूयन्ते 'सत्यसंकल्पः सत्यदृष्टि'रित्यादि । यद्येवं तर्हि एतद्वै तदक्षरं गार्गि अस्मिन्वा आकाश ओतश्च प्रोतश्चेति ओतप्रोतसामान्यात् आकाशेनैवैतद्रूपं ब्रह्माभिहितं स्यादिति । अयमेव च ब्रह्माभिहितं स्यादिति अयमेव ब्रह्मविरसिद्धान्तः ॥

इति उवटकृतौ मन्त्रभाष्ये चत्वारिंशोऽध्यायः समाप्तः ॥४०॥

आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना ।
उवटेन कृतं भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥
ऋष्यादींश्च नमस्कृत्य अवन्त्यामुवटोऽवसन् ।
मन्त्राणां कृतवान्भाष्यं महीं भोजे प्रशासति ॥ २ ॥

**म०** पुनरादित्योपासनमाह । उष्णिक् यजुर्द्वयान्ता 'उष्णिक् त्रिपादान्त्यो द्वादशकः' इति वचनात् । हिरण्मयमिति हिरण्मयं ज्योतिर्मयं यत् पात्रम् पिबन्ति यत्र स्थिता रश्मयो रसानिति पात्रं मण्डलम् तेन तेजोरूपेण मण्डलेन सत्यस्यादित्यमण्डलस्थस्याविनाशिनः पुरुषस्य मुखं शरीरमपिहितमाच्छादितं वर्तते । तथापि यः असौ प्रत्यक्षः आदित्ये रविमण्डले पुरुषः पुरुषाकारत्वात् पूर्णमनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति वा पुरुषः पुरिशयनाद्वा स मण्डलस्थः पुरुषः असौ प्रत्यक्षः कार्यकारणसंघातप्रविष्टोऽहमस्मि । एतां चोपासनां कुर्यादित्यर्थः । ओम् खं ब्रह्मेति यजुषी । ओ३मिति नामनिर्देशो ब्रह्मणः खं ब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत् ( अनु० ४ । ९ ) । यद्यपि ब्रह्म चेतनमाकाशस्त्वचेतनस्तथाप्येकदेशे सादृश्यम् । नभोवद्व्यापकं ब्रह्म ओमिति जपन्ध्यायेदित्यर्थः । सूर्यमण्डलस्थः पुरुषः सोऽहमेवेत्यभेदेन चिन्तयेत् ॥ १७ ॥

अथ विचारः । विद्यां चाविद्यां चेत्यत्र विद्याशब्देन किं मुख्या परमात्मविद्योच्यते उतोपासना वा । अमृतमश्नुत इत्यत्र अमृतशब्देन साक्षान्मुक्तिरुत्तरमार्गेण परम्परया वा नाद्यः । विद्याकर्मणोर्यस्तद्वेदोभयꣳ सहेति समुच्चयानुपपत्तेस्तयोर्विरोधात् विद्योत्पत्तौ तदाश्रयेऽविद्यानुत्पत्तेः । वह्निरुष्णः प्रकाशश्चेति ज्ञानोत्पत्तौ शीतोऽग्निरप्रकाशश्चेति अविद्योत्पत्तिर्न संभवति नापि संशयोऽज्ञानं वा 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोकः' इत्युक्तत्वात् । किंच विद्याशब्देन परमात्मविद्याग्रहणे अग्ने नयेति सुपथयाचनमनुपपन्नम् । तस्माद्विद्योपासना अमृतं चापेक्षितमिति दिक् ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
त्र्यरमश्चरमोऽध्यायः परमात्मनिरूपकः ॥ ४० ॥
शुक्लयजुर्वेदस्य मन्त्रभागः समाप्तः ।

१ दशाध्याये समाख्यातानुवाकाः सर्वसंख्यया । शतं दशानुवाकाश्च नवान्ये च मनीषिभिः ॥ सप्तषष्टिश्चितौ ज्ञेया सौत्रे द्वार्विंशतिस्तथा । अश्व एकोनपञ्चाशत्पञ्चत्रिंशत्खिले स्मृताः ॥ शुक्रियेषु तु विज्ञेया एकादश मनीषिभिः । एकीकृत्य समाख्यातं त्रिशतं त्र्यधिकं मतम् ॥

## समाप्तोऽयं ग्रन्थः ।

# सभाष्यशुक्लयजुर्वेदपरिशिष्टानि ।

## वेदपारायणविधिः ।

श्रीवेदपुरुषाय नमः ॥ स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय संपरिस्तीर्याज्येनैताभ्यो देवताभ्यो जुहोति अग्नये सोमायेन्द्राय विश्वेभ्योदेवेभ्यः ऋषिभ्य ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै प्रज्ञायै मेधायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऋषये सोमाय काण्डऋषये अग्नये काण्डऋषये विश्वेभ्योदेवेभ्यः काण्डऋषिभ्यः संहिताभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्य-ऋग्गणेभ्योऽनुमत्यै स्विष्टकृते च पृथक्स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति । समाप्ते चैता यजुषा तर्पयति । एवमृग्वेदस्य काण्डर्ष्यादिवर्ज्यमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायाऽत्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानीभ्यो देवताभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य संततमधीयीतेत्याह भगवान्बौधायनः । इति वेदपारायणोपक्रमविधिः ॥ ॥ अथ वेदपारायणे कलशप्रतिष्ठापनादिप्रकारः ॥ तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते । कलशं सुदृढं तत्र सुनिर्णिक्तं[1] विभूषितम् । पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः । मृत्तिकाभिश्च संमिश्रवेदिमध्ये न्यसेत्ततः । पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखस्थितः । स्नापितः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः । वत्सजान्वाकृतिं दण्डमुत्तराग्रैः कुशैः कृतम् । ब्रह्मोपधाने दत्त्वा तं ततः स्वस्त्ययनं पठेत् । प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते । यज्ञोपवीतनैवेद्यवस्त्रचन्दनकुङ्कुमैः । स्रग्धूपदीपताम्बूलैरक्षतैश्च पितामहम् । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत् । उपाध्यायश्च संपूज्यो यथापाठं पठेत्ततः । इति वेदपारायणे कलशप्रतिष्ठापनादिप्रकारः ॥

## अनक्षत्पारायणविधिः ।

श्रीः ॥ अथातोऽनक्षत्पारायणविधिं व्याख्यास्याम आसमाप्तेर्नाश्नीयात् यथाशक्ति वापः पयः फलान्योदनं वा हविष्यमल्पं भुक्त्वा तदा शेषमधीयीत । ग्रामात्प्राचीमुदीचीं वा दिशमुपगम्याग्निमुपसमाधाय परिस्तीर्येध्मं प्रदायाज्येनैताभ्यो देवताभ्यो जुहोति अग्नये सोमायेन्द्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्य ऋग्भ्यो यजुर्भ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतये अनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऋषये सोमाय काण्डऋषये विश्वेभ्योदेवेभ्यः काण्डऋषिभ्यः संहिताभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्य ऋग्गणेभ्य अनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति । समाप्ते चैता यजुषा तर्पयति । एवमृग्वेदिनां काण्डर्ष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायात्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानिभ्यः क्षुद्रसूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य संततमधीयीत नास्यान्तरानध्यायो नास्यान्तरा जननमरणे अशुची नान्तरा व्याहरेन्नान्तरा विरमेद्यावन्तमधीयीत । यद्यन्तरा विरमेत्त्रीन्प्राणायामानायम्य प्रणवं वा प्रणिधाय यावत्कालमधीयीत । ततः सर्वे निशो निशान्तरं संग्रामारण्यसलिलं प्रलोप्य परिदध्यात् । आदावन्ते च ब्राह्मणभोजनं दक्षिणादानं च दद्यात् । परातेन विधिना वेदमधीयीत सततः पूतो वेदो भवति मनःशुद्धश्च भवति द्वाभ्यां पारायणाभ्यां ऋग्भिश्च भोजन इहाधीते अनृतेभ्यः प्रमुच्यते त्रिभिर्बहुभ्यः पातकोपपातकेभ्यः शूद्रायां रेतःसिक्त्वा गङ्गासु निमज्जश्च भवति । चतुर्भ्यः शूद्रान्नभोजनात्तत्सेवनात्तत्स्त्रीसेवनाच्च पञ्चभिरयाज्ययाजनात्पूतो भवति । अग्राह्यग्रहणाद्राह्यग्रहणादभ्यासोपासनाच्च षड्भिर्ब्राह्मणस्य लोहितकरणात्स्त्रीलोहितकरणात्पशुहननात्सुवर्णस्तेयात्पतिसंप्रयोगाच्च सप्तभिः प्राजापत्यानां हीनाचरणात् । यज्ञोपवेधनाच्च अष्टभिश्चान्द्रायणस्यान्तरानाचरणाद्गुरुतल्पगमनाद्रजस्वलागमनाच्च नवभिः सुरापानाच्च दशभिरश्रोत्रियायाजनात् असोमपानात् अन्यायतश्च एकादशभिर्ब्राह्मणहननाद्गर्भहननाद्द्वादशभिः पूर्वजन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्यते स्वर्गलोकं गच्छति पितॄन्स्वर्गलोकं गमयति अग्निष्टोमादीन्क्रतून्यजति तैः क्रतुभिरिष्टं भवति । वेदाध्यायी सदैव स्याद्यथा हि सत्यवाक्शुचिः । यं यं कामयते कामं तं तं वेदेन साधयेत् । असाध्यं नास्ति यत्किंचिद्ब्रह्मणो हि फलं महत् ब्रह्मणो हि फलं महदिति । समाप्तौ यजुषा तर्पयतीति । वेदपारायणे समाप्ते एता देवताः पूर्वोक्ता अग्निसोमाद्यजुषा तर्पयति यजुर्वेदपारायणे तस्य वेदस्य प्राधान्यमुच्यते । अथवा भूरादिव्याहृतिचतुष्टयात्मकं यजुःशब्देन गृह्यते तेनैतदुक्तं भवति । भूर्देवांस्तर्पयामीत्यनेन प्रकारेण तर्पयित्वा अग्निसोमादींस्तर्पयेदिति । नास्यान्तरा

---

१ निर्णिक्तं प्रक्षालितम् ।

जननमरणे अशुची इति । नाशुचिहेतुभूते इत्यर्थः । नान्तरा व्याहरेदिति । उपक्रान्तवेदपारायणमध्ये न व्याहरेन्नाध्यापयेत् तथा लौकिकवचनमपि न ब्रूयात् । विहितं नित्यनैमित्तिकं कर्मानुपयुक्त्वा वर्क्ति न कुर्यादित्यर्थः । निशोनिशान्तरं संग्रामारण्यसलिलं लोप्य परिदध्यादिति लोप्य छित्वा परिहार्य वर्जयित्वेत्यर्थ इति यावत् । परिदध्यात् समापयेत् । निशान्तरं निशीथः संध्या वा । सलिलं वृष्टिरुदकसमीपभूमिका वा । निशादिकालान्देशांश्च वर्जयित्वा समापयेदित्यर्थः । सततः पूतो वेदो भवतीति । वेदो भवति वेदात्मको भवति उत्कृष्टज्ञानवान्भवेदित्यर्थः । द्वाभ्यां पारायणाभ्यां ऋग्भिश्चेति । ऋग्भिः पावमानीभिः पारायणद्वयं पावमान्यश्च मिलित्वोक्तफलाय कल्प्येते इत्यर्थः । एवमुत्तरत्र पारायणत्रयं गङ्गास्नानं च मिलित्वा साधनम् । निमज्जंश्च भवति पूतो भवतीत्यर्थः । प्राजापत्यानाचरणं प्रक्रान्तप्राजापत्यानामननुष्ठानं एवं चान्द्रायणस्यानाचरणं । यज्ञोपवेधनं यज्ञविनाशः । इत्यनक्षत्पारायणविधिः ॥

---

# याज्ञवल्क्यशिक्षा ।

श्रीः ॥ अथातस्त्रैस्वर्यलक्षणं व्याख्यास्यामः । उदात्तश्चानुदात्तश्च स्वरितश्च तथैव च । लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च ॥ १ ॥ शुक्लमुचं विजानीयान्नीचं लोहितमुच्यते । श्यामं तु स्वरितं विन्द्यादग्निमुचस्य दैवतम् ॥ २ ॥ नीचे सोमं विजानीयात्स्वरिते सविता भवेत् । उदात्तं ब्राह्मणं विन्द्यान्नीचं क्षत्रियमुच्यते ॥ ३ ॥ वैश्यं तु स्वरितं विन्द्याद्भारद्वाजमुदात्तकम् । नीचं गौतममित्याहुर्गार्ग्यं च स्वरितं विदुः ॥ ४ ॥ विन्द्यादुदात्तं गायत्रं नीचं त्रैष्टुभमुच्यते । जागतं स्वरितं विन्द्यादत एवं नियोगतः ॥ ५ ॥ गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः । त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः ॥ ६ ॥ उच्चौ निषादगान्धारौ नीचौ ऋषभधैवतौ । शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः ॥ ७ ॥ षड्जो वेदे शिखण्डिः स्यादृषभः स्यादजामुखे । गवा रम्भन्ति गान्धारं क्रौञ्चश्चैव तु मध्यमम् ॥ ८ ॥ कौकिलः पञ्चमो ज्ञेयो निषादं तु वदेद्गजः । आश्वश्च धैवतो ज्ञेयः स्वराः सप्त विधीयते ॥ ९ ॥ निमेषमात्रः कालः स्याद्विद्युत्कालस्तथापरे । अक्षरातुल्ययोगाच्च मतिः स्यात्सोमशर्मणः ॥ १० ॥ सूर्यरश्मिप्रतीकाशात्कणिका यत्र दृश्यते । अणवस्य तु सा मात्रा मात्रा च चतुराणवा ॥ ११ ॥ मानसे चाणवं विन्द्यात्कण्ठे विन्द्याद्विराणवम् । त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं विदुः॥१२॥ अवग्रहे तु कालः स्यादर्धमात्रा विधीयते । पदयोरन्तरे काल एकमात्रा विधीयते ॥ १३ ॥ ऋचोर्धे तु द्विमात्रः स्यात्त्रिमात्रः स्यादृगन्तके । रिक्तं तु पाणिमुत्क्षिप्य द्वे मात्रे धारयेद्बुधः ॥ १४ ॥ एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम्॥१५॥ विवृतौ चावसाने च ऋचोर्धे च तथापरे । पदे च पादसंस्थाने शून्यहस्तं विधीयते । प्रणवं तु प्लुतं कुर्याद्व्याहृतीर्मातृका विदुः ॥ १६ ॥ चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत् । शिखी वदति त्रिमात्रां मात्राणामिति संस्थितिः ॥ १७ ॥ वर्णो जातिश्च मात्रा च गोत्रं छन्दश्च दैवतम् । एतत्सर्वं समाख्यातं याज्ञवल्क्येन धीमता ॥ १८ ॥ हस्तौ तु संयतौ धार्यौ जानुभ्यामुपरि स्थितौ । गुरोरनुमतं कुर्यात्पठन्नान्यमतिर्भवेत् ॥ १९ ॥ ऊरुभागे तृतीये तु करं विन्यस्य दक्षिणम् । प्रसन्नमानसो भूत्वा किंचिन्निम्नमधोमुखम् ॥ २० ॥ प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्रीं चानुपूर्व्येण ततो वेदान्समारभेत् ॥ २१ ॥ कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः । स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः ॥ २२ ॥ नाभ्याहन्यान्न निर्हन्यान्न गायेन्नैव कम्पयेत् । यथैवोच्चारयेद्वर्णांस्तथैवैतान्समापयेत् ॥ २३ ॥ निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् । सममुच्चारयेद्वर्णान्हस्तेन च मुखेन च ॥ २४ ॥ स्वरश्चैव तु हस्तश्च द्वावेतौ युगपच्चरेत् । हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते ॥२५॥ न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः । गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ॥ २६ ॥ प्रकृतिर्यस्य कल्याणी दन्तोष्ठौ यस्य शोभनौ । प्रगल्भश्च विनीतश्च स वर्णान्वक्तुमर्हति ॥ २७ ॥ शङ्कितं भीतमुद्धृष्टमव्यक्तमनुनासिकम् । काकस्वरं मूर्ध्निगतं तथा स्थानविवर्जितम् ॥ २८ ॥ विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालुहीनं च पाठदोषाश्चतुर्दश ॥ २९ ॥ संहितासागरो बहुलः पदसंज्ञासमाकुलः । क्रमसंधिसमाकीर्णो दुस्तरो मन्त्रसागरः ॥ ३० ॥ ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः । साम्नां वा सरहस्यां च सर्वपापैः प्रमुच्यते ॥ ३१ ॥ संहिता नयते सौर्यं पदं च शशिनः पदम् । क्रमश्च नयते सूक्ष्मं यत्तत्पदमनामयम् ॥ ३२ ॥ कालिन्दी संहिता ज्ञेया पदयुक्ता सरस्वती । क्रमेणावर्तयेद्गङ्गा शंभोर्वाणी तु नान्यथा ॥ ३३ ॥ यथा महाह्रदं प्राप्य क्षिप्तो लोष्टो विनश्यति । एवं दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥ ३४ ॥ आम्रपालाशबिल्वानामपामार्गशिरीषयोः । वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥ ३५ ॥ खदिरश्च कदम्बश्च करवीरकरञ्जकौ । एते कण्टकिनः पुण्याः क्षीरिणस्तु यशस्विनः ॥ ३६ ॥ तेनास्यकरणे सूक्ष्मं माधुर्यं चैव जायते । त्रिफलालवणाक्तेन भक्षयेच्छिष्यकः सदा । क्षीणमेधाजनन्येषा स्वरवर्णकरी तथा ॥ ३७ ॥ हस्तहीनं तु योऽधीते मन्त्रं वेद

विदो विदुः । न साधयति यजूꣳषि भुक्तमव्यञ्जनं यथा
॥ ३८ ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्य-
जुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ ३९ ॥ ऋचो
यजूꣳषि सामानि हस्तहीनानि यः पठेत् । अनृचो ब्राह्मण-
स्तावद्यावत्स्वारं न विन्दति ॥४०॥ ज्ञातव्यश्च तथैवार्थो वेदानां
कर्मसिद्धये । पठन्मात्रापपाठात्तु पङ्के गौरिव सीदति ॥ ४१॥
स्वरवर्णप्रयुञ्जानो हस्तेनाधीतमाचरन् । ऋग्यजुःसामभिः
पूतो ब्रह्मलोकमवाप्नुयात् ॥ ४२ ॥ न कुर्वीत पदं दीर्घं न
कुर्वीत विलम्बितम् । पदस्य ग्रहमोक्षौ च यथा शीघ्रगति-
र्हयः ॥ ४३ ॥ आगमं कुरु यत्नेन कारणं हि तदात्मकम् ।
आस्येन च शयं कुर्यात्पठन्नान्यमतिर्भवेत् ॥ ४४ ॥ न चास्य
मुष्टिबन्धी स्यान्न चात्युत्तममाचरेत् । चुलुर्नौका स्फुटो दण्डी
स्वस्तिको मुष्टिराकृतिः । एते वै हस्तदोषाः स्युः परशुश्चैव
सप्तमः ॥ ४५ ॥ यथा वाणी तथा पाणी रिक्तं तु परिवर्जये-
त् । यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ॥ ४६ ॥
यथा धनुष्याविततं शरे क्षिप्ते पुनर्गुणः । स्वस्थानं प्रतिप-
द्येत तद्वद्धस्तगतः स्वरः ॥ ४७ ॥ उत्तानं सोन्नतं किंचित्सु-
व्यक्ताङ्गुलिरञ्जितम् । स्वरविद्धं करं कुर्यात्प्रादेशोद्देशगामि-
नम् ॥ ४८ ॥ अङ्गुष्ठस्योत्तरे पर्वे तर्जन्योपरि यद्भवेत् । प्रा-
देशस्य तु सोद्देशस्तन्मात्रं चालयेत्करम् ॥ ४९ ॥ मनुष्यती-
र्थोच्चं कृत्वा पितृतीर्थोदकं व्रजेत् । नामितं करपृष्ठे तु सुव्य-
क्ताङ्गुलिमोक्षणम् ॥ ५० ॥ स्वरिते त्र्यङ्गुलं विन्द्यान्निपाते
तु षडङ्गुलम् । उत्थाने तु नवाङ्गुल्यमेतत्स्वरस्य लक्षणम् ॥५१॥
अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् । शिष्याणामु-
पदेशार्थं कुर्याद्वृत्तिं विलम्बिताम् ॥ ५२ ॥ ऐन्द्री तु मध्यमा
वृत्तिः प्राजापत्या विलम्बिता । अग्निमारुतयोर्वृत्तिः सर्वशा-
स्त्रेषु निन्दिता ॥ ५३ ॥ मुष्ट्याकृतिर्मकारे तु नकारे तु नखा-
ग्रतः । अनुस्वारेऽङ्गुष्ठक्षेप ऊष्मान्तेऽङ्गुलिमोक्षणम् ॥ ५४ ॥
उदात्तं भुवि पातेन प्रचयं नोग्र एव च । शेषं षडङ्गुलं वि-
न्द्यान्निचितं तु विधीयते ॥ ५५ ॥ षडङ्गुलं तु जात्यस्य हस्त-
स्यानुपथस्य च । तच्चतुर्भागमात्रं तु हस्तस्तेनैव वर्तयेत् ॥५६॥
ककारान्ते टकारान्ते ङणे चाङ्गुलि नामयेत् । पञ्चाङ्गुल्यमकारे
च तकारे कुण्डलाकृतिः ॥ ५७ ॥ ऊर्ध्वक्षेपाच्च योष्मा च
अधःक्षेपाच्च यो भवेत् । एकैकमुत्सृजेद्धीरः स्वरिते तूभयं
क्षिपेत् ॥५८॥ अङ्गुष्ठाकुञ्चनं लब्धौ अनुस्वारे त्वपाꣳरसम् ।
दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्तितः ॥ ५९ ॥ तर्जन्य-
ङ्गुष्ठयोः स्पर्शेऽप्युदात्तं प्रतिविद्यते । नीचं तु मध्यमं कुर्या-
च्छेषं नीचतरं क्रमात् ॥ ६० ॥ स्वरितं यद्भवेत्किंचिद्धका-
रसहसंयुतम् । ऊष्माणं तद्विजानीयान्निक्षिपेदुभयोरपि ॥६१॥
स्वरिते च विनिक्षिप्ते संयोगो यत्र दृश्यते । द्विमात्रिके भ-
वेदेकमात्रिके तूभयं क्षिपेत् ॥ ६२ ॥ जात्ये च स्वरिते चैव
वकारो यत्र दृश्यते । कर्तव्यस्तूभयोः क्षेपो वायव्य इति द-
र्शनम् ॥ ६३ ॥ शृङ्गवद्वाथ वत्सस्य कुमारीकुचयुग्मवत् ।
उभक्षेपस्वरो यत्र स विसर्ग उदाहृतः ॥ ६४ ॥ विसर्गान्त-
स्वरो यत्र स्वरितो यत्र दृश्यते । दीर्घश्चैव तुकारश्च तत्रोभ-
क्षेप उच्यते ॥ ६५ ॥ त्रिविधस्तु भवेदूष्मा प्रचिता बलका-
न्तरा । स्वरिते प्रचितां विद्यान्निपाते बलकां विदुः ॥ ६६ ॥
उत्थाने तु तथा तारा एताभिस्त्रिभिरूष्मभिः । मात्रामात्रां
विदित्वा तु ततः क्षेपं प्रयोजयेत् ॥ ६७ ॥ अक्षरं भजते
काचित्काचिद्धि त्ते प्रतिष्ठिता । समाने जातिका काचित्का-
चिदूष्माप्रदायिका ॥ ६८ ॥ यथा बालस्य सर्पस्य उच्छ्वासो
लघुचेतसः । एवमूष्मा प्रयोक्तव्यो हकारः परिवर्जितः ॥६९॥
विवृतिं प्रत्यया ऊष्मां प्रवदन्ति मनीषिणः । तामेव प्रति-
षेधन्ति आईऊए इति निदर्शनम् ॥ ७० ॥ अष्टौ स्वरान्प्रव-
क्ष्यामि तेषामेव तु लक्षणम् । जात्योऽभिनिहितः क्षैप्रः प्रश्लि
ष्टश्च तथापरः ॥ ७१ ॥ पादवृत्तस्तथा भाव्य इतिस्वराः ।
एकपदे नीचपूर्वः सयवो जात्यः एकपद इत्याह ॥ ७२ ॥
नीचपूर्वः सयकारवकारौ वा जात्यः स्वरितो भवति । यथा-
जात्यं मनुष्यानिंति सुद्येति चम्वीव धान्यम् कन्या इव स्वः
वीर्यं एवꣳह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति।
एओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः । अकारो यत्र
लुप्येत तं चाभिनिहितं विदुः ॥ ७३ ॥ यथा कुक्कुटः–असि
कुक्कुटोसि । वेदः–असि वेदोसि । भागः–असि भागोसि ।
मारुतः–असि मारुतोसि । श्वात्रः–असि श्वात्रोसि । ते–अप्स-
रसाम् तेप्सरसाम् । ते–अवन्तु तेवन्तु । कः–असि कोसि ।
सः–अहं सोहं । एवꣳहि यानि चान्यानीदृग्लक्षणानि पदानि
भवन्ति । इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित् । अनुदात्ते
पदे नित्यं विन्द्यात्क्षैप्रस्य लक्षणम् ॥ ७४ ॥ यथा त्रि–अ-
म्बकम् त्र्यम्बकम् । द्रु–अन्नः द्र्वन्नः । वीडु–अङ्गः वीड्वङ्गः ।
वाजी–अर्वन् वाज्यर्वन् । एवꣳह्याह यानि० । इकारो यत्र
दृश्येत इकारेणैव संयुतः । उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति
स्वरः ॥ ७५ ॥ अभि–इन्धताम् अभीन्धताम् । अभि–इमं
अभीमम् । वि–इहि वीहि । स्रुचि–इव स्रुचीव । चम्वी–
इव चम्वीवेति । एवꣳह्याह यानि चान्यानि० । उदात्तपूर्वं
यत्किंचिच्छन्दसि स्वरितं पदम् । एष सर्वं बहुस्वारस्तैरो व्य-
ञ्जन उच्यते ॥ ७६ ॥ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योते
अदिति सरस्वति महि विश्रुतीति भवन्ति । एवꣳह्याह
यानि० भवन्ति । अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरम् ।
तैरो विरामं तं विन्द्यादुदात्तो यद्यवग्रहः ॥ ७७ ॥ यथा गो-
मदिति गो–मत् । गोपताविति गो–पतौ । प्रप्रेति प्र–प्र ।
विततेति वि–तता । समिद्ध इति सम्–इद्धः । एवꣳह्याह
यानि० भवन्ति । स्वरेति स्वरिते चैव विवृतिर्यत्र दृश्यते ।
पादवृत्तो भवेत्स्वारः श्वित्र आदित्येति निदर्शनम् ।
श्वित्रः–आदित्यानाम् श्वित्र आदित्यानां । पुत्रः–
ईधे–पुत्रईधे । दात्रे–एधि दात्रएधि । कः–ईम् कईम् ।
ताः–अस्य ताअस्य । एवꣳह्याह यानि० । उदात्ताक्षरयोर्मध्ये

भवेन्नीचस्त्ववग्रहः । तथा भाव्यं भवेत्कम्पस्तनूनप्त्रेति निदर्शनम् ॥७८॥ यथा तनूनप्त्र इति तनू-नप्त्रे । तनूनपादिति तनू-नपात् । तनूनपातमिति तनू-नपातम् । एवꣳह्याह यानि पदानि लक्षणानि भवन्ति । इत्यष्टपदसमाम्नाये वैशेषिके याज्ञवल्क्यवचनानां पदानां पाठः समाप्तः ॥

माध्यंदिनविरोधि स्यात्तथा भाव्यस्तु यः स्मृतः । स्वरो नैवात्र दृश्येत भिन्नोदात्तानुदात्तकौ ॥ १ ॥ स्वराः स्पर्शान्तःस्थोष्माणः । कण्ठ्यजिह्वामूलीयतालव्यमूर्धन्यदन्त्योष्ठ्ययमाविसर्जनीयनिपाताद्याश्च किंवर्णदैवत्यलिङ्गाः स्वराः शुक्लाः नानादैवत्याः । स्पर्शाः कृष्णाः । कपिला अन्तस्थाः । ऊष्माणोऽरुणाः । नीला यमाः । हरिता नासिक्याः । पीतोऽनुस्वारः । रक्तो जिह्वामूलीयः । पीत उपध्मानीयः । श्वेतो विसर्जनीयः । शबलो रङ्गः । नीलोऽनुनासिक्यः । इत्यन्तर्मध्यमयोर्नासिक्यं विद्यात् । द्विरुदात्ताख्या इति स्मृतः । उदमनुदनिपाते आद्ये चोपसर्गे नामाख्याते चोपसर्गनिपाताश्चेति किंदैवत्याः । अक्षराणां च के पुरुषाः काः स्त्रियः कानि नपुंसकानीत्यत्र ब्रूमः । कण्ठ्या आग्नेया अकारादयः । जिह्वामूलीया नैर्ऋत्याः ककारादयः । तालव्याः सौम्याश्चकारादयः । वायव्या मूर्धन्याष्टकारादयः । रौद्रा दन्त्यास्तकारादयः । औष्ठ्या आश्विन्याः पकारादयः । शेषा वैश्वदेवाः अं इत्येवमादयः । स्वरास्तु ब्राह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये । द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥२॥ वर्गाणां पञ्चमा वैश्या अन्तस्थाश्च तथैव च । ऊष्माणश्च हकारश्च शूद्रा एव प्रकीर्तिताः ॥ ३ ॥ शुक्लवर्णानि नामानि आख्याता रोहिता मताः । कपिञ्जलास्तूपसर्गाः कृष्णाश्चैव निपातकाः ॥ ४ ॥ भार्गवगोत्राणि नामानि भारद्वाजा आख्याताः । वासिष्ठा उपसर्गास्तु निपाताः काश्यपाः स्मृताः । पीतवर्णश्चोपसर्गो निपातः कृष्णवर्णकः । सर्वं तु सौम्यमाख्यातं नाम वायव्यं दृश्यते । आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ ५ ॥ प्रथमाश्च तथान्तस्थाः स्त्रीलिङ्गाः परिकीर्तिताः । शेषाक्षराणि षण्ढानि प्राहुर्लिङ्गविवेचकाः ॥ ६ ॥ नाम्नामिन्द्रो देवता वरुणः उपसर्गाणामादित्यः सर्वस्याक्षरगणस्य स्वरा विसर्जनीयो यमाश्च पुँल्लिङ्गाः । ङञणनमा यरलवाः स्त्रीलिङ्गाः । शेषाण्यक्षराणि नपुंसकलिङ्गानीति । संधिश्चतुर्विधो भवति लोपागमौ वर्णविकारः प्रकृतिभावश्चेति । तद्यथा–तत्र लोपो भवति अयक्ष्माः–मा अयक्ष्मामा । शततेजाः–वायुः शततेजावायुः । तिग्मतेजाः–द्विषतः तिग्मतेजाद्विषतः ॥ इति लोपः ॥ आगमो भवति–यथा प्रत्यक् सोमः प्रत्यङ् सोमः प्राक्सोमः प्राङ्सोमः अस्मान् सीते अस्मान्त्सीते ॥ त्रीन् समुद्रान् त्रीन्त्समुद्रान् । इति आगमः । विकारो भवति आ–इदम् एदम् । आ–इमे एमे । आ–इष्टयः एष्टयः । प्र–इषितः प्रेषितः इति विकारः प्रकृतिभावः यथा–आशुः शिशानः । युञ्जानः प्रथमम् । अदितिः षोडशाक्षरेण । देवो वः सविता । इति प्रकृतिभावः ॥

आकाशस्था यथा विद्युत्स्फुटितं मणिसूत्रवत् । एष च्छेदो विवृतीनां यथा बालेषु कर्तरी ॥ ७ ॥ द्वयोस्तु स्वरयोर्मध्ये संधिर्यत्र न दृश्यते । विवृतिस्तत्र विज्ञेया यईशेति निदर्शनम् ॥ ८ ॥ पिपीलिका पाकवती तथा वत्सानुसारिणी । वत्सानुसंसृता चैव चतस्रस्तु विवृत्तयः ॥ ९ ॥ पञ्च रङ्गाः प्रवर्तन्ते घातनिर्घातवज्रिणः । अहरप्रहरो ज्ञेय अइउऋओ-इति निदर्शनम् ॥ १० ॥ पिपीलिका आद्यन्तदीर्घा नाभ्या आसीदिति निदर्शनम् । पाकवत्युभयोर्ह्रस्वा विन इन्द्रेति निदर्शनम् ॥ ११ ॥ अन्ते च वत्सानुसृजता तानेत्यसौ आवोढमश्विनेति नि० । वत्सानुसारिणी चादौ दीर्घा ताअस्मेति नि० ॥ १२ ॥ करिणी कुर्विणी चैव हरिणी हारिणीति च । तथा हंसपदा नाम पञ्चैताः स्वरभक्तयः ॥ १३ ॥ करिणी रहयोर्योगे कुर्विणी लहकारयोः । हरिणी रषयोर्योगे हारितं ऋपकारयोः ॥ १४ ॥ या तु हंसपदा नाम सा तु रेफककारयोः । हरिणी हरयोर्विद्यात्कुर्विणी लहकारयोः ॥ १५ ॥ देवं बर्हिरिति करिणी उपह्वरेति कुर्विणी । हरिणी अरेपस इत्याहुर्हारिणी शतवल्हेति च ॥ १६ ॥ वर्षोवर्षीयतेसीति तथा हंसपदेति च । स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्जयेत् ॥ १७ ॥ इकारं चाप्युकारं च ग्रस्तदोषं तथैव च । एतल्लक्षणमाख्यातं याज्ञवल्क्येन धीमता ॥ १८ ॥ सम्यक् पाठस्य सिद्ध्यर्थं शिष्याणां हितकाम्यया । अर्धमात्रास्वरं किंचित्पृथङ्न्यूनमिवोच्चरन् । ऋकारे च हकारे च हृत्कण्ठमनसानि च ॥ १९ ॥ नैतत्स्वरितपूर्वाङ्गे नापराङ्गे कथंचन । न स्वरे न च मात्रायां कथं स्वारो विधीयते ॥ २० ॥ पराङ्गस्य तु यत्पूर्वं पूर्वाङ्गस्य तु यत्परम् । उभयार्धार्धसंयोगे स्वारं कुर्याद्विचक्षणः ॥ २१ ॥ संयोगे तु परं स्वार्थं परं संयोगनामकम् । संयुक्तस्य तु वर्णस्य न स्वार्थं पूर्वमक्षरम् ॥ २२ ॥ उदात्तादनुदात्ते तु वामायाश्रुव आरभेत् । उदात्तात्स्वरितोदात्तौ क्रमाद्दक्षिणतो न्यसेत् ॥ २३ ॥ स्वरितादनुदात्ता ये प्रचयांस्तान्प्रचक्षते । एकस्वररापिचाता(?)नाहुस्तत्स्वार्थ चिन्तिकाः ॥ २४ ॥ प्रचयो यत्र दृश्येत तत्र हन्यात्स्वरं बुधः । स्वरितः केवलो यत्र मृदुस्तत्र निपातयेत् ॥ २५ ॥ दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः । एवं व्यञ्जनमासाद्य अकारो हरते स्वरम् ॥ २६ ॥ उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा । अक्षरात्तुल्ययोगाच्च नीचे नीचगतानि च ॥ २७ ॥ स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च । स्वरप्रधानैस्तैः स्वार्यं व्यञ्जनं तेन सस्वरम् ॥ २८ ॥ व्यञ्जनान्यनुवर्तन्ते यत्र तिष्ठति सस्वरः । स्वरप्रधानं त्रैस्वर्यमाचार्याः प्रवदन्ति हि ॥ २९ ॥ मणिवद्व्यञ्जनं विद्यात्सूत्रवच्च स्वरं विदुः । आचार्याः सममिच्छन्ति पदच्छेदं तु पण्डिताः ॥ ३० ॥ स्त्रियो मधुरमिच्छन्ति विकृष्टमितरे जनाः । उदात्तं नानुवर्तन्ते नीचं न स्वरितं तथा ॥ ३१ ॥ विस्वरं तं

विजानीयाद्दीर्घह्रस्वविवर्जितम् । हरिवरुणवरेण्येषु धारापुरुषेषु च । स्वरिते रेफवैश्वानरो नकारः शेषाकारः स्वरिता नकाराः ॥३२॥ द्वौ वरुणौ च स्वरितौ । उदुत्तमं वरुणधारयंवरोरुधारा उरुधारा च होइते (?)। मात्रिकं वा द्विमात्रं वा स्वरितं यदिहाक्षरम् । तस्यादितोऽर्धमात्रा वै शेषं च परतो भवेत् ॥ ३३ ॥ नकारान्ते पदे पूर्वे श्मश्रुभिः परतः स्थिते । छकारं न प्रयुञ्जीत ञशसंधिं समुच्चरेत् ॥ ३४ ॥ ओकारं प्लुतविज्ञेयं प्लुतमन्ना द्वितीयकम् । लाजीं छाचीं तृतीयं च विवेशेति चतुर्थकम् ॥ ३५ ॥ अधःस्विदासीत्पञ्चमं चोपरिस्विदासीच्च षष्ठकम् । सप्तमं तु भ्रुवोः स्मार अष्टमं नैव विद्यते ॥ ३६ ॥ उच्चस्थानगते ह्रस्ते स्वरितं नोपपद्यते । अधस्था तु यदा गच्छेत्स्वरितं न तदा भवेत् । कचटतपा दृश्यन्ते संधिस्थानेषु नित्यशः । स्ववर्गेणैव संयुक्ता मोक्षं तत्र न कारयेत् । तकारान्ते पदे पूर्वे सकारे परतः स्थिते । प्रत्यारम्भं न कुर्वीत पापाविति निदर्शनम् । ककारान्ते पदे पूर्वे सकारे परतः स्थिते । खसवर्णं विजानीयात् भिखक्सेति निदर्शनम् । तकारान्ते पदे पूर्वे चवर्गे परतः स्थिते । मोक्षं तत्र च कुर्वीत यच्च पापौ निदर्शनम् । ङकारान्ते पदे पूर्वे सकारे परतः स्थिते । कसवर्णं विजानीयात्प्राङ्सोमेति निदर्शनम् । टकारान्ते पदे पूर्वे सकारे परतः स्थिते । टसवर्णं विजानीयात्संम्राट् संभृतेति निदर्शनम् । तकारान्ते पदे पूर्वे सकारे परतः स्थिते । छसवर्णं विजानीयात् तत्सवितुरिति निदर्शनम् । नकारान्ते पदे पूर्वे सकारे परतः स्थिते । तसवर्णं विजानीयात्रीन्त्समुद्रेति निदर्शनम् । पकारान्ते पदे पूर्वे शकारे परतः स्थिते । छासवर्णं विजानीयादनुष्टुप्छारदीति निदर्शनम् । मकारान्ते पदे पूर्वे सवर्णे परतः स्थिते । मसवर्णं विजानीयादिमंमेति निदर्शनम् । वर्णे तु मात्रिके पूर्वे अनुस्वारो द्विमात्रकः । द्विमात्रे मात्रिको ज्ञेयः संयोगाद्यस्य यो भवेत् । अनुस्वारो द्विमात्रः स्याद्दवर्णव्यञ्जनादिगः । ह्रस्वाद्वा यदि वा दीर्घाद्देवानाꣳहृदयेभ्य इति । अनुस्वारस्योपरिष्टात्संवृतं यत्र दृश्यते । दीर्घं तं तु विजानीयाच्छ्रोताग्रावाणेति निदर्शनम् । अनुस्वारस्योपरिष्टात्संयोगो यत्र दृश्यते । ह्रस्वं तं तु विजानीयात्सꣳस्थेति निदर्शनम् । अनुस्वारश्च यो दीर्घादक्षराच्च भवेत्परः । स तु ह्रस्व इति ज्ञेयो मन्त्रेष्वेव विभाषया । ओभावश्च विवृत्तिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः । यथा भावप्रसंधानमुकारादिपरं पदम् । स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः । उभावादुत्थितश्चोष्मा तां तु केलिं विनिर्दिशेत् । विवृतं प्रति या ऊष्मा विज्ञेया त्रिकटानना । लीढातिलीढविद्युच्च शषसेषु प्रकीर्तिताः । जिह्वामूले च रेफे च विज्ञेया विठकाशठा । उपध्मानीयसहिता पुष्पिणीं तां विनिर्दिशेत् । अन्यत्र यो भवेदूष्मा सुलभां तां विनिर्दिशेत् । पादाद्यन्तं पदाद्यन्तं तथावग्रहकालिकम् । ईषत्स्पृष्टं विजानीयात्तस्मिन्काले तु कारयेत् । पादादौ च पदादौ च संयोगावग्रहेषु च । यः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः । उपसर्गपरो यस्तु पदादिरपि दृश्यते । ईषत्स्पृष्टं यथा विद्युत्पदच्छन्दात्परं भवेत् । त्वदर्थवाचिनौ वोवां वावै यदि निपातजौ । आदेराजविकल्पार्थौ ईषत्स्पृष्टा इति स्मृताः । विभाषयामेकारः स्यात्तथा नेतैः पदात्परः । भवन्तेत्यपि पूर्वैव तथा च सपदादपि । यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् । यत्र यत्र विशेषः स्यादिदानीं स स कथ्यते । वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूत्तरः । आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूत्तरः । उपांशु त्वरितं चैव योऽधीते हृदि संज्ञकः । अपिरूपसहस्रेषु सदेहेषु प्रवर्तते । पञ्चविद्यां न गृह्णन्ति जडाः स्तब्धाश्च ये नराः । आलस्याश्चैव रोगाश्च येषां च विस्मृतं मनः । अहिरिव गुणाद्भीतः संमानान्नरकादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति । न भोजनविलम्बी स्यान्न च नारीनिबन्धनः । सुदूरमपि विद्यार्थी व्रजेद्गरुडहंसवत् । यथा खनन्खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति । सुखार्थी चेत्त्यजेद्विद्यां विद्यार्थी चेत्त्यजेत्सुखम् । सुखिनस्तु कुतो विद्या सुखं विद्यार्थिनः कुतः । गुणिता शतशो विद्या सहस्रावर्तिता पुनः । आगमिष्यति जिह्वाग्रे स्थलनिम्नमिवोदकम् । शतेन गुणिता विद्या सहस्रेण च तिष्ठति । शतानां च सहस्रेण प्रत्यक्षवदवतिष्ठति । जलमभ्यासयोगेन शिलायाः कुरुते क्षयम् । कर्कार्णामृदुतस्तस्य किमभ्यासान्न साध्यते । गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते । शुश्रूषारहिता विद्या ह्यल्पमेधागुणैः सह । वन्ध्या च यौवनी तस्या न विद्या फलिनी भवेत् । हयानामिव जात्यानामर्धमात्रार्धशायिनाम् । न हि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति । यथा पिपीलिकाभिः पांसुभिर्वल्मीकं क्रियते महत् । न तत्र बलसामर्थ्यमुद्यमस्तत्र कारणम् । अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु । अन्नव्यञ्जनयोर्भागस्तृतीयमुदकस्य च । वायोः संचारणार्थाय चतुर्थमुपकल्पयेत् । हकारं पञ्चमैर्युक्तमन्तस्थैश्चापि संयुतम् । औरसं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् । हकारो यत्र पूर्वस्थो ह्यन्तस्थाद्यो भवेत्परः । पदकाले वियुज्येत संहितायां स औरसः । मेघदुन्दुभिनिर्घोषो ज्ञायते पयसो ह्रदात् । एवं नादं प्रयोक्तव्यं सिंहस्य रुदितं यथा । मासे भाद्रपदे मेघाः शब्दं कुर्वन्ति यादृशम् । एवं गह्वरमासाद्य शुक्रं दुदुहेति दर्शनम् । शेषाणां वानरा युद्धमुत्पतन्ति पतन्ति च । एवं वर्णाः प्रयोक्तव्या इहेहैषां निदर्शनम् । यथा पुत्रवती स्नेहाच्चुम्बते निजमौरसम् । एवं वर्णाः प्रयोक्तव्या युञ्जानेति निदर्शनम् । दुर्दरो जयदेशे च प्रफतेषुर्नयाप्यया(?) । एवं वर्णाः प्रयोक्तव्या अपां फेनेति निदर्शनम् । यथा भारभराक्रान्ता निश्वसन्ति नरा भुवि । एवं वर्णाः प्रयोक्तव्या अच्चः संभृत इत्यपि । कुक्कुटः कामलु-

ऽधश्च ककारद्वयमुच्चरेत् । एवं वर्णाः प्रयोक्तव्याः कुक्कुटोसीति दर्शनम् । वडवा च हयं दृष्ट्वा योनिं विकुरुते यथा । एवं वर्णाः प्रयोक्तव्याः सदुन्दुभेति दर्शनम् । रङ्गे चैव समुत्पन्ने नो ग्रसेत्पूर्वमक्षरम् । स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमाचरेत् । यथा सौराष्ट्रिका नारी अराँ इत्यभिभाषते । एवं रङ्गः प्रवक्तव्यो ङकारः परिवर्जितः । द्विमात्रिको मात्रिको वा नासामूलं समाश्रितः । अन्ते प्रयुञ्जते रङ्गः पञ्चमैः सानुनासिकः । यथा सौराष्ट्रिका नारी अराँ इत्यभिभाषते । एवं रङ्गं विजानीयात् ङकारपरिवर्जितम् । अनन्तरं मकारस्य यो रङ्गस्तत्र रज्यते । सर्वानुनासिकं विन्द्यादेषा मध्योपधानिका । यरलवशषसहरज्यन्ते चोपधानिका । गर्वान्ते रङ्गते यस्तु सर्वैः सर्वानुनासिका । नासादुत्पद्यते रङ्गः कांस्येन समनिःस्वनः । मृदुश्चैव द्विमात्रः स्याद्वृष्टिमान्स्यान्निदर्शनम् । यथा व्याघ्री हरेत्पुत्रान्दंष्ट्राभिर्न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् । मधुरं च न चाव्यक्तं व्यक्तं चापि न पीडितम् । सनाथस्यैकदेशस्य न वर्णाः शंकरं गताः । यथा सुमत्तनागेन्द्रः पदात्पदं निधापयेत् । एवं पदं पदाद्यन्तं दर्शनीयं पृथक् पृथक् । गीती शीघ्री शिरःकम्पी यथालिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः । माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमत्वं च षडेते पाठका गुणाः । चतुरक्षरषट्कं च निवर्तेत पुनःपुनः । आवर्तते पदं यच्च द्विस्त्रिराम्रेडितं हि तत् । यथा धाम्ने धाम्नेति यजुषे यजुषेति निदर्शनम् । हीयते वर्धते चापि पदं यत्र कृशोदरम् । उपचारः स विज्ञेय उभे सुश्चन्द्रेति निदर्शनम् ॥

अथ सप्तविधाः संयोगपिण्डाः । अयःपिण्डो दारुपिण्ड ऊर्णापिण्डो ज्वालापिण्डो मृत्पिण्डो वायुपिण्डो वज्रपिण्डश्चेति । यमान्विद्यादयः पिण्डान्सान्तस्थं दारुपिण्डवत् । अन्तस्थं यमवर्जं तु ऊर्णापिण्डं विनिर्दिशेत् । अन्तस्थं यमसंयोगे विशेषो नोपलभ्यते । अशरीरं यमं विन्द्यादन्तस्थः पिण्डनायकम् । ज्वालापिण्डान्सनासिक्यान्सानुस्वारांस्तु मृन्मयान् । सोपध्मा वायुपिण्डाश्च जिह्वामूले तु वज्रिणः । अयःपिण्डो नाम यथा । अग्नीः पत्नीः नातनन्चिम । दारुपिण्डो नाम यथा । अश्वः सूर्यः विश्वाजतीति भवति । तत्र ऊर्णापिण्डो नाम यथा । यस्मिन् अल्पस्मिन् अमुष्मिन् इति भवति । तत्र ज्वालापिण्डो नाम यथा । ब्रह्मा वह्निः गृह्णामीति भवति । तत्र मृत्पिण्डो नाम यथा । सांᳮस्था संᳮस्कर्तारः संᳮस्वर्त इति । तत्र वायुपिण्डो नाम यथा । देव सवितः । युञ्जानः प्रथमम् । प्रादिवः ककुत्सुप्रमिति भवति । तत्र वज्रपिण्डो नाम यथा । इष्कृतिः निष्कृतिः ऋक्षाम इति भवति । प्रथममेव पकारेण सकारेणैव संयुतम् । एतत्स्वरं समासाद्य अग्निष्वात्ता निदर्शनम् । प्रथमेन ठकारेण थकारेणैव संयुतम् । एतत्स्वरं समासाद्य अधिष्ठाननिदर्शनम् । प्रथममेव णकारेण नकारेणैव संयुतम् । एतत्स्वरं समासाद्य त्रिणवत्रयस्त्रिᳮशाविति निदर्शनम् । प्रथममेव रङ्गेण नकारेणैव संयुतम् । एतद्रञ्जितमासाद्य वृष्टिमानिति निदर्शनम् । एते ककारादयो मकारपर्यवसानाः कृष्णा व्याख्याताः शनैश्चरदैवत्याः । चत्वार्यन्तस्था यरलवाः कपिलवर्णा अग्निदैवत्याः । चत्वार्यूष्माणः शषसहा अरुणवर्णा आदित्यदैवत्याः । त्रयस्त्रिᳮशद्व्यञ्जनानि स्पर्शा अन्तस्था ऊष्माणश्चेति । चतुर्विधं करणं स्पृष्टमस्पृष्टं संवृतं विवृतं चेति । संवृतो घोषा विवृता अघोषाः । विᳮशतिर्घोषास्ते गजडदबा घझढधभा ङञणनमाः यरलवाश्चेति । त्रयोदश अघोषास्ते कचटतपाः खछठथफाः शषसाश्चेति । अष्टौ वर्णस्थानानि भवन्ति । उरःकण्ठ्यमूर्धन्यतालुदन्त्यजिह्वामूलयमानुनासिक्याश्चेति । द्वौ औरस्यौ हहा इति । अआआ ३ त्रयः कण्ठ्याः । षट्मूर्धन्याः ऋटठडढणष इति । दश तालव्याः चछजझञयशइईई ३ इति । अष्ट दन्त्याः तथदधनलृलसाः । एकादश ओष्ठ्याः पफबभममाउऊऊ ३ ऌउपध्माचेत्यादयः । एको दन्तमूलीयो रेफः । जिह्वामूलीयाः पञ्च कुंखुंगुंघुंङुंइति । क्मख्मग्मघ्मकुंखुंगुंघुंइति यमाश्चत्वारः । रुक्मेति प्रथमो ज्ञेयः सक् इत्यपरो भवेत् । तृतीयः सद्म इत्याहुरुपध्मेति चतुर्थकः । प्रथमौ चौष्ठनासिक्यावोष्ठनासे उपाश्रितौ । द्वितीयः कण्ठ्यदन्त्यश्च नासामूलमुपाश्रितः । तृतीयः कण्ठ्यजिह्वाग्रे नासायामेव निर्दिशेत् । चतुर्थो हृदि नासिक्यः कण्ठे चाभिहिता यमाः । आपञ्चमैश्चैकपादः संयुक्तं पञ्चमाक्षरम् । यस्मात्तत्र निवर्तन्ते श्मशानादिव बान्धवाः । यत्किंचिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितं सर्वमत्र प्रतिष्ठितमिति । ऋवर्णे तत्परे सादावनुस्वारो द्विमात्रकः । संयोगे परभूतेषु ह्रस्व एवोच्यते बुधैः ॥ इति श्रीयाज्ञवल्क्यशिक्षा समाप्ता ॥

# प्रतिज्ञासूत्रम् ।

श्रीवेदपुरुषाय नमः । अथ प्रतिज्ञा मन्त्रब्राह्मणयोर्वेदनामधेयं तस्मिन्शुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया ह्यनुदात्तो मूर्ध्न्युदात्तः श्रुतिमूले स्वरितः एवं जात्यादयोऽभिहिता ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ तानस्वराणि छन्दोवत्सूत्राणि ॥ १ ॥ अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्यापि रेफोष्मान्त्यान्यासंकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणं द्विर्भावेऽप्येवमथापरान्तस्थस्याद्युक्तान्यहलसंयुक्तस्योष्मस्वरकारैरेकारसहितोच्चारणमेवं तृतीयान्तस्थस्य क्वचित्कारस्तु संयुक्तासंयुक्तस्याविशेषेण सर्वत्रैवमथान्त्यस्यान्तस्थानां पदा-

दिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणमथो मूर्धन्योष्मणोऽसंयुक्तस्य दुस्मृते संयुक्तस्य च खकारोच्चारणमध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या ॥ २ ॥ अथानुस्वारस्यꣳइत्यादेशः शषसहरेफेषु तस्य त्रैविध्यमाख्यातम् । ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः परसवर्णेषप्रकृत्या चान्यत्र विसर्गेष्वीषद्विरामः पदाद्यस्य संयुक्ताकारस्येषद्दीर्घता च भवतीषद्दीर्घता च भवतीति ॥ ३ ॥

इति कात्यायनपरिशिष्टप्रतिज्ञासूत्रं समाप्तम् ॥

---

# सर्वानुक्रमसूत्रम् ।

श्रीवेदपुरुषाय नमः ॥ ॐमण्डलं दक्षिणमक्षि हृदयं चाधिष्ठितं येन शुक्लानि यजूꣳषि भगवान्याज्ञवल्क्यो यतः प्राप तं विवस्वन्तं त्रयीमयमर्चिष्मन्तमभिध्याय माध्यन्दिनीये वाजसनेयके यजुर्वेदाम्नाये सर्वे सखिले सशुक्रियऋषिदैवतछन्दाꣳस्यनुक्रमिष्यामो यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते द्रष्टारो ऋषयः स्मर्तारः परमेष्ठ्यादयो देवता मन्त्रान्तर्भूताध्यादिका हविर्भाजः स्तुतिभाजो वाऽनःशाखोखाशम्योपवेषकपालेध्मोलूखलादयश्च प्रतिमाभूताश्छन्दाꣳसि गायत्र्यादीन्येतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तराश्वगर्तं वा पद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान्भवत्यथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते ॥ १ ॥ इषेत्वादि खंब्रह्मान्तं विवस्वानपश्यत्ततः प्रतिकर्मविभागेन ब्राह्मणानुसारेण ऋषयो वेदितव्याः परमेष्ठी प्राजापत्यो दर्शपूर्णमासमन्त्राणामृषिर्देवा वा प्राजापत्या इषेत्वा शाखानुष्टुब्विनियोगः कल्पकारोक्त एवमूर्जेत्वा वायवे वायव्यं देवोव ऐन्द्रं यजमानस्य शाखा वसोर्वायव्यं द्यौर्मातरिश्वन उखा वसोर्वायव्यं देवस्त्वापयः कामधुक्षः प्रश्नः सा विश्वायुस्त्रीणि गव्यानीन्द्रस्यैन्द्रं विष्णोः पयः ॥ २ ॥ यो अग्न इदमाग्नेये कस्त्वा प्राजापत्यं कर्मणे स्रुक्शूर्पं प्रत्युष्टं द्वे राक्षसे उरुब्रह्म रक्षोघ्नꣳसर्वत्र धूरसि धूर्देवानां विष्णुस्त्वानꣳउरु हविष्या अपहतꣳरक्षो यच्छन्ताꣳहविष्या देवस्य त्वा सावित्रꣳसर्वत्राग्नेये लिङ्गोक्ते भूताय त्वा हविः स्वः सूर्यो दꣳहन्तां गृहाः पृथिव्यास्त्वा हव्यं पवित्रे लिङ्गोक्तꣳसवितुर्देवीः प्रोक्षिता आपान्यग्नये लिङ्गोक्ते दैव्याय पात्राणि ॥ ३ ॥ शर्मास्यदित्याः कृष्णाजिनमवधूतꣳराक्षसमद्रिर्ग्रावोलूखले अग्नेर्हविर्बृहत्स इमं मौसले हविष्कृदधिदैवतं वागधियज्ञं पत्नी कुक्कुटो वाग्वर्षवृद्धꣳशूर्पं प्रतित्वाहविः परापूतमपहतꣳराक्षसे वायुर्वो देवो वस्तण्डुलाधृष्टिरुपवेषोऽपाग्न आदेवयजमाग्नेये ध्रुवमसिषण्णां कपालान्यग्ने ब्रह्माग्नेयं धिषणासि दार्षदं दिवः शम्याऽधिषवणोपलं धान्यमसि षण्णाꣳहविर्महीनामाज्यम् ॥ ४ ॥ संवपामि हविः समाप आपं जनयत्यै त्वेदꣳहविरिषे-आज्यं घर्मोसि षण्णां पुरोडाशस्त्रिताय त्रयाणां त्रितो द्वितः क्रमेणादद इन्द्रस्य स्फ्यः पृथिवी वेदिर्व्रजं पुरीषं वर्षतु वेदिर्बधानसावित्रमपाररुमररो आसुरे द्रप्सस्ते वेदिगायत्रेर्णं त्रीणि वैष्णवानि सूक्ष्मा त्रयाणां वेदिः पुराघशꣳसोऽपश्यच्चान्द्रमसी त्रिष्टुभं प्रोक्षणीः प्रैषो द्विषतः आभिचारिकमनिशितः स्रुवो निशिता स्रुगदित्यै विष्णोर्योक्रमूर्जे त्रयाणामाज्यꣳसवितुरापं तेजोसि धामाज्यम् ॥ ५ ॥ इति० संहितायां प्रथमोऽध्यायः।

कृष्णोसीध्मो वेदिर्बर्हिर्लिङ्गोक्ते अदित्या आपं विष्णोः प्रास्तरमूर्णम्रदसं वेदिर्भुवपतये त्रीण्याग्नेयानि गन्धर्वस्त्रयाणां परिधयो वीतिहोत्रं विश्वावसुराग्नेयीं गायत्रीꣳसमिदाग्नेयꣳसूर्यस्त्वालिङ्गोक्तꣳसवितुर्विधृती ऊर्णम्रदसमात्वाप्रास्तरे घृताच्यसि त्रयाणां जुहूपभृद्ध्रुवाः क्रमेण प्रियेण हविर्ध्रुवा असदन्पाहि मां वैष्णवे अग्नेवाजजिदाग्नेयं नमोदेवꣳ स्वधापित्र्यꣳसुयमे स्रुचावङ्गिगा वैष्णवं वसुमतीमाग्नेयमित ऐन्द्रꣳसंज्योतिषाज्यं मयीदमाशीःप्रतिग्रहणमुपहूता द्यावापृथिव्यम् ॥ ६ ॥ ब्रह्मत्वं प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोऽपश्यदग्नेष्ट्वा प्राशित्रमेतं ते वैश्वदेवमेषा तेनुष्टुबाग्नेय्यग्ने वाजजिदाग्नेयमग्नीषोमयोश्चत्वारि लिङ्गोक्तानि वसुभ्यस्त्रयाणां परिधयः संजानाथाव्यन्तु प्रास्तरे मरुतां कपिर्बृहतीं प्रास्तरीमन्त्यः पाद आग्नेयो यं परिधिं देवल आग्नेयीं त्रिष्टुभं विराड्रूपा यजुरन्तामग्नेः प्रियं यजुः सꣳस्रवभागाः सोमसूक्ष्मौ वैश्वदेवीं त्रिष्टुभं यजुरन्ताꣳस्वाहा वाड्यजुर्घृताची स्रुचौ यज्ञनमः शूर्पं यवमान्कृपेरुद्रालवान्धानान्तर्वानिति पञ्चाद्यर्षेयो यज्ञो देवताग्नेदब्धा गार्हपत्योऽग्नये दक्षिणाग्निः सरस्वत्यै लिङ्गोक्तं वेदोसि वेदो देवा मनसस्पतिर्वातदेवत्या विराजꣳसंबर्हिर्लिङ्गोक्ता त्रिष्टुब्विराड्रूपा कस्त्वा प्राजापत्यꣳ रक्षसाꣳराक्षसम् ॥ ७ ॥ अथ याजमानꣳसंवर्चसा त्वाष्ट्री त्रिष्टुब्दिविविष्णुस्त्रीणि वैष्णवान्यस्माद्भागोऽस्यै भूमिरगन्म देवꣳ संज्योतिषाहवनीयः स्वयंभूः सूर्यस्य सौरे अग्ने गृहपतेगार्हपत्यः सूर्यस्य सौरमग्न इदमाग्नेये ॥ ८ ॥ पितृयज्ञः प्रजापतेरार्षमग्नये सोमाय द्वेदैवे स्वाहाकारयश्रुतेरपहता असुरं ये रूपाणि कव्यवाहनोऽग्निस्त्रिष्टुबत्रामीमदन्त पित्र्यै नमो वः षड्लिङ्गोक्तानि परे पित्र्ये आधत्त पित्र्या गायत्र्यूर्जमापि विराट् ॥ ९ ॥ इति० संहितायां द्वितीयोऽध्यायः ॥ २ ॥

अग्न्याधेयं प्रजापतेरार्षं देवानामग्नेर्गन्धर्वाणां वा समिधाग्नेयश्चतस्रो गायत्र्यः समिधाविरूप आङ्गिरसः सुसमिद्धाय वसुश्रुतस्त्वं त्वा भरद्वाजो भूर्भुवःस्वस्तिस्रो महाव्याहृतयोऽग्नि-

वायुसूर्यदेवत्याः क्रमेण द्यौरिव यजमानाशीर्लिङ्गोक्तदेवतायं गौः सार्पराज्ञ्यस्तृचो गायत्रोऽग्निः परावररूपेण देवता ॥१०॥ अग्निहोत्रं प्रजापतेरार्षमग्निर्ज्योतिः सप्त लिङ्गोक्तदेवता गायत्र्य आद्याः पञ्चैकपदा अग्निर्वर्चोद्वे तक्षापश्यत्परा जीवलश्चैलकिः ॥ ११ ॥ यजमानाद्युपस्थानं बृहद्देवानामार्षं उपप्रयन्त इत्यनुवाक आद्ये द्वे आग्नेय्यौ गायत्र्यावुपवत्या गोतमो राहूगणो मूर्धन्वत्या विरूप उभा वां भरद्वाज ऐन्द्राग्नीं त्रिष्टुभमयं ते देवश्रवा देववातश्च भारतावाग्नेयीमनुष्टुभमयमिह वामदेवो जगतीमस्य प्रत्नामवत्सारो गव्या वाग्नेयी वा पयोदेवत्या वा गायत्रीं तनूपा आग्नेयानीन्धाना आग्नेयीं महापङ्क्तिस्त्र्यवसाना ॥ १२ ॥ चित्रावसोरात्रिदेवत्यमृषयोऽपश्यन्त्संत्वमाग्नेयमन्धस्थ रेवतीः सꣳहितेति त्रीणि गव्यान्युपत्वाग्नेयं तृचं गायत्रं मधुच्छन्दा वैश्वामित्रोऽग्ने त्वं चतस्रो द्विपदा आग्नेयीर्बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुरेकैकश इडे काम्या गव्ये सोमानं ब्राह्मणस्पत्यं तृचं गायत्रं ब्रह्मणस्पतिर्मेधातिथिर्वा महित्रीणाꣳ सत्यधृतिर्वारुणिरादित्यदैवतं तृचं गायत्रं पथि स्वस्त्ययनं कदाचनैन्द्रीं पथ्याबृहतीं मधुच्छन्दास्तत्सवितुर्विश्वामित्रः सावित्रीं गायत्री परिते वामदेव आग्नेयीमनिरुक्तां गायत्रीम् ॥ १३ ॥ क्षुल्लकोपस्थानमासुरेरार्षं भूर्भुवः स्वः प्रवत्स्यदुपस्थानमागतोपस्थानं चादित्यस्यार्षं नर्यगार्हपत्यः शꣳस्याहवनीयोऽथर्वदक्षिणाग्निरागन्माहवनीयोऽनुष्टुबयमग्निर्न्यङ्कुसारिणीबृहती गार्हपत्योऽयमग्निरन्वाहार्यपचनोऽनुष्टुब्गृहामा त्रिष्टुब्विराड्रूपा येषामानुष्टुबुपहूता महापङ्क्तिस्त्र्यवसानास्तिस्रोपि वास्तवीः शंयुर्बार्हस्पत्यः ॥ १४ ॥ चातुर्मास्यानि प्रजापतेरार्षं प्रवासिनो मारुती गायत्री यद्ग्राममारुत्यनुष्टुबनिरुक्ता मोषूणोऽगस्त्य ऐन्द्रामारुतीं विराजमक्रं न निरुक्ताग्नेय्यनुष्टु बवभृथ यज्ञदैवतं पूर्णादर्वि द्वे और्णवाभ ऐन्द्र्यावनुष्टुभावक्षं द्वे गोतम ऐन्द्र्यौ पङ्क्ती मनोनुमानसं तृचं बन्धुर्गायत्रं वयꣳ सौमीं गायत्रीं बन्धुरेष ते द्वे रौद्रे अवरुद्रꣳ रौद्र्यावेकापङ्क्तिरपरा ककुप् त्र्यम्बकं द्वे अनुष्टुभौ पूर्वस्या वसिष्ठ आस्तारपङ्क्तिस्त्र्यायुषं नारायण उष्णिहं यजमानाशीः शिवोनाम क्षौरं निवर्तयामि लिङ्गोक्तदैवतमाशीःप्रायम् ॥ १५ ॥ इति० संहितायां तृतीयोऽध्यायः ॥ ३ ॥

अग्निष्टोमः प्रजापतेरार्षमेदं द्वे अत्यष्टी त्र्यवसाने आद्यावर्धर्चौ देवयजनदेवत्याविमा आप ओषधे कुशतरुणꣳ स्वधिते क्षौरमापो अस्नानापं दीक्षातपसोर्वासो महीनां नवनीतं वृत्रस्याजनं चित्पतिर्द्वे प्राजापत्ये देवो मा सावित्रमावोदैव्यनुष्टुबाशीःस्वाहायज्ञं चतुर्णां यज्ञ आकूत्यै चतुर्णामौद्ग्रभणानामग्निरापोदेवीर्लिङ्गोक्तदेवता विराट् ॥ १६ ॥ विश्वो देवस्य स्वस्त्यात्रेयः सावित्रीमनुष्टुभमृक्सामयोः कृष्णाजिने शर्मासि कृष्णाजिनमूर्गस्याङ्गिरोभिर्दृष्टं मैखलꣳसोमस्य नीविर्विष्णोर्वास इन्द्रस्य सुसस्याः कृष्णविषाणोच्छ्रयस्व दण्डो वतं यज्ञो दैवीं धीर्येदेवा वाक्प्राणोदानौ चक्षुःश्रोत्रमध्यात्ममग्निर्मित्रावरुणावादित्यो विश्वेदेवा अधिदैवतꣳ श्वात्रा आपो जगतीयं ते लोष्टमपो मूत्रं पृथिव्या लोष्टमग्ने त्वमाग्नेय्यनुष्टुप्पुनर्मन आग्नेयं त्वमग्ने वत्स आग्नेयीं गायत्रीꣳ रास्वेयत्सौम्यमेषा ते हिरण्याज्यदैवतं जूरसि वाग्देवतꣳ शुक्रमसि हिरण्यं चिदसि गौः सोमक्रयणी वाग्रूपाध्यारोपकल्पनया ॥ १७ ॥ वस्व्यस्यनुष्टुब्बृहती सोमक्रयण्याः स्तुतिरदित्या आज्यमस्मे षण्णां लिङ्गोक्ता देवताः समख्ये पत्न्याशीरास्तारपङ्क्तिरेष ते लिङ्गोक्तदेवतमास्नाकोऽसि सौम्यमभित्यꣳ सावित्र्यष्टिः प्रजाभ्यस्त्वा प्रजास्त्वा शुक्रं त्वा सौम्यानि सग्मेऽस्मे लिङ्गोक्ते तपसोर्धजार्धे सोमो मित्रो न इन्द्रस्य सौम्ये स्वानादीनि धिष्ण्यानामानि परिमाग्नेयी पुरस्ताद्बृहती प्रतिपन्थामनुष्टुप्पथिदेवत्यादित्याः कृष्णाजिनमदित्यै सौम्यमस्तभ्नात्रिष्टुभौ वारुण्यौ सूर्यस्यानुष्टुप् कृष्णाजिनमुस्रावूर्ध्वबृहत्यानडुही भद्रो मे सौम्यं नमो मित्रस्याभितपनः सूर्यः सौरीं जगतीं वरुणस्य पञ्च वारुणानि या ते सौमीं त्रिष्टुभं गौतमः ॥१८॥ इति० संहितायां चतुर्थोऽध्यायः ॥४॥

अग्नेस्तनूरसि पञ्च वैष्णवान्यग्नेः शकलं वृषणा दर्भतरुणैके उर्वश्यसि त्रयाणां लिङ्गोक्ता देवता गायत्रेण त्रीण्याग्नेयानि भवतं नः पङ्क्तीरग्नावग्निर्विराडेतयोर्निर्मथ्याहवनीयावग्नी देवते आपतये वायव्यमनाधृष्टमाज्यमग्नेव्रतपा आग्नेयमꣳशूरꣳशुः प्रकृतिश्चतुरवसाना सौम्यन्त्योर्धर्चौ लिङ्गोक्तदैवतो याते त्रीण्याग्नेयानि तप्तायनी चत्वारि पार्थिवानि विदेदाग्नेयमग्ने अङ्गिरोऽस्याभनुत्वा लिङ्गोक्तानि सिꣳह्यसि त्रयाणां वेदिरिन्द्रघोषश्चतुर्णामुत्तरवेदिरिदमहमापꣳ सिꣳह्यसि पञ्चानां वाग्भूतेभ्यः स्रुग्ध्रुवोऽसि परिधयस्त्रयाणामग्नेः संभारा गुल्गुल्वादयः ॥ १९ ॥ युञ्जते श्यावाश्वः सावित्रीं जगतीमिदं विष्णुर्मेधातिथिर्वैष्णवीं गायत्रीमिरावती वसिष्ठस्त्रिष्टुभं देवश्रुतावक्षधुरौ प्राचीस्वं गोष्ठमत्र हविर्धाने विष्णोर्नु तिस्रो वैष्णव्यस्त्रिष्टुभ आद्ये द्वे यजुरन्ते विष्णोर्नु प्रदीर्घतमा औतथ्यो विष्णोररराटं पञ्च वैष्णवान्यादेदेऽभ्रिरिदमहꣳरक्षोघ्नं बृहत्यौ पर्वाणीदमहं पञ्च लिङ्गोक्तानि स्वराडस्यौपर्वाणि चत्वारि रक्षोहणो वः सप्त वैष्णवानि यवोऽसि यवो दिवेत्वौदुम्बरी शुन्धन्तां पित्र्ये उद्दिवं पञ्चानामौदुम्बरी घृतेन द्यावापृथिव्यमिन्द्रस्यैन्द्रं परि त्वा मधुच्छन्दा अनिरुक्तामैन्द्रीमनुष्टुभमिन्द्रस्यैन्द्राणि त्रीणि चतुर्थं वैश्वदेवम् ॥ २० ॥ विभूरस्यष्टानां धिष्ण्या अग्नयः सम्राडाहवनीयः परिषद्यो बहिष्पवमानदेशो नभोऽसि चात्वालो मृष्टोऽसि शामित्र ऋतधामौदुम्बरी समुद्रोऽसि ब्रह्मासनमजोऽसि शालाद्वार्योऽहिरसि प्राजहितो वागसि सद ऋतस्य द्वार्ये अध्वनाꣳ सूर्यो मित्रस्यर्त्विजोऽग्नयो धिष्ण्याः ॥ २१ ॥ ज्योतिरसि वैश्वदेवं त्वꣳ सोमक्रतुर्भार्गवः सौमीं गायत्रीमनवसानां जुषाणो अप्तुर्दे वत्यैकपदा विराड्यजुरन्ताग्नेनयाऽगस्त्य आग्नेयीं त्रिष्टुभमयं-

नस्त्रिष्टुब्यजुरन्ताग्नेय्युरुविष्णो वैष्णव्यनुष्टुब्यजुरन्ता देवस-
वितः सावित्रमेतत्त्वꣳ सौम्यꣳ स्वाहा निर्लिङ्गोक्तदेवतामग्ने
व्रतपा आग्नेयमत्यन्यान्वनस्पतिरोषधे कुशतरुणꣳ स्वधिते
परशुर्द्यां मातस्त्वं वनस्पतिः ॥ २२ ॥ इति० संहितायां प-
ञ्चमोऽध्यायः ॥ ५ ॥

अग्रेणीः शकलं देवस्त्वा यूपः सुपिप्पलाभ्यश्च बालंद्या-
मग्रेण यूपो याते दीर्घतमा यूपदेवत्या त्रिष्टुभं ब्रह्म दꣳह
यूपदेवत्ये विष्णोः कर्माणि द्वे मेधातिथिर्वैष्णव्यौ गायत्र्यौ
परिवीर्यूपो दिवस्त्वरुरेप ते यूप उपावीस्तृणमुपदेवा लिङ्गो-
क्तमृतस्य त्वा पशुरग्नीषोमाभ्यां लिङ्गोक्तमद्भ्योऽपां पशुरापो-
देवीरापꣳसं ते पशुर्घृतेन स्वरुशासौ रेवती वाग्वर्पौ तृणꣳ
स्वाहा दैवे ॥ २३ ॥ माहिर्भूरज्जुर्नमस्ते यज्ञो देवीरापोर्ध-
मापमर्धमाशीर्वाचं ते मनस्ते पशुशं लिङ्गोक्तमोषधे तृणꣳ
स्वधितेऽसी रक्षसां लिङ्गोक्तं निरस्तमिदमहꣳ रक्षोहणी
घृतेन द्यावापृथिव्यं वायो वायव्यमग्निराज्यस्याग्नेयꣳ स्वा-
हाकृते वपाश्रपण्याविदमाप आपी महापङ्क्तिस्त्र्यवसाना
पावमानश्चान्त्यः पादः संते हृदयꣳ रेडसि वसाग्रयुतं
लिङ्गोक्तं घृतं वैश्वदेवं दिशः पञ्चदिश्यान्यैन्द्रः प्राणः
पश्वङ्गः प्राणदानं लिङ्गोक्तं देवत्वाष्ट्री त्रिष्टुप् ॥ २४ ॥
समुद्रं लिङ्गोक्तानि द्वादश दिवं ते स्वरुर्मापो हृदयशूलं
धाम्नो वारुणं यदाहुर्वारुणी गायत्र्यनवसाना सुमित्रिया न
आपꣳ हविष्मतीर्लिङ्गोक्तदेवतानुष्टुबग्नेर्वैश्वत्वार्यापां न्यमूरापीं
गायत्रीं मेधातिथिर्हृदे त्वा सौम्यनुष्टुप् सोमराजन्सौम्ये
श्रृणोतु लिङ्गोक्तदेवता त्रिष्टुब्देवीराप आपी पङ्क्तिः कार्षि-
राज्यमनुष्टुप्समुद्रस्य समाप आपो यमग्ने मधुच्छन्दा आग्नेयीं
गायत्रीमाददे ग्रावा निग्राभ्या आपमिन्द्राय त्वा पञ्च सौ-
म्यानि यत्ते सौमी विपरीता बृहती श्वात्राः पथ्याबृहती
माभेः सौम्यमर्धं द्यावापृथिव्यमर्धं प्रागपाक्सौम्युष्णिक् त्व-
मङ्ग गोतम ऐन्द्रीं पथ्याबृहतीम् ॥ २५ ॥ इति० संहि-
तायां षष्ठोऽध्यायः ॥ ६ ॥

वाचस्पतये प्राणदेवत्या विराट् मधुमतीर्लिङ्गोक्तं यत्ते
सौम्यꣳस्वाहोरुयजुषी लिङ्गोक्ते स्वांकृतोस्युपाꣳशुर्देवे-
भ्यस्त्वा दैवं देवाꣳशो लिङ्गोक्तमाभिचारिकं प्राणायाग्रहो
व्यानाय उपाꣳशुसवन उपयामगृहीतोस्यन्तरैन्द्रमन्तस्ते म-
घवदेवत्या त्रिष्टुबुदानाय ग्रह आवायो वसिष्ठो वायव्यां त्रि-
ष्टुभमिन्द्रवायू मधुच्छन्दा ऐन्द्रवायवीं गायत्रीमयं वा गृत्स-
मदो मैत्रावरुणीꣳ रायावयं त्रसदस्युस्त्रिष्टुभं यावां मेधाति-
थिराश्विनीं गायत्रीं तं प्रत्नथावत्सारः काश्यपो वैश्वदेवीं जग-
तीमच्छिन्नस्य सौम्यꣳ साप्रथमैन्द्री त्रिष्टुप्तृपं त्वयाऽग्नी लि-
ङ्गोक्ते ॥ २६ ॥ अयं वेनो वेनस्य त्रिष्टुप् सोमस्तुतिरधिदै-
वतमधियज्ञं च मनोन त्रिष्टुप्सोमस्तुतिरधियज्ञानुवादिन्यप-
मृष्टः शण्डोऽपमृष्टो मर्क आभिचारिके देवास्त्वा शुक्रामन्थि-
नावनाधृष्टासि दक्षिणोत्तरवेदिश्रोण्यौ सुवीरः सुप्रजाः शुक्रा-
मन्थिनौ निरस्तो द्वे आभिचारिके शुक्रस्य मन्थिनः शकलं ये
देवासः परुच्छेपो वैश्वदेवीं त्रिष्टुभमाग्रयणोसि लिङ्गोक्तदेव-
तम् ॥ २७ ॥ सोमः पवते वैश्वदेवमिन्द्राय त्वा पञ्च लिङ्गो-
क्तानि मूर्धानं भरद्वाजो वैश्वानरीं त्रिष्टुभं ध्रुवोसि ध्रुवो ध्रुवं
ध्रुवेण बृहती पूर्वोऽर्धर्चो ध्रौव उत्तर ऐन्द्रो यस्ते देवश्रवाः
सौमीं त्रिष्टुभं यजुरन्ता देवानां चात्वालदैवतं प्राणाय मे
लिङ्गोक्तदेवतान्येकादश कोऽसि प्राजापत्योष्णिग्वर्धमाना म-
घवे त्वा लिङ्गोक्तदेवतानि त्रयोदश ॥ २८ ॥ इन्द्राग्नीं वि-
श्वामित्र ऐन्द्राग्नी गायत्रीमाघात्रिशोक आग्नेन्द्रीमोमासो मधु-
च्छन्दा वैश्वदेवीं विश्वेदेवासो गृत्समद इन्द्रमरुत्वश्चतस्रो
विश्वामित्र ऐन्द्रामारुतीस्त्रिष्टुभो मरुतात्वा यजुर्मरुत्वतीयं
महाँइन्द्रो भरद्वाजो माहेन्द्री त्रिष्टुभमोजसा वत्सो गाय-
त्रीमुदुत्यं प्रस्कण्वः सौरीं गायत्री चित्रं कुत्स आङ्गिरसस्त्रि-
ष्टुभꣳरूपेण वो दक्षिणाश्चतुर्णां ब्राह्मणमद्य लिङ्गोक्तदेवता-
न्यष्टौ ॥ २९ ॥ इति० संहितायां सप्तमोऽध्यायः ॥ ७ ॥

विष्णो वैष्णवं कदाचनादित्यदेवत्ये बृहत्यौ यज्ञो देवानां
कुत्सस्त्रिष्टुभं विवस्वन्यजुः श्रदस्मै जगत्याशीर्वाममद्य भर-
द्वाजो बार्हस्पत्यः सावित्रीं त्रिष्टुभꣳ सावित्रोऽसि सावित्रꣳ
सुशर्मासि वैश्वदेवं बृहस्पतिसुतस्य लिङ्गोक्तमहं प्रजापतिरू-
पेणात्मादेवतात्रिष्टुबग्नाँ ३ इ पत्नीवन्नाग्नेयं प्रजापतिः प्राजा-
पत्यꣳहरिरस्यृक्सामे हर्योर्यस्ते लिङ्गोक्ते देवकृतस्याग्नेयानि
षट् ॥ ३० ॥ समिन्द्रात्रिर्वैश्वदेवीं त्रिष्टुभं धाता लिङ्गोक्तब-
हुदेवत्या सुगावो देवीयाँ २ आवहो वयमाग्नेय्यौ यज्ञायज्ञ-
मेष ते लिङ्गोक्ते यजुषी उरुꣳहि शुनःशेपो वारुणीं त्रिष्टुभं
नमो वारुणमग्नेरनीकमाग्नेयी त्रिष्टुप् समुद्रे ते सौमी विराड्
देवीरापः पङ्क्तिर्बृहती वा पूर्वोऽर्धर्च आप उत्तरः सौम्यो देवा-
नामाग्नेयमेजतु त्र्यवसाना महापङ्क्तिर्यस्यै ते वशा पुरुदस्मो-
गर्भो मरुतो यस्य गोतमो मारुतीं गायत्रीं महीद्यौर्मेधाति-
थिर्द्यावापृथिव्यामित्यग्निष्टोमः ॥ ३१ ॥ अथ षोडश्यातिष्ठ
गोतम ऐन्द्रीमनुष्टुभं युक्ष्वाहि मधुच्छन्दा इन्द्रमिद्गोतमो
यस्मान्नैन्द्री त्रिष्टुप्परब्रह्मरूपेण षोडशिनस्तुरिन्द्रश्चैन्द्रावारुणी
षोडशिदेवत्या वा यजुरन्ताग्नेपवस्व वैखानस आग्नेयीं गाय-
त्रीमुत्तिष्ठन्कुरुस्तुतिरैन्द्रीमदृश्रं प्रस्कण्वः सौरीं तिस्रोऽपि य-
जुरन्ता उदुत्यं देवानामार्षमाजिघ्रेडे कुसुरुबिन्दुर्गव्ये म-
हापङ्क्तिप्रस्तारपङ्क्ती विनः शासो भारद्वाज ऐन्द्रीमनुष्टुभं वा-
चस्पतिं वैश्वकर्मणीं त्रिष्टुभं विश्वकर्मन्नैन्द्री वैश्वकर्मण्यग्नये
त्वा देवार्षाण्यदाभ्यदेवत्यानि ब्रेशीनां त्वा सौम्यानि ॥ ३२ ॥
सत्रोत्थानं देवानामार्षमिह रतिः पशुदैवतमुपसृजन्नुष्णिगा-
ग्नेयी सत्रस्य बृहती यजमानानामात्मस्तुतिर्युवन्तं परुच्छेप
ऐन्द्रीमत्यष्टिं त्र्यवसानामाद्योऽर्धर्च ऐन्द्रापार्वतः परमेष्ठी नैमि-
त्तिकान्याध्यायाद्वसिष्ठस्यार्षं लिङ्गोक्तदेवतानि चतुस्त्रिꣳशद्य-
योर्वैष्णववारुणीं त्रिष्टुब्देवा दिवमाशीर्लिङ्गोक्तदेवताश्चतुस्त्रिꣳ-
शद्वर्मदेवत्या पङ्क्तिस्त्रिष्टुब्वा यज्ञस्य यज्ञदेवत्या त्रिष्टुबापवस्व

सौमीं गायत्रीं नैध्रुविः कश्यपः ॥ ३३ ॥ इति० संहितायामष्टमोऽध्यायः ॥ ८ ॥

अथ वाजपेयो बृहस्पतेरार्षमिन्द्रस्य च देवसवितः सावित्री त्रिष्टुप् ध्रुवसदमैन्द्राणि त्रीण्यपाꣳरसदेवत्यानुष्टुब् ग्रहा लिङ्गोक्तदेवतानुष्टुप्संपृचौ यजुषीन्द्रस्य रथो वाजस्य पार्थिव्यतिजगत्यन्त्यः पादः सावित्रोऽप्स्वन्तरश्वदेवत्यानवसाना पुरउष्णिग्वातो वा तिस्रोऽश्वस्तुतय उष्णिक्त्रिष्टुब्जगत्यो वाजिनोऽश्वा देवस्याहं लिङ्गोक्तानि वाजिनोऽश्वा एषस्य द्वे दधिक्रावा वामदेव्योक्तदेवत्ये जगत्यौ शंनो वसिष्ठो विराजं तेनो नाभानेदिष्ठो जगतीं वाजेवाजे वसिष्ठस्त्रिष्टुभमामा प्राजापत्यां वाजिनोक्ताः ॥ ३४ ॥ आपय आयुर्यज्ञेन प्राजापत्यानि प्रजापतेः स्वरमृता यजमानोस्मे दिशो नमः पृथिवीयमासंदीयं तासुन्वन्वाजस्य प्राजापत्यं तृचं त्रैष्टुभꣳ सोमं तृचं तापस आद्या वैश्वदेव्यनिरुक्तानुष्टुब्द्वितीया लिङ्गोक्तदेवता तृतीयाग्नेयी प्रनो लिङ्गोक्ता गायत्री सरस्वत्यै सुन्वन्नग्निः सप्तदश लिङ्गोक्तदेवतानि ॥ ३५ ॥ अथ राजसूयो वरुणस्यार्षमेष ते पार्थिवमग्निनेत्रेभ्यो देवार्षाण्याध्यायादशाद्यानि दैवान्यग्ने सहस्व देवश्रवा देववातश्च भारतावाग्नेयीसनुष्टुभसुपाꣳशोस्त्रीणि रक्षोघ्नानि सविता द्वे यजमानः ॥ ३६ ॥ इति० संहितायां नवमोऽध्यायः ॥ ९ ॥

अपोदेवा आपस्त्रिष्टुप् वृष्ण ऊर्मिर्लिङ्गोक्तानि मधुसतीरनाधृष्टा आपः सामस्य चर्माग्नये लिङ्गोक्तान्यनिभृष्टमापसधमादो वारुणी त्रिष्टुप् क्षरस्य चतुर्णां तार्प्यपाण्ड्वाधीवासोष्णीषाणीन्द्रस्य धनुर्मित्रस्य बाहू त्वयायं धनुर्देवातिसृणामिषव आविः प्रजापत्यं पराणि लिङ्गोक्तानि ॥ ३७ ॥ अवेष्टा मृत्युनाशनं प्राचीं पञ्चानां यजमानः प्रत्यस्तमासुरं मृत्योरोजोऽसि रुक्मो हिरण्यरूपौ मैत्रावारुणी त्रिष्टुब्यजुरन्ता सोमस्य सुन्वन्प्रपर्वतस्यापी त्रिष्टुब् विष्णोस्त्रीणि लिङ्गोक्तानि सुन्वन्प्रजापतेन प्राजापत्या त्रिष्टुब्यजुर्मध्योयमसुष्यजू रुद्रयद्रौद्रम् ॥ ३८ ॥ इन्द्रस्य लिङ्गोक्तानि मा ते संवरणः प्राजापत्य ऐन्द्रीं त्रिष्टुभमग्नये लिङ्गोक्तानि पृथिवि मातर्भूमिर्हꣳसो वामदेवः सौरीꣳ सप्रपञ्चपरब्रह्माभिधायिनीमतिजगतीमियच्छतमानावूर्गसि शाखेन्द्रस्य बाहू स्योनास्यासंदी क्षत्रस्याधीवासꣳ स्योनाꣳ सुन्वन्निषसाद शुनःशेपो वारुणीं गायत्रीमभिभूरस्यक्षा यजमानो वा ब्रह्मꣳस्त्वमामन्त्रणानि पञ्च लिङ्गोक्तानीन्द्रस्य स्फ्योऽग्निः पृथुराग्नेयꣳस्वाहाकृता अक्षाः सवित्रा लिङ्गोक्तदैवतम् ॥ ३९ ॥ अथ चरकसौत्रामण्यश्विनोरार्षमश्विभ्यां त्रीणि लिङ्गोक्तानि वायुः सौमी गायत्री कुवित्तृचꣳ सुकीर्तिः काक्षीवत आद्या सौम्यनिरुक्ता त्रिष्टुब्युवमनुष्टुप् पुत्रमिव त्रिष्टुबश्विसरस्वतीन्द्रदेवत्ये अश्विसरस्वतीन्द्रदेवत्ये ॥ ४० ॥ इति० संहितायां दशमोऽध्यायः ॥ १० ॥

इति सर्वानुक्रमणिकायां प्रथमोऽध्यायः ॥ १ ॥

अथाग्निं प्रजापतिरपश्यत्साध्या वापश्यन्त्सोऽग्निः पञ्चचितिकः प्रथमा चितिः प्रजापतेर्द्वितीया देवानां तृतीयेन्द्राग्न्योर्विश्वकर्मणश्चतुर्थ्यृषीणां पञ्चमी परमेष्ठिनोऽथ प्रतिकर्मदर्शिनो युञ्जानोष्टौ सावित्राणि सवितापश्यदाद्या तृतीया चानुष्टुप् चतुर्थीषष्ठ्यौ जगत्यौ द्वितीया गायत्री पञ्चमी त्रिष्टुबिमं नो यजुरन्ता गायत्र्यनवसानाददेऽभ्रिर्हस्तेऽनुष्टुब्यजुरन्ता ॥ १ ॥ प्रतूर्तं नाभानेदिष्ठ आश्वीमास्तारपङ्क्तिर्युञ्जाथां कुश्रिर्गार्दभीं गायत्रीं योगेयोगे शुनःशेप आर्जीं प्रतूर्वंस्त्रिष्टुब्विराड्रूपा यजुर्गर्भोरुयजुः पृथिव्यास्त्रीण्याग्नेयान्यन्वग्निराग्नेयीं त्रिष्टुभं पुरोधस आगत्य मयोभुव आश्वीनमनुष्टुभमाक्रम्यानुष्टुप् द्यौस्ते बृहत्युत्क्राम विराडुदक्रमीत्त्रिष्टुबात्वा द्वे गृत्समद आग्नेय्यौ परिसोमको गायत्रीं परित्वा पायुरानुष्टुभं त्वमग्ने गृत्समदो जगतीम् ॥ २ ॥ पृथिव्या आग्नेयमपां पुष्करपर्णꣳ स्वराद्दङ्क्तिः शर्म द्वे अनुष्टुभौ कृष्णाजिनपुष्करपर्णे पुरीष्योऽग्निस्त्वामग्ने तृचं भारद्वाज आग्नेयं गायत्रꣳ सीदहोतर्देवश्रवा देववातश्च त्रिष्टुभं निहोता गृत्समदः सꣳसीदस्व प्रस्कण्वो बृहतीम् ॥ ३ ॥ अपोदेवीः सिन्धुद्वीप आर्पीं न्यङ्कुसारिणीꣳसंते त्रिष्टुप्पार्थिवोऽर्धो वायव्योऽर्धः सुजातोऽनुष्टुबाग्नेय्युदुतिष्ठ विश्वमनाः पथ्याबृहतीमूर्ध्वः कण्व उपरिष्टाद्बृहतीꣳ सजातस्त्रितस्त्रिष्टुभꣳ स्थिरो रासभेय्यनुष्टुबुष्णिग्वा शिवोभवाजी पथ्याबृहती प्रैतु लिङ्गोक्तमहापङ्क्तिरुग्यवसानाग्नेगायत्र्येकपदाग्नेय्यं तमग्निमाग्नेये ओषधयस्त्रिष्टुबनुष्टुभावोषधिदेवत्ये व्यस्यन्नाग्नेयोऽर्धर्चो विपाजसोत्कीलः कात्य आग्नेयीं त्रिष्टुभम् ॥ ४ ॥ आपो ह्यापꣳ सिन्धुद्वीपस्तृचं गायत्रं मित्र उपरिष्टाद्बृहती मैत्री रुद्रा अनुष्टुब् रौद्री सꣳसृष्टां द्वे सिनीवालीदेवत्ये उखामादित्या मखस्य मृत्पिण्डो वसवस्त्वा लिङ्गोक्तानि सर्वत्रादित्यै रास्नादितिरौषं कृत्वायादित्योष्णिगदितिरावटं देवानां पञ्चोखानि मित्रस्य विश्वामित्रो मैत्रीं देवस्त्वा सावित्री बृहत्युत्थाय पूर्वोर्धर्चं औप उत्तरो मैत्रः ॥ ५ ॥ आकूतिं लिङ्गोक्तान्यौद्भणानि मास्वौख्यौ गायत्रीत्रिष्टुभावग्निश्च पाद आग्नेयो द्वंनः सोमाहुतिराग्नेयीं गायत्रीं परस्या विरूप आङ्गिरसः परमस्या आरुणिरनुष्टुभं यदग्ने द्वे जमदग्निरहरहर्नाभानेदिष्ठस्त्रिष्टुभौ याः सेना अनुष्टुभः सर्वा आग्नेय्योऽन्त्योपरिष्टाद्बृहती ॥ इति० संहितायां एकादशोऽध्यायः ॥ ११ ॥

दृशानो वत्सप्री त्रिष्टुभꣳ रौक्मीं नक्तोषासा कुत्स आग्नेयीं विश्वा श्यावाश्वः सावित्रीं जगतीꣳ सुपर्णः कृतिश्चतुरवसाना गारुत्मती विषघ्नी विष्णोर्लिङ्गोक्ता न्यक्रन्दद्वत्सप्रीराग्नेयीं त्रिष्टुभमग्न ऊर्ध्वबृहती पुनर्गायत्र्यावात्वाध्रुवोऽनुष्टुभमुदुत्तमꣳ शुनःशेपो वारुणीं त्रिष्टुभमग्रे त्रित आग्नेयीꣳ हꣳस उक्ता जगतीह यजुरन्तान्ते बृहद्यजुः सीदत्वमाग्नेयी त्रिष्टुभमन्तरग्नेऽनुष्टुभौ ॥ ७ ॥ दिवस्पर्याग्नेयं त्रैष्टुभं द्वादशर्चं वत्सप्रीर्भालन्दनः समिधाग्निं विरूपाक्ष आङ्गिरस आग्नेयं

गायत्रमुदुत्वा तापसोऽनुष्टुभं प्रेदनुष्टुप्प्रप्रायमाग्नेयीं वसिष्ठस्य त्रिष्टुभमापोदेवीराप्यप्स्वग्ने विरूप आग्नेयीं गायत्री गर्भो असि तिस्रोऽनुष्टुभो बोधा मे दीर्घतमास्त्रिष्टुभꣳ सबोधि सोमाहुतिराग्नेयीं यजुरन्ता गायत्री यजुर्वैश्वकर्मणं पुनस्त्वा त्रिष्टुबाग्नेयी ॥ ८ ॥ अपेत लिङ्गोक्तबहुदेवत्या संज्ञानमूपदैवत्यमग्नेः सिकताश्रितः परिश्रितोऽयꣳसः पञ्चर्चमाग्नेयं त्रैष्टुभं विश्वामित्रश्चतुर्थ्यनुष्टुबयं तेऽनुष्टुप्चिदैष्टके लोकं लिङ्गोक्तानुष्टुप् ता अस्यापीन्द्रियमेध ऐन्द्र इन्द्रं जेतामाधुच्छन्दस ऐन्द्रीꣳ समितंचतस्रो ब्यग्निदेवत्या उष्णिगुपरिष्टाद्बृहत्युष्णिक्पङ्क्त्यो मातेवोस्वास्तुतिस्त्रिष्टुप् ॥ ९ ॥ असुन्वन्तं नैर्ऋतं तृचं त्रैष्टुभं यं ते यजमानदेवत्या नमोविराड्भूतिदेवत्येकपदा निवेशन आग्नेयीं त्रिष्टुभं विश्वावसुर्देवगन्धर्वः सीरा द्वे सीरदेवत्ये बुधः सौम्यो गायत्रीत्रिष्टुभौ शुनं चतस्रः सीतादेवत्याः कुमारहरितो द्वे त्रिष्टुभौ तृतीयापङ्क्तिश्चतुर्थ्यनुष्टुब्विमुच्यध्वमानडुही गायत्री सजूर्लिङ्गोक्तदेवतम् ॥ १० ॥ या ओषधीः सप्तविꣳशतिरनुष्टुभ ओषधिस्तुतिमाथर्वणो भिषञ्जुञ्जन्तु बन्धुर्द्वादशानारभ्याधीतामामाहिरण्यगर्भः कार्यां त्रिष्टुभमभ्यावर्तस्वोष्णिगाग्नेय्यग्नेयद्गायत्रीयं त्रिष्टुबग्नेतव पावकोऽग्निराग्नेयꣳषड्चं प्रथमे विष्टारपङ्क्ती तिस्रः सतोबृहत्य उपरिष्टाज्ज्योतिः षष्ठ्याप्यायस्वगोतमः सोमो गायत्री त्रिष्टुबुष्णिह आतेऽवत्सारस्तुभ्यंता द्वे विरूपस्तिस्रो गायत्र्य आग्नेय्यः ॥ ११ ॥ इति॰ संहितायां द्वादशोऽध्यायः ॥ १२ ॥

मयिककुबाग्नेयी ब्रह्मादित्यदेवत्या त्रिष्टुब्भिरण्यगर्भः कार्यां त्रिष्टुभं द्रप्सो देवश्रवा आदित्यो नमोस्तु सार्पं तृचमानुष्टुभं कृणुष्वपञ्चप्रतिसरा राक्षोघ्ना देवानामार्षꣳ सर्वास्त्रिष्टुभ आग्नेयीर्वामदेवश्चापश्यदग्नेष्वा यजुराग्नेयमिन्द्रस्यैन्द्रं भुवस्त्रिशिरा आग्नेयीं त्रिष्टुभम् ॥ १२ ॥ ध्रुवास्यूर्ध्वबृहती प्रजापतिरनुष्टुप् भूरसि प्रस्तारपङ्क्तिरसाꣳ स्वयमातृण्णादेवता विश्वस्मा इत्येतस्य च यजुषः काण्डात्काण्डादानुष्टुभं ब्यृचमग्निना दृष्टं दूर्वेष्टुकादैवतं यास्त आग्नेयं ब्यृचमानुष्टुभमिन्द्राग्निभ्यां दृष्टं विराडयं लोकः स्वराडसौ लोकः प्रजापतिष्वा विश्वज्योतिषं मधुश्चर्तुदैवतमषाढासि सवितापश्यद्देवावापश्यन्निष्टकादैवतम् ॥ १३ ॥ मधुवाता वैश्वदेवं तृचं गायत्रं गोतमोपां गम्भन्पङ्क्तिस्त्रीन्त्समुद्रांस्त्रिष्टुप्कौर्म्यं ब्यृचं ध्रुवासि त्रिष्टुबिषे बृहत्यौरवं ब्यृचमग्ने युक्ष्वाग्नेयं ब्यृचं गायत्रमाद्यायां भरद्वाजो द्वितीयस्यां विरूपः सम्यक्त्रिष्टुब्लिङ्गोक्तदेवतर्चैत्वाबृहत्यग्निर्ज्योतिषोष्णिगादित्यं गर्भं पञ्चर्चमाग्नेयं त्रैष्टुभमिमंमा पञ्चर्चमाग्नेयं त्रैष्टुभमेव द्वेद्वेचाते यजुषी त्वंयविष्ठोशनाः काव्य आग्नेयीमनिरुक्तां गायत्रीमपात्वा विꣳशतिरैष्टकान्ययं पुरः पञ्चाशत्प्राणभृद्देवत्यानि लोकं ता इन्द्रं तिस्रः प्रतीकोक्ता एवꣳ सर्वत्र ॥ १४ ॥ इति॰ संहितायां त्रयोदशोऽध्यायः ॥ १३ ॥

अथ द्वितीयाचितिः । ध्रुवक्षितिः पञ्चाश्विन्यस्तासां प्रथमा विराट्[च]तस्रस्त्रिष्टुभो यजुरन्ताः शुक्रश्चर्तव्यꣳ सजूः पञ्च विश्वेषां देवानामार्षं ता एव देवताः प्राणं मे पञ्च वायव्यान्यपः पञ्चापानि मूर्धावय एकोनविꣳशतिर्लिङ्गोक्तदेवतानि ॥ १५ ॥ अथ तृतीयेन्द्राग्नी अनुष्टुप् पूर्वार्धर्च ऐन्द्राग्न उत्तरः स्वयमातृण्णादेवतो विश्वकर्मा वायव्यꣳ राज्ञ्यसि पञ्च दिग्देवत्यानि विश्वकर्मा वायव्यं नभश्चेषश्चर्तव्ये आयुर्मे दश लिङ्गोक्तदेवतानि माच्छन्दश्च षट्त्रिꣳशन्मूर्धानुष्टुब्यत्री परोष्णिक्चतुर्दश यजूꣳषि प्राणदेवत्यानि ॥ १६ ॥ अथ चतुर्थ्याशुरष्टादशाग्नेर्दशैकया सप्तदश सर्वाणि लिङ्गोक्तदेवतानि सहश्चर्तव्यम् ॥ १७ ॥ इति॰ संहितायां चतुर्दशोऽध्यायः ॥ १४ ॥

अथ पञ्चम्यग्नेजातानाग्नेय्यौ त्रिष्टुभौ षोडशीचतुश्चत्वारिꣳशल्लिङ्गोक्ते अग्नेस्त्रिष्टुप् एवश्चत्वारिꣳशद्रश्मिनैकान्नत्रिꣳशद्राज्ञ्यसि पञ्चायंपुरः पञ्चैतानि सर्वाणि लिङ्गोक्तदेवतानि ॥ १८ ॥ अग्निर्मूर्धाग्नेयोऽनुवाकः प्रथमस्तृचो गायत्रो द्वितीयस्त्रैष्टुभो भुवस्तृतीयो जागतोऽयमिह चतुर्थ आनुष्टुभः सखायः सं पञ्चमः प्रगाथ एनावस्तत्र पूर्वा बृहती सतोबृहत्युत्तरा ताभ्यां तिस्रो बृहत्यः संपादिताः षष्ठ औष्णिहोऽग्नेवाजस्य गोतमः सप्तमः पुनः ककुभः प्रगाथो भद्रो नस्तत्र पूर्वा ककुप्सतोबृहत्युत्तराभ्यां तिस्रः ककुभः संपादिता अष्टमः पाङ्क्तोऽग्निं तं पदपाङ्क्तो नवमोग्ने तमग्निꣳ होतारतिछन्दारुयवसानाग्नेत्वं द्वैपदस्तृचः ॥ १९ ॥ अयमग्निर्विरूपोऽबोधिबुधगविष्ठिरो जनस्य सुतंभरः सखाय इषः सꣳसमित्संवनस्वां प्रस्कण्व एनावो वसिष्ठोऽग्नेवाजस्य गोतमो भद्रो नः सौभरिरग्निं तं कुमारवृषौ येनाष्टावाग्नेय्यः षट्त्रिष्टुभो द्वे अनुष्टुभौ तदश्चर्तव्यं परमेष्ठी सौरं प्रोथदश्वी वसिष्ठस्त्रिष्टुभमाग्नेयीमायोर्द्वे स्वयमातृण्णदेवत्ये सहस्रस्य पञ्चाग्नेयानि ॥ २० ॥ इति॰ संहितायां पञ्चदशोऽध्यायः ॥ १५ ॥

रौद्रोध्यायः । परमेष्ठिन आर्षं देवानां वा प्रजापतेर्वाद्योऽनुवाकः षोडशर्चं एकरुद्रदेवत्यः प्रथमा गायत्री तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वे जगत्यौ मानो द्वे कुत्सः ॥ २१ ॥ अन्त्यानुवाके सप्तैकरुद्रस्तुतिराद्योपरिष्टाद्बृहती द्वितीया जगती कुत्सस्य तृतीयानुष्टुब्द्वे त्रिष्टुभौ द्वे अनुष्टुभावसंख्याता बहुरुद्रदेवत्या दशानुष्टुभो मन्त्रा अवतानसंज्ञकास्ततोऽन्त्यानि त्रीणि यजूꣳषि बहुरुद्रदेवत्यानि प्रत्यवरोहसंज्ञका मन्त्राः ॥ २२ ॥ मध्ये सर्वाणि यजूꣳषि हिरण्यबाहव इति तिस्रोऽशीतयो रुद्राणां तेषामुभयतोनमस्कारा अन्येऽन्यतरतोनमस्कारा अपरे जातानामरुद्राः सभाभ्य इत्यादयो नमो वः किरिकेभ्य इत्यग्निवायुसूर्यहृदयभूताः पञ्च व्याहृतयो बहुरुद्रदेवत्याः ॥ २३ ॥ इति॰ संहितायां षोडशोऽध्यायः ॥ १६ ॥

अश्मन्मारुतमश्मꣳस्तेऽश्मा मय्याशीर्यं द्विष्म आभिचारिकमिमास आग्नेयमृतवो बृहती पङ्क्तिर्वा समुद्रस्य द्वे गायत्र्यावुपज्मं जगती त्रिष्टुब्वापामिदं बृहत्यग्ने पावक व सूयवः स नो मेधातिथिराग्नेय्यौ गायत्र्यौ पावकया जगतीं भरद्वाजो नमस्ते बृहतीमाग्नेयीमृषिसुता लोपामुद्रा ॥ २४ ॥ नृषदे

पञ्चाग्नेयानि ये देवा जगत्यौ प्राणदेवत्ये प्राणदा बृहती पङ्क्तिर्वाग्नेय्याऽग्निस्तिग्मेनाग्नेयीं गायत्रीं भरद्वाजो य इमा वैश्वकर्मणीस्त्रिष्टुभो विश्वकर्मा भौवनः ॥ २५ ॥ आशुरैन्द्रीर्द्वादश त्रिष्टुभोऽप्रतिरथोऽवसृष्टानुष्टुबिषुदेवत्या प्रेतायोद्धृन्स्तौत्यनुष्टुबसौ या मारुती त्रिष्टुब्यत्र लिङ्गोक्तदेवता पङ्क्तिर्मर्माणि लिङ्गोक्तैव त्रिष्टुबुदेनं तिस्रोऽनुष्टुभ आद्याग्नेयी द्वितीयैन्द्री तृतीया लिङ्गोक्तदेवता पञ्चदिशः पञ्चयज्ञाग्निसाधनवादिन्य आद्ये द्वे त्रिष्टुभौ तृतीया पङ्क्तिर्बृहती वा चतुर्थी बृहत्येवान्त्या-त्रिष्टुब्विमानो द्वे आदित्यदेवत्ये आद्या विश्वावसोर्द्वितीयाऽप्रतिरथस्य देवहूर्विधृतिरनुष्टुब्यज्ञदेवत्या वाजसैन्द्र्यनुष्टुबुद्धाभमैन्द्राग्न्यनुष्टुबेव ॥ २६ ॥ क्रमध्वं पञ्चाग्नेय्य आद्यानुष्टुप् ततस्त्रिष्टुप् ततो बृहतीपिपीलिकमध्या ततोऽनुष्टुप्त्रिष्टुबन्त्याग्नेसहस्राक्ष विराडाग्नेयी सुपर्णो द्वे पङ्क्तित्रिष्टुभौ ताꣳसवितुः सावित्रीं त्रिष्टुभं पुरस्ताज्ज्योतिषं कण्वो ददर्श विधेमाग्नेयीं गृत्समदस्त्रिष्टुभमस्यास्त्रिस्थानोऽग्निर्देवता प्रेद्धो विराडाग्नेयी वसिष्ठस्य चित्तिं वैश्वकर्मण्यतिजगती सप्तत आग्नेयीत्रिष्टुप्सप्तऋषीणाम् ॥ २७ ॥ शुक्रज्योतिः षण्मारुत्य आद्या चतुर्थी चोष्णिग्द्वितीया तृतीया च गायत्री पञ्चमी जगती षष्ठी गायत्र्युष्णिग्वेन्द्रं दैवीर्मारुतमिमं त्रयोदशर्चं आग्नेयस्त्रैष्टुभोऽनुवाको यज्ञस्तुतिर्घृतस्तुतिर्वा वसोर्धाराभिवादिनी वा घृतं मिमिक्षे गृत्समदः समुद्रादृामदेवश्चत्वारिशृङ्गा यज्ञपुरुषदेवत्य ऋषभो मन्त्रः ॥ २८ ॥ इति० संहितायां सप्तदशोऽध्यायः ॥ १७ ॥

वाजश्चमे देवानामार्षमेतैर्यजुर्भिर्यजमानोऽग्नेः कामान्याचते वाजप्रसवीयꣳ सप्तर्चं विश्वेत्रैष्टुभं वैश्वदेवं लुशोधानाको वाजोनस्तिस्रोऽन्नदेवत्या आद्यानुष्टुब्द्वे त्रिष्टुभौ संमा विराजावाग्नेय्यो सरस्वत्यै लिङ्गोक्तदेवतम् ॥ २९ ॥ ऋताषाड्गन्धर्वाप्सरसः सनः प्राजापत्या प्रस्तारपङ्क्तिः समुद्रोऽसि वायव्यानि त्रीणि रुचमाग्नेय्यनुष्टुप्तत्त्वा वारुणीं त्रिष्टुभꣳ शुनःशेपः स्वर्णाग्नेयानि पञ्चाग्निं युनज्म्याग्नेय्यस्तिस्र आद्ये द्वे त्रिष्टुभौ पङ्क्तिस्तृतीया दिवो द्वे आग्नेय्यौ परोष्णिङ्महापदपङ्क्ती इष्टोयज्ञो ब्यृचं यजमानाग्निदेवत्यं गालव आद्योष्णिग्द्वितीया गायत्री ॥ ३० ॥ यदाकूतादष्टर्चमाग्नेयं विश्वकर्मणस्तृतीया दैवी वाद्या जगती तिस्रस्त्रिष्टुभश्चतस्रोऽनुष्टुभोऽग्निरस्यद्वैतवादिनीं त्रिष्टुभं देवश्रवा देववातश्च भारताबृचो यजुर्ये अग्नयोऽनुष्टुबाग्नेयी ॥ ३१ ॥ वार्त्रहत्याय सप्तर्चमिन्द्रोऽपश्यदाद्ये द्वे वार्त्रघ्न्यौ गायत्रीत्रिष्टुभौ विश्वामित्रस्य च विनोऽनुष्टुम्मृगो न त्रिष्टुप्प्रथमाꣳशासो भारद्वाजो द्वितीयां जय ऐन्द्रो द्वे वैश्वानर्यौ गायत्रीत्रिष्टुभौ पृष्ठोदिवि कुत्सस्य चाश्याम द्वे त्रिष्टुभावाग्नेय्यौ कामवत्यावश्याम भरद्वाजस्य च वयं ते कात्यस्योत्कीलस्य च धामच्छदनुष्टुब् वैश्वदेवी ॥ ३२ ॥ इति० संहितायामष्टादशोऽध्यायः ॥ १८ ॥

अथ सौत्रामणी प्रजापतेरार्षमश्विनोः सरस्वत्याश्च स्वाद्वीं त्वानुष्टुप्सुरासोमदेवत्या सोमोऽसि चत्वारि सौराणि परितो भारद्वाजः सौमीं बृहतीं वायोस्तृचो गायत्रः सौम्य आसूतेर्ब्रह्म क्षत्रं त्रिष्टुप्सुरासोमदेवत्या नाना हि जगती सुरासोमदेवत्या तेजोसि पयोदेवत्यान्योजोसि सुरादेवत्यानि याव्याग्रꣳहैमवर्चैरनुष्टुब्विपूचिकास्तुतिर्यदा पिपेपाग्नेयी बृहती संपृचस्थ पयोग्रहा विप्रचस्थ सुराग्रहा देवा यज्ञं ब्राह्मणानुवाको विꣳशतिरनुष्टुभः सोमसंपत् ॥ ३३ ॥ सुरावन्तं चतुर्ऋचं त्रैष्टुभमश्विसरस्वतीन्द्रदेवत्यं पितृभ्यः सप्त पित्र्याणि पुनन्तुमा नवर्चं पवमानमाद्ये द्वे पित्र्ये अनुष्टुभौ प्रजापतिस्तृतीया वैखानस आग्नेयीं गायत्रीं चतुर्थी लिङ्गोक्तदेवतानुष्टुप्पञ्चम्याग्नेयी गायत्री षष्ठ्याग्नेयी ब्राह्मी च गायत्री ब्राह्मस्तृतीयः पादः सौमी साविन्यष्टमी नवमी त्रिष्टुब्वैश्वदेवी ये समाना अनुष्टुभौ पित्र्याद्या द्वितीया यजमानाशीर्द्वे सृती त्रिष्टुब्देवयानपितृयाणौ पन्थानौ ब्रवीती दꣳहविरुय्यवसानाष्टिर्यजमानाशीः ॥ ३४ ॥ उदीरतां त्रयोदशर्चं पैत्र्यं त्रैष्टुभꣳ शङ्ख एकादशी तु जगत्याच्याजानु दशर्चोऽनुवाको नव पित्र्यो दशम्यैन्द्री गायत्री तृतीयाचतुर्थीनवम्योऽनुष्टुभस्त्रिष्टुभ इतराः सोमो राजाष्टर्चमश्विसरस्वतीन्द्रा अपश्यन्नाद्यास्तिस्रो महाबृहत्य उपान्त्या च चतुर्थ्यन्ते अतिजगत्यौ शेषे अतिशक्वर्यौ त्र्यवसाने सीसेन तन्त्रमश्विसरस्वतीन्द्रदेवत्याः षोडश जगत्यः ॥ ३५ ॥ इति० संहितायामेकोनविंशोऽध्यायः ॥ १९ ॥

क्षत्रस्य योनिर्द्विपदा गायत्री आसन्दीदेवतका मात्वा कृष्णाजिनं मृत्योरुक्मावश्विनोर्भैषज्येन लिङ्गोक्तदेवतानि त्रीणि कोऽसि प्राजापत्या गायत्री शिरो मे पञ्चर्चमिन्द्रशरीरावयवदेवताकं तृतीया गायत्र्यन्त्या महापङ्क्तिरुय्यवसानानुष्टुभोन्त्याः प्रतिक्षत्रे वैश्वदेवं त्रया देवा दैवीपङ्क्तिस्त्र्यवसाना प्रथमा द्वितीयैवैश्वदेवमाशीर्लिङ्गं लोमान्यनुष्टुब्लिङ्गोक्तदेवता ॥ ३६ ॥ यद्देवास्तिस्रोऽग्निवायुसूर्यदेवत्या अनुष्टुभः कूष्माण्डीर्यद्ग्रामे लिङ्गोक्तदेवतꣳ समुद्रेते द्विपदा विराडापी द्रुपदादिवानुष्टुबाप्युद्वयꣳसौर्यनुष्टुप्प्रस्कण्वस्याप आद्याग्नेयी पङ्क्तिरेधोसि समिद्देवत्ये यजुषी समावर्वत्यनिरुक्ता गायत्री वैश्वानरज्योतिर्यजुरभ्यादध्याग्नेयं तृचमानुष्टुभमाश्वताराश्विरꣳशुना सौर्यनुष्टुप् सिञ्चन्ति परि सौत्रैन्द्री चानुष्टुब्धानावन्तमैन्द्री गायत्री विश्वामित्रस्य च बृहदिन्द्राय बृहती नृमेधपुरुमेधयोरध्वर्यो गायत्री ॥ ३७ ॥ यो भूतानामात्मप्रवादा पङ्क्तिर्नारायणीया कौण्डिन्यस्य प्राणपा मे द्वे अनुष्टुबुपरिष्टाद्बृहत्यौ लिङ्गोक्तदेवते समिद्ध इन्द्र एकादशाप्रीत्रिष्टुभ आङ्गिरस इध्मस्तनूनपान्नराशꣳस इडो बर्हिर्द्वार उषासानक्ता दैव्या होतारा तिस्रो देवीस्त्वष्टा वनस्पतिः स्वाहाकृतय इत्येता आप्रीदेवता आयातु सप्त त्रिष्टुभ ऐन्द्र्य आमन्द्रैर्वृत्रहत्यायातु वामदेवस्त्रातारं गर्ग आमन्द्रैर्विश्वामित्र

एवेद्धसिष्ठः ॥ ३८ ॥ अथ होत्रं त्रिपशोः समिद्धो अग्नि-
राप्रीर्द्वादश विद्भिरश्विसरस्वतीन्द्रदेवत्या अनुष्टुभोऽश्विना
हविस्तिस्रोऽनुष्टुभ एकैकाश्विसरस्वतीन्द्रदेवत्या य इन्द्र सवि-
तृवरुणदेवत्यास्तिस्रोऽनुष्टभोऽविश्वना गोभिस्तिस्रोऽनुष्टुभो
युवं पुत्रमिवानुष्टुप्त्रिष्टुभौ यस्मिन्नश्वास आग्नेय्यौ जगती-
त्रिष्टुभावश्विनातेजसैकादशर्चंॕ शास्त्रं गोमद्गृत्समदस्तृचमाश्विनं
गायत्रं पावका नो मधुच्छन्दाः सारस्वतमिन्द्रायाह्यैन्द्रं म-
धुच्छन्दा एवानुक्तमानुष्टुभमश्विसरस्वतीन्द्रदेवत्यम् ॥३९॥
इति० संहितायां विंशोऽध्यायः ॥ २० ॥

इमंमे गायत्रीत्रिष्टुभौ वारुण्यौ शुनःशेपस्त्वंनस्त्रिष्टुभावा-
ग्निवारुण्यौ वामदेवो महीमूषु त्रिष्टुवादित्या सुत्रामाणं गयः-
प्लातः सुनावत्रै स्वर्ग्या गायत्र्यानो मैत्रावरुणीं गायत्रीं वि-
श्वामित्रः प्रबाहवा वसिष्ठस्त्रिष्टुभंॕ समिद्धो अग्निरेकादशा-
प्रमानुष्टुभंॕ स्वस्त्यात्रेयस्यार्षं वयोधा इन्द्रो देवता वसन्तेन
ऋतुना षड्चमानुष्टुभं लिङ्गोक्तदेवतंॕ होता यक्षद्द्वादशाप्रीः
प्रैषा अश्विसरस्वतीन्द्रदेवत्या अश्विनौ छागस्य सप्त लिङ्गो-
क्तदेवताः प्रैषा वनस्पतिमभियूपोऽग्निंॕ स्विष्टकृदग्निर्देवं ब-
र्हिरेकादशानुयाजप्रैषा अश्विसरस्वतीन्द्रदेवत्या अग्निमद्य सू-
क्तवाकप्रैषो लिङ्गोक्तदेवतो लिङ्गोक्तदेवतः ॥ ४० ॥ इति०
संहितायामेकविंशोऽध्यायः ॥ २१ ॥ इति सर्वानुक्रमणिकायां
द्वितीयोऽध्यायः ॥ २ ॥

ॐ अथाश्वमेधश्चतुरोऽध्यायान्प्रजापतिरपश्यत्तेजोसि सौ-
वर्णं निष्कमिमामगृभ्णन्संवत्सरो यज्ञपुरुषस्त्रिष्टुभमभिधा
लिङ्गोक्तानि यो अर्वन्तं गायत्र्यर्धेनाश्वस्तुतिः परोर्धे लिङ्गो-
क्तोऽग्नये लिङ्गोक्तान्येव हिंकारायेत्यश्वस्यैकान्नपञ्चाशच्चेष्टितानि
हिरण्यपाणिं पञ्चर्चंॕ सावित्रं गायत्रमाद्या मेधातिथिरग्निंॕ-
स्तोमेनाग्नेयं तृचं गायत्रंॕ सुतंभरो विश्वामित्रो विरूपो
यथासंख्यमजीजनो हि पावमानीं कृतिं पिपीलिकमध्यामनु-
ष्टुभं त्र्यरुणत्रसदस्यू विभूरश्वदेवतं देवा दैवमिहरन्तिराग्नेयानि
चत्वारि कार्यौद्गभणानि लिङ्गोक्तान्याब्रह्म लिङ्गोक्तान्येवाध्या-
यात् ॥ १ ॥ इति० संहितायां द्वाविंशोऽध्यायः ॥ २२ ॥

प्रजापतये प्राजापत्यं यस्ते देवं यः प्राणतस्त्रिष्टुप् कायी
हिरण्यगर्भस्य युञ्जन्ति मधुच्छन्दा आदित्यदेवत्यां गायत्रीं
युञ्जन्त्यस्याश्वस्तुतिर्यद्वातो बृहतीमौ वसवस्त्वा लिङ्गोक्तानि
लाजी २ नश्वदेवत्यं कःस्विच्चतस्रोऽनुष्टुभः प्रश्नप्रतिप्रश्नभूत-
ब्रह्मोद्ये होतुर्ब्रह्मणश्च वायुष्ट्वा लिङ्गोक्तानि संॕशितस्तिस्रो-
ऽश्वदेवत्या अनुष्टुब्विराट्त्रिष्टुभोऽग्निः पशुराश्वानि त्रीण्यम्बनु-
ष्टुबश्वस्तुतिर्गणानां त्वा चत्वारि लिङ्गोक्तानि ॥ ३ ॥ उत्स-
क्थ्या गायत्र्याश्वी एकादशर्चमानुष्टुभं द्वितीया तूपरिष्टाद्बृहत्य-
ध्वर्य्वादीनां कुमार्यादिभिरश्लीलभाषणं ता एव देवता दधि-
क्राव्णो दधिक्रावा वामदेव्यः सुरभिमतीमनुष्टुभमार्श्वीं गाय-
त्रीॕ षड्चमाश्वमुष्णिगाद्याश्चतस्रोऽनुष्टुभोन्त्यात्रिष्टुप् कस्त्वा
षड्चमाश्वमाद्या गायत्री पञ्चानुष्टुभः कःस्विदष्टादशर्चं ब्रह्मो-
द्यंॕ होत्रादीनां प्रश्नप्रतिप्रश्नभूतमाद्याश्चतस्रोऽनुष्टुभः कास्वि
दाद्याश्चतस्रश्चान्त्या दश त्रिष्टुभः सुभूरनुष्टुब्लिङ्गोक्तदेवता हो-
तायक्षत्प्राजापत्यः प्रैषः प्रजापतेर्हिरण्यगर्भः प्राजापत्या त्रै-
ष्टुभम् ॥ ४ ॥ इति० संहितायां त्रयोविंशोऽध्यायः ॥२३ ॥

अश्वस्तूपर इत्यादयः पशवोऽध्याये नोक्ता देवता वा
पर्यङ्ग्यास्तथा रोहितादयो गुणयुक्ता आरण्याश्च कपि-
ञ्जलादय आध्यायाच्छादं दद्भिरित्यादित्वगित्येतदन्तं द्रव्य-
दैवतमुक्तमश्वस्तूपरो ब्राह्मणोऽध्यायः ॥ ४ ॥ संहितायां च-
तुर्विंशोऽध्यायः ॥ २४ ॥

शादं दद्भिस्त्वचान्तश्च जुम्बकाय वारुणीं द्विपदां मुण्डिभ
औदन्य एषा चाघनाशन्यन्तर्जले यस्येमे काव्यौ त्रिष्टुभौ हिरण्य-
गर्भः प्राजापत्य आनो दशर्चं जागतं वैश्वदेवं गोतमः स्वस्तिनो
विराट्स्थाना भद्रंकर्णेभिस्तृचं त्रैष्टुभं मानोऽश्वस्तोमीयं दी-
र्घतमास्त्रैष्टुभं द्वाविंॕशत्यृचमश्वस्तुतिस्तृतीयापङ्क्तौ जगत्या-
विमानु द्वैपदं वैश्वदेवं तृचं भौवन आह्यो वा साधनभौ-
वनो वा ॥ ५ ॥ इति० संहितायां पञ्चविंशोऽध्यायः ॥ २५ ॥

अग्निश्च सप्त लिङ्गोक्तानि प्रियो देवानां लौगाक्षिरनुष्टुभ-
मनवसानां बृहस्पते गृत्समदो ब्राह्मीं त्रिष्टुभमिन्द्रगोम-
न्नैन्द्र्यौ गायत्र्यौ रम्याक्षिर्ऋतावानं प्रादुराक्षिर्वैश्वानरीयां वै-
श्वानरस्य त्रिष्टुभं कुत्सोऽग्निर्ऋषिराग्नेयीं गायत्रीं वसिष्ठभ-
रद्वाजौ महांर२ऽइन्द्रो माहेन्द्री वसिष्ठस्तंव ऐन्द्रीं पथ्या-
बृहतीं नोधा गोतमो यद्वाहिष्ठं वसूयव आग्नेयीमनुष्टुभमेहि
भरद्वाजो गायत्रीमृतवस्ते बृहत्युपह्वरे वत्सो गायत्रीम्
॥ ६ ॥ उच्चा ते गायत्रं तृचंॕ सौम्यमासहीयवोऽनुवीरैर्मु-
द्गलो यज्ञपुरुषस्त्रिष्टुभमग्नेपत्नीर्मेधातिथिराग्नेयीं गायत्रीमभि-
यज्ञं द्व्यृचमृतुदैवतं मेधातिथिस्तवायमैन्द्री त्रिष्टुभं विश्वा-
मित्रोऽमेवनो जगतीं गृत्समदः स्वादिष्ठया मधुच्छन्दाः सौ-
म्यावनुक्तानां गायत्रम् ॥ ७ ॥ इति० संहितायां षड्विं-
शोऽध्यायः ॥ २६ ॥

समास्त्वाग्निकोऽध्यायः प्रजापतेरार्षंॕ सामिधेन्यो नवा-
ग्नेय्यस्त्रिष्टुभोऽग्निना दृष्टा अग्निर्ऋषिः कर्माङ्गभूतमग्निंॕ
स्तौत्यूर्ध्वा द्वादशर्चमाप्रियमौष्णिहं विषमपदं प्राजापत्यमा-
ग्नेयमग्निरपश्यदग्निर्हि प्रजापतित्वेन संस्तूयते तेन प्राजाप-
त्यम् ॥ ८ ॥ पीवो अन्नां द्वे वायव्ये त्रिष्टुभौ वसिष्ठ आ-
पोह द्वे प्राजापत्ये हिरण्यगर्भः प्राजापत्यः प्रयाभिर्द्वे वायव्ये
वसिष्ठो नियुत्वान्वायव्याः पङ्क्त्यायोशुक्रोऽनुष्टुबेकया च त्रि-
ष्टुबन्त्या गायत्र्यो नियुत्वान्वायो गृत्समदो वायो शुक्रः
पुरुमीढाजमीढौ तववायो व्यश्व आङ्गिरसोऽभित्वा वसिष्ठ
ऐन्द्रं प्रगाथं प्रथमा बृहती द्वितीया सतोबृहती त्वामिदेवंॕ
शंयुर्बार्हस्पत्यः कयान ऐन्द्रं तृचं गायत्रं वामदेवोऽन्त्या तु
पादनिचृद्यज्ञा ऊर्जोनपातंॕ शंयुः पाहि नो गर्भः प्रागाथ एतं
तृचं प्रागाथमाग्नेयं द्वे बृहत्यौ तृतीया सतोबृहती संवत्स-
रोऽस्याग्नेयम् ॥९॥ इति० संहितायां सप्तविंशोऽध्यायः ॥२७॥

इन्द्रमिडः सौत्रामणिकोऽध्याय एकादश प्रयाजप्रैषा ऐन्द्रा आप्रीदेवत्या आद्येऽनुवाके देवंबर्हिरनुयाजप्रैषा ऐन्द्रा एकादशैवाग्निमद्यैन्द्रः सूक्तवाकप्रैषस्त्वामद्य प्रतीक उभयत्रापि समिधानं महद्वायोधस आप्रिय एकादश प्रयाजप्रैषास्तथैव देवंबर्हिरनुयाजप्रैषा अग्निमद्य वायोधसः सूक्तवाकप्रैषः ॥१०॥ इति० संहितायामष्टाविंशोऽध्यायः ॥ २८ ॥

समिद्धो अञ्जनाश्वमेधिकोऽध्याय आद्या आप्रीस्त्रिष्टुभ एकादशाश्वस्तुतिर्बृहदुक्थो वामदेव्यो ददर्शाश्वो वा सामुद्रिर्यदक्रन्दस्त्रयोदशाश्वस्तुतिस्त्रिष्टुभो भार्गवो जमदग्निर्ददर्श दीर्घतमाश्च समिद्धो अद्य द्वादशाप्रीस्त्रिष्टुभो जमदग्निः ॥११॥ केतुं कृण्वन्नाग्नेयीमनिरुक्तां गायत्रीं मधुच्छन्दा जीमूतस्येव पायुर्भारद्वाजः संग्रामाङ्गान्यृक्षोत्सौपीत्सन्नाहं कार्मुकं गुणमार्त्नीतूणं जगत्यर्धेन सारथिमर्धेन रश्मीन्हरीन्रथगोपायितॄन्जगत्या लिङ्गोक्तदेवता द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यामिषुमनुष्टुभा कशां ततो हस्तघ्नं ततस्तृचौ रथदुन्दुभिदेवत्यावैन्द्रोऽर्धर्चोन्त्याः सर्वास्त्रिष्टुभोऽनुक्ता आग्नेयः कृष्णग्रीव इत्याद्या एकादशिन्योर्द्वयोः पशुदेवता अग्नये गायत्रायेति दश हविषोवेष्टेर्देवता ॥ १२ ॥ इति० संहितायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

देवसवितर्द्वावध्यायौ पुरुषमेधो नारायणः पुरुषो ददर्श विश्वानि देवगायत्रीᳬं सावित्रीᳬं श्यावाश्वो विभक्तारं मेधातिथिर्ब्रह्मणे ब्राह्मणमिति द्वे कण्डिके तपसेऽनुवाकश्च ब्राह्मणम् ॥ १३ ॥ इति० संहितायां त्रिंशोऽध्यायः ॥ ३० ॥

सहस्रशीर्षा षोडशर्चमानुष्टुभं त्रिष्टुबन्तं पुरुषो जगद्बीजमन्त्रदेवताभ्यः षड्च उत्तरनारायणो मन्त्र आद्यास्तिस्रस्त्रिष्टुभो द्वे अनुष्टुभावन्त्या त्रिष्टुप् ॥ १४ ॥ इति० संहितायामेकत्रिंशोऽध्यायः ॥ ३१ ॥

तदेव सर्वमेधोऽध्याय आत्मदैवतः सप्तमेहनि सर्वहोमे विनियुक्तः सर्वमेधं ब्रह्म स्वयंभ्वैक्षत तदीयं मन्त्रगणं प्रवायुमच्छेत्येतस्माद्द्वे द्वे अनुष्टुभौ नतस्य द्विपदागायत्री हिरण्यगर्भश्चतस्रो मामाहिᳬंसीद्यस्मान्नद्वे एताः प्रतीकचोदिता ब्रह्मयज्ञे ध्येयाः सर्वत्रैवमेषोह चतस्रस्त्रिष्टुभ आपोह यश्चित्प्रतीकचोदिते ॥ १५ ॥ वेनस्तत्पञ्च त्रिष्टुभः सदसस्पतिं तृचेन मेधाकामो मेधां याचते प्रथमा गायत्री लिङ्गोक्तदेवता द्वितीयाग्नेय्यनुष्टुप् तृतीया लिङ्गोक्तदेवतानुष्टुबिदं मे मान्त्रवर्णिक्यनुष्टुब्वेतया देवेभ्यः श्रीकामो याचते श्रियम् ॥ १६ ॥ इति० संहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

अस्याजरासः सप्तदशाग्निष्टुत्याग्निष्टोमिके प्रथमेहनि पुरोरुच आग्नेय आद्ये द्वे ऐन्द्रवायवस्यास्याजरासो वत्सप्रीर्हरयो धूमकेतवो विरूपो यजमानो द्वे मैत्रावरुणस्य यजमानो गोतमो द्वे विरूपे शुक्रस्य कुत्सोऽयमिह मन्थिनो वैश्वदेवग्रहग्रहणे त्रीणि शता विश्वामित्र ऐन्द्राग्नस्याग्निर्वृत्राणि भरद्वाजो वैश्वदेवस्य विश्वेभिः सोम्यं मेधातिथिरायन्मरुत्वतीययोर्द्वे आयत्पराशरः शाक्त्योऽग्नेशर्धोऽत्रिदुहिता विश्ववारा त्वाᳬंहि भरद्वाजस्त्वे अग्ने द्वे बृहत्यावादित्यस्य त्वे अग्ने वसिष्ठः श्रुधि प्रस्कण्व आदित्यग्रहग्रहणे विश्वेषामदितिर्वामदेवो गोतमो महो अग्नेः सावित्रस्य लुशो धानाकोऽनुक्तं गायत्रं त्रैष्टुभम् ॥ १७ ॥ इन्द्रस्तुत्युक्थ्ये द्वितीयेहनि ऐन्द्र्यः पुरोरुचो द्वादश प्रतीकचोदिते च द्वे तिस्रश्चापश्चिद्वसिष्ठो गाव उप पुरुमीढाजमीढौ यदद्य वसिष्ठ आसुते सुनीतिरातिष्ठतं विश्वामित्रः प्रवः सुचीको बृहन्नित्रिशोक इन्द्रेहि मधुच्छन्दा इन्द्रो वृत्रविश्वामित्रः कुतस्त्वमगस्त्य आतद्गौरिवीतिः शाक्त्य इमांते कुत्सो जगतीमनुक्तं गायत्रं त्रैष्टुभम् ॥ १८ ॥ सूर्यस्तुत्युक्थ्ये तृतीयेहनि सौर्यश्चतुर्दश पुरोरुचस्तिस्रश्च प्रतीकोक्ता विभ्राड्बृहज्जगतीं विभ्राट्सौर्य उदुत्यं तिस्रः प्रस्कण्व आनोऽगस्त्यो यदद्य श्रुतकक्षः सुतकक्षौ तरणिः प्रस्कण्वस्तत्सूर्यस्य द्वे कुत्सो बण्महाँ२ऽद्वे जमदग्निर्बृहतीसतोबृहत्यौ श्रायन्त इव नृमेधो बृहती मत्याद्या (१)देवाः कुत्स आकृष्णेन हिरण्यस्तूप आङ्गिरसोऽनाख्यातᳬं सौर्यं गायत्रं त्रैष्टुभम् ॥ १९ ॥ वैश्वदेवस्तुतिश्चतुर्थेहनि वैश्वदेव्यः पुरोरुच एकादश षट् च प्रतीकोक्ताः प्रवावृजे वसिष्ठस्त्रिष्टुभमिन्द्रवायूबृहस्पतिं द्वे मेधातिथिरधिनः कुसीदीकाण्वोऽग्नइन्द्रप्रतिक्षत्र इन्द्राग्नी मित्रावरुणा जगतीं काश्यपोऽवत्सारोऽस्मेरुद्राः प्रगाथोऽर्वाचो अद्य कूर्मो गार्त्समदो विश्वे अद्य लुशो धानाको विश्वेदेवाः सुहोत्रो देवेभ्यो हि वामदेवो जगतीमनुक्तं गायत्रं त्रैष्टुभम् ॥ २० ॥ अथानारभ्याधीतं मन्त्रगणमर्वाक्पितृमेधाादादित्ययाज्ञवल्क्यौ ददृशतुः प्रवायुं पञ्चदशर्चः पुरोरुग्गणो द्वे च प्रतीकोक्ते प्रवायुमृजिश्वो मित्रᳬं हुवे द्वे मधुच्छन्दा मित्रं लिङ्गोक्ता दस्रायुवाकव आश्विनीं विदद्यदैन्द्रीं कुशिको नहिस्पशं विश्वामित्रो वैश्वानरीमुग्राविघनि ऐन्द्राग्नीं भरद्वाज उपास्मै सौमीं देवलोसितो वा ये त्वा विश्वामित्रो जनिष्टा उग्रो गौरिवीतिरातु वामदेवस्तृचमैन्द्रं त्वमिन्द्रैन्द्र्यौ नृमेधः पथ्याबृहतीसतोबृहत्यौ यज्ञो देवानां कुत्सोऽदब्धेभिः सावित्रीं जगतीं भरद्वाजः ॥ २१ ॥ प्रवीरया पञ्चदशर्चः पुरोरुग्गणो द्वेच प्रतीकोक्ते प्रवीरया वसिष्ठो वायव्याकाव्ययोराजानेषु दक्षस्तिरश्चीनः परमेष्ठीं प्रजापतिर्भाववृत्तं तृचमारोदसीं जगतीं विश्वामित्र उक्थेभिर्वृत्रहन्तमा वसिष्ठ उपनः सुहोत्रो वैश्वदेवीं ब्रह्माणि मेऽगस्त्यो द्वे इन्द्रमरुत्संवादे तदिदाथर्वणो बृहद्दिव इमाउत्वा द्वे बृहत्यौ मेधातिथिरयᳬंसहस्रं मेधातिथिः सतोबृहतीम् ॥ २२ ॥ आनस्त्रयोदशर्चः पुरोरुग्गणश्चतुर्ऋचं प्रतीकचोदितं चानो वायव्यां जमदग्निरिन्द्रवायू सुसंदृशैन्द्रवायव्या तापस ऋधगित्था मैत्रावरुणीं जमदग्निरायातमाश्विनीं वसिष्ठः प्रैतु वैश्वदेवीं कण्वश्चन्द्रमा अप्स्वैन्द्रीमारुती परिणामवादिनीं त्रित आप्त्यो देवंदेवं वो मनुर्वैवस्वतो वैश्वदेवीं दिविपृष्ठोमृध ऐन्द्र इन्द्राग्नी अपात्सुहोत्रो देवासो हि मनुरपाधम द्वे नृमेधोऽस्मेन्मेधातिथिर्दशम्येकादश्यन्त्या च सतोबृहत्यः शेषा

बृहत्यः शेषाबृहत्यः ॥ २३ ॥ इति० संहितायां त्रयस्त्रिंशो-ऽध्यायः ॥ ३३ ॥ इति०सर्वानुक्रणिकायां तृतीयोऽध्यायः ॥३॥

यज्जाग्रतः षडृचं मानसं त्रैष्टुभꣳशिवसंकल्पः पितुं नूष्णि-हमगस्त्योऽन्नस्तुतिमन्विच्चतुर्ऋचमानुष्टुभं द्वयोरनुमितिर्द्वयोः सिनीवालीसरस्वत्यौ सिनीवालिपृथुष्टुके द्वे गृत्समदस्त्वमग्ने द्वे आग्नेय्यौ जगत्यौ हिरण्यस्तूप आङ्गिरस उत्तानायां द्वे देव-श्रवा देववातश्च भारतावाद्या त्रिष्टुब्द्वितीयानुष्टुप्प्रमन्महे नो-धा द्व्यचमैन्द्रं त्रैष्टुभमिच्छन्तित्वा द्व्यचमैन्द्रं त्रैष्टुभमेव देवश्रवा देववातश्च भारतौ ॥ १ ॥ अपाढं युत्सु गोतमश्चतुर्ऋचं त्रैष्टु-भꣳ सौम्यमष्टौव्यख्यच्चतुर्ऋचं त्रैष्टुभꣳ सावित्रमाङ्गिरसो हिरण्यस्तूपो द्वितीया जगत्युभापिबतमाश्विनं तृचमुभापिबतं प्रस्कण्वो गायत्रीमप्नस्वतीमश्विनात्रिष्टुभौ कुत्स आरात्रि प-थ्याबृहतीꣳ रात्रिदेवत्या कशिपा भरद्वाजदुहितोपस्तदुपस्था परोष्णिहं गोतमः प्रातरग्निं वसिष्ठः सप्तर्चमाद्या जगती ब-हुदेवत्या पञ्च भगदेवत्यास्त्रिष्टुभोऽन्त्योपस्याः ॥ २ ॥ पूषन्तव सुहोत्रः पथस्पथः परिपतिमृजिश्वेते पौष्ण्यौ गायत्रीत्रिष्टुभौ त्रीणिपदा वैष्णव्यौ गायत्र्यौ मेधातिथिर्घृतवती भुवनानां भ-रद्वाजो द्यावापृथिव्यां जगतीं येनो लिङ्गोक्तदेवतां त्रिष्टुभं विहव्य आनासत्या हिरण्यस्तूप आश्विनीमेष वो मारुतीं त्रि-ष्टुभमगस्त्यः सहस्तोमा ऋषिसृष्टिप्रतिपादिका त्रिष्टुभं यज्ञः प्राजापत्य आयुष्यं वर्चस्यं तृचं दक्ष उष्णिक्शक्करीत्रिष्टुभो हिरण्यस्तुतिरुतन ऋत्विजो बहुदेवत्या त्रिष्टुभमिमागिरः कूर्मो गार्त्समद आदित्यदेवत्यां त्रिष्टुभꣳ सप्तऋषयोऽध्यात्म-वादिनी जगत्युत्तिष्ठं तृचो ब्राह्मणस्पत्य आद्ये बृहत्यौ कण्वो घोरोऽन्त्यां त्रिष्टुभं गृत्समदो यइमा चतुर्ऋचं प्रतीकोक्तम् ॥ ३ ॥ इति० संहितायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

अपेतोऽध्यायः पित्र्य आदित्यस्य देवानां वाद्यागायत्री परं यजुः सविताते गायत्री वायुःपुनातु चत्वारि लिङ्गोक्तानि सविताते गायत्री परंमृत्यो संकसुकस्त्रिष्टुभं मृत्युदेवत्याꣳ शंवातोऽनुष्टुब्बृहत्यौ वैश्वदेव्यावश्मन्वतीं सुचीकस्त्रिष्टुभं वै-श्वदेवीमपाघं लिङ्गोक्तदेवतामनुष्टुभꣳ शुनःशेपो दुःस्वप्नना-शनीमनड्वाहमानडुह्यनुष्टुबिमं जीवेभ्यः संकसुको मृत्युदेवत्यां त्रिष्टुभमायुष्मानग्न आग्नेयीं त्रिष्टुभं वैखानसः परीमेऽनुष्टुभ-मैन्द्रीं भारद्वाजः शिरिंबिठः क्रव्यादमग्निं त्रिष्टुभमाग्नेयीं दमनो वहवपांजातवेदसी त्रिष्टुप् स्योनापृथिवी मेधातिथिः पार्थिवीं गायत्रीमस्मात्त्वमाग्नेयी गायत्र्यनिरुक्ता ॥ ४ ॥ इति० संहितायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

ऋचंवाचं पञ्चाध्यायीं दध्यङ्ङाथर्वणो ददर्शाग्निकाश्वमेधि-कवर्जमाद्योऽध्यायः शान्त्यर्थो वैश्वदेव आद्यानि यजूꣳषि यन्मे बार्हस्पत्या पङ्क्तिः कयात्वमैन्द्र्यनिरुक्ता गायत्रीन्द्रो-विश्वस्य विराड् द्विपदा शंनो द्वे अनुष्टुभावहानि द्विपदा-गायत्री शंनइन्द्राग्नी त्रिष्टुब्गायत्र्यावन्त्याशीर्द्यौः शान्तिर्यजूꣳषि नमस्ते अस्त्वनुष्टुभौ तच्चक्षुः पुरउष्णिक्सौरी ॥ ५ ॥ इति० षट्त्रिंशोऽध्यायः ॥ ३६ ॥



आददे नारिरस्यभ्रिदैवतं देवी द्यावापृथिव्यं देव्योवम्र्यो वल्मीकवपेयत्यग्नेवराहविहतमिन्द्रस्यौज आदाराः प्रैतु मख-स्याश्वस्यर्जचे यमाय देवस्त्वार्चिरसि घर्मदेवत्यानि यो घर्मः स आदित्यो य एष तपत्यनाधृष्टा पुरस्तात्सप्त पार्थिवानि यजमा-नाशीर्मधुप्राणदेवत्यानि गर्भो देवानामवकाशा मामाहिꣳ-सीरित्येतदन्ता घर्मदेवत्या धर्तादिव ऊर्ध्वबृहत्यपश्यंगोपां त्रि-ष्टुभं दीर्घतमा हृदेत्वा परोष्णिक्त्वष्टृमन्तः पदयाशीरहःकेतुना यजुषी घर्मदेवत्ये॥६॥इति० संहितायां सप्तत्रिंशोऽध्यायः ३७

आददेऽदित्यै रज्जुरिडएहि गौर्यस्ते त्रिष्टुभं दीर्घतमा इन्द्रा-श्विना वैश्वदेवानि समुद्रायत्वा वातनामानि स्वाहाघर्माय घर्मदेवत्ये विश्वाआशा आश्विन्यनुष्टुब् दिविधा घर्मदेवत्यमश्वि-ना घर्ममुष्णिगपातां ककुबमेन्यस्मे स्वरः स्वाहापूष्णे सप्त लिङ्गो-क्तदेवतानि स्वाहासं पयोदेवत्यं मधुहुतं घर्मो भीमं गायत्रीबृह-त्यावनवसाने अतिशक्करी वाग्नेयी समस्ता व्यवसाना या ते घर्म क्षत्रस्य बृहती चतुःस्रक्तिर्महाबृहती घर्मैतदनुष्टुब्चिक्रदत्प-रोष्णिग्यावती द्यावापृथिवी दधिघर्मो मयित्यत्पङ्क्तिर्यजमाना-शीः पयसोरेतो गायत्र्यनवसाना त्विषः संवृग्दधिघर्मोऽनुक्तं घर्मदैवतम् ॥७॥ इति० संहितायां अष्टत्रिंशोऽध्यायः ॥३८॥

स्वाहा प्राणेभ्यो मान्त्रवर्णिक्यो देवता मनसःकाममनुष्टुब्य-जमानाशीः श्रीर्देवता प्रजापतिः संश्रियमाणो यथाकालं प्रायश्चित्तदेवताः सविता प्रथमेऽहन्त्यहं क्रमेणोग्रश्च मारुती गायत्री विसुखाख्यो मन्त्रोऽग्नौ विनियुक्तस्तस्मादाग्निक एवास्य ऋषिः परमेष्ठी प्राजापत्यो वाग्निꣳहृदयेनाश्वमेधिकानि त्रीणि तत्रोक्त एव ऋषिर्लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विच-त्वारिꣳशत् ॥ ८ ॥ इति० एकोनचत्वारिंशोऽध्यायः ॥३९॥

ईशावास्यमात्मदेवत्य आनुष्टुभोऽध्याय अनेजदेकं त्रिष्टुप् सपरि जगती वायुरनिलं यजुषी ॐ३मिति परमाक्षरस्य यो-गिनामालम्बभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्यास्थूलादिगुणयु-क्तस्य ब्रह्मऋषिश्छन्दोगायत्रं परमात्मा देवता ब्रह्मारम्भे विरामे च यागहोमादिषु शान्तिपुष्टिकर्मसु चान्येष्वपि काम्यनैमि-त्तिकादिषु सर्वेषु विनियोगोऽस्य ऋतो त्रिभिर्यजुर्भिरन्ते य-ज्ञान्योगी स्मारयत्यग्नेनयान्तनमस्कारोक्तिर्हिरण्मयेनादित्योपा-सनमो ३ मिति नामनिर्देशो ब्रह्मणः खंब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत् ॥ ९ ॥ इति० चत्वारिंशोऽध्यायः ॥ ४० ॥

अथातश्छन्दोदेवता गायत्र्या अग्निरुष्णिहः सवितानुष्टुभः सोमो बृहत्या बृहस्पतिः पङ्क्तेर्वरुणस्त्रिष्टुभ इन्द्रो जगत्या विश्वे-देवा विराजो मित्रः स्वराजोऽरुणोऽतिच्छन्दसः प्रजापतिर्विच्छ-न्दसो वायुर्द्विपदायाः पुरुष एकपदाया ब्रह्मा सर्वा ऋच आग्नेय्यः सर्वाणि यजूꣳषि वायव्यानि सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च स्वाहाकारस्याग्निर्वषट्कारस्य विश्वेदेवाः कर्मा-

